समावर्तनम्— समावर्तनविधिः—

अधीतवेदस्य दत्तगुरुदक्षिणस्य गृहीतगुर्वनुज्ञस्य समावर्तनाधिकारः ३४८०.

समावर्तनम्— समावर्तनप्रयोगः—

परिवृतस्थले स्नानम्, आदित्योपस्थानम्, मेखलाविमोचनम्, ब्राह्मणभोजनम्, वपनम्, स्नानालंकरणवस्त्रपरिधानानि, स्रगुपानद्दण्डधारणम्, सपरिषत्काचार्यदर्शनम्, मन्त्रजपः, आचार्यकर्तृकस्नातकार्हणम्, रथपरिक्रमणविधिः १५३९.

## खादिरगृह्यसूत्रम्

चूडाकर्म— चूडाकर्मविधिः—

चूडाकर्मकालः २९००.

चूडाकर्म— चूडाकर्मप्रयोगः—

संभारस्थापनम्, होमः, केशवपनविधानम्, शिखाकरणम्, केशानां निखननं निधानं वा, दक्षिणादानम् २९५२.

उपनयनम्— उपनयनकालः—

मुख्यगौणकालाः ३०३५.

उपनयनम्— उपनयनप्रयोगः—

वपनालंकरणवस्त्रधारणानि, होमः, अञ्जलिजलोत्सर्जनम्, अञ्जलिग्रहणांसावमर्शननाम्यालम्भनानि, परिदानम्, संप्रैषः, मेखलाबन्धनम्, सावित्र्यनुवचनम्, दण्डदानम्, समिदाधानम्, भिक्षाचरणम्, त्रिरात्रव्रतम् ३३०७.

वेदव्रतानि— वेदव्रतविधिः—

आदित्यव्रते व्यवस्थितविकल्पः मतभेदो वा, महानाम्नीव्रतानुष्ठानकालविकल्पाः ३३६८.

वेदव्रतानि— वेदव्रतसामान्यप्रयोगः—

वस्त्रालंकारावनियतौ, व्रतिनो नियमाः, संवत्सरं व्रतचर्या, विसर्गेऽनुप्रवचनीयहोमः ३३८५.

वेदव्रतानि— महानाम्नी( शाक्वर )व्रतप्रयोगः—

व्रतनियमाः, उपोषणपरिणहनानुगापनानि, अबादिवीक्षणम्, दक्षिणादानम् ३३९५.

वेदव्रतानि— शुक्रियव्रतप्रयोगः—

आदित्यव्रतं व्यवस्थितविकल्पितमव्यवस्थितविकल्पितं वा, व्रतनियमाः ३४२६.

वेदव्रतानि— गोदानव्रतप्रयोगः—

गोदाने समस्तव्याहृतिहोमः, गोदाने चौलकल्पातिदेशः सविशेषः, वर्णभेदेन दक्षिणाभेदः, उपनयनं तत्रोपनयनकल्पातिदेशश्च, व्रतनियमाचरणं नियतम् ३४५४.

समावर्तनम्— समावर्तनविधिः—

अधीतवेदस्य दत्तगुरुदक्षिणस्य गृहीतगुर्वनुज्ञस्य समावर्तनाधिकारः ३४८०.

समावर्तनम्— समावर्तनप्रयोगः—

परिवृतदेशादिनित्यकाम्यस्थलेषु अभिषेकः, आदित्योपस्थानम्, मेखलावमोचनम्, वपनम्, अलंकारवस्त्रस्रगुपानद्दण्डधारणम्, परिषद्दर्शनम्, प्राणाभिमर्शनम्, रथेन प्रदक्षिणमावर्तनम्, अर्घ्यदानम् ३५४५.

## जैमिनिगृह्यसूत्रम्

चूडाकर्म— चूडाकर्मविधिः—

चूडाकर्मकालः, यथाप्रवरर्षि यथाकुलधर्मं वा शिखाकरणम्, क्रिया अमन्त्रकं समन्त्रकं वा २९००.

चूडाकर्म— चूडाकर्ममुहूर्तः—

चूडाकर्मणि अयनपक्षनक्षत्राणि २९११.

चूडाकर्म— चूडाकर्मप्रयोगः—

स्वस्तिवाचनम्, होमः, केशवपनविधानम्, केशनिधानम्, शिखाकरणम्, प्रायश्चित्तहोमः, स्त्रियाः समन्त्रकं चेत् होमात्पूर्वं वपनम्, मूर्धानं स्पृष्ट्वा जपः, केशनिखननम्, नापिताय पूर्णपात्रदानम्, दक्षिणादानम् २९५४.

उपनयनम्— उपनयनकालः—

मुख्यकाम्यगौणकालाः ३०३६.

उपनयनम्— वस्त्रम्—

वस्त्रप्रकृतिद्रव्ययोर्वर्णत्रयस्याधारणो विकल्पः ३०८१,

## कौशिकगृह्यसूत्रम्



## वैखानसगृह्यसूत्रम्

## हिरण्यकेशिधर्मसूत्रम्



## वैखानसधर्मसूत्रम्

## वसिष्ठः

उपनयनम्– उपनयनकालः–

गर्भतो गणनीया मुख्यकालाः ३०४१.

## वृद्धविष्णुः

उपनयनम्– नान्दीश्राद्धोत्तरं कालादिदोषप्राप्तौ निर्णयः–

नान्दीश्राद्धोत्तरमकालिकानध्याये उपनयनानुज्ञा वेदारम्भनिषेधश्च ३१९९.

उपनयनम्– अधिकारार्थप्रायश्चित्तम्–

सावित्र्युपदेशतद्ग्रहणाधिकारसिद्ध्यर्थमुपनेतुरुपनेयस्य च प्रायश्चित्तम् ३२०१.

## शङ्खः

विकलाङ्गादिसंस्काराः–

मूकोन्मत्तौ न संस्कार्यौ २९६६.

उपनयनम्– उपनयनपदार्थादिविचारः–

उपनयनं द्वितीयं जन्म तेन द्विजत्वं च, तत्र पितरौ २९९८.

उपनयनम्– उपनेयानुपनेयौ–

द्वादशविधाः पुत्रा रथकाराद्यनुलोमजाश्चोपनेयाः ३००७.

उपनयनम्– वस्त्रम्–

वर्णभेदेन वस्त्रप्रकृतिद्रव्यभेदः ३०८३.

उपनयनम्– अजिनम्–

वर्णभेदेनाजिनभेदः ३०९१.

उपनयनम्– यज्ञोपवीतम्–

वर्णभेदेन यज्ञोपवीतभेदः ३०९७.

उपनयनम्– मेखला–

वर्णभेदेन भिन्नाः साधारणी च मेखलाः ३१०८.

उपनयनम्– दण्डः–

वर्णभेदेन दण्डप्रकृतिभेदाः, दण्डानां प्रामाणानि स्वरूपं च ३११९.

उपनयनमुहूर्तः– अयनर्तुमासपक्षविचारः–

वर्णभेदेन भिन्ना ऋतवः ३१२७.

उपनयनम्– उपनयनप्रयोगः–

वर्णभेदेन भिक्षावाक्यानि ३३१९.

समावर्तनम्– समावर्तनविधिः–

गुरुदक्षिणादानगुर्वनुज्ञाग्रहणे अधिकारिविशेषणे १४८२.

## शङ्खलिखितौ

उपनयनम्– दण्डः–

दण्डप्रकृतयः, दण्डप्रमाणानि ३११९.

उपनयनमुहूर्तः– अयनर्तुमासपक्षविचारः–

वर्णभेदेन भिन्ना ऋतवः ३१२७.

उपनयनम्– कालातिक्रमादिनिमित्तकप्रायश्चित्तानि–

व्रात्यस्य चान्द्रायणगोप्रदाने प्रायश्चित्तम्, चान्द्रायणानुकल्पः ३२०८.

## शङ्खः शङ्खलिखितौ च

चूडाकर्म– चूडाकर्मविधिः–

यथाकुलधर्मं चूडाकरणम्, चूडाकर्मकालः २९०२.

उपनयनम्– उपनयनकालः–

गर्भतो गणनीया मुख्यगौणकालाः ३०४१.

उपनयनम्– व्रात्यविचारः–

गौणकालोत्तरं व्रात्यत्वं पातित्यं च ३०६१.

## मनुः

चूडाकर्म– चूडाकर्मविधिः–

चूडाकर्मकालः २९०२.

चूडाकर्म– चूडाकर्ममुहूर्तः–

दक्षिणायने चूडाकर्मनिषेधः २९१३.

उपनयनम्– उपनयनपदार्थादिविचारः–

उपनयनं द्वितीयं जन्म, उपनयनप्रशंसा, द्वितीयजन्मनि पितरौ २९९८.

उपनयनम्– उपनेयानुपनेयौ–

त्रयो वर्णा अनुलोमजाश्चोपनेयाः, शूद्रादयोऽनुपनेयाः ३००८.

उपनयनम्– स्त्रीणामुपनयनम्–

स्त्रीणामुपनयनस्थाने विवाहविधिः, गुरुगृहवासस्थाने पतिसेवा, अग्निकार्यस्थाने गृहकृत्यम् ३०२७.

उपनयनम्– उपनयनकालः–

गर्भतो गणनीया मुख्यगौणकाम्यकालाः ३०४२.

## वृद्धमनुः



## ज्योतिर्मनुः



## याज्ञवल्क्यः

समावर्तनम्— समावर्तनविधिः—

वरदानानुज्ञाग्रहणवेदाध्ययनादीन्यधिकारिविशेषणानि ३४८५.

## नारदः

चूडाकर्म— चूडाकर्मविधिः—

चूडाकर्मकालः, मातरि गर्भिण्यां पञ्चमाब्दात्प्राक् चूडाकर्मनिषेधः उपनयनेन सह करणे दोषाभावश्च २९०३.

चूडाकर्म— चूडाकर्ममुहूर्तः—

चूडाकर्मणि अयनमासतिथिवारनक्षत्रलग्ननवांशग्रहसंस्थानानि, गुरुशुक्रास्तयोर्निषेधः २९१३.

गर्भाधानादिचौलान्तसंस्कारातिपत्तिप्रायश्चित्तम्—

गर्भाधानाद्येकैकलोपे व्याहृतिहोमपूर्वकं पादकृच्छ्रम्, चौललोपेऽर्धकृच्छ्रम्, मत्या लोपे द्विगुणम् २९६३.

उपनयनम्— उपनयनकालः—

नित्यकाम्योपनयनकालाः ३०४९.

उपनयनम्— पुनरुपनयननिमित्तानि—

कृष्णपक्षगलग्रहापराह्णेषु चन्द्रस्य पापांशगतत्वे अनध्याये चोपनयनं पुनरुपनयननिमित्तं क्वचिदपवादश्च ३०७६.

उपनयनमुहूर्तः— अयनर्तुमासपक्षविचारः—

वर्णभेदेन प्रशस्तर्तुभेदः, वर्णसाधारणा मासाः मासभेदेन फलभेदश्च ३१२७.

उपनयनमुहूर्तः— तिथयः—

श्रेष्ठमध्यमातिनिन्दितास्तिथयः ३१३६.

उपनयनमुहूर्तः— वाराः—

प्रशस्तमध्यमाधमाः वर्ज्याश्च वाराः ३१४२.

उपनयनमुहूर्तः— नक्षत्राणि—

ग्राह्यवर्ज्यनक्षत्राणि, जन्मनक्षत्रविधिः ३१४५.

उपनयनमुहूर्तः— दिनभागाः—

दिवाकरणविधिः ३१६०.

उपनयनमुहूर्तः— लग्न—लग्नांशविचारः—

सौम्यस्वामिकाः सौम्ययुताः सौम्येक्षिता वा लग्नलग्ननवांशा ग्राह्याः, मेषादीनां लग्नतन्नवांशानां फलानि ३१६२.

उपनयनमुहूर्तः— ग्रहसंस्थानविचारः—

अंशविशेषगतचन्द्रफलानि, भावविशेषगतशुभाशुभग्रहफलानि, लग्नगतचन्द्रनिषेधः, स्फूर्जितकूजितरुदितरन्ध्रोग्रयोगाणां स्वरूपाणि फलानि च ३१६७.

उपनयनमुहूर्तः— गुरु—शुक्र—शाखेश—वर्णेशादिविचारः—

गुरुबलान्मुख्यकालो बलीयान्, गुरुशुक्रशाखेशानामनस्त इष्टः, शाखेशविभागः, गुरुशुक्रशाखेशवर्णेशबलमिष्टम्, गुरुशुक्रशाखेशानां नानाविधा इष्टानिष्टस्थितयः, वर्णेशबलाच्छाखेशबलं बलीयः ३१७७.

उपनयनमुहूर्तः— निषिद्धकालाः—

तिथिरूपनित्यानध्यायास्तत्पूर्वापरतिथयः अन्ये चानध्यायास्त्याज्याः ३१८८.

उपनयनमुहूर्तः— मुहूर्तविषयकसंकीर्णवचनानि—

मुहूर्तप्रशंसा, दैवज्ञपूजा ३१९५.

समावर्तनम्— समावर्तनमुहूर्तः—

स्नाने अयनतिथिवारनक्षत्रलग्नांशा गुरुशुक्रोदयविधिश्च ३४९४.

छुरिकाबन्धः— छुरिकाबन्धविधिः—

छुरिकामानम्, मानादिभेदेन फलभेदः ३५५८.

छुरिकाबन्धः— छुरिकाबन्धमुहूर्तः—

छुरिकाबन्धे मासपक्षतिथिवारनक्षत्रलग्नानि, गुरुशुक्रभौमोदयाः, चन्द्रताराबलम्, ग्रहसंस्थानम् ३५५९.

छुरिकाबन्धः— छुरिकाबन्धप्रयोगः—

देवपितृपूजनपूर्वकं छुरिकापूजनम्, छुरिकाबन्धनम् ३५६०.

## बृहस्पतिः

चूडाकर्म— चूडाकर्मविधिः—

चूडाकर्मकालः, मातरि गर्भिण्यां पञ्चममासादूर्ध्वं चूडाकरणनिषेधः २९०५.

चूडाकर्म— चूडाकर्ममुहूर्तः—

चूडाकर्मणि अयनपक्षतिथिवारनक्षत्रलग्नवर्गनवांशग्रहसंस्थानानि, मलमासे चूडाकर्मनिषेधः २९१३.

विद्यारम्भः—

विद्यारम्भे तिथिवारवर्गलग्ननवांशग्रहसंस्थानानि, गौणकालः २९७०.

## भृगुः



## कात्यायनः



## व्यासः

उपनयनम्— व्रात्यविचारः—

गौणकालोत्तरं व्रात्यत्वमव्यवहार्यत्वं च ३०६४.

उपनयनम्— मेखला—

विप्रस्य मुख्या मेखला अनुकल्पश्च, मेखलास्वरूपम् ३११०.

उपनयनम्— दण्डः—

दण्डानां प्रमाणानि स्वरूपं च ३१२१.

उपनयनमुहूर्तः— तिथयः—

कृष्णपक्षीयप्रशस्तमध्यमास्तिथयः, कासांचिन्निषिद्धतिथीनां प्रतिप्रसवः ३१३७.

उपनयनम्— पुनरुपनयनमुहूर्तः—

पुनरुपनयने शुक्लचतुर्दशीकृष्णप्रतिपदाविष्टे ३१९७.

वेदव्रतानि— वेदव्रतविधिः—

व्रतान्यकृत्वा वेदाध्ययने प्रायश्चित्तपूर्वकं व्रतानुष्ठानम् ३३७०.

समावर्तनम्— समावर्तनविधिः—

वेदाध्ययनव्रताचरणगुर्वनुज्ञादक्षिणादानानि स्नानाधिकारसंपादकानि ३४८८.

## लघुव्यासः

समावर्तनम्— समावर्तनविधिः—

वेदाध्ययनव्रताचरणे स्नानाधिकारनिमित्ते ३४८८.

## देवलः

विकलाङ्गादिसंस्काराः—

षण्ढो न संस्कार्यः २९६६.

उपनयनम्— उपनयनपदार्थादिविचारः—

उपनयनं द्वितीयं जन्म, तत्र पितरौ, तेन द्विजातित्वम् ३००१.

उपनयनम्— उपनेयानुपनेयौ—

व्यभिचारोत्पन्ना व्रात्याश्चानुपनेयाः ३०१८.

उपनयनम्— उपनयनकालः—

अष्टमे वर्षे उपनयनार्हत्वम् ३०५०.

उपनयनम्— यज्ञोपवीतम्—

यज्ञोपवीते मुख्यामुख्यकल्पाः ३०९९.

वेदव्रतानि— वेदव्रतसामान्यप्रयोगः—

कालातिक्रमणे प्रायश्चित्तविधानं कालमतिक्रम्याधीतस्य पुनरध्ययनं च ३३८८.

## उशना

उपनयनम्— उपनेयानुपनेयौ—

सूतसुवर्णावुपनेयौ, रथकारोऽनुपनेयः ३०१८.

उपनयनम्— उपनयनकालः—

काम्योपनयनकालाः ३०५०.

## यमः

चूडाकर्म— चूडाकर्मविधिः—

चूडाकर्मकालः २९०५.

उपनयनम्— उपनेतारः—

उपनेतृगुणाः ३०२३.

उपनयनम्— स्त्रीणामुपनयनम्—

स्त्रीणामुपनयनादिविधिः पुराकल्पविषयः, तत्राध्ययनादि पितृपितृव्यभ्रातृभ्य एव, स्वगृहे एव भैक्षचर्या, अजिनचीरजटाधारणानि वर्जनीयानि ३०२७.

उपनयनम्— उपनयनकालः—

मुख्यगौणकालाः ३०५०.

उपनयनम्— व्रात्यविचारः—

गौणकालोत्तरं व्रात्यत्वमव्यवहार्यत्वं च ३०६५.

उपनयनम्— वस्त्रम्—

परिधानीयवस्त्रप्रकृतिद्रव्याणि ३०८४.

उपनयनम्— अजिनम्—

वर्णभेदेन भिन्नं सर्ववर्णेष्वभिन्नं वाजिनम् ३०९२.

उपनयनम्— मेखला—

वर्णभेदेन भिन्ना मेखलाः, मेखलानुकल्पाः, मेखलास्वरूपम् ३११०.

उपनयनम्— दण्डः—

वर्णेषु दण्डप्रकृतीनां भेदो मुख्यः, अभेदोऽनुकल्पः ३१२१.

उपनयनम्— कालातिक्रमादिनिमित्तकप्रायश्चित्तानि—

गौणकालातिक्रमे व्रतविशेषः प्रायश्चित्तं तत्स्वरूपं च ३२०९.

## ज्योतिःपराशरः



## अत्रिः



## पैठीनसिः



## अङ्गिराः



## प्रचेताः



## गर्गः

## वृद्धगर्गः



## गार्ग्यः



## वृद्धगार्ग्यः



## ज्योतिर्गर्गः



## आश्वलायनः

## लघ्वाश्वलायनः

## शौनकः



## बुधः



## विश्वामित्रः



## जातुकर्णिः



## जातूकर्ण्यः



## बादरायणः



## कश्यपः

## ब्रह्माण्डपुराणम्



## स्कन्दपुराणम्



## विष्णुधर्मोत्तरपुराणम्



## पद्मपुराणम्



## ब्रह्मपुराणम्



## कूर्मपुराणम्

## भविष्यपुराणम्

उपनयनम्— दण्डः—

वर्णभेदेन दण्डप्रकृतिभेदाः ३१२२.

उपनयनम्— उपनयनप्रयोगः—

प्रथमभिक्षणीयाः स्त्रियः देयभिक्षा च ३३३४.

## अग्निपुराणम्

उपनयनम्— अजिनम्—

वर्णभेदेन भिन्नान्यजिनानि ३०९३.

## आदित्यपुराणम्

उपनयनम्— यज्ञोपवीतम्—

क्षौमकार्पासशाणोपवीतफलम् ३१००.

## नृसिंहपुराणम्

समावर्तनम्— समावर्तनविधिः—

वेदाध्ययनशास्त्रार्थज्ञानवरदानानि स्नानाधिकारहेतवः ३४८९.

## आदिपुराणम्

उपनयनम्— उपनेयानुपनेयौ—

अवरोढकसंज्ञकौ कुण्डगोलकावनुपनेयौ ३०१९.

## रोमशसंहिता

उपनयनमुहूर्तः— तिथयः—

याजुषान् प्रति सोपपदाप्रतिप्रसवः ३१३९.

## कपिलसंहिता

उपनयनम्— कालातिक्रमादिनिमित्तकप्रायश्चित्तानि—

कालातिक्रमे उपनेतुर्ब्रह्मकूर्चप्राशनमाब्दिकव्रतं लक्षगायत्रीजपश्च प्रायश्चित्तम् ३२१०.

## अनिर्दिष्टकर्तृकवचनानि

चूडाकर्म— चूडाकर्मविधिः—

चूडाकर्मकालः, सच्छूद्रस्य यथाकुलधर्मं शिखाकरणम् २९०८.

चूडाकर्म— चूडाकर्ममुहूर्तः—

चूडाकर्मणि अयनमासपक्षतिथिवारदिनभागाः २९२०.

विकलाङ्गादिसंस्काराः—

मूकादयः संस्कार्याः २९६८.

विद्यारम्भः—

विद्याफलम्, विद्यारम्भे वर्षमासपक्षतिथिवारनक्षत्रलग्नवांशदशाग्रहसंस्थानानि, प्रागल्भ्यं विद्यासाफल्यहेतुः, गणेशादिपूजनम् २९७४.

उपनयनम्— उपनयनपदार्थादिविचारः—

गुरु—व्रतादिसमीपनयनम् उपनयनपदार्थः ३००४.

उपनयनम्— उपनयनकालः—

ब्राह्मणोपनयनमुख्यकालः ३०५४.

उपनयनम्— मातृरजोदर्शनादौ निर्णयः—

नान्दीश्राद्धोत्तरं मातृरजोदर्शने शान्तिपूर्वकं कर्मानुष्ठानम् ३०६८.

उपनयनम्— पुनरुपनयननिमित्तानि—

अनध्यायोपनयनं विप्रस्य पुनरुपनयननिमित्तम् ३०७७.

उपनयनमुहूर्तः— अयनर्तुमासपक्षविचारः—

उदगयने मीनसूर्यविशिष्टचैत्रप्राशस्त्यम्, मेषसूर्यविशिष्टचैत्रनिषेधः, दक्षिणायननिषेधः, वर्णेषु प्रशस्ता ऋतवः साधारणा मासाश्च ३१३१.

उपनयनमुहूर्तः— तिथयः—

षष्ठी—रिक्तातिथिफलानि, वर्ज्यतिथयः ३१३९.

उपनयनमुहूर्तः— नक्षत्राणि—

वेदभेदेन नक्षत्रभेदः, सर्ववेदसाधारणानि नक्षत्राणि, वर्ज्यनक्षत्राणि, क्षौरनक्षत्राणामुपनयनेऽतिदेशः ३१५२.

उपनयनमुहूर्तः— लग्न—लग्नांशविचारः—

लग्नांशफलानि ३१६२.

उपनयनमुहूर्तः— ग्रहसंस्थानविचारः—

पञ्चमभावशुद्धिः, चन्द्रनवांशफलानि, सूर्यादीनां द्वादशसु भावेषु फलानि, इष्टानिष्टभावफलापवादाः, दृष्टिविशेषफलानि ३१६९.

उपनयनमुहूर्तः— गुरु—शुक्र—शाखेश— वर्णेशादिविचारः—

शाखेशविभागः, रविगुरुबलमावश्यकम्, इष्टानिष्टगुरुस्थितयः ३१८०.

उपनयनमुहूर्तः— निषिद्धकालाः—

महादोषास्त्याज्याः ३१८९.

उपनयनमुहूर्तः— गुरु—शुक्र—शाखेश—वर्णेशादिविचारः—

अर्चनेन गुर्वादिदोषशमनम् , गुर्वादिदोषापवादाः , गुर्वादिबलान्मुख्यकालो बलीयान् , विन्ध्योत्तरदेशे गुरुदोषप्रतिप्रसवः , शाखेशवर्णेशविभागो ३१८०.

उपनयनमुहूर्तः— निषिद्धकालाः—

तिथिविशेषा अनाध्यायाश्च वर्ज्याः ३१८९.

उपनयनम्— पुनरुपनयनमुहूर्तः—

पुनरुपनयनेऽप्यनापदि निषिद्धकालानुज्ञा ३१९८.

उपनयनम्— वेदिनिर्माणविधिः—

वेदेर्मानमाकारश्च ३२१२.

उपनयनम्— उपनयनप्रयोगः—

मेधाजननपदार्थः , कौपीनधारणम् ३३३५.

उपनयनम्—

उपनयनोत्तरं ब्रह्मौदनपाकात्पूर्वं मेघगर्जनादौ दोषः शान्तिश्च ३३५१.

वेदव्रतानि— वेदव्रतविधिः—

गोदानस्य कालः क्रमश्च ३३७१.

वेदव्रतानि— गोदानव्रतप्रयोगः—

गोदाने चौलकल्पातिदेशः सविशेषः ३४५८.

समावर्तनम्— समावर्तनविधिः—

गुरुदक्षिणादानं गुर्वनुज्ञाग्रहणं वा स्नानाधिकारहेतुः , आसन्नविवाहस्य स्नानं प्रशस्तम् ३४८९.

छुरिकाबन्धः— छुरिकाबन्धविधिः—

राजपुत्रस्य मौञ्जीबन्धनस्थाने छुरिकाबन्धनम् ३५५८.

छुरिकाबन्धः— छुरिकाबन्धमुहूर्तः—

छुरिकाबन्धे तिथ्यादयो वाराश्च ३५५९.

## लल्लः

उपनयनमुहूर्तः— गुरु—शुक्र—शाखेश—वर्णेशादिविचारः—

शाखेशगुरुरविचन्द्राणां बलमिष्टम् , अनिष्टा गुरुशुक्रस्थितयः , गुरोर्वक्रत्वातिचारबाल्यवृद्धत्वास्तमयाः सिंहस्थत्वं नेष्टानि ३१८०.

## वराहः ( वराहमिहिरः )

उपनयनमुहूर्तः— अयनर्तुमासपक्षविचारः—

माघादिमासविधिः , ज्येष्ठपुत्रं प्रति ज्येष्ठस्य सर्वान् प्रति जन्ममासस्य च निषेधः ३१३२.

उपनयनमुहूर्तः— वाराः—

वेदभेदेन वारभेदः ३१४३.

## स्मृत्यर्थसारः

चूडाकर्म— चूडाकर्मविधिः—

चूडाकर्मकालः २९०८.

विकलाङ्गादिसंस्काराः—

षण्ढादयः संस्कार्याः , मूकोन्मत्तविषये मतभेदः २९६८.

उपनयनम्— उपनेयानुपनेयौ—

द्वादशविधाः पुत्रा अनुलोमजाश्चोपनेयाः , कुण्डगोलकौ मतभेदेनोपनेयावनुपनेयौ च, प्रतिलोमजा अनुपनेयाः ३०२०.

उपनयनम्— उपनयनकालः—

मुख्यगौणकालाः ३०५५.

उपनयनम्— व्रात्यविचारः—

गौणकालोत्तरं व्रात्यत्वम् , व्रात्येष्वकृतप्रायश्चित्तेषूपनयनादिनिषेधाः ३०६६.

उपनयनम्— वस्त्रम्—

अहतलक्षणम् , अहतत्वादिविधानम् ३०८४.

उपनयनम्— अजिनम्—

प्रतिवर्णभिन्नमजिनम् ३०९३.

उपनयनम्— यज्ञोपवीतम्—

उपवीते मुख्यामुख्यकल्पाः वर्णसाधारणत्वं च ३१००.

उपनयनम्— मेखला—

मेखलास्वरूपम् , मेखलानुकल्पाः ३१११.

उपनयनम्— दण्डः—

वर्णभेदेन दण्डप्रकृतिभेदाः , दण्डानां प्रमाणानि स्वरूपं च ३१२२.

उपनयनम्— कालातिक्रमादिनिमित्तकप्रायश्चित्तानि—

कालातिक्रमतारतम्येन प्रायश्चित्ततारतम्यम् , उद्दालकव्रतस्वरूपम् , व्रात्यपितृकत्वादौ आपस्तम्बोक्तप्रायश्चित्तातिदेशः ३२११.

## रत्नकोशे



## अपरार्के



## हेमाद्रौ



## शार्ङ्गधरीये



## कृत्यचिन्तामणौ



## गाङ्गेयः



## दुर्गादित्यः



## सुरेश्वरः



## चण्डेश्वरः

## नृसिंहः

चूडाकर्म– चूडाकर्मविधिः–

चूडाकर्मकालः २९०८.

चूडाकर्म– चूडाकर्ममुहूर्तः–

चूडाकर्मणि वर्ज्यास्तिथयः २९२०.

विद्यारम्भः–

विद्यारम्भे वर्षमासपक्षतिथिकरणग्रहसंस्थानानि, गणेशवाणीगुरूणां पूजनम्, शिशोः पश्चिमाभिमुखत्वम् २९७५.

उपनयनमुहूर्तः– अयनर्तुमासपक्षविचारः–

उदगयनविधिः ३१३३.

उपनयनमुहूर्तः– तिथयः–

प्रशस्ता मध्यमा निषिद्धाश्च तिथयः ३१४०.

उपनयनमुहूर्तः– नक्षत्राणि–

शैव–वैष्णव–सवर्ण–कुण्डगोलकान् प्रति नक्षत्रविशेषविधिः ३१५५.

उपनयनमुहूर्तः– लग्न–लग्नांशविचारः–

गुरुशुक्रबुधानामुदये तेषां लग्नानि शुक्लपक्षे चन्द्रलग्नं चेति शस्तानि, गुरुशुक्रलग्नयोः फले, गुरुशुक्रबुधांशाः तद्दृष्टा वा अंशाः प्रशस्ताः, चन्द्रांशो मध्यमः ३१६३.

वेदव्रतानि– वेदव्रतमुहूर्तः–

व्रतेषु चौलकालातिदेशः, रिक्ताविष्टयोः निषेधः ३३७६.

समावर्तनम्– समावर्तनविधिः–

व्रताचरणं स्नानाधिकारहेतुः ३४९०.

समावर्तनम्– समावर्तनमुहूर्तः–

स्नाने नक्षत्राणि ३४९५.

## भीमपराक्रमः

विद्यारम्भः–

विद्यारम्भे नक्षत्राणि २९७५.

उपनयनम्– उपनयनकालः–

काम्यकालाः, गर्भतो जन्मतो वा गणना मतभेदेन ३०५५.

उपनयनमुहूर्तः– गुरु- शुक्र- शाखेश- वर्णेशादिविचारः–

गुरुचन्द्रसूर्यबलानीष्टानि, वर्णभेदेनेष्टानि साधारणासाधारणानि ग्रहबलानि ३१८१.

## भुजबलः

चूडाकर्म– चूडाकर्ममुहूर्तः–

चूडाकर्मणि मासो वाराश्च २९२०.

उपनयनमुहूर्तः– तिथयः–

वर्ज्यतिथयः ३१४०.

## भुजबलभीमः

उपनयनमुहूर्तः– नक्षत्राणि–

नक्षत्रविधिः ३१५५.

उपनयनमुहूर्तः– ग्रहसंस्थानविचारः–

शुक्रादीनां केन्द्रस्थितिरिष्टा ३१७१.

उपनयनमुहूर्तः– मुहूर्तविषयकसंकीर्णवचनानि–

इष्टानि तिथिवारनक्षत्राणि ग्रहसंस्थानं चन्द्रबलताराबले च ३१९५.

## माधवीये

चूडाकर्म– चूडाकर्ममुहूर्तः–

चूडाकर्मणि वारलग्नग्रहसंस्थानानि २९२१.

उपनयनमुहूर्तः– गुरु–शुक्र–शाखेश–वर्णेशादिविचारः–

वर्णेशगुरुशुक्रचन्द्रबलानीष्टानि ३१८१.

## सायणीये

विद्यारम्भः–

विद्यारम्भे नक्षत्राणि २९७५.

## श्रीपतिः

चूडाकर्म– चूडाकर्ममुहूर्तः–

चूडाकर्मणि ग्रहसंस्थानानि नक्षत्राणि च २९२१.

विद्यारम्भः–

विद्यारम्भे तिथिवारग्रहसंस्थानानि, संध्यागर्जितादिवर्जनम् २९७६.

उपनयनमुहूर्तः– योगाः करणानि च–

वर्ज्या योगा योगघटिकाश्च ३१५९.

उपनयनमुहूर्तः– लग्न–लग्नांशविचारः–

लग्नांशानां फलानि ३१६३.

## श्रीपतिनिबन्धे



## रत्नमालायाम्



## राजमार्तण्डः



## स्मृतिसारे



## विधिसंग्रहे



## विधिरत्ने



## श्रीधरः

चूडाकर्म– चूडाकर्ममुहूर्तः–

चूडाकर्मणि अयनपक्षतिथिवारनक्षत्रलग्नवांशग्रह-संस्थानानि गुरुशुक्रोदयौ दिनभागश्च २९२२.

## श्रीधरीये

विद्यारम्भः–

विद्यारम्भे नक्षत्राणि २९७७.

उपनयनमुहूर्तः– लग्न–लग्नांशविचारः–

मेषादिलग्नफलानि, अशुभफलमपि लग्नं शुभग्रहैर्युक्तं दृष्टं वा ग्राह्यम् ३१६३.

उपनयनमुहूर्तः– गुरु–शुक्र–शाखेश–वर्णेशादिविचारः–

गुरुबलमावश्यकम् ३१८२.

समावर्तनम्– समावर्तनमुहूर्तः–

स्नाने तिथिवारनक्षत्रलग्नवांशदिनवैमल्यानि ३४९५.

## षड्गुरुशिष्यः

चूडाकर्म– चूडाकर्मविधिः–

चूडाकर्मकालः २९०८.

चूडाकर्म– चूडाकर्मप्रयोगः–

आश्वलायनगृह्यसूत्रस्थलोहशब्दकृत्यम् २९५७.

उपनयनम्– स्त्रीणामुपनयनम्–

स्त्रीणामुपनयनाभावः ३०२७.

उपनयनम्– उपनयनकालः–

जन्मत एव वर्षगणनाऽऽश्वलायनगृह्ये ३०५६.

## ज्योतिःसारे

उपनयनम्– मातृरजोदर्शनादौ निर्णयः–

नान्दीश्राद्धोत्तरं मातृरजोदर्शने मौञ्जीबन्धननिषेधः ३०६८.

## वरदराजीये

चूडाकर्म– चूडाकर्मविधिः–

मातरि गर्भिण्यां पञ्चममासात्परं चौलनिषेधः २९०९.

उपनयनम्– मातृरजोदर्शनादौ निर्णयः–

नान्दीश्राद्धात्पूर्वं मातृरजोदर्शने व्रतबन्धनिषेधः, तत्करणे बटोर्व्रात्यत्वं प्रायश्चित्तपूर्वकं पुनरुपनयनं च, मातुर्गर्भिणीत्वे पञ्चममासोत्तरमुपनयननिषेधः ३०६८.

## मदनपारिजाते

चूडाकर्म– चूडाकर्मविधिः–

मातरि गर्भिण्यां चौलनिषेधः २९०९.

## धर्मप्रदीपे

चूडाकर्म– चूडाकर्मविधिः–

स्त्रीशूद्रयोः शिखाधारणनिषेधः २९०९.

## अर्णवे

चूडाकर्म– चूडाकर्ममुहूर्तः–

चूडाकर्मणि निषिद्धानि तिथिवारनक्षत्रदिनान्तमलमासगुरुशुक्रमौढ्यानि २९२३.

उपनयनमुहूर्तः– गुरु–शुक्र–शाखेश–वर्णेशादिविचारः–

वर्णेशविभागः, शाखेशवर्णेशबले इष्टे ३१८२.

## ऋक्षोच्चये

उपनयनमुहूर्तः– नक्षत्राणि–

लत्तापातादिदोषरहितानि नक्षत्राणि ग्राह्याणि ३१५५.

## महेश्वरः

चूडाकर्म– चूडाकर्ममुहूर्तः–

चूडाकर्मणि तिथिवारनक्षत्रदिनभागाः २९२३.

विद्यारम्भः–

विद्यारम्भे तिथिवारनक्षत्रग्रहसंस्थानानि २९७७.

उपनयनमुहूर्तः– ग्रहसंस्थानविचारः–

केन्द्रस्थितग्रहफलानि, इष्टानिष्टग्रहयोगाः ३१७२.

वेदव्रतानि– वेदव्रतमुहूर्तः–

गोदाने चौलकालस्य व्रतोत्सर्जने व्रतोपाकरणकालस्य चातिदेशः ३३७६.

समावर्तनम्– समावर्तनमुहूर्तः–

स्नाने व्रतबन्धमुहूर्तातिदेशः ३४९६.

## कालविधाने

उपनयनमुहूर्तः– मुहूर्तविषयकसंकीर्णवचनानि–

शुक्लपक्षचन्द्रबलगुरुशुक्रोदयशाखेशबलशुभलग्नशुभनक्षत्राणीष्टानि ३१९५.

## प्रतापमार्तण्डः

विद्यारम्भः–

विद्यारम्भे श्रुतदोषाभावः २९७७.

## ज्योतिर्निबन्धे



## दैवज्ञमनोहरे



## ज्योतिरर्णवे



## मुहूर्ततत्त्वे



## मुहूर्तमार्तण्डः



## मुहूर्तचिन्तामणिः

## शौनककारिकाः

वेदव्रतानि— उपनिषद्( वैश्वदेव )व्रतप्रयोगः—

उपनिषद्व्रते महाव्रतप्रयोगातिदेशः सविशेषः ३४३८.

वेदव्रतानि— गोदानव्रतप्रयोगः—

गोदाने चौलकल्पातिदेशोऽर्थसिद्धः तत्र विशेषाश्च, आऽस्तमयाद्वाङ्नियमः, दक्षिणादानम्, व्रतादेशनम् ३४५८.

समावर्तनम्— समावर्तनविधिः—

वेदग्रासाध्ययनव्रताचरणदक्षिणादानगुर्वनुज्ञानानि स्नानहेतवः, स्नाने स्वस्यैव कर्तृत्वम्, विवाहपूर्वदिने गोदानादिभिः सह तन्त्रेणानुष्ठानम् ३४९०.

समावर्तनम्— समावर्तनमुहूर्तः—

स्नाने गोदानमुहूर्तातिदेशः ३४९६.

समावर्तनम्— समावर्तनप्रयोगः—

संभारोपकल्पनम्, वृद्धिश्राद्धम्, स्वस्त्ययनम्, नित्यकाम्यसमिदाहरणम्, समिध उपरि निधानम्, ब्राह्मणेभ्योऽन्नगोदानम्, गोदानिककर्मातिदेशः सविशेषः, उन्मर्दनम्, स्नानम्, वस्त्राञ्जनमणिकुण्डलधारणम्, अनुलेपनम्, स्रगुपानच्छत्रदण्डमणिधारणम्, समिदाधानम्, होमोत्तरतन्त्रम्, पुण्याहवाचनम्, मार्गे निवासो मधुपर्कपूजा च, स्नातकव्रतसंकल्पः ३५५०.

## जयन्तकारिकाः

उपनयनम्— उपनयनप्रयोगः—

हस्तग्रहणमन्त्रे आभिवादनिकनामोच्चारणम् ३३४२.

## कुमारिलकारिकाः

चूडाकर्म— चूडाकर्मविधिः—

चूडाकर्मकालः, यथाप्रवरर्षि शिखासंख्या २९१०.

चूडाकर्म— चूडाकर्ममुहूर्तः—

चूडाकर्मणि अयनपक्षौ शुभनक्षत्रं च २९२६.

चूडाकर्म— चूडाकर्मप्रयोगः—

अग्निस्थापनम्, संभारस्थापनम्, होमः, वपनतन्त्रम्, क्षुरधाराशोधनम्, नापितानुशासनम्, शिखाकरणम्, होमशेषसमापनम्, नापिताय व्रीह्यादिशरावदानम् २९५९.

उपनयनम्— पुनरुपनयननिमित्तानि—

अधीतवेदान्तरस्य ऋग्वेदाध्ययनं पुनरुपनयननिमित्तम् ३०७९.

उपनयनम्— उपनयनप्रयोगः—

वृद्धिश्राद्धम्, स्नानालंकरणाशीर्वाचनभोजनवपनस्नानानि, मुहूर्ते समीपानयनम्, होमपूर्वाङ्गम्, वस्त्राजिनोपवीतधारणम्, होमः, अञ्जल्यवक्षारणम्, आदित्यदर्शनम्, परिदानम्, हृदयस्पर्शनम्, ऊहनोक्षणे, समिदाधानम्, अभिवादनम्, सावित्रीवाचनम्, मेखलाबन्धनम्, दण्डदानम्, धर्मोपदेशः, होमशेषसमापनम्, भिक्षाचरणम्, अनुप्रवचनीयहोमः, ब्राह्मणभोजनम्, वेदसमाप्तिवाचनम्, त्रिरात्रादिव्रतम्, मेधाजननम् ३३४२.

उपनयनम्— पुनरुपनयनप्रयोगः—

वेदान्तराध्ययनार्थे पुनरुपनयने अलंकरणमात्रनिषेधः, प्रायश्चित्तार्थे तस्मिन् वपनम् अनुप्रवचनीयत्रिरात्रव्रतविशिष्टमेधाजननं च वैकल्पिकम्, परिदाननिषेधः, सावित्रीविशेषः ३३६३.

वेदव्रतानि— वेदव्रतविधिः—

व्रतविधिः, गोदानकालः ३३७२.

वेदव्रतानि— वेदव्रतसामान्यप्रयोगः—

व्रतेषु केशधारणम् ३३९०.

वेदव्रतानि— महानाम्नी(शाक्वर)व्रतप्रयोगः—

कतिपयोपनयनाङ्गातिदेशः, नवमेखलादिधारणम्, व्रतचर्या, बहिर्ग्रामं होमादिकृत्यम्, व्रतलोपश्चेत्प्रायश्चित्तम्, हुतशेषभोजनम्, आदित्योपस्थानम्, समुखशिरोवेष्टनम्, एकरात्रव्रतनियमाः, अग्निस्थापनम्, महानाम्न्यनुवाचनम्, आदित्यस्य दिशां चेक्षणम्, भूम्युपस्पर्शनम्, अनुप्रवचनीयहोमः ३४०३.

वेदव्रतानि— महाव्रत( व्रातिक )व्रतप्रयोगः—

व्रतादेशनम्, महाव्रतश्रावणम्, अर्केक्षणाद्यतिदेशः ३४१०.

वेदव्रतानि— उपनिषद्( वैश्वदेव )व्रतप्रयोगः—

उपनिषद्व्रते महानाम्नीव्रतप्रयोगातिदेशः सविशेषः ३४३८.

वेदव्रतानि— गोदानव्रतप्रयोगः—

गोदाने चौलकल्पातिदेशः सविशेषः, आऽस्तमयाद्वाग्यमनम्, दक्षिणादानम्, व्रतादेशनम् ३४५८.

समावर्तनम्— समावर्तनविधिः—

वेदाध्ययनं व्रताचरणमुभयं वा गुरुदक्षिणादानमनुज्ञाग्रहणं च स्नानहेतवः, व्रतपक्षेऽप्यारण्यकाध्ययनमावश्यकम्, सामर्थ्ये आचार्याय स्वस्मै च असामर्थ्ये आचार्यायैव मण्याद्युपकल्पनम्, स्नानकर्मणि स्वस्यैव कर्तृत्वम् ३४९०.

समावर्तनम्— समावर्तनप्रयोगः—

समिध आहरणमुपरि निधानं च, ब्राह्मणेभ्यो गोभोजनदानम्, गोदानकर्मातिदेशः सविशेषः, उन्मर्दनम्, स्नानम्, वस्त्राञ्जनकुण्डलानुलेपनस्रगुपानच्छत्रदण्डमणिधारणम्, समिदाधानम्, होमोत्तरतन्त्रम्, स्नातकव्रतसंकल्पः, मार्गे निवासो मधुपर्कपूजा च, आश्रमान्तरस्वीकारे गुर्वनुज्ञाग्रहणम्, मार्गे पक्ष्याद्यप्रियशब्दश्रवणे भयोत्पत्तौ च शान्तिविधानम् ३५५२.

## कपर्दिकारिकाः

चूडाकर्म— चूडाकर्मप्रयोगः—

संभारस्थापनम् २५६०.

उपनयनम्— उपनयनप्रयोगः—

कुमारभोजनम्, आशीर्वाचनम्, वपनम्, यज्ञोपवीतधारणम्, पात्रप्रयोगे विशेषः, समिदाधाने स्वाहाकारनिषेधः, अश्मारोपणम्, वस्त्रादिधारणम्, हस्तग्रहणम्, परिदानम्, होमः, सावित्रीवाचनम्, गुरवे वरदानम्, पूर्ववाससो गुरुणा ग्रहणमन्यस्य परिधापनं च ३३४५.

उपनयनम्— पुनरुपनयनप्रयोगः—

वपनमेखलादण्डभैक्षचर्याव्रतानि वर्ज्यानि ३३६४.

वेदव्रतानि— वेदव्रतसामान्यप्रयोगः—

होमविधानम्, शुक्रियभिन्नेषु देवतोपस्थाननिषेधः, ब्राह्मणतर्पणम् ३३९०.

वेदव्रतानि— शुक्रियव्रतप्रयोगः—

होममन्त्राः, समिदाधानमन्त्राः, शिरोवेष्टनान्ते गृहागमनम्, परेद्युर्बहिर्ग्राममग्न्यादिदर्शनम्, व्रतोत्सर्जने विशेषाः ३४२७.

समावर्तनम्— समावर्तनप्रयोगः—

संभारोपकल्पनम् ३५५४.

## रेणुकारिकाः

चूडाकर्म— चूडाकर्मविधिः—

चूडाकर्मकालः, यथागोत्रं शिखासंख्या २९१०.

चूडाकर्म— चूडाकर्ममुहूर्तः—

चूडाकर्मणि अयनपक्षतिथिवारनक्षत्रलग्नदिनभागाः २९२६.

चूडाकर्म— चूडाकर्मप्रयोगः—

बहिःशालाकरणम्, मातृकापूजननान्दीश्राद्धे, ब्राह्मणभोजनम्, अग्निस्थापनम्, संभारोपकल्पनम्, होमः, केशवपनविधानम्, शिखाकरणम्, गोष्ठादौ केशनिधानम्, वरदानम्, मन्त्राणामृषिदेवतच्छन्दांसि २९६०.

गर्भाधानादिचौलान्तसंस्कारातिपत्तिप्रायश्चित्तम्—

कालात्ययेऽनादिष्टहोमपूर्वकं संस्कारानुष्ठानम् २९६५.

उपनयनम्— उपनेतारः—

पूर्वपूर्वाभावप्रयुक्ताधिकाराः उपनेतारः ३०२५.

उपनयनम्— उपनयनकालः—

नित्यकाम्यगौणकालाः ३०५७.

उपनयनम्— व्रात्यविचारः—

गौणकालोत्तरं व्रात्यत्वम्, व्रात्येष्वकृतप्रायश्चित्तेषूपनयनादिनिषेधाः, व्रात्यापत्येष्वकृतप्रायश्चित्तेषूपनयनादिनिषेधाः, व्रात्यस्तोमे तदर्थमाधाने च व्रात्यस्याधिकारः ३०६६.

उपनयनम्— पुनरुपनयननिमित्तानि—

अनध्यायकृष्णपक्षचतुर्थ्यपराह्णेषूपनयनं पुनरुपनयननिमित्तम् ३०७९.

उपनयनम्— वस्त्रम्—

वर्णभेदेन वर्णसाधारण्येन च वस्त्राणां प्रकृतिद्रव्यरूपभेदाः ३०८४.

## कारिकाः

# शुद्धिपत्रम्

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| २९१२ | १ | १५ | रर्यम | रर्यं |
| २९१३ | २ | ३४ | निच | नीच |
| २९२३ | ,, | १९ | व्दिखव | द्विखव |
| २९३५ | १ | ३२ | दधानि | दधाति |
| २९४४ | २ | २९ | पूर्वेक्ते | पूर्वोक्ते |
| २९४७ | ,, | १४ | गोयम | गोमय |
| २९५४ | १ | ३ | क्रिया | क्रियाः |
| २९६६ | २ | ३० | षढान्घ | षण्ढान्घ |
| २९८२ | १ | ७ | ब्रचर्य | ब्रह्मचर्य |
| २९८३ | २ | ३ | अर्चीर्षि | अर्चीषि |
| ३०१२ | ,, | २ | ग्रहण | ग्रहणं |
| ३०१८ | ,, | ११ | व्यर्थ । : त | व्यर्थः । त |
| ३०३१ | ,, | २ | मन्यते | मन्यन्ते |
| ३०३४ | ,, | १३ | नयनं | नयं |
| ३०३६ | १ | ६ | जैमिनिगृह्यसूत्रम् | जैमिनिगृह्य-सूत्रम् मुख्यकाम्य-गौणकालाः |
| ३०४४ | ,, | २० | चतुर्विंश | चतुर्विंश |
| ३०५८ | ,, | १८ | विश्रीक्रा | विश्रीका |
| ३०६० | २ | २८ | युनैभि | युर्नैभि |
| ३०९६ | ,, | ३३ | शाण (शण) | शाणा (शणा) |
| ३०९८ | १ | १८ | उर्ध्वे | ऊर्ध्वे |
| ,, | २ | १३ | असंभत | असंभवतः |
| ३१०२ | १ | १५ | निरबृहत् | निरदुहत् |
| ३१०६ | २ | १० | बैजवापगृह्यसूत्रम् | बैजवापगृह्य-सूत्रम् मेखलास्वरूपम् |
| ३११९ | ,, | १५ | य रन्य | योरन्य |
| ३१२६ | २ | २२ | सूत्र च | सूत्रं च |
| ३१२७ | ,, | ४ | चोळाप | चोळोप |
| ३१३८ | १ | २ | तिथि | तिथी |
| ३१४० | ,, | ,, | चिक्षुम | चिक्षुम |
| ३१५३ | | | ३४५३ | ३१५३ |
| ३१७४ | १ | १८ | गुरो | गुरौ |
| ३१७९ | २ | ३३ | क्लृप्तः | क्लृप्तः |
| ,, | ,, | ४ | निष्टा | निष्ठाः |
| ३२०८ | ,, | २५ | उर्ध्वं | ऊर्ध्वं |
| ३२०९ | ,, | ३० | भोजय | भोजये |
| ३२३३ | १ | २८ | अ आचार्यः | आचार्यः |
| | | | ' धी | ' अधी |
| ३२३९ | ,, | २९ | यसन | यनस |
| ३२४५ | २ | ५ | आवीसू | अवीसू |
| ३२५० | १ | ३२ | रुग्रभू | रुग्णभू |
| ३२६८ | २ | २७ | रिषत | रिषत् |
| ३२६९ | १ | ९ | वाक्पणि | वाक्पाणि |
| ३२७४ | २ | १ | सविता | सवितः |
| ३२९९ | ,, | ३३ | अङ्कुरे | अङ्कुर |
| ३३११ | २ | ९ | संचेर | संचरे |
| ३३४३ | १ | ३० | १।३। | १।१३। |
| ,, | ,, | ३१ | १।३। | १।१३। |
| ३३५६ | १ | २२ | मुख | मुखं |
| ३३५८ | ,, | २६ | योपते | योपेत |
| ३३७४ | २ | २८ | संकृत | संस्कृत |
| ३३७८ | ,, | ६ | वक्लृसः | वक्लृप्तः |

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ३३७९ | २ | २७ | पितुन्म्र | पितृन्म्र |
| ३३८१ | १ | २५ | रभाक्त् | रभावात् |
| ३४३१ | ,, | ३१ | मत्र | मन्त्र |
| ३४३२ | ,, | १८ | शङ्क | शङ्क |
| ३४४१ | २ | १९ | प्रबोग | प्रयोगा |
| ३४६१ | ,, | ३२ | पङ्कि | पङ्क्ति |
| ३४७६ | ,, | २४ | चिकिर्षो | चिकीर्षो |
| ३४८९ | ,, | ३१ | ५८।१ | ५८।३९ |
| ३४९७ | १ | २४ | दघति | दघाति |
| ३५०३ | २ | २९ | एक क्री | एकक्री |
| ३५२६ | ,, | ८ | पर्श्व | षंभ |
| ३५३० | १ | २६ | काण्डात | काण्डान्त |
| ३५३२ | २ | २९ | स्त नूदू | स्तनूदू |
| ३५३७ | २ | ३ | मेघा | मेघा |
| ३५५२ | ,, | २० | त्विमाम् | त्विमाम् |
| ,, | ,, | २७ | तदा | तदाऽ |
| ३५५३ | ,, | ३४ | : | ; |
| ,, | २ | १ | गार्हस्थं | गार्हस्थ्यं |

# धर्मकोशः

## संस्कारकाण्डम्

### $चूडाकर्म

#### चूडाकर्मविधिः

**बौधायनगृह्यसूत्रम्**

चूडाकर्मकालः, यथाकुलधर्मं यथाप्रवरार्षिसंख्यं वा शिखासंख्या, शिखायां केशसंख्या

[1]**संवत्सरे चूडाकर्म त्रिषु वा संवत्सरेषु ॥**

¶ [2]**अथैवमेकशिखस्त्रिशिखः पञ्चशिखो वा यथैवैषां कुलधर्मः स्यात् ॥**

[3]**यथर्षि शिखां निदधातीत्येके ॥**

[4]**शतानां सप्तत्रिगुणमष्टोत्तरमथापि च ।**
**केशानामपि संख्यानां शिखैका परिकीर्तिता ॥**

$ प्रकरणेऽस्मिन् निबन्धकारैः प्रसङ्गत उद्धृतानि संस्कारातिरिक्तक्षौरविषयाणि वचनानि न संगृहीतानि। तानि काण्डान्तरे यथास्थानं संग्रहीष्यन्ते ।

¶ अत्र 'अथैनम्' इत्यादर्शपुस्तकपाठः । तत्र 'एनम्' इत्यनन्वितत्वादशुद्धमिति मत्वा बौधायनीयगृह्यकर्मसमुच्चय-धृतपाठमनुसृत्य शोधनं कृतम् । तत्र 'अथ' इति शब्दोऽपि नास्ति ।

(१) **बोगृ.** २।४।१ ; **आन.** १४९ ( त्रिषु वा संवत्सरेषु० ).

(२) **बोगृ.** २।४।१७ ; **संप्र.** ३१५ ( अथैवम्० ).

(३) **बोगृ.** २।४।१८ ; **संप्र.** ३१५ ( यथर्षि शिखा निदधाति ).

(४) आदर्शपुस्तके पादटिप्पण्यां खण्डान्ते गृह्यसूत्र-पुस्तकान्तरपठितः श्लोकः .



**आश्वलायनगृह्यसूत्रम्**

चूडाकर्मकालः, यथाकुलधर्मं केशसंनिवेशाः, कुमार्या अमन्त्रकं चूडाकर्म

[1]**तृतीये वर्षे चौलम् । यथाकुलधर्मं वा ॥**

(१) जन्मनः प्रभृति तृतीयं वर्षम् । तस्मिन् तृतीये वर्षे चौलकर्म कर्तव्यम् । यस्मिन् काले कुलधर्मः तस्मिन् वा चौलकर्म कर्तव्यम् । तेन पूर्वेण कालेन सहायं विकल्प्यते । यस्य कुलधर्मे अन्यः कालो न भवति, यस्यापि कुलधर्मत्वेन न कश्चित् कालश्चोदितः, तस्य तृतीये एव वर्षे भवति । देभा.

(२) कुलधर्मोपदिष्टे वा काले चौलं कार्यम्, जन्मप्रभृति तृतीये वर्षे वा कार्यमिति व्यवस्थितविकल्पः, केषांचित् उपनयनेन सह स्मर्यत इति । ¶गानावृ.

(३) यस्य यादृशः कुलधर्मः तस्य तथा वा कर्तव्यम् । प्राग्वा पश्चाद्वा । यस्यापि कुलधर्मो नियतस्तस्यापि तृतीयो वर्षो विकल्पेन भवति । § अना.

[2]**यथाकुलधर्मं केशवेशान्कारयेत् ॥**

(१) स्वेन कुलधर्मेण केशवेशाः कर्तव्याः । तत्र पृथुकाचिरकादीनित्यर्थः । देभा.

¶ प्रपा. सर्वत्र गानावृत्त्यनुवादः ।

§ शेषं गानावृवत् ।

(१) आगृ. १।१७।१ ; **ब्रक.** ९५ ; **स्मृच.** २३ शौनकः ; **ममु.** २।३५ ; **चका.** ७४३ ; **प्रपा.** २००, २०३ ; **धप्र.** ३८ ; **मच.** २।३५ (यथाकुलधर्मं वा०) ; **मुक्ता.** ८३ शौनकः ; **संम.** १९ ; **पुम.** ४३६.

(२) आगृ. १।१७।१७ ; **प्रपा.** २०४ ; **संप्र.** ३१५ वेशा ( वेषा ).

( २ ) ' एकशिखस्त्रिशिखः पञ्चशिखो वा ' इति बौधायनः । पूर्वशिखः परशिख इति कुलधर्माः । तेषु यो यस्य कुलधर्मस्तेन तस्य केशसंनिवेशान् कारयेत् । ततः स्विष्टकृदादि समापयेत् । वेषानित्यपि पाठे स एवार्थः । ‡ गानावृ.

[1]**आवृतैव कुमार्यै ॥**

( १ ) कुमार्यै आवृता चौलकर्म कर्तव्यम् । आवृतेति किमुच्यते ? समन्त्रकं कर्म । कथं ज्ञायते ? येनान्यत्र तूष्णीमित्याहुः । के पुनरिति ? ' अपरद्वारा नित्ययाऽऽवृता ' इत्युक्त्वा ' तूष्णीं प्रति प्रसर्पन्ति ' इत्याहुः । तेन ज्ञायते सर्वस्य कर्मण उपदेश इति । यद्येवं स्यात् ( ते ? )नैवोपदेशं कुर्यात् । कस्मात् ? अविशेषाभिधानादुभयोः प्राप्नुयात् । तदेतन्नोपपद्यते । किं कारणम् ? कुमाराधिकारात्, ' कुमारं जातम् ' इति वचनात् । तेन विशेषोपदेशः । यद्येवं ' कुमार्याश्च ' इत्येवमस्तु । यत्तस्या न ग्रहणं करोति तेन मन्यामहे—अविशेषेण भवितव्यम्, किंतु एवकारश्चात्र विद्यते । तस्मादावृतैवात्र भवति, न मन्त्रः । यदुक्तमन्येष्वावृद्ग्रहणेषु मन्त्र इति, तन्न, विलक्षणत्वान्निर्देशस्य । तत्राऽऽवृद्ग्रहणमात्रमेव । अत्र त्वेवकारः क्रमा( ? कर्मा )र्थ एव । तस्मात् कर्मणा भवितव्यम्, न मन्त्रेण । एवं ते ब्रुवतो होमः प्राप्नोति तूष्णीम्( भूतस्य ? ) । तत्रैके प्रतिपन्नाः— भवति होमः अमन्त्रक इति । वयं तु नैवम् । किं कारणम् ? अदृष्टत्वात् । तस्मात् कर्मैव भवति, न होमः । ' तूष्णीं द्वितीये उभयत्र ' इति तत्र अमन्त्रकः प्राक्कृतो होमः । इह त्वमन्त्रकस्य प्रवृत्त्यैव भवितव्यं नोपपद्यते । तस्मादावृन्मात्रं भवति । आवृत्युक्तार्थम् । अत्र तु होमं केचिदिच्छन्ति । होमेन भवितव्यम् । कस्मात् अविशेषात् । कर्मग्रहणाच्च । अन्ये आवृद्ग्रहणात् होमं नेच्छन्ति । तूष्णीं होमो नास्ति ।

देभा.

‡ अना. गानावृवत् । संप्र. गानावृगतम् ।

(१) आगृ. १।१७।१८ ; प्रपा. २०४ ; संप्र. ३१७.

( २ ) आवृता अ( ? स )मन्त्रकमित्यर्थः । कुतः ? येनान्यत्र आवृतेत्युक्त्वा तूष्णीमित्याह— ' अपरया द्वारा नित्ययाऽऽवृता सदो द्वार्ये चाभिमृश्य तूष्णीं प्रसर्पन्ति ' इति । नैतदेवम् । एवकारोऽत्रावधारणार्थः— आवृत् तन्त्रमेव भवति, न मन्त्र इति । तेनाऽऽवृतेत्यस्य तूष्णीमित्ययमर्थ इति सिद्धम् । एवं चेद्दोषः । अमन्त्रकं होमः प्राप्नोति । इष्टमेव न एतदिति केचिदाहुः । अन्ये होमो न भवतीत्याहुः, अमन्त्रकस्य होमस्य क्वचिदप्यदृष्टत्वात् । ननु ' तूष्णीं द्वितीये उभयत्र ' इत्यत्र दृष्ट इति शङ्का न कार्या । तत्रापि ' प्रजापतये स्वाहा ' इति मन्त्रोऽस्त्येव । † गानावृ.

## कौषीतकिगृह्यसूत्रम्

वर्णभेदेन चूडाकर्मकालः, कन्यानाममन्त्रकं चूडाकर्म

[1]**संवत्सरे चूडाकर्म ॥**

**तृतीये वा वर्षे ॥**

[2]**पञ्चमे क्षत्रियस्य ॥**

**सप्तमे वैश्यस्य ॥**

चूडाकरणं वक्ष्यामः । जन्मत आरभ्य कुमारस्य संवत्सरे पूर्णेऽथवा तृतीये वर्षे चूडाकरणं भवति । एतच्च बहिर्लौकिकेऽग्नौ मण्डपे कर्तव्यम् । अत्र केचित् पठन्ति— पञ्चमे क्षत्रियस्य, सप्तमे वैश्यस्येति ।

कौगृसं.

**तूष्णीमावृतः कन्यानाम् ॥**

कन्यानां तूष्णीं कर्माणि कर्तव्यानि । कौगृसं.

## आपस्तम्बगृह्यसूत्रम्

चूडाकर्मकालः, प्रवरर्षिसंख्यया यथाकुलधर्मं वा शिखाः

[3]**जन्मनोऽधि तृतीये वर्षे चौलम् ॥**

† अना. गानावृगतम् ।

(१) कौगृ. १।२८।१–२ ; बका. ७४२.

(२) कौगृ. १।२८।३–४, २२.

(३) आपगृ. १६।३ ; स्मृच. २३ ; बका. ७४३ जन्मनोऽधि ( जन्मावधि ) ; मुक्ता. ८३ ; बाल. १।११ –१२ पृ. ३२.

अथ चौलविधिः । यस्मिन् कर्मणि केशाः प्रथमं खण्ड्यन्ते तत् चौलं चूडा प्रयोजनमस्येति । डलयोरविशेषः । तत् जन्मनः प्रभृति तृतीये वर्षे पुनर्वस्वोर्नक्षत्रे कर्तव्यम् । 'कुमारं प्राशयेत्' इति विहितत्वात् पुंस एवेदं विधिवच्चौलम् । कुमार्यास्त्वावृतैव । एवं चेत्कृत्वा 'अपरेणाग्निं प्राञ्चम्' इति पुंलिङ्गमुपपद्यते । जन्मग्रहणं गर्भादारभ्य तृतीये वर्षे मा भूदिति ।

¶ अनाकुला.

[1]... **यथर्षि शिखा निदधाति ॥**

यथर्षि यावन्त ऋषयो यस्य प्रवरे तावतीः शिखाः करोति त्र्यार्षेयस्य तिस्रः पञ्चार्षेयस्य पञ्चेति । $ अनाकुला.

[2]**यथा वैषां कुलधर्मः स्यात् ॥**

(१) अथवा यथा येन प्रकारेण एषां कुमारस्य कुलजानां कुलधर्मः प्रवर्तते तथा शिखां करोति । एषामिति वचनं कर्तुः कुलधर्मो मा भूदिति । तेनास्मिन् कर्मणि पितैव कर्तेति नियमो नास्ति । अन्यत्र तु सति संभवे कुमारकर्मसु तस्यैव नियमः । ‡ अनाकुला.

(२) अथवा यथा येन प्रकारेण एषां कुलजानां कुलधर्मः प्रवर्तते तथा शिखा कर्तव्या । केचित्— एषामिति वचनात् पितुरन्योऽपि चौलकर्तेति । ¶ताद.

## हिरण्यकेशिगृह्यसूत्रम्

चूडाकर्मकालः, यथाकुलधर्मं प्रवरर्षिसंख्यया वा शिखाः

[3]**तृतीये वर्षे चूडाकर्म ॥**

तृतीये वर्षे कुमारस्य चूडाकर्म कर्तव्यम् । चूडाः शिखाः क्रियन्ते यस्मिन् तत् चूडाकर्म । मातृद.

[1]... **यथोदितं चूडाः कारयन्ति यथर्षि वा ॥**

यथोचितं यथा कुलस्योचितं यथाकुलधर्ममिति एकां द्वे तिस्रः पञ्च वा शिखा यथाप्रदेशं कारयन्ति । यथा वा एकार्षेयस्यैका, द्व्यार्षेयस्य द्वे, त्र्यार्षेयस्य तिस्रः, पञ्चार्षेयस्य पञ्चेति । तत्र एका चेन्मध्ये । द्वे चेन्मध्ये पुरस्ताच्च । तिस्रश्चेन्मध्ये पश्चात् पुरस्ताच्च, दक्षिणतो मध्ये उत्तरे वा । पञ्च चेत् प्रतिदिशं मध्ये च ।

¶ मातृद.

## मानवगृह्यसूत्रम्

चूडाकर्मकालः

[2]**तृतीयस्य वर्षस्य भूयिष्ठे गते चूडाः कारयेत् ॥**

चूडाः कारयेत् जटा वापयेत् तृतीयस्य वर्षस्य जन्मप्रभृति भूयिष्ठे गते । भूयिष्ठं बहुतरं षण्मासेभ्यः परं गम्यते । षण्मासाः सममेव संवत्सरस्य, अवयवादधिकं भूयिष्ठम् । मासाभिप्रायं वा भूयिष्ठं (वा ?) ।

अष्टाभा.

## भारद्वाजगृह्यसूत्रम्

चूडाकर्मकालः, प्रवरर्षिसंख्यया यथाकुलधर्मं वा शिखाः

[3]**अथास्य सांवत्सरिकस्य चौडं कुर्वन्ति । यथर्षि यथोपज्ञं वा । विज्ञायते च— 'यत्र बाणाः संपतन्ति कुमारा विशिखा इव ।' इति । बहुशिखा इवेति ॥**

## काठकगृह्यसूत्रम्

चूडाकर्मकालः, गोत्रभेदेन शिखानां देशाः संख्याश्च, भृगूणां मुण्डत्वम्, यथाकुलधर्मं वा शिखाः

[4]**तृतीयस्य वर्षस्य भूयिष्ठे गते चूडाः कारयते ॥**

---

¶ ताद. अनाकुलागतम् ।

$ ताद., मुक्ता., संम., सिन्धु., आन., बाल. अनाकुलागतम् ।

‡ मुक्ता., आन. अनाकुलागतम् ।

¶ बाल. तात्पर्यदर्शनानुवादः ।

(१) आपगृ. १६।६ ; मुक्ता. ८३ ; संम. १९ (यथार्षं शिखां निदधाति) ; सिन्धु. ९२१ ; आन. १४९ ; बाल. १।११–१२ पृ. ३३, ३४.

(२) आपगृ. १६।७ ; मुक्ता. ८३ ; संम. १९ यथा वै (यथै) ; आन. १४९ ; बाल. १।११–१२ पृ. ३४.

(३) हिगृ. २०।१।४२ ; बाल. १।११–१२ पृ. ३६ ; संर. ८९७.

¶ बाल. मातृदवत् । संर. मातृदगतम् ।

(१) हिगृ. २०।१।४९ ; संप्र. ३१५ ; बाल. १।११–१२ पृ. ३६ ; संर. ९०१.

(२) मागृ. १।२१।१. (३) भागृ. १।२८.

(४) कागृ. ४०।१ ; अप. १।११–१३ पृ. २९ ; ब्रक. ९५ चूडाः कारयते (चूडाकरणम्) ; स्मृच. २३

(१) भूयिष्ठे बहुतमे । ब्रक. ९५

(२) चूडाः शिखाः । स्मृच. २३

(३) जन्मनः प्रभृति यस्तृतीयो वर्षः तस्य भूयिष्ठे भागे गते सति चूडाकर्म कर्तव्यम् । अर्धमवधिं कृत्वा सप्तमो मासो भूयान् । अष्टमस्तु भूयिष्ठः । तस्मिन् गते नवमे मासि कर्तव्यम् । दक्षिणेन विदुषाऽपि न स्वयं पित्रा कर्तव्यमिति णिचोक्तम् । ‡ देव.

(४) लौगाक्षिस्तु भागत्रयेऽतीते तृतीये कर्तव्यमित्याह– 'तृतीये वर्षे भूयिष्ठे गते चूडा कार्या' इति । 'तृतीये ईषदपूर्णे' इति कल्पतरुहरनाथौ ।

संप्र. २९९

[1]दक्षिणतः कपुजा वसिष्ठानाम् ॥

(१) कपूजा चूडा । अप. १।११–१३

(२) कमुञ्जा चूडा । § ब्रक. ९५

(३) कमुजा चूडा । $ स्मृच. २३

(४) कमुजा केशपङ्क्तिः । पमा. ४४४

(५) कमुजा शिखा । सा तूत्सर्गतो मध्ये शिरसि कार्या । वसिष्ठानां तु दक्षिणपार्श्वे भवति ।

शूशि. ७०

(६) कपूजा चूडा । सा वसिष्ठगोत्रसंभूतानां दक्षिणे शिरसो भागे कर्तव्या । दक्षिणे दक्षिणतः । आद्यादिभ्यस्तसिः । देव.

(७) तावदुच्यते यादृशीः शिखाः । दक्षिणतः शिरसो भागे एका कपूजा शिखा वसिष्ठानाम् । येषां वसिष्ठप्रवरः तद्गोत्राः सर्व एव वसिष्ठाः । चतसृषु पङ्क्तिकास्वाधीताः । आवि.

(८) वसिष्ठानामेकप्रवरत्वे एकैव शिखा, सा च दक्षिणतो नियम्यते । त्र्यार्षेयत्वपक्षे तिस्रः शिखाः ।

¶ संप्र. ३१५

(९) कुमुजा केशपङ्क्तिः । चम. ११

(१०) क्वचित् कुमुञ्जेति पाठः ।

† संम. १९

[1]उभयतोऽत्रिकश्यपानाम् ॥

(१) उभयोः शिरसो दक्षिणोत्तरभागयोरत्रिगोत्रे कश्यपगोत्रे च जातानां शिखा कर्तव्या । देव.

(२) शिरसः उभयतः पार्श्वतः अत्रिप्रवराणां कश्यपप्रवराणां च । आवि.

---

‡ ब्राह्म. देवगतम् । आवि. देववत् ।

§ सिन्धु. ब्रकवत् ।

कारयते ( कारयेत् ) ; चका. ७४२ ( तृतीयवर्षस्य भूयिष्ठे गते चूडां कारयेत् ) ; हमा. १८७ चूडाः कारयते ( चूडां कारयेत् ) ; स्मृसा. ४ चूडाः कारयते ( चूडा कार्या ) ; पमा. ४४४ ब्रकवत् ; मपा. ३६१ हमावत् ; संसौ. ७३ चकावत् ; शूशि. ७० ; वीमि. १।१२ (तृतीये भूयिष्ठे गते चूडा ) ; संप्र. २९७ ( तृतीये भूयिष्ठे गते ) एतावदेव : २९९ ( तृतीये भूयिष्ठे गते चूडा कार्या ) : ३१५ स्मृचवत् ; मुक्ता. ८३.

(१) कागृ. ४०।२ ; अप. १।११–१३ पृ. २९ कपु ( कपू ) ; ब्रक. ९५ कपुजा ( कमुञ्जा ) ; स्मृच. २३ कपु ( कमु ) ; हमा. १८७ कपुजा ( कम्बुजानां ) ; पमा. ४४४ स्मृचवत् ; मपा. ३६१ स्मृचवत् ; गभा. १९२ कपुजा व (कम्बुजव) ; शूशि. ७० स्मृचवत् ; संप्र. ३१५ स्मृचवत् ; चम. ११ कपु ( कुमु ) ; मुक्ता. ८३ (दक्षिणतस्चूडा वासिष्ठानां वामतो भारद्वाजानाम् ) ; संम. १९ ब्रकवत् , कपुजा ( कुमुञ्जा ) इत्यपि पाठः ; सिन्धु. ९२२ ब्रकवत् ; संको. ११५ कपुजा व ( कमुजा वा ) ; बाल. १।११–१२ पृ. ३३, ३४ स्मृचवत् ; नन्द. २।३५ ( दक्षिणतश्चूडा वसिष्ठानां वामतो भारद्वाजानाम् ) स्मर्यते.

$ मपा. स्मृचवत् । बाल. स्मृचवत् पमावच्च ।

¶ शेषं शूशिगतम् । संको. संप्रवत् ।

† शेषं ब्रकवत् ।

(१) कागृ. ४०।३ ; अप. १।११–१३ पृ. २९ ; ब्रक. ९५ त्रिक ( त्रिका ) ; स्मृच. २३ ; हमा. १८७ ; पमा. ४४४ ब्रकवत् ; मपा. ३६१ ; गभा. १९२ ; शूशि. ७० ब्रकवत् ; संप्र. ३१५ ; चम. ११ ; मुक्ता. ८३ (उभयतः काश्यपानाम् ) ; संम. १९ ; सिन्धु. ९२२ ; संको. १५ ; बाल. १।११–१२ पृ. ३३, ३४ ; नन्द. २।३५ मुक्तावत् , स्मर्यते.

( ३ ) अग्नीनां कश्यपानां च उभयतः वामे दक्षिणे च। द्व्यार्षेयत्वपक्षे चेदम् । त्र्यार्षेयत्वपक्षे तिस्रः । तत्र पार्श्वयोर्द्वे मध्ये चैकेति । ‡ संप्र. ३१५

'मुण्डा भृगवः ॥

( १ ) भृगुगोत्रजा मुण्डा निःशिखाः कर्तव्याः । देव.

( २ ) सर्वे शिर अशिखाः(१) । समस्वपि पक्षिकासु । आवि.

( ३ ) भृगूणां मुण्डत्वं वंशसमाचारपक्षे, त्र्यार्षेयपक्षे तिस्रः शिखाः, पञ्चार्षेयपक्षे पञ्च । ‡ संप्र. ३१५–३१६

'पञ्चचूडा अङ्गिरसः ॥

( १ ) अङ्गिरसां तु पञ्च, मध्ये एका चतुर्दिक्षु चतस्र इति । शुशि. ७०

( २ ) आङ्गिरसगोत्रे ये जातास्ते पञ्चचूडाः कर्तव्याः । देव.

( ३ ) पञ्चशिखा अङ्गिरसः पञ्चदशविधा अपि । आवि.

( ४ ) तथाऽङ्गिरसामपि त्र्यार्षेयपक्षे तिस्रः पञ्चार्षेयपक्षे पञ्च । ‡ संप्र. ३१६

§'वाजिमेके ॥

( १ ) वाजिः केशपङ्क्तिः । $ स्मृच. २३

( २ ) एके पुनर्मङ्गलार्थं वाजिं केशपङ्क्तिं कुर्वन्ति । सा च समन्ताल्ललाटकर्णमूलस्पर्शिनी भाले भवति । तत्र मध्ये शिखा भवति न भवति च आचारात् । ¶ शुशि. ७०

( ३ ) एके वाजिमिच्छन्ति आङ्गिरसानाम् । वाजिः केशपङ्क्तिः । देव.

( ४ ) वाजिमेके मन्यन्ते केशपङ्क्तिमङ्गिरसां चूडापङ्क्तिं वा । आवि.

( ५ ) अन्ये वालिं केशपङ्क्तिं कुर्वन्ति । अन्ते समरेखया मुण्डनं कृत्वा सर्व एव केशाः स्थाप्या इति स्मृतिचन्द्रिकायाम् । संम. १९

( ६ ) मङ्गलार्थत्वकीर्तनेन तस्यां सत्यामपि तदन्यशिखाधारणमावश्यकमिति ध्वन्यते । * संको. ११५

'मङ्गलार्थं शिखिनोऽन्ये ॥

---

‡ संको. संप्रवत् ।

(१) कागृ. ४०।४ ; अप. १।११–१३ पृ. २९ ; ब्रक. ९५ ; स्मृच. २३ ; हभा. १८७ ; पमा. ४४४ ; मपा. ३६१ ; गभा. १९२ ; शुशि. ७० ; संप्र. ३१५ ; चम. ११ ; मुक्का. ८३ एतत्सूत्रस्थाने 'मृकुण्डुः' इति 'पञ्च चूडा' इत्यादिवचनस्मर्तृत्वेन ऋषिनाममुद्रणमशुद्धम् ; संम. १९ ; सिन्धु. ९२२ ; संको. ११५ ; बाल. १।११–१२ पृ. ३३, ३४.

(२) कागृ. ४०।५ ; अप. १।११–१३ पृ. २९ ; ब्रक. ९५ ; स्मृच. २३ ; हभा. १८७ अङ्गि (आङ्गि) ; पमा. ४४४ ; मपा. ३६१ ; गभा. १९२ ; शुशि. ७० ; संप्र. ३१५ ; चम. ११ हभावत् ; मुक्का. ८३ अङ्गि ( आङ्गी ) ; संम. १९ ; सिन्धु. ९२२ हभावत् ; संको. ११५ ; बाल. १।११–१२ पृ. ३३, ३४.

§ ' वाजिमेके मङ्गलार्थम् । शिखिनोऽन्ये ' इति सूत्रविभागः शुशि. , संप्र. , संको. इत्येतेषु ।

$ मपा. स्मृचवत् ।

¶ संप्र. शुशिवत् ।

* शेषं शुशिवत् ।

(१) कागृ. ४०।६ ; अप. १।११–१३ पृ. २९ ; ब्रक. ९५ ; स्मृच. २३ वाजि ( राजि ) ; हभा. १८७ वाजिमेके ( वाजसनेयिनामेकाम् ) ; मपा. ३६१ स्मृचवत् ; गभा. १९२ वाजिमेके ( वाजसनेयिनामेका ) ; शुशि. ७० ; संप्र. ३१५ ; मुक्का. ८३ ; संम. १९ वाजि ( वालि ) ; सिन्धु. ९२२ ; संको. ११५ ; बाल. १।११–१२ पृ. ३४.

(२) कागृ. ४०।७ ; अप. १।११–१३ पृ. २९ ; ब्रक. ९५ ; स्मृच. २३ ऽन्ये + ( च वटपत्रवत् ) ; हभा. १८७ ; पमा. ४४४ ( मण्डलार्थंशिखिनोऽन्ये ) ; मपा. ३६१ स्मृचवत् ; गभा. १९२ ; शुशि. ७० ; संप्र. ३१५ ; चम. ११ ( मण्डलोर्ध्वंशिखिनोऽन्ये ) ; मुक्का. ८३ ; संम. १९ र्थं शि ( र्थशि ) ; सिन्धु. ९२२ ; संको. ११५ ; बाल. १।११–१२ पृ. ३३, ३४.

(१) अन्ये तु मङ्गलार्थं शिखामात्रं वटपत्राकृति केचन कुर्वन्ति। ¶ स्मृच. २३

(२) शिखिन इत्यनियमेन यत्र क्वापि शिखामात्रमेव कुर्वन्ति। † शूधि. ७०

(३) ये कथितेभ्योऽन्ये अगस्त्यविश्वामित्रादिगोत्रजाः ते शिखिनो भवन्ति। किमर्थम्? मङ्गलार्थम्। निःशिखत्वं तु अमङ्गलधर्मः अरिष्टहेतुः। तथा च पठन्ति– 'अमेध्यमेतच्छिरो यदशिखम्' इति। 'यत्र बाणाः संपतन्ति कुमारा विशिखा इव।' इति च निन्दावादः यन्मूलं शिखाकर्मस्मरणम्। देव.

(४) मङ्गलं धर्मः, तदर्थम्। ‡ आधि.

(५) शिखिनोऽन्य इति कुलधर्मत एव तेषां देशनियमः, नान्यः प्रकार इत्यर्थः। संको. ११५

[2]यथाकुलधर्मं वा॥

(१) कुलधर्मानतिक्रमेण वा एकशिखत्वादि कर्तव्यम्, कुलाचाराणामपि धर्मत्वेन स्मरणात्– 'येनास्य पितरो याता येन याताः पितामहाः। तेन यायात् सतां मार्गं तेन गच्छन्न रिष्यति॥'। देव.

(२) यथाकुलधर्मं वेति सर्वशेषः। संप्र. ३१६

## वाराहगृह्यसूत्रम्

चूडाकर्मकालः, गोत्रभेदेन शिखास्थानसंख्याभेदः, कन्याया अमन्त्रकमहोमकं च

[1]तृतीयवर्षस्य जटाः कुर्वन्ति। यथा वा कुलकल्पः। ... दक्षिणतः कपर्दो वसिष्ठानाम्। उभयतोऽत्रिभार्गवकाश्यपानाम्। पञ्चचूडा-(?डा अ)ङ्गिरसाम्। शिखिनोऽन्ये। वाजिमेके मङ्गलार्थम्। ... तूष्णीं कन्याया आहुतिवर्जम्॥

## आग्निवेश्यगृह्यसूत्रम्

चूडाकर्मकालः, यथाकुलधर्मं यथाप्रवरर्षि वा शिखाः

[1]तृतीये वर्षे चौलकर्म। यथोदितं चौलं कारयति। यथऋषि वा॥

## पारस्करगृह्यसूत्रम्

चूडाकर्मकालः, यथाकुलधर्मं शिखाकरणम्

[1]सांवत्सरिकस्य चूडाकरणम्॥

(१) संवत्सरो यस्य जातः स सांवत्सरिकः। तस्य सांवत्सरिकस्य चूडाकरणाख्यं कर्म कर्तव्यम्। $ कभा.

(२) चूडाकरणमिति वक्ष्यमाणसंस्कारकर्मणो नामधेयम्। ‡ गभा.

[2]तृतीये वाऽप्रतिहते॥

(१) तृतीये वा संवत्सरेऽप्रपन्ने। वाशब्दो विकल्पार्थः। कभा.

(२) तृतीये वा संवत्सरे अप्रतिहते अगते असंपूर्णे इत्यर्थः। † जभा.

(३) तृतीये वा संवत्सरे अप्रतिहते अल्पावशिष्टे। हभा.

[4]यथामङ्गलं वा सर्वेषाम्॥

(१) यद्यस्य मङ्गलमुचितं कुले कस्यचित् तृतीये कस्यचित् संवत्सरे। अन्ये तु यथामङ्गलशब्देन कालान्तरं कल्पयन्ति। ¶ कभा.

---

¶ मपा. स्मृचवत्।

† संप्र. शूधिवत्।

‡ शेषं देवगतम्।

(१) कागृ. ४०।८; अप. १।११–१३ पृ. २९; व्रक. ९५; स्मृच. २३; पमा. ४४४; मपा. ३६१; शूधि. ७०; संप्र. ३१५; वम. ११; मुक्ता. ८३ (यथाकुलधर्म भवति); संम. १९ (वा०); सिन्धु. ९२२; संको. ११५ वा (च); बाल. १।११–१२ पृ. ३३, ३४.

(२) वागृ. ४.

$ जभा., हमा., विभा. कभावत्।

‡ शेषं कभावत्।

† गभा., विभा. जभावत्।

¶ जभा. कभावत्।

(१) आग्निगृ. २।२।५.

(२) पागृ. २।१।१; चका. ७४२ सांवत्सरिक (संवत्सर).

(३) पागृ. २।१।२; चका. ७४२; निप. २६६ (=) (तृतीये वा वर्षे).

(४) पागृ. २।१।४.

(२) यद्वा यथामङ्गलं यथाकुलाचारम्। एतदुक्तं भवति। यस्य कुले सांवत्सरिकस्य चूडाकर्म क्रियते तस्य सांवत्सरिकस्य यस्य तृतीयेऽब्दे तस्य तदा इति व्यवस्था। यस्य कुले नास्ति नियमः तस्य यदृच्छया विकल्पः। अन्ये तु यथामङ्गलशब्देन धर्मशास्त्रान्तरे विहितकालान्तरोपलक्षणमाहुः। अतश्च सर्वेषां तुल्यविकल्पः।
¶ हभा.

(३) ब्राह्मणक्षत्रियविशां यथामङ्गलं यथाकुलाचारं चूडाकरणाख्यं कर्म कर्तव्यमित्यर्थः। न चान्वयः क्रियान्वयः(? नचास्यान्वयः) केशान्तेऽपि स्यादिति वाच्यम्, 'चूडा कार्या यथाकुलम्' इत्यादिवाक्यैश्चूडायामेव तदन्वयात्। अतः केशान्तः षोडशे एव। न च चूडाकरणकर्तव्यतान्तर्गतकर्तव्यताकत्वेन चूडाकर्मवत्केशान्तकर्मणोऽपि विवाहप्राक्कालकर्तव्यताकत्वेन षोडशाब्दरूपनियतसमयकर्तव्यताकत्वाभ्युपगमे केशान्तस्य स्वसमयप्राक्काले विवाहप्रतिबन्धकत्वापत्तिरिति चेत् न, 'संवत्सरं ब्रह्मचर्यम्' इत्यादिना कृच्छ्रब्रह्मचारिण एव ब्रह्मचर्यकर्तव्यताबोधकशास्त्रस्याप्रामाण्यापत्तेर्न प्रतिबन्धकत्वम्।
विभा.

[1]यथामङ्गलं केशशेषकरणम्॥

(१) यथाशास्त्रं यद्यस्य गोत्रे उचितम्। केचित् त्रिशिखाः केचित् पञ्चशिखाः। यथा यस्य प्रसिद्धिः।
§ कभा.

(२) केशानां शेषकरणं शिखास्थापनं केशशेषकरणम्। यथामङ्गलं मङ्गलं कुलाचारव्यवस्थामनतिक्रम्य भवति।
‡ हभा.

(३) पञ्च शिखाः तिस्रः शिखाः एका वा मुण्डो वेत्यादि यथाकुलाचारं कर्तव्यमित्यर्थः। विभा.

¶ गभा. हभागतम्।
§ जभा. कभागतम्।
‡ गभा. हभावत्।

(१) पागृ. २।१।२१; निप. २६७ (=).

## गोभिलगृह्यसूत्रम्

चूडाकर्मकालः

[1]अथातस्तृतीये वर्षे चूडाकरणम्॥

(१) जननानन्तरं वर्तमानतृतीये वर्षे चूडाकरणमुदगयनादीनां समुच्चये बोद्धव्यम्। कपुष्णिकाकपुच्छलाख्याः केशाश्चूडाः, तासां वक्ष्यमाणविधिना संस्कारकरणं चूडाकरणं कर्मणो नामधेयम्। अयं कालो मुख्यः, गृह्योक्तत्वात्। संत. ९२२

(२) अथेति पूर्वप्रकृतार्थम्। अथ पूर्वप्रकृताज्जन्मनः तृतीये वर्षे प्रवर्तमाने उदगयनादीनां समुच्चयोपलब्धौ चूडायाः शिखायाः करणं स्थापनम्। संस्कारविधिना कर्तव्यमिति सूत्रशेषः। 'शिखा चूडा केशपाशी' इत्यमरः। कपुष्णिकाकपुच्छलाख्याः केशाश्चूडा इति कथ्यन्त इति भाष्यकृतः। अतःशब्दो हेत्वर्थः। यस्मात्– 'सदोपवीतिना भाव्यं सदा बद्धशिखेन च। विशिखो व्युपवीतश्च यत्करोति न तत्कृतम्॥' (कास्मृ. १।४), तथा– 'गार्भैर्होमैर्जातकर्मचौलमौञ्जीनिबन्धनैः। बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते॥' (मस्मृ. २।२७) इति मनुराह। भाष्यकृतस्तु– 'अत्रातःशब्दः स्मृत्यन्तरोक्तकाललाभाय' इत्याहुः। तथा च मनुः– 'चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः। प्रथमाब्दे तृतीये वा कर्तव्यं श्रुतिचोदनात्॥' (मस्मृ. २।३५) इति। एतेन 'ततः संवत्सरे पूर्णे चूडाकर्म विधीयते। द्वितीये वा तृतीये वा कर्तव्यं स्मृतिदर्शनात्॥' इति यमवचने 'द्वितीये वा' इत्यत्र पूर्णे इत्यनुषङ्गः। तेन तृतीयाब्दलाभः। न चैवं 'तृतीये वा' इति व्यर्थम्, तस्य तृतीयाब्दचरमावयवादिप्रशस्तपरत्वात्। अन्यथा पक्षत्रयानुपपत्तिः। तथा च लौगाक्षिः– 'तृतीये भूयिष्ठे गते चूडा कार्या' इति। याज्ञवल्क्यः 'चूडा कार्या यथाकुलम्' इत्याह। एवं चोक्तकालानां विकल्पः शाखाभेदापेक्षया व्यवस्थित इति कल्पतरुः। अस्योपनीत्या सहाऽऽचरणे तु 'आद्येऽब्दे कुर्वते केचित्

(१) गोगृ. २।९।१; संत. ९२२.

पञ्चमेऽब्दे तृतीयके । उपनीत्या सहैवेति विकल्पाः कुलधर्मतः ॥' इति प्रयोगपारिजातोक्तं वचनमेव मानम् । मृदुला.

## खादिरगृह्यसूत्रम्

चूडाकर्मकालः

[1]**तृतीये वर्षे चौलम् ॥**

अत्र जननादिमासगणनया द्वादशमासाः संवत्सरः, न चैत्रादिः । रुद्रभा.

## जैमिनिगृह्यसूत्रम्

चूडाकर्मकालः, यथाप्रवरर्षि यथाकुलधर्मं वा शिखाकरणम्, स्त्रिया अमन्त्रकं समन्त्रकं वा

[2]**तृतीये संवत्सरे जटाः कुर्वीत । गर्भतृतीय इत्येके ॥**

जटा इति शिखाशब्दवाच्याः केशाः । श्रीव्या.

**यथैषां गोत्रकल्पः कुलकल्पो वा ॥**

एकार्षेयाणामेका चूडा त्र्यार्षेयाणां तिस्र इत्यादि गोत्रकल्पः । कुलकल्पस्तु पित्रादिभिराश्रितः प्रकारः । तथा नापितं बोधयेदिति शेषः । श्रीव्या.

**आवृतैव स्त्रियाः कुर्यादमन्त्रम् ॥**

**समन्त्रं चेत्पश्चाज्जुहुयात् ॥**

## वैखानसगृह्यसूत्रम्

चूडाकर्मकालः, यथाप्रवरर्षि चूडासंख्या, तदभावे एका

[3]**अथ वर्षे प्रथमे तृतीये वा चौडकम् ॥**

**ऋषिक्रमेण स्वस्यैकार्षद्व्यार्षत्र्यार्षपञ्चार्षसप्तार्षाच्चूडा विभजेदनुदितस्यैकाम् ॥**

## बैजवापगृह्यसूत्रम्

चूडाकर्मकालः

[4]**त्रिवर्षे चूडाकरणम् ॥**

---

(१) खागृ. २।३।१६.

(२) जैगृ. १।११.

(३) वैगृ. ३।२३.

(४) स्मृच. २३ वर्षे ( वर्षस्य ) ; चका. ७४२ ; पमा. ४४३ त्रिवर्षे ( तृतीये वर्षे ) ; मुका. ८३.

## गृह्यपरिशिष्टे

मातरि गर्भिण्यां चूडाकर्मणो निषेधः

[1]**माता कुमारमादायेत्युक्तं कात्यायनादिभिः । सा चेद्यदि सगर्भा स्यात्तदा चौलं न कारयेत् ॥**

[2]**चूडाकर्म न कर्तव्यं यस्य माताऽस्ति गुर्विणी । करोति यदि मन्दात्मा तदा गर्भस्य नाशनम् । पित्रोर्मृतिं वदन्त्येके चतुरब्दान्तरे स्फुटम् ॥**

## वसिष्ठः

चूडाकर्मकालः, मातरि गर्भिण्यां पञ्चममासात्परं चौलनिषेधः, चूडाकर्मफलम्, शूद्रस्य सर्वमुण्डनशिखामात्रधारणयोर्विकल्पः

[3]**तृतीयेऽब्दे पञ्चमेऽब्दे स्वकुलाचारतोऽपि वा । चौलं शिशूनां यत्नेन स्वगृह्योक्तविधानतः ॥**

[4]**आधानतो जन्मतो वा सप्तमेऽब्देऽपि कारयेत् । कृत्वाऽऽभ्युदयिकं कर्म पश्चात् सर्वं समाचरेत् ॥**

( १ ) तृतीयादिवर्षसंख्या च गर्भतो जन्मतो वा द्रष्टव्या । संप्र. २९७

( २ ) स्वकुलाचारत इति विहितविकल्पानां व्यवस्थार्थम्, न तु कालान्तरम् । अत एव याज्ञवल्क्येन सामान्यतोऽभ्यधायि— 'चूडा कार्या यथाकुलम्' इति । आधानतः गर्भाधानात् । अवधिद्वयस्य पूर्वत्राप्यन्वयः । ‡ संको. ११२

---

‡ संव. संकोवत् ।

(१) संलो. ८३ ; संप्र. ३१२ ; ज्योनि. ११८.

(२) संलो. ८३ ; संप्र. ३१२ ; ज्योनि. ११८ (=) मन्दा ( मूढा ) तृतीयार्धं नास्ति ; संग. ६१३ वीरमित्रोदये.

(३) वसं. २८।१ पूर्वार्धे ( तृतीये पञ्चमेऽब्दे वा स्वकुलाचारतो हितम् । ) ; संलो. ७३ मेऽब्दे + (वा) ; संप्र. २९७ ; संको. ११२ ; संव. ८९.

(४) वसं. २८।२ ; संलो. ७३ मेऽब्दे (माब्दे) पू. ; संप्र. २९७ संलोवत्, पू. ; संको. ११२ संलोवत्, पू. ; संव. ८९ संलोवत्, पू.

§[1]गर्भे मातुः कुमारस्य न कुर्याच्चौलकर्म तु ।
पञ्चमासादधः कुर्यादत ऊर्ध्वं न कारयेत् ॥

( १ ) अयं च निषेधः शिशोः पञ्चवर्षादर्वागेव, न तदूर्ध्वम् । तदाह नारदः– 'सूनोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत् । पञ्चाब्दादपगमादूर्ध्वं गर्भिण्यामपि कारयेत् ॥' । संसौ. ८३

( २ ) पञ्च मासाः पूर्यन्ते यस्मिन्दिने तत्पञ्चमासम् । तस्मादधः ऊर्ध्वं नेत्यर्थः, 'गते तु पञ्चमे मासे' इति स्मरणात् । $ संप्र. ३१२

( ३ ) पञ्चमाब्दात्पूर्वमपि पञ्चमासपर्यन्तं गर्भिण्यां न दोषः । तदाह मदनरत्ने बृहस्पतिः– 'गर्भे मातुः ... न कारयेत् ॥' । संम. २०

[2]गृहनिर्माणमुदधिस्नानं चौलं सुतस्य च ।
तीर्थयात्रां न स्व (? नख )श्मश्रु न कुर्याद्गर्भिणीपतिः ॥

[3]पुत्रचूडाकृतौ माता गर्भिणी यदि वा भवेत् ।
विपद्यते गुरुस्तत्र दंपती शिशुरब्दतः ॥

माता जननी, मात्यस्यां गर्भ इति व्युत्पत्तेः । गुरुः उपाध्यायः, गृणाति प्रकृतं कर्मोपदिशतीति व्युत्पत्तेः । दंपती शिशोर्मातापितरौ । संप्र. ३१२

§ संव्याख्यानं 'सूनोर्मातरि गर्भिण्याम्' इति नारदवचने ( सं. का. पृ. २९०४ ) द्रष्टव्यम् ।

$ शेषं संसौवत् । संकौ., संग., संव. संप्रगतम् ।

(१) वसं. २८१४ तु ( च ) दत ऊर्ध्वं न ( त्तदूर्ध्वं न च ); गभा. १९० मदनरत्ने ; संसौ. ८३ ; संप्र. ३१२ ; संम. २० बृहस्पतिः ; सिन्धु. ९२० बृहस्पतिः ; संकौ. ११३ ; बाल. १।११–१२ पृ. ३२ बृहस्पतिः ; संग. ६१३ ; संव. ८६ तु ( च ), ९० ; संर. ९००.

(२) वसं. २८१५ ; संसौ. ४८ च ( तु ) यात्रां न ( यात्रां ) द्गर्भि ( दुर्गुर्वि ).

(३) वसं. २८१६ स्तत्र ( श्चैव ) ; संसौ. ८३ ; संप्र. ३१२ ; सिन्धु. ९२० बृहस्पतिः.



[1]गर्भिण्यां मातरि शिशोश्चौलकर्म न कारयेत् ।
शताभिषेकेऽप्येवं स्यात् कालो वेदव्रतेष्वपि ॥

[2]सर्वेषामेव वर्णानां चूडाकर्मविधिः स्मृतः ।
केशमूलं पिता ज्ञेयः केशाग्रं जननी तथा ॥
[3]चौलेनैवाऽऽयुषो वृद्धिश्चौलेनैवाऽऽयुषः क्षयः ।
तस्माच्चौलं प्रयत्नेन कारयेद्बुद्धिसत्तमः ॥

विहितनिषिद्धकालयोश्चौलक्रियायामायुर्वृद्धिक्षयौ भवत इत्यर्थः । संप्र. २९६

§ [4]अनियतकेशवेशाः सर्वेषां मुक्तशिखावर्जम् ॥

( १ ) केशवेषः केशपाशः । सोऽनियतः वैकल्पिक इत्यर्थः । तस्माच्छिखामात्रधारणं सर्वमुण्डनं वेति विकल्पः । स्मृकौ. २८

( २ ) चौले विकल्पेन शूद्राणां सर्वमुण्डनं शिखाधारणं वा, 'शूद्रस्य अनियताः केशवेशाः' इति वसिष्ठोक्तेः । शूक. ५१

§ 'अनियत' इत्यस्य स्थाने 'नियत' इति, 'सर्वेषां मुक्त' इत्यस्य स्थाने 'सर्वे वा मुक्तकेशाः' इति, 'सर्वे या मुक्तकेशाः' इति, 'सर्वे चामुक्तकेशाः' इति च पाठान्तराणि पुस्तकान्तरेषु विद्यन्ते ।

(१) वसं. २८१७ ; गभा. १९० शोश्चौल ( शोः क्षौर ) शता ( व्रता ) बृहस्पतिः ; संप्र. ३१२ शोश्चौल ( शोः क्षौर ) बृहस्पतिः ; सिन्धु. ९१९ सर्वं गभावत् ; संग. ६१३ सर्वं संप्रवत्.

(२) वसं. २८१८ ; संप्र. २९६ चूडा ( चौल ) पू. ; संग. ६०८ संप्रवत्, पू.

(३) वसं. २८१९ ; संसौ. ७२ ; संप्र. २९६ उत्तरार्धे ( तस्मात्सर्वप्रयत्नेन कारयेद्द्विजसत्तम ॥ ) ; संग. ६०८ संप्रवत्.

(४) वस्मृ. २।२६ ; स्मृकौ. २८ ( परिचर्या शूद्रस्यानियताः केशवेषाः ) ; गभा. १९२ ( शूद्रस्यानियताः केशवेषाः ) ; संम. ८० ( परिचर्या तु शूद्रस्यानियतः केशवेशः ) ; सिन्धु. ९२२ ( शूद्रस्यानियताः केशवेशाः ) ; शूक. ५१ सिन्धुवत् ; बाल. १।११–१२ पृ. ३४ गभावत् ; १।८९ पृ. २४५ ( परिचर्या शूद्रस्य नियता वृत्तिरनियताः केशवेशाः ) ; संग. ६१९ गभावत्.

(३) केशवेशः एका शिखा। ¶ संम. ८०

## विष्णुः

चूडाकर्मकालः, स्त्रीणाममन्त्रकं चूडाकर्म

**'तृतीयेऽब्दे चूडाकरणम् ॥**

**'एता एव क्रियाः स्त्रीणाममन्त्रकाः ॥**

एता एव जातकर्मादिकाः क्रियाः। स्त्रीणां कन्यकानाम्। वै.

## लघुविष्णुः

चूडाकर्मकालः

**'तृतीयेऽब्दे च संप्राप्ते केशकर्म च कारयेत् ॥**

## शङ्खः शङ्खलिखितौ च

यथाकुलधर्मं चूडाकरणम्, चूडाकर्मकालः

**'चूडा कार्या यथाकुलम् ॥**

**'तृतीये वर्षे चूडाकर्म पञ्चमे वा ॥**

## मनुः

चूडाकर्मकालः

**'चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः।**
**प्रथमेऽब्दे तृतीये वा कर्तव्यं श्रुतिचोदनात् ॥**

(१) चूडा शिखा, तदर्थं कर्म चूडाकर्म। केषुचिन्मूर्धदेशेषु केशानां स्थापनं रचनाविशेषश्चैतत् चूडाकर्मोच्यते। प्रथमवर्षे तृतीये वा। ग्रहसौस्थित्यापेक्षया विकल्पः। 'श्रुतिनोदनात्' इत्यनुवादः, तन्मूलतयैव प्रामाण्यस्योक्तत्वात्। अथवा श्रुतिशब्देन न विधायकान्येव वाक्यान्युच्यन्ते। किं तर्हि? मन्त्राः। ते च रूपात् चूडाकर्म, † 'यां जनाः' इतिवदष्टकाम्, प्रकाशयन्ति 'यत्क्षुरेण §मार्चयेत' इत्यादि। तेन समन्त्रकमेतत्कर्मेत्युक्तं भवति। विशेषापेक्षायां गार्ग्यो विधिरङ्गीक्रियते। अतः शूद्रस्य नायं संस्कारः, द्विजातिग्रहणाच्च। अनियतकालं तु केशवपनं शूद्रस्यार्थप्राप्तं न निवार्यते। $ मेधा.

(२) द्विजातीनां प्रथमे वर्षे तृतीये वा धर्मतः धर्मेणादृष्टार्थं कार्यम्, 'ओं यत्र बाणाः संपतन्ति कुमारा विशिखा इव।' इति श्रुतिलिङ्गात्। अनेनैतत् दर्शयति यदेवंप्राया वेदलिङ्गमूलाः स्मृतय इति। गोरा.

(३) प्रथमेऽब्दे वर्तमाने अन्नप्राशनानन्तरम्। नन्द. ९४

(४) सर्वेषां द्विजातीनां न विप्रस्यैव धर्मतः कुलधर्मानुसारेण शिखाकरणात् (?करणं) प्रथमेऽब्दे तृतीये वाऽब्दे कर्तव्यम्, श्रुतेः मन्त्ररूपायाः चोदनात् लिङ्गतया प्रवर्तकत्वात्। मन्त्रश्च— 'यत्र बाणाः संपतन्ति कुमारा विशिखा इव।' इति। बाणवत् संपतनयोग्यता तृतीय एव संभवतीति कुमारपदेनाभिधाने ततः प्रागवस्थाऽपि विशायेतेति विशिखाः विशिष्टशिखाः इति विशेषेण(? षणं) कृतमिति। मवि.

---

¶ शेषं स्मृकौवत्।

(१) विस्मृ. २७।१२; चका. ७४२.

(२) विस्मृ. २७।१३.

(३) लघुविस्मृ. १।१२.

(४) शंस्मृ. २।५.

(५) अप. १।११–१३ पृ. २९ शङ्खलिखितौ; नक. ९५ कर्म (करणं) शङ्खलिखितौ; स्मृच. २३ शङ्खः; चका. ७४२ पञ्चमे (पञ्चमेऽपि) शङ्खलिखितौ; पमा. ४४३ नकवत्, शङ्खः; मपा. ३६१ शङ्खलिखितौ; संत. ९२२ नकवत्, शङ्खलिखितौ; चम. १० शङ्खः; मुका. ८३ शङ्खः; पुम. ४३६ नकवत्, शङ्खलिखितौ.

(६) मस्मृ. २।३५; मेधा. चोद (नोद); मिता. ३।२३ स्मरणम्; नक. ९४; स्मृच. २३; चका. ७४२; पमा. ६०५; मपा. ३६१; स्मृकौ. २८ पृ.; प्रपा. १९९ धर्मतः (जन्मतः) श्रुति (स्मृति); संत. ९२२ चोद (दर्श); धप्र. ३८ मेऽब्दे (मान्दे) वा (च); भूमि. ६९ पृ.; संप्र. २९६; मुक्ता. ८३; संम. १९; शूक. ४८ पृ.; विपा. ४६१; आन. १४९ मेऽब्दे (मे वा); संग. ६०८; संब. ८५ मेधावत्; भाच. मेधावत्.

† 'यां जनाः' इति मन्त्रः पारस्करगृह्यसूत्रे आग्रहायणीकर्मणि होमे विनियुक्तः, नाष्टकाकर्मणीत्यत्र मन्त्रांशे कर्मनामांशे वा अशुद्धिः स्यात्।

§ 'मर्चयता' इति 'मज्जयता' इति वा मेधातिथिकुल्यसूत्रानुसारेण शुद्धिः कल्पनीया।

$ मुक्ता., आन. मेधागतं मविगतं च।

(५) कुलधर्मानुसारेणायं व्यवस्थितविकल्पः। अत एवाऽऽश्वलायनगृह्यम्– 'तृतीये वर्षे चौलं यथाकुलधर्मं वा'। $ ममु.

(६) सशिखं तेषां छेदनम्। † मच.

(७) वाशब्दात् द्वितीयग्रहणम्। ¶ संप्र. २९६

(८) चूडानिवेशदेशविशेषश्च गोत्रविशेषेण स्मर्यते– 'दक्षिणतश्चूडा वसिष्ठानां वामतो भारद्वाजानामुभयतः काश्यपानाम्' इति। चूडाकर्मण्यादरातिशयं प्रकाशयति– श्रुतिचोदनादिति। श्रूयते हि– 'कुमारा विशिखा इव' इति। § नन्द.

(९) सर्वेषां द्विजातीनां धर्मतः चूडाकर्म प्रथमेऽब्दे कार्यम्। श्रुतिनोदनात् तृतीये वर्षे कुर्यात्। भाच.

**'तृतीये प्रथमे चाब्दे पञ्चमे सप्तमेऽपि वा।**
**चौलकर्म द्विजः कुर्यात्कुलधर्मानुसारतः॥**

## याज्ञवल्क्यः

यथाकुलधर्मं चूडाकर्म

**'... चूडा कार्या यथाकुलम्॥**

(१) यथाकुलमिति चूडाभिप्रायम्। यथा– 'पञ्चचूडा भरद्वाजाः' इति। कालस्त्वङ्गम्। गुरुलाघवं गृह्यादवगन्तव्यम्। अथवा कालाभिप्रायमेवैतज्जातकर्मादिविषयत्वेनापि योज्यम्। यथा– जन्मानन्तरं दशरात्रे वा जातकर्म। एकादशे द्वादशे वाऽह्नि शतरात्रे पुण्ये नक्षत्रे वा नामकरणम्। दशरात्रे चतुर्थे मासे वा निष्क्रमणम्। षष्ठे मासे संवत्सरे वाऽन्नप्राशनम्। संवत्सरे सार्धे तृतीये वा चूडाकरणम्। तत्सर्वं यथाकुलं वा कार्यम्, उक्तकालं वा। विश्व.

(२) चूडाकरणं तु यथाकुलम्। कार्यमिति प्रत्येकं संबध्यते। मिता.

(३) चूडा शिखा, सा येषां कुले यस्मिन् वर्षे तथा यत्संख्या कार्यतया स्मर्यते तदनतिक्रमेण कर्तव्या, 'यथाकुलधर्मं केशवेशान् कारयेत्' इति गृह्यप्रसिद्धा(द्धेः)। ‡ अप.

(४) यथाकुलं कुलमनतिक्रम्य प्रथमे द्वितीये वा कार्यम्। तृतीयाब्द एव औत्सर्गिकः चूडाकरणकालः। कुलाचारनियमस्तु तस्यापवादः। वीक.

(५) चूडा चूडाकर्म यथाकुलं कुलाचारानुसारेण द्वितीये तृतीये वाऽब्दे। तथा च मनुः– 'ततः संवत्सरे पूर्णे चूडाकर्म विधीयते। द्वितीये वा तृतीये वा कर्तव्यं श्रुतिदर्शनात्॥'। द्वितीये पूर्णे इत्यनुषज्यते। तृतीये अल्पावशिष्टे, 'तृतीये भूयिष्ठे गवे चूडा' इति लौगाक्षिवचनात्। इदं च तृतीयस्यैव चरमभागप्रशंसापरमिति न पौनरुक्त्यम्। कार्येति विभक्तिविपरिणामेन. गर्भाधानादिषु उपनयनान्तेष्वप्यन्वेति। वीमि.

## नारदः

चूडाकर्मकालः, मातरि गर्भिण्यां पञ्चमाब्दात्प्राक् चूडाकर्मनिषेधः उपनयनेन सह करणे दोषाभावश्च

**'तृतीये पञ्चमाब्दे वा स्वकुलाचारतोऽपि वा।**
**बालानां जन्मतः कार्यं चौलमा वत्सरत्रयात्॥**

आ वत्सरान्तरात् प्रथमाब्द इत्यर्थः। संप्र. २९९

**'जन्मतस्तु तृतीयेऽब्दे श्रेष्ठमिच्छन्ति पण्डिताः।**
**पञ्चमे सप्तमे वर्षे जन्मतो मध्यमं भवेत्।**
**अधमं गर्भतः स्यात्तु दशमैकादशेऽपि वा॥**

---

$ शेषं गोरागतम्।

† शेषं मेधागतं गोरागतं च।

¶ शेषं व्याख्यानम् 'ततः संवत्सरे पूर्णे' इति यमवचने (सं. का. पृ. २९०५) द्रष्टव्यम्।

§ शेषं मेधागतं मविगतं च।

(१) धप्र. ३८.

(२) यास्मृ. १।१२. शेषस्थलादिनिर्देशाः संस्कारोपोद्घातप्रकरणे (सं. का. पृ. ४७) द्रष्टव्याः.

‡ स्मृसा. अपगतम्।

(१) ज्योना. २२।१; संप्र. २९९ माब्दे वा (मे वाऽब्दे) रत्रयात् (रान्तरात्); ज्योनि. ११७ प्रथमपादे (पञ्चमे वा तृतीयेऽब्दे); संग. ६०८ माब्दे (मेऽब्दे).

(२) प्रपा. २०० शेऽपि (शे तु); गभा. १९० वर्षे (वाऽपि) दश (नव); संप्र. २९७–२९८ ब्दे (च); संम. १९ तस्तु (नस्तु) वा (च) शेषं गभावत्; सिन्धु. ९१७ गभावत्; ज्योनि. १२७ स्यात्तु (स्याद्वा); संकौ. ११२ संप्रवत्; बाल. १।११–१२

( १ ) अत्र दशमैकादशग्रहणमुपनयनकालात्ययेनातीतकालचौलाभिप्रायेण काम्योपनयनसहभावाभिप्रायेण क्षत्रियवैश्याभिप्रायेण वा व्याख्येयम् । मध्यमाधमत्वं चैषां नित्यत्वाभिप्रायेण । काम्यत्वे तूत्तमत्वमेव ।

§ संप्र. २९८

( २ ) केनचित् प्रतिबन्धेन चौलोपनयने दशमवर्षपर्यन्तमेकादशवर्षपर्यन्तं वा न जाते तत्र ' दशमैकादशेऽपि वा ' इत्येतस्य संभवो ज्ञेयः । गर्भतस्तृतीये पञ्चमे सप्तमे वा वर्षे चौलमधमं भवेदिति ' अधमं गर्भतः स्यात् ' इत्येतस्यार्थः । संर. ८९८

**'सूनोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत् ।**
**पञ्चाब्दात्प्रागथोर्ध्वं तु गर्भिण्यामपि कारयेत् ॥**
**'यदि गर्भविपत्तिः स्याच्छिशोर्वा मरणं भवेत् ।**
**सहोपनीत्या कुर्याच्चेत्तदा दोषो न विद्यते ॥**

( १ ) पञ्चाब्दात् प्रागित्यत्रापि पूर्ववदेव पञ्चमाब्दान्तिमदिनं व्याख्येयम् । यत्तु ' सूनोर्मातरि गर्भिण्यां मौञ्जीचूडे न कारयेत् । गते तु पञ्चमे मासे गर्भादीनां मृतिर्भवेत् ॥ ' इति केश्चित् वचनमुदाहृतं तन्मूलं चिन्त्यम् । समूलत्वेऽपि मौञ्जीचूडे इत्यत्र साहित्यं न विवक्षितम्, ' सहोपनीत्या कुर्याच्चेत् ' इत्यनन्तरोदाहृतनारदवचनविरोधात् । किंतु प्रत्येकमेव निषेधः । वस्तुतस्तु साहित्यमेकक्रियान्वयित्वेन 'धवखदिरौ छिन्धि' इतिवत्, नैककालान्वयित्वेनेति न दोषः ।

‡ संप्र. ३१३

( २ ) पञ्चाब्दात्पूर्वं मातरि गर्भिण्यां चौलं न कारयेत्, प्रसवानन्तरमेव कुर्यात् । यदा पञ्चमाब्दोऽपि जिगमिषति तदा गर्भिण्यामपि कारयेदित्यर्थः, कालातिक्रमे प्रत्यवायादिति भावः । आन. १४९

( ३ ) अथोर्ध्वं पञ्चाब्दादूर्ध्वम् । अत्र सहशब्देन चौलोपनयनयोरव्यवधानं दर्शितं भवति । प्रकारान्तरेण निषेधापवादमाह वसिष्ठः– ' गर्भे मातुः कुमारस्य न कुर्याच्चौलकर्म तु । पञ्चमासादधः कुर्यादत ऊर्ध्वं न कारयेत् । ' इति । पञ्च मासा गर्भसंबन्धिनः पूर्यन्ते यस्मिन्दिने तत्पञ्चमासम् । ' सूनोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत् । ' इत्यस्मिन् विषये ' पञ्चमासादधः कुर्यात् ' इत्ययं प्रतिप्रसवः । ' अत ऊर्ध्वं न कारयेत् ' इति वसिष्ठवचनबोधितनिषेधविषये ' अथोर्ध्वं तु गर्भिण्यामपि कारयेत् ' इति नारदवचनबोधितोऽयं प्रतिप्रसवः । ' सूनोर्मातरि ' इत्यस्मिन् वाक्ये माता साक्षान्मातैव ग्राह्या, न तु सापत्नमाता, ' गर्भिण्यामपि भार्यायां सूनोश्चौलं न कारयेत् । भिन्नभार्यासुतस्येह न दोषश्चौलकर्मणि ॥ ' इति प्रयोगदर्पणे स्मृत्यन्तरवचनात् ।

$ संर. ९००

---

§ संग. संप्रगतम् ।

पृ. ३२ (=) प्रथमार्धं नास्ति ; संग. ६०९ वर्षे (वाऽपि) प्रथमार्धं नास्ति; संब. ८९ संप्रवत् ; संर. ८९८ येऽब्दे श्रे ( ये चेच्छ्रे ).

(१) प्रपा. २०३ ज्योतिर्निरदः ; गभा. १९० तृतीयपादे (पञ्चमात्प्रागत ऊर्ध्वं तु) मदनरत्ने ; प्रर. ८१ (=) सूनो ( शिशो ) तृतीयपादे ( पञ्चमाब्दादथोर्ध्वं तु ) ; धप्र. ३९ पूर्वार्धे ( यस्य मातरि गर्भिण्यां सूनोः क्षौरं न कारयेत् । ) मदनपारिजाते ; संसौ. ८३ ब्दात्प्रागथोर्ध्वं तु ( ब्दापगमादूर्ध्वे ) ; संप्र. ३१३ : ३८५ पू. ; बम. ११ प्ररवत्, ज्योतिर्निरदः ; मुक्ता. ८३ थोर्ध्वं ( थोर्ध्वे ) ; संम. १९ प्ररवत् ; सिन्धु. ९१९ ; विपा. ४६१ प्ररवत्, यमः ; ज्योनि. ११९ ; संको. ११३ ; आन. १४९ सूनो (शिशो) तृतीयपादे ( पञ्चाब्दादथोर्ध्वं तु ) गर्गः ; बाल. १।११–१२ पृ. ३२ तृतीयपादे (पञ्चमाब्दात्प्रागूर्ध्वं तु) ; संग. ६१४ ; संब. ८६–८७, ९० ; पुम. ४३७ ब्दात्प्रा ( ब्दार्वा ) ; संर. ९०० ज्योतिर्निरदः .

(२) प्रपा. २०३ ज्योतिर्निरदः ; गभा. १९० उत्त. मदनरत्ने ; प्रर. ८१ (=) उत्त. ; संप्र. ३१३ : ३८६ उत्त. ; बम. ११ उत्त. ; संम. २० तदा ( तत्र ) उत्त. ; सिन्धु. ९१९ भवेत् ( यदि ) ; विपा. ४६२ (=) सिन्धुवत् ; ज्योनि. ११९ च्चेत्तदा ( च्च तदा ) ; संको. ११३ उत्त. ; बाल. १।११–१२ पृ. ३२ सिन्धुवत् ; संग. ६१४ ; संब. ८७, ९० उत्त. ; संर. ९०० उत्त., ज्योतिर्निरदः .

‡ संको. संप्रगतम् ।

$ शेषं संप्रगतम् ।

## बृहस्पतिः

चूडाकर्मकालः , मातरि गर्भिण्यां पञ्चममासादूर्ध्वं चूडाकरणनिषेधः

[1]**चूडाकर्म त्रिवार्षिके ॥**

[2]**तृतीयेऽब्दे शिशोर्गर्भाज्जन्मतो वा विशेषतः। पञ्चमे सप्तमे वाऽपि स्त्रियाः पुंसोऽथवा समम् ॥**

अत्र तृतीयादि विषमं स्त्रीपुंसयोरुभयोरपि मुख्यम् । चतुर्थादि समं त्वनुकल्पः । तत्रापि जन्मतस्तृतीयादि मुख्यम्, गर्भतस्त्वमुख्यम् । तेन 'गर्भाष्टमेऽष्टमे वाऽब्दे' (यास्मृ. १।१४) इतिवन्न तुल्यविकल्पः । अत एव नारदः– 'जन्मतस्तु तृतीये चेच्छ्रेष्ठमिच्छन्ति पण्डिताः। पञ्चमे सप्तमे वर्षे जन्मतो मध्यमं भवेत् ॥ अधमं गर्भतः स्यात्तु दशमैकादशेऽपि वा ॥' इति । संर. ८९८

[3]**गर्भिण्यां मातरि शिशोः क्षौरकर्म न कारयेत्। शताभिषेकेऽप्येवं स्यात्कालो वेदव्रतेष्वपि ॥**

(१) शताभिषेकः बौधायनोक्तः शान्तिकप्रकाशे वक्ष्यमाणः। वेदव्रतानि महानाम्न्यादीनि । संप्र. ३१२

(२) अभिषेकः समावर्तनम्। सिन्धु. ९१५

[4]**गर्भे मातुः कुमारस्य न कुर्याच्चौलकर्म तु । पञ्चमासादधः कुर्यादत ऊर्ध्वं न कारयेत् ॥**

पञ्चमाब्दात् पूर्वमपि पञ्चमासपर्यन्तं गर्भिण्यां न दोषः । तदाह मदनरत्ने बृहस्पतिः– 'गर्भे मातुः... न कारयेत् ॥' । संम. २०

---

(१) चका. ७४२.

(२) प्रपा. २०० येऽब्दे (येऽपि); गभा. १९० थवा (पि वा); संसौ. ७३; संप्र. २९७ प्रपावत्; सिन्धु. ९१७ गभावत्; संग. ६०९ स्त्रियाः (स्त्रियः) शेषं गभावत्; संव. ८५ (=) गभावत्; पुम. ४३६ गभावत्; संर. ८९८.

(३) गभा. १९० शता (व्रता); संप्र. ३१२; सिन्धु. ९१९ गभावत्; संग. ६१३.

(४) संम. २०; सिन्धु. ९२०; बाल. १।११–१२ पृ. ३२.

[1]**पुत्रचूडाकृतौ माता गर्भिणी यदि वा भवेत्। विपद्यते गुरुस्तत्र दम्पती शिशुरब्दतः ॥**

## व्यासः

यथाकुलधर्मं चूडाकर्म

[2]... **चूडाकर्म कुलोचितम् ॥**

## यमः

चूडाकर्मकालः

†[3]**ततः संवत्सरेऽपूर्णे चूडाकर्म विधीयते । द्वितीये वा तृतीये वा कर्तव्यं श्रुतिचोदनात् ॥**

(१) द्वितीये पूर्णे इत्यनुषङ्गः । अन्यथा संवत्सरे पूर्णे इत्यनेनैव वा तल्लब्धत्वात् द्वितीये इत्यवचनीयं स्यात् । (‡ द्वितीये संपूर्णे तृतीये त्वसंपूर्णे,) 'तृतीये भूयिष्ठे गते' इति लौगाक्षिवचनात् । § व्रक. ९४

(२) अत्र अपूर्णे इति पदच्छेदः । स च द्वितीयादिष्वनुषज्यते । ततश्च प्रथमादिवर्षाणामेवाधिकरणत्वं सिध्यति । तदाह षड्गुरुशिष्यः– 'आद्येऽब्दे कुर्वते केचित् पञ्चमेऽन्ये द्वितीयके । जाताधिकाराज्जन्मादि-

---

† अस्य वीमिव्याख्यानमस्मिन्नेव प्रकरणे याज्ञवल्क्यवचने (सं. का पृ. २९०३) द्रष्टव्यम् ।

‡ ग्रन्थांशोऽयं प्रभ्रष्ट इति प्रकाशकृतानुवादात्प्रतीयते ।

§ स्मृसा., संसौ. व्रकवत् ।

(१) सिन्धु. ९२०.

(२) व्यास्मृ. १।१९.

(३) अप. १।११–१३ पृ. २९ प्रथमपादे (तथा संवत्सरे पूर्णे); व्रक. ९४ रेऽपूर्णे (रे पूर्णे); स्मृच. २३ प्रथमपादे (संवत्सरे तु संपूर्णे); चका. ७४२ रेऽपूर्णे (रे वृत्ते); स्मृसा. ४ रेऽपूर्णे (रे पूर्णे) चोद (दर्श); पमा. ४४३ स्मृसावत्; मपा. ३६१ अपवत्; प्रपा. १९९ श्रुति (स्मृति) शेषं व्रकवत्; संसौ. ७२ व्रकवत्; वीमि. १।१२ स्मृसावत्, मनुः; संप्र. २९६; वम. १० स्मृसावत्; मुका. ८३ व्रकवत्; संम. १९ उत्त.; विपा. ४६१ व्रकवत्; बाल. १।११–१२ पृ. ३२ स्मृसावत्, कारिका; संग. ६०९ व्रकवत्; पुम. ४३६ श्रुति (स्मृति) शेषं स्मृसावत्; संर. ८९८ चतुर्थपादे (चूडाकर्म विधीयते).

तृतीयेऽब्दे तु चौलकम् ॥ उपनीत्या सहैवेति विकल्पाः कुलधर्मतः ॥ ' इति । यत्तु कल्पतरुणा 'प्रथमेऽब्दे तृतीये वा ' इति मनुवाक्ये ' प्रथमेऽब्दे वर्तमाने ' इति व्याख्याय ' ततः संवत्सरे पूर्णे चूडाकर्म विधीयते ।' इति यमवाक्ये नञ्प्रश्लेषमकृत्वा ' संवत्सरे पूर्णे ' इति व्याख्यातम्, तत् पूर्वापरविरोधाच्चिन्त्यम्, संभवत्यविरोधे विरुद्धव्याख्यानानौचित्यात् । यदपि " द्वितीये संपूर्णे तृतीये त्वसंपूर्णे, ' तृतीये भूयिष्ठे गते ' इति लौगाक्षिस्मरणात् " इति व्याख्यातं तदपि तथैव, विलम्बोपस्थितिकवाक्यान्तरैकवाक्यतापेक्षया समानवाक्यस्थितपदानुषङ्गस्य शीघ्रोपस्थितिकत्वेनाभ्यर्हितत्वादित्यलं वृद्धविरोधेन । वाशब्दद्वयोपादानं पञ्चमसप्तमवर्षयोरपि ग्रहणाय ।

¶ संप्र. २९६–२९७

(३) अपूर्णे इति च्छेदः । अयं च प्रथमद्वितीयसंवत्सरविधिः शाखान्तरपर एव, न सत्याषाढसूत्रानुसारिपरः, आचार्यविहिततृतीयवर्षात्मकचौलकालतः पूर्वतनकालग्रहणस्यायुक्तत्वात् । संर. ८९८

[३]यथाकुलं यथाशाखं चूडा कार्या द्विजातिभिः ॥

## बृहत्पराशरः

चूडाकर्मकालः, स्त्रीणाममन्त्रकं चूडाकर्म

[१]चूडाकर्म तृतीयेऽब्दे कार्यं वा कुलधर्मतः ।
सर्वं स्त्रियां विमन्त्रं तु कार्यं कायविशुद्धये ॥

## अत्रिः

कामभेदेन चूडाकर्मकालभेदाः

[२]तृतीयवर्षे चौलं तु सर्वकामार्थसाधनम् ।
संवत्सरे तु चौलेन आयुष्यं ब्रह्मवर्चसम् ।
पञ्चमे पशुकामस्य युग्मे वर्षे तु गर्हितम् ॥

समवर्षगर्हणा तु द्वितीयदशमातिरिक्तविषया, यमेन तस्य विधानात् । संप्र. २९८

¶ संग. संप्रगतम् ।

(१) मुक्ता. ८३.

(२) वृपसं. ६।१५०–१५१.

(३) संप्र. २९८.

## गर्गः

मातरि गर्भिण्यां पञ्चममासात्परं चूडाकर्मनिषेधः

[१]पुत्रचूडाकृतौ माता यदि सा गर्भिणी भवेत् ।
शस्त्रेण मृत्युमाप्नोति तस्मात् क्षौरं विवर्जयेत् ॥

मातेति जनयित्र्यर्थकम् । तेन सपत्नमातुर्गर्भेऽपि न दोषः । तदुक्तं भट्टोजिना– ' भिन्नभार्यासुतस्येह न दोषश्चौलकर्मणि । ' इति । कृभ. ९१९

[२]पञ्चममासादूर्ध्वं मातुर्गर्भस्य जायते मृत्युः ॥

गर्भिण्यामपि पञ्चममासपर्यन्तं न दोष इत्युक्तं मुहूर्तदीपिकायां गर्गेण– ' पञ्चममासादूर्ध्वं... जायते मृत्युः ' इति । § सिन्धु. ९१९

## आश्वलायनः

चूडाकर्मकालः

[३]तृतीये पञ्चमे वाऽब्दे चौलकर्म प्रशस्यते ।
प्राग्वाऽसमे सप्तमे वा सहोपनयनेन वा ॥

(१) अत्र असमे इति पदच्छेदः, ' युग्मे वर्षे तु गर्हितम् ' इति वक्ष्यमाणात्रिवचनात् । संप्र. २९७

(२) उपनीतेः प्रागयुग्मे वेत्यर्थः ।

$ संको. ११२

§ विपा. सिन्धुवत् ।

$ संव. संकोवत् ।

(१) प्रपा. २०३ सा ( वा ); गभा. १९० मदनरत्ने; संप्र. ३१३; मुक्ता. ८३; सिन्धु. ९१९ वृद्धगार्ग्यः; ज्योनि. ११९ कृतौ ( मणौ ); संग. ६१३.

(२) सिन्धु. ९१९; विपा. ४६१ दूर्ध्वं + ( तु ).

(३) आश्वस्मृ. ११।१०९; प्रपा. २०० ग्वाऽस (ग्वा स ); संप्र. २९७; ज्योनि. ११७ मे वाऽब्दे ( मेऽब्दे वा ) नेन वा ( नेन च ) शेषं प्रपावत्, आचार्यः; संको. ११२; बाल. १।११–१२ पृ. ३२ प्रपावत्; संव. ८९ वाऽब्दे चौलक ( चाब्दे चौलं क ); संवी. २७४ ( भागः २ ) वाऽब्दे ( वाऽपि ).

## लघ्वाश्वलायनः

चूडाकर्मकालः, यथाप्रवरर्षिसंख्यं चूडाः

**'तृतीये वत्सरे चौलं बालकस्य विधीयते ॥**
**यावन्तः प्रवरास्तस्य शिखा मध्ये च पार्श्वयोः ।**
**पश्चात्पूर्वे तथा पञ्चप्रवराणां शिखाः स्मृताः ॥**

## कश्यपः

चूडाकर्मकालः

**'जन्मर्क्षाणां चतुर्विंशात्परतश्चौलमाचरेत् ।**
**अथवा पञ्चमे वर्षे सावनेनैव योजयेत् ॥**

चतुर्विंशतिर्जन्मनक्षत्राणि $चतुर्विंशत्या मासैः संपद्यन्ते । ततश्च चतुर्विंशान्मासात् परतः तृतीयेऽब्द इत्यर्थः सिध्यति । पञ्चम इत्युक्तवर्षाणामुपलक्षणम्, अन्यथा तेषु मानान्तरकल्पनाक्लेशापत्तेः । संप्र. २९८

## लौगाक्षिः

यथागोत्रं शिखाव्यवस्था

**'कम्बुजानां वसिष्ठानां दक्षिणे कारयेच्छिखाम् ।**
**द्विभागेऽत्रिकश्यपानां मुण्डाश्च भृगवो मताः ॥**
**'पञ्चचूडा अङ्गिरस एका वाजसनेयिनाम् ।**
**मङ्गलार्थं शिखिनोऽन्य उक्ता चूडाविधिः क्रमात् ॥ ‡**

## सोमः

चूडाकर्मकालः

**'संवत्सरे चूडाकरणम् ॥**

## स्मृत्यन्तरम्

यथागोत्रं शिखाव्यवस्था, मातरि गर्भिण्यां चौलनिषेधः, सापत्नमातरि गर्भिण्यां चौलानुमतिः

**'मध्ये शिरसि चूडा स्याद्वसिष्ठानां तु दक्षिणे ।**
**उभयोः पार्श्वयोरत्रिकश्यपानां शिखा मता ॥**

एवं चौलकालधृतशिखानां मध्ये मध्यशिखेतरशिखानामुपनयनकाले वपनं कार्यम्, 'मध्ये शिरसि... शिखा मता ॥' इति वृद्धोदाहृतवचसि मध्यशिखाया निमित्तविशेषसंयोगं विना विहिताया नित्यत्वेन 'सदा बद्धशिखेन च' इति नित्यविधिविषयत्वौचित्यात् इतरशिखानामनुपनीतधार्यत्वेन माधवोक्तेश्चेत्यलम् ।

संकौ. ११५

**'गर्भिण्यामपि भार्यायां सुतोश्चौलं न कारयेत् ।**
**भिन्नभार्यासुतस्येह न दोषश्चौलकर्मणि ॥**

## स्कन्दपुराणम्

शूद्रस्य शिखाधारणनिषेधः, चूडाकर्मकालः

**† 'न शिखां नोपवीतं च नोच्चरेत्संस्कृतां गिरम् ॥**

**'... चूडाऽब्दे वा यथाकुलम् ॥**

## पद्मपुराणम्

शूद्रस्य शिखाधारणनिषेधः

**'न शिखी नोपवीती स्यान्नोच्चरेत्संस्कृतां गिरम् ॥**

---

$ इदं न युक्तम्, द्वाविंशत्या मासैश्चतुर्विंशतेर्जन्मनक्षत्राणां संपत्तेः ।

‡ हरिहरभाष्यपर्यालोचनया इमौ श्लोकौ न लौगाक्षेः । अपि तु तदीयवचनव्याख्यानरूपौ अन्यदीयौ स्यातामिति भाति ।

(१) लघ्वाश्वस्मृ. ९।१, १७.
(२) प्रपा. २०० ; संप्र. २९८.
(३) हभा. १८७ (=) ; संग. ६१८.
(४) हभा. १८७ (=) ; संग. ६१८ अङ्गिरा (आङ्गिरा) चतुर्थपादे (कुर्वन्तीह महर्षयः).
(५) चका. ७४२.

† शूद्रविषयकमिदम् ।

(१) प्रर. ८१ स्याद्व (स्याद्वा) ; चम. ११ प्ररवत् ; सिन्धु. ९२१ प्ररवत्, प्रयोगरत्ने ; विपा. ४६१ (=) ; संकौ. ११५ वृद्धोदाहृतवचः ; बाल. १।११–१२ पृ. ३३ निर्णयसिन्धुकृत् प्रयोगरत्ने ; संब. ९३ प्ररवत्, वृद्धवचनम्.

(२) चम. ११ (=) उत्त. ; कुम. ९१९ उत्त., भट्टोजिः ; संर. ९००.

(३) शूशि. ३७ नोच्च (नोद्ध) : ४४ ; संप्र. ३१८ प्रभासखण्डे ; शूक. ६२ प्रथमपादे (न शिखी नोपवीती स्यात्) ; संकौ. ११६ शिखां (शिखा) प्रभासखण्डे ; संग. ६२० सर्वे संकौवत्. (४) सस्मृ. ५१.

(५) गभा. १९२ ; आर. २ ; सिन्धु. ९२२ ; शूक. ५१ ; बाल. १।११–१२ पृ. ३४ ; संवी. ८.

(१) यत्तु पाद्मे 'न शिखी... संस्कृतां गिरम्' इति शूद्रमुपक्रम्योक्तम्, तदसच्छूद्रस्येति केचित्। विकल्प इति तु युक्तम्। § गभा. १९२

(२) अत एव हारीतः– 'स्त्रीशूद्रौ तु शिखां छित्वा क्रोधाद्वैराग्यतोऽपि वा। प्राजापत्यं प्रकुर्वीतां निष्कृतिर्नान्यथा भवेत्॥'। एतत् परिग्रहपक्षे। अत्र देशभेदात् व्यवस्थेति दिक्। $ सिन्धु. ९२२

(३) यत्तु पाद्मे– 'न शिखी... संस्कृतां गिरम्। मध्यपत्रे न भुञ्जीत ब्रह्मवृक्षस्य भामिनी॥' इति, तन्मुण्डितत्वपरिग्रहपक्षे। शूक. ५१

## अनिर्दिष्टकर्तृकवचनानि

चूडाकर्मकालः, सच्छूद्रस्य यथाकुलधर्मं शिखाकरणम्

**[1]संवत्सरेषु त्रिषु पञ्चमेषु**
**गतत्रिभागेषु वदन्ति चौलम्॥**
**[2]अयुग्माब्दे तथा मासि चूडा भौमशनीतरे॥**
**[3]सच्छूद्रस्य शिखा कार्या कुलधर्मानुसारतः॥**

## चतुर्विंशतिमतम्

चूडाकर्मकालः

**[4]चूडाकर्म तृतीयेऽब्दे कुलधर्मेण वा तथा॥**

## स्मृत्यर्थसारः

चूडाकर्मकालः

**[5]चौलं प्रथमे वर्षे तृतीये वा कार्यं बहुमतत्वात्। यथाकुलधर्मं वा॥**

## नृसिंहः

चूडाकर्मकालः

**[6]तृतीये पञ्चमे वर्षे गते भागे तृतीयके।**
**आदौ चौलं प्रकर्तव्यमिति केचित् प्रचक्षते॥**

---

§ आर., संदी. केचित्कारोक्तमतांशमात्रविषये गभावत्।
$ शेषं गभावत्। बाल. सिन्धोरनुवादः।
(१) आन. १४९ ज्योतिषे.
(२) संत. ९२२ ज्योतिषे. (३) विपा. ४६१.
(४) वम. १२. (५) स्मृसार. ३.
(६) प्रपा. २०० गते भा (गतभा); संप्र. २९८.

## राजमार्तण्डः

चूडाकर्मणि प्राङ्मुखत्वमुदङ्मुखत्वं वा

**[1]प्राचीमुखः सौम्यमुखोऽपि भूत्वा**
**कुर्यान्नरः क्षौरमनुत्कटस्थः॥**

सौम्यमुखः उत्तराभिमुखः। कुर्यादित्यन्तर्भावितणिजर्थः। कारयेदित्यर्थः। संसौ. ७८

## श्रीधरः

चूडाकर्मकालः

**[2]वर्षे तृतीयेऽप्यथ पञ्चमेऽब्दे**
**गतत्रिभागे प्रवदन्ति चौलम्॥**

तृतीये पञ्चमे वा वर्षे प्राप्ते चौलं वदन्ति। गतत्रिभागे इत्यनेन मतान्तरमुच्यते– तृतीये पञ्चमे वा वर्षे गतत्रिभागे कर्तव्यमिति। प्रपा. २००

## षड्गुरुशिष्यः

चूडाकर्मकालः

**[3]आताधिकाराज्जन्मादितृतीयेऽब्दे तु चौलकम्।**
**यादृशः कुलधर्मः स्यात्तादृशं चौलकर्म वा॥**
**[4]आद्येऽब्दे कुर्वते केचित्पञ्चमेऽन्ये द्वितीयके।**
**उपनीत्या सहैवेति विकल्पाः कुलधर्मतः॥**

§ अत्रेयं संकलना– प्रथमद्वितीयतृतीयपञ्चमसप्तमदशमैकादशेषु उपनीतिदिने यथाकुलाचारं वा चौलं कार्यमिति।......उक्तपक्षाणामेव कुलधर्मो व्यवस्थापक

---

§ व्याख्यानमिदं यथाकुलधर्मकालविधायकयावद्वचनविषयम्।
(१) संत. ९२६; संसौ. ७८.
(२) प्रपा. २००; संप्र. २९८ मेऽब्दे गतत्रि (मे वा गते त्रि) कालविधाने.
(३) प्रपा. १९९; संप्र. २९६ पू. 'आद्येऽब्दे' इत्यग्रिमश्लोकपूर्वोत्तरार्धयोर्मध्येऽस्य पूर्वार्धे पठितम्: २९९ वा (च) उत्त.; सिन्धु. ९१७ पू.
(४) प्रपा. २०० विकल्पाः (विकल्पः); गभा. १९० मेऽन्ये (मेऽब्दे) प्रयोगपारिजाते; संप्र. २९६; संम. १९ प्रपावत् सर्वं गभावच्च; सिन्धु. ९१७ गभावत्; ज्योनि. ११७; संग. ६०९ सर्वं गभावत्.

इत्येके। स्वतन्त्रं कालान्तरमित्यपरे। तेनानुक्तेऽपि काले भवति। संप्र. २९९

## वरदराजीये

मातरि गर्भिण्यां पञ्चममासात्परं चौलनिषेधः

**[1]बटोर्माता गर्भिणी स्यान्न कुर्याच्चौलकर्म च।**
**पञ्चमासादधः कुर्यादत ऊर्ध्वं न कारयेत्॥**

## मदनपारिजाते

मातरि गर्भिण्यां चौलनिषेधः

**[2]चूडाकर्म(? कृतौ) शिशोर्माता गर्भिणी यदि वा भवेत्।**
**तस्य चौलं न कर्तव्यं गार्ग्यस्य वचनं यथा॥**

## धर्मप्रदीपे

स्त्रीशूद्रयोः शिखाधारणनिषेधः

**[3]शिखा यज्ञोपवीतं च कुशा मौनं तथैव च।**
**वेदाध्ययनभैक्ष्ये च स्त्रीशूद्रपतनानि षट्॥**

## मुहूर्तचिन्तामणिः

चूडाकर्मकालः, मातरि गर्भिण्यां पञ्चममासात्परं संस्कार्यशिशोः पञ्चमवर्षान्तं यावत् चौलनिषेधः

**[4]चूडा वर्षात्तृतीयात्प्रभवति विषमे...॥**

तृतीयाद्वर्षादिति ल्यब्लोपे पञ्चमी। तेन गर्भाधानकालात् जन्मकालाद्वा तृतीये विषमे वर्षे पञ्चमे सप्तमे वा चूडाकरणं प्रभवति कृतं सच्छुभोदर्कं भवतीत्यर्थः। § पीटी.

**[5]पञ्चमासाधिके मातुर्गर्भे चौलं शिशोर्न सत्।**
**पञ्चवर्षाधिकस्येष्टं गर्भिण्यामपि मातरि॥**

अथ सगर्भायां स्वमातरि सत्यां शिशोश्चौलार्थं कालमनुष्टुभाऽऽह–पञ्चेति। चौलाधिकारिणः शिशोर्मातुः गर्भे पञ्चमासेभ्योऽधिके सति चौलं न सत् शुभफलदातृ नैव स्यात्। अतः पञ्चमासेभ्यः पूर्वं चौलं कृतं सत् शुभफलमित्यर्थः। अस्याप्यपवादमाह– पञ्चेति। पञ्चवर्षाधिकस्य उल्लङ्घितपञ्चमवर्षस्य शिशोः मातरि गर्भिण्यामपि सत्यां पञ्चमासादध ऊर्ध्वं (वा) विहितकाले चौलम् इष्टं कल्याणकारि भवेत्। अतः बालो यावत् पञ्चवर्षो न भवति तावत्पर्यन्तं निषेध इत्यर्थः। § पीटी.

## स्मृतिदर्पणे

यथागोत्रं यथाकुलधर्मं वा शिखाव्यवस्था

**[1]एका शिखा दक्षिणतो वसिष्ठगोत्रस्य पञ्चाङ्गिरसो भृगोस्तु।**
**नैका शिखा कश्यपगोत्रजानां शिखोभयत्रापि यथाकुलं च॥**

## संध्यारत्ने

शिखायां केशपरिमाणम्, शिखासंस्थानम्

**[2]विप्रादिकानां खलु मुष्टिमेयकेशाः शिखा स्यादधिका ततो न।**
**द्विधा त्रिधा वाऽपि विभज्य बन्धो ह्यल्पा ततोऽल्पाऽपि न लम्बिताऽपि॥**

## मुहूर्तगणपतौ

चूडाकर्मकालः, मातरि गर्भिण्यां पञ्चममासात्परं संस्कार्यशिशोः पञ्चमवर्षान्तं यावत् चौलनिषेधः

**[3]चौलं संवत्सरे पूर्णे त्रितयाद्विषमे चरेत्॥**

**मातुर्गर्भे न सच्चौलं पञ्चमासाधिके शिशोः।**
**ततोऽधिकेऽपि गर्भेऽस्याः पञ्चवर्षाधिकस्य सत्॥**

---

§ संव. पीटीवत्।

(१) मुक्ता. ९९; आन. १५९.
(२) धप्र. ३९. (३) संप्र. ११८; संग. ६२०.
(४) मुचि. ५।२९; संव. ८५.
(५) मुचि. ५।३१; संव. ८६.

§ संव. पीटीवत्।

(१) सिन्धु. ९२२; बाल. १।११–१२ पृ. ३४ रसो (रसां). (२) इन्दु. ८. (३) संव. ८९.

## शाकलकारिकाः

चूडाकर्मकालः, कालभेदेन प्रवरर्षिभेदेन च शिखाव्यवस्था

[1]तृतीयेऽब्दे कुमारस्य चौलकर्म विधीयते ।
मौञ्जीबन्धनकाले वा कुलधर्मानुसारतः ॥
यान्केशान् गर्भसंभूतान् (? ये केशा गर्भसंभूताः) चौलस्य च विधानतः ।
तानेव हि वपेच्चौले यथाकाले भवेद्यदि ॥
वपेत्केशान्कुमारस्य शिखे संस्थाप्य पार्श्वयोः ।
वपेन्मध्यशिखां हित्वा मौञ्जीबन्धदिने हि तु ॥
शिखायाः पुरतश्चैका मध्यस्थायाः शिखा परा ।
अयमेव विशेषः स्याद्देव(?)प्रवरचौलके ॥
शिखा स्थिरैका मध्यस्था स्यातां द्वे पार्श्वयोः शिखे ।
चतस्रः स्युः शिखाः पञ्चप्रवराणां च पूर्वतः ॥
न भवेदुक्तकाले चेच्चौलं यस्य तु वै यदि ।
तदोपनयनाद्दे तु चौलं कृत्वोपनायनम् ॥

## शौनककारिकाः

चूडाकर्मकालः

[2]वर्षे तृतीये बालस्य चौलकर्म समाचरेत् ।
अथवा पूर्वपुरुषसमाचारवशाद्भवेत् ॥

## कुमारिलकारिकाः

चूडाकर्मकालः, यथाप्रवरर्षि शिखासंख्या

[3]तृतीये वत्सरे चौलं कुर्वीतास्योत्तरायणे ॥
[4]यथान्वयं वा केषांचिदुपनीत्या सहेष्यते ॥

(१) शाका. २०–२१, २३–२५, २७ पृ. २–३.

(२) शौका. १ पृ. ४० ; प्रपा. २००.

(३) कुका. १।१२।१ ; प्रपा. १९९ ; धप्र. ३८ वत्सरे चौलं ( वर्षे चौलं वा ) ; संम. १९ आश्वलायनस्मृतौ ; विपा. ४६२ कुर्वीतास्यो ( प्रकुर्वीतो ).

(४) कुका. १।१२।२ ; प्रपा. १९९ ; धप्र. ३८ ;

[1]शिखा अपि च कर्तव्यास्तस्य स्वऋषिसंख्यया ॥

## रेणुकारिकाः

चूडाकर्मकालः, यथागोत्रं शिखासंख्या

[2]ततः संवत्सरे पूर्णे चूडाकर्म विधीयते ।
तृतीये वाऽप्रतिहते भूयिष्ठेऽस्मिन् गते सति ॥
यस्मिन्कुले यदा चूडाकर्म कुर्यात्तदैव वा ।
यथामङ्गलशब्दोऽयं शाखान्तरपरिग्रहे ॥
व्याकुर्वन्त्यपरे सूत्रविदो नेतीह शौनकः ।
अतस्त्रिवत्सरस्यैतत्पञ्चमेऽब्देऽथवा भवेत् ॥
[3]केशशेषं ततः कुर्याद्यस्मिन् गोत्रे यथोचितम् ॥
[4]वसिष्ठा दक्षिणे भागे उभयत्रात्रिकश्यपाः ।
शिखां कुर्वन्त्यङ्गिरसः शिखाभिः पञ्चभिर्युताः ॥
[5]परितः केशपङ्क्त्या वा मुण्डाश्च भृगवो मताः ।
कुर्वन्त्यन्ये शिखामात्रं मङ्गलार्थमिह क्वचित् ॥
[6]यथामङ्गलशब्दोऽत्र चौलार्थे विनियोजितः ॥

चम. १० यथान्वयं वा ( यथाकुलं च ) ; संम. १९ चमवत् ; विपा. ४६२ ; बाल. १।११–१२ पृ. ३२ चमवत् .

(१) कुका. १।१२।३ ; प्रपा. २०३ ; संप्र. २२६ व्यास्तस्य स्वऋषि ( व्याः कुमारस्याऽऽर्ष ) स्मरणम् : ३१६ (शिखाऽपि च प्रकर्तव्या कुमारस्याऽऽर्षसंख्यया ॥) ; संकौ. ४८ (=) संप्र. २२६ वत् : ११५ व्यास्तस्य स्वऋषि (व्या कुमारस्याऽऽर्ष) ; संब. ९३ संकौ. ११५ वत्.

(२) रेका. १–३ पृ. १६.

(३) रेका. २९ पृ. १८ ; गभा. १९२ ; संग. ६१८.

(४) रेका. ३० पृ. १८ ; गभा. १९२ वसि (वासि) त्रिकश्य ( पि कश्य ) ; संग. ६१८ र्युताः ( र्युताम् ).

(५) रेका. ३१ पृ. १८–१९ ; गभा. १९२ मात्रं ( मत्र ) ; संग. ६१८. (६) रेका. २ पृ. ४२.

# चूडाकर्ममुहूर्तः

## आपस्तम्बगृह्यसूत्रम्

चूडाकर्मणि नक्षत्रम्

...... [1]चौलं पुनर्वस्वोः ॥

## हिरण्यकेशिगृह्यसूत्रम्

चूडाकर्मणि पक्षः नक्षत्रं च

[2]आपूर्यमाणपक्षे पुण्ये नक्षत्रे...... ॥

आपूर्यमाणपक्ष इत्यादि व्याख्यातम् । उदगयनमपि आचाराद्ग्राह्यम् । ¶ मातृवृ.

## मानवगृह्यसूत्रम्

चूडाकर्मणि अयनपक्षतिथिनक्षत्राणि

[3]उदगयने ज्यौत्स्ने पुण्ये नक्षत्रेऽन्यत्र नवम्याम् ॥

उदगयने । षण्मासमुदगयनं लोकप्रसिद्धम् । ज्यौत्स्ने । उदगयनेऽपि पुण्ये नक्षत्रे अज्यौत्स्नेऽपि । अन्यत्र नवम्याम्, उदगयनादिषु नवमीं वर्जयित्वेत्यर्थः । अन्यस्तु उदगयनज्यौत्स्ना(?त्स्न–)पुण्यनक्षत्राणां विकल्प(?ल्पा)-श्रवणात् समुच्चयः । अष्टाभा.

## काठकगृह्यसूत्रम्

चूडाकर्मणि पक्षः तिथिः पुण्याहं च

[4]शुद्धपक्षस्य पुण्याहे पर्वणि वा... ॥

शुद्धस्य शुक्लस्य । ब्रक. ९५

¶ संर. मातृवृत्त्यनुवादः ।

(१) आपगृ. १६।३ ; स्मृच. २३ ; चका. ७४३ स्वोः ( सौ ) ; मुक्ता. ८३ ; बाल. १।११–१२ पृ. ३२.

(२) हिगृ. २०।१।४३ ; संर. ८९७.

(३) मागृ. १।२१।१.

(४) कागृ. ४०।९ ; अप. १।११–१३ पृ. २९ ; ब्रक. ९५ ( शुद्धस्य पुण्याहे वा ) ; स्मृच. २३ ; चका. ७४३ वा + ( चूडाकरणम् ) ; मपा. ३६१ वा ( च ) ; शूशि. ७० शुद्ध ( शुक्र ) वा ( च ).

## आग्निवेश्यगृह्यसूत्रम्

चूडाकर्मणि पक्षः नक्षत्रं च

[1]आपूर्यमाणपक्षे पुण्ये नक्षत्रे... ॥

## जैमिनिगृह्यसूत्रम्

चूडाकर्मणि अयनपक्षनक्षत्राणि

[2]उदगयने पूर्वपक्षे पुण्ये नक्षत्रे... ॥

## वैखानसगृह्यसूत्रम्

चूडाकर्मणि अयनपक्षनक्षत्राणि

[3]उत्तरायणे पक्ष आपूर्यमाणे पुण्याग्नि ... ॥

## बैजवापगृह्यसूत्रम्

चूडाकर्मणि अयनपक्षपुण्याहानि

[4]उदगयने आपूर्यमाणपक्षे पुण्याहे चूडाकर्म ॥

## वसिष्ठः

चूडाकर्मणि अयनतिथिवारनक्षत्रलग्ननवांशाः, चन्द्रताराबलगुरुशुक्रोदया आवश्यकाः, ग्रहसंस्थानम्

[5]सौम्यायने गुरौ शुक्रे दृश्यमाने शुभे दिने ।
चन्द्रताराबलोपेते शुभलग्ने शुभांशके ॥
पञ्चमी सप्तमी चैव दशम्येकादशी तथा ।
त्रयोदशी तृतीया च चौलकर्मणि शोभना ॥
विधातृद्वितये सार्पात्तृतीये च चतुष्टये ।
धर्मादर्शदिने चौलं श्रेष्ठं कृष्णाद्यवासरे ॥
अदितिद्वितये पौष्णद्वितये श्रवणत्रये ।
हस्ताद्य त्रितये शाक्रे सैन्दवे चौलमीरितम् ॥
चन्द्रशुक्रगुरुज्ञानां वारलग्नांशकाः शुभाः ।
एवं सम्यग्विचार्याथ चौलकार्यं च कारयेत् ॥

(१) आग्निगृ. २।२।५. (२) जैगृ. १।११.

(३) वैगृ. ३।२३. (४) चका. ७४३.

(५) वसं. २८।३, १०–१२.

[1]द्वित्रिपञ्चमसप्तम्यामेकादश्यां तथैव च ।
दशम्यां च त्रयोदश्यां कार्यं क्षौरं विजानता ॥
[2]पक्षच्छिद्रां च नवमीमाद्यां पञ्चदशीं तथा ।
हित्वा तु तिथयः सर्वाः प्रशस्ताः क्षुरकर्मणि ॥

आद्या प्रतिपत् । पञ्चदशी पूर्णिमा । अमावास्यायास्तु सामान्यशास्त्रादेव निषेधसिद्धेः । संर. ८९९

[3]रवेरङ्गारकस्यैव सूर्यपुत्रस्य चैव हि ।
निन्दिता दिवसाः क्षौरे शेषाः कार्यकराः शुभाः ॥

[4]हस्तत्रये पुष्यपुनर्वसौ च
शशाङ्कविष्णुत्रितयेऽश्विनीषु ।
पौष्णेन्द्रधिष्ण्ये क्षुरकर्म शस्तं
विहाय शन्यंशकवारलग्नम् ॥

[5]अष्टाब्जजर्क्षैः पितृपञ्चकश्च
षड्वह्निधिष्ण्यश्चतुरर्यमर्क्षैः ।
त्रिमैत्रभः पद्मजसंनिभोऽपि
क्षौरी नरोऽब्दान्निधनं गतः स्तः ॥

[6]वृषभश्च कुलीरश्च यमः कन्या तुलाधरः ।
मकरश्चैव मीनश्च क्षुरकर्मणि पूजिताः ॥

(१) यमो मिथुनम् । संप्र. ३०६

(२) कुलीरः कर्कः । घटः कुम्भः । अयं च कुम्भविधिर्गत्यन्तराभावे, 'कुम्भः कुलविनाशाय कथितः क्षुरकर्मणि । शुभैर्दृष्टोऽथवा युक्तो न कुम्भः शुभकृत्सदा ॥' इति ज्योतिर्निबन्धे तन्निषेधात् ।

§संर. ८९९

[1]मेषे दुःखी मृगेन्द्रे च वृश्चिके व्यसनं महत् ।
राजबाधा च धनुषि शुभयुक्ते न दुष्यति ॥

(१) शुभग्रहयुक्तत्वं च मेषादीनामपि विशेषणम् । तथा च श्रीधरः– 'कर्काङ्गनामिथुनमीनतुलोक्षनक्राः पूज्याः क्रियालिहरिचापधरा अधन्याः । तेऽपि स्ववीर्यशुभदृष्टियुता विधेयाश्चौले घटः शुभयुतोऽपि निषिद्ध एव ॥' इति । वस्तुतस्तु शुभग्रहयुक्तत्वं धनुष एव शेषो युक्तः, न मेषादीनाम्, तस्यैव पराशरेण विधानात् तेषां क्वचिदपि शुभफलत्वाश्रवणाच्च । तस्मात् श्रीधरीयं व्याख्यानं चिन्त्यमिव प्रतिभाति । संप्र. ३०७–३०८

(२) मृगेन्द्रः सिंहः । संर. ८९९

[2]विषशस्त्रजलैर्घोरैः पीड्यते मरणान्वितः ।
क्षौरे मर्त्यो घटे लग्ने शुभयुक्ते प्रशस्यते ॥

[3]जामित्रे भास्करे क्षौरे मृत्युः स्याद्भूमिजे तथा ।
शुक्रे सौख्यविनाशः स्यान्मन्दभाग्यं शनैश्चरे ॥

[4]त्रिषडायगताः पापाः क्षुरकर्मणि पूजिताः ।
शेषेषु निन्दिताः प्रोक्ताः स्वोच्चवर्गबलादृते ।
तस्मात्सम्यक्परीक्ष्यैव कर्तव्यं चौलमायुषम् ॥

§ शेषं संप्रवत् ।

---

(१) प्रपा. २०१ ; गभा. १९० ; संप्र. ३०२. सिन्धु. ९१७–९१८ ; संको. ११३ ; संग. ६१० ; संर. ८९८ क्षौरं ( चौलं ) नारदः .

(२) प्रपा. २०१ ; संप्र. ३०२ ; संर. ८९८ द्रां च ( द्राश्च ) शस्ताः क्षुर ( शस्ताश्चौल ) नारदः .

(३) प्रपा. २०१ ; संप्र. ३०३ ; सिन्धु. ९१८ शुभाः ( स्मृताः ).

(४) संसौ. ८४ ; संप्र. ३११. (५) संव. ८९.

(६) प्रपा. २०२ ; संप्र. ३०६ ; ज्योनि. ११७ द्वितीयपादे ( यमकन्यातुलाधराः ) पूजिताः ( वर्जिताः ) ; संर. ८९९ द्वितीयपादे ( यमकन्यातुलाघटाः ).

(१) प्रपा. २०२ ; संप्र. ३०७ ; ज्योनि. ११७–११८ दुःखी ( दुःखं ) ; संव. ८६ महत् ( भवेत् ) ; संर. ८९९ बाधा च ( बन्धश्च ).

(२) प्रपा. २०२ ; संप्र. ३०७ शस्यते ( चक्षते ) ; ज्योनि. ११८ विषशस्त्रज (विशेषस्तु ज) क्षौरे (क्षौरी) ; संव. ८६ प्रशस्यते ( ऽपि सत्कृतेः ).

(३) प्रपा. २०२ ; संप्र. ३१० ; ज्योनि. ११८ ; संग. ६१२ वृद्धनारदः ; संव. ८६.

(४) प्रपा. २०२ चौल ( क्षौर ) ; संप्र. ३१० वर्ग ( स्वर्क्ष ) मायुषम् ( मायुषः ).

[1]मित्रे परममित्रे च क्षेमे संपदि साधके ।
आयुष्यं कर्म कुर्वीत प्रशस्ते दिवसे त्वथ ॥
निधने जन्मनक्षत्रे वैनाशे चन्द्रमोऽष्टमे ।
विपत्करे वधे क्षौरं प्रत्यरे च विवर्जयेत् ॥

## मनुः

दक्षिणायने चूडाकर्मनिषेधः

[2]गोदानं स्नातकं चैव समावर्तनकं तथा ।
चौलोपनयने चैवं न कुर्याद्दक्षिणायने ॥

## वृद्धमनुः

मलमासे चूडाकर्मनिषेधः

[3]अग्न्याधेयं प्रतिष्ठां च यज्ञदानव्रतानि च ।
वेदव्रतवृषोत्सर्गचूडाकरणमेखलाः ।
माङ्गल्यमभिषेकं च मलमासे विवर्जयेत् ॥

## नारदः

चूडाकर्मणि अयनमासतिथिवारनक्षत्रलग्ननवांशग्रह-संस्थानानि, गुरुशुक्रास्तयोर्निषेधः

[4]सौम्यायने नास्तगयोरसुरा(? मरा)सुर-मन्त्रिणोः ।
अपर्वरिक्ततिथिषु शुक्रेज्यज्ञेन्दुवासरे ॥
[5]दस्रादितीज्यचन्द्रेन्द्रपूषभानि शुभान्यतः ।
चौलकर्मणि हस्तर्क्षात्त्रीणि त्रीणि च विष्णु-भात् ॥

§[1]पट्टबन्धनचौलान्नप्राशने चोपनायने ।
शुभदं जन्मनक्षत्रमशुभं त्वन्यकर्मणि ॥
[2]अष्टमे शुद्धिसंयुक्ते शुभलग्ने शुभांशके ।
न नैधने मे शीतांशौ षष्ठाष्टान्त्यविवर्जिते ॥
[3]धनत्रिकोणकेन्द्रस्थैः शुभैस्त्र्यायारिगैः परैः ।
चौलान्नप्राशने शस्ताः सौम्या रन्ध्रव्ययायगाः ॥
[4]अभ्यक्ते संध्ययोर्नान्ते निशि भोक्तुर्न चा-ऽऽहवे ।
नोत्कटे भूषिते नैव न याने नवमेऽह्नि च ॥
[5]म(? मा)घादिपञ्चके चौलं हित्वा क्षीणविधुं मधुम् ।
क्रूरवारं निशां रिक्तां षष्ठीं संध्यां च जन्मभम् ॥
[6]द्रेक्काणादि रवेर्युक्तं विप्राणां तु विशेषतः ।
भौमस्य क्षत्रियाणां तु शनेस्तद्वैश्यशूद्रयोः ॥
[7]लग्नाष्टमेशयोर्मैत्र्ये लग्नेशे बलसंयुते ।
अस्तगे निधनेऽशे वा निधनेऽपि शुभो ग्रहः ॥

## बृहस्पतिः

चूडाकर्मणि अयनपक्षतिथिवारनक्षत्रलग्नवर्गनवांश-ग्रहसंस्थानानि, मलमासे चूडाकर्मनिषेधः

[8]उत्तरायणगे सूर्ये विशेषात्सौम्यगोलके ।
अधिमासस्तु निन्द्यः स्यात्संसर्पांहस्पती तथा ॥

---

(१) प्रपा. २०१.

(२) धप्र. ४४ (=) ; संग. ७३१ स्नात (स्नान).

(३) अप. १।२२५ पृ. ५४९ माङ्ग ( मङ्ग ) ; स्मृच. ३७३ खलाः ( खलाम् ) ; पुंम. १९ वृद्धमनु-बृहस्पतिपैठीनसिज्योतिःपराशराः .

(४) ज्योना. २२।२ शुक्रेज्यज्ञे ( शुक्रे ज्ञेज्ये ) ; ज्योनि. ११७ रिक्त ( रिक्ता ) ; संग. ६०९, ७३२ ज्योनिवत् .

(५) ज्योना. २२।३ ; संप्र. ३०४ द्वितीयपादे ( पौष्णभानि शुभानि तु ) ; ज्योनि. ११७ द्वितीयपादे ( पौष्णभानि शुभानि च ) ; संग. ६११ र्क्षात्त्रीणि त्रीणि च ( र्क्षे त्रीणि च त्रीणि ).

§अस्य व्याख्यानमन्नप्राशनप्रकरणे (सं. का. पृ. २८६१) द्रष्टव्यम् ।

(१) ज्योना. २२।४ शेषस्थलादिनिर्देशः अन्नप्राशन-मुहूर्तप्रकरणे ( सं. का. पृ. २८६१ ) द्रष्टव्यः .

(२) ज्योना. २२।५ चतुर्थपादे ( षष्ठाष्टे तु विवर्ज-येत् ) ; ज्योनि. ११७ ; संग. ६१२, ७३२.

(३) ज्योना. २२।६ पू. ; ज्योनि. ११७ व्ययायगाः ( व्ययोपगाः ) ; संग. ६१२ स्थैः शुभै ( स्थः शुभ ) : ७३२ परैः । चौलान्न ( खलैः । गोदान ).

(४) ज्योना. २२।६–७ ; ज्योनि. ११८ न याने ( याने न ).

(५) ज्योनि. ११७. (६) प्रपा. २०१.

(७) प्रपा. २०२ निधनें ( निचगें ) ; संप्र. ३११ ; ज्योनि. ११८ नेंऽशे ( नेशे ) बृहन्नारदः .

(८) प्रपा. २०० ; संप्र. ३०० ; सिन्धु. ९१७ पू.

उत्तरायणेऽपि क्वचिदपवादमाह बृहस्पतिः—
'उत्तरायणगे... तथा ॥' इति । संप्र. ३००

'गुरुशुक्रौ न दृश्येते यदाऽतिस्फुटमम्बरे ।
बालवृद्धाक्षयः कालश्चौले निन्द्यस्तयोर्द्वयोः ॥

'शुक्लपक्षे शुभं प्रोक्तं कृष्णपक्षे शुभेतरत् ।
अशुभोऽन्त्यत्रिभागः स्यात्कृष्णपक्षे त्रिधा कृते ॥

चौलमिति शेषः । संप्र. ३०१

'दशपञ्चात्मकतिथौ कृष्णपक्षे त्रिधा कृते ।
अशुभं चान्त्यभागे स्यात्पूर्वभागद्वये शुभम् ॥

'द्वादशीं चाष्टमीं रिक्तां षष्ठीं प्रतिपदं तथा ।
हित्वा शेषासु तिथिषु क्षौरकर्म शुभावहम् ॥

'पापग्रहाणां वारांशा निन्दिताः शुभकर्मणि ।
शुभग्रहाणां वारास्तु पूजिता ब्रह्मणो मतम् ॥

'सोमवारः सिते पक्षे कृष्णपक्षेऽतिगर्हितः ।
बुधवारोऽशुभः प्रोक्तः पापग्रहयुते बुधे ॥

'पापग्रहाणां वारादौ विप्राणां तु शुभो रवेः ।
क्षत्रियाणां क्षमासूनोर्विट्शूद्राणां शनेः शुभः ॥

वर्ज्यानामपि वर्णविशेषेण प्रतिप्रसवमाह स एव—
'पापग्रहाणां... शनेः शुभः ॥' इति । संप्र. ३०३

'हस्ताश्विविष्णुपौष्णाश्च श्रविष्ठादित्यपुष्यभम् ।
सौम्यचित्रे नवक्षौरं उत्तमा नव तारकाः ॥

'त्रीण्युत्तराणि वायव्यं रोहिणी वारुणं तथा ।
क्षौरे षण्मध्यमाः प्रोक्ताः शेषा द्वादश गर्हिताः ॥

'संपदि क्षेमभे मैत्रे साधके मेऽतिमित्रभे ।
चौलकर्म प्रशस्तं स्याच्छोभनांशगते विधौ ॥

'आद्योंऽशो विपदि त्याज्यः प्रत्यरे चरमोऽशुभः ।
वधे त्याज्यस्तृतीयोंऽशः शेषांशा अतिशोभनाः ॥

---

(१) प्रपा. २००.

(२) प्रपा. २०० ; गभा. १९० त्रिधा कृते ( निराकृते ) ; संप्र. ३०१ त्रिभागः ( स्त्रिभागः ) ; सिन्धु. ९१७ ; संग. ६०९-६१० कृते ( कृतः ) शेषं संप्रवत्.

(३) संप्र. ३०२.

(४) संसौ. ७४ ; संप्र. ३०२ ; पुम. ४३६-४३७ क्षौर ( चौल ).

(५) प्रपा. २०१ ; संप्र. ३०३ वारास्तु (वाराः स्युः).

(६) प्रपा. २०१ पक्षेऽति ( पक्षे वि ) ; संप्र. ३३० कृष्णपक्षे ( कृष्णे पक्षे ) ; ज्योनि. ११७ वारोऽशु (वारः शु ) ; संग. ६१० ज्योनिवत् : ७३२ चतुर्थपादे ( शुभग्रहयुतो यदा ) शेषं ज्योनिवत् .

(७) प्रपा. २०१ हाणां वारादौ ( हेषु वाराद्या) शुभो (शुभा) शुभः (शुभाः) ; गभा. १९० तु शुभो (शुभदं) शनेः शुभः ( शनौ शुभम् ) ; संसौ. ७५ (=) वारादौ ( वारेऽपि ) रवेः ( रविः ) क्षमासूनो ( तु भूसूनु ) शनेः ( शनिः ) ; संप्र. ३०३ ; सिन्धु. ९१८ रवेः ( रवौ ) सूनोर्वि ( सूनौ वि ) शेषं गभावत् ; शूक. १०६ तु शुभो रवेः ( शुभदो रविः ) सूनोर्वि ( सूनौ वि ) शनेः शुभः ( शनौ शुभम् ) ; ज्योनि. ११७ रवेः ( रविः ) सूनो ( सूनु ) शनेः ( शनिः ) ; संग. ६१०-६११ ज्योनिवत्, ज्योतिर्निबन्धे : ६२० ( विट्शूद्राणां शनिः शुभः ) एतावदेव : ७३२ ज्योनिवत् ; संब. ८५ संसौवत् , प्रयोगपारिजातोक्तिः ; संर. ८९९ वारादौ ( वारेषु ) तु शुभो ( शुभदं ) शुभः ( शुभम् ).

(१) प्रपा. २०० ; संसौ. ८४ पूर्वार्धे ( हस्ताश्विविष्णुपौष्णानि श्रवणादितिपुष्यकाः । ) क्षौर उ (क्षौरेषू ) ; संप्र. ३०४ : ३१९-३२० संसौवत् ; सिन्धु. ९१८ ; संकौ. ११३ ष्णाश्च ( ष्णानि ) ; संग. ६११ : ७३२ पुष्य ( पौष्ण ) ष्णाश्च ( ष्णानि ) ; संब. ८६ संकौवत् : ९० पुष्य ( पौष्ण ) ष्णाश्च ( ष्णानि ) ; संर. ८९९ मा नव तारकाः (मास्तारकाः स्मृताः) ष्णाश्च (ष्णानि).

(२) प्रपा. २०१ ; संसौ. ८४ माः प्रोक्ताः ( मास्ताराः ) गर्हि ( निन्दि ) ; संप्र. ३०४ : ३२० संसौवत् ; सिन्धु. ९१८ ; संकौ. ११३ ; संग. ६११, ७७२ ; संब. ८६, ९० ; संर. ८९९.

(३) प्रपा. २०१ मैत्रे ( मित्रे ) चौल ( क्षौर ) ; ज्योनि. ११७ ; संग. ६११ नांश ( नांशु ).

(४) प्रपा. २०१ ; ज्योनि. ११७ द्योंऽशो ( द्यंशो ) मोऽशुभः ( मोंऽशकः ) अतिशो ( अपि शो ) ; संग. ६११ ज्योनिवत् .

[1]जन्माष्टमे विधौ याते चौलमायुःक्षयाय च ।
तस्माच्चन्द्रोऽष्टमो वर्ज्यः सर्वथा क्षुरकर्मणि ॥
[2]वैनाशिकाख्यनक्षत्रे अष्टाशीत्यंशकं विना ।
शिष्टांशाः शुभदाः सर्वे जन्मनीन्दुगतांशकात् ॥
जन्मर्क्षे कर्मनक्षत्रमाधानर्क्षे च वर्जयेत् ।
सर्वथा क्षौरकर्माऽऽद्यं कृतं चेल्लुप्ततां व्रजेत् ॥

कर्मनक्षत्रं दशमम् । आधाननक्षत्रमेकोनविंशम् ।
प्रपा. २०१

[3]कुम्भः कुलविनाशाय कथितः क्षुरकर्मणि ।
शुभैर्दृष्टोऽथवा युक्तो न शुभः कुम्भभृत् सदा ॥
[4]अस्तग्रहाणां वर्गाश्च तादृग्वर्गगतः शशी ।
पापग्रहाणां वर्ग( ? र्गा )श्च वर्ज्याः क्षौरे विशेषतः ॥

वर्गाः लग्नहोराद्रेष्काणनवांशद्वादशांशत्रिंशांशाः ।
संप्र. ३०७

[5]अर्कोदयः प्रशस्तः स्याद्विप्राणां क्षुरकर्मणि ।
भौमोदयः क्षत्रियाणां विट्शूद्राणां यमोदयः ॥
[6]चन्द्रोदयोऽङ्गनानां तु प्रशस्तः क्षुरकर्मणि ।
तत्तत्संबन्धिनो वर्गाः शुभाः स्युश्चौलकर्मणि ॥

( १ ) उदयः लग्नम् । संप्र. ३०८

( २ ) यमोदयः शनिदेवताकं लग्नम् । चन्द्रोदयः चन्द्रदेवताकं लग्नम् । संग. ६२०

(१) प्रपा. २०१ चौल ( क्षौर ); संप्र. ३१० उत्तरार्धे ( तस्माज्जन्माष्टमं वर्ज्यं सर्वदा क्षुरकर्मणि ॥ ).

(२) प्रपा. २०१.

(३) संसौ. ८० ; संप्र. ३०६ ; संकौ. ११३ (=) ; संर. ८९९ शुभः कुम्भभृत् ( कुम्भः शुभकृत् ) ज्योतिर्निबन्धे.

(४) संसौ. ८० ; संप्र. ३०७.

(५) संसौ. ८० ; संप्र. ३०८ ; संग. ६२० चतुर्थपादमात्रम् .

(६) संसौ. ८० पू. ; संप्र. ३०८ ; संग. ६२० योऽङ्ग ( यो त्र ) पू.

[1]यथोक्तकालाभावे तु यथालाभं बलैः शुभः ।
योगो दोषहरः कुर्याद्दोषाणामपवाहनम् ॥
[2]अथात्र योगं वक्ष्यामि दुर्लभे प्रोक्तलक्षणे ।
अहं तद्दोषसंघाततूलवातं लघौ दिने ॥
[3]अष्टमस्था ग्रहाः सर्वे नेष्टाः शुक्रविवर्जिताः ।
शुक्रस्तु निधने क्षौरे सर्वसंपत्प्रदः शिशोः ॥

निधनम् अष्टमम् । संप्र. ३०९

[4]सितेन्दुजीवसौम्यानामंशके दिवसोदये ।
होराद्रेष्काणलग्ने च चूडाकर्मातिशोभनम् ॥

दिवसोदये वारे । होरा लग्नार्धम् । द्रेष्काणः लग्नतृतीयांशः । संप्र. ३०९

[5]त्रिकोणे कण्टके वाऽपि सत्कर्मनिरते विधौ ।
गुरुर्वाऽतिबली प्रोक्तश्चौलयोगः शुभावहः ॥

त्रिकोणं नवपञ्चमम् । कण्टकं प्रथमचतुर्थसप्तमदशमानि स्थानानि । संप्र. ३०९

[6]गुरुर्भृगुर्वा चन्द्रो वा शुभांशस्थो बलान्वितः ।
लग्नादुपचये क्रूराश्चौलयोगः शुभावहः ॥

(१) प्रपा. २०२ ; संप्र. ३०८ बलैः शुभः ( शुभो बलैः ) वाह ( वाद ).

(२) प्रपा. २०२ ; संप्र. ३०८ अथात्र योगं ( अथास्मिन् योगान् ) तं लघौ ( ताँल्लघौ ).

(३) प्रपा. २०२ ; संप्र. ३०८ शुक्रस्तु ( शुक्रश्च ) ; ज्योनि. ११८ ; संग. ६१२ नारदः : ७३३ पू. , नारदः .

(४) संसौ. ८० दिव ( दैव ) चतुर्थपादे ( चौलकर्म सुखावहम् ) ; संप्र. ३०८.

(५) प्रपा. २०२ कण्टके ( केन्द्रगे ) बली प्रोक्तश्चौल ( बलः प्रोक्तः क्षौर ) ; संसौ. ८१ क्तश्चौलयोगः ( क्तं चौलकर्म ) पराशरः ; संप्र. ३०८ कोणे क ( कोणक ) निरते ( णि गते ) ; ज्योनि. ११८ कोणे क ( कोणक ) बली प्रोक्तश्चौल ( बलः प्रोक्तः क्षौर ) वसिष्ठः ; संग. ६१२ ज्योनिवत् , ज्योतिर्निबन्धे.

(६) प्रपा. २०२ उत्तरार्धे ( तथोपचयगो लग्नात्क्षौरयोगः शुभावहः ॥ ) ; संसौ. ८१ प्रथमपादे ( गुरौ भृगौ वा चन्द्रे वा ) पराशरः ; संप्र. ३०८.

उपचयः तृतीयषष्ठदशमैकादशस्थानानि । संप्र. ३०९

[1]मीने शुक्रेण संयुक्ते भवे भानौ चतुष्टये ।
गुरौ यातेऽथवा योगः शुभदश्चौलकर्मणि ॥

भवे एकादशे । चतुष्टये केन्द्रे । संप्र. ३०९

[2]घटे सशुक्रे लग्नस्थे सबुधे व्ययगे रवौ ।
त्रिकोणगे गुरौ चन्द्रे चूडायोगोऽयमुत्तमः ॥

[3]मीने मेषे वृषे लग्ने ससिते भवगे रवौ ।
बुधोदये वा योगाः स्युश्चूडाकर्मणि शोभनाः ॥

[4]यमे कर्किणि सिंहे च शशिजे भृगुजे विधौ ।
रवौ भवे व्यये वाऽपि योगश्चौले शुभावहः ॥

व्यये द्वादशे । संप्र. ३०९

[5]भवव्ययोदये भानुबुधशुक्रा यदा स्थिताः ।
चन्द्रे शुभांशके केन्द्रे चूडायोगः शुभावहः ॥

[6]सिते पक्षे विधुः प्राणी भवे लग्नाद्ग्रहो बली ।
लग्नस्योपचये नाथश्चूडायोगः शुभावहः ॥

प्राणी प्राणवान् । संप्र. ३०९

[1]लग्नेन्दुराशिगौ द्वौ द्वौ भवनाथयुतेक्षितौ ।
भवे कश्चिद्बली स्याच्चेच्चूडायोगोऽयमुत्तमः ॥

[2]त्रिषडायगताः पापाः शुभाः केन्द्रत्रिकोणगाः ।
एको द्वौ वा यथालाभं चूडायोगः शुभावहः ॥

[3]अनिष्टस्थानगो यः स्याद्ग्रहो लग्नेशवीक्षितः ।
गुरुणा बलिना दृष्टो यदीष्टस्थानगो भवेत् ॥

[4]यमाराकांशगे लग्ने द्रेष्काणे दिवसे तथा ।
कालहोरोदये चैव क्षौरमायुःक्षयावहम् ॥

[5]लग्नादष्टमराशीशः केन्द्रगः शुभवीक्षितः ।
यद्यप्यष्टमगस्योक्तं दोषमाशु व्यपोहति ॥

[6]रन्ध्रेशः स्वांशकस्वोच्चस्वक्षेत्रोपचयर्क्षगः ।
अष्टमस्थस्य दोषोऽयं विनश्यति न संशयः ॥

[7]अग्न्याधेयं प्रतिष्ठां च यज्ञदानव्रतानि च ।
वेदव्रतवृषोत्सर्गचूडाकरणमेखलाः ।
माङ्गल्यमभिषेकं च मलमासे विवर्जयेत् ॥

---

(१) प्रपा. २०२ ( मीने शुक्रे च लग्नस्थे भवनाथौ चतुष्टये । गुरौ चाऽऽयेऽथवा योगः शुभदः क्षुरकर्मणि ॥ ) ; संसौ. ८१ चतुर्थपादे ( चौलकर्मशुभावहः ) पराशरः ; संप्र. ३०९ ; ज्योनि. ११८ शुक्रेण संयुक्ते ( शुक्रे च लग्नस्थे ) दश्चौल ( दः क्षौर ) वसिष्ठः ; संग. ६१२ ज्योनिवत् , ज्योतिर्निबन्धे.

(२) प्रपा. २०२ सबुधे व्ययगे ( बुधे व्ययगते ) ; संसौ. ८१ बुधे व्य ( बुधव्य ) पराशरः ; संप्र. ३०९.

(३) प्रपा. २०२ मीने मेषे वृषे ( मीनमेषवृषे ) शोभनाः ( पूजिताः ) ; संसौ. ८२ ससिते भव ( सति वासव) णि शोभनाः ( शुभावहाः ) पराशरः ; संप्र. ३०९.

(४) प्रपा. २०२ शशिजे ( ससिते ) विधौ ( बुधे ) योगश्चौले ( योगः क्षौरे ) ; संप्र. ३०९ ; ज्योनि. ११८ शशिजे ( सहिते ) विधौ । रवौ ( बुधे । भानौ ) वाऽपि योगश्चौले ( चापि योगः क्षौरे ) वसिष्ठः ; संग. ६१२ शशिजे ( सहिते ) विधौ । रवौ ( बुधे । भानौ ) योगश्चौले ( योगे क्षौरः ) ज्योतिर्निबन्धे.

(५) प्रपा. २०२ यदा ( यदि ) शुक्रे ( शगे ) ; संप्र. ३०९ भवव्य ( भवे व्य ) ; ज्योनि. ११८ वसिष्ठः.

(६) संप्र. ३०९.

(१) प्रपा. २०२ स्याच्चेच्चूडा ( तत्र चूडा ) ; संप्र. ३०९.

(२) प्रपा. २०२ ; संप्र. ३०९ पूर्वार्धे ( त्रिषडायेषु पापेषु शुभाः केन्द्रत्रिकोणयोः । ).

(३) प्रपा. २०२-२०३ ; संप्र. ३०९ ; ज्योनि. ११८ वसिष्ठः .

(४) संसौ. ८० तथा ( ऽपि वा ) ; संप्र. ३०९-३१०.

(५) प्रपा. २०२ ; विसौ. २७ तृतीयपादे ( यद्यष्टमगतस्योक्त ) ; संप्र. ३११ ; ज्योनि. ११८ यद्यप्य ( यस्याप्य ) ; संग. २४४ गस्योक्तं ( लग्नोत्थं ) : ६१२ यद्यप्य ( सर्वोऽप्य ) क्तं दोष ( क्तदोष ).

(६) प्रपा. २०२ कस्वोच्च ( गः स्वोच्च ) ; विसौ. २७ ( रन्ध्रेशः स्वशुभांशस्थस्तुङ्गस्वक्षेत्रमित्रगः । अष्टमस्थानदोषो हि विनश्यति न संशयः ॥ ) ; संप्र. ३११ ; ज्योनि. ११८ प्रथमपादे ( स्वांशगः स्वोच्चगो वाऽपि ) स्थस्य दो ( स्थानदो ) ; संग. ६१२ ज्योनिवत् .

(७) पुम. १९ वृद्धमनुबृहस्पतिपैठीनसिज्योतिःपराशराः.

## भृगुः

चूडाकर्मणि जन्मलग्नं शुभम्

**¹कृष्टिः प्रयाणं क्षौरं च विवाहः प्राशनं तथा ।
शिशोर्वेलं च यानं च जन्मराशौ शुभं भवेत् ।
जन्मलग्ने शुभं क्षौरं मध्ये वर्ज्यं यथाऽष्टमे ॥**

(१) जन्मलग्नमपि शुभमित्याह भृगुः– 'कृष्टिः प्रयाणं...' इति। मध्ये द्वितीयादिक्षौरे। यत्तु 'आत्मराश्युदये षष्ठे द्वादशे निधने तथा। शत्रुक्षेत्रे च नीचे च क्षौरं नैव प्रकारयेत् ॥' इति गर्गवाक्यम्, तद्द्वितीयादिक्षौरविषयम्। संप्र. ३०६

(२) क्षौरादिषु जन्मलग्नं शुभमाह भृगुः– 'कृष्टिः प्रयाणं...' इति। गर्गस्तु– 'आत्मराश्युदये...'। जन्मलग्नं सति संभवे वर्ज्यमित्यनयोर्व्यवस्था। संव. ८६

## व्यासः

चूडाकर्मणि तिथिवारनक्षत्रयोगकरणानि, प्रातःकरणविधिः रात्रिकरणनिषेधश्च

**¹अश्विनी श्रवणः स्वाती चित्रा पुष्यः पुनर्वसुः।
धनिष्ठारेवतीज्येष्ठामृगहस्तेषु कारयेत् ॥**

क्षौरमिति शेषः। $ स्मृच. २३

**²वारनक्षत्रयोगेषु शुभेषु करणेषु च ।
क्षौरं प्रातः प्रकुर्वीत आयुर्बलविवर्धनम् ॥**

**³हस्तत्रयं मृगशिरः श्रवणत्रयं च
पुष्याश्विनी च शुभभानि पुनर्वसू च ।
क्षौरे तु कर्मणि हितान्युदयेक्षणे च
युक्तानि चोडुपतिना यदि शस्ततारा ॥**

**³नक्षत्रे तु न कुर्वीत यस्मिञ्जातो भवेन्नरः ।
न प्रोष्ठपदयोः कार्यं नैवाऽऽग्नेये च भारत ॥**

आग्नेयं कृत्तिकाः। संर. ८९९

**⁴दारुणेषु च सर्वेषु दुष्टतारां विवर्जयेत् ।
ज्योतिषे यानि चोक्तानि तानि सर्वाणि कारयेत् ॥**

दारुणेष्वपि ज्येष्ठा प्रशस्ता, पठितत्वात् तस्याः। ¶ संसौ. ७५

---

$ मपा., संम. स्मृचवत्।

(१) प्रपा. २०२ कृष्टिः (कृषिं) वाहः (वाहं) यथा (व्यये); संप्र. ३०६; संव. ८६ यथा (व्यये).

(२) अप. १।११–१३ पृ. ३० पूर्वार्धे (अश्विनीश्रवणस्वातिचित्रातिष्याः पुनर्वसुः।); स्मृच. २३ पूर्वार्धे (अश्विनी श्रवणं स्वाती चित्रा पुष्यपुनर्वसू।); चका. ७४३ पूर्वार्धे (आश्विनं श्रवणं स्वाती चित्रा पुष्यपुनर्वसू।); मपा. ३६२ स्मृचवत्; संसौ. ७५ चतुर्थपादे (मृगे हस्ते क्षुरक्रियाः); संप्र. ३०४ उत्तरार्धे (धनिष्ठा रेवती ज्येष्ठा मृगे हस्ते क्षुरक्रिया ॥); मुक्ता. ८३ पूर्वार्धे (अश्विनीश्रवणस्वातीचित्रा पुष्यपुनर्वसु।); संम. १९; पुम. ४३६ पूर्वार्धे (आश्विनं श्रवणं स्वातिचित्रापुष्यपुनर्वसु।).

¶ संप्र. संसौवत्।

(१) अप. १।११–१३ पृ. ३० प्रथमपादे (शुभेष्वंशकक्लेन्द्रेषु); चका. ७४३ पू.; पुम. ४३६ पू., ज्योतिर्ग्रन्थे; संर. ८९९ पू., ज्योतिःसागरे.

(२) अप. १।११–१३ स्तत्रयं (स्तात्त्रयं) णत्रयं (णात्त्रयं) पुष्याश्विनी च शुभ (पूषाश्विशक्रगुरु) क्षणे च (क्षणे वा); चका. ७४३ श्विनी च शुभ (श्विनीस्वशुभ) वसू (वसौ); पुम. ४३६ वसू (वसौ) ज्योतिर्ग्रन्थे; संर. ८९९ पुमवत्, ज्योतिःसागरे.

(३) अप. १।११–१३ पृ. २९ प्रथमपादे (नक्षत्रेऽपि न कर्तव्यं) प्रोष्ठ (भाद्र) ग्नेये च (ग्नेयेषु); स्मृच. २३; चका. ७४४ तु न (न तु) ग्नेये च (ग्नेयेषु); मपा. ३६२ तु न (न तु); संसौ. ७८ (नक्षत्रे तु प्रकुर्वीत यस्मिन्यातो भवेन्नरः। न प्रौष्ठपदयोर्नैव नाऽऽग्नेये चापि भारत ॥); संप्र. ३०५ उत्तरार्धे (न प्रौष्ठपदयोर्नैव नाऽऽग्नेये चापि भारत ॥); मुक्ता. ८३; संम. १९ प्रोष्ठ (प्रौष्ठ); संर. ८९९.

(४) अप. १।११–१३ पृ. २९ विवर्ज (तु वर्ज); चका. ७४४ तारां विव (तारं तु व) पू.; मपा. ३६५ रां विव (रांश्च व) पू.; संसौ. ७५ तारां (तारा) पू.; संप्र. ३०४ संसौवत्, पू.

[1]तिथिं प्रतिपदं रिक्तां विष्टिं चैव विवर्जयेत् ।
वारं शनैश्चरादित्यभौमानां रात्रिमेव च ॥

शन्यादीनां वारं वर्जयेत् । रात्रिं च वर्जयेत् । रात्रिशब्देन सर्वा रात्रयो ग्राह्याः, न तु शन्यादिवारसंबन्धिन्य एवेति, अन्यथा पृथगुपादानवैयर्थ्यापत्तेः । संर. ८९९

## दक्षः

चूडाकर्मणि तिथिवारनक्षत्रलग्नानि

[2]षष्ठ्यष्टमी पञ्चदशी उभे पक्षे चतुर्दशी ।
अत्र संनिहितं पापं तैले मांसे भगे क्षुरे ॥

[3]मेषसिंहतुलाकर्किवृश्चिकेतरलग्नके ।
श्रवणादित्रयस्वातीचित्रापुष्याश्विचन्द्रभे ।
आदित्यरेवतीहस्तज्येष्ठामूले च चौडकम् ॥

[4]पौष्णाश्विपुष्यवसुवासववासुदेव-
ब्रह्मार्कचन्द्रवरुणादितिचित्रभेषु ।
वारेषु सोमबुधवाक्पतिभार्गवाणां
क्षौरं करोति कुशलं खलु
मानवानाम् ॥

## भरद्वाजः

चूडाकर्मणि ग्रहसंस्थानम्

[5]सीमन्तजन्मचौलोपनीतियात्राप्रवेशने ।
अभिषेके विवाहे च शस्तं भावफलं विदुः ॥
असत्फलप्रदे राशावपि लग्ने शुभेक्षिते ।
शुभयुक्तेऽपि वा तेषां वदेच्छुभफलानि वै ॥

(१) अप. १।११-१३ पृ. २९ श्लोकार्धे व्यत्यासेन पठिते; स्मृच. २३; चका. ७४४ अपवत्; मुक्ता. ८३ वर्ज (सर्ज); संम. १९ पृ.; संर. ८९९.

(२) संत. ९२३; विपा. ४६२.

(३) संत. ९२३ मेषसिंहतुला (तुलामेषसिंह) प्रथमार्धे तृतीयत्वेन पठितम्; विपा. ४६२ हस्तज्ये (हस्ता ज्ये).

(४) विपा. ४६२-४६३.

(५) संसौ. १३७; संप्र. ३८१.

## च्यवनः

चूडाकर्मणि निषिद्धनक्षत्राणि निषिद्धचन्द्रश्च

[1]नैधने जन्मनक्षत्रे वैनाशेऽष्टमचन्द्रके ।
विपत्करे वधे क्षौरं प्रत्यरावपि वर्जयेत् ॥

## पराशरः

चूडाकर्मणि तिथिवारलग्नग्रहसंस्थानानि

[2]पञ्चमी सप्तमी चैव दशम्येकादशी तथा ।
त्रयोदशी तृतीया च चौलकर्मशुभावहाः ॥
[3]सितेज्यसौम्यवारेषु चौलं पक्षद्वये हितम् ।
इन्दुवारः सिते पक्षे वाराः शेषा न शोभनाः ॥
[4]वृषः कर्कटकश्चैव धनुः कन्या तुलाधरः ।
मकरश्चैव मीनश्च क्षुरकर्मणि पूजिताः ॥
[5]अष्टमस्था ग्रहाः सर्वे नेष्टाः शुक्रविवर्जिताः ।
शुक्रस्तु निधने चौले सर्वसंपत्करः शिशोः ॥
[6]क्षौरे स्वरस्थौ भौमार्कौ मृत्युदौ नियतं शिशोः ।
राहुकेतू स्वरस्थाने सर्वकार्यविनाशनौ ॥

## ज्योतिःपराशरः

मलमासे चूडाकर्मनिषेधः

[7]अग्न्याधेयं प्रतिष्ठां च यज्ञदानव्रतानि च ।
वेदव्रतवृषोत्सर्गचूडाकरणमेखलाः ।
माङ्गल्यमभिषेकं च मलमासे विवर्जयेत् ॥

(१) संसौ. ८४ चन्द्रके (चन्द्रभे) वधे (व्यये); संप्र. ३२० वधे (व्यये); सिन्धु. ९१८-९१९ पूर्वार्धे (निधने जन्मनक्षत्रे वैनाशे चन्द्रमेऽष्टमे ।) रावपि व (रे च विव) बृहस्पतिः.

(२) संसौ. ७४ चौल (क्षौर); संप्र. ३०२; संको. ११३ वहाः (वहम्); संग. ६१०; संव. ९० संकोवत्.

(३) संसौ. ७५ (=) चौलं (क्षौरं); संप्र. ३०२-३०३; संको. ११३; संग. ६१०; संव. ९०.

(४) संसौ. ७९ उत्तरार्धे (मिथुनं चैव मीनश्च क्षौरकर्मसु पूजिताः ॥); संप्र. ३०५.

(५) संसौ. ८१ तृतीयपादे (शुक्रश्च निधनक्षौरे); संप्र. ३१० पू.; संर. ८६.

(६) संसौ. ८१ भौमा (सोमा); संप्र. ३१०.

(७) पुम. १९ वृद्धमनुबृहस्पतिपैठीनसिज्योतिःपराशराः.

## अत्रिः

चूडाकर्मणि निषिद्धकालाः

[1]अब्दायनर्तुमासान्ते वर्षान्ते च दिनक्षये ।
कृष्णपक्षे कृते क्षौरे देहारोग्यं न विद्यते ॥

## पैठीनसिः

मलमासे चूडाकर्मनिषेधः

[2]अग्न्याधेयं प्रतिष्ठां च यज्ञदानव्रतानि च ।
वेदव्रतवृषोत्सर्गचूडाकरणमेखलाः ।
माङ्गल्यमभिषेकं च मलमासे विवर्जयेत् ॥

## गर्गः

चूडाकर्मणि मासनक्षत्रलग्नानि

[3]जन्मर्क्षे जन्ममासे च युग्मे मासि च वत्सरे ।
न कुर्यात्प्रथमं क्षौरं विशेषाच्चैत्रपौषयोः ॥
[4]अश्विन्यां तुष्टिमाप्नोति भरण्यां मरणं भवेत् ।
कृत्तिकासु क्षयो रोगो रोहिण्यां रोगनाशनम् ॥
[5]सौभाग्यवृद्धिः सौम्ये स्यादार्द्रे वित्तस्य नाशनम् ।
पराक्रमः पुनर्वस्वोः पुष्ये मानार्थसिद्धयः ॥
[6]सार्पे शरीरपीडा स्याद्धननाशस्तु पैत्रभे ॥
व्याधयो बहवो भागे त्वार्यम्णे रसनाशनम् ॥
[7]तेजोभिवृद्धिर्हस्ते स्यात्सौभाग्यं त्वाष्ट्रभे भवेत् ।
स्वात्यां दुःखविनाशः स्यादैन्द्राग्ने वित्तनाशनम् ॥

(१) पुम. ४३६ ; संर. ९०० कृते ( गते ) देहारो ( तस्याऽऽरो ).

(२) पुम. १९ वृद्धमनुबृहस्पतिपैठीनसिज्योतिःपराशराः .

(३) संत. ९२३ ; विपा. ४६३ मासि ( मासे ).

(४) संसौ. ७५ रोग ( रोम ) ; संप्र. ३०५.

(५) संसौ. ७६ वित्तस्य नाशनम् ( चित्तस्य तापनम् ) ; संप्र. ३०५.

(६) संसौ. ७६ भागे ( भाग्ये ) ; संप्र. ३०५.

(७) संसौ. ७६ न्द्राग्ने ( न्द्राग्न्ये ) ; संप्र. ३०५.

[1]मैत्रे मित्रविनाशः स्याज्ज्येष्ठायां भूमिदं स्मृतम् ।
समूलनाशनं मूले पूर्वाषाढाऽपि मूलवत् ॥
सौम्यवच्चोत्तराषाढा वैष्णवे रूपसंपदः ।
वसुभे ह्यायुषो वृद्धिर्वारुणे बलवर्धनम् ॥
[2]पूर्वाभाद्रपदे मृत्युराहिर्बुध्न्ये सुखावहम् ।
पौष्णे स्यान्महती वृद्धिर्नवक्षौरे फलं क्रमात् ॥
† [3]आत्मराश्युदये षष्ठे द्वादशे निधने तथा ।
शत्रुक्षेत्रे च नीचे च क्षौरं नैव प्रकारयेत् ॥

## गार्ग्यः

गुरुशुक्रयोरस्तादौ मलमासे च चूडाकर्मनिषेधः

‡ [4]नामान्नप्राशनं चौडं विवाहं मौञ्जिबन्धनम् ।
निष्क्रमं जातकर्माणि काम्यं वृषविसर्जनम् ॥
अस्तं गते गुरौ शुक्रे बाले वृद्धे मलिम्लुचे ।
उपायनमुपारम्भं व्रतानां नैव कारयेत् ॥

## वृद्धगार्ग्यः

चूडाकर्मणि मासाः

[5]चूडाकरणमन्नं च श्रावणादौ विवर्जयेत् ॥

## आश्वलायनः

चूडाकर्मणि सौरमानम् , अयनपक्षौ

[6]चौलोपनयगोदानसमावर्तविवाहकाः ।
व्यवहाराश्च सौरेण कार्या यात्रादयोऽपि च ॥

† अस्य संप्र-संवव्याख्याने भृगुवचने ( सं. का. पृ. २९१७ ) द्रष्टव्ये ।

‡ अस्य व्याख्यानं जातकर्मविधिप्रकरणे ‘ श्राद्धजातकनामानि ’ इति स्मृत्यन्तरवचने ( सं. का. पृ. २६४६ ) द्रष्टव्यम् ।

(१) संसौ. ७६ ; संप्र. ३०५.

(२) संसौ. ७६ ; संप्र. ३०५ पूर्वा ( पूर्व ) बुध्न्ये ( बुध्न्यं ).

(३) प्रपा. २०२ आत्म ( जन्म ) नीचे ( मीनं ) ; संप्र. ३०६ ; ज्योनि. ११८ नीचे ( मीने ) प्रका ( च का ) ; संव. ८६ कारयेत् ( शस्यते ).

(४) संत. ८८५.

(५) अस्य स्थलादिनिर्देशः अन्नप्राशनमुहूर्तप्रकरणे ( सं. का. पृ. २८६२ ) द्रष्टव्यः .

(६) आश्वस्मृ. ३।६३.

[1]उपनीतौ व्रते चौले समावर्तनकर्मणि ।
कृष्णपक्षः प्रवर्ज्यः स्याद्दक्षिणायनमेव च ॥
ऊर्ध्वं यत्नेन पञ्चम्याः कृष्णपक्षं प्रवर्जयेत् ।
श्रौते स्मार्ते च मतिमान् सप्तमी स्यान्महापदि ॥

## लघ्वाश्वलायनः

चूडाकर्मणि अयनमासदिनानि

[2]तृतीये वत्सरे चौलं बालकस्य विधीयते ।
शुभे चैव दिने मासि विहितं चोत्तरायणे ॥

## देवरातः

चूडाकर्मणि अयनमासौ

[3]उत्तरं देवभागः स्याद्दक्षिणं याम्यमुच्यते ।
देवभागगते सूर्ये चूडाकर्म समाचरेत् ॥
[4]अयने चोत्तरे सौख्यं दक्षिणे त्वशुभावहम् ॥
[5]चैत्रमासं वर्जयित्वा चौलं स्यादुत्तरायणे ॥

## अनिर्दिष्टकर्तृकवचनानि

चूडाकर्मणि अयनमासपक्षतिथिवारदिनभागाः

[6]... ... चूडा भौमशनीतरे ।
अर्केन्दुकालशुद्धौ च जन्ममासेन्दुभाहते ।
रिक्तादर्शाष्टमीषष्ठीप्रतिपद्वर्जिते सिते ॥

सिते शुक्लपक्षे । संत. ९२३

[7]सूर्ये दक्षिणमार्गगामिनि हरौ
सुप्ते निरंशे रवौ
क्षीणे शीतरुचौ महीजयमयो-
र्वारे निशार्सव्ययोः ।
भुक्तेऽभ्यक्ततनौ निषिद्धसमये-
ऽलंकारयुक्ते शिशौ
क्षौराद्रोगभयं वदन्ति यवना
मृत्युं तथाऽन्ये जगुः ॥

[1]मानं क्षौरे हन्ति गुरुः शुक्रं शुक्रो धनं रविः ।
आयुरङ्गारको हन्ति सर्वं हन्ति शनैश्चरः ॥
[2]रात्रिभागः समाख्यातः खरांशोर्दक्षिणायने ।
व्रतबन्धादिकं तस्मिंश्चूडाकर्म च वर्जयेत् ॥

## संग्रहकारः

चूडाकर्मणि लग्नानि

[3]कर्तुः षष्ठं त्यजेल्लग्नं क्षौरोद्वाहगतीर्विना ।
मूर्तिं व्ययं च सर्वत्र पकमित्राधिपाद्दते ॥

कर्तुः संस्कार्यस्य । यतिः यात्रा । संग्र. ३०७

## नृसिंहः

चूडाकर्मणि वर्ज्यास्तिथयः

[4]षष्ठ्यष्टमी चतुर्थी च नवमी च चतुर्दशी ।
द्वादशी दर्शपूर्णेन्दू प्रतिपच्चैव निन्दिताः ॥

## भुजबलः

चूडाकर्मणि मासौ वाराश्च

[5]† शुभदं संनिहितेऽग्नौ
क्षौरं चैत्रे मुनिभिरुक्तम् ।
दिननाथस्य च दिवसे
प्रथमं द्विजवह्निसंनिहितम् ॥
[6]मासं हरेत् क्षौरमिहाऽऽयुषोऽर्कः
शनैश्चरः पञ्च कुजस्तथाऽष्टौ ।
आचार्यभृग्विन्दुबुधाः क्रमेण
दद्युर्दशैकादश सप्त पञ्च ॥

---

(१) आश्वस्मृ. ११।३२०–३२१.
(२) लघ्वाश्वस्मृ. ९।१.
(३) प्रपा. २०० भागग ( भागं ग ) ; संप्र. २९९.
(४) प्रपा. २०० सौख्यं ( सौम्यं ) ; संप्र. २९९ ; संको. ११२ ; संव. ८९ प्रपावत्. (५) संर. ८९८.
(६) संत. ९२२–९२३ ज्योतिष.
(७) संत. ९२३ भुक्त (भुङ्क्ते) निषिद्ध (नियुद्ध) ; विपा. ४६३.

---

† अस्य व्याख्यानं ज्योतिर्णववचनेषु द्रष्टव्यम् ।
(१) विपा. ४६३. (२) कृम. ९३३.
(३) प्रपा. २०२ ; संप्र. ३०६–३०७ गती (यती).
(४) प्रपा. २०१ ; गभा. १९० (=) पूर्णेन्दू ( पूर्णे द्वे ) निन्दिताः ( निन्दिता ) ; संप्र. ३०२ ; सिन्धु. ९१८ पूर्णेन्दू ( पूर्णे द्वे ).
(५) संसौ. ७४ ; संप्र. ३००.
(६) स्मृच. २३ प्रथमपादे ( क्षौरे तु मासं क्षपयेद्दि-नेशः ) पञ्च कुज ( सप्त कुज ) भृग्वि ( शुक्रे ) ज्योतिः-

[1]आयुःक्षयं प्रकुरुते दिनकृद्दिने तु
दोषापतेरपि सुखानि च दीर्घमायुः।
पृथ्वीसुतस्य तु सुरैरपि रक्षितानां
क्षौरं करोति निधनं न चिरा-
न्नराणाम् ॥
[2]आरोग्यमिन्दुजदिने चिरजीवितत्वं
जीवस्य जीवितमपि प्रबलं च
भोग्यम् ।
नानाविधं विषयभोगसुखं सितस्य
मन्दस्य मुण्डनविधौ विभवस्य
नाशः ॥

## माधवीये

चूडाकर्मणि वारलग्नग्रहसंस्थानानि

[3]क्षौरेऽपि चौलविहितः समयः समानः
श्रेष्ठा द्विजस्य च रवेरुदयांशवाराः।
इन्दोः स्त्रियः क्षितिपतेः क्षितिजस्य सौरे-
र्विट्शूद्रयोरुशनसो न शुभास्तु
शावे ॥
चौलविधौ व्यसनं मृगराजे
रोगभयं क्रियकीटघटेषु ।
धन्विनि राजभयं शुभयुक्तौ
चापहरी च शुभौ विधु(?तु)रन्ये॥
रोगं लग्नगतः करोति दिनकृ-
च्छस्त्रान्मृतिं भूमिज-
स्तापं शीतकरो दिवाकरसुत-
श्चौले विनाशं शिशोः।
ते शुक्रेण युताः शशाङ्करहिता
मृत्युप्रदाः सप्तमे
सर्वेऽप्यष्टमगा न जातु शुभदाः
शुक्रोऽत्र संपत्प्रदः ॥

## श्रीपतिः

चूडाकर्मणि ग्रहसंस्थानानि नक्षत्राणि च

[1]क्षौरर्क्षेषु स्वकुलविधिना चौलमाहु-
र्मुनीन्द्राः
केन्द्रं यातैर्गुरुभृगुबुधैस्तत्र सूर्ये
ज्वरस्तु ।
शस्त्रान्नाशो धरणितनये पङ्गुता सूर्यपुत्रे
शीतज्योतिष्यपचिततनौ निश्चितं
नाश एव ॥
[2]धनव्ययत्रिकोणगैरसद्ग्रहैर्मृतावपि ।
क्षुरक्रिया न शोभना शुभैस्तु तुष्टिकारिणी ॥
[3]षट्कृत्तिकः पञ्चमघस्त्रिमैत्रो
ब्राह्माष्टको यश्चतुरुत्तरश्च ।
क्षौरी स वर्षे चतुराननोऽपि
न प्राणितीति प्रकटः प्रवादः ॥

## राजमार्तण्डः

चूडाकर्मणि अयनमासतिथिवारलग्नग्रहसंस्थानानि

[4]उत्तरवर्त्मनि सवितरि
चूडाकरणं जगुर्यवनाः ।
चैत्रं हित्वा पाप-
ग्रहदिवसं जन्ममासं च ॥
[5]चूडाकर्म न कर्तव्यं तिग्मांशोर्दक्षिणायने ॥

---

शास्त्रे; संसौ. ७८; संप्र. ३०३; विपा. ४६३ मासं (मानं) राजमार्तण्डे; संग. ६१०.

(१) संसौ. ७८; संप्र. ३०३.

(२) संसौ. ७९; संप्र. ३०३ मुण्डन (मण्डन).

(३) प्रपा. २०१, २०२.

(१) संसौ. ८०–८१ रत्नमालायाम्; संप्र. ३१०.

(२) संसौ. ८२ तुष्टि (पुष्टि) रत्नमालायाम्; संप्र. ३१०.

(३) संसौ. ७४ (मघ०) रत्नमालायाम्; संप्र. ३२०; ज्योनि. ११७; संग. ६११ पूर्वार्धे (षट्कृत्तिका पञ्चमघास्त्रिमैत्रो ब्रह्माष्टकोऽपश्चतुरुत्तराश्च ।) प्रकटः प्र (प्रकटप्र).

(४) संत. ९२३ (उत्तरवर्त्मनि सवितरि चूडाकरणं जगुः शुभं यवनाः । चैत्रे मासि दिवाकरवारे शिखिसंनिधाने च ॥) भोजराजः; संसौ. ७३; संप्र. २९९.

(५) संसौ. ८२.

‡[1]क्षौरं दिने तीक्ष्णरुचेस्तु चैत्रे
मासेऽथवा संनिहिते हुताशे ॥
[2]क्षौरं प्रशस्तं मृगचापमीने
कन्याख्यकुम्भे मिथुने वृषे च ।
पुष्टिं बलं बुद्धिविवर्धनं च
शेषे च रोगं कुरुते भयं च ॥
[3]कुम्भे धनस्य वृद्धिर्नीरोगत्वं प्रजालाभः ।
मीने करोति लाभं हृष्टिं पुष्टिं च तुष्टिं च ॥

इयं च कुम्भस्य प्रशंसा विहितलग्नस्य गुणवत्त्वाभावे सति आवश्यकक्षौरकार्यविषया, कुम्भस्य सदा निषेधात् । † संसौ. ७९

[4]चन्द्रे च सत्तोपचयाद्यसंस्थे
तिथावरिक्ते शशिवृद्धिपक्षे ।
प्राचीमुखः सौम्यमुखोऽपि भूत्वा
कुर्यान्नरः क्षौरमनुत्कटस्थः ॥

कुर्यादित्यन्तर्भावितणिजर्थः । कारयेदित्यर्थः । संसौ. ७८

[5]‡विवाहव्रतचूडादिमङ्गलेषु विशेषतः ।
दश मासाः प्रशस्यन्ते चैत्रपौषविवर्जिताः ॥

### श्रीधरः

चूडाकर्मणि अयनपक्षतिथिवारनक्षत्रलग्नवांशग्रह-
संस्थानानि गुरुशुक्रोदयौ दिनभागश्च

[6]उद्‌गतेऽर्के गुरुशुक्रतेजः-
प्रकाशिते व्योम्नि च शुक्लपक्षे ॥

अथ गुरुशुक्रमौढ्ये निषेधमाह– गुरुशुक्रतेजः-प्रकाशिते व्योम्नीति । अथ पक्षनिर्णयः– शुक्लपक्ष इति । प्रपा. २००

षष्ठ्यष्टमीप्रतिपदस्तिथयश्च रिक्ता
वर्ज्याः शशाङ्कगुरुसोमज-
भार्गवाणाम् ।
वारांशकोदयविलोकनमिष्टमाहुः
क्षौरे तु कर्मणि न शौक्रमुशन्ति
शावे ॥

षष्ठ्यष्टमीप्रतिपदः प्रसिद्धाः, रिक्ताः चतुर्थीनवमी-चतुर्दश्यः चौले वर्जनीयाः । अथ वारा विधीयन्ते– शशाङ्केति । एषां चतुर्णां वारांशकोदयाश्च निरीक्षणं च सर्वे क्षौरे शुभमाहुः । शशाङ्कगुरुसोमजेत्यत्र शशाङ्कः शुक्लपक्षचन्द्रः । सोमजेत्यनेन शुभसंयुक्तो बुध इति विवक्षितम् । प्रपा. २०१

आदित्यसौम्यवसुवैष्णवपौष्णतिष्य-
त्वाष्ट्राश्विचण्डकिरणेषु दिवा प्रशस्तम् ।
स्वातीविधातृवरुणोत्तरभानि मध्या-
न्याहुर्निशास्वथ न च क्षुरकर्म कार्यम् ॥

चण्डकिरणः हस्तः । अत्र पूर्वार्धेनोत्तमानि नक्षत्राणि दिवाविधिश्चोच्यते । एषु नवसु नक्षत्रेषु चौलमति-प्रशस्तम् । दिवा प्रशस्तमित्यनेन चौलकर्मणो दिवैव कर्तव्यतामाह । मध्यनक्षत्राण्याह– स्वातीति । एतानि षण्नक्षत्राणि चौले मध्यमानि । शिष्टानि द्वादशनक्षत्रा-ण्यधमानीत्यर्थात्सिद्धम् । प्रपा. २००–२०१

[1]कर्क्यङ्गनामिथुनमीनतुलोक्षनक्राः
पूज्याः क्रियालिहरिचापधरा जघन्याः ।
तेऽपि स्ववीर्यशुभदृष्टियुता विधेया-
श्चौले घटः शुभयुतोऽपि निषिद्ध एव ॥

कर्की कर्कटः । अङ्गना कन्या । उक्षा वृषभः । नक्रः मकरः । शेषाः प्रसिद्धाः । क्रियः मेषः । अलिः वृश्चिकः । हरिः सिंहः । चापधरः धनुः । एते चत्वारो

---

‡ ज्योतिर्णववचनेषु ( सं. का. पृ. २९२३ ) संप्रव्याख्यानं द्रष्टव्यम् ।

† संप्र., संकौ. संसौवत् ।

(१) संसौ. ७४ ; संप्र. ३०१.

(२) संसौ. ७९ ; संप्र. ३०६ पुष्टिं ब ( पुष्टिर्बं ) ; संकौ. ११३ कन्याख्य ( कन्यावि ) पू .

(३) संसौ. ७९. (४) संत. ९२६ उत्त. ; संसौ. ७८.

(५) संसौ. ७४ ; संप्र. ३०० ; सिन्धु. १०७७ पूर्वार्धे ( माङ्गल्येषु विवाहेषु कन्यासंवरणेषु च । ) ज्योतिर्गर्गराजमार्तण्डौ ; कृभ. १०७७ (=) सिन्धुवत् .

(६) प्रपा. २००–२०१.

(१) प्रपा. २०१ ; संप्र. ३०७–३०८.

राशयश्चौले निषिद्धाः। एतेऽपि चत्वारः स्ववीर्ययुताः। वीर्यं बलम्। तच्च राशीनां शुभग्रहयोगात् संपद्यते। ततः स्ववीर्ययुताः शुभग्रहदृष्टियुक्ताश्चेद्विधेया इति। कुम्भस्तु शुभग्रहयुक्तोऽपि निषिद्ध एव।

प्रपा. २०१-२०२

[१]सर्वेऽष्टमे न शुभदाः शुभदं वदन्ति
केचित्सितं सितदिवाकरभौममन्दाः।
कुर्वन्ति दारभवनेऽप्यशुभानि चौले
स्याच्छ्मश्रुदन्तनखकर्मसु सर्वमेवम्॥

अथ लग्नगोचरमाह- सर्वेऽष्टमे न इति। लग्नाष्टमे सर्वग्रहा न शुभदाः। मतान्तरमाह- शुभदं वदन्ति केचित् सितमिति। अथ सप्तमगृहस्थितानां शुक्रदिवाकरमन्दभौमानां दोषमाह- सितदिवाकरेत्यादि।

प्रपा. २०२

## अर्णवे

चूडाकर्मणि निषिद्धानि तिथिवारनक्षत्रदिनान्तमलमासगुरुशुक्रमौढ्यानि

[२]जन्मत्रये वाऽर्किदिवाकरारवारेऽधिमासे सितजीवमौढ्ये।
पक्षद्वये पर्वनिशादिनान्ते
क्षौरं यदि स्यात्कुलनाशहेतुः॥

## महेश्वरः

चूडाकर्मणि तिथिवारनक्षत्रदिनभागाः

[३]नासत्यर्क्षश्रुतिमृगशिरोवासवैन्द्रार्कपौष्णस्वातित्वाष्ट्रादितिभवरुणर्क्षेज्यधिष्ण्येषु कार्यम्।
चूडाकर्म क्षुररदनखानां च कर्माथ मुक्त्वा
रिक्तार्कार्किक्षितिसुतदिनं यामिनीं सांध्यवेलाम्॥

(१) प्रपा. २०२. (२) प्रपा. २०१.
(३) संसौ. ७५.

## ज्योतिर्णवे

चूडाकर्मणि सौरमासाः

[१]मकरे सर्वसंपत्तिः कुम्भः संतानकारकः।
मीनमासे सदा सौख्यं मेषे सर्वार्थसाधनम्॥
[२]विजयं वृषभे विद्यान्मिथुने वंशवृद्धिकृत्।
कर्कटे बहुरोगित्वं सिंहे नष्टप्रजो भवेत्॥
[३]षष्ठे कुलक्षयं विद्यात्तुलायां देहनाशनम्।
वृश्चिके बन्धुनाशः स्याद्धिनाशस्तु कार्मुके॥

षष्ठे कन्यायाम्। मासा उक्ता राजमार्तण्डे- 'विवाहव्रतचूडादिमङ्गलेषु विशेषतः। दश मासाः प्रशस्यन्ते चैत्रपौषविवर्जिताः॥' इति। ननु दशानामपि मासानां प्राशस्त्ये पूर्वोक्तकर्कादिनिषेधानां का गतिरिति चेत्, इयमत्र गतिः- कालातीतचौलकन्योद्वाहयोः पुनरुपनयने च दशानामपि मासानां प्राशस्त्यम्, तेषां सार्वकालिकत्वात्, प्राप्तकालेषु चौलोपनयनविवाहेषु कर्कादिनिषेध इति न विरोधः। चैत्रनिषेधस्तु वह्न्यसंनिधाने बोद्धव्यः। तथा च भुजबलः- 'शुभदं संनिहितेऽग्नौ क्षौरं चैत्रे मुनिभिरुक्तम्। दिननाथस्य च दिवसे प्रथमं द्विजवह्निसंनिहितम्॥' इति। राजमार्तण्डेऽपि- 'क्षौरं दिने तीक्ष्णरुचेस्तु चैत्रे मासेऽथवा संनिहिते हुताशे।' इति। अग्निसंनिधानं चात्र जातारणिपरिग्रहः। ततश्च येषां जातारणिपरिग्रहोऽस्ति तेषां चैत्रविधिः, अन्येषां तन्निषेध इति। यच्छाखीयानामहोमकमेव चौलं तान् प्रति चौलनिषेधः, येषां सहोमकं चौलं तान् प्रति चैत्रविधिरित्यन्ये। त्रैवर्णिकान् प्रति चैत्रविधिः, साग्निकत्वात्, शूद्रान् प्रति तन्निषेध इत्यपरे। पौषनिषेधस्तु धनुष्ट्वेन, तत्र मकरसंक्रमे त्वनिषेध इति ज्योतिर्णववाक्येनाविरोधः।

संप्र. ३००-३०१

(१) प्रपा. २०० मीनमासे (मीने मासि); संप्र. ३०० कुम्भः (कुम्भे); संको. ११२-११३ मीनमासे सदा (मीने तु सर्वदा).

(२) प्रपा. २०० विद्या (विन्द्या); संप्र. ३००; संको. ११३ पू.

(३) प्रपा. २०० विद्या (विन्द्या); संप्र. ३००.

## मुहूर्तचिन्तामणिः

चूडाकर्मणि अयनमासतिथिवारनक्षत्रलग्नवांश-
ग्रहसंस्थानताराबलानि, दुष्टतारापवादः

**[1]चूडा वर्षात्तृतीयात् प्रभवति विषमेऽ-
ष्टार्करिक्ताद्यषष्ठी-
पर्वोनाह्ने विचैत्रोदगयनसमये
ज्ञेन्दुशुक्रेज्यकानाम् ।
वारे लग्नांशयोश्चास्वभनिधनतनौ
नैधने शुद्धियुक्ते
शाक्रोपेतैर्विमैत्रैर्मृदुचरलघुभै-
रायषट्त्रिस्थपापैः ॥**

चौलमुहूर्ते स्रग्धरारथोद्धतावृत्ताभ्यामाह– चूडा वर्षादिति । अष्टेति । अष्ट अष्टमी । अर्कः द्वादशी । रिक्ताः प्रसिद्धाः । आद्या प्रतिपत् । षष्ठी प्रसिद्धा । पर्वाणि अष्टमीचतुर्दशीपूर्णिमामावास्यासंक्रान्तयः । एतैः ऊने रहितेऽहनि । अत्र तत्पुरुषसमासे 'राजाहः-सखिभ्यष्टच्' इति टच् । 'नस्तद्धिते' इति टिलोपः । अष्टम्यादितिथीस्त्यक्त्वा शेषासु तिथिषु चूडा स्यादित्यर्थः । ननु सप्तमीत्रयोदश्योर्गलग्रहत्वात् कथं तयोर्ग्रहणम् ? यदाह गुरुः– 'विद्यारम्भो व्रतोद्देशः क्षौरं चैव विशेषतः । गलग्रहे न कर्तव्यं यदीच्छेत् पुत्रजीवितम् ॥' । इति चेत्, उच्यते– वैदिकं मुण्डनं चौलमित्युच्यते । तद्विषयको विधिः । अवैदिकमुण्डनं सुखार्थं यत् (तत्) क्षौरमुच्यते, 'क्षुरस्य कर्म क्षौरम्' इति सामान्यव्युत्पत्तेः । अतस्तद्विषयको निषेध इति वयं ब्रूमः । अन्ये देशाचारतो व्यवस्थामाहुः । $ तद्युक्तम्, विरोधाभावात् । विचैत्रेति । चैत्ररहिते उत्तरायणे चूडा स्यात् । शुभाशुभप्रकरणाभिहितः जन्ममासनिषेधः अत्रापि ध्येयः । ज्ञेन्दुशुक्रेज्यकानां वारे लग्नांशयोश्चेति । सौम्यग्रहवारे सौम्यग्रहाणां लग्ने कर्कमिथुनवृषकन्यातुलाधनुर्मीनानामन्यतमे लग्ने तेषामेव च नवांशे चूडा स्यात् । अस्वभनिधनतनाविति । भं लग्नं राशिश्च, स्वस्य भे स्वभे, स्वभाभ्यां निधनम् अष्टमलग्नम्, तन्न विद्यते यस्मिन् तनौ । स्वजन्मलग्नजन्मराशिभ्यामष्टमलग्नरहिते लग्ने चूडा स्यादित्यर्थः । नैधन इति । अष्टमस्थाने शुद्धिसंयुक्ते । शुद्धिः शुक्रव्यतिरिक्तसर्वग्रहराहित्यम् । तद्युक्ते सति चूडा स्यात् । ‡ शाक्रेति । शाक्रोपेतैः ज्येष्ठायुक्तैः विमैत्रैः अनुराधारहितैः मृदुचरलघुभिः द्वादशनक्षत्रैरुपलक्षिते काले चूडा स्यात् । अथ लग्नबलमाह– आयेति । एकादशषष्ठतृतीयस्थानस्थितैः पापग्रहैश्चोपलक्षिते काले चूडा स्यात् । § पीटी.

**क्षीणचन्द्रकुजसौरिभास्करै-
र्मृत्युशस्त्रमृतिपङ्गुताज्वराः ।
स्युः क्रमेण बुधजीवभार्गवैः
केन्द्रगैश्च शुभमिष्टतारया ॥**

---

$ अत्रेदं विचार्यम् – लौकिकमुण्डने क्षौरशब्दो न रूढो योगरूढो वा, किंतु यौगिक एवेति तत्परत्वे योगमात्रस्य हेतूकरणेन टीकाकृताऽनुमोदितम् । यौगिकश्च क्षौरशब्दो लौकिके इव वैदिकेऽपि मुण्डने प्रवर्तत एव । अत एव 'न कुर्यात्प्रथमं क्षौरम्' इति गर्गवचने क्षौरं प्रथमत्वेन विशेषितम् । निबन्धकारैः स्वयं च टीकाकृता क्षौरपदघटितान्यनेकानि वचनानि वैदिकमुण्डनपरत्वेनोद्धृतानि । मूलेऽप्यग्रे 'क्षौरं सत् स्यात्' इति चौलार्थे क्षौरशब्दः प्रयुक्तः, स्वयं च टीकाकृता 'क्षौरं चौलम्' इति व्याख्यातः । तथा च कथं न विरोधः ? यत्तु यौगिकत्वेऽपि क्षौरशब्दस्यात्र लौकिकमुण्डनमात्रपरत्वाभयणं टीकाकृतः, स विषयभेदतोव्यवस्थापनरूपो विरोधपरिहारार्थो यत्न एवेति चेत्, तर्हि देशाचारतोव्यवस्थापनरूपं यत्नान्तरं कुर्वद्भिरन्यैः किमपराद्धम् ? यदि स्वयत्न एव श्रेयानिति मतिस्तर्हि तत्र विनिगमकमेव हेतूकर्तुमुचितम्, न परोक्तययुक्तत्वे विरोधाभावः । किंच, यदि गुरुवचने विद्यारम्भव्रतोद्देशसमभिव्याहारात् क्षौरशब्देन संस्कार एव बोध्यते इत्युपेयते तदा तु देशाचारतो व्यवस्थैव श्रेयसीत्यपि सुवचनमिति ।

‡ 'शाक्र इति' इति प्रतीकग्रहणं साधु ।

§ संव. पीटीवत् ।

(१) मुचि. ५।२९–३० ; संव. ८५.

क्षीणचन्द्रः, कुजः मङ्गलः, सौरिः शनिः, भास्करः सूर्यः, एतैः केन्द्रस्थैः क्रमेण यथासंख्यं मृत्युः मरणम्, शस्त्रमृतिः शस्त्रान्मृतिः, पङ्गुता खञ्जता, ज्वरः प्रसिद्धः, एतानि फलानि स्युः भवेयुः। बुधजीवभार्गवैस्तु केन्द्रस्थैः शुभं कल्याणकारि फलं चूडाकर्तुः स्यात्। इष्टतारयेति। च पुनः इष्टतारया गोचरप्रकरणोक्तया शुभफलदतारया चूडा स्यात्। ¶ पीटी.

[1]तारादौष्ट्येऽब्जे त्रिकोणोच्चगे वा
क्षौरं सत् स्यात्सौम्यमित्रस्ववर्गे।
सौम्ये मेऽब्जे शोभने दुष्टतारा
शस्ता ज्ञेया क्षौरयात्रादिकृत्ये॥

चौले ताराबलमावश्यकमित्युक्तम्। तत्र दुष्टायां तारायां सत्यामपवादं शालिन्याऽऽह– तारादौष्ट्ये इति। ताराणां दुष्टत्वं गोचरप्रकरणेऽभिहितं ततस्त एवावधार्यम्। तस्मात् तारादौष्ट्ये सत्यपि क्षौरं चौलं सत् शोभनं स्यात्। कस्मिन् सति? अब्जे चन्द्रे त्रिकोणगे नवमपञ्चमस्थानस्थिते, अथवा उच्चगे वृषराशिस्थे, अथवा सौम्यानां बुधगुरुशुक्राणां वर्गे षड्वर्गे, † अथवा स्वस्यैव षड्वर्गे सति। 'विपत्तारे गुडं दद्यात्' इत्यादयोऽपि तारादौष्ट्यापवादाः प्रागुक्तास्तेऽप्यत्रोह्याः। अथाशुभतारायां गुणमाह– सौम्ये मे इति। विहिते नक्षत्रे सति अब्जे चन्द्रे शोभने गोचरोक्ते अष्टमस्थानस्थे सति दुष्टतारा असमीचीनताराऽपि चेत् स्यात् तदा क्षौरयात्रादिमङ्गलकृत्येषु शस्ता अतिप्रशस्ता निखिलदोषापवादिका स्यादित्यर्थः। $ पीटी.

¶ संव. पीटीवत्।

† 'मित्रस्य रवेः षड्वर्गे, बुधस्य मित्रत्वेऽपि सौम्यशब्देन तदुपादानात्पुनर्मित्रशब्देन स नोपादेयः' इत्यर्थको ग्रन्थ इत उच्छिन्न इति भाति।

$ संव. पीटीगतम्।

(१) मुचि. ५।३२; संग. ६१२ ब्जे शोभने (ब्जेशे भवेद्) चिन्तामणौ; संव. ८७.



## मुहूर्तसंग्रहे

चूडाकर्मणि पक्षः

[1]दामोदरमतं जातात्सप्तमे चौलकर्मणि।
पूर्वपक्षः शुभः प्रोक्तः कृष्णे चान्त्यत्रिकं विना॥

## रत्नसंग्रहे

चूडाकर्मणि मासतिथिवारनक्षत्रदिनभागाः

[2]माघादिपञ्चके चौलं हित्वा क्षीणविधुं मधुम्।
क्रूरवारं निशां रिक्तां षष्ठीं संध्यां च जन्मभम्॥

## व्यवहारोच्चये

चूडाकर्मणि लग्नफलानि

[3]क्षौरं तु मेषे ज्वरपित्तपीडां
वृषे च पुष्टिं मिथुने तु विद्याम्।
रोगं फलं कर्कटके ददाति
प्राणाभिघातं जनयेच्च सिंहे॥

[4]कन्या तु भोगं बलपुष्टिमेधा-
स्तुला तु रोगान् विविधान्करोति।
अक्ष्यामयं बुद्धिबलापहानिं
मन्दाग्निकोपं तनुयादलिश्च॥

[5]मेधां धनुषि विधत्ते
मकरे सौख्यानि धनलाभम्।
कुम्भे बलस्य वृद्धिं
क्षेमारोग्यप्रभूतधनलाभम्।
मीने करोति विमलां
दृष्टिं पुष्टिं च तुष्टिं च॥

(१) संप्र. ३०२; संव. ९० उत्त.

(२) संग. ६०९.

(३) संसौ. ८२ पीडां (पीडा) पुष्टिं मि (पुष्टिर्मि) विद्याम् (विद्या) टके (टको) सिंहे (सिंहः); संप्र. ३०७ क्षौरं (क्षौरे).

(४) संसौ. ८२ दलिश्च (दलिश्चेत्); संप्र. ३०७.

(५) संसौ. ८२ रोग्यप्र (रोग्यं प्र); संप्र. ३०७.

लग्नफलानि व्यवहारोच्चये– 'क्षौरे तु... तुष्टिं च ॥'। अत्र धनुषः शुभफलत्वाभिधानं शुभग्रहयोगे सति द्रष्टव्यम्। अन्यथा राजबाधाफलकत्वेन निषेधात्। तथा च वसिष्ठः– '... राजबाधा च धनुषि... ॥'।

संप्र. ३०७

## सारसंग्रहे

चूडाकर्मणः ज्येष्ठमार्गशीर्षाधिकमासजन्ममासजन्मनक्षत्रेषु निषेधः ज्येष्ठे प्रतिप्रसवश्च

[1]ज्येष्ठे मासि तथा मार्गे क्षौरं परिणयं व्रतम्।
ज्येष्ठपुत्रदुहित्रोश्च यत्नतः परिवर्जयेत्।
कृत्तिकास्थं रविं त्यक्त्वा ज्येष्ठे ज्येष्ठस्य कारयेत् ॥

[2]अधिमासे च यत् क्षौरं जन्ममासेऽथ जन्मभे।
न भवेत्तत्र कल्याणमिति शंसन्ति सूरयः ॥

## दीपिकायाम्

चूडाकर्मणि मासतिथिवारनक्षत्रलग्नग्रहसंस्थानानि

[3]जन्मनक्षत्रगश्चन्द्रः प्रशस्तः सर्वकर्मसु।
क्षौरभेषजवादाध्वकर्तनेषु च वर्जयेत् ॥

[4]न चूडा जन्मभाग्नेयदारुणेषु शनौ कुजे।
प्रतिपद्भद्ररिक्तासु....... ॥

[5]चूडा माघादिषट्के लघुचरमृदुभे मैत्रहीने सशक्रे
नानंशे सत्सु केन्द्रेष्वशुभगणगते- र्वृद्धिगैर्विष्णुबोधे।
नो रिक्ताप्य(? ख)ष्टषष्ठाम्स्यतिथिषु न यमाराह्नयुग्माब्दमासे
नो जन्मर्क्षेन्दुमासे विघटकुजशशी- नर्क्षलग्नेऽर्कशुद्धौ ॥

## मुहूर्तगणपतौ

चूडाकर्मणि अयनमासतिथिवारनक्षत्रलग्नानि

[1]सौम्यायने विचैत्रेऽथ श्रेज्यशुक्रेन्दुवासरे।
अथवा ब्राह्मणस्यार्के क्षत्रियस्य कुजेऽहनि।
मन्दाह्ने वैश्यशूद्राणां क्षौरोक्ततिथिभादिषु ॥
लग्ने खेटबलोपेते चन्द्रताराबलान्विते।
ज्येष्ठे ज्येष्ठस्य नो मासे मार्गशीर्षेऽपि केचन ॥

## शौनककारिकाः

चूडाकर्मणि अयनपक्षौ मौहूर्तोक्तमुहूर्तश्च

[2]तदोत्तरायणे पक्षे शुक्ले मौहूर्तसंमते।
नक्षत्रगुणसंपन्ने मुहूर्ते च समाचरेत् ॥

## कुमारिलकारिकाः

चूडाकर्मणि अयनपक्षौ शुभनक्षत्रं च

[3]तृतीये वत्सरे चौलं कुर्वीतास्योत्तरायणे।
शुक्लपक्षे शुभर्क्षे तु कृत्वाऽऽभ्युदयिकं तथा ॥
शुभर्क्षे इति। ज्योतिर्विदुपदिष्टे मुहूर्ते इत्यर्थः।

संम. १९

## रेणुकारिकाः

चूडाकर्मणि अयनपक्षतिथिवारनक्षत्रलग्नदिनभागाः

[4]अश्विनी श्रवणः स्वाती चित्रा पुष्यः पुनर्वसुः।
धनिष्ठारेवतीज्येष्ठामृगहस्तेषु कारयेत् ॥

---

(१) संसौ. ७४; संप्र. ३०१; संको. ११३; संग. ६०९ मासि (मासे) णयं व्र (णयव्र) यत्नतः (यत्नेन); संव. ९० (=) ज्येष्ठस्य (मास्यपि).

(२) संसौ. ७४ च (ऽथ); संप्र. ३०१; संको. ११३ च (तु) सेऽथ (से तु); संग. ६०९ च (ऽथ); संव. ९० (=) संकौवत्.

(३) संसौ. ७६–७७ च वर्ज (च विवर्ज); संप्र. ३०४.

(४) सिन्धु. ९२१.

(५) विपा. ४६४.

(१) संव. ८९.

(२) शौका. २ पृ. ४० मते (युते) नक्षत्रगुण (नक्षत्रे गुण); प्रपा. २००.

(३) कुका. १।१२।१; प्रपा. १९९; धप्र. ३८ वत्सरे चौलं (वर्षे चौलं वा) तथा (ततः); संम. १९ आश्वलायनस्मृतौ; विपा. ४६२ कुर्वीतास्यो (प्रकुर्वीतो).

(४) रेका. ४ पृ. १६–१७; गमा. १९० पूर्वार्धे (अश्विनी श्रावणः स्वाती चित्रा पुष्यं पुनर्वसु।).

[1]तिथिं प्रतिपदं रिक्तां विष्टिं चैव विवर्जयेत् ।
वारांश्च शनैश्चरादित्यभौमानां रात्रिमेव च ॥

(१) रेका. ५ पृ. १७; गभा. १९० विष्टिं चैव (पातं विष्टिं).

[1]शुभे केन्द्रत्रिकोणस्थे मृत्युरिपुविवर्जिते ।
पापे छिद्रतपःपुत्रधनरिपुविवर्जिते ।
संभवे तूदगयने शुक्लपक्षे विशेषतः ॥

(१) रेका. ६ पृ. १७; गभा. १९० भवे तू (भवत्तु) तृतीयार्धमात्रम्.

## बौधायनगृह्यसूत्रम्

ब्राह्मणभोजनम्, पुण्याहवाचनम्, होमः, केशवपनम्, केशानां दर्भस्तम्बे निधानम्, कुमाराप्लावनम्, शिखाकरणम्, कुमारस्नापनाच्छादनालंकरणानि, ब्राह्मणभोजनम्, आशीर्वाचनम्

'ब्राह्मणानन्नेन परिविष्य 'पुण्याहं स्वस्ति ऋद्धिम्' इति वाचयित्वा ॥

अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात्कृत्वा पक्वाज्जुहोति– 'ये केशिनः' इति पुरोनुवाक्यामनूच्य 'नर्ते ब्रह्मणः' इति याज्यया जुहोति ॥

अथाऽऽज्याहुतीरुपजुहोति– 'आरोह प्रोष्ठं विषहस्व शत्रून्' इत्याऽन्तादनुवाकस्य ॥

स्विष्टकृत्प्रभृति सिद्धमा धेनुवरप्रदानात् ॥

अथाग्रेणाग्निमुदुम्बरपर्णेषु हुतशेषं निदधाति– 'नमो हिरण्यबाहवे' इति ॥

अपरेणाग्निमुभयीरपः संनिषिञ्चति ॥

उष्णासु शीता आनयति– 'उष्णेन वायवुदकेनेह्यदितिः केशान्वपतु' इति ॥

ताभिरस्य शिर उनत्ति– 'आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे' इति ॥

ऊर्ध्वाग्रं बर्हिरनूच्छ्रयति– 'ओषधे त्रायस्वैनम्' इति ॥

क्षुरमभिमन्त्रयते– 'ज्योक्च सूर्यं दृशे' इति ॥

अथैनं तिर्यञ्चं निदधाति– 'स्वधिते मैनं हिंसीः' इति ॥

अथास्य केशान् वपति– 'येनावपत् सविता क्षुरेण' इति ॥

प्रवपतोऽनुमन्त्रयते– 'मा ते केशाननुगाद्वर्च एतत्' इति ॥

अथैनान् समुच्चित्य दर्भस्तम्बे निदधाति– 'तेभ्यो निधानं बहुधा व्यैच्छन्' इति ॥

अथैनमुष्णोदकेनाऽऽप्लावयति– 'बलं ते बाहुवोः सविता दधातु' इति ॥

§ अथैवमेकशिखस्त्रिशिखः पञ्चशिखो वा यथैवैषां कुलधर्मः स्यात् ॥

यथर्षि शिखां निदधातीत्येके ॥

अथैनं स्नाप्याऽऽच्छाद्यालंकृत्य त्रिवृताऽन्नेन ब्राह्मणान् संपूज्याऽऽशिषो वाचयति ॥

इति प्रकृतो व्याख्यातः ॥

(१) बौगृ. २।४।२–२०, सप्तदशाष्टादशसूत्रयोः शेषस्थलादिनिर्देशो विधिप्रकरणे (सं. का. पृ. २८९३) द्रष्टव्यः.

§ अत्र विधिप्रकरणस्था (सं. का. पृ. २८९३) टिप्पणी द्रष्टव्या।

## आश्वलायनगृह्यसूत्रम्

व्रीह्यादिपूर्णशरावादिस्थापनम्, केशवपनम्, नापितशासनम्, शिखाकरणम्

'उत्तरतोऽग्नेर्व्रीहियवमाषतिलानां पृथक्पूर्णशरावाणि निदधाति ॥

(१) अग्नेरुत्तरतो व्रीह्यादीनां द्रव्याणां शरावाणि पृथक् कारयित्वा निदधाति स्थापयति। तत्र पृथग्ग्रहणं न कर्तव्यम्। कस्मात्? द्रव्यभेदादेव भेदः सिद्ध इति। उच्यते– न शरावभेदार्थं पृथग्ग्रहणम्, किंतु द्रव्यभेदार्थमेव। इह समासोपदेशान्मिश्रितानां पूरणं प्राप्नोति। न भविष्यति। यथा व्रीहियवमाषतिलैरिति सत्यपि समासोपदेशे एकमेव द्रव्यं प्रसज्येत। तन्निवृत्त्यर्थं पृथग्ग्रहणं क्रियते। कथं पृथग्भूतानां सर्वेषां द्रव्याणां शरावाणि निधीयेरन्निति। देना.

(१) आगृ. १।१७।२–७; प्रपा. २०३.

( २ ) प्रणीताप्रणयनोत्तरकाल उत्तरतोऽग्नेर्व्रीहियवमाषतिलानां पूर्णशरावाणि निदधाति स्थापयति । पृथग्ग्रहणं द्रव्यभेदार्थम् । पृथक् पूरयित्वा निदध्यादिति । अन्यथा समासोपदेशान्मिश्रितानां पूरणं स्यात् । यथा 'सर्पिर्मधुनी हिरण्यनिकाषम्' (१।१५।१) इत्यत्र मिश्रितानां प्राशनम् । अथवा सत्यपि समासोपदेशे यथा 'कामं व्रीहियवतिलैः' (१।९।७) इत्यत्रैकं द्रव्यं भवति, एकेन कृतार्थत्वात्, एवमिहाप्येकं द्रव्यं प्रसज्येत, तन्निवृत्त्यर्थं पृथग्ग्रहणम् । कथं पृथग्भूतानां सर्वेषां द्रव्याणां पूर्णशरावाणि निधीयेरन्निति । $ गानावृ.

( ३ ) पृथग्ग्रहणात् व्रीहीणामेव पूर्णमेकं शरावम् । एवं यवानाम्, एवं माषाणाम्, एवं तिलानाम् । ¶ सुहितार्थयोगे षष्ठी 'पूरणगुणसुहित' इति ज्ञापकात् । यथा 'ओदनस्य पूर्णाश्छात्राः' इति । तानि चत्वारि पात्राण्युत्तरतोऽग्नेः निदधाति स्थापयति । शरावाणां परस्परस्पर्शेऽपि न दोषः, पृथग्ग्रहणस्यान्यार्थत्वात् । अना.

**पश्चात्कारयिष्यमाणो मातुरुपस्थ आनडुहं गोमयं नवे शरावे शमीपर्णानि चोपनिहितानि भवन्ति ॥**

$ प्रपा. सर्वत्र गानावृत्त्यनुवादः ।

¶ गृह्यसूत्रे षष्ठ्यर्थस्य पूर्णपदार्थेऽन्वयात् 'ओदनस्य पूर्णाः' इति स्वयमुदाहृतत्वाच्च, सुहितशब्दस्य च तृप्तार्थकस्य पूर्णार्थत्वाप्रसिद्धेरत्र 'पूरणार्थयोगे' इति शुद्धिः कल्प्यते । तत्रापीदमवधेयम्– 'पूरणगुणसुहितार्थ०' (पा. सू. २।२।११) इति सूत्रे पूरणार्थशब्देन पूरणार्थकप्रत्ययान्ता द्वितीयतृतीयादिशब्दा एव गृह्यन्ते, न पूरणार्थकनामान्यपीत्येकं मतम् । अस्मिन्मते पाणिनिसूत्रस्य पूरणार्थकनामयोगे षष्ठ्यां ज्ञापकत्वासंभवः । पूरणार्थशब्देन पूरणार्थकनामान्यपि गृह्यन्ते इत्यपरं मतम् । तत्र ज्ञापकत्वं युज्यते । वस्तुतस्तु 'पादपूरणम्' (पा. सू. ६।१।१३४) इत्यादिप्रयोगदर्शनात् 'पूरणगुण०' इति सूत्रे पूरणशब्देन पूरणार्थकप्रत्ययान्तशब्दानामेव ग्रहणात् उक्तज्ञापकत्वायोगात् शेषार्थकत्वमादायैव षष्ठी उपपादनीया ।

( १ ) पश्चादग्नेः कारयिष्यमाणः कुमारो मातुरुपस्थेऽवस्थापितो भवति । आनडुहं गोमयं नवे शरावे कृत्वा शमीपर्णानि च अन्यस्मिन्नेव शरावे कृत्वा पश्चादग्नेर्निदधाति । देभा.

( २ ) अग्नेः पश्चात्कारयिष्यमाणः कुमारः । तत्प्रयुक्तं हि चौलम् । एवं च कृत्वा संस्कारकर्मसु व्यवायपरिहारेषु कार्येषु कुमारोऽन्तरतम इति दर्शितं भवति । मातुः उपस्थे उत्सङ्गे आस्ते । आनडुहं गोमयं नवे शरावे उपनिहितं भवति । शमीपर्णानि चान्यस्मिन्नवे शरावे उपनिहितानि भवन्ति । गानावृ.

( ३ ) यदर्थं तत् कर्म स कारयिष्यमाणः कुमारः । स पश्चादग्नेर्मातुरुपस्थे । किम् ? 'उपनिहितानि भवन्ति' इति वक्ष्यमाणं विपरिणामेन संबन्धनीयम् । उपनिहितो भवतीति । ‡ अना.

**मातुः पिता दक्षिणत एकविंशतिकुशपिञ्जूलान्यादाय ॥**

( १ ) तत्र मातुर्दक्षिणतः पिता एकविंशतिकुशपिञ्जूलानि गृहीत्वा आस्ते । अन्ये पुनर्मातुरेव पिता दक्षिणतः स्यात्, † न अग्नेर्दक्षिणतः । अथ मातृग्रहणं किमर्थम् ? मातुर्दक्षिणतः पिता स्यात् । इतरथा अग्नेर्दक्षिणतः स्यात् । देभा.

( २ ) मातुर्दक्षिणतः पिता एकविंशतिकुशपिञ्जूलान्यादायाऽऽस्ते । मातुर्ग्रहणं मातुः सकाशाद्दक्षिणतो यथा स्यात्तथा अग्नेर्दक्षिणतो मा भूदिति । गानावृ.

( ३ ) आसीतेति शेषः । अस्मिन् पक्षे पितुरन्यः कर्ता । ¶ अना.

‡ शेषं देभावत् ।

† आदर्शपुस्तकटिप्पणीस्थः 'न' इतिशब्दरहितः पाठः समीचीनः । अन्यथा 'अन्ये पुनः' इत्यनेन ग्रन्थेन सिद्धान्तात्पक्षान्तरं नोक्तं स्यात् । पित्रा मातुर्दक्षिणतो भाव्यं नाग्नेरित्यस्यार्थस्योभयोरपि पक्षयोः समानत्वात् । नकाररहितपाठे पितृत्वं मातृनिरूपितं दक्षिणत्वं चाग्निनिरूपितमित्यवधेयम् ।

¶ शेषं गानावृगतम् ।

**ब्रह्मा वैतानि धारयेत् ॥**

( १ ) ब्रह्मा वैतानि धारयेत् कुशपिञ्जूलानि । देभा.

( २ ) एतानि कुशपिञ्जूलानि ब्रह्मा वा धारयेत् यद्यस्ति । गानावृ.

( ३ ) योऽस्मिन् कर्मणि ब्रह्मा स एतानि कुशपिञ्जूलानि गृहीत्वा धारयेत् । अस्मिन् पक्षे पितैव कर्ता । ब्रह्मा च स्वस्थान एवाऽऽसीनो धारयेत् । मातुर्दक्षिणत इत्येतत्तु पितृपक्षे । अना.

**पश्चात्कारयिष्यमाणस्यावस्थाय शीतोष्णा अपः समानीय 'उष्णेन वाय उदकेनेहि' इति ॥**

( १ ) कारयिष्यमाणस्य पश्चिमे देशे स्थित्वा शीतोष्णा अपः समानयति 'उष्णेन वाय उदकेनेहि' इत्यनेन मन्त्रेण । तत्र समानयनं पुनर्युगपदुभाभ्यां पाणिभ्याम् । न तु( ?ननु ) च दक्षिणकारिता विहन्यत इति । ¶ देभा.

( २ ) आघारान्तं कृत्वा पूर्वोक्ता आहुतीर्हुत्वा कुमारस्य पश्चिमदेशे स्थित्वा शीतमुदकमुष्णं चोदकमुभाभ्यां पाणिभ्यां गृहीत्वाऽन्यस्मिन्पात्रे युगपन्नियति मन्त्रेण । समित्येकीभावे । ननु दक्षिणाङ्गकारितया भाव्यम्, कथमुभाभ्यां पाणिभ्यामिति ? उच्यते– अनियमे प्राप्ते नियमार्था सा परिभाषा , न तु दक्षिणाङ्गविधायिका । ‡ गानावृ.

**तासां गृहीत्वा नवनीतं दधिद्रप्सान् वा प्रदक्षिणं शिरस्त्रिरुन्दति– 'अदितिः केशान्वपत्वाप उन्दन्तु वर्चसे' इति ॥**

तासाम् अपाम् एकदेशं गृहीत्वा नवनीतं दधिद्रप्सान् वा प्रदक्षिणं शिरस्त्रिरुन्दति । क्लेदयतीत्यर्थः । 'अदितिः केशान् वपति( ? तु )' इत्यनेन मन्त्रेण । तासामिति न वक्तव्यम्, अधिकृतत्वात्तासाम् । नेत्युच्यते । अक्रियमाणे तासांग्रहणमेव न प्राप्नोति । एवं सति समानयनमपार्थकम् । उत्तरार्थे समानयनं स्यात् 'शीतोष्णाभिरद्भिरवर्थं कुर्वाणः' इति । तेन तासांग्रहणमवश्यं कर्तव्यमेकदेशग्रहणार्थम् । देभा.

( २ ) तासाम् अपाम् एकदेशं गृहीत्वा नवनीतं च गृहीत्वा तदभावे दधिद्रप्सान्वा गृहीत्वा प्रदक्षिणं शिरस्त्रिः उन्दति क्लेदयति मन्त्रेण । मन्त्रावृत्तिरुक्ता । तासांग्रहणं समानीतानां ग्रहणार्थम् । इतरथा समानयनस्य 'शीतोष्णाभिरद्भिरवर्थम्' इत्यत्र कृतार्थत्वात्तासांग्रहणमेव न स्यात्, गृहीत्वेत्यस्य च नवनीतेन च संबन्धः स्यात् । तस्मिंस्तु सति आपो नित्याः , नवनीतदधिद्रप्सयोश्च विकल्पः सिध्यति । गानावृ.

( ३ ) नवनीतं दधिकणान् वा । † अना.

**दक्षिणे केशपक्षे त्रीणि त्रीणि कुशपिञ्जूलान्यभ्यात्माग्राणि निदधाति– 'ओषधे त्रायस्वैनम्' इति ॥**

( १ ) दक्षिणो यः केशपक्षः तस्मिन् केशपक्षे त्रीणि कुशपिञ्जूलान्यभ्यात्माग्राणि निदधाति । कारयिष्यमाणस्याभ्यात्माग्राणि निदधाति स्थापयतीत्यर्थः । 'ओषधे त्रायस्वैनम्' इत्यनेन मन्त्रेण । देभा.

( २ ) दक्षिणग्रहणं विस्पष्टार्थम् । तस्मिन्केशपक्षे त्रीणि त्रीणि कुशपिञ्जूलानि कुमारस्याभ्यात्माग्राणि स्थापयति मन्त्रेण । वीप्सा बह्वर्था । गानावृ.

[१] **'स्वधिते मैनं हिंसीः' इति $ निष्पीड्य लौहेन क्षुरेण ॥**

( १ ) 'स्वधिते मैनं हिंसीः' इत्यनेन मन्त्रेण लौहेन क्षुरेण निष्पीडयति । अथ लौहेनेति किमर्थम् । क्षुरो

---

¶ अत्रत्यः समाधानग्रन्थस्त्रुटित इति भाति ।

‡ अना. गानावृगतम् ।

† शेषं गानावृगतम् ।

$ आनन्दाश्रममुद्रितभिन्नपुस्तकेषु 'निष्पीड्य' इति पदं नास्ति ।

(१) आगृ. १।१७।८ ; प्रपा. २०४ ( इति० ).

(२) आगृ. १।१७।९ ; अना. ( निष्पीड्य० ) ; प्रपा. २०४.

लोके लोहमय एव प्रसिद्धः । तस्माल्लोहग्रहणमपार्थकम् । उच्यते– सिद्धो लोहमयः क्षुरः । अत्र त्वयं लोहशब्दोऽक्ष(?)विशेषे वर्तते । ताम्रमयेनेत्यर्थः । कथं गम्यते ? शास्त्रान्तरदर्शनात् । लोहशब्दश्चायं रजतादिष्वपि वर्तते । अत्र ताम्रे वर्तते । देभा.

(२) अनेन मन्त्रेण लौहेन क्षुरेण तानि कुशपिञ्जूलानि निष्पीडयति । तेषु क्षुरं स्थापयतीत्यर्थः । लोके क्षुरो लौह एव प्रसिद्धः । अतोऽत्र तस्यावाच्यत्वाल्लोहशब्दस्ताम्रे वर्तते । शास्त्रान्तरे विहितत्वाच्च । लोके लोहशब्दश्चायं रजतादिष्वपि वर्तते । अत्र तु ताम्रे, तथा दृष्टत्वात् । गानावृ.

(३) संदधातीति शेषः । सपिञ्जूलान् केशान् लौहेन क्षुरेण संदधाति 'स्वधिते मैनं हिंसीः' इति मन्त्रेण । क्षुरस्य लोहत्वाव्यभिचारेऽपि लौहेनेत्युच्यते शास्त्रान्तरोक्तस्ताम्रमयः क्षुरो यथा न स्यादिति ।

अना.

**[१]प्रच्छिनत्ति– 'येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् । तेन ब्रह्माणो वपतेदमस्याऽऽयुष्माञ्जरदष्टिर्यथाऽसत् ॥' इति ॥**

(१) 'येनावपत्सविता क्षुरेण' इत्यनेन मन्त्रेण लौहेन क्षुरेण केशान् प्रच्छिनत्ति । प्रशब्दो निपातः । छिनत्तीत्येतदेवोक्तं भवति । अन्ये पुनर्ब्रुवते क्षिप्रार्थमिति । देभा.

(२) ततोऽनेन मन्त्रेण तेनैव क्षुरेण प्रच्छिनत्ति । प्रोऽनर्थकः अनभिप्राय इत्यर्थः । अन्ये क्षिप्रार्थ इत्याहुः । ‡ गानावृ.

**[२]प्रच्छिद्य प्रच्छिद्य प्रागग्राञ्छमीपर्णैः सह मात्रे प्रयच्छति । तानानडुहे गोमये निदधाति ॥**

‡ अना. गानावृगतम् ।

(१) आगृ. १।१७।१० ; प्रपा. २०४.

(२) आगृ. १।१७।११ ; प्रपा. २०४ प्राञ्छमी (प्रान्दर्भान् शमी ).

(१) केशान् प्रच्छिद्य प्रागग्रान् शमीपर्णैः सह कृत्वा मात्रे प्रयच्छति ददातीत्यर्थः । कस्य मात्रे ? कुमारस्य । प्रच्छिद्येति वीप्सा क्रियते । कथम् ? अत्र यो धर्म उपदिश्यते स सर्वेषु छेदनेषु यथा स्यात् । प्रागग्रानिति तेषां कुशपिञ्जूलानां स्थाप्यमानानामपि प्रागग्रता विधीयते(?) । को ददाति ? यः करोति । गृहीत्वाऽसौ माता आनडुहे गोमये निदधातीति । तेन केशान् शमीपर्णैः सहितानानडुहे गोमये निदधाति स्थापयतीत्यर्थः । अत्र नियमो नास्ति प्रागग्रतोदगग्रतायाः । तेन यथाभिप्रेतं स्थापयति । देभा.

(२) प्रच्छिद्य प्रच्छिद्येति वीप्सावचनं योऽत्र धर्म उपदिश्यते स सर्वेषु छेदेषु यथा स्यादिति । प्रागग्रान्कृत्वा शमीपर्णैः सहैकीकृत्य मात्रे प्रयच्छति ददाति । तानसावानडुहे गोमये निदधाति स्थापयति । नात्र प्रागग्रतानियमः । गानावृ.

**[१]'येन धाता बृहस्पतेरग्नेरिन्द्रस्य चाऽऽयुषेऽवपत् । तेन त आयुषे वपामि सुश्लोक्याय स्वस्तये ॥' इति द्वितीयम् । 'येन $भूयश्चरात्यां ज्योक् च पश्याति सूर्यम् । तेन त आयुषे वपामि सुश्लोक्याय स्वस्तये ॥' इति तृतीयम् ॥**

(१) येन धाता इत्यनेन मन्त्रेण द्वितीयं प्रच्छिनत्ति । दक्षिणे केशपक्षे इत्येतद्वर्तते । येन भूय इति । 'येन भूयश्चरात्यम्' इत्यनेन मन्त्रेण तृतीयं प्रच्छिनत्ति । द्वितीयं तृतीयमिति मन्त्रान्तोपदेशार्थम् । ननु च इतिना मन्त्रान्तः प्रदृश्यते । नेत्युच्यते । इतिकारो मन्त्रमध्येऽपि क्वचिद्दृश्यते । यथा 'आसीद सदनं स्वमिति मा

$ यद्यपि बहुषु सूत्र-प्रयोगपुस्तकेषु वैदिकानां पठने च 'भूयश्च राज्याम्' इति पाठो विद्यते । तथापि सः 'चराति । लेट् । चरेत् । आम् एवम्' इति पारिजातव्याख्यानादशुद्ध इति कृत्वा न गृहीतः । क्वचित् 'चरात्यम्' 'चरात्ययम्' इति पाठः ।

(१) आगृ. १।१७।१२–१६ ; प्रपा. २०४.

हिंसीर्देवप्रेरितः ' इति । † अथ क्रमार्थे द्वितीयग्रहणम् । देभा.

( २ ) संख्यावचनं मन्त्रान्तरप्रदर्शनार्थम् । मन्त्रमध्येऽपीतिकारो विद्यत इत्युक्तम् । कुशपिञ्जूलनिधानस्याभ्यासविधानार्थे भवितुं नार्हति, अभ्यासस्य त्रीणि त्रीणीति वीप्सयैव सिद्धत्वात् । $ गानावृ.

**सर्वैर्मन्त्रैश्चतुर्थम् ॥**

( १ ) पूर्वोक्तैः सर्वैर्मन्त्रैः चतुर्थं छिनत्ति । देभा.

( २ ) सर्वैः त्रिभिर्मन्त्रैः चतुर्थवारं छिनत्ति । ¶ गानावृ.

**एवमुत्तरतस्त्रिः ॥**

( १ ) यथा दक्षिणप्रच्छेदनं कृतम् उत्तरत अप्येवमेव करोति । अयं तु विशेषः – त्रिः करोति । देभा.

( २ ) यथा दक्षिणे केशपक्षे एवमुत्तरेऽपि केशपक्षे कुर्यात्त्रिः । परिसंख्येयम्– उत्तरे केशपक्षे त्रिरेव, न चतुर्थमिति । गानावृ.

( ३ ) तदेवं दक्षिणेषु चतुर्षु प्रच्छेदनेषु त्रीणि त्रीणि द्वादश, उत्तरेषु त्रीणि त्रीणि नव इत्येकविंशतेः पिञ्जूलानां विनियोगः । § अना.

**क्षुरतेजो निमृजेत्– ' यत्क्षुरेण मर्चयता सुपेशसा वप्ता वपसि केशान् । शुन्धि शिरो माऽस्याऽऽयुः प्रमोषीः ॥ ' इति ॥**

( १ ) क्षुरतेजो निमृजेत् ' यत्क्षुरेण मर्चयता ' इत्यनेन मन्त्रेण । तेजः धारेत्युच्यते । निमृजेदिति शोधयेदित्यर्थः । देभा.

( २ ) ततः क्षुरधारां निमृजेत् शोधयेत् मन्त्रेण । निमार्जनमवमार्जनम्, ' न्यवेति विनिग्रहार्थीयौ ' इति वचनात् । $ गानावृ.

† इदमाक्षेपान्तरमिति प्रतीयते । ततश्च समाधानग्रन्थ उच्छिन्न इति भाति ।

$ अना. गानावृगतम्।

¶ अना. गानावृवत् ।

§ शेषं गानावृवत् ।

**नापितं शिष्यात्– ' शीतोष्णाभिरद्भिरवर्थं कुर्वाणोऽक्षण्वन्कुशली कुरु ' इति ॥**

( १ ) उपदिशेदित्यर्थः । किमिति ? शीतोष्णाभिरद्भिरवर्थं कुर्वाणोऽक्षण्वन् कुर्विति । एवं ब्रूयात् । क्रियां वाऽस्य निर्दिशेदिदं कुर्विति । देभा.

( २ ) नापितं शिल्पिनं शिष्यात् प्रेष्येत् प्रैषेण । कुशलीकरणवचनं विपरीतलक्षणया वापने वर्तते । † येन ' विहितोऽयं मुण्डयति ' हि श्रूयते । गानावृ.

( ३ ) शिष्यात् प्रेष्येत् शीतोष्णाभिरित्यादिना प्रैषेण । याः पूर्वसमानीताः शीतोष्णा आपः ताभिरद्भिरप्कार्यं कुर्वाणः अक्षण्वन् क्षुरेण क्षतिमकुर्वन् कुशली कुर्विति प्रैषस्यार्थः । कुशलीकरणं वपनं विपरीतलक्षणया मङ्गलवारवत् । ' रिक्तो वा एषो न विहितो यन्मुण्डः ' इति श्रूयते । अना.

‡ [1]यथाकुलधर्मं केशवेशान्कारयेत् ॥

## कौषीतकिगृह्यसूत्रम्

संभारस्थापनम्, केशवपनम्, केशनिखननम्, नापिताय धान्यपात्रदानम्

[2]**अग्निमुपसमाधाय ॥**

**व्रीहियवानां तिलमाषाणामिति पात्राणि च पूरयित्वा ॥**

**आनडुहं च गोमयं कुशमिश्रं च केशप्रतिग्रहणायाऽऽदर्शं नवनीतं लोहक्षुरं चोत्तरत उपस्थाप्य ॥**

**' संपृच्यध्वमृतावरीरूर्मिणा मधुमत्तमाः । पृञ्चतीर्मधुना पयो मन्द्रा धनस्य सातये ॥ ' इति उष्णास्वप्सु शीता आसिञ्चति ॥**

† ग्रन्थोऽयमशुद्धः स्यात् । अनाविलागतं वचनं द्रष्टव्यम् ।

‡ अस्य व्याख्यानं विधिप्रकरणे ( सं. का. पृ. २८९३ –२८९४ ) द्रष्टव्यम् ।

(१) आगृ. १।१७।१७ ; प्रपा. २०४ ; संप्र. ३१५ वेशा ( वेषा ).

(२) कौगृ. १।२८।५-१७, २१, २३-२४.

'आप उदन्तु जीवसे दीर्घायुत्वाय वर्चसे । त्र्यायुषं जमदग्नेः, कश्यपस्य त्र्यायुषम्, अगस्त्यस्य त्र्यायुषम्, यद्देवानां त्र्यायुषम्, तत्ते करोमि त्र्यायुषम्' इत्यसाविति शीतोष्णाभिरद्भिर्दक्षिणं केशपक्षं त्रिरभ्यनक्ति ॥

शलल्यैके विजटान्कृत्वा ॥

नवनीतेनाभ्यज्य ॥

'ओषधे त्रायस्वैनम्' इति कुशतरुणमन्तर्दधाति ॥

केशान्कुशतरुणं चाऽऽदर्शेन संस्पृश्य ॥

'तेजोऽसि स्वधितिष्टे पिता मैनं हिंसीः' इति लोहक्षुरमादत्ते ॥

'येनावपत्सविता श्मश्रूवग्रे क्षुरेण राज्ञो वरुणस्य विद्वान् । येन धाता बृहस्पतिरिन्द्रस्य चावपच्छिरः । तेन ब्रह्माणो वपतेदमद्याऽऽयुष्मान्दीर्घायुरयमस्तु वीरोऽसौ ॥' इति केशाग्राणि छिनत्ति कुशतरुणं च ॥

एवं द्वितीयमेवं तृतीयम् ॥

एवं द्विरुत्तरतः ॥

तृतीये तु प्रवपने गां ददात्यहतं च वासः ॥

प्रागुदीच्यां दिशि बह्वोषधिके देशेऽपां वा समीपे केशान्निखनन्ति ॥

नापिताय धान्यपात्राणि ॥

अत्र स्तरणाघाराज्यभागाः पाक्षिकाः । उपलेपनोल्लेखनाद्याघाराज्यभागान्तं कृत्वा ततो व्रीहियवतिलमाषाणां चतुर्णां द्रव्याणां चत्वारि पृथक्पात्राणि यथाशक्त्या पूरयित्वा बलीवर्दचर्म गोमयं ( यवतिले ? ) समूलकुशसहिते लोष्टे ( स्थापितम् ? ) आदर्शं लोहक्षुरं च एतानि सर्वाणि अग्नेरुत्तरतः स्थापयित्वा महाव्याहृतिचतुष्टयं हुत्वा तत आनडुहे चर्मणि कुमारकमुपवेश्य 'संपृच्यध्वमृतावरीरूर्मिणा मधुमत्तमाः । पृञ्चतीर्मधुना पयो मन्द्रा धनस्य सातये ॥' इत्यनेन मन्त्रेण एकारान्तेन उष्णास्वप्सु शीता आसिञ्चति । ततः 'आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे । त्र्यायुषं जमदग्नेः, कश्यपस्य त्र्यायुषम्, अगस्त्यस्य त्र्यायुषम्, यद्देवानां त्र्यायुषम्, तत्ते करोमि त्र्यायुषं देवदत्त' इत्यनेन मन्त्रेण कुमारनामोपलक्षितेन त्रिरावृत्तेन कुमारस्य शिरसि दक्षिणे पार्श्वे केशान् स्तोकान् शीतोष्णव्यामिश्रिताभिरद्भिः प्रक्षालयेत् । ततस्त्रिःश्वेतया शलल्या विजटीकरणं पाक्षिकम् । ततस्तानेव केशान् तूष्णीं नवनीतेनाभ्यज्य ततः 'ओषधे त्रायस्वैनम्' इत्यनेन मन्त्रेण तेषामेव केशानां छेदनदेशे कुशतरुणमन्तर्धाय ततः केशान् कुशतरुणं चाऽऽदर्शेन युगपत् स्पृष्ट्वा ततः 'तेजोऽसि स्वधितिष्टे पिता मैनं हिंसीः' इत्यनेन मन्त्रेण लोहक्षुरं गृह्णाति । अपरे त्वेवं व्याचक्षते– ताम्रमयं क्षुरं गृह्णाति । तच्च न युज्यते, ताम्रमयस्य छेदनासामर्थ्यात् अननुष्ठानत्वाच्च । ततः क्षुरं गृहीत्वा 'येनावपत् सविता श्मश्रूवग्रे क्षुरेण राज्ञो वरुणस्य विद्वान् । येन धाता बृहस्पतिरिन्द्रस्य चावपच्छिरः । तेन ब्रह्माणो वपतेदमद्याऽऽयुष्मान् दीर्घायुरयमस्तु वीरो देवदत्तः' इत्यनेन मन्त्रेण सकुशतरुणान् केशांश्छित्वा सकुशलोष्टस्थे गोमये स्थापयेत् । एवम् 'आप उन्दन्तु जीवसे' इत्यारभ्य गोमये केशस्थापनान्तम् । एवं द्वितीयच्छेदनम् । एवं तृतीयच्छेदनं कृत्वा गां ददात्यहतं वासश्च । ततोऽनेनैव प्रकारेण द्विरुत्तरतः स्थित्वा ततो नापितेन यथागोत्रस्थिति क्रियमाणं मुण्डनं कारयित्वा ततो महाव्याहृतिचतुष्टयं पाक्षिकस्विष्टकृत् । ततो महाव्याहृतिसप्तकव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समापनीयम् । व्रीहियवतिलमाषपात्राणि नापिताय दद्यात् । बह्वोषधिसंपन्ने प्रदेशे उदकस्य वा समीपे कुमारकेशान् भूमौ निखनेत् ।

**कौगृप.**

## आपस्तम्बगृह्यसूत्रम्

ब्राह्मणभोजनादि केशवपनं चोपनयनवत्, होमः सीमन्तोन्नयनवत्, उपयुक्तक्षुरेण त्र्यहं नापितकर्मनिषेधः, वरदानम्

'ब्राह्मणानां भोजनमुपायनवत् ॥

(१) आपगृ. १६।४–५.

(१) उपनयने ब्राह्मणभोजने विशेषाभावात् आदिपदलोपोऽत्र द्रष्टव्यः ब्राह्मणभोजनादीति । 'ब्राह्मणान् भोजयित्वाऽऽशिषो वाचयित्वा कुमारं भोजयित्वा' इत्येतावदिह द्रष्टव्यम् । 'अनुवाकस्य प्रथमेन' (आपगृ. १०।५) इत्यादि परस्तादतिदेक्ष्यते । अनाकुला.

(२) उपनयनमेवोपायनम् । $ ताद.

**सीमन्तवदग्नेरुपसमाधानादि ॥**

अग्नेरुपसमाधानादिपरिषेचनान्तं सीमन्तवत् कर्तव्यम् । पूर्वेद्युर्नान्दीश्राद्धम्, सकृत्पात्राणि, शलल्यादिभिः सह शम्याः । अन्वारब्धायाम् इत्यत्र च कुमारस्यान्वारम्भः । परिषेचनान्तस्य चातिदेशः । यत्तु 'गायतमिति वीणागाथिनौ' (आपगृ. १४।४) इत्यादि, न तस्यात्रातिदेशः, 'अपरेणाग्निं प्राञ्चम्' इति विधानात् पुनरुपवेशस्य । ¶ अनाकुला.

**'अपरेणाग्निं प्राञ्चमुपवेश्य त्रेण्या शलल्या त्रिभिर्दर्भपुञ्जीलैः शलालुग्लप्सेनेति तूष्णीं केशान् विनीय यथर्षि शिखा निदधाति ॥**

विनयनं पृथक्करणं वक्ष्यमाणानां शिखार्थानां च । तूष्णीमिति वाग्यमनार्थम्, न मन्त्रप्रतिषेधार्थम्, प्राप्त्यभावात् । यथर्षि यावन्त ऋषयो यस्य प्रवरे तावतीः शिखाः करोति— त्र्यार्षेयस्य तिस्रः पञ्चार्षेयस्य पञ्चेति । † अनाकुला.

**'अपां संसर्जनाद्या केशनिधानात्समानम् ॥**

$ शेषम् अनाकुलावत् ।

¶ ताद. अनाकुलावत् ।

† ताद. अनाकुलागतम् ।

(१) आपगृ. १६।६ ; मुक्ता. ८३ ( यथर्षि शिखा निदधाति ) एतावदेव ; संम. १९ ( केशान् विनीय यथार्षे शिखां निदधाति ) एतावदेव ; सिन्धु. ९२१ ( अपरेणाग्निं ... नेति० ) ; आन. १४९ मुक्तावत् ; बाल. १।११–१२ पृ. ३३ सिन्धुवत् : पृ. ३४ मुक्तावत् .

(२) आपगृ. १६।८–११.

(१) 'उष्णाः शीतास्वानीय' इत्यादि 'दर्भस्तम्बे वा निदधाति' इत्येवमन्तमुपनयनवत् कर्तव्यमित्यर्थः । अनाकुला.

(२) व्याख्यातमेवैतत् समावर्तने§ । ताद.

**क्षुरं प्रक्षाल्य निदधाति ॥**

क्षुरस्य प्रक्षालनं विधीयते । निधानमर्थप्राप्तम् । यदा निदधाति तदा प्रक्षाल्येति । ¶ अनाकुला.

**तेन त्र्यहं कर्मनिवृत्तिः ॥**

तेन क्षुरेण त्रिष्वहोरात्रेषु नापितकर्म न कर्तव्यम् । ¶ अनाकुला.

**वरं ददाति ॥**

(१) अस्मिन् कर्मणि समाप्ते कुमारस्य पिता ब्रह्मणे वरं ददाति । 'गौर्वै वरः' इत्युक्तम् । अनाकुला.

(२) वरं गां पिता ददाति दक्षिणत आसीनाय ब्राह्मणाय । यदि अन्यश्चौलकर्ता तदा तस्मै । ताद.

## हिरण्यकेशिगृह्यसूत्रम्

होमः, ब्राह्मणभोजनम्, पुण्याहवाचनम्, केशवपनम्, शिखाकरणम्, केशनिखननम्, दक्षिणादानम्, नापितायौदनदानम्

... '**अग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा जुहोति— 'इमं मे वरुण, तत्त्वा यामि, त्वं नो अग्ने, स त्वं नो अग्ने, त्वमग्ने अयासि, प्रजापते, यदस्य कर्मणोऽत्यरीरिचम्' इति । एके अवाभ्यातानान् राष्ट्रभृत इत्युपजुह्वति यथापुरस्तात् । ब्राह्मणानन्नेन परिविष्य 'पुण्याहं स्वस्त्ययनमृद्धिम्' इति वाचयित्वाऽपरेणाग्निं प्राङ्मुख उपविशति ॥**

पुण्याहादिवाचनान्तं कृत्वाऽपरेणाग्निं प्राङ्मुखः कुमार उपविशति । संस्कार्यस्य कुमारस्य हेतुकर्तृ(क?)त्वात् कर्तृत्वं परिवेषणादेरपि कुमारस्येति समानकर्तृत्वेन

§ तच्च अनाकुलावत् ।

¶ ताद. अनाकुलावत् ।

(१) हिगृ. २०।१४३–४८.

निर्दिष्टम् । होमकाले प्रवेश्यान्वारम्याऽऽसीनः पुण्याहादिवाचनार्थमुत्थितः पुनरुपविशति । मातृद्द.

**उत्तरतो माता ब्रह्मचारी वाऽऽनडुहं शकृत्पिण्डं धारयति । तेनास्य केशान् प्रतिगृह्णाति ॥**

उत्तरतोऽग्नेर्माता कुमारस्य, ब्रह्मचारी वा कश्चित् तदभावे, आनडुहं शकृत्पिण्डं धारयन्नुपविशति । अथ चोत्तरेणेति वक्तव्य उत्तरत इति वचनमग्निसंबन्धार्थनिवृत्त्यर्थम् । तेनोत्तरतः कुमार( ? रश्च ) उपविशति । सौकर्याच्चैवं केशप्रतिग्रहणं स्यात् । तेन शकृत्पिण्डेनास्य कुमारस्य केशान् वपन्( ? उप्तान् ) प्रतिगृह्णाति । 'उत्तरतः' इत्येतदादि 'प्रतिगृह्णाति' इत्येतदन्तं वा सूत्रम् । 'धारयंस्तेनास्य केशान्' इति पठितव्यम् । मातृद्द.

**अथोष्णशीता अपः संसृजति ॥**

अथोष्णशीताश्चापः संसृजति । अथशब्दो विधेयाधिकारार्थः । इदं वक्ष्यमाणं प्रधानं कर्म । पूर्वं तदङ्गम् । कुमार्याश्च तूष्णीं कर्तव्यमिति । 'शीतास्सूष्णा आनीय' इत्येव सिद्धे 'उष्णशीता अपः संसृजति' इति वचनमन्यत्रापि वचने शीतोष्णाभिरेवोन्दनमिति । तेन समावर्तने दीक्षायां चोन्दनीयाः शीतोष्णा एव स्युः । मातृद्द.

**शीतास्सूष्णा आनीय 'आप उन्दन्तु जीवसे' इति दक्षिणं गोदानमुनत्ति ॥**

शीतास्वप्सूष्णा अप आनीय ताभिः 'आपः' इत्यनेन दक्षिणं गोदानमुनत्ति । भूतोपदेशात् पुरुषार्थत्वाच्च समयाल्लौकिकाग्नौ परितपनम् । मातृद्द.

**'ओषधे त्रायस्वैनम्' इत्यूर्ध्वाग्रामोषधिमन्तर्दधाति । 'स्वधिते मैनं हिंसीः' इति क्षुरेणाभिनिदधाति । 'देवश्रूरेतानि प्रवपे' इति प्रवपति ॥**

उक्तार्थानि । प्रच्छिन्नान् केशान् मात्रे ब्रह्मचारिणे वा प्रयच्छति । प्रत्तान् गोमये निदधाति । मातृद्द.

**एवमितरान् प्रदक्षिणम् । 'येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् । तेन ब्रह्माणो वपतेदमस्योर्जेमं रय्या वर्चसा संसृजाथ ॥' इति पश्चात् । 'येन पूषा बृहस्पतेरग्नेरिन्द्रस्य चाऽऽयुषेऽवपत् । तेन तेऽहं वपाम्यसौ ॥' इत्युत्तरतः । 'यथा ज्योक् सुमना असत् । ज्योक् च सूर्यं दृशे ॥' इति पुरस्तात् ॥**

एवमितरान् पर्यन्तान् पश्चादारभ्य प्रदक्षिणमुन्दनादिना विधानेन प्रच्छिनत्ति । तत्र 'येनावपत्' 'येन पूषा' 'यथा ज्योक्' इति क्रमेण 'देवश्रूः' इत्यस्य प्रत्याम्नायः । प्रच्छिद्य प्रच्छिद्य शकृत्पिण्डे निधानार्थं प्रयच्छति । तत्र 'असौ' इति संबुद्ध्या नामग्रहणम् । 'पश्चात्' 'उत्तरतः' 'पुरस्तात्' इति वचनादेव प्रादक्षिण्ये सिद्धे प्रदक्षिणमिति वचनं वपनमपि दक्षिणादारभ्य प्रादक्षिण्येन वेदितव्यमित्येतदर्थम् । मातृद्द.

**[1]उप्त्वा यथोदितं चूडाः कारयन्ति, §यथर्षि वा ॥**

(१) उप्त्वा वपनानन्तरं मुण्डयित्वा तु यथोचितं यथाकुलस्योचितं यथाकुलधर्ममित्येकां द्वे तिस्रः पञ्च वा शिखा यथाप्रदेशं कारयन्ति । उप्त्वेति वचनं छेदनमात्रं मा भूदिति । स्वातन्त्र्यविवक्षया कुमारस्य वपने कर्तृत्वं शिखाक्रियायां च हेतुत्वं चेति कारयन्तीत्युच्यते । अथवा कारं करोतीति कारयतीति शूद्रः कर्ता नापित एवोच्यते । न (कुमारः।) णिजन्तेनासमानकर्तृत्वे वा (त्वा) क्वचिददृत्वांगत्वेति यथा( ? ) । अपि वा उन्दनादेः प्रवपनान्तस्याऽऽचार्यः कर्तेति दर्शनात् तेषामृत्विजेव कल्पना । ‡ मातृद्द.

---

§ अस्य व्याख्यानं विधिप्रकरणे (सं. का. पृ. २८९५) द्रष्टव्यम् ।

‡ बाल. वृत्तेरंशतोऽनुवादः ।

(१) हिगृ. २०।१।४९ ; संप्र. ३१५ ( उप्त्वा० ) ; बाल. १।११–१२ पृ. ३६ ; संर. ९०१.

(२) उप्त्वेति वचनं छेदनमात्रं मा भूदित्येतदर्थम्। वस्तुतस्तु उप्त्वेतिवचनं णिजन्तेन संबन्धार्थम्। तेन यश्चूडानां कारयिता पित्रादिः स एव वपनकर्तेति सिद्धं भवति। इदानीं तु तादृशशिक्षाया अभावात् लोकविद्विष्टत्वाच्च समन्त्रकं चेष्टामात्रं कृत्वा नापितेनैव वपनं कारयन्ति शिष्टाः। $ संर. ९०१

'संयम्य केशान्' यत्र पूषा बृहस्पतिः सविता सोमो अग्निः। तेभ्यो निधानं बहुधा व्यैच्छन्नन्तरा द्यावापृथिवी अपः सुवः॥' इति गोष्ठ उदुम्बरे दर्भस्तम्बे वा निखनति योऽस्य रातिर्भवति॥

संयम्य गृहीत्वा केशान्। 'यत्र' इत्यनेन गोष्ठादिषु निखनति योऽस्य कुमारस्य रातिर्भवति सः। मातृद्व.

यथाश्रद्धं ब्राह्मणाय ददाति॥

यथाश्रद्धं यथाशक्ति ब्राह्मणाय, जातिनिर्देशो वाऽयम्, ब्राह्मणेभ्यो वा यैः पुण्याहादि वाचितं तेभ्योऽविशेषेण वाचकेभ्यश्च दक्षिणां ददाति। मातृद्व.

सर्पिष्मन्तमोदनं नापिताय॥

सर्पिष्मन्तं प्रभूतसर्पिष्कमोदनं नापिताय ददाति। समाप्तं चूडाकर्म। अस्याऽऽदौ नान्दीमुखं श्राद्धम्। मातृद्व.

## मानवगृह्यसूत्रम्

होमः, कर्मकर्त्रा नापितेन च केशानां वपनम्, गोमये केशनिधानम्, केशनिखननम्, कर्मकर्त्रे नापिताय च वरादिदानम्

[2]जयप्रभृतिभिर्हुत्वा 'उष्णेन वायुरुदकेनेद्यजमानस्याऽऽयुषा। सविता वरुणो दधद्यजमानाय दाशुषे॥' इत्युष्णा अपोऽभिमन्त्रयते॥

जयप्र०। आघाराज्यभागादि प्रागुदग्रं लक्षणमित्यादि कृत्वा प्रधानस्थाने। अनादिष्टदेवतेष्वग्निम्। अन्यस्तु नानु जयप्रभृतीति पठन्ति(? ति)। तस्मादनादिष्टत्वात् अग्निरेव भवति। युक्तमात्रः(? तरः) पाठः, यतो जयादीनां मन्त्राणामुभयलिङ्गदेवताभिधायकत्वम्, तच्च स्त्रीसंस्कारे युक्तम्, स्त्रीलिङ्गदेवतात्वात्, इह तु पुंसोऽधिकारात् यागेन तैर्होमः। अत एव हि शम्यादिभङ्गे तैर्होम उक्तः, दम्पत्योः सहाध्यगमनात्। 'उष्णेन वा'। उष्णोदकाभिमन्त्रणम्। अष्टाभा.

'अदितिः केशान्वपत्वाप उन्दन्तु जीवसे। धारयतु प्रजापतिः पुनः पुनः स्वस्तये॥' इत्यभ्युन्दति॥

'ओषधे त्रायस्वैनम्' इति दक्षिणस्मिन् केशान्ते दर्भमन्तर्दधाति॥

'स्वधिते मैनं हिंसीः' इति क्षुरेणाभिनिदधाति॥

'येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य केशान्। तेन ब्राह्मणो वपत्वायुष्मानयं जरदष्टिरस्तु॥ येन पूषा बृहस्पतेरिन्द्रस्य चाऽऽयुषेऽवपत्। तेन ते वपाम्यायुषे दीर्घायुत्वाय जीवसे॥ येन भूयश्चरत्ययं ज्योक्च पश्यति सूर्यः। तेन ते वपाम्यायुषे सुश्लोक्याय स्वस्तये॥' इति तिसृभिस्त्रिः प्रवपति॥

'यत्क्षुरेण वर्तयता सुतेजसा वप्तर्वपसि केशान्। शुन्धि शिरो माऽस्याऽऽयुः प्रमोषीः॥' इति लौहायसं क्षुरं केशवापाय प्रयच्छति॥

'अदितिः०'। अनेन केशाभ्युन्दनम्। 'ओषधे०'। दक्षिणस्मिन् समीपे केशानामित्यर्थः। 'यत्क्षुरेण०'। अनेन केशवापाय नापिताय क्षुरं प्रयच्छेत्। अष्टाभा.

'मा ते केशाननुगाद्वर्च एतत्तथा धाता दधातु ते। तुभ्यमिन्द्रो वरुणो बृहस्पतिः सविता वर्च आदधुः॥' इति प्रवपतोऽनुमन्त्रयते॥

---

$ शेषं मातृद्वगतम्।

(१) हिगृ. २०।१।५०-५२.

(२) मागृ. १।२१।२-१२.

**सुहृत्परिग्राहं हरितगोशकृत्पिण्डे समवचिनोति ॥**

'मा ते केशान्०'। अनेन प्रवपतो नापितकेशानिति वर्णात्। यद्वा प्रवपतः केशानिति वर्णात्। यद्वा प्रवपतः केशानिति वर्तते, प्रवपतो नापितस्य। परिग्रहे-(? ग्राहं) परिगृह्य। समवचिनोति समवस्थापयति।

अष्टाभा.

**'उप्त्वाय केशान्वरुणस्य राज्ञो बृहस्पतिः सविता विष्णुरग्निः। तेभ्यो निधानं महतं म विन्दन्नन्तरा द्यावापृथिव्योरपस्सु॥' इति प्रागुदीचो ह्रियमाणाननुमन्त्रयते ॥**

**'अरिक्ते पत्न्या श्लेषयेत्' इति श्रुतिः ॥**

'उप्त्वाय०'। अनेन प्रागुदीचो ह्रियमाणान् हरितशकृत्पिण्डेनानुमन्त्रयीत। अरिक्तम्(? क्ते)। अरिक्ते धान्यादिपूर्णे इत्यर्थः। आश्लेषयति भरेत शकृत्पिण्डः। साकल्येन स्थापयेत्। श्रुतिग्रहणमादरार्थम्। अन्यस्तु— पुनः पुनः श्रुतिग्रहणं कुर्वन् संस्काराणां वेदमूलं स्मरणमिति दर्शयति।

अष्टाभा.

**वरं कर्त्रे ददाति, पक्ष्मगुडं तिलपिष्टलं च केशवापाय ॥**

वरं कर्त्रे। कर्त्रे वरं गाम्। केशवापाय त्वचिकलाछवकात्तृतीयो भागः पक्ष्मगुण इति केचित्। उक्तावो नित्येकपरो व्यञ्जनावयव इत्यन्ये(?)। तिलपिष्टलं तिलपिष्टं तिलचूर्णं(? पूर्णं) वा कच्छपकटाहं दद्यात्। श्रुतिग्रहणमनुवर्तते।

अष्टाभा.

## भारद्वाजगृह्यसूत्रम्

ब्राह्मणभोजनम्, आशीर्वाचनम्, होमः, गुरवे वरदानम्, केशवपनम्, गोमयपिण्डे केशनिधानम्, सकेशगोमयपिण्डस्य गोष्ठादौ निधानम्, स्नानमलंकरणं च

**'अथान्नं संस्कृत्य ब्राह्मणान्भोजयित्वाऽऽशिषो वाचयित्वाऽन्तरागारेऽग्निमुपसमाधाय जयाभ्यातानान् राष्ट्रभृत इति हुत्वैता आहुतीर्जुहोति— 'पूर्णा पश्चात्, इमं मे वरुण, तत्त्वा यामि, त्वं नो अग्ने, स त्वं नो अग्ने, त्वमग्ने अयासि, अनभिशस्तीश्च, यदस्य कर्मणोऽत्यरीरिचम्, प्रजापते' इति। उत्तमां हुत्वा गुरवे वरं ददाति। अपरेणाग्निं गोमयपिण्डं सर्वबीजानीत्युपनियम्य सर्वबीजानामग्रं गोमयपिण्डे न्युप्य शीतोष्णा अपः समानीय ताभिरस्य दक्षिणं गोदानमुनत्ति— 'आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे' इति। त्रेण्या शलल्या विनीय त्रीणि दर्भपुञ्जीलान्यूर्ध्वाग्राण्युपनियच्छति। 'ओषधे त्रायस्वैनं स्वधिते मैनं हिंसीः' इति लोहितायसं क्षुरं तिर्यञ्चं निधाय प्रवपति— 'यदृषीणां त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम्। यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषम्॥ येन पूषा बृहस्पतेरग्नेरिन्द्रस्य चाऽऽयुषेऽवपत्। तेन ते वपाम्यसौ दीर्घायुत्वाय वर्चसे॥' इति। एवमेवोत्तरं गोदानं वापयते। केशान्वापयित्वा गोमयपिण्डे निदधाति। अथैनं गोमयपिण्डं गोष्ठ उदकान्त उदुम्बरमूले दर्भस्तम्बे वा निदधाति। अथैनं स्नातमलंकुर्वन्ति ॥**

(१) भागृ. ११२८.

## काठकगृह्यसूत्रम्

होमः, केशवपनम्, गोमये केशावचयनम्, अरिक्तदेशे केशनिधानम्, कर्त्रे वरदानम्, नापिताय तिलपात्रदानम्, ब्राह्मणभोजनम्

**'यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा 'आऽयमगात्सविता क्षुरेणोष्णेन वाय उदकेन एहि। आदित्या रुद्रा वसवः सचेतसः सोमस्य राज्ञो वपत प्रचेतसः॥' इत्युष्णा अपोऽभिमन्त्रयते ॥**

(१) कागृ. ४०।९-१९.

( १ ) 'आऽयमगात्' इत्यादिना उष्णा अपोऽभिमन्त्रयते मन्त्रेण । जगती छन्दः । विश्वेदेवा देवता । ब्रह्मण आर्षमुपनयनसमाप्तिं यावत् । अयं सविता क्षुरेणोष्णेन चोदकेन सहाऽऽगात् आगतः । अतः हे वायो, त्वमप्याभ्यां सह एहि आगच्छ । हे आदित्याः, रुद्राः, वसवः, सचेतसः एकचित्ताः सन्तः यूयमप्यस्य सोमस्येव राज्ञो माणवकस्य वपत मुण्डयतैनमित्यर्थः । 'सोमो वा ओषधीनां राजा' इति श्रुतेः राजानमिवैनं गौरवभाजनं मन्यमाना मुण्डयतेति यावत् । देव.

( २ ) अत्राऽऽज्यं हविः । आज्यभागान्तं हुत्वा 'आऽयमगात्' इत्युष्णा अपोऽभिमन्त्रयेत् ।

$ ब्राह्म.

**'उष्णाश्च शीताश्च समेत्य सर्वा बृहस्पतिः सविता सत्यधर्मा तदनुमन्यताम् । आर्द्रदानवः' इत्यभ्युन्देत् । 'आर्द्रदानवः स्थ जीवदानवः स्थोन्दतीरिहैनमवताऽऽप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे' इति ॥**

( १ ) 'उष्णाश्च' इत्यादिना 'वर्चसे' इत्यन्तेनाभ्युन्देत् । उन्दी क्लेदने । माणवकस्य शिरः अभिमन्त्रिताभिरद्भिः प्रक्षालयेदित्यर्थः ।

हे आपः, इहैव स्थाने एनं माणवकम् अवत रक्षत उष्णाश्च शीताश्च सर्वाः समेत्य संभूय । तच्चावनं बृहस्पतिः सविता चानुमन्यताम् अभ्युपगच्छतु । कीदृशः ? सत्यधर्मा सत्यमेव ह्यस्य धर्मः । सत्यसंकल्पो ह्यत एवायम् । हे आपः, आर्द्रदानवः आर्द्रभावस्य दात्र्यः स्थ भवथ । ददाति इति दानुः । औणादिको दानुशब्दः । एवं जीवदानवः जीवदात्र्यः स्थ भवथ । उन्दतीः क्लेदयन्त्यः । आप उन्दन्तु जीवसे जीवनाय दीर्घायुत्वाय च । 'आयुषे त्वपत्योः' इति सलोपः । वर्चसे ब्रह्मवर्चसाय रूपविशेषाय । § देव.

( २ ) 'उष्णाश्च शीताश्च ...... आर्द्रदानवः' इति च 'वर्चसे' इत्यन्ता( ? न्तेना )नुमन्त्रितोदकेन कुमारस्य केशान् क्लेदयेत् । 'उन्दतीरिहैनमवत' इत्येव प्रयोगः । ब्राह्म.

**दक्षिणे केशान्ते 'ओषधे त्रायस्व' इति दर्भमन्तर्धाय 'स्वधिते' इति क्षुरेणाभिनिधाय 'येनावपत् सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् । तेन ब्रह्माणो वपतेदमस्याऽऽयुष्मा जरदष्टिर्यथाऽसदयमसौ ॥ येन धाता बृहस्पतेरग्नेरिन्द्रस्य चाऽऽयुषेऽवपत् । तेनास्याऽऽयुषे वप सुश्लोक्याय स्वस्तये ॥ येन पूषा प्रजापतेरग्नेः सूर्यस्य चाऽऽयुषेऽवपत् । तेनास्याऽऽयुषे वप सुश्लोक्याय स्वस्तये ॥ येन भूयश्च रात्र्यां ज्योक्पश्या च सूर्यम् । तेनास्याऽऽयुषे वप सुश्लोक्याय स्वस्तये ॥' इति प्रदक्षिणं प्रतिदिशं प्रतिमन्त्रं दर्भक्षुरकर्म ॥**

( १ ) शिरसो दक्षिणे भागे 'ओषधे त्रायस्वैनम्' इति मन्त्रेण दर्भमन्तर्धाय 'स्वधिते मैनं हिंसीः' इत्यनेन क्षुरेण अभिनिधाय अवष्टभ्य सदर्भान् केशान् 'येनावपत्' इत्यादिभिश्चतसृभिरनुष्टुब्भिर्दक्षिणभागादारभ्य प्रदक्षिणं यथा भवति तथा प्रतिदिशं प्रतिमन्त्रं दर्भक्षुरकर्म कर्तव्यमृत्विजा । आद्यया दक्षिणे भागे, द्वितीयया पश्चिमे भागे, तृतीययोत्तरस्मिन्, चतुर्थ्यां त्वग्रे ।

हे ओषधे, एनं माणवकं त्रायस्व गोपाय । हे स्वधिते क्षुर, एनं माणवकं मा हिंसीः । 'येनावपत्०' — येन क्षुरेण सविता सोमस्य राज्ञो वरुणस्य अपवत् उप्तवान् शिरः, तेन हे ब्रह्माणः, अद्य अस्मिन्नहनि वपत मुण्डयत इदं बालकस्यास्य शिरः । कीदृशः सविता ? विद्वान् जानन् । तथा वपत यथाऽयं बाल आयुष्मान् दीर्घायुः जराम् अश्नुते व्याप्नोति जरदष्टिश्चासौ भवति । असाविति नामविशेषो लक्ष्यते । 'येन धाता॰' — येन क्षुरेण प्रजापतिः बृहस्पतेः अग्नेरिन्द्रस्य च शिर उप्तवान् दीर्घायुत्वाय, तेनैवास्य क्षुरेण बालस्य शिरो

$ आवि॰ ब्राह्मगतम् ।

§ आवि. देवगतम् ।

वप दीर्घायुत्वाय च सुश्लोकत्वाय कीर्तये तथा स्वस्तये अविनाशाय। 'येन पूषा' इत्यनन्तरव्याख्यया गतार्थः। 'येन भूयश्च रात्र्यां ज्योक्पश्या च सूर्यम्' – येन क्षुरेण रात्रिः सूर्यमवपत् भूयः पुनः पुनः। ज्योक् चिरकालम्। पश्यतीति पश्या। ज्योक्पश्या बहुदर्शना रात्रिः। तेनेत्यादि समानम्। देव.

(२) ततो दक्षिणतः शिरसि प्रागग्रं दर्भं केशान्तर्हितम् 'ओषधे त्रायस्वैनम्' इति निदधाति। 'स्वधिते' इति केशेषूपरि क्षुरं प्रागग्रमेव। 'येनावपत्' इति किंचिन्मात्रं वपति। असौशब्दस्थाने कुमारस्य प्रथमान्तं नाम। यथा 'वरदष्टिर्यथाऽसदयं विष्णुशर्मा'। प्रपततः 'मा ते केशाननुगात्' इति सुहृत् परिगृह्णाति। ततः पश्चार्धे एवमेव दर्भक्षुरौ उदगग्रौ निधाय 'येन धाता' इति वपेत्। उत्तरतश्चैवं प्रागग्रौ दर्भक्षुरौ निधाय 'येन पूषा' इति वपेत्। पूर्वार्धे एवमेवोदगग्रौ निधाय 'येन भूयश्च' इति क्षुरकर्म। ब्राह्म.

(३) दक्षिणे केशान्ते दक्षिणतः केशमूले। 'ओषधे त्रायस्वैनम्' इति दर्भमन्तर्धाय विविच्य केशान्। 'स्वधिते' इति क्षुरेणाभिनिधाय दर्भम्। $ आवि.

**'यत्क्षुरेण वर्तयता सुपेशसा वप्तर्वपसि केशान्। शुन्धि शिरो माऽस्याऽऽयुः प्रमोषीः॥' इति लौहायसं क्षुरं केशवापाय प्रयच्छति॥**

(१) 'यत्क्षुरेण' इत्यादियजुषा नापिताय क्षुरं ददाति। लोहायसमिति शब्दान्तरजातिविशेषस्य संज्ञा नापितप्रसिद्धा। अन्ये तु क्षुरग्रहणेनैव लोहत्वस्य सिद्धत्वात् स्तुत्यर्थं लोहग्रहणमित्याहुः।

यत्क्षुरेण येन क्षुरेण अतितैक्ष्ण्यादिगुणभाजा प्रशस्ततमेनेत्यर्थः। यदिति लुप्ततृतीयैकवचनान्तम्। हे वप्तः मुण्डयितः नापित, येन क्षुरेण केशान् वपसि सुपेशसा सुरूपेण, तेन वर्तयता परिवर्तमानेन अस्य आयुः मा प्रमोषीः मैनं वधीरित्यर्थः। किं तर्हि? शुन्धि शिरोऽस्य शोधय शिरोऽस्य। देव.

(२) एवम् ऋत्विक् मन्त्रवत् कृत्वा नापिताय क्षुरं प्रयच्छति 'यत्क्षुरेण' इति यजुषा। लोहायसम्, न ताम्रायसम्। आवि.

**'मा ते केशाननु गाद्वर्च एतत्तथा धाता दधातु ते। तुभ्यमिन्द्रो बृहस्पतिः सविता वर्च आदधुः॥' इति प्रपततोऽनुमन्त्रयते॥**

(१) अनया पुरस्ताद्बृहत्या केशान् पततोऽनुमन्त्रयते।

तव एतत् प्रसिद्धं रूपादिकं तेजः केशाननु केशानां पश्चात् मा गात्। तथा धाता प्रजापतिः ते तुभ्यं तेजो ददातु। तथा तुभ्यमिन्द्रो बृहस्पतिः सविता वर्चो रूपविशेषादिकम् आदधुः ददतु। देव.

(२) 'मा ते केशान्' इति प्रपततः केशान् कुमारमीक्षमाणो जपति। ब्राह्म.

**सुहृत्परिग्राह्यानुप्यमानान् हरितगोमये समवचिनोति॥**

(१) सुहृदेव पतन्तः केशा ग्राह्या इति नियमः। तानुप्यमानान् मुण्ड्यमानान् पततः हरितगोमये समवचिनोति सम्यगवचिनोति प्रतीच्छति। हरितगोमये संमिश्रीकृत्य पिण्डीकरोतीति क्वचिदाचारः। § देव.

(२) सुहृत् तानार्द्रगोमये एकीकृत्य स्थापयति। ब्राह्म.

**'उप्त्वाय राज्ञो वरुणस्य केशान् सोमो धाता सविता विष्णुरग्निः। तेभ्यो निधानं बहुधाऽन्वविन्दन्नन्तरा द्यावापृथिवी अपस्युः॥' इति प्रागुदीचीं ह्रियमाणाननुमन्त्रयते॥**

अनया वैश्वदेव्या त्रिष्टुभा मित्रेण प्रागुदीचीं दिशं नीयमानान् केशाननुमन्त्रयते कर्ता।

उप्त्वाय उप्त्वा मुण्डयित्वा वरुणस्य राज्ञः संबन्धिनः केशान् तेभ्यः तदर्थं यन्निधानं स्थानं तत् बहुधा

---

$ शेषं देवगतं ब्राह्मगतं च।

§ आवि. देवगतं ब्राह्मवच्च।

अन्वविन्दन् ज्ञातवन्तः । कुत्र ? द्यावापृथिव्योरन्तरा-(ले ?) मध्ये । के ते ? सोमः चन्द्रः, धाता प्रजापतिः, सविता आदित्यः, विष्णुः अग्निः । अवस्युरिति प्रत्येकमभिसंबध्यते । अवनम् अवः रक्षणम् । अवनमिच्छति, 'सुप आत्मनः क्यच्' । 'क्याच्छन्दसि' इति उप्रत्ययः । अवनकाम इत्यर्थः । ¶ देव.

**अरिक्ते पर्याश्लेषयत इति श्रुतिः ॥**

( १ ) अरिक्ते दूर्वालतावनस्पतिप्रभृतौ शीतप्रदेशे समाश्लेषयते केशान् मित्रमिति श्रुत्या प्रतिपादितम् । श्रुतिमूलमेतत् कर्मेति प्रदर्शितम् 'यत्र बाणा निष्पतन्ति कुमारा विशिखा इव' इत्यादिना । देव.

( २ ) तानूषरे लतादिबहुले शुचौ देशे वलित्वा सुहृत् स्थापयति । आज्येनाऽऽग्नेय्या वैश्वदेव्या वा प्रधानम् । ब्राह्म.

( ३ ) अरिक्ते पर्याश्लेषयते । सुहृदोऽयमुपदेशो यदरिक्तसमाश्लेषणम् । इह चाङ्गानां दर्शनात् प्रधानस्य चादर्शनात् 'देवताऽप्रज्ञायमाना आग्नेय्या यजेत् वैश्वदेव्या वा' ( काग्. ७३।३ ) । सत्यपि विकल्पे वैश्वदेव्या युक्तम्, धातृप्रभृतीनां प्रदर्शनात् । एवंविधानात् स्विष्टकृदाज्येनापि भवत्युभयार्थत्वात्( ? ) । आवि.

**कर्त्रे वरं ददाति ॥**

( १ ) ऋत्विजे वरं दक्षिणां यथाशक्ति ददाति यजमानः । चतुर्वर्षा गौर्दक्षिणा अत्रेत्याहुः । देव.

( २ ) स्विष्टकृति हुते होमकर्त्रे वरदानम् । ब्राह्म.

( ३ ) पष्ठौही चतुर्वर्षा गौर्वर इत्युच्यते । आवि.

**पक्ष्मगुणं तिलपेशलं केशवापाय प्रयच्छति ॥**

( १ ) सूक्ष्मैरूर्णागुणैर्वेष्टितं तिलपात्रं नापिताय ददाति । देव.

( २ ) संस्थिते केशग्रथनयोग्यं नीललोहितादिसूत्रं कौमारं तिलमाषकृसरं च नापिताय प्रयच्छति । ब्राह्म.

( ३ ) पक्ष्मगुणम् और्णगुणवेष्टितं तिलपूर्णं शरावं च केशवापाय नापिताय प्रयच्छतीत्याख्यातनिर्देशः, न तु लिघौ लिङौ( ? विधौ लिङ् ) । तस्मात्तावं ददाति वत्स्यः( ? विवत्स्यात् ) तेनात्राप्पूर्वं दानं न भवति । ददातिसादृश्यात् पात्राय चतुर्थी । आवि.

**सर्पिष्मदन्नं ब्राह्मणान् भोजयेत् ॥**

( १ ) गतार्थम् । चूडाकरणेऽग्निनिर्देशात् प्रधानानभिधानात् प्रधानमाज्येनाऽऽग्नेय्या वैश्वदेव्या वा कर्तव्यमित्याहुः । यद्वा 'उपसमाधाय' इत्यनेनाऽऽज्यभागान्तर( २ ? ) मुक्तं तदेव प्रधानम् । येषां त्वग्निसंस्कारमात्रमुपसमाधानं तेषां पूर्वं प्रधानम् । देव.

( २ ) घृतबहुलं ब्राह्मणानाशयेत् । ब्राह्म.

( ३ ) केचित् 'यथोक्तमुपसमाधाय' इत्येतदाज्यभागान्तं व्याचक्षते । जयप्रभृतिभिर्जुहोति । पुनर्यथादिहोमः । जयादीनेव प्रधानं मन्यन्ते । ते प्रष्टव्याः । उपसमाधानशब्देन आज्यभागान्तत्वं सिद्धम् । तैर्देवताऽप्रज्ञायमानेत्यस्य विषयो वक्तव्यः । दक्षिणाग्नेरेकोल्मुकमुपसमाधायेत्याज्यभागान्तं प्राप्नोति । तस्मात् उपसमाधानशब्देन अग्नेर्योग्यताकरणमुच्यते । समाधानं तावत् स्थापनम् । तत्समीपे अन्यस्य होमसाधनसंज्ञं क्रियते इत्युपशब्दार्थः । यथोक्तशब्देन सेतिकर्तव्यताकं समन्त्रकमुच्यते । अग्नेर्लक्षणसमाधानमारभ्य यावदाज्येनेक्षणमुपसमाधानम् । 'जयप्रभृतिभिर्हुत्वा' इत्यनेन तन्त्रमुपलक्षयति । प्रभृतिशब्दो व्यस्त(न)मुपलक्षयति गुरुसूत्रकरणात् । तस्मात् यथैवास्माभिर्व्याख्यातं तथैव साधीयः । आवि.

## वाराहगृह्यसूत्रम्

होमः, कर्त्रा नापितेन च केशानां वपनम्, शिखाकरणम्, केशनिधानम्, कर्त्रे नापिताय च वरादिदानम्, मातुर्नियमाः, अर्थसिद्धिवाचनम्

**'अग्निमुपसमाधाय परिसमुह्य पर्युक्ष्य परिस्तीर्य दक्षिणतोऽग्नेर्ब्राह्मणमुपवेश्योत्तरत उदक-**

¶ ब्राह्म. देवगतम् ।

(१) वागृ. ४.

पात्रं शमीशमकवत् । अथैनम(? द)भिमन्त्रयते– 'हिरण्यवर्णाः शुचयः' इति चतसृभिः, 'या ओषधयः' इत्यनुवाकेन, 'शं नो देवीरभिष्टये' इति, 'शं न आपो धन्वन्याः' इति द्वाभ्यामिति च । तासामुदकार्थान्कुर्वीत पर्युक्षणेऽभ्युन्दने स्नापने च । आज्यं संस्कृत्य ब्राह्मणमामन्त्र्य समिधमाधायाऽऽघारावाघार्याऽऽज्यभागौ हुत्वा 'अग्न आयूंषि पवसे' इति सप्तभिः सप्त जुहुयात् । 'आयुर्दा देव' इति च । 'ये केशिनः प्रथमे सत्रमासत येभिरावृतं यदिदं विराजति । तेभ्यो जुहोम्यायुषे दीर्घायुत्वाय स्वस्तये ॥' इति व्याहृतिभिश्चोक्तः कर्मान्तः पूर्वेण । 'शीतेन वा उदकेन' इति 'उष्णेन वा उदकेन' इति तप्ता इतराभिः संसृज्य 'आर्द्रदानवः स्थ जीवदानवः स्थोन्दतीषमावद' इत्यपोऽभिमन्त्र्य 'अदितिः केशान्वपत्वाप उन्दन्तु जीवसे । दीर्घायुत्वाय स्वस्तये ॥' इति दक्षिणं केशान्तमभ्युन्दति । 'ओषधे त्रायस्वैनम्' इति दक्षिणसिम्केशान्त ऊर्ध्वाग्रं दर्भमन्तर्दधाति । 'स्वधिते मैनं हिंसीः' क्षुरेणाभिनिदधाति । 'येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् । तेन ब्रह्माणो वपतेदमस्याऽऽयुष्मानयं जरदष्टिर्यथाऽसदहमसौ' इति प्रवपति । दक्षिणतो माताऽन्या वाऽविधवाऽऽनडुहेन गोमयेनाऽऽभूमिगतान्केशान्परिगृह्णीयात् । 'मा ते केशाननुगाद्वर्च एतत्तथा धाता दधातु ते । तुभ्यमिन्द्रो वरुणो बृहस्पतिः सविता वर्च आदधुः ॥' इति प्रवपतोऽनुमन्त्रयते । तेन धर्मेण पुनरपोऽभिमन्त्र्यापरं केशान्तमभ्युन्द्यात् । उत्तरं च । अन्यौ तु प्रवपनौ । 'येन पूषा बृहस्पतेरग्नेरिन्द्रस्य चाऽऽयुषेऽवपत् । तेन ते वपाम्यायुषे दीर्घायुत्वाय स्वस्तये ॥' इति पश्चात् । 'येन भूयश्चरत्ययं ज्योक्च पश्यति सूर्यम् । तेन ते वपाम्यायुषे दीर्घायुत्वाय सुश्लोक्याय सुवर्चसे ॥' इत्युत्तरतः । 'यत्क्षुरेण वर्तयता सुपेशसा वप्तर्वपसि केशान् । शुन्धः(? न्धि) शिरो मुखं माऽस्याऽऽयुः प्रमोषीः ॥' इति लोहायसं क्षुरं केशवापाय प्रयच्छति । यथार्थं केशयत्नान् कुर्वन्ति । ... 'त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषमगस्त्यस्य त्र्यायुषम् । यद्देवानां त्र्यायुषं तन्मे अस्तु शतायुषम् ॥' इति शिरःप्रभृति परिगृह्य गोमयेन केशानुत्तरपूर्वस्यां गृहस्यामुष्यामन्तरा गेहात्पलदं निदध्यात् । अतिरिक्ते वा वपने– 'उप्त्वाय केशान्वरुणस्य राज्ञो बृहस्पतिः सविता विष्णुरिन्द्रः । तेभ्यो निधानं महदन्वविन्दन्नन्तरा द्यावापृथिव्योरवन्युः ॥' इति । कर्त्रे वरं ददाति । पक्ष्मगुणं तिलपिशितं च केशवापाय प्रयच्छति । संवत्सरं माता $नाम्लाय धारयेद्रोषाय माऽश्नीयात् । लवणवर्जम् । विदुषो ब्राह्मणा( न )र्थसिद्धिं वाचयेत् । एवमुत्तरेषु ॥

## आग्निवेश्यगृह्यसूत्रम्

होमः, ब्राह्मणभोजनम्, पुण्याहवाचनम्, केशवपनम्, शिखाकरणम्, केशनिखननम्, दक्षिणादानम्, नापितायौदनदानम्

'अग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा जुहोति– 'इमं मे वरुण, तत्त्वा यामि, त्वं नो अग्ने, स त्वं नो अग्ने, त्वमग्ने अयासि, प्रजापते, यदस्य कर्मणोऽत्यरीरिचम्' इति च । अत्रैके जयाभ्यातानान् राष्ट्रभृत इत्युपजुह्वति । यथा पुरस्ताद्ब्राह्मणानन्नेन परिविष्य 'पुण्याहं स्वस्त्ययनमृद्धिम्' इति वाचयित्वाऽपरेणाग्निं प्राङ्मुखः कुमार उपविशति । उत्तरतो माता ब्रह्मचारी वाऽऽनडुहं शकृत्पिण्डं धारयति येनास्य केशान् प्रतिगृह्णाति । अथोष्णाः शीताभिरपः संसृजति ।

$ अत्र 'न रोषाय धारयेदम्लाय नाश्नीयात्' इति स्यादिति भाति ।

(१) आग्निगृ. २।२।५.

शीतास्वष्णा आनीय 'आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे' इति दक्षिणं गोदानमनक्ति। 'ओषधे त्रायस्वैनम्' (इति) ऊर्ध्वाग्रमोषधीरन्तर्दधाति। 'स्वधिते मैनं हिंसीः' इति क्षुरेणाभिनिदधाति। 'देवश्रूरेतानि प्रवपे' इति प्रवपति। एवमितरान् प्रदक्षिणम्। 'येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान्। तेन ब्रह्माणो वपतेदमस्योर्जेमं रय्या वर्चसा संसृजाथ॥' इति पश्चात्। 'येन पूषा बृहस्पतेरग्नेरिन्द्रस्य चाऽऽयुषेऽवपत्। तेन ते( ? ते )ऽहं वपाम्यसौ॥' इत्युत्तरतः। 'यथा ज्योक् सुमना असाः। ज्योक् च सूर्यं दृशे॥' इति पुरस्तात्। उप्त्वा यथोदितं चौलं कारयति। यथर्षि वा। संन्यस्य केशान् 'यत्र पूषा बृहस्पतिः सविता सोमो अग्निः। तेभ्यो निधानं बहुधा व्यैच्छन्नन्तरा द्यावापृथिवी अपः सुवः॥' इति गोष्ठौदुम्बरे दर्भस्तम्बे वा निखनति योऽस्य रातिर्भवति। यथाश्रद्धं ब्राह्मणाय ददाति। सर्पिष्मन्तमोदनं नापितायं प्रयच्छति॥

## पारस्करगृह्यसूत्रम्

ब्राह्मणभोजनम्, होमः, संस्कारकर्त्रा नापितेन च केशानां वपनम्, शिखाकरणम्, सकेशगोमयपिण्डनिधानम्, वरदानम्

**[1]ब्राह्मणान् भोजयित्वा माता कुमारमादायाऽऽप्लाव्याहते वाससी परिधाप्याङ्क आधाय पश्चादग्नेरुपविशति॥**

(१) माता कुमारमादाय आप्लाव्य स्नापयित्वा अहते वाससी परिधाप्याङ्के कृत्वा पश्चादग्नेरुपविशति। कभा.

(२) आदौ ब्राह्मणान् संभोज्य शिशोर्माता बालं संस्नाप्याहतं वस्त्रयुग्मं परिधाप्य उत्सङ्गे बालमारोप्य स्थापितस्य वह्नेः पश्चात् भर्तुरुत्तरत उपविशति। जभा.

(३) एवं कालमभिधाय कर्माभिधत्ते। चूडाकरणाङ्गतया त्रीन् ब्राह्मणान् भोजयित्वा माता जननी कुमारं पुत्रं चूडाकरणार्हम् आदाय गृहीत्वा आप्लाव्य स्नापयित्वा अहते नवे सकृद्धौते वाससी द्वे वस्त्रे परिधाप्य परिहिते कारयित्वा अन्तरीयोत्तरीयत्वेन, अङ्के उत्सङ्गे आधाय स्थापयित्वा पश्चात् अग्नेः पश्चिमतः उपविशति आस्ते। हभा.

(४) आभ्युदयिकश्राद्धब्राह्मणव्यतिरिक्तान् त्रीन् ब्राह्मणान् भोजयित्वा। § गभा.

(५) तत्र पुण्येऽहनि वैश्वदेवपूर्वकं मातृपूजाभ्युदयिके विधाय चूडाकरणाङ्गतया प्रयोगपूर्वकं (१ पूर्वे) संपन्नेनान्नेन संतर्प्य संस्कारत्रयसंस्कृतायां भुवि लौकिकाग्निं स्थाप्य। $ विभा.

**[1]अन्वारब्ध आज्याहुतीर्हुत्वा प्राशनान्ते शीतास्वप्सु उष्णा आसिञ्चति— 'उष्णेन वाय उदकेनेह्यदिते केशान् वप' इति॥**

(१) इति अनेन मन्त्रेण। कभा.

(२) अन्वारम्भेणैवाऽऽघारादिस्विष्टकृदन्ताश्चतुर्दशाहुतयो हूयन्ते। ता एव हुत्वा शीतासूपकल्पितास्वप्सु उष्णा अप आसिञ्चति पिता 'उष्णेन' इति मन्त्रेण। जभा.

(३) ततोऽन्वारब्धः ब्रह्मणा उपसृष्टः आज्याहुतीः आघारादिस्विष्टकृदन्ताश्चतुर्दश हुत्वा संस्रवप्राशनान्ते शीतासु अप्सु उष्णा अप आसिञ्चति प्रक्षिपति

(१) पागृ. २।१।५ ; निप. २६६ (=) प्याङ्क आ (प्याङ्कमा).

§ शेषं हभावत्।

$ शेषं हभागतम्।

(१) पागृ. २।१।६ ; निप. २६७ (=) प्राश (प्राण).

वक्ष्यमाणमन्त्रेण । अन्वारब्धग्रहणेन नित्याब्याहुतिहोमो नियम्यते । हभा.

( ४ ) कुमारेणान्वारम्भः कार्य इति भर्तृयज्ञमते विशेषः । मन्त्रार्थः– रविकिरणसंबन्धात् अन्तर्गतज्योतिषा वायोरुष्णत्वम् । हे वायो, त्वमप्युष्णोदकेन गृहीतेन कुमारस्य शिरःप्लवनाय एहि । हे अदिते देवमातः, केशान् लक्ष्यीकृत्य केशार्द्रीकरणार्थं शीतोदकमध्ये उष्णोदकं वप क्षिप, अनेकार्थत्वात् धातोः । $ गभा.

( ५ ) ब्रह्मासनादिप्राशनान्ते दक्षिणादानान्त इत्यर्थः । तत्र विशेषः– पात्रासादने शीतोष्णोदके, नवनीतघृतदध्याद्यन्यतमम्, त्रिगुणानि त्रीणि कुशतृणान्येकैकगोदानाय तथा च गोदानत्रयार्थे सप्तविंशतिः, ताम्रखचितः क्षुरः, आनडुहं गोमयम्, नापितश्च, वरश्च । ततः पवित्रकरणादिपर्युक्षणान्ते कुमारान्वारब्ध आघारादिचतुर्दशाहुतीर्हुत्वा संस्रवं प्राश्य दक्षिणां दद्यात् । शीतोदके उष्णोदकासेकः । अस्य परमेष्ठी ऋषिः, प्रतिष्ठा, वाय्वदिती, उदकासेके । केचित्तु– उष्णे शीतोदकासेकः । तन्मते मन्त्राभावः । उष्णेनेति न मन्त्रावयव इत्याहुः । § विभा.

**'अथात्र नवनीतपिण्डं घृतपिण्डं दध्नो वा प्रास्यति ॥**

( १ ) अत्रेति प्रकृतोदकमुच्यते । कभा.

( २ ) अथात्र प्रकृतोदके दध्यादीनामेकतमस्य पिण्डं प्रास्यति प्रक्षिपति । जभा.

( ३ ) अथ उष्णोदकसेकानन्तरम् । प्रास्यति, 'असु क्षेपणे', प्रक्षिपति । ¶ हभा.

( ४ ) अत्र शीतोष्णोदके । विभा.

$ शेषं हभावत् ।

§ शेषं गभागतम् ।

¶ शेषं जभावत् । गभा. हभावत् ।

(१) पागृ. २।१।८; निप. २६७ (=) ( तत्र नवनीतपिण्डं दधिघृतपिण्डं वा प्राश्य ).

**'तत आदाय दक्षिणं गोदानमुन्दति– 'सवित्रा प्रसूता दैव्या आप उन्दन्तु ते तनूं दीर्घायुत्वाय वर्चसे' इति ॥**

( १ ) तत उदकमादाय दक्षिणं गोदानमुन्दति । गोदानशब्देनाङ्गविशेषोऽभिधीयते इति अङ्गमिति शीर्षपार्श्वमुच्यते । उन्दति क्लेदयतीत्यर्थः । तच्च 'सवित्रा प्रसूता ...' इत्यनेन मन्त्रेण । कभा.

( २ ) गोदानं केशसटाम् । † जभा.

( ३ ) ततस्ताभ्योऽद्भ्यश्चुलुकेनैकदेशमादाय दक्षिणं गोदानं शिरसो दक्षिणप्रदेशस्थं गोदानं केशसमूहम् उन्दति आर्द्रं करोतीत्यर्थः । केन मन्त्रेण ? 'सवित्रा प्रसूताः' इत्यादिना 'दीर्घायुत्वाय वर्चसे' इत्यन्तेन । हभा.

( ४ ) ततः तस्मात् यत्र नवनीतादीनामन्यतमपिण्डप्रासनं कृतं तस्मादुदकात् किंचिदुदकमादाय दक्षिणं गोदानं गवि पृथिव्यां दीयते निधीयते स्थाप्यते शयनकाले इति गोदानं दक्षिणकर्णसमीपवर्तिशिरःप्रदेशम् उन्दति, 'उन्दी क्लेदने' क्लेदयति आर्द्रं करोति 'सवित्रा...' इति मन्त्रेण । मन्त्रार्थस्तु– हे कुमार, सवित्रा सूर्येण प्रसूताः जनिताः उत्पादिताः आपः दैव्याः दिविभवाः ते तव तनूं शरीरं चूडालक्षणमङ्गम् उन्दन्तु क्लेदयन्तु । किमर्थम् ? तव दीर्घायुत्वाय चिरंजीवनार्थम्, वर्चसे प्रतापाय । ¶ गभा.

**'त्र्येण्या शलल्या विनीय त्रीणि कुशतरुणान्यन्तर्दधाति– 'ओषधे' इति ॥**

( १ ) त्र्येणी शलली प्रसिद्धा । तथा विनीय केशान् । कभा.

† शेषं कभागतम् ।

¶ विभा. गभागतम् ।

(१) पागृ. २।१।९; निप. २६७ (=) ( आदाय० ) सवित्रा ... वर्चसे ( सवित्रा प्रसूताः ).

(२) पागृ. २।१।१०; निप. २६७ (=) ( त्रेण्या शलल्या विनीय त्रीन् कुशतरूणन्तर्दधाति– 'ओषधे त्रायस्व' इति ).

(२) त्र्येण्या त्रिश्वेतया शलल्या शल्यकपक्ष-कण्टकेन नयनं पृथक्करणं तूष्णीम् । कुशतृणत्रयान्तर्धानम् ‘ओषधे त्रायस्व’ इत्येतावता मन्त्रेण । कभा.

(३) त्र्येण्या त्रिश्वेतया शलल्या शल्यकपक्षक-कण्टकेन विनीय पृथक्कृत्य पूर्वदिनाधिवासितां केश-लतिकाम्, तस्या अन्तः मध्ये अन्तरा त्रीणि त्रिसंख्याकानि कुशतरुणानि दर्भपत्राणि दधाति धारयति ‘ओषधे त्रायस्व’ इति मन्त्रेण। ‡ हभा.

(४) विनीय उन्दितगोदानतृतीयांशं पृथक्कृत्य । ¶ त्रिभा.

**[१]‘शिवो नाम’ इति लोहक्षुरमादाय †‘निवर्त-यामि’ इति प्रवपति– ‘येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् । तेन ब्रह्माणो वपतेदमस्याऽऽयुष्यं जरदष्टिर्यथाऽसत्’ ॥’ इति ॥**

**[१]सकेशानि प्रच्छिद्याऽऽनडुहे गोमयपिण्डे प्रास्यत्युत्तरतो ध्रियमाणे ॥**

(१) ‘शिवो नाम’ इति मन्त्रेण ताम्रमयं क्षुर-मादाय गृहीत्वा ‘निवर्तयामि’ इत्यनेन मन्त्रेण कुश-तरुणेष्वन्तर्हितेषु संलागयति । प्रपूर्वो वपतिः संलागने । ‘येनावपत्सविता क्षुरेण’ इत्यनेन मन्त्रेण सकेशान् प्रच्छिद्य कुशान् । कभा.

(२) ‘येनावपत्’ इति मन्त्रेण सकेशानि कुश-तरुणानि प्रच्छिद्य छित्वा प्रास्यति प्रक्षिपति उत्तरत अग्नेरेव, आनडुहे ध्रियमाणे गोमयपिण्डे । $ कभा.

(३) ततः ‘शिवो नाम’ इत्यनेन मन्त्रेण लोहक्षुरं ताम्रपरिष्कृतमायसं क्षुरम् आदाय गृहीत्वा दक्षिणकरेण ‘निवर्तयामि’ इत्यनेन मन्त्रेण प्रवपति तं क्षुरं कुश-तरुणान्यभिनिदधाति । ‘उपसर्गेण धात्वर्थो बलादन्यत्र नीयते’ इति न्यायात् धातूनामनेकार्थत्वाच्चेत्यत्र प्रपूर्वो वपतिरभिनिधानार्थः । छेदनार्थत्वे तु उत्तरसूत्रविहित-प्रच्छेदनानर्थक्यं प्रसज्येत । ‘येनावपत्’ इति मन्त्रेण केशसहितानि कुशतरुणानि प्रच्छिद्य खण्डयित्वा अग्ने-रुत्तरतो भूभागे ध्रियमाणे स्थाप्यमाने आनडुहे आर्षभे गोमयपिण्डे गोशकृत्पिण्डे प्रास्यति प्रक्षिपति । हभा.

(४) ‘शिवः’ इत्यस्यार्थः– हे क्षुर, यस्त्वं शिवो नामासि शान्तनामा असि भवसि, (यस्य) ते तव स्वधितिः वज्रं पिता, हे भगवन्, तस्मै तुभ्यं नमः । मा मां मा हिंसीः मा विनाशयेति । ‘निवर्तयामि’ इत्यस्यार्थः– निवर्तयामि † मुण्डयामि आयुषे आयुरर्थम्,

---

‡ गभा. हभागतम् ।

¶ शेषं हभागतम् ।

† मन्त्रस्यास्य विनियोगे तदनुरोधेन सूत्रविभागे च कर्कादीनां विश्वनाथस्य चेति मतद्वयं तत्तद्भाष्यात्सुबोधम् । तत्रेदमवधेयम्– आपस्तम्बसूत्रातिरिक्तसर्वयाजुषगृह्यसूत्रेषु सामसूत्रयोश्च उन्दनवपनयोर्मध्ये कुशकेशेषु समन्त्रकं क्षुर-निधानमुक्तम् । तदनुरोधेनैवात्र कर्कादिभी रेणुकारिकायां च वपतिः संलागनपरत्वेन व्याख्यातः स्यात् । कात्यायनश्रौत-सूत्रेऽपि चातुर्मास्यवैश्वदेवपर्वणि ‘दक्षिणं गोदानमुन्दति’ इत्यारभ्य “निवर्तयामि’ इति वपति” (काश्रौ. ५।२।१४–१७) इत्यन्तैरेतत्समानाक्षरैः सूत्रैरुन्दनादिवपनान्तो विधि-रुक्तः । तत्र ‘वपति’ इत्यतः परं पृथक्केशच्छेदनं नोक्त-मिति केशच्छेदनमेव वपनं तत्राभिप्रेतमिति सिद्धम् । कर्का-चार्यैरपि तत्र वपतिः संलागनपरत्वेन न व्याख्यातः । अत्र वपतिः प्रपूर्वकः, श्रौतसूत्रे न तथेति तात्पर्यभेदश्चेत् शब्द-भेदोऽपि संदिग्धः, विश्वनाथेन श्रौतसूत्रवचनेऽपि प्रपूर्वस्यै-वानुवादात् शब्दभेदेऽपि मन्त्रविनियोगविरोधस्य तादवस्थ्या-त्तात्पर्यभेदोऽपि संदिग्धः । अत्रास्माभिर्गृहीत एव विश्व-नाथानुगृहीतः सूत्रविभागो द्वयोरप्यस्मदीयादर्शपुस्तक-योरस्तीति ।

(१) पागृ. २।१।११ ; निप. २६७ (=) कृत्स्न-मन्त्रपाठः.

$ शेषं कभावत् ।

‡ अनेन व्याख्यानेन पूर्वोक्तेन संलागने मन्त्रविनियोगेन मन्त्रलिङ्गविरोध आपन्नः । भाविनि वर्तमानोपचारमाश्रित्य विरोधस्य परिहर्तव्यत्वे तु तथा व्याख्यातुमुचितम् ।

(१) पागृ. २।१।१२ ; निप. २६७ (=) सके-शानि (सकेशान् कुशान्) डुहे गो (डुहगो) (ध्रिय-माणे॰).

अन्नाद्याय अन्नादनाय, प्रजननाय गर्भोत्पत्त्यै, रायस्पोषाय धनस्य पुष्ट्यै, सुप्रजास्त्वाय शोभनापत्यभवनार्थम्, सुवीर्याय शोभनवीर्याय।

अत्र गोमयपिण्डस्य स्थापनं कार्यम्। ततः केशान् प्रच्छिद्य पिण्डे प्रासनम्। अत्र 'केशान् प्रच्छिद्य' इति पाठो दर्शितः कर्कभर्तृयशाभ्याम्। 'सकेशानीति केचित् पठन्ति। तेषां कुशतरुणानीति कुशतरुणविषयं नपुंसक(त्व)म्' इति भर्तृयशेः प्राचीनपाठो दर्शितः। मन्त्रार्थः– हे ब्राह्मणः, येन क्षुरेण तेजोमयेन सविता सूर्यः सोमस्य राज्ञः वरुणस्य च शिरः अवपत् राजसूयदीक्षायै अमुण्डयत् विद्वान् सर्वज्ञः, तेन क्षुरेण अस्य शिशोः इदं शिरः यूयं वपत मुण्डयत। ¶ इदं शिरः अस्य कुमारस्य आयुषे हितम् आयुष्यम् आयुषो भावः सत्ता वा, यथाऽयं कुमारः जरदष्टिः संपूर्णायुः असत् भूयात्। जरामश्नुते व्याप्नोति जरदष्टिः जरद्भावः (वा)।

$ गभा.

(५) 'शिवो नाम' इत्यादिना 'हिंसीः' इत्यन्तेन मन्त्रेण ताम्रयुक्तं क्षुरमादाय 'निवर्तयामि' 'येनावपत्' इति मन्त्राभ्यां प्रवपनम्। काकाक्षिगोलकन्यायेन मन्त्रयोरन्तरे वर्तमानस्य प्रवपतेर्मन्त्रयोरन्वयः। न चोत्तरानर्थक्यशङ्कया पूर्वस्याभिनिधानार्थतेति वाच्यम्, अनर्थत्वात्। न चोपसर्गबलात् तथा धात्वर्थ इति वाच्यम्, कात्यायनपञ्चमाध्यायस्थे 'निवर्तयामीति प्रवपति' इत्यस्मिन् सूत्रे तथैव कल्पनापत्तेः, किंच, इच्छागोचरीभूतार्थस्योपसर्गबललभ्यत्वे एकेनैवानेकार्थलाभात् इतरव्यर्थतापत्तेश्च। नचान्यथानुपपत्त्यैवमिति वाच्यम्, अन्यथोपपत्तेर्दर्शितत्वादिति दिक्। विभा.

**[१]एवं द्विरपरं तूष्णीम्॥**

(१) एवं द्विरपरं कर्म तूष्णीं भवति। कभा.

(२) एवम् एवमेवोन्दनादिकर्म द्विरपरं तूष्णीं मन्त्रान् विना भवति। $ जभा.

(३) एवमेवोक्तरीत्या द्विवारं तूष्णीं मन्त्रं विना उन्दनादि गोमयपिण्डनिधानान्तमपरं दक्षिण एव गोदाने कर्म कुर्यात्। अत्रैवं पदार्थाः– उन्दनम्, केशानां विनयनम्, दर्भतृणान्तर्धानम्, क्षुराभिनिधानम्, सकेशानां छेदनम्, गोमयपिण्डे प्रासनम्। गभा.

(४) एवमेव दक्षिणगोदानस्य द्वितीये तृतीये च तृतीयांशरूपे केशभागे अधिवासनाहनि पृथग्बद्धे क्रमेणापरं वारद्वयमुन्दनकेशविनयनकुशतृणान्तर्धानसतृणकेशप्रच्छेदनोदगवस्थितानडुहगोमयपिण्डप्रक्षेपान्तं तूष्णीं कुर्यादित्यर्थः। जातत्वात् क्षुरादाननिवृत्तिः। विभा.

**[१]इतरयोश्चोन्दनादि॥**

(१) इतरयोश्च गोदानयोः उन्दनाद्येव कर्म भवति सकृत् मन्त्रेण द्विस्तूष्णीम्। कभा.

(२) इतरयोश्च पश्चिमोत्तरयोर्गोदानयोरुन्दनादि, चकारादेवमेव सकृन्मन्त्रेण द्विस्तूष्णीम्। † जभा.

(३) उन्दनादि क्लेदनादि। ¶ हभा.

(४) तत्र पूर्वं पश्चिमगोदाने कृत्वा तत उत्तरगोदाने कार्यम्, 'अथ पश्चादथोत्तरतः' इति सूत्रकारप्रस्थानाच्च प्रादक्षिण्यानुग्रहाच्च। क्षुरादानं तु मन्त्रेण पुनर्न भवति, मन्त्रेण सकृद् गृहीतत्वात्। § गभा.

**[२]अथ पश्चात् 'त्र्यायुषम्' इति॥**

(१) 'त्र्यायुषम्' इति छेदनमन्त्रः। कभा.

(२) अथ पश्चात् पश्चिमगोदाने 'त्र्यायुषम्' इति छेदने मन्त्रभेदः। जभा.

---

¶ आयुष्यजरदष्टिशब्दौ शिरःकुमारयोः समानाधिकरणविशेषणे इत्येकः पक्षः, भावप्रधानौ इत्यपरः पक्ष इति ग्रन्थोऽयं संगमनीयः।

$ शेषं हभावत्।

(१) पागृ. २।१।१३; निप. २६७ (=) तूष्णीम् + (इति).

$ हभा. जभावत्।

† विभा. जभावत्।

¶ शेषं जभावत्।

§ शेषं हभागतम्।

(१) पागृ. २।१।१४; निप. २६७ (=).

(२) पागृ. २।१।१५; निप. २६७ (=) (पश्चात् 'कश्यपस्य' इति).

(३) अथ दक्षिणगोदानस्य त्रिरुन्दनादिप्रच्छेदनानन्तरं पश्चात् गोदाने विशेषमाह– त्र्यायुषमिति । 'त्र्यायुषं जमदग्नेः' इत्यादिना मन्त्रेण सकेशानि कुशतरुणानि सकृत् प्रच्छिद्य तूष्णीं द्विः प्रच्छिद्य गोमयपिण्डे प्रास्यति । हभा.

(४) त्रीण्यायूंषि समाहृतानि बाल्ययौवनस्थविराणीत्येवमेतेषामेवावस्थात्रयव्यापकमायुरस्माकमस्तु इति मन्त्रार्थः । † गभा.

(५) पाश्चात्यगोदाने प्रवपने द्वितीयमन्त्रस्थानापन्नं मन्त्रान्तरमाह– अथ पश्चादिति । विभा.

[1]**अथोत्तरतः– 'येन भूरिश्चरा दिवं ज्योक्च पश्चाद्धि सूर्यम् । तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय सुश्लोक्याय स्वस्तये ॥' इति ॥**

(१) छेदनमन्त्र एव । ¶ कभा.

(२) अथोत्तरतः । अथ अनन्तरम् उत्तरगोदाने उन्दनादिगोमयपिण्डनिधानान्ते विशेषमाह– 'येन भूरिश्चरा' इति । 'स्वस्तये' इत्यन्तेन मन्त्रेण सकृत्केशानां कुशतरुणानां प्रच्छेदनं द्विस्तूष्णीम् । हभा.

(३) मन्त्रार्थस्त्वयम् । येन ब्रह्मणा मन्त्रेण तपसा वा चरणशीलो वायुः ज्योक् चिरम् आकल्पमित्यर्थः । दिवं द्याम् पश्चात् तामनु सूर्यं तमनु विश्वं च चरति । किंभूतः ? भूरिः प्रचुरः । तेन ब्रह्मणा (मन्त्रेण) तपसा वा तन्मन्त्रितक्षुरेण ते तव शिरो वपामि । किमर्थम् ? जीवातवे जीवनहेतवे धर्मार्थम्, जीवनाय आयुषे, सुश्लोक्याय शोभनयशसे, स्वस्तये अविनाशाय । ‡ गभा.

(४) उत्तरगोदानेऽपि 'निवर्तयामि' इति मन्त्रानन्तरं द्वितीयोऽयं प्रवपनमन्त्रः– 'येन भूरिश्चरा दिवम्' इति । विभा.

† शेषं हभागतम् ।

¶ जभा. कभावत् ।

‡ शेषं हभावत् ।

(१) पागृ. २।१।१६ ; निप. २६७ ( = ) अथोत्तर (उत्तर).

[1]**त्रिः क्षुरेण शिरः प्रदक्षिणं परिहरति– ॥**

[2]**'यत्क्षुरेण मज्जयता सुपेशसा वप्त्वा वाऽऽवपति केशाञ्छिन्धि शिरो माऽस्याऽऽयुः प्रमोषीः' ॥**

(१) 'यत्क्षुरेण' इत्यनेन मन्त्रेण । कभा.

(२) त्रिः क्षुरेण क्षुरभ्रामणेन शिरः प्रदक्षिणं त्रिः करोति सकृन्मन्त्रेण द्विस्तूष्णीम् । तत्र मन्त्रः– 'यत्क्षुरेण' इति । ... मज्जयता संस्कुर्वता तथा सुपेशसा शोभयता । वाशब्दश्चार्थे । जभा.

(३) त्रिः त्रीन् वारान् क्षुरेण शिरः मूर्धानं प्रदक्षिणं यथा भवति तथा परिहरति शिरसः समन्तात् प्रदक्षिणं क्षुरं भ्रामयतीत्यर्थः । तत्र मन्त्रमाह– 'यत्क्षुरेण' इत्यादि 'माऽस्याऽऽयुः प्रमोषीः' इत्यन्तम् । † हभा.

(४) त्रिवारं क्षुरभ्रामणेन शिरः मस्तकं परिहरति । दक्षिणकर्णादारभ्य प्रदक्षिणं शिरसः समन्तात् पुनर्दक्षिणकर्णपर्यन्तं 'यत्क्षुरेण' इति मन्त्रेण क्षुरं भ्रामयतीत्यर्थः । सकृन्मन्त्रेण द्विस्तूष्णीं शिरःपरिहरणम् । हे क्षुर, यत् यस्मात् क्षुरेण वप्त्वा मुण्डित्वा आवपति गोमयपिण्डे केशान् क्षिपति । किंभूतेन ? एनं कुमारं मज्जयता संस्कुर्वता तथा सुपेशसा शोभयता । अतोऽस्य केशान् छिन्धि अवखण्डय । शिरो मस्तकं मा छिन्धि मा सव्रणं कुरु । अस्य मा आयुः प्रमोषीः मा अपहर । गभा.

[3]**ताभिरद्भिः शिरः समुद्य नापिताय क्षुरं प्रयच्छति– 'अक्षण्वन् परिवप' इति ॥**

(१) ताभिरेवाद्भिः शिरः समुद्य । उन्दयतिः क्लेदनार्थः । (ततः क्त्वा ।) तस्य क्त्वादनुनासिकलोपः

† विभा. हभागतम् ।

(१) पागृ. २।१।१७; निप. २६७ ( = ) (शिरः ०).

(२) पागृ. २।१।१८ ; निप. २६७ ( = ) प्रमोषीः + (इति).

(३) पागृ. २।१।२० ; निप. २६७ ( – ) ताभि (तावतीभि) अक्षण्वन् प (अक्षुण्वं प).

क्रियते 'समुद्य' इति रूपम् । क्लेदयित्वेत्यर्थः । नापिताय क्षुरं प्रयच्छति 'अक्षण्वन् परिवप' इत्यनेन मन्त्रेण । $कभा.

(२) नापिताय क्षुरं प्रयच्छति पिता, तस्याधिकारित्वावगमात् । ¶जभा.

(३) ताभिः शीतोष्णाभिरद्भिः । नापिताय क्षौरकर्त्रे जातिविशेषाय । ¶ हभा.

(४) उन्दतिः क्लेदनार्थः । तस्य क्त्वान्तत्वादनुनासिकलोपः क्रियते 'समुद्य' इति रूपम् । नापिताय क्षुरं प्रयच्छति मुण्डनार्थं समर्पयति 'अक्षण्वम् परिवप' इति मन्त्रेण । मन्त्रार्थः– हे नापित, त्वमस्य शिरः §अक्षण्वन् क्षतरहितं यथा स्यात्तथा परि समन्तात् वप मुण्डय । ‡गभा.

†[1]यथामङ्गलं केशशेषकरणम् ॥

**अनुगुप्तमेतं सकेशं गोमयपिण्डं निधाय गोष्ठे पल्वल उदकान्ते वाऽऽचार्याय वरं ददाति ॥**

(१) अनुगुप्तं सुगुप्तम् । वरमिति । चूडाकरणे संस्कर्ता स्वाचार्याय । जभा.

(२) अनुगुप्तम् आवृतम् एनं गोमयपिण्डं सकेशं केशैः सहितं निधाय स्थापयित्वा गोष्ठे गवां व्रजे पल्वले अल्पोदके सरसि उदकान्ते वा उदकस्य समीपे वा, स्वकीयाय आचार्याय वरम् आचार्याभिलषितं द्रव्यं ददाति कर्मकर्ता पित्रादिः । हभा.

(३) वरम् अभिलषितद्रव्यम् । अभिलषितद्रव्याभावे 'चतुःकार्षापणो वरः' इति मूल्याध्यायोक्तद्रव्यदानमिति वृद्धाः । § गभा.

(४) अनेन बर्हिर्होमान्ता कर्मसमाप्तिः वरदानेनोपलक्षिता । § विभा.

## गोभिलगृह्यसूत्रम्

अग्न्युपसमाधानम्, संभारोपकल्पनम्, केशवपनविधिः, केशानां गोमये निधानम्, शिखाकरणम्, सगोयमकेशनिखननम्, होमशेषः, दक्षिणादानम्, नापिताय कृसरव्रीह्यादिपात्रदानम्

**[1]पुरस्ताच्छालाया उपलिप्तेऽग्निरुपसमाहितो भवति ॥**

**[2]तत्रैतान्युपक्लृप्तानि भवन्ति ॥**

(१) अत्र (१ तत्र) उपलिप्ते देशे उपक्लृप्तानि अग्निसमीपे आसादितानि । संत. ९२३

(२) तत्र तस्मिन्नुपलिप्ते । एतानि अनुपदवक्ष्यमाणानि उप समीपेऽग्नेः क्लृप्तानि आसादितानि भवन्ति । कर्तुरनियमः । मृदुला.

**[3]एकविंशतिर्दर्भपिञ्जूल्य उष्णोदककंस औदुम्बरः क्षुर आदर्शो वा क्षुरपाणिर्नापित इति दक्षिणतः ॥**

---

$ विभा. कभागतम् ।

¶ शेषं कभागतम् ।

§ 'अक्षण्वन्' इत्ययमेव पाठः प्रायः सर्वत्र दृश्यते, जयरामेणापि शत्रन्तत्वमभिप्रेत्य 'क्षतमकुर्वन्' इति व्याख्यातं च । तथापि गदाधरभाष्ये पूर्वं मन्त्रानुवादे 'अक्षण्वम् परि०' इति मुद्रणात्, गदाधरेण क्रियाविशेषणत्वेन व्याख्यानात्, एकस्मिन् गृह्यसूत्रपुस्तकेऽपि 'अक्षण्वं परि०' इति मुद्रितपाठस्योपलम्भात्, रेणुकारिकायामपि 'अक्षण्वम्' इति पाठदर्शनात्, नित्याचारपद्धतौ 'अक्षुणं परि०' इत्यशुद्धिसंभवेऽपि सानुस्वारमुद्रणाच्च समुत्तिष्ठते संदेहः पाठविषये ।

‡ शेषं कभागतं हभागतं च ।

† अस्य व्याख्यानानि विधिप्रकरणे ( सं. का. पृ. २८९९ ) द्रष्टव्यानि ।

(१) पागृ. २।१।२१–२२.

§ शेषं हभावत् ।

(१) गोगृ. २।९।२; संत. ९२३.

(२) गोगृ. २।९।३; संत. ९२३ तत्रैता ( तत्रैव ता ).

(३) गोगृ. २।९।४; संत. ९२३ शतिर्द (शतिद).

(१) पिञ्जूल्यः पवित्राणि । तानि सप्त सप्त कृत्वा स्थानत्रये स्थाप्यानि । उष्णोदकं कंसमस्मिन् उष्णोदककंसः(?)। उडुम्बरस्यायमौडुम्बरः ताम्रमयः क्षुरः, तदभावे आदर्शः दर्पणम्। दक्षिणतः, अग्नेरिति शेषः। आसादनं च पूर्वस्मिन् पूर्वस्मिन्। संत. ९२३

(२) कानि पुनस्तानि ? कस्यां वा दिश्यग्नेरासादयितव्यानि ? इत्युच्यते— एकविंशतिरिति। दर्भपिञ्जूल्यः पवित्रलक्षणलक्षिताः पूर्वमुक्ताः। ताः सप्त सप्त कृत्वा स्थानत्रये आसादयितव्याः। उष्णमुदकं यस्मिन् स कंसः कांस्यपात्रम्। † उडुम्बरस्ताम्रम्। 'उडुम्बरस्तु देहल्यां वृक्षभेदे च पण्डके। कुष्ठभेदेऽपि च पुमांस्ताम्रे तु स्यान्नपुंसकम्॥' इति मेदिनी। तस्यायमौडुम्बरः, 'प्रोहृत्य-प्रच्छिन्दन्' (गोगृ. २।९।१६) इत्यग्रिमसूत्रे छेदनस्याऽऽशङ्क्यमानत्वात्। नहि काष्ठेन तत्संभवति। तदभावे आदर्शो वा। आसमन्ताद्दृश्यते मुखमत्रेत्यधिकरणे घञ्। आदर्शो दर्पणः। 'आदर्शो दर्पणः प्रोक्तः' इत्यमरमाला, 'दर्पणे मुकुरादर्शौ' इत्यमरश्च। क्षुरेति। क्षुरं पाणौ करे यस्य स तथाविधो नापितः। इति एतानि दक्षिणतः अर्थादग्नेः। मृदुला.

[1]आनडुहगोमयः कृसरः स्थालीपाको वृथापकश्च इत्युत्तरतः॥

(१) आनडुहः वृषजातः। वृथापकः होमानुपयुक्तत्वात् संस्काररहितः। एतदुभयं प्राक्संस्थमुत्तरतः क्लृप्तं भवतीति। संत. ९२३–९२४

(२) आनडुहः अच्छिन्नमुष्कवृषसंबन्धी गोमयः। कृसरश्च असम्यक्पक्वौ तिलतण्डुलौ। 'कृसरस्तु तिलौदनः' इत्यमरः। स्थालीपाकः चरुः। स खल्वयं वृथापकः। अवघातादिसर्वसंस्काररहितः कर्मण्यव्याप्रियमाणश्चेति वृथात्वं पाकस्य। इति एतद्द्वयम् उत्तरतोऽग्नेरासादयितव्यम्। मृदुला.

† अनुपदमेव नपुंसकत्वविधायककोशमुद्धरिष्यता पुंलिङ्गस्य प्रयोग इति चित्रमनवधानम्।

(१) गोगृ. २।९।५ ; संत. ९२३ (आनडुहो गोमयः कृषरस्थालीपाको वृथापक्व इत्युत्तरतः).

[1]व्रीहियवैस्तिलमाषैरिति पृथक्पात्राणि पूरयित्वा पुरस्तादुपनिदध्युः॥

(१) द्वन्द्वद्वयबलात् व्रीहियवैर्मिश्रैः पात्रद्वयं पूरयित्वा पुरस्तात् अग्नेः पुरतः स्थापयेत्। एवं तिलमाषैः। इतिकरणात् एषामलाभेऽन्येनापि पूरणमिति भट्टभाष्यम्। † इत्यादिबहुवचनान्ता गणस्य संसूचका इति अत्र बीजम्। बहुवचनादनियतकर्तृकमासादनम्। संत. ९२४

(२) व्रीहियवैरिति द्वन्द्वनिर्देशेनाभिधानान्मिलिताभ्यां व्रीहियवाभ्याम्, एवं तिलमाषाभ्यां पात्रद्वयं पूरणीयम्। पृथक् पात्राणीति बहुवचननिर्देशाच्चतुर्भिः पृथग्भूतैः पात्रचतुष्टयमित्येवं षट्पात्राणामासादनं सिध्यति। एवमेव वीरपद्धतिस्वरसोऽपि। पुरस्तात् पूर्वस्यां दिश्यग्नेः। उपनिदध्युः स्थापयेयुः। मृदुला.

कृसरो नापिताय सर्वबीजानि चेति॥

(१) निवृत्ते कर्मणि कृषरो व्रीह्यादिपात्राणि च नापिताय देयानि। प्रतिपत्तिस्त्वासादनप्रसङ्गादत्रोक्ता। संत. ९२४

(२) दातव्यानि इति शेषः। इतिना आचार्यकेनान्यदपि पारितोषिकं देयमित्युपदिशति। एतानि च प्रसङ्गादत्राभिहितानि, प्रदानं तु प्रतिपत्तिरूपतयाऽस्य कर्मान्त एव, वेतनदानस्य तदैवोचितत्वादिति भाष्यकारादयः। मृदुला.

अथ माता शुचिना वस्त्रेण कुमारमाच्छाद्य पश्चादग्नेरुदगग्रेषु दर्भेषु प्राच्युपविशति॥

(१) अथ आज्यसंस्कारानन्तरम्। प्राची प्राङ्मुखी। संत. ९२४

(२) अथेत्यानन्तर्यार्थम्। आज्यसंस्कारानन्तरमित्यर्थः। माता मातृस्थानीयाऽन्याऽपि। प्राची प्राङ्मुखी। मृदुला.

† इतिश्च आदिश्च बहुवचनान्तश्चेति द्वन्द्वः।

(१) गोगृ. २।९।६–८ ; संत. ९२४.

'अथ यस्तत्करिष्यन्भवति पश्चात्प्राङ्खतिष्ठते ॥

(१) अथशब्दः किंचित् कर्म स्मारयति । तच्च कर्म 'यथा पाणिग्रहणे तथा चूडाकर्मणि' (गोगृ. १।९।२८) इति वचनात् चूडाकर्मणः पुरस्ताच्चोपरिष्टात् (च) चतस्रो महाव्याहृतयो भवन्तीति भट्टनारायणः । पाणिग्रहणे तु 'महाव्याहृतिभिः पृथक् समस्ताभिश्चतुर्थीम्' (२।१।२५, २६) इति गोभिलदर्शनात् व्यस्तसमस्तमहाव्याहृतिहोम उक्तः । तेन यश्चूडां करोति स व्यस्तसमस्तमहाव्याहृतिहोमानन्तरं गृहीतकुमारायाः पश्चात् प्राङ्मुख ऊर्ध्वस्तिष्ठति । संत. ९२४

(२) अथेति किंचित्पूर्वप्रकृतं स्मारयति । किं तत् ? व्याहृतिभिर्होमम् । तथा च पूर्वसूत्रम् 'व्याहृतिभिर्होमः । यथा पाणिग्रहणे तथा चूडाकरणे' इत्यादि । तेनात्र पुरस्ताच्चोपरिष्टाच्च चतस्र आहुतयो भवन्ति । यः कश्चित्पित्रादिस्तत्कर्म करिष्यन्भवति स महाव्याहृतिभिर्व्यस्तसमस्ताभिश्चतस्र आहुतीर्हुत्वा अथ अनन्तरं गृहीतकुमाराया मातुः पश्चात् प्राङ् प्राङ्मुखः अवतिष्ठते ऊर्ध्वजानुस्तिष्ठेत् । मृदुला.

'अथ जपति– 'आऽयमगात्सविता क्षुरेण' इति सवितारं मनसा ध्यायन्नापितं प्रेक्षमाणः ॥

(१) अथ ऊर्ध्वावस्थानानन्तरमेव 'आऽयमगात्' इति मन्त्रं सवितारं ध्यायन् नापितं चावलोकयन् जपति । संत. ९२४

(२) अथ तथाविधावस्थानानन्तरमेव सवितारं सूर्यं मनसा श्रद्धादिगुणयुक्तेन । अन्यथा ध्यानस्य मानसिकत्वप्रसिद्धेर्मनसेत्यनर्थकं स्यात् । तथा च न्यायः– 'सिद्धस्योपन्यासो विशेषावगतिकरः' इति । ध्यायन् चिन्तयन् नापितं क्षुरपाणिं प्रेक्षमाणः अवलोकयन् 'आऽयमगात्' इत्येतन्मन्त्रं जपति जपेत् । मन्त्रार्थस्तु– हे कुमार, अयं नापितः साक्षात्सविता सर्वभूतानां प्रसविता देवः सूर्यः क्षुरेण उपलक्षितः आगात् आगतः त्वच्चूडाकरणाय । मृदुला.

'उष्णेन वाय उदकेनैधि' इति वायुं मनसा ध्यायन्नुष्णोदककंसं प्रेक्षमाणः ॥

(१) वायुं ध्यायन् उष्णोदकपूर्णं कंसपात्रं चावलोकयन् 'उष्णेन वायो' इति मन्त्रं जपेत् । संत. ९२४

(२) जपतीत्यनुवर्तते । वायुं श्रद्धापूतेन मनसा चिन्तयन् उष्णोदककंसम् उष्णोदकयुक्तं कांस्यपात्रं प्रेक्षमाणः अवलोकयन् 'उष्णेन वायो०' इति इमं मन्त्रं जपेदित्यर्थः । मन्त्रार्थस्तु– हे वायो, उष्णेनोदकेन गृहीतेन कुमारस्य शिरः प्लावयितुम् एधि आगच्छ । मृदुला.

'दक्षिणेन पाणिनाऽप आदाय दक्षिणां कपुष्णिकामुन्दति– 'आप उन्दन्तु जीवसे' इति ॥

(१) कंसपात्राद्दक्षिणेन पाणिना अप आदाय कुमारस्य दक्षिणकपुष्णिकाम् उन्दयति क्लेदयति । कं शिरः शीतातपादिरक्षणेन पुष्णाति इति कपुष्णिका शिरस उभयपार्श्वस्थकेशजूटिका उच्यते । उक्तं च– 'कपुष्णिकाऽभितः केशा मूर्ध्नि पश्चात् कपुच्छलम् ।' इति । संत. ९२५

(२) अपः प्रकृतादुष्णोदककांस्यपात्रात् आदाय गृहीत्वा कपुष्णिकां मूर्ध्नोभयतः केशान्, 'कपुष्णिकाऽभितः केशा मूर्ध्नि पश्चात्कपुच्छलम् ।' इति छन्दोगपरिशिष्टात्, उन्दति उन्दयति क्लेदयति । क्वचित्तथैव पाठः । अत्र करणमन्त्रमाह– आप इति । अस्यार्थः– वायुना आनीता आपः एनं कुमारं जीवसे जीवितुं जीवनायास्य (उन्दन्तु) । मृदुला.

''विष्णोर्दंष्ट्रोऽसि' इत्यौदुम्बरं क्षुरं प्रेक्षत आदर्शं वा ॥

(१) गोगृ. २।९।९ ; संत. ९२४ प्राङ्व (प्राङ्मुखोऽव).

(२) गोगृ. २।९।१०–११ ; संत. ९२४.

(१) गोगृ. २।९।१२ ; संत. ९२४–९२५ मुन्द (मुन्दय).

(२) गोगृ. २।९।१३ ; संत. ९२५ क्षत (क्षेत).

(१) औदुम्बरं ताम्रम्, तदलाभे दर्पणं पश्येत् 'विष्णोर्दंष्ट्रोऽसि' इति मन्त्रेण ।　　संत. ९२५

(२) औदुम्बरं ताम्रमयम् । 'औदुम्बरं भवेत्ताम्रं फलादौ यज्ञशाखिनः ।' इत्यमरः । प्रेक्षते अवलोकयति । अवलोकयेदिति विधिरत्र लेडर्थः । एवमग्रेऽपि । मन्त्रार्थस्तु— हे क्षुर, त्वं विष्णोः दंष्ट्रः दंष्ट्रा बृहद्दन्तः असि भवसि ।　　मृदुला.

**[1] 'ओषधे त्रायस्वैनम्' इति सप्त दर्भपिञ्जलीर्दक्षिणायां कपुष्णिकायामभिशिरोग्रा निदधाति ॥**

(१) आसादितदर्भपिञ्जलीमध्यात् सप्तपिञ्जलीर्गृहीत्वा दक्षिणायां कपुष्णिकायाम् 'ओषधे त्रायस्वैनम्' इति मन्त्रेण स्थापयति । अभिशिरोग्राः शिरसोऽभिमुखाग्राः ऊर्ध्वमूलाधोग्रा इत्यर्थः ।　　संत. ९२५

(२) आसादितानामेकविंशतिदर्भपिञ्जलीनां सप्तशः पृथक् पृथक् स्थापितानां मध्यात् सप्त दर्भपिञ्जलीर्गृहीत्वा कुमारस्य दक्षिणायां कपुष्णिकायां जूटिकायाम् 'ओषधे त्रायस्वैनम्' इति मन्त्रेण निदधाति स्थापयेत् । कथम्? अभिशिरोग्राः । शिरसोऽभीत्यभिशिरः । अव्ययीभावः समासः । अग्राणि यासां तास्तथाविधाः । कृत्वेति शेषः । मन्त्रार्थस्तु— हे ओषधे कुशतरुण, ओषध्यधिष्ठातृदेवते, एनं कुमारं त्रायस्व रक्ष ।

मृदुला.

**[2] ता वामेन पाणिना निगृह्य दक्षिणेन पाणिनौदुम्बरं क्षुरं गृहीत्वाऽऽदर्शं वाऽभिनिदधाति— 'स्वधिते मैनं हिंसीः' इति ॥**

(१) निदधाति संलग्नं धारयति ।　　संत. ९२५

(२) ताः दर्भपिञ्जलीर्दक्षिणकपुष्णिकां च निगृह्य सर्वतोभावेन गृहीत्वा अभिनिदधाति संलग्नां (? ग्नम्, ? ग्नाः) धारयति 'स्वधिते मैनं हिंसीः' इति मन्त्रेण । मन्त्रार्थस्तु— स्वधिते हे ताम्रक्षुर, त्वम् एनं कुमारं मा हिंसीः न हिंसिष्यसि ।　　मृदुला.

**[1] 'येन पूषा बृहस्पतेः' इति त्रिः प्राञ्चं प्रोह्त्यप्रच्छिन्दन्त्सकृद्यजुषा द्विस्तूष्णीम् ॥**

(१) 'येन पूषा' इत्यनेन मन्त्रेण वारत्रयं प्राञ्चं प्राग्गतं क्षुरं कपुष्णिकादेशे प्रोहति प्रेरयति अप्रच्छिन्दन् केशच्छेदमकुर्वन् एकवारं मन्त्रेण वारद्वयं तूष्णीम् । अप्रच्छिन्दन्निति क्षुरपक्षे ।　　संत. ९२५

(२) विधाय च त्रिः वारत्रयं प्रोहति प्रेरयति क्षुरम् अप्रच्छिन्दन् केशच्छेदमकुर्वन् । क्वचिदविच्छिन्दन् इति पाठः । अर्थतस्तौल्यमेव । तत्र प्रकारमाह— सकृदिति । यजुषा 'येन' इत्युक्तेनैव । द्विः द्विवारं तूष्णीम् अमन्त्रकमेव । यजुर्यथा— 'येन पूषा बृहस्पतेर्वायोरिन्द्रस्य चावपत् । तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय दीर्घायुष्ट्वाय बलाय वर्चसे ॥' इति । अस्यार्थः— हे कुमार, येन स्वधितिना पूषा देवः बृहस्पतेर्वायोरिन्द्रस्य च कपुष्णिकाम् अवपत् भद्रं कृतवान्, तेन स्वधितिना ते तव कपुष्णिकां वपामि भद्रं करोमि । किमर्थम्? जीवातवे । एतदेव विवृणोति— जीवनाय । अस्यैवार्थः— दीर्घायुष्ट्वाय बलायेति । वर्चसे तेजोवृद्ध्यर्थमिति ।

मृदुला.

**अथाऽऽयसेन प्रच्छिद्याऽऽनडुहे गोमये निदधाति ॥**

(१) अनन्तरं लोहक्षुरेण कपुष्णिकां केशान् दर्भपिञ्जलीसहितान् छित्वा ताभिः सह वृषगोमये निदध्यात् ।

संत. ९२५

(२) अथेति पूर्वप्रकृतार्थम् । यः पूर्वं प्रकृतस्क्षुरपाणिर्नापितस्तदीयेन आयसेन लोहमयेन क्षुरेण प्रच्छिद्य प्रकर्षेण पिञ्जलीभिः सहैव दक्षिणां कपुष्णिकां छित्वा आनडुहे गोमये पूर्वमग्रेरुत्तरतः समासादिते निदधाति स्थापयेत् । मन्त्रानुपदेशादमन्त्रकमेव ।　　मृदुला.

---

(१) गोगृ. २।९।१४; संत. ९२५.

(२) गोगृ. २।९।१५; संत. ९२५ (ता वामेनाभिगृह्य दक्षिणपाणिना औदुम्बरं क्षुरं गृहीत्वाऽऽदर्शं वा निदधाति).

(१) गोगृ. २।९।१६–२१, २४; संत. ९२५–९२६.

**एतयैवाऽऽवृता कपुच्छलम् ॥**

( १ ) अनयैव आवृता परिपाट्या कपुच्छलं संस्कुर्यात् । अवटस्योपरि उन्नतशिरोवयवः कपुच्छलम् । संत. ९२५

( २ ) अतिदिशति– एतयैवेति । अनन्तरोक्तयैव आवृता परिपाट्या कपुच्छलम् । संस्कुर्यादिति शेषः । कपुच्छलं तु शिरःपश्चाद्भागस्थाः केशाः, उक्तवचनात् । के शिरसि पुच्छवल्लम्बितो यः केशपाशः स कपुच्छल इत्याख्यायते । मृदुला.

**एतयैवोत्तरां कपुष्णिकाम् ॥**

( १ ) एतया प्रक्रियया वामां कपुष्णिकां छिन्द्यात् । संत. ९२५

( २ ) पुनरतिदिशति-- एतयेति । उत्तरशब्दो वामवचनः । वामामपि कपुष्णिकामेतयैव प्रक्रियया संस्कुर्यादित्यर्थः । मृदुला.

**उन्दनप्रभृति त्वेवाभिनिर्वर्तयेत् ॥**

( १ ) क्लेदनादि कर्म पुनः कुर्यात् । 'उन्दी क्लेदने'। संत. ९२५

( २ ) अत्रापि विशेषमाह– उन्दनप्रभृतीति । प्राक्तनं सूत्रद्वयमनेन विशिष्यते । उन्दनप्रभृति क्लेदनप्रभृत्येवाऽऽवृतम् अभि सर्वतोभावेन निर्वर्तयेत् आवर्तयेत्, न पुनः सर्वाऽप्यावृदावर्तनीया । तस्मात् 'दक्षिणेन पाणिनाऽप आदाय' इत्येवमादिकामावृतमावर्तयेत्, न ततः पूर्वामपीत्यर्थः । तुशब्दो विशेषणार्थः । कथं नाम ? कपुच्छले संस्क्रियमाणे कुमारमुदङ्मुखं धारयेद्यथा प्राञ्चं प्रोहणादिकं कर्तुं शक्येतेति । मृदुला.

**उभाभ्यां पाणिभ्यां मूर्धानं परिगृह्य जपेत् –'त्र्यायुषं जमदग्नेः' इति ॥**

( १ ) मूर्धानं कुमारस्य । संत. ९२६

( २ ) मूर्धानं मस्तकं कुमारस्य । 'मूर्धा ना मस्तकोऽस्त्रियाम्' इत्यमरः । ऋज्वन्यत् । मन्त्रस्तु– 'त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषमगस्त्यस्य त्र्यायुषम् । यद्देवानां त्र्यायुषं तत्ते अस्तु त्र्यायुषम् ॥' इति । अस्यार्थः– जमदग्नेर्महर्षेर्ऋचीकपुत्रकस्य कश्यपस्य अगस्त्यस्य देवानाम् इन्द्रादीनां च यत् त्र्यायुषं त्रीण्यायूंषि समाहृतानीति । समाहारद्वन्द्वे 'अचतुर' (पा. ५।४।७७ ) इत्यादिनाऽच् समासान्तः । बालयुवस्थविरत्वानि । यद्वा 'शतं वै पुरुषस्याऽऽयुः' इति श्रुतेः शतत्रयवर्षात्मकमायुः तत् त्र्यायुषम् । हे भद्रक कृतचूड, तव अस्तु भवतु इत्याशास्यते । मृदुला.

**उदगग्नेरुत्सृप्य कुशलीकारयन्ति यथागोत्रकुलकल्पम् ॥**

( १ ) उदक् उत्तरत उत्सृप्य गत्वा कुमारं कुशलीकारयन्ति नापितहस्तेन मुण्डयन्ति यथा गोत्रकुलाचारस्तथा । संत. ९२६

( २ ) अग्नेः उदक् उत्तरतः उत्सृप्य गत्वा कुशलीकारयन्ति नापितेन मुण्डयन्ति । कुमारमिति शेषः । कर्तुरनियमः । कुशलभद्रशब्दयोः पर्यायपाठात् कुशलीकरणं भद्राकरणमित्यनर्थान्तरम् । तथा चामरः– 'क्षौरं तु भद्राकरणं मुण्डनं वपनं त्रिषु । ' इति । कथमित्यपेक्षायामाह-- यथेति । गोत्रे यथा– 'वासिष्ठाः पञ्चचूडाः स्युस्त्रिचूडाः कुण्डपायिनः । ' इत्यादि । कुले यथा– 'भद्रादित्यानां सूर्याद्यायतनसंनिधौ' इति । कल्पे यथा– 'सशिखं कौथुमादीनां वपनं समुदाहृतम् । ' इत्यादि । एवं च कौथुमवारायणादीनां समावर्तनात्प्राङ्मुण्डनं सशिखमेवेति । तथा च समावर्तनान्ते– 'केशश्मश्रुलोमनखानि वापयति शिखावर्जम्' ( गोगृ. ३।४।३४ ) इति सूत्रम् । परिशिष्टमपि– 'सशिखं वपनं कार्यमा स्नानाद्ब्रह्मचारिणाम् । आशरीरविमोक्षाय ब्रह्मचर्ये न चेद्भवेत् ॥' इति । भाष्यकृतः– 'आशरीरेति । नैष्ठिकब्रह्मचारिणां स्नानात्प्रागपि शिखा धर्तव्येत्यर्थः । ' । मृदुला.

**'आनडुहे गोमये केशान्कृत्वाऽरण्यं हृत्वा निखनन्ति ॥**

(१) गोगृ. २।९।२५; संत. ९२६ ण्यं हृत्वा ( ण्ये गत्वा ).

(१) वृषगोमये सर्वान् केशान् अवस्थाप्यारण्यं नीत्वा निखनन्ति । बहुवचनादनियतकर्तृकत्वम् ।

संत. ९२६

(२) पूर्वमासादिते आनडुहे गोमये समस्तान् केशान् कृत्वा निधाय अरण्यं हृत्वा नीत्वा तत्रैव निखनन्ति । बहुवचनादनियतः कर्ता । मृदुला.

'स्तम्बे हैके निदधति ॥

(१) ह इति निपातः । एके आचार्या व्रीहियवादिस्तम्बे निदधति तान् केशान् प्रक्षिपन्तीत्यर्थः ।

संत. ९२६

(२) हेत्यैतिह्यार्थो निपातः । एके किलाऽऽचार्याः व्रीहियवादिस्तम्बे तान् केशान् निखनन्ति । मृदुला.

यथार्थम् ॥

(१) यथार्थमुदीच्यं व्यस्तसमस्तमहाव्याहृतिहोमादि वामदेव्यगानान्तं कर्म समापयेत् । संत. ९२६

(२) तन्त्रसमापनं कर्तव्यमित्यर्थः । अपरे तु मन्यन्ते– यथार्थमिति यस्य येन अर्थः प्रयोजनं स तं कुर्यादिति । कथं नाम ? त्र्यायुषमित्यादिना मूर्धपरिग्रहे कृते उत्तरतोऽग्नेः कुशलीकारयन्ति । अत्रापि कर्मशेषं समापयेदिति चन्द्रकान्तः । मृदुला.

गौर्दक्षिणा ॥

(१) दक्षिणा देया प्रधानकर्मणामित्यर्थः ।

संत. ९२६

(२) चूडाकरणकर्मणः । मृदुला.

## खादिरगृह्यसूत्रम्

संभारस्थापनम् , होमः , केशवपनविधानम् , शिखाकरणम् , केशानां निखननं निधानं वा , दक्षिणादानम्

'तत्र नापित उष्णोदकमादर्शः क्षुरो वौदुम्बरः पिञ्जूल्य इति दक्षिणतः ॥

(१) गोगृ. २।९।२६–२८ ; संत. ९२६.

(२) खागृ. २।३।१७–३३.

नापितः वपनकर्ता आयसक्षुरपाणिः , 'आयसेन प्रच्छिद्य' इति वचनात् । उष्णोदकं कंसपात्रपूर्णम् , आदर्शः क्षुरः औदुम्बरो वा विकल्प्यते, दर्भपिञ्जूल्य एकविंशतिः एतान्यग्नेर्दक्षिणतः स्युः । रुद्रभा.

आनडुहो गोमयः कृसरः स्थालीपाको वृथापक्व इत्युत्तरतः ॥

पुंगवशकृत् , पाकधर्मरहितोऽन्यन्तरघृततिलमिश्रः स्थालीपाकश्चाग्नेरुत्तरतः स्याताम् । रुद्रभा.

माता च कुमारमादाय ॥

पृथङ्निर्देशः कर्तुरुत्तरत उपवेशनार्थः । मातुर्न दर्भासनम् । चकार उत्तरत इत्यस्यानुकर्षणार्थः । एतन्नापितादिस्थापनं ब्रह्मोपवेशनादूर्ध्वं स्यात् । एतान्यहोमार्थानि । अतः स्त्रिया अपि स्युः । अन्वावृत्तिरव्यवायश्च तेषां नावश्यं स्याताम् । तथा परिषेचनेऽपि नाग्निपरिहरणम् । रुद्रभा.

हुत्वा 'आऽयमगात्' इति नापितं प्रेक्षेत्सवितारं ध्यायन् ॥

प्रपदान्तं कृत्वा मातृप्रयुक्ते कुमारेऽन्वारब्धे व्याहृतिभिस्तिसृभिर्हुत्वा पुनः समस्ताभिश्चतसृभिर्हुत्वा 'आऽयमगात्' इति नापितं प्रेक्षेत् सवितारं ध्यायन् ।

रुद्रभा.

'उष्णेन' इत्युष्णोदकं प्रेक्षेद्वायुं ध्यायन् ॥

वायुं मनसा ध्यायन् । रुद्रभा.

'आपः' इत्युन्देत् ॥

दक्षिणतः केशान् उष्णोदकेन क्लेदयेत् । रुद्रभा.

'विष्णोः' इत्यादर्शं प्रेक्षेदौदुम्बरं वा ॥

स्पष्टम् । रुद्रभा.

'ओषधयः' इति दर्भपिञ्जूलीः सप्तोर्ध्वाग्रा अभिनिधाय ॥

केशैः संहृत्य । रुद्रभा.

'स्वधिते' इत्यादर्शेन क्षुरेणौदुम्बरेण वा ॥

दर्भाग्रयुक्तान् केशानन्यतरेण संयोजयेदित्यर्थः ।

रुद्रभा.

**'येन पूषा' इति दक्षिणतस्त्रिः प्राञ्चं प्रोहेत् ॥**

आदर्शेन क्षुरेणौदुम्बरेण वा केशान् दर्भाग्रसंयुक्तांस्त्रिः संमृज्यादित्यर्थः । मन्त्रस्यापि त्रिरावृत्तिः ।

रुद्रभा.

**सहस्रवायसेन प्रच्छिद्याऽऽनडुहे गोमये केशान्कुर्यात् ॥**

अमन्त्रकमेतत् । रुद्रभा.

**उत्तरप्रभृत्येवं पश्चादुत्तरतश्च ॥**

स्पष्टम् । रुद्रभा.

**'त्र्यायुषम्' इति पुत्रस्य मूर्धानं परिगृह्य जपेत् ॥**

उभाभ्यां हस्ताभ्यां परितो गृहीत्वा । रुद्रभा.

**उदङ्कुत्सृज्य कुशली कारयेद्यथागोत्रकुलकल्पम् ॥**

वपनं कारयेन्नापितेन । गोत्रादिवशेन शिखाव्यवस्था स्मर्यते, तदनुसारेण नापितं संप्रेष्य होमं समापयेत् ।

रुद्रभा.

**अरण्ये केशान्निखनेयुः ॥**

सर्वान् केशान् गोमयेन प्रच्छाद्य कर्मकरा निखनेयुः ।

रुद्रभा.

**स्तम्बे निदधत्येके ॥**

दर्भस्तम्बे । रुद्रभा.

**गौर्दक्षिणा ॥**

ब्रह्मणे देया । अत्रेदं चिन्त्यते– एते गर्भाधानादयः संस्काराः शरीरं संस्कुर्वन्तः सर्वेष्वदृष्टार्थेषु कर्मसु योग्यतातिशयं कुर्वन्ति, फलातिशयो योग्यतातिशये च, न पुनरयोग्यस्यैव योग्यतां कुर्वन्ति, संस्कारवन्तम(मि?)निर्दिश्य पुरुषमात्रस्यैव कर्मणां विधानात्, स्वत एव विद्यमानस्वायोग्यतायाः । नाप्यकिंचित्कराः, आनर्थक्यप्रसङ्गात् । नापि स्वत एव पुरुषार्थाः, संस्कारश्रुतिविरोधात् । योग्यतातिशयस्तु संभवति यथा पानीयस्य गन्धादि क्षुरादेश्च तैक्ष्ण्यादि । चौलपर्यन्ताः सर्वे संस्कारा अतिक्रान्तस्वकाला उपनयात् प्रागेव कालातिपत्तिप्रायश्चित्तं कृत्वा कर्तव्याः । ऊर्ध्वं त्वकृतानां लोप एव, 'तद्द्वितीयं जन्म' इति जन्मान्तरव्यपदेशात् । संस्कारेषु द्विप्रकारं शास्त्रमस्ति – एकं पितुरुपदेशकम् 'पुत्रमुत्पादयेत् संस्कुर्याच्च' इति, अपरं पुत्रस्य 'एते संस्कारा आत्मार्थतया कर्तव्याः' इति । नन्वस्वव्यापारे कथं प्रामाण्यम् । सत्यम्, यदि व्यापारकर्तृता बोध्या स्यात् । कर्मजन्यस्य हि पुरुषार्थस्य पुरुषशेषतया जन्यता शब्देन बोध्यते । सा च कदाचित् स्वव्यापारात् स्यात्, कदाचित्परव्यापारात् स्यात् । इयान् विशेषः– स्वव्यापारे तत्सिद्धये स्वयमेव प्रवर्तते । परव्यापारे तु यदि स्वाधिकारादेव प्रवर्तमानमन्यं लभते तदोदास्ते, प्रसङ्गात् कार्यसिद्धेः । अलाभे तु स्वयमेव प्रयोजयति केनाप्युपायेन । ननु असौ शिशुत्वात्प्रतिपत्तुं शक्नोति, गर्भाधानाद्यवस्थायां तु सुतरां प्रतिपत्त्यसंभवः । सत्यम्, यदि यस्यैव फलं तस्यैव प्रतिपत्त्युत्पादकत्वेन शब्दस्य प्रामाण्यं स्यात् । 'स्वर्गकामो यजेत' इति स्वर्गकामिन इदं कर्तव्यमिति तस्यान्यस्य चाविशेषेण प्रमितिं जनयत्येव शास्त्रमुभयोरपि प्रमाणमेव । इयान्विशेषः– स्वर्गकामश्चेत् 'ममेदं कर्तव्यम्' इति प्रतिपद्यते, अन्यश्चेत् 'स्वर्गकामिन इदम्' इति प्रतिपद्यते, न 'ममेदम्' इति । कामसदसत्त्वोपाधिनिमित्तोऽसौ भेदः, न शब्दस्य तत्र व्यापारः । अतः पिता तस्य कर्तव्यं शास्त्रेण निश्चित्याऽऽत्मनश्चावश्यं कर्तव्यतां प्रतिपद्य तत्करोति । पितुरभावे यः तद्रक्षणेऽधिकृतः, तदभावे यः परोपकारं कर्तुं प्रवृत्तः, यो वा तं प्रत्यात्मनो गुरुत्वमिच्छति, हितैषी वा कश्चित् कुर्यात् कारयेद्वा । स्वाधिकारप्रवृत्तश्चेदात्मीयमेव द्रव्यं ब्रह्मणे दक्षिणां दद्यात् । तत्कार्यप्रवृत्तश्चेत्कुमारस्य यत्स्वं तदेव । रुद्रभा.

## जैमिनिगृह्यसूत्रम्

स्वस्तिवाचनम्, होमः, केशवपनविधानम्, केशनिधानम्, शिखाकरणम्, प्रायश्चित्तहोमः, क्रिया समन्त्रकं चेत् होमात्पूर्वं वपनम्, मूर्धानं स्पृष्ट्वा जपः, केशनिखननम्, नापिताय पूर्णपात्रदानम्, दक्षिणादानम्

[1]**ब्राह्मणान् स्वस्ति वाच्यापराह्णेऽग्निं प्रणयित्वा दक्षिणतोऽग्नेश्चत्वारि पूर्णपात्राणि निदध्यात्। व्रीहियवानामभितो मध्ये तिलमाषाणाम्। आचान्तोदकेऽन्वारब्धे जुहुयात्। महाव्याहृतिभिर्हुत्वा विरूपाक्षेणात्र पञ्चमीं जुहोति। सर्वौषधीभिः स्फाण्टमुदकमानयन्ति। व्रीहियवास्तिलमाषा इत्येतत्सर्वौषधम्। 'आऽयमगात्सविता क्षुरेण' इति क्षुरमादत्ते। 'आऽयमगात्सविता क्षुरेण विश्वैर्देवैरनुमतो मरुद्भिः। स नः शिवो भवतु विश्वकर्मा यूयं पात स्वस्तिभिः सदा नः॥' इति। 'उष्णेन वाय उदकेनेहि' इत्युदकमादत्ते। 'उष्णेन वाय उदकेनेह्यदितिः केशान्वपतु' इति। 'आप उन्दन्तु जीवसे' इति दक्षिणं केशान्तमभ्युन्द्यात्। 'आप उन्दन्तु जीवसे दीर्घायुष्ट्वाय वर्चसे' इति। तस्मिंस्तिस्रो दर्भपिञ्जूलीरुपदधात्येकां वा। 'धारयतु प्रजापतिः' इति धारयेत्। 'धारयतु प्रजापतिः पुनः पुनः सुवप्तवै' इति। ऊर्ध्वं त्रिरादर्शेन स्पृष्ट्वा 'येन धाता' इति क्षुरेण छिन्द्यात्। 'येन धाता बृहस्पतेरग्नेरिन्द्रस्य चाऽऽयुषेऽवपत्। तेन त आयुषे वपामि सुश्लोक्याय स्वस्तये॥' इति। 'येन तत्प्रजापतिर्मरुद्भ्यो गृहमेधिभ्योऽवपत्। तेन त आयुषे वपामि सुश्लोक्याय स्वस्तये॥' इति 'येन भूयश्चरात्ययं ज्योक् च पश्याति सूर्यम्। तेन त आयुषे वपामि सुश्लोक्याय स्वस्तये॥' इत्येवं पश्चात्तथोत्तरतः प्रतिमन्त्रम्। केशांश्च दर्भपिञ्जूलीशेषांश्चाऽऽनडुहे गोमयेऽभूमिस्पृष्टे निदध्यात्। ब्राह्मणस्य पुरस्तात्, पश्चादितरयोर्वर्णयोः। 'यत्क्षुरेण' इति नापिताय क्षुरं प्रयच्छेत्। 'यत्क्षुरेण मज्जला वप्त्रा वपसि नापिताङ्गानि शुद्धानि कुर्वायुर्वर्चो मा हिंसीर्नापित' इति। यथैषां गोत्रकल्पः कुलकल्पो वा। आप्लुते प्रायश्चित्तीर्जुहुयात्। आवृतैव स्त्रियाः कुर्यादमन्त्रकम्। समन्त्रकं चेत्पश्चाज्जुहुयात्। अथास्य मूर्धानमार(? ल)भ्य जपति– 'त्रियायुषं कश्यपस्य जमदग्नेस्त्रियायुषं यद्देवानां त्रियायुषं तत्ते अस्तु त्रियायुषम्' इति। धान्यपल्वले गोष्ठे वा केशान्निखनेत्। कुशलीकर्ता पूर्णपात्राणि हरेत्। गौर्दक्षिणा॥**

स्फाण्टं सह क्वथितम्। दर्भपिञ्जूलीति दर्भद्वयमूलप्रदेशः। कतिचित् क्लिन्नान् केशान् सदर्भपिञ्जूलीकान् सव्यहस्तेनानेन मन्त्रेण धारयेत्। सुवप्तवै सुखेन वपनं कर्तुमित्यर्थः। तथेति चार्थे। एताभ्यां मन्त्राभ्यां क्रमात्पश्चादुत्तरतश्चैवमेव छिन्द्यात्। क्षुरादानं विना सर्वमावर्तेतेत्यर्थः। तदिति पूरणः। अयं कुमारस्त्वं येन क्षुरेण कृतवपनः भूयः दीर्घकालं चराति अस्मिन् लोके चरिष्यसि ज्योक् चिरकालं च सूर्यं पश्याति द्रक्ष्यसि च। पश्चात् वपनस्नानानन्तरं प्रधाना(? प्रायश्चित्ता)हुतयः। धान्यपल्वले धान्यक्षेत्रे निखनेत् निगूहेत्कर्मकरः।

**श्रीध्या.**

## कौशिकगृह्यसूत्रम्

चूडाकरणे गोदानेतिकर्तव्यतातिदेशः, केशानां शान्तवृक्षोपरि निधानम्, दक्षिणादानम्, ब्राह्मणभोजनम्

[1]**चूडाकरणं च गोदानेन व्याख्यातम्॥**

अथ चूडाकरणमुच्यते। ¶ संवत्सरे द्विसंवत्सरे वा गोदाने कृते पश्चाच्चूडाकरणं कार्यम्। पूर्वतन्त्रम्।

---

¶ अत्रेदं चिन्त्यम्– सर्वैः सूत्रस्मृत्यादिग्रन्थैर्वेदव्रतरूपं गोदानमुपनयनात्परं जन्मतः षोडशादिवर्षे कर्तव्यत्वेनोक्तम्।

(१) जैगृ. १।११.

(१) कौसू. ५४।१५–२२.

शान्त्युदके 'तुभ्यमेव' इति सूक्तमनुयोजयेत्। यत्र वपनं पठ्यते तत्र सर्वत्र गोदानविधानेन वपनं कुर्यादिति दारिलमतम्। दाकेटी.

**परिधापनाश्ममण्डलवर्जनम् ॥**

**'शिवे ते स्ताम्' इति परिदानान्तानि ॥**

**पार्थिवस्य 'मा प्रगाम' इति चतस्रः सर्वाण्यपियन्ति ॥**

**अमन्त्रिमोजोमानीं च दूर्वां च केशांश्च शकृत्पिण्डं चैकधाऽभिसमाहृत्य ॥**

**शान्तवृक्षस्योपर्यादधाति ॥**

**अधिकरणं ब्रह्मणः कंसवसनं गौर्दक्षिणा ॥**

**ब्राह्मणान् भक्तेनोपेप्सन्ति ॥**

## वैखानसगृह्यसूत्रम्

होमः, केशवपनविधानम्, चूडाकरणम्, केशनिखननम्, प्रायश्चित्तादिहोमः, नापितायान्नदानम्, गुरवे दक्षिणादानम्, सुरपूजनम्, ब्राह्मणभोजनम्

[1]**आघारः। मूलहोमान्ते मङ्गलयुक्तमग्नेरपरस्यां कुमारमुपवेश्योत्तरे साक्षतं गोशकृच्छरावे गृहीत्वा माता ब्रह्मचारी वा धारयेत्। 'शिवो नामासि' इति ग्रहणं क्षुरस्य। 'शिवा नो भवथ' इति शिलायां तीक्ष्णीकरणम्। 'गोदानमुनक्तु' इति गवादिदक्षिणाकरणम्। 'आप उन्दन्तु' इत्यपां सेकं शिरसि। 'ओषधे त्रायस्वैनम्' इति साक्षताङ्कुरदर्भौ प्रागुत्तराग्रौ मस्तके स्थापयेत्। 'स्वधिते मैनं हिंसीः' इति क्षुरं निधायोर्ध्वाग्रम् 'ओषधीः' इति 'येनावपत्' इति 'येन पूषा' इति 'असावायुषा' इति पूर्वादिप्रदक्षिणं दर्भं सरोमाणं छित्वा 'ज्योक् च सूर्यं दृशे' इति चूडां विभजेत्। 'इदमहममुष्य' इत्युदुम्बरदर्भयोर्मूले गोष्ठे वाऽऽच्छादयेत्। स्नातं वस्त्रादिनाऽलंकृत्योपवेश्य दक्षिणे पञ्च प्रायश्चित्तादि धातादि पञ्च वारुणं मूलहोमं हुत्वा पुण्याहं कृत्वा नापितायान्नदानं गवादिदक्षिणां गुरवे सुराणां पूजनं तर्पणं ब्राह्मणानामन्नेन करोति ॥**

## कात्यायनः

गोभिलप्रयुक्तकपुष्णिकाकपुच्छलशब्दयोरर्थापनम्

[1]**कपुष्णिकाऽभितः केशा मूर्ध्नि पश्चात्कपुच्छलम् ॥**

## आश्वलायनः

चूडाकरणावान्तरक्रियोपपत्तयः

[2]**अच्छेद्यत्वादपक्वानामोषधीनां द्विजातिभिः।**
**निधीयन्तेऽत्र पात्राणि व्रीह्यादीनां चतुस्तदा ॥**

[3]**केशानां सहजातानामोषधीत्वं निगद्यते।**
**एतां सुपक्वां छेत्तीति बीजं दृष्ट्वा स्मरेत्तदा ॥**

---

कौशिकसूत्रे यद्यपि गोदानस्य कालो नोक्तः, वेदव्रतरूपताया लिङ्गमपि किंचिन्नास्ति, तथाऽपि "अदितिः श्मश्रु' इत्युन्दति", "नापितं समादिशति– 'अक्षण्वन्वप केशश्मश्रुरोम परिवप नखानि च कुरु", 'उप्तकेशश्मश्रुं कृत्तनखमाप्लावयति' इति लिङ्गानि श्मश्रुलस्य गोदानाधिकारं बोधयन्ति। एवं स्थितेऽत्र टीकायां बोधिता गोदानस्य चूडाकरणात्प्राक्कर्तव्यता कथं संभवतीति न ज्ञायते। गोदाने इतिकर्तव्यताया उपदेशश्चूडाकरणे च तदतिदेश इतीदं तु न तत्र प्रमाणभावं भजते, क्रमवैपरीत्येऽप्यापस्तम्बगृह्यसूत्रादौ उपनयाद्युपदिष्टपदार्थानां चूडाकरणादावतिदेशदर्शनात्। अस्माभिस्तु कौशिकसूत्रोक्तं गोदानं वेदव्रतेषु संग्रहीष्यत इति।

(१) वैगृ. ३।२३.

(१) कास्मृ. ३।८२; संत. ९१३ पुच्छलम् (पुष्णिकः) : ९२५ (=).

(२) आश्वस्मृ. ११।११०; प्रपा. २०६ धीयन्तेऽत्र (धाय तत्र) स्तदा (स्तथा).

(३) आश्वस्मृ. ११।१११ तां सुपक्वां (तान् सुपक्वान्); प्रपा. २०६ धीत्वं (धित्वं).

[1]शमीभिर्दर्भपिञ्जूलैर्मिश्रयित्वा शिरोरुहान्।
छिनत्ति प्रतिमन्त्रेण तासां दृश्यत्वसिद्धये ॥

[2]बालस्य वर्चोवृद्ध्यर्थमेष्यल्लोम्नां च वृद्धये।
प्रदक्षिणं त्रिरुन्दति दधिद्रप्सेन तच्छिरः ॥

[3]लोम्नां संछेदनादायुः क्षीयते तत्प्रवृद्धये।
मन्त्राः प्रव्याहृता येनावपदित्यादयस्तदा ॥

[4]स्वधितेरोषधीनां च प्रशंसार्थमुदाहृतः।
ओषधे इति मन्त्रो यः स रक्षार्थं च गद्यते ॥

[5]भूमेरौष्ण्याच्च शैत्याच्च निखिलौषधयस्त्विह।
वर्धन्ते परिपच्यन्ते पावकस्य जलस्य च ॥

इति यस्मात्ततस्तावदुष्णेनेत्युच्चरन्मनुम्।
उष्णं शीतोदके सिक्त्वा केशमूले पितोन्दति ॥

[6]पृथिव्याः प्रीणनार्थाय चूडाकर्मणि बालकः।
मातुरङ्के प्रविशति बालस्त्वाचेति केचन ॥

भूमेर्गुरुतरी मातेत्येवं संश्रूयते श्रुतौ।
भूम्यां मातुरुपस्थे वा बालाश्चोपविशन्ति हि॥

ज्ञात्वा तु गौरवं मातुर्मह्याश्चोपविशेत यः।
तस्मिन्क्ष्मा प्रीतिमतुलां करोत्यृद्धिं ददाति च॥

¶अधोभागे शिखायाश्च चूडाकरणकर्मणि ॥
तत्र देवाश्रयत्वात्तु तत्र तत्र तथा तथा।
सर्वदेवाश्रयं मध्यं सर्वाभिस्तत्र तद्भवेत्॥

¶ चतुर्थच्छेदनविषयमिदम्।

(१) आश्वस्मृ. ११।११२ पिञ्जू (पुञ्जी) तासां दृश्यत्वसि (तत्साध्यत्वं च सि); प्रपा. २०६.

(२) आश्वस्मृ. ११।११३ मेष्यल्लो (मेष्यद्धे) द्रप्सेन (मण्डेन); प्रपा. २०६.

(३) आश्वस्मृ. ११।११४; प्रपा. २०६ तत्प्र (तद्वि) तदा (तथा).

(४) आश्वस्मृ. ११।११५; प्रपा. २०६ तेरो (तेश्चौ) मन्त्रो यः स र (मन्त्रोऽयं स्वर).

(५) आश्वस्मृ. ११।११६–११७; प्रपा. २०६.

(६) आश्वस्मृ. ११।२७१–२७३, २७८–२७९.

## लघ्वाश्वलायनः

अभ्युदयश्राद्धम्, संभारस्थापनम्, होमः, केशवपनविधानम्, होमशेषसमापनम्

†[1]कृत्वाऽऽभ्युदयिकं श्राद्धं पूर्वेद्युरपरेऽहनि।
प्रातःसंध्यादिकं कृत्वा नान्दीश्राद्धं परेऽहनि ॥
प्राणानायम्य संकल्प्य कुर्वीत स्थण्डिलादिकम्।
पात्रासादनपर्यन्तं कृत्वा धान्यानि पूरयेत् ॥
उदगग्नेः शरावेषु प्राक्संस्थेषु नवेषु च।
तेषु वै क्रमतो व्रीहियवमाषतिलांश्च हि ॥
पुरतःस्थे शरावे च विन्यसेद्वृषगोमयम्।
तदुत्तरे नवेऽन्यस्मिञ्शमीपर्णानि पूरयेत् ॥
आघारान्तं ततः कुर्यात्कृत्वोत्तानानि पूरयेत्।
ततश्च जुहुयादाज्यमग्निश्चेति चतसृभिः ॥
अग्न आयूंषि पवस इत्येका च प्रजापतेः ॥
मातुरङ्कोपविष्टस्य कुमारस्य तु चैव हि।
पश्चात्स्थित्वा पिता शीतं जलमादाय पाणिना॥
दक्षिणेनाथ सव्येन पाणिनोष्णं जलं तथा।
दक्षिणोत्तरयोस्तत्र निनयेत्केशपक्षयोः ॥
उष्णेनवायमन्त्रेण जलधारे तयोश्च ते।
अनामिकया चाऽऽदाय नवनीतं तथा दधि ॥
प्रदक्षिणप्रकारेण वामकर्णप्रदेशतः।
सकेशान्धारयेद्ब्रह्मा त्रींस्त्रीन् प्रागग्राका-
न्कुशान् ॥
आचार्यश्छेदयेदेतानोषधेमन्त्रमुच्चरेत्।
क्लेदयेद्वामकर्णान्तं त्रिश्चैवादितिरुच्चरेत् ॥
क्षुरेणेति च तीक्ष्णेन ताम्रयुक्तेन चैव हि।
छेदितान्स्तुत आदाय मातुर्हस्ते निवेदयेत् ॥
विन्यसेत्ताञ्शमीपर्णैः सहाऽऽनडुहगोमये।
येनावपत्प्रथमं स्याद्येन धाता द्वितीयकः ॥
तृतीये येन भूयश्च सर्वैरेव चतुर्थकम्।
एवं च दक्षिणे कृत्वा त्रिवारं तूत्तरे तथा ॥

† अशुद्धिबहुलो गृह्यसूत्रादिविरुद्धश्चायं ग्रन्थः।

(१) लघ्वाश्वस्मृ. ९।२–१६, १८.

यत्क्षुरेणेति मन्त्रेण क्षुरधारां जलेन च ।
निमृज्येन्मर्म तत्कृत्वा नापिताय प्रदापयेत् ॥
अभ्यञ्जयेत्कुमारं तमानयेदग्निसंनिधौ ।
ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत् ॥

## अपरार्के

मुखे वपनक्रियायां च दिङ्नियमः, वपनक्रियाया-
मारम्भसमापनदेशनियमः

[1]उदङ्मुखः प्राङ्मुखो वा वपनं कारयेत्सुधीः ।
केशश्मश्रुलोमनखान्युदक्संस्थानि वापयेत् ॥
[2]दक्षिणं कर्णमारभ्य धर्मार्थे पापसंचये ।
शिखाद्यं नवसंस्कारे शिखाद्यन्तं शिरो वपेत् ॥

नवसंस्कारे प्रथमे चूडाकर्मोपनयनादौ, प्रायश्चित्ता-
र्थस्य द्वितीयोपनयनादेः पापसंचय इत्यनेन संग्रहात् ।
† संको. ११५

## षड्गुरुशिष्यः

आश्वलायनगृह्यसूत्रस्थलौहशब्दकृत्यम्

[3]क्षुरस्य नित्यं लौहत्वात्ताम्रत्वायेह लौहगीः ।
गृह्यान्तरेषु बहुषु क्षुरस्ताम्रमयो यतः ॥

## शाकलकारिकाः

व्रीह्यादिपूर्णशरावस्थापनम्

[4]उदगग्नेः सपात्रस्य शरावाणि न्यसेदथ ।
व्रीह्यादिपूरितानीह प्राक्संस्थानीति वै क्रमात् ॥

† संब. संकोवत् ।

(१) गभा. १९२ उत्त.; संको. ११५; संग. ६२२ उत्त.; संब. ९३.

(२) गभा. १९२ चये । शिखाद्यं नवसं ( क्षये । हन्वाद्यन्तं च सं ); संको. ११५; संग. ६२२ चये । शिखाद्यं नवसं (भवे । हन्वाद्यन्तं च सं ); संब. ९३.

(३) प्रपा. २०३; संर. ९०१ त्वायेह (त्वाञ्चेह).

(४) शाका. २२ पृ. ३.

## शौनककारिकाः

आभ्युदयिकश्राद्धम्, पुण्याहवाचनम्, कौतुकबन्धः,
अग्निस्थापनम्, संभारस्थापनम्, होमः,
वपनतन्त्रम्, क्षुरधाराशोधनम्, नापिता-
नुशासनम्, शिखाकरणम्, होमशेष-
समापनम्

[1]पूर्वेद्युराभ्युदयिकं श्राद्धं कृत्वा परेऽहनि ।
स्नातं बालमलंकृत्य पुण्याहं वाचयेद्द्विजैः ॥
ततः कौतुकमाबध्य मुहूर्ते शोभनेऽनलम् ।
प्रतिष्ठाप्योत्तरे तस्माद्दर्भान्संस्तीर्य तेष्वथ ॥
नूतनानि शरावाणि चत्वारि व्रीहिभिर्यवैः ।
माषैस्तिलैश्च प्रत्येकं पूरितान्येकशः क्रमात् ॥
[2]प्राक्संस्थं सादयेत्तत्र यवालाभे तु तत्समैः ।
व्रीहिभिः पूरयेत्पात्रं प्रत्यग्देशे ततोऽनलात् ॥
[3]सव्येतरे चौलकृतः समीपे जननी शिशोः ।
अङ्केन बिभ्रती पुत्रमासीत प्राङ्मुखी सती ॥
[4]तस्याः पुरस्तादग्नेश्च पश्चादानडुहं शकृत् ।
अस्पृष्टभूमि विन्यस्य शरावे सादयेत्ततः ॥
[5]शमीपर्णानि चान्यस्मिञ्छरावे न्यस्य भूतले ।
तत्रैव सादयेद्देशे शकृत्पात्रस्य पार्श्वतः ॥
[6]ततः कुमारस्य पिता हस्ते बिभ्रत्कुशाङ्कुरान् ।
एकविंशतिमासीत शिशोर्मातुस्तु दक्षिणे ॥
[7]पितुरन्यो भवेदर्थात् पक्षेऽस्मिंश्चौलकृन्नरः ।
ब्रह्मत्वेन हि यो विप्रो धारयेद्वा कुशाङ्कुरान् ॥

(१) शौका. ३-५ पृ. ४०; प्रपा. २०६.

(२) शौका. ६ पृ. ४० ग्देशे ( ग्देशं ); प्रपा. २०६.

(३) शौका. ७ पृ. ४० सव्येत ( सव्योत्त ); प्रपा. २०६.

(४) शौका. ८ पृ. ४०; प्रपा. २०६.

(५) शौका. ९ पृ. ४० शकृ (सकृ); प्रपा. २०६.

(६) शौका. १० पृ. ४०; प्रपा. २०६ तुस्तु (तुश्च).

(७) शौका. ११ पृ. ४०; प्रपा. २०६–२०७ दर्थात् ( न्याथ ) कृन्नरः ( कृत्ततः ).

[1]अस्मिन्पक्षे पितैवास्तु कर्ता चौलस्य कर्मणः ।
अत्रैव समये कुर्यात् क्षुरस्यापि परिग्रहम् ॥

अन्वाधानाद्यनूयाजनिधानान्तं पुरस्तनम् ।
तन्त्रं कृत्वा निषण्णेन दक्षिणे शिशुनाऽऽत्मनः ॥

[2]अन्वारब्धो विधायेध्मनिधानादि तु शेषितम् ।
पुनः कृत्वा †नाऽऽज्यभागौ प्रधानाहुति-
माचरेत् ॥

[3]तत्राग्न आयूंषीत्याद्यैर्हुत्वा मन्त्रैस्त्रिभिः पुनः ।
प्रजापते न त्वदृचा व्याहृतित्रितयेन ¶च ॥

[4]व्यस्तेनाऽऽदौ समस्तेन क्रमेण जुहुयादथ ।
बालस्य प्रत्यगासित्वा शीतोष्णे वारिणी पृथक् ॥

पात्रद्वयस्थे आसिक्ते हस्ताभ्यामन्यभाजने ।
उष्णेन वायवित्यादिमन्त्रेण स्थाप्य तत्पुनः ॥

नवनीतेन दध्ना वा संमिश्रीकृत्य पाणिना ।
समादायादितिः केशान्वपत्वित्यादिमन्त्रतः ॥

शिरोऽस्य वामकर्णान्तमारभ्य त्रिः प्रदक्षिणम् ।
उन्देत्प्रत्युन्दनं मन्त्रं पुनः पुनरुदीरयेत् ॥

[5]दक्षिणे केशपक्षेऽथ बालस्य त्रीन्कुशाङ्कुरान् ।
बालाभिमुखपर्यन्तान्पठित्वा मन्त्रमोषधे ॥

---

† अत्र पारिजातपाठो भाष्यवृत्त्याद्युक्तसूत्रतात्पर्यविरुद्धः ।

¶ 'जुहुयादथ' इति वचनात् चकारपाठ एव शौनकाभिप्रेत इति निश्चीयते । तेन 'समुच्चयमेके' इतिसूत्रोक्तः समुच्चयपक्ष आश्रित इति सिद्धम् । पारिजाते वाकारपाठस्तु 'व्याहृतिभिर्वा' इतिसूत्रोक्तविकल्पपक्षमनुसरन्नपि 'जुहुयादथ' इति वचनेन विरुद्धः ।

(१) शौका. १२–१३ पृ. ४० ; प्रपा. २०७.

(२) शौका. १४ पृ. ४० त्वा नाऽऽज्यभागौ (त्वाऽऽज्यभागौ च ) ; प्रपा. २०७.

(३) शौका. १५ पृ. ४० च ( वा ) ; प्रपा. २०७.

(४) शौका. १६–१९ पृ. ४०–४१ ; प्रपा. २०७.

(५) शौका. २० पृ. ४१ ; प्रपा. २०७ ; संको. ११४ मुख ( मुख्य ).

[1]त्रायस्वैनमिति न्यस्येदन्योन्यस्मात्पृथक्कृतान् ।
उच्चार्य मन्त्रं स्वधिते मैनं हिंसीरिति क्षुरम् ॥

कुमाराभिमुखं पश्चिमाग्रान् कृत्वा मन्त्रेण निधानमिति पारिजाते । 'केशपक्षे कुमारस्य हृदग्रं तत्कुशत्रयम् ।' इति कारिकाकारः । 'अग्रैर्हृदयमालिखन्निव निदधाति' इति जयन्तः । शौनकानुसारिपारिजातमते कुमाराभिमुख्येन पश्चिमाग्रान् कृत्वा निधानम् । प्रागग्राणां 'तस्य नित्याः प्राञ्चः' इति परिभाषायाः(?) जयन्तानुसारिकारिकामते तु हृदयाभिमुखाग्रत्वम् । युक्तं चैतत्, 'आत्मानं प्रत्यभिमृश्य' इत्यत्र हृदयाभिमर्शस्यैव सर्वयाशिकसंमतत्वात् । संको. ११४

[2]संधाय साङ्कुरैः केशैस्तद्येनावपदादिकम् ।
यथाऽसदिति पर्यन्तं मन्त्रमुच्चार्य खैलिकम् ॥

[3]प्रच्छिद्य ताञ्छमीपर्णैः संयोज्य च कुशा-
ङ्कुरान् ।
केशान् प्राक्कूलान् बालस्य तस्य मातुः करे
न्यसेत् ॥

[4]सा च तान् प्रक्षिपेत् सर्वाञ्छकृत्यानडुहे सह ।
अनेन विधिना कुर्याद्द्वितीयं केशकृन्तनम् ॥

[5]मन्त्रस्तु येन धातादिः कृन्तने तत्र मन्यते ।
पुनस्तथैव कुर्वीत तृतीयं केशकृन्तनम् ॥

[6]मन्त्रस्तु येन भूयश्च तन्त्रं पूर्ववदाचरेत् ।
पूर्वोक्तमन्त्रत्रितयं क्रमेणोपसमाचरन् ॥

---

(१) शौका. २१ पृ. ४१ दन्योन्यस्मात् ( दन्यमन्त्रपृ ) ; प्रपा. २०७ ; संको. ११४ प्रथमपादमात्रम्.

(२) शौका. २२ पृ. ४१ ; प्रपा. २०७.

(३) शौका. २३ पृ. ४१ केशान् ( कुशान् ) न्यसेत् ( दिशेत् ) ; प्रपा. २०७ प्राक्कूलान् ( प्राग्लूनान् ).

(४) शौका. २४ पृ. ४१ ; प्रपा. २०७ प्रक्षिपेत् ( निहितान् ).

(५) शौका. २५ पृ. ४१ पुन ( पुर ) ; प्रपा. २०७ ने तत्र मन्य ( नेनैव गम्य ).

(६) शौका. २६ पृ. ४१ चरन् ( चरेत् ) ; प्रपा. २०७.

[1]चतुर्थकृन्तनं कुर्यात्सावधानमतन्द्रितः ।
एवमुत्तरतः केशपक्षेऽपि च्छेदनत्रयम् ॥
[2]कुर्यादादित आरभ्य न चतुर्थं समाचरेत् ।
मन्त्रं तु यत्क्षुरेणेति प्रक्रान्तं समुदीर्य तु ॥
[3]क्षुरस्य धारामुपरि प्रारभ्याधः परामृशेत् ।
मन्त्रं शीतोष्णाभिरिति प्रक्रान्तं समुदीर्य तु ॥
[4]वप्तारमनुशिष्यैनं मन्त्रार्थं चावबोधयेत् ।
वप्ताऽथ तोयैः शीतोष्णैः पूर्वसेकावशेषितैः ॥
[5]बालस्य सकलान् केशानार्द्रीकृत्याऽऽर्द्रपाणिना ।
वंशाचारक्रमोपेतां शिखां कृत्वा वपेच्छिरः ॥
[6]अथोप्तकेशं स्नातं तमुपवेश्य यथा पुरा ।
आरभ्य स्विष्टकृद्धोममूर्ध्वतन्त्रं समाचरेत् ॥

## कुमारिलकारिकाः

अग्निस्थापनम्, संभारस्थापनम्, होमः, वपनतन्त्रम्, क्षुरधाराशोधनम्, नापितानुशासनम्, शिखाकरणम्, होमशेषसमापनम्, नापिताय व्रीह्यादिशरावदानम्

[7]पूर्णपात्रनिधानान्तमुपलेपादि पूर्ववत् ।
व्रीहिपूर्णं शरावं स्याद्यवपूर्णं तथाऽपरम् ॥
[8]माषपूर्णं तथाऽन्यत्स्यात् तिलपूर्णमथापरम् ।
एतानि च शरावाणि न्यसेदुत्तरतोऽनलात् ॥

(१) शौका. २७ पृ. ४१ चतुर्थकृ (चतुर्थे कृ) ; प्रपा. २०७.

(२) शौका. २८ पृ. ४१ ; प्रपा. २०७.

(३) शौका. २९ पृ. ४१ ; प्रपा. २०७ तु (च).

(४) शौका. ३० पृ. ४१ चाव (चोप) ; प्रपा. २०७.

(५) शौका. ३१ पृ. ४१ क्रमो (वशो) ; प्रपा. २०७ ; संप्र. ३१५.

(६) शौका. ३२ पृ. ४१ ; प्रपा. २०७.

(७) कुका. १।१२।५ ; प्रपा. २०३.

(८) कुका. १।१२।६ न्यत्स्यात् (न्यत्तत्) ; प्रपा. २०३ पूर्णमथा (पूर्णं तथा) ; संको. ११४ (अथान्यत्स्यात्, अथापरम्) एतावदेव.

प्रणीतानामुत्तरतो दर्भेषु व्रीहियवमाषतिलैः पृथक्पूरितानि नवानि शरावाण्येकैकशः प्राक्संस्थानि सादयेत्, 'अथान्यत्स्यात्' 'अथापरम्' इतिकारिकायामथशब्देनैकैकश आसादनप्रतीतेः । संको. ११४

[1]कुमारो मातुरुत्सङ्ग आस्ते प्रत्यग्घविर्भुजः ।
अथाऽऽनडुहमन्यस्मिञ्शरावे गोमयं क्षिपेत् ॥
[2]शमीपर्णानि चान्यस्मिन् द्वे स्तो मातुः समीपतः ।
मातुर्दक्षिणतो ब्रह्मा सप्त सप्त च सप्त च ॥
[3]कुशपिञ्जूलकानां तु गृहीत्वाऽऽस्तेऽथवा पिता ।
कुर्यादाघारपर्यन्तमाज्यसेकादि पूर्ववत् ॥
[4]इदमादि विवाहान्तं नैवेष्टावाज्यभागकौ ।
अग्न आयूंषि तिसृभिः प्रजापते न इत्यृचा ॥
[5]स्रुवेणाऽऽज्याहुतीर्हुत्वा शीतोष्णापस्तदाऽऽनयेत् ।
पश्चात् स्थित्वा कुमारस्य शीता उष्णाश्च ता अपः ॥
[6]पाणिभ्यां भाजनेऽन्यस्मिन्युगपन्निनयेदथ ।
उष्णेन वाय उदकेनेह्यीत्येतेन तद्भवेत् ॥
[7]एकदेशं गृहीत्वाऽऽसां नवनीतं च वै ततः ।
दध्नो द्रप्समुपादत्ते नास्ति चेन्नवनीतकम् ॥
[8]प्रदक्षिणं कुमारस्य शिरस्त्रिः क्लेदयेदथ ।
आरभ्य वामतः कर्णप्रदेशात्क्लेदनं भवेत् ॥

(१) कुका. १।१२।७ ; प्रपा. २०३ अथा (तथा).

(२) कुका. १।१२।८ ; प्रपा. २०३.

(३) कुका. १।१२।९ ; प्रपा. २०३ लका (लिका).

(४) कुका. १।१२।१० ; प्रपा. २०३.

(५) कुका. १।१२।११ पस्तदा (म्भस्यथा) ; प्रपा. २०३.

(६) कुका. १।१२।१२ ; प्रपा. २०३.

(७) कुका. १।१२।१३ ; प्रपा. २०३ ; संको. ११४ उक्त.

(८) कुका. १।१२।१४ ; प्रपा. २०३.

¹स्याच्चैतददितिः केशान् वपत्वित्यादिमन्त्रतः ।
निदध्यादोषधे त्रायस्वैनमित्यस्य दक्षिणे ॥

²केशपक्षे कुमारस्य हृदग्रं तत्कुशत्रयम् ।
पिञ्जूलेषु क्षुरं न्यस्य स्वधिते मैनमित्यथ ॥

³अवपीडयतीत्यर्थः क्षुरस्ताम्रमयो भवेत् ।
येनावपदिति च्छिन्द्याच्छिन्नान् प्रागग्रकान् कुशान् ॥

एकीकृत्य शमीपर्णैस्तांश्च मात्रे प्रयच्छति ।
छेदनं तु सकेशानां पिञ्जूलानां भवेदिह ॥

⁴निदधाति च सा माता तानानडुहगोमये ।
पूर्ववत् कुशपिञ्जूलनिधानादि समं भवेत् ॥

⁵येन धातेति मन्त्रोऽयं छेदने तु विशिष्यते ।
तृतीये च चतुर्थे च पिञ्जूलादि समं भवेत् ॥

⁶तृतीये येन भूयश्च चतुर्थे छेदनं त्रिभिः ।
एवमेवोत्तरे पक्षे त्रिरेव च्छेदनं भवेत् ॥

यत्क्षुरेणेति मन्त्रेण क्षुरधारां निमार्ष्टयथ ।
आरभ्याग्रत आमूलप्रदेशान्तं निमार्जनम् ॥

⁷शीतोष्णाभिरिति प्रैषेणानुशिष्याच्च नापितम् ।
शिखा अपि च कर्तव्यास्तस्य स्वऋषिसंख्यया ॥

(१) कुका. १।१२।१५ ; प्रपा. २०३ स्याच्चैत ( स्याच्चेत्त ).

(२) कुका. १।१२।१६ ; प्रपा. २०३ हृद (तद) ; संकौ. ११४ पू.

(३) कुका. १।१२।१७–१८ ; प्रपा. २०३.

(४) कुका. १।१२।१९ समं भवेत् (समन्त्रकम्) ; प्रपा. २०३.

(५) कुका. १।१२।२० र्थे च ( र्थे तु ) समं भवेत् ( समन्त्रकम् ) ; प्रपा. २०३ द्वितीयपादे ( द्वितीये छेदने भवेत् ).

(६) कुका. १।१२।२१–२२ ; प्रपा. २०३.

(७) कुका. १।१२।२३ ; प्रपा. २०३ शिष्याच्च ( शास्य च ). उत्तरार्धस्य शेषस्थलादिनिर्देशाः चूडाकर्मविधिप्रकरणे ( सं. का. पृ. २९१० ) द्रष्टव्याः.

¹ततः स्विष्टकृदादि स्यात्कुमार्यै स्यादमन्त्रकम् ।
व्रीह्यादिपूर्णान्येतानि नापिताय प्रयच्छति ॥

## कपर्दिकारिकाः

संभारस्थापनम्

²जलद्वयं कुशान् यवान् शलाटुदर्भपुञ्जलान् ।
शकृच्छलल्यसिं क्षिपेत्सहैव चौलकर्मणि ॥

## रेणुकारिकाः

बहिःशालाकरणम्, मातृकापूजननान्दीश्राद्धे, ब्राह्मणभोजनम्, अग्निस्थापनम्, संभारोपकल्पनम्, होमः, केशवपनविधानम्, शिखाकरणम्, गोष्ठादौ केशनिधानम्, वरदानम्, मन्त्राणामृषिदैवतच्छन्दांसि

³बहिःशालादिकं तत्र चूडाकर्मनिमित्तकम् ।
कुर्याच्चाभ्युदयं श्राद्धं मातृपूजनपूर्वकम् ॥

ब्राह्मणान् भोजयित्वा त्रिप्रभृतीनन्यपाकतः ।
चूडाकर्म करिष्येऽहमिति संकल्पमुच्चरेत् ॥

शालायां लौकिकं वह्निं स्थापयित्वोद्धृते स्थले ।
माता कुमारमाप्लाव्य परिधाप्याहताम्बरे ॥

तमादायाङ्कमाधाय पश्चादुपविशेत्कवेः ।
स्मरेद्वैकल्पिकांस्तत्र ब्रह्मणो गमनादिकान् ॥

घृतमौक्ष्णं शकृत्पिण्डं सकेशं पल्वले स्थितम् ।
ध्यायेद्देवानथाऽऽघारावाज्यभागौ च पूर्ववत् ॥

भूराद्याः पूर्ववत् स्विष्टकृदन्ताश्च घृतेन ताः ।
ब्रह्मणो वरणाद्याज्यभागान्तं स्याच्चरुं विना ॥

पात्राण्यासाद्य शीतादिभाण्डादेरुपकल्पनम् ।
शीतोदभाण्डमुष्णस्य नवनीतं घृतं दधि ॥

एषामन्यतमं शीतमुदकं तप्तवारि च ।
त्रि एणी( ? त्रियेणी ) शलली दर्भतरुणानां नवत्रिकम् ॥

(१) कुका. १।१२।२४ ; प्रपा. २०३.

(२) कका. ६।७.

(३) रेका. ७–१६ पृ. १७.

क्षुरस्ताम्रमयश्चौक्ष्णं गोमयं नापितो वरः ।
हुत्वाऽऽज्येनाऽऽज्यभागान्तं भूराद्याश्च
दशाऽऽहुतीः ॥
प्राशनादिविमोकान्ते भाण्डे शीतोदकं क्षिपेत् ।
उष्णेन वायवित्युक्त्वा सिञ्चेदुष्णमिहोदकम् ॥
[1]नवनीतं क्षिपेद्वाऽत्र घृतं वा दधि वा ततः ॥
[2]वार्यादाय शिरःपार्श्वे तेनास्योन्दति दक्षिणम् ।
सवित्रेत्युच्चरन्मन्त्रं तत् त्र्येण्या विनयेत्ततः ॥
अन्तर्दधाति दर्भस्य त्रीण्यत्र तरुणानि च ।
स्युस्तान्यस्य शिरोग्राणि ह्येवमाह त्रिविक्रमः ॥
[3]मन्त्रमुक्त्वौषधे त्रायस्व हिंसीरवसानतः ।
गृहीत्वा वामहस्तेन सकेशानीतरेण तु ।
गृह्णीयात्तं क्षुरं ताम्रं शिवो नामेति मन्त्रतः ॥
[4]उक्त्वा निवर्तयामीति संलग्नं तत्र कारयेत् ।
येनावपदिति च्छित्त्वा सकेशतरुणानि तु ॥
[5]प्रास्यत्युत्तरतो ध्रियमाण औक्ष्णे तु गोमये ।
एवं द्विरपरं तूष्णीमुन्दनादि यथोदितम् ॥
[6]तस्मिन्नेव शिरःपार्श्वे तत्परस्तात्प्रदक्षिणम् ।
ततः पश्चिमभागे स्यान्मन्त्रवच्चोन्दनादिकम् ॥
तूष्णीं तत्र क्षुरादानं मन्त्रस्तदभिधायकः ।
सकेशतरुणच्छेदे मन्त्रोऽयं स्यात्त्रियायुषम् ॥
एवं द्विरपरं तूष्णीं तथैवोत्तरतो भवेत् ।
तरुणच्छेदने मन्त्रो येन भूरिश्चरा दिवम् ॥
[7]अत्रापि पूर्ववत्तूष्णीमुन्दनादि समाचरेत् ।
क्षुरेण त्रिः परिहरेच्छिरस्तेन प्रदक्षिणम् ॥

(१) रेका. १७ पृ. १७ ; संग. ६१५.
(२) रेका. १८–१९ पृ. १७–१८.
(३) रेका. २० पृ. १८ ; संग. ६१६ तृतीयार्धमात्रम्.
(४) रेका. २१ पृ. १८ ; संग. ६१६.
(५) रेका. २२ पृ. १८ ; संग. ६१६ ध्रियमाण (धीयमान) पृ.
(६) रेका. २३–२५ पृ. १८.
(७) रेका. २६ पृ. १८ ; संग. ६१८ उत्त.

[1]यत्क्षुरेणेति मन्त्रेण केशान्ते समुखं शिरः ॥
[2]ताभिः शिरः समुन्द्याद्भिर्नापितायार्पयेत्क्षुरम् ।
अक्षण्वमित्यनेनाथ केशान्ते समुखं शिरः ॥
[3]उदङ्मुखः प्राङ्मुखस्य तस्य शीर्षं वपत्यसौ ।
केशशेषं ततः कुर्याद्यस्मिन्गोत्रे यथोचितम् ॥
[4]सकेशं गोशकृत्पिण्डमनुगुप्ते तु पल्वले ।
गोष्ठे वाऽथोदकान्ते वा निधाय च न वारिणि ॥
वरं यथोदितं धान्यमाचार्याय प्रयच्छति ।
तस्यैव कर्तुराचार्यः केशान्ते वा स एव तु ॥
परमेष्ठी ऋषिश्छन्दः प्रतिष्ठा देवताऽदितिः ।
उष्णेन वायमन्त्रस्य नीरासेके नियुज्यते ॥
सवित्रेत्यथ(? स्य) गायत्री छन्द आपश्च
देवताः ।
क्लेदने विनियोगः स्यादृषिरस्य प्रजापतिः ॥
तरुणस्वधिती देवावत्यष्टिश्छन्द ओषधे ।
द्रष्टा प्रजापतिस्त्वन्तर्धानेऽयं विनियुज्यते ॥
शिवो नामेत्यस्य मनोर्देवता स्यात्क्षुरो यजुः ।
निवर्तयामि लिङ्गोक्तदैवतं यजुरीरितम् ॥
ऋषिः पूर्वोक्त एवोक्तो विनियोग उदाहृतः ।
द्रष्टा लम्बायनः पङ्क्तिश्छन्दः स्यात्सविता-
ऽमरः ॥
मन्त्रे येनावपच्चास्मिन्नियोगश्छेदने भवेत् ।
ऋषिर्नारायणश्चाग्निर्देवता स्यात् त्रियायुषम् ॥
इत्युक्तमौष्णिहं छन्दो विनियोगो जपे मतः ।
इतरेषां वामदेव ऋषिः स्याद्देवता क्षुरः ॥
यजुषां विनियोगः स्यादिहान्येषां पुरो-
दितम्(? तः) ॥

(१) रेका. २७ पृ. १८ ; संग. ६१८.
(२) रेका. २८ पृ. १८.
(३) रेका. २९ पृ. १८ ; गभा. १९२ उत्त. ; संग. ६१८.
(४) रेका. ३२–४१ पृ. १९.

# गर्भाधानादिचौलान्तसंस्कारातिपत्तिप्रायश्चित्तम्

## पारस्करगृह्यसूत्रम्

श्रौतसूत्रोक्तव्याहृतिहोमसर्वप्रायश्चित्तहोमरूप-
स्मार्तप्रायश्चित्तातिदेशः

**'कालातिक्रमे नियतवत् ॥**

( १ ) कालव्यतिक्रमे सति यन्नियतेषु विहितं श्रौतेषु अनाम्नातं(१) नैमित्तिकेषु यद्विहितं स्मार्तं तदेव भवति । तच्च 'प्रतिमहाव्याहृति सर्वाभिश्चतुर्थं सर्वप्रायश्चित्तम् (च)' (काश्रौ. २५।१२-१३) इति । कालव्यतिक्रमादन्यत्रापि भ्रेषे उत्पन्ने एतदेव भवति, नैमित्तिकान्तरविधानात् । कभा.

( २ ) कालातिक्रमे गर्भाधानादिनियतकालानां कर्मणां नियतकालव्यतिक्रमे सति प्रायश्चित्तं नियतवत् नित्यवत् नियते श्रौतकल्पे नैमित्तिकेषु यद्विहितं स्मार्तं तदेवानादिष्टं भवति । तच्च 'अविज्ञाते प्रतिमहाव्याहृति सर्वाभिश्चतुर्थं सर्वप्रायश्चित्तं च' इति । अस्यैवातिदेशः, न तूपदेशो गृह्यकारस्य । एवमन्यत्रापि भ्रेषे जाते एतदेव भवति, नैमित्तिकान्तरानभिधानात् । जभा.

( ३ ) गर्भाधानादीनि उपनयनान्तानि कर्माणि नियतकालान्यभिहितानि । यदि दैवात् पुरुषापराधाद्वा दोषाद्वा तेषां नियतस्य कालस्यातिक्रमो भवति तदा किं कर्तव्यमिति संदेहे निर्णयमाह— कालातिक्रमे यस्य संस्कारकर्मणः शास्त्रेण नियमितो यः कालः तस्य अतिक्रमे लङ्घने नियतवत् नित्यवत् नित्ये श्रौतकल्पे नित्येषु(१) यद्विहितं तद्वत् अनादिष्टं प्रायश्चित्तं भवति । ततः कृतप्रायश्चित्तस्यातिक्रान्तकाले संस्कारकर्मण्यधिकारः संपद्यते । अनादिष्टप्रायश्चित्तेतिकर्तव्यता च प्रयोगे वक्ष्यते । अत्र कालातिक्रम इत्युपलक्षणम् । अतोऽन्येषामपि कर्मणां नाशे इदमनादिष्टमेव ( सर्व ? )प्रायश्चित्तम्, गृह्यकारेण प्रायश्चित्तान्तरस्यानुपदिष्टत्वात् । किंतु श्रौतानामतिदेशे प्राप्ते 'अविज्ञाते प्रतिमहाव्याहृति सर्वाभिश्चतुर्थं सर्वप्रायश्चित्तं च' इत्यस्यैव 'कालातिक्रमे नियतवत्' इत्यनेनातिदेशः कृतः, न तूपदेशः कृतो गृह्यकारेण । तत्र अविज्ञातम् अप्रत्यक्षश्रुतिमूलं किमिदमाग्वेदिकं याजुर्वेदिकं सामवेदिकं वेत्यनिश्चितं स्मार्तं कर्म । तस्य भ्रेषे श्रौतकल्पे व्याहृतिचतुष्टयं पञ्चवारुणहोमं प्रायश्चित्तमुद्दिष्टम् । अत्र गृह्यसूत्रे गृह्योक्तकर्मणामपि स्मार्तत्वात् तद्भ्रेषे तस्यैवातिदेशो युक्तः, न पुनः प्रत्यक्षवेदमूलकर्मभ्रेषोपदिष्टानाम् । ‡ हभा.

( ४ ) सन्ति गर्भाधानादीनि नियतकालानि कर्माणि, तेषु कालातिक्रमे प्रायश्चित्तमाह— कालेति । गर्भाधानादिनियतकालानां कर्मणां नियतकालव्यतिक्रमे सति प्रायश्चित्तं नियतवत् नित्यवत् नियते श्रौतकल्पे नैमित्तिकेषु यद्विहितं स्मार्तं तदेवानादिष्टं भवति । तच्च 'अविज्ञाते प्रतिमहाव्याहृति सर्वाभिश्चतुर्थं सर्वप्रायश्चित्तं च' इति । कालव्यतिक्रमादन्यत्रापि 'यज्ञोपवीतिना बद्धशिखेन पवित्रपाणिना बद्धकच्छेन प्रदक्षिणमाचान्तेन शुचिना स्नातेन कर्म कर्तव्यम्' इत्यादिस्मृत्यन्तरविहितेऽपि भ्रेषे उत्पन्ने एतदेव भवति, नैमित्तिकान्तराविधानात् । "आवसथ्याग्निसाध्यलौकिकाग्निसाध्यानग्निसाध्यकर्मसु 'चतुर्गृहीतान्येतानि सर्वत्र' (काश्रौ. २५।९) इति प्रायश्चित्तसूत्र उक्तत्वादत्र चतुर्गृहीतं गृहीत्वा होमः कार्यः । चतुर्गृहीतं च स्रुगभावे न संभवति । अतः स्रुगुत्पाद्या" इति रामवाजपेयिभिः प्रायश्चित्ते उक्तम् । सा च होमसंबन्धादैककर्तृकी भवति । स्रुवस्तु खादिर एव । स्रुवेण प्रायश्चित्तहोम इति हरिहरः । तदयुक्तम् । अत्र श्रौतातिदेशः 'नियतवत्' इति भगवता कृतः । तत्र चतुर्गृहीतं विहितं तदत्रापि प्राप्नोत्येव । चतुर्ग्रहणं च स्रुच्येव संभवति । अतः स्रुक् प्राप्ता केन निवार्यते ?

(१) पागृ. २।५।४१.

‡ संदी. हभावत् ।

किंच, पूर्णाहुतिधर्मोऽपि हरिहरैरङ्गीकृतः । तत्र पठिता स्रुक् स्वयं कुतो नाङ्गीकृतेति ? यदि गृह्योक्तेतिकर्तव्यताऽङ्गीकृता स्यात्ततः स्यात् स्रुवेण होमः, सा नाङ्गीकृतेत्यलमतिप्रसङ्गेन । कारिकायाम्— 'मुख्यकाले नरैः कर्म कर्तुं यदि न शक्यते । गौणकालेऽपि कर्तव्यं तदनादिष्टपूर्वकम् ॥' । "इदं प्रायश्चित्तं त्वनादिष्टम् । यत्र विशिष्टप्रायश्चित्तं स्मर्यते तत्र नैतद्धूयते, किंतु तदेव तत्र भवति । यथा— 'सर्वत्र कर्ममध्ये तु क्षुत आचमनं स्मृतम् ।' । तथा— 'अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे । मार्जारमूषकस्पर्शे आक्रुष्टे क्रोधसंभवे । निमित्तेष्वेषु सर्वेषु कर्म कुर्वन्नपः स्पृशेत् ॥" इति रामवाजपेयिनः । गभा.

(५) नियते श्रौते यदनादिष्टं तद्वत् तादृशम् 'अविज्ञाते प्रतिमहाव्याहृति सर्वाभिश्चतुर्थे सर्वप्रायश्चित्तं च' इत्येतदाहुतिनवकम् । भवतीति शेषः । तथा हि— भूसंस्काराः । 'अन्वग्निः' इत्यग्नेराहरणम् । 'पृष्टो दिवि' इति स्थापनम् । 'तां सवितुः, तत्सवितुः, विश्वानि देव सवितः' इति प्रज्वालनम् । परिस्तरणम्, पात्रासादनम्, पवित्रे, आज्यस्थाली, आज्यम्, संमार्गकुशाः, उपयमनकुशाः, स्रुवः । निरुप्याऽऽज्यमधिश्रित्य पर्यग्नि कुर्यात् । स्रुवं प्रतप्य संमृज्य लौकिकोदकेनाभ्युक्ष्य पुनः प्रतप्य निदध्यात् । आज्यमुद्वास्य पवित्राभ्यामुत्पूयावेक्ष्य कुशोपग्रहो दक्षिणं जान्वाच्य जुहुयात्— तिस्रो महाव्याहृतयः सर्वाभिश्चतुर्थी सर्वप्रायश्चित्तं च । इदमग्नये, इदं वायवे, इदं सूर्याय, इदं प्रजापतये, इदमग्नीवरुणाभ्याम्, इदमग्नये अयासे, इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यः, इदं वरुणायादितये । एतच्चाऽऽग्नेयव्रतस्थस्य बटोः । शुक्रियव्रतस्थस्तु— 'संध्याकाले व्यतिक्रान्ते जपं कुर्यात् पुनर्मनः । ऋचं वाचं तृचं जप्त्वा कालदोषैर्न लिप्यते ॥' । अन्यदपि— 'आदित्योऽभ्युदियाद्यस्य संध्योपास्तिमकुर्वतः । स्नात्वा प्राणांस्त्रिरायम्य गायत्र्यष्टशतं जपेत् ॥' । केचित्तु 'कालातिक्रमे नियतवत्' इत्यनेन गर्भाधानादिसकलकर्मकालातिक्रमे श्रौतानादिष्टातिदेश इत्याहुः । विभा.

## नारदः

गर्भाधानाद्येकैकलोपे व्याहृतिहोमपूर्वकं पादकृच्छ्रम्, चौललोपेऽर्धकृच्छ्रम्, मत्या लोपे द्विगुणम्

[१]आरभ्याऽऽधानमा चौलात्कालातीते तु कर्मणाम् ।
आज्यं व्याहृतिभिर्हुत्वा प्रायश्चित्तं समाचरेत् ॥
[२]एतेष्वेकैकलोपे तु पादकृच्छ्रं समाचरेत् ।
चौलकेऽर्धं तु सर्वत्र मत्या तु द्विगुणं चरेत् ॥

## भृगुः

पूर्वसंस्कारलोपप्रायश्चित्तेनोपनयनाधिकारः

[३]गर्भाद्यसंस्कृतस्यापि कर्तव्यं चोपनायनम् ।
प्रायश्चित्तं तु पूर्वेषां नौपनायनिकस्य तु ।
श्रौतस्मार्ताधिकारी स्यान्नौपनायनिकं विना ॥

## कात्यायनः

सर्वप्रायश्चित्तहोमपूर्वकं पूर्वसंस्कारेषु पादकृच्छ्रं चौलेऽर्धकृच्छ्रं च

[४]संस्कारा अतिपद्येरन् स्वकालाच्चेत्कथंचन ।
हुत्वैतदेव कर्तव्या ये तूपनयनादधः ॥
(१) एतदित्यनेन सर्वप्रायश्चित्तमनुकृष्टम् ।
$ संत. ९१२

---

$ मुक्ता. संतवत् ।

(१) धप्र. ३९ (=) ; मुक्ता. ८४ समा (यथाऽऽ) ; आन. १४९ (=) तीते (तीतौ) त्तं समा (त्तमथाऽऽ) ; संग. ३८० वीरमित्रोदये.

(२) धप्र. ३९ (=) उत्तरार्धे (चौलकर्मण्यतिक्रान्ते पादकृच्छ्रद्वयं चरेत् ॥) ; मुक्ता. ८४ ; आन. १४९ (=) कृच्छ्रं समा (कृच्छ्रमथा) ; संग. ३८० एतेष्वे (एतच्चै) शेषं धप्रवत्, वीरमित्रोदये.

(३) प्रपा. २२० ; संप्र. ३३२ ; विपा. ४८३ ; संग. ६३२.

(४) सर्वकात्यायनवचनानां स्थलादिनिर्देशः संस्कारोपोद्घातप्रकरणे (सं. का. पृ. ५३) द्रष्टव्याः.

(२) एतत् स्वयमेव वक्ष्यमाणम् । तस्मिन् कृतेऽपि ते कर्तव्या एव, तैरेवोपनयनयोग्यत्वात् । तथा च देवलः– 'प्रथमं मातापितृभ्यां गर्भाधानादिभिः संस्कृतो गर्भाष्टमे वर्षे तूपनयनार्हो भवति' इति । इदं च तेषां गौणकालसद्भावे । तदतिक्रमे तु प्रायश्चित्तमात्रमेव ।

$ संप्र. ३३२

**गर्भाधानादिचौलान्ते स्वकाले विधिनाऽकृते ।**
**प्रत्येकं पादकृच्छ्रं स्याद्द्विगुणं स्यादनापदि ॥**
**त्वं नः स त्वं न इत्याभ्यामिमं मे त्वेतया ऋचा ।**
**ये ते शतमयाश्चाभ्यामुदुत्तममृचाऽऽहुतीः ॥**
**हुत्वा पृथक् पृथक् पादमर्धं चौले समाचरेत् ।**
**स्त्रीणामप्येवमेवं स्याज्जाताद्याऽमन्त्रिका क्रिया ॥**

सर्वप्रायश्चित्तं च पञ्चभिः प्रत्यृचं 'त्वं नो अग्ने' इति द्वाभ्याम् 'अयाश्चाग्ने, ये ते शतम्, उदुत्तमम्' इति च ॥

एतेष्वेकैकलोपे पादकृच्छ्रः, चौडलोपे त्वर्धं कृच्छ्रम् । मपा. ३६३

### लघ्वाश्वलायनः

प्रतिसंस्कारमेकैककृच्छ्रं संस्कारानुष्ठानं च, मन्त्रजपः

**[१]यदुक्तं च यथाकाले कुर्यात्संस्कारकर्म च ।**
**असामर्थ्यात्कृतं नो चेद्विधिस्तस्य कथं भवेत् ॥**
**प्रायश्चित्तं विधायाऽऽदावेकैकस्य च कर्मणः ।**
**कृत्वाऽऽदौ कृच्छ्रमेकैकं लुप्तकर्माणि कारयेत् ॥**
**मन्त्रमेकं जपेत्तत्र तत्तत्कर्मणि एव हि ॥**

### शौनककारिकाः

आपदि कालात्यये प्रायश्चित्तपूर्वकसंस्कारानुष्ठानम्, तत्र चौलातिरिक्तेषु होमपूर्वकं पादकृच्छ्रं चौले होमपूर्वकमर्धकृच्छ्रम्, अनापदि द्विगुणं प्रायश्चित्तम्

**[२]आरभ्याऽऽधानमा चौलात् कालेऽतीते तु कर्मणाम् ।**
**व्याहृत्याऽऽज्यं सुसंस्कृत्य हुत्वा कर्म यथाक्रमम् ॥**
**[१]एतेष्वेकैकलोपेऽपि पादकृच्छ्रं समाचरेत् ।**
**चूडाया अर्धकृच्छ्रं स्यादापदि त्वेवमीरितम् ॥**
**[२]अनापदि तु सर्वत्र द्विगुणं द्विगुणं चरेत् ॥**

(१) गर्भाधानपुंसवनसीमन्तोन्नयनविष्णुबलिजातकर्मनामकर्मनिष्क्रमणान्नप्राशनचौलकर्मान्तनवसंस्काराणां प्रतिसंस्कारं समस्ताभिर्व्याहृतिभिरेकैकाज्याहुतिरूपं कालात्ययनिमित्तकप्रायश्चित्तं कुर्यात् । चौलातिरिक्तानां संस्काराणां प्रमादादकरणे प्रत्येकं पादकृच्छ्रम्, चौलाकरणेऽर्धकृच्छ्रम् । बुद्धिपूर्वकं चौलातिरिक्ताकरणे प्रत्येकमर्धकृच्छ्रम्, चौलाकरणे कृच्छ्रं बटुना कारयेत् । ततश्चौलहोमः कार्य इत्यर्थः । कुभ. ९४७–९४८

(२) आधानं गर्भाधानम् आरभ्य चौलान्तानां संस्काराणां सर्वेषामसर्वेषां वा कालेऽतीते कालातिक्रमे सति आज्यं संस्कृत्य व्याहृत्या समस्तव्याहृतिभिः कर्मसंख्यया-

---

$ संग. संप्रवत् ।

(१) लघ्वाश्वस्मृ. ९।१९–२१.

(२) शौका. ४ पृ. ४२ कालेऽ (काला); प्रपा. २२० शौकावत्; गभा. २३३; प्रर. ७९; संप्र. ३३२; चम. १० कालेऽतीते (काले नीते); सिन्धु. ९४७ ज्यं सुसं (ग्निं तु सं); विपा. ४८४; संको. १०४; बाल. १।११–१२ पृ. ३३; संग. ६३२ क्रमम् (सुखम्); संव. ६९; कुभ. ८३९ (=); संर. २६८ कर्म यथा (चैव यथा) इत्यपि पाठः, स्मृतिः.

(१) शौका. ५ पृ. ४२; प्रपा. २२० या अर्धं (यामर्धं); गभा. २३३ लोपेऽपि (लोपे तु) दि त्वेव (दीत्येव); प्रर. ७९ या अर्धं (याश्चार्धं); संप्र. ३३२; चम. १०; संम. १९; सिन्धु. ९४८ लोपेऽपि (लोपे तु); विपा. ४८४; संको. १०४; बाल. १।११–१२ पृ. ३३ सिन्धुवत्; संग. ६३२ प्रपावत्; संव. ६९ प्रपावत्; संर. २६८ त्वेवमीरि (त्वेव भाषि) स्मृतिः.

(२) शौका. ६ पृ. ४२; प्रपा. २२०; गभा. २३३; प्रर. ७९; संप्र. ३३३ गुणं द्वि (गुणाद्द्वि); चम. १०; संम. १९; सिन्धु. ९४८; विपा. ४८४; संको. १०४ द्विगुणं द्वि (तदेव द्वि); बाल. १।११–१२ पृ. ३३; संग. ६३२ संप्रवत्; संव. ६९; संर. २६८ चरेत् (भवेत्) स्मृतिः.

ऽऽव्याहुतीर्हुत्वा तावत्संख्यया ऽऽपदि पादकृच्छ्रं चूडातिक्रमनिमित्तमर्धकृच्छ्रं प्रायश्चित्तं कुर्यात् । अनापदि तु चूडातिक्रमनिमित्तं कृच्छ्रम् इतरत्रार्धकृच्छ्रमिति विशेषः । ततोऽतीतं यथाक्रमं कर्म चरेत् । 'कालेऽतीते तु' इत्यत्र तुशब्दोऽप्यर्थे । तेन लोपस्यापि संग्रहः । यदि प्रमादन्तरितं कर्म, तदीयान्तरितप्रायश्चित्तं वाऽकृत्वैवाऽग्रिमसंस्कारं करोति तदा पूर्वस्य लोपः, इतरथाऽतिक्रमः । तत्र लोपेऽप्यतिक्रान्तप्रायश्चित्तवदेव प्रायश्चित्तं द्रष्टव्यम् । परं त्वतीतकर्मानुष्ठानमत्र नास्ति, 'प्रायश्चित्ते कृते पश्चादतीतमपि कर्म वै । कार्यमित्येक आचार्या नेत्यन्ये तु विपश्चितः ॥' इति वचनेनातिक्रान्तस्यैव कर्मणः कर्तव्यताप्रतिपादनात् । यद्यप्यत्र होमोत्तरमतीतकर्मानुष्ठानं तदनन्तरं कृच्छ्रादिप्रायश्चित्तमिति क्रमः प्रतीयते, तथाऽपि पाठक्रमादार्थक्रमस्य बलीयस्त्वाद्धोमोत्तरं कृच्छ्रादिप्रायश्चित्तं ततोऽतीतकर्मानुष्ठानमित्येवात्र क्रमः । 'हुत्वा चैव यथाक्रमम्' इति पाठे तु यथाक्रमं यथासंख्यं व्याहृतिभिर्हुत्वा कृच्छ्रादिप्रायश्चित्तं चरेदित्यर्थः । अतीतकर्मानुष्ठाने 'प्रायश्चित्ते कृते पश्चात्' इत्यनेन विकल्पः । एतेषु गर्भाधानादिचौलान्तेषु कर्मसु मध्य एकस्यैकस्य लोपे पादकृच्छ्रप्रायश्चित्तं चरेदिति 'एतेष्वेकैकलोपेऽपि' इत्यस्यार्थः । अपिशब्दो द्व्यादिकर्मलोपसमुच्चयार्थः । तेन कर्मद्वयलोपे त्रिप्रभृतिकर्मणां सर्वेषामसर्वेषां वा लोपेऽपि पादकृच्छ्रप्रायश्चित्तं भवति । पादकृच्छ्रविषय एवैकैकस्य लोपस्य निमित्तत्वोक्तिर्होमे एकैकलोपस्य निमित्ततायाः पाक्षिकतां गमयतीति द्रष्टव्यम् । अथवैवं योजना— अपिरवधारणार्थः । तस्य च पादकृच्छ्रमित्यनेनान्वयः । तथा चायमर्थो भवति— गर्भाधानादिचौलान्तेषु कर्मसु मध्य एकैकस्य संस्कारस्य लोपे पादकृच्छ्रमेव चरेत्, न होम इति । अयं च होमः प्रतिसंस्कारं समस्तव्याहृतिभिः कार्यः, अनन्तरोदाहृतस्मृतिवाक्यात् । सं. २६८–२६९

## रेणुकारिकाः

कालात्ययेऽनादिष्टहोमपूर्वकं संस्कारानुष्ठानम्

[1]'संस्कारा अतिपद्येरन् स्वकालाच्चेत्कथंचन ।
हुत्वाऽनादिष्टकं कार्यं ये तूपनयनादधः ॥

(१) रेका. ४२–४३ पृ. १९.

# विकलाङ्गादिसंस्कारः

## शङ्खः

मूकोन्मत्तौ न संस्कार्यौ

[1]**नोन्मत्तमूकान् संस्कुर्यात् ॥**

(१) नोपनयीतेत्यर्थः। अप. १।१५४ पृ. २२४

(२) प्राकृतेन विधिनेति व्याख्येयम्, अन्यथा ब्रह्मपुराणाद्युक्तोपनयनविधिविरोधापत्तेः। संप्र. ४०६

## देवलः

षण्ढो न संस्कार्यः

[2]**षण्ढको हीनलिङ्गः स्यात्संस्कारार्हश्च नैव सः ॥**

द्विजोत्पन्नः षण्ढोऽपि शूद्रसमः, 'वसन्ते ब्राह्मणमुपनयीत' इत्युपनयनविधौ चमसाध्वर्युवद्गुपादेयत्वेन विवक्षितपुंस्त्वात्स्त्रीणामिव तस्याप्युपनयनाभावात्, अष्टवर्षवाक्ये उद्देश्यत्वेऽपि प्राप्तानुवादेन पुंस एवानुवादात्। मिताक्षरायां देवलोऽपि— 'षण्ढको हीनलिङ्गः स्यात्संस्कारार्हश्च नैव सः।' इति। अत एव तत्रैव वृद्धमनुः— 'षण्ढं तु ब्राह्मणं हत्वा शूद्रहत्याव्रतं चरेत्।' इति। बौधायनसूत्रे स्मृत्यर्थसारे च वचनादुपनयनमुक्तम्। शूक. २५७

## स्मृत्यन्तरम्

मूकोन्मत्तौ न संस्कार्याविति संस्कार्याविति च मतभेदः, षण्ढादयः संस्कार्याः

[3]**मूकोन्मत्तौ न संस्कार्यौ कर्मस्वनधिकारतः।**
**तदपत्यं तु संस्कार्यं यज्ञार्हमिति च श्रुतिः ॥**

[4]**ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणस्तु श्रुतेर्बलात्।**
**कर्मस्वनधिकारेऽपि संस्कारार्ह इति श्रुतिः ॥**

---

(१) अप. १।१५४ पृ. १२४ क्रमेण शङ्खलिखितौ; ब्रक. १०५; उ. १।१।९; हभा. २२५; संप्र. ४०६; बाल. १।१४ पृ. ४७. (२) शूक. १०, २५७.

(३) मुक्ता. १००; आन. १६०.

(४) मुक्ता. १०० कारेऽपि (कारोऽपि); आन. १६०.

[1]**षण्ढान्धबधिरस्तब्धजडगद्गदपङ्गुषु।**
**कुब्जवामनरोगार्तशुष्काङ्गिविकलाङ्गिषु ॥**
**मत्तोन्मत्तेषु मूकेषु शयनस्थे निरिन्द्रिये।**
**ध्वस्तपुंस्त्वेऽपि चैतेषु संस्काराः स्युर्यथोचिताः ॥**

(१) मूकोन्मत्तौ न संस्कार्यावित्येके। कर्मस्वनधिकारात् पातित्यं नास्ति। तदपत्यं तु संस्कार्यम्, 'ब्राह्मण्यां ब्राह्मणेनोत्पन्नो ब्राह्मण एव' इति स्मृतेः। अन्ये तु तावपि संस्कार्यावित्याहुः। हभा. २२४–२२५

(२) यस्मिन्यस्मिन् संस्कारे क्रियमाणे तद्विहितकर्मसु समर्थो भवति तैः संस्कार्य एवेत्यर्थः।... 'ब्राह्मण्यां ब्राह्मणेनोत्पन्नो वा ब्राह्मण एव' इति श्रुतेः। अत्र ब्राह्मणत्वजात्या क्षत्रियत्वाद्यप्युपलक्ष्यते, असंस्कृतेऽपि जातिमात्रस्यानपायात्। ब्राह्मण एव भवति, न द्विजातिरेवेत्यर्थः। $ मपा. ३६–३७

## ब्रह्मपुराणम्

षण्ढादयः संस्कार्याः, मत्तोन्मत्तविषये मतभेदः

[3]**ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स इति श्रुतिः।**
**तस्माच्च षण्ढबधिरकुब्जवामनपङ्गुषु ॥**

---

$ शेषं हभावत्।

(१) हभा. २२४; मपा. ३६ शुष्काङ्गि (शुष्काङ्ग); मुक्ता. १०० स्मृतिरत्ने; आन. १६० स्मृतिरत्ने.

(२) हभा. २२४; मपा. ३६ चिताः (चितम्); मुक्ता. १०० स्त्वेऽपि (स्त्वेषु) चिताः (चितम्) स्मृतिरत्ने; आन. १६० सर्वं मुक्तावत्.

(३) प्रपा. ११९; गभा. २३१; संप्र. ३९९–४००; संम. २५; सिन्धु. ९४४; विपा. ४८२; बाल. १।१४ पृ. ४७; संग. ६४०; संर. २७५ तस्माच्च षण्ढ (तस्मात् षढान्ध) एतदादिब्रह्मपुराणश्लोकानां गदाधर-

**[१]जडगद्गदरोगार्तशुष्काङ्गविकलाङ्गिषु ।**
**मत्तोन्मत्तेषु मूकेषु शयनस्थे निरिन्द्रिये ॥**

**[२]ध्वस्तपुंस्त्वेषु चैतेषु संस्काराः स्युर्यथोचितम् ।**
**मत्तोन्मत्तौ न संस्कार्याविति केचित्प्रचक्षते ॥**

**[३]कर्मस्वनधिकाराच्च पातित्यं नास्ति चैतयोः ।**
**तदपत्यं च संस्कार्यमपरे त्वाहुरन्यथा ॥**

(१) अस्यार्थः— अत्र ऊढात्वविशेषणमनपेक्ष्यैव केवलब्राह्मणब्राह्मणीजन्यत्वेन गोलकादिसाधारणं ब्राह्मण्यमभिप्रेत्येदमुच्यते— ब्राह्मण्यामिति । तेनेदं गौणं ब्राह्मण्यम् , तन्निमित्तक एवायमुपनयने § गुणविकारः । कुब्जवामनादिषु सत्यपि मुख्ये ब्राह्मण्ये कुब्जत्वादिनिमित्तक एवास्योपदेशः । तेन गुणविकारे निमित्तद्वयं सिध्यति— गौणं ब्राह्मण्यं कुब्जत्वादिकं चेति । अन्यथा कुब्जादीनामत्र परिगणनमनर्थकं स्यात् । षण्ढादयोऽत्र जात्यैवावधेयाः । चिकित्सनीयेषु पुनर्यथावदुपनयनं कार्यम् , न गुणविकारः । मत्तः मद्यादिना । उन्मत्तः ग्रहावेशादिना । शयनस्थः उत्थानाशक्तः । निरिन्द्रियः षडिन्द्रियशून्यः । ध्वस्तपुंस्त्वः दोषविशेषेणाप्रत्यानेयपुंस्त्वः । यथोचितं यस्य यदङ्गोपसंहारसामर्थ्यं नास्ति तस्य तदङ्गपरिहारेण कर्तव्यमित्यर्थः । मत्तोन्मत्तयोर्मतान्तरमाह— मत्तोन्मत्तौ न संस्कार्याविति । तत्र हेतुमाह— कर्मस्वनधिकारादिति । तदपत्यसंस्कारे हेतुमाह— पातित्यं नास्ति चैतयोरिति । ततश्च व्यतिरेकमुखेन पतितापत्यं न संस्कार्यमित्युक्तं भवति, ‘ पतितोत्पन्नः पतितो भवति, अन्यत्र स्त्रियाः ’ इति वसिष्ठस्मरणात् । ‘ तदपत्यं तु संस्कार्यम्’ इत्यत्र तुशब्देन विवक्षितं विधिं विच्छिद्य प्राकृत एव विधिरनूद्यते संस्कार्यपदेन । अन्यथा ‘ अपरे त्वाहुरन्यथा ’ इति अन्यथापदेन विवक्षितविधेः पक्षान्तरत्वाभिधानं नोपपद्येत । ततश्च मत्तोन्मत्तापत्यस्य प्राकृतविधिगुणविकारौ वैकल्पिकौ भवतः ।

§ संप्र. ४००–४०१

(२) तस्माच्चेति । अस्य ‘ तदपत्यं च संस्कार्यम् ’ इत्यन्तं संबन्धः । तस्मात् उक्तश्रुत्या ब्राह्मणत्वात् । षण्ढेति । अन्धादीनामुपलक्षणम् । यथोचितम् अशक्याङ्गं विहाय । अन्यथा मूकोन्मत्तौ संस्कार्यौ । कुभ. ९४४

(३) गद्गदः गद्गदभाषी । रोगार्तः अपस्मारादिरोगार्तः । शुक्लाङ्गः श्वेतकुष्ठादिमान् । विकलानि दुर्बलानि हीनानि वा अङ्गानि यस्य सः । उन्मत्तः उन्मादवान् । ध्वस्तं पुंस्त्वं यस्य सः । निर्गतमिन्द्रियं यस्य सः । आघातेन छिन्नेन्द्रिय इति यावत् । ‘यथोचितम् ’ इत्यनेन ये ये द्विजत्वनिष्पादका उचिता विहिताः संस्कारास्त एतेषामप्यशक्याङ्गहानेन कार्या इति सूच्यते । द्विजत्वनिष्पादका इति विशेषणदानेनाग्न्याधानादीनां स्थालीपाकानां च व्यावृत्तिः क्रियते । तेषां हि केवलं प्रत्यवायमात्रनिवर्तकत्वम् , न तु द्विजत्वनिष्पादकत्वम् । केचिदाचार्याः मूकोन्मत्तौ न संस्कार्याविति वदन्ति ।

---

§ अयं गुणविकारो विकलाङ्गाद्युपनयनप्रयोगप्रकरणे संग्रहीष्यते ।

भाष्ये विधानपारिजाते च ‘ प्रयोगपारिजाते ’ इति, संस्कारमयूखे च ‘ ब्रह्माण्डे ’ इति निर्देशः .

(१) **प्रपा.** २१९ लाङ्गिषु (लादिषु) ; **गभा.** २३१ ; **संप्र.** ४०० ; **संम.** २५ ; **सिन्धु.** ९४४ ; **विपा.** ४८२ ; **बाल.** १।१४ पृ. ४७ ; **संग.** ६४० प्रपावत् ; **संर.** २७५ शुष्का ( शुक्ला ) उत्तरार्धे ( उन्मत्ते च तथा मूके ध्वस्तपुंस्त्वे निरिन्द्रिये ॥ ).

(२) **प्रपा.** २१९ ; **गभा.** २३१ ; **संप्र.** ४०० ; **मुक्ता.** १०० मत्तो ( मूको ) उत्त., स्मृतिरत्ने ; **संम.** २५ ; **सिन्धु.** ९४४ ; **शूक.** २५७ पू. ; **विपा.** ४८२ ; **आन.** १६० सर्वं मुक्तावत् ; **बाल.** १।१४ पृ. ४७ ; **संग.** ६४० संस्काराः ( संस्कार्याः ) ; **संर.** २७५ पूर्वार्धे (सर्वेष्वेतेषु संस्कारा भवेयुस्ते यथोचितम् ।) मत्तो (मूको).

(३) **प्रपा.** २१९–२२० ; **गभा.** २३१ ; **संप्र.** ४०० च ( तु ) ; **मुक्ता.** १०० चैतयोः ( च द्वयोः ) स्मृतिरत्ने ; **संम.** २५ ; **सिन्धु.** ९४४ ; **विपा.** ४८२ ; **आन.** १६० सर्वं मुक्तावत् ; **बाल.** १।१४ पृ. ४७ ; **संग.** ६४० चैत ( वै त ) ; **संर.** २७५.

§ संग. संप्रवत् , संम. संप्रगतम् ।

उपनयनाद्यैरिति शेषः । तेषामध्ययनासंभवेनाध्ययनार्थस्योपनयनस्याभावात् । उपनयनवत्काण्डव्रतादीनामप्यभावः । उन्मत्तः उन्मादवान्, विक्षिप्तचित्त इति यावत् । एतयोः मूकोन्मत्तयोः कर्मसु उपनयनादिकर्मसु अनधिकारात् अधिकाराभावात् । चकारोऽवधारणार्थः । कर्मस्वधिकाराभावादेव पातित्यं नास्तीत्यर्थः । द्वितीयचकारः समुच्चयार्थः । उपनयनादिकर्माणि न सन्ति पातित्यं च नास्तीत्येवं समुच्चयः । मूकोन्मत्तयोः कर्मस्वनधिकारात् पातित्यम् ( इति ? ) नास्ति, किंतु 'ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः सः' इति श्रुत्या ब्राह्मणादुत्पन्नयोर्मूकोन्मत्तयोरप्युपनयनादिसंस्कारार्हत्वप्रतिपादनात्तावपि संस्कार्यौ तदपत्यं च संस्कार्यमित्यपरे अन्यथा 'न संस्कार्यौ' इति कैश्चिदाचार्यैरुक्तं तद्विपरीतमेतादृशमर्थम् आहुः । $ आदिशब्देन मार्जनोपस्थानादिकाण्डव्रतानां लोप एव, तेषामध्ययनाङ्गत्वात् । न चैवमुपनयनस्याप्यध्ययनार्थत्वान्मूकोन्मत्तविषये लोपोऽस्त्विति वाच्यम्, तस्य द्विजत्वसंपादनद्वाराऽध्ययनार्थत्वेनाध्ययनासंभवेऽपि द्विजत्वसंपादनायावश्यमपेक्षितत्वात् । एवं गोदानमपि भवत्येव, तस्याध्ययनाङ्गत्वाभावात् । विवाहसंभवे समावर्तनमपि कंचित्कालं व्रताचरणं कृत्वोत्तरायणे कार्यम् । विद्यास्नानोभयस्नानयोरभावाद्व्रतस्नानमेव तयोः । विवाहासंभवे तु तस्य नैष्ठिकब्रह्मचर्यमेव । कलौ यो नैष्ठिकब्रह्मचर्यनिषेधः स मूकोन्मत्तत्वदोषरहितपुरुषपरः । संर. २७५–२७६

## अनिर्दिष्टकर्तृकवचनम्

मूकादयः संस्कार्याः

**[1]मूकाद्या व्रतमोक्षान्तैः संस्कारैस्तु यथोचितैः ।
संस्कार्यास्तत्र मन्त्रोक्तिः कर्तव्या गुरुणा
सकृत् ॥**

$ विकलाङ्ग्याद्युपनयनप्रयोगप्रकरणे एतदुत्तरं 'संस्कारमन्त्रहोमादीन्' इति वचनं निवेशितम्, तत्रत्योऽयं आदिशब्दो द्रष्टव्यः ।

(१) ज्योनि. ३५४.

## स्मृत्यर्थसारः

षण्ढादयः संस्कार्याः, मूकोन्मत्तविषये मतभेदः

**[1]षण्ढान्धबधिरस्तब्धजडगद्गदपङ्गुषु ।
कुब्जवामनरोगार्तशुष्काङ्गविकलाङ्गिषु ॥**

**[2]मत्तोन्मत्तेषु मूकेषु शयनस्थे निरिन्द्रिये ।
ध्वस्तपुंस्त्वेऽपि चैतेषु संस्काराः स्युर्यथोचितम् ॥**

यस्मिन् यस्मिन् संस्कारे क्रियमाणे तद्विहितकर्मसु समर्थो भवति तैः संस्कार्य एवेत्यर्थः । मूकोन्मत्तौ न संस्कार्यौ इत्येके । एतेषामसंस्कारेऽपि पातित्यं नास्ति, कर्मस्वनधिकारात् । तदपत्यं तु संस्कार्यमेव, 'ब्राह्मण्यां ब्राह्मणेनोत्पन्नो वा ब्राह्मण एव' इति श्रुतेः । अत्र ब्राह्मणत्वजात्या क्षत्रियत्वादि अप्युपलक्ष्यते, असंस्कृतेऽपि जातिमात्रस्यानपायात् । ब्राह्मण एव भवति न द्विजातिरेवेत्यर्थः । मपा. ३६–३७

**[3]मूकोन्मत्तौ न संस्कार्यावित्येके । कर्मस्वनधिकारात् पातित्यं नास्ति । तदपत्यं संस्कार्यम्, 'ब्राह्मण्यां ब्राह्मणेनोत्पन्नो ब्राह्मण एव' इति श्रुतेः । अन्ये संस्कार्या इत्याहुः ॥**

(१) स्मृसार. ४; मपा. ३६ स्मृत्यन्तरे; चम. १५ गार्तशुष्काङ्ग (ग्यार्तशुष्काङ्गि) ; संको. १५२ ; संब. १२७.

(२) स्मृसार. ४; मपा. ३६ स्मृत्यन्तरे; चम. १५–१६ ; संको. १५२ उत्त. ; संब. १२७ उत्त.

(३) स्मृसार. ४; चम. १६ ('ब्राह्मण्यां...श्रुतेः०); मुक्ता. १०१ ( षण्ढान्धादिषु यथोचितं संस्कारः । मूकोन्मत्तावसंस्कार्यावित्येके । कर्मस्वनधिकारात् पातित्यं नास्ति । तदपत्यं संस्कार्यम् । ब्राह्मण्यां ब्राह्मणोत्पन्नो ब्राह्मण एवेति स्मृतेः । अन्ये न संस्कार्यावित्याहुः । ) ; संको. १५२ मूको ( मत्तो ) पातित्यं ( पतितत्वं ) णेनोत्पन्नो ( णादुत्पन्नो ) र्या इत्याहुः ( र्यावित्याहुः ) ; संब. १२७ र्या इत्याहुः ( र्यावित्यर्थः ) शेषं संकोवत् .

# विद्यारम्भः

**वसिष्ठः**

विद्यारम्भे सरस्वतीगणेशपूजनम् , वर्षायनतिथिवारलग्ननवांशदिवसभागग्रहसंस्थानानि, सारस्वतयोगाः

[1]उदग्गते भास्वति पञ्चमेऽब्दे
प्राप्तेऽक्षरस्वीकरणं शिशूनाम् ।
सरस्वतीं विघ्नविनायकं च
गुडौदनाद्यैरभिपूज्य कुर्यात् ॥

शिशुभिः पञ्चमे वर्षे प्राप्ते उदगयनेऽक्षरस्वीकरणं कर्तव्यम् । $ प्रपा. २१०

[2]दिवसांशोदया वर्ज्या यत्नेन कुजसौरयोः ।
श्रेष्ठाः सितज्ञजीवानां मध्यमाश्चन्द्रसूर्ययोः ॥
[3]रविवारे तु पूर्वाह्णे विद्यारम्भो विधीयते ।
चन्द्रवारेऽपराह्णे तु विद्या गुर्वी विधीयते ॥
[4]रात्रौ तु वर्जयेन्नित्यं संध्ययोश्च विशेषतः ॥

[5]रिक्ताऽष्टमी पञ्चदशी निषिद्धा
त्रयोदशी सप्तमिका च मध्या ।
विद्यागमे वित्सितमन्त्रिणां स्यु-
र्वाराः शुभा मध्यममिन्दुभान्वोः ॥

चतुर्थीनवमीचतुर्दश्यो रिक्ताः । शेषाः प्रसिद्धाः । एताः पञ्च तिथयो विद्यारम्भे निषिद्धाः । त्रयोदशीसप्तम्यौ मध्यमे । शिष्टाः शुभावहा इति वाक्यशेषः । वित्सितमन्त्रिणामिति । वित् बुधः , सितः शुक्रः , मन्त्री गुरुः , एषां त्रयाणां वारवर्गोदयाः शस्ताः । इन्दुभान्वोर्वारोदया मध्यमाः । अन्येषां वारोदया वर्ज्या इति वाक्यशेषः । प्रपा. २५७

[1]विद्यारम्भे द्विस्वभावा विशिष्टा
मध्याः प्रोक्ता ये चरा राशयश्च ।
शुद्धे लग्ने नैधने पुत्रधर्मे
कुर्यात्प्राज्ञः सर्वविद्यासमाधिम् ॥

[2]भ्रातृषष्ठायकर्मस्थाः पापाः सर्वे शुभावहाः ।
स्त्रीमृत्युवर्ज्ये शुक्रज्ञौ हीन्दुर्विनिधनोदयौ ॥

[3]सावित्रनक्षत्रतृतीयपादे
तीक्ष्णांशुशीतांशुशशाङ्कजाश्चेत् ।
तस्योदये ज्ञार्कनिशेशवारे
सारस्वतं योगमुदाहरन्ति ॥

ज्ञार्कचन्द्राणां पृथग्भूतानामिह योगजनकत्वम् , न यौगपद्येन, चन्द्रार्कसाहित्येऽमावास्यायामध्ययनानौचित्यादनध्यायाध्येतव्यविद्यानामपि तत्रानध्यायस्मरणात् । तस्मादेते त्रयो योगा यथासंख्यसंबन्धाश्चेति युक्तम् । संसौ. १४९

आदित्यर्क्षे बुधस्यांशे वर्तन्ते ज्ञेन्दुभास्कराः ।
बुधवारे च तल्लग्ने योगः सारस्वतो भवेत् ॥

---

$ संर. प्रपावत् ।

(१) प्रपा. २०९ श्रीधरीये ; धप्र. ३९ कालविधाने ; संसौ. ९२ ; संप्र. ३२५ ; संम. २० श्रीधरः ; ज्योनि. १२० श्रीधरीये ; आन. १५० ज्यौतिषे ; संग. ६२७ उदग्गते ( समुद्गते ) ; संर. ९०४ श्रीधरीये.

(२) प्रपा. २५७–२५८ सित ( शुक्र ) ; संप्र. ३२३, ५१८ ; संर. ९०५.

(३) प्रपा. २५८ तु ( च ) ; संप्र. ३२३ धीयते ( शिष्यते ) तु विद्या ( च विद्या ) ; संकौ. ११६ ; संर. ३०९, ९०५.

(४) प्रपा. २५८ ; संप्र. ३२३ ; संर. ९०५ तु वर्ज ( विवर्ज ).

(५) प्रपा. २५७ राः शुभा ( रोदया ) श्रीधरीये ; संसौ. १४३ गमे ( गमो ) णां स्युर्वाराः शुभा ( शु स्याद्वारोदये ) उत्त. : १४५ षिद्धा त्र ( षिद्धास्त्र ) पू., क्रमेण वसिष्ठः ; संप्र. ५१९ सर्वं संसौ. १४५ वत् ; पुम. ४४० ममिन्दु ( म इन्दु ).

(१) संसौ. १४३ ; संप्र. ५२१.

(२) संप्र. ५२१–५२२.

(३) संसौ. १४९ ; संप्र. ५२२.

बुधोत्तरे गुरोरंशे केन्द्रगा ह्यार्कभार्गवाः ।
त्रयोदश्यां यमे लग्ने योगः सारस्वताह्वयः ॥

### बृहस्पतिः

विद्यारम्भे तिथिवारवर्गलग्ननवांशग्रह-
संस्थानानि, गौणकालः

[1]प्रथमा च द्वितीया च तृतीया पञ्चमी तथा ।
दशमी द्वादशी चैव एकादश्यः सुपूजिताः ॥
[2]त्रयोदशी सप्तमी च कदाचिच्छुभदे तिथी ।
यदा चन्द्रो बुधांशस्थो बुधजीवसितेक्षितः ॥
[3]वारवर्गोदया वर्ज्या दर्शनं चार्किभौमयोः ।
मध्यमौ रविशीतांशवोः शेषाणामुत्तमाः स्मृताः ॥
चरस्थिरद्विस्वभावा मध्यमाधमपूजिताः ।
शुभयुक्तेषु दृष्टेषु सर्वे पूज्यतमा ग्रहाः ॥
[4]त्रिषडायगताः पापास्त्रिकोणे कण्टके शुभाः ।
विद्यारम्भेषु पूज्याः स्युः पञ्चमे पापवर्जिते ॥

कण्टके केन्द्रे । प्रपा. २५९

[5]सप्तमस्थाः शुभाः सर्वे पूज्याः पापविवर्जिताः ।
विशेषादुदिताः सौम्याः पापसंयोगवर्जिताः ॥
विद्यारम्भेषु सर्वेषु शस्तं सारस्वतं तदा ।
तस्मात्प्रवक्ष्यते सम्यग्योगः सारस्वताह्वयः ॥
[6]हस्ते बुधांशके युक्ता यदि भान्विन्दुसोमजाः ।
सोमवारे रवौ लग्ने योगः सारस्वतो भवेत् ॥
[7]हस्ते बुधांशकस्थौ चेद्बुधेन्दू लग्नगौ तदा ।
बुधवारे मुहूर्तेऽह्नि योगः सारस्वताह्वयः ॥

(१) प्रपा. २५७ ; ज्योनि. १२९ दश्यः सुपू (दश्यस्तु पू). (२) प्रपा. २५७ ; ज्योनि. १२९.
(३) प्रपा. २५७, २५९.
(४) प्रपा. २५९ ; ज्योनि. १२९ उत्तरार्धे (विद्यारम्भे शुभाः प्रोक्ताः सक्रूरं पञ्चमं त्यजेत् ॥).
(५) प्रपा. २५९.
(६) प्रपा. २५९ ; ज्योनि. १२९.
(७) प्रपा. २५९ ; ज्योनि. १२९ तदा (यदा) मुहूर्तेऽह्नि (च होरायां) ह्वयः (भिधः).

[1]अत्युच्चस्थे बुधे लग्ने पार्थोनान्त्यत्रिभागके ।
भानौ तत्सौम्यवारेण योगो वागीश्वराह्वयः ॥

पार्थो नाम कन्या । प्रपा. २५९

[2]इन्द्वर्कज्ञदिने वारनाथे लग्ने बुधांशके ।
हस्तर्क्षे च मता ह्येते योगाः सारस्वताह्वयाः ॥
[3]वर्गोत्तमस्थे ज्ञे लग्ने जीवे चोभयराशिगे ।
गुरुशुक्रबुधाः केन्द्रे योगः सारस्वताह्वयः ॥
[4]विशेषाद्बुधवर्गेषु बुधदृष्टे बुधोदये ।
बुधवारे च होरायां विद्या शस्तोदिते विदि ॥
एषु सर्वेषु शस्तेषु शुभं स्यादितरेषु च ।
अपवादो न चेत्तत्र योगान्वक्ष्याम्यथमीदृशान् ॥
बुधोत्तमे गुरोरंशे केन्द्रगा ह्यार्कभार्गवाः ।
त्रयोदश्यां यमे लग्ने योगः सारस्वताह्वयः ॥
कर्किणः पञ्चमे भागे गुरावुदयगे सति ।
गुरोर्वारे च होरायां विद्यायोगोऽयमुत्तमः ॥
प्रारम्भे सर्वविद्यानामनध्यायं विवर्जयेत् ।
नष्टं बुधं च विबलं लग्नं क्षीणं विधुं तथा ॥
[5]द्वितीयजन्मनः पूर्वमारभेताक्षरान् सुधीः ॥

(१) पञ्चमवर्षातिक्रमे गौणकालमाह बृहस्पतिः— 'द्वितीय... ' इति । संप्र. ३२१

(२) द्वितीयं जन्म मौञ्जीबन्धनम् । संर. ९०४

(१) प्रपा. २५९ ; ज्योनि. १२९ लग्ने पार्थोनान्त्य (लग्नेऽपार्थो नाऽऽद्य) वारेण (वारे च).
(२) प्रपा. २५९ ; ज्योनि. १२९ (इन्द्वर्कज्ञदिने वारे नाथलग्ने बुधांशके । हस्तर्क्षे च गता ह्येते योगः सारस्वताह्वयः ॥).
(३) प्रपा. २५९.
(४) ज्योनि. १२९.
(५) धप्र. ३९ जन्मनः (जन्मतः) ; संप्र. ३२१ ; ज्योनि. १२० धप्रवत् ; संर. ९०४.

## गर्गः

स्थण्डिले सरस्वत्यास्तण्डुलपात्रे सरस्वतीगणेशसूत्रकार-गुरूणां चाऽऽवाहनं पूजनं च, आचार्यपूजनम्, अक्षरारम्भान्ते सरस्वत्याद्युद्वासनम्

**'स्नात्वा शुचौ समे देशे गोचर्ममात्रमुपलिप्य सैकतं स्थण्डिलं कृत्वा पलाशशाखया मृदं खनित्वा तस्यां सरस्वतीमावाहयेत्– 'नमः श्रीभुवनमातः सर्ववाङ्मयरूपे आगच्छाऽऽगच्छ' इति । तथा पात्रे तण्डुलोपरि सरस्वतीं गणेशं सूत्रकारं गुरुं च विलिख्याऽऽवाहयेत् । ततः प्रणवेनाऽऽसनार्घ्यपाद्याचमनीयस्नानवस्त्रगन्ध-पुष्पाक्षतधूपदीपपायसगुडौदननैवेद्यसमर्पणनम-स्कारान् कृत्वा विघ्नेशं संपूज्याऽऽचार्यं शक्तितो वस्त्रालंकारादिभिः पूजयित्वा सरस्वतीविघ्नेशा-चार्यौस्त्रिः प्रदक्षिणीकृत्य प्रणवपूर्वकमक्षरमार-भेत् । तत आचार्यादिवन्दनं कृत्वा सरस्वत्या-दीनावाहनक्रमेणोद्वासयेत् । विद्यावृद्धिर्भवति ॥**

## विश्वामित्रः

विद्यारम्भे वर्षमासपक्षतिथिवारनक्षत्रलग्नवांश-ग्रहसंस्थानानि

**'प्राप्ते तु पञ्चमे वर्षे त्वप्रसुप्ते जनार्दने ।**
**विद्यारम्भस्तु कर्तव्यो यथोक्ततिथिवासरे ॥**

जनार्दनस्वापकालो विष्णुधर्मोत्तरे– 'आषाढशुक्ल-द्वादश्यां शयनं कुरुते हरिः । निद्रां त्यजति कार्तिक्यां तयोः संपूज्यते हरिः ॥' इति । ¶ संप्र. ३२१

**'हस्तादित्यसमीरमित्रपुरुजि-**
**त्पौष्णाश्विचित्राच्युते-**
**ष्वारार्कार्किदिनोदयादिरहिते**
**राशौ स्थिरे वोभये ।**
**पक्षे पूर्णनिशाकरे प्रतिपदं**
**रिक्तां विहायाष्टमीं**
**षष्ठीमष्टमशुद्धिभाजि भवने**
**प्रोक्ताऽक्षरस्वीकृतिः ॥**

## देवरातः

विद्यारम्भे तिथिवारदिनभागाः

**'त्रयोदश्यक्षरे श्रेष्ठा न षष्ठी प्रतिपत्तथा ।**
**चन्द्रवारेऽपराह्णे तु विद्यायुक्तिर्विधीयते ॥**

## मार्कण्डेयः

विद्यारम्भे वर्षमासतिथिवाराः, तण्डुलेषु लिखितानां वर्णानां पूजनम्, गणेशहरिलक्ष्म्यादिपूजनम्, होमः, द्विजपूजनम्, अध्यापनम्, अनध्यायाः, देवताविसर्जनम्

**'अभ्यङ्गस्नानपूर्वं तु गन्धाद्यैश्च विभूषितः ।**
**शुक्लं वस्त्रं समास्तीर्य तण्डुलेषु विलेखयेत् ॥**

---

(१) प्रपा. २१० प्रणवेना ... कृत्य (प्रणवेन पाद्यमर्घ्य-माचमनीयं गन्धपुष्पाक्षतधूपदीपपायसगुडौदननैवेद्यसमर्पण-नमस्कारप्रदक्षिणपुष्पाञ्जल्यन्तां पूजां कृत्वा गुरुं शक्तितो वस्त्रालंकारादिभिः पूजयित्वा सर्वांस्त्रिः प्रदक्षिणीकृत्याभि-वाद्य) (तत आचार्या...र्भवति०) ; संको. ११६ पलाश (पालाश) (नमः श्री०) रूपे आ (रूपेणाऽऽ) (तथा...वाहयेत्०) (ऽऽसना०) (स्नानवस्त्र०) (विघ्नेशं संपूज्य०) चार्यादि (चार्याभि) ; संर. ९०६ तस्यां (तत्र) (नमः श्री०) (तथा...वाहयेत्०).

(२) धप्र. ३९ त्वप्रसुप्ते (प्रसुप्ते च) तिथि (विधि) ; संप्र. ३२१ ; ज्योनि. १२० प्रसुप्ते (सुप्ते च) तिथि (विधि) ; संर. ९०४ तु (च).

¶ संर. संप्रवत् ।

(१) प्रपा. ११० मित्रपुरुजित्पौष्णा (पौष्णपुरु-जिन्मित्रा) रिक्तां विहायाष्टमीं षष्ठीम (षष्ठ्यष्टमीं द्वादशीं हित्वा चा) श्रीधरीये ; धप्र. ३९ रार्कार्कि (रार्क्येश) वोभये (चोभयोः) ; सिन्धु. ९२४ रार्कार्कि (रार्क्येश) वोभये (चोभये) शुद्धि (शुद्ध) श्रीधरः ; विपा. ४६४ सर्वं सिन्धुवत् ; ज्योनि. १२० च्युते (युते) राशौ स्थिरे (चांशस्थिरे) शेषं सिन्धुवत्.

(२) संप्र. ३२२ ; संको. ११६ प्रथमपादमात्रम् ; संर. ९०५ प्रथमपादमात्रम्.

(३) संसौ. ९२ लेषु विलेख (लोपरि पूज) ; संप्र. ३२५ संसौवत् ; बाल. १।११–१२ पृ. ३७ शुक्लं व

¹शलाकया सुवर्णस्य पञ्चाशद्वर्णकान् क्रमात् ।
प्रणवादिङ्याहृतिभिर्वर्णदेवान् प्रपूजयेत् ॥

²प्राप्ते तु पञ्चमे वर्षे ह्यप्रसुप्ते जनार्दने ।
षष्ठीं प्रतिपदं चैव वर्जयित्वा तथाऽष्टमीम् ॥

विद्यारम्भश्चात्राक्षरपरिचितिः । संम. २०

§³रिक्तां पञ्चदशीं चैव सौरिभौमदिनं तथा ।
एवं सुनिश्चिते काले विद्यारम्भं तु कारयेत् ॥

§ विधानपारिजातादर्शपुस्तके 'विष्णुधर्मोत्तरे' इत्युपक्रम्य 'प्राप्ते तु पञ्चमे' इति पूर्वश्लोकं पठित्वा 'चूडा माघादिषट्के' इति दीपिकावचनमुद्धृत्य 'इति च दीपिकायाम्' इत्युक्त्वा एतदादीनि वचनानि संगृहीतानि । तत्र दीपिकावचनेन व्यवधानेऽपि, एतच्छ्लोकादौ 'विष्णुधर्मोत्तरे' इति पुनरुपक्रमाभावेऽपि च चूडाकरणमुहूर्तविषयकदीपिकावचनस्यात्र संगत्यभावात् पूर्वश्लोकेनास्यैकवाक्यत्वात् मयूखेन संवादाच्च दीपिकावचनमत्र प्रमादपतितमिति निर्णीय एतदादिवचनानां विष्णुधर्मोत्तरीयत्वमेव विधानपारिजाताभिप्रेतमित्यास्थीयते ।

(शुक्लव) उत्त ; संग. ६२७ शुक्लं व (शुक्लव) शेषं संसौवत् ; संर. ९०५ गन्धाद्यैश्च वि (गन्धवस्त्रादि) पू. ; संदी. २६६ (भागः २) संगवत् .

(१) बाल. १।११–१२ पृ. ३७ ; संर. ९०५ कान् क्रमात् (कांल्लिखेत्) पू.

(२) अप. १।१३ पृ. ३० तु (ऽथ) ह्यप्र (अप्र) ; स्मृच. २६ ह्यप्र (अप्र) ; चका. ७४४ स्मृचवत् ; पमा. ४४५ ; मपा. ३६३ तु (ऽथ) ह्यप्रसुप्ते (अप्रसूते) ; प्रपा. २०९ ह्यप्र (अप्र) तथाऽष्टमीम् (चतुर्दशीम्) ; संसौ. ९२ स्मृचवत् ; संप्र. ३२२, ५१८ उत्त. ; चम. १२ पूर्वार्धे (प्राप्तेऽथ पञ्चमे वर्षे विद्यारम्भं तु कारयेत् ।) पू. ; मुक्ता. ८४ ; संम. २० सर्वं चमवत् : अस्मिन्नेव पृष्ठे स्मृचवत्, विष्णुधर्मोत्तरे ; विपा. ४६४ तु (ऽथ) ह्यप्र (त्वप्र) विष्णुधर्मोत्तरे ; बाल. १।११–१२ पृ. ३७ ; संग. ६२७ उत्त. ; पुम. ४३७ ; संर. ९०७ द्वितीयपादे (विद्यारम्भं तु कारयेत्) पू.

(३) अप. १।१३ पृ. ३० सौरि (सौर) ; स्मृच. २६ अपवत् ; चका. ७४५ ; पमा. ४४५ ; मपा. ३६३ अपवत् ; प्रपा. २०९ रिक्तां...सौरि (पर्वाष्टम्यौ तथा रिक्ता सौर) ; संसौ. ९२ ; संप्र. ३२२, ५१८ पू. ; मुक्ता. ८४ रिभौमदिनं (रभौमदिने) ; संम. २० मुक्तावत्, विष्णुधर्मोत्तरे ; विपा. ४६४ मुक्तावत्, विष्णुधर्मोत्तरे ; बाल. १।११–१२ पृ. ३७ दिनं (दिने) ; संग. ६२७ पू. ; पुम. ४३७.

‡¹पूजयित्वा हरिं लक्ष्मीं देवीं चैव सरस्वतीम् ।
स्वविद्यासूत्रकारांश्च स्वां विद्यां च विशेषतः ॥

(१) सूत्रकाराः पाणिन्यादयः । विद्याश्च पाणिनिव्याकरणादयः । संग. ६२७

(२) स्वविद्याशब्देन स्वस्वाध्येयाश्चत्वारो वेदाः पुराणन्यायमीमांसाधर्मशास्त्रेत्येतदुपाङ्गचतुष्टयसहिताः शिक्षादिषडङ्गसहिता वैद्यशास्त्रादिचतुरुपवेदसहिता अष्टादशविद्यात्वेन प्रसिद्धा गृह्यन्ते । वैशेषिकस्य न्याये, वेदान्तस्य मीमांसायाम्, सांख्यादीनां धर्मशास्त्रेऽन्तर्भावः । तत्तत्प्रवर्तका आचार्याश्च सूत्रकारशब्देनोच्यन्ते । संदी. २६६–२६७

‡ इदमग्रिमं चेति वचनद्वयं शूद्रकमलाकरे छुरिकाबन्धनप्रकरणे मुद्रितम्, महाराष्ट्रभाषानुवादेऽप्यस्य छुरिकाबन्धनविषयकत्वं स्वशब्देनोक्तम्, तथाऽपि एतद्ग्रन्थकर्त्रैव निर्णयसिन्धौ विद्यारम्भप्रकरणेऽस्य संग्रहात् सर्वेषां ग्रन्थान्तराणां विद्यारम्भविषयकत्वस्यैव संमतत्वात् शूद्रकमलाकरेऽप्यव्यवहितपूर्वे विद्यारम्भप्रकरणे हरिलक्ष्मीसरस्वतीपूजायाः प्रमाणं विनैव कार्यत्वोक्तेश्च छुरिकाबन्धनप्रकरणेऽस्य मुद्रणं प्रामादिकमिति भाति ।

(१) अप. १।१३ पृ. ३१ ; स्मृच. २६ ; चका. ७४५ चैव (चापि) ; पमा. ४४५ ; मपा. ३६३ ; प्रपा. २०९ द्वितीयपादे (दुर्गां चैव विशेषतः) पू. ; संसौ. ९२ ; संप्र. ३२५ ; मुक्ता. ८५ ; सिन्धु. ९२४ देवीं चैव (तथा देवीं) विद्यासू (वेदं सू) विष्णुधर्मोत्तरे ; शूक. १०७ देवीं चैव (तथा देवीं) विद्यां च (च विद्यां) विष्णुधर्मे ; विपा. ४६५ स्वां विद्यां च (स्वविद्याश्च) विष्णुधर्मोत्तरे ; संको. ११६ स्वां विद्यां (स्वविद्यां) ; बाल. १।११–१२ पृ. ३७ (सरस्वतीं गणेशं च हरिं लक्ष्मीं गुरुं रविम् । स्वसूत्रकारं स्वां विद्यां शिवं चैव षडक्षरम् ॥) ; संग. ६२७ ; संव. ९४ संकौवत् ; पुम. ४३४ चकावत् ; संर. ९०६ संकौवत् ; संदी. २६६ (भागः २) स्वां विद्यां च (स्वविद्याश्च).

[1]एतेषामेव देवानां नाम्ना तु जुहुयाद्घृतम् ।
†गुडौदनैर्लड्डुकाद्यैर्नैवेद्यैश्च पृथक् पृथक् ।
दक्षिणाभिर्द्विजेन्द्राणां कर्तव्यं चात्र पूजनम् ॥

[2]प्राङ्मुखो गुरुरासीनो वरुणाशामुखं शिशुम् ।
आदौ 'ओं नमः शिवाय' वाचयित्वा षडक्षरम् ।
आदिक्षान्तं च पञ्चाशद्वर्णानध्यापयेच्छिशुम् ॥

[3]प्राङ्मुखं तु ततः कृत्वा त्रिर्लेख्यं वाचयेच्च तम् ।
अध्यापयेत्तु प्रथमं द्विजाशीर्भिः सुपूजितम् ॥

अनेन गुरुपूजनमपि कर्तव्यमिति सूचितम् ।

† संको. ११६

[1]ततः प्रभृत्यनध्यायान् वर्जनीयान्विवर्जयेत् ।
अष्टमीद्वितयं चैव पक्षान्ते च दिनद्वयम् ॥

[2]आशौच इन्द्रयात्रायां भूकम्पे राहुदर्शने ।
व्यतीपाते त्वहोरात्रमुल्कापाते तथैव च ॥

वर्जनीयान् नित्यान् दर्शादीन् । संम. २०

[3]ततः प्रणम्य सूर्यादीन् विप्रान् संतोष्य भूरिशः ।
लड्डुकाद्यैर्दक्षिणाभिर्विसृजेद्देवतादिकान् ॥

---

† अर्धमिदं नैवेद्यशब्दयोगात् 'एतेषामेव ..' इत्यतः पूर्वम् 'पूजयित्वा हरिम् ...' इत्यनेनैकवाक्यतापन्नं भवितुमर्हति ।

(१) अप. १।१३ पृ. ३१ बालव्यतिरिक्तसर्वेषु द्वितीयार्धं नास्ति; स्मृच. २६; पमा. ४४५ चात्र (चापि); मपा. ३६३; संसौ. ९२ तु (ऽपि); संप्र. ३२५ तु (ऽपि); मुक्ता. ८५; सिन्धु. ९२४ विष्णुधर्मोत्तरे; शूक. १०७ विष्णुधर्मे; विपा. ४६५ विष्णुधर्मोत्तरे; संको. ११६; बाल. १।११-१२ पृ. ३७; संग. ६२७ षामेव (षां चैव); संव. ९४ चात्र पूजनम् (पूजनं शुभम्); पुम. ४३४ मेव (मपि) तु (वै); संर. ९०६; संवी. २६६ (भागः २) तु (च) जेन्द्राणां (जाग्र्याणां).

(२) अप. १।१३ पृ. ३१ वरु (वारु) बालव्यतिरिक्तसर्वेषु प्रथमार्धमात्रम्; स्मृच. २६ वरुणाशा (वारुणाभि); पमा. ४४५ णाशा (णाभि); मपा. ३६३ स्मृचवत्; संसौ. ९२ खं शिशुम् (खः शिशुः); संप्र. ३२५ संसौवत्; मुक्ता. ८५ स्मृचवत्; विपा. ४६५ वरुणाशा (वारुण्यभि) विष्णुधर्मोत्तरे; संको. ११६ सीनो (सीत) णाशा (णाभि); आन. १५० स्मृचवत् (=); बाल. १।११-१२ पृ. ३७; संग. ६२८; संव. ९४ संकौवत्; पुम. ४३७; कुम. ९२४ (=) (प्राङ्मुखो गुरुरासीत वारुण्यभिमुखः शिशुः ।); संर. ९०६ नो वरुणाशा (त वारुण्यमि); संवी. २६६ (भागः २).

(३) अप. १।१३ पृ. ३१ येत्तु (येत) बालव्यतिरिक्तसर्वेषु उत्तरार्धमात्रम्; स्मृच. २६; पमा. ४४५ शीर्भिः (तिभिः) तम् (तैः); मपा. ३६४ येत्तु (येत) सुपू (प्रपू); संसौ. ९३ येत्तु (यीत) सुपू (प्रपू); संप्र. ३२५ संसौवत्; मुक्ता. ८५; विपा. ४६५ विष्णुधर्मोत्तरे; संको. ११६ शीर्भिः (तिभिः) तम् (तः); आन. १५० (=) द्विजाशी (द्विजो गी); बाल. १।११-१२ पृ. ३८ संकौवत्; संग. ६२८ संसौवत्; संव. ९४ संकौवत्; पुम. ४३७ संसौवत्; कुम. ९२४ (=) (अध्यापयीत प्रथमं ज्ञातिमिश्च सुपूजितः ॥); संर. ९०६ संकौवत्; संवी. २६६ (भागः २) संसौवत्.

† संर. संकौवत् ।

(१) अप. १।१३ पृ. ३१; स्मृच. २६; चका. ७४५ द्वयम् (त्रयम्); पमा. ४४५ चकावत्; मपा. ३६४ यान् विव (यानि व) पू.; संसौ. ९३ पू.; संप्र. ३२५ पू.; चम. १२ चकावत्; मुक्ता. ८५; संम. २० पू.; विपा. ४६५ चैव (राम) विष्णुधर्मोत्तरे; बाल. १।११-१२ पृ. ३८ चकावत्; संग. ६२८ चैव (राम) द्वयम् (त्रयम्); कुम. ९२५ चकावत्, नृसिंहः; संर. ९०७ पू.

(२) अप. १।१३ पृ. ३१ आशौ (अशौ) त्वहो (चाहो); स्मृच. २६; चका. ७४५ पाते चा (ते चाप्य); विपा. ४६५ च इन्द्र (चे चेन्द्र) विष्णुधर्मोत्तरे; संग. ६२८ च इन्द्र (चे चेन्द्र) रात्रमुल्कापाते (रात्रे मुक्त्वा पातं).

(३) बाल. १।११-१२ पृ. ३८.

[1]वारे दिनेशभृगुपुत्रबृहस्पतीनां
विद्वानसौ भवति योऽतिविमूढबुद्धिः।
चन्द्रे च चन्द्रतनये त्वकृशे च सर्वे
विघ्नो भवेदवनिजे रविजे विनाशः ॥

## विष्णुधर्मोत्तरपुराणम्

विद्यारम्भे ब्राह्मण-पितृ-देवता-धात्री-गुरुपूजनम्

[2]ब्राह्मणानां गुरूणां च देवतानामनन्तरम् ।
ततः संपूज्य वित्तेन धात्रीं राम गुरुं तथा ।
दक्षिणाभिर्द्विजेन्द्राणां कर्तव्यं तर्पणं तथा ॥

( १ ) विष्णुधर्मोत्तरे धात्रीपूजनमत्राधिकमुक्तम्—'ब्राह्मणानां...' इति । गुरूणां पित्रादीनाम् । गुरुम् आचार्यम् । संको. ११६

( २ ) धात्री माता । रामेति श्रोतृसंबोधनम् ।
§ संर. ९०६

[3]अकालस्तनिते चैव निर्ज्योतिषि तथाऽम्बरे ।
तथाऽकाले प्रचण्डश्च यदा वायुस्तदा भवेत् ॥
[4]प्रदोषे चाथ संयुद्धे चैत्यवृक्षे चतुष्पथे ।
गोस्थाने कुञ्जरे चाश्वे न चेत्यपि(?) तथा पठेत् ॥

[1]श्वशृगालरवैर्घोरैस्तथा च खरनिस्वनैः ।
तथा वादित्रशब्दे च प्रवृत्ते नगरोत्सवे ।
रुधिरे च स्रुते गात्राच्छस्त्रेण च परिक्षते ॥
[2]कालेषु देशेषु मयोदितेषु
पठन्ति ये राम न तेषु विद्या ॥

## अनिर्दिष्टकर्तृकवचनानि

विद्याफलम् , विद्यारम्भे वर्षमासपक्षतिथिवारनक्षत्रलग्न-नवांशदशाग्रहसंस्थानानि, प्रागल्भ्यं विद्यासाफल्य-हेतुः , गणेशादिपूजनम्

[3]विद्यया लुप्यते पापं विद्ययाऽऽयुः प्रवर्धते ।
विद्यया सर्वसिद्धिः स्याद्विद्ययाऽमृतमश्नुते ॥
द्वितीयजन्मतः पूर्वमक्षराभ्यासमारभेत् ।
मौञ्जीबन्धनतः पश्चाद्वेदारम्भः प्रशस्यते ॥
कन्यार्के सबले सौम्ये योगे सारस्वताभिधे ।
गणेशं गिरमभ्यर्च्य सर्वा विद्याः समारभेत् ॥
बृहस्पतिमतं चैव तदभावेऽधुनोच्यते ।
सौम्यायने प्रदोषादि चिन्तयेद्व्रतबन्धवत् ॥
मघाद्यायाम्यभ्रुवाग्नीन्द्रद्वीशानिन्दुकुजार्कजान् ।
अनध्यायं तदाद्यन्तं त्यक्त्वा विद्यां समारभेत् ॥
आदित्यादिषु वारेषु विद्यारम्भे फलं क्रमात् ।
आयुर्जाड्यं मृतिर्मेधा सुधीः प्रज्ञा तनुक्षयः ॥
हस्तत्रिके त्रिके कर्णात्पूर्वासु मृगपञ्चके ।
मूलाश्विमैत्रपौष्णेषु सुखसंस्कारमिष्यते ॥
शुक्लपक्षे शुभाः सर्वे विद्यारम्भे दिनं तथा ।
विहायार्धे त्रिभागं वा परं कृष्णेऽपि शस्यते ॥
यदा चन्द्रो बुधांशस्थो बुधजीवसितेक्षितः ।
निषिद्धेऽपि च मासादौ विद्या शस्तेति केचन ॥
लग्नवारदशा वर्ज्या विद्यारम्भेऽर्कभौमयोः ।
लग्ने ध्रुवे सुविद्याप्तिः स्थिरे जाड्यं चरे भ्रमः ॥

§ शेषं संकोवत् ।

(१) प्रपा. २५८ त्वकृशे ( च भृशं ) उत्त. ; संप्र. ३२२-३२३ ; मुका. ८४ ऽतिवि (ऽपि वि) त्वकृशे... विनाशः ( च भृशं च सत्त्वविघ्नं करोत्यवनिजो विजयो विनाशम् ) सायणीये ; संको. ११६ ( वारे दिनेशभृगुपुत्र-बृहस्पतीनां विद्वानसौ भवति ) एतावदेव ; संग. ६२७ विघ्नो (विघ्नं) ; संर. ३०८ संकोवत् : ९०५ पुत्र (सुत) योऽतिवि ( यो हि वि ) त्वकृशे ( च कृशे ) नाशः ( नाशम् ).

(२) संप्र. ३२५ गुरुं त ( गुरुस्त ) ; विपा. ४६५ संप्रवत् ; संको. ११६ ; संग. ६२८ गुरुं त ( गुरूंस्त ) मार्कण्डेयः ; संर. ९०६.

(३) विपा. ४६५ ; संग. ६२८ मार्कण्डेयः .

(४) विपा. ४६५ ; संग. ६२८ युद्धे ( शुद्धे ) चेत्यपि ( चैत्येऽपि ) मार्कण्डेयः .

(१) विपा. ४६५ ; संग. ६२८ तृतीयार्धं नास्ति, मार्कण्डेयः .

(२) विपा. ४६५.

(३) ज्योनि. १२८-१२९.

[1]अनध्यायाः प्रदोषाश्च षष्ठी रिक्तास्तथैव च ।
वर्जनीयाः प्रयत्नेन विद्यारम्भे तु सर्वदा ॥

[2]लघुचरशिवमूलाधोमुखत्वाष्ट्रपौष्ण-
शशिषु च हरिबोधे शुक्रजीवार्कवारे ।
उदितवति च जीवे केन्द्रकोणेषु सौम्यै-
रपठनदिनवर्जं पाठयेत्पञ्चमेऽब्दे ॥

प्रागल्भ्यहीनस्य नरस्य विद्या
शस्त्रं यथा कापुरुषस्य हस्ते ।
न तृप्तिमुत्पादयते शरीरे
अन्धस्य दारा इव दर्शनीयाः ॥

[3]गणेशं च सलक्ष्मीकं हरिं देवीं सरस्वतीम् ।
स्वविद्यासूत्रकारांश्च स्वविद्याश्च प्रपूजयेत् ॥

## संग्रहे

विद्यारम्भे वारवर्गलग्नानि

[4]ज्ञेनेन्द्वाचार्यशुक्राणां वारवर्गोदयाः शुभाः ।
स्थिराः श्रेष्ठाश्चरा निन्द्या मध्यमाश्चोभया-
त्मकाः ॥

## नृसिंहः

विद्यारम्भे वर्षमासपक्षतिथिकरणग्रहसंस्थानानि, गणेश-
वाणीगुरूणां पूजनम्, शिशोः पश्चिमाभिमुखत्वम्

[5]अक्षरस्वीकृतिः प्रोक्ता प्राप्ते पञ्चमहायने ।
उत्तरायणगे सूर्ये कुम्भमासं विवर्जयेत् ॥

[6]पूर्वपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना ॥

अत्र कुम्भमासनिषेधेन मकरादयो मिथुनान्ताः पञ्च मासा अभ्यनुज्ञाताः । संप्र. ३२२

[1]रिक्तां षष्ठीं प्रतिपदं पर्वाष्टम्यौ च वर्जयेत् ॥

[2]हस्तादित्यमरुन्मित्ररौद्रपौष्णाश्विचित्रभम् ।
श्रवणं च प्रशस्तं स्यादक्षरग्रहणे शिशोः ॥

[3]चराणि सर्वसौख्यानि करणानि विशेषतः ।
शकुन्यादीनि विष्टिं च वर्जयेदक्षरग्रहे ॥

[4]शुभाः पापाश्च रन्ध्रस्थाः सर्वे नेष्टाः सदा ग्रहाः ।
भ्रातृषष्ठायकर्मस्थाः पापाः सर्वे शुभावहाः ॥

शुभाः केन्द्रत्रिकोणस्था धनभ्रातृगताः शुभाः ।
सर्वे लाभे प्रशस्ताः स्युरक्षरग्रहणे शिशोः ॥

[5]वाचं गणपतिं चेष्ट्वा गुरुं पश्चाद्यथाक्रमम् ।
आददीत गुरोर्विद्यां वारुण्यभिमुखः शिशुः ॥

## भीमपराक्रमः

विद्यारम्भे नक्षत्राणि

[6]चित्राश्विनीश्रवणवासवपुष्यपौष्ण-
पूर्वात्रयश्वसनदैवतनैर्ऋतानि ।
मित्रेन्दुतिग्मकिरणादितिदैवतानि
विद्याविवृद्धिमधिकां जनय-
न्त्यमूनि ॥

## सायणीये

विद्यारम्भे नक्षत्राणि

[7]वैष्णवादित्यतिष्येन्दुश्रविष्ठास्वातिवारुणाः ।
मैत्रेन्द्रहस्तचित्राश्च विद्यारम्भेषु पूजिताः ॥

---

(१) संर. ३०९.
(२) विपा. ४३६.
(३) कृभ. ९२५.
(४) संप्र. ३२४.
(५) ग्रप्र. ३९ पूर्वार्धमशुद्धिबहुलम्; संप्र. ३२२; चम. १२ पू.; सिन्धु. ९२४ कृतिः प्रोक्ता (कृतिं कुर्यात्); शूक. १०७ सिन्धुवत्; विपा. ४६४; ज्योनि. १२०; संकौ. ११६; बाल १।११–१२ पृ. ३८ पू.; संग. ६२६; संब. ९४; संर ९०५.
(६) संब. ९४; संर. ९०५ पूर्व (शुक्ल).

(१) संप्र. ३२२, ५१८.
(२) संप्र. ३२३; विपा. ४६४; संग. ६२६.
(३) संप्र. ३२४.
(४) संप्र. ३२४; संग ६२७.
(५) प्रपा. २१०; संप्र. ३२५.
(६) संसौ ९४; संप्र ३२३–३२४.
(७) मुका. ८४.

## श्रीपतिः

विद्यारम्भे तिथिवारग्रहसंस्थानानि, संध्या-गर्जितादिवर्जनम्

[1]विद्यारम्भः सुरगुरुसितयोर्मध्यमीष्टार्थदायी
कर्तुश्चाऽऽयुश्चिरमपि करोत्यंशुमान्मध्यमोऽत्र।
नीहारांशौ भवति जडता पञ्चता भूमिपुत्रे
छायासूनावपि च मुनयः कीर्तयन्त्येवमाद्याः॥

[2]लग्नकर्मगते सौम्ये जीवे वाऽमृतदीधितौ।
तयोर्वर्गगते शिल्पविद्यारम्भः प्रशस्यते॥

शिल्पविद्यारम्भो विद्यारम्भश्च प्रशस्त इत्यर्थः। अथवा शिल्पविद्यापदं विद्यान्तरेऽपि लक्ष्यकं द्रष्टव्यम्। ¶ संसौ. ९५

[3]संध्यागर्जितभूकम्पनिर्घातोल्कानिपातने।
प्रतिपद्दर्शरिक्तादौ विद्यारम्भं विवर्जयेत्॥

## राजमार्तण्डः

विद्यारम्भे मासतिथिवारनक्षत्रग्रहसंस्थानानि, गुरुशुक्रोदयविधिः सिंहस्थगुरुविनिषेधश्च

[4]विद्यारम्भः प्रशस्तो भवति मधुरिपौ
प्राप्तबोधे शशाङ्के
शस्ते तीक्ष्णद्युतौ च त्रिदशपतिगुरा-
वुद्गते चाथ शुक्रे।
स्वाध्याये सिंहसंस्थं खरकिरणयुतं
देवपूज्यं विहाय
शुक्रादित्येज्यवारे त्रिदशपतिगुरौ
केन्द्रसंस्थे न पापे॥

(१) पापे निषिद्धस्थानस्थिते। संकौ. ११६

(२) मधुरिपुः विष्णुः, तस्मिन् प्राप्तबोधे सति, शशाङ्कः चन्द्रः, तस्मिन् प्रशस्ते, तीक्ष्णद्युतिः सूर्यः, तस्मिंश्च प्रशस्ते सति, त्रिदशपतिगुरुः बृहस्पतिः, तस्मिन् शुक्रे च उद्गते अनस्तगे सति, खरकिरणः सूर्यः, तेन युतं देवपूज्यं बृहस्पतिं सिंहस्थं विहाय स्वाध्याये स्वाध्यायदिवसे शुक्रादित्यबुधान्यतमवारयुते, त्रिदशपति-गुरुः बृहस्पतिः, तस्मिन् केन्द्रसंस्थे च सति विद्यारम्भः प्रशस्तो भवतीत्यर्थः। न पापे न निषिद्धस्थानस्थिते। संर. ३०९

[1]विद्यारम्भे गुरुः शस्तो मध्यमौ भृगुभास्करौ।
मरणं शनिभौमाभ्यामविद्या बुधसोमयोः॥

अविद्या अनवधारणमन्यथाज्ञानं वा। अत्र बुध-निषेधो धनुर्विद्याविषय इति व्याख्यातारः। अन्यत्र तु प्रशस्तः। ‡ संसौ. ९३

[2]पूर्वात्रये मूलमृगादिपञ्चके
तथाऽश्विनीषु त्रितये च हस्तात्।
सविष्णुधिष्ण्येष्वपि सर्वविद्या-
प्रारम्भ इष्टः शुभवासरेषु॥

---

¶ संप्र. संसौगतम्।

(१) मपा. ९८-९९ ज्योतिःशास्त्रम्; संसौ. ९३-९४ : १४७ प्रथमपादमात्रम्, रत्नमालायाम्; संप्र. ३२३; विपा. ४६६ (=) : ५२० रत्नमालायाम्.

(२) संसौ. ९४ वाऽमृत (चामृत) रत्नमालायाम्; संप्र. ३२४.

(३) संसौ. ९४ श्रीपतिनिबन्धे.

(४) मपा. ९८ शशाङ्के (सुधांशौ) चाथ (चापि) उत्तरार्धे (अप्राप्ते सिंहराशौ दशशतकिरणे चापि दैत्यारि-पूज्ये स्वाध्याये भानुशुक्रत्रिदशगुरुदिने लग्नसंस्थे च जीवे॥) ज्योतिःशास्त्रम्; संसौ. ९३ द्युतौ च (द्युतौ); संप्र. ३२५; विपा. ५२० सर्वं मपावत्; संकौ. ११६; संग. ६२७; संर. ३०९ दित्येज्य (दित्यज्ञ), ९०५.

‡ संप्र. संसौवत्।

(१) संसौ. ९३ : १४७ तृतीयपादमात्रम्, दीपिकायाम्; संप्र. ३२३.

(२) संसौ. १४८-१४९; संप्र. ५१८.

## विधिरत्ने

विद्यारम्भे वर्षमासतिथिवारनक्षत्रयोगकरणलग्नवर्ग-ग्रहसंस्थानानि, चन्द्रताराबलविधिः, सरस्वत्या-दिपूजनम्, पात्रस्थतण्डुलेषु लिखितस्येष्टदेवता-शब्दस्याक्षराणां चोच्चारणम्, अनध्यायाः

[1]बालस्य पञ्चमे वर्षे प्राप्ते भानौ मृगादिगे।
आरभेताक्षरविधिं शुभे काले यथोदिते॥

मृगः मकरः। मृगादिगे इत्यत्र सामान्योपादानेऽपि कुम्भमासो वर्जनीयः। संप्र. ३२१

[2]हस्तादित्यमरुच्चित्रारौद्रपौष्णभवैष्णवम्।
श्रवणं च प्रसिद्धं स्यादक्षरग्रहणे शिशोः॥

प्रतिपत्षष्ठीरिक्ताश्च पर्वाष्टम्यौ विवर्जयेत्।
बवादीनि तु सौम्यानि करणानि विशेषतः।
शकुन्यादीनि विष्टिं च वर्जयेत्सर्वदा द्विजः॥

शूलवज्रव्यतीपातव्याघातपरिघान् विना।
गण्डातिगण्डविष्कम्भवैधृतीनितरे शुभाः॥

गुरुज्ञेन्द्वर्कशुक्राणां वारवर्गोदयाः शुभाः।
स्थिराः श्रेष्ठाश्चरा निन्द्या मध्यमाश्चोभये स्मृताः॥

त्रिषडायगताः पापाः शुभाः केन्द्रत्रिकोणगाः।
चन्द्रताराबलं वीक्ष्य अक्षरग्रहणं शिशोः॥

सरस्वतीं गणेशं च सूत्रकारं गुरुं तथा।
पूजयित्वा यथान्यायं पात्रस्थे तण्डुले लिखेत्॥

प्राङ्मुखो गुरुरासीनो वरुणाभिमुखः शिशुः।
अङ्गुष्ठानामिकाभ्यां तु चतुर्थ्यन्तेष्टदेवताम्।
ओंकारमादितः शब्दमुच्चार्यैवाक्षराणि च॥

ततः प्रभृत्यनध्यायान् वर्जनीयान्विवर्जयेत्।
चतुर्दश्यष्टमीपर्वदिनानि प्रतिपद्दिनम्॥

(१) प्रपा. २१० उत्तरार्धे (आरभेताक्षरं तत्र शुभकाले यथोदितम्॥); धप्र. ३९; संप्र. ३२१ अयनविधिरत्ने; मुक्ता. ८४ मृगादि (कुलीर) रविधिं शुभे का (रं तत्र शुभका) सायणीये; ज्योनि. १२० दिगे (दिके); संर. ९०४.

(२) प्रपा. २१०.

## श्रीधरीये

विद्यारम्भे नक्षत्राणि

[1]मृगादिपञ्चस्वपि मेषु मूले
हस्तादिके च त्रितयेऽश्विनीषु।
पूर्वात्रये च श्रवणे च तद्व-
द्विद्यासमारम्भमुशन्ति सिद्ध्यै॥

## महेश्वरः

विद्यारम्भे तिथिवारनक्षत्रग्रहसंस्थानानि

[2]हस्तादित्रितये तथा निर्ऋतिभे
पूर्वान्त्यभेष्वश्विभे
मित्रर्क्षे च मृगादिपञ्चसु शुभः
प्रारम्भ आद्यैः स्मृतः।
विद्यानां हरिभत्रये च दिवसे
सूरेर्भृगोर्वा विदो-
ऽनध्यायाव्यतदाद्यवर्जिततिथौ
केन्द्रस्थितैः सद्ग्रहैः॥

## प्रतापमार्तण्डः

विद्यारम्भे क्षुतदोषाभावः

[3]भैषज्ये वाहनारोह आसने शयनेऽशने।
विद्यारम्भे बीजवापे क्षुतं हानिकरं न हि॥

(१) मपा. ९९ त्रये च (त्रयेषु) तद्वद्वि (तत्त्ववि) सिद्ध्यै (सिद्धौ) ज्योतिःशास्त्रम्; प्रपा. २१० श्रवणे च तद्वद्वि (श्रवणत्रये च वि) सिद्ध्यै (सिद्धम्); विपा. ५२० ज्योतिःशास्त्रम्.

(२) संसौ. ९४; संप्र. ३२४, ५१८; संकौ. ११६ आद्यैः (आद्यः) विदो (दिने); संव. ९४ आद्यैः (आद्यः) पू.; संर. ३०९ तये (तयं) शेषं संकौवत्; ९०५ भेष्वश्वि (भे चाश्वि) शेषं संकौवत्.

(३) संर. ३१० प्रतापमार्तण्डे ज्योतिर्निबन्धे च.

## ज्योतिर्निबन्धे

विद्यारम्भे क्षुतदोषाभावः

'भैषज्ये वाहनारोहे आसने शयनेऽशने ।
विद्यारम्भे बीजवापे क्षुतं हानिकरं न हि ॥

## मुहूर्तचिन्तामणिः

अक्षरग्रहणे विद्यारम्भे च वर्षमासतिथिवारनक्षत्रलग्न-ग्रहसंस्थानानि , गणेशादिपूजनम्

'गणेशविष्णुवाग्रमाः प्रपूज्य पञ्चमाब्दके
तिथौ शिवार्कदिग्द्विषट्छरत्रिके रवावुदक् ।
लघुश्रवानिलान्त्यभादितीशतक्षमित्रभे
चरोनसत्तनौ शिशोर्लिपिग्रहः सतां दिने ॥

अथ प्राप्तकालत्वादक्षरारम्भमुहूर्तं पञ्चचामरेणाऽऽह— गणेशेति । गणेशविष्णू प्रसिद्धौ, वाक् सरस्वती, रमा लक्ष्मीः, एता देवताः प्रपूज्य पञ्चमवर्षे सति, शिवः एकादशी, अर्कः द्वादशी, दिक् दशमी, द्वौ द्वितीया, षट् षष्ठी, शराः पञ्चमी, त्रयः तृतीया, एतासामन्यतमतिथौ च सति, रवौ उदक् उत्तरायणस्थिते सति, तथा लघुनक्षत्राणि हस्ताश्विपुष्याः, श्रवः श्रवणः, अनिलान्त्यभादितयः प्रसिद्धाः, ईशः आर्द्रा, तक्षा चित्रा, मित्रम् अनुराधा, अत्र समाहारद्वन्द्वः, एतेषामन्यतमनक्षत्रे सति, सतां सोमबुधगुरुशुक्राणां दिने दिवसे, चरराशयः मेषकर्कतुलामकराः, तद्रहिते शुभस्वामिके वृषमिथुनकन्याधनुर्मीनानामन्यतमे लग्ने सति शिशोः लिपिग्रहः नूतनाक्षरलेखनप्रारम्भः कार्यः ।

¶ पीटी.

'मृगात्कराच्छ्रुतेस्त्रयेऽश्विमूलपूर्विकात्रये
गुरुद्वयेऽर्कजीववित्सितेऽह्नि षट्छरत्रिके ।
शिवार्कदिग्द्विके तिथौ ध्रुवान्त्यमित्रभे परैः
शुभैरधीतिरुत्तमा त्रिकोणकेन्द्रगैः स्मृता ॥

अथैवमक्षरग्रहणे दृढे संजाते सति विद्यारम्भमुहूर्तं पञ्चचामरेणाऽऽह— मृगादिति । मृगात् त्रये मृगार्द्रापुनर्वसुषु, करात्त्रये हस्तचित्रास्वातीषु, श्रुतेः श्रवणात् त्रये श्रवणधनिष्ठाशतभिषासु, अश्विन्याम्, मूले, पूर्विकात्रये पूर्वाफल्गुनीपूर्वाषाढापूर्वाभाद्रपदासु, गुरुद्वये पुष्याश्लेषयोः, तथा सूर्यगुरु(‡बुध)शुक्रवाराणां दिने च सति अधीतिः विद्यानामध्ययनं उत्तमा स्मृता । यदाह श्रीपतिः— 'मृगादिपञ्चस्वपि भेषु मूलहस्तादिके च त्रितयेऽश्विनीषु । पूर्वात्रये च श्रवणे च तद्वद्विद्यासमारम्भमुशन्ति सिद्ध्यै ॥' इति । तद्वदिति श्रवणत्रये इत्यर्थः । ... अयमेव च ग्रन्थकृदाशयः । अत एवाऽऽह विश्वप्रकाशवद्धतौ गुरुः— 'मृगादिपञ्चके हस्तत्रिके विष्णुत्रिकाश्विभे । मैत्रान्त्यमूलपूर्वासु विद्यारम्भः शुभे दिने ॥' इति । वयं तु तद्वदिति पदं विद्यासमारम्भपदेन संबद्धमस्तीति व्याकुर्मः । अत एवाऽऽह वसिष्ठः— 'पूर्वात्रये मूलमृगादिपञ्चके तथाऽश्विनीषु त्रितये च हस्तात् । सविष्णुधिष्ण्येष्वथ सर्वविद्याप्रारम्भ इष्टः शुभवासरेषु ॥' इति । यद्येषोऽभिप्रायो न स्यात्तदा 'पूर्वात्रये च श्रवणत्रये च' इति ब्रूयाच्छ्रीपतिः ! अनयोर्वाक्ययोर्यथासंप्रदायं व्यवस्था । ... षट्छिति । षष्ठीपञ्चमीतृतीयैकादशी(¶ दशमी )द्वितीयानामन्यतमतिथावधीतिः कार्या । ... ध्रुवेति । अत्रापिशब्दाध्याहारेण ग्रन्थो योज्यः । तथा सत्यन्यैराचार्यैर्ध्रुवान्त्यमित्रभे रोहिण्युत्तरात्रयरेवत्यनुराधास्वप्यधीतिरुत्तमा ( स्मृतेत्यर्थः ) । एतदपि धनुर्विद्याविषयम् । ... अथ लग्नबलम्— शुभग्रहैस्त्रिकोणकेन्द्रगैः सद्भिरधीतिरुत्तमा स्मृता, 'केन्द्रस्थितैः सद्ग्रहैः' इत्युक्तेः । केन्द्रग्रहणं त्रिकोणोपलक्षणम् ।

$ पीटी.

---

¶ संब पीटीगतम् ।

(१) संर. ३.१० प्रतापमार्तण्डे ज्योतिर्निबन्धे च.

(२) मुचि. ५।३७ ; संब. ९३.

(३) मुचि. ५।३८ ; संब. ९४.

‡ मूलानुसारेणेतो बुधशब्दो भ्रष्टः ।

¶ मूलानुसारेणेतो दशमीशब्दो भ्रष्टः ।

$ संब. पीटीगतम् ।

## मुहूर्तसंग्रहे

विद्यारम्भे मासाः तिथयश्च, गणेशादिपूजनम्

[1]उत्तरायणगे सूर्ये कुम्भमासं विवर्जयेत्।
पूर्वपक्षः शुभः प्रोक्तः कृष्णे चान्त्यत्रिकं विना॥
[2]आदौ गणपतिं चेष्ट्वा संपूज्य च सरस्वतीम्।
गुरुपूजां ततः कृत्वा विद्याः सर्वाः समारभेत्॥

## दीपिकायाम्

विद्यारम्भे वर्षम्, वर्ज्या मासतिथिवाराः, देवग्रन्थकृद्गुरुनमस्काराः

[3]विद्यारम्भस्तु पञ्चमे॥

(१) संप्र. ३२२, ५१८; मुक्ता. ८४ पू., सायणीये; संकौ. ११६ कृष्णे चा (कृष्णश्चा); संग. ६२६–६२७; संर. ३०८ उत्तरार्धे (विद्यारम्भे व्रतोद्देशे क्षौरे चैव विशेषतः॥).

(२) प्रपा. २५९ पूर्वार्धे (सरस्वतीं च संपूज्य गणनाथं तथैव च।); संप्र. ५२२ संग्रहे; संदी. ३१० (भागः २) संग्रहः.

(३) सिन्धु. ९२१, ९२४.

वर्षे पर्जन्यके काले षष्ठीं रिक्तां शनिं कुजम्।
अनध्यायान् विना नत्वा देवं ग्रन्थकृतं गुरुम्॥

## मुहूर्तगणपतौ

विद्यारम्भे वर्षतिथिवारनक्षत्रग्रहसंस्थानानि, गणेशादिपूजनम्

[1]सौम्यायने शुभे मासि स्वाध्यायदिवसे शुभे।
रवौ जीवे बुधे शुक्रे लग्ने खेटबलान्विते॥
रेवतीद्वितये पुष्ये पुनर्वस्वनुराधयोः।
आर्द्राख्ये श्रवणे हस्ते स्वातौ चित्राभिधे तथा॥
हेरम्बाम्बे च वाग्देवीं तथाऽभ्यर्च्येष्टदेवताम्।
पञ्चमाब्दे नरः कुर्याद्विद्यारम्भं सदा †बुधैः॥

† 'कुर्यात्' इत्यत्रान्तर्भावितण्यर्थतामाश्रित्य 'बुधैः' इत्यस्यान्वय उपपाद्यः।

(१) संब. ९३–९४.

# उपनयनम्

## वेदाः

ब्रह्मचारिमहिमा, आचार्यस्योपनेतृत्वम्, ब्रह्मचारिणो गर्भीकरणं द्विजत्वप्राप्तिश्च, ब्रह्मचारिव्रतानि, कृष्णाजिनधारणम्, दीर्घश्मश्रुधारणम्, समिदाधानम्, भिक्षा, तपः

[1]ब्रह्मचारीष्णंश्चरति रोदसी उभे
तस्मिन्देवाः संमनसो भवन्ति।
स दाधार पृथिवीं दिवं च
स आचार्यं तपसा पिपर्ति॥

ब्रह्मचारी ब्रह्मणि वेदात्मके अध्येतव्ये चरितुं शीलमस्य स तथोक्तः उभे रोदसी द्यावापृथिव्यौ इष्णन् आत्मीयेन तपसा अभीक्ष्णं व्याप्नुवन् चरति स्वनियमे प्रवर्तते। 'इष आभीक्ष्ण्ये'। अस्मात् लटः शत्रादेशः। क्र्यादित्वात् श्नाप्रत्ययः। तस्मिन् ब्रह्मचारिणि सर्वे इन्द्रादयो देवाः संमनसः समानमनस्काः भवन्ति। अनुग्रहबुद्धियुक्ता भवन्तीत्यर्थः। सः ब्रह्मचारी आत्मीयेन तपसा पृथिवीं भूमिं दिवं द्युलोकं च दाधार। तुजादित्वात् अभ्यासदीर्घत्वम्। धारयति पोषयति। तथा आचार्यं स्वं गुरुं तेनैव तपसा पिपर्ति पालयति। सन्मार्गवृत्त्या आचार्यं परिपालयतीत्यर्थः। 'शिष्यपापं गुरोरपि' इति शिष्यकृतेन पापेन गुरोरपि पातित्यस्मरणात् एवमुक्तम्। अभा.

[2]ब्रह्मचारिणं पितरो देवजनाः
पृथग्देवा अनुसंयन्ति सर्वे।
गन्धर्वा एनमन्वायन् त्रयस्त्रिंशा-
त्रिशताः षट्सहस्राः सर्वान्त्स
देवांस्तपसा पिपर्ति॥

ब्रह्मचारिणं ब्रह्मचर्य(¶म् आचर)न्तं पुरुषं पितरः पितृगणाः देवजनाः एतत्संज्ञा देवगणाः अन्ये च सर्वे देवा इन्द्रादयः पृथक् अनुसंयन्ति। तस्य रक्षणार्थं पृथक् पृथक् तमनुगच्छन्तीत्यर्थः। तथा गन्धर्वाः अन्तरिक्षसंचारिणो विश्वावसुप्रभृतयः एनं ब्रह्मचारिणम् अन्वायन् अनुगच्छन्ति। ये च त्रयस्त्रिंशत् देवाः 'अष्टौ वसव एकादश रुद्रा द्वादशाऽऽदित्याः प्रजापतिश्च वषट्कारश्च' (ऐब्रा. २।४) इत्येवं प्रागुदाहृताः। ये च त्रिशताः। ¶त्रय इति अत्रापि संबध्यते। त्र्युत्तरत्रिशतसंख्याकास्तद्विभूतिरूपा देवाः। तथा षट्सहस्राः ये च तद्विभूतिरूपाः षट्सहस्रसंख्याका देवाः। एवमेव वैश्वदेवनिविदि देवानां संख्या उत्तरोत्तरं भूयसी तन्माहात्म्यप्रतिपादनाय समाम्नायते— 'ये स्थ त्रय एकादशास्त्रयश्च त्रिंशच्च त्रयश्च त्री च शता त्रयश्च त्री च सहस्रा' इति प्रक्रम्य 'अतो वा देवा भूयांसः स्थ' इति। तत्र प्रकृतसंख्यातो भूयस्त्वश्रवणात् अत्र षट्सहस्रा इति अधिकसंख्योक्तिः। तान् सर्वान् देवान् स ब्रह्मचारी तपसा आत्मीयेन ब्रह्मचर्यनियमेन पिपर्ति पालयति। देवमनुष्यादिरूपं सर्वं जगत् ब्रह्मचर्येण ध्रियत इत्यर्थः। अभा.

---

¶ 'ब्रह्मचर्यन्तम्' इति पदमपि आचारक्विबन्ताच्छत्रा व्युत्पादयितुं शक्यमपि क्लिष्टकल्पनमितीयं शुद्धिः कल्पिता।

(१) असं. ११।५।१; गोब्रा. १।२।१ प्रतीकमात्रम्.

(२) असं. ११।५।२–२६.

¶ 'त्रयस्त्रिंशत्' इत्यत्र 'त्रेस्त्रयः' (पासू. ६।३।४८) इति समासघटकत्रिशब्दस्य त्रयआदेशाभ्युपगमे तस्योत्तरत्र संबन्धो दुरुपपादः। 'त्रयः त्रिंशच्च' इति विश्लिष्टपदद्वयस्य चकाराध्याहारस्य च कल्पने वैदिकैकपदत्वसंप्रदायविरोधः। तेन 'त्रयः' इति पृथक्पदस्याध्याहारे एतद्वाक्यतात्पर्यं कल्पनीयम्। एवमपि त्रिशतसंख्याविशिष्टदेवरूपं त्रिशतपदार्थं प्रति त्रिपदार्थस्य विशेषणत्वे नवशतानीत्यनिष्टसंख्यापत्तेः शुद्धदेवपदार्थं प्रति समुच्चितपृथग्विशेषणत्वलाभार्थं 'त्रयः' इति पदस्य चकारोपलक्षकत्वमपि कल्पनीयम्। तेन 'त्रयश्च त्रिशताश्च देवाः' इतीष्टोऽर्थो लभ्यते।

आचार्य उपनयमानो
ब्रह्मचारिणं कृणुते गर्भमन्तः ।
तं रात्रीस्तिस्र उदरे बिभर्ति
तं जातं द्रष्टुमभिसंयन्ति देवाः ॥

ब्रह्मचारिणं माणवकम् उपनयमानः स्वसमीपमुपगमयन् आचार्यः अन्तः विद्याशरीरस्य मध्ये गर्भे कृणुते करोति । उपनयमान इति 'संमाननोत्सञ्जनाचार्यकरण०' ( पासू. १।३।३६ ) इत्यात्मनेपदम् । तं गर्भीभूतं ब्रह्मचारिणं तिस्रो रात्रीः । 'अत्यन्तसंयोगे' द्वितीया । तावत्कालपर्यन्तं त्रिरात्रम् उदरे आत्मीये बिभर्ति धारयति । चतुर्थे दिवसे जातं विद्यामयशरीरादुत्पन्नं तं ब्रह्मचारिणं द्रष्टुम् अवलोकयितुं देवाः अभिसंयन्ति अभिमुखं संभूय गच्छन्ति । उपनयनसंस्कारेण माणवकस्य आचार्यसकाशात् उत्पत्तिं भगवानापस्तम्बोऽप्याह स- 'स हि विद्यातस्तं जनयति । तच्छ्रेष्ठं जन्म । शरीरमेव मातापितरौ जनयतः' ( आध. १।१।१५-१७ ) इति ।
अक्षा.

इयं समित्पृथिवी द्यौर्द्वितीयो-
तान्तरिक्षं समिधा पृणाति ।
ब्रह्मचारी समिधा मेखलया
श्रमेण लोकांस्तपसा पिपर्ति ॥

पूर्वं ब्रह्मचारिणो माहात्म्यकथनपुरःसरं तदुत्पत्तिरभिहिता । अधुना स्तुतिव्याजेन तन्नियमा उपदिश्यन्ते । इयं परिदृश्यमाना पृथिवी ब्रह्मचारिणः प्रथमा समित् । द्यौः द्युलोकात्मिका द्वितीया समित् । उत अपि च अन्तरिक्षं द्यावापृथिव्योर्मध्ये समिधा अग्नावाधीयमानया पृणाति पूरयति । 'पृ पालनपूरणयोः' । 'प्वादीनां ह्रस्वः' ( पासू. ७।३।८० ) इति ह्रस्वत्वम् । इत्थं ब्रह्मचारी समिधा आधीयमानया मेखलया धार्यमाणया मौञ्ज्या श्रमेण इन्द्रियनिग्रहोद्भूतखेदेन तपसा अन्येनापि देहसंतापकेन नियमजातेन लोकान् प्रागुक्तान् पृथिव्यादीन् पिपर्ति पूरयति पालयति वा । अतः समिदाधानादिकमवश्यमस्य कर्तव्यमित्यर्थः ।
अक्षा.



पूर्वो जातो ब्रह्मणो ब्रह्मचारी
घर्मं वसानस्तपसोदतिष्ठत् ।
तस्माज्जातं ब्राह्मणं ब्रह्म ज्येष्ठं
देवाश्च सर्वे अमृतेन साकम् ॥

यत् सर्वजगत्कारणं ब्रह्म सत्यज्ञानादिलक्षणं तस्मात् ब्रह्मणः सकाशात् ब्रह्मचारी पूर्वो जातः प्रथममुत्पन्नः । स च उत्पन्नो घर्मं दीप्तं रूपं वसानः आच्छादयन् तपसा समिदाधानादिरूपेण सह उदतिष्ठत् उत्थितवान् । तस्मात् ब्रह्मचार्यात्मना तपस्तप्यमानात् ब्रह्मणः सकाशात् ब्राह्मणं ब्राह्मणानां स्वभूतं ज्येष्ठं प्रशस्यतमं वृद्धतमं वा ब्रह्म वेदात्मकं जातं प्रादुर्भूतम् । तत्प्रतिपाद्याः सर्वे अग्न्यादयो देवाश्च अमृतेन अमृतत्वप्रापकेण स्वोपभोग्येन साकं सह । जाता इत्यर्थः । प्रथमजननात् ब्रह्मचारी सर्वश्रेष्ठ इत्यर्थः ।
अक्षा.

ब्रह्मचार्येति समिधा समिद्धः
कार्ष्णं वसानो दीक्षितो दीर्घश्मश्रुः ।
स सद्य एति पूर्वस्मादुत्तरं समुद्रं
लोकान्संगृह्य मुहुराचरिक्रत् ॥

समिधा सायंप्रातरग्नावाधीयमानया तज्जनितेन तेजसा समिद्धः संदीपितः कार्ष्णं कृष्णमृगसंबन्धि अजिनं वसानः धारयन् दीक्षितः भिक्षाचरणादिभिर्नियमविशेषैर्नियन्त्रितः दीर्घश्मश्रुः दीर्घैः आयतैः श्मश्रुभिर्युक्तः सन् ब्रह्मचारी ब्रह्मचर्यधर्मेण युक्त एति वर्तते । स उदीरितलक्षणो ब्रह्मचारी सद्यः शीघ्रं पूर्वस्मात् समुद्रात् उत्तरम् उत्तरदिगवस्थितं समुद्रम् एति गच्छति । तपसो महिम्ना व्याप्नोतीत्यर्थः । तथा लोकान् पृथिव्यन्तरिक्षादीन् संगृह्य हस्ते धृत्वा मुहुः अत्यर्थम् आचरिक्रत् आभिमुख्येन करोति । सर्वे लोका अस्य वशे भवन्तीत्यर्थः ।
अक्षा.

ब्रह्मचारी जनयन् ब्रह्मापो लोकं
प्रजापतिं परमेष्ठिनं विराजम् ।
गर्भो भूत्वाऽमृतस्य योना-
विन्द्रो ह भूत्वाऽसुरांस्ततर्ह ॥

उक्तलक्षणो ब्रह्मचारी ब्रह्मचर्यमहिम्ना ब्रह्म ब्राह्मणजातिम् अपः स्नानपानार्थां गङ्गाद्या नदीः इममात्मनः फलभूतं स्वर्गादिलोकं प्रजापतिं प्रजानां स्रष्टारम् अवान्तरसृष्टिकरं परमेष्ठिनं परमे उत्कृष्टे सत्यलोके तिष्ठतीति परमेष्ठी, तमादिब्रह्माणं विराजं स्थूलप्रपञ्चशरीराभिमानिनमीश्वरं च जनयन् उत्पादयन् वर्तते। स्वस्वकारणात् उत्पद्यमानानामेषां ब्रह्मचर्यं निमित्तकारणमिति तदाश्रयभूतो ब्रह्मचार्येव जनयन्निति उपचर्यते। अमृतस्य अमरणशीलस्य ब्रह्मणः संबन्धिन्यां योनौ सत्त्वरजस्तमोगुणात्मिकायां प्रकृतौ प्रथमं ब्रह्मचारी गर्भो भूत्वा उदीरितं सर्वं जनयति। पश्चात् इन्द्रो ह भूत्वा तपोबलादिन्द्रत्वं प्राप्य असुरान् सुरविरोधिनो दैत्यान् ततर्ह जघान। 'तृह हिंसि हिंसायाम्' । इत्थं सर्वजगत्कर्तृत्वेन ब्रह्मचारिणः स्तुतिः। असा.

आचार्यस्ततक्ष नभसी उभे इमे
उर्वी गम्भीरे पृथिवीं दिवं च।
ते रक्षति तपसा ब्रह्मचारी
तस्मिन् देवाः संमनसो भवन्ति ॥

इमे परिदृश्यमाने उभे नभसी नभः अन्तरिक्षम्, तत्साहचर्यात् द्विवचनेन पृथिव्युपलक्ष्यते, द्यावापृथिव्यौ आचार्यः ततक्ष तक्षणेन जनयामास। 'तक्षू त्वक्षू तनूकरणे'। अस्मात् लिट्। नभसी विशिष्येते— उर्वी विस्तीर्णे, गम्भीरे गाम्भीर्ययुक्ते। परिच्छेत्तुमशक्ये इत्यर्थः। ते एव व्यस्तं निर्दिशति— पृथिवीं दिवं चेति। तं द्यावापृथिव्योरुत्पादकमाचार्यं ब्रह्मचारी आत्मीयेन तपसा ब्रह्मचर्यनियमेन रक्षति पालयति। तस्मिन् तथाविधे ब्रह्मचारिणि सर्वे देवाः संमनसः समानमनस्काः प्रीताः भवन्ति। असा.

इमां भूमिं पृथिवीं ब्रह्मचारी
भिक्षामा जभार प्रथमो दिवं च।
ते कृत्वा समिधावुपास्ते
तयोरार्पिता भुवनानि विश्वा ॥

इमां परिदृश्यमानां पृथिवीं प्रथितां विस्तीर्णां भूमिं ब्रह्मचारी प्रथमः प्रथमभावी सन् भिक्षाम् आ जभार भिक्षात्वेन आहृतवान्। अनन्तरं दिवं द्युलोकं च द्वितीयां भिक्षामाजहार। 'हृग्रहोर्भः' (वार्तिकम्) इति भत्वम्। ते द्यावापृथिव्यौ भिक्षणेन लब्धे समिधौ कृत्वा उपास्ते अग्निं परिचरति। समिन्धनसाधनयोस्तयोर्द्यावापृथिव्योः विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि आर्पिता अर्पितानि स्थापितानि। आश्रित्य वर्तन्त इत्यर्थः। असा.

अर्वागन्यः परो अन्यो दिवस्पृष्ठाद्
गुहा निधी निहितौ ब्राह्मणस्य।
तौ रक्षति तपसा ब्रह्मचारी
तत्केवलं कृणुते ब्रह्म विद्वान् ॥

दिवः द्युलोकस्य पृष्ठात् उपरिभागात् अर्वाक् अधः भूलोके अन्यः एको निधिः वेदात्मकः गुहा गुहायाम् आचार्यहृदयरूपायां निक्षिप्तः, अन्यः अपरो निधिः तत्प्रतिपाद्यदेवतारूपः परः परस्तात् उपरि देशे गुहायां ज्ञातुमशक्ये स्थाने निक्षिप्तः। ब्राह्मणस्य अधीतवेदस्य संबन्धिनौ तौ निहितौ निक्षिप्तौ निधी ब्रह्मचारी तपसा ब्रह्मचर्यनियमेन रक्षति पालयति। विद्वान् वेदार्थरहस्याभिज्ञः तत् शब्दतदर्थात्मकं निधिद्वयं केवलं निष्प्रपञ्चं ब्रह्म कृणुते कुरुते। स्वात्मभूते परब्रह्मणि वेदराशेस्तदर्थस्य च अध्यस्तत्वेन अधिष्ठानभूतं ब्रह्मैव ताद्रूप्येण साक्षात्करोतीत्यर्थः। असा.

अर्वागन्य इतो अन्यः पृथिव्या
अग्नी समेतो नभसी अन्तरेमे।
तयोः श्रयन्ते रश्मयोऽधि दृढा-
स्ताना तिष्ठति तपसा ब्रह्मचारी ॥

इतः अस्याः पृथिव्याः अर्वाक् अधःप्रदेशे अन्यः एकोऽग्निः अनुद्यत्सूर्यात्मको वर्तते। अन्यः अपरः पार्थिवोऽग्निः पृथिव्या उपरि वर्तते। ततः सूर्ये उदिते सति इमे नभसी अन्तरा अनयोर्द्यावापृथिव्योर्मध्ये तावग्नी समेतः परस्परं संगतौ भवतः। 'अन्तराऽन्तरेण युक्ते'

(पासू. २।३।४) इति द्वितीया। तयोः सूर्याग्न्योः संबन्धिनो रश्मयः परस्परसंमेलनेन अतिदृढाः भयन्ते द्यावापृथिव्यौ आश्रयन्ति। 'वैश्वानरो यतते सूर्येण' (ऋसं. १।९८।१) इति हि निगमः। इत्थमग्निद्वयोपेतां तां भूमिं ब्रह्मचारी तपसा तपोमहिम्ना आ तिष्ठति अधितिष्ठति। अग्निरूपेण तस्या अधिदेवता भवतीत्यर्थः। अस्रा.

**अभिक्रन्दन् स्तनयन्नरुणः शितिङ्गो**
**बृहच्छेपोऽनु भूमौ जभार।**
**ब्रह्मचारी सिञ्चति सानौ रेतः पृथिव्यां**
**तेन जीवन्ति प्रदिशश्चतस्रः॥**

अभिक्रन्दन् अभितः शब्दं कुर्वन्। एतदेव विव्रियते– स्तनयन् मेघेषु स्तनितं गर्जितं कुर्वन् श्यतिङ्गः श्येतवर्णे जलपूर्णे मेघं प्राप्तः एवंभूतो वरुणः बृहत् प्रभूतं शेपः आत्मीयं प्रजननं भूमौ पृथिव्याम् अनु जभार जहार। तेन वरुणसंबन्धिना शेपसा ब्रह्मचारी स्वतपोमहिम्ना सर्वजगदुत्पादकमुदकलक्षणं वरुणसंबन्धि रेतः पृथिव्यां सानौ उन्नतप्रदेशे सिञ्चति वर्षति। एतेन सर्वजगदुत्पादनार्थमूर्ध्वरेतस्कत्वं ब्रह्मचारिणः सूचितं भवति, वारुणमेव रेतः सिञ्चति, न स्वकीयमित्यर्थस्यावगमात्। तेन वृष्टेन उदकलक्षणेन रेतसा प्रदिशश्चतस्रः प्राच्याद्या महादिशः जीवन्ति प्राणान् धारयन्ति। तत्रत्याः प्राणिनः समृद्धा भवन्तीत्यर्थः। यस्मिन् राष्ट्रे ब्रह्मचारी निवसति तत्र कालवृष्टिर्भवतीति तात्पर्यार्थः। अस्रा.

**अग्नौ सूर्ये चन्द्रमसि मातरिश्वन्**
**ब्रह्मचार्यप्सु समिधमा दधाति।**
**तासामर्चींषि पृथगभ्रे चरन्ति**
**तासामाज्यं पुरुषो वर्षमापः॥**

ब्रह्मचारी ब्रह्मचर्यनियमवान् पुरुषः अग्नौ पृथिव्यामवस्थिते अन्तरिक्षगते सूर्ये चन्द्रमसि मातरिश्वन् मातरिश्वनि वायौ अप्सु च समिधम् आ दधाति प्रक्षिपति। अत्र अग्न्यादीनां पूर्वपूर्वस्याभावे उत्तरोत्तरस्मिन् समिदाधानं कर्तव्यम्, सर्वथा लोपो न कर्तव्यः। तत्र सूर्यादिषु संस्मृत्य तद्रश्मियुक्तप्रदेशे समिदाधानम्। अपां संनिधानात् तदपेक्षया तासामिति स्त्रीलिङ्गेन प्रतिनिर्देशः। तासां तेषामग्न्यादीनाम् अर्चींषि दीप्तयः अभ्रे अन्तरिक्षे पृथक् चरन्ति असंकीर्णे वर्तन्ते। यद्वा अभ्रे उदकपूर्णे मेघे धनुराकारेण पृथक् पृथग्वर्तन्ते। तासाम्। पूर्ववत् स्त्रीलिङ्गनिर्देशः। तेषामग्न्यादीनां ब्रह्मचारिणा समिध्यमानानाम् आज्यादिकं कार्यम्। अग्न्यादयो ब्रह्मचारिसमिन्धनेन आज्यादिकमुत्पादयन्तीत्यर्थः। आज्यमित्यनेन गोसमृद्धिरुक्ता। पुरुष इत्यनेन पुत्रादिसमृद्धिः। वर्षमिति काले वृष्टिप्रादुर्भावः। आप इति वापीकूपतटाकादिसमृद्धिः। अस्रा.

**आचार्यो मृत्युर्वरुणः सोम ओषधयः पयः।**
**जीमूता आसन्सत्वानस्तैरिदं स्वराभृतम्॥**

आचार्य एव मृत्युः मारयिता देवः। अपराधाचरणादुष्टस्तस्य जीवनमपहरतीत्यर्थः। तथा स एव आचार्यो वरुणः दुरितस्य वारयिता देवः। परिचर्यापरं ब्रह्मचारिणं पापान्निवारयतीत्यर्थः। तथा आचार्य एव सोमः चन्द्रमाः, तद्वदाल्हादकरत्वात्। ओषधयः व्रीहियवाद्याः। पयः क्षीरम्। तत्सर्वमाचार्यात्मकमेव, तत्प्रसादलभ्यत्वात्। यद्वा यो मृत्युः यमः स नचिकेतसे ब्रह्मविद्यामुपदिश्य आचार्यः संपन्नः। वरुणोऽपि भृगवे तामुपदिश्याऽऽचार्योऽभवत्। एवं सोमोऽपीति। सर्वदेवतात्मक आचार्य इत्यर्थः। तत्र आचार्यरूपस्य वरुणस्य ये सत्वानः सदनशीला अनुचराः ते जीमूता आसन् जीवनमुदकं तस्य मूतवद्धर्तारः जलपूर्णा मेघा अभवन्। तैः जीमूतैः इदं स्वः सुष्ठु अरणशीलम् उदकम् आभृतम् आहृतम्। वृष्ट्यर्थमात्मनि धारितमित्यर्थः। यद्वा इदं स्वः सुप्रापं सर्वं जगदाभृतं वृष्ट्या समन्तात्पोषितमित्यर्थः। अस्रा.

**अमा घृतं कृणुते केवलमाचार्यो भूत्वा वरुणो**
**यद्यदैच्छत्प्रजापतौ।**
**तद् ब्रह्मचारी प्रायच्छत्स्वान् मित्रो अध्यात्मनः॥**

वरुणो देवः आचार्यो भूत्वा घृतं क्षरणशीलमुदकं केवलम् अमा सह कृणुते कुरुते । उदकमेव अनन्यसाधारणं स्वम् आत्मना सहितं करोतीत्यर्थः । स वरुणः प्रजापतौ स्वजनके ब्रह्मणि यद्यत्फलमैच्छत् , मित्रो देवो ब्रह्मचारी भूत्वा स्वकीयब्रह्मचर्यमाहात्म्येन स्वात् स्वकीयात् आत्मनः शरीरात् । अधिः पञ्चम्यर्थानुवादी । ल्यब्लोपे चेयं पञ्चमी । स्वशरीरमनपेक्ष्येत्यर्थः । तत् अपेक्षितं सर्वम् आचार्यभूताय वरुणाय प्रायच्छत् दत्तवान् । ततश्च शिष्येण सता ब्रह्मचारिणा विद्योपदेष्टुर्गुरोः प्रीतिकरमपेक्षितं धनं संपाद्य प्रदातव्यमित्ययमप्येको नियमो ब्रह्मचारिण उक्तो वेदितव्यः । अथ.

**आचार्यो ब्रह्मचारी ब्रह्मचारी प्रजापतिः ।**
**प्रजापतिर्वि राजति विराडिन्द्रोऽभवद्वशी ॥**

आचार्यः प्रथमं विद्यामुपदिश्य ब्रह्मचार्यात्मना जातः । स च ब्रह्मचारी तपसा ब्रह्मचर्येण अधिकं महिमानं प्राप्य प्रजापतिः जगत्स्रष्टा अभवत् । स च प्रजापतिः वि राजति विराड् भवति । ' यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । ' ( श्वेउ. ६।१८ ) इति श्रुत्युक्तः स्थूलप्रपञ्चशरीराभिमानी ईश्वरो विराट् । स च वशी स्वतन्त्रः इन्द्रः परमैश्वर्ययुक्तः सर्वजगत्स्रष्टा परमात्मा अभवत् । तत आचार्यः परंपरया सर्वदेवतात्मक इति तस्य माहात्म्यं केन वर्णयितुं शक्यमिति भावः । अथ.

**ब्रह्मचर्येण तपसा राजा राष्ट्रं वि रक्षति ।**
**आचार्यो ब्रह्मचर्येण ब्रह्मचारिणमिच्छते ॥**

ब्रह्म वेदः , तदध्ययनार्थमाचर्यम् आचरणीयं समिदाधानभैक्षचर्योर्ध्वरेतस्कत्वादिकं ब्रह्मचारिभिरनुष्ठीयमानं कर्म ब्रह्मचर्यम् । तेन ब्रह्मचर्येण तपसा तत्कृतेन उपवासादिव्रतनियमेन च राजा राष्ट्रं स्वकीयं वि रक्षति विशेषेण पालयति । यस्य राज्ञो जनपदे ब्रह्मचर्येण युक्ताः पुरुषास्तपश्चरन्ति तदीयं राष्ट्रमभिवर्धते इत्यर्थः । यद्वा राज्ञः कर्तव्यत्वेन कालविशेषेषु श्रुतिस्मृत्युदितं ब्रह्मचर्यं तपोऽनुतिष्ठन् राजा तेनैव ब्रह्मचर्येण तपसा राष्ट्रं पालयतीत्यर्थः । आचार्योऽपि ब्रह्मचर्येण नियमेन ब्रह्मचारिणं शिष्यम् इच्छत आत्मनोऽभिलष्यति । ब्रह्मचर्यनियमस्थमेव आचार्यं शिष्या उपगच्छन्तीत्यर्थः । अथ.

**ब्रह्मचर्येण कन्या युवानं विन्दते पतिम् ।**
**अनड्वान् ब्रह्मचर्येणाश्वो घासं जिगीर्षति ॥**

अत्रापि ब्रह्मचर्यं प्रशस्यते । कन्या अकृतविवाहा स्त्री ब्रह्मचर्यं चरन्ती तेन ब्रह्मचर्येण युवानं युवत्वगुणोपेतम् उत्कृष्टं पतिं विन्दते लभते । किं बहुना ? पशुजातिरपि ब्रह्मचर्येण स्वाभिलषितं फलं लभत इत्याह– अनड्वानिति । अनड्वान् अनो वहन् पुंगवः ब्रह्मचर्येण ऊर्ध्वरेतस्कत्वादिना धर्मेण अनोवहनादिकं स्वकार्यं निर्वर्तयन् उत्कृष्टं पतिं लभते । तथा अश्वः ब्रह्मचर्येण घासं भक्षणीयं तृणादिकं जिगीर्षति भक्षितुमिच्छति । अथ.

**ब्रह्मचर्येण तपसा देवा मृत्युमपाघ्नत ।**
**इन्द्रो ह ब्रह्मचर्येण देवेभ्यः स्वराभरत् ॥**

ब्रह्मचर्यरूपेण तपसा देवाः अग्न्यादयः मृत्युं मरणम् अपाघ्नत अपहतवन्तः । अमर्त्याः संपन्ना इत्यर्थः । इन्द्रो ह इन्द्रोऽपि ब्रह्मचर्येणैव साधनेन देवेभ्यः देवानामर्थे स्वः स्वर्गम् आभरत् आहरत् । अथ.

**ओषधयो भूतभव्यमहोरात्रे वनस्पतिः ।**
**संवत्सरः सहर्तुभिस्ते जाता ब्रह्मचारिणः ॥**

ओषः पाकः आसु धीयत इति ओषधयः व्रीहियवाद्याः अरण्यजा वीरुधश्च । भूतभव्यं भूतम् उत्पन्नं चराचरात्मकं भव्यम् उत्पत्स्यमानम् । अहोरात्रे अहश्च रात्रिश्च । ' हेमन्तशिशिरावहोरात्रे च च्छन्दसि ' ( पासू. २।४।२८ ) इति नपुंसकलिङ्गता निपात्यते । वनस्पतिः वनानां पालयिता देवः । ' पारस्करप्रभृतीनि च संज्ञायाम् ' ( पासू. ३।१।१५७ ) इति सुट् । ' उभे वनस्पत्यादिषु युगपत् ' ( पासू. ६।२।१४० ) इति उभयपदप्रकृतिस्वरत्वम् । संवसन्ति अस्मिन्निति संवत्सरः द्वादशमासात्मकः कालः ऋतुभिः वसन्ताद्यैः षड्भिः सह । ते ओषध्यादयः अनुक्रान्ताः सर्वे ब्रह्मचारिणस्तपोमाहात्म्यात् जाताः उत्पन्नाः । अथ.

**पार्थिवा दिव्याः पशव आरण्या ग्राम्याश्च ये ।**
**अपक्षाः पक्षिणश्च ये ते जाता ब्रह्मचारिणः ॥**

पार्थिवाः पृथिव्याः संबन्धिनो जनाः । 'पृथिव्या ञाञौ' (वार्तिकम्) इति तस्येदमर्थे अञ् प्रत्ययः । तथा दिव्याः दिवि भवाः । 'द्युप्रागपागुदक्प्रतीचो यत्' (पासू. ४।२।१०१) इति शैषिको यत्प्रत्ययः । आरण्याः अरण्ये भवाः पशवः सिंहशार्दूलहरिणाद्याः । ग्राम्याः गवाश्वमहिषाद्याः । एवंभूता ये पशवः सन्ति, तथा अपक्षाः पक्षरहिताः प्राणिनो ये सन्ति, पक्षिणः पक्षवन्तश्च ये सन्ति ते सर्वे ब्रह्मचारिणो जाताः ब्रह्मचर्यप्रभावादुत्पन्ना इत्यर्थः । असा.

**पृथक् सर्वे प्राजापत्याः प्राणानात्मसु बिभ्रति ।**
**तान्सर्वान् ब्रह्म रक्षति ब्रह्मचारिण्याभृतम् ॥**

प्राजापत्याः प्रजापतिना सृष्टाः देवमनुष्याद्याः सर्वे आत्मसु शरीरेषु प्राणान् पृथक् नाना स्वस्वसंबन्धिन एव बिभ्रति धारयन्ति पोषयन्ति वा । 'डुभृञ् धारणपोषणयोः' । जुहोत्यादित्वात् शपः श्लुः । 'अदभ्यस्तात्' (पासू. ७।१।४) इति झस्य अदादेशः । 'भृञामित्' (पासू. ७।४।७६) इति अभ्यासस्येत्वम् । तान् सर्वान् प्राणान् ब्रह्मचारिणि आचार्यमुखादाभृतम् आहृतम् अध्ययनेन संपादितं ब्रह्म वेदात्मकं रक्षति पालयति । ब्रह्मचार्यधीतं ब्रह्म सर्वप्राणिरक्षणक्षममित्यर्थः । असा.

**देवानामेतत्परिषूत-**
**मनभ्यारूढं चरति रोचमानम् ।**
**तस्माज्जातं ब्राह्मणं ब्रह्म ज्येष्ठं**
**देवाश्च सर्वे अमृतेन साकम् ॥**

एतत् सर्वापरोक्षं परब्रह्म देवानां परिषूतं परिगृहीतम् । आत्मतया साक्षात्कृतमित्यर्थः । (रोचमानं) स्वप्रकाशचिद्रूपतया दीप्यमानम् अनभ्यारूढम् अन्यैरनाक्रान्तं सर्वोत्कर्षेण चरति वर्तते । तस्मात् सकाशाद्ब्राह्मणं ब्रह्मणः संबन्धि ब्राह्मणस्य वा असाधारणं स्वं ज्येष्ठं प्रवृद्धतमं प्रशस्यतमं वा ब्रह्म वेदात्मकं जातं प्रादुर्भूतम्, 'अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः' (बृउ. २।४।१०) इति श्रुतेः । देवाः तत्प्रतिपाद्या अग्न्यादयश्च सर्वे अमृतेन स्वोपभोग्येन अमृतत्वप्रापकेण सुधारसेन साकं सह जाता इत्यर्थः । असा.

**ब्रह्मचारी ब्रह्म भ्राजद्बिभर्ति**
**तस्मिन् देवा अधि विश्वे समोताः ।**
**प्राणापानौ जनयन्नाद्व्यानं**
**वाचं मनो हृदयं ब्रह्म मेधाम् ॥**

ब्रह्मचारी ब्रह्मचर्यवान् पुरुषः भ्राजत् दीप्यमानं ब्रह्म वेदात्मकं बिभर्ति धारयति । तस्मिन् अधि उपरि विश्वे सर्वे देवाः समोताः संबद्धाः, 'यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति' (तैआ. २।१५) इति श्रुतेः । स च सर्वेषां देवानां निवासभूतो ब्रह्मचारी प्राणापानौ सर्वप्राणिसंबन्धिनौ जनयन् उत्पादयन् वर्तते । आत् अनन्तरं व्यानम् 'अथ यः प्राणापानयोः संधिः स व्यानः' (छाउ. १।३।३) इति श्रुत्यन्तरप्रसिद्धं व्यानाख्यं वायुम्, वाचं वागिन्द्रियं परापश्यन्त्यादिरूपां वा शब्दात्मिकां वाचम्, मनः सर्वेन्द्रियानुग्राहकमन्तःकरणम्, हृदयं तदावासस्थानभूतं हृदयकमलम्, ब्रह्म वेदात्मकम्, मेधाम् आशुविद्याग्रहणकुशलां बुद्धिम्, एतत्सर्वं ब्रह्मचारी जनयन् वर्तते । असा.

**चक्षुः श्रोत्रं यशो अस्मासु धे-**
**ह्यन्नं रेतो लोहितमुदरम् ॥**
**तानि कल्पद्ब्रह्मचारी सलिलस्य पृष्ठे**
**तपोऽतिष्ठत्तप्यमानः समुद्रे ।**
**स स्नातो बभ्रुः पिङ्गलः पृथिव्यां बहु रोचते ॥**

हे ब्रह्मन् ब्रह्मचार्यात्मक, अस्मासु स्तोतृषु चक्षुः रूपग्राहकमिन्द्रियम्, श्रोत्रं शब्दग्राहकम् । प्राधान्यात् उपलक्षणत्वेन एतदिन्द्रियद्वयमुक्तम् । चक्षुःश्रोत्रादीनि सर्वाणि इन्द्रियाणि यशः कीर्तिं च अस्मासु धेहि धारय । आन्ध्यबाधिर्यादिकं कदाचिदपि अस्माकं मा भूदित्यर्थः । तथा भोज्यमन्नम्, पुत्रादिकारणं रेतः, लोहितं शरीरगतमसृक्, उदरम् उदरोपलक्षितं समस्तशरीरम् । तानि

एतानि अन्नादीनि ब्रह्मचारी कल्पत् कल्पयन् सलिलस्य पृष्ठे उदकस्य मध्ये तपस्तप्यमानः (समुद्रे) अतिष्ठत्। वर्तेत इत्यर्थः। सः तपस्वी ब्रह्मचारी अनिशं स्नातः स्नानेन पवित्रीकृतः बभ्रुः बभ्रुवर्णः। एतदेव विम्रियते– पिङ्गल इति। पिङ्गलवर्णः सन् पृथिव्यां भूम्यां बहु अधिकं रोचते दीप्यते। अथा.

आचार्याय आत्मनिवेदनम्, देवताभ्य आचार्यकृतं परिदानम्, व्रतोपदेशः, सावित्रीपाठनम्

**[१] 'ब्रह्मचर्यमागाम्' इत्याह। ब्रह्मण एवैतदात्मानं निवेदयति। 'ब्रह्मचार्यसानि' इत्याह। ब्रह्मण एवैतदात्मानं परिददाति। अथैनमाह– 'को नामासि' इति। प्रजापतिर्वै कः। प्राजापत्यमेवैनं तत्कृत्वोपनयते॥**

'तं ह्योपनिन्ये' इत्युपनयनस्य प्रस्तुतत्वात् तद्धर्मा अस्मिन् ब्राह्मणे निरूप्यन्ते। तत्र गुरुं प्रत्युपनयनप्रार्थनपरमुपनेतव्यस्य मन्त्रं विधाय स्तौति– ब्रह्मचर्यमागामित्याहेति। ब्रह्मचारिणो भावः ब्रह्मचर्यम्, तत् आगां प्राप्नुयाम्। 'आशंसायां भूतवच्च' (पासू. ३।३।१३२) इति भूतवत्प्रत्ययः। एवमनेन मन्त्रेण आह गुरुं प्रार्थयेत्। मन्त्रे ब्रह्मशब्दश्रवणात् ब्रह्मणे वेदपुरुषायैव एतत् एतेन मन्त्रेण शिष्यः स्वात्मानं निवेदयति। द्वितीयभागमनूद्य व्याचष्टे– ब्रह्मचार्यसानीत्याहेति। हे गुरो, भवत्प्रसादात् ब्रह्मचारी ब्रह्म वेदः तदभ्यसनशीलः भवानि। एतेन मन्त्रभागेन स्वात्मानं परिरक्षणाय तस्मा एव ब्रह्मणे परिददाति समर्पयति। अथ गुरोर्मन्त्रं विधत्ते– अथैनमाहेति। अथ शिष्याभिगमनानन्तरम् एनम् उपनेतव्यम् 'को नामासि' इति मन्त्रेण निरीक्षते। अत्र किंशब्दस्यानिरुक्तार्थत्वात् प्रजापतिवाचकत्वमभिप्रेतं व्याचष्टे– प्रजापतिर्वै क इति। हे शिष्य, त्वं कः प्रजापतिरेव त्वमसि। नामशब्दः प्रसिद्धो। तथा च एतेन मन्त्रेण एनं माणवकं प्रजापतिसंबन्धिनमेव कृत्वा उपनयते गुरुः स्वसमीपं प्रापयति। आचार्यकरणे नयतेरात्मनेपदम्। शब्राभा.

**अथास्य हस्तं गृह्णाति– 'इन्द्रस्य ब्रह्मचार्यस्यग्निराचार्यस्तवाहमाचार्यस्तवासौ' इति। एते वै श्रेष्ठे बलिष्ठे देवते। एताभ्यामेवैनं श्रेष्ठाभ्यां देवताभ्यां परिददाति। तथा ह्यस्य ब्रह्मचारी न कांचनाऽऽर्तिमार्च्छति। न स य एवं वेद॥**

अथ समन्त्रकं हस्तग्रहणं विधत्ते– अथास्य हस्तं गृह्णातीति। अथ अस्य ब्रह्मचारिणः दक्षिणं हस्तम् 'इन्द्रस्य' इति मन्त्रेण आचार्यो गृह्णीयात्। असाविति मन्त्रगतादःशब्दस्थाने संबुद्ध्यन्तं ब्रह्मचारिणो नाम ग्राह्यम्। हे यज्ञशर्मन्, त्वम् इन्द्रस्य देवतायाः संबन्धी ब्रह्मचारी भवसि, तवाग्निरेवाऽऽचार्यः, अतस्तव तत्प्रतिनिधित्वादहमप्याचार्य इति मन्त्रार्थः। इन्द्राग्निसंबन्धं प्रशंसति– एते वै श्रेष्ठे इति। एते इन्द्राग्नी श्रेष्ठे प्रशस्यतमे बलिष्ठे बलवत्तमे देवते। परिरक्षणाय दानं परिदानम्। स्पष्टमन्यत्। तस्य परिदानस्य फलमाह– तथा ह्यस्येति। तथा ह तथैव इन्द्राग्निभ्यां दत्ते सति अस्य आचार्यस्य संबन्धी ब्रह्मचारी कांचन कामपि आर्तिं पीडां नाऽऽर्च्छति न प्राप्नोति। विदुषोऽप्येतत्फलमाह– न स इति। एवम् उक्तार्थं यो वेद जानाति सोऽपि आर्तिं न प्राप्नोतीत्यर्थः। शब्राभा.

**अथैनं भूतेभ्यः परिददाति– 'प्रजापतये त्वा परिददामि देवाय त्वा सवित्रे परिददामि' इति। एते वै श्रेष्ठे वर्षिष्ठे देवते। एताभ्यामेवैनं श्रेष्ठाभ्यां वर्षिष्ठाभ्यां देवताभ्यां परिददाति। तथा ह्यस्य ब्रह्मचारी न कांचनाऽऽर्तिमार्च्छति। न स य एवं वेद॥**

एवं लिङ्गवशात् इन्द्राग्निभ्यां परिदानं प्रतिपाद्य अथ साक्षात्समन्त्रकं परिदानं विधत्ते– अथैनं भूतेभ्य इति। अथ हस्तग्रहणानन्तरं भूतेभ्यः विद्यमानेभ्यः प्रजापतिप्रमुखेभ्यः एनं ब्रह्मचारिणं परिदद्यात् 'प्रजापतये त्वा' इति मन्त्रेण। एते वै श्रेष्ठे इत्यादि। एते प्रजापतिसवितृरूपे श्रेष्ठे प्रशस्यतमे वर्षिष्ठे वृद्धतमे देवते, उत्पादकत्वेन

(१) शब्रा. ११।५।४।१–१८.

प्रेरकत्वेन च प्रामुख्यात् । एतांभ्यामेवेत्यादि सिद्धम् ।

शत्रासा.

**'अद्भ्यस्त्वौषधीभ्यः परिददामि' इति तदेनमद्भ्यश्चौषधीभ्यश्च परिददाति। 'द्यावापृथिवीभ्यां त्वा परिददामि' इति तदेनमाभ्यां द्यावापृथिवीभ्यां परिददाति। ययोरिदं सर्वमधि। 'विश्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्यै' इति तदेनं सर्वेभ्यो भूतेभ्यः परिददात्यरिष्ट्यै । तथा हास्य ब्रह्मचारी न कां चनाऽऽर्तिमार्च्छति । न स य एवं वेद ॥**

अपामोषधीनां च सर्वकारणत्वात् ताभ्यः परिदानार्थे द्वितीयो मन्त्रभाग इति व्याचष्टे— अद्भयस्त्वौषधीभ्य इति । तृतीयभागमनूद्य व्याचष्टे— द्यावापृथिवीभ्यामिति । सर्वाधारत्वात् द्यावापृथिव्योः द्यावापृथिवीभ्यां परिदानम् । अत एव द्यावापृथिव्यौ विशिनष्टि— ययोरिदं सर्वमधीति । ययोः द्यावापृथिव्योः उपरि इदं सर्वं जगदाश्रितं वर्तते तथाभूताभ्यां द्यावापृथिवीभ्यामित्यर्थः । विश्वेभ्यस्त्वा भूतेभ्य इत्यादि । अरिष्टयै अहिंसायै । उक्तावशिष्टानि यानि सर्वाणि भूतानि सन्ति तेभ्यः परिरक्षार्थमनेन मन्त्रभागेन ददातीत्यर्थः । अबादिभ्यः परिदानस्य फलमाह— तथा हास्येति । अथ( ? तथा ) अस्याद्भ्यस्त्वौषधीभ्यः परिदाने सतीत्यर्थः । गतमन्यत् ।

शत्रासा.

**'ब्रह्मचार्यसि' इत्याह । ब्रह्मण एवैनं तत्परिददाति । 'अपोऽशान' इति । अमृतं वा आपः। अमृतमशानेत्येवैनं तदाह । 'कर्म कुरु' इति। वीर्यं वै कर्म । वीर्यं कुर्वित्येवैनं तदाह । 'समिधमाधेहि' इति । समिन्त्स्वाऽऽत्मानं तेजसा ब्रह्मवर्चसेनेत्येवैनं तदाह । 'मा सुषुप्थाः' इति । मा मृथा इत्येवैनं तदाह। 'अपोऽशान' इति । अमृतं वा आपः । अमृतमशानेत्येवैनं तदाह । तदेनमुभयतोऽमृतेन परिगृह्णाति । तथा हास्य ब्रह्मचारी न कां चनाऽऽर्तिमार्च्छति । न स य एवं वेद ॥**

अथास्य मन्त्रेणानुशासनं विधत्ते— ब्रह्मचार्यसीत्याहेत्यादि । हे यज्ञशर्मन् , त्वं ब्रह्मचार्यसि ब्रह्मचर्यनियमं प्राप्नोषि, अनेनाप्रमत्तो भव । ब्रह्मण एवैनमिति । तत्तेन ब्रह्मचारीति पदेन प्रतीयमानाय ब्रह्मणे वेदपुरुषायैव एनं ब्रह्मचारिणं परिददातीति तात्पर्यगम्योऽर्थः । 'अपोऽशान' इति द्वितीयमनुशासनम् । मया अनुशातः सन् अप एव अशान, अन्यन्नाऽऽकाङ्क्षये(?ङ्क्षेः)त्यर्थः । तदेव तात्पर्यतो व्याचष्टे— अमृतं वा आप इति । आप्यायनकरत्वात् प्राणिस्थितिनिमित्तत्वाच्चापाममृतत्वम् । अशानेति । 'अश भोजने' इत्यस्माल्लोटि 'हलः श्नः शानज्झौ' ( पासू. ३।१।८३ ) इति शानजादेशः । 'कर्म कुरु' इति तृतीयमनुशासनम् । गुरुशुश्रूषादि ब्रह्मचर्याश्रमविहितं यत्कर्मास्ति, तत्कुर्वित्यर्थः । वीर्यं वै कर्मेति । वीर्यहेतुत्वात्कर्मणस्तद्रूपत्वम् । 'समिधमाधेहि' इत्युपरितनानुशासनम् । हे ब्रह्मचारिन् , समिधमग्नावाधेहि । अग्निपरिचर्यां कुर्वित्यर्थः । तत्समिदाधानमात्मनः समिन्धनहेतुत्वेन स्तौति— समिन्त्स्वाऽऽत्मानमिति । तेजः शरीरकान्तिः । ब्रह्मवर्चसं श्रुताध्ययनसंपत्तिजं ब्राह्मं तेजः । उभाभ्यामात्मानं समिन्त्स्व संदीप्तं कुरु इति एवंरूपमेवार्थम् अनेन वाक्येन ब्रह्मचारिणमेव आह प्रतिपादयति आचार्यः । $ पुनरप्यपामशनमनुशास्ति चरमेण भागेनेत्याह— अपोऽशानेति । व्याख्यातमेतत् । ननु— उक्तस्यैवार्थस्य पुनरनुशासनं किमर्थमित्याशङ्क्याऽऽह— तदेनमुभयतोऽमृतेनेति । तत् तेन पुनरनुशासनेन उभयतः उभयत्र आदावन्ते च उदकलक्षणेनामृतेन एनं ब्रह्मचारिणं परिगृह्णाति वेष्टयति । तथा हास्येत्यादि । तथैवानुशासने सति नियमितत्वेन पीडाहेतुभूतस्य पापस्यानाचरणात् । अस्य ब्रह्मचारीत्यादि सिद्धम् ।

शत्रासा.

**अथास्मै सावित्रीमन्वाह । तां ह स्मैतां पुरा संवत्सरेऽन्वाहुः । संवत्सरसंमिता वै गर्भाः प्रजायन्ते । जात एवास्मिंस्तद्वाचं दध्म इति ॥**

$ 'मा सुषुप्थाः' इतीत्यादिग्रन्थस्य व्याख्यानं नोपलब्धमित्यादर्शपुस्तके टिप्पणी ।

अथ सावित्र्यनुवाचनं विधत्ते— अथास्मा इति। 'ब्रह्मचार्यसि' इति मन्त्रेणानुशासनानन्तर्यमथशब्दार्थः। अस्मै नियमिताय शिष्याय सावित्रीं सवितृदेवताकां 'तत्सवितुर्वरेण्यम्' इत्यादिकां गायत्रीम् अन्वाह आचार्योऽनुब्रूयात्। अनुवाचनप्रकारस्त्वग्रे वक्ष्यते। अथ तदनुवाचनस्य उपनयनादूर्ध्वं संवत्सरकाले कर्तव्यतामाह— तां ह स्मैतामिति। पुरा पूर्वस्मिन् उपनयनादूर्ध्वभाविनि संवत्सरकाले अतीते सति तामेतां गायत्रीम् अन्वाहुः केचिदाचार्या उपदिशन्ति। तेषामभिप्रायमाह— संवत्सरसंमिता वा इति। संवत्सरात्मना कालेन सम्यक् परिच्छिन्नाः खलु गर्भा व्यक्तावयवाः सन्तः प्रजायन्ते उत्पद्यन्ते। अत उपनयनानन्तरमाचार्यसमीपे गर्भवदवस्थितः तदुक्तं नियममाचरन् संवत्सरकाल एव पुनर्जायते। अतः जात एवास्मिन् ब्रह्मचारिणि तत् तेन सावित्र्यनुवाचनेन वाचं दध्मः धारयामः इति। अनेनाभिप्रायेण संवत्सरकाले अनुवाचनमिति संबन्धः। शब्रासा.

**अथ षट्सु मासेषु। षड्वा ऋतवः संवत्सरस्य। संवत्सरसंमिता वै गर्भाः प्रजायन्ते। जात एवास्मिंस्तद्वाचं दध्म इति॥**

अथ षण्मासादिष्वपि कालेषु संवत्सरसंपत्तिं प्रतिपादयन् तदनुवाचनस्य कर्तव्यतामाह— अथ षट्सु मासेष्वित्यादिना। अथेति पक्षान्तरप्रदर्शने। षट्सु मासेषु उपनयनादूर्ध्वं गतेषु सत्सु। सावित्रीमन्वाहुरित्याद्यनुषङ्गः। षड्वा ऋतव इति। षड्वा ऋतवः संवत्सरस्येति मासगतषट्संख्यया संवत्सरसंपत्तिरुक्ता। अन्यत् व्याख्यातम्। शब्रासा.

**अथ चतुर्विंशत्यहे। चतुर्विंशतिर्वै संवत्सरस्यार्धमासाः। संवत्सरसंमिता वै गर्भाः प्रजायन्ते। जात एवास्मिंस्तद्वाचं दध्म इति॥**

पक्षान्तरमाह— अथ चतुर्विंशत्यह इति। चतुर्विंशतिसंख्याकानामह्नां समाहारश्चतुर्विंशत्यहः कालः। चतुर्विंशतिदिवसपरिमिते काले गते सतीत्यर्थः। चतुर्विंशतिर्वा इति दिवसगतार्धमाससंख्यया संवत्सरसंपत्तिः। गतमन्यत्। शब्रासा.

**अथ द्वादशाहे। द्वादश वै मासाः संवत्सरस्य। संवत्सरसंमिता वै गर्भाः प्रजायन्ते। जात एवास्मिंस्तद्वाचं दध्म इति॥**

अन्यं पक्षमाह— द्वादशाह इति। अत्र दिवसगतद्वादशसंख्यया मासद्वादशात्मकसंवत्सरसंपत्तिः। गतमन्यत्। शब्रासा.

**अथ षडहे। षड्वा ऋतवः संवत्सरस्य। संवत्सरसंमिता वै गर्भाः प्रजायन्ते। जात एवास्मिंस्तद्वाचं दध्म इति॥**

अन्यं पक्षमाह— अथ षडह इति। दिवसगतषट्संख्यया ऋतुद्वारा अत्र संवत्सरसंपत्तिः। शब्रासा.

**अथ त्र्यहे। त्रयो वा ऋतवः संवत्सरस्य। संवत्सरसंमिता वै गर्भाः प्रजायन्ते। जात एवास्मिंस्तद्वाचं दध्म इति॥**

चरमं पक्षमाह— अथ त्र्यह इति। ग्रीष्मो वर्षा हेमन्त इति ऋतूनां त्रित्वम्। शब्रासा.

**तदपि श्लोकं गायन्ति— 'आचार्यो गर्भी भवति हस्तमाधाय दक्षिणम्। तृतीयस्यां स जायते सावित्र्या सह ब्राह्मणः॥' इति। सद्यो ह त्वाव ब्राह्मणायानुब्रूयात्। आग्नेयो वै ब्राह्मणः। सद्यो वा अग्निर्जायते। तस्मात्सद्य एव ब्राह्मणायानुब्रूयात्॥**

अस्मिन् त्र्यहपक्षे श्लोकमन्त्रं संवादयति— तदपि श्लोकं गायन्तीति। तत्र त्र्यहपक्षे श्लोकरूपं मन्त्रमपि गायन्ति पठन्ति। आचार्यो गर्भी भवतीति। आचार्यः माणवकमुपनीय समीपवर्तिना तेन च गर्भी भवति गर्भवान् भवति। किं कृत्वा? आत्मीयं दक्षिणं हस्तं शिष्यमस्तके आधाय निक्षिप्य। स गर्भरूपो माणवकः तृतीयस्यां रात्रौ व्यतीतायां जायते आचार्यत उत्पद्यते। जातश्च आचार्येणोपदिष्टया सावित्र्या सहितः सन् ब्राह्मणो भवति। 'सावित्रीरूपं ब्रह्म अधीते इति ब्राह्मणः'

इति व्युत्पत्तेर्ब्राह्मणजातित्वमस्य संपन्नमित्यर्थः । इत्थं त्रैवर्णिकानां साधारणं पक्षमुक्त्वा ब्राह्मणस्य विशेषमाह– सद्यो ह त्वावेति । तुशब्दः प्रागुक्तं कालविलम्बं व्यावर्तयति । सद्यः उपनयनानन्तरमेव ब्राह्मणाय सावित्रीमनुब्रूयात् । एतदुपपादयति– आग्नेयो वा इति । प्रजापतिमुखात्सहोत्पत्तेः अग्निदेवत्यो ब्राह्मणः । ततः किमित्याह– सद्यो वा अग्निरिति । मन्थनानन्तरं सद्य एवाग्निर्जायते, अतस्तत्साम्यात् तद्देवत्याय ब्राह्मणाय सावित्रीं सद्य एवानुब्रूयात् ।                                शब्राभा.

**तां हैतामेके सावित्रीमनुष्टुभमन्वाहुः । वाग्वा अनुष्टुप् । तदस्मिन्वाचं दध्म इति । न तथा कुर्यात् । यो हैनं तत्र ब्रूयात्– आ न्वा अयमस्य वाचमदित मूको भविष्यतीति । ईश्वरो ह तथैव स्यात् । तस्मादेतां गायत्रीमेव सावित्रीमनुब्रूयात् ॥**

का पुनरसौ सावित्रीत्याशङ्क्य तत्र एकीयं मतमुपन्यस्यति– तां हैतामिति । अनुष्टुभम् अनुष्टुप्छन्दस्कां 'तत्सवितुर्वृणीमहे' इत्यादिकाम् । वाग्वा अनुष्टुबित्यादि । यस्मात् कृत्स्नवाग्रूपा अनुष्टुप् तत् तस्मात् जातेऽस्मिन्माणवके वाचं दध्मः धारयामः इति । अनेनाभिप्रायेणानुष्टुभ ऋचः अनुवचनम् । तदेतन्निषिद्धय दूषयति– न तथा कुर्यादिति । तत्र तस्मिन् विषये यः नाम कश्चिदभिज्ञः आगत्य एनमाचार्यं ब्रूयात् । किमिति ? अयं माणवकः अस्य आचार्यस्य वाचम् , नुशब्दः अवेत्यर्थे, अद्य खलु आदित स्वीकृतवान् , वाग्रूपाया अनुष्टुभः स्वीकारात् , तथा चायमुपदेष्टा मूको भविष्यतीति । तथैव भवितुमयम् ईश्वरः समर्थः स्यात् । स्वपक्षं सिद्धान्तयति– तस्मादेतामिति । 'तत्सवितुर्वरेण्यम्' इत्यादिकां गायत्रीछन्दस्कामेव सावित्रीमृचमनुब्रूयात् । तथा च वाचोऽप्युच्चारानोक्तदोष इत्यर्थः ।                                शब्राभा.

**अथ हैके दक्षिणतस्तिष्ठते वाऽऽसीनाय वाऽन्वाहुः । न तथा कुर्यात् । यो हैनं तत्र ब्रूयात्– बुल्वं न्वा अयमिममजीजनत, बुल्बो भविष्यतीति । ईश्वरो ह तथैव स्यात् । तस्मात्पुरस्तादेव प्रतीचे समीक्षमाणायानुब्रूयात् ॥**

तत्रानुवचनसमये शाखान्तराभिमतं दक्षिणतोऽवस्थानं शिष्यस्य निषेधति– अथ हैक इति । एके शाखिनः आचार्यस्य दक्षिणभागे तिष्ठते वा आसीनाय वा वाचयन्तीति स्थानासनयोर्विकल्पः । यो हैनमिति तत्र दोषोक्तिः । बुल्वं न्वा अयमिममिति । नु, वै, अयम् इति पदच्छेदः । अयम् आचार्यः इमं शिष्यम् अद्य बुल्वं तिरश्चीनं प्राङ्मुखम् अजीजनत अजनयत् , तथा चायं बुल्वः पराङ्मुखो भविष्यतीति । गतमन्यत् । स्वपक्षं सिद्धान्तयति– तस्मात्पुरस्तादेवेति । आचार्यस्य पूर्वभागे प्रतीचे प्रत्यङ्मुखाय उपविष्टाय आचार्यं समीक्षमाणाय सावित्रीमनुब्रूयात् । तत्र नोक्तदोष इत्यर्थः ।                                शब्राभा.

**तां वै पच्छोऽन्वाह । त्रयो वै प्राणाः– प्राण उदानो व्यानः । तानेवास्मिंस्तद्दधाति । अथार्धर्चशः । द्वौ वा इमौ प्राणौ प्राणोदानावेव । प्राणोदानावेवास्मिंस्तद्दधाति । अथ कृत्स्नाम् । एको वा अयं प्राणः कृत्स्न एव । प्राणमेवास्मिंस्तत्कृत्स्नं दधाति ॥**

पच्छोऽर्धर्चशोऽनवानमिति क्रमेण तस्मिन्ननुवचने धर्मान् विधत्ते– तां वै पच्छ इति । पच्छः पादशः पादे पादे अवसाय । 'त्रयो वै प्राणाः' इत्यादि स्पष्टम् । अर्धर्चशः ऋचः अर्धमर्धे च । तस्मिन्नर्धर्चे अवसायेत्यर्थः । द्वौ वा इमाविति । ऊर्ध्वाधोभेदेन वृत्तिद्वैविध्यात्प्राणयोर्द्वित्वम् । अथ कृत्स्नामिति । अर्धर्चे अवसानं परित्यज्य कृत्स्नाम् अखण्डां गायत्रीम् अन्ततोऽनुब्रूयात् । एको वा अयमिति । अविवक्षितवृत्तिकोऽयं प्राणः विरागदोषः वराघ्याख्यदेवताकः सन् (?) कृत्स्नः अविभक्तावयवः एव भवति । तथा च कृत्स्नानुवचनेन कृत्स्नं प्राणमेवास्मिन् स्थापयति ।                                शब्राभा.

**तदाहुः– न ब्राह्मणं ब्रह्मचर्यमुपनीय मिथुनं चरेत् । गर्भो वा एष भवति यो ब्रह्मचर्यमुपैति । नेदिमं ब्राह्मणं विधिच्छिद्रेतसो जनयानीति ॥**

अथ प्रागुक्तसंवत्सरादिपक्षेषु उपनयनानन्तरं सावित्रीप्रदानात्पूर्वमाचार्यस्य नियमं दर्शयति– तदाहुरिति । तत्रोक्तविषय आहुरभिज्ञाः कथयन्ति । किमिति ? ब्राह्मणं शिष्यं ब्रह्मचर्यनियममुपनीय प्राप्य आचार्यः न मिथुनं चरेत् स्त्रिया सह वासं न कुर्यात् । तत्र कारणमाह– गर्भो वा एष इति । एषः उपनीतः गर्भः भवति । इमं गर्भीभूतं ब्राह्मणं विषिक्तात् विविधं सिक्तात् रेतसः नेत् नैव जनयानि उत्पादयानीति । शब्रासा.

**तदु वा आहुः– काममेव चरेत् । द्वय्यो वा इमाः प्रजा दैव्यश्चैव मानुष्यश्च । ता वा इमा मानुष्यः प्रजाः प्रजननात्प्रजायन्ते । छन्दांसि वै दैव्यः प्रजाः । तानि मुखतो जनयते । तत एतं जनयते । तस्मादु काममेव चरेत् ॥**

एवं केषांचिन्मतमुक्त्वा अन्येषां मतमाह– तदु वा आहुरिति । तदु तत्रैव अपरे अन्यथा आहुः– कामं यथेच्छमेव मिथुनं चरेत् । उक्तदोषाभावं व्यवस्थया प्रतिपादयति– द्वय्यो वा इमा इति । द्विविधाः खलु इमाः प्रजा दैवमानुषभेदात् । तत्र मानुष्यः प्रजा मिथुनीभवनेन प्रजननादुत्पद्यन्ते । गायत्र्यादीनि तु छन्दांसि दैव्यः प्रजाः । तानि अयं मुखतः मुखात् ताल्वोष्ठपुटादिव्यापारविशेषादुत्पादयते । ततः मुखत एव उत्पद्यमानात् गायत्रीछन्दसः सकाशात् एतं ब्रह्मचारिणं जनयति । अत एव औपस्थमेनं स हि पिता सद्यस्तं जनयति । तत्र जन्मशरीरमेव मातापितरौ जनयत इति । अतोऽस्य ब्रह्मचारिणः प्रजननादनुत्पत्तेः आचार्यस्य मिथुनमपि न विरुध्यत इत्युपसंहरति– तस्मादु काममेवेति । उज्ज्वलितरेताश्चेत् मिथुनं चरेत् । न सर्वथावर्जननियम इत्यर्थः । शब्रासा.

**तदाहुः– न ब्रह्मचारी सन् मध्वश्नीयात् । ओषधीनां वा एष परमो रसो यन्मधु । नेदन्नाद्यस्यान्तं गच्छानीति । अथ ह स्माऽऽह श्वेतकेतुरारुणेयो ब्रह्मचारी सन् मध्वश्नन्– त्रय्यै वा एतद्विद्यायै शिष्टं यन्मधु । स तु रसो यस्येदृक् शिष्टमिति । यथा ह वा ऋचं वा यजुर्वा साम वाऽभिव्याहरेत् तादृक् तद्य एवं विद्वान् ब्रह्मचारी सन् मध्वश्नाति । तस्मादु काममेवाश्नीयात् ॥**

इत्थमाचार्यस्य नियममुक्त्वा ब्रह्मचारिणोऽप्याह– तदाहुर्न ब्रह्मचारी सन्निति । तत्र केचिदाहुः– ब्रह्मचर्यधर्मं प्राप्तः सन् मधु नाश्नीयात् न भक्षयेत् । कुत इत्यत आह– ओषधीनां वा इति । इष्टसोमौषधीनां संबन्धी परमः उत्कृष्टः एष रसः यदेतन्मधु । अस्य हि भक्षणे सर्वौषधीरस उपभुक्तः स्यात् । तथा च ब्रह्मचर्याश्रम एव सर्वमन्नमुपभुक्तं स्यात् । अन्नाद्यस्यान्तम् अवसानं नैव गच्छानीत्यनेनाभिप्रायेण मध्वशनं न कार्यम् । पक्षान्तरमाह– अथ ह स्माऽऽहेति । अथ खलु आह स्म श्वेतकेतुरारुणेः पुत्रः ब्रह्मचर्याश्रमस्थ एव मध्वशनं कुर्वन् । किमिति ? तदुच्यते– त्रय्यै वा एतदिति । वेदत्रयरूपाया विद्यायाः खलु एतच्छिष्टं विशिष्टरूपम् ( यत् ब्रह्मस्य वष्टितं तच्छिष्टम् ? ) । अत एव तु वेदत्रयात्मको मधुनो रस इति । यत एवं श्वेतकेतुना मधुरसस्य त्रयीरूपत्वमुक्तम्, ततः कारणात् यथा खलु ऋग्यजुःसाम्नां मध्ये अन्यतरतदभिव्याहारात्( ? तरदभिव्याहरेत् ), उक्तप्रकारेण मधुनः त्रयीशिष्टत्वं विदुषो ब्रह्मचारिणो मध्वशनं तादृगेव भवति । अतो मध्वशननिषेधः अविद्वद्विषय इत्युपसंहरति– तस्मादु काममिति । शब्रासा.

सावित्र्याः महिमा व्याख्यानं च

**'एतद्ध स्मैतद्विद्वांसमेकादशाक्षं मौद्गल्यं ग्लावो मैत्रेयोऽभ्याजगाम । स तस्मिन् ब्रह्मचर्यं वसतीति विज्ञायोवाच– किं स्विन्मर्यादा अयं तं मौद्गल्योऽध्येति यदस्मिन् ब्रह्मचर्ये वसतीति । तद्धि मौद्गल्यस्यान्तेवासी शुश्राव । स आचार्यायाऽऽव्रज्याऽऽचचष्टे– दुरधीयानं वा अयं भवन्तमवोचद्योऽयमद्यातिथिर्भवति । किं सौम्य विद्वानिति । त्रीन् वेदान् ब्रूते भो३ इति । तस्य**

(१) गोब्रा. १।१।३१–३८.

सौम्य यो विस्पष्टो विजिगीषोऽन्तेवासी तन्मे ह्वयेति । तमाजुहाव । तमभ्युवाचासाविति भो३ इति । किं सौम्य त आचार्योऽध्येतीति । त्रीन् वेदान् ब्रूते भो३ इति । यन्नु खलु सौम्यास्माभिः सर्वे वेदा मुखतो गृहीताः कथं त एवमाचार्यो भाषते । कथं नु शिष्टाः शिष्टेभ्य एवं भाषेरन् । यं ह्येनमहं प्रश्नं पृच्छामि न तं विवक्ष्यति न ह्येनमध्येतीति । स ह मौद्गल्यः स्वमन्तेवासिनमुवाच–परेहि सौम्य ग्लावं मैत्रेय-मुपसीदाधीहि भोः सावित्रीं गायत्रीं चतुर्विंशतियोनिं द्वादशमिथुनां यस्या भृग्वङ्गिरस-श्चक्षुर्यस्यां सर्वमिदं श्रितं तां भवान्प्रब्रवीत्विति । स चेत्सौम्य दुरधीयानो भविष्यत्याचार्योवाच ब्रह्मचारी ब्रह्मचारिणे सावित्रीं प्राहेति वक्ष्यति तत्त्वं ब्रूयात् । दुरधीयानं तं वै भवान् मौद्गल्य-मवोचत् । स त्वा यं प्रश्नमप्राक्षीन्न तं व्यवोचः । पुरा संवत्सरादार्तिमाकृष्यसीति ॥

स तत्राऽऽजगाम यत्रेतरो बभूव । तं ह पप्रच्छ । स ह न प्रतिपेदे । तं होवाच– दुरधीयानं तं वै भवान् मौद्गल्यमवोचत् । स त्वा यं प्रश्नमप्राक्षीन्न तं व्यवोचः । पुरा संवत्सरा-दार्तिमाकृष्यसीति । स ह मैत्रेयः स्वानन्तेवासिन उवाच– यथार्थं भवन्तो यथागृहं यथामनो विप्रसृज्यन्ताम् । दुरधीयानं वा अहं मौद्गल्य-मवोचम् । स मा यं प्रश्नमप्राक्षीन्न तं व्यवोचम् । तमुपेष्यामि । शान्तिं करिष्यामीति । स ह मैत्रेयः प्रातः समित्पाणिर्मौद्गल्यमुपससाद असावाग्रहं( ? सावहं ) भो मैत्रेयः । किमर्थ-मिति । दुरधीयानं वा अहं भवन्तमवोचम् । त्वं मा यं प्रश्नमप्राक्षीर्न तं व्यवोचम् । त्वामु-पेष्यामि शान्तिं करिष्यामीति । स होवाचात्र वा उपेतं च सर्वं च कृतं पापकेन त्वा यानेन चरन्तमाहरथो( ? माहु रथो )ऽयं मम कल्याणस्तं ते ददामि तेन याहीति । स होवाच– एत-देवात्रात्विषं चाऽऽनृशंस्यं च यथा भवानाहो-पायामित्येवं भवन्तमिति तं होपेयाय । तं होपेत्य पप्रच्छ– किं स्विदाहुर्भोः सवितुर्वरेण्यं भर्गो देवस्य कवयः, किमाहुर्धियो विचक्ष्व यदि ताः प्रविश्य प्रचोदयात् सविता याभिरेतीति । तस्मा एतत्प्रोवाच– वेदाश्छन्दांसि सवितुर्वरेण्यं भर्गो देवस्य कवयोऽन्नमाहुः । कर्माणि धियस्तदु ते ब्रवीमि प्रचोदयात् सविता याभिरेतीति । तमुपसंगृह्य पप्रच्छ– अधीहि भोः कः सविता का सावित्री ॥

मन एव सविता वाक् सावित्री । यत्र ह्येव मनस्तद् वाक् यत्र वै वाक् तन्मन इति । एते द्वे योनी एकं मिथुनम् । अग्निरेव सविता पृथिवी सावित्री । यत्र ह्येवाग्निस्तत्पृथिवी यत्र वै पृथिवी तदग्निरिति । एते द्वे योनी एकं मिथुनम् । वायुरेव सविताऽन्तरिक्षं सावित्री । यत्र ह्येव वायुस्तदन्तरिक्षं यत्र वा अन्तरिक्षं तद्वायुरिति । एते द्वे योनी एकं मिथुनम् । आदित्य एव सविता द्यौः सावित्री । यत्र ह्येवाऽऽदित्यस्तद् द्यौर्यत्र वै द्यौस्तदादित्य इति । एते द्वे योनी एकं मिथुनम् । चन्द्रमा एव सविता नक्षत्राणि सावित्री । यत्र ह्येव चन्द्रमास्तन्नक्षत्राणि यत्र वै नक्षत्राणि तच्चन्द्रमा इति । एते द्वे योनी एकं मिथुनम् । अहरेव सविता रात्रिः सावित्री । यत्र ह्येवाहस्तद्रात्रिर्यत्र वै रात्रिस्तदहरिति । एते द्वे योनी एकं मिथुनम् । उष्णमेव सविता शीतं सावित्री । यत्र ह्येवोष्णं तच्छीतं यत्र वै शीतं तदुष्णमिति । एते द्वे योनी एकं मिथुनम् । अभ्र-मेव सविता वर्षं सावित्री । यत्र ह्येवाभ्रं तद्वर्षं यत्र वै वर्षं तदभ्रमिति । एते द्वे योनी एकं मिथुनम् । विद्युदेव सविता स्तनयित्नुः सावित्री । यत्र ह्येव विद्युत् तत्स्तनयित्नुर्यत्र वै स्तनयित्नुस्तद्विद्युदिति । एते द्वे योनी एकं

मिथुनम् । प्राण एव सविताऽन्नं सावित्री । यत्र ह्येव प्राणस्तदन्नं यत्र वा अन्नं तत्प्राण इति । एते द्वे योनी एकं मिथुनम् । वेदा एव सविता छन्दांसि सावित्री । यत्र ह्येव वेदास्तच्छन्दांसि यत्र वै छन्दांसि तद्वेदा इति । एते द्वे योनी एकं मिथुनम् । यज्ञ एव सविता दक्षिणा( ? णाः ) सावित्री । यत्र ह्येव यज्ञस्तद्दक्षिणा यत्र वै दक्षिणास्तद्यज्ञ इति । एते द्वे योनी एकं मिथुनम् । एतद्ध स्मैतद्विद्वांसमोपाकारिमासस्तु ब्रह्मचारी ते संस्थित इति । अथैत आसस्तुराचित इव चितो बभूव । अथोत्थाय प्राव्राजीदिति । एतद्वाऽहं वेद । नैतासु योनिष्वित एतेभ्यो वा मिथुनेभ्यः संभूतो ब्रह्मचारी मम पुराऽऽयुषः प्रेयादिति ॥

ब्रह्म ह्येदं श्रियं प्रतिष्ठामायतनमैक्षत । तत्तपस्व । यदि तद्व्रते ध्रियेत । तत्सत्ये प्रत्यतिष्ठत् । स सविता सावित्र्या ब्राह्मणं सृष्ट्वा तत्सावित्रीं पर्यदधात् । 'तत्सवितुर्वरेण्यम्' इति सावित्र्याः प्रथमः पादः । पृथिव्यर्चं समदधादृचाऽग्निमग्निना श्रियं श्रिया स्त्रियं स्त्रिया मिथुनं मिथुनेन प्रजां प्रजया कर्म कर्मणा तपस्तपसा सत्यं सत्येन ब्रह्म ब्रह्मणा ब्राह्मणं ब्राह्मणेन व्रतम् । व्रतेन वै ब्राह्मणः संशितो भवत्यशून्यो भवत्यविच्छिन्नो भवति । अविच्छिन्नोऽस्य तन्तुरविच्छिन्नं जीवनं( भवनं ? ) भवति य एवं वेद । यश्चैवं विद्वानेवमेतं सावित्र्याः प्रथमं पादं व्याचष्टे ॥

'भर्गो देवस्य धीमहि' इति सावित्र्या द्वितीयः पादः । अन्तरिक्षेण यजुः समदधाद्यजुषा वायुं वायुनाऽभ्रमभ्रेण वर्षं वर्षेणौषधिवनस्पतीनोषधिवनस्पतिभिः पशून् पशुभिः कर्म कर्मणा तपस्तपसा सत्यं सत्येन ब्रह्म ब्रह्मणा ब्राह्मणं ब्राह्मणेन व्रतम् । व्रतेन वै ब्राह्मणः संशितो भवत्यशून्यो भवत्यविच्छिन्नो भवति । अविच्छिन्नोऽस्य तन्तुरविच्छिन्नं जीवनं भवति य एवं वेद । यश्चैवं विद्वानेवमेतं सावित्र्या द्वितीयं पादं व्याचष्टे ॥

'धियो यो नः प्रचोदयात्' इति सावित्र्यास्तृतीयः पादः । दिवा साम समदधात् साम्नाऽऽदित्यमादित्येन रश्मीन् रश्मिभिर्वर्षं वर्षेणौषधिवनस्पतीनोषधिवनस्पतिभिः पशून् पशुभिः कर्म कर्मणा तपस्तपसा सत्यं सत्येन ब्रह्म ब्रह्मणा ब्राह्मणं ब्राह्मणेन व्रतम् । व्रतेन वै ब्राह्मणः संशितो भवत्यशून्यो भवत्यविच्छिन्नो भवति । अविच्छिन्नोऽस्य तन्तुरविच्छिन्नं जीवनं भवति य एवं वेद । यश्चैवं विद्वानेवमेतं सावित्र्यास्तृतीयं पादं व्याचष्टे ॥

तेन ह वा एवंविदुषा ब्राह्मणेन ब्रह्माभिपन्नं ग्रसितं परामृष्टम् । ब्रह्मणाऽऽकाशमभिपन्नं ग्रसितं परामृष्टम् । आकाशेन वायुरभिपन्नो ग्रसितः परामृष्टः । वायुना ज्योतिरभिपन्नं ग्रसितं परामृष्टम् । ज्योतिषाऽऽपोऽभिपन्ना ग्रसिताः परामृष्टाः । अद्भिर्भूमिरभिपन्ना ग्रसिता परामृष्टा । भूम्याऽन्नमभिपन्नं ग्रसितं परामृष्टम् । अन्नेन प्राणोऽभिपन्नो ग्रसितः परामृष्टः । प्राणेन मनोऽभिपन्नं ग्रसितं परामृष्टम् । मनसा वागभिपन्ना ग्रसिता परामृष्टा । वाचा वेदा अभिपन्ना ग्रसिताः परामृष्टाः । वेदैर्यज्ञोऽभिपन्नो ग्रसितः परामृष्टः । तानि ह वा एतानि द्वादश महाभूतान्येवंविदि प्रतिष्ठितानि । तेषां यज्ञ एव परार्ध्यः ॥

तं ह स्मैतमेवंविद्वांसो मन्यन्ते विद्मैनमिति याथातथ्यमविद्वांसः । अयं यज्ञो वेदेषु प्रतिष्ठितः । वेदा वाचि प्रतिष्ठिताः । वाङ्मनसि

प्रतिष्ठिता। मनः प्राणे प्रतिष्ठितम्। प्राणोऽन्ने प्रतिष्ठितः। अन्नं भूमौ प्रतिष्ठितम्। भूमिरप्सु प्रतिष्ठिता। आपो ज्योतिषि प्रतिष्ठिताः। ज्योतिर्वायौ प्रतिष्ठितम्। वायुराकाशे प्रतिष्ठितः। आकाशं ब्रह्मणि प्रतिष्ठितम्। ब्रह्म ब्राह्मणे ब्रह्मविदि प्रतिष्ठितम्। यो ह वा एवंवित्स ब्रह्मवित्। पुण्यां च कीर्तिं लभते सुरभींश्च गन्धान्। सोऽपहतपाप्माऽऽनन्त्यश्रियमश्नुते य एवं वेद। यश्चैवं विद्वानेवमेतां वेदानां मातरं सावित्रीसंपदमुपनिषदमुपास्त इति ब्राह्मणम्॥

## आपस्तम्बगृह्यसूत्रम्

उपनयनस्य प्राधान्यम्, उपनयनमिति कर्मनामधेयम्

**[1]उपनयनं व्याख्यास्यामः ॥**

(१) अथ मन्त्राम्नानक्रमप्राप्तमुपनयनव्याख्यानं प्रतिजानीते– उपनयनमिति। येन आचार्यकुलमुपनीयते कुमारस्तदुपनयनं नाम कर्म श्रौतः पुरुषसंस्कारः। 'गर्भाष्टमेषु ब्राह्मणमुपनयीत' इति वक्ष्यमाणेनैवोपनयनाधिकारे सिद्धे प्रतिज्ञाकरणं प्राधान्यख्यापनार्थम्। यथा 'अग्न्याधेयं व्याख्यास्यामः' (आपश्रौ. ५।१।१) इत्यादौ। कथं पुनरुपनयनस्य प्राधान्यम्? यस्मादनुपनीतस्य श्रौतस्मार्तेषु सर्वेषु कर्मस्वनधिकारः, उपनयने तु गर्भाधानादिभिरसंस्कृतस्यानधिकारः$। यत्र ब्रह्मचारिधर्माः सामयाचारिकेषु तत्रैवोपनयनेऽप्युच्यमाने सर्वचरणार्थता स्यात्। इष्यते चास्मदीयानामेवायं कल्पः। तस्मादत्रोपदेशः। अनाकुला.

(२) उपनयनमिति कर्मनामधेयं कुमारस्याऽऽचार्यसमीपनयनमस्मिन्कर्मणीति, पङ्कजादिवत्। विर्विस्तारार्थः। आङ् बलवदर्थः। चक्षिङोऽत्र व्यक्तवागर्थस्य ख्याञादेशात् 'व्याख्यास्यामः' इति रूपम्। तथा चायमर्थः– उपनयनाख्यं कर्म वैकल्पिककल्पोक्त्या विस्तृतं बलवत्प्रमाणोपपन्नम् असाधारणैः शब्दैर्वक्ष्याम इति। इयं च प्रतिज्ञा श्रोतृजनमनोवधारणार्था। केचित्– दैवादेर्विघ्नात् पूर्वैर्निषेकादिभिरसंस्कृतस्याप्युपनयनं भवत्येव, न तूपनयनासंस्कृतस्योत्तराणि श्रौतस्मार्तानीत्येवमुपनयनप्राधान्यज्ञापनार्था प्रतिज्ञा। किंच, गृह्योपदिष्टकर्मसु गृहस्थस्यैवाधिकारः, न ब्रह्मचारिण इत्येवंरूपं विशेषं ज्ञापयितुमप्रतिज्ञं विवाहमुपदिश्योपनयनकल्पोपदेशः सप्रतिज्ञः क्रियते। अस्य च कल्पस्य धर्मशास्त्रे 'उपनयनं विद्यार्थस्य' (आध. १।१।९) इत्यत्रानुपदेशः सर्वचरणार्थतां निवर्तयितुमिति। ताद.

$ तात्पर्यदर्शने 'केचित्' इत्यादिमतान्तरस्यास्यैवार्थतोऽनुवादत्वे 'असंस्कृतस्याप्यधिकारः' इति भवितुं युक्तं तदेव प्राधान्यबोधौपयिकं च।

(१) आपगृ. १०।१.

## हिरण्यकेशिगृह्यसूत्रम्

उपनयनस्य श्रौतत्वं प्राधान्यं च, उपनयनमिति कर्मनामधेयम्

**[1]उपनयनं व्याख्यास्यामः ॥**

'यज्ञं व्याख्यास्यामः' इति प्रतिज्ञाय दर्शपूर्णमासादयः सहस्रसंवत्सरान्ता ये श्रौता यज्ञा वैतानिकास्ते व्याख्याताः। स्मार्ता इदानीमष्टकादय एकाग्नौ कर्तव्या वक्तव्याः। तेषामुपनयनं प्रधानम्, श्रौतत्वाद्वेदाध्ययनार्थत्वात्। तत आरभ्य शास्त्रेरधिकारात्स्वार्थे प्रागग्न्युत्पत्तेश्च तत्प्रथमं व्याख्यातुकाम इति प्रतिजानीते– उपनयनमिति। ननु कार्त्स्न्येन परिसमाप्तेषु श्रौतेष्वेतेषां वचनं न्याय्यम्। न च ते कार्त्स्न्येन परिसमाप्ताः, दार्शपौर्णमासिकस्य हौत्रस्य, काम्येष्टिपशुबन्धानाम्, कौकिल्याः, सवानाम्, काठकामीनां प्रवर्ग्यस्य विहारयोगानां चोत्तरत्र वक्ष्यमाणानामवशेषात्। नैष दोषः। उपनयनं तावच्छ्रौतम्, उपनयनस्य 'विद्यार्थस्य श्रुतितः संस्कारः' इति धर्मेषु वचनात्, वाजसनेयिके शाट्यायनिके च प्रत्यक्षं तदितिकर्तव्यताया उपदेशात्। 'उपवसंस्तिसृभिर्जुहुयात्' इत्यादीनि श्रुत्यन्तराणि सन्तीति च। तस्य श्रौतमध्ये विधानं श्रौतत्वख्यापनार्थम्, कार्यभ्रेषे श्रौतं प्रायश्चित्तं यथा स्यादिति। तत्संबन्धादितिकर्तव्यताङ्गत्वर्थाद्व्रतोपाकरणविसर्गस्नानविवाहादीनां तदनन्तरं विधानम्। अत एव लौकिकाग्न्याधारत्वमुपनयनस्य। इदं च स्मार्तानां प्रायः श्रौतमध्ये विधानस्य प्रयोजनं श्रौतवदादर एषां स्यादिति। येन कर्मणा यस्मिन् वा कर्मणि आचार्यसमीपं नीयते कुमारस्तदुपनयनम्। किं तत्? अग्न्यायतनोद्धननादि

(१) हिगृ. १९।१।१ ; संर. १६६.

सावित्रीव्रतविसर्गान्तम् । तद्विस्तरेण सकलं वक्ष्यामः । सोऽयं दृष्टार्थः संस्कार उपनयनं नाम । विद्यार्थिन आचार्यसमीपमुपगमनमुपनयनम् । 'विद्यार्थस्य श्रुतितः संस्कारः' इति वचनात्तत्त्रैवर्णिकानामेव स्यात्, न तु शूद्राणाम्, '(अशूद्राणामदुष्टकर्मणाम्) उपनयनं (१नयो) वेदाध्ययनम्' (हिव. २६।१।६) इति शूद्रादीनां प्रतिषेधात्, 'तस्माच्छूद्रसमीपे नाध्येतव्यम्' इत्यादिना तत्समीपेऽध्ययनप्रतिषेधाच्च । पुंसामेव क्रियते, न स्त्रियाः, 'स्त्रिया नाध्येयम्', 'न स्त्रीशूद्रसमीपे ब्रह्म श्रावयेत्' इति स्त्रीणामध्ययनप्रतिषेधात्, 'पाणिग्रहो विधिः स्त्रीणामौपनायनिकः परः।' इत्युपनयनभक्तिरत्राच विवाहस्य । मातृद्य.

## आग्निवेश्यगृह्यसूत्रम्

उपनयनमिति कर्मनामधेयम्

[1]**उपनयनं व्याख्यास्यामः ॥**

## वैखानसगृह्यसूत्रम्

उपनयनमिति द्विजत्वप्रयोजकद्वितीयजन्मरूपसंस्कारकर्मविशेषस्य नामधेयम्, द्वितीयजन्मनि पितरौ

[2]**ब्राह्मण्यां ब्राह्मणाज्जातमात्रस्य ब्राह्मणस्य प्रथमजन्म स्यात् । उपनयनसंस्कारे द्वितीयं भवति । द्वितीयजन्मन्याचार्यः पिता सावित्री माता । द्वाभ्यां जन्मभ्यां द्विजो भवति ॥**

## परिशिष्टम्

कुमारमुखदर्शनमुपनयनपदार्थः

§[3]**ज्योतिर्विदुक्तसमये कुमारमुखदर्शनम् । उपानयं तु तं प्राहुर्याज्ञिकास्तत्त्वदर्शिनः ॥**

## गौतमः

उपनयनशब्दो द्वितीयजन्मरूपकर्मनामधेयम्

[1]**तद्द्वितीयं जन्म ॥**

(१) तत् उपनयनं द्वितीयं जन्म । तेन संस्कृतो द्विजो भवतीत्यर्थः । 'द्विजातीनामध्ययनम्' इत्येवमादौ व्यवहारार्थं द्विजसंज्ञाकरणम् । तद्ग्रहणं नित्यकाम्योपनयनसंग्रहणार्थम् । मभा.

(२) प्रथमभाविनो गर्भाधानादीन् संस्कारानुल्लङ्घ्योपनयनं व्याचक्षाणस्तस्य प्राधान्यं दर्शयति । तेन देवानुपपत्त्या गर्भाधानादेरकरणेऽप्युपनयनं भवति । तस्याकरणे तु विवाहादिष्वनधिकार इति सिद्धम् । गौमि.

## बौधायनः

उपनयनं द्वितीयजन्मरूपकर्मनामधेयम्, उपनायनप्रशंसा

[2]**द्वयमु ह वै सुश्रवसोऽनूचानस्य रेतो ब्राह्मणस्योर्ध्वं नाभेरधस्तादन्यत् । स यदूर्ध्वं नाभेस्तेन हैतत् प्रजायते यद्ब्राह्मणानुपनयति यदध्यापयति यद्याजयति यत्साधु करोति । सर्वाऽस्यैषा प्रजा भवति । अथ यदवाचीनं नाभेस्तेन हास्यौरसी प्रजा भवति तस्माच्छ्रोत्रियमनूचानमप्रजोऽसीति न वदन्ति ॥**

कथमयमपि पितेति चेत्तदाह— द्वयमिति । उह वै इति पदद्वयं त्रयं वा शब्दशोभार्थम् । सुश्रवस इति शृणोतेरौणादिकोऽसुन्प्रत्ययः । श्रमेण श्रुतवत इत्यर्थः । अनूचानो वेदतदर्थाङ्गाध्यायी । ईदृशस्य ब्राह्मणस्य द्वयं रेतः प्रजननहेतुर्विद्यते । तत्र ऊर्ध्वं नाभेरेकम् । स च प्राणवायुर्नाभेरुत्थितो वक्त्रे विचरन् विविधानां शब्दानामभिव्यञ्जकः । अवाचीनो न्यक् । स च नाभेरवाचीनाग्रे उत्पन्नः शुक्रविसर्गे हेतुर्वायुः । तत्र ऊर्ध्वाग्रेण

---

§ एतत्प्रकरणीयैतदाद्यनेकवचनविषयकं संप्रव्याख्यानं भरद्वाजवचने द्रष्टव्यम् ।

(१) आग्निगृ. १।१।१.

(२) वैगृ. ६।७.

(३) प्रपा. २११–२१२ ; संप्र. ३३६ ; ज्योनि. १२१ (=) उपानयं तु तं (तत्तूपनयनं).

(१) गोध. १।१० ; विश्व. १।३९ स्मृत्यन्तरम् ; मभा. ; गौमि. १।९ ; संप्र. ३३५ ; संग. ६३५.

(२) बौध. १।२।१५–१६.

रेतसा चतस्रः प्रजा उत्पादयति– उपनयनाध्यापनयाजनसाधुकृत्याभिः। अस्यैव हीत्थं प्रजा उत्पादयितुं शक्तिरस्ति। एतद्धि प्रजानां श्रेष्ठतरं जन्म, शरीरान्तरेऽप्यनुग्राहकत्वात्। तथा चाऽऽपस्तम्बः– 'तच्छ्रेष्ठं जन्म। शरीरमेव मातापितरौ जनयतः' इति। पशुवदेवेत्यभिप्रायः। उक्तं च– 'कामं मातापितरौ चैनमुत्पादयतो मिथः' इति। अथ यदवाचीनं नामेस्तेन ह्यस्यौरसी प्रजा भवति। यस्मादेवंविधस्य पुरुषस्य चतस्रः प्रजाः संततिः केवलं श्रोत्रियस्याध्यापननिमित्ताऽस्ति तस्मादौरस्यमावेऽप्यमुम् 'अप्रजोऽसि' इति विद्वांसो न वदन्ति। तस्माद्वेदप्रदानपितरि मृते त्र्यहमनध्यायो युक्तः। बौवि.

**तस्माद्द्विनामा द्विमुखो विप्रो द्विरेता द्विजन्मा चेति ॥**

यस्मादेवं तस्मात् द्वे नामनी यस्य स द्विनामा 'तस्माद्द्विनामा ब्राह्मणोऽर्धुकः' इति श्रुतिः। अर्धुकः समृद्धः। द्वे चास्य मुखे पाणिरास्यमिति द्विमुखः। द्वे रेतसी शुक्रमेकम्, द्वितीयं ब्रह्म। ¶ जन्मनी अपि द्वे, माता ब्राह्मणश्च। बौवि.

## आपस्तम्बः हिरण्यकेशिधर्मसूत्रं च

उपनयनमिति विद्यार्थस्य द्वितीयजन्मरूपस्य कर्मणो नामधेयम्, सर्ववेदार्थमेकं प्रतिवेदं भिन्नं वा मतभेदेन, उपनयनप्रशंसा

**[1]उपनयनं विद्यार्थस्य श्रुतितः संस्कारः ॥**

'उपायनं वेदाध्ययनम्' (आध. १।१।६) इत्यादि यदुक्तम् अस्मिन् क्रमे उपनयने विशेषमाह– उपनयनमिति। विद्या अर्थः प्रयोजनं यस्य स विद्यार्थः। तस्यायं श्रुतिविहितः संस्कार उपनयनं नाम। विद्यार्थस्येति वचनात् मूकादेर्न भवति। तथा च शङ्खलिखितौ– 'नोन्मत्तमूकान् संस्कुर्यात्' इति। लिङ्गस्य विवक्षितत्वात् स्त्रिया अपि न भवति, यद्यपि तस्याः 'अग्ने गृहपते' इत्यादिकया विद्यया अर्थः। श्रुतित इति वचनं तदतिक्रमे श्रौतातिक्रमप्रायश्चित्तप्राप्त्यर्थम्। $ उ.

**[2]सर्वेभ्यो वै वेदेभ्यः सावित्र्यनूच्यत इति हि ब्राह्मणम् ॥**

अनेकवेदाध्यायिनां वेदव्रतवदुपनयनमपि प्रतिवेदं भेदेन कर्तव्यमिति प्राप्ते उच्यते– सर्वेभ्य इति। 'त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत्। तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः॥' (मस्मृ. २।७७) इति मनुः। ¶ ततश्चोपनयने यत्सावित्र्या अनुवचनं तन्मुखेन सर्वे वेदा अनूक्ता भवन्तीत्यगृह्यमाणविशेषत्वादेकमेवोपनयनं सर्वार्थमिति। अस्मिन्नर्थे ब्राह्मणमपि भवति ब्राह्मणमेव वा पठितम्। आथर्वणस्य वेदस्य पृथगुपनयनं कर्तव्यम्। तथा च तत्रैव श्रुतम्– 'नान्यत्र संस्कृतो भृग्वङ्गिरसोऽधीयीत' इति। † उ.

**[3]स हि विद्यातस्तं जनयति ॥**

(१) कस्मादित्यत आह– स इति। स हि आचार्यः तं माणवकं विद्यातो जनयति, यथा पिता मातृतः। 'अत्रास्य माता सावित्री पिता त्वाचार्य उच्यते।' इति शास्त्रान्तरम्। उ.

---

¶ मातृब्राह्मणशब्दसामानाधिकरण्यादपादानवचनो जन्मशब्द इति मन्यते।

(१) आध. १।१।९ ; हिध. २६।१।९ ; संप्र. ३३५, ३३७ ; मुक्ता. १०० ; आन. १६० ; संग. ६३६ ; संर. १६४ (=).

$ मुक्ता., आन. उज्ज्वलागतम्।

¶ अत्र मतभेदो भरद्वाजवचने संप्रव्याख्याने द्रष्टव्यः।

† संको., संर. उज्ज्वलानुवादः। मुक्ता., आन. उज्ज्वलागतम्।

(१) आध. १।१।१० ; हिध. २६।१।१० ; प्रपा. २३९ (वै०) ; संप्र. ३३८, ५४४ ; मुक्ता. १०० वै (हि) ; सिन्धु. ९७० (इति हि ब्राह्मणम्०) ; विपा. ४८७ (वै०) ; संको. १५६ : १५७ सिन्धुवत् ; आन. १६० ; बाल. १।१४ पृ. ५८ सिन्धुवत् ; संग. ६३६ ; संर. १८०, २८३.

(२) आध. १।१।१६ ; हिध. २६।१।१५ ; स्मृच. २७ ; मुक्ता. ८८ ; आन. १५९.

(२) एवं ब्राह्मणादीनां त्रयाणामेव द्विजत्वम्, न शूद्रस्य, तस्य द्वितीयजननाभावात्। स्मृच. २७

[1]तच्छ्रेष्ठं जन्म ॥

तत् विद्यातो जन्म श्रेष्ठं प्रशस्ततमम्, अभ्युदयनिःश्रेयसहेतुत्वात्। उ.

[2]शरीरमेव मातापितरौ जनयतः ॥

मातापितृभ्यामाचार्यः श्रेष्ठ इत्याह– शरीरमिति। मातापितरौ शरीरमात्रमेव काष्ठकुड्यादिसमं जनयतः। आचार्यस्तु सर्वपुरुषार्थक्षमरूपं जनयति। 'आचार्यः श्रेष्ठो गुरूणाम्' इति गौतमः। उ.

## वसिष्ठः

उपनयनं द्वितीयं जन्म, तत्र पितरौ, उपनायनप्रशंसा, प्रतिवेदमुपनयनं भिन्नम्

[3]त्रयो वर्णा द्विजातयो ब्राह्मणक्षत्रियवैश्याः ॥

[4]तेषां मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने ॥

[5]तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते ॥

वेदप्रदानात्पितेत्याचार्यमाचक्षते ॥

अथाप्युदाहरन्ति ॥

द्वयमु ह वै पुरुषस्य रेतो ब्राह्मणस्योर्ध्वं नामेरवाचीनमन्यत्। तद्यदूर्ध्वं नामेस्तेनास्यानौरसी प्रजा जायते ॥

यदुब्राह्मणानुपनयति यदध्यापयति यद्याजयति यत्साधु करोति ॥

अथ यदवाचीनं नामेस्तेनेहास्यौरसी प्रजा जायते ॥

तस्माच्छ्रोत्रियमनूचानमप्रजोऽसीति न वदन्तीति ॥

[1]यच्छाखीयैस्तु संस्कारैः संस्कृतो ब्राह्मणो भवेत्।
तच्छाखाध्ययनं कुर्यान्न तेन पतितो भवेत् ॥

अत्र शाखाध्ययनं धर्मशास्त्रादीनामुपलक्षणार्थम्। † प्रपा. १५७

## विष्णुः

उपनयनं द्वितीयं जन्म तेन द्विजत्वं च, तत्र पितरौ, उपनयनप्रशंसा

[2]मातुरग्रे विजननं द्वितीयं मौञ्जिबन्धनम् ॥

तत्रास्य माता सावित्री भवति पिता त्वाचार्यः ॥

एतेनैव तेषां द्विजत्वम् ॥

एतेन द्वितीयेनोपनयनाख्येन जन्मना तेषां त्रैवर्णिकानां द्विजत्वम्। एवकारो निषेकादिश्मशानान्तसंस्कारवतोऽप्यनुपनीतस्य द्विजत्वनिरासार्थः। वै.

[3]उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता।
ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम् ॥

[4]आचार्यस्त्वस्य यां जातिं विधिवद्वेदपारगः।
उत्पादयति सावित्र्या सा सत्या साऽजराऽमरा ॥

---

(१) आध. १।१।१७; हिध. २६।१।१६; विश्व. १।३४; स्मृच. २७; मुक्ता. ८८; बौवि. १।२१।१५.

(२) आध. १।१।१८; हिध. २६।१।१७; विश्व. १।३४; स्मृच. २७; मुक्ता. ८८; आन. १५९; बौवि. १।२१।१५. (३) वस्मृ. २।२.

(४) वस्मृ. २।३; स्मृच. २७ (मातुर्यदग्रे जननं द्वितीयं मौञ्जिबन्धनम्); मुक्ता. ८८ (तेषां०).

(५) वस्मृ. २।४-१०.

† विपा. प्रपावत्।

(१) स्मृच. ५०; प्रपा. २५७; निप्र. ७१ चतुर्थपादो नास्ति, स्मृतिः; संप्र. ३३८ कुर्यान्न तेन (कार्यमेवं न): ५०५ पू.; मुक्ता. ११६ कुर्यान्न तेन प (कुर्यात् त्यक्त्वा तत्प); विपा. ५१९ यच्छाखी (तच्छाखी); संग. ९, ६३६ कुर्यान्न तेन (कार्यमन्यथा); संवी. ३०७ (भागः २) संगवत्.

(२) विस्मृ. २८।३७-३९.

(३) विस्मृ. ३०।४४; ब्रक. २०९.

(४) विस्मृ. ३०।४६; ब्रक. २१०.

**शङ्खः**

उपनयनं द्वितीयं जन्म तेन द्विजत्वं च, तत्र पितरौ

'**ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः।**
**तेषां जन्म द्वितीयं तु विज्ञेयं मौञ्जिबन्धनम्॥**
**आचार्यस्तु पिता प्रोक्तः सावित्री जननी तथा।**
**ब्राह्मणक्षत्रियविशां मौञ्जीबन्धनजन्मनि॥**
**वृत्त्या शूद्रसमास्तावद्विज्ञेयास्ते विचक्षणैः।**
**यावद्वेदे न जायन्ते द्विजा ज्ञेयास्ततः परम्॥**

**मनुः**

उपनयनं द्वितीयं जन्म, उपनयनप्रशंसा,
द्वितीयजन्मनि पितरौ

'**एष प्रोक्तो द्विजातीनामौपनायनिको विधिः।**
**उत्पत्तिव्यञ्जकः पुण्यः ............॥**

(१) एतावदुपनयनप्रकरणम्। अत्र यदुक्तं तत्सर्वमुपनयनार्थम्। ननु केशान्तोऽप्येवं प्राप्नोति। न, अतिवृत्ते उपनयने स्वकाले तस्य विधानात्। प्रकरणेऽपि पठितस्य वाक्यादन्यार्थता भवति। तथा च केशान्तः समावृत्तस्यापि कैश्चिदिष्यते। उपनयने भव औपनायनिकः। उत्तरपदस्य दीर्घत्वं पूर्ववत्। उत्पत्तिः मातापित्रोः सकाशाज्जन्म, तां व्यनक्ति प्रकाशयति सगुणतां-(? गुणां) करोतीत्युत्पत्तिव्यञ्जकः। जातोऽप्यजातसमोऽनुपनीतः, अधिकाराभावात्। अतोऽयं विधिरुत्पत्तिव्यञ्जकः। पुण्य इत्युक्तार्थः। मेधा.

(२) औपनायनिकः उपनयनकारी। ब्रक. ९६

(३) उपनयनसंबन्धः उत्पत्तेर्द्वितीयस्या द्विजत्वरूपाया व्यञ्जकः जनकः। मवि.

(४) औपनायनिक इत्यनुशतिकादित्वादुभयपदवृद्धिः। अयं द्विजातीनामुपनयनसंबन्धी कर्मकलाप उक्तः उत्पत्तेः द्वितीयजन्मनः व्यञ्जकः। ममु.

(५) औपनायनिकः उपनयनसंबन्धी उपनयनपर्यन्तो वा। $ मच.

(६) उपनयनस्य संस्कारान्तरेभ्यः प्रधानसंस्कारत्वं प्रतिपादितम्— पुण्य इति। ¶ नन्द.

'**उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता।**
**ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम्॥**

(१) मुख्याचार्यसंनिधौ पितरि च संस्कर्तरि संनिहिते कः क्रमः? अत आह— उत्पादकेति। उत्पादकः जनकः, ब्रह्मदाता अध्यापकः, तौ द्वावपि पितरौ। तयोः पित्रोर्गरीयान् पिता यो ब्रह्मदः। अतः पित्राचार्यसमवाये आचार्यः प्रथममभिवाद्यः। अत्र हेतुरूपमर्थवादमाह— ब्रह्मजन्म हि। ब्रह्मग्रहणार्थं जन्म ब्रह्मजन्म। शाकपार्थिवादित्वात्समासः। अस्मिन् समासे उपनयनं ब्रह्मजन्म। अथवा ब्रह्मग्रहणमेव जन्म। तत् विप्रस्य शाश्वतं नित्यं प्रेत्योपकारकमिह चोपकारकम्। † मेधा.

(२) संस्कारादिकरणरहितोत्पादकाचार्ययोः पित्रोः आचार्याख्यः पिता प्रशस्यतरः। यस्मात् ब्रह्मग्रहणार्थं यज्जन्मोपनयनाख्यं विप्रस्य तदिहलोके (परत्र) च शाश्वतं नित्यम्, पारंपर्येण मुक्तिनिमित्तत्वात्। अतश्च जनक‡मातृपिता(?त्रा)चार्यसंनिधावाचार्य एव आदौ पूज-

---

(१) शंस्मृ. १।६–८.

(२) मस्मृ. २।१६८; मेधा. २।१४९ (विधिः।... पुण्यः०); ब्रक. ९६ पू.; सस्मृ. ५१ पू.

$ शेषं ममुगतम्।

¶ शेषं मेधागतम्।

† माच. मेधागतम्। मपा. मेधागतं मविगतं च।

‡ जनकपदार्थस्याऽऽचार्येणापि संबन्धो विवक्षित इति मन्तव्यम्। तेन त्रयाणां द्वन्द्वकरणान्मातृशब्दे नाऽऽनकादेशः।

(१) मस्मृ. २।१४६; मेधा. २।२०५ द्वितीयपादमात्रम्; अप. १।३५ पृ. ६७; ब्रक. २०९; मवि. दात्रो (पित्रो) आदर्शवदपि पाठः; स्मृच. ३५; पमा. ३०१; मपा. ३१ जन्म हि (जन्मनि); संप्र. ४७९; चम. २७ पू.; मुक्ता. १०५; सिन्धु. १०२० पू.; बाल. १।३५ पृ. १६४ पू.; नन्द. दात्रो (पित्रो).

नीयः । विप्रग्रहणं द्विजप्रदर्शनार्थम् । त्रयाणां प्रकृतत्वाच्च । ‡ गोरा.

( ३ ) केवलोत्पत्तिमात्रकारिणः पितुः ब्रह्मपिता साविच्यामुत्पादयिता गरीयान्, प्रेत्य मोक्षसाधनपर्यन्तं योग्यतापादकत्वात् इह च सर्वकर्माधिकारापादकत्वात् । शाश्वतं चिरकालस्थायिफलम् । क्वचित् ब्रह्मदात्रोरिति पाठः । मवि.

( ४ ) आचार्याणाम् उपनयनपूर्वकं साङ्गवेदाध्यापयितॄणां गर्भाधानादिदृष्टोपकारकतया पित्रोर्गरीयस्त्वेऽपि दृष्टादृष्टार्थतया आचार्य एव ताभ्यो गरीयानित्याह— उत्पादकेति । गरीयान् ब्रह्मदः पितेत्यत्र हेतुः ब्रह्मजन्मेति । उपनीतस्यैव वेदस्वीकृतिद्वारेह कर्माधिकारिता तद्द्वारा च स्वर्गाद्यवाप्तिः । शश्वत् ब्रह्मावाप्तिहेतुत्वाच्छाश्वतमिति भावः । मच.

( ५ ) ब्रह्मजन्म उपनयनजन्योऽतिशयः । विप्रस्य द्विजस्य । शाश्वतं जन्मान्तरेष्वप्यनुवृत्तम् । § नन्द.

[1]**आचार्यस्त्वस्य यां जातिं विधिवद्वेदपारगः ।**
**उत्पादयति साविच्या सा सत्या साऽजराऽमरा ॥**

( १ ) आचार्यात्तु यत्तस्य जन्म तदविनाशि । गृहीते वेदेऽवगते च तदर्थे कर्मानुष्ठानात् स्वर्गापवर्गप्राप्तिरित्यस्य सर्वस्याऽऽचार्यमूलत्वात् स श्रेष्ठः । यां जातिमुत्पादयति यं संस्कारमुपनयनाख्यं द्वितीयं जन्मेति जन्मसंस्तुतिः, निर्वर्तयति सावित्र्या तदनुवचनेन, सा जातिः सत्या साऽजराऽमरा । यद्यप्येतेऽभिन्नार्थाः शब्दास्तथाऽपीहोपनयनाख्यस्य जन्मनो मातृजन्मनः सकाशाद्गुणातिशयविवक्षायां प्रयुक्ताः । नहि जरामृत्यू प्राणिनामिव जातेः संभवतः । अविनाशित्व त्वेकेनैव शब्देन शक्यते प्रतिपादयितुम् । न च तत् प्रतिपाद्यते । वेदपारग आचार्यो यां जातिं विधिवत्साविच्या उपनयनाङ्गकलापेन, सावित्रीशब्दस्य तल्लक्षणत्वात्, उत्पादयति सा श्रेयसीति पदयोजना । $ मेधा.

( २ ) आचार्यः पुनः समस्तवेदाध्यापयिता यथाशास्त्रमुपनयनाङ्गभूतया साविच्या यां जातिं यज्जन्मास्य करोति सा सत्या स्यात्, सत्यात्मकश्रौतादिकर्मनिमित्तत्वात् । सा अजरा अवार्धका, पुनस्तद्भवेऽपि तस्या अनपचयात् । अमरा, आत्म( क ? )ज्ञानाधिकारोत्पादनद्वारेणामर( ण )हेतुत्वात् । गोरा.

( ३ ) यज्जतीयजन्मगौरवेण धर्मेण तत्तद्विषये कर्तव्येन हेतुभूतेन विधिवत् उपनयनविधिना । साविच्या मातृभूतया । सा सत्या सत्यलोकप्राप्तिहेतुः । अजरा, अजरत्वं देवत्वम्, तत्प्राप्तिहेतुत्वात् । अमरा अमृतत्वस्य मोक्ष( त्व ? )स्य हेतुः । मवि.

( ४ ) आचार्यः पुनर्वेदज्ञोऽस्य माणवकस्य यां जातिं यज्जन्म विधिवत्साविच्येति साङ्गोपनयनपूर्वकसाविच्यनुवचनेन उत्पादयति सा जातिः सत्या अजराऽमरा च, ब्रह्मप्राप्तिफलकत्वात्, उपनयनपूर्वक( स्य ? )वेदाध्ययनतदर्थज्ञानानुष्ठानैर्निष्कामस्य मोक्षलाभात् । ‡ ममु.

[1]**मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने ।**
**तृतीयं यज्ञदीक्षायां द्विजस्य श्रुतिचोदनात् ॥**

( १ ) द्विजातीनां तत्र तत्राधिकारः श्रुतः, तत्राऽऽचार्यादिशब्दवत्सुहृत्त्वात्तदर्थनिरूपणार्थमाह— मातुरिति । मातुः सकाशात् अग्रे आदौ अधिजननं जन्म पुरुषस्य । द्वितीयं मौञ्जिबन्धने उपनयने । तृतीयं ज्योतिष्टोमादियज्ञदीक्षायाम् । दीक्षाऽपि जन्मत्वेन श्रूयते— ‘ पुनर्वा एतमृत्विजो गर्भं कुर्वन्ति यं दीक्षयन्ति ’

---

‡ ममु. गोरागतम् ।

§ शेषं मेधागतम् ।

(१) मस्मृ. २।१४८; ब्रक. २१० त्वस्य (स्तस्य) ; मभा. २।५८ ; संप्र. ४८० ब्रकवत् ; मुक्ता. १०५ ; भाच. ब्रकवत् .

$ नन्द., भाच. मेधागतम् ।

‡ मच. ममुगतम् ।

(१) मस्मृ. २।१६९ ; अप. १।२१८ पृ. ४३३ पू. ; ब्रक. १०० बन्धने ( बन्धनात् ) ; मुक्ता. ८८ श्रुतिचोदनात् ( विधिचोदितम् ) ; सस्मृ. २९ मुक्तावत् .

( ऐब्रा. १।३ ) इति । त्रीणि जन्मानि द्विजस्य श्रुतिनोदितानि । नन्वेवं सति त्रिजः प्राप्नोति । अस्तु । द्विजव्यपदेशे तावदुपनयनं निमित्तं तद्व्यपदेशनिबन्धश्च श्रौतस्मार्तसामयिकाचारिककर्माधिकारः । प्रथमतृतीयजन्माभिधानं द्वितीयजन्मस्तुत्यर्थम् । सर्वजन्मश्रेष्ठं तत् । अदीक्षितो हि यज्ञ एव नाधिक्रियते, अनुपनीतस्तु न कचिदेव । अन्ये त्वाद्यत्वसामान्यादाधानं यज्ञदीक्षां मन्यन्ते । तस्यापि जन्मसंभवोऽस्ति ' अजात एवासौ योऽग्नीनाऽऽधत्ते ' इति । † मेधा.

( २ ) मातुः अधि मातर्याधारभूतायाम् । मौञ्जीबन्धने सावित्र्याः । यज्ञदीक्षायां दीक्षातः द्विजस्य द्विजतां प्राप्तस्य तत् तृतीयं जन्म । मवि.

( ३ ) अधीतवेदस्य जन्मद्वयमनुवदन् ज्योतिष्टोमादियज्ञस्याऽऽवश्यकत्वं तृतीयजन्मत्वेनाऽऽह— मातुरिति । मातुः अधिजननं जन्म । मौञ्जीबन्धने द्वितीयं तन्निमित्तम् , ' यावज्जीवमग्निहोत्रं जुहुयात् ' इति श्रुतेः ( यज्ञदीक्षायां तृतीयम् ,) 'वसन्ते वसन्ते ज्योतिषा यजेत' इति, ' प्रतिसंवत्सरं सोमः ' इति स्मृतेश्च तेषामावश्यकत्वेन दीक्षाया अप्यावश्यकत्वात् , ' पुनर्वा एतमृत्विजो गर्भे कुर्वन्ति यं दीक्षयन्तीति ' इत्यादिश्रुतेर्दीक्षाया जन्मान्तरहेतुत्वश्रवणात् । अत एवाऽऽह— श्रुतिचोदनात् । मच.

( ४ ) इदानीमुपनीतस्यैव वेदाध्ययनेऽधिकारः , नान्यस्येति विवक्षन्नुपनयनस्य जननकल्पतां तावदाह —मातुरिति । मौञ्जीबन्धने उपनयने । ह्रस्वोऽत्र वृत्तभङ्गपरिहारार्थः । प्रथमतृतीययोर्जन्मनोरुपन्यासो दृष्टान्तार्थः । नन्द.

**[1]तत्र यद् ब्रह्मजन्मास्य मौञ्जीबन्धनचिह्नितम् ।**
**तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते ॥**

( १ ) तत्र एतेषु त्रिजन्मसु यदेतत् ब्रह्मजन्म उपनयनं मौञ्जीबन्धनचिह्नितं मेखलाबन्धनेनोपलक्षितं तत्रास्य माता सावित्री । तया ह्यनूक्तया तन्निष्पन्नं भवति । अनेन च सावित्र्यनुवचनमुपनयने प्रधानं दर्शयति, तदर्थं ह्यसौ समीपमानीयते । पिता आचार्यः । मातापितृनिर्वर्त्यं जन्म । अतो रूपकभङ्ग्या तत्राप्याचार्यसावित्र्यौ मातापितरावुक्तौ । ¶ मेधा.

( २ ) यत् ब्रह्मणः वेदात् सावित्रीरूपात् जन्म मौञ्जीबन्धनेन उपनयनकर्मणा चिह्नितमुन्नेयम् । मवि.

( ३ ) तेषु त्रिषु जन्मसु मध्ये यदेतद्ब्रह्मग्रहणार्थं जन्म उपनयनसंस्काररूपं मेखलाबन्धनोपलक्षितं तत्रास्य माणवकस्य सावित्री माता आचार्यश्च पिता, मातृपितृसंपाद्यत्वाज्जन्मनः । ममु.

**[1]वेदप्रदानादाचार्यं पितरं परिचक्षते ॥**

( १ ) मौञ्जीबन्धनचिह्नितमित्युक्तम् । तत्र रज्ज्वासञ्जनादाचार्यः पितृवन्मान्यः स्यात्तदर्थमुच्यते—वेदप्रदानादिति । कृत्स्नवेदाध्यापनात् नोपनयनाङ्गभूतसावित्र्यनुवचनमात्रादेव । प्रदानं माणवकस्य वेदाक्षरोच्चारणे स्वीकारोत्पादनम् । मेधा.

( २ ) ' पिता पाता '(नि. ४।२१)इति निरुक्तम् , तत्कथमाचार्यस्तथेत्यत आह— वेदप्रदानादिति । प्रत्यवायनिवर्तनं हि रक्षणम् , तच्चाऽऽचार्येणापि वेदानधिगमजन्यप्रत्यवायरक्षणात् कृतमिति भवत्यसौ पितेत्यर्थः । मवि.

---

† ममु. , भाच. मेधागतम् ।

¶ नन्द. मेधागतम् । भाच. मेधागतं मविगतं च ।

(१) मस्मृ. २।१७० ; अप. १।२१८ पृ. ४३३ उत्त. ; उ. १।१।१६ तत्रा ( अत्रा ) उत्त. , शाखान्तरम् ; स्मृच. २७ ; प्रपा. २१२ न्मास्य मौ ( न्म स्यान्मौ ) तत्रास्य ( सा तस्य ) त्वाचा (चाऽऽचा) ; संप्र. ३३५ ; मुक्ता. ८८ जन्मास्य ( जननं ) ; संको. ११७ बन्धनचि (बन्धेन चि ) तत्रास्य ( सा तस्य ) चतुर्थपादो नास्ति ; सस्मृ. २९ न्मास्य ( न्मामं ) ; संर. १६४ जन्मास्य (चर्यं तु) शेषं संकोवत् .

(१) मस्मृ. २।१७१ ; स्मृच. २७ ; मुक्ता. ८८ ; सस्मृ. २९.

(३) वेदाध्यापनादाचार्यं पितरं मन्वादयो वदन्ति। पितृवन्महोपकारफलात्( ? कारकत्वात्) गौणं पितृत्वम्। † ममु.

(४) अथ आचार्यस्य पितृत्वे हेतुमाह—वेदेति। वेदप्रदानात् सावित्रीप्रदानात्। सर्वे हि वेदाः सावित्री। उपनयनाख्यजन्मप्रदानादिति यावत्। नन्द.

## याज्ञवल्क्यः

उपनयनं द्वितीयं जन्म, तेन द्विजत्वम्

**(१)मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात्।**
**ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजाः स्मृताः॥**

(१) 'तद्द्वितीयं जन्म' इति स्मृत्यन्तरम्। न चानुपनीतानां तदस्ति। अत एव शूद्रोऽप्यद्विजातिः। अद्विजातित्वादेव द्विजातिकर्मभ्यः पतनम्। वर्णधर्मास्तु प्रवर्तन्त इत्युक्तम्। अतः सूक्तम्— 'पतन्त्येते सर्वधर्मबहिष्कृताः' इति। विश्व.

(२) आद्यास्त्रयो द्विजा इत्युक्तं तत्र हेतुमाह—मातुरिति। मातुः सकाशात् प्रथमं जायन्ते, मौञ्जिबन्धनाच्च द्वितीयं जन्म यस्मात्तस्मादेते ब्राह्मणक्षत्रियवैश्या द्विजा उच्यन्ते। मिता.

(३) अत्र द्वितीयमिति क्रियाविशेषणम्। अप.

(४) मौञ्जीति ह्रस्वश्छान्दसः। दीक.

(५) अत्र मौञ्जीबन्धनजनितसंस्कारे जनिरौपचारिकः। ¶ वीमि.

## व्यासः

उपनयनं द्वितीयं जन्म

**(२)द्वे जन्मनी द्विजातीनां मातुः स्यात्प्रथमं तयोः।**
**द्वितीयं छन्दसां मातुर्ग्रहणाद्विधिवद्गुरोः॥**

† माच. ममुगतम्।

¶ शेषं मिता—अप—दीकगतम्।

(१) यास्मृ. १।३९; विश्व. द्विजाः स्मृताः (द्विजातयः); मिता.; अप.; स्मृच. २७; स्मृसा. १; प्रपा. २१२ विश्ववत्; वीमि.; मुक्ता. ८८; संर. १६४, ९०४ प्रथमपादे (मातुरग्रे विजननं); संदी. ३ (भागः २). (२) व्यास्मृ. १।२२.

## देवलः

उपनयनं द्वितीयं जन्म, तत्र पितरौ, तेन द्विजातित्वम्

**(१)तत्रोपाध्यायः पिता, माता गायत्री। एवमुपनीतो द्विपितृको द्विजातिः स्यात्॥**

द्विपितृको द्विमातापितृकः, एकशेषात्। ब्रक. १००

## भरद्वाजः

उपनयनमिति विद्यार्थकर्मणो नामधेयम्

**(२)उपानयाख्यं यत्कर्म विद्यार्थं तदुदीरितम्॥**

(१) ननु कः पुनरुपनयनशब्दार्थः ? उच्यते— उपनयनमिति रूढ्या कर्मनामधेयमिति भरद्वाजः। तदुक्तम्— उपनयनेति। तथा संग्रहकारोऽपि— 'दीर्घं छन्दोनुरोधेन स्वार्थिकस्तद्धितोऽपि वा। त्रैवर्णिकानां मुख्योऽयमौपनायनिको विधिः॥' इति। सावित्र्याः प्रापणमुपनयनमिति। तदाह कात्यायनः— 'गायत्र्या ब्राह्मणमुपनयीत' इति। 'येन खलु संस्कारेण बटुराचार्यसमीपं नीयते तदुपनयनम्। करणसाधनमिदम्। अथ गुर्वादिसमीपनीतिरुपनयनमिति भावसाधनं वा' इति भारुचिः। हरदत्तस्तु— 'पितृकुलाद्विधिवदाचार्यकुलप्रापणं शिशोरुपनयनम्' इति प्रणीतवान्। गुरुणा सुमुहूर्ते कुमारमुखनिरीक्षणमुपनयम् इति परिशिष्टकाराः। तदुक्तम्— 'ज्योतिर्विदुक्तसमये कुमारमुखदर्शनम्। उपानयं तु तं प्राहुर्याज्ञिकास्तत्त्वदर्शिनः॥' इति। प्रपा. २११–२१२

(२) तत्रोपनयनशब्दः कर्मनामधेयम्। तथा च— भरद्वाजः— 'उपानयाख्यं ...' इति। तच्च यौगिकम्, उद्भिन्न्यायात्। 'योगश्च भावव्युत्पत्त्या करणव्युत्पत्त्या वा' इत्याह भारुचिः। स यथा— उप समीपे आचार्यादीनां

(१) ब्रक. १००; स्मृसा. ४ माता गायत्री (गायत्री माता).

(२) प्रपा. २११ उपानया (उपनयना); संप्र. ३३४; संग. ६३५ नया (यना).

बटोः नीतिः नयनं प्रापणम् उपनयनम्, समीपे आचार्यादीनां नीयते बटुर्येन तदुपनयनमिति वा। तदुक्तमभियुक्तैः— 'गुरोर्व्रतानां वेदस्य यमस्य नियमस्य च। देवतानां समीपं वा येनासौ नीयते द्विजः॥' इति। तत्र च भावव्युत्पत्तिरेव साधीयसीति गम्यते, श्रौतार्थविधिसंभवात्। न करणव्युत्पत्तिः, अन्यपदार्थलक्षणापातात्, तस्य च विवक्षाधीनतयाऽनेकत्वसंभवादनियतशास्त्रार्थतापत्तेश्च। तथाहि— उपनीयतेऽनेनेति व्युत्पत्तौ कदाचिज्ज्वलनम्, कदाचित्पुरुषः, कदाचिदाचार्यश्चान्यपदार्थत्वेनोपनयनं स्यात्। ततश्चोपनयनानियम इत्यनेकशास्त्रार्थविप्लवापत्तिः, संस्कारस्यान्यपदार्थत्वेन तस्य तत्करणत्वायोगात्। तस्मादुक्तैव व्युत्पत्तिर्ज्यायसी। तत्रोपनयनं नाम आचार्येण बटोर्गायत्र्या संस्करणम्, 'गायत्र्या ब्राह्मणमुपनयीत' इति कात्यायनवाक्ये ब्राह्मणगायत्र्योर्द्वितीयातृतीयाभ्यां संस्कार्यसंस्कारकत्वाभिधानेनोपनयनशब्दस्य संस्कारमात्रपरत्वावश्यंभावात्। तथा चाऽऽपस्तम्बः— 'उपनयनं विद्यार्थस्य श्रुतितः संस्कारः' इति। तदेव च ब्रह्मजन्मत्वेन परामृष्टं मनुना— 'तत्र यद् ब्रह्मजन्मास्य मौञ्जीबन्धनचिह्नितम्। तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते॥' (मस्मृ. २।१७०) इति। ब्रह्मणा वेदेन गायत्रीरूपेण जन्मेव जन्म, संस्कारविशेषाधानेन पुनर्नवीकरणम्। तथा च श्रुतिः— 'गायत्र्या ब्राह्मणमसृजत्, त्रिष्टुभा राजन्यम्, जगत्या वैश्यम्। न केनचिच्छन्दसा शूद्रम्' इति। एतत्त्रितयाभिप्रायेणैव ब्रह्मशब्दप्रयोगः, न संपूर्णवेदाभिप्रायेणेति स्पष्टयितुं विशेषणमाह— 'मौञ्जीबन्धनचिह्नितम्' इति। गायत्र्युपदेशानन्तरं हि मौञ्जीबन्धनं क्रियते, न संपूर्णवेदाध्ययनानन्तरम्। अत एव व्यतिरेकमुखेनाऽऽह मेधातिथिः— 'तया ह्यनुक्तया तन्न निष्पन्नं भवति' इति। तस्माद्गायत्र्युपदेश एव उपनयनपदार्थ इति सिद्धम्। इदमेव द्वितीयजन्मेत्याह गौतमः— 'तद्द्वितीयं जन्म। अत्रास्य माता सावित्री पिता त्वाचार्यः' इति। एतेन उपनीत्युपनयोपनायनोपानयादिशब्दाः कर्मनामधेयत्वेन व्याख्याताः। यत्तु 'गर्भाष्टमेऽष्टमे वाऽब्दे ब्राह्मणस्योपनायनम्।' इति याज्ञवल्क्यीये उपनायनशब्दः श्रूयते, सोऽपि छन्दोनुरोधात् उपनयनमेवोपनायनमिति स्वार्थतद्धितविधानाद्वा उपनयनमेवाऽऽचष्ट इति विज्ञानेश्वरः। कल्पतरुरप्यमुमेवार्थमनुमेने। अपरार्कस्तु— "उपनयनं नाम बटोर्गायत्रीसंबन्धकरणम्। तच्चाऽऽचार्यकर्तृकम्। उपनायनं नाम 'अधीहि भो अनुब्रूहि' इत्याचार्यं प्रति प्रयोजकव्यापारः। स च बटुकर्तृक इत्युपनयाद्भिन्नमेवोपनायनम्। तच्च 'अष्टवर्षो ब्राह्मण आत्मानमुपनाययेत्' इति बुधस्मृतौ स्पष्टमेवाभिहितम्" इति व्याचष्टे। पित्राद्युपनेत्रभावविषयं बुधवचनमिति कल्पतरुः। मेधातिथिरपि— "पितुरभावे व्युत्पन्नबुद्धिना माणवकेनाप्यात्मोपनाययितव्य इति 'सत्यकामो ह जाबालः सहहारीद्रुमतं गौतममेत्योवाच ब्रह्मचर्यं भगवति वत्स्यामि' इति लिङ्गात्" इति। यत्तु 'ज्योतिर्विदुक्तसमये कुमारमुखदर्शनम्। उपानयं तु तं प्राहुर्गृह्यकास्तत्त्वदर्शिनः॥' इति, 'पितृकुलाद्विधिवदाचार्यकुलप्रापणं शिशोरुपनयनम्' इति च परिशिष्टहरदत्तादीनां निर्वचनम्, तदव्यभिचरितगायत्र्युपदेशसंबन्धात् म(?ग)ङ्गादिशब्दप्रयोगवदङ्गेषु लक्षणया प्रधानशब्दप्रयोग इति द्रष्टव्यम्। तच्च द्विरूपम्— अङ्गं प्रधानं च। तत्राङ्गत्वं मन्यन्ते मीमांसकाः— 'संस्कारस्य तदर्थत्वाद्विद्यायां पुरुषश्रुतिः' (जैसू. ६।१।३५) इत्यादिना। तथाहि — 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत', 'उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम्। वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत्॥' इत्यादिश्रुतिस्मृत्यादिवाक्येषूपनीतेन किं कर्तव्यमित्यपेक्षायां तत्संनिधौ श्रूयमाणस्याध्ययनस्य च कर्त्रपेक्षायामुपनीतेनाध्ययनं कर्तव्यमिति वाक्यार्थसिद्ध्योपनयनाध्ययनयोरङ्गाङ्गिभावसिद्धिः। तेन न कालार्थः संयोगः, अकृतार्थत्वात्। यद्यप्यत्रोपनयनाध्यापने प्रयोजकव्यापारावेव श्रूयेते, तथापि तयोर्भृत्यर्थतया प्राप्तयोरविधेयत्वादप्राप्तयोरुपगमनाध्ययनयोरेव विधिः। अत एव याज्ञवल्क्याश्वलायनादिभिः 'उपनायनम्' 'उपेतश्चेदाहिताग्न्यावृता' 'इत्यनुपेतपूर्वस्य, अथोपेतपूर्वस्य' इत्यादिशब्दो माणवकव्यापाराभिप्रायेणैव प्रयुक्तः। प्रयोजक-

व्यापारश्रवणं तु 'एतया निषादस्थपतिं याजयेत्' इत्यत्रार्थप्राप्तस्यर्त्विग्व्यापारानुवादवदनुवादः । आत्मनेपदं स्वकर्त्रभिप्राये क्रियाफलेऽपि भवति संमाननसूत्रविधानान्यथानुपपत्त्येत्यादि प्रपञ्चितं न्यायविद्भिः । ततश्चाध्ययनार्थिन एवाविद्वत्कर्तृकोपनयने 'तमसो वा एष तमः प्रविशति यमविद्वानुपनयते' इति निन्दार्थवादोऽपि घटते । तदेतत्स्पष्टमाचष्ट भरद्वाजः– 'उपानयाख्यं यत्कर्म विद्यार्थं तदुदीरितम् ।' इति । ततश्च प्रतिवेदाध्ययनमुपनयनावृत्तिः सिध्यति, 'प्रतिप्रधानं गुणावृत्तिः' इति न्यायात् । गुणत्वं च तत्तच्छाखीयस्यैवोपनयनस्य तत्तच्छाखाध्ययनं प्रतीति मन्तव्यम्, अन्यथा प्रतिशाखं तदाम्नानानुपपत्तेः । तथा चाऽऽपस्तम्बः– 'उपनयनं विद्यार्थस्य श्रुतितः संस्कारः' इति । विद्यया अर्थः प्रयोजनं यस्य स विद्यार्थः । येन वेदेन यस्य प्रयोजनं तच्छ्रुत्या संस्कारस्तस्योपनयनम् । नान्यवेदेनोपनीतस्यान्यवेदाध्ययनमित्यर्थः । वसिष्ठोऽपि– 'यच्छाखीयैस्तु संस्कारैः संस्कृतो ब्राह्मणो भवेत् । तच्छाखाध्ययनं कार्यमेवं न पतितो भवेत् ॥' इति । तदशक्तावाहाऽऽपस्तम्बः– 'सर्वेभ्यो वै वेदेभ्यः सावित्र्यनूच्यत इति हि ब्राह्मणम्' इति । 'वैशब्दो वार्थः' इति धूर्तस्वामिनः, 'त्रिभ्य एव तु वेदेभ्यः पादंपादमदूदुहत् । तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः ॥' (मस्मृ. २।७७) इति मनुस्मरणात् । अस्मिन्नपि पक्षे अथर्ववेदाध्ययनार्थं पृथगेवोपनयनं कार्यम् । तथा च तदीयैव श्रुतिः– 'नान्यत्र संस्कृतो भृग्वङ्गिरसोर्विधीयते' इति । विशेषान्तरं पुनरुपनयनप्रकरणे वक्ष्यत इत्यास्तामतिविस्तरेण । प्रधानमिति स्मृतिकाराः । 'अष्टाचत्वारिंशता संस्कारैः संस्कृतो ब्रा(१ ब्र)ह्मणः सायुज्यं गच्छति', 'वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् । कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥' (मस्मृ. २।२६), 'चित्रकर्म यथाऽनेकैरङ्गैरुन्मील्यते शनैः । ब्राह्मण्यमपि तद्वत्स्यात्संस्कारैर्विधिपूर्वकैः ॥' (पस्मृ. ८।१९), 'गार्भैर्होमैर्जातकर्मचूडामौञ्जीनिबन्धनैः । बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ॥' (मस्मृ. २।२७) इत्यादिवाक्यैः सामान्यविशेषाभ्यां पुरुषार्थतावगमात् । किंच, मूकबधिरादीनामध्ययनासमर्थानामप्युपनयनदर्शनात् सिद्धमस्य पुरुषार्थत्वम् । मूकाद्युपनयनं कर्मान्तरमेवेति चेत्, अस्तु तर्हि नामधारकविप्राणामुपनयनमत्रोदाहरणम् । नामधारकलक्षणं स्मृत्यन्तरे– 'गर्भसंस्काररहितः केवलं ब्रह्मसूत्रधृक् । न कर्मवित्र चाधीते स भवेन्नामधारकः ॥' इति । किंच, सर्वेष्वप्युपनयनवाक्येषु द्वितीयाश्रुत्या ब्राह्मणादेरेव संस्कार्यत्वावगमात् परस्मैपदयुक्तेषु पुनराहत्यैव तद्गतक्रियाफलावगमाच्चोपनयनस्य पुरुषार्थत्वं सिध्यति । यत्तु 'अष्टमे वर्षे ब्राह्मणमुपनयेत्' इत्याश्वलायनगृह्यभाष्ये 'परस्मैपदपाठोऽयमध्येतॄणां प्रमादजः । आचार्यकरणे यस्मात्प्राप्नोत्येवाऽऽत्मनेपदम् ॥' इति हरदत्तव्याख्यानम्, तदपि पार्थसारथ्यादयो नानुमन्यन्ते । 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' (पासू. १।३।७२) इत्यनेनैव ञितो निञः आत्मनेपदसिद्धौ पुनः संमाननसूत्रारम्भादकर्त्रभिप्रायेऽपि क्रियाफले आत्मनेपदं भवतीति ज्ञापयति । ततश्चाऽऽचार्यकरणेऽपि आत्मगामिक्रियाफलाभावादात्मनेपदमपि परस्मैपदतुल्यमेव । तदुक्तं वैयाकरणैः– 'अकर्त्रभिप्रायार्थः पुनरारम्भः' इति । तस्मान्नायं प्रमादपाठः । $ संप्र. ३३४–३३९

## आश्वलायनः

उपनयनं द्वितीयं जन्म तत्र पितरौ च

**'यावत्प्रभृति वामांसे ब्रह्मसूत्रं द्विजस्य तत् ।**
**गुरुः प्रतिष्ठापयति काले तपसि संयुतः ॥**

---

$ संग. संप्रगतम् ।

(१) आश्वस्मृ. ७।१५२–१५६ ; प्रपा. २२२ मांसे (मेंऽसे) तत् (तु) चतुर्थपादे (कालप्रभृति संयतः) ; संप्र. ४२० चतुर्थपादे (कालप्रभृति संयतः) ; संर. १९० तपसि संयुतः (प्रभृतिसंयतः) स्मृतिप्रकाशे.

[1]तावत्प्रभृति तस्यैव पिताऽऽचार्यः स उच्यते ।
माता च तस्य सावित्री द्वितीयं जन्म चोच्यते ॥

## स्मृत्यन्तरम्

वेदाध्ययनार्थं गुरुसमीपनयनम् उपनयनपदार्थः

[2]गृह्योक्तकर्मणा येन समीपं नीयते गुरोः ।
बालो वेदाय तद्योगाद्बालस्योपनयं विदुः ॥

## अनिर्दिष्टकर्तृकवचनम्

गुरु-व्रतादिसमीपनयनम् उपनयनपदार्थः

[3]गुरोर्व्रतानां वेदस्य यमस्य नियमस्य च ।
देवतानां समीपं वा येनासौ नीयते द्विजः ॥

(१) आश्वस्मृ. ७।१५६–१५७ ; प्रपा. २२२ ; संप्र. ४२० ; संर. १९० स्मृतिप्रकाशे.

(२) संत. ९२७.

(३) प्रपा. २१२ ; संप्र. ३३४ ; संग. ६३५ समीपं (समीपे) वीरमित्रोदये.

## संग्रहकारः

उपनयनं त्रैवर्णिकानामेव

§[1]दीर्घे छन्दोनुरोधेन स्वार्थिकस्तद्धितोऽपि वा ।
त्रैवर्णिकानां मुख्योऽयमौपनायनिको विधिः ॥

## भास्करः

उपनयनार्थमशूद्रात्प्रतिग्रहे कर्मफलं दातृगामि, शूद्रात्प्रतिग्रहे नरकगमनम्

[2]प्रतिगृह्योपनीत्यर्थमिति तेनाऽऽचरेद्यदि ।
ब्राह्मणत्वफलं सर्वं दातारमधिगच्छति ।
शूद्राच्च प्रतिगृह्णीयात् स मूढो नरकं व्रजेत् ॥

§ कस्मिन् स्मृतिवचने प्रयुक्तस्योपनायनशब्दस्येदं व्याख्यानमिति पारिजाते संदर्भतोऽपि न ज्ञायते ।

(१) प्रपा. २११.

(२) मुक्ता. ९९.

# $उपनेयानुपनेयौ

## गौतमः

प्रतिलोमजाः शूद्राजातानुलोमजः शूद्रश्चानुपनेयाः

**'प्रतिलोमात्तु धर्महीनः ॥**

( १ ) गौतमः ' प्रतिलोमात्तु धर्महीनः' इत्यवर्णविवक्षयैवाऽऽह । १।१

प्रतिलोमास्त्वनधिकृता एव । तथा च गौतमः– ' प्रतिलोमात्तु धर्महीनः ' इति । विश्व. १।१४

( २ ) तुशब्दो विशेषार्थः, सृष्टेरपि प्रतिलोमाज्जातः सूतादिः धर्महीनः, तदन्तरे प्रतिलोमाज्जातो विशेषत एवेति । धर्मशब्देनोपनयनं द्रष्टव्यम् । एवं चानुलोमानामुपनयनं सिद्धम् । वेदाध्ययने तु प्रतिषेधो द्रष्टव्यः । कुतः ? 'अनुलोमानामुपनयनमेव, न वेदाध्ययनं न पञ्चयज्ञं नौपासनं नाग्निहोत्रं न समित्कार्यं न संध्योपासनम्, उपनयनमपि तूष्णीमेव ' इत्यादिस्मृत्यन्तरदर्शनात् । केचित्तकारं न पठन्ति । तेषामुत्तरसूत्रात् ' शूद्रायां च ' इत्यतश्चकारमध्याहृत्य योजनीयं ' सृष्ट्यन्तरजानाम् ' इत्यस्मिन्सूत्रे । अपरे 'सृष्ट्यन्तरजानां प्रतिलोमात्तु धर्महीनः' इत्येकमेवेदं सूत्रमिति व्याचक्षते । सर्वत्र व्याख्यानं तुल्यमेव । मभा.

( ३ ) प्रतिलोमाज्जाताः सूतादयो धर्महीनाः उपनयनादिधर्महीनाः । तत्र ¶ सूतस्यैकस्योपनयनमात्रं शास्त्रान्तरेऽङ्गीकृतम् । गौमि.

( ४ ) गोतमः प्रतिलोमानामेव धर्मेऽनधिकारमाह– ' प्रतिलोमास्तु धर्महीनाः ' इति । उ. १।१।४

( ५ ) ' प्रतिलोमजा धर्महीनाः ' इति गोतमीयनिषेधो विशेषधर्मपरः । दीक. १।१

**'शूद्रायां च ॥**

( १ ) अनुलोमानामपि शूद्रायां जात उपनयनादिरहितः । एवं च सवर्णाम्बष्ठनिषादानामेवोपनयनम् । तथा च स्मृत्यन्तरम्– ' सवर्णमुपनीय धनुर्वेदं शिक्षयेत्, अम्बष्ठमुपनीय वैद्यशास्त्रम्, निषादमुपनीय हस्तिशिक्षां शिक्षयेत्, अन्येषामुपनयनाभावः' इति । केचिदम्बष्ठायां सवर्णाज्जातमुपनीय नृत्तं शिक्षयेदिति वर्णयन्ति । उग्रादयो वृत्तिविशेषेण ज्ञातव्याः । उग्रो हन्ता व्यालमृगादीनाम्, दौष्यन्तो मत्स्यघातकः, पारशवो भद्रकालीपूजकः, सूतो हयशिक्षकः, मागधो वणिक्पथसेवी, पट्टकृदायोगवः, क्षत्ता चाक्रिकः, स एव लवणविक्रेता, वैदेहकोऽजपालः इत्यादि । मभा.

( २ ) आनुलोम्येनापि शूद्रायामुत्पन्नः पारशवादिर्धर्महीनः । एवं च सवर्णादीनामनुलोमानां सिद्धो धर्माङ्गीकारः । तथा च मनुः– ' स्वजातिजात्यन्तरजाः षट् सुता द्विजधर्मिणः । शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः ॥ ' । गौमि.

**'शूद्रश्चतुर्थो वर्णः ॥**

( १ ) शूद्र इति संज्ञा श्रुतितो द्रवतीति । वर्ण इति त्रयाणां ब्राह्मणादीनां वर्णसंज्ञाप्रतिपत्त्यर्थम् । अतश्चतुर्णामेव वर्णसंज्ञा, नान्तरजानाम् । तथा च वसिष्ठः– ' चत्वारो वर्णा ब्राह्मणक्षत्रियवैश्यशूद्राः ' इति । मभा.

---

$ अस्मिन् विषये ' विकलाङ्गादिसंस्काराः ' इति प्रकरणमप्यनुसंधेयम् ।

¶ अस्मिन् विषये ' सजातिजानन्तरजाः ' इति मनुवचने ४०५–४०६ इतिनिर्दिष्टस्थलं संप्रव्याख्यानमनुसंधेयम् ।

(१) गोध. ४।२५ ; विश्व. १।१, १।१४, १।९४ ; मभा. ; गौमि. ४।२० हीनः ( हीनाः ) ; उ. १।१।४ मात्तु ( मास्तु ) हीनः ( हीनाः ) ; दीक. १।१ मात्तु ( मजा ) हीनः ( हीनाः ) ; संप्र. ४०५ उवत्.

(१) गोध. ४।२६ ; मभा. ; गौमि. ४।२१.

(२) गोध. १०।४९ ; मभा. ; गौमि. १०।५१ ; गृर. ४७७ ; स्मृकौ. ४० ; मर. ३ ; शूशि. ३४ ; चम. ८३ ; मुक्ता. ६७ ; शूक. ६७ ; बाल. १।१६६ पृ. ४३० ; संग. ६३६ ; सस्मृ. ३१ (=), ३६.

(२) वर्णसामान्यत्वे सत्यपि चतुर्थग्रहणं पूर्वेषां त्रयाणां ब्राह्मणादिवर्णानां पृथग्वर्णत्वोपपादनार्थम्, त्रैवर्णिका इति सिद्धत्वात्। गौमि.

[1]एकजातिः ॥

(१) नास्य द्वितीया जातिर्विद्यते उपनयनमिति, 'द्वितीयं जन्म' इति तस्यापि जातिसंज्ञात्वात्। एवं चास्योपनयनप्रतिषेधः। ततश्च तस्यैव प्रतिषेधात् तस्मात्प्राक्तनानाममन्त्रकाणां यथाकालमनुष्ठानं द्रष्टव्यम्। तथा च गृह्यकारवचनम्— 'शूद्रस्यापि निषेकपुंसवनसीमन्तोन्नयनजातकर्मनामकरणोपनिष्क्रमणान्नप्राशनचौलान्यमन्त्रकाणि यथाकालमुपदिष्टानि' इति। उपरितनानां तूपनयनमूलत्वादेव प्रतिषेधसिद्धिः। $ मभा.

(२) एकजातिः उपनयनं पूर्वेषां द्वितीयजन्म तदस्य नास्तीति। उपनयनप्रतिषेधात् तत्पूर्वकमध्ययनमपि न भवति। तद्विषये गृह्यकार आह— 'शूद्रस्यापि निषेकपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलान्यमन्त्रकाणि यथाकालमुपदिष्टानि' इति। विवाहोऽप्यमन्त्रको यथाचारं भवति। गौमि.

## बौधायनः

निषादनिषादीचतुर्थादियुगानां पुमपत्यान्युपनेयानि

[2]निषादेन निषाद्यामा पञ्चमाज्जातोऽपहन्ति शूद्रताम् ॥

अथ बीजोत्कर्षवशात् पुनरपि वर्णान्तरप्राप्तिमाह— निषादेनेति। अत्र गौतमीयम्— 'वर्णान्तरगमनमुत्कर्षापकर्षाभ्यां सप्तमेन। पञ्चमेनाऽऽचार्याः' इति। आह तत्राभिविधौ। निषादो वैश्याच्छूद्रायां जात इति कृत्वोच्यते। बौवि.

$ गृर., स्मृकौ., मर., शूशि., संप्र. ममागतम्।

(१) गौध. १०।५०; मभा.; गौमि. १०।५१; गृर. ४७७; स्मृकौ. ४०; मर. ३; शूशि. ३४; संप्र. १३३, ४०५ (शूद्र एकजातिः); मुक्ता. ६७; शूक. ६७; संग. ६३६; सस्मृ. ३१ (=): ३६.

(२) बौध. १।१६।१३–१४.

तमुपनयेत्षष्ठं याजयेत्सप्तमोऽविकृतो भवति ॥

अविकृतः नैजमेव वर्णं प्रतिपद्यत इत्यर्थः। एवं तावच्छूद्रायां वैश्याज्जातस्याऽऽसप्तमाद्वैश्यत्वापत्तिरुक्ता। एवमेव वैश्यायां जातस्य क्षत्रियत्वापत्तिः, तथा क्षत्रियायां जातस्य ब्राह्मण्यापत्तिरुच्यते सवर्णत्यागादपि वर्णसंकरो जायत इतीदं प्रदर्शयितुम्। आह च मनुः— 'व्यभिचारेण वर्णानामवेद्यावेदनेन च। स्वकर्मणां च त्यागेन जायते वर्णसंकरः॥' (मस्मृ. १०।२४) इति। स्वकर्मणां त्याग उपनयनादिसंस्कारहानिरभिकृते। अतो वर्णसंकरप्रदर्शनार्थत्वादुपपन्नमिहाभिधानम्। बौवि.

## आपस्तम्बः हिरण्यकेशिधर्मसूत्रं च

शूद्रभिन्ना अदुष्टकर्माण उपनेयाः

[1]अशूद्राणामदुष्टकर्मणामुपायनं वेदाध्ययनमग्न्याधेयं फलवन्ति च कर्माणि ॥

(१) अदुष्टकर्मणां मद्यपानादिरहितानाम्। ब्रक. १०५

(२) शूद्रवर्जितानां त्रयाणां वर्णानामदुष्टकर्मणामुपायनादयो धर्माः। उपायनम् उपनयनम्। नात्र त्रैवर्णिकानामुपनयनादि विधीयते, प्राप्तत्वात्। नापि शूद्राणां प्रतिषिध्यते, प्राप्त्यभावात्। तथाहि— उपनयनं तावद्गृह्ये 'गर्भाष्टमेषु ब्राह्मणमुपनयीत' (आपगृ. ८।२) इत्यादिना त्रैवर्णिकानामेव विहितम्। इहापि तथैव विधास्यते। अध्ययनमपि 'उपेतस्याऽऽचार्यकुले ब्रह्मचारि-

(१) आध. १।१।६; हिध. २६।१।६ मुपायनं (मुपनयो); ब्रक. १०५ (वेदा...कर्माणि०); स्मृच. १४ मुपायनं (मुपनयनं), ५३; हभा. २२५ (शूद्राणामदुष्टकर्मणामुपनयनम्) एतावदेव; स्मृसा. १ (अशूद्राणामदुष्टकर्मणाम्) एतावदेव: ५ (अशूद्राणामदुष्टकर्मणामुपनयनम्) एतावदेव; स्मृकौ. २८ स्मृसा. ५वत्; गभा. २३१ हभावत्; शूशि. ७० स्मृसा. ५ वत्; संप्र. १३३, ४०५ स्मृसा. ५ वत्; मुक्ता. ६८: १०१ स्मृसा. ५ वत्; संग. ६३६ स्मृसा. ५ वत्; संर. १६४ स्मृचवत्; संवी. ३ (भागः २) 'अशूद्राणामपर्युदस्तानाम्' एतावदेव.

वासः ' ( आध. १।२।११ ) इत्यारभ्य विधानादनुपनीतस्य शूद्रस्याप्राप्तमेव । किंच, ' श्मशानवच्छूद्रपतितौ '( आध. १।९।९ )इत्यध्ययननिषेधो वक्ष्यते । यस्य समीपे नाध्येयं स कथं स्वयमध्येतुमर्हति ? अग्न्याधेयमपि ' वसन्ता ब्राह्मणः ' ( तैब्रा. १।१।२।६ ) इत्यादि त्रैवर्णिकानामेव विहितम् । फलवन्ति चाग्निहोत्रादीनि कर्माणि ' स त्रयाणां वर्णानाम् ' ( आपप. १।२ ) इत्युक्तत्वात् त्रैवर्णिकानामेव नियतानि । विद्याग्न्यभावाच्च शूद्राणामप्रसक्तानि । उक्तो विद्याग्न्यभावः । तस्माद्दुष्टकर्मप्रतिषेधार्थं सूत्रम् । यथा शास्त्रान्तरे 'द्विजातिकर्मभ्यो हानिः पतनम् ' ( गौध. २१।४ ) इति । अप्रतिषेधे तु दुष्टकर्मणामप्यधिकारो भवत्येव, ' फलवन्ति च कर्माणि ' इत्यभिधानात् , क्रियते इति कर्मेति निर्वचनात् । ' प्रागुपनयनात् कामचारवादभक्ष ' ( गौध. २।१ ) इति गौतमस्मरणं ब्रह्महत्यादिमहापातकव्यतिरिक्तविषयमित्यनुपेतस्यापि दुष्टकर्मत्वसंभवाददुष्टकर्मणामित्युक्तम् । शूद्रप्रतिषेधस्तु प्राप्तानुवादः । उ.

( ३ ) अदुष्टकर्मणां पतनीयकर्मभिरदूषितानाम् ।
स्मृसा. ५

( ४ ) एतच्च रथकारविषयम् । तस्य तु मातामहीद्वारकं शूद्रत्वम् । $ हभा. २२५

( ५ ) केचनाऽऽपस्तम्बवाक्यमन्यथा पठन्ति— ' शूद्राणामदुष्टकर्मणामुपनयनम् ' इति । अयं च भ्रान्तः पाठः संप्रदायरहितानाम् । कथमप्यपाठे महानाग्रहस्तदाऽत्र शूद्रो रथकारः, तस्य श्रुत्या यागविधानात् ' रथकारं याजयेत् ' इति । स्मृकौ. २८

## वैखानसधर्मसूत्रम्

त्रयाणां वर्णानां द्विजत्वं वेदाधिकारश्च

[१]**पूर्वेषां त्रयाणां निषेकाद्याः संस्कारा विधीयन्ते । तेषां द्विजन्मनां वेदाधिकारः ॥**

$ शेषं ब्रह्मचारिकल्पतरोरनुवादः । गभा. हभावत् कल्पतरोरनुवादश्च ।

(१) वैध. १।१.

## वसिष्ठः

त्रयो वर्णा उपनेयाः, शूद्रोऽनुपनेयः

[१]**गायत्र्या छन्दसा ब्राह्मणमसृजत्त्रिष्टुभा राजन्यम् , जगत्या वैश्यम् , न केनचिच्छन्दसा शूद्रमित्यसंस्कार्यो विज्ञायते ॥**

## विष्णुः

कृतपरीक्ष एवोपनेयः

[२]**नापरीक्षितं याजयेत् ॥**

**नाध्यापयेत् ॥**

**नोपनयेत् ॥**

अपरीक्षितं कुलवृत्तादिभिः । तदेतत्स्पष्टीकृतं जाबालगौतमसंवादव्याजेन श्रुतावेव ' सत्यकामो वै जाबालो हारिद्रुमतं गौतममियाय ' इत्यादिना । § संप्र. ४०६

## लघुविष्णुः

शूद्रोऽनुपनेयः

[३]**शूद्रश्चतुर्थो वर्णस्तु सर्वसंस्कारवर्जितः ॥**

## शङ्खः

द्वादशविधाः पुत्रा रथकाराद्यनुलोमजाश्चोपनेयाः

[४]**एते द्वादश पुत्राश्च संस्कार्याः स्युर्द्विजातयः ॥**

[५]**क्षत्रियवैश्यानुलोमानन्तरजोत्पन्नो रथकारस्तस्य चेज्यादानोपनयनसंस्कारक्रिया अश्वप्रतिष्ठारथसूत्रवास्तुविद्याध्ययनवृत्तिता च ॥**

§ वै. संप्रगतम् ।

(१) वस्मृ. ४।३ ; मुक्ता. ८७ ( गायत्र्या ब्राह्मणमुपनयीत । त्रिष्टुभा राजन्यं जगत्या वैश्यम् ) एतावदेव, स्मृतिः .

(२) विस्मृ. २९।४–६ ; ब्रक. १०५ : २४१ तृतीयसूत्रं नास्ति ; स्मृच. ५३ ; हभा. २२५ ; पभा. १३६ ; प्रपा. २६२ ; निप्र. २४० ( भागः २ ) ; संप्र. ४०६, ५१६ ; संर. ३१२.

(३) लघुविस्मृ. १।१५.

(४) प्रपा. २१९ ; विपा. ४८३.

(५) मिता. १।९५ रजोत्पन्नो रथकारस्तस्य चे ( रोत्पन्नो यो रथकारस्तस्ये ) ; अप. १।९५ रजोत्पन्नो

(१) क्षत्रियेण वैश्यायामुत्पादितो माहिष्यः। वैश्येन शूद्रायामुत्पादिता करणी। तस्यां माहिष्येणोत्पादितो रथकारो नाम जात्या भवति। तस्य चोपनयनादि सर्वं कार्यम्, वचनात्। यथाऽऽह शङ्खः— 'क्षत्रियवैश्या ... वृत्तिता च' इति। एवं ब्राह्मणक्षत्रियोत्पन्नमूर्धावसिक्तमाहिष्याद्यनुलोमसंकरे जात्यन्तरता उपनयनादिप्राप्तिश्च वेदितव्या, तयोर्द्विजातित्वात्। मिता. १।९५

(२) अथानुलोमजानां संकराणां रथकारनिदर्शनेनोपनयनं व्याख्येयमिति मिताक्षरोक्तिः। तथा च शङ्खः— 'क्षत्रियवैश्या....... वर्तिता च' इति। अस्यार्थः— क्षत्रियस्यानुलोमोऽनन्तरो वैश्यः। वैश्यस्यानुलोमोऽनन्तरः शूद्रः। ताभ्यां तयोरुत्पादिते माहिष्यकरण्यौ। तस्यां तस्माज्जातो रथकारः, 'माहिष्येण करण्यां तु रथकारः प्रजायते।' इति स्मरणात्। तस्य इज्या यागः ज्योतिष्टोमादिः। दानं मन्त्रसाध्यं तुलापुरुषादि महादानम्। उपनयनम् उक्तलक्षणम्। संस्काराः उपनयनोत्तरभाविनः जीवतो मृतस्य च, पूर्वसंस्काराणां शूद्रादिसाधारणत्वात्। क्रियाः काम्यनैमित्तिकाः। अश्वप्रतिष्ठा शालिहोत्रादि। रथसूत्रं रथनिर्माणयोजनचालनादि। वास्तुविद्या गृहप्रासादादिनिर्माणम्। अध्ययनं वेदादेः। एतद्वर्ती एतदनुष्ठातेत्यर्थः। नन्वेवं रथकारस्योपनयनाध्ययनेज्यादिसंभवे रथकाराधिकरणसिद्धान्तविरोधः, तत्र हि रथकारशब्दस्य रूढया उपनयनादिरहितजातिविशेषपरतया तदाधानस्यापूर्वतायाः सिद्धान्तितत्वादिति चेत्। नायं दोषः, तत्र प्रकृतरथकारातिरिक्तस्य ऋभुसुधन्वापरपर्यायस्योपनयनादिरहितस्य व्रात्यापत्यस्य तत्रोदाहरणत्वात्। तथा च तन्त्ररत्नोदाहृतं स्मृतिवचनम्— 'व्रात्यात्तु जायते वैश्यात्सुधन्वाचार्य एव सः। भरुषश्च विजन्मा च मैत्रः सात्वत एव च॥' इति। संप्र. ३९९

रथकारस्तस्य चे (रोत्पन्नजो रथकारस्तस्ये); संप्र. ३९९ वृत्तिता (वर्तिता); शूक. २६२ (क्षत्रियवैश्यानुलोमानन्तरोत्पन्नजो रथकारस्तस्याध्ययनेज्यादानोपनयनसंस्काराश्चाप्रतिषिद्धाः रथसूत्रवास्तुविद्याध्ययनवृत्तिता च).

## मनुः

त्रयो वर्णा अनुलोमजाश्चोपनेयाः, शूद्रादयोऽनुपनेयाः

**'ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः।**
**चतुर्थ एकजातिस्तु शूद्रो नास्ति तु पञ्चमः॥**

(१) के पुनरमी वर्णा नाम? मनुष्यजातिवचनो वर्णशब्दः? नेत्याह— ब्राह्मण इति। चत्वारो वर्णा ब्राह्मणाद्याः शूद्रपर्यन्ताः। अन्ये तु बर्बरकैवर्तादयः संकीर्णयोनयो यथा वक्ष्यन्ते। तत्र चतुर्णां त्रयो द्विजातयः, उपनयनस्य तेषां विहितत्वात्। एकजातिः शूद्रः। न हि तस्योपनयनमस्ति, उपनयनविधौ ब्राह्मणादिवर्णविशेषसंयोगात् 'अष्टमे ब्राह्मणमुपनयीतैकादशे राजन्यं द्वादशे वैश्यम्' इति। न कस्मिंश्चित्काले शूद्रं पठन्ति।

ननु कालविशेषानुपादानादनियतकालं शूद्रोपनयनमस्तु। भवेद्यद्यसंयुक्ता सामान्येनोपनयनस्योत्पत्तिः स्यात्, एताश्च वर्णकालविशेषयुक्ता निमित्तार्थाः †स्तुतयः स्युः। न तु पृथगुत्पत्तिरस्यास्ति। तत्कस्य प्रमाणस्य सामर्थ्येनास्योपनयनमनियतकालं क्रियताम्? यद्येवं किं तर्ह्यनेन 'चतुर्थ एकजातिः' इति? सत्यम्। आशङ्कामात्रनिवारणार्थम्। 'मन्त्रवर्ज्यं तदुच्यते (? न दुष्यन्ति)' (मस्मृ. १०।१२७) इत्यमन्त्रकस्यानियतकालस्य प्राप्तिराशङ्क्येत। ननु च पाकयज्ञविधावेतद्वाक्यम्, तत्संनिधौ श्रवणात्। तत्र कृतार्थं नान्यत्र भवितुमर्हति। अत एवाऽऽशङ्कामात्रमित्युक्तम्। परमार्थतस्तु व्यवहारनियमार्थपरः श्लोकः। मेधा.

(२) पञ्चमो वर्णो नास्ति, संकरजानामवर्णत्वात्। एतच्च तेषां वर्णप्राप्तिर्मा भूदित्येतदर्थमुक्तम्। ¶ मवि.

† इदमत्र विचार्यम्— सामान्यविध्युपगमेऽपि 'अष्टमे ब्राह्मणम्' इत्यादीनां वर्णकालविशेषयुक्तवाक्यानामुपनयनांशेऽनुवादत्वं स्यात्, न कथमपि स्तुतित्वं संभवतीति।

¶ शेषं मेधागतम्।

(१) मस्मृ. १०।४; स्मृच. १५५; वीमि. १।१० शूद्रो (वर्णो) उच.; मुक्ता. ३०.

( ३ ) ब्राह्मणादयस्त्रयो वर्णा द्विजाः, तेषामुपनयनविधानात्। शूद्रः पुनश्चतुर्थो वर्ण एकजातिः, उपनयनाभावात्। पञ्चमः पुनर्वर्णो नास्ति। संकीर्णजातीनां त्वश्वतरवन्मातापितृजातिव्यतिरिक्तजात्यन्तरत्वान्न वर्णत्वम्। अयं च जात्यन्तरोपदेशः शास्त्रे संव्यवहरणार्थः। मभु.

( ४ ) शूद्रस्तु चतुर्थ एकजातिरित्यन्वयः। पञ्चमोऽनुलोमजो नास्तीति। मच.

( ५ ) चतुर्थः शूद्रः। वर्णः शुद्धः। वर्णसंकरस्त्ववस्त्येव। वर्णसंकरो न वर्णान्तर्गत इत्यप्याहुः। वीमि. १।१०

( ६ ) उक्तमर्थं निगमयति– ब्राह्मणः क्षत्रियो वैश्य इति। क्रमोपादानं ब्राह्मणाद्द्विजाते(?ति)रपि क्षत्रियः किंचिदपकृष्टः, क्षत्रियाद्वैश्य इति ज्ञापनार्थम्। शूद्रस्यैकजातित्वग्रहणं पृथगुपादानं चापकृष्टतमत्वख्यापनार्थम्। पञ्चमो नास्ति। चत्वार एव वर्णा इत्यर्थः। नन्द.

**[1]स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान् सुतान्।**
**सदृशानेव तानाहुर्मातृदोषविगर्हितान्॥**

( १ ) अनन्तरासु अव्यवहितासु आनुलोम्येन य उत्पन्नाः पुत्रास्ते सदृशा ज्ञेयाः, न तु तज्जातीयाः। यथा ब्राह्मणात्क्षत्रियायां क्षत्रियाद्वैश्यायाम्। तेन (?ते) सदृशाः, न तु त एव। अत्र हेतुः– मातृदोषविगर्हितान्। तत्सदृशग्रहणान्मातृत उत्कृष्टान् पितृतो निकृष्टान्। द्विजैरिति बहुवचननिर्देशान्मातृतश्च ( दोषस्य ) ग्रहणादानुलोम्येष्वेतत् संभवति, (न) प्रातिलोम्ये पितृतो ग्रहणेन, मातृतः पितुर्निकृष्टजातीयत्वात्। अत आनुलोम्यग्रहणं पूर्वश्लोके। यदुक्तमुत्तरार्थमिति तदिहा(न?)र्थकम्। अतः परेषु श्लोकेषूपदिश्यते। मेधा.

( २ ) अनन्तरजातासु ब्राह्मणस्य क्षत्रियायां क्षत्रियस्य वैश्यायां वैश्यस्य शूद्रायाम्। द्विजैरित्यनुवादः, तेषामेवानन्तरजसंभवात्। सदृशान् पितुर्मातुश्च, न तु सजातीयान्। क्रमात् स्मृत्यन्तरोक्तमूर्धावसिक्तमाहिष्यकरणसंज्ञान्। पितृमातृसादृश्याभिधानं ब्रह्मक्षत्रियवैश्याजातानां भेदार्थम्। मातृदोषेण मातृभिन्नजातीयत्वेन विगर्हितान् वर्णमध्यबहिष्कृतान्। मवि.

( ३ ) आनुलोम्येनाव्यवहितवर्णजातीयासु भार्यासु द्विजातिभिर्ये उत्पादिताः पुत्राः, यथा ब्राह्मणेन क्षत्रियायाम्, क्षत्रियेण वैश्यायाम्, वैश्येन शूद्रायाम्, तान्मातुर्हीनजातीयत्वदोषाद्गर्हितान् पितृसदृशान्, न तु पितृजातीयान् मन्वादय आहुः। पितृसदृशग्रहणान्मातृजातेरुत्कृष्टाः पितृजातितो निकृष्टा ज्ञेयाः। एतेषां च नामानि मूर्धावसिक्तमाहिष्यकरणाख्यानि याज्ञवल्क्यादिभिरुक्तानि। वृत्तयश्चैषामुशनसोक्ताः– हस्त्यश्वरथशिक्षा अस्त्रधारणं च मूर्धावसिक्तानाम्, नृत्यगीतनक्षत्रजीवनं सस्यरक्षा च माहिष्याणाम्, द्विजातिशुश्रूषा धनधान्याध्यक्षता राजसेवा दुर्गान्तःपुररक्षा च पारशवोग्रकरणानामिति। मभु.

( ४ ) स्वजातीयाव्यवहितजातीयासु ब्राह्मणक्षत्रियवैश्यैरुत्पादितत्वान्न ते द्विजातय इत्याह– स्त्रीष्विति सार्धेन। सदृशान् तद्भिन्नत्वे सति तद्गतभूयोधर्मशालिनः। अत आह– मातृदोषविगर्हितान् मातुर्हीनजातित्वेन जात्यन्तरकर्मान्तरयुक्तत्वेन निन्दितान्। मूर्धाभिषिक्तमाहिष्यकरणाख्यानिति शेषः। मच.

( ५ ) अथ वर्णसंकरजातानाह– स्त्रीष्वनन्तरजातास्विति। अनन्तरजातासु अनन्तरवर्णजातासु द्विजैरुत्पादितान् ब्राह्मणेन क्षत्रियायां क्षत्रियेण वैश्यायां वैश्येन शूद्रायां चोत्पादितान् सुतान् सदृशान्। एवकारो जात्यन्तरभ्रमनिवृत्त्यर्थः। भ्रमप्राप्तौ कारणत्वेनोक्तं मातृदोषविगर्हितानिति विशेषणम्। तथापि सदृशानित्यर्थः। ऊढासुतविषयमेतत्, मातृदोषमात्रस्यैवोपन्यासादनूढाह्सोभयदोषवत्त्वात्। नन्द.

(१) मस्मृ १०।६; वीमि. १।९५ षविगर्हि ( षेण गर्हि ), षविगर्हि ( षेण दूषि ) इत्यपि पाठः; संप्र. ३९० (=) तान् सुतान् ( तासु ये ); मुक्ता. ७० गर्हि ( वर्जि ); संग. ६३७ संप्रवत्; बौधि. १।१६।६.

**[१]पुत्रा येऽनन्तरस्त्रीजाः क्रमेणोक्ता द्विजन्मनाम् ।**
**ताननन्तरनाम्नस्तु मातृदोषात्प्रचक्षते ॥**

( १ ) यथा ब्राह्मणात् क्षत्रियायां वैश्यायां च एवं क्षत्रियादुभयोस्ताननन्तरनाम्ना प्रचक्षते । अनन्तराऽनुलोमा जातिः समाना तेषाम्, मातृजातीया इत्यर्थः । अनन्तरग्रहणमविवक्षितम्, अत एवाऽऽह— मातृदोषादिति । पितृजात्युत्कर्षेण नो दुष्यन्ते । अतश्च सत्यपि वर्णसंकरत्वे वचनान्मातृजात्याः स्मृताः । संस्कारास्तेषु कर्तव्या इत्युक्तं भवति । न ह्येतद्वचनमन्तरेण क्षत्रियादिसंस्कारास्तेषु लभ्यन्ते, अश्वतरवज्जात्यन्तरत्वात् । वचनेन तु मातृजातावुक्तायामदोषः । मेधा.

( २ ) अनन्तरस्त्रीजाः विप्रस्य क्षत्रियायां क्षत्रस्य वैश्यायां वैश्यस्य शूद्रायाम् । अनन्तरनाम्नः क्षत्रियादिनाम्नः प्रचक्षते, मातृदोषात् । क्षत्रियादिमातृकत्वान्मातृजातिसाधारणो धर्मस्तेषामित्यर्थः । अनन्तरनाम्न इति नामग्रहणान्नाममात्रम्, न जातिरिति दर्शितम् । मवि.

( ३ ) मातृदोषादिति हेतून्यासात् अनन्तरग्रहणमनन्तरवच्चैकान्तरद्व्यन्तरप्रदर्शनार्थम् । ये द्विजातीनामनन्तरैकान्तरद्व्यन्तरजातिस्त्रीष्वानुलोम्येनोत्पन्नाः पूर्वमुक्ताः पुत्रास्तान् हीनजातिमातृदोषान्मातृजातिव्यपदेश्यानाचक्षते । मातापितृव्यतिरिक्तसंकीर्णजातित्वेऽप्येषां मातृजातिव्यपदेशकथनं मातृजातिसंस्कारादिधर्मप्राप्त्यर्थम् । ममु.

( ४ ) पुनः स्पृश्यत्वार्थमनुलोमजात्यन्तरत्रयमाह— पुत्रा इति । द्विजन्मनामनन्तरासु स्त्रीषु उग्राम्बष्ठायोगवजातीयासु विप्राद्यैः पुत्रा जायन्ते ते अनन्तरनाम्नः आवृतादिनामकजातियोगिनः । तत्संज्ञा मातृजातिसंस्कारार्थेति मेधातिथिः । मच.

( ५ ) पक्षान्तरमाह— पुत्रा येऽनन्तरस्त्रीजा इति । अनन्तरनाम्नोऽनन्तरवर्णनाम्नः क्रमेण क्षत्रियवैश्यशूद्रनाम्नः मातृजातीयानित्यर्थः । नन्द.

( ६ ) अनन्तरस्त्रीजा ये पुत्रा अम्बष्ठोग्रक्षत्तृवैदेहकायोगवा एते पुत्रा अनन्तरस्त्रीजाता अनन्तरनामानः । भाच.

**§[१]यथा त्रयाणां वर्णानां द्वयोरात्माऽस्य जायते ।**
**आनन्तर्यात्स्वयोन्यां तु तथा बाह्येष्वपि क्रमात् ॥**

( १ ) अस्य ब्राह्मणस्य त्रयाणां वर्णानामात्मा जायते। द्वयोर्वर्णयोः क्षत्रियवैश्ययोर्द्विजत्वं जायते। तथा स्वयोनौ। एवं त्रयाणां वर्णानां ब्राह्मणो द्विजान् जनयति । एवं बाह्येष्वपि प्रातिलोम्येन वैश्यक्षत्रियाभ्यां क्षत्रियब्राह्मणयोरात्मा द्विजत्वं भवति । सति च द्विजत्वे उपनयनं कर्तव्यम् । वक्ष्यति च 'एते षट् द्विजधर्माणः' इति । एतावांस्तु विशेषः । अनुलोमाज्जाता मातृजात्या मातृजातीयाः । स्तुतिमात्रमिदं वक्ष्यामः । मेधा.

( २ ) आनन्तर्यादनन्तरवर्णे आत्मजातिसदृशजातिः मूर्धावसिक्तादिः । स्वयोन्यां स्ववर्णे चाऽऽत्मजातीय एव । तथा बाह्येष्वपि । तथाहि— मूर्धावसिक्तात् मूर्धावसिक्तायां तज्जातीय एव । तत एव स्वावन्त्यामात्मसदृश इत्यादिः । पारशव्यां तु ततोऽपि हीनजातिः । एवमनुलोमजानपेक्ष्य प्रतिलोमजानामतिहीनत्वात्तेषां प्रतिलोमजानां स्वजातीयायामनन्तरायां सदृशव्यवहितायां हीनतरमपत्यमिति । मवि.

( ३ ) यथा त्रयाणां वर्णानां क्षत्रियवैश्यशूद्राणां मध्यात् द्वयोर्वर्णयोः क्षत्रियवैश्ययोर्गमने ब्राह्मणस्यानुलोम्यात् द्विज उत्पद्यते, सजातीयायां च द्विजो जायते, एवं बाह्येष्वपि क्षत्रियवैश्याभ्यां क्षत्रियाब्राह्मण्योर्जातेषु उत्कर्षापक्रमो भवति । शूद्रजातप्रतिलोमापेक्षया द्विजाद्युत्पन्नप्रतिलोमप्राशस्त्यार्थमिदम् । मेधातिथिस्तु द्विजत्वप्रतिपादकमेतदेषां वचनमुपनयनार्थमित्याह, तन्न, 'प्रति-

---

(१) मस्मृ. १०।१४ ; विश्व. ३।१ ; वीमि. १।९१ : १।९५ निर्देशमात्रम् ; संप्र. ३८९ (=).

§ अस्य संप्रव्याख्यानं 'सजातिजा ...' इति वचनव्याख्याने द्रष्टव्यम् ।

(१) मस्मृ. १०।२८ ; संप्र. ४०५ क्रमात् (क्रमः) ; नन्द. संप्रवत् ; भाच. संप्रवत् .

लोमजास्तु धर्महीनाः ' इति गौतमेन संस्कारनिषेधात् । ममु.

( ४ ) एतेषामुत्कृष्टत्वं सदृष्टान्तं निगमयति– यथेति । त्रयाणां विप्रादीनां मध्ये यथाऽस्य ब्राह्मणस्य स्वयोन्यामिवाऽऽनुलोम्येन द्वयोः क्षत्रियावैश्ययोः आत्मा द्विज उत्पद्यते एवं वै बाह्येषु वैश्यक्षत्रियाभ्यां क्षत्रियाब्राह्मण्योरात्मा द्विज उत्पद्यते एवं क्षत्रियवैश्ययोरपि तेषु आयोगवादितिसृष्वपि ब्राह्मण्यादिषु । मच.

( ५ ) एतदेव स्थापयति– यथा त्रयाणां वर्णानामिति । त्रयाणां ब्राह्मणक्षत्रियवैश्यानाम् अनन्तर्याऽनन्तरजातया स्वयोन्यां द्वयोरात्मा स्वस्ववर्णो यथा जायते तथा बाह्येष्वपि क्रमः प्रतिलोमानामपि तथा प्रकारः । एतदुक्तं भवति– यथा वैदेहकः स्वस्यां ब्राह्मण्यां च वैदेहकम्, आयोगवः स्वस्यां क्षत्रियायां चाऽऽयोगवम्, क्षत्ता स्वस्यां चण्डाल्यां च क्षत्तारं जनयतीत्यनेन सिद्धवदनूदितेन दृष्टान्तेन ज्ञाप्यते । नन्द.

( ६ ) यथेति दृष्टान्तः । यथा त्रयाणां क्षत्रियादीनां स्वयोन्यामानन्तर्यात् द्वयोः क्षत्रियवैश्ययोः आत्मैव जायते तद्यथा क्षत्रियात् क्षत्रियायां वैश्यात् वैश्यायाम् उत्तमासु योनिषु, ' आत्मैव जायते पुत्रः ' इति श्रुतेः । शूद्रायाम् इति तथा बाह्येषु आयोगवादिषु प्रतिलोमजेषु क्रमः । भाच.

**'सजातिजानन्तरजाः षट् सुता द्विजधर्मिणः ।**
**शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः ॥**

( १ ) स्वजातीयाः त्रैवर्णिकेभ्यः समानजातीयासु जातास्ते द्विजधर्माण इत्येतत्सिद्धमेवानूद्यते । अनन्तरजानां तुल्यताभिधानं तद्धर्मप्राप्त्यर्थम् । अनन्तरजा अनुलोमाः ब्राह्मणात् क्षत्रियवैश्ययोः क्षत्रियाद्वैश्यायां जाताः । तेऽपि द्विजधर्माणः उपनेया इत्यर्थः । उपनीताश्च द्विजातिधर्मैः सर्वैरधिक्रियन्ते । ननु च 'ताननन्तरनाम्नः ' इति मातृजातीयत्वमेषामुक्तमेव । ततश्च तज्जात्या समेषु धर्मेषु सिद्ध एवाधिकारः । सत्यम् । अनन्तरनाम्न इति नामग्रहणात् ' संज्ञैवैषाम्, न तु जात्यतिदेशः ' इति कस्यचिदाशङ्का स्यात्, अतः स्पष्टार्थं ' षट्सुता द्विजधर्मिणः ' इति वचनारम्भः । ये पुनरपध्वंसजाः संकरजास्ते शूद्राणां सधर्माणः समानाचारास्तद्धर्मैरधिक्रियन्त इत्यर्थः । प्रतिलोमानां तु विशेषो वक्ष्यते । अनन्तरग्रहणमनुलोमोपलक्षणार्थमेव । तेन व्यवहितोऽपि ब्राह्मणाद्वैश्यायां जातो गृह्यते । षट्संख्यातिरिक्तत्वान्न शूद्रायां पारशवः । मेधा.

( २ ) अपध्वंसजाः व्यभिचारजाताः शूद्रधर्मैरपि द्विजशुश्रूषादिभिरधिक्रियन्ते । ¶ मिता. १।९०

( ३ ) द्विजधर्मिणः पितृजातीयसदृशाः । अत्र स्वजातिजग्रहणात् वृत्त्यन्तरत्वेन योग्या उपनयनादौ । $ मवि.

( ४ ) ये पुनरन्ये द्विजात्युत्पन्ना अपि सूतादयः प्रतिलोमजास्ते शूद्रधर्माणः, नैषामुपनयनमस्ति । $ ममु.

( ५ ) तत्र विप्रादिवत् करणान्तानां त्रयाणां द्विजवदाशौचोपनयनाद्यतिदिशन् आयोगवक्षत्तृचण्डालमागधवैदेहसूतानां षण्णां शूद्रवदाशौचादिप्राप्तिमाह– सजातिजेति । अपध्वंसजा इति पारिभाषिका आयोगवादयः । मच.

( ६ ) स्वजातिजाः द्विजैः सवर्णायामुत्पादितास्त्रयः । अनन्तरजाः ब्राह्मणेन क्षत्रियायां क्षत्रियेण वैश्यायां वैश्येन शूद्रायामुत्पादितास्त्रयो मूर्धाभिषिक्तमाहिष्यकरणाख्याः संकीर्णाः । एते षट् द्विजधर्मिणः उपनयनमर्हन्तीत्यर्थः– इति केचित् । तच्चिन्त्यम् । अन्ये तु– स्वजातिजाः

---

(१) मस्मृ. १०।४१ ; मेधा. सजाति ( स्वजाति ) ; मिता. १।९० उत्त., स्मरणम् ; मवि. मेधावत् ; वीमि. १।९० उत्त. : १।९५ मेधावत् ; संप्र. ३४८ तु ( च ) उत्त. : ३८७ मेधावत्, पू. : ४०५ उत्त. ; शूक. २७२ उत्त. ; बाल. १।१६६ पू. ४३० उत्त. ; संग. ६३७ मेधावत्, पू. ; नन्द. मेधावत् ; भाच. मेधावत् ; सस्मृ. ३२ उत्त., स्मरणम्.

¶ शूक. मितागतम् । सस्मृ. मितावत् ।

$ शेषं मेधागतम् ।

सवर्णायामुत्पन्नाः शुद्धवर्णाः । अनन्तरजाः अनुलोमजाः । तत् किं शूद्रजात्युत्पन्ना अपि ? नेत्याह— षडिति । द्विजात्योरेवोत्पन्ना इत्यर्थः— इति व्याचक्षते । एतच्च 'पुत्रा येऽनन्तरस्त्रीजाः' ( मस्मृ. १०।१४ ) इत्यादिवचनानुसारीति मन्तव्यम् । अपध्वंसजाः व्यभिचारजाः । उपलक्षणमेतत् । तेन द्विजधर्मा( न )धिकारितया शूद्रधर्मा( न ? )धिकारितया च शास्त्रे प्रतिपादिता इति पर्यवसितार्थः । सर्वपदोपादानप्रयोजनमपीदमेव । सधर्माणः समानधर्माः । वीमि. १।९५

( ७ ) तत्रानुलोमजानामुपनयनमाह §मनुः—

स्वजातिजानन्तरजा इति । स्वजातिजा सवर्णा, अनन्तरा-

---

§ एतदादेः 'वेदाध्ययनानुपपत्तेरिति रहस्यम्' इत्यन्तस्य ग्रन्थस्य स्थानेऽत्र टिप्पण्यां संग्रहीष्यमाणोऽत्यन्तविरुद्धतात्पर्यको ग्रन्थ आदर्शपुस्तके पुस्तकान्तरीयपाठभेदत्वेन टिप्पण्यां संगृहीतः । स मित्रमिश्रोपज्ञं न स्यादिति वीमिव्याख्यानादत्र गृहीतात्प्रतिभाति । तथापि प्रस्थानान्तरमिति कृत्वाऽत्र संगृह्यते । स ग्रन्थो यथा—

"स्वजातिजानन्तरजाः षट् सुता द्विजधर्मिणः ।' इति । अस्यार्थः- 'स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितास्तु ये । सदृशानेव तानाहुर्मातृदोषविगर्हितान् ॥' इत्यनेनानुलोमजानां यत् द्विजसादृश्यमुक्तं तत्र निमित्ताभिधानायेदमारभ्यते— स्वजातिजेति । स्वजातिजाः सवर्णाः, ताभ्योऽनन्तराः पश्चादनुकल्पत्वेनाऽऽम्नाता ब्राह्मणस्य क्षत्रियावैश्याशूद्राः , क्षत्रियस्य वैश्याशूद्रे, वैश्यस्य शूद्रा, तासु ये जाता मूर्धावसिक्ताम्बष्ठनिषादमाहिष्योग्रकरणा द्विजातीनां षट् सुताः ते द्विजधर्मिणः । द्विजानां धर्मो द्विजधर्मः सोऽस्ति एषां ते द्विजधर्मिणः, द्विजात्युक्तोपनयनादिधर्मार्हा इत्यर्थः । क्षत्रियादिजाता इति वक्तव्ये यत् स्वजातिजानन्तरजा इत्युक्तं तत् क्षत्रियादिषूढव्यादिसुतानां द्विजधर्मत्वव्युदासाय, तत्परिणयनिषेधेन तदुत्पन्नानां विगर्हितत्वात् । ततश्च सवर्णादिक्रमोढासवर्णासुतानामेव द्विजधर्मित्वमिति सिध्यति । स्वजातय इत्यनेनैव सिद्धौ यज्जेत्युपादानं तत्पत्नीत्वोत्पत्तिं गमयति । ततश्च सवर्णस्वैरिणीपरिग्रहानन्तरोढाक्षत्रियाद्युत्पन्नानामपि न द्विजधर्मत्वमिति सिध्यति । अनन्तरास्वपि पत्नीत्वमनुसंधेयम्, तथैवोपक्रमात् । षट्संख्योपादानं द्विजातिभ्यपत्यानामेव द्विजधर्मत्वं मा भूत्, किंतु शूद्रापत्यानामपि तदस्त्वित्येवमर्थम् । सुता इति पुंस्त्वग्रहणं क्लीबादिव्युदासाय । उपनयनादिविशेषपरिहारेण द्विजधर्मिण इति सामान्योपादानं सकलद्विजधर्मप्राप्त्यर्थम् । यदा तु स्वजातिजाः सवर्णोत्पन्ना ये त्रयः सवर्णाः पुत्रास्तेभ्योऽनन्तरमसवर्णासु जाता मूर्धावसिक्तादयः षडनुलोमजाः सुतास्ते द्विजधर्मिणः द्विजात्युक्तधर्मार्हा इति व्याख्यायते तदा क्रमोढास्वपि प्रथमोत्पन्नानां क्षत्रियादिसुतानां द्विजधर्मित्वं न स्यात्, विवाहर्तुगमनक्रमयोः शास्त्रीयत्वेऽपि पुत्रोत्पत्तिक्रमस्याशास्त्रीयत्वात् । यत्तु कैश्चिन्निषादोग्रकरणपरिहारेण ब्राह्मणक्षत्रियवैश्यैः स्वजातिजैः सहानन्तरजानां मूर्धावसिक्ताम्बष्ठमाहिष्याणां त्रयाणामेव षट्त्वमभिप्रेत्य द्विजधर्मत्वं व्याख्यातम्, तन्न सुन्दरम्, ब्राह्मणक्षत्रियविशां 'मातुरग्रे विजननम्' इत्याद्युपदेशत एव द्विजधर्मत्वसिद्धौ द्विजधर्मातिदेशानर्थक्यात् । न चानन्तरजानां द्विजतुल्यताभिधानेन द्विजधर्मप्राप्त्यर्थः सिद्धस्यैवानुवादोऽयमिति युक्तम्, तेनैवार्थसिद्धौ 'षट् सुता द्विजधर्मिणः' इति पुनर्विध्यारम्भानर्थक्यात्, उभयस्वीकारे तु एकस्यैव द्विजधर्मिपदस्य मूर्धावसिक्तादित्रये द्विजधर्मविधायकत्वम्, ब्राह्मणादित्रये तदनुवादकत्वमिति विध्यनुवादविरोधाच्च । किंच, 'विप्रस्य त्रिषु वर्णेषु नृपतेर्वर्णयोर्द्वयोः । वैश्यस्य वर्णे चैकस्मिन्षडेतेऽपसदाः स्मृताः ॥' इत्युपक्रमे यत्संख्येयविषया षट्संख्या निर्णीता, 'स्वजातिजानन्तरजाः षट् सुता द्विजधर्मिणः ।' इत्युपसंहारेऽपि तत्संख्येयविषयैव सोपसंहर्तव्येति युक्तम्, अन्यथोपक्रमविरोधापत्तेः । अथ 'पुत्रा येऽनन्तरस्त्रीजाः क्रमेणोक्ता द्विजन्मनाम् ।ताननन्तरनाम्नस्तु मातृदोषात्प्रचक्षते ॥' इत्यनेन शूद्रायां द्विजात्युत्पन्नानामपि शूद्रनामकत्वाभिधानान्न द्विजधर्मत्वं युक्तमिति वाच्यम् । सत्यमस्ति शूद्रनामकत्वम्, तथापि न तेषां द्विजधर्मतापवादकम्, वचनद्वयस्याप्येककर्तृकस्मृतित्वेनानुलोमजमात्रविषयत्वेन च तुल्यबलत्वात् । किंतु विकल्पापादकमेव । न चासावपि वस्तुतः संभवति, मातृजातीयदण्डाजिनाद्यङ्गप्रापकात्तत्तज्जातीयवृत्त्यादिदृष्टप्रापकाद्वा मातृसनामकत्वविधेः प्रधानोपनयनाद्यदृष्टसंस्कारप्रापकस्य द्विजधर्मत्वविधेर्बलवत्त्वेन विपरीतबाध्यबाधकभावसंभवात् । किंच, निषादोग्रकरणानां द्विजधर्मतापरिहारे विध्यभावो वा निमित्तमाहोस्वित्तन्निषेधसद्भावो वेति पृच्छामः । न तावदाद्यः । 'षट् सुता द्विजधर्मिणः' 'सदृशानेव तानाहुः'

ऽनुकल्पत्वेनाऽऽम्नाता किंचिदपकर्षवती वा ब्राह्मणस्य क्षत्रिया वैश्या च, क्षत्रियस्य वैश्या च । एतासु जाताः

---

'आत्मा वै पुत्रनामासि' 'आत्मा हि जज्ञे आत्मनः' 'स एवायं विरूढः प्रत्यक्षेणोपलभ्यते' 'तत्राऽऽत्मा जायते स्वयम्' 'येषामुभयतो नाब्राह्मण्यं पितृत इत्येके' 'पुत्रप्रजनने मातुः प्राधान्यम्' । ‡ किंच, स्वजातिजानन्तरजा इत्यत्रानन्तरशब्दोऽव्यवधानवचनः आहोस्वित्पश्चाद्भाववचनः ? किं प्राप्तम् ? अव्यवधानवचन इति । कुतः ? 'स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितास्तु ये । सदृशानेव तानाहुर्मातृदोषविगर्हितान् ।। अनन्तरासु जातानां विधिरेष सनातनः । द्व्येकान्तरासु जातानां धर्म्यं विद्यादिमं विधिम् ।। ' ( मस्मृ. १०।६,७ ) इत्युपक्रमे अनन्तरशब्दस्यैकान्तरद्व्यन्तरशब्दसमभिव्याहारेणाव्यवहितपरत्वेनाभ्युपगमात् । तथा 'पुत्रा येऽनन्तरस्त्रीजाः क्रमेणोक्ता द्विजन्मनाम् ।ताननन्तरनाम्नस्तु मातृदोषात्प्रचक्षते ।। यथा त्रयाणां वर्णानां द्वयोरात्माऽस्य जायते । आनन्तर्यात्स्वयोन्यां तु तथा बाह्येष्वपि क्रमः ।। ' ( मस्मृ. १०।१४, २८ ) इति मध्येऽव्यवहितपरत्वेन परामर्शाच्चान्तेऽव्यवहितपरत्वस्यैवौचित्यात् । ततश्च ब्राह्मणस्य क्षत्रिया क्षत्रियस्य वैश्या वैश्यस्य शूद्रा चानन्तरा भवतीति तत्पुत्राणां द्विज( धर्म )त्वाभिधाने वैश्याच्छूद्रोत्पन्नस्य करणस्याप्युपनयनं सिध्येत् । अथानन्तरोत्पन्नस्यापि करणस्य शूद्रापत्यतया प्रद्वेषेण त्यागस्तर्हि षट्संख्या बाध्येत । अथ तदबाधाय ब्राह्मणवैश्योत्पन्नस्याम्बष्ठस्य ग्रहणं तर्ह्यानन्तर्यबाधस्तस्यैकान्तरोत्पन्नत्वादित्युभयतःपाशा रज्जुः । अथ क्वचिदव्यवधानं क्वचिच्चैकान्तरत्वं चानन्तरशब्दार्थस्तर्हि द्व्यन्तरत्वमप्यनन्तरशब्दार्थोऽस्तु, त्रितयसाधारणस्य पश्चाद्भावस्यैवैकस्य लाघवेन प्रवृत्तिनिमित्तत्वौचित्यात् । तथा च प्रक्रान्तानां षण्णामप्यनुलोमजानां द्विजधर्मत्वाभिधानं षण्णामपि प्रतिलोमजानां शूद्रधर्मत्वाभिधानमाञ्जस्येनैव घटते । अन्यथा निषादोग्रकरणा द्विजशूद्रधर्मत्वाभावादुभयतो भ्रष्टाः स्युः, क्वापि स्मृतौ पृथग्धर्माभिधानाभावात् । अथ 'पुत्रा येऽनन्तरस्त्रीजाः क्रमेणोक्ता द्विजन्मनाम् । ताननन्तरनाम्नस्तु मातृदोषात्प्रचक्षते ।। ' इत्यत्र मातृनामत्वव्यपदेशाच्छूद्रधर्मप्राप्तिरिति वाच्यम्, तर्हि 'स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितास्तु ये । सदृशानेव तानाहुर्मातृदोषविगर्हितान् ।। ' इत्यत्र द्विजसादृश्यनिर्देशेन द्विजधर्मत्वमेव कुतो नेष्यते ? नामातिदेशाद्वचनातिदेशस्य बलवत्त्वात् । तस्मात्सिद्धं षण्णामप्यनुलोमजानां द्विजत्वमिति । अत एवैतरेयब्राह्मणे निषादस्योपनयनलिङ्गं सत्रानुष्ठानं दृश्यते । तद्यथा–

'ऋषयो वै सरस्वत्यां सत्रमासत । ते कवषमैलूषं सोमादनयन् दास्याः पुत्रः कितवोऽब्राह्मणः कथं नो मध्येऽदीक्षिष्टेति । तं बहिर्धन्वोदवहन्नत्रैनं पिपासा हन्तु, सरस्वत्या उदकं मा पादिति । स बहिर्धन्वोदूल्हः (? ळ्हः) पिपासया वित्त एतदपोनप्त्रीयमपश्यत्– 'प्र देवत्रा ब्रह्मणे गातुरेतु' इति । तेनापां प्रियं धामोपागच्छत् । तमापोऽनूदायन् । तं सरस्वती समन्तं पर्यधावत् । तस्माद्धाप्येतर्हि परिसारकमित्याचक्षते यदेनं सरस्वती समन्तं परिससार । ते वा ऋषयोऽब्रुवन्– 'विदुर्वा इमं देवाः, उपेमं ह्वयामहै' इति । तथेति तमुपाह्वयन्त । तमुपहूयैतदपोनप्त्रीयमकुर्वत– 'प्र देवत्रा ब्रह्मणे गातुरेतु' इति । ततोऽपां प्रियं धामोपागच्छन् । उप देवानामुपापां प्रियं धाम गच्छत्युप देवानां जयति परमं लोकं य एवं वेद' इति ।

अत्रायं वाक्यार्थः– सरस्वतीतीरे सत्रमासीनैर्ऋषिभिरिलूषपुत्रः कवषनामा ऋषिः 'दासीपुत्रः कितवोऽब्राह्मणोऽस्माकं मध्ये कथं दीक्षिष्यति' इति मत्वा मरुदेशे नीत्वा पातितः 'अत्रैनं पिपासा हन्तु, सरस्वत्युदकमप्ययं मा पात्' इति । तत्रायं पिपासाखिन्नोऽब्दैवतं 'प्र देवत्रा' इति पञ्चदशर्चं सूक्तं सस्मार । तत्प्रयोगप्रभावेण सरस्वत्येव स्वदेशमपहाय तं प्रत्यधावत् । ततस्ते तस्य देवतानुग्रहं वेदप्रभावं च ज्ञात्वा सत्रे तं समाहूय तत्सूक्तप्रयोगेण सरस्वतीमविन्दन्निति । 'विदुर्वा इमं देवाः' इत्यनेनोपनयनकालीनदेवतासंप्रदानकबटुपरिदानमुक्तं भवति । तेन हि ते तं जानते 'अयमस्मदीयः' इति । तस्मात्सिद्धं निषादस्योपनयनमिति । रामायणे शरहतस्य ऋषिपुत्रस्य दशरथं प्रति वाक्यमपि– 'न द्विजातिरहं शङ्कां ब्रह्मवध्याकृतां त्यज । ब्राह्मणेन त्वहं जातः शूद्रायां वसता वने ।। ' । तत्पितुर्वाक्यमपि– 'कस्य चापररात्रेऽहं स्वाध्यायं कुर्वतो वने । श्रोष्यामि सुचिरं शब्दं पुण्यं शास्त्रमधीयतः ।। ' इति । महाभारतेऽपि दीर्घतमउपाख्याने– 'तस्यां काक्षीवदादीन्स शूद्रयोनावृषिस्तदा । जनयामास धर्मात्मा पुत्रानेकादशैव

---

‡ अतः परः कश्चिद्ग्रन्थस्त्रुटित इति प्रतीयते । किंचेदमन्त्यं वचनं प्रकृतार्थविरुद्धमिव प्रतिभाति ।

षट् । ‡ शूद्रापेक्षयाऽनन्तरवर्णस्याप्रसिद्धत्वात् स्वपदार्थे-स्त्रैवर्णिक एव । तेन शूद्रायां शूद्रजातस्य स्वजातिजाजन्यत्वेनाभिधानं न प्रसज्यते । न च 'ब्राह्मणक्षत्रियविशां मातुरग्रे विजननम्' इति सुमन्तुवचनेन सवर्णापुत्राणामुपनयनस्य प्राप्तत्वात् तदुपनयनविधानं व्यर्थमिति वाच्यम् । तथा सति षट्पदस्थाने त्रय इत्यभिधाने सवर्णापुत्राणां व्यवच्छेदलाभे सुमन्तुवचनविरोधापत्तेः । ऋष्यन्तरोक्तस्य मनुना विधाने वैयर्थ्याप्रसङ्गाच्च । अन्ये तु ब्राह्मणक्षत्रियवैश्यैः शूद्रायां जातांस्त्रीनादाय षट्त्वमुपनेयानां वर्णयन्ति । तदयुक्तम्, 'प्रतिलोमा धर्महीनाः शूद्रायां च' इति गौतमवाक्येन शूद्रायां द्विजोत्पन्नस्य द्विजधर्महीनत्वबोधनात् । अत एव 'पुत्रा येऽनन्तरस्त्रीजाः क्रमेणोक्ता द्विजन्मनाम् ।ताननन्तरनाम्नस्तु मातृदोषात्प्रचक्षते ॥' इति वचने 'मातृनाम्नो मातृतो जातिकल्पना' इति वचने च मातृवर्णस्यातिदेश उपपद्यते । न च 'स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितास्तु ये । सदृशानेव तानाहुर्मातृदोषविगर्हितान् ॥' (मस्मृ. १०।६) इति वचने द्विजसादृश्यं द्विजानन्तरायां शूद्रायां समुत्पन्ने बोधितमिति मातृनामवर्णातिदेशस्तदीयवृत्तिप्राप्त्यर्थं एवेति वाच्यम् । यतो विगर्हिताभिधानस्वरसेन तस्मिन्नर्धश्लोके मातुरुपस्थितत्वेन च मातृसादृश्यमेव वाक्यस्यार्थो न तु द्विजसादृश्यम् । न च † शूद्रायां त्रैवर्णिकोत्पन्नस्य द्विजधर्मत्वाभावे

---

तु ॥ काक्षीवदादीन्पुत्रांस्तान्दृष्ट्वा सर्वानधीयतः । उवाच तमृषिं राजा ममेम इति भारत ॥' इति । तत्रैव धृतराष्ट्राद्युत्पत्तावपि– 'धृतराष्ट्रश्च पाण्डुश्च विदुरश्च महामतिः । जन्मप्रभृति भीष्मेण पुत्रवत्परिपालिताः ॥ संस्कारैः संस्कृतास्ते तु व्रताध्ययनसंयुताः । श्रमव्यायामकुशलाः समपद्यन्त यौवनम् ॥ धनुर्वेदे च वेदे च गदायुद्धेऽसिचर्मणि । तथैव गजशिक्षायां नीतिशास्त्रे च पारगाः ॥ इतिहासपुराणेषु नानाशिक्षासु बोधिताः । वेदवेदाङ्गतत्त्वज्ञाः सर्वत्र कृतनिश्चयाः ॥' इति । अस्त्वेवं निषादादीनामुपनयनप्राप्तिः, दण्डाजिनादिप्राप्तिस्तु कुतः स्यात्? तन्मातॄणां शूद्राणां तदभावात् । मातृसनामतया च मातृजातीयतत्प्राप्तेरेव सिद्धान्तितत्वात्, इति चेत् । रथकारस्य वा तत्प्राप्तिः कुतस्त्येति ब्रूहि, तन्मातुः करण्या अपि तदभावात् । अथ तत्र पितुर्माहिष्यस्यैव दण्डादिना तदुपनयनं तर्हि प्रकृतेऽपि तदभ्युपगम्यताम् । युक्तं चैतत्, द्विजोत्पन्नानामनुलोमजानां द्विजसादृश्याभिधानस्य 'समानमितरच्छ्येनेन' इतिवद्वाचनिकातिदेशतया मातृनामातिदेशापेक्षया प्रबलत्वात् । तस्मात्सिद्धं द्विजानुलोमजानां द्विजत्वमिति ।" इति ।

‡ अत्रेदं विचार्यम्– 'स्वजातिजानन्तरजाः' इत्यत्र स्वसंबन्धिनोर्जातिजानन्तरापदार्थयोर्जननक्रियायामधिकरणत्वेनान्वयः प्रकाशकृतोऽभिप्रेतः । तत्रोभयान्वयानुयोगिन्येकैव जननव्यक्तिर्वा प्रतिप्रतियोगि भिन्ना वेति विवक्षाभ्यम् । यथा– 'हस्ताभ्यां कुठारनिपातनम्' इत्यत्र हस्तद्वयान्वयानुयोगिन्येकैव निपातनव्यक्तिर्विवक्षिता, 'हस्तयोः पवित्रधारणम्' इत्यत्र प्रतिहस्तं भिन्ना धारणव्यक्तिर्विवक्षिता । तत्र यदि जातिजानन्तरयोरुभयत्वेनैकस्यां जननव्यक्तावन्वयो विवक्षितः स्यात् तदा संभवदनन्तरासंबन्धस्त्रैवर्णिकः स्वपदार्थोऽभ्युपेयः स्यात्, तेन च जातिजायास्त्रैवर्णिकमात्रसंबन्धोऽप्यर्थसिद्धः स्यात् । न त्वेतदस्ति, द्वयोः स्त्रियोरेकजननव्यक्त्यधिकरणत्वासंभवात् । तथा च जातिजानन्तरयोः पृथगेव जननव्यक्त्योरन्वयोऽभ्युपेयः । सति च तस्मिन् 'स्वजातिजाजाः स्वानन्तराजाश्च' इत्यर्थस्य पर्यवसितत्वात् असंभवदनन्तरासंबन्धोऽपि संभवज्जातिजासंबन्धोऽत्रैवार्णिकोऽपि स्वपदार्थो ग्रहीतुं शक्य एव । न चैकमेवानुगतमुभयत्रान्वयिस्वपदवाच्यार्थतावच्छेदकमावश्यकमिति वाच्यम्, स्वपदस्य व्यक्तिवाचकत्वादननुगतस्य व्यक्तित्वस्यैव सर्वत्र वाच्यतावच्छेदकत्वात् । तथा च शूद्रायां शूद्रजातस्य स्वजातिजाजन्यत्वेनाभिधानं कथं न प्रसज्यते? तस्मात् प्रसक्तस्यापि व्यावर्तने, त्रैवर्णिकस्य स्वपदार्थत्वाभ्युपगमेऽपि ब्राह्मणादिभ्यः शूद्राजातस्य व्यावर्तने यो यत्नः समाश्रितः स एवाऽऽस्थेयः । स च षट्त्वसंख्यानुपपत्तिः 'शूद्रायां च' इत्यादिगौतमादिवचनैर्न्यायैकमूलकत्वानुपपत्तिश्चेत्यादिरिति ।

† 'शूद्रायाम्' इति पदं पूर्ववाक्यान्ते मुद्रितमादर्शपुस्तके । तत्र विचारविषयं मातृसादृश्यं द्विजसादृश्यं च शूद्रासमुत्पन्ननिष्ठं विवक्षितम्, न शूद्रानिष्ठम् । तेनेदं पदं पूर्ववाक्येऽनन्वितत्वादनर्थकम् । वाक्येऽस्मिंस्तु शूद्रा त्रैवर्णिका-

शूद्रधर्मस्य चानभिधाने उभयतोभ्रष्टत्वप्रसङ्गः, मातुनामवर्णातिदेशसाहचर्याभिधानत एव शूद्रधर्मत्वप्राप्तेः।

अथ "ऋषयो वै सरस्वत्यां सत्रमासत। (ते) कवषमैलूषं सोमादनयन् दास्याः पुत्रः कितवोऽब्राह्मणः कथं नो मध्येऽदीक्षिष्टेति। तं बहिर्धन्वोदवहन्नत्रैनं पिपासा हन्तु, सरस्वत्या उदकं मा पादिति। स बहिर्धन्वोदूळ्हः- (१ ऊह्ः) पिपासया वित्त एतदपोनप्त्रीयमपश्यत्—'प्र देवत्रा ब्रह्मणे गातुरेतु' इति। तेनापां प्रियं धामोपागच्छत्। तमापोऽनूदायन्। तं सरस्वती समन्तं पर्यधावत्। तस्माद्धाप्येतर्हि परिसारकमित्याचक्षते यदेनं सरस्वती समन्तं परिससार। ते वा ऋषयोऽब्रुवन्—'विदुर्वा इमं देवाः, उपेमं ह्वयामहै' इति। तथेति तमुपाह्वयन्त। तमुपहूयैतदपोनप्त्रीयमकुर्वत—'प्र देवत्रा ब्रह्मणे गातुरेतु' इति। तेनापां प्रियं धामोपागच्छन्। उप देवानामुपापां प्रियं धाम गच्छत्युप देवानां जयति परमं लोकं य एवं वेद' (ऐब्रा. ८।१) इत्यैतरेयब्राह्मणे दासीपुत्रस्य सत्रानुष्ठानश्रवणात्तस्याप्युपनयनं युज्यते। सरस्वतीतीरे सत्रमासीनैर्महर्षिभिरिलूषपुत्रः कवषनामा ऋषिः 'दासीपुत्रः कितवोऽब्राह्मणोऽस्माकं मध्ये कथं दीक्षयिष्यति' इति मत्वा मरुदेशे निपातितः 'अत्रैनं पिपासा हन्तु, सरस्वत्युदकमप्ययं मा पात्' इति। तत्रायं पिपासाखिन्नोऽन्दैवतं 'प्र देवता' इति पञ्चदशर्चं सूक्तं सस्मार। तत्प्रयोगप्रभावेण सरस्वत्यैव स्वदेशमपहाय तं प्रत्यधावत्। ततस्ते तस्य देवतानुग्रहं वेदप्रभावं च ज्ञात्वा सत्रे तं समाहूय तत्सूक्तप्रयोगेण सरस्वतीमविन्दन् इति हि श्रुत्यर्थ इति चेत्, मैवम्, "दासीपुत्रः कितवोऽब्राह्मणः' इत्याक्षेपमात्रम्, न तु वस्तुगत्यैव तन्मातुर्दासीत्वम्" इति भाष्यव्याख्यानात्। न च महाभारते दीर्घतमउपाख्याने 'तस्यां काक्षीवदादीन् स शूद्रयोनावृषिस्तदा। जनयामास धर्मात्मा पुत्रानेकादशैव तु॥ काक्षीवदादीन्पुत्रांस्तान् दृष्ट्वा सर्वानधीयतः। उवाच तमृषिं राजा ममेम इति भारत॥' इति स्मरणात् शूद्रस्यापि वेदाध्ययनाङ्गभूतमुपनयनमिति वाच्यम्, अध्ययनमात्रस्मरणेऽपि वेदाध्ययनास्मरणात्। न च रामायणे 'न द्विजातिरहं शङ्कां ब्रह्मवध्याकृतां त्यज। ब्राह्मणेन त्वहं जातः शूद्रायां वसता वने॥' इत्युक्तवतो मुनिपुत्रस्य दशरथहतस्य पित्रा 'कस्य चापररात्रेऽहं स्वाध्यायं कुर्वतो वने। श्रोष्यामि सुचिरं शब्दं पुण्यं शास्त्रमधीयतः॥' इति विलापे शूद्रापुत्रस्य वेदाध्ययनस्मरणात्तस्योपनयनमिति वाच्यम्। कुर्वत इत्यनेनान्वयाय स्वाध्यायपदस्य शोभनाध्ययनपरत्वेन वेदाध्ययनानवबोधात्।

नन्वादिपर्वणि 'धृतराष्ट्रश्च पाण्डुश्च विदुरश्च महामतिः। जन्मप्रभृति भीष्मेण पुत्रवत्परिपालिताः॥ संस्कारैः संस्कृतास्ते तु व्रताध्ययनसंयुताः। इतिहासपुराणेषु नानाशिक्षासु बोधिताः॥ श्रमव्यायामकुशलाः समपद्यन्त यौवनम्। धनुर्वेदे च वेदे च गदायुद्धेऽसिचर्मणि॥ तथैव गजशिक्षायां नीतिशास्त्रे च पारगाः। वेदवेदाङ्गतत्त्वज्ञाः सर्वत्र कृतनिश्चयाः॥' इति विदुरस्य वेदवेदाङ्गाध्ययनस्मरणात् शूद्रापुत्रस्याप्युपनयनमिति चेत्, मैवम्, धृतराष्ट्रादिनिष्ठबहुत्वसामानाधिकरण्यमात्रेण वेदादेरध्ययनं यथायोग्यमुन्नेयमिति विदुरस्य वेदाध्ययनाबोधनात्। अत एव विदुरेण श्रुत्यर्थस्य धृतराष्ट्रं प्रति उपदेशो न कृत इति भारतेऽभिहितम्। वस्तुतस्तु 'जातो नार्यामनार्यायामार्यादार्यो भवेद्गुणैः। जातोऽप्यनार्यादार्यायामनार्य इति निश्चयः॥ तावुभावप्यसंस्कार्यौ विधिधर्मो व्यवस्थितः। वैगुण्याज्जन्मनः पूर्व उत्तरः प्रतिलोमतः॥' इति मनुवचनं शूद्रापुत्रस्योपनयनं निषेधतीति तद्विपरीतत्वात् विध्यश्रवणाच्च रामायणाद्युक्तलिङ्गं न शूद्रापुत्रोपनयनं साधयितुं प्रभवति श्वजाघनीभक्षणादिवत्, तद्बोधितवेदाध्ययनाद्युपपत्तेरिति रहस्यम्। ३८७—३९७

प्रतिलोमजानामपि तन्नास्तीत्याह मनुः— 'शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः।' इति। शूद्रसाधर्म्येणैकजातित्वमुक्तं भवति। अपध्वंसजाः व्यभिचारोत्पन्नाः। प्रतिलोमजेष्विति वक्तव्ये यद्व्यभिचारज-

---

पादानकोत्पत्त्यधिकरणत्वेनाऽऽकाङ्क्षिता। अतः पूर्ववाक्यान्तेऽस्य मुद्रणं प्रामादिकमिति मत्वाऽत्र समाकृष्टमस्माभिरेतत्।

त्वेनाभिधानं तत्सवर्णानुलोमजयोरपि व्यभिचारोत्पन्नयोरनुपनेयत्वाभिधानाय । तदेतदुपपादितमधस्तात् । तत्र सूतोपनयनं शास्त्रान्तरेऽङ्गीकृतमिति हरदत्तः (गौमि. ४।२०)। तच्छास्त्रान्तरम् 'यथा त्रयाणां वर्णानां द्वयोरात्माऽस्य जायते । आनन्तर्यात्स्वयोन्यां तु तथा बाह्येष्वपि क्रमः ॥' (मस्मृ. १०।२८) इति मनुवचने मेधातिथिव्याख्या । सा यथा– अस्य ब्राह्मणस्य स्वयोनौ द्वयोः आनन्तर्यात् क्षत्रियवैश्ययोश्च एवं त्रयाणां वर्णानां यथा आत्मा द्विजो जायते तथा बाह्येषु प्रतिलोमजेष्वपि वैश्यक्षत्रियाभ्यां क्षत्रियाब्राह्मण्योरात्मा द्विजो जायत इति क्रमो वेदितव्यः । ततश्च सूतवैदेहकयोरप्युपनयनं भवतीति । तां च कुल्लूकभट्टनारायणसर्वज्ञौ नाभ्युपगच्छतः । 'प्रतिलोमास्तु धर्महीनाः' (गौध. ४।२०) इति गौतमवचनविरोधात्, 'शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः ।' इति मूलवचनविरोधाच्च । न चोक्तवाक्येनात्र सर्वपदसंकोचः, तस्यार्थान्तरत्वात् । तथा हि– यथा त्रयाणां वर्णानां ब्राह्मणक्षत्रियवैश्यानां मध्ये अस्य ब्राह्मणस्य स्वयोन्यां ब्राह्मण्याम् आनन्तर्यात् क्षत्रियायां चेत्येवं द्वयोः आत्मा ब्राह्मण एव भवति । यथाऽगस्त्यस्य क्षत्रियायां लोपामुद्रायां दृढच्युतादयो ब्राह्मणा एव । तथा बाह्येषु सूतादिप्रतिलोमेषु अस्य सूतस्य स्वयोन्यां सूतायाम् आनन्तर्याद्ब्राह्मण्यां च सूत एवेति वचनार्थो युक्तः । यत्तु– '¶ मृषा ब्राह्मणकन्यायां विवाहेषु समन्वयात् । जातः सूतोऽत्र निर्दिष्टः प्रतिलोमविधिर्द्विजः । वेदानर्हस्तथा चैषां धर्माणामनुबोधकः ॥' इत्युशनसो वाक्यम्, तस्यायमर्थः– ब्राह्मणकन्यायां मृषा विधिहीनेषु विवाहेषु ऊढायां समन्वयात् सजातीयात् जातः अत्र शास्त्रे प्रतिलोमविधिः प्रतिलोमधर्मा द्विजो निर्दिष्टः । स च वेदानर्हः, तथाप्येषां स्मार्तानां धर्माणाम् अनु पश्चात् ब्राह्मणं पुरस्कृत्य ब्राह्मणाभावे वा बोधकः उपदेष्टा भवति । ततश्च (विधिश्च ?) विधिविकलविवाहोढब्राह्मणीजातस्य ब्राह्मणस्यैव सूतसंज्ञस्य प्रतिलोमधर्मस्येदमुपनयनम्, न सूतजातेरिति न विरोधः ।

संप्र. ४०५–४०६

¶ अत्र मृषाशब्दस्थाने 'नृपात्' इति पाठोऽस्मदीयसर्वस्मृतिपुस्तकेषूपलभ्यते । यदि 'ब्राह्मण्यां क्षत्रियाच्चौर्याद्रथकारः प्रजायते । वृत्तं च शूद्रवत्तस्य द्विजत्वं प्रतिषिध्यते ॥' इत्येकश्लोकव्यवहितोत्तरस्मिन्नौशनसस्मृतिश्लोके चौर्यसंबन्धोक्तेः सूतरथकारयोः क्षत्रियाद्ब्राह्मण्यां जातत्वेन हेतुना प्राप्तस्याभेदस्य व्यावृत्त्यर्थं भेदबोधफलकवैधर्म्यबोधे स्वारस्यात् 'नृपात्' इति पाठ एव प्रामाणिक इति मतिस्तदा हरदत्त–मेधातिथिपक्ष एव सिद्धान्तपक्ष इत्यभ्युपेयं स्यात् । अस्यां स्मृतौ 'नृपायां वैश्यसंसर्गादायोगवः' 'नृपायां वैश्यतश्चौर्यात्पुलिन्दः' 'नृपायां शूद्रसंसर्गाज्जातः पुल्कसः' 'नृपायां शूद्रतश्चौर्याज्जातो रजकः' इत्येवं चौर्यसंबन्धेन पुत्रजातिव्यावर्तनं दरीदृश्यते ।

(८) संकीर्णजातीनां परिज्ञानोपायं शूद्रधर्मिणश्चाऽऽह– स्वजातिजानन्तरजा इति । ब्राह्मणक्षत्रियवैश्यशूद्राः स्वजातिजाः । अनन्तरवर्णजाताः । अपध्वंसाः प्रतिलोमजातयः । नन्द.

**'जातो नार्यामनार्यायामार्यादार्यो भवेद्गुणैः ।**
**जातोऽप्यनार्यादार्यायामनार्य इति निश्चयः ॥**

(१) नार्यां स्त्रियाम् अनार्यायां हीनजातीयायाम् आर्याज्जात उत्कृष्टजातीयाद्ब्राह्मणात् आर्य एव भवेत् ।

यद्यपि शूद्रकमलाकरधृते 'राज्ञो ब्राह्मणकन्यायां सूतो वर्णस्तु जायते । स राज्ञामश्वसारथ्यं चक्रे दक्षश्च नित्यशः ॥ सूतः प्रजापतिस्त्वन्यो मायारूपी जनार्दनः । वक्ता वेदादिशास्त्राणां पुराणानां च स स्मृतः ॥' इत्यादिपुराणवचने 'अन्य इति नाम्नैव सूतः, न तु जात्येत्यर्थः' इति कमलाकरव्याख्याने जातिसूतान्यस्य सूतस्यैव वेदवक्तृत्वान्यथानुपपत्त्या द्विजत्वं प्रतीयते, तथापि तद्वचनस्य प्रजापतित्व– मायारूपिजनार्दनत्वविशेषणाभ्यां पुराणप्रसिद्धव्यक्तिविशेषविषयकत्वेन विकलविवाहोढब्राह्मणीजातत्वसामान्यावच्छेदेन द्विजत्वबोधकत्वाभावात् न तद्विरोधः । न च व्यक्तिविशेषस्यापि वेदवक्तृत्वोक्तेः पूर्वोक्तजातिशूद्रस्य तदभावे तद्द्वारकद्विजत्वाभावे च तात्पर्यपर्यवसानात् विरोधतादवस्थ्यमिति वाच्यम्, औशनसवचने द्विजत्वेऽपि वेदानर्हत्वोक्तेर्वेदवक्तृत्वाभावसिद्धावपि द्विजत्वाभावासिद्धेः । तदिदं सर्वं सुधीभिर्निर्णेयम् ।

(१) मस्मृ. १०।६७; संप्र. ३९६; शूक. २५४ दार्यो (दर्यो) दार्याया (दर्याया).

किं ब्राह्मणजातीयत्वम् ? नेत्याह— गुणैः गुणतः गौण्या वृत्त्या पाकयज्ञाद्यधिकारमात्रेण । वक्ष्यमाणानार्यापेक्षयाऽऽर्य इत्युच्यते । अनार्यात् शूद्रात् आर्यायां ब्राह्मण्यां जातोऽनार्य एवैष निश्चयः । एतदुक्तं भवति— यावद्वचनमेव प्राधान्यमवतिष्ठते, नानुमानेन शक्यमन्यत्प्रसञ्जयितुम् । अतः समानजातीयागमनमेव युक्तम् । क्षेत्रप्राधान्यं क्षेत्रज एव, नान्यत्र । † मेधा.

( २ ) अनार्यायां नार्याम् आर्याज्जात आर्य एव श्रेष्ठ एव बीजप्राधान्याद्भवेत् । गुणैः यदि आर्यगुणैः युज्यते । यदि आर्यायामनार्याज्जातः स ब्राह्मणोत्पन्नोऽपि शूद्रतुल्य इत्यर्थः । मवि.

( ३ ) तत्र निर्णयमाह— जात इति । शूद्रायां स्त्रियां ब्राह्मणाज्जातः स्मृत्युक्तैः पाकयज्ञादिभिर्गुणैरनुष्ठीयमानैर्युक्तः प्रशस्यो भवति, शूद्रेण पुनर्ब्राह्मण्यां जातः प्रतिलोमत उत्पन्नतया शूद्रधर्मेष्वप्यनधिकारादप्रशस्य इति निश्चयः । न्यायप्राप्तोऽप्यर्थो वचनप्रामाण्यादत्र बोध्यते । ममु.

(४) नार्यां स्त्रियाम् अनार्यायाम् इन्द्रियात्(? आर्यात्) जातः गुणैः पाकयज्ञादिभिः आर्यः द्विजः भवेत्, अनार्यायां ( ? अनार्यादार्यायां ) जातोऽपि अनार्यः, शूद्रस्य पाकयज्ञानधिकारात् इति निश्चयः । भाच.

(५) $ नीचायामुत्तमजौ संस्कार्यौ, उत्तमायां नीचजौ नेत्यर्थः । शूक. २५४

( ६ ) बीजमुत्कर्षहेतुः, न क्षेत्रमित्यस्यार्थः । नन्द.

**[1]तावुभावप्यसंस्कार्याविति धर्मो व्यवस्थितः ।**
**वैगुण्याज्जन्मनः पूर्व उत्तरः प्रतिलोमतः ॥**

( १ ) एवं च कृत्वा उभावपि चण्डालः पारशवश्च असंस्कार्यौ अनुपनेयौ । अत्र हेतुवन्निगदोऽर्थवादः— वैगुण्याज्जन्मतः पूर्वः ब्राह्मणात् यः शूद्रायां जातः, सत्यपि बीजप्राधान्ये विगुणमेतस्य जन्म, योनिदोषात् । उत्तरश्चण्डालः । स प्रतिलोमः( ? लोमतः ) अत्यन्तप्रातिलोम्यात्, सत्यपि क्षेत्रप्राधान्ये पितृदोषात् । † मेधा.

( २ ) यद्यपि पूर्वस्य श्रैष्ठ्यं तथापि मातृदोषेण जन्मवैगुण्यात् पूर्वो न संस्कारार्हः, उत्तरस्तु प्रातिलोम्यात् क्षेत्रापेक्षया बीजस्यापकर्षादित्याह— तावुभाविति । एतच्च पूर्वस्योपनयनादियोग्यत्वमार्यतोक्त्या प्रागुक्त्वाऽपि पुनः संस्कारानर्हताभिधानाच्चास्योपनयन उपनेतृदोषः, उपनीतत्वेऽपि च यज्ञादियोग्यत्वं नास्ति, अतोऽग्राह्ययाजनं तद्याजनमिति दर्शयितुं संस्कारानर्हत्वमुक्तम् । अत एवाग्रे सर्वसंस्कारमिति विशेषयति । मवि.

( ३ ) पारशवचण्डालौ द्वावप्यनुपनेयाविति व्यवस्थिता शास्त्रमर्यादा । पूर्वः पारशवः शूद्राजातत्वेन जातिवैगुण्यादनुपनेयः । प्रातिलोम्येन शूद्रेण ब्राह्मण्यां जातत्वादित्युत्तरत्वेनानुपनेयः । ममु.

**'सुबीजं चैव सुक्षेत्रे जातं संपद्यते यथा ।**
**तथाऽऽर्याज्जात आर्यायां सर्वं संस्कारमर्हति ॥**

( १ ) पूर्वोक्तावसंस्कार्यौ, स्वजातिजास्तु संस्कार्या इत्युभत्राप्यर्थवादः । अत एतदेव स्थितम्— 'क्वचिद्बीजं क्वचिद्योनिः' इति यथोपदेशात् । एकान्तरपरिग्रहस्तु न युक्तः । मेधा.

( २ ) यथा शोभनबीजं शोभनक्षेत्रे जातं समृद्धं भवति, एवं द्विजातेर्द्विजातिस्त्रियां सवर्णायामानुलोम्येन च क्षत्रियावैश्ययोर्जातः सवर्णसंस्कारं क्षत्रियवैश्यसंस्कारं च सर्वं श्रौतं स्मार्तं चार्हति, न च पारशवचण्डालाविति पूर्वोक्तदार्ढ्यार्थमेतत् । $ ममु.

( ३ ) सदृष्टान्तं प्रतियोगितयाऽऽह— सुबीजमिति । सुक्षेत्रे शोभनं बीजमिव ब्राह्मणेनोढब्राह्मणीजः संस्कारार्हः

---

† मच. मेधागतम् ।

$ अत्र द्विवचनं प्रकरणात्कुण्डगोलकाभिप्रायेण ।

(१) मस्मृ. १०।६८ ; मेधा. ज्जन्मनः (ज्जन्मतः) ; संप्र. ३९६ याविति ध ( यौ विधिध ),

† मच., नन्द., भाच. मेधागतम् ।

$ नन्द., भाच. ममुगतम् ।

(१) मस्मृ. १०।६९.

इत्यनुवादमात्रम् । सर्वसंस्कारान्तेऽस्यैव पारिव्राज्यम् , ' पारिव्राज्यदर्शनाच्च ' इति शंकरभगवदुक्तेः । मच.

§'न शूद्रे पातकं किंचिन्न च संस्कारमर्हति ।
नास्याधिकारो धर्मेऽस्ति न धर्मात्प्रतिषेधनम् ॥

### व्यासः

विद्याग्रहणहोमकर्मणोः शक्त एवोपनेयः , मूकादीनामुपनयनं कृताकृतम् , शूद्रोऽनुपनेयः

'विद्याग्रहणशक्तस्य होमकर्मक्षमस्य च ।
उपायनेऽधिकारोऽस्ति मूकादीनां कृताकृतम् ॥
'न चेह शूद्रः पततीति निश्चयो
न चापि संस्कारमिहार्हतीति ।
श्रुतिप्रयुक्तं तु न धर्ममश्नुते
न चास्य धर्मे प्रतिषेधनं स्मृतम् ॥

### देवलः

व्यभिचारोत्पन्ना व्रात्याश्चानुपनेयाः

¶'द्वितीयेन तु यः पित्रा सवर्णायां प्रजायते ।
अवरोढ इति ज्ञेयः शूद्रधर्मा स जातितः ॥
'व्रतहीनास्त्वसंस्कार्याः सवर्णास्वपि ये सुताः ।
उत्पादिताः सवर्णेन व्रात्या इति बहिष्कृताः ॥

( १ ) यत्तु देवलेनोक्तम्— द्वितीयेनेति । तत् शास्त्रस्वीकृतक्षेत्रजकानीनसहोढगूढोत्पन्नपौनर्भवव्यतिरिक्तनियोगव्यभिचारोत्पन्नपुत्रविषयम् । अप. १।९२

( २ ) तथा कुण्डगोलकावपि शूद्रसमौ । तथा च स्मृतिकौमुद्यां देवलः— द्वितीयेनेत्यादि । तत्रैवाऽऽह मनुः— 'परदारेषु जायेते द्वौ सुतौ कुण्डगोलकौ । अमृते जारजः कुण्डो मृते भर्तरि गोलकः ॥ ' (मस्मृ.३।१७४)। ननु कुण्डगोलकयोरब्राह्मणत्वे कथं श्राद्धे निषेधः? स हि 'ब्राह्मणः श्राद्धसंपदे ' (यास्मृ. १।२२१) इत्युक्तेर्ब्राह्मणमात्रप्राप्तौ तेषां मध्ये केषांचिन्निषेधार्थः । यदाह याज्ञवल्क्यः— ' रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा । अवकीर्णी कुण्डगोलौ कुनखी श्यावदन्तकः ॥ ' ( यास्मृ. १।२२२ ) इति । तयोश्चाब्राह्मण्ये प्राप्त्यभावान्निषेधो व्यर्थः । तथा स्मृत्यर्थसारे ब्राह्मे च तयोः संस्कार्यत्वमुक्तम्— ' केचिदाहुर्द्विजैर्जातौ संस्कार्यौ कुण्डगोलकौ । ' इति, तदपि न युज्यत इति । उच्यते— ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मण इति भ्रमप्राप्तस्य श्राद्धे निषेध इति विज्ञानेश्वरः । कुण्डगोलकयोः संस्कार्यत्वं श्राद्धे निषेधश्च क्षेत्रजपरः , शास्त्रानुज्ञानात् , अन्यस्यात्राब्राह्मणत्वेन प्राप्त्यभावात् , उपायेयसंकरेऽप्युपायेरसंकरादित्यपरार्कः ।

शूक. २५३-२५४

### उशना

सूतसुवर्णावुपनेयौ, रथकारोऽनुपनेयः

‡'नृपाद्ब्राह्मणकन्यायां विवाहेषु समन्वयात् ।
जातः सूतोऽत्र निर्दिष्टः प्रतिलोमविधिर्द्विजः ।
वेदानर्हस्तथा चैषां धर्माणामनुबोधकः ॥

विवाहसंबन्धेनोढायां ब्राह्मणकन्यायामित्यर्थः ।

शूक. २६६

'ब्राह्मण्यां क्षत्रियाच्चौर्याद्रथकारः प्रकीर्तितः ।
वृत्तं च शूद्रवत्तस्य द्विजत्वं प्रतिषिध्यते ॥
विधिना ब्राह्मणः प्राप्य नृपायां तु समन्त्रकम् ।
जातः सुवर्ण इत्युक्तः सानुलोमद्विजः स्मृतः ॥

---

§ अस्य व्याख्यानानि संस्कारोपोद्घातप्रकरणे ( पृ. ४३ ) द्रष्टव्यानि ।

¶ अनयोः संप्रव्याख्यानं ' सवर्णासु ' इत्यादिपुराणवचनव्याख्याने द्रष्टव्यम् । संग. संप्रगतम् ।

(१) मस्मृ. १०।१२६. शेषस्थलादिनिर्देशाः संस्कारोपोद्घातप्रकरणे ( सं. का. पृ. ४३ ) द्रष्टव्याः .

(२) मुक्ता. १००.

(३) अस्य स्थलादिनिर्देशः संस्कारोपोद्घातप्रकरणे ( सं. का. पृ. ५५ ) द्रष्टव्यः .

(४) अप. १।९२ रोढ ( रीढ ) ज्ञेयः ( ख्यातः ) ; संप्र. ३९७ ; शूक. २५३-२५४ अवरोढ ( सवर्णोद ) स ( च ) ; संग. ६३९.

(५) अप. १।९२ ; संप्र. ३९७ (=) बहिष्कृ ( बहिः कृ ) ; शूक. २५४ ; संग. ६३९ (=).

‡ अस्य संप्र. व्याख्यानं ' सजातिजा ' इति मनुवचने ( सं. का. पृ. ३०१६ ) द्रष्टव्यम् ।

(१) औस्मृ. २-३ ; संप्र. ४०६ नृपाद्ब्रा ( मृषाब्रा ) ; शूक. २६६ सूतोऽत्र ( सूतस्तु ) विश्वम्भरशास्त्रे.

(२) औस्मृ. ५, २३-२४.

## स्मृत्यन्तरम्

सवर्णाम्बष्ठनिषादा उपनेयाः, अनुलोमानामुपनयनेऽपि न वेदाध्ययनादि, द्वादशविधाः पुत्रा उपनेयाः, द्विजजातौ कुण्डगोलकावुपनेयौ, द्विजातिप्रतिलोमा उपनेया इति मतान्तरम्

**'सवर्णमुपनीय धनुर्वेदं शिक्षयेत्, अम्बष्ठमुपनीय वैद्यशास्त्रम्, निषादमुपनीय हस्तशिक्षां शिक्षयेत्, अन्येषामुपनयनाभावः ॥**

**'अनुलोमानामुपनयनमेव, न वेदाध्ययनं न पञ्चयज्ञं नौपासनं नाग्निहोत्रं न समित्कार्यं न संध्योपासनम्, उपनयनमपि तूष्णीमेव ॥**

**औरसक्षेत्रजाश्चैषां संस्कार्या भागहारिणः ॥**
**औरसः पुत्रिकापुत्रः क्षेत्रजो गूढजस्तथा ।**
**कानीनश्च पुनर्भूजो दत्तः क्रीतश्च कृत्रिमः ॥**
**दत्तात्मा च सहोढश्च त्वपविद्धसुतस्ततः ।**
**पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः ॥**
**एते द्वादश पुत्राश्च संस्कार्याः स्युर्द्विजातयः ।**
**'केचिदाहुर्द्विजाज्जातौ संस्कार्यौ कुण्डगोलकौ ।**
**'द्विजातिप्रतिलोमानां केचिदाहुः पुराणगाः ॥**

## स्कन्दपुराणम् (काशीखण्डे)

ब्राह्मणक्षत्रियवैश्या उपनेयाः

**'ब्राह्मणक्षत्रिया वैश्यास्त्रयो वर्णा द्विजाः स्मृताः ।**
**प्रथमं मातृतो जात(? जन्म)द्वितीयश्चो-**
**(? यं चो)पनायनात् ।**
**एका क्रिया निषेकादिश्मशानान्ता च वैदिकी ॥**

## ब्रह्मपुराणम्

कुण्डगोलकावुपनेयौ

**'एवमेव द्विजैर्जातौ संस्कार्यौ कुण्डगोलकौ ॥**

(१) ममा. ४।२६. (२) ममा. ४।२५

(३) हमा. २२५ जाज्जातौ (जैर्जातौ); मुक्ता. १००. (४) मुक्ता. १००. (५) सस्मृ. ५१.

(६) प्रपा. २२० ; गभा. २३१ प्रयोगपारिजाते स्मृत्यर्थसारे च ; संप्र. ३९७, ४०० ; सिन्धु. ९४५

(१) एवं मूकाद्युपनयनविधिनेत्यर्थः ।

‡ संप्र. ३९८

(२) कुण्डगोलकयोः संस्कार्यत्वं श्राद्धे निषेधश्च क्षेत्रजपुत्रविषयः । अन्यस्य 'विन्नास्वेष विधिः स्मृतः' इति वचनात् अब्राह्मण्येनोपनयनाद्यप्राप्तेरित्यपरार्कः ।

सिन्धु. ९४५

[ कुण्डेति । 'सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः । अनिन्द्येषु विवाहेषु पुत्राः संतानवर्धनाः ॥' इत्यस्य वेत्तृभ्यः सवर्णेभ्यः अनिन्द्यविवाहोढायां सवर्णायां जातः तत्समानजातीय इत्यर्थः, 'विन्नास्वेष विधिः स्मृतः' इत्युपसंहारे विन्नपदोपादानात् । क्षेत्रजेति । सवर्णजेत्यर्थः । अन्यस्येति । तेषां शूद्रधर्मेषु द्विजशुश्रूषादिषु साधारणधर्मेष्वहिंसादिषु चाधिकारः । वस्तुतस्तु कुण्डगोलककानीनादीनां विज्ञानेश्वरमते असवर्णत्वमेव । नन्वेवं कुण्डगोलकयोरब्राह्मण्ये श्राद्धे प्रतिषेधो व्यर्थः । किंच, ब्राह्मण्यां ब्राह्मणादुत्पन्नस्याब्राह्मण्यमपि विरुद्धम्, 'तज्जातीयात्तज्जातीयायामुत्पन्नस्य तज्जातीयत्वम्' इति न्यायात्, यथा गवि गोरुत्पन्नो गौरिति । मैवम्, 'विन्नासु' इत्युपसंहारेण तस्याब्राह्मणत्वात् अत्यन्ताप्राप्तपतितनिषेधवच्छ्राद्धे तन्निषेधः । उक्तन्यायश्च प्रत्यक्षगम्यमनुष्यत्वगोत्वादिष्वेव, न तु ब्राह्मणत्वादौ, तस्य स्मृतिगम्यत्वादिति । कृभ. ]

## आदिपुराणम्

अवरोढकसंज्ञकौ कुण्डगोलकावनुपनेयौ

**'सवर्णासु सवर्णैस्तु ये जायन्ते परैरपि ।**
**अवरोढकसंज्ञास्ते व्रतसंस्कारवर्जिताः ॥**

ये त्वनुलोमजा अप्यनूढोत्पन्नाः कुण्डगोलकास्तेषामुपनयनं न सर्वस्मृतिसंमतम्, वर्णजातिलक्षणाभावात् ।

‡ संग. संप्रवत् ।

ब्राह्मे स्मृत्यर्थसारे च ; शूक. २५५ स्मृत्यर्थसारे ब्राह्मे च ; विपा. ४८२ प्रयोगपारिजाते ; बाल. १।१४ पृ. ४७ ब्राह्मे स्मृत्यर्थसारे च ; संग. ६३९, ६४०.

(१) संप्र. ३९७ ; शूक. २५४ ढक (टक) ; संग. ६३९.

तथा चाऽऽदिपुराणे– 'सवर्णासु... वर्जिताः ॥' । परैः स्वपत्यतिरिक्तैः । अवरोढक इति कुण्डगोलकयोः साधारणी संज्ञा । देवलोऽपि– ' द्वितीयेन तु यः पित्रा सवर्णायां प्रजायते । अवरोढ इति ज्ञेयः शूद्रधर्मा स जातितः ॥ ' शूद्रधर्मा अनुपनेय इत्यर्थः । तथा ' व्रतहीनास्त्वसंस्कार्याः सवर्णास्वपि ये सुताः । उत्पादिताः सवर्णेन व्रात्या इति बहिः कृताः ॥ ' अपिशब्दादसवर्णानुलोमासु जातानां सुतरामसंस्कार्यत्वमुक्तं भवति । अन्ये तु तयोरप्युपनयनमिच्छन्ति । तथा च ब्रह्मपुराणम् – 'एवमेव द्विजैर्जातौ संस्कार्यौ कुण्डगोलकौ । ' इति । तदेवं कुण्डगोलकयोर्विधिनिषेधाभ्यामुपनयने विकल्पमेके मन्यन्ते । अपरे तु क्षेत्रजगूढजकानीनपौनर्भवसहोढानां कुण्डगोलकत्वेऽपि नियोगाद्यभ्यनुज्ञानदर्शनादुपनयनविधिं तद्विषयमेवाऽऽहुः । यत्युत्पन्नस्य सत्यपि कुण्डगोलकत्वे सगोत्रोढोत्पन्नस्य च नोपनयनम् । चण्डालत्वस्मरणात् । तथा च बौधायनः– ' आरूढपतितापत्यं ब्राह्मण्यां यश्च शूद्रजः । सगोत्रोढासुतश्चैव चण्डालास्त्रय ईरिताः ॥ ' इति । ¶ संप्र. ३९७–३९८

## स्मृत्यर्थसारः

द्वादशविधाः पुत्रा अनुलोमजाश्चोपनेयाः, कुण्ड- गोलकौ मतभेदेनोपनेयावनुपनेयौ च, प्रतिलोमजा अनुपनेयाः

**[१]औरसः क्षेत्रजश्चैतौ संस्कार्यौ भागहारिणौ ॥**

**[२]औरसः पुत्रिकापुत्रः क्षेत्रजो गूढजस्तथा ।**
**कानीनश्च पुनर्भूजो दत्तः क्रीतश्च कृत्रिमः ॥**

**[१]दत्तात्मा च सहोढाजस्त्वपविद्धसुतस्ततः ।**
**एते द्वादश पुत्राश्च संस्कार्याः स्युर्द्विजातयः ॥**

**[२]केचिदाहुर्द्विजैर्जातौ संस्कार्यौ कुण्डगोलकौ ।**
**संस्कार्यौ मा भवत्यद्धा इति कैश्चिदुदीरितम् ॥**

**[३]कलौ दश निषिद्धाः स्युर्दौहित्रं चौरसं विना ।**
**संस्कारेण भवन्त्यर्हा इति कैश्चिदुदीरितम् ॥**

**[४]विप्रान्मूर्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम् ।**
**अम्बष्ठः शूद्र्यां निषादो जातः पारशवोऽपि वा ॥**

**वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ ।**
**वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः ॥**

**एतेऽनुलोमजाः पुत्राः संस्कार्याः स्युर्द्विजातिजाः ।**
**तथा मूर्धावसिक्तादिजातिजाश्च द्विजातयः ॥**

**ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहकस्तथा ।**
**शूद्राज्जातस्तु चण्डालः सर्वधर्मबहिष्कृतः ॥**

**क्षत्रिया मागधं वैश्याच्छूद्रात्क्षत्तारमेव च ।**
**शूद्रादायोगवं वैश्या जनयामास वै सुतम् ॥**

**माहिष्येण करण्यां तु रथकारः प्रजायते ।**
**इत्याद्याः प्रतिलोमाः स्युर्द्विजधर्मबहिष्कृताः ॥**

---

¶ संग. संप्रगतम् ।

(१) स्मृसार. ४.

(२) स्मृसार. ४; धप्र. ४० कापुत्रः (पुत्रश्च) कानीन (कनीय) जो दत्तः क्री (तो दत्तक्री); मुक्ता. १०१ र्भूजो (र्भूतो) स्मृतिरत्ने; संग. ५४६ (=) मुक्तावत्.

(१) स्मृसार. ४ तयः (तिषु); धप्र. ४०; मुक्ता. १०१ ढाजस्त्व (दश्च अ) स्ततः (स्तथा) स्मृतिरत्ने; संग. ५४७ (=) सुतस्ततः (स्तु तत्समः) पू.

(२) स्मृसार. ४; गभा. २३१ केचिदाहुर्द्वि (एवमेव द्वि) प्रयोगपारिजाते स्मृत्यर्थसारे च, पू.; धप्र. ४० पू.; चम. १६ पू.; सिन्धु. ९४५ सर्वे गभावत्; शूक. २५५ सर्वे गभावत्; बाल. १।१४ पृ. ४७ सर्वे गभावत्: पुनः (=) पू.; संग. ६४०.

(३) धप्र. ४०. (४) स्मृसार. १३.

## वैखानसगृह्यसूत्रम्

शुचीनां विदुषां च पित्रादिबान्धवानामुपनेतृत्वम्, तदभावेऽन्यस्योपनेतृत्वम्

[1]पितृभ्रातृज्ञातिसगोत्रमातुलादिषु यः शुचिर्विद्वानुपनयनं करोति। अन्यथा मलान्धकारौ तेन याजयति। पित्रादिबान्धवालाभेऽन्यं ब्राह्मणमुपनयनार्थे भजेत ॥

## बौधायनः

पितुर्मुख्यमुपनेतृत्वम्, तदभावेऽनुकल्पास्तेषु हेयोपादेयाश्च

[2]जातकर्मादिसंस्कारे पिता श्रेष्ठतमः स्मृतः।
अभावे स्वकुलीनः स्याद्बान्धवो वाऽन्यगोत्रजः ॥
[3]आर्यावर्तसमुद्भूतस्तस्याभावे स्वसूत्रकः।
ब्राह्मणः सर्ववर्णानां श्रोत्रियो वा स्ववर्णजः ॥
[4]गृहस्थः सर्ववर्णेषु श्रेष्ठ इत्यभिधीयते।
अभार्यस्त्वधमो ज्ञेय उपकुर्वाणनैष्ठिकौ ॥
[5]आचार्यौ मध्यमौ ज्ञेयौ सगोत्रौ व्रतिनावपि।
वानप्रस्थयतीनां तु कर्तृत्वं नेष्यते सदा ॥
[6]जितेन्द्रियो जितद्वन्द्वस्तपोदानपरायणः।
सत्यवादी जितः प्राज्ञो मेधावी नियतः शुचिः ॥
निःसंदिग्धः कुलीनश्च श्रौतकर्मणि तत्परः।
निग्रहानुग्रहे दक्षः सर्वदोषविवर्जितः।
गायत्रीमन्त्रकुशल आचार्यः स उदाहृतः ॥

(१) वैगृ. ६।७.
(२) मुक्ता. १०० ; आन. १५९ पू.
(३) मुक्ता. १०० ; आन. १५९ स्वसूत्र (ससूत्र) पू.
(४) मुक्ता. १०० ; आन. १५९ र्यस्त्वध (र्यो मध्य).
(५) मुक्ता १०० ; आन. १५९ गोत्रौ व्र (गोत्रव्र).
(६) मुक्ता. १००.



[1]कुलद्वये तथोत्सन्ने प्राप्ते गर्भाष्टमे बटुः।
मौञ्जीबन्धनकर्मार्थे स्वशाखाध्यायिनं द्विजम्।
स्वगोत्रप्रवरं नो चेदाश्रयेदन्यगोत्रजम् ॥

ज्ञातस्वगोत्रस्य आचार्यगोत्रं न प्रसज्जेदित्यर्थः। आन. १५९

## आपस्तम्बः हिरण्यकेशिधर्मसूत्रं च

कुलीनस्य विदुषश्चोपनेतृत्वम्

[2]तमसो वा एष तमः प्रविशति यमविद्वानुपनयते यश्चाविद्वानिति हि ब्राह्मणम् ॥

(१) यश्चाविद्वानुपनयते सोऽपि तमः प्रविशतीत्यर्थः। § अप. १।१५

(२) विद्वानेवोपनेताऽभिगम्यत इति विधातुमविदुषो निन्दामाह— तमस इति। यथा कश्चित् तमसः सकाशात्तम एव प्रविष्टो न किंचिज्जानाति एवमेवैष यं माणवकमविद्वानुपनयते, तथा यश्चाविद्वान्। उपनीयते इत्यपेक्ष्यते। यश्च स्वयमविद्वान् सन्नुपनीयते सोऽपि तमस एव तमः प्रविशति। ‡ अस्मिन्नर्थे ब्राह्मणमपि भवतीति। ¶ उ.

§ स्मृच. अपवत्।

‡ 'तमसो वा एषः' इत्यादि न ब्राह्मणवाक्यम्, अपि तु आपस्तम्बवचनमित्यत्र हरदत्तपारिजातकारप्रकाशकाराणां संप्रतिपत्तिः। ब्राह्मणसंवादोऽत्र केवलं प्रतिज्ञातः न ब्राह्मणवाक्यमत्रोद्धृतमिति हरदत्तोऽभिप्रैति, पारिजातकारप्रकाशकारौ तु 'तस्मिन्नभिजन' इत्युत्तरसूत्रं ब्राह्मणवाक्यं मन्येते इति तेषां विप्रतिपत्तिः। तदेतत्तेषां व्याख्यानतः प्रतीयते।

¶ मुक्ता. उवत्।

(१) मुक्ता. १०० ; आन. १५९ (=) स्वगोत्र (सगोत्र) प्रथमार्धं नास्ति.

(२) आध. १।१।११ ; हिध. २६।१।१९ हि ब्राह्मणम् (विज्ञायते) ; अप. १।१५ पृ. ३३ यम (यद) हि ब्राह्मणम् (ब्राह्मणानाम्) ; स्मृच. ३३ ; कश्या. १०८ यते यश्चावि (येत यश्च वि) ; प्रपा. २१९ ; संप्र. ३३७

( ३ ) अस्मिन्नर्थे ब्राह्मणमपि भवति । किं पुनस्तत् ? ' तस्मिन्नभिजन... ' । § प्रपा. २१९

( ४ ) अस्यार्थः– यं माणवकम् अविद्वान् वेदादिविद्याशून्यः आचार्यः उपनयते स माणवकः तमसः अज्ञानात् तमः अज्ञानान्तरं प्रविशति । न केवलमुपनेयस्यैवायं दोषः, अपि तूपनेतुरपीत्याह– यश्चाविद्वानिति । यश्चाविद्वानाचार्योऽन्यमुपनयते सोऽपि तमसस्तमः प्रविशति । अस्मिन्नर्थे वक्ष्यमाणं ब्राह्मणम् । संप्र. ४०८

( ५ ) यं माणवकमविद्वान् अजानानः गायत्रीस्वरूपमपीत्यर्थः । यश्च स्वयमविद्वान् मन्त्रार्थज्ञानविहीनश्च सन्नुपनयते एष स्वयं तमःस्वरूपः तम एव प्रविशति । ननु तद्यथा । लोके तमोनिवृत्त्यर्थं दीप अपेक्षितः तमसाविष्टप्रदेशस्य पुनश्च कवाटबन्धादिना तमःसंपादनमिव । अज्ञस्य माणवकस्य अज्ञेन उपदेश इत्यर्थः । आन. १५९

( ६ ) ' वेदमजानानो यं माणवकमुपनयते ( स ) माणवकः अविद्वान् य उपनेता स च तमसः पापकर्मणः सकाशात् पापफलं दुःखाख्यं तमः मोहकरत्वात् प्रविशति प्राप्नोति । माणवको ह्यज्ञाननिरासार्थं विद्यार्थं संस्कारमपेक्षते । स यदाऽविदुषा कृतस्तदा तेन विद्या न प्राप्नोति । लोकनिन्दितेन कर्मणोभावपि दुःखं च प्राप्नुत इति विज्ञायते श्रुतिरित्यर्थः ' इति व्याख्यातम् ‡उज्ज्वलाकृता । संर. १८२

**'तस्मिन्नभिजनविद्यासमुदेतं समाहितं संस्कर्तारमीप्सेत् ॥**

§ शेषम् उक्तं ।

‡ इयमुज्ज्वला महादेवदीक्षितीया हिरण्यकेशिधर्मसूत्रव्याख्या ।

(=) ( यश्चा ...णम्० ) : ४०८ श्रुतिः ; मुक्ता. ९९ ; आन. १५९ ; संर. १८२ हिधवत् .

(१) आध. १।१।१२ ; हिध. २६।१।११ मीप्सेत् ( मिच्छेत् ) ; विश्व. १।१ ( तस्माद्विद्याभिजनसमुदेतं संस्कर्तारमीप्सेत् ) ; अप. १।१५ पृ ३३ तस्मिन्न (तस्माद) देतं ( पेतं ) प्सेत् ( प्सेत ) ; स्मृच. ३३ ; चश्रा. १०८ ( तस्मादभिजनविद्यासमुपेतं समाहितं संस्कारमीप्सेत ) ; प्रपा. २१९ ; संप्र. ४०८ देतं ( दितं ) श्रुतिः ; मुक्ता. ९९ ; आन. १५९.

( १ ) कीदृशस्तर्ह्युपनेताऽभिगम्यः ? तमाह– तस्मिन्निति । अविच्छिन्नवेदवेदिसंबन्धे कुले जन्म अभिजनः । षड्भिरङ्गैः सहैव यथावदर्थज्ञानपर्यन्तमधीतो वेदो विद्या । सर्वासंभवे वेद एव वा । तस्मिन्नुपनयने कर्तव्ये ताभ्याम् अभिजनविद्याभ्यां समुदेतं संपन्नं समाहितं विहितप्रतिषिद्धेष्ववहितमनसं संस्कर्तारम् आचार्यम् ईप्सेत् । इच्छया करणं लक्ष्यते । आप्नुयात् अभिगच्छेदिति । उ.

( २ ) एतच्च लक्षणाभिधानं पितृव्यतिरिक्तानां गुरुत्वमौपचारिकमिति दर्शयितुम् । अत एव मनुः श्रुतोपकारिणि पूज्यत्वमात्राभिप्रायेण गुरुशब्दमाह– ' अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः । तमपीह गुरुं विद्याच्छ्रुतोपक्रियया तया ॥ ' ( मस्मृ. २।१४९ ) । स्मृच. ३३–३४

( ३ ) किं पुनस्तत् ? ' तस्मिन्नभि... ' । प्रपा. २१९

( ४ ) अभिजन... इति । अभिजनः बन्धुसमुदायः, विद्याः वेदाद्याश्चतुर्दश, ताभ्यामुत्कृष्टम् । समाहितम् अविक्षिप्तचित्तम् । एतादृशमुपनेतारमुपेयादित्यर्थः । संप्र. ४०८

## बृहस्पतिः

पितुरुपनेतृत्वम्

**'एवं दण्डादिभिर्युक्तं संस्कृत्य तनयं पिता । वेदमध्यापयेद्यत्नाच्छास्त्रं मन्वादिकं तथा ॥**

(१) अप. १।३४ तनयं ( विधिवत् ) ; ब्रक. २४० भिर्यु ( कैर्यु ) येद्यत्नाच्छा ( येच्छान्तं शा ) ; स्मृच. ३३ ; पमा. १४३ भिर्यु ( कैर्यु ) येद्यत्ना ( येत्पश्चा ) दिकं ( दिके ) ; गप. २१८ भिर्यु ( कैर्यु ) ; निप्र. ११ ( भागः २ ), २४१ ( भागः २ ) गपवत् ; चम. ३१

## व्यासः

उपनेतृगुणाः, संन्यासिनो नोपनेतृत्वेऽधिकारः

'वेदैकनिष्ठं धर्मज्ञं कुलीनं श्रोत्रियं शुचिम् ।
स्वशाखाढ्यमनालस्यं विप्रमक्रुद्धमत्वरम् ।
कर्तारमीप्सेद्विप्रस्तु चतुर्थाश्रमिणं न तु ॥

(१) कर्तारम् उपनयनकर्तारम् । श्रोत्रियस्तु ब्रह्मपुराणेऽभिहितः— 'जन्मना ब्राह्मणो ज्ञेयः संस्काराद् द्विज उच्यते । विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते ॥' इति । $ प्रपा. २१९

(२) उक्ताधिकार्यभावे तु व्यासः— 'वेदैकनिष्ठं...' इति । कुम. ९४३

(३) वेदेषु वेदयोर्वेदे वैका निष्ठा यस्य । श्रोत्रियः छन्दोध्यायी, 'श्रोत्रियंश्छन्दोऽधीते' (पासू. ५।२। ८४) इति पाणिनिस्मरणात्, 'धर्मेण वेदानामेकां शाखामधीत्य श्रोत्रियो भवति' इति धर्मसूत्राच्च । स्वशाखाढ्यं स्वस्य या पारम्पर्यागता शाखा तयाऽऽढ्यम् । एतेन स्वशाखीय एवाऽऽचार्यो भवतीति सूचितम् । विप्रग्रहणं क्षत्रियवैश्यनिवृत्त्यर्थम् । शूद्रस्य निवृत्तिस्तु वेदाध्ययनाद्यभावादेव भवति । संर. १८१

---

$ संप्र. प्रपावत् ।

येद्यला (येत्पश्चा) उत्त.; मुक्ता. १०४; आन. १६२; बाल. १।३ पृ. ५ सर्वे चमवत् .

(१) प्रपा. २१९ चतुर्थपादे (विप्रं कर्तारमीप्सति); संप्र. ४०८ शाखाढ्य (शाखाज्ञ) चतुर्थपादे (विप्रं कर्तारमीप्सितम्); मुक्ता. ९९ श्रोत्रियं शुचिम् (च कुटुम्बिनम्) द्विप्रस्तु (द्विप्रं वा); संम. २५ शाखाढ्य (शाखीय) चतुर्थपादे (विप्रं कर्तारमीप्सितम्); विपा. ४८१ शाखाढ्य (शाखाज्ञ) शेषं प्रपावत्; संको. ११८ चतुर्थपादे (विप्रं कर्तारमीप्सितम्); आन. १५९ श्रोत्रियं शुचिम् (च कुटुम्बिनम्); संग. ६५९ चतुर्थपादे (विप्रं कर्तारमीक्षितम्): ६९३ संकोवत्; संव. १०५ वेदैकनिष्ठं (वैदिकमिष्टं) शेषं संकोवत्; कुम. ९४३ संमवत्; संर. १८० निर्देशमात्रम्: १८१ संकोवत् .

## यमः

उपनेतृगुणाः

'सत्यवाग्धृतिमान्दक्षः सर्वभूतदयापरः ।
आस्तिको वेदनिरतः शुचिराचार्य उच्यते ॥

(१) दक्षः व्रतोत्साही । ब्रक. १०५

(२) उक्तविशेषणानां त्रैवर्णिकसाधारण्येऽपि विशेष्योऽत्र ब्राह्मण एवावधेयः, 'विप्रं कर्तारमीप्सितम्' इति व्यासवाक्ये विप्रपदोपादानात् तस्यैवाध्यापनाधिकाराच्च । तेन त्रयाणामपि वर्णानां पित्राद्यभावे विप्र एवोपनेता, न क्षत्रियादिरिति सिध्यति । संप्र. ४०९

## वृद्धगर्गः

पूर्वपूर्वाभावप्रयुक्ताधिकारा उपनेतारः

'पिता पितामहो भ्राता ज्ञातयो गोत्रजाग्रजाः ।
उपानयेऽधिकारी स्यात्पूर्वाभावे परः परः ॥

(१) भ्राताऽत्र पितुर्भ्रातेति व्याख्येयम्, 'पितैवोपनयेत्पुत्रं तदभावे पितुः पिता । तदभावे पितुर्भ्राता तदभावे तु सोदरः ॥' इति पितामहस्मरणात् । ज्ञातयः सपिण्डाः । गोत्रजाग्रजाः गोत्रजेषु सपिण्डातिरिक्तेषु अग्रजाः माणवकापेक्षया वृद्धाः । यद्यप्यग्रजपदं गोत्रजपदेन समस्तं तथापि बुद्ध्या विभज्य सपिण्डेष्वपि संबन्धनीयम्, अन्यथोपनेयकनिष्ठानामपि तदधिकारापातात् दारकाचार्यत्वस्योपपातकत्वाच्च । † संप्र. ४०७

---

† संम., संग. संप्रवत् ।

(१) ब्रक. १०५, २०७; हमा. २००; संप्र. ४०७ (=) शुचिरा (शुचिश्चाऽऽ) उत्त.: ४०८, ४७८; संग. ६५८ (=) उत्त.: ६५९ (=).

(२) प्रपा. २१९ जाग्रजाः (जोऽग्रजः); गमा. २०१ नये (यने); प्रर. ८१; धप्र. ४० द्वितीयपादे (सकुल्यो गोत्रजोऽग्रजः) नये (यने) आचार्यः; संप्र. ४०६–४०७; चम. १६ गमावत्; मुक्ता. ९९ नयेऽधिकारी स्यात् (यनेऽधिकाराः स्युः) वृद्धवसिष्ठः; संम. २५

(२) अग्रजा इत्यत्राकारलोपश्छान्दसः । † संको. ११८

(३) ज्ञातयः असगोत्रसपिण्डा मातामहादयः । गोत्रजाः सगोत्रसपिण्डाः पितृव्यपुत्राद्याः । गोत्रजाग्रजा इति संधिरार्षः । पितृव्याभावे एव ज्येष्ठभ्रातुरधिकारः, 'तदभावे तु सोदरः' इत्युक्तेः । ‡ कृम. ९४३

(४) पिता विद्वांश्चेत्तदैवोपनयेत्, अन्यथा न, धर्मसूत्रेऽविद्वत्कर्तृकोपनयने दोषस्योक्तेः । स चाग्रे प्रदर्श्यते । पितुर्विद्वत्त्वाभावे वक्ष्यमाणव्यासवचनोक्तलक्षणलक्षितः कश्चनोपनयनं कुर्यात् । एतद्वचनद्वयं विप्रपरम्, न क्षत्रियवैश्यपरम्, गायत्रीवाचनस्याध्यापनरूपत्वेन तत्र तयोरनधिकारात् । एतदर्थमेव 'वेदैकनिष्ठं धर्मज्ञम्' इति वक्ष्यमाणव्यासवचने विप्रग्रहणं ज्ञेयम् । अतः पुरोहित एवोपनेतैतयोरिति ज्ञेयम् । ‡ संर. १८०

## आश्वलायनः

पित्राज्ञयैवेतरस्योपनेतृत्वम्

¶'**व्रतबन्धं कुमारस्य विना पितुरनुज्ञया ।**
**यः करोति द्विजो मोहान्नरकं प्रतिपद्यते ॥**

इदं दूरस्थपितृविषये । $ धप्र. ४०

† शेषं संप्रगतम् । संव. संकोवत् ।

‡ शेषं संप्रगतम् ।

¶ धर्मप्रवृत्तौ आचार्यशब्देनाऽऽश्वलायनवचनानां संग्रहादिदमाचार्यवचनमाश्वलायनेऽस्माभिः संगृहीतम् ।

$ संग. धप्रवत् ।

गभावत्; सिन्धु. ९४३ गभावत्, वृद्धमनुः; विपा. ४८१ उगान (उपना); संको. ११८ विपावत्; मान. १५९ सर्वं मुक्तावत्; बाल. १।१४ पृ. ४७ गभावत्; संग. ६५८; सव. १०५; संर. १८० विपावत् .

(१) धप्र. ४०; संग. ६५८ वीरमित्रोदये.

## पितामहः

पूर्वपूर्वाभावप्रयुक्ताधिकारा उपनेतारः

§'**पितैवोपनयेत्पुत्रं तदभावे पितुः पिता ।**
**तदभावे पितुर्भ्राता तदभावे तु सोदरः ॥**

(१) पितेति विप्रपरम्, न क्षत्रियवैश्ययोः । तयोस्तु पुरोहित एव, उपनयनस्य दृष्टार्थत्वात् तयोस्त्वध्यापनेऽनधिकारात् । § गभा. २०१

(२) अत्र केचिदाचार्यसमीपनयनमेवोपनयनमित्यभिप्रेत्य 'पितैवोपनयेत्' इत्यादिवाक्यानि पितैवाऽऽचार्यसमीपं नयेदित्यर्थपरतया व्याचक्षते । सत्यपि पित्रादावुपनेतरि होमगायत्र्युपदेशादिकर्ताऽन्य एवाऽऽचार्योऽन्वेष्टव्यः, 'आस्तिको वेदनिरतः शुचिश्चाऽऽचार्य उच्यते ।' इत्यादिवाक्येष्वाचार्यस्य नित्यवच्छ्रवणात्, पितुरेवाऽऽचार्यत्वे आचार्यलक्षणाचार्यशौचाचार्यपत्न्यभिगमनप्रायश्चित्ताभिधानाद्यानर्थक्यापत्तेः, पितृलक्षणाद्यभिधानेनैव गतार्थत्वात्, पितृकुलावस्थितस्य ब्रह्मचारिण आचार्यकुलप्रत्यावृत्तिरूपसमावर्तनासंभवापत्तेश्च । तस्मात्पित्रतिरिक्त आचार्यः कर्तव्य इति । तन्न सुन्दरम्, बटोराचार्येण गायत्रीसंबन्धकरणस्यैवोपनयनपदार्थत्वेन व्याख्यातत्वात्, तत्र च पित्राचार्ययोः समुदितयोः कर्तृत्वासंभवेन नित्यवच्छ्रुतस्याप्याचार्यस्य विकल्पेनानुकल्पत्वेन वाऽन्वयस्यावश्यमभ्युपेयत्वात् । लक्षणाद्यभिधानं त्वनुकल्पतया प्राप्तस्याप्यपेक्षितमेव । समावर्तनं तु नाऽऽचार्यकुलान्निवृत्तिरेव, किंतु ब्रह्मचारिव्रतसमापनमिति न क्वापि विरोधः । तस्मात्पित्राद्यभावे आचार्यः कर्तव्य इति स्थितम् । संप्र. ४०७–४०८

§ संग. गभावत् संप्रवच्च ।

(१) गभा. २०१ (=); प्रर. ८१ (=); धप्र. ४० आचार्यः; संप्र. ४०७; चम. १६ (=); संम. २५; सिन्धु. ९४३ प्रयोगरत्ने; विपा. ४८१ प्रयोगरत्ने; संको. ११८; बाल. १।१४पृ. ४७ (=); संग. ६५८ वीरामत्रोदये; संव. १०५; भाव. २।३९ (=) त्पुत्रं त (त्पुत्रांस्त) पितुः पिता (पितामहः) पितुर्भ्राता (पितृव्यः स्यात्); संर. १८०.

( ३ ) यस्तु 'असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः ।' इति योगीश्वरवचनेनाग्रजानामधिकारावगमः स तु पितृव्याभावविषयक इति तु युक्तम् ।

‡ संम. २५

( ४ ) अत्र पितृव्यस्य ज्येष्ठभ्रात्रभावेऽधिकारः, 'असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः ।' इति याज्ञवल्क्योक्तेः । तेनेदमविभक्तपरम् । § पूर्वं तु विभक्तपरम् । ¶ सिन्धु. ९४३–९४४

[ मतान्तरमाह– अत्रेति । इदं हि मतं कौस्तुभकृतामपि विमतम्, याज्ञवल्क्यवचनेऽपि पितृव्यात्पूर्वत्वाप्रतीतेश्च । मयूखकृद्भिस्तु तद्वचनस्य भगिनीविवाहविषयकत्वमुक्तम् । केचित्तु–अविभक्तस्य भ्राता, विभक्तस्य सोदर इत्याहुः । तन्न, 'तदभावे तु सोदरः' इत्यनेन विरोधात् । 'तदभावेऽपि' इति पाठं कल्पयित्वा अपिशब्दात्तत्सत्त्वसमुच्चय इति तु केचित् ।

कृभ. ]

( ५ ) यत्तु– 'असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः ।' इति योगीश्वरवचस्तत्पितामहवचोनुरोधेन पितृव्याभावविषयमिति प्राञ्चः । भगिन्यादिविवाहविषयमिति नवीनाः । संर. १८०–१८१

‡ संकौ., संव. संमवत् ।

§ 'पिता पितामहो भ्राता' इति पूर्वमस्माभिर्वृद्धगर्गीयत्वेन संगृहीतं वचनं पूर्वपदार्थः ।

¶ शेषं गमावत् । विपा. सिन्धुवत् ।

## स्मृत्यन्तरम्

पितुरुपनेतृत्वम्

[१]उत्पाद्य पुत्रं संस्कृत्य वेदमध्याप्य यः पिता ।
कुर्याद्वृत्तिं च स महान् गुरुः पूज्यतमः स्मृतः ॥

## शौनककारिकाः

द्विजोत्तमस्योपनेतृत्वं तद्गुणाश्च

[२]कुमारस्योपनयनं श्रुताभिजनवृत्तवान् ।
तपसा धूतनिःशेषपाप्मा कुर्याद्द्विजोत्तमः ॥

उक्ताधिकार्यभावे शौनकः– 'कुमारस्योप ...' इति । ¶ संम. २५

## रेणुकारिकाः

पूर्वपूर्वाभावप्रयुक्ताधिकारा उपनेतारः

... [३]अधिकार्यधुनोच्यते ।
पितैवोपनयेत्पुत्रांस्तदभावे पितुः पिता ।
तदभावे पितृव्यः स्यात्तदभावे च सोदरः ॥

¶ संकौ., संव., कृभ., संर. संमवत् ।

(१) मुक्ता. १०५; आन. १६२ (=) उत्तरार्धे ( कुर्याद्वृत्तिं च नष्टेऽस्मिन् द्वादशाहं महागुरौ ॥ ).

(२) शौका. ३ पृ. ४२ ; प्रपा. २१९ ; संप्र. ४०८–४०९ ; संम. २५ ; विपा. ४८१ ; संकौ. ११८ ; संग. ६९३ ; संव. १०५ ; कृभ. ९४३ ; संर. १८१.

(३) रेका. १५–१६ पृ. २७–२८.

# स्त्रीणामुपनयनम्

## हारीतः

ब्रह्मवादिनीनां यथाकालमुपनयनम् अग्निकार्यादि च, सद्योवधूनां विवाहकाले उपनयनमात्रम्

†द्विविधाः स्त्रियो ब्रह्मवादिन्यः सद्योवध्वश्च । तत्र ब्रह्मवादिनीनामुपनयनमग्नीन्धनं वेदाध्ययनं स्वगृहे च भिक्षाचर्येति । सद्योवधूनां तूपस्थिते विवाहे कथंचिदुपनयनमात्रं कृत्वा विवाहः कार्यः ॥

( १ ) यत्तु हारीतेनोक्तम्– ' द्विविधाः स्त्रियो... कार्यः ' इति, तत्कल्पान्तराभिप्रायम् । तथा च यमः– ' पुरा कल्पे कुमारीणां मौञ्जीबन्धनमिष्यते । अध्यापनं च वेदानां सावित्रीवचनं तथा ॥ पिता पितृव्यो भ्राता वा नैनामध्यापयेत्परः । स्वगृहे चैव कन्याया भैक्षचर्या विधीयते । वर्जयेदजिनं चीरं जटाधारणमेव च ॥ ' इति । † स्मृच. २४

( २ ) अथ स्त्र्युपनयनम् । तत्र हारीतः– ' द्विविधाः स्त्रियो... कार्यः ' इति । यमोऽपि– ' पुराकल्पे कुमारीणां मौञ्जीबन्धनमिष्यते । अध्यापनं च वेदानां सावित्रीवाचनं तथा ॥ पिता पितृव्यो भ्राता वा नैनामध्यापयेत्परः । स्वगृहे चैव कन्याया भैक्षचर्या विधीयते । वर्जयेदजिनं चीरं जटाधारणमेव च ॥ ' इति । पुराकल्पेऽर्थवादविशेषे । तत्राऽऽर्थवादिकविधेः सार्वकालिकत्वे शिष्टस्मृतिविरोधदर्शनात् कल्पान्तर इति स्मृतिचन्द्रिकाकारः । पित्रादिरेवैनामध्यापयेत् , न पर इत्यन्वयः । मनुरपि– ' प्राङ्नाभिवर्धनात्पुंसः ' ( मस्मृ. २।२९ ) इत्युपक्रम्य नामकरणनिष्क्रमणान्नप्राशनचूडोपनयनकेशान्तान् पुरुषसंस्कारान् विधाय अन्ते पूर्वोक्तसंस्कारेतिकर्तव्यतां स्त्रीष्वतिदिशति– ' अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः । संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम् ॥ ' ( मस्मृ. २।६६ ) इति । अत्र इयमिति सर्वनाम्ना बुद्धिस्थपरामर्शात् समानां च संस्काराणां बुद्धिस्थतया उपनयनस्यापि तदन्तर्गतत्वेनातिदेशात् स्त्रीणामप्यमन्त्रकमुपनयनं सिध्यति । ये तु चूडान्तानामेवेदमा परामर्शः , नोपनयनकेशान्तयोरिति मन्यन्ते, तेषामसंबन्धिव्यवधानेन विच्छिन्नबद्धीनां परामर्शं वदतां कथमिव लज्जा नाऽऽननमानमयति ? अथ ' तूष्णीमेताः क्रियाः स्त्रीणाम् ' ( यास्मृ. १।१३ ) इति याज्ञवल्क्यैकवाक्यतया चूडान्तानामेव परामर्शः , नोपनयनादीनामिति वाच्यम् , तर्हि यमहारीतवाक्यैकवाक्यतया उपनयनपरामर्शोऽपि कथं नाङ्गीक्रियते ? इति । अथ ' वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः । पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया ॥ ' ( मस्मृ. २।६७ ) इत्यग्रेतनवाक्ये विवाहस्योपनयनस्थानापत्तिविधानान्यथानुपपत्त्या इदमः संकोच इति न वाच्यम् , तस्य स्मृत्यन्तराभिहितोपनयनाभावपक्षे विवाहस्य तत्स्थानापत्तिविधायकत्वेनापि चरितार्थत्वात् । तस्मात् मनुवाक्ये नेदमः संकोच इति । किं च आश्वलायनेनापि ' मुखमग्रे ब्राह्मणोऽनुलिम्पेत ' ( आगृ. ३।८।११ ) इति समावर्तनीयमनुलेपनं प्रस्तुत्य ' उपस्थं स्त्री ' ( आगृ. ३।८।११ ) इत्यनेन स्त्रीणामनुलेपनं विदधता तासामप्युपनयनमुक्तं भवति, उपनयनपूर्वकत्वात् समा-

† पमा. , मपा. , चम. , मुक्ता. , सिन्धु. , विपा. , आन. , संर. स्मृचवत् ।

(१) स्मृच. २४ ; पमा. ४८५ ( च० ) सद्योवधूनां ( वधूनां ) ; मपा. ३७ ; संप्र. ४०२ ( मुपनयन० ) (च०); चम. ११३ ब्रह्मवादिन्यः (ब्राह्मणवादिन्यः) भिक्षा (भैक्ष) ; मुक्ता. ८४ नयनमात्रं (नयनं) ; सिन्धु. ९७३ भिक्षा ( भैक्ष्य ) तूपस्थिते विवाहे कथंचिदुपनयनमात्रं (उपनयनं) ; विपा. ५०५ च भिक्षा (भैक्ष) (सद्योवधूनां ...कार्यः०) ; आन. १५० च भिक्षाचर्येति (भिक्षाचर्या) ; संर. १६५ च भिक्षा...कार्यः ( भैक्षचर्या चेति । सद्योवधूनामुपनयनं कृत्वा विवाहः ).

वर्तनस्य । यत्तु सार्वत्रिकोऽयं स्त्रीणामनुलेपनविधिः, न समावर्तनीयः, उपनयनाभावेन समावर्तनासंभवादिति व्याख्यानम्, तदसत्, उक्तरीत्या उपनयनसद्भावेन 'प्राग्रजसः समावर्तनम्' इति हारीतोक्त्या च प्राग्रजसः समावर्तनसंभवे तदङ्गत्वपरिहारेणोत्कर्षस्यान्याय्यत्वात्, 'प्रकरणे च संभवन्नपकर्षो न कल्प्येत विध्यानर्थक्यं हि तं प्रति' (जैसू. १।२।२४) इति न्यायात् । अत एव संन्यासब्रह्मजिज्ञासादिकमप्युपनीतानामेव स्त्रीणां घटते, आश्रमसमुच्चयविकल्पयोरुपनयनपूर्वकत्वात् । तदयं निर्गलितोऽर्थः– ब्रह्मवादिनीनां गर्भाष्टमादौ मन्त्रवत् तूष्णीं चोपनयनम्, ततो वेदाध्ययनम्, प्राग्रजोदर्शनात् समावर्तनम्, प्रागेव रजोदर्शनात् विवाहश्चेति । सद्योवधूनां तु उक्तविवाहकाले एवोपनयनम्, सद्य एव समावर्तनम्, सद्य एव विवाह इति । 'पुराकल्पे' इति वचनात् नास्मिन् कल्पे इति गम्यते । अत एव मनुः– "वैवाहिको विधिः ...ऽग्निपरिक्रिया ।' इत्यादिना विवाहस्योपनयनस्थानापत्तिमाह । वैदिकः वेदग्रहणार्थः संस्कारः उपनयनम्, स स्त्रीणां वैवाहिको विधिः विवाहजन्यः संस्कारः स्मृतः पूर्वैरिति मेधातिथिपाठार्थः । मिताक्षरादिपाठस्तु 'औपनायनिकः स्मृतः' इति । तत्र औपनायनिकः उपनयनकार्यकारी । ततश्च यथा पुरुषस्योपनयनादिस्तथा स्त्रीणां विवाहादिर्विधिनिषेधाधिकार इत्यर्थः । संप्र. ४०२–४०५

## मनुः

स्त्रीणामुपनयनस्थाने विवाहविधिः, गुरुगृहवासस्थाने पतिसेवा, अग्निकार्यस्थाने गृहकृत्यम्

‡[1]**वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः ।**
**पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया ॥**

---

‡ व्याख्यानं संस्कारोपोद्घातप्रकरणे (सं. का. पृ. ४२) द्रष्टव्यम् ।

(१) **मस्मृ.** २।६७ ; **ज्योनि.** १२१ (=) द्वितीयपादे (औपनायनिकः स्मृतः) गृहार्थोऽ (गृहस्था) ;

## यमः

स्त्रीणामुपनयनादिविधिः पुराकल्पविषयः, तत्राध्ययनादि पितृपितृव्यभ्रातृभ्य एव, स्वगृहे एव भैक्षचर्या, अजिनचीरजटाधारणानि वर्जनीयानि

§[1]**पुराकल्पे तु नारीणां मौञ्जीबन्धनमिष्यते ।**
**अध्यापनं च वेदानां सावित्रीवाचनं तथा ॥**

[2]**पिता पितृव्यो भ्राता वा नैनामध्यापयेत्परः ।**
**स्वगृहे चैव कन्याया भैक्षचर्या विधीयते ।**
**वर्जयेदजिनं चीरं जटाधारणमेव च ॥**

## षड्गुरुशिष्यः

स्त्रीणामुपनयनाभावः

[3]**कुमाराधिकृतेश्चापि न स्त्रीणामिदमुच्यते ॥**

'कुमारम्' इत्यधिकारान्न स्त्रीणामुपनयनं भवति । तदाह षड्गुरुशिष्यः– कुमारेति । प्रपा. २१२

---

§ अस्य संप्रव्याख्यानं हारीतवचनव्याख्याने द्रष्टव्यम् । संर. १६५ (=) पूर्वार्धे (पाणिग्रहो विधिः स्त्रीणामौपनायनिकः परः । ) पू., शेषस्थलादिनिर्देशाः संस्कारोपोद्घातप्रकरणे (सं. का. पृ. ४२) द्रष्टव्याः.

(१) **स्मृच.** २४ तु ना (कुमा) वाच (वच) ; **पमा.** ४८५ स्मृचवत् ; **मपा.** ३७ स्मृचवत् ; **गभा.** २३५ कल्पे तु (कल्पेषु) ; **संप्र.** ४०२ तु ना (कुमा) ; **चम.** ११३ ; **मुक्ता.** ८४ वाच (वच) ; **सिभ्धु.** ९७३ गभावत् ; **विपा.** ५०५ गभावत् ; **आन.** १५० तु ना (कुमा) पनं च (यश्चापि) वाचनं (ग्रहणं) ; **संग.** ६४२ स्मृचवत् ; **संर.** १६५ तु (हि) मिष्यते (मीरितम्) कूर्मोक्तिः.

(२) **स्मृच.** २४ ; **पमा.** ४८५ ; **संप्र.** ४०३ ; **चम.** ११३ ; **मुक्ता.** ८४ ; **आन.** १५० ; **संग.** ६४२.

(३) **प्रपा.** २१२ ; **ज्योनि.** १२१ (=).

## बौधायनगृह्यसूत्रम्

गर्भतस्त्रैवर्णिकानां मुख्यगौणकालाः, काम्योपनयनकालाः

**[1]गर्भाष्टमेषु ब्राह्मणमुपनयीत गर्भैकादशेषु राजन्यं गर्भद्वादशेषु वैश्यम् ॥**

**आ षोडशाद्ब्राह्मणस्यानात्यय इति ॥**

**एवमेवेतरयोः द्वाविंशतिश्च चतुर्विंशतिश्च ॥**

**[2]अथापि काम्यानि भवन्ति– सप्तमे ब्रह्मवर्चसकाममष्टम आयुष्कामं नवमे तेजस्कामं दशमेऽन्नाद्यकाममेकादश इन्द्रियकामं द्वादशे पशुकामं त्रयोदशे मेधाकामं चतुर्दशे पुष्टिकामं पञ्चदशे भ्रातृव्यवन्तं षोडशे सर्वकाममिति ॥**

( १ ) भ्रातृव्यवन्तं भ्रातृपुत्रकामम् । नित्यानामप्येषां कालानां फलश्रवणात् संयोगपृथक्त्वन्यायेन नित्यकाम्यत्वं द्रष्टव्यम् । यद्यपि †पञ्चवर्षादेर्बालस्य हिताहिताज्ञ्युत्पन्नतया तत्तत्फलकामना न संभवति, तथापि तद्धितैषिपित्रादेरेव तद्गतफलकामनया तदनुष्ठानं न विरुद्धम् । तदाहुः– 'हितकारिभिरेवासौ ज्ञायमानः प्रयोजकः । कर्त्राऽविज्ञायमानोऽपि नैव स्यादप्रयोजकः ॥' इति । ततश्च विप्रस्य बटोर्ब्रह्मवर्चसकामेन पित्रा पञ्चमेऽब्दे उपनयनं कार्यमिति तृतीयार्थषष्ठ्या व्यधिकरणषष्ठ्या वा वाक्यार्थः साधनीयः । ब्रह्मवर्चसकाममित्यादिद्वितीया तु '¶ ब्रह्मवर्चसं कामयते पिता यस्य बटोरसौ ब्रह्मवर्चसकामः' इति व्याख्येया । संप्र. ३४६–३४७

( २ ) भ्रातृव्यवन्तमित्यनेनाभिचारकाममिति ध्वन्यते । हेमाद्रौ 'सप्तमे' इत्यारभ्य 'पशुकामम्' इत्यन्तं बौधायनीयसदृशमापस्तम्बवच उदाहृत्य 'आद्यवाक्यद्वयमब्राह्मणविषयम्, शेषं वर्णत्रयसाधारणम्' इत्युक्तम् ।

$ संको. ११९

( ३ ) तत्र सप्तमाष्टमयोरुपनयने 'काम्येन नित्यसिद्धिः' इति न्यायेन उभयमपि सिद्धं भवति । नवमादिषोडशपर्यन्तेषु काम्योपनयनविधानं यथाकालमुपनीतस्य तत्तत्कामनायां सत्यां तस्मिन्वर्षे पुनरुपनयनं कर्तव्यमित्येवंपरमिति विज्ञेयम्, अन्यथा अब्राह्मणत्वापत्तेः । आन. १८१–१८२

**[1]आ षोडशाद्ब्राह्मणस्यानात्यय इत्या द्वाविंशात् क्षत्रियस्या चतुर्विंशाद्वैश्यस्य ॥**

## आश्वलायनगृह्यसूत्रम्

जन्मतो गर्भतो वा मुख्यकाला गौणकालाश्च

**[2]अष्टमे वर्षे ब्राह्मणमुपनयेत् ॥**

( १ ) जन्मनः प्रभृत्यष्टमे वर्षे ब्राह्मणस्योपनयनं कर्तव्यम् । कथं ज्ञायते ? जाताधिकारात् । कुमारस्य चोपनयनं कर्तव्यम् । कुमाराधिकारः कुमारीनिवृत्त्यर्थोऽनुवर्तते । यद्येवं नार्थोऽधिकारेण पुंलिङ्गोपदेशात् 'ब्राह्मणमुपनयेत्' इति कुमारस्यैव प्राप्नोति । नेत्युच्यते ।

---

† अयं पञ्चवर्षोल्लेखः 'ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे ।' इति मनुवचनमभिप्रेत्य । अग्रिमो वाक्यार्थोऽपि तस्यैव ।

¶ 'ब्रह्मवर्चसं कामयते' इति कर्मण्यणा धातुसाधितो ब्रह्मवर्चसकामशब्दः पितृवचनः । ततः 'ब्रह्मवर्चसकामोऽस्यास्ति' इत्यर्शआद्यचा नामसाधितो बटुवचनः । ब्रह्मवर्चसकामपितृक इत्यर्थ इति तात्पर्यम् ।

(१) बौगृ. २।५।२–४.

(२) बौगृ. २।५।६ ; संप्र. ३४६ ; मुक्ता. ८७

$ संव. संकोवत् ।

( अथापि काम्यानि भवन्ति० ) ; संको. ११९ अथापि ( अथ ) आयुष्का ( आयुःका ) ; आन. १५४ मुक्तावत् ; संव. १०६ संकोवत्.

(१) बौगृ. ३।१३।५.

(२) आगृ. १।१९।१ ; मेधा. २।३६ गृह्यकारः ; अप. १।१४ शौनकः ; प्रपा. २१२ ; धप्र. ३९ ; संप्र. ३३९ ; बाल. १।१४ पृ. ४५ नयेत् ( नयीत ) गृह्यसूत्रम् ; संव. १०६ (=) ; पुम. ४३७.

जातिनिर्देशे च लिङ्गवचने अविवक्षिते। तद्यथा 'ब्राह्मणो न हन्तव्यः' इति। एवं ब्राह्मण्यमपि न हन्येत। एवमिहापि ब्राह्मण्या अप्युपनयनं प्राप्नोति यद्यधिकारो नानुवर्तते। देभा.

(२) जन्मप्रभृत्यष्टमे वर्षे ब्राह्मणमुपनयेत्। कुमारमिति वर्तते। कुमारीनिवृत्त्यर्थमित्युक्तम्। गानावृ.

(३) जाताधिकाराज्जननादारभ्याष्टममुच्यते। कुमारमित्यधिकृतेर्न स्त्रीणामुपनायनम्॥ ब्राह्मणग्रहणं चात्र शूद्रादिविनिवृत्तये। विशेषो वक्ष्यते यस्मादिह क्षत्रियवैश्ययोः॥ ब्राह्मणः क्षत्रियो वैश्य इति बौधायनादिभिः। उक्तानामनुलोमानामप्यत्र ग्रहणं मतम्॥‡ परस्मैपदपाठोऽयमध्येतॄणां प्रमादजः। आचार्यकरणे यस्मात् प्राप्नोत्यत्राऽऽत्मनेपदम्॥ अना.

(४) जाताधिकाराज्जननकालादारभ्य अष्टममुच्यते। कुमारमित्यधिकाराच्च स्त्रीणामुपनयनं भवति। तदाह षड्गुरुशिष्यः– 'जाताधिकाराज्जन्मादावष्टमेऽब्दे भवेदिदम्। कुमाराधिकृतेश्चापि न स्त्रीणामिदमुच्यते॥' इति। स्त्रीणामुपनयनं तु विवाह एवेत्याह मनुः– 'वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः। पतिसेवा गुरौ सेवा गृहस्थाग्निपरिक्रिया॥' (मस्मृ. २।६७) इति। ब्राह्मणग्रहणं चात्र शूद्रादिनिवृत्त्यर्थम्। यथाऽऽह हरदत्तः– 'विशेषो वक्ष्यते यस्मादिह क्षत्रियवैश्ययोः। ब्राह्मणाः क्षत्रिया वैश्या इति बौधायनादिभिः। उक्तानामनुलोमानामप्यत्र ग्रहणं मतम्॥' इति। हरदत्तस्तु– उपनयेदिति परस्मैपदप्रयोगोऽध्येतॄणां प्रमादात्पतित इत्याह। यदाह गृह्यभाष्ये सर्वतन्त्रस्वतन्त्रो हरदत्तः– 'परस्मैपदपाठोऽयमध्येतॄणां प्रमादजः। आचार्यकरणे यस्मात्प्राप्नोत्येवाऽऽत्मनेपदम्॥' इति। अपरे पुनराचार्यकरणमत्राविवक्षितम्, किं तर्हि? समीपानयनमिति परस्मैपदं निर्वहन्ति। तदुक्तम्– 'गुरोर्व्रतानां वेदस्य यमस्य नियमस्य च। देवतानां समीपं वा येनासौ नीयते द्विजः॥' इति। † प्रपा. २१२

‡ अस्य खण्डनम् उपनयनपदार्थादिविचारप्रकरणे भरद्वाजवचने संप्रव्याख्याने (सं. का. पृ. ३००३) द्रष्टव्यम्।

[1]गर्भाष्टमे वा॥

(१) गर्भाष्टमे वा ब्राह्मणस्योपनयनं कर्तव्यम्। स्मृतिदृष्टेन वाऽयमर्थः। पुनः संख्या विधीयते। इह तु जन्मनोऽधिकारात् जातस्यैव संख्या प्राप्नोति। तस्मात् गर्भादिरित्यारभ्यते। देभा.

(२) गर्भप्रभृत्यष्टमे वोपनयेत्। गानावृ.

(३) गर्भाष्टमे वर्षे। यस्मिन् वर्षे गर्भो भूत्वा शेते स गर्भः सोऽष्टमो यस्येति बहुव्रीहिः। षष्ठीसमासस्तु पूरणप्रत्ययान्तेन प्रतिषिद्धः। अना.

(४) गर्भसहचरितोऽब्दोऽनेनोच्यते इति भारुचिः। $ प्रपा. २१२

[2]एकादशे क्षत्रियम्॥

(१) एकादशे वर्षे क्षत्रियमुपनयेत्। गर्भैकादशे वचनमस्ति। न त्वधिकारात्। गर्भाष्टम इति गर्भैकादशे इति प्राप्नोति। एवमुत्तरस्यापि विधिः साध्यते। देभा.

(२) जन्मप्रभृति गर्भप्रभृति वा एकादशे वर्षे क्षत्रियमुपनयेत्। ¶ गानावृ.

द्वादशे वैश्यम्॥

(१) द्वादशे वर्षे वैश्यमुपनयेत्। गर्भद्वादशे वा। जन्मप्रभृति गर्भप्रभृति वा द्वादशे वर्षे वैश्यमुपनयेत्। देभा.

† शेषं गानावृवत्।
$ शेषम् अनाविलानुवादः।
¶ अना., प्रपा. गानावृवत्।

(१) आगृ. १।१९।२ ; आप. १।१४ वा (च) शौनकः ; प्रपा. २१२ ; धप्र. ३९ ; संब. १०६ (=) ; पुम. ४३३.

(२) आगृ. १।१९।३-४ ; मेधा. १।३६ गृह्यकारः ; आप. १।१४ शौनकः ; प्रपा. २१२ ; बाल. १।१४ पृ. ४५ गृह्यसूत्रम्.

(२) जन्मप्रभृति गर्भप्रभृति वा द्वादशे वर्षे वैश्यमुपनयेत्। ¶ गानाट्ट.

'आ षोडशाद्ब्राह्मणस्यानतीतः कालः ॥

आ द्वाविंशात्क्षत्रियस्य । आ चतुर्विंशाद्वैश्यस्य ॥

(१) ब्राह्मणादीनामेतेष्वेव कालेषूपनयनं भवति। अन्यस्मिन्नपि लभ्यते इत्यत आह– एति। अष्टमाद्वर्षादारभ्य यावत्षोडशवर्षमिति तावदुपनयनं लभ्यते। तत्राऽऽकारोऽयमभिविधौ। देभा.

(२) षोडशवर्षपर्यन्तं ब्राह्मणस्योपनयनकालोऽतीतो न भवति। गानाट्ट.

(३) अनुकल्पानाह– एति। अभिविधावाङ्। यद्यप्यनतीतः काल इत्युक्तं तथापि मुख्यात् कालादूर्ध्वं कियदपि प्रायश्चित्तं भवति। आहाऽऽपस्तम्बः– 'अतिक्रान्ते सावित्र्याः काल ऋतुं त्रैविद्यकं ब्रह्मचर्यं चरेदथोपनयनं ततः संवत्सरमुदकोपस्पर्शनमथाध्याप्यः' (आध. १।१।२८–३१) इति। अना.

(४) आङयमत्राभिविधौ वर्तते, 'अत ऊर्ध्वम्' इत्यत्राभिधानात्। † प्रपा. २१२

(५) अत्र व्रात्यताप्रायश्चित्तं प्रक्रम्य 'सावित्री पतिता यस्य दश वर्षाणि पञ्च च। सशिखं वपनं कृत्वा व्रतं कुर्यात्समाहितः॥' इति यमेन स्पष्टं पञ्चदशवर्षोत्तरं प्रायश्चित्ताभिधानादाषोडशादित्याङ् मर्यादार्थकः। एवं पञ्चदशवर्षोत्तरमेव व्रात्यस्तोमादिकं जायत इति। यत्तु– 'औपनायनिकः कालः परः षोडशवार्षिकः। द्वाविंशतिः परोऽन्यस्य चतुर्विंशतिमः परः॥' इति व्यासवाक्ये संपूर्णषोडशवर्षग्रहणाद्विरोधमुपन्यस्यति, तत्र धर्मप्रकाशे एवं व्यवस्थोक्ता– यमवाक्यं जन्मप्रभृति पञ्चदशवर्षातिक्रमे प्रायश्चित्तपरम्, व्यासवाक्यं त्वाधानप्रभृति षोडशवर्षातिक्रमे प्रायश्चित्तपरमिति न द्वयोरपि विरोधः। ईदृशी च सरणिः प्राचां क्वचिदाश्रितैव। यथा 'अष्टादशदिनादर्वागशुचित्वं न विद्यते।' 'चतुर्दशदिनादर्वागशुचित्वं विधीयते।' इति वाक्ययोः पूर्वं रजोदर्शनात्प्रभृति, उत्तरं तु स्नानादारभ्येति। संम. २२

## कौषीतकिगृह्यसूत्रम्

गर्भतो मुख्यगौणकालाः

'गर्भाष्टमेषु ब्राह्मणमुपनयेत ॥

गर्भदशमेषु वा ॥

गर्भैकादशेषु क्षत्रियम् ... ॥

गर्भद्वादशेषु वैश्यम् ... ॥

आ षोडशाद्वर्षाद्ब्राह्मणस्यानतीतः कालः ॥

आ द्वाविंशात् क्षत्रियस्य ॥

आ चतुर्विंशाद्वैश्यस्य ॥

गर्भाष्टमे वर्षे ब्राह्मणस्योपनायनं कुर्यात् गर्भदशमे (वा), गर्भैकादशे क्षत्रियस्य, गर्भद्वादशे वैश्यस्य। सर्वेषामादिभूतानां कालानामतिक्रमकालो द्विगुणादूर्ध्वम्, नात उपनेतव्याः। कौगृसं.

## आपस्तम्बगृह्यसूत्रम्

गर्भवर्षतः संख्येया मुख्यकालाः

'गर्भाष्टमेषु ब्राह्मणमुपनयीत ॥

(१) यस्मिन् वर्षे गर्भो भूत्वा शेते तद्वर्षं गर्भशब्देनोच्यते। तदष्टमं येषां तानीमानि गर्भाष्टमानि वर्षाणि। बहुवचनं सौरादिभेदेन वर्षाणां भिन्नत्वात्। अपर आह– जन्मप्रभृति सप्तानां वर्षाणां गर्भमष्टमं भवति। तेन सप्तस्वपि वर्षेषूपनयनं चोद्यते। तत्र चतुर्षु वर्षेष्वयोग्यत्वात् चौलादिसंस्कारान्तरविरोधाच्च पञ्चमादिषु त्रिषूपनयनमिति। अत्र षष्ठसप्तमयोः काम्य-

---

¶ अना., प्रपा. गानाट्टवत्।

† शेषम् अनागतम्।

(१) आगृ. १।१९।५–६; प्रपा. २१२; संम. २२.

(१) कौगृ. २।१।१, ३–८.

(२) आपगृ. १०।२; उ. १।१।६; गभा. २०१; मुक्ता. ८७; सिन्धु. ९२७; विपा. ४७०; आन. १५३; बाल. १।१४ पृ. ४५; संग. ६४३.

मुपनयनमष्टमे नित्यमित्ययं विशेषो न स्यात्, सर्वत्र नित्यमेव स्यात्। किंच, पञ्चमे षष्ठे वा वर्तमाने कथं गर्भवर्षमष्टमं भवति ? न ह्यसत्यपूरणीयेषु पूरणत्वमुपपद्यते। तस्मात् सप्तमे वर्तमान एव गर्भवर्षमष्टमं भवति। तस्मादविवक्षितं बहुवचनं पूर्वोक्तो वा निर्वाहः। काम्यं तूपनयनं विध्यन्तरलभ्यम्। उपनयीतेति पाठः श्रुत्यनुसारेण। शब्विकरणस्तु धातुः। राजन्यवैश्ययोर्विशेषोपदेशादेव गर्भाष्टमविधेर्ब्राह्मणविषयत्वे सिद्धे ब्राह्मणविधिः श्रुत्यनुवाद एव। पुनरुपनयीतेत्यनुच्यमाने पूर्वमुपनयनग्रहणमधिकारार्थमेव स्यात्, तमर्थं न साधयेत् यस्तत्र साध्यः। अनाकुला.

(२) गर्भाष्टमेषु। वर्षेष्विति शेषः, 'गर्भादिः संख्या वर्षाणाम्' (गौध. २।७) इति गौतमवचनात्, गर्भशब्देन यस्मिन् वर्षे गर्भो वर्धते तल्लक्ष्यते। तदष्टमं येषां जन्मादीनां सप्तानां तानि गर्भाष्टमानि वर्षाणि। तेषु ब्राह्मणमुपनयीत। एवं यद्यपि जन्मादिसप्तस्वप्युपनयनं प्राप्तम्, तथापि जन्मादिषु त्रिषु चौलान्तैः गर्भसंस्कारैरवरुद्धत्वान्न क्रियते। चतुर्थेऽपि नैव, कुमारस्य व्रतासामर्थ्यात्। अतोऽत्रोपादेयगता बहुत्वसंख्या कपिञ्जलन्यायेन गर्भादारभ्य षष्ठसप्तमाष्टमेषु त्रिष्वेवावतिष्ठते, सामर्थ्यात् प्रयोगभेदेन। ननूत्तरत्र 'राजन्यम्' 'वैश्यम्' इति विशेषोपादानादेव गर्भाष्टमविधिर्ब्राह्मणस्यैवेत्यर्थसिद्धत्वात् ब्राह्मणमिति न वक्तव्यम्। तथा 'उपनयनं व्याख्यास्यामः' इति प्रकृतत्वादुपनयीतेत्यपि। मैवम्, उपनयनं श्रौतमिति ज्ञापयितुम्, 'अष्टवर्षं ब्राह्मणमुपनयीत' इत्येतच्छ्रुत्यनुकारित्वात्। केचित्– गर्भाष्टम एव वर्षे, न तु षष्ठसप्तमयोः, तयोर्गर्भाष्टमत्वाभावादिति। तन्न, बहुवचनानर्थक्यात्। § ताद.

(३) एवं च 'वर्षत्रयं मुख्यकालः' इत्यापस्तम्बमतिरित्येके। अन्ये तु– गर्भाष्टम एव वर्षे, न तु षष्ठसप्तमयोः, तयोर्गर्भाष्टमत्वाभावात्। बहुवचनं छान्दसमिति वदन्ति। अत्र यथाकुलाचारं व्यवस्था। $ मुक्ता. ८७

(४) बहुवचनं गर्भषष्ठगर्भसप्तमयोः प्राप्त्यर्थमिति सुदर्शनभाष्ये। केचित् तु विप्रस्य षष्ठं न मन्यते।

सिन्धु. ९२७

[पञ्चमाब्दाद्युपनयनानि तु काम्यानि। तत्र गर्भपञ्चमादीन्यपि केचिन्मन्यन्ते, तदनुसारेणाऽऽह– बहुवचनमिति। कृभ. ९२७]

(५) पञ्चमे काम्योपनयनविधानात् जन्मादिपञ्चमोऽब्दो गर्भतः षष्ठो भवतीत्यर्थः। † आन. १७

[५]गर्भैकादशेषु राजन्यं गर्भद्वादशेषु वैश्यम्॥

उभयत्रापि कपिञ्जलन्यायेन बहुवचनस्य त्रित्वमेवार्थः।

ताद.

## हिरण्यकेशिगृह्यसूत्रम्

### वर्णत्रयस्य मुख्यकालाः

[२]सप्तवर्षं ब्राह्मणमुपनयेत्॥

सप्त वर्षाणि यस्य जन्मतः परिमाणं स सप्तवर्षो ब्राह्मणः, तमुपनयेत्। उपनयीतेत्यपपाठः। जन्मन आरभ्य सप्तमे वर्षे उपनयेतेत्यर्थः। धर्मेषु चैतदेव वक्ष्यति– 'गर्भाष्टमेषु ब्राह्मणम्' (हिध. २६।१।२१) इति। तस्मादिह वचनं 'गर्भाष्टमे वर्षे ब्राह्मणमुपनयेत्' इति शास्त्रान्तरे दर्शनात्। $ मातृवृ.

[३]एकादशवर्षं राजन्यं द्वादशवर्षं वैश्यम्॥

एकादशे राजन्यं द्वादशे वैश्यम्। एतयोरपि पूर्ववदर्थः। जन्मतः संख्या। गर्भादारभ्य तदुभयं धर्मेषु विकल्प्यते। $ मातृवृ.

## मानवगृह्यसूत्रम्

### वर्णमनिर्दिश्य वैकल्पिकः कालः

[४]सप्तमे नवमे वोपायनम्॥

§ गभा., विपा., संग. तात्पर्यदर्शनानुवादः।

$ शेषं तादगतम्।

† शेषं तादगतम्।

$ संर. मातृवृगतम्।

(१) आपगृ. १०।३; मुक्ता. ८७.

(२) हिगृ. १९।१।२; संर. १६६ नयेत् (नयीत).

(३) हिगृ. १९।१।३; संर. १६६.

(४) मागृ. १।२२।१.

सप्तमे वर्षे नवमे वा जन्मप्रभृति । वर्षस्येति वर्तते 'तृतीयस्य वर्षस्य' (१।२१।१) इत्यतः । ‡ तदिह सप्तम्यन्तं संबध्यते, 'सप्तमे' इति सप्तम्यन्तेन संबन्धात् । यदिह सप्तमस्येत्युच्येत भूयिष्ठे गतेऽत्रापि स्यात् । तन्निवृत्त्यर्थं सप्तमीनिर्देशः । उपनयनपर्याय उपायनम् । अष्टाभा.

## भारद्वाजगृह्यसूत्रम्

गर्भतः संख्येयो वर्णत्रयस्य मुख्यः कालः, ब्राह्मणस्य वैकल्पिकः

**[1]गर्भाष्टमेषु ब्राह्मणमुपनयीत गर्भैकादशेषु राजन्यं गर्भद्वादशेषु वैश्यम् । गर्भनवमेषु ब्राह्मणमित्यपरम् ॥**

## काठकगृह्यसूत्रम्

मुख्यगौणकालाः

**[2]सप्तमे वर्षे ब्राह्मणस्योपायनम् ॥**

(१) 'सप्तमे वर्षे' इत्यादिलौगाक्षि( वचने )मनुवचनैकवाक्यतार्थं $ न गर्भादित्वम्, किं तु जन्मादित्वमेव । ब्रक. १०१

(२) जन्मनः प्रभृति सप्तमे वर्षे गर्भाष्टमे ब्राह्मणस्य उपायनम् आचार्यसमीपगमनमेखलाबन्धनसंस्कारः प्रधानभूतः । तस्मिन् हि सति श्रुतिस्मृत्यधिकारी भवति । अत एव द्वितीयं जन्म स्मर्यते— 'प्रथमं मातृतो जन्म द्वितीयं मौञ्जिबन्धनात् । अत्रास्य माता सावित्री पिता त्वाचार्य उच्यते ॥' इति । देव.

(३) सप्तमे वर्षे ब्राह्मणस्योपायनं जन्मावधिं कृत्वा । उपायनम् उपनयनम् मौञ्जीबन्धनं बटुकरणं व्रतबन्ध इत्यनर्थान्तरम् । ब्राह्मणस्येति प्रागप्युपनयनाद्ब्राह्मणोऽसौ, 'शूद्रेण हि समस्तावत्' (मस्मृ. २।१७२) इत्ययमर्थवाद एव ब्रह्माभिव्याहारप्रतिषेधपरः । आवि.

**[1]नवमे राजन्यस्य ॥**

अवेष्ट्यधिकरणनयेन राजा क्षत्रियः । तस्यापत्यं राजन्यः क्षत्रियदारकः । तस्य जन्मप्रभृति नवमे गर्भाद्दशमे उपायनम् । देव.

**एकादशे वैश्यस्य ॥**

समानं पूर्वेण । देव.

**[2]आ षोडशाद्ब्राह्मणस्यानतिक्रम आ द्वाविंशाद्राजन्यस्याऽऽ चतुर्विंशाद्वैश्यस्य ॥**

(१) सर्वत्राभिविधावाङ् । ब्राह्मणस्य षोडशवर्षान्तं यावदुपायनकालानतिक्रमः । एवं द्वाविंशान्तं यावत्क्षत्रियस्य, आ चतुर्विंशाद्वैश्यस्य । देव.

(२) सप्तमाद्वर्षादारभ्य यावत्षोडशस्तावदुपनयनकाल इत्यर्थः । केवलं प्रथमकल्पानुकल्पापकल्पकृतो विशेषः । न च प्राक् षोडशवर्षात्क्रियमाणे किंचित्प्रायश्चित्तम् । आ इत्यभिविधौ, व्याप्तिन्यायात् । 'द्व्यधिका वैश्यस्य' इति गौतमवचनात् द्वाविंशतिद्य( १ द्व्य )धिका पूर्णा चतुर्विंशतिर्भवति । तेन यावच्चतुर्विंशतिस्तावद्वैश्यस्यानतिक्रमः उपनयनकालोऽस्या( १ कालस्य । आ )षोडशादुपनयनकालो ब्राह्मणस्य नातिक्रामति । सप्तदशे प्राप्ते त्वतिक्रमः । एवमा द्वाविंशादा चतुर्विंशाद्राजन्यवैश्ययोः । अत ऊर्ध्वमतिक्रमः । अतिक्रमे सति प्रायश्चित्तम्— 'येषां द्विजानां सावित्री नानूच्येत यथाविधि । तांश्चारयित्वा त्रीन्कृच्छ्रान्यथाविध्युपनाययेत् ॥' । आवि.

‡ वस्तुतः 'षोडशे वर्षे गोदानम्' (१।२१।१३) इति सप्तम्यन्तमेवाऽऽनन्तर्यादनुवर्तनीयमपि कुतो नानुवर्तितम् ?

$ एवमपि मनुना राज्ञ एकादशस्य विधानात् तदेकवाक्यतार्थम् 'नवमे राजन्यस्य' इत्यस्मिंशे 'नवमे पूर्णे । दशमे इत्यर्थः' इत्यधिकं कल्पनीयम् ।

(१) भागृ. १।१.

(२) कागृ. ४१।१ ; ब्रक. १०१ पायनम् (पनयनम्) ; स्मृच. २६ पायनम् (पनायनम्) ; चका. ७४५ ; संसो. ९६ ब्रकवत् ; संप्र. ३४१ ब्रकवत्.

(१) कागृ. ४१।२-३ ; ब्रक. १०१ ; स्मृच. २६ ; चका. ७४५ ; संसो. ९६ ; संप्र. ३४१.

(२) कागृ. ४१।४.

## वाराहगृह्यसूत्रम्

मुख्यगौणकालाः, ब्राह्मणस्य मुख्येषु विकल्पः

**'गर्भाष्टमे ब्राह्मणमुपनयेत् । षष्ठे सप्तमे पञ्चमे वा । ततो गर्भैकादशेषु क्षत्रियं गर्भद्वादशेषु वैश्यम् । प्राक् षोडशाद्वर्षात् ब्राह्मणस्यापतिता सावित्री आ द्वाविंशात्क्षत्रियस्य । आ चतुर्विंशाद्वैश्यस्य ॥**

## आग्निवेश्यगृह्यसूत्रम्

मुख्यकालाः

**'सप्तमे वर्षे ब्राह्मणमुपनयीतैकादशवर्षे राजन्यं द्वादशे वर्षे वैश्यम् ॥**

## पारस्करगृह्यसूत्रम्

मुख्यगौणकालाः, सर्वेषां मुख्यकाला वैकल्पिकाः

**'अष्टवर्षं ब्राह्मणमुपनयेद्गर्भाष्टमे वा ॥**

(१) उपनयनसंस्कारं कुर्यादष्टमे वर्षे गर्भाष्टमे वा । गर्भसहितं वर्षं गर्भशब्देन साहचर्यादभिधीयते । तथा च गौतमः– 'गर्भादिः संख्या वर्षाणाम्' इति । वाशब्दो विकल्पार्थः । § कभा.

(२) अष्टौ वर्षाण्यतीतानि यस्यासौ अष्टवर्षः, तं ब्राह्मणं द्विजोत्तमम् उपनयेत् उपनयनाख्येन संस्कारेण संस्कुर्यात् । गर्भाष्टमे वा गर्भः गर्भसहचरितोऽब्दः अष्टमो येषां तानि गर्भाष्टमानि, तेषु अतीतेषु वा उपनयेत् । ततश्च जन्मतो नवमेऽष्टमे वा वर्षे उपनयेदित्यर्थः । हभा.

(३) आचार्यस्य उप समीपे माणवकस्य नयनम् उपनयनशब्देनोच्यते । 'उपनयनं च विधिना आचार्यसमीपनयनम्, अग्निसमीपनयनं वा, सावित्रीवाचनं वा, अन्यदङ्गम्' इति स्मृत्यर्थसारे । गर्भाष्टमे वा । अथवा ब्राह्मणं गर्भसहिताष्टवार्षिकमुपनयेत् । 'गर्भाष्टमेषु' इति पाठो हरिहरभर्तृयज्ञभाष्ये । ¶ गभा.

(४) अष्टौ वर्षाणि उत्पन्नानि यस्यासौ अष्टवर्षः । अष्टम इत्यर्थः । गर्भाष्टमेषु वा जन्मतः पञ्चमषष्ठसप्तमेष्वित्यर्थः, 'गर्भाष्टमेऽष्टमे वाऽब्दे' इत्युक्तेः, 'ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे । राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे ॥' इति । विभा.

(५) प्रसवानन्तरम् अष्टौ वर्षाण्यतीतानि यस्य बालकस्यासौ तम् अष्टवर्षं ब्राह्मणं ब्राह्मणकुलोद्भवं द्विजोत्तमम् उपनयेत् उपनयनाख्यसंस्कारेण संस्कुर्यात् । तत्रोपनयनशब्दः कर्मनामधेयम् । तथा च भारद्वाजः– 'उपायनाख्यं यत्कर्म विद्यार्थं तदुदीरितम् ।' इति । तच्च यौगिकम्, न रूढम् । उप समीपे आचार्यादीनां बटोः नीतिः नयनं प्रायणम् उपनयनम् । समीपे आचार्यादीनां नीयते बटुर्येन तदुपनयनमिति वा । तदुक्तं वीरमित्रोदये– 'गुरोर्व्रतानां वेदस्य यमस्य नियमस्य च । देवतानां समीपे वा येनासौ नीयते द्विजः ॥' इति । । सावित्रीवाचनं वोपनयनम् । तथा च कात्यायनः– 'गायत्र्या ब्राह्मणमुपनयीत' इति । मेधातिथिरपि– 'तया ह्यनुक्तया तन्न निष्पन्नं भवति' इति । तस्माद्गायत्र्युपदेश एवोपनयनपदार्थ इति । संग. ६३५

(६) अष्टमे वर्षे उपनयनसंस्कारं कुर्यादिति कर्को जयरामश्च । अत्राष्टशब्दस्याष्टमार्थे लक्षणा बोध्या । उपनयनं च विधिनाऽऽत्मसमीपनयनम्, अग्निसमीपनयनं वा, तत्पूर्वकं सावित्रीवाचनं वा । † संदी. ६४

**एकादशवर्षं राजन्यम् ॥**

**द्वादशवर्षं वैश्यम् ॥**

---

§ जभा. कभावत् ।

(१) वाग्. ५.

(२) आग्निगृ. १।१।१.

(३) पागृ. २।२।१–४; मपा. १७ (ब्राह्मणस्याष्टवार्षिकस्य गर्भाष्टवर्षस्य वा क्षत्रियस्यैकादशवार्षिकस्य वैश्यस्य द्वादशवार्षिकस्योपनयनं कुर्यात् । यथामङ्गलं वा सर्वेषामुपनयनम्).

¶ शेषं हभागतम् ।

† शेषं गभा–हभानुवादः ।

(१) एकादशेति । उपनयेत् । ‡ कभा.

(२) एकादशवर्षे राजन्यम् एकादश वर्षाण्यतीतानि यस्यासौ एकादशवर्षः, तम् । जन्मतो द्वादशवर्ष- (१ र्षम्) इत्यर्थः । राजन्यं क्षत्रियम् । उपनयेदित्यनुषज्यते । द्वादश वर्षाण्यतीतानि यस्यासौ तथा तं जन्मतस्त्रयोदशे वर्षे वैश्यमुपनयेत् । ¶ हभा.

**यथामङ्गलं वा सर्वेषाम् ॥**

(१) सर्वेषां ब्राह्मणादीनां यथामङ्गलं वा भवति । मङ्गलशब्दः शास्त्रान्तरवाची । यथा 'पञ्चमे नवमे वा कार्यम्' इत्येवमादि । † कभा.

(२) यस्मिन्नपि काले क्रियमाणं कुले मङ्गलाय तत् भवति तत्रापि कर्तव्यमित्यर्थः । ब्रक. १०१

(३) पक्षान्तरमाह– अथवा सर्वेषां ब्राह्मणक्षत्रियविशां यथामङ्गलं यथाकुलधर्मम् । यद्वा यथामङ्गलशब्देन स्मृत्यन्तरोक्तपञ्चवर्षादिकालसंग्रहः । $ हभा.

(४) यथामङ्गलं पूर्वोक्तब्रह्मवर्चसादिकामानतिक्रमेण । मपा. १७

(५) अनेन स्मृत्यन्तरोक्तः समय उपलक्ष्यते । अन्येऽपि शाखान्तरीया आपस्तम्बाद्युक्ताः समया बोद्धव्याः । केचित्तु शास्त्रीयो यस्य कुले यः पक्ष आदृतः स कुलाचार इत्याहुः । अपरे स्वशास्त्रीयमपीत्याहुः । विभा.

**[१]आ षोडशाद्वर्षाद्ब्राह्मणस्य नातीतः कालो भवति ॥**

अर्वाक् षोडशवर्षाद्ब्राह्मणस्य नातीत एवोपनयनकालः । § कभा.

‡ जभा., विभा. कभावत् ।
¶ गभा., संग., संदी. हभावत् ।
† जभा., गभा. कभावत् ।
$ संग., संदी. हभावत् ।
§ जभा., हभा., गभा., विभा., संग., संदी. कभावत् ।
(१) पागृ. २।५।३६–३८.

**आ द्वाविंशाद्राजन्यस्य ॥**

नातीतः कालो भवति । ¶ कभा.

**आ चतुर्विंशाद्वैश्यस्य ॥**

नातीतः कालो भवति । ¶ कभा.

## गोभिलगृह्यसूत्रम्

मुख्यगौणकालाः

**[१]गर्भाष्टमेषु ब्राह्मणमुपनयेत् ॥**

(१) गर्भवर्षमष्टमं येषां वर्षाणां तानि वर्षाणि गर्भाष्टमानि, तेषु गर्भाष्टमेषु वर्तमानं ब्राह्मणमुपनयेत् । अध्यापनार्थमाचार्यसमीपं नीयते येन कर्मणा तदुपनयनमिति कर्मणो नामधेयम्, तेन कर्मणा योजयेत्, 'गृह्योक्तकर्मणा येन समीपं नीयते गुरोः । बालो वेदाय तद्योगाद्बालस्योपनयनं विदुः ॥' इति स्मृतेः । संत. ९२६

(२) अत ऊर्ध्वमुपनयनलिङ्गा मन्त्रा ब्राह्मणे श्रूयन्ते, तेषां विनियोगविवक्षुरिदमाह– गर्भाष्टमेष्विति । गर्भत आरभ्य गणनया येऽष्टमा वर्षास्तेषु । बहुवचनं व्यक्तिभेदाभिप्रायेण । यदोदगयनादीनां समुच्चयस्तदैव ब्राह्मणम् उपनयेत् उपनयनकर्मणा योजयेत् । उपनयनं नाम अध्ययनार्थमाचार्यसमीपे येन कर्मणा नीयते तदुच्यते । तथा चाऽऽहुः– 'गृह्योक्तकर्मणा येन समीपं नीयते गुरोः । बालो वेदाय तद्योगाद्बालस्योपनयं विदुः ॥' इति । गर्भाष्टम इत्युपलक्षणम् । तथा च याज्ञवल्क्यः– 'गर्भाष्टमेऽष्टमे वाऽब्दे ब्राह्मणस्योपनायनम् । राज्ञामेकादशे सैके विशामेके यथाकुलम् ॥' (यास्मृ. १।१४) इति । गर्भाष्टम इत्याधानकालापेक्षया । अष्टम इति जननापेक्षया, पृथगुपादानात् । अत्रेच्छया विकल्पमाहुः । उपनयनमेवोपनायनम् । स्वार्थे णिच् । सैके इत्येकादश इत्यनुषक्तेनान्वितम् । विशां द्वादश इत्यर्थः । अत्रोभयत्रापि समस्तगुणभूतोऽपि गर्भशब्दो-

¶ जभा., हभा., गभा., विभा., संग., संदी. कभावत् ।
(१) गोगृ. २।१०।१–३ ; संत. ९२६ ; वीमि. १।१४.

ऽनुवर्तनीयः, गोभिलसंवादात्। यथाकुलं कुलस्थित्या केचिदुपनयनमिच्छन्ति। विशेषकालमाह आपस्तम्बः– 'वसन्ते ब्राह्मणमुपनयीत। ग्रीष्मे राजन्यम्। शरदि वैश्यम्' इति। वसन्त इत्याद्यधिकफलार्थम्। मनुरुपनयनमुपक्रम्य– 'ब्रह्मवर्चसकामस्य कार्यो विप्रस्य पञ्चमे। राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे॥' (मस्मृ. २।३७) इति। ब्रह्मवर्चसं वृत्तस्वाध्याययोः संपत्तिः। इहार्थिनः ऐहिकार्थकामुकस्य। एवमापस्तम्बः– 'सप्तमे ब्रह्मवर्चसकामं नवमे तेजस्कामं दशमेऽन्नाद्यकाममेकादश इन्द्रियकामं द्वादशे पशुकामम्' इति। गौतमः– 'उपनयनं ब्राह्मणस्याष्टमे, नवमे पञ्चमे वा काम्यम्' इति। अत्राष्टमे नित्यमित्यर्थः। अत्र विशेषः शुभकर्मनिर्णये यथाह पौलस्त्यः– 'पञ्चमे षष्ठवर्षे तु सगर्भे सप्तमेऽपि वा। गुरुशुक्रशशाङ्कानां विशुद्धयाऽऽरम्भयेद्व्रतम्॥ यदा गर्भाष्टमे वर्षे शुद्धिर्नास्ति बृहस्पतेः। अष्टमे वा तथाऽप्येवं व्रतं तत्र न कारयेत्॥' इति। एवं गोचरशुद्ध्यादिकमत्रोपयुक्तं बहूपपादितमेव महामहोपाध्यायहर्षनाथशर्मकृते संस्कारदीपकेऽपीति तत एवावगन्तव्यम्, ग्रन्थविस्तरभिया च नेहोपन्यस्तम्।

मृदुला.

**गर्भैकादशेषु क्षत्रियम्॥**

**गर्भद्वादशेषु वैश्यम्॥**

उपनयेदित्यनुवर्तते। अन्यदुक्तमधस्तात्। मृदुला.

**'आ षोडशाद्वर्षाद्ब्राह्मणस्यानतीतः कालो भवत्या द्वाविंशात्क्षत्रियस्याऽऽचतुर्विंशाद्वैश्यस्य॥**

(१) आ षोडशादित्यभिविधावाङ्। तथा च विष्णुधर्मोत्तरम्– 'षोडशाब्दो हि विप्रस्य राजन्यस्य द्विविंशतिः। विंशतिः सचतुर्थी च वैश्यस्य परिकीर्तिता। सावित्री नातिवर्तेत अत ऊर्ध्वं निवर्तते॥'। अत्र षोडश(१ शादि)वर्षाणामुपनयनाङ्गता प्रतीयते। 'पतिता यस्य सावित्री दशवर्षाणि पञ्च च। ब्राह्मणस्य विशेषेण तथा राजन्यवैश्ययोः। प्रायश्चित्तं भवेदेषां प्रोवाच वदतां वरः।' इति यमवचनेन तदनङ्गता प्रतीयते। अनयोर्गर्भजन्मगणनाभ्यामविरुद्धता। तथा च माण्डव्यः– 'व्रतबन्धविवाहे च वत्सरपरिगणनमाहुराचार्याः। आधानपूर्वमेके प्रसूतिपूर्वं सदाऽन्ये तु॥' यत्तु 'द्विजानाम्' इत्युपक्रम्य पैठीनसिवचनम् 'द्वादशषोडशविंशतिश्चेदतीता अविरुद्धकाला भवन्ति' इति, तद्द्वादशवर्षाद्युपरि ब्राह्मणादीनां महाव्याहृतिहोमरूपप्रायश्चित्तार्थं षोडशवर्षोपरि गुरुप्रायश्चित्तमिति। संत. ९२६–९२७

(२) यथोक्तकालेषूपनयनासंभवे त्वाह– एति। अत्राभिविधावाङ्, न मर्यादायाम्। 'तेन विना मर्यादा तेन सहेत्यभिविधिः' इति परिभाषणादिह षोडशादिवर्षान्तः कालो गौणः। तथा च– 'औपनायनिकः कालः परः षोडशवार्षिकः। द्वाविंशतिः परोऽन्यस्य स्याच्चतुर्विंशतिः परः॥' इति, 'विप्रस्य षोडशाद्वर्षाद्राज्ञो द्वाविंशतेः परम्। वैश्यस्याष्टत्रिकादब्दात्सावित्रीपतनं भवेत्॥' इति, 'षोडशाब्दो हि विप्रस्य राजन्यस्य द्विविंशतिः। विंशतिः सचतुर्थी च वैश्यस्य परिकीर्तिता॥' इति चैवमादि। मृदुला.

## खादिरगृह्यसूत्रम्

मुख्यगौणकालाः

**'अष्टमे वर्षे ब्राह्मणमुपनयेत्॥**

अत्र गर्भाधानादि वर्षगणनम्, 'गर्भादिः संख्या वर्षाणाम्' इति स्मृतेः। एवमुत्तरत्रापि। 'वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यम्' इति शाखान्तरे दर्शनात् ताभ्यामविरोधादुदगयनस्य समुच्चयः। केचित्त्वाहुः– 'शरदि वैश्यम्' इत्यनेन विरोधात्तेन च तुल्यश्रुतित्वाद्वसन्तादेर्विकल्प एवेति। रुद्रभा.

**तस्याऽऽ षोडशादनतीतः कालः॥**

आङभिविधौ। आपत्कालोऽयम्। अत ऊर्ध्वं व्रात्या भवन्ति। एवमुत्तरत्रापि। रुद्रभा.

**एकादशे क्षत्रियम्॥**

उपनयेदिति वर्तते। रुद्रभा.

**तस्याऽऽ द्वाविंशात्॥**

---

(१) गोगृ. २।१०।४; संत. ९२६.

(१) खागृ. २।४।१–६.

अनतीतः काल इत्यनुवर्तते । रुद्रभा.

**द्वादशे वैश्यम् ॥**

स्पष्टम् । रुद्रभा.

**तस्याऽऽ चतुर्विंशात् ॥**

स्पष्टम् । रुद्रभा.

## जैमिनिगृह्यसूत्रम्

**[1]सप्तमे ब्राह्मणमुपनयीत पञ्चमे ब्रह्मवर्चसकामं नवमे त्वायुष्काममेकादशे क्षत्रियं द्वादशे वैश्यम्। नातिषोडशमुपनयीत प्रसृष्टवृषणो ह्येष वृषलीभूतो भवतीति ॥**

(१) यत्तु जैमिनिनोक्तं 'नातिषोडशमुप.......' इति, तदकृतप्रायश्चित्तविषयम् । मुक्ता. ९०

(२) अतिक्रान्तषोडशवयस्कं ब्राह्मणं नोपनयीत, अनियतेन्द्रियतया ह्येष शूद्रप्रायो भवतीति । श्रीव्या.

## वैखानसगृह्यसूत्रम्

मुख्यगौणकालाः

**[2]अथ गर्भाधानादिवर्षे पञ्चमे ब्रह्मवर्चसकाममायुष्काममष्टमे नवमे श्रीकामं वसन्ते ब्राह्मणमुपनयीत। एकादशे ग्रीष्मे राजन्यम्। द्वादशे शरदि वैश्यम्। आ षोडशाद्ब्राह्मणमा द्वाविंशात्क्षत्रियमा चतुर्विंशाद्वैश्यमिति वा ॥**

**[3]'अष्टवर्षं ब्राह्मणमुपनयीत' इति श्रुतिः। तस्माद्गर्भाधानाद्यष्टमे वर्षे ब्राह्मणस्योपनयनं श्रेष्ठम्। तदसंभवे नवमे दशमे वाऽऽ षोडशात्कुर्यात् ॥**

## गौतमः

मुख्यगौणकाम्यकालाः, गर्भतो वर्षगणना

**[4]उपनयनं ब्राह्मणस्याष्टमे ॥**

(१) उपनयनस्याष्टमं वर्षं नित्यः कालः । $ अप. १।१४

(२) इदानीं स्मृत्या यत्प्रमीयते तदभिधानार्थमाह– उपनयनमिति। वेदस्य अग्नेराचार्यस्य यमनियमानां वा समीपे नयनमुपनयनम्। तदष्टमे वर्षे, वर्षगणनासामर्थ्यात् । नित्योऽयमुपनयनकालः, काम्यापत्कल्पयोरूर्ध्वमभिधानात् । क्षत्रियवैश्ययोरूर्ध्वमभिधानात् शूद्रस्यैकजातित्वादर्थसिद्धस्यापि ब्राह्मणग्रहणस्य जातिनिमित्तत्वप्रसिद्ध्यर्थमारम्भः। न च द्विजत्ववत् ब्राह्मणत्वं क्रियत इति । एवं च सुरापस्य ब्राह्मणस्य 'सुरापस्य ब्राह्मणस्योष्मामासिञ्चेयुः' इत्येवमादयो ब्राह्मणोद्देशेन विधीयमाना अनुपनीतस्यापि भवन्ति । यद्वा ब्राह्मणग्रहणेन विना त्रयाणामप्येतन्नित्यं स्यात् । काम्यं तु ब्राह्मणस्य नवमे पञ्चमे वा स्यात्, इतरयोस्त्वेकादशद्वादशयोः स्याताम्, काम्यानन्तरमभिधानात्। पूर्वसंस्काराभावेऽप्युपनयनेनाधिक्रियते, न त्वनेन बिनोपरितनैरिति गर्भाधानादिमनुक्त्वा उपनयनस्यैवेहाऽऽरम्भः । मभा.

(३) प्रथमभाविनो गर्भाधानादीन्संस्कारानुल्लङ्घ्योपनयनं व्याचक्षाणस्तस्य प्राधान्यं दर्शयति । तेन दैवानुपपत्त्या गर्भाधानादेरकरणेऽप्युपनयनं भवति, तस्याकरणे तु विवाहादिष्वनधिकार इति सिद्धम् । † गौमि.

**[1]नवमे पञ्चमे वा काम्यम् ॥**

(१) कामाय हितं काम्यं तदुत्पादनसमर्थम्। 'पञ्चमे नवमे' इति वाच्ये क्रमभेदः अनयोरन्तरा क्षत्रियवैश्ययोः काम्यकालपरिग्रहार्थः । तथा च मनुः–

---

(१) जैगृ. १।१२ ; मुक्ता. ९० (सप्तमे...वैश्यं०) षोडश (षोडशवर्ष) सृष्ट (स्रस्त) (भवतीति०).

(२) वैगृ. २।३. (३) वैगृ. ६।७.

(४) गौध. १।७ ; अप. १।१४ पृ. ३२ (उपनयनमष्टमे) ; ब्रक. १०२ ; मभा. १।१ ; मभा. ; गौमि. १।६ ; स्मृसा. ५ ; वीमि. १।१४ ; मुक्ता. ८७.

$ स्मृसा. अपवत् ।

† शेषं मभागतम् ।

(१) गौध. १।८ ; अप. १।१४ पृ. ३२ (पञ्चमे नवमे वा काम्यम्) ; ब्रक. १०२ ; मभा. ; गौमि. १।७ ; स्मृच. २६ ; चका. ७४८ ; स्मृसा. ५ ; वीमि. १।१४ ; मुक्ता. ८७.

'राज्ञो बलार्थिनः षष्ठे वैश्यस्यार्थार्थिनोऽष्टमे ।'। विसमासः काम्यमेदज्ञापनार्थः । तथा च स्मृत्यन्तरम्– 'नवमे त्वायुष्कामं पञ्चमे ब्रह्मवर्चसकामम्' इति । वाशब्दो विकल्पार्थः । स इच्छातो द्रष्टव्यः ।

$ मभा.

(२) एतच्च ब्राह्मणविषयम् । यदाहाङ्गिराः– 'ब्रह्मवर्चसकामस्य पञ्चमेऽब्देऽग्रजन्मनः । आयुःकामस्य नवमे कार्यं मौञ्जीनिबन्धनम् ॥', मनुः– 'ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे ।'। चका. ७४८

[1]**गर्भादिः संख्या वर्षाणाम् ॥**

गर्भसहचरिता दश मासा गर्भ इत्युच्यते । तत्प्रभृति वर्षगणना कर्तव्या, न तु जन्मत आरभ्य । ततश्च 'उपनयनं ब्राह्मणस्य' इत्येवमादौ 'गर्भाष्टमे' इत्येवमादि योज्यम् ।

$ मभा.

[2]**एकादशद्वादशयोः क्षत्रियवैश्ययोः ॥**

नित्योऽयं कालः, काम्यापत्कल्पयोरूर्ध्वमभि( ? मग्रे चाभि )धानात् ।

$ मभा.

[3]**आ षोडशाद्ब्राह्मणस्यापतिता सावित्री ॥**

यदा तु नित्यकाम्ययोः केनचिद्दुर्भिक्षादिना निमित्तेनातिक्रमः स्यात् तदानीमापत्कल्पमाह– एति । आङत्राभिविध्यर्थः सह षोडशेन वर्षेणेति, 'द्व्यधिकायाः' इति लिङ्गात् 'षोडशे सर्वकामम्' इति स्मृत्यन्तरदर्शनाच्च । अपतिता अनपगता । सावित्रीशब्देन तत्साधनमुपनयनमुच्यते । उपनयनस्याधिकृतो भवतीत्यर्थः । अनुपनीतस्यापि जातेरविनाशार्थं ब्राह्मणग्रहणम् । एवं च पित्रादिष्वनुपनीतेष्वपि प्रायश्चित्तेनोपनयनेऽधिक्रियते । तथा चाऽऽपस्तम्बः– '† यस्य पिता......पितामहः ......प्रपितामहः' इत्यादि ।

¶ मभा.

[1]**द्वाविंशते राजन्यस्य ॥**

[2]**द्व्यधिकाया वैश्यस्य ॥**

(१) अत्राप्याङनुवर्तते । वर्षसहितम् । राजन्यशब्दप्रयोगो राजत्वप्रसिद्ध्यर्थः, तस्योपनीतस्यैव राज्याधिकार इति । द्वाभ्यामधिकाभ्यां सहिता या द्वाविंशतिः सा द्व्यधिका, चतुर्विंशतिरित्यर्थः । चतुर्विंशतेरिति वक्तव्ये एवमभिधानं पूर्वत्राऽऽङोऽभिविधिज्ञापनार्थम् । मभा.

(२) उभयत्राप्याङनुवर्तते । पूरणप्रत्ययस्य लोपो द्रष्टव्यः । आ द्वाविंशाद्वर्षाद्राजन्यस्याऽऽ चतुर्विंशाद्वैश्यस्यापतिता सावित्री । गौमि.

## हारीतः

तत्तत्सावित्रीपादाक्षरसंख्यापूरणं वर्षं तस्य तस्य मुख्यः कालः, पादद्वयाक्षरसंख्यापूरणवर्षान्तो गौणः कालः

§ [3]**तच्छन्दःसु पादाक्षरवदब्दसमुदाय उप-**

---

$ गौमि. मभागतम् ।

(१) गौध. १।९; कमा. १९७ दिः संख्या ( दिसंख्या ); अप. १।१४ पृ. ३२ कमावत्; ब्रक. १०२ कमावत्; मभा.; गौमि. १।८; स्मृच. २६ कमावत्; चका. ७४८ कमावत्; जमा. १९८ कमावत्; स्मृसा. ५; मुक्ता. ८७ कमावत्; संको. ११९ कमावत्; संव. ९५ स्मृतिः .

(२) गौध. १।१३; ब्रक. १०२; मभा.; गौमि. १।१२; मुक्ता. ८७.

(३) गौध. १।१४; मभा.; गौमि. १।१३; चका. ७५२ स्यापतिता सावित्री ( स्य नात्ययः ); मुक्ता. ८९ स्यापतिता ( स्य पतिता ); संको. ११९.

† एवमेवाऽऽदर्शपुस्तके मुद्रितम् । आपस्तम्बसूत्राणि त्वेवम्– 'अथ यस्य पिता पितामह इत्यनुपेतौ स्यातां ते ब्रह्महसंस्तुताः । तेषामिच्छतां प्रायश्चित्तम् । अथोपनयनम्' ( १।१।३२, ३४, ३६ ) 'अथ यस्य प्रपितामहादि नानुस्मर्यंत उपनयनं ते श्मशानसंस्तुताः । तेषामिच्छतां प्रायश्चित्तम्, अथोपनयनम्' ( १।२।५, ६ ) इति ।

¶ गौमि. मभागतम् ।

§ अस्य मविव्याख्यानम् 'आ षोडशात्' इति मनुवचनव्याख्याने द्रष्टव्यम् ।

(१) गौध. १।१५; मभा.; गौमि. १।१४; चका. ७५२ ( आ द्वाविंशात् क्षत्रियस्य ).

(२) गौध. १।१६; विश्व. १।३७; मभा.; गौमि. १।१४; चका. ७५२ ( आ चतुर्विंशाच्च वैश्यस्य ).

(३) गोरा. २।३८ ( छन्दःसु पादाक्षरस्तदब्दसमवाये

**नयनम्, द्वितीयो नार्हः कालः, तृतीयः पतितस्तादृक्काले व्रात्यो भवति ॥**

अस्यार्थः– तेषां ब्राह्मणक्षत्रियविशां यानि छन्दांसि 'गायत्र्या ब्राह्मणमुपनयीत, त्रिष्टुभा राजन्यम्, जगत्या वैश्यम्' इतिश्रुतिविहितानि तेषु त्रिषु छन्दःसु ये पादाक्षयश्चत्वारश्च तेषां यान्यक्षराणि अष्टैकादश द्वादश तद्वन्तः तत्संख्यावन्तः ये अब्दाः वर्षाणि तेषां समुदायः मेलनं यस्मिन्वर्षे तस्मिन्नुपनयनम् । अयमभिसंधिः– गायत्र्याः पादे अष्टाक्षराणि भवन्ति, तेन ब्राह्मणस्याष्टमे वर्षे उपनयनम् । त्रिष्टुभः पादे एकादशाक्षराणि भवन्ति, तेन क्षत्रियस्यैकादशे वर्षे । जगत्याः पादे द्वादशाक्षराणि भवन्ति, तेन वैश्यस्य द्वादशे वर्षे इति । एवं तर्हि द्वितीयेऽप्यब्दसमुदाये तुल्यन्यायत्वादुपनयनं कुतो नेत्यत आह– द्वितीय इति । द्वितीयः कालः कलयत्यक्षरसंख्यामिति कालः अब्दसमुदायः नवमवर्षमारभ्याष्टौ वर्षाणीत्यादिः नार्हः मुख्यो न, किंतु गौणः । किंचित्प्रत्यवायजनक इत्यर्थः । द्वितीयश्चेन्नार्हस्तर्हि तृतीये तदस्त्वित्यत आह– तृतीय इति । तृतीयोऽब्दसमुदायः सप्तदशवर्षमारभ्याष्टौ वर्षाणीत्यादिः पतित उपनयनेऽत्यन्तं गर्हितः अतिशयितप्रत्यवायजनक इत्यर्थः । कुत इत्यत आह– तादृशे काले तृतीयेऽब्दसमुदाये ब्राह्मणादिवटुः व्रात्यः संस्कारानर्हः भवति । संज्ञाकरणमुत्तरव्यवहाराय । अत्र मूलभूतं श्रुतिं मेधातिथिरुदाजहार– ¶ 'सावित्र्या ब्राह्मणमुपनयीत, त्रिष्टुभा राजन्यम्, जगत्या वैश्यमिति । एतेषां च छन्दसामियता कालेन द्वौ पादौ पूर्येते तदन्तं काल्कलवन्ति संत्यजन्ति स्वाश्रयभूतान् वर्णान् । तृतीये तु पादे प्रक्रान्ते आत्तरसान्यतिवयांसि न्यूनसामर्थ्यानि भवन्ति समाप्तिमुपयान्ति । यथा पञ्चाशतस्थः स्थविरो मनुष्य इति । अतश्च नैतेन वयमुपासितानीति त्यजन्ति तं वर्णम् । ततो न गायत्रो ब्राह्मणो न त्रैष्टुभो राजन्यो न जागतो वैश्यः' इति । सावित्र्यत्र गायत्री 'तत्सवितुः' इति, त्रिष्टुप् 'आकृष्णेन' इति, जगती 'विश्वा रूपाणि' इति । इयता कालेन षोडशादिवर्षात्मकेन द्वौ पादौ षोडशाद्यक्षरसंख्यौ पूर्येते । तदन्तं तस्य कालस्य अन्तं षोडशादिवर्षम्, प्राप्येति शेषः, तानि काल्कलवन्ति– कल्कः शोधकं द्रव्यम्, 'गौरसर्षपकल्केन' इत्यादिप्रयोगदर्शनात्, तत्संबन्धी काल्कः, स चासौ लवश्चेति काल्कलवः शोधकद्रव्यकणः, तद्वदाचरन्तीति । तद्वच्छोधकानि भवन्तीत्यर्थः । यद्वा कल्कः पापम्, 'कल्कोऽस्त्री शमलैनसोः' इत्यभिधानात्, तत्संबन्धी काल्कः, स चासौ लवश्चेति तद्वदाचरन्ति ईषत्पापवन्ति भवन्तीत्यर्थः ।

$ संप्र. ३४४–३४५

## बौधायनः

गर्भतो वर्षगणना, मुख्यगौणकालाः

**'गर्भादिः संख्या वर्षाणाम् । तदष्टमेषु ब्राह्मणमुपनयेत् ॥**

(१) तदष्टमेषु तस्मात् गर्भात् अष्टमेषु । बहुवचनात् षष्ठसप्तमयोर्ग्रहणमिति भाष्यकारः । ततश्च गर्भषष्ठे गर्भसप्तमे गर्भाष्टम इति सिध्यति ।

§ संप्र. ३४०

---

¶ अत्र 'आ षोडशात्' इति मानववचनमेधातिथिव्याख्यानधृतमेतद्वचनमनुसंधेयम् ।

उपनयनम्) एतावदेव; **मचि.** २।३८ (तच्छब्दपादाक्षरवदब्दसमवाय उपनयनम्) एतावदेव; **चका.** ७५१ (छन्दःसु पादाक्षरवदब्दसमुदाय उपनयनम्) एतावदेव, अवन्तिमिहिरः; **संप्र.** ३४४; **मुक्ता.** ८७ (छन्दःसु पादाक्षरसमुदायवदब्दसमूहे उपनयनम्) एतावदेव.

$ मुक्ता. संप्रगतम् ।

§ संकौ. संप्रगतम् ।

(१) **बौध.** १।३।८; **मनु.** २।६५ (गर्भादिसंख्या वर्षाणाम्) एतावदेव; **चका.** ७४५ दिः संख्या (दिसंख्या); **वीक.** १।३६ (गर्भादिः संख्या वर्षाणाम्) एतावदेव; **मच.** २।६५ ममुवत्; **वीमि.** १।३६ ममुवत्; **संप्र.** ३४०; **संकौ.** ११९ चकावत्.

(२) उपनयनस्य कालमाह— गर्भादिरिति । तदष्टमेषु गर्भाष्टमेष्वित्यर्थः । 'छन्दोवत् सूत्राणि' इति व्यत्ययेन परस्मैपदम् । यद्यपि गर्भादिः सर्वोऽप्युपनयनस्य कालः, तथापि प्राक् पञ्चमादसामर्थ्यान्निवृत्तिः । पञ्चमप्रभृतिरिष्यत एव 'पञ्चमे ब्रह्मवर्चसकामः' इत्यादिश्रुतितस्तदादिरेव गृह्यते । बौवि.

**[1]त्र्यधिकेषु राजन्यमुपनयीत ॥**

गर्भैकादशेष्विति यावत् । बौवि.

**[2]तस्मादेकाधिकेषु वैश्यम् ॥**

गर्भद्वादशेष्वित्यर्थः । बौवि.

**[3]आ षोडशादा द्वाविंशादा चतुर्विंशादित्यनात्यय एषां क्रमेण ॥**

अनात्ययः अनतिक्रमः उपनयनकालस्य । बौवि.

## आपस्तम्बः हिरण्यकेशिधर्मसूत्रं च

गर्भतो वर्षगणना, मुख्यगौणकाम्यकालाः

**[4]गर्भाष्टमेषु ब्राह्मणं गर्भैकादशेषु राजन्यं गर्भद्वादशेषु वैश्यम् ॥**

(१) गर्भस्थस्य यः कालो वर्षे सोऽपि गर्भः । तस्मादष्टमवर्षपूरणं येषां तानि, तेषूपनयनम् । नायमपूर्वविधिः, किंतु 'सप्तवर्षम्' इत्यादिगृह्यवद्व्याख्या । बहुवचनं काम्यानामपि तेष्वन्तर्भावार्थम् । उ.

(२) धर्मसूत्रेऽप्युपनयनकाल उक्तः । गर्भसहचरितं वर्षमपि लक्षणया गर्भशब्देनोच्यते । तदष्टमं येषां षष्ठादीनां वर्षाणां तानि गर्भाष्टमानि, तेषूपनयनमित्यर्थः, 'गर्भादिः संख्या वर्षाणां तदष्टमेषु ब्राह्मणमुपनयेत्' इति वचनात् । वर्षे चात्र चान्द्रमानेन चैत्रशुक्लप्रतिपदादीति केचित् । अन्ये त्वष्टममासारम्भं गर्भाधानं वाऽऽरभ्य वर्षप्रवृत्तिमाहुः । गर्भाष्टमेष्वित्यत्र बहुवचनं षष्ठसप्तमयोः संग्रहार्थमिति सुदर्शनः । काम्यानामपि तेष्वन्तर्भावार्थमित्युज्ज्वलाकृतो महादेवदीक्षिताः । संर. १६६

**§[1]अथ काम्यानि ॥**

**[2]सप्तमे ब्रह्मवर्चसकामम् ॥**

**[3]अष्टम आयुष्कामम् ॥**

---

(१) बौध. १।३।९ ; चका. ७४५ ( तदधिकेषु च राजन्यम् ) ; संप्र. ३४० ( राजन्यमेकादशे ) ; संको. ११९ संप्रवत् .

(२) बौध. १।३।१० ; चका. ७४५ ( तस्मादधिकेषु च वैश्यम् ) ; संप्र. ३४० ( द्वादशे वैश्यम् ) ; संको. ११९ ( वैश्यं द्वादशे ).

(३) बौध. १।३।१२ ; चका. ७५२ ( आ षोडशाद् द्वाविंशाच्चतुर्विंशादनत्ययः ).

(४) आध. १।१।१९ ; हिध. २६।१।२१ दशेषु रा ( दशे रा ) ; ब्रक. १०० ; संर. १६६ दशेषु वै ( दशे वै ) शेषं हिधवत् .

§ एतेषां संप्रव्याख्यानमेतादृशबौधायनगृह्यवचनव्याख्याने द्रष्टव्यम् ।

(१) आध. १।१।२० ; हिध. २६।१।२२ ; ब्रक. १०२ ; स्मृच. २६ ; चका. ७४९ ( अथ काम्याः ) ; हमा. १९९ ; गमा. २०१ ; संसौ. ९७ ; संप्र. ३४६ ; सिन्धु. ९२७ ; विपा. ४७० ; बाल. १।१४ पृ. ४५ ; संग. ६४३ ; संर. १६७.

(२) आध. १।१।२१ ; हिध. २६।१।२३ ( सप्तम आयुष्कामम् ) ; अप. १।१४ पृ. ३२ ; ब्रक. १०२ ; स्मृच. २६ ; चका. ७४९ ; हमा. १९९ ; स्मृसा. ५ ; पमा. ४४६ ; मपा. १७ (=) ; गमा. २०१ ; संसौ. ९७ ; संप्र. ३४६ ; चम. १३ ; संम. २१ ; सिन्धु. ९२७ ; विपा. ४७० ; बाल. १।१४ पृ. ४५ ; संग. ६४३ ; पुम. ४३७ ; संर. १६७ हिधवत् .

(३) आध. १।१।२२ ; हिध. २६।१।२३ (अष्टमे ब्रह्मवर्चसकामम् ) ; अप. १।१४ पृ. ३२ ; ब्रक. १०२ ; स्मृच. २६ ; चका. ७४९ आयुष्का (आयुःका) ; हमा. १९९ ; स्मृसा. ५ चकावत् ; पमा. ४४६ चकावत् ; मपा. १७(=) ; गमा. २०१ ; संसौ. ९७ चकावत् ; बौमि. १।१४ हिधवत् ; संप्र. ३४६ ; चम. १३ ; संम. २१ चकावत् ; सिन्धु. ९२७ ; विपा. ४७० ; बाल. १।१४ पृ. ४५ ; संग. ६४३ ; पुम. ४३७ ; संर. १६७ हिधवत् .

'नवमे तेजस्कामम् ॥

'दशमेऽन्नाद्यकामम् ॥

'एकादश इन्द्रियकामम् ॥

'द्वादशे पशुकामम् ॥

(१) अत्रोपनयीतेत्यनुषङ्गः । अप. १।१४

(२) कामनिमित्तान्युपनयनानि वक्ष्यन्ते । 'ब्रह्मवर्चसकामम्' इत्यादीनि षट् सूत्राणि स्पष्टार्थानि । सर्वत्र उपनयीतेत्यपेक्ष्यते । उ.

(३) 'एतच्च वर्णत्रयसाधारणम्, तदुपनयनानन्तरमस्य विधानात्' इत्युक्तं तद्भाष्ये । ‡ स्मृच. २७

(४) 'एतच्च वर्णत्रयसाधारणम्, तदुपनयनानन्तरमस्य विधानात्' इत्युक्तं तद्भाष्ये । तदयुक्तम्, 'ब्रह्मवर्चसकामस्य' इत्यादिपूर्वप्रदर्शितमङ्गिरसोर्व(? ङ्गिरोव)चनविरोधात् । तस्मादत्राऽऽद्यविधिद्वयमब्राह्मणविषयम्, उत्तरं तु विधिचतुष्टयं बाधकाभावाद्वर्णत्रयसाधारणमिति द्रष्टव्यम् । ¶ चका. ७४९

(५) ब्रह्मवर्चसं वृत्तस्वाध्याययोः संपत्तिः । स्मृसा. ५

'आ षोडशाद्ब्राह्मणस्यानात्यय आ द्वाविंशात्क्षत्रियस्याऽऽ चतुर्विंशाद्वैश्यस्य यथा व्रतेषु समर्थः स्याद्यानि वक्ष्यामः ॥

(१) 'आचार्याधीनः स्यात्' इत्यादीनि यानि ब्रह्मचारिणो व्रतानि वक्ष्यन्ते तेष्वसमर्थानां कुमाराणां वर्णक्रमेणानुकल्पमाह– एति । आकारोऽभिविधौ । अत्ययः अतिक्रमः । स एवाऽऽत्ययः । तदभावोऽनात्ययः । याहच्छिको दीर्घः, आङो वा प्रश्लेषः । प्रकरणादुपनयनकालस्येति गम्यते । यथा व्रतेषु समर्थः स्यात् तथैतावान् कालः प्रतीक्ष्यः । पूर्वमेव तु सामर्थ्ये सत्यष्टमवर्षाद्यतिक्रमे वक्ष्यमाणं प्रायश्चित्तमेव भवति । एवं षोडशादिभ्य ऊर्ध्वं कियन्तं चित्कालमसमर्थानां पश्चात्सामर्थ्ये सति प्रायश्चित्तं भवत्येव । † उ.

---

‡ पमा. स्मृचवत् ।

¶ संकौ. चकानुवादः ।

† मुक्ता., आन. उज्ज्वलानुवादः ।

(१) आध. १।१।२३; हिध. २६।१।२३; अप. १।१४ पृ. ३२; ब्रक. १०२; स्मृच. २६; चका. ७४९ तेजस्का (तेजःका); हमा. १९९; स्मृसा. ५; पमा. ४४६; मपा. १७ (=); गमा. २०१; संसौ. ९७; बौमि. १।१४; संप्र. ३४६; चम. १३; संम. २१; सिन्धु. ९२७; विपा. ४७१; बाल. १।१४ पृ. ४५; संग. ६४३; पुम. ४३७; संर. १६७.

(२) आध. १।१।२४; हिध. २६।१।२३; अप. १।१४ पृ. ३२ न्नाद्य (न्नादि); ब्रक. १०२; स्मृच. २६; चका. ७४९; हमा. १९९; स्मृसा. ५; पमा. ४४६; मपा. १७ (=); गमा. २०१; संसौ. ९७ मेऽन्ना (मेन्द्रा); बौमि १।१४; संप्र. ३४६; चम. १३; संम. २१; सिन्धु. ९२७; विपा. ४७१; बाल. १।१४ पृ. ४५; संग. ६४३; पुम. ४३७; संर. १६७.

(३) आध. १।१।२५; हिध. २६।१।२३; अप. १।१४ पृ. ३२; ब्रक. १०२; स्मृच. २६–२७; चका. ७४९; हमा. १९९; स्मृसा. ५; पमा. ४४६; मपा. १७ (=); गमा. २०१; संसौ. ९७; बौमि. १।१४; संप्र. ३४६; चम. १३; संम. २१; सिन्धु. ९२७; विपा. ४७१; बाल. १।१४ पृ. ४५; संग. ६४३; पुम. ४३७; संर. १६७.

(४) आध. १।१।२६; हिध. २६।१।२३; अप. १।१४ पृ. ३२; ब्रक. १०२; स्मृच. २७; चका. ७४९; हमा. १९९ कामम् + (उपनयेत्); स्मृसा. ५; पमा. ४४६; मपा. १७ (=) हमावत्; गमा. २०१ हमावत्; संसौ. ९८ हमावत्; बौमि. १।१४; संप्र. ३४६; चम. १३; संम. २१; सिन्धु. ९२७ हमावत्; विपा. ४७१ हमावत्; बाल. १।१४ पृ. ४५; संग. ६४३ कामम् + (उपनयीत); पुम. ४३७ हमावत्; संर. १६७.

(१) आध. १।१।२७; हिध. २६।१।२४–२५; संप्र. ३४६ स्यानात्यय (स्य नात्यय) (यथा ... वक्ष्यामः०); मुक्ता. ८९ स्याऽऽ चतु (स्य चतु); आन. १५३ (=) (अनात्यय... वक्ष्यामः०); (आषोडशा ... वैश्यस्य०); बाल. १।३८ (आषोडशाद्ब्राह्मणस्य नात्ययः) एतावदेव; संर. १६७ (यथा...... वक्ष्यामः०).

(२) अत्र आङ् अभिविधौ । मर्यादायामिति केचित् । आपत्तौ षोडशवर्षपर्यन्तोऽप्युपनयनकाल इति तात्पर्यार्थः । संर. १६७

## वसिष्ठः

मुख्यगौणकाम्यकालाः, गर्भतो वर्षगणना, काम्येष्ववधिविकल्पः

[1]गर्भाष्टमेषु ब्राह्मणमुपनयीत, गर्भादेकादशेषु राजन्यम्, गर्भाद्द्वादशेषु वैश्यम् ॥

[2]मौञ्जीबन्धः शस्यते ब्राह्मणानां
गर्भाधानाज्जन्मतो वाऽष्टमेऽब्दे ।
भूमीशानामेवमेकादशाब्दे
वैश्यानां च द्वादशे वेदविद्भिः ॥

[3]कुमारस्याष्टमे वर्षे गर्भाद्वा जन्मनस्तथा ।
ब्रह्मवर्चसकामस्तु नित्यं विप्रो विशेषतः ॥

[4]अन्नाद्यकामो नवमे धीकामो दशवत्सरे ।
एकादशे रत्नकामो द्वादशे पुष्टिकामनः ॥

[5]आ षोडशाद्ब्राह्मणस्य नातीतः कालः ॥
आ द्वाविंशात्क्षत्रियस्य ॥
आ चतुर्विंशाद्वैश्यस्य ॥

[6]आ षोडशाब्दात्सर्वेषामनतीतो महापदि ।
अतिषोडशको विप्रो नोपनेयः कदाचन ।
क्षत्रियो विंशतेर्नोर्ध्वं न वैश्यः पञ्चविंशकात् ॥

विंशतिरत्र द्व्यधिका द्रष्टव्या । पञ्चविंशकादिति गर्भमवधीकृत्य, 'आ चतुर्विंशात्' इत्यभिधानात् । संप्र. ३४६

(१) वस्मृ. ११।४४.

(२) वसं. २९।२.

(३) प्रपा. २१३ ; संप्र. ३४५ नस्तथा (तस्ततः).

(४) प्रपा. २१३ रत्न (स्वन्न) कामनः (कामकः) ; संप्र. ३४५.

(५) वस्मृ. ११।५१–५३.

(६) प्रपा. २१३ शको (शिको); संप्र. ३४५ शाब्दात्स (शाद्वा स) तेर्नोर्ध्वं (तेरूर्ध्वं).

## विष्णुः

गर्भतो वर्षगणना, मुख्यकाम्यगौणकालाः

[1]गर्भाष्टमेऽब्दे ब्राह्मणस्योपनयनम् ॥
गर्भैकादशे राज्ञः ॥
गर्भद्वादशे विशः ॥

[2]गर्भाष्टमाब्दे कुर्वीत ब्राह्मणस्योपनायनम् ।
गर्भस्यैकादशे राज्ञो गर्भस्य द्वादशे विशः ॥

[3]षष्ठे तु धनकामस्य विद्याकामस्य सप्तमे ।
अष्टमे सर्वकामस्य नवमे कान्तिमिच्छतः ॥

इदं त्रैवर्णिकविषयम् । $ चम. १३

[4]आ षोडशाद्ब्राह्मणस्य सावित्री नातिवर्तते ।
आ द्वाविंशात्क्षत्रबन्धोरा चतुर्विंशतेर्विशः ॥

## लघुविष्णुः

गर्भतो गणनीया मुख्यकालाः

[5]गर्भाष्टमे तथा कर्म ब्राह्मणस्योपनायनम् ।
द्विजत्वे त्वथ संप्राप्ते सावित्र्यामधिकारभाक् ॥
गर्भादेकादशे सैके कुर्यात्क्षत्रियवैश्ययोः ।
कारयेद्द्विजकर्माणि ब्राह्मणेन यथाक्रमम् ॥

## शङ्खः शङ्खलिखितौ च

गर्भतो गणनीया मुख्यगौणकालाः

[6]गर्भाष्टमेऽब्दे कर्तव्यं ब्राह्मणस्योपनायनम् ।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥

$ बाल. चमवत् ।

(१) विस्मृ. २७।१५–१७.

(२) चका. ७४६.

(३) गभा. २०१ ; प्रर. ८१ ; चम. १३ ; सिन्धु. ९२७ ; विपा. ४७० ; बाल. १।१४ पृ. ४५ ; संग. ६४३ ; पुम. ४३७. (४) विस्मृ. २७।२६.

(५) लघुविस्मृ. १।१३–१४.

(६) शंस्मृ. २।६ ; चका. ७४६ (गर्भाष्टमेषु कुर्वन्ति ब्राह्मणस्योपनायनम् । एकादशे क्षत्रियस्य वैश्यस्य द्वादशे स्मृतम् ॥ ) मनुशङ्खौ ; बभा. ११२ मेऽब्दे कर्तव्यं (मे वै कुर्वीत) पू., मनुशङ्खव्यासाः.

**[1]गर्भाष्टमे ब्राह्मणमुपनयेत् , राजन्यमेकादशे, द्वादशे वैश्यम् ॥**

**[2]षोडशाब्दानि विप्रस्य राजन्यस्य द्विविंशतिः ।**
**विंशतिः सचतुष्का तु वैश्यस्य परिकीर्तिता ।**
**नातिवर्तेत सावित्रीमत ऊर्ध्वं निवर्तते ॥**

षोडशत्वं चात्र गर्भतो ज्ञातव्यम् , मनुना 'गर्भाष्टमेऽब्दे कुर्वीत' इत्युपक्रम्य 'आ षोडशाद्ब्राह्मणस्य' इत्यभिधानात् , गौतमेनापि 'गर्भादिसंख्या वर्षाणाम्' इत्युपक्रम्य 'आ षोडशाद्ब्राह्मणस्यापतिता सावित्री' इत्यभिहितत्वाच्च । एतेन बौधायनादिस्मृत्यन्तरवाक्यान्यपि व्याख्यातानि । यस्तु 'आ षोडशात्' इति याज्ञवल्क्यीये षोडशशब्दः स जन्मतः , तत्र गर्भपदानन्वयस्य प्रागुक्तत्वात् । आङ् चात्र मर्यादायाम् । इदमेव चाभिप्रेत्य यमेन 'सावित्री पतिता यस्य दश वर्षाणि पञ्च च । सशिखं वपनं कृत्वा व्रतं कुर्यात्समाहितः ॥' इति पञ्चदशैव वर्षाणि गौणकालोऽभिहितः । स च जन्मतः संख्याकरण एव घटते, जन्मतः पञ्चदशस्य गर्भतः षोडशत्वात् । तदभिव्याप्तौ न विरोधः । अत एवाऽऽश्वलायनस्मृतौ 'विप्राणां षाडशोऽवधिः । द्विजत्वप्रापणे राज्ञां द्वाविंशोऽब्दोऽवधिः स्मृतः । वैश्यस्य चाऽऽ चतुर्विंशात्त्रय एते द्विजातयः ॥' इत्यत्र जन्मतः षोडशस्य स्पष्टमवधित्वमेव व्याजहार । यद्येवं तर्हि गर्भषोडशस्याप्यवधित्वमेवास्तु, किमभिव्याप्त्या ? इति चेत्, मैवम् , 'तच्छन्दःसु पादाक्षरवदब्दसमुदाय उपनयनम् , द्वितीयो नार्हः कालः , तृतीयः पतितस्तादृक्काले व्रात्यो भवति ' इतिहारीतस्मरणविरोधात् ।

संप्र. ३४३-३४४

**[3]आ षोडशाद्ब्राह्मणस्यानतीतः कालो भवति, आ द्वाविंशाद्राजन्यस्य, आ चतुर्विंशाद्वैश्यस्य ॥**

---

(१) चका. ७४५ शङ्खलिखितौ.

(२) शंस्मृ. २।७ ; चका. ७५२ तु (च) त्रीमत (त्री अत) ; संप्र. ३४३ तु (च) तृतीयार्धं नास्ति : ३४७ त्रीमत (त्री अत) तृतीयार्धमात्रम् ; संकौ. ११९ प्रथमपादमात्रम् . (३) चका. ७५२ शङ्खलिखितौ.

## मनुः

गर्भतो गणनीया मुख्यगौणकाम्यकालाः

**[1]गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् ।**
**गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥**

(१) गर्भस्थस्य यः संवत्सरस्तत आरभ्य योऽष्टमोऽब्दः । गर्भशब्देन साहचर्यात्संवत्सरो लक्ष्यते । न हि मुख्यया वृत्त्या 'गर्भस्य संवत्सरोऽष्टमः' इति व्यपदेशं लभते । तस्मिन्नौपनायनं ब्राह्मणस्य कुर्वीत । उपनयनमेवौपनायनम् । स्वार्थिकोऽण् । § 'अन्येषामपि दृश्यते' (पासू. ६।३।१३७) इत्युत्तरपदस्य दीर्घः । छान्दसत्वाद्वोभयपदवृद्धिः । उपनयनमिति ह्येष संस्कारो वेदविदां गृह्यस्मृतिषु प्रसिद्धो मौञ्जीबन्धनापरपर्यायः । उपनीयते समीपं प्राप्यते येनाऽऽचार्यस्य स्वाध्यायाध्ययनार्थम् , न कुड्यं कटं वा कर्तुम्, तदुपनयनम् । विशिष्टस्य संस्कारकर्मणो नामधेयमेतत् । गर्भादेकादशे राज्ञः । गर्भात्प्रभृति गर्भाद्वा परो य एकादशोऽब्दस्तत्र क्षत्रियस्य कर्तव्यम् । राजशब्दोऽयं क्षत्रियजातिवचनो नाभिषेकादिगुणयोगमपेक्षते, ग्रन्थेषु तथा प्रयोगदर्शनात् , ब्राह्मणादिजातिशब्दसाहचर्याच्च, गुणविधिषु च क्षत्रियशब्ददर्शनात् 'क्षत्रियस्य तु मौर्वी' इति । यस्तु राज-

---

§ कुल्लूकेनाप्येवमेवोक्तम् । वस्तुतः 'अलुगुत्तरपदे' (पासू. ६।३।१) इत्युत्तरपदाधिकारस्थेनानेन सूत्रेण पूर्वपदस्थस्य दीर्घो विहितः , नोत्तरपदस्य ।

(१) मस्मृ. २।३६ ; मेधा. स्योप (स्यौप) ; मिता. १।१४ गर्भात्तु (गर्भाद्धि) उत्त. , स्मृत्यन्तरम् ; अप. २०३ ; स्मृच. २४ पू., २६ ; चका. ७४६ (गर्भाष्टमेषु कुर्वन्ति ब्राह्मणस्योपनायनम् । एकादशे क्षत्रियस्य वैश्यस्य द्वादशे स्मृतम् ॥) मनुशङ्खौ ; चश्रा. ११२ मेऽब्दे (मे वै) पू. , मनुशङ्खव्यासाः ; पमा. ४४६ ; मपा. १७ ; दीक. १।१४ उत्त. ; धप्र. ३९ ; संप्र. ३४१ ; चम. १३ उत्त. ; मुक्ता. ८५ पू. , ८६ ; संकौ. ११८ उत्त. , स्मृत्यन्तरम् ; आन. १५२ मेऽब्दे (माब्दे) पू. ; बाल. १।१४ पृ. ४४ मेधावत्, पू. ; कुम. ९२७ उत्त. , स्मृत्यन्तरम् ; संर. १६७ उत्त. , स्मृत्यन्तरम् .

शब्दस्य क्षत्रियादन्यत्र जनपदेश्वरे वैश्यादौ प्रयोगः स गौण इति वक्ष्यामः । मुख्ये चासति गौणस्य ग्रहणम् । तथा च गृह्यकारः— 'अष्टमे वर्षे ब्राह्मणमुपनयेदेकादशे क्षत्रियं द्वादशे वैश्यम्' इति । †भगवांश्च पाणिनिः एवमेव प्रतिपन्नः 'राज्ञः कर्म राज्यम्' इति राज्यशब्दस्य राजशब्दं प्रकृतिं ब्रुवन्नेव जनपदैश्वर्येण राजशब्दार्थप्रसिद्धिमाह । § मेधा.

(२) तन्मातुर्गर्भग्रहणदिनादष्टमे । तत्रापि उपनयनं पित्रा कार्यमसंभवेऽन्येनापि कारयितव्यमित्येतदर्थमुपनायनमिति प्रयोजनव्यापारः पित्रादीनां दर्शितः । मवि.

(३) गर्भाष्टमे गर्भादारभ्याष्टमे । उपनयनमेवोपनायनम् । अब्दसंख्यानियमस्यायमभिप्रायः— ब्रह्मक्षत्रविशां गायत्री( ? त्र )त्रिष्टुभजागतैश्छन्दोभिः सहजत्वं श्रूयते— 'गायत्री छन्दो रथंतरं साम ब्राह्मणो मनुष्याणामजः पशूनां तस्मात्ते मुख्या मुखतो ह्यसृज्यन्त' इति, 'त्रिष्टुप् छन्दो बृहत्साम राजन्यो मनुष्याणामविः पशूनाम्' इति, 'जगती छन्दो वैरूपं साम वैश्यो मनुष्याणां गावः पशूनाम्' (तैसं. ७।१।१।४,५) इति च । गायत्र्यादिभिरेतेषामुपनयनं च स्मर्यते वासिष्ठे— 'गायत्र्या ब्राह्मणमुपनयीत$ त्रिष्टुभा राजन्यं जगत्या वैश्यम्' (वस्मृ.४।३) इति । ततश्चोपनयनाब्दा अपि स्वस्वच्छन्दोक्षरसमसंख्या भवितुमर्हन्तीति । छन्दसां चाक्षरसंख्या श्रूयते— 'अष्टाक्षरा गायत्री, एकादशाक्षरा त्रिष्टुप्, द्वादशाक्षरा जगती' (तैसं. ३।४।९।७) इति । एकैकपादाभिप्रायेयम् । तथा च श्रुतिः— 'चतुर्विंशत्यक्षरा गायत्री, चतुश्चत्वारिंशदक्षरा त्रिष्टुप्, अष्टाचत्वारिंशदक्षरा जगती' (तैसं. २।५।१०।३, ४) इति । हारीतः— 'छन्दःसु पादाक्षरसमुदायवदब्दसमूह उपनयनम्' इति । गायत्र्यादिपादाक्षरसंमितेऽब्द इत्यर्थः । ततश्चाष्टमैकादशद्वादशेष्वेव वर्षेषु ब्राह्मणक्षत्रियवैश्यानां मुख्यमुपनयनमिति । मुक्ता. ८६—८७

(४) नामधेयादिषु जन्माऽऽरभ्य कालसंख्योक्ता उपनयने सा मा भूदिति गर्भग्रहणम् । गर्भशब्देन च गर्भसहचरितोऽब्दो( ऽपि ? ) विवक्षितः । गर्भाष्टमे गर्भादारभ्याष्टमे । उपनयनमेवोपनायनम् । उपनयनात्पूर्वमेव जन्मत एव ब्राह्मण्यमस्तीति सूचितं ब्राह्मणस्येति । ‡ नन्द.

(५) अतः परं द्विजानामुपनयनकालमाह— ब्राह्मणस्योपनयनं गर्भाष्टमेऽब्दे गर्भाष्टमे वर्षे उपनयनं कार्यम्, राज्ञः गर्भात् एकादशे वर्षे( जन्मैकादशे ) वा कर्तव्यम्, वैश्यस्य गर्भाद्द्वादशे वर्षे जन्मद्वादशे वा वर्ष इत्यर्थः । भाच.

**'ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे ।**
**राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे ॥**

---

† जनपदैश्वर्येण राजशब्दार्थप्रसिद्धिं प्रतिपादयन् यथाश्रुतोऽयं ग्रन्थो राजशब्दस्य क्षत्रियजातिवचनत्वं प्रबाधयता पूर्वग्रन्थेन विरुद्धः । तस्मादवेष्ट्यधिकरणोक्तन्यायेनैवं शुद्धिः कल्प्यते— 'भगवांश्च ... ब्रुवन्' इति पृथग्वाक्यम् । तत्र 'एवमेव प्रतिपन्नः' इति विधेयम् । एवमेव क्षत्रियवचनो राजशब्द इत्येतमर्थम् । ततः 'नैव जनपदै ...... माह' इति वाक्यम् । तत्र पाणिनिरित्यनुषज्यत इति ।

§ गोरा., ममु. मेधागतम् ।

$ सर्वेषु स्मृतिपुस्तकेषु 'ब्राह्मणमसृजत्' इति पाठः ।

‡ शेषं मुक्तागतम् ।

(१) मस्मृ. २।३७ ; अप. १।१४ ; व्यक. १०२ : १०३ (=) तृतीयपादमात्रम् ; मभा. १।८ स्येहा ( स्यार्था ) उत्त. ; गौमि. १।१२ सर्वं मभावत् ; स्मृच. २६ ; चका. ७४८ पू. : ७४९ उत्त. ; हभा. १९९ ; पमा. ४४६ मभावत् ; मपा. १७ (=) पू. ; प्रपा. २१३ मभावत् ; गभा. २०१ मभावत् ; प्रर. ८१ पू. ; श्राप्र. ३९ ; संसौ. ९७ मभावत् ; बौमि. १।१४ वर्चसकाम ( र्चयस्य काम्य ) ; संप्र. ३४५ मभावत् ; चम. १३ मभावत् ; मुक्ता. ८७ मभावत् ; संम. २१ ; सिन्धु. ९२७ मभावत् ; विपा. ४७० मभावत् ; बाल. १।१४ पू. ४५ मभावत् ; संग. ६४३ मभावत् ; संदी. ६४ (भागः २).

(१) पितृधर्मेणापत्यं व्यादिशति । ‘ब्रह्मवर्चसी मे पुत्रः स्यात्’ इति पितृकामनया पुत्रो व्यपदिष्टस्तत्कामस्येति। पुत्रस्य बालत्वान्नैवंविधा कामना संभवति। ननु चैवमन्यकृतात्कर्मण अन्यस्य फलेऽभ्युपगम्यमानेऽकृताभ्यागमदोषापत्तिः। अकाम्यमानं च फलं भवति। एतदप्युत्क्रान्तशब्दप्रमाणन्यायमर्यादयोच्यते। नैष दोषः, श्येनवदेतद्भविष्यति । श्येनमभिचरन्करोत्यभिचर्यमाणश्च म्रियते । अथोच्यते– कामिन एवैतत्फलम्, शत्रुमरणं हि यजमानः कामयते, तदेव प्राप्नोतीति । नाकर्तृगामिता फलस्यात्रापि । विशिष्टपुत्रवत्तालक्षणमुपनेतुरेव फलम्। यथा पुत्रस्याऽऽरोग्येण पितुः प्रीतिः एवं ब्रह्मवर्चसेनापि। अतोऽधिकृतस्य कर्तुश्च तत्फलम् । अन्वयानुसारी हि शास्त्रार्थावसायः। इह च पुत्रस्य फलकामेनैवं कर्तव्यमित्यन्वयः प्रतीयते । न च यथाश्रुतान्वयत्यागे किंचन प्रमाणमस्ति। एतेन पितुरौर्ध्वदेहिकः पुत्रकृत उपकारो व्याख्यातः। तत्रापि हि पुत्रः कर्ता पितृतृप्तिश्च फलम् । तथा च लिङ्गम्– ‘आत्मा वै पुत्रनामाऽसि’ इति। पित्रैव हि तावच्छ्राद्धमात्मसंप्रदानकं वस्तुतः कृतमेव, येनापत्योत्पादनमेवमर्थमेव कृतम् । यथा सर्वस्वारे मृतस्याऽऽर्भवपवमानात् ये पराञ्चः पदार्थास्तेष्वपि यजमानस्यैव कर्तृत्वम्, ‘ब्राह्मणाः संस्थापयत यज्ञम्’ इति प्रैषेण दक्षिणाभिर्वरणेन वा प्रयोगसमाप्तावृत्विजां विनियोक्तृत्वात्। एवमिहापि तादर्थ्येन पुत्रस्योत्पादनाद्यच्छ्राद्धादिकं पित्रर्थे क्रियते पित्रैव तत्कृतं भवति।

अध्ययनं विज्ञानसंपन्नं ब्रह्मवर्चसम्। बलं सामर्थ्यम् आभ्यन्तरं बाह्यं च। उत्साहशक्तिर्महाप्राणता चेत्येतदाभ्यन्तरम्। बाह्यं च हस्त्यश्वरथपदातिकोशसंपत्। तदुक्तम्– ‘स्वाङ्गाभ्युच्चयं सांयौगिकानां चार्थानाम्’ इति। ईहा चेष्टा बहुना धनेन कृषिवाणिज्यादिव्यवहारः। सर्वत्र गर्भादिसंख्या वर्षाणाम्। गर्भादिति ह्यनुवर्तते।

$ मेधा.

$ ममु. गोरावत् मेधागतं च। अप. मेधागतम्।

(२) अध्ययनविज्ञानाद्यतिशयकृतं ब्रह्मवर्चसम्।

¶ गोरा.

(३) सुतपःप्रभृतिभिरुत्कर्षो ब्रह्मवर्चसम्। पञ्चमे जन्मत आरभ्य । बलार्थिनः सामर्थ्यातिशयार्थिनः। ईहा कृष्याद्युद्यमः तदतिशयार्थिनः। अत्र बालस्य तादृक्कामनाया असंभवेऽपि तत्पित्रादिकामनाया एव तदीयत्वोपचारेणोपनयनसामानाधिकरण्यात् एतादृक्कामस्य पुत्रस्येति। अधिकरणे षष्ठी वा (?)।

मवि.

(४) श्रुततपःप्रभृत्युत्कर्षो ब्रह्मवर्चसम्। बलार्थिनः विजिगीषोः। ‘ईहार्थिनः’ इति क्वचित्पाठः। ईहा कृष्याद्युद्यमातिशयः।

संसौ. ९७

(५) ब्रह्मवर्चसं वृत्तस्वाध्यायनिमित्तं तेजः। बलार्थिनः, बलं हस्त्यश्वादि शारीरं वा। ईहार्थिनः, ईहा कृष्यादिचेष्टा। अत्र फलम् ‘एकस्य तूभयत्वे संयोगपृथक्त्वम्’ (मैसू. ४।३।५) इति न्यायेन। अस्यार्थः– एकस्य कर्मण उभयार्थे (? र्थत्वे) वचनद्वयेन श्रुते फलसाधनाभेद इत्यर्थः।

मच.

(६) ब्रह्मतेजो ब्रह्मवर्चसम्। ¶ नन्द.

'आ षोडशाद्ब्राह्मणस्य सावित्री नातिवर्तते।
आ द्वाविंशात्क्षत्रबन्धोरा चतुर्विंशतेर्विशः॥

(१) एवं तावन्मुख्यकाम्यावुपनयनकालावुक्तौ। इदानीं पितुरभावे व्याध्यादिना वा कथंचिदनुपनीते माणवके कालातिपत्तावनुपनेयता प्राप्ता, सत्यपि कालस्याङ्गत्वे तदभावेऽधिकारनिवृत्तेः। यथा सायंप्रातःकालातिपत्तावग्निहोत्रस्याकरणे। अतो विहितकालव्यतिरेकेण

¶ शेषं मेधागतम्।

(१) मस्मृ. २।३८; ब्रक. १०४; स्मृच. २८; चका. ७५१; पमा. ४४६; मपा. ३६ क्षत्रबन्धोरा (क्षत्रियस्य आ); संसौ. ९८; संप्र. ३४२; मुक्ता. ८९; सिन्धु. ९२७; विपा. ४७१; बाल. १।३८ टृ. १३८; संग. ६९६; संव. ९५.

प्रतिप्रसवार्थमिदमारभ्यते । यावत्षोडशं वर्षं गर्भादारभ्य तावद्ब्राह्मणस्योपनयनार्हता न निवर्तते । सावित्रीशब्देन तदनुवचनसाधनमुपनयनाख्यं कर्म लक्ष्यते । नातिवर्तते नातिक्रान्तकालं भवतीत्यर्थः । एवमा द्वाविंशात्क्षत्रबन्धोः क्षत्रियजातीयस्येत्यर्थः । बन्धुशब्दोऽयं क्वचित्कुत्सायां प्रवर्तते– 'यस्त्वं कथं वेत्स ब्रह्मबन्धो' इति । ज्ञातिवचनो यथा– 'ग्रामता जनता चैव बन्धुता च सहायता । महेन्द्रस्याप्यगम्याऽसौ भूमिभागभुजां कुतः ॥' । द्रव्यवचनः–'जात्यन्ताच्छ बन्धुनि' (पासू. ५।४।९) इति । तत्र पूर्वयोरर्थयोरसंभवातृतीयोऽर्थो गृह्यते । द्वाविंशतेः पूरणो द्वाविंशोऽब्दः तद्धितार्थः । आ चतुर्विंशतेर्विशः । प्राप्तोऽप्यत्र पूरणप्रत्ययो वृत्तानुरोधान्न कृतः । प्रतीयते तु तदर्थः । न हि समुदायविषयायाश्चतुर्विंशतिसंख्याया अवधित्वेन संभवः । तदवयवस्तु चतुर्विंशो भवति संवत्सरोऽवधिः । आङमभिविधौ व्याचक्षते । लिङ्गदर्शनं चोदाहरन्ति–¶ 'गायत्र्या ब्राह्मणमुपनयीत त्रिष्टुभा राजन्यं जगत्या वैश्यमिति । एतेषां च छन्दसां यावता कालेन द्वौ पादौ पूर्येते तावन्तं कालं बलवन्ति न त्यजन्ति स्वाश्रयभूतान्वर्णान् । तृतीये तु पाद उपक्रान्ते गतरसान्यतिवयांसि न्यूनसामर्थ्यानि भवन्ति समाप्तिमुपयान्ति । यथा पञ्चाशता स्थविरो मनुष्य इति । इयता च नैतेन वयमुपासितानीति त्यजन्ति तं वर्णम् । ततो न गायत्रो ब्राह्मणो न त्रैष्टुभो राजन्यो न जागतो वैश्यः' इति ।

सविता देवता यस्या ऋचः सा सवित्री, सा च गायत्री द्रष्टव्या । प्रदर्शिता गृ( ? प्रदर्शितगृ)ह्याच्च एवं क्षत्रियस्य त्रिष्टुप् सावित्री 'आ कृष्णेन' इति, वैश्यस्य जगती 'विश्वा रूपाणि' इति । $ मेधा.

(२) अनुकल्पमाह– आ षोडशादिति । 'छन्दःसु पादाक्षरवदब्दसमवाय उपनयनम्' इति हारीतस्मरणादाङोऽभिविध्यर्थत्वेन षोडशवर्षं यावत् ब्राह्मणस्य सावित्र्यनुवचनसाधनमुपनयनं नातिक्रान्तकालं भवति, द्वाविंशं यावत् क्षत्रियजातीयस्य । चतुर्विंशं यावद्वैश्यस्य । उपनयनं च पुरुषस्य संस्कारः, 'कार्यः शरीरसंस्कारः' इत्याम्नानात् । न तु तदनन्तरं वेदाध्ययनदर्शनात् ब्रह्मसंस्कारस्य भ्रान्तिः कार्या, तत्रा(?स्या)ऽऽनुमानिकत्वात् । गोरा.

(३) आङत्राभिविधौ, 'तच्छन्दःपादाक्षरवदब्दसमवाय उपनयनम्' इति हारीतवचने गायत्रीत्रिष्टुब्जगतीनां क्रमात् ब्राह्मणादिवर्णसंबन्धिनां छन्दसां पादाक्षरसंख्यैरब्दैरुपनयनस्य विधेः, मुख्यासंभवे च तद्वैगुण्यस्य काले युक्तत्वे( ? त्वात् ) । † मवि.

(४) अत्र मर्यादायामाङ् केचिद्व्याख्यापयन्ति, यमवचनदर्शनात् । तथा च यमः– 'पतिता यस्य सावित्री दश वर्षाणि पञ्च च । ब्राह्मणस्य विशेषेण तथा राजन्यवैश्ययोः ॥ प्रायश्चित्तं भवेदेषां प्रोवाच वदतां वरः । विवस्वतः सुतः श्रीमान्यमो धर्मार्थतत्त्ववित् ॥ सशिखं वपनं कृत्वा व्रतं कुर्यात्समाहितः । हविष्यं भोजयेदन्नं ब्राह्मणान् सप्त पञ्च वा ॥' । $ ममु.

(५) उपनयनस्योत्तरावधिं द्योतयन् सार्थवादं तैः सह संसर्गं निषेधति– आ षोडशादिति त्रिभिः । आङत्र मर्यादायाम् । गर्भादित्यनुवर्तते । नातिवर्तते अतिक्रान्ता न सती( ? न भवति ) प्रायश्चित्तं विना अधिकारित्वेन । सावित्रीपतितान् प्रति सावित्री ( प्रायश्चित्तं विना ) नाधिगच्छति । 'पतिता यस्य सावित्री दश वर्षाणि पञ्च च ।' इत्युपक्रम्य 'सशिखं वपनं कृत्वा व्रतं कुर्यात्समाहितः । हविष्यं भोजयेदन्नं ब्राह्मणान् सप्त पञ्च च ॥' इति यमोक्तप्रायश्चित्तम् । मच.

---

¶ अत्र हारीतवचनीयसंप्रत्याख्यानगत एतद्वचनानुवादोऽनुसंधेयः । अग्रिमव्याख्यानादिदं गृह्यवचनमिति मेधातिथिरभिप्रैतीति भाति ।

$ माच. मेधागतम् ।

† शेषं मेधागतम् । मुक्ता. मविगतम् ।

$ शेषं गोरागतम् ।

(६) सावित्रीप्रधानत्वादुपनयनस्य सावित्रीति तस्यामेदोपचारनिर्देशः। ‡ नन्द.

(७) आ षोडशादिति मर्यादायामाङ्, 'सावित्री पतिता यस्य दश वर्षाणि पञ्च च। सशिखं वपनं कृत्वा व्रतं कुर्यात्समाहितः॥' इति प्रोक्तप्रायश्चित्तानुरोधात्। एवं चाऽऽ द्वाविंशादा चतुर्विंशतेरिति मर्यादायामेवाऽऽङ्, समभिव्याहारात्। एवं च 'आ षोडशाच्च द्वाविंशाच्चतुर्विंशाच्च वत्सरात्। ब्रह्मक्षत्रविशां काल औपनायनिकः परः॥' (यास्मृ. १।३७) इति याज्ञवल्क्यवाक्येऽपि मर्यादार्थकस्याऽऽङो द्वाविंशाच्चतुर्विंशादित्यत्र संबन्धः। यत्तु 'औपनायनिकः कालः परः षोडशवार्षिकः। द्वाविंशतिः परोऽन्यस्य चतुर्विंशतिमः परः॥' इति व्यासवाक्यम्, तद्गर्भाधानाभिप्रायेणेति न विरोधः। यथा 'अष्टादशदिनादर्वागशुचित्वं न विद्यते।' 'चतुर्दशदिनादर्वागशुचित्वं न विद्यते।' इत्यत्र प्रथमं रजोदर्शनदिनात्प्रभृति, द्वितीयं तु स्नानदिनादिति। कृभ. ९२७–९२८

## याज्ञवल्क्यः

गर्भतो जन्मतो वा गणनीयौ मुख्यगौणकालौ

**$ 'गर्भाष्टमेऽष्टमे वाऽब्दे ब्राह्मणस्योपनायनम्।**
**राज्ञामेकादशे सैके विशामेके यथाकुलम्॥**

(१) अतः परं तु– गर्भाष्टम इति। नन्वेतत् पारिशेष्यात् ब्राह्मणस्यैवोपनयनमुक्तम् 'आद्यास्त्रयो द्विजाः' (यास्मृ. १।१०) इति। अयुक्तं ब्राह्मणग्रहणम्। अथ ब्राह्मणस्य सत उपनयनम्, नोपनयनाद्ब्राह्मण्यमिति ज्ञापनार्थमित्युच्येत, तदपि वर्णपरिभाषयैव सिद्धेरसारम्। उच्यते– हेत्वर्थमिदम्। गर्भाधानाज्जन्मनो वाऽष्टमे वर्षे ब्राह्मणमुपनयेत्। कस्मात्? ब्राह्मणत्वादेव। एवं ह्याम्नायः– 'गायत्रो वै ब्राह्मणः, अष्टाक्षरा वै गायत्री, तस्मादष्टवर्षं ब्राह्मणमुपनयीत' इत्यादि। एवं क्षत्रियवैश्यशब्दावपि योज्यौ। हेत्वभिधानं तु वसन्तादिकालप्राप्त्यर्थम्। तथा चाऽऽम्नायः– 'ब्रह्म हि वसन्तः क्षत्रं ग्रीष्मो विड् वर्षाः' इति। वसन्तादिसंबन्धं च ब्राह्मणादीनामन्यतः सिद्धं हिशब्देनानुवदन् वसन्ते ब्राह्मणोपनयनं कार्यमिति दर्शयति। यद्यप्येतान्याधानादौ वाक्यानि, तथापि हेत्वर्थोपपत्त्यर्थमुपनयनापेक्षितकालसमर्पणमविरुद्धम्। मन्त्रवर्णश्च– 'गायत्री वासन्तीति गायत्रीछन्दो वसन्तादतो निरमिमीत' इति। अयमेव तस्याप्यर्थः। चरकास्तु स्पष्टतराण्युपनयन एव पठन्ति। तथा चाऽऽपस्तम्बस्तान्येवानुकरोति– 'वसन्ते ब्राह्मणमुपनयीत' इत्यादि। शङ्खश्च 'वसन्तो ग्रीष्मः शरदिति कालाः' इत्याह। वैश्यस्य तु विकल्पः। वेदाध्ययनायाऽऽचार्यसमीपे नयनमुपनयनम्। तदेवोपनायनमित्युक्तं छन्दोनुरोधात्। तदर्थं वा कर्म। राज्ञामिति क्षत्रियराजशब्दयोरेकार्थत्वज्ञापनार्थम्। एकादशे, अब्दे उपनयनं कार्यमिति शेषः। सैके विशामिति। द्वादश इत्यर्थः। 'एके यथाकुलम्' इति पुनर्वचनात् परमतोपन्यासः। एके यथाकुलमिच्छन्ति, न वसन्तादौ। वयं त्वष्टवर्षं वसन्ते ब्राह्मणमुपनयीतेति। अनुलोमानन्तरजानामप्येत एव कालाः मातृजातीयव्यपदेशात् 'पुत्रा येऽनन्तरस्त्रीजाः' इति मनुवचनात् द्रष्टव्याः। लिङ्गस्य च विवक्षितत्वात् स्त्रीष्वप्रसङ्गः। प्रतिलोमास्त्वनधिकृता एव। तथा च गौतमः– 'प्रतिलोमास्तु धर्महीनः' इति। विश्व.

---

‡ शेषं मेधागतं मविगतं च।

$ अस्य संप्रव्याख्यानम् उपनयनपदार्थादिविचारप्रकरणे भारद्वाजवचनव्याख्याने (सं. का. पृ. ३००२) अस्मिन्नेव प्रकरणे पैठीनसिवचनव्याख्याने च द्रष्टव्यम्।

(१) यास्मृ. १।१४; विश्व.; मिता.; अप.; व्रक. १०१ विश्वामित्रयाज्ञवल्क्यौ; स्मृच. २६; चका. ७४६ विश्वामित्रयाज्ञवल्क्यौ; स्मृसा. ४; मप. १२ (=) पू.; संसौ. ९६; वीमि.; संप्र. ३३६ पू.: ३४०; मुक्ता. ८७; संम. २०; विपा. ४७०; संको. ११८; आन. १५१ मे वाऽब्दे (मेऽब्दे वा) प्रथमपादमात्रम्, १५३ प्रथमपादमात्रम्; पुम. ४३७ उत्तरार्धे (गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः॥); सस्मृ. ५१; कृभ. ९२६–९२७; संर. १६७.

( २ ) उपनयनकालमाह— गर्भाष्टम इति । गर्भाधानमवधिं कृत्वा जननं वाऽष्टमे वर्षे ब्राह्मणस्य उपनायनम् उपनयनमेवोपनायनम् । स्वार्थे अण् वृत्तानुसारात् छन्दोभङ्गात् । आर्षं वा दीर्घत्वम् । अत्रेच्छया विकल्पः । राज्ञामेकादशे । विशां वैश्यानां सैके एकादशे द्वादश इत्यर्थः । गर्भग्रहणं सर्वत्रानुवर्तते । समासे गुणभूतस्यापि गर्भशब्दस्य बुद्ध्या विभज्योभयत्राप्यनुवर्तनं कार्यम् । 'गर्भादेकादशे राज्ञो गर्भाद्धि द्वादशे विशः ।' इति स्मृत्यन्तरदर्शनात् । यथा 'अथ शब्दानुशासनम् । केषां शब्दानाम् ? लौकिकानां वैदिकानाम्' इति । अत्रापि कार्यमित्यनुवर्तते । कुलस्थित्या केचिदुपनयनमिच्छन्ति । † मिता.

[ मुख्यगर्भशब्दार्थावधिकत्वस्य तत्संबन्धित्वस्य च तत्रासंभवाल्लक्ष्यार्थमाह— गर्भाधानमिति । अर्शआद्यचा तद्घटितहायनमित्यर्थः । तत्रार्थात्तद्दिनादारभ्यैवेति बोध्यम् । सुप्सुपेति पञ्चमीसमासलब्धमर्थमाह— अवधिमिति । 'आदिम्' इति त्वपपाठः । जननमित्यत्रावधिमित्यादेरनुषङ्गः । 'जन्मनो वा' इति पाठान्तरम् । तथा च नारदीयसंहितायाम्— 'आधानादष्टमे वर्षे जन्मतो वाऽग्रजन्मनाम् । राज्ञामेकादशे मौञ्जीबन्धनं द्वादशे विशाम् ॥ जन्मतः पञ्चमे वर्षे वेदशास्त्रविशारदः । उपनीतो यतः श्रीमान् कार्यं तत्रोपनायनम् ॥' इति । उपनयनमेवोपेति । निवृत्तप्रेषणात् प्राकृतार्थणिजन्ताद्भावे ल्युडिति भावः । अत्र क्लेशे हेतुमाह— वृत्तेति । एतन्मध्ये 'स्वार्थे अण्' इति त्वपपाठः । अत एव तथोक्तिः, अन्यथा 'नयनमेव नायनम्' इति ब्रूयात् । अन्यथाऽसंगतिः स्पष्टैव, पूर्वपदे वृद्धेरापत्तेरुत्तरपदे दुर्लभत्वाच्च । वस्तुतस्तदपि दुर्वचम्, गतीनां प्राक् सुबुत्पत्तेः समासात्, सुबुत्पत्तिं विना च तद्धितोत्पत्त्ययोगात्, प्रज्ञादिष्वपाठाच्च । तस्यानित्यत्वं प्रज्ञादेराकृतिगणत्वं चागतिकगतिः । उक्तप्रकारः 'निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते' इति हरिणोक्तः । 'णेरणौ०' (पासू. १।३।६७) इति सूत्रे भाष्यादावपि स्फुटमेतत् । यदि तु 'स्वार्थेऽण्' इत्येव सांप्रदायिकः पाठस्तर्हीत्थं योज्यः— मूलेऽपि तदा 'औपनायनम्' इत्येव पाठः । तस्मादाकृतिगणत्वेन शिशिष्टादेवाणि 'तद्धितेषु' इत्यादिवृद्धौ 'अन्येषामपि' इति उत्तरपदस्य दीर्घः । आर्षत्वेनानुशतिकादित्वकल्पनयोभयपदवृद्धिर्वा । अत एव 'गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्यौपनायनम् ।' (मस्मृ. २।३६) इत्येवमेव मनुपाठो मेधातिथिना तथा व्याख्यात इति बोध्यम् । 'स्वस्य च प्रियमात्मनः' इत्येतद्विषयतामत्र दार्ढ्याय पुनराह— अत्रेच्छयेति । विशामित्यत्र बहुत्वमविवक्षितं ब्राह्मणस्येतिवज्जातिपरतया निर्वाहात् । राज्ञामित्यत्र तु क्षत्रियमात्रसंग्रहाय तत् । अन्यथाऽभिषिक्तभ्रमः स्यादिति सूचयन्नाह— वैश्यस्येति । यद्यपीच्छया विकल्प उक्तस्तथापि तयोर्मध्ये आद्यस्य मुख्यत्वमन्यस्य गौणत्वम्, मनुना तस्यैवैकस्य सर्वत्राभिधानात् । तदेतद् ध्वनयन्नाह— गर्भेति । सर्वत्र उभयत्र । तत्र हेतुमाह— गर्भादिति । तुरेवार्थे । स्मृत्यन्तरेति । मन्वित्यर्थः । ननु तत्र पृथगुक्त्या तथाऽस्तु, प्रकृते तु तस्य समासघटकस्य निष्कृष्य कथमनुवृत्तिः ? अत एव तत्र पृथगुक्तिः, अत आह— समासे इति । केषामिति । यथा तत्र तस्य तथा कृत्वा किमा परामर्शस्तथाऽत्रानुवृत्तिरित्यर्थः । अन्यथा सर्वनाम्नां प्रधानपरामर्शित्वनियमात्तदसंगतिः स्पष्टैवेति भावः । वाक्यार्थपूर्तये आह— अत्रापीति । प्राग्वदिति भावः । एवं च सर्वत्र मुख्यकालः स एव । तदभावे 'एकत्रोक्तो न्यायोऽसति बाधकेऽन्यत्रापि' इति न्यायेन क्षत्रियादावपि स कालो ग्राह्यः । अत एव 'अष्टमे वर्षे ब्राह्मणमुपनयीतैकादशे क्षत्रियं द्वादशे वैश्यम्' इति गृह्यसूत्रं संगच्छते । अत एवात्र राजशब्दः क्षत्रियजातिमात्रवचनः, नाभिषेकादिगुणयुक्तपर इति बोध्यम् । एके इत्यादेरर्थमाह— कुलेति । बाल. पृ. ४४–४५ ]

( ३ ) उपनेतारं प्रत्युपनेयस्य प्रयोजकव्यापार उपनायनम् । तच्चोपनयनादन्यदेव । अत एवाऽऽह बुधः—

† ब्रक., स्मृच., स्मृसा., संसौ., मुक्ता., संम., विपा. मितागतम् । संको. मितानुवादः ।

'गर्भाष्टमे वर्षे वसन्ते ब्राह्मण आत्मानमुपनाययेत्' इति। इममेव च विधिमाश्रित्य शौनको मन्त्रं विधत्ते— 'चान्वन्वाध्योपसंगृह्याधीहि भोः सावित्रीं भो अनुब्रूहि' इति। गर्भादष्टमः गर्भाष्टमः। गर्भसहचरितोऽब्दो गर्भः, तद(? तम)पेक्ष्याष्टम इति ल्यब्लोपे पञ्चमी। उपनयनस्याप्ययमेव कालः शौनकेनोक्तः— 'अष्टमे वर्षे ब्राह्मणमुपनयेद्गर्भाष्टमे चै(? वै)कादशे क्षत्रियं द्वादशे वैश्यम्' इति। अप.

(४) एके तु आचार्या मन्यन्ते यथाकुलमुपनयनं कार्यमित्यर्थः। अन्ये त्वेवं व्याचक्षते—कुलस्थित्या गर्भाष्टमादि व्यवस्थां केचिन्मन्यन्ते। अत्र केचित् उपनायनशब्देनेहोपनयनमभिधीयते इत्याहुः, तदयुक्तम्, उपनयनविषयप्रयोजकव्यापारस्योपनायनशब्दवाच्यत्वात्, लक्षणायां च कारणाभावात्। अत एवाऽऽह बुधः— 'गर्भाष्टमे वर्षे वसन्ते ब्राह्मण आत्मानमुपनाययेत्, एकादशे क्षत्रियो ग्रीष्मे, द्वादशे वैश्यो वर्षासु'। तस्मादुपनायनादुपनयनमपि विधीयते। $ चका. ७४६

(५) ण्यन्तप्रयोगात् (उपनायनम्?) उपनयनमन्यद्वाराऽपि कर्तव्यम्। दीक.

(६) उपनयनकालमाह— गर्भाष्टम इति। गर्भाधानसमयादष्टमे जन्मसमयादष्टमे वा वर्षे ब्राह्मणस्योपनायनम्। स्वार्थे णिच्। राज्ञामेकादशे इत्यत्र गुणभूतोऽपि गर्भशब्दोऽनुवर्तनीयः, आकाङ्क्षाबलात्। तथा गोभिलः— 'गर्भाष्टमेषु ब्राह्मणमुपनयेद्गर्भैकादशेषु क्षत्रियं गर्भद्वादशेषु वैश्यम्' इति। विशां सैके इत्यत्र एकादशे इत्यनुषङ्गः। तेन द्वादशे इत्यर्थः। एके आचार्या यथाकुलं कुलाचारानुसारेण उपनयनमित्याहुः। एतेन कालान्तरमपि स्मृत्युक्तं तदनुक्तं च सूचितम्। तथा च गौतमः— 'उपनयनं ब्राह्मणस्याष्टमे नवमे पञ्चमे वा काम्यम्'। अष्टम इति नित्यकालनिर्देशः। मनुः— 'ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे। राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे॥' (मस्मृ. २।३७)। उपनये-

$ शेषं मितागतम्।

दित्युपक्रम्याऽऽपस्तम्बः— 'अष्टमे ब्रह्मवर्चसकामं नवमे तेजस्कामं दशमेऽन्नाद्यकाममेकादश इन्द्रियकामं द्वादशे पशुकामम्'। अत्र संस्कारप्रकरणे यश इव मासादयस्त्रिंशदहोरात्रात्मका एवेति प्राञ्चः। सौरास्ते, परन्तु यस्मिन्मासे जन्मदिनं (तं) संपूर्णमेवाऽऽदाय मासादिगणनमित्येके। अनयैव रीत्या मुख्याश्चान्द्रास्त इत्यपरे। परे पुनर्गौणचान्द्ररूपास्तिथिनिर्मिता मासिकादाविव प्रकृतेऽपि त इत्याहुः। कालविकल्पः फलविशेषानुक्तौ पूर्वपूर्वासंपत्तावुत्तरोत्तराश्रयणमित्येवं व्यवस्थितो बोध्यः, न त्वैच्छिकः, अष्टविधदोषादित्यन्यत्र व्युत्पादितम्। फलविशेषोक्तौ तु तदनुसारेण व्यवस्था। सति संभवे स्वगृह्योक्त एव कल्प आदर्तव्य इति शिष्टाः। वीमि.

(७) अत्र विज्ञानेश्वरः— अष्टमे जन्मतोऽष्टमे, एकादशे, गर्भपदस्याब्दपदस्य चानुवृत्त्या गर्भादेकादशेऽब्दे जन्मतो वा एकादशेऽब्दे, सैके एकादशे द्वादशे इति यावत्, तथा च गर्भात् द्वादशेऽब्दे जन्मतो वा द्वादशेऽब्दे क्रमेण ब्राह्मणक्षत्रियवैश्यानामुपनयनं कार्यमित्यर्थः। 'गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः।' इति स्मृत्यन्तरात्। कुम. ९२७

**¶'आ षोडशादा द्वाविंशाच्चतुर्विंशाच्च वत्सरात्।**
**ब्रह्मक्षत्रविशां काल औपनायनिकः परः॥**

¶ संप्रव्याख्यानं 'षोडशाब्दानि' इतिशङ्खवचनव्याख्याने, कुमव्याख्यानम् 'आ षोडशात्' इतिमनुवचनव्याख्याने द्रष्टव्यम्।

(१) यास्मृ. १।३७; विश्व. दा द्वाविंशाच्च (द् द्वाविंशाच्च च); मिता.; अप. षोडशादा (षोडशाच्चाऽऽ); चका. ७५२ औप (उप); स्मृसा. ५ परः (स्मृतः); ग्रप्र. ३९ औप (ग्रौप); वीमि. दा द्वा (च्च द्वा); संप्र. ३४२; व्यम. १४; मुक्ता. ८९ दा द्वा (च्च द्वा) तृतीयपादे (ब्राह्मणक्षत्रियविशाम्); शूक. २६०; संको. ११९ विंशाच्च (विंशादा च); पुम. ४३७; कुम. ९२८ वीमिवत्.

( १ ) एवं तर्हि यावज्जीवमुपनयनं स्यात्। नेत्याह— एति । आ षोडशादित्यभिविधावाङ् द्रष्टव्यः , 'द्विगुणां गायत्रीमतिक्रम्य ब्राह्मणो व्रात्यः स्यात्' इति कार्ष्णाजिनिवचनात् । गौतमश्च 'द्व्यधिकाया वैश्यस्य' इत्यधिकग्रहणादेतदेव ज्ञापयति । द्वाविंशचतुर्विंशयोरप्याद्यनुषङ्गेण द्रष्टव्यः । गुणत्वेऽपि कालस्यातः परं नोपनयनमिति । $ विश्व.

( २ ) जन्मत आ षोडशाद्वर्षाद्ब्राह्मणस्योपनयनकालः । अत ऊर्ध्वं तत्कालो नास्तीत्यर्थः । एवमा द्वाविंशाद्वर्षात्क्षत्रियस्याऽऽ चतुर्विंशाद्वैश्यस्य । अभिविधौ चायमाकारः । यत आह व्यासः— 'औपनायनिकः कालः परः षोडशवार्षिकः । द्वाविंशतिः परोऽन्यस्य स्याच्चतुर्विंशतिः परः ॥ ब्राह्मणक्षत्रियविशां कालश्चेदत्यगादयम् । सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः ॥' । अप.

( ३ ) परः मुख्यादन्यः काल इत्यर्थः । चकारौ मिथः समुच्चये । यत्तु— '‡द्वादश षोडश विंशतिश्चेत्यतीता विरुद्धकाला भवन्ति' इति पैठीनसिवचनम् , तत्तु द्वादशवर्षाद्यतिक्रमे स्वल्पपापप्रतिपादनपरमित्यविरोधः । † वीमि.

## नारदः

नित्यकाम्योपनयनकालाः

[१]आधानादष्टमे वर्षे जन्मतो वाऽग्रजन्मनाम् ।
राज्ञामेकादशे मौञ्जीबन्धनं द्वादशे विशाम् ॥

अत्र फलाश्रवणान्नित्यमित्यवसीयते । संव. ९५

[२]जन्मतः पञ्चमे वर्षे वेदशास्त्रविशारदः ।
उपनीतो यतः श्रीमान् कार्ये तत्रोपनायनम् ॥

## बृहस्पतिः

गर्भतो नित्योपनयनकालाः , संवत्सरातिक्रमनिषेधः

[३]गर्भाष्टमेऽब्दे विप्रस्य क्षत्रस्यैकादशे तथा ।
वैश्यस्य द्वादशे वर्षे कार्यं मौञ्जीनिबन्धनम् ॥

[४]अशुभेऽब्दे ग्रहाः सर्वे शुभगोचरगा यदि ।
शान्त्यभावाच्छुभं नैव यात्यब्दः कालमृत्युवत् ॥

[५]अथर्वणप्रदिष्टाः स्युः शतं सैकं तु मृत्यवः ।
एकस्तेषां स कालः स्यादन्येऽप्यागन्तवो नृणाम् ॥
आगन्तवो महाशान्त्या शान्तिं यान्ति हि मृत्यवः ।
न कालसंज्ञितो मृत्युर्याच्छान्त्या शमं बलात् ॥

[६]तस्माद्ग्रहेभ्यः कालत्वाद्बली संवत्सरः स्मृतः ।
शान्तिर्ग्रहाणां कर्तव्या न तु संवत्सरस्य च ॥

## व्यासः

मुख्यगौणकालाः

[६]विप्रो गर्भाष्टमे वर्षे क्षत्रमेकादशे तथा ।
द्वादशे वैश्यजातिस्तु व्रतोपनयमर्हति ॥

---

$ मिता. , दीक. विश्वगतम् ।

‡ अस्यैव ग्रन्थकर्तुरभिमतं वचनस्य पाठान्तरं व्याख्यानान्तरं च संग्रगतमस्मिन्प्रकरणे पैठीनसिवचने द्रष्टव्यम् ।

† शेषं विश्वगतम् ।

(१) ज्योना. २४।१ ; संसौ. ९६ ; संप्र. ३४१ ; ज्योनि. १२१ ; बाल. १।१४ पृ. ४४ ; संग. ६४३ तो वाऽग्र ( तश्चाग्र ) पू. ; संव. ९५ जन्म ( गर्भ ).

(१) ज्योना. २४।२ जन्मतः ( आजन्मात् ) ; ज्योनि. १२१ (=) ; बाल. १।१४ पृ. ४४.

(२) चका. ७४७.

(३) प्रपा. २१४ ; ज्योनि. १२१ यदि ( अपि ) शान्त्य ( शान्ति ) यात्यब्दः ( यान्त्यब्दः ).

(४) प्रपा. २१४.

(५) प्रपा. २१४ ; संप्र. ३७४ ; ज्योनि. १२१ च ( सा ) ; संको. १२१ रः स्मृतः ( रो मतः ) पू. ; संर. १७६ (=) सर्वं संकोवत्.

(६) व्यास्मृ. १।२०–२१.

तस्य प्रा (? तत्राप्रा )तव्रतस्यार्थं कालः
स्याद्द्विगुणाधिकः ॥
[1]गर्भाष्टमे वै कुर्वीत ब्राह्मणस्योपनायनम् ॥
*[2]औपनायनिकः कालः परः षोडशवार्षिकः ।
द्वाविंशतिः परोऽन्यस्य स्याच्चतुर्विंशतिः परः ॥

( १ ) परः अन्तिमः । अत ऊर्ध्वं गौणोऽपि कालो नास्तीत्यर्थः । स्मृच. २८

( २ ) षोडशवार्षिकः षोडशभिर्वर्षैः परिच्छिन्नः । संप्र. ३४३

## देवलः

अष्टमे वर्षे उपनयनार्हत्वम्

[3]गर्भाष्टमे वर्ष उपनयनार्हो भवति ॥

## उशना

काम्योपनयनकालः

[4]जन्मतः पञ्चमे वर्षे ब्राह्मणस्योपनायनम् ।
राज्ञस्तु षष्ठे वैश्यस्य सप्तमे तु बलार्थिनः ॥

* अस्य संमव्याख्यानम् 'आ षोडशाद्ब्राह्मणस्य' इत्याश्वलायनगृह्यसूत्रव्याख्याने, कृमव्याख्यानम् 'आ षोडशाद्ब्राह्मणस्य' इति मनुवचनव्याख्याने द्रष्टव्यम् ।

(१) चश्रा. ११२ मनुयाज्ञवल्क्यासाः .

(२) अप. १।३७ ; व्रक. १०४ परोऽन्य (परो ह्य) ; स्मृच. २८ तिः परो ( तिपरो ) तिः परः ( तेः परः ) ; चका. ७५१ उत्तरार्धे ( द्वाविंशतिपरोऽन्यः स्याच्चतुर्विंशतिमः परः ॥ ) ; संप्र. ३४७ तिः परोऽन्य ( तिपरो ह्य ) ; मुका. ८९ ; संम. २२ स्याच्चतुर्विंशतिः ( चतुर्विंशतिमः ) ; कृम. ९२८ संमवत् .

(३) व्रक. १००; चका. ७४६ पैठीनसिः; स्मृसा. ४ मे वर्ष ( मवर्षे ) ; संप्र. १९५ वर्ष उप (वर्षे तूप) ; संग. ६३२ संप्रवत् .

(४) प्रपा. २१३ ; संप्र. ३४५ ; संको. ११९ ; संब. १०६.

## यमः

मुख्यगौणकालाः

[1]गर्भाष्टमेऽब्दे ब्राह्मणमुपनाययेत् । एकादशे तु राजन्यानुपनाययेत् । वैश्यांस्तु द्वादशे वर्षे उपनाययेत् ॥

[2]आ षोडशात्तथा वर्षाद्ब्राह्मणस्याकृतात्मनः ।
सावित्री नातिवर्तेत अत ऊर्ध्वं निवर्तते ।
आ द्वाविंशात्क्षत्रियस्य त्रिष्टुप्छन्दो निवर्तते ॥¶

## बृहत्पराशरः

मुख्यगौणकालाः

[3]अष्टैकद्वादशाब्दानि सगर्भाणि द्विजन्मनाम् ।
मुख्यकालो व्रतस्यैष ह्यन्य उक्तो विपर्यये ।
द्विगुणाब्देषु कर्तव्या क्रमादुपनतिर्द्विजैः ॥
षोडशाब्दानि विप्रस्य द्वाविंशतिर्नृपस्य च ।
चतुर्विंशतिरन्यस्य व्रात्यास्ते स्युरतः परम् ॥

## पैठीनसिः

मुख्यगौणकालाः

[4]गर्भपञ्चमेऽब्दे ब्राह्मणमुपनयेद्गर्भाष्टमे वाऽष्टमे वा, गर्भैकादशे राजन्यं गर्भद्वादशे वा, गर्भद्वादशे वैश्यं गर्भषोडशे वा ॥

¶ अतः परं वैश्यविषयकं श्लोकार्धमुच्छिन्नम् ।

(१) चश्रा. ११२.

(२) चका. ७५३.

(३) बृपसं. ६।१६७–१६८, १७६.

(४) व्रक. १०२ गर्भप ( गर्भात् प ) ; स्मृच. २६ मेऽब्दे ब्रा ( मे ब्रा ) ( वाऽष्टमे० ) ( गर्भद्वादशे वा० ) ; चका. ७४५ स्मृचवत् ; संसौ. ९७ (गर्भपञ्चमेऽब्दे ब्राह्मणमुपनयेद्गर्भाष्टमे राजन्यं गर्भद्वादशे वैश्यम् ) ; संप्र. ३४० ( वाऽष्टमे० ) पाठान्तरमप्यस्तीति सूचितम् ; संम. २१ ( गर्भपञ्चमे ब्राह्मणमुपनयेत् ) एतावदेव ; संको. ११८ मेऽब्दे ब्रा ( मे ब्रा ) ( वाऽष्टमे० ) ; संग. ६४३, यद्यप्यादर्शपुस्तके गणपताविदं वचनं नास्ति, तथापि संप्रकृतैतद्वचनव्याख्यानानुवादाद्वचनमुच्छिन्नमिति निर्णीयते ; संब. ९५ संमवत् .

**¶ [1]'द्वादश षोडश विंशतिश्चेत्यतीता अविरुद्धाः काला भवन्ति ॥**

( १ ) अत्रेयं व्यवस्था— 'वसन्ते ब्राह्मणमुपनयीत' ( आप १।१।१९ ) इत्यापस्तम्बवचनेन वसन्तादिकालीनत्वमुपनयने विहितम् । मनुविश्वामित्रयाज्ञवल्क्यपारस्करलौगाक्षिपैठीनसिवाक्येषु विनोपनिबन्धनेन श्रवणात् ब्राह्मणस्य गर्भाष्टमगर्भपञ्चमजन्माष्टमाः , क्षत्रियस्य गर्भाष्टमजन्मनवमगर्भैकादशगर्भद्वादशाः , वैश्यस्य गर्भैकादशगर्भद्वादशगर्भषोडशा नित्याः । यथाकुलं चान्योऽपि कालो नित्यः सर्ववर्णानाम् । अत्रापि प्राधान्यात् सर्वस्मृतिकारसंमतत्वाच्च गर्भाष्टमगर्भैकादशगर्भद्वादशा यथाक्रमं ब्राह्मणक्षत्रियवैश्यानां मुख्याः । तथा च मनुः— 'गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् । गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥' ( मस्मृ. २।३६ ) । गर्भपञ्चमस्य तु पैठीनसिनाऽनुपबन्धमेव ( स्मरणात् ) स्मरणदृष्टस्य च सद्यःसावित्रीपठनस्य तदवधारणस्य च केनचित् (एव ?) अतिप्राशेन स्पष्टबाधा कर्तुं शक्यत्वात् नित्यत्वमेव । प्रतिनित्यं सावित्रीपठनं च सद्य एव, 'गायत्रीप्रवरणं ब्राह्मणस्य' इति श्रुतेः । क्षत्रियस्य गर्भाष्टमनवमौ कुलव्यवस्थया नित्यौ । एवमेकादशो वैश्यस्य । अन्ये चाष्टमादयो द्वादशादि- ( ? ) वर्णक्रमेणाविरुद्धाः 'द्वादशषोडशविंशतिश्चेत्यतीता अविरुद्धकाला भवन्ति' इति पैठीनसिवचनात् तेषां च पूर्वपूर्वासंभवे उत्तरोत्तरविधिना अतीतत्वेनाविरोधवचनात् , असमविशिष्टविकल्पाच्च । ऊर्ध्वं तु द्वादशात् ( इत्था ? ) षोडशद्वाविंशतिचतुर्विंशतिपर्यन्तं यथाक्रमं वर्णानां स्वल्पः प्रत्यवायः , द्वादशपर्यन्तमेवाविरोधिस्मृतेः । ऊर्ध्वं तु व्रात्या व्रात्यस्तोमेन वोपनयनार्हाः । पञ्चमादिषु कामनोपनिबन्धत्वे तु संयोगपृथक्त्वेन नित्याः काम्याश्च । येषां तु 'राज्ञो बलार्थिनः षष्ठे' इत्यादीनां कामनोपनिबन्धेनैव स्मरणं तेषां काम्यत्वम् । किंतु स्वरूपसिद्धेस्तस्मादेवोपनयनरूपः संस्कारो नित्यः सिद्धः । गोदोहनेन प्रणयनसिद्धेर्यथा क्रम- ( ? क्रतुप)कारार्थे चमसेन न पुनः प्रणयनम् । नापि त्रिवर्षस्योपनयनम् , तत्र विशेषोल्लेखनाभावेनापेक्षकस्याभावात् , शरादिना यथा न प्रणयनमिति ।

ब्रक. १०२–१०४

( २ ) अथोपनयनकालः । स च द्विविधः— नित्यः काम्यश्च । तत्र फलानुपबन्धेन श्रुतो( ऽपि ? ) नित्यः , तदुपबन्धेन श्रुतश्च काम्यः । नित्योऽपि द्विविधः— मुख्यो गौणश्च । तत्रोत्पत्तिवाक्यशिष्टो मुख्यः , उत्पन्ने कर्मणि पश्चाच्छिष्यमाणो गौणः । सोऽपि त्रिविधः— गौणो गौणतरो गौणतमश्चेति । तत्र नित्यमाह श्रुतिः— 'अष्टवर्षं ब्राह्मणमुपनयीत' इति । मुख्यत्वं चास्य प्रत्यक्षश्रुतिविधानादुत्पत्तिवाक्यशिष्टत्वाच्च । अष्टवर्षत्वं चाष्टमवर्षसंबन्धेन, नातीताष्टमवर्षत्वेन, 'अष्टमे वर्षे ब्राह्मणमुपनयेत्' इत्यष्टमस्याधिकरणत्वश्रवणात् अष्टमनवमयोः सहनिर्देशाच्च । एवमुत्तरत्रापि 'पञ्चवर्षम्' इत्यादौ । क्षत्रियवैश्ययोरप्येकादशद्वादशे मुख्ये । नित्यगौणकालमाह पैठीनसिः— 'गर्भपञ्चमेऽब्दे ब्राह्मणमुपनयेद्गर्भाष्टमे वा, गर्भैकादशे राजन्यं गर्भद्वादशे वा, गर्भद्वादशे वैश्यं गर्भषोडशे वा' इति । ( अयं ) हेमाद्रिपाठः । निबन्धान्तरपाठस्तु विश्रुतत्वादत्र न लिखितः । गर्भसहचरितोऽब्दो गर्भशब्देनोच्यते इति भारुचिः । यस्मिन् वर्षे गर्भो भूत्वा शेते स गर्भ इति हरदत्तः । स पञ्चमो यस्येति बहुव्रीहिः पञ्चमीसमासो वा । न षष्ठीसमासः , तस्य पूरणप्रत्ययान्तेन निषेधात् । एवमुत्तरत्रापि । गर्भपञ्चमश्चात्र जन्मतश्चतुर्थो भवति, गर्भाष्टमः सप्तमः , गर्भैकादशो

---

¶ अस्य संतव्याख्यानम् 'आ षोडशात्' इति गोभिलगृह्यसूत्रव्याख्याने, वीमिव्याख्यानम् 'आ षोडशात्' इति याज्ञवल्क्यव्याख्याने द्रष्टव्यम् ।

(१) ब्रक. १०२, १०३ श षोडश विं (शषोडशविं) द्धाः काला ( द्धकाला ) ; चका. ७५२ ( द्वाविंशषोडशचतुर्विंशतिश्चेत्यतीता विरुद्धकाला भवन्ति ) ; संत. ९२७ श्चेत्य ( श्चेद ) शेषं ब्रकवत् ; संसौ. ९८ ; वीमि. १।३७ [अ]विरुद्धाः का ( विरुद्धका ) ; संप्र. ३४२ श षोडश विं ( शषोडशविं ).

दशमः, गर्भद्वादश एकादशः, गर्भषोडशः पञ्चदशः। गर्भश्चात्र जन्मनोऽप्युपलक्षणम्। तथा चाऽऽश्वलायनः— 'गर्भाष्टमेऽष्टमे वाऽब्दे पञ्चमे दशमेऽपि वा। द्विजत्वं प्राप्नुयाद्विप्रो वर्षे त्वेकादशे नृपः। वैश्यश्च द्वादशे वर्षे विप्राणां षोडशोऽवधिः॥' इति। यद्यप्यत्र जन्मत इति न श्रूयते, तथापि 'गर्भाष्टमेऽष्टमे वाऽब्दे' इति विकल्पाभिधानात्तत्सिध्यति। ततश्च पञ्चमादयोऽपि जन्मत एव सिध्यन्ति, गर्भपदस्य समस्तत्वेनासंबन्धिव्यवधानेन चोत्तरत्रानन्वयात्। एतेन— 'गर्भाष्टमेऽष्टमे वाऽब्दे ब्राह्मणस्योपनायनम्। राज्ञामेकादशे सैके विशामेके यथाकुलम्॥' (यास्मृ. १।१४) इति याज्ञवल्क्यवाक्ये एकादशादौ मिताक्षरोक्तो गर्भपदान्वयो निरस्तः। ततश्च— 'गर्भाधानाष्टमे वाऽब्दे पञ्चमे नवमेऽपि वा। कार्यं विप्रस्य राज्ञस्तु दशमे द्वादशे विशः॥' इति राजमार्तण्डवाक्यमपि व्याख्यातम्। तस्मात् 'गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम्। गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः॥' (मस्मृ. २।३६), 'सप्तमे वर्षे ब्राह्मणस्योपनयनं नवमे राजन्यस्यैकादशे वैश्यस्य' इत्यादि मनुलौगाक्ष्यादिवाक्येषु ‡गर्भोपपदात्केवलमष्टमादिपदं जन्मादिपक्षान्तरमेवाभिधत्ते, नोपसंहारम्। ततश्च गर्भपञ्चमपञ्चमाद्यब्दानां विकल्प एव सिध्यति। तदेतं विकल्पं स्पष्टमाह नारदः— 'आधानादष्टमे वर्षे जन्मतो वाऽग्रजन्मनाम्। राज्ञामेकादशे मौञ्जीबन्धनं द्वादशे विशाम्॥'। भीमपराक्रमोऽपि— 'प्रायः पाणिग्रहणे वर्षविशुद्धिं व्रतोपनयनेऽपि। गर्भादिमाहुरेके मुनयो जन्मादिमपरे च॥ सत्यपरा ये मुनयो गर्भादिमुदीरयन्ति वर्षाणाम्। परिशुद्धिं परिणयने व्रते च जन्मादितश्चान्ये॥' इति। गर्भपञ्चमादीनामष्टमार्वाचीनानां नित्यत्वं गायत्र्युच्चारणावधारणसमर्थे प्रत्येव, अन्यथा प्रधानानिष्पत्तेः, 'सावित्रीमन्वाह पच्छोऽर्धर्चशः सर्वां यथाशक्ति वाचयीत' इत्याश्वलायनादिभिरनुवचनविधानात्। यत्तु 'सावित्रीमन्वाह' इत्युपक्रम्य 'संवत्सरे षण्मास्ये चतुर्विंशत्यहे द्वादशाहे षडहे त्र्यहे वा' इति पारस्करेण गायत्र्युपदेशस्य नानाकालत्वमभिहितम्, तत् ब्राह्मणातिरिक्तविषयम्, "सद्यस्त्वेव गायत्रीं ब्राह्मणायानुब्रूयात्, 'आग्नेयो वै ब्राह्मणः' इति श्रुतेः" इति तेनैवाभिधानात्।

अथ मुख्यकालातिक्रमे गौणकालः। तत्र पैठीनसिः— 'द्वादशषोडशविंशतिश्चेत्यतीता अविरुद्धाः काला भवन्ति' इति। अस्यार्थः— द्वादशश्च षोडशश्च विंशतिश्चेति द्वादशषोडशविंशतिः अतीताश्च द्वादशादिभ्यः पूर्वं वृत्ताश्च ये कालाः अब्दाः तेऽपि इति मुख्यकालवत् अविरुद्धाः प्रत्यवायाजनका इत्यर्थः। अत्रायं श्रुतिपैठीनसिबौधायनाश्वलायनयाज्ञवल्क्यराजमार्तण्डमनुलौगाक्षि$पैठीनसिवाक्यानां निर्गलितोऽर्थः, स यथा— ब्राह्मणस्य जन्माष्टमोऽब्दो नित्यमुख्यः। गर्भपञ्चमगर्भषष्ठगर्भसप्तमगर्भाष्टमजन्मनवमजन्मदशमजन्मैकादशाब्दा यथाकुलधर्मं वेति नव नित्यगौणा भवन्ति। क्षत्रियस्य जन्मैकादशो नित्यमुख्यः। जन्मनवमगर्भैकादशजन्मद्वादशजन्मत्रयोदशजन्मचतुर्दशजन्मपञ्चदशजन्मषोडशाब्दा यथाकुलधर्मं वेत्यष्टौ नित्यगौणाः। कल्पतरुस्तु क्षत्रियस्य जन्माष्टममप्यब्दमिच्छति। वैश्यस्य जन्मद्वादशो नित्यमुख्यः। गर्भद्वादशजन्मत्रयोदशजन्मचतुर्दशजन्मपञ्चदशजन्मषोडशजन्मसप्तदशजन्माष्टादशजन्मैकोनविंशजन्मविंशत्यब्दा यथाकुलधर्मं वेति दश नित्यगौणाः। एतेन गौतमादिस्मृत्यन्तरवाक्यानि व्याख्यातानि, अनतिरिक्तार्थत्वात्।

¶ संप्र. ३४०–३४२

---

‡ ग्रन्थोऽयं व्याकुलः, 'सप्तमे वर्षे' इत्यादिलौगाक्षिवाक्ये गर्भोपपदाभावात्।

$ पुनः पैठीनसिग्रहणं पूर्वसंगृहीतवाक्यक्रमानुरोधेन। लौगाक्षिवाक्यानन्तरसंगृहीतवाक्यावपि नारदभीमपराक्रमावत्र न गृहीतौ विगलितौ वा।

¶ संन. संप्रगतम्।

( ३ ) अत्र कामसंयोगं विना गर्भाष्टमात्पूर्वपाठेन गर्भपञ्चमस्यापि नित्यत्वं ज्ञाप्यते । बौधायनः– ' गर्भादिसंख्या वर्षाणां तदष्टमेषु ब्राह्मणमुपनयेद्राजन्यमेकादशे वैश्यं द्वादशे ' इति । तदष्टमेषु गर्भाष्टमेषु । बहुवचनं षष्ठसप्तमयोः संग्रहार्थम् । यस्मिन्वर्षे गर्भो भूत्वा शेते स गर्भ इति हरदत्तः । गर्भसहचरितोऽब्दो गर्भशब्देनोच्यत इति भारुचिः कर्कश्च । अब्दश्चात्र चान्द्रश्चैत्रशुक्लप्रतिपदादिरिति केचित् । अन्ये त्वष्टममासारम्भं गर्भाधानं वाऽऽरम्य वर्षप्रवृत्तिरित्याहुः । तस्मात्पञ्चममिति पञ्चमीसमासः । एवं गर्भाष्टमादिशब्देषु द्रष्टव्यम् । उक्तवचनेष्वष्टमवर्षसंबन्धेनैवाष्टवर्षत्वं न त्वतीताष्टवर्षत्वेन । संको. ११८–११९

## अङ्गिराः

काम्यकालाः

[1]ब्रह्मवर्चसकामस्य पञ्चमेऽब्देऽग्रजन्मनः ।
आयुष्कामस्य नवमे कार्यं मौञ्जीनिबन्धनम् ॥

[2]षष्ठे तथा द्वादशे च राज्ञो वृद्धिर्बलायुषोः ।
ईहायुषोस्तु वैश्यस्य अष्टमे च चतुर्दशे ॥

( १ ) ईहा कृष्यादिविषयचेष्टा । ततः षष्ठाष्टमयोर्बलेहे वेदितव्ये । स्मृच. २६

( २ ) चतुर्थो जन्मतः । $ संप्र. ३४६

---

$ शेषं स्मृचगतम् ।

(१) स्मृच. २६ ; चका. ७४८ आयुष्का ( आयुः–का ) ; मुक्ता. ८७ ; पुम. ४३७ चकावत् .

(२) स्मृच. २६ ; चका. ७४८ ; प्रपा. २१३ अष्टमे ( ह्यष्टमे ) ; संप्र. ३४६ चतुर्दशे ( चतुर्थके ) शेषं प्रपावत् ; मुक्ता. ८७ प्रपावत् ; पुम. ४३७ ( षष्ठे च द्वादशे राज्ञो वृद्धिमिच्छोर्बलायुषोः । धनायुषोस्तु वैश्यस्य अष्टमे च चतुर्दशे ॥ ).

## आश्वलायनः

मुख्यगौणकालाः , ग्रहशुद्ध्याद्यपेक्षया कालस्य बलवत्त्वम्

[1]‡गर्भाष्टमेऽष्टमे वाऽब्दे पञ्चमे सप्तमेऽपि वा ।
द्विजत्वं प्राप्नुयाद्विप्रो वर्षे त्वेकादशे नृपः ।
वैश्यश्च द्वादशे वर्षे विप्राणां षोडशोऽवधिः ॥

[2]द्विजत्वप्रापणे राज्ञां द्वाविंशोऽब्दोऽवधिः स्मृतः ।
वैश्यस्य चाऽऽचतुर्विंशात् त्रय एते द्विजातयः ॥

[3]नातीयाद्ब्राह्मणः कालं द्विजत्वाप्त्यै य ईरितः ।
अत्यापन्नोऽपि वा भीत्या ग्रहापचरणादिभिः ॥

[4]अप्यष्टमस्थानगतान् शमयित्वा हुतादिभिः ।
तत्काल एवोपनयेत् पिता पुत्रं प्रयत्नतः ॥

अस्यार्थः– अत्यापन्नोऽपि पिता ब्राह्मणः द्विजत्वाप्त्यै ब्राह्मणत्वसिद्धये यः काल ईरितः गर्भाष्टमादिस्तं कालं भीत्या ब्राह्मणत्वभङ्गभयात् ग्रहोपचरणादिभिः नवग्रहप्रीतिदानैर्हुतादिभिर्वा ग्रहयज्ञेन वा ' बालस्य बलहीनेऽपि गर्भिण्यामपि मातरि । यो यदीच्छेद्द्विजन्मत्वमष्टमाब्दं

---

‡ अनयोः संप्रव्याख्यानं ' गर्भपञ्चमेऽब्दे ' इतिपैठीनसिवचनव्याख्याने, ' षोडशाब्दानि ' इतिशङ्खवचनव्याख्याने च द्रष्टव्यम् ।

(१) आश्वस्मृ. २।२२–२३ मे वाऽब्दे (मेऽब्दे वा) नृपः ( नृपैः ) शोऽवधिः ( शावधि ) ; प्रपा. २१३ ; गभा. २०१ तृतीयार्धं नास्ति ; संसौ. ९७ सप्तमे ( दशमे ) तृतीयार्धं नास्ति ; संप्र. ३४० सप्तमे (दशमे) : ३४३ ( विप्राणां षोडशोऽवधिः ) एतावदेव ; सिन्धु. ९२६ गभावत् ; ज्योनि. १२१ शोऽवधिः ( शावधि ).

(२) आश्वस्मृ २।२३–२४ विंशोऽब्दोऽ (विंशाब्दा) च्चा ( वा ) ; प्रपा. २१३ शोऽब्दो ( शाब्दो ) चाऽऽचतुर्विंशात् त्र ( च चतुर्विंशत्त्र ) ; संप्र. २४३.

(३) आश्वस्मृ. २।२८–२९ य ईरितः ( यदीरितम् ) ; प्रपा. २१३ भीत्या ग्र ( हीनो गृ ) ; आन. १५२ आश्वस्मृवत् .

(४) आश्वस्मृ. २।२९–३० ; प्रपा. २१३ शम ( शब्द ) नयेत् पिता पुत्रं ( नेयः पित्रा पुत्रः ) ; आन. १५२.

न लङ्घयेत् ॥ ' इत्यादिद्यार्द्वैर्हुतान् ग्रहान् शमयित्वा तस्मिन्नुक्त एव काले उपनयेत् । आन. १५२

'मुख्यकालस्तु बलवान् व्रते गोचरशुद्धितः ।
कालातिक्रमणे चैव गुरुशुद्धिं न चिन्तयेत् ॥

## लघ्वाश्वलायनः

ब्राह्मणोपनयनमुख्यकालः

'ब्राह्मणस्याष्टमे वर्षे विहितं चोपनायनम् ।
सप्तमे वाथवा कुर्यात्सर्वाचार्यमतं भवेत् ॥

## बुधः

उपनयनमुख्यकालाः

'गर्भाष्टमे वर्षे वसन्ते ब्राह्मण आत्मानमुपनाययेत् । एकादशे क्षत्रियो ग्रीष्मे । द्वादशे वैश्यो वर्षासु ॥

## विश्वामित्रः

उपनयनमुख्यकालाः

§'गर्भाष्टमेऽष्टमे वाऽब्दे ब्राह्मणस्योपनायनम् ।
राज्ञामेकादशे सैके विशामेके यथाकुलम् ॥

## स्मृत्यन्तरम्

काम्यकालः

'नवमे त्वायुष्कामं पञ्चमे ब्रह्मवर्चसकामम् ॥

§ अस्य व्याख्यानं एतत्सदृशे याज्ञवल्क्यवचने द्रष्टव्यम् ।

(१) ग्रप्र. ४०. (२) लघ्वाश्वस्मृ. १०।१.

(३) अप. १।१४ ( एकादशे...वर्षासु० ) ; ब्रक. १०० ; चका. ७४६ येत् ( येत ) ; मभा. ११२ ; हभा. १९९-२०० आपस्तम्बः ; संप्र. ३३६ ( अष्टवर्षो ब्राह्मण आत्मानमुपनाययेत् ) एतावदेव ; संम. २१ ( गर्भाष्टमे वर्षे ब्राह्मणमुपनाययेत् ) एतावदेव ; संकौ. ३० ( गर्भाष्टमे वर्षे ब्राह्मण आत्मानमुपनाययेत् ) एतावदेव : ११७-११८ संप्रवत् ; बाल. १।१४ पृ. ४५ नाययेत् (नयेत्) शेषम् अपवत् : १।२५० पृ. ५७१ संकौ. ३० वत् ; संर. १६५ संमवत् .

(४) ब्रक. १०१ विश्वामित्रयाज्ञवल्क्यौ ; चका. ७४६ विश्वामित्रयाज्ञवल्क्यौ.

(५) मभा. ११८.

## स्कन्दपुराणम् ( काशीखण्डे )

नित्यकाम्यकालाः

'सप्तमे वाऽष्टमे वाऽब्दे सावित्रीं ब्राह्मणोऽर्हति ।
नृपस्त्वेकादशे वैश्यो द्वादशे वा यथाकुलम् ॥
ब्रह्मतेजोभिवृद्ध्यर्थं विप्रोऽब्दे पञ्चमेऽर्हति ।
षष्ठे बलार्थे नृपतिर्मौञ्जीं वैश्योऽष्टमेऽब्दके ॥

## विष्णुधर्मोत्तरपुराणम्

गौणकालाः

§'षोडशाब्दो हि विप्रस्य राजन्यस्य द्विविंशतिः ।
विंशतिः सचतुर्थी च वैश्यस्य परिकीर्तिता ।
सावित्री नातिवर्तेत अत ऊर्ध्वं निवर्तते ॥

## कूर्मपुराणम्

ब्राह्मणोपनयनमुख्यकालः

'कृतोपनयनो वेदानधीयीत द्विजोत्तमः ।
गर्भाष्टमेऽष्टमे वाऽब्दे स्वसूत्रोक्तविधानतः ॥

' गर्भाष्टमे ' इत्यनेनोपलक्षितत्रयाणामपि वर्णानामुपनयनकालोऽस्माभिः समयनिर्णयोद्योते दर्शितः । मर. ५

## अनिर्दिष्टकर्तृकवचनम्

ब्राह्मणोपनयनमुख्यकालः

'अष्टवर्षं ब्राह्मणमुपनयीत ॥

## चतुर्विंशतिमतम्

मुख्यगौणकालाः

'गर्भाष्टमेऽष्टमे वाऽब्दे ब्राह्मणस्योपनायनम् ।
एकादशे क्षत्रियस्य वैश्यस्य द्वादशे स्मृतम् ॥

§ अस्य व्याख्यानम् ' आ षोडशा ' इति गोभिलगृह्यसूत्रव्याख्याने ( सं. का. पृ. ३०३५ ) द्रष्टव्यम् ।

(१) सप्मृ. ५१.

(२) संत. ९२७.

(३) मर. ५.

(४) सिन्धु. ४३७ ; कृम. ८६६ यीत ॥ + ( तमध्यापयीत ).

(५) चम. १३.

'उपनयनमेवोपनायनम्, स्वार्थेऽण्' इति विज्ञानेश्वरः। एवं तु उत्तरपदवृद्धिर्दुर्लभा पूर्वपदे च प्रवर्तेत। न च नयनशब्दादेवाणि पश्चादुपशब्देन समासः, गतेः प्राक् सुबुत्पत्तेः समासात्, सुबुत्पत्तिं विना च तद्धितोत्पत्त्ययोगात्, धातूपसर्गयोगस्यान्तरङ्गत्वाच्च, प्रज्ञादिष्वपाठाच्च। तस्माण्णिजन्ताल्ल्युडित्येव युक्तम्। तथा च भर्तृहरिः— 'निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते' इति। 'णेरणौ' इति सूत्रे भाष्यादौ स्फुटमेतत्। अत्र समासे गुणभूतस्यापि उत्तरत्रानुषङ्गेण गर्भादेकादशे गर्भादेव द्वादशे इति च बोध्यम्। तथा च मनुः— 'गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः।' इति। चम. १३

[1]आ षोडशाच्चाऽऽ द्वाविंशाच्चतुर्विंशाच्च
वत्सरात्।
सावित्रीपतिता ऊर्ध्वं विज्ञेयास्ते द्विजाधमाः॥

गुरुशुक्रादिशुभग्रहबलालाभे प्रकारान्तरेण वा प्रतिबन्धे सति पञ्चमाब्दमारभ्याऽऽ षोडशादा द्वाविंशादा चतुर्विंशाद्विप्रादीनां क्रमेण कार्यम्। अत ऊर्ध्वं सावित्रीपतिता व्रात्याः स्युः, तेषामचीर्णप्रायश्चित्तानामुपनयनं न कार्यमित्याहुर्मूले— आ षोडशाच्चेति। अत्र वत्सरादित्यनन्तरमुपनेया इत्यस्यानुषङ्गः। द्विजाधमा इति। न चेत्प्रायश्चित्तमनुतिष्ठन्तीति भावः। चम. १३–१४

## संग्रहः

कामया गौणाश्च कालाः

[2]सप्तमे वाऽष्टमे वर्षे नवमे दशमे तथा।
एकादशे द्वादशे वा ह्युपनेया द्विजातयः॥
[3]ब्रह्मवर्चसमायुष्यं तेजोऽन्नाद्यं तथेन्द्रियम्।
पशून्कामयमाना वै प्राप्नुवन्ति यथाक्रमम्॥
[4]ब्रह्मवर्चसमोजश्च विद्याऽऽयुः श्रीर्यशः सुखम्।
विप्रादेरुपनीतस्य पञ्चमादब्दतः फलम्॥
‡नृपजातिजिनाब्दान्तं नातिकालः ...॥

## स्मृत्यर्थसारः

मुख्यगौणकालाः

[1]उपनयनं गर्भप्रभृति जन्मप्रभृति वाऽष्टमेऽब्द एकादशे द्वादशे विप्रादीनां क्रमात्कार्यम्। गुरुशुक्रादिशुभग्रहबलालाभे सति पञ्चमाब्दादारभ्याऽऽ षोडशादा द्वाविंशादा चतुर्विंशाद्विप्रादीनां क्रमात्कार्यम्॥

## भीमपराक्रमः

काम्यकालाः, गर्भतो जन्मतो वा गणना मतभेदेन

[2]गर्भाष्टमे भवति भूरिधनोऽभिरूपो
विद्यार्थनीतिनिपुणो नवमेऽष्टमे च।
विद्याविशेषविभवोक्तविपश्चिमे वा
सूतः कुलेऽपि विमले स बलाधिकः स्यात्॥
[3]प्रायः पाणिग्रहणे वर्षविशुद्धिं व्रतोपनयनेऽपि।
गर्भादिमाहुरेके मुनयो जन्मादिमपरे च॥
सत्यपरा ये मुनयो गर्भादिमुदीरयन्ति
वर्णानाम्।
परिशुद्धिं परिणयने व्रते च जन्मादितश्चान्ये†॥

‡ वर्णक्रमेण षोडशाष्टादशचतुर्विंशवर्षान्तं यावत् कालो नातिक्रान्त इत्यर्थः।

† 'अन्ये = असत्यपराः' इत्यर्थः शब्दमर्यादया लभ्यते, स तु न श्लिष्यते।

(१) चम. १४.

(२) प्रपा. २१३; प्रर. ८१ वाऽ (चा); चम. १३; मुक्ता. ८७ वाऽ (चा) वा ह्युपनेया द्वि (च ह्युपनीयुर्द्वि) स्मृतिरत्ने; बाल. १।१४ पृ. ४५.

(३) प्रपा. २१३; प्रर. ८१ वर्चस (वर्चस्य); चम. १३; मुक्ता. ८७ तथेन्द्रियम् (तथैव च) तृतीयपादे (पशूंश्च कामयाना वै) स्मृतिरत्ने; बाल. १।१४ पृ. ४५.

(१) ज्योनि. १२१.

(२) स्मृसार. ३; मुक्ता. ९० (उपनयनं गर्भाज्जन्मतो वाऽष्टमे वर्षे एकादशे द्वादशे वा विप्रादीनां क्रमात्कार्यमा षोडशादा द्वाविंशादा चतुर्विंशाच्च विप्रादीनां क्रमात्कार्यम्).

(३) संतो. ९९.

(४) संतो. ९९; संप्र. ३४१.

## राजमार्तण्डः

मुख्यगौणकालाः

§[1]गर्भाधानाष्टमे वाऽब्दे पञ्चमे नवमेऽपि वा ।
कार्यं विप्रस्य राज्ञस्तु दशमे द्वादशे विशः ॥

[2]वर्षाणि यानि येषां तेषां द्विगुणीकृतानि तानीह ।
नो सावित्रीपतनं विप्रादीनां भवत्येव ॥

## षड्गुरुशिष्यः

जन्मत एव वर्षगणनाऽऽश्वलायनगृह्ये

[3]जाताधिकाराज्जन्मादावष्टमेऽब्दे भवेदिदम् ॥

¶जाताधिकाराज्जननकालादारभ्याष्टममुच्यते । तदाह षड्गुरुशिष्यः— जातेति । प्रपा. २१२

## मुहूर्तचिन्तामणिः

मुख्यगौणकालाः

[4]विप्राणां व्रतबन्धनं निगदितं गर्भाज्जनेर्वाऽष्टमे
वर्षे वाऽप्यथ पञ्चमे क्षितिभुजां षष्ठे तथैकादशे ।
वैश्यानां पुनरष्टमेऽप्यथ पुनः स्याद्द्वादशे वत्सरे
कालेऽथ द्विगुणे गते निगदिते गौणं तदाहुर्बुधाः ॥

व्रतबन्धप्रयोजनमाह— 'अथातः संप्रवक्ष्यामि चोपनायनमुत्तमम् । द्विजत्वकारणं श्रौतस्मार्तकर्मप्रसाधनम् ॥ आद्यं सर्वाश्रमाणां च देहसंस्कारकारणम् । अनेन कर्मणा सर्वे(?) संस्कृताः सर्वदेहिनः ॥ तत्संस्कारं लग्नवशात्तस्मात्सम्यं प्रवच्मि तत् ॥' इति । तस्य कालस्त्रिविधः— नित्यः काम्यो गौणश्च । तत्र क्रमेण त्रिविधमपि कालं शार्दूलविक्रीडितेनाऽऽह— विप्राणामिति । अत्र नित्यं काम्यं च तावदुच्यते । विप्राणां ब्राह्मणानां गर्भाष्टमे गर्भदिनमारभ्याष्टमे सौरवर्षे अथवा जनेरुत्पत्तिदिनात् सौरवर्षेऽष्टमे सति व्रतबन्धनं निगदितम् । इदं नित्यम् । अथ काम्यं विप्राणामेव पञ्चमे गर्भाज्जनेर्वा वर्षे कार्यम् । एवं क्षितिभुजां क्षत्रियाणां गर्भाज्जनेर्वा षष्ठे वर्षे काम्यमुपनयनम्, तथा गर्भाज्जनेर्वा एकादशे सौरवर्षे नित्यमुपनयनम् । वैश्यानां पुनस्तथैवाष्टमे वर्षे काम्यमथ तथैव द्वादशे वर्षे नित्यमुपनयनम् । गौणकाल उच्यते— निगदिते प्रोक्ते गर्भाज्जनेर्वाऽष्टमे इत्यादिके काले तस्मिन् द्विगुणिते गन्तुं प्रवृत्ते । आदिकर्मणि क्तः । तथा सति तद्व्रतबन्धने गौणकालमाहुः । यथा स्वस्वोक्तनित्यकालाद्ब्राह्मणस्य षोडशवर्षपर्यन्तं क्षत्रियस्य द्वाविंशतिवर्षपर्यन्तं वैश्यस्य चतुर्विंशतिवर्षपर्यन्तं गौणमित्यर्थः ।
§ पीटी.

## मुहूर्तगणपतिः

मुख्यकाम्यगौणकालाः

[1]व्रतबन्धस्तु विप्राणां गर्भाद्वा जन्मतोऽष्टमे ।
षष्ठेऽब्दे सप्तमे मध्यो विद्याकामस्य पञ्चमे ॥

षष्ठे चैकादशेऽब्दे वा क्षत्रियाणामुदीरितः ।
वैश्यानां द्वादशेऽब्दे स्यादष्टमे गर्भतोऽपि वा ॥

विप्रस्याऽऽषोडशाद्वर्षाद्वा द्वाविंशात्तु भूभुजाम् ।
वैश्यानामा चतुर्विंशाद्गौणः काल उदाहृतः ॥

---

§ अस्य संप्रव्याख्यानं 'गर्भपञ्चमे' इति पैठीनसिवचनव्याख्याने द्रष्टव्यम् ।

¶ 'कुमारं जातम्' इति जाताधिकार आश्वलायनगृह्यसूत्रे जातकर्मणि ।

(१) संसौ. ९८ ; संप्र. ३४१.

(२) संसौ. ९८.

(३) प्रपा. २१२ ; ज्योनि. १२१ (=).

(४) मुचि. ५।३९ ; संव. ९५.

§ संव. पीटीगतम् ।

(१) संव. १०४.

## शाकलकारिकाः

मुख्यकालाः, तेषां प्रज्ञानुरोधेन व्यवस्था

[1]अथोपनयनं कुर्यादष्टमेऽब्दे यथाविधि ।
सप्तमे पञ्चमे वाऽपि प्रज्ञावान् जायते यदि ॥

संस्कुर्यात्पञ्चमे वाऽब्दे प्रज्ञावन्तं कुमारकम् ।
केचिद्वदन्ति षष्ठेऽपि शस्तं स्यात्सप्तमेऽष्टमे ॥

## शौनककारिकाः

सूत्रोक्तत्वेन कालनिर्देशः

[2]शुद्धाष्टमादौ सूत्रोक्तवत्सरे दोषवर्जिते ॥

## रेणुकारिकाः

नित्यकाम्यगौणकालाः

[3]जन्मतोऽब्देऽष्टमे गर्भाधानाद्वा विप्रजन्मनः ।
राज्ञ एकादशे गर्भाधानाद्वा जन्मतोऽथवा ॥
वैश्यस्य द्वादशे तद्वदेतन्नित्योपनायनम् ।
यथामङ्गलशब्दोऽत्र स्वशाखान्तरवाक्यपि ॥
ब्रह्मवर्चसकामस्य पञ्चमेऽब्देऽग्रजन्मनः ।
आयुःकामस्य नवमे कार्यं मौञ्जीनिबन्धनम् ॥
षष्ठे क्रमाद्द्वादशे च राज्ञो वृद्धिर्बलायुषोः ।
ईहायुषोऽस्य वैश्यस्य अष्टमे च चतुर्दशे ॥
संख्याविकल्पो गर्भादिर्ज्ञेयः पैठीनसेर्मतात् ।
राजन्यस्योपनयनं जन्मतो दशमे भवेत् ॥
विशः पञ्चदशे तद्वदिति पैठीनसेर्वचः ।
ब्रह्मवर्चसमायुष्यं तेजोऽन्नाद्यमथेन्द्रियम् ॥
पशवः सप्तमाष्टादौ मेखलाबन्धने फलम् ।
द्वादशाब्दान्तमेतच्च सामान्यं ब्राह्मणादिषु ॥
आपस्तम्बीयसूत्रे तद्भाष्यकारैर्विचारितम् ॥
इदानीं गौणकालोऽत्र तेषामेव निरूप्यते ॥
आङ्त्राभिविधौ ज्ञेयो वाक्यान्तरनिरीक्षया ।
औपनायनिकः कालः परः षोडशवार्षिकः ॥
द्वाविंशतिः परोऽन्यस्य स्याच्चतुर्विंशतिः परः ॥

---

(१) शाका. २८–२९.
(२) शौका. १ पृ. ४१ ; प्रपा. २१४.
(३) रेका. १–८ पृ. १९–२०, १३९–१४१ पृ. २९.

## व्रात्यविचारः

---

### बौधायनगृह्यसूत्रम्

अनुपनीतानां गौणकालोत्तरं व्रात्यत्वम्, तेषामुपनयनाद्यनधिकारोऽव्यवहार्यता च, व्रात्यस्तोमेन विवाहाधिकारः

[1]अत ऊर्ध्वं पतितसावित्रीका भवन्ति ॥

नैनानुपनयेयुर्नाध्यापयेयुर्न विव(? वा)हयेयुर्न याजयेयुः ॥

तांस्त्रिवृता व्रात्यस्तोमेन याजयित्वा विवाहयेयुः ॥

### आश्वलायनगृह्यसूत्रम्

गौणकालेष्वप्यनुपनीतानां व्रात्यत्वं तेषूपनयनादिनिषेधाश्च

[2]अत ऊर्ध्वं पतितसावित्रीका भवन्ति ॥

(१) एभ्यः संवत्सरेभ्यः षोडशद्वाविंशचतुर्विंशेभ्य ऊर्ध्वमनुपनीतास्ते पतितसावित्रीका नाम भवन्ति। संज्ञाप्रयोजनं 'पतितसावित्रीक उद्दालकव्रतं चरेत्' (वस्मृ. ११।५६) इति। देभा.

(२) षोडशद्वाविंशचतुर्विंशपर्यन्तेष्वनुपनीताश्चेत् पतितसावित्रीका भवन्ति। संज्ञायाः प्रयोजनं 'पतितसावित्रीक उद्दालकव्रतं चरेत्' इति। अत ऊर्ध्वमिति वचनं पूर्वसूत्रेष्वाकारा अभिविधाविति ज्ञापनार्थम्। गानावृ.

(३) अतः षोडशादिभ्यः ऊर्ध्वमेषामकृतप्रायश्चित्तानां सावित्र्यामधिकारो नास्ति। ¶ अना.

[3]नैनानुपनयेन्नाध्यापयेन्न याजयेन्नैभिर्व्यवहरेयुः ॥

---

¶ प्रपा. अनावत्।

(१) बौगृ. ३।१३।५-७.

(२) आगृ. १।१९।६; प्रपा. २१२; संम. २२; बाल. १।३८.

(३) आगृ. १।१९।७; प्रपा. २१३; संप्र. ३४९; संम. २२.

(१) एते पतितसावित्रीका उपनयनादिसंस्कारैर्न संस्कर्तव्याः अचीर्णप्रायश्चित्ताः। तत्र किमर्थं सर्वे एतेः संबध्यन्ते? उपनयनप्रतिषेधे सर्वाणि हि प्रतिषिद्धानि भवन्ति। अत्रोच्यते— कयाचिद्युक्त्या लोभात् अज्ञानाद्वा उपनीतस्यापि सतः अचीर्णप्रायश्चित्तस्य नैवोत्तराणि कर्तव्यानीत्येवमर्थं सर्वेषामनुक्रमेण(? मणं) क्रियते। देभा.

(२) अचीर्णप्रायश्चित्तानिति शेषः। उपनयनप्रतिषेधादेव सर्वत्र प्रतिषेधे सिद्धे यदि केनचिल्लोभादज्ञानाद्वोपनीताः स्युः तथाऽपि नैवोत्तराणि कर्माणि पतितसावित्रीकाणां कुर्यादिति सर्वेषां पाठः क्रियते। † गानावृ.

(३) विवाहः(? व्यावाहः) कन्याया दानप्रतिग्रहौ। रागाल्लोभात् भयादज्ञानाद्वा केनचिदुपनीतस्यापि नाध्यापनादीनि कर्तव्यानीत्येवमर्थस्तेषां प्रतिषेधः। एतच्च सर्वं प्रायश्चित्ते सति कर्तव्यमेव। अना.

(४) व्यवहारोऽत्र योनिसंबन्धः कन्यादानादानरूपः, 'यौनान्' इति मानवात्। एतेन 'नैनानुपनयेयुर्नाध्यापयेयुर्न याजयेयुर्नैभिर्व्यवहरेयुः' इति वसिष्ठवाक्यमपि व्याख्यातम्। संप्र. ३४९

### कौषीतकिगृह्यसूत्रम्

अनुपनीतानां गौणकालोत्तरं व्रात्यत्वम्, तेषूपनयनादिनिषेधः

[1]अत ऊर्ध्वं पतितसावित्रीका भवन्ति ॥

नैनानुपनयेयुः ॥

नाध्यापयेयुः ॥

न याजयेयुः ॥

नैभिर्व्यवहरेयुः ॥

---

† प्रपा. गानावृवत्।

(१) कौगृ. २।१।९-१३.

## वाराहगृह्यसूत्रम्

गौणकालोत्तरं व्रात्यत्वम्, व्रात्येषु याजनादिनिषेधः

**'अत ऊर्ध्वं पतितसावित्रीका भवन्ति ॥**

**नैनान् याजयेयुर्नाध्यापयेयुर्न विवहेयुः ॥**

## पारस्करगृह्यसूत्रम्

गौणकालोत्तरं व्रात्यत्वम्, अकृतप्रायश्चित्तेषु व्रात्येषु उपनयनादिनिषेधः, त्रिपुरुषं व्रात्यत्वे कृतप्रायश्चित्ते चतुर्थे उपनयनानुमतिरध्यापननिषेधश्च

**'अत ऊर्ध्वं पतितसावित्रीका भवन्ति ॥**

**नैनानुपनयेयुर्नाध्यापयेयुर्न चैभिर्व्यवहरेयुः ॥**

( १ ) अतः परं पतितसावित्रीका भवन्त्येते । ततश्च नैनान् व्रात्यान् अकृतव्रात्यस्तोमप्रायश्चित्तान् । प्रायश्चित्ताचरणानन्तरं तेषामुपनयनाद्यधिकार इत्यर्थः । जभा.

( २ ) अतः पञ्चदशात् एकविंशात् त्रयोविंशाद् वर्षादूर्ध्वमनुपनीता ब्राह्मणक्षत्रियवैश्याः यथासंख्यं पतितसावित्रीका भवन्ति पतिता स्खलिता अधिकाराभावान्निवृत्ता सावित्री गायत्री येभ्यस्ते पतितसावित्रीका भवन्ति संपद्यन्ते । एतान् पतितसावित्रीकान् न उपनयेयुः उपनयनसंस्कारेण न संस्कुर्युः शिष्टाः । केश्चिदतिक्रान्तनिषेधैरुपनीतानपि न अध्यापयेयुः न वेदं पाठयेयुः । तथा न याजयेयुः । केश्चिदतिक्रान्तनिषेधैर्वेदमध्यापितानपि न याजयेयुः न यज्ञं कारयेयुः । एभिः पतितसावित्रीकैरनुपनीतैरुपनीतैर्वा सह न व्यवहरेयुः स्नानासनशयनभोजनविवाहादिभिः कर्मभिर्न व्यवहारं कुर्युः । $हभा.

( ३ ) पतिता सावित्री येभ्यः सवितृदेवताकमन्त्रोपदेशानधिकारः । विभा.

**त्रिपुरुषं पतितसावित्रीकाणामपत्ये संस्कारो नाध्यापनं च ॥**

$ गभा., संग., संदी. हभावत् ।

(१) वागृ. ५.

(२) पागृ. २।५।३९-४०, ४२-४३.

**तेषां संस्कारेप्सुर्व्रात्यस्तोमेनेष्ट्वा, '$काममधीयीरन् व्यवहार्या भवन्ति ' इति वचनात् ॥**

( १ ) संस्कारमिच्छन् व्रात्यस्तोमेनेष्ट्वा आद्रियेत अधीयीत च, " व्यवहार्या भवन्ति ' इति वचनात् " । कभा.

( २ ) एषां त्रयाणामपत्ये चतुर्थे पुरुषे कृतप्रायश्चित्ते केवलमुपनयनाख्यः संस्कारः, नाध्यापनादिः । तेषां त्रिपुरुषं पतितसावित्रीकाणां मध्ये यः आत्मनः संस्कारमिच्छति स व्रात्यस्तोमेनेष्ट्वा काममधीयीत । कुतः ? ' अधीयीरन् व्यवहार्याः ' इत्यादेः । जभा.

( ३ ) इदानीं पतितसावित्रीकविषये संस्कारप्रतिप्रसवमाह- त्रिपुरुषमिति । त्रिपुरुषं त्रीन् पुरुषान् यावत् ये पतितसावित्रीकाः पितृपुत्रपौत्राः तेषाम् अपत्ये पुत्रे संस्कारः उपनयनं भवति, न पुनश्चतुर्थादीनां तेषां च उपनीतानामपि अध्यापनं ( न ? ) भवति, निषिद्धस्य पुनरनुज्ञापनं प्रतिप्रसव इत्युपनयनस्यैव प्रतिप्रसवात् । तेषां पतितसावित्रीकाणां मध्ये यः संस्कारेप्सुः आत्मानं संस्कारयितुकामः स व्रात्यस्तोमेन यज्ञविशेषेण इष्ट्वा व्रात्यस्तोमं यज्ञं कृत्वा, व्यवहार्यो भवति अधीयीत चेति शेषः । उपनयनादिसंस्कारयोग्यो भवति, ( तस्मात् ? ) कामम् इच्छया व्रात्यस्तोमेनेष्ट्वा अधीयीरन् वेदं पठेयुः व्यवहार्याः लोके शिष्टानामध्यापनादिषु कर्मसु योग्याः भवन्तीति वचनात् श्रुतेः । हभा.

$ अत्र वचनाकारे विप्रतिपत्तयः । यद्यपि कर्कभाष्ये ' व्यव० ' इत्यादेर्वचनत्वं स्पष्टं प्रतीयते, तथापि तत्र लेखकादिप्रमादः, ' अधीयीरन् ' इत्यस्य वचनबहिर्भूतत्वेऽनन्वयित्वात्, ' अधीयीत ' इत्येकवचनान्तपदेन वाक्यशेषपूरणाच्च । तस्मात् ' कामम् ' इत्यादि ' अधी० ' इत्यादि वा वचनं कर्कसंमतमित्यापद्यते । ' अधी० ' इत्यादिवचनमिति जयरामः । ' कामम् ' इत्यादि वचनमिति हरिहर-गदाधर-गणपति-दीपकाः । विश्वनाथेन ' व्यव० ' इत्यादेर्वचनत्वं स्वीकृतम् । तत्र ' संस्कारेप्सुः अधीयीरन् ' इत्यापतितं सामानाधिकरण्यस्मृतिव्याकोपं परिहर्तुं क्त्वाविषये समानकर्तृकत्वस्मृतिव्याकोपोऽङ्गीकृतस्तेन ।

(४) त्रीन् पुरुषान् यावत् ये पतितसावित्रीकाः पितृपुत्रपौत्राः तेषामपत्ये चतुर्थे पुरुषे असंस्कारः उपनयनसंस्कारो न भवति, अध्यापनं च न भवति । अत्र हरिहरभाष्यं मृग्यम् । तेषां पितृपुत्रपौत्राणां त्रयाणां पतितसावित्रीकाणां मध्ये यः संस्कारेप्सुः आत्मानं संस्कारयितुकामः स व्रात्यस्तोमेन यज्ञेनेष्ट्वा व्रात्यस्तोमं कृत्वा व्यवहार्यो भवति, कामम् इच्छया अधीयीरन् वेदं पठेयुः, व्यवहार्याः शिष्टानामध्यापनादिकर्मसु योग्याः भवन्तीति वचनात् श्रुतेः ।

† गभा.

(५) सावित्र्यनधिकारसंपन्नहृत्संतापानामपत्यसंस्कारः पुनः प्रसूयते । स कियद्दूरमत आह— त्रिपुरुषमिति । यत्तु चतुर्थाद्यपत्यस्य संस्कार्यताऽनेन प्रतिपाद्यत इति, तन्न, त्रिपुरुषमित्यस्य व्यर्थतापत्तेः । न च त्रिपुरुषमसंस्कार्यताप्रतिपत्त्यर्थमिदमिति वाच्यम्, पुरुषत्रयमनुवृत्तस्यैनसो बलवत्त्वेन निवर्तयितुमशक्यत्वात् । संस्कारांशं प्रतिप्रसूयाध्यापनांशं निषेधति— नाध्यापनं च तेषामिति । पुनस्तत्प्रतिप्रसवमाह— संस्कारेप्सुरिति । तेषां मध्ये यः संस्कारेप्सुः आत्मनः संस्कारेच्छावान् स व्रात्यस्तोमेन यज्ञेनेष्ट्वा व्रात्यस्तोमं कृत्वा तत्पुत्रपौत्रादयः कामं यथेष्टमधीयीरन् अध्ययनं कुर्युः । कुतः ? 'व्यवहार्या भवन्ति' इति वचनात् श्रौतवचनादित्यर्थः । यद्वा कामम् इच्छयाऽध्ययनस्य व्रात्यस्तोमेनेष्ट्वा । व्रात्यस्तोमानुष्ठानं च सावित्रीपाताहितां व्रात्यतामपनेतुम् ।

विभा.

## गोभिलगृह्यसूत्रम्

गौणकालोत्तरं व्रात्यत्वम्, व्रात्येषूपनयनादिनिषेधाः

**[1]अत ऊर्ध्वं पतितसावित्रीका भवन्ति ॥**

अतः एतस्मात् कालादूर्ध्वं त्रयोऽप्येते पतितसावित्रीका भवन्ति स्वकाले सावित्र्यामनुच्यमानायां ये पतन्ति प्रायश्चित्तविशेषभागिनो भवन्ति ते पतितसावित्रीका व्रात्याश्च भण्यन्ते । मृदुला.

† संग., संदी. गभावत् ।

(१) गोगृ. २।१०।५ ; संत. ९२६.

**[1]नैतानुपनयेयुर्नाध्यापयेयुर्न याजयेयुर्नैभिर्विवहेयुः ॥**

एतान् पतितसावित्रीकान् । त्रयाणां प्रकृतत्वात् बहुवचनम् । एनानिति पाठे एनः प्रकृत्यन्तरम् । नोपनयेयुः व्रात्यस्तोमात् क्रतोर्विना । तथा च स्मृत्यन्तरम्— 'अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः । सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः ॥' इति । उपनयेयुरिति बहुवचनं तत्कर्तृसंसर्गिणामपि प्रायश्चित्तप्रज्ञापनार्थम् । तथा च स्मरणम्— 'व्रात्याचार्यस्य भुक्त्वाऽन्नं कृच्छ्रपादेन शुध्यति । यश्चोपनयते व्रात्यान् त्रिभिः कृच्छ्रैः स शुध्यति ॥' इति । एवमुत्तरत्रापि बोद्धव्यम् । न याजयेयुरिति । अविशेषात् पाकयज्ञैरपि । नैभिः सह विवहेयुः विवाहं कुर्युः । विवाहयेयुरिति पाठे एभिः सह विवाहसंबन्धं न कारयेयुरिति व्याख्येयम् । एष्वपि कालेष्वनुपनीता एते त्रयोऽप्यकृतप्रायश्चित्ता उपनयनाद्यनर्हा भवन्तीति परमार्थः । उपनयनप्रतिषेधादेव सर्वत्र प्रतिषेधे सिद्धे यदि केनचिल्लोभादज्ञानाद्वोपनीताः स्युस्तथापि नोत्तराणि कर्माणि पतितसावित्रीकाणां कुर्यादिति सर्वेषां पाठः क्रियते । मृदुला.

## वैखानसगृह्यसूत्रम्

गौणकालोत्तरं व्रात्यत्वम्

**[2]अतीते सावित्रीपतिता भवन्ति ॥**

## बौधायनः

सावित्रीपरिभ्रष्टानां व्रात्यत्वम्

**[3]त्रिषु वर्णेषु सादृश्यादव्रतान् जनयेत्तु यान् ।**
**तान् सावित्रीपरिभ्रष्टान् व्रात्यानित्याहुर्मनीषिणः ॥**

(१) गोगृ. २।१०।६ ; संत. ९२६ याज्येयुर्नैभिर्विव (एभिर्विवा).

(२) वैगृ. २।३.

(३) मुक्ता. ७२.

## आपस्तम्बः हिरण्यकेशिधर्मसूत्रं च

व्रात्य–व्रात्यापत्यानां ब्रह्मह–श्मशानतुल्यत्वम्,
तेष्वभ्यागमनादिनिषेधाः

§ [1]'अथ यस्य पिता पितामह इत्यनुपेतौ स्यातां ते ब्रह्महसंस्तुताः ॥

तेषामभ्यागमनं भोजनं विवाहमिति च वर्जयेत् ॥

अथ यस्य प्रपितामहादि नानुस्मर्यत उपनयनं ते श्मशानसंस्तुताः ॥

तेषामभ्यागमनं भोजनं विवाहमिति च वर्जयेत् ॥

## वासिष्ठः

गौणकालोत्तरं व्रात्यत्वम्, व्रात्येषूपनयनादिनिषेधाः

[2]अत ऊर्ध्वं पतितसावित्रीका भवन्ति ॥

$ [3]नैतानुपनयेन्नाध्यापयेन्न याजयेन्नैभिर्विवाहयेयुः ॥

## विष्णुः

गौणकालोत्तरं व्रात्यत्वम् आर्यविगर्हितत्वं च

[4]अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः ।
सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः ॥

---

§ एतेषां व्याख्यानं 'कालातिक्रमादिनिमित्तकप्रायश्चित्तानि' इति प्रकरणे द्रष्टव्यम्।

$ अस्य संप्रव्याख्यानमाश्वलायनगृह्यसूत्रे द्रष्टव्यम्।

(१) आध. १।१।३२–३३, १।२।५–६. शेषस्थलादिनिर्देशाः 'कालातिक्रमादिनिमित्तकप्रायश्चित्तानि' इति प्रकरणे द्रष्टव्याः.

(२) वस्मृ. ११।५४ ; विश्व. १।३८.

(३) वस्मृ. ११।५५ ; विश्व. १।३८ ( नैनानुपनयेयुः ) एतावदेव ; स्मृच. २८ ( नैतानुपनयेयुर्नानुध्यापयेयुर्न याजयेयुर्नैभिर्विवाहयेयुः ) ; संप्र. ३४९ ( नैतानुपनयेयुर्नाध्यापयेयुर्न याजयेयुर्नैभिर्व्यवहरेयुः ).

(४) विस्मृ. २७।२७.



## शङ्खः शङ्खलिखितौ च

गौणकालोत्तरं व्रात्यत्वं पातित्यं च

[1]'विज्ञातव्यास्त्रयोऽप्येते यथाकालमसंस्कृताः ।
सावित्रीपतिता व्रात्याः सर्वधर्मबहिष्कृताः ॥

सावित्र्याः पतिताः सावित्रीपतिताः पतितसावित्रीका इत्यर्थः, 'अत ऊर्ध्वं पतितसावित्रीका भवन्ति' इत्याश्वलायनस्मरणात्। 'सर्वधर्मबहिष्कृताः' इति सर्वधर्मपदमुपनीताधिकारिकसर्वधर्मपरम्, न धर्ममात्रपरम्, 'सर्वत्वमाधिकारिकम्' इति न्यायेन समन्त्रककर्ममात्रपरत्वौचित्यात्। अत एवाऽऽश्वलायनः 'अत ऊर्ध्वं पतन्त्येते द्विजत्वं नाऽऽप्नुयुर्यदि। मन्त्रकर्मपरिभ्रष्टा यास्यन्ति व्रात्यतामिह ॥' इति मन्त्रवत्स्वेव कर्मस्वनधिकारमाह। मन्त्रैः कर्माणि मन्त्रकर्माणि, न तु मन्त्राश्च कर्माणि चेति समासः, अतिप्रसङ्गात्। मन्त्राश्च वैदिका एव, न नमोमन्त्राः, तेषां शूद्रधर्मत्वेन तदभ्यनुज्ञानात्। तथा च मनुः– 'न ह्यस्मिन् युज्यते कर्म किंचिदामौञ्जिबन्धनात् ॥ नाभिव्याहारयेद् ब्रह्म स्वधानिनयनादृते। शूद्रेण हि समस्तावद्यावद्वेदे न जायते ॥' ( मस्मृ. २।१७१–१७२ ) इति। शूद्रसमत्वं चात्र मन्त्रवत्कर्मानधिकारहेतुः, हिशब्दश्रवणात्, 'चतुरुपभृति गृह्णाति, न ह्यत्रानुयाजान् यक्ष्यन् भवति' इतिवत्। नार्थवादः 'तेन ह्यन्नं क्रियते' इतिवत्, 'यत्र यत्र शूद्रसधर्मत्वं तत्र तत्र मन्त्रवत्कर्मानधिकारः, यथा प्रतिलोमजादौ' इति व्याप्तिदर्शनात्। तथा च मनुः– 'शूद्राणां च सधर्माणः सर्वेऽपध्वंसजाः स्मृताः ।' (मस्मृ. १०।४१) इति। शूद्रसमत्वं चास्य एकजातित्वेन स्पष्टमेवोक्तम् 'यावद्वेदे न जायते' इति। वसिष्ठोऽपि शूद्रवृत्तित्वं तस्याऽऽह– 'न ह्यस्य विद्यते कर्म किंचिदा मौञ्जिबन्धनात्। वृत्त्या शूद्रसमस्तावद्यावद्वेदे न जायते ॥' ( वस्मृ. २।१२) इति। वृत्तिः आचारः जीवनोपायश्च, 'वृत्तिर्वर्तनजीवने' इति त्रिकाण्डीस्मरणात्। बौधायनोऽपि– 'नास्य कर्माणि यच्छन्ति किंचिदामौञ्जिबन्धनात्। वृत्त्या शूद्रसमो ह्येषो यावद्वेदे

---

(१) शंस्मृ. २।८ ; चका. ७५२ ; संप्र. ३४७.

न जायते ॥' इति । यद्यप्येतदनुपनीतप्रकरणेऽभिहितं तथाऽपि व्रात्यानामनुपनीतत्वापरिहारेणैव व्रात्यत्वोक्त्या न तत्सामान्यधर्मनिवृत्तिः । बालत्वादिप्रयुक्तविशेषधर्मनिवृत्तिस्त्वास्ताम् । ततश्च व्रात्यानामप्यविरुद्धानुपनीतधर्मैःशूद्रधर्मसाधारणधर्मेष्वधिकारः सिध्यति ।

संप्र. ३४७–३४९

**'अतो निष्क्रान्तकालाः पतन्ति ॥**

सावित्र्या इति शेषः । संप्र. ३४७

## मनुः

गौणकालोत्तरं व्रात्यत्वं शूद्रसमत्वं च, व्रात्यैः सह ब्राह्मयौनसंबन्धनिषेधः

**'अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः ।**
**सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः ॥**

अस्मात् कालादूर्ध्वं परेण त्रयोऽप्येते वर्णाः ब्राह्मणादयः यथाकालं (यो) यस्योपनयनकालः तत्राऽऽनुकल्पिकेऽपि असंस्कृताः अकृतोपनयनाः सावित्रीपतिताः उपनयनभ्रष्टाः भवन्ति । व्रात्याश्च संज्ञया । आर्यैः शिष्टैः विगर्हिताः निन्दिताः । व्रात्यसंज्ञाव्यवहारप्रसिद्ध्यर्थोऽयं श्लोकः । अनुपनेयत्वं तु पूर्वेणैव सिद्धम् । † मेधा.

**'नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित् ।**
**ब्राह्मान्यौनांश्च संबन्धानाचरेद् ब्राह्मणः सह ॥**

(१) एतैर्व्रात्यैः अपूतैः अकृतप्रायश्चित्तैः विधिवत् यादृशो विधिः प्रायश्चित्तशास्त्रेणोपदिष्टः 'तांश्चारयित्वा त्रीन् कृच्छ्रान्' इति । आपद्यपि हि कर्हिचित् कस्यांचिदप्यापदि न संबन्धान् आचरेत् कुर्यात्तैः सह । किं सर्वसंबन्धनिषेधः? नेत्याह— ब्राह्मान्यौनांश्च । ब्रह्म वेदः । तन्निमित्ताः संबन्धाः याजनाध्यापनप्रतिग्रहाः । न ते याज्याः न याजकाः कर्तव्याः । एवं नाध्याप्याः नैतेभ्योऽध्येतव्यम् । वेदार्थं विदुषः प्रतिग्रहाधिकारात् एषोऽपि ब्राह्मसंबन्धो भवति । यौनः संबन्धः कन्याया दानादाने । ब्राह्मणग्रहणं प्रदर्शनार्थम् । अस्माच्च दोषदर्शनाद् व्रात्यतापरिहारार्थं पितुरभावेऽपि व्युत्पन्नबुद्धिना माणवकेनाप्यात्मनाऽऽत्मोपनाययितव्य इति प्रतीयते । काम्यो ह्ययमाचार्यस्य विधिः । तत्राऽऽचार्यत्वमकामयमानो यदि कश्चिन्न प्रवर्तते तदा माणवकेन प्रार्थयितव्यो दक्षिणादिना । तथा च श्रुतिः- (?तौ) — 'सत्यकामो जाबालो हारिद्रुमतं गौतममियाय ब्रह्मचर्यं भवति वत्स्यामि' इति स्वयमाचार्यमभ्यर्थितवानुपनयनार्थम् । § मेधा.

(२) यावत् विधिवत् यथाशास्त्रम् एते अपूताः कृतप्रायश्चित्ता न भवन्ति तावदेतैः सहाऽऽपद्यपि कदाचित् अध्ययनकन्यादानादीन् संबन्धान् ब्राह्मणो नाऽऽचरेत् । * गोरा.

(३) ब्राह्मण इति वचनं क्षत्रादेस्तत्संबन्धे तादृग्दोषाभावकथनार्थम् । ब्राह्मणैरित्यपि पाठे तद्दोषाधिक्योपदर्शनार्थं तदिति ग्राह्यम् । ¶ मवि.

(४) अत्र ब्राह्मणशब्दस्त्रैवर्णिकवचनः, एतच्छब्देन प्रकृतवर्णत्रयपरामर्शिना सामानाधिकरण्यावगमात् । ¶ नन्द.

---

† गोरा., मवि., ममु., मच., मुक्ता., आन., नन्द., भाच. मेधागतम् ।

(१) चका. ७५२ शङ्खलिखितौ ; संप्र. ३४७ शङ्खलिखितौ.

(२) मस्मृ. २।३९ ; पमा. ४९ त्रयोऽप्येते (पतन्त्येते) स्मर्यते, ४४६ : ५४७ उत्त. ; मपा. ३६ कालमसं (काले न सं) ; संसौ. ९८ ता व्रात्या (तत्वाच्च) ; संप्र. ३४७ मनुयमौ ; मुक्ता. ८९ ; आन. १५३ ; संब. ९५.

(३) मस्मृ. २।४० ; अप. १।७ पृ. १३, १।३८ ; व्रक. १०४ णः सह (णैः सह) ; मवि. व्रकवदपि पाठः ; स्मृच. २८ बन्धाना (बन्धान्नाऽऽ) ; स्मृसा. ५ ; पमा. ४४६ ब्राह्मान् (ब्राह्म्यान्) ; संसौ. ८९ हि कर्हिचित् (कदाचन) ; संप्र. ३४९ व्रकवत् स्मृचवच्च ; मुक्ता. ८९ संसौवत् संप्रवच्च ; आन. १५३ संसौवत् ; नन्द. व्रकवत् .

§ अप., व्रक., स्मृच., स्मृसा., संसौ., संप्र., मच., मुक्ता., आन. मेधागतम् ।

* ममु., भाच. गोरावत् ।

¶ शेषं मेधागतम् ।

[1]**द्विजातयः सवर्णासु जनयन्त्यव्रतांस्तु यान्।**
**तान् सावित्रीपरिभ्रष्टान् व्रात्यानिति विनिर्दिशेत् ॥**

(१) नैते प्रतिलोमवर्णसंकराः स्युः। अतोऽस्मिन् विधावुच्यन्ते। द्विजातयो यान् सवर्णासु जनयन्ति तेऽवेदव्रता भवन्ति अब्रह्मचारिणः सावित्रीपरिभ्रष्टा उपनयनहीनाश्च तदा व्रात्या इति तान्निर्दिशेत्। अव्रताञ्जनयन्तीति नायं संबन्धः। न हि व्रतिनोऽव्रता वा जन्यन्ते, जातानामुपनयनसंस्कारविधानात्। उक्तव्रात्यलक्षणानुवाद उत्तरविवक्षया। यस्त्वयं पाठः– 'अव्रतायां जनयन्ति तान्व्रात्यान्विनिर्दिशेत्', तदसत्, उक्तव्रात्यलक्षणविरोधात्। मेधा.

(२) इदानीं व्रात्यजातानामप्रतिलोमानामपि सतां संस्कार्यत्वप्रतिपादनार्थम् 'अत ऊर्ध्वं त्रयोऽप्येते' इत्याद्युक्तं व्रात्यलक्षणमनुवदितुमाह– द्विजातय इति। द्विजातिः स्त्रीषु यान् पुत्रानुत्पादयति ते चेदुपनयनाख्यव्रतहीना भवन्ति तदा तानकृतोपनयनान् व्रात्यानित्यनया संज्ञया व्यपदिशेत्। गोरा.

(३) व्रात्यनाम्नो वर्णबाह्यान्। § मवि.

(४) 'अत ऊर्ध्वं त्रयोऽप्येते' इत्युक्तमपि व्रात्यलक्षणं प्रतिलोमजपुत्रवदस्याप्युपकाराक्षमपुत्रत्वप्रदर्शनार्थमस्मिन्संकीर्णप्रकरणेऽनूदितम्। ¶ ममु.

(५) व्रात्यानामिव तज्जानामपि पुत्रकार्यनिवृत्त्यर्थं व्रात्यत्वमाह–द्विजातय इति। ते स्वयमव्रताः कालेऽप्राप्तोपनयनाः अनुलोमेनोद्वाहितास्वक्षतयोनिषु सवर्णास्वपि जनयन्ति यान् तान् सावित्रीभ्रष्टत्वेनाव्रतानितिकृत्वा व्रात्यान्निर्दिशेदित्यन्वयः। मच.

(६) अथ त्रैवर्णिकानामनुपनीतानां व्रात्यन्तरत्वमाह– द्विजातयः सवर्णास्विति। § नन्द.

(७) अभिनिर्दिशेत् कथयेत्। § भाच.

[2]**ब्राह्मणाः क्षत्रिया वैश्याः स्वावधेरूर्ध्वमब्दतः।**
**अकृतोपनयाः सर्वे वृषला एव ते स्मृताः ॥**

## याज्ञवल्क्यः

गौणकालोत्तरमकृतप्रायश्चित्तानां व्रात्यत्वम्

[2]**अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः।**
**सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः ॥**

(१) एतदेव $निन्दार्थवादेन स्पष्टीकरोति– अत इति। अतः परं षोडशात् द्वाविंशाच्चतुर्विंशाच्च वर्षात् पतन्त्येते ब्राह्मणादयो द्विजातिकर्मभ्यः प्रागेतस्मात् कालादापद्यप्यनुपनयने। अध्यापनसामर्थ्ये तु प्राथमकल्पिकात् कालादूर्ध्वं पतनमेव। यथाऽऽह मनुः – 'प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते।' इत्यादि। ततश्च द्विजातिकर्महानात् सर्वधर्मबहिष्कृता असंव्यवहार्या भवन्ति। यथा चाऽऽपस्तम्बः– 'ते ब्रह्महसंस्तुतास्तेषामभ्यागमनं भोजनं विवाह इति च वर्जयेत्' इत्यादिना असंव्यवहार्यतां दर्शयति। कस्मात् पुनरसंव्यवहार्या भवन्ति ? यस्मात् सावित्रीपतिता व्रात्याः। सावित्रीशब्दश्चोपनयनकालोपलक्षणार्थः। तथा च वसिष्ठः– 'अत ऊर्ध्वं पतित-

§ शेषं मेधागतम्।

¶ शेषं गोरागतम्।

(१) मस्मृ. १।२० ; मच. व्रतांस्तु (व्रतास्तु) ; मुक्ता. ७२ तांस्तु यान् (तान्सुतान्) निति वि (नित्यमि) ; भाच. निति वि (नित्यमि).

§ शेषं मेधागतम्।

$ गौणकालोत्तरं नोपनयनमित्येतदेवेत्यर्थः।

(१) शूक. २६०.

(२) यास्मृ. १।३८ ; विश्व. ; मिता. ; अप. पूर्वार्धे (अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः।) द्वितीयपादे आदर्शवदपि पाठः ; ब्रक. १०४ ; स्मृच. २८ ; चका. ७५२ ; स्मृसा. ५ बहिष्कृ (बहिः कृ) ; मपा. ३६ उत्त. ; धप्र. ३९ ; संसौ. ९९ उत्त. ; वीमि. ; संप्र. ३४७ : ३५१ चतुर्थपादमात्रम्, योगिस्मरणम् ; चम. १४ ; मुक्ता. ८९ पत (भव) ; संम. २२ स्मृत्यावत् ; शूक. २६० ; संग. ६९८ सर्वं संप्र.३५१वत् ; पुम. ४३७ ; भाच. २।३९ चतुर्थपादस्य निर्देशमात्रम् ; कुम. ९२८.

सावित्रीका भवन्ति । नैनानुपनयेयुः' इत्यादि । आख्या-करणं च निन्दाव्यवहारार्थम् । अथ किमेते व्रात्या एव ? न, व्रात्यस्तोमादृते क्रतोः । क्रतुग्रहणं गौरवार्थं स्तोम-मात्रव्यावृत्त्यर्थं वा । तथा च याज्ञिकाः 'व्रात्यस्तोमेनेष्ट्वा व्रात्यभावाद्विरमेयुर्व्यवहार्या भवन्ति' इत्याहुः । कार्य-गौरवार्थं वा । अप्रकरणे प्रायश्चित्ताभिधानमनन्तरानुष्ठा-नार्थं लाघवार्थं वा । स्मृत्यन्तरोक्तानां व्रात्यप्रायश्चित्तानां स्वावसरे विवेकं वक्ष्यामः । कामं पतितसावित्रीकत्वा-दुपनयनमध्ययनं वा मा भूत्, द्विजातिकर्महानं तु कुतः ? (त्वित्युक्तम् ?) अद्विजातित्वादित्युच्यते ।

विश्व.

(२) नातः परमुपनयनकालोऽस्ति, किंतु अत ऊर्ध्वं पतन्त्येते । सर्वधर्मबहिष्कृताः सर्वधर्मेष्वनधिकारिणो भवन्ति । सावित्रीपतिताः पतितसावित्रीका भवन्ति, सावित्रीदानयोग्या न भवन्ति । व्रात्याः संस्कारहीनाश्च व्रात्यस्तोमात्क्रतोर्विना । कृते तु तस्मिन्नुपनयनाधि-कारिणो भवन्ति । ‡मिता.

(३) अतिक्रान्तोपनयनकालानां यद्भवति तदाह— अत इति । द्विजातयोऽनुपनीता यथासंख्यं षोडशद्वावि-शतिचतुर्विंशतिवर्षेभ्य ऊर्ध्वं व्रात्यस्तोमाख्यं क्रतुं विहाय सर्वधर्मानधिकारिणो भवन्ति । सावित्रीपतिता व्रात्या इति तेषां संज्ञा । व्रात्यस्तोमो नाम व्रात्यानां प्रायश्चित्त-क्रतुः । तेन चोद्दालकव्रतादिना कृतप्रायश्चित्ता उपनीता धर्माधिकारिणो भवन्ति संव्यवहार्याश्चान्येषाम् । यदाह मनुः— 'नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित् । ब्राह्मा-न्यौनांश्च संबन्धानाचरेद्ब्राह्मणः सह ॥' (मस्मृ. २।४०)। अपूतैरितिवचनात्कृतप्रायश्चित्तैः सह संव्यवहारो न दोषायेति गम्यते । अत्र 'सर्वधर्मबहिष्कृताः' इति तु पाठे धर्मशब्दो द्विजातिधर्माभिप्रायः, न वर्णधर्मविषयः, व्रात्यानां वर्णत्वानपायात् । अप.

(४) व्रात्यस्तोमः व्रात्यानां प्रायश्चित्तार्थः क्रतुः । तं विहायान्यत्रानधिकार इत्यर्थः । तत्र त्वपत्नीकस्यानधीत-

‡ दीक., चम. मितागतम् ।

वेदस्याकृताधानस्य वचनादधिकार इत्यविरोधः ।

¶ स्मृच. २८

(५) नातः परं व्रात्यस्तोमं विना गौणोऽप्युपनयन-कालोऽस्तीत्याह— अत इति । बहुवचनान्तात्तसिल् । तेनोक्तकालेभ्य ऊर्ध्वमेते ब्राह्मणादयः सावित्रीतः पतिताः भ्रष्टाः सावित्र्युपदेशायोग्या भवन्तीति यावत् । अतश्च पतन्ति उपपातकिनो भवन्ति, 'व्रात्यता बान्धवत्यागः' इति मनावुपपातकगणनात् । अत एव च द्विजातिधर्मा-नधिकारिणो भवन्ति । यद्यप्युपपातकस्याभ्यस्तस्यैव निब-न्धृभिः कर्मानधिकारप्रयोजकत्वं लिखितम्, तथाऽपि प्रकृते वचनबलादनभ्यस्तस्यापि कर्मानधिकारप्रयोजकत्वं द्रष्टव्यम् । अत एव च शास्त्रे तत्र तत्र व्रात्यपदवाच्याः । अत्र प्रतिप्रसवः 'व्रात्यस्तोमादृते क्रतोः' इति । व्रात्य-स्तोमः क्रतुः व्रात्यानां प्रायश्चित्तक्रतुः, तं विना । तेनोक्तकालेभ्य ऊर्ध्वमपि कृतव्रात्यस्तोमा उपनेया एव भवन्ति, ननु व्रात्यस्तोममात्रेणोपनयनं विनाऽप्यधि-कारिणो भवन्तीति । वीमि.

(६) व्रात्यस्तोमः यागः । तं विनोपनयनेऽधिकारो नास्तीत्यर्थः । स चानुपनीतेनानाहिताग्निनाऽविदुषाऽप्य-वकीर्णिपशुवत्कार्यः । यागोपयुक्ताध्ययनमगत्या कर्तव्यम् । ततः स्मृत्युक्तं प्रायश्चित्तं कृत्वा उपनयनमिति ।

संम. २२

## व्यासः

गौणकालोत्तरं व्रात्यत्वमव्यवहार्यत्वं च

'वेदव्रतच्युतो व्रात्यः स व्रात्यस्तोममर्हति ॥

'ब्राह्मणक्षत्रियविशां कालश्चेदत्यगादयम् ।
सावित्रीपतिता व्रात्याः परिहार्याः प्रयत्नतः ॥

परिहार्या इति वदन् संसर्गार्हा इत्याह । स्मृच. २८

¶ मुक्ता. स्मृचगतम् ।

(१) व्यास्मृ. १।२१.

(२) अप. १।३७ चतुर्थपादे (भवन्त्यार्यविगर्हिताः); स्मृच. २८.

## यमः

गौणकालोत्तरं व्रात्यत्वमव्यवहार्यत्वं च

[1]अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः ।
सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः ॥
[2]समतिक्रान्तकालाश्च पतिताः सर्व एव ते ॥
[3]ब्राह्मणक्षत्रियविशां कालश्चेदत्यगादयम् ।
सावित्रीपतिता व्रात्याः परिहार्याः प्रयत्नतः ॥

परिहार्याः अव्यवहार्या इत्यर्थः । संप्र. ३४९

## बृहत्पराशरः

गौणकालोत्तरं व्रात्यत्वम्, व्रात्येषूपनयनादिनिषेधाः

[4]यस्य न स्युर्द्विजस्यैताः क्रियाश्चैव कथंचन ।
स व्रात्यः सन् परित्याज्यो द्विजो यस्माद्द्विजन्मनाम् ॥
हीनगायत्रिका व्रात्या उक्तकालादनन्तरम् ।
नाध्याप्या नैव चोद्वाह्या व्यवहारविवर्जिताः ।
न याज्या नाऽऽर्यकार्येषु प्रयोज्यास्त इति श्रुतिः ॥
......... व्रात्यास्ते स्युरतः परम् ॥
उपनेया न ते विप्रैर्नाध्याप्याः शूद्रधर्मिणः ।
व्यवहार्या नैव याज्या इति धर्मविदो विदुः ॥

## गर्गः

अनुपनीतानां गौणकालोत्तरं वृषलतुल्यत्वम्

[5]अग्रजा बाहुजा वैश्याः स्वावधेरूर्ध्वमब्दतः ।
अकृतोपनयाः सर्वे वृषला इव ते स्मृताः ॥

न चेत्प्रायश्चित्तमनुतिष्ठन्तीति शेषः । कृम. ९२८

## आश्वलायनः

गौणकालोत्तरं व्रात्यत्वमव्यवहार्यत्वं च

†[1]अत ऊर्ध्वं पतन्त्येते द्विजत्वं नाऽऽप्नुयुर्यदि ।
मन्त्रकर्मपरिभ्रष्टा यास्यन्ति व्रात्यतामिह ॥
[2]मन्त्रयोन्यर्थसंबन्धस्तैर्न कार्यः कथंचन ।
शिष्टेन धर्मनिष्ठेन शुभकर्म प्रयत्नतः ॥

मन्त्रसंबन्धः अध्ययनाध्यापनादिः । अर्थसंबन्धः अर्थार्थे संबन्धः याजनादिः । शुभकर्म अदृष्टार्थे दानादि । संप्र. ३४९

## जातुकर्णिः

ब्राह्मणस्य षोडशवर्षातिक्रमे व्रात्यत्वम्

[3]द्विगुणां गायत्रीमतिक्रम्य ब्राह्मणो व्रात्यः स्यात् ॥

## स्मृत्यन्तरम्

व्रात्योपनेतुस्तदन्नभोक्तुश्च प्रत्यवायः

[4]व्रात्याचार्यस्य भुक्त्वाऽन्नं कृच्छ्रपादेन शुध्यति ।
यश्चोपनयते व्रात्यांस्त्रिभिः कृच्छ्रैः स शुध्यति ॥

## चतुर्विंशतिमतम्

गौणकालोत्तरं द्विजाधमत्वम्

§[5]आ षोडशाद्वाऽऽद्वाविंशाच्चतुर्विंशाच्च वत्सरात् ।
सावित्रीपतिता ऊर्ध्वं विज्ञेयास्ते द्विजाधमाः ॥

---

(१) संप्र. ३४७ मनुयमौ.

(२) स्मृच. २८; मुक्ता. ८९.

(३) चका. ७५१ उत्त.; संप्र. ३४७ उत्त.; मुक्ता. ८९.

(४) बृपसं. ६।१५१-१५२, १६९-१७०, १७६-१७७.

(५) सिन्धु. ९२८ ज्योतिर्निबन्धे; विपा. ४७१ इव (एव); ज्योनि. १२१ संग्रहे.

† अस्य संप्रव्याख्यानं शङ्खवचनव्याख्याने द्रष्टव्यम्। संग. संप्रवत्।

§ अस्य व्याख्यानमुपनयनकालप्रकरणे (सं. का. पृ. ३०५५) द्रष्टव्यम्।

(१) आश्वस्मृ. २।२४-२५ पतन्त्येते (त्रयस्त्वेते) नाऽऽप्नु (प्राप्नु); प्रपा. २१३ नाऽऽप्नु (प्राप्नु); संप्र. ३४७; संग. ६९६.

(२) आश्वस्मृ. २।२५-२६ निष्ठेन (नित्येन); प्रपा. २१३; संप्र. ३४९. (३) विस्व. १।३७.

(४) संत. ९२८. (५) चम. १४.

## संग्रहकारः

गौणकालोत्तरं व्रात्यत्वम्, व्रात्येषूपनयनादि-
निषेधाः प्रायश्चित्ताभावे

[1]नृपजातिजिनाब्दान्तं नातिकालस्ततः परम् ।
पातित्यं स्यादग्रजादेर्व्रात्यस्तोमो विशोधनम् ॥

[2]व्रात्यस्याकृतचित्तस्य न कार्यमुपनायनम् ।
अध्यापनं याजनं च विवाहादि विवर्जयेत् ॥

## स्मृत्यर्थसारः

गौणकालोत्तरं व्रात्यत्वम्, व्रात्येष्वकृतप्राय-
श्चित्तेषूपनयनादिनिषेधाः

[3]अत ऊर्ध्वं सावित्रीपतिता व्रात्याः स्युः । तेषामचीर्णप्रायश्चित्तानामुपनयनाध्यापनयाजनविवाहादिकं न कार्यम् ॥

(१) ज्योनि. १२१.

(२) स्मृच. २८; मुक्ता. ८९ चन्द्रिकायाम्.

(३) स्मृसार. ३–४; मुक्ता. ९० तेषा...कार्यम् (तेषां चीर्णप्रायश्चित्तानामुपनयनादयः स्युः).

## रेणुकारिका:

गौणकालोत्तरं व्रात्यत्वम्, व्रात्येष्वकृतप्रायश्चित्तेषूप-
नयनादिनिषेधाः, व्रात्यापत्येष्वकृतप्रायश्चित्तेषूप-
नयनादिनिषेधाः, व्रात्यस्तोमे तदर्थमाधाने च
व्रात्यस्याधिकारः

[1]ब्राह्मणक्षत्रियविशां कालश्चेदत्यगादयम् ।
सावित्रीपतिता व्रात्याः परिहार्याः प्रयत्नतः ॥
अत ऊर्ध्वं भवन्त्येते सर्वधर्मबहिष्कृताः ।
सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः ॥
[2]व्रात्यस्याकृतचित्तस्य न कार्यमुपनायनम् ।
अध्यापनं याजनं च विवाहादि च वर्जयेत् ॥
[3]सावित्रीपतितानां च कुलं येषां त्रिपूरुषम् ।
तेषामपत्ये संस्कारोऽध्यापनं च न विद्यते ॥
[4]इष्ट्वा व्रात्येन यज्ञेनाधीयीरन्निच्छया च ते ।
वोद्दालकं व्रतं कृत्वा व्यवहार्या भवन्त्यतः ।
व्रात्यस्तोमं विनाऽन्यत्र न तस्याधिकृतिर्भवेत् ॥
अभार्यस्यानधीतस्य स्यादाधानं तदर्थतः ॥

(१) रेका. ४१–४३ पृ. २९.

(२) रेका. ४३–४४ पृ. २९; संग. ६९६ स्याकृतचित्त (स्वीकृतविप्र) च वर्ज (विवर्ज).

(३) रेका. ४४–४५ पृ. २९; संग. ६९६ कुलं (कुले).

(४) रेका. ४५–४७ पृ. २९–३०.

## पुत्रद्वयोपनयनम्

### स्मृत्यन्तरम्

सापत्नभ्रात्रोरेकलग्ने कर्तव्ये मौञ्जीबन्धने आचार्यादिपृथक्त्वम्

[1]एकत्र लग्ने यदि पुत्रयुग्म-
शुभाय(?) मौञ्जीव्रतकर्म कुर्यात् ।
आचार्ययुग्मं खलु वेदियुग्मं
नान्दीमुखान् स्वस्य पितृंश्च
नित्ये (?) ॥

[2]पृथग्भवावेकलग्ने सोदरावुपनायने ।
आचार्योऽन्यः पिताऽन्यस्तु भ्राता वा
पितृसोदरः ॥

(१) मुक्ता. १०० ; आन. १६० युग्मशु (युग्मं शु) खान् स्वस्य पि (खं स्वस्वपि).

(२) मुक्ता. १०० ; आन. १६० न्यः पिता (न्यो वृतो).

मातृभेदे विशेषः स्मर्यते- 'एकत्र लग्ने...... सोदरः ॥' इति । § मुक्ता. १००

### संग्रहे

यमलानामेकलग्ने मौञ्जीबन्धनानुष्ठानम्, तत्र आचार्यैक्यम्

[1]एकगर्भप्रसूतौ चेदेकवेदिमवाप्य च ।
एकाचार्यैकलग्ने च कुर्यान्मौञ्जीव्रतं यतः ॥

[2]चौलोपनयने चैव जातकर्म च नाम च ।
चतुर्व्रतोपाकरणे यमलानां समं भवेत् ॥

यमलाद्युपनयने कर्तारः संग्रहे- 'एकगर्भ... भवेत् ॥' । § मुक्ता. १००

§ आन. मुक्तावत् ।

(१) मुक्ता. १०० ; आन. १६०.

(२) मुक्ता. १०० कर्म च नाम (कर्मणि नाम्नि) ; आन. १६०.

## ‡ मातृरजोदर्शनादौ निर्णयः

### वसिष्ठः

मातृ रजःकाले माङ्गलिकनिषेधः

[1]यस्य माङ्गलिकं कार्यं तस्य माता रजस्वला ।
तदा स मृत्युमाप्नोति पञ्चमं दिवसं विना ॥

### गार्ग्यः

मातृभोजनात्पूर्वं रजोदर्शने शुद्धिपर्यन्तं कर्मनिषेधः

[2]मातृणां भोजनात्पूर्वं माताऽस्पृश्या भवेद्यदि ।
तदा कर्म न कुर्वीत यावद्भोजनसंगता ॥

### ज्योतिर्गर्गः

मातृरजःकाले मङ्गलनिषेधः

[3]विवाहोत्सवयज्ञेषु माता यदि रजस्वला ।
तदा स मृत्युमाप्नोति पञ्चमं दिवसं विना ॥

### आश्वलायनः

मातृ रजोदर्शने गर्भिणीत्वे वा अनौरसोपनयने न दोषः

[4]करोत्यन्यस्य चेद्यस्तु व्रतबन्धं विनौरसम् ।
भार्या तस्य न दोषः स्याद्‌गुर्विणी वा रजस्वला ॥

[5]धर्मार्थं कुरुते विप्रो मौञ्जीबन्धनमेव च ।
न दोषो गर्भरजसोरित्याह स्मृतिसंग्रहः ॥

### अनिर्दिष्टकर्तृकवचनम्

नान्दीश्राद्धोत्तरं मातृरजोदर्शने शान्तिपूर्वकं कर्मानुष्ठानम्

[1]मातृ रजस्वलादोषे नान्दीश्राद्धोत्तरं तदा ।
आवश्यके व्रतं चौलं शान्त्या कुर्यात्करग्रहम् ॥

### षट्त्रिंशन्मतम्

मातृसहभोजनोत्तरं रजोदर्शने दोषाभावः

[2]मात्रा सहैव भुञ्जीयादूर्ध्वं माता रजस्वला ।
व्रतबन्धः प्रशस्तः स्यादित्याह भगवान्यमः ॥

'मात्रा सहैव......' इतिवचनतो भोजनात्प्राक् मातरि रजस्वलायां व्रतबन्धो न भवतीति केचित् । अन्ये त्वेतस्य वचनस्यैव महानिबन्धेष्वदर्शनेन निर्मूलत्वात्कर्तव्यमेवेत्याहुः । अत्राऽऽचारानुरोधेन ग्राह्यम् ।
संर. १८६

### ज्योतिःसारे

नान्दीश्राद्धोत्तरं मातृरजोदर्शने मौञ्जीबन्धननिषेधः

[3]नान्दीश्राद्धे कृते पश्चाद्बटोर्माता रजस्वला ।
मौञ्जीबन्धं न कुर्वीत गार्ग्यस्य वचनं यथा ॥

### वरदराजीये

नान्दीश्राद्धात्पूर्वं मातृरजोदर्शने व्रतबन्धनिषेधः, तत्करणे बटोर्व्रात्यत्वं प्रायश्चित्तपूर्वकं पुनरुपनयनं च, मातुर्गर्भिणीत्वे पञ्चममासोत्तरमुपनयननिषेधः

[4]ईडाकरणपूर्वं तु जननी चेद्रजस्वला ।
न कर्तव्या चोपनीतिरिति स्मृतिविदां मतम् ॥

ईडाकरणं नान्दीश्राद्धकरणं ततः पूर्वं रजस्वला चेदित्यर्थः । § मुक्ता. ९९

---

‡ विवाहसंस्कारान्तर्गतमपीदं प्रकरणम् ( सं. का. पृ. ७६४–७६६ ) अत्रानुसंधेयम् ।

(१) सिन्धु. ९२० ; संव. ८७ यस्य ( यस्या ) कार्यं ( कृत्यं ) प्रचेताः .

(२) प्रपा. २४६ ; धप्र. ४० द्वितीयपादे ( यस्य माताऽस्पृशी यदि ) चतुर्थपादे ( यदि कुर्यान्निरर्थकम् ) गर्गः .

(३) गमा. १९० गर्गः ; सिन्धु. ९२०.

(४) प्रपा. २४६.

(५) प्रपा. २४६ ; धप्र. ४१ ह स्मृतिसंग्रहः ( दि स्मृतिसंग्रहे ) षट्त्रिंशन्मते.

§ आन. मुक्तावत् ।

(१) संव. १०५.

(२) प्रपा. २४६ ; धप्र. ४१ यादूर्ध्वं ( त ऊर्ध्वं ) ; संर. १८६ (=) धप्रवत् .

(३) प्रपा. २४६ ; धप्र. ४० द्बटोर्माता ( न्माता यदि ) गार्ग्य ( गर्ग ).

(४) मुक्ता. ९९ ; आन. १५८.

[1]करणे व्रात्यतां यायाच्च कर्मण्यो भवेद्वटुः ।
वेदपाठे व्रतादौ च ह्यनर्हो दारकर्मणि ॥

[2]उपनीतिश्च कर्तव्या पुनश्च ब्राह्मणैः सह ।
अनुज्ञां प्राप्य विदुषां पीत्वा च ब्रह्मकूर्चकम् ।
कर्मण्यो जायते वर्णी नात्र कार्या विचारणा ॥

(१) मुक्ता. ९९ ; आन. १५९ व्रतादौ च ( व्रते चैव ).

(२) मुक्ता. ९९ ; आन. १५९.

कर्तृभार्या गर्भिणी चेद्वास्तुकर्मोपनायनम् ।
षण्मासात्परतः सोऽपि न कुर्यादिति शौनकः ॥

गर्भिणी यदि पत्नी स्यान्न कुर्यादुपनायनम् ।
पञ्चमासादधः कुर्यादत ऊर्ध्वं न कारयेत् ॥

## शौनककारिकाः

नान्दीश्राद्धोत्तरं मातृरजोदर्शने उपनयननिषेधः

[1]वृद्धिश्राद्धे कृते पश्चाद्बटोर्माता रजस्वला ।
तदा कर्म न कर्तव्यं यावद्भोजनसंगता ॥

(१) धप्र. ४०.

## मात्रा सह भोजनम्

### आश्वलायनः

[1]अथोपनयनाद्दे तु मुहूर्ताच्चोत्तरादथ(? धः)।
मात्रा सहैव भुञ्जीयाद्विवाहे भार्यया सह ॥

### षट्त्रिंशन्मतम्

[2]अथोपनयनाद्दे तु मुहूर्ताच्छोभनादधः।
मात्रा सहैव भुञ्जीयाद्विवाहे भार्यया सह।
मात्रा सहैव भुञ्जीयाच्चौलमानेकभाजने ॥

(१) प्रपा. २४६.

(२) धप्र. ४१ भाजने ( भोजने ) ; संग. ६६० धर्मप्रवृत्तौ.

### संग्रहः

[1]मात्रा सहोपनयने विवाहे भार्यया सह।
अन्यत्र सह भुक्तिश्चेत् पातित्यं प्राप्नुयान्नरः ॥

### शाकलकारिकाः

[2]मेखलाबन्धनाद्दे तु सुमुहूर्तात्सुतस्त्वधः।
एकस्मिन्भाजने कुर्यान्मात्रा सहैव भोजनम् ॥

(१) विधा. ५४ ( भागः २ ) नयने वि ( नीते स्याद्वि ) भुक्तिश्चेत् ( भुञ्जानः ) ; संग. २९२ नयने वि ( नीतेः स्याद्वि ) भुक्तिश्चेत् ( भुञ्जीत ) ; संर. १८५ : ५३४ नयने ( नीतस्य ) तृतीयपादे ( भुञ्जीतान्यत्र सह चेत् ).    (२) शाका. ३० पृ. ३.

# §पुनरुपनयननिमित्तानि

## वसिष्ठः

चन्द्रस्य पापांशादिगतत्वे अनध्याये चोप-
नीतत्वं पुनरुपनयननिमित्तम्

**[1]पापांशकगते चन्द्रे स्वारिनीचस्थितेऽपि च।
अनध्याये चोपनीतः पुनः संस्कारमर्हति ॥**

(१) कालविशेषोपनीतस्य पुनरुपनयनमाह वसिष्ठः– पापांशकगत इति । भरद्वाजोऽपि– 'विनर्तुना वसन्तेन कृष्णपक्षे गलग्रहे । अनध्याये चोपनीतः पुनःसंस्कारमर्हति ॥'। 'अपराह्णे चोपनीतः पुनःसंस्कारमर्हति ।' इति नारदीये तु तृतीयः पाद उक्तः । अत्रापराह्णः त्रिधाविभक्तदिनस्यान्त्यभागः । तथा ज्योतिर्मनुः– 'सर्वदेशेषु पूर्वाह्णे मुख्यं स्यादुपनायनम् । मध्याह्ने मध्यमं प्रोक्तमपराह्णे तु गर्हितम् ॥' इति । तन्नामानि स्कान्दे– 'ऊर्ध्वं सूर्योदयात् प्राक्तं( ? क्त्यं ) मुहूर्तानां तु पञ्चकम् । पूर्वाह्णः प्रथमः प्रोक्तो मध्याह्नस्तु ततः परम् । अपराह्णस्ततः प्रोक्तो मुहूर्तानां तु पञ्चकम् ॥' इति । अत्रानध्यायपदं नित्यनैमित्तिकसाधारणानध्यायपरम्, अविशेषात् । तेन 'नैमित्तिकमनध्यायं कृष्णे च प्रतिपद्दिनम् । मेखलाबन्धने शस्तं चौले वेदव्रतेष्वपि ॥' इति वसिष्ठवचने उपनयने प्रशस्तत्वेनोक्तानां नैमित्तिकानध्यायानां कृष्णप्रतिपदादिनित्यानध्यायानां च 'स्वाध्यायवियुजो घस्राः कृष्णप्रतिपदादयः । प्रायश्चित्तनिमित्ते तु मेखलाबन्धने मताः ॥' इति कालादर्शादिधृतवृद्धगार्ग्यवचनात् प्रायश्चित्तोपनयनपरतैव, नापूर्वोपनयनपरता, अनध्यायपदस्य नित्यानध्यायपरत्वे तु नैमित्तिकानध्याये इव प्रतिपदि अपूर्वोपनयनापत्तेः । एतेन– पुनःसंस्कारविधिगतानध्यायपदस्य चतुर्दश्यादिनित्यानध्यायपरत्वेनोपात्तस्य नानित्यानध्यायग्राहकत्वम् । अग्नीषोमीययागोत्कर्षपरतया प्रतीयमानेन 'यदेवादः पौर्णमासं हविः' इति वचनेनाग्नीषोमीयस्य पुरोडाशयागस्यैवोत्कर्षः, न त्वग्नीषोमीयोपांशुयागस्य, नित्याग्नीषोमीयग्रहणेनोपपत्तावनित्याग्नीषोमीयग्रहणायोगादिति परास्तम् । किंच, दृष्टान्त एवाग्नीषोमीयपुरोडाशस्यैवोत्कर्षे नित्याग्नीषोमीयसंबन्धो हेतुत्वेन भाष्यतन्त्ररत्नशास्त्रदीपिकादिग्रन्थे उक्तः । प्रत्युत 'विकल्पसंभवान्नोत्कृष्यते आज्यम्' इत्यादितन्त्ररत्नग्रन्थस्वारस्यादग्नीषोमीयाज्यस्योत्कर्ष एव प्रतीयते इति । यत्तु 'विद्युत्स्तनयित्नुर्वृष्टिश्चापर्तौ यत्र संनिपतेयुस्त्र्यहमनध्यायो यावद्भूमिर्व्युदकेत्येके' इति धर्मप्रश्नोदाहृतवाक्ये 'अपर्तौ वर्षादीनां संनिपाते त्रिरात्रम्' इत्युक्तत्वात् माघादिषु वृष्टेर्नियतत्वान्नासावपर्तुरिति तत्र वृष्टौ नानध्यायः । वृष्टिकालो दक्षिणायन एक उदगयनेऽप्यपर इत्यर्थस्य ज्ञापकं महाभारते

---

§ कौस्तुभादौ पुनरुपनयनं त्रिविधमुक्तम्– सुरापानादिनिषिद्धकर्मजनितप्रत्यवायपरिहारार्थं प्रायश्चित्तरूपम्, दुष्टकालादौ कृतस्य प्रथमोपनयनस्य व्यर्थत्वादपूर्वसंस्काराधानार्थं पुनः क्रियमाणम्, अधीतैकवेदस्य वेदान्तराध्ययनार्थं पुनः क्रियमाणमिति । तत्र प्रथमकल्पे 'कृच्छ्रचान्द्रायणाद्येव प्रायश्चित्तम्, न पुनरुपनयनस्य प्रायश्चित्तरूपता, तत्तु प्रथमोपनयनजनितसंस्कारस्य प्रत्यवायेन नाशात् पुनःसंस्काराधायकम्' इति संस्कारप्रकाशमते विशेषः । एतेषु प्रथमप्रकारस्य निमित्तानां निषिद्धकर्मविशेषरूपाणां बंहीयस्त्वात् प्रायश्चित्तकाण्डे तेषामवश्यसंग्राह्यत्वाच्चात्र संग्रहो न कृतः । तानि तत्रैव द्रष्टव्यानि । प्रथमोपनयनवैयर्थ्यापादकदुष्टकालादिरूपाणि अधीतैकवेदस्य वेदान्तराधिजिगांसारूपं चेति द्वितीयतृतीयप्रकारनिमित्तान्यत्र संगृहीतानि ।

(१) वसं. २९ । ३० ये चोपनीतः ( योपनीतश्च ); संसौ. ११८ चस्थितेऽपि च ( चर्क्षगेऽपि वा ); संम. २३ स्वारि ( अति ) ये चोप ( येनोप ); सिन्धु. ९३५ स्वारि ( अरि ); विपा. ४७४ द्वितीयपादे ( अरिनीचगतेऽपि वा ); संकौ. १५४ सिन्धुवत्; बाल. १।१४ पृ. ५०, ५६ सिन्धुवत्; पुम. ४३८–४३९ स्वारि ( अरि ) पि च ( पि वा ) मानवीयसंहितायाम्; संर. २८३ स्वारि ( अरि ) अनध्याये ( अपराह्णे ).

वैराटपर्वणि बृहन्नडावस्थपार्थवचनमुत्तरं प्रति– ' गाण्डी-
वमेतत्पार्थस्य लोकेषु विदितं धनुः । ' इति प्रकृत्य
' एतद्वर्षसहस्रं तु ब्रह्मा पूर्वमधारयत् । ततोऽनन्तर-
मेवाथ प्रजापतिरधारयत् ॥ त्रीणि पञ्चशतं चैव
शक्रोऽशीतिं च पञ्च च । सोमः पञ्चशतं राजा
तथैव वरुणः शतम् । पार्थः पञ्च च षष्टिं च
वर्षाणि श्वेतवाहनः ॥ ' इति । अत्र खाण्डवदाहा-
नन्तरलब्धधनुषः पार्थकर्तृकधारणे पञ्चषष्टिवत्सरात्मक-
वर्षाणां बाधितत्वात् वर्षशब्दं वृष्टिकालपरं स्वीकृत्य
एकैकस्मिन् वत्सरे द्वौ द्वौ उक्तरीत्या वृष्टिकालावभिप्रेत्य
सार्धद्वात्रिंशद्वत्सराः पञ्चषष्टिवर्षशब्देन विवक्षिता इत्य-
वश्यं वाच्यम् , अन्यथाऽतीतानागतवत्सराभिप्राय-
व्याख्याने ' अधारयत् ' इति भूतनिर्देशानुपपत्तेरिति, तद-
युक्तम् , ' पञ्चषष्टिवर्षाणि ' इत्यस्योत्तरावधिमात्रसमर्प-
कत्वात् । दृश्यन्ते च लोके ' पञ्चाशद्वर्षपर्यन्तमध्याप-
नादि कृतम् ' इत्यादयः प्रयोगा उत्तरावधिसमर्पकाः ।
न हि तत्रोत्पत्त्यादिरूपः पूर्वावधिरपि प्रतीयते येन बाधः
स्यात् । किंच, दक्षिणायनोत्तरायणयोर्वृष्टिकालत्वे ' अनू-
राधर्क्षमारभ्य षोडशर्क्षेषु भास्करः । यावच्चरति वै
तावदकालं मुनयो विदुः ॥ कालवृष्टौ तु तत्कालमकाले
तु त्रिरात्रकम् । अतिमात्राऽथवा वृष्टिर्नाधीयीत दिन-
त्रयम् । द्वयोस्तु द्विदिनं चैव वृष्टिमात्रे दिनं स्मृतम् ॥ '
इति स्मृतिरत्नावल्यादिधृतगार्ग्यवचने अनुराधादिषोडश-
र्क्षाणामकालोक्त्या आर्द्राद्येकादशनक्षत्राणां वृष्टिकालत्व-
मुक्तं भवति । तथा ' आर्द्रादिज्येष्ठान्तात्कालादन्यत्रा-
कालवृष्टिः ' इति स्मृत्यर्थसारे । ' अपर्तौ वर्षे त्रिरात्रम् '
इत्युपनिषद्भाष्ये त्वार्द्रादिज्येष्ठान्तं वर्षर्तुरुक्तः । तत्र वैक-
ल्पिकवृष्टिकालाकालपरिभाषणे वैयर्थ्यापत्तिः । एतदभि-
प्रायेणैव ' यस्मिन् देशे यो वर्षाकालस्ततोऽन्यत्रापर्तुः '
इत्यापस्तम्बीयधर्मप्रश्नवाक्यस्य व्याख्याने उज्ज्वलायां
प्रथमप्रश्ने तृतीयपटले हरदत्तीयग्रन्थः संगच्छते । यत्तु
' यावद्भूमिर्व्युदकेत्येके ' ( इति ) धर्मप्रश्न एव
पक्षान्तरसत्त्वान्न त्रिरात्रानध्यायस्य नित्यत्वमिति, तद-
प्ययुक्तम् । ' अनध्यायाच्च पूर्वेद्युरनध्यायात्परेऽहनि ।
व्रतारम्भं विसर्गं च विद्यारम्भं न कारयेत् ॥ ' इति
वचनेन निषिद्धद्वितीयादीनां ' शुक्लपक्षे द्वितीया च
तृतीया पञ्चमी तथा । त्रयोदशी च दशमी सप्तमी व्रत-
बन्धने ॥ ज्येष्ठास्त्वेकादशी षष्ठी द्वादश्येतास्तु मध्यमाः ।
एकां चतुर्थीं संत्यज्य कृष्णपक्षेऽपि मध्यमाः । आपञ्च-
म्यास्तु तिथयः पराः स्युरतिनिन्दिताः ॥ ' इति नारदवच-
नेन विधाने सत्यपि न निषेधस्यानित्यत्वम् , द्वितीयादीनां
विधानस्य तात्कालिकपुनरुपनयनादिपरत्वकरणात् । तथा
प्रकृतेऽपि ' यावद्भूमिर्व्युदकेत्येके ' इति पक्षस्यानुक-
ल्पत्वाङ्गीकारे त्र्यहानध्यायस्य नानित्यत्वमिति । एतेन
" नापि मनूक्ताकालिकस्य नित्यत्वम् , ' मनुरब्रवीत् '
इत्युक्तिर्विकल्पार्थेत्यन्ये " इति मेधातिथिव्याख्यादि परा-
स्तम् । संम. २३–२४

(२) नत्वोमामाधवौ देवौ ब्राह्मणप्रीतिसिद्धये । अन-
न्तदेवस्तनुते पुनःसंस्कारपद्धतिम् ॥ पुनःसंस्कारः पुनरु-
पनयनम् । तच्च त्रिविधम्– प्रत्यवायनिमित्ते प्रायश्चित्त-
त्वेन विहितम् , निमित्तविशेषेण कृतोपनयनस्य वृथा-
चेष्टात्वापत्तौ तत्फलार्थत्वेन विहितम् , वेदान्तराध्ययन-
चिकीर्षायां तदर्थत्वेन विहितमिति । तत्राऽऽद्यं तावद्बौधा-
यनः– ' अमत्या सुरापाने कृच्छ्राब्दपादं चरित्वा पुन-
रुपनयनम् ' इति । ...... अथ द्वितीय उपनयन-
प्रकारः– समयोद्योते– ' विनर्तुना वसन्तेन कृष्णपक्षे
गलग्रहे । अपराह्णे चोपनीतः पुनःसंस्कारमर्हति ॥ ' ।
तथा दक्षिणोत्तराभ्यां पाणिभ्यां कुमारस्यांसाभिमर्शन-
पूर्वकं समीपानयनविधायकहिरण्यकेशिसूत्रे मातृदत्तः–
' इदं प्रधानकर्म, अस्य विस्मरणे सर्वमावर्तते ' इति ।
वसिष्ठः– ' पापांशकगते ...... ' इति । अत्र चान-
ध्यायशब्देन नानध्यायाः सर्वेऽपि सर्वान्प्रति पुनः-
संस्कारनिमित्तत्वेन सर्वदेशेषु विवक्षिताः । यतो हेमा-
द्रिरनध्यायप्रकरणे प्रसिद्धाप्रसिद्धानध्यायानुपन्यस्यान्ते
स्मृतिवाक्यमुदाजहार– ' चतुर्दश्यष्टमीपर्वप्रतिपत्स्वेव
सर्वदा । दुर्मेधानामनध्यायस्त्वन्तरागमनेषु च ॥ '
इति । शिष्टा अपि कलौ पुरुषान् दुर्मेधान् मन्य-
माना उक्तवाक्यवशेन वेदाध्ययने एतानेवानध्यायान्

वर्षयन्तो दृश्यन्ते । उचितं च दुर्मेधस्त्वाङ्गीकारेणैव तेषां स्वस्वगृह्योक्तपौषादिकालेऽध्ययनसंकोचापादकोत्सर्जनाननुष्ठानम्, 'पुष्ये तूत्सर्जनं कुर्यादुपाकर्मदिनेऽपि वा ।' इति छन्दोगशाखीयखादिरगृह्यानुसारेण चोपाकर्मदिनेऽनुष्ठानम् । एवं च ऐतरेयिणां महाव्रतप्रकरणे त्रिरात्रानध्यायः पठ्यते– 'अपर्तौ वर्षे त्रिरात्रं वैदिकेनाध्यायेनान्तरियात्' इति । तथा आपस्तम्बीयधर्मप्रश्नेऽपि– 'विद्युत्स्तनयित्नुर्वृष्टिश्चापर्तौ यत्र संनिपतेयुस्त्र्यहमनध्यायो यावद्भूमिर्व्युदकेत्येके' इति । यश्च मनुनाऽऽकालिकानध्याय उक्तः– 'विद्युत्स्तनितवर्षेषु महोल्कानां च संप्लवे । आकालिकमनध्यायमेतेषु मनुरब्रवीत् ॥' (मस्मृ. ४।१०३) इति, तथा– 'प्रादुष्कृतेष्वग्निषु तु विद्युत्स्तनितनिःस्वने । सज्योतिः स्यादनध्यायः शेषे रात्रौ यथा दिवा ॥' (मस्मृ. ४।१०६) इति, यश्च स्मृत्यर्थसारेऽऽकालिकानध्याय उक्तः– 'अर्धरात्रादूर्ध्वं गर्जनेऽर्धरात्रे वाऽऽकालिकोऽनध्यायः प्रातःसंध्यागर्जिते त्वहोरात्रम्' इति, ईदृशसर्वानध्यायानां प्रतिपत्स्वेवेत्येवकारेण 'अत्र ह्येवाऽऽवपन्ति' इतिवन्निर्दोषश्रौतपरिसंख्याया दुर्मेधान् प्रति ज्ञापनात्तेषां तावदुक्तानध्यायदिनोपनयनं न पुनःसंस्कारनिमित्तम् । अत एव न मेधावतोऽपि प्रति तत् पुनःसंस्कारनिमित्तम्, दुर्मेधान् प्रति निषेधेनाध्ययने चतुर्दश्यादिवदितरानध्यायानां नित्यत्वाभावनिर्णये सति नित्यचतुर्दश्याद्यनध्यायग्रहणेनोपनयनस्य पुनःसंस्कारविधिगतानध्यायशब्दस्यानित्यानध्यायग्राहकत्वासंभवात् । उक्तं हि पञ्चमे– अग्नीषोमीययागोत्कर्षपरतया प्रतीयमानेन 'यदेवादः पौर्णमासं हविः' इति वचनेनाग्नीषोमीयस्य पुरोडाशयागस्यैवोत्कर्षः, न त्वग्नीषोमीयोपांशुयाजस्य, नित्याग्नीषोमीयग्रहणेनोपपत्तावनित्याग्नीषोमीयग्रहणायोगादिति । न चात्र वर्षाशब्दो वर्षर्तुपरः, तस्य सर्वदेशे मासद्वयात्मकत्वात्, तथैवोक्तश्रुतिभाष्ये उक्तत्वाच्च । किंतु वृष्टिपरः । एवं च यस्मिन् माघादिकाले वृष्टिर्यत्र नियता नासावपर्तुः । दृश्यते च यथा वृष्टिकालो दक्षिणायन एकः तथोदगयनेऽप्यपर इत्यर्थस्य ज्ञापकं महाभारते वैराटपर्वणि बृहन्नडावाक्यमुत्तरं प्रति– 'गाण्डीवमेतत्पार्थस्य लोकेषु विदितं धनुः' इति प्रकृत्य 'एतद्वर्षसहस्रं तु ब्रह्मा पूर्वमधारयत् । ततोऽनन्तरमेवाथ प्रजापतिरधारयत् ॥ त्रीणि पञ्चशतं चैव शक्रोऽशीतिं च पञ्च च । सोमः पञ्चशतं राजा तथैव वरुणः शतम् । पार्थः पञ्च च षष्टिं च तथैव श्वेतवाहनः ॥' इति । अत्र च खाण्डवदाहानन्तरलब्धधनुषः पार्थकर्तृकधारणे पञ्चषष्टिवत्सरात्मकवर्षाणां बाधितत्वाद्वर्षशब्दं वृष्टिकालपरं स्वीकृत्यैकैकस्मिन्वत्सरे द्वौ द्वावुक्तरीत्या वृष्टिकालावभिप्रेत्य सार्धद्वात्रिंशद्वत्सराः पञ्चषष्टिवर्षशब्दे विवक्षिता इत्यवश्यं वाच्यम्, अन्यथा अतीतानागतवत्सराभिप्रायव्याख्याने भूतनिर्देशानुपपत्तेः । किंच, 'यावद्भूमिर्व्युदका' इति धर्मप्रश्न एव पक्षान्तरसत्त्वान्न त्रिरात्रानध्यायस्य नित्यत्वम्, नापि मनूक्ताकालिकस्य नित्यत्वम् । उक्तमनुवाक्ये 'एतेषु मनुरब्रवीत्' इति चतुर्थपादस्य श्लोकपूरणार्थत्वेऽनुशयं मन्यमानो मेधातिथिर्यत आह– "'मनुरब्रवीत्' इत्युक्तिर्विकल्पार्थेत्यन्ये" इति । किंच, 'प्रादुष्कृतेषु' इति वाक्यशेषादपि तद्दिने प्रातःसंनिपात एवाऽऽकालिकानध्यायनिमित्तम्, न पूर्वदिने सायंसंध्यागतोऽपीति प्रतीयते । यतोऽत्र व्याख्यातृभिरेवं व्याख्यातम्– शेषर्तौ वृष्टिकालभिन्नकाले उक्तनिमित्ते चरणत्रयोक्तसज्योतिरनध्यायवशेन यथा दिवाऽनध्यायस्तथा रात्रावपीति सायंसंध्यागतनिमित्तवशेन सज्योतिरनध्याये च दिवानध्यायस्याप्राप्तस्यानुवादासंभवः, रात्रावनध्यायस्य च प्राप्तस्य विध्यसंभवः, प्रातःसंध्यानिमित्ते च तयोः संभव इति शाब्दन्यायविद्भिरालोचनीयम् । अतोऽपि न मनूक्ताकालिकस्य नित्यत्वम् । नापि स्मृत्यर्थसारोक्ताकालिकानध्यायस्य नित्यतया पुनःसंस्कारविधिगतानध्यायपदेन ग्रहणम्, यतोऽस्ति वसिष्ठवचो लल्लादिनिबन्धोदाहृतम्– 'व्रत्येऽह्नि पूर्वसंध्यायां वारिदो यदि गर्जति । तद्दिने स्यादनध्यायो व्रतं तत्र विवर्जयेत् ॥' इति, तन्निषेधमुखपरिसंख्यां कुर्वत् प्रातःसंध्यान्यकालीनगर्जननिमित्तानध्यायं नोपनयने विवर्जयेदित्यर्थपरं भवति 'न भूपालैरनुत्सवः' इतिवत् । न च दुर्मेधान्प्रति प्रातर्गर्जितनिमित्तानध्याय-

प्रतिप्रसवार्थमेतदिति शङ्क्यम्, त्रिपाद्यैतदुपपत्तौ चतुर्थपादानर्थक्यापत्तेः। नापि दोषाधिक्यार्थे, 'न श्रोत्रियो हन्तव्यः' इत्यत्रेव दोषाधिक्यतात्पर्यग्राहकप्रायश्चित्तोपदेशाभावात्। अतः सर्वान्प्रत्यनध्यायत्वं त्रिपादीसिद्धं हेतुत्वेनाऽऽदाय चतुर्थपादेन परिसंख्यां कुर्वता ऊर्ध्वरात्रादिगर्जननिमित्तानध्यायस्यापि न पुनःसंस्कारविधिगतानध्यायशब्देन ग्रहणमिति दर्शितं भवति। सर्वत्र त्रिरात्राकालिकाद्यनध्याया गर्जितादिनिमित्ततया प्रतीयमानाः पौषादिमुख्यकालीनोत्सर्जनसापेक्षगर्जनादिनिमित्ता इति कातीयसूत्रसंवादिनोक्तश्रुतिभाष्येण लभ्यत इति न तस्योपनयनकाले प्रसक्तिर्नेतरां पुनःसंस्कारनिमित्तत्वम्। अतः सिद्धमेतत् प्रातर्गर्जितनिमित्तानध्यायः प्रतिपदाद्यनध्यायश्च पुनःसंस्कारविधिगतानध्यायशब्देन गृह्यत इति। अथ तृतीयप्रकारः। तत्र जयन्तः– 'यजुर्वेदं चाधीत्य ऋग्वेदमध्येतुकामस्यैतदेवोपनयनमलंकारवर्जं भवति' इति। गृह्यकारिकायाम्– 'वेदान्तरमधीत्यैवमृग्वेदं ये त्वधीयते। उपनीतिरियं तेषामलंकरणवर्जिता॥' इति। पारिजाते भगवान्– 'द्वितीयमिममृग्वेदमध्येतुमभिवाञ्छया। एतद्गृह्योक्तविधिना पुनश्चैवोपनीयते॥' इति। इति तृतीयप्रकारः। अयं च प्रकारो न तैत्तिरीयाणाम्। यथोक्तमापस्तम्बेन धर्मप्रश्ने– 'सर्वेभ्यो वै वेदेभ्यः सावित्र्यनूच्यत इति हि ब्राह्मणम्' इति। व्याख्यातमेतदित्थमुज्ज्वलायाम्– "त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत्। तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः॥' इति मनुः। ततश्चोपनयने यत्सावित्र्या अनुवचनं तन्मुखेन सर्वे वेदा अनूक्ता भवन्ति। अतोऽगृह्यमाणविशेषत्वादेकमेवोपनयनं सर्वार्थम्। आथर्वणार्थे तु पृथगुपनयनं कार्यम्, 'नान्यत्र संस्कृतो भृग्वङ्गिरसोऽधीयीत' इति श्रुतेः। भृग्वङ्गिरसः आथर्वणम्" इति। संको. १५४–१५६

(३) इदमनध्यायपदं नित्यनैमित्तिकानध्यायपरम्, अनध्यायपदस्य नित्यानध्यायपरत्वे नैमित्तिकानध्याये नैमित्तिकानध्यायपरत्वे च नित्यानध्यायेऽपूर्वोपनयापत्तेः। 'नैमित्तिकमनध्यायं कृष्णे च प्रतिपद्दिनम्।' इति नैमित्तिकानध्यायानां कृष्णप्रतिपदादिनित्यानध्यायानां चाधायोपनयनपरतेव 'स्वाध्यायवियुक्ता घस्राः' इति वाक्यात् प्रायश्चित्तोपनयनपरताऽपि, न त्वपूर्वोपनयनपरता, अन्यथा नैमित्तिकानध्याये प्रतिपदि चापूर्वोपनयनापत्तेः। एतेन पुनःसंस्कारविधिगतानध्यायपदं नित्यानध्यायमात्रपरम्, न त्वनित्यानध्यायपरमपीत्यपास्तम्। पुनःसंस्कारः पुनरुपनयनमेव, न जातकर्मादि, उपेतपूर्वस्य विशेषेणोपनयनस्यैवाऽऽचार्येण विधानात्। कृभ. ९३५

## ज्योतिर्मनुः

अनध्याय–गलग्रह–प्रदोषेषूपनयनं पुनरुपनयननिमित्तम्

[1]**अनध्यायोपनीतस्तु पुनःसंस्कारमर्हति।**
**गलग्रहे प्रदोषे च स्वल्पायुरुपजायते॥**

अत्रानध्यायशब्देन नित्या नैमित्तिकाश्च गृह्यन्ते, अविशेषात्। 'कृष्णे प्रदोषेऽनध्याये शनौ निश्यपराह्णके। प्राक्संध्यागर्जिते नेष्टो व्रतबन्धो गलग्रहे॥ अष्टका च समुद्दिष्टा सप्तम्यादिदिनत्रयम्। नाधीयीत च शास्त्राणि व्रतबन्धं च वर्जयेत्। अनध्याये चोपनीतः पुनः संस्कारमर्हति॥' इत्यन्यत्र। 'अनध्यायाः स्मृता भूतत्रयाष्टम्यर्कसंक्रमाः। शुक्ले द्वीशार्कदिक्तिथ्यः शुक्रपौषतपः-शुचेः। मन्वाद्याश्च युगाद्याश्च स्मृत्युक्ताः सर्व एव हि॥' इति ज्योतिर्निबन्धधृतवचनात्। पुनरप्यत्र प्राक्संध्यागर्जितग्रहणमीदृशानामप्यत्र ग्रहणमवयुत्यानुवादः। यद्वा प्राक्संध्यागर्जितस्य पुनर्ग्रहणं दोषाधिक्याय, तस्याप्यनध्यायत्वात्। यद्वा नैमित्तिकपुनरुपनयनस्यापि तत्र निषेधार्थमिदं प्रदोषनिषेधवत्। 'निमित्तानन्तरं नैमित्तिकम्' इति न्यायेन तत्र तत्प्रसक्तिः। एवं रात्रिनिषेधोऽपि तत्परः। एतेन 'चतुर्दश्यष्टमीपर्वप्रतिपत्स्वेव सर्वदा। दुर्मेधसामनध्यायस्त्वन्तरागमनेषु च॥' इति हेमाद्रिधृतवचनेन तदितरेषामनित्यानध्यायत्वसूचनादेष्वनध्यायशब्देन न तदतिरिक्तग्रहणम्, नित्यतद्ग्रहणेनोपपत्तावनित्यतद्ग्रहणे मानाभावादित्यपास्तम्। दुर्मेधसामित्युक्त्याऽन्यान्प्रति तेषामपि नित्यत्वबोधेन विनि-

(१) बाल. १।१४ पृ. ५०.

गमनाविरहाच्च । किंचैवं युगाद्यनध्यायस्याप्यनित्यत्वेनात्राग्रहणेन 'या चैत्रवैशाखसिता तृतीया माघेऽथ सप्तम्यथ फाल्गुनस्य । कृष्णे द्वितीयोपनये प्रशस्ता' इति च वसिष्ठवाक्यस्य वैयर्थ्यापत्तिः । तत्र चैत्रशुक्लतृतीया मन्वादिः । वैशाखशुक्ला सा युगादिः । माघशुक्ला सप्तमी सा मन्वादिः । फाल्गुनीपूर्णिमोत्तरं द्वितीया चातुर्मास्यद्वितीया । आसामनध्यायत्वेऽपि व्रतबन्धे प्राशस्त्यमिति तद्व्याख्यातारः । अपि च 'त्रयोदश्यादिचतुष्कं च सप्तम्यादिदिनत्रयम् । चतुर्थी चैव संप्रोक्ता अष्टावेते गलग्रहाः ॥' इत्युक्तचतुर्दश्यष्टमीपर्वप्रतिपदां गलग्रहत्वादेव निषेधे सिद्धे 'प्रदोषे निश्यनध्याये' इति वचनेऽनध्यायग्रहणवैयर्थ्यापत्तिः । एवं च गर्जाद्यनध्यायेषूपनीतस्य 'अकाले कृतमकृतमेव' इति ब्राह्मणत्वासंपत्त्या अपूर्वोपनयनविधिना पुनरप्युपनयनं कार्यमिति सिद्धम् । यत्त्वाश्वलायनसूत्रे 'अथोपेतपूर्वस्य' इत्यादिना पुनरुपनयनमुक्तं तस्य न प्रकृते प्रवृत्तिः, उपेतपूर्वत्वाभावात्, प्रायश्चित्तत्वेन पुनरुपनयनप्राप्तावेवं कुर्यादिति तत्सूत्रव्याख्याने वृत्तिकृतोक्तत्वात्, तथैव जयन्तोक्तेश्च । एतेन 'नैमित्तिकमनध्यायं कृष्णे च प्रतिपद्दिनम् । मेखलाबन्धने शस्तं चौले वेदव्रतेष्वपि ॥' इति वसिष्ठवचनात् गर्जाद्यनध्याये न दोष इति परास्तम्, तस्य कालातिक्रमविषयत्वात्, 'प्रशस्ता प्रतिपत्कृष्णे कदाचिच्छुभगे रवौ । चन्द्रे बलयुते लग्ने वर्णानामतिलङ्घने ॥' इतिव्यासवचनैकवाक्यत्वात् । यत्त्वेतद्बलान्नैमित्तिकानामनध्यायत्वं वेदाध्ययनमात्रविषयमिति, तन्न, 'कृष्णे प्रदोषे' इत्यादिप्राग्लिखितवचनेन 'स्मृत्युक्ताः सर्व एव हि' इत्यनेन च विरोधापत्तेः । गर्जाद्यनध्याया याज्ञवल्क्यादिभिरुक्ताः । तत्र याज्ञवल्क्यः– 'त्र्यहं प्रेतेष्वनध्यायः... ॥ संध्यागर्जितनिर्घातभूकम्पोल्कानिपातने । समाप्य वेदं द्युनिशमारण्यकमधीत्य च ॥' इति । इदमकालविषयम् । धर्मप्रश्ने– 'विद्युत्स्तनयित्नुवृष्टिश्चापर्तौ यत्र संनिपतेयुस्त्र्यहमनध्यायो यावद्भूमिर्व्युदकेत्येके' इति । एतत्संध्याकालातिरिक्तविषयम् । ऐतरेयब्राह्मणे 'अपर्तौ वर्षे त्रिरात्रम्' इत्यत्र वर्षो विद्युद्गर्जयोरुपलक्षणम् । अत्र श्रुतिभाष्ये 'अपर्तुशब्देन श्रावणभाद्रपदातिरिक्तः कालः' इति माधवः । तच्छत्रिन्यायेन बोध्यम्, 'अनुराधर्क्षमारभ्य षोडशर्क्षेषु भास्करः । यावच्चरति वै तावदकालं मुनयो विदुः ॥' इति रत्नावलीधृतवचनात् । हरदत्तस्तूज्ज्वलायाम् 'यत्र देशे यो वर्षाकालस्ततोऽन्यत्रापर्तुः' इत्याह, तद्रत्नावलीधृतवचनविरुद्धम् । यत्तु 'पौषादिचतुरो मासान् जाता वृष्टिरकालजा । व्रतं यात्रां विवाहं च वर्जयेत्सप्त वासरान् ॥' इति, तत्तु यात्राविवाहसाहचर्यात् व्रतेऽपि दृष्टदोषबोधकम् । ब्राह्मण्यानुत्पादकदोषस्तु दिनत्रयमेवेति बोध्यम् । यत्तु मनुना 'विद्युत्स्तनितवर्षेषु महोल्कानां च संप्लवे । आकालिकमनध्यायमेतेषु मनुरब्रवीत् ॥' (मस्मृ. ४। १०३) इत्युक्तम्, तत्तु संध्याकालातिरिक्तकाले एकैकोपजने बोध्यम् । परेद्युर्यावत्स कालस्तावत्कालम् आकालम् । तत्र भव आकालिकः । संप्लवः असकृदुपजनः । 'सायंसंध्यास्तनिते रात्रिः, प्रातःसंध्यास्तनितेऽहोरात्रम्' इति हारीतोक्तं तु ऋतुविषयम् । यत्तु लल्लेन वसिष्ठनाम्नोदाहृतं वचनम् 'व्रत्येऽह्नि पूर्वसंध्यायां वारिदो यदि गर्जति । तद्दिने स्यादनध्यायो व्रतं तत्र विवर्जयेत् ॥' इति, तदपि समूलत्वेऽकालिकगर्जविषयम्, हारीतैकवाक्यत्वात् । शरदि वैश्यस्योपनयनविधानेन तद्विषये पूर्वोक्तस्यैव निषेधस्यानुवादः । तत्र काले वृष्टौ यथाऽनध्यायाभावस्तथैतद्विषयेऽपीति शङ्कावारणार्थश्च स इत्येके । सामान्यतस्तद्दिने एवानध्यायः, न तु त्र्यहमित्येवं परिसंख्यायां याज्ञवल्क्येन विरोधः । ऋतुविषये त्वधिकाप्राप्तेर्व्यर्थतैव वचनस्याऽऽपतति । व्रतविवर्जनेऽनध्यायत्वमेव निमित्तम्, अतस्तदुक्तिः । 'व्रतं तत्रैव वर्जयेत्' इति नियमे चतुर्दश्यादौ तदापत्तिः । नैमित्तिकानध्यायेषु पूर्वसंध्यागर्ज एव । तत्रापि 'तद्दिने एव' इति नियमे तत्र गर्जादिसंनिपाते उपनयनापत्तिः । किंच, एवं द्वेधापरिसंख्याकल्पनापेक्षया महानाम्न्यादिव्रतविषयत्वमस्य वक्तुमुचितम्, 'नैमित्तिकमनध्यायम्' इत्यादिप्राग्लिखितवसिष्ठवचनेन वेदव्रतेषु कालातिक्रमे तदनुज्ञया तदनतिक्रमे तेषां त्याज्यत्वप्रतीतेः, प्रतिपद्वत् महाव्रत-

प्रकरणीयैतरेयब्राह्मणाच्चेत्यन्ये । एतेन मध्यदेशे माघे नियतवृष्टिसत्त्वेन तस्यापि कालत्वेन संध्यागर्जादौ नानध्याय इति निरस्तम्, कालगर्जादावपि दिनमात्रमनध्यायस्य सत्त्वाच्च । यत्तु ' गाण्डीवमेतत्पार्थस्य लोकेषु विदितं धनुः । एतद्वर्षसहस्रं तु ब्रह्मा पूर्वमधारयत् ॥ ' इत्युपक्रम्य ' पार्थः पञ्च च षष्टिं च वर्षाणि श्वेतवाहनः ' इति, तत्तु 'पक्षा वै मासाः' इतिश्रुत्यनुसारेण षट्सु मासेषु वर्षव्यवहारान्नानुपपन्नमिति न तत् ' एकवर्षमध्ये द्वौ वर्षाकालौ' इत्यत्र गमकम् । यत्तु ज्योतिर्निबन्धे– 'नान्दीश्राद्धे कृते चेत् स्यादनध्यायस्त्वकालिकः । तदोपनयनं कार्यं वेदारम्भं विवर्जयेत् ॥ ' इत्युक्तम्, तन्न बह्वृचविषयम्, तेषामुपनयने वेदारम्भाभावेन निषेधासंभवात् । तदर्थस्तु– नान्दीश्राद्धे कृते यद्यकालभवोऽनध्यायः स्यात् तदोपनयनं कार्यम्, वेदारम्भस्तु वर्ज्य इति बहवः प्रामाणिकाः । यत्तु ' कार्यमित्यन्तं सर्वसाधारणम्, निषेधस्तु संभवत्प्राप्तिकविषयः ' इति, तन्न, संनियोगशिष्टन्यायेनोभयोरेकविषयत्वौचित्यात्, वाक्यभेदापत्तेश्च, वेदारम्भातिरिक्ताङ्गकम् उपनयनं कार्यमित्येकवाक्यतौचित्यात्, ' वेदारम्भं तु वर्जयेत् ' इति पाठे तथार्थासंभवाच्चेति दिक् । उपनयनोत्तरं ब्रह्मौदनपाकात्पूर्वं गर्जितादिसंभावनायां दिवैव चरुश्रपणं कृत्वाऽस्तमिते होमः कार्यः, ' न संध्यागर्जिते काले न वृष्ट्युत्पातदूषिते । ब्रह्मौदनं पचेदग्नौ पक्वं चेन्न निवर्तते ॥ ' इति संग्रहोक्तेः । ' पक्वमन्नं न दुष्यति ' इति पाठान्तरम् । चरुश्रपणात्पूर्वमेव संध्यागर्जादौ पुनरुपनयनमेवेति केचित् । अन्ये तु ' औत्पातिकमनध्यायं प्राग् ब्रह्मौदनपाकतः । व्रतादूर्ध्वं नेष्टमाहुः शान्त्याऽऽहेष्टं पराशरः ॥ ' इति ज्योतिःशास्त्रोक्तेः, ' ब्रह्मौदनविधेः पूर्वं प्रदोषे गर्जितं यदि । तदा विघ्नकरं ज्ञेयं बटोरध्ययनस्य तत् । तत्र शान्तिविधानं तु वक्ष्ये शास्त्रानुसारतः ॥ ' इत्यादिना शान्तिमुक्त्वा ' ततो ब्रह्मौदनं पचेत् ' इति विधानकालो( ? मालो )क्तेश्च शान्तिं कृत्वा पाकः कार्यः । शान्तिमकृत्वा तत्करणे तु पुनरुपनयनम् । वस्तुतः शान्तिरध्ययनविघ्नादिदृष्टदोषनिवारणाय, पुनरुपनयनं तु ब्राह्मण्यानुत्पादात् भवत्येवेत्याहुः ।

† बाल. १।१४ पृ. ५०–५३

## नारदः

कृष्णपक्षगलग्रहापराह्णेषु चन्द्रस्य पापांशगतत्वे अनध्याये चोपनयनं पुनरुपनयननिमित्तं क्वचिदपवादश्च

‡¹विनर्तुना वसन्तेन कृष्णपक्षे गलग्रहे ।
अपराह्णे चोपनीतः पुनःसंस्कारमर्हति ॥

( १ ) वसन्ते गलग्रहो न दोषायेत्यर्थः । अपराह्णस्त्रेधाविभक्तदिनतृतीयांश इत्युक्तं तत्रैव । शब्दसामर्थ्याद्द्वेधा विभक्त इति युक्तम् । ¶ गभा. २०२

( २ ) वसन्ते गलग्रहो न दोषायेत्यर्थः । सिन्धु. ९३४

[ वर्णभेदेन विहितेन तत्तदृतुना विना कृष्णपक्षे ( च ) गलग्रहे उपनीत इत्यन्वयफलमाह– वसन्ते इति । ' वसन्ते गलग्रहो न दोषाय ' इत्येकोऽन्वयः$ ।

---

† पुनरुपनयनप्रकाराः संकौवत् ।

‡ अस्य संमन्व्याख्यानं वसिष्ठवचने द्रष्टव्यम् ।

¶ विपा., संग. गभागतम् ।

$ इदमन्वयपदमन्वयफले लाक्षणिकम्, अभिनीतयोरर्थयोर्मूलवाक्यगतान्वयभेदफलरूपत्वात् । मूलवचनेऽन्वयभेदस्य विवक्षणादवतरणिकायां ' कृष्णपक्षे' इत्यतः परं समुच्चयार्थश्चकार आवश्यकः । ' तत्तदृतुना विना गलग्रहे उपनीतः ' इत्येकोऽन्वयः, ' कृष्णपक्षे गलग्रहे उपनीतः ' इत्यपरोऽन्वयः । अत एव 'अन्वयफलमाह' इत्यस्य ' अन्वययोः फले आह ' इत्यर्थः । यद्यपि सिन्धौ द्वितीयान्वयफलं नोक्तम्, तथापि प्रथमान्वयफलोक्त्यन्यथानुपपत्त्यैव द्वितीयान्वयतत्फलयोः सिद्धत्वात् श्रुतार्थापत्तौ वचनत्वोपचार इति बोध्यम् ।

(१) ज्योना. २४।३४ प्रथमपादे ( विना वसन्तऋतुना) तृतीयपादे (अनध्यायोपनीतश्च) ; गभा. २०२ ; संप्र. ३७१ ; संम. २३ उत्त. ; सिन्धु. ९३४ ; विपा. ४७४ ; संको. १५४ समयोद्योते ; बाल. १।१४ पृ. ५० : १।१४ पृ. ५६ समयोद्योते ; संग. ६४९ : ६५३–

वसन्तपदं च तत्तद्वर्णविहिततत्तदृतुपरम् । 'ऋत्वन्तरीयशुक्लपक्षे च गलग्रहो न दोषाय' इत्यपरः । कृम. ]

(३) विनर्तुना वसन्तेनेति पृथगेकं पुनःसंस्कारे निमित्तम् । कृष्णपक्षगलग्रहापराह्णा इति निमित्तत्रयं च । तथा 'विनर्तुना वसन्तेन' इति वसन्तलाभे सत्यन्यत्र करणे पुनःसंस्कारनिमित्तम्, नान्यदा । अन्यथा माघफाल्गुनज्येष्ठाषाढानां विधानं विरुद्धं स्यात् । अथवा 'विनर्तुना वसन्तेन' इत्यस्य संनिहितत्वात्कृष्णपक्षशब्देऽन्वयः । तथा चायमर्थो भवति– वसन्तर्तुना विना कृष्णपक्ष उपनयने पुनःसंस्कारः, नान्यदेति । कृष्णपक्षगलग्रहशब्दयोरप्यन्वय इति केचित् । गलग्रहशब्द एवान्वय इत्यन्ये । संर. २८२

'पापांशकगते चन्द्रेऽपराह्णेऽथ गलग्रहे ।
अनध्याये चोपनीतः पुनःसंस्कारमर्हति ॥

## बृहस्पतिः

कृष्णपक्षगलग्रहानध्यायापराह्णेषु चन्द्रस्य पापांशगतत्वे चोपनयनं पुनरुपनयननिमित्तं क्वचिदपवादश्च

'विनर्तुना वसन्तेन कृष्णपक्षे गलग्रहे ।
अनध्याये चोपनीतः पुनःसंस्कारमर्हति ॥
'पापांशकगते चन्द्रेऽपराह्णेऽथ गलग्रहे ।
अनध्याये चोपनीतः पुनःसंस्कारमर्हति ॥

## भरद्वाजः

कृष्णपक्षगलग्रहानध्यायेषूपनयनं पुनरुपनयननिमित्तं तदपवादश्च

'विनर्तुना वसन्तेन कृष्णपक्षे गलग्रहे ।
उपनीतस्त्वनध्याये पुनःसंस्कारमर्हति ॥

गलग्रहस्यापवादमाह भरद्वाजः– विनेति । वसन्ततौ ऋत्वन्तरीयशुक्लपक्षे च गलग्रहो न दोषायेति फलितोऽर्थः । चम. १५

## स्मृत्यन्तरम्

त्र्यहःस्पृशि तिथौ मलमासे पुनर्वसौ चोपनयनं पुनरुपनयननिमित्तं विप्रस्य

†'त्र्यहःस्पृशि मले मासि शूद्रत्वमधिगच्छति ।
पुनर्वसौ कृतो विप्रः पुनःसंस्कारमर्हति ॥

## अनिर्दिष्टकर्तृकवचनम्

अनध्यायोपनयनं विप्रस्य पुनरुपनयननिमित्तम्

'अनध्याये कृतो विप्रः पुनःसंस्कारमर्हति ॥

## संग्रहकारः

प्रदोषादिषु कृतं परशाखामन्त्रैः कृतमनधिकारिणा च कृतमुपनयनं पुनरुपनयननिमित्तम्

'प्रदोषे निश्यनध्याये मन्दे कृष्णे गलग्रहे ।
मधुं विना चोपनीतः पुनःसंस्कारमर्हति ॥
यो न मन्त्रैः स्वशाखोक्तैः संस्कृतो नाधिकारिणा ।
नासौ द्विजत्वमाप्नोति पुनःसंस्करणं विना ॥

## राजमार्तण्डे

पुनर्वसुकृतमुपनयनं विप्रस्य पुनरुपनयननिमित्तम्

'†चन्द्रतारानुकूलेषु ग्रहाब्देषु शुभेष्वपि ।
पुनर्वसौ कृतो विप्रः पुनःसंस्कारमर्हति ॥

---

६५४ वीरमित्रोदये ; संव. ९६ ; पुम. ४३८ ; संर. २८२ अपराह्णे ( अनध्याये ) स्मृत्यन्तरे.

(१) संसौ. ११७ गुरुनारदौ.

(२) संसौ. १०६ ; संप्र. ३५४ ; संकौ. ११९ ; संग. ६४४ ; संर. १७०. (३) संसौ. ११७ गुरुनारदौ.

(४) प्रपा. २१६ ; चम. १५ ; संम. २४ तृतीयपादे (अपराह्णे चोपनीतः ) : २८ पृ. २४ वत्, उत्त. ; बाल. १।१४ पृ. ४७.

† अस्य व्याख्यानम् 'उपनयनमुहूर्तः– नक्षत्राणि' इति प्रकरणे बृहस्पतिवचनानां बालव्याख्याने शार्ङ्गधरीयवचनस्य संकौव्याख्याने च द्रष्टव्यम् ।

(१) संसौ. १२९ ; संप्र. ३६७ ; बाल. १।१४ पृ. ६४ (=)सौ कृतो ( सुकृतो ).

(२) बाल. १।१४ पृ. ५० कृतो विप्रः (चोपनीतः) ; कृम. ९४१. (३) ज्योनि. १२२.

(४) गभा. २०१ उत्त. ; संत. ९२८ उत्त. ;

(१) पुनर्वसुनिषेधमाह राजमार्तण्डः– 'ताराचन्द्रा ...... मर्हति ॥' इति । विप्रशब्दोपादानादितरेषां क्षत्रियविशां पुनर्वसुः प्रशस्त इत्यर्थः । अन्यत्रापि स्मर्यते– 'त्र्यहःस्पृशि मले मासि शूद्रत्वमधिगच्छति । पुनर्वसौ कृतो विप्रः पुनःसंस्कारमर्हति ॥' इति च । ¶ देशाचारतो व्यवस्था कार्या । अत एव विवाहपटले उक्तम्– 'देशाचारास्तावदादौ विचिन्त्या देशे देशे या स्थितिः सैव कार्या । लोके दुष्टं पण्डिता वर्जयन्ति दैवज्ञोऽतो लोकमार्गेण यायात् ॥' इति । संसौ. १२९–१३०

(२) केचित्तु ब्राह्मणस्य पुनर्वसुनिषेधमाहुः । तत्र राजमार्तण्डः– 'चन्द्रतारा...... मर्हति ॥'। अन्ये तु कृतः उपनीतः विप्रः केनचिन्निमित्तेन पुनः संस्कारं चेदर्हति तदा पुनर्वसौ इति वर्णयन्ति । तदपरे न सहन्ते, पुनःपदेनैवोपनयनावृत्तिसिद्धौ कृतपदोपादानवैयर्थ्यात् । तेन विप्रपदोपादानात् क्षत्रियादीनामनिषेधः । $ संप्र. ३६७–३६८

(३) राजमार्तण्डस्तु ब्राह्मणस्य पुनर्वसुं निषेधति– 'चन्द्रतारा...... मर्हति ॥'। सिन्धु. ९४०

¶ उदाहृतपुनर्वसुनिषेधकवचनयोः पूर्वधृतपुनर्वसुविधायकवचनैर्विरोधमभिप्रेत्येदमुक्तमिति स्पष्टम् । तथा च निषेधकवचनयोर्विप्रपदोपादानात् वचनत एव सिद्धाया वर्णभेदेन विधिनिषेधव्यवस्थायाः स्वयमेव पूर्वमुक्तत्वात् देशाचारतोव्यवस्थोक्तिरियं चिन्त्या ।

$ संग. विप्रपदकृत्यं संप्रवत् ।

संसौ. १२९ चन्द्रतारा (ताराचन्द्रा); संप्र. ३६७; सिन्धु. ९४० संसौवत्; विपा. ४७७ संसौवत्; संकौ. १२२; बाल. १।१४ पृ. ६१ कूलेषु (कूल्येऽपि), पृ. ६२ : पृ. ६३ सौकृतो (सुकृतो) : पृ. ६४ कूलेषु (कूलेऽपि) सौ कृतो (सुकृतो) : पृ. ६७ कूलेषु (कूल्येऽपि) इत्यपि पाठः, निर्देशमात्रम्, पृ. ६८ : पृ. ६९ निर्देशमात्रम्, पृ. ७० ; संग. ६५२ ; पुम. ४३९ ग्रहाब्दे (ग्रहाये) शेषं संसौवत् ; संर. १७८ कृतो विप्रः (चोपनीतः) शेषं संसौवत्.

[ब्राह्मणस्येति । अत्र हेमाद्यादिधृतानां पुनर्वसूपनयविधायकसामान्यवाक्यानां व्यवस्थावाक्यानां च द्विजपदस्वारस्येन याजुषादिपदस्वारस्येन च याजुषाथर्वणक्षत्रियवैश्यपरतैव, राजमार्तण्डवाक्यगतविप्रपदवशात्तु सर्वेषां ब्राह्मणानामुपनयने पुनर्वसुनिषेध इति भावः । तुना चारुचिः । सा च विप्राणामपि पुनर्वसूपनयनाचारात्पुनर्वसुः पुनरुपनयनकाल इत्यर्थोपगमादिति । न च तादृशक्षत्रियादौ मानाभावः, उपनीतानां क्षत्रियादीनामपि ब्राह्मणवत् 'स्वाध्यायोऽध्येतव्यः' इति विधिना परम्पराप्राप्तस्वस्वशाखाध्ययनविधानात् । कृभ. ]

## स्मृतिसारे

सोपपदासूपनयनं पुनरुपनयननिमित्तम्

**'सोपपदासूपनीतः पुनःसंस्कारमर्हति ॥**

अयं च निषेधो यजुर्वेदिनां न भवति, 'वेदव्रतोपनयने स्वाध्यायाध्ययने तथा । न दोषो यजुषां सोपपदास्वध्यापनेऽपि च ॥' इति स्मृतिदर्पणे स्मृत्यन्तरोक्तेरिति केचित् । महानिबन्धेष्वदर्शनादिदं निर्मूलम्, तेन तेषामपि निषेधोऽस्त्येवेत्यन्ये । ताश्चोक्तास्तत्रैव– 'ज्येष्ठशुक्लद्वितीया तु आश्विने दशमी सिता । चतुर्थी द्वादशी माघ एताः सोपपदाः स्मृताः ॥' इति । 'चतुर्थी द्वादशी माघे' इत्यत्र सितेत्यनुषज्यते । संर. १७४

## दैवज्ञमनोहरे

प्रदोषाद्युपनयनं पुनरुपनयननिमित्तम्

**'प्रदोषे निश्यनध्याये मन्दे कृष्णे गलग्रहे ।**
**मधुं विना चोपनीतः पुनःसंस्कारमर्हति ॥**

पुनःसंस्कारोऽत्र पुनरुपनयनम्, अजिनादिपर्युदासस्यान्यत्रासंभवात् । स च समाख्याबलेनैव कर्मविशेषेण पूर्वसंस्कारनाशे पुनःसंस्काराधायकः, न तु शोधकः, शुद्धेः प्रायश्चित्तसाध्यत्वात् । अत एव 'प्रायश्चित्तान्ते

(१) संर. १७४.

(२) संसौ. १२० ; संप्र. ५४७ दैवज्ञवल्लभः ; बाल. १।१४ पृ. ५० (=) विना चोपनीतः (विनोपनीतस्तु) ; संग. ६५० : ७१६ दैवज्ञवल्लभः ; संव. १०० बालवत्.

पुनःसंस्कारं कुर्यात्' इत्यादिविष्ण्वादिवाक्येषु द्वयोरपि स्वस्वकार्यप्रतिपादनमुखेनैव समाख्याभ्यां क्रमेणानुष्ठान-प्रतिपादनं युक्तम्। यत्तु यमेन– 'अमुरामद्यपाने च कृते गोभक्षणेऽपि वा। तप्तकृच्छ्रपरिक्लिष्टो मौञ्जी-होमेन शुध्यति ॥' इति मौञ्जीहोमस्य शोधकत्वमुक्तं तदुत्तरकालानुष्ठेयकर्माधिकाराभिप्रायेण, न तु दोषनिवृत्त्य-भिप्रायेण। तस्मात्पुनरुपनयनं पुनःसंस्काराधायकम्, न तु प्रकृतदोषनिवर्तकमिति स्थितम्। यत्र तु जातकर्मादी-त्यादिविशेषः स्मर्यते तत्र तदादीनां सर्वेषामेवानुष्ठानम्। यथा– 'जीवन् यदि समागच्छेद्घृतकुम्भे निमज्ज्य तम्। उद्धृत्य स्नापयित्वाऽस्य जातकर्मादि कार-येत् ॥'। चिरप्रोषितस्य जीवद्वार्तानाकर्णने कृतप्रेत-क्रियस्य पुनरागमनेऽयं विधिः। तथा प्रव्रज्यादिप्रत्या-वृत्तस्यापि प्रायश्चित्ताचरणानन्तरं जातकर्मादिभिः संस्कारमाह वृद्धपराशरः– 'जातकर्मादिभिः सर्वैः संस्कृतः शुद्धिमाप्नुयात्' इति। यद्यपि सर्वैरित्य-विशेषेणोक्तं तथाऽप्युपनयनान्तानामेवानुष्ठानम्, तेषामेव नियतत्वात्। अन्यथा 'ब्रह्मचर्यादेव प्रव्रजेत्' इति विरुध्येत। किंच, सर्वैरित्यविशेषोपादाने संन्यासिनोऽपि विवाहादिः प्रसज्येतेत्यनर्थान्तरापातः। तथाच जात-कर्मादीत्यादिशब्देनापि तत्पर्यन्तानामेवोपसंग्रहः।

संप्र. ५४७–५४८

## शौनककारिकाः

अधीतवेदान्तरस्य ऋग्वेदाध्ययनं पुनरुपनयननिमित्तम्

**[1]यो वेदान्तरमध्येतुं तत्सूत्रविधिना ततः।**
**कृतोपनयनोऽधीत्य तं वेदं सकलं द्विजः ॥**

**[2]द्वितीयमिममृग्वेदमध्येतुमभिवाञ्छया।**
**एतद्गृह्योक्तविधिना पुनरप्युपनीयते ॥**

## कुमारिलकारिकाः

अधीतवेदान्तरस्य ऋग्वेदाध्ययनं पुनरुपनयननिमित्तम्

**[3]वेदान्तरमधीत्यैव ऋग्वेदं ये त्वधीयते।**
**उपनीतिरियं तेषामलंकरणवर्जिता ॥**

## रेणुकारिकाः

अनध्यायकृष्णपक्षचतुर्थ्यपराह्णेषूपनयनं पुनरुपनयननिमित्तम्

**[4]अनध्याये चतुर्थ्यां च कृष्णपक्षे विशेषतः।**
**अपराह्णे चोपनीतः पुनःसंस्कारमर्हति ॥**

---

(१) प्रपा. २३९; संप्र. ५४४ त्सूत्र (त्सूक्त); विपा. ४८८ मध्येतुं (मध्येति); क्रम. ९७० मध्येतुं (मध्यैत).

(२) प्रपा. २३९; संप्र. ५४४ मिममृ (मिव ऋ); विपा. ४८८; संको. १५६ रप्युप (श्चैवोप); बाल. १।१४ पृ. ५७; क्रम. ९७०.

(३) कुका. १।१३।४५–४६. शेषस्थलादिनिर्देशाः पुनरुपनयनप्रयोगप्रकरणे द्रष्टव्याः.

(४) रेका. १४ पृ. २०–२१; गमा. २०२.

# वस्त्रम्

—०—

## आश्वलायनगृह्यसूत्रम्

उत्तरीयमविशेषम् , रक्तपरिधानीये प्रतिवर्णं विशेषः

**'अहतेन वाससा संवीतम् ॥**

( १ ) अहतेन वाससा संवीतं नवेन वाससा प्रावृत-मित्यर्थः । देभा.

( २ ) अहतं नवम् । अपुराणमनुपभुक्तमित्यर्थः । तेन वाससा संवीतं प्रावृतमित्यर्थः । ...... आनीय होमं कुर्यात् । * गानावृ.

**'यदि वासांसि वसीरन् रक्तानि वसीरन् काषायं ब्राह्मणो माञ्जिष्ठं क्षत्रियो हारिद्रं वैश्यः ॥**

( १ ) यदिशब्दोऽयमनित्यार्थः । एवं सति वाससां वसनमनित्यं प्राप्नोति । यदा च प्राप्नुवन्ति तदा रक्तान्येव, न शुक्लानि । तेनान्यथा विन्यासं करिष्यामः । वासांसि वसीरन् । तेन वाससां नियतं वसनम् । यदि-शब्देन त्विदं रक्तानामनित्यत्वं ज्ञापयति । यदिशब्दो निदर्शयति— यदि रक्तानि काषायं ब्राह्मण इत्येवमादि-विभागः । काषायं ब्राह्मणस्यैव नियम्यते । एवमुत्तरयोः । देभा.

( २ ) 'वासांसि वसीरन्' इत्येवं सूत्रच्छेद इष्टः । वासांसि वसीरन् परिदध्युरित्यर्थः । यदीत्युत्तरेण संब-ध्यते । तेन नियमेन परिधानं सिद्धम् । पक्षे शुक्लान्यपि सिध्यन्ति । यदि रक्तानि वसीरन् काषायं ब्राह्मणः, माञ्जिष्ठं क्षत्रियः , हारिद्रं वैश्यः । एवं रक्तानां वसन-मनित्यम् । तथा च गोतमः— 'वासांसि क्षौमचीरकुतपाः सर्वेषां कार्पासं वाऽविकृतं काषायमप्येके वार्क्षं ब्राह्मणस्य माञ्जिष्ठहारिद्रे इतरयोः' इति । ¶ गानावृ.

( ३ ) शुक्लस्य वर्णान्तरोपादानं रागः । कषाय-मञ्जिष्ठाहरिद्रा रञ्जनद्रव्याणि । * अना.

## कौषीतकिगृह्यसूत्रम्

अहतं वस्त्रं सर्ववर्णसाधारणम्

**'अहतेन वा सर्वान्मेखलिनः ॥**

## भारद्वाजगृह्यसूत्रम्

वस्त्रधारणं क्षत्रवर्धनम्

**'यद्वासो धारयेत् क्षत्रं वर्धयेत् ॥**

## वाराहगृह्यसूत्रम्

वर्णभेदेनोत्तरीयप्रकाराः , परिधानीयं रक्तम्

**'शाणं क्षौममजिनं वासः ॥**

**रक्तं वसनम् ॥**

## पारस्करगृह्यसूत्रम्

वर्णभेदेन वस्त्रभेदः

**'वासांसि शाणक्षौमाविकानि ॥**

( १ ) ब्रह्मचारिणां भवन्ति । कभा.

( २ ) वासांसि च यथाक्रमं शाणादीनि भवन्ति । जभा.

( ३ ) ब्राह्मणक्षत्रियविशां ब्रह्मचारिणां यथासंख्यं शाणक्षौमाविकानि वस्त्राणि परिधेयानि भवन्ति । तत्र शणमयं शाणम् । क्षौमम्— क्षुमा अतसी, तद्विकारमयं क्षौमम् । आविकम् अवेः मेषस्य विकारः आविकम् , ऊर्णामयमित्यर्थः । ‡ हभा.

---

* अना., प्रपा. गानावृगतम् ।

(१) आगृ. १।१९।८ ; प्रपा. २२१, २२४ ; संप्र. ४१० ; संम. २५ ; सिन्धु. ९५४ ; संग. ६६१.

(२) आगृ. १।१९।९ ; प्रपा. २२१ ; संप्र. ४११ ; संम. २५.

¶ प्रपा. , संप्र. गानावृवत् । संम. गानावृगतम् ।

* शेषं गानावृवत् ।

‡ गभा., विभा. हभागतम् ।

(१) कौगृ. २।१।१४. (२) भागृ. १।१. (३) वागृ. ६. (४) पागृ. २।५।१६ ; संप्र. ४११.

## गोभिलगृह्यसूत्रम्

यथालाभं वर्णभेदेन वस्त्रभेदः

¹क्षौमशाणकार्पासौर्णान्येषां वसनानि ॥

वाससाऽऽच्छादयन्तीत्युक्तम्, अतो वासोविशेषं सूत्रयति– क्षौमेति । क्षुमा अतसी । 'अतसी स्यादुमा क्षुमा' इत्यमरः । तया निर्वृत्तं क्षौमम् । 'तेन निर्वृत्तम्' (पा. ४।२।६८) इत्यर्थे अण्प्रत्ययः, आदिवृद्धिः । एवमग्रेऽपि । शणः तमुनिरुक्तः । कर्पासः प्रसिद्ध एव । ऊर्णा मेषरोम । एतान्येषां ब्राह्मणादीनां वसनानि अधरीयाणि भवन्ति । अत्र वसनानां चतुष्ट्वात् यथासंख्यान्वयो नेष्यते । एषां विषयव्यवस्थामुपदेक्ष्यति अनुपदम् । मृदुला.

²क्षौमं शाणं वा वसनं ब्राह्मणस्य कार्पासं क्षत्रियस्याऽऽविकं वैश्यस्य ॥

(१) क्षुमा अतसी, तस्या इदं क्षौमं तस्रादि । शानं शनतन्तुभवम् । तदुभयं ब्राह्मणस्य । संत. ९३०

(२) इदानीमुक्तानां वसनानां व्यवस्थामुपदिशति– क्षौममिति । मृदुला.

³अलाभे वा सर्वाणि सर्वेषाम् ॥

(१) स्वस्य स्वस्यालाभे सर्वाणि क्षौमादीनि सर्वेषां ब्राह्मणादीनाम् । $ संत. ९३०–९३१

(२) अलाभे स्वस्वजात्युक्तवसनादीनामसंपत्तौ सर्वाणि क्षौमादीनि वसनादीनि सर्वेषां भवन्ति यथालाभम् । अत एव वसिष्ठः– 'सर्वेषां तान्तवमरक्तम्' इति । अरक्तं विकृतरक्तरहितम् । कौसुम्भं तु प्रशस्तम् । तथा च गौतमः– 'सर्वेषां कार्पासमविकृतम्, काषायमप्येके' इति । मृदुला.

$ बौमि. संतवत् ।

(१) गोगृ. २।१०।८; संर. १९४.

(२) गोगृ. २।१०।१२; संत. ९३० शाणं (शानं) (वसनं०); बौमि. १।२९; संर. १९४.

(३) गोगृ. २।१०।१४; संत. ९३०; बौमि. १।२९ (वा०); संर. १९४ (वा०).

## जैमिनिगृह्यसूत्रम्

वस्त्रप्रकृतिद्रव्ययोर्वर्णत्रयसाधारणो विकल्पः

¹अथ परिधानानि । क्षौमं वा शाणं वाऽन्तरम् ॥

कौपीनं कटिवस्त्रं चान्तरम् । तत् क्षौमं वा शाणसंबन्धि वा स्यात्सर्वेषामित्यर्थः । श्रीव्या.

## गौतमः

वस्त्राणां प्रकृतिद्रव्येषु रक्तत्वारक्तत्वयोश्च विकल्पः, रक्तत्वपक्षे रागद्रव्यनियमो वर्णभेदेन

²वासांसि शाणक्षौमचीरकुतपाः सर्वेषाम् ॥

(१) शणमयं शाणम् । अतसी क्षुमा । चीरं कुशादिनिष्पन्नम् । कुतपः पर्वतीयच्छागरोमनिर्मितः । $ ब्रक. १०८

(२) एतान्यधोवसनानि । विषमसंख्यत्वादेव सर्वेषां सिद्धेः स्मृत्यन्तरे 'शाणं क्षौमं वासो ब्राह्मणस्य' इति तदाश्रित्य यथायथासंख्यं तन्निवृत्त्यर्थं सर्वेषां ग्रहणम् अधिकारार्थं वा । ¶ मभा.

(३) क्षुमा अतसी, तद्विकारः क्षौमम् । श्वेतपट्ट इत्यन्ये । ऊर्णानिर्मितः कम्बलः कुतपः । † गौमि.

(४) चीरं वस्त्रखण्डः । मपा. २०

(५) वासांसि अन्तरीयाणि । अतसीविकारं क्षौमम् । श्वेतपद इत्यन्ये । पश्चिमदिशि तृणभेदः क्षुमेति स्मार्ताः । ¶ कुभ. ९५५

$ स्मृच. ब्रकवत् ।

¶ शेषं ब्रकवत् ।

† शेषं ब्रकवत् । मुक्ता., चम., बाल. गौमिवत् ।

(१) जैगृ. १।१२.

(२) गौध. १।१९; विश्व. १।२९; ब्रक. १०८; मभा.; गौमि. १।१७; स्मृच. २९ (वासांसि०); मपा. २०; संप्र. ४१२; चम. २४; मुक्ता. ९४; बाल. १।२९ पृ. १५१; संग. ६६१; कुभ. ९५४–९५५.

¹कार्पासं वाऽविकृतम् ॥

( १ ) अविकृतं शुक्लम् । * अप. १।२९

( २ ) सर्वेषामित्यनुवर्तते वास इति च । अविकृतं अरागसंबन्धम् । स्वभावतः शुक्लमेवेत्यर्थः । पूर्वेषामप्यविकृतत्वज्ञापनार्थः चशब्दः । ¶ मभा.

( ३ ) अविकृतं अहतम् । कृम. ९५५

²काषायमप्येके ॥

( १ ) रागसंबन्धमपि केचिदिच्छन्ति । अपिशब्दो निन्दार्थः । अतः पूर्वेषामभावे द्रष्टव्यम् । मभा.

( २ ) अनुमतान्याह– काषायमिति । एके त्वाचार्याः कषायेण रक्तमपि धार्यं मन्यन्ते । § गौमि.

³वार्क्षं ब्राह्मणस्य ॥

⁴माञ्जिष्ठहारिद्रे इतरयोः ॥

* ब्रक. अपवत् ।

¶ गौमि., स्मृच., मुक्ता., चम., बाल. मभागतम् ।

§ मुक्ता., चम., बाल. गौमिगतम् ।

(१) गौध. १।२० वाऽवि ( चावि ); अप. १।२९ पृ. ५८ ( सर्वेषां कार्पासं वासोऽविकृतम् ); ब्रक. १०८ ; मभा. गौधवत् ; गौमि. १।१८ ; स्मृच. २९ ; मपा. २० ; गभा. २२९ ( सर्वेषां कार्पासं वाऽविकृतम् ) ; वीमि. १।२९ (सर्वेषां कार्पासमविकृतम् ) ; संप्र. ४१२ ; चम. २४ ; मुक्ता. ९४ ( सर्वेषां कार्पासं चाविकृतम् ) ; आन. १५६ मुक्तावत् ; बाल. १।२९ पृ. १५१ ; संग. ६६१ ; संबी. ७५ ( भागः २ ) गभावत् .

(२) गौध. १।२१ ; ब्रक. १०८ ; मभा. ; गौमि. १।१९ ; वीमि. १।२९ ; संप्र. ४१२ ; चम. २४ ; मुक्ता. ९४ ; बाल. १।२९ पृ. १५१ ; संग. ६६१ ; कृम. ९५५.

(३) गौध. १।२२ ; ब्रक. १०८ वार्क्षं ( वार्क्ष्यं ) ; मभा. ; गौमि. १।२० ; स्मृच. २९ ; संप्र. ४१२ ( ब्राह्मणस्य माञ्जिष्ठम् ) ; चम. २४ ; मुक्ता. ९४ ; बाल. १।२९ पृ. १५२ ; कृम. ९५५.

(४) गौध. १।२३ ; ब्रक. १०८ ; मभा. ; गौमि. १।२० ; स्मृच. २९ ; संप्र. ४१२ ( हारिद्रमितरयोः ) ;

( १ ) काषायपक्षे ब्राह्मणस्य वृक्षकाषायाक्तम्, क्षत्रियवैश्ययोर्माञ्जिष्ठहारिद्राक्तम् । ब्रक. १०८

( २ ) इदानीं काषायपक्षे नियमार्थमाह– वार्क्षमिति । † मभा.

## आपस्तम्बः हिरण्यकेशिधर्मसूत्रं च

वर्णभेदेन वस्त्रप्रकृतिद्रव्यभेदो रागभेदश्च, सर्ववर्णसाधारणः कम्बलः

¹वासः ॥

वस्यते कौपीनमाच्छाद्यते येन तद्वासः । तद्वक्ष्यते । ‡ उ.

²शाणीक्षौमाजिनानि ॥

( १ ) शणस्य विकारः शाणी पटी । क्षुमा अतसी, तस्या विकारः क्षौमम् । श्वेतपट्टाख्यवासोविशेष इत्यन्ये । अजिनं यस्य कस्यचिन्मेध्यस्य पशोः । त्रीण्येतानि वर्णानुपूर्व्येण वासांसि । उ.

( २ ) ¶एतेषु त्रिष्वेकं वासः परिदध्यादिति व्याख्यातमुज्ज्वलाकृता । * संर. १९०

³काषायं चैके वस्त्रमुपदिशन्ति ॥

† शेषं ब्रकवत् । गौमि., मुक्ता., चम., बाल., कृम. मभावत् ।

‡ मुक्ता., संर. उज्ज्वलानुवादः ।

¶ न यथेच्छमेकम्, अपितु तत्तद्वर्णनियतमेकमित्यर्थः, तथैवोज्ज्वलाव्याख्यानात् ।

* शेषम् उज्ज्वलावत् ।

चम. २४ ; मुक्ता. ९४ ; बाल. १।२९ पृ. १५२ ; कृम. ९५५ हारिद्रे ( हारीते ).

(१) आध. १।२।३९ ; हिध. २६।१।७० ; पमा. ४४७ ; प्रपा. २२१ (वासांसि ) ; संप्र. ४११ ; मुक्ता. ९४ ; संग. ६६१ प्रपावत् ; संर. १८६, १९० हिध.

(२) आध. १।२।४० ; हिध. २६।१।७१ ; पमा. ४४७ शाणी ( शाण ) ; प्रपा. २२१ ( शाणक्षौमाविकानि ) ; संप्र. ४११ प्रपावत् ; मुक्ता. ९४ ; संग. ६६१ प्रपावत् ; संर. १८६, १९० हिध.

(३) आध. १।२।४१ ; हिध. २६।१।७२ ; स्मृच. २९ ; पमा. ४४७ दिशन्ति + ( शुक्लकार्पासवस्त्रं ब्राह्म-

एके आचार्या वस्त्रं त्वघोघार्यमुपदिशन्ति । वस्त्रं कार्पासम् । तच्च काषायं कषायेण रक्तम् । ब्राह्मणस्येत्यर्थाद्गम्यते, इतरयोर्वक्ष्यमाणत्वात् । उ.

[1]माञ्जिष्ठं राजन्यस्य ॥

हारिद्रं वैश्यस्य ॥

मञ्जिष्ठया रक्तं माञ्जिष्ठम् । हरिद्रया रक्तं हारिद्रम् । ‡ उ.

[1]कम्बलश्च $ ॥

अयमप्याविक एव । प्रावरणमेव सर्वेषाम् । † उ.

### वसिष्ठः

वर्णभेदेन वस्त्ररूपभेदः

[3]शुक्लमहतं वासो ब्राह्मणस्य, माञ्जिष्ठं क्षत्रियस्य, हारिद्रं कौशेयं वा वैश्यस्य । सर्वेषां वा तान्तवमरक्तम् ॥

(१) कौशेयं कृमिकोशोत्थम् । तान्तवमत्र कार्पासम् । ब्रक. १०८

(२) कौशेयं पट्टविशेषः । मपा. २०

‡ स्मृच. उज्ज्वलावत् ।

$ 'आविकं सार्ववर्णिकम्' इति लिङ्गविपरिणामेनानुवर्तते ।

† संर. उज्ज्वलानुवादः ।

णस्य ) ; प्रपा. २२१ दिशन्ति + ( ब्राह्मणस्य ) ; संप्र. ४११ प्रपावत् ; मुक्ता. ९४ ; आन. १५६ ; संग. ६६१ प्रपावत्.

(१) आध. १।३।१-२ ; हिध. २६।१।७३-७४ ; स्मृच. २९ ; पमा. ४४७ ; प्रपा. २२१ ; संप्र. ४११ ; मुक्ता. ९४ ; संग. ६६१.

(२) आध. १।३।८ ; हिध. २६।१।८० ; ब्रक. १०९ ; संप्र. ४१२.

(३) वस्मृ. ११।४९ ; अप. १।२९ पृ. ५८ माञ्जिष्ठं ...कौशेयं वा ( कार्पासं माञ्जिष्ठं क्षौमं क्षत्रियस्य पीतं कौशेयं ) ; ब्रक. १०८ माञ्जिष्ठं...वैश्यस्य ( कार्पासं माञ्जिष्ठं क्षत्रियस्य हारिद्रकौशेयं वैश्यस्य ) ; स्मृच. २९ अपवत् ; मपा. २० ( शुक्लमहतं वासो ब्राह्मणस्य माञ्जिष्ठं क्षौमं च क्षत्रियस्य पीतकौशेयं वैश्यस्य ) एतावदेव ; प्रपा. २२१ ( शुक्लमहतं कार्पासं वासो ब्राह्मणस्य माञ्जिष्ठं क्षौमं क्षत्रियस्य पीतं कौशेयं वैश्यस्य ) एतावदेव ; गभा. २२९ ( शुक्लमहतं वासो ब्राह्मणस्य माञ्जिष्ठं क्षौमं च क्षत्रियस्य पीतं कौशेयं वैश्यस्य ) एतावदेव ; वीमि. १।२९ ( सर्वेषां तान्तवमरक्तम् ) एतावदेव ; संप्र. ४११ अपवत् ; चम. २४ (सर्वेषां वा तान्तवमरक्तम्०) शेषम् अपवत् ; मुक्ता. ९४ अपवत् चमवत् च ; संम. २६ अपवत् चमवत् च ; संको. १२३ ( शुक्लमहतं वासो ब्राह्मणस्य कार्पासम् ) एतावदेव ; बाल. १।२९ पृ. १५२ अपवत् चमवत् च ; संग. ६६१ माञ्जिष्ठं ( कार्पासं माञ्जिष्ठं क्षौमं ) ( हारिद्रं कौशेयं वा वैश्यस्य० ) ; संर. १९० ( ब्राह्मणस्य कार्पासं वासः ) एतावदेव.

### विष्णुः

वस्त्रप्रकृतिद्रव्यभेदः

[1]कार्पासशाणाविकान्युपवीतानि वासांसि च ॥

### शङ्खः

वर्णभेदेन वस्त्रप्रकृतिद्रव्यभेदः

[2]वस्त्रोपवीते कार्पासक्षौमोर्णानां यथाक्रमम् ॥

[3]क्षौमदुकूलसौत्राणि वासांसि त्रयाणां वर्णानाम् ॥

### मनुः

वर्णभेदेन वस्त्रप्रकृतिद्रव्यभेदः

¶[4]वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च ॥

(१) वसीरन् आच्छादयेयुः । शणक्षुमोर्णाः, तत्र (१ ताभिः) कृतानि च वस्त्राणि । तत्रानुत्तरीयाणि शाणादीनि । मेधा.

¶ अजिनप्रकरणे मनुवचने संगृहीतानि मेधादिव्याख्यानान्यप्यत्रानुसंधेयानि ।

(१) विस्मृ. २७।१९ शाण ( शण ) ; ब्रक. ११० ( च० ) ; संप्र. ४१४. (२) शंस्मृ. २।११.

(३) ब्रक. १०९ ; संप्र. ४१२.

(४) मस्मृ. २।४१. शेषस्थलादिनिर्देशा अजिनप्रकरणे मनुवचने द्रष्टव्याः .

(२) शणक्षुमोर्णामयानि अर्थात्परिधानीयानि वासांसि वसीरन्। आनुपूर्व्यग्रहणं क्रमार्थम्, 'शाणं क्षौमं च ब्राह्मणस्य' इति गृह्यदर्शनादेतयोर्ब्राह्मणगतत्वाभ्रान्त्या अविषमसंख्यत्वे सति यथाक्रमसंबन्धात्। गोरा.

(३) शणातसीमेषरोमसूत्रकृतानि वासांसि क्रमाद्वसीरन्। अर्थादधः। $ मवि.

(४) क्षौमं क्षुमा एरण्डीपर्यायः। § मच.

(५) अविः छागविशेषो रक्तवर्णः, तद्रोमकृतमाविकम्। § नन्द.

## बृहस्पतिः

वर्णभेदेन वस्त्रप्रकृतिद्रव्यभेदः

[१]... **वासांसि शाणक्षौमाविकानि च ॥**

## यमः

परिधानीयवस्त्रप्रकृतिद्रव्याणि

[२]**क्षौमकार्पासकुतपचर्मवल्कलकम्बलाः।**
**सर्वं तु धारयेच्छुक्लं वासस्तत्पारिधानिकम् ॥**

पारिधानिकं परिधानप्रयोजनकम्। ब्रक. १०९

## पैठीनसिः

सर्ववर्णसाधारणं काषायवस्त्रम्

[३]**कमण्डलुं यज्ञोपवीतं काषायं वस्त्रमिति समानानि ॥**

पैठीनसिस्तु सर्वेषां काषायमाह– कमण्डलुमिति। एतच्च परिधानार्थम्। 'क्षौमकार्पासकुतपचर्मवल्कलकम्बलाः। सर्वं तु धारयेच्छुक्लं वासस्तत्परिधानकम् ॥' इति मनुस्मरणात्। स्मृच. २९

## आश्वलायनः

वर्णभेदेन रागद्रव्यभेदः, वस्त्रस्योल्बरूपत्वम्

[१]**विप्रस्य ................................।**
**वासः काषायमुद्दिष्टमुल्बम् ..............॥**
**...... क्षत्रियस्य .........................।**
**माञ्जिष्ठं संस्मृतं वास उल्बम् ............ ॥**
**वैश्यस्य ....................................।**
**वासो हारिद्रमुद्दिष्टमुल्बम् ...............॥**

[२]**द्वितीयजन्मनः सिद्ध्यै वाससा व्रियते द्विजः।**
**गर्भस्योल्बस्वरूपेण तस्मात्तत्क्रियते सदा ॥**

## स्मृत्यन्तरम्

ब्राह्मणवस्त्रप्रकृतिद्रव्ये

[३]**शाणं क्षौमं वासो ब्राह्मणस्य ॥**

## स्मृत्यर्थसारः

अहतलक्षणम्, अहतत्वादिविधानम्

[४]**अहतं यन्त्रनिर्मुक्तमुक्तं वासः स्वयंभुवा ॥**
**अहतं वस्त्रयुग्मं तु श्वेतं वस्त्रमथापि वा ॥**

## रेणुकारिकाः

वर्णभेदेन वर्णसाधारण्येन च वस्त्राणां प्रकृति-द्रव्य–रूपभेदाः

[५]**ब्राह्मणक्षत्रियविशां वासांसि ब्रह्मचारिणाम् ॥**
**वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि तु।**
**शुक्लं कार्पासिकं विप्रो भूभुक् क्षौमं तु लोहितम् ॥**

---

$ ममु. मविवत्। भाच. मविगतम्।

§ शेषं मविगतम्।

(१) अस्य स्थलादिनिर्देशा अजिनप्रकरणे बृहस्पतिवचने द्रष्टव्याः.

(२) ब्रक. १०९ कुतपच (कुतपाश्च); स्मृच. २९ पारिधानि (परिधान) मनुः; संप्र. ४१२; मुक्ता. ९४ पूर्वार्धे (कार्पासं क्षौमकुतपाश्चर्मवल्कजकम्बलाः।) प्रोरि (परि); आन. २।१८२ निकम् (नकम्) शेषं मुक्तावत्.

(३) स्मृच. २९ यं वस्त्रमिति समानानि (यवस्त्रमिति समानि); संप्र. ४१२.

(१) आश्वस्मृ. २।३७-४०.

(२) आश्वस्मृ. ११।१३५; प्रपा. २२७ स्योल्बस्व (स्योल्बण).

(३) मभा. ११९. (४) स्मृसार. ५.

(५) रेका. १६–२० पृ. २८.

वैश्यः पीतं तु कौशेयं वसिष्ठोक्त्या वसीत सः।
कार्पासिकं तु सर्वेषामविकार्यहतं भवेत् ॥

इत्येवं गौतमः प्राह परिधानाय सर्वदा।
क्षौमकार्पासकुतपचर्मवल्कलकम्बलाः ॥
सर्वे तद्धारयेच्छुक्लं वासस्तत्परिधानिकम् ॥

# अजिनम्

## बौधायनगृह्यसूत्रम्

प्रतिवर्णभिन्नं सर्ववर्णसाधारणं चाजिनम्

**[1]कृष्णाजिनं ब्राह्मणस्य । रौरवं राजन्यस्य । बस्ताजिनं वैश्यस्य । सर्वेषां वा कृष्णाजिनम् ॥**

## आश्वलायनगृह्यसूत्रम्

प्रतिवर्णभिन्नमजिनम्

**[2]ऐणेयेन वाऽजिनेन ब्राह्मणं रौरवेण क्षत्रियमाजेन वैश्यम् ॥**

( १ ) ऐणेयेन वाऽजिनेन ऐणेयेन वा चर्मणा प्रावृतं ब्राह्मणम् । रौरवेण क्षत्रियं रौरवेण चर्मणा क्षत्रियं प्रावृतम् । आजेन चर्मणा प्रावृतं वैश्यम् । तत्रैतानि चर्माणि वासोभिर्विकल्प्यन्ते, उभयेषां प्रावरणार्थत्वात् ।

देभा.

( २ ) ऐणेयेन वा अजिनेन चर्मणा प्रावृतं ब्राह्मणमानीय होमं कुर्यात् । एवमुत्तरत्रापि नेयम् । एतानि चर्माणि वाससा सह विकल्पन्ते, उभयेषां प्रावरणार्थत्वात् वाशब्दाच्च ।

गानावृ.

( ३ ) एणी बिन्दुरहिता मृगी, तस्या विकार ऐणेयम् । 'एण्या ढञ्' ( पा. सू. ४।३।१५९ ) । रुरुः बिन्दुमान् मृगः ।

§ अना.

( ४ ) †एणी बिन्दुरहिता मृगी । तस्याः संबन्ध्यैणेयम् । एणीशब्दात् ढक्प्रत्ययः । अजः छागः ।

$ प्रपा. २२१

( ५ ) एणी बिन्दुसहिता मृगी ।

‡ संम. २५

( ६ ) यद्यप्यैणेयशब्देन मृगीचर्मैवोच्यते, 'एण्या ढञ्' इति पाणिनिस्मृतेः, 'ऐणेयमेण्याश्चर्माद्यमेणस्यैणमुभे त्रिषु' इत्यमरकोशाच्च, तथापि 'कृष्णरुरुबस्तान्यजिनानि' इति शङ्खोक्तेः 'सर्वेषां वा रौरवम्' इति यमोक्तेश्च मृगचर्मणा सह विकल्पो ज्ञेयः । वस्त्राजिनयोस्तु विकल्पः, 'कार्पासं वाऽविकृतम्' ( गौध. १।२० ) इति गौतमोक्तेः ।

सिन्धु. ९५४–९५५

( ७ ) एणी बिन्दुरहिता मृगी । तत्संबन्धि ऐणेयम् । तदभावे कृष्णहारिणं वा, 'हारिणमैणेयं वा कृष्णं ब्राह्मणस्य' ( आध. १।३।३ ) इत्यापस्तम्बोक्तेः । तत्र नोपस्तीर्याऽऽसीत शयीत वा, तथैव तदुक्तेः ।

संको. १२३

## कौषीतकिगृह्यसूत्रम्

प्रतिवर्णभिन्नमजिनम्

**[1]... ब्राह्मणमुपनयेत ॥**

**ऐणेयेनाजिनेन ॥**

**... क्षत्रियं रौरवेण ॥**

**... वैश्यं गव्येन ॥**

## हिरण्यकेशिगृह्यसूत्रम्

प्रतिवर्णभिन्नमजिनम्

**[2]कृष्णाजिनं ब्राह्मणस्य, रौरवं राजन्यस्य, बस्ताजिनं वैश्यस्य ॥**

किं कृष्णाजिनमित्युच्यते– कृष्णाजिनमिति । कृष्णाजिनं ब्राह्मणस्य । रुरोरजिनं रौरवम् । यद्येवं पूर्वत्रापि तदनर्थकम् । अजिनपक्ष एव तत् , न वासःपक्ष इत्येतदर्थम् । एवमपि 'कार्ष्णम् , बास्तम्' इत्येव सिद्धे

---

§ शेषं देभागतम् ।

† पारस्करसूत्रे वीमिन्व्याख्याने टिप्पणी द्रष्टव्या ।

$ शेषम् अनावत् गानावृगतं च । संप्र. प्रपावत् ।

(१) बौगृ. २।५।१६.

(२) आगृ. १।१९।८ ; प्रपा. २२४ ; संप्र. ४१२ ; संम. २५ वाऽजिनेन ब्रा ( वा ब्रा ) ; सिन्धु. ९५४ ; संको. १२३ ( रौरवेण...वैश्यम् ० ) ; संग. ६७०.

‡ शेषम् अनागतम् । कुभ. एणीपदार्थः संमवत् ।

(१) कौगृ. २।१।१–२, ४–५.

(२) हिगृ. १९।१।६३ ; संप्र. ४१३.

पुनरजिनग्रहणमनर्थकम् । न, अतिनियतत्वख्यापनार्थम् । वक्ष्यति च धर्मेषु– ' हारिणमैणेयं वा ' इति ' आविकं सार्ववर्णिकं कम्बलश्च ' ( हिध. २६।१।७५,७९,८० ) इत्येतदन्तम् ¶ । मातृद.

## भारद्वाजगृह्यसूत्रम्

प्रतिवर्णभिन्नमजिनम्, वस्त्राजिनोभयधारणविधानम्

[1]**वासांसि समामनन्ति। ऐणेयं ब्राह्मणो वसीत रौरवं राजन्यो बस्ताजिनं वैश्यः । यदजिनं धारयेद्ब्रह्म वर्धयेत्, यद्वासो धारयेत्क्षत्रं वर्धयेत् । उभयं धार्यमुभयोर्वृद्ध्या इति विज्ञायते ॥**

## काठकगृह्यसूत्रम्

अजिनं प्रतिवर्णभिन्नम्

[2]**ऐणेयं चर्म ब्राह्मणाय प्रयच्छति वैयाघ्रं राजन्याय रौरवं वैश्याय ॥**

( १ ) ऐणेयं कृष्णमृगस्य संबन्धि चर्म ब्राह्मणाय प्रयच्छत्युपनेता । राजन्याय व्याघ्रचर्म, रुरुचर्म वैश्याय । देव.

( २ ) एणी कृष्णशारी, तस्याश्चर्म ऐणेयम् । तदुत्तरीयम् । † आवि.

## वाराहगृह्यसूत्रम्

प्रतिवर्णभिन्नमजिनम्

[3]**मार्गवासाः ॥**

**कम्बलमैणेयं ब्राह्मणस्य ॥**

**रौरवं क्षत्रियस्य ॥**

**आजं वैश्यस्य ॥**

---

¶ वस्तुतः ' अजिनं त्वेवोत्तरं धारयेत् ' ( हिध. २६।१।८२ ) इत्यजिननैयत्यविधायकं सूत्रमत्र धर्तुमुचितमिति भाति ।

† शेषं देवगतम् ।

(१) **भागृ.** १।१.

(२) **कागृ.** ४१।१३.

(३) **वागृ.** ६.

## आग्निवेश्यगृह्यसूत्रम्

प्रतिवर्णभिन्नमजिनम्

[1]**कृष्णाजिनं ब्राह्मणस्य रौरवं राजन्यस्य बस्ताजिनं वैश्यस्य ॥**

## पारस्करगृह्यसूत्रम्

प्रतिवर्णभिन्नं सर्ववर्णसाधारणं चाजिनम्

[2]**ऐणेयमजिनमुत्तरीयं ब्राह्मणस्य ॥**

( १ ) एणेयं हारिणं चर्म, तत् ब्राह्मणस्योत्तरीयं भवति । कभा.

( २ ) एणः कृष्णमृगः । स्मृच. २९

( ३ ) ऐणेयं एण्याश्चर्म । † जभा.

( ४ ) एणी कृष्णसारहरिणी, ¶ तस्या इदमैणेयम्, ' स्त्रीभ्यो ढक् ' ( पा. ४।१।१२० ) इति पाणिनिस्मृतेः । ' ऐणेयमेण्याश्चर्माद्यमेणस्यैणमुभे त्रिषु ' इत्यमरसिंहः । ' एणस्येदमैणेयम् ' इति भाष्यलिपिः प्रमादात् । न च ' एणः कृष्णमृगः स्मृतः ' इति तद्व्याख्यायककात्यायनवचनादार्ष एवायं प्रयोग इति वाच्यम्, तस्य स्त्रीप्रत्ययप्रकृत्येणशब्दव्याख्यामात्रत्वादार्षत्वाश्रयणे मानाभावात् । वीमि. १।२९ पृ. ८४

---

† हमा., गभा., विभा. जभावत् ।

¶ अहो ! अपूर्वोऽयं रभसनिर्मितस्त्रिवेणीसंगमः ! 'एण्या ढञ्' इति विकारार्थेऽवयवार्थे वा ढञिति वस्तुस्थितिः । तत्र ' तस्या इदम् ' इति संबन्धसामान्योक्तिरैणेयपदात् सामान्यरूपेण संबन्धावबोधेऽपि वस्तुगत्या तत्सत्त्वात् सिता गङ्गावेणी, ' स्त्रीभ्यो ढक् ' इत्यपत्याधिकारस्थसूत्रोक्तिरजिने एण्यपत्यत्वासत्त्वादसिता यमुनावेणी, विकाराद्यर्थकढञोऽनुक्तिरदृश्या सरस्वतीवेणीति ।

(१) **आग्निगृ.** १।१।२.

(२) **पागृ.** २।५।१७ ; **अप.** १।२९ पृ. ५८ ; **ब्रक.** ११० ऐणेय ( ऐण ) ; **स्मृच.** २९ णस्य + ( च ) ; **पमा.** ४४७ ; **प्रपा.** २२१ ब्रकवत् ; **मर.** ६ ; **वीमि.** १।२९ ; **संप्र.** ४१३ ब्रकवत् ; **चम.** २३ ; **मुक्ता.** ९४ ; **बाल.** १।२९ पृ. १५१.

( ५ ) अग्रेणमुत्तरीयमिति वचनात् प्रागुक्तानि शाणादीन्युत्त( ? न्यन्त )रीयाणीति गम्यते । संप्र. ४१३

( ६ ) यद्यपि 'एण्या ढञ्' इति स्त्रीप्रत्ययान्तादेव ढञ् विहितः, तथा चामरः– 'ऐणेयमेण्याश्चर्माद्यमेणस्यैणमुभे त्रिषु' इति, तथापि एणचर्मणा सह एणीचर्मणो विकल्प इति केचित् । † चम. २४

( ७ ) एणी बिन्दुरहिता मृगी, गौरमृगी । तत्संबन्ध्यैणेयम् । एणीशब्दो ढक्प्रत्ययान्तः । संग. ६७०

**[2]रौरवं राजन्यस्य ॥**

( १ ) रुरुर्नाम आरण्यः सत्त्वविशेषः । तदीयं राजन्यस्य भवति । ‡ कभा.

( २ ) रौरवं रुरोश्चित्रमृगस्य चर्म । $ जभा.

( ३ ) राजन्यस्य क्षत्रियस्य । ¶ हभा.

( ४ ) रुरुः बिन्दुमान् मृगः । संग. ६७०

**[3]आजं गव्यं वा वैश्यस्य ॥**

( १ ) उत्तरीयं भवति । कभा.

( २ ) आजम् अजस्य । गव्यं गोः । § जभा.

**[4]सर्वेषां वा गव्यमसति प्रधानत्वात् ॥**

( १ ) असति यथाचोदिते चर्मणि सर्वेषां वा गव्यं भवति । कुत एतत् ? पुरुषप्रधानत्वात् गव्यस्य चर्मणः । पुरुषप्रधानं हि गव्यं चर्म श्रुतौ पठ्यते– 'तेऽवच्छाय पुरुषं गव्येतां त्वचमदधुः' इति । ¶ कभा.

( २ ) पक्षान्तरमाह– 'सर्वेषां... त्वात्' । सर्वेषां ब्राह्मणक्षत्रियविशां गव्यमजिनं वा उत्तरीयं भवति । कदा ? असति मुख्ये अविद्यमाने । कुतः ? प्रधानत्वात् । गव्यं हि अजिनानां प्रधानम्, ऐणेयाद्यजिनप्रकृतीनामेण्यादीनां गोः प्राधान्यं यतः । यद्वा गव्यस्य चर्मणः पुरुषसंबन्धित्वेन प्रधानत्वात् । तथा च श्रुतिः– 'तेऽवच्छाय पुरुषं गव्येतां त्वचमदधुः' इति । † हभा.

( ३ ) 'ते अवच्छाय पुरुषं गव्येतां त्वचमदधुः' इति । ते देवाः पुरुषत्वचमवच्छाय उत्कृत्य एतां त्वचं गवि अदधुः धृतवन्तः इति श्रुत्यर्थः । $ गभा.

( ४ ) प्रधानत्वात् प्रशस्तत्वादित्यर्थः । ‡ संप्र. ४१३

## गोभिलगृह्यसूत्रम्

प्रतिवर्णं भिन्नमजिनम्, तदलाभे अनियमः

**[1]ऐणेयरौरवाजान्यजिनानि ॥**

( १ ) एणः कृष्णमृगः, रुरुः गौरमृगः, अजः छागः । यथाक्रमं द्विजानामेतान्यजिनानि । संत. ९३०

( २ ) एतानि ब्राह्मणादीनां यथाक्रममजिनानि उत्तरीयतया ग्राह्याणीत्यर्थः । तथा च स्मृतिः– 'उत्त-

---

† बाल. चमवत् ।

‡ गभा. कभावत् हभावच्च ।

$ विभा., बाल., संदी. जभावत् ।

¶ शेषं जभावत् ।

§ हभा., गभा., विभा., संग., संदी. जभावत् ।

(१) पागृ. २।५।१८ ; अप. १।२९ पृ. ५८ ; ब्रक. ११० ; स्मृच. २९ ; पमा. ४४७ ; प्रपा. २२१ ; मर. ६ ; वीमि. १।२९ ; संप्र. ४१३ ; चम. २३ ; मुक्ता. ९४ ; बाल. १।२९ पृ. १५१.

(२) पागृ. २।५।१९ ; अप. १।२९ पृ. ५८ ; ब्रक. ११० ; स्मृच. २९ ; पमा. ४४७ ; प्रपा. २२१ ( गव्यं बास्तं वा वैश्यस्य ); मर. ६ ; वीमि. १।२९ ; संप्र. ४१३ ; चम. २३ ; मुक्ता. ९४ आजं ( बास्तं ) ; बाल. १।२९ पृ. १५१ ; क्रुम. ९५४ ( आजं० ).

(३) पागृ. २।५।२० ; अप. १।२९ पृ. ५८ ( सर्वेषां वा गव्यम् ) एतावदेव ; ब्रक. ११० ; स्मृच. २८, २९ अपवत् ; पमा. ४४७ अपवत् ; प्रपा. २२१ ( सर्वेषां वा गव्यं शाणादीन्युत्तरीयाणि ) ; मर. ६ अपवत् ; संप्र. ४१३ ; चम. २३ अपवत् ; मुक्ता. ९४ अपवत् ; बाल. १।२९ पृ. १५१ अपवत् ; क्रुम. ९५४ अपवत्.

¶ जभा., विभा. कभावत् ।

† संदी. हभावत् । श्रुत्यर्थः गभावत् ।

$ शेषं कभावत् ।

‡ शेषं कभागतम् । संग. संप्रवत् ।

(१) गोगृ. २।१०।९ ; संत. ९३० ; संर. १९४.

रीयं समाख्यातं वासः कृष्णाजिनं शुभम्' इति। पारस्करगृह्यमपि– 'ऐणेयमजिनमुत्तरीयं ब्राह्मणस्य, रौरवं राजन्यस्याऽऽजं गव्यं वा वैश्यस्य' इति। एणी कृष्णसारमृगी, ‡ तस्या इदमैणेयम्। 'स्त्रीभ्यो ढक्' (पा. ४।१।१२०) इति। ढस्येयादेशः। आदिवृद्धिः। अत एव 'ऐणेयमेण्याश्चर्माद्यमेणस्यैणमुभे त्रिषु' इत्यमरोऽपि। एतेनैणस्येदमैणेयमिति भाष्यकारीयव्याख्यानमपास्तमिति वेदितव्यम्। न च 'एणः कृष्णमृगः स्मृतः' इति तद्व्याख्यापककात्यायनवचनादार्ष एवायं प्रयोग इति वाच्यम्, तस्य परंपरया एण्या लक्षकत्वेनोपपत्तेस्तथाकल्पनायां मानाभावात्। रुरुश्च गौरवपुर्मृगः। शंबार इति प्रसिद्धः। अजः छागः। अजिनं चर्म। मनुः– 'कार्ष्णरौरववास्तानि चर्माणि ब्रह्मचारिणः। वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च॥' (मस्मृ. २।४१)। ¶ कृष्णाया इदं कार्ष्णम्, पृथायाः पार्थ इतिवत्। कृष्णः कृष्णसारः। तस्य स्त्री कृष्णा, तस्याः। बस्तः छागः। यमः– 'सर्वेषां रौरवाजिनम्' इति। तदेतत् 'इतरासंभवे' इति शेषपूरणेन व्याख्येयम्। स्मृतिः– 'मेखला सप्तहस्ता स्यादजिनं च द्विहस्तकम्। बहिर्लोम त्र्यङ्गुलं च अखण्डं वा त्रिखण्डकम्। चतुर्विंशाष्टषोडशाङ्गुलैः खण्डानि कारयेत्॥' इति। विकल्पः शक्त्यपेक्षया कुलकल्पापेक्षया वा। मृदुला.

§[1]एतेनैवेतराणि द्रव्याणि व्याख्यातानि॥

एतेनैवानुसारेण इतराणि अजिनवसन(? रशना)-दण्डाख्यानि व्याख्यातानि त्रयाणां यथाक्रमेणोक्तानि। तथा च ऐणेयमजिनं मौञ्जी रशना पार्णो दण्डश्च ब्राह्मणस्य, रौरवमजिनं काशी रशना बैल्वो दण्डश्च क्षत्रियस्य, आजमजिनं शाणी रशना आश्वत्थो दण्डश्च वैश्यस्येति सिद्धम्। मृदुला.

†[2]अलाभे वा सर्वाणि सर्वेषाम्॥

## जैमिनिगृह्यसूत्रम्

प्रतिवर्णं भिन्नं सर्ववर्णसाधारणं चाजिनम्

[3]ब्राह्मणस्यैणेयमुत्तरं रौरवं राजन्यस्याऽऽजं वैश्यस्यैणेयं वा सर्वेषाम्॥

## वैखानसगृह्यसूत्रम्

प्रतिवर्णं भिन्नमजिनम्

[4]ब्राह्मणस्य...... कृष्णमृगस्याजिनम्॥

क्षत्रियस्य...... रौरवमजिनम्॥

वैश्यस्य...... बास्तवमजिनम्॥

## गृह्यसूत्रम्

चर्मणामुत्तरीयत्वम्

[5]चर्माण्युत्तरीयाणि॥

## गौतमः

वर्णभेदेनाजिनानि

[6]कृष्णरुरुबस्ताजिनानि॥

---

‡ पारस्करसूत्रे वीमिव्याख्याने टिप्पणी द्रष्टव्या।

¶ यदि कार्ष्णपार्थशब्दयोः 'तस्येदम्' इत्यणा सिद्धयोः कृष्णा-पृथासंबन्धियत्किंचिद्वस्तुवाचकत्वमभिप्रेतं तदा दृष्टान्तदार्ष्टान्तिकयोरानुगुण्यम्, किंतु न तदा दृष्टान्ते स्वारस्यम्, स्त्रीप्रत्ययान्तादौत्सर्गिकीं प्रत्ययोत्पत्तिमपोद्य विशेषशास्त्रेण प्रत्ययान्तरोत्पत्तेरेव स्वरसतो दृष्टान्तापेक्षत्वात्। न प्रकृते तथाऽस्ति, कार्ष्णपार्थशब्दयोः संबन्धाण औत्सर्गिकत्वात्। यदि तु 'स्त्रीभ्यो ढक्' इत्यपत्याधिकारस्थढगपवादेन शिवाद्यणा कार्ष्णपार्थशब्दयोः सिद्धिरभिप्रेता तदा अजिनस्य कृष्णानपत्यत्वेन सामान्यविशेषोभयशास्त्राविषयत्वात् कार्ष्णशब्दासिद्धिः, 'कृष्णाया इदम्' इति संबन्धार्थाभिनयो व्यर्थः, दृष्टान्तवैगुण्यं च। अपि च, अग्रे 'तस्य स्त्री कृष्णा' इति पुंयोगोक्तिः प्रामादिकी, पुंयोगे 'कृष्णी' इति रूपापत्तेः। कृष्णगुणविशिष्टस्त्रीत्वेन निमित्तेनादन्तत्वाट्टाबिति वस्तुस्थितिः।

§ वसनविषये यथावर्णक्रमव्यवस्थोपदेशेनैवेत्यर्थः।

† व्याख्यानं वस्त्रप्रकरणे द्रष्टव्यम्।

(१) गोगृ. २।१०।१३ ; संर. १९४.

(२) गोगृ. २।१०।१४. शेषस्थलादिनिर्देशा वस्त्रप्रकरणे द्रष्टव्याः. (३) जैगृ. १।१२. (४) वैगृ. २।४.

(५) गोरा. २।४१ ; ममु. २।४१.

(६) गौध. १।१८ ; विश्व. १।२९ ; मभा. ; गौमि. १।१६ ; स्मृच. २८ ; संप्र. ४१३ ; मुक्ता. ९३ ; आम. १५६.

(१) अजिनशब्दः प्रत्येकमभिसंबध्यते। कृष्णः कृष्णमृगः, रुरुः पृषन्मृगः, बस्तः प्रसिद्धः। एतानि क्रमेणोत्तरीयाणि। तथा च स्मृत्यन्तरम्— 'अजिनमेवोत्तरीयं धारयेयुः' इति। 　　मभा.

(२) बस्तः छागः। 　　* गौमि.

(३) रुरुः गौरमृगः। 　　$ स्मृच. २८

## वृद्धहारीतः

ऐणेयमुत्तरीयम्

[1]ऐणेयमुत्तरीयं स्याद्वनस्थब्रह्मचारिणाम्॥

## बौधायनः

प्रतिवर्णं भिन्नमजिनम्

[2]कृष्णरुरुबस्ताजिनान्यजिनानि॥

## आपस्तम्बः हिरण्यकेशिधर्मसूत्रं च

प्रतिवर्णं भिन्नमजिनम्, उत्तरीयकृष्णाजिने ब्राह्मणस्याऽऽसनशयनयोर्निषेधः, सार्ववर्णिकमजिनम्, वस्त्राजिनधारणफलानि, अजिनधारणनियमः

[3]हारिणमैणेयं वा कृष्णं ब्राह्मणस्य॥

[4]कृष्णं चेदनुपस्तीर्णासनशायी स्यात्॥

(१) ऐणेयं एणीसमुद्भवम्। एणी गौरमृगी। यदा हारिणं तदा कृष्णम्। तच्च नोपस्तीर्य आसीत शयीत वा। 　　† ब्रक.

(२) एतान्युत्तरीयाणि। 'बस्ताजिनम्' इति वक्ष्यमाणत्वात् इहाप्यजिनमिति गम्यते। 'अजिनमुत्तरमुत्तरया' (आपगृ. १०।११) इत्युपनयने यदजिनमुक्तं धार्यं तद्धारिणं ब्राह्मणस्य। हरिणो मृगः, तस्य विकारः हारिणम्। ऐणेयं वा कृष्णम्। एणी मृगी, तस्या विकार ऐणेयम्। एण्या ढञ्। द्विविधा एण्यः कृष्णाश्च गौराश्च। अतो विशेष्यते— कृष्णमैणेयमिति। अस्मिन्पक्षे विशेषमाह— कृष्णमिति। कृष्णं चेद्बिभृयात्, न हारिणम्, ततस्तस्मिन्नुपस्तीर्णे नाऽऽसीत, न च शयीत। अयं तावदर्थः। शब्दनिर्वाहस्तु 'अधासनशायी' (आध. १।२।२१) इत्यत्र कृतः †। 　　§ उ.

[1]रौरवं राजन्यस्य॥

बस्ताजिनं वैश्यस्य॥

रुरुः बिन्दुमान्मृगः। बस्तः छागः। 　　$ उ.

आविकं सार्ववर्णिकम्॥

(१) आविकं मेषचर्म। सार्ववर्णिकं जातिसंबन्धम्। 　　¶ ब्रक. १०९

(२) अविः ऊर्णायुः। स एवाऽऽविकः। तस्य चर्म आविकम्, तत् सर्वेषामेव वर्णानाम्। अस्य हारिणादिभिर्विकल्पः। 　　§ उ.

[2]कम्बलश्च॥

अयमप्याविक एव। प्रावरणमेव सर्वेषाम्। 　　§ उ.

[3]'ब्रह्मवृद्धिमिच्छन्नजिनान्येव वसीत, क्षत्रवृद्धिमिच्छन् वस्त्राण्येव, उभयवृद्धिमिच्छन्नुभयम्' इति हि ब्राह्मणम्॥

---

* शेषं मभावत्। मुक्ता. गौमिवत्।

$ शेषं गौमिवत्।

† संप्र. ब्रकवत्।

(१) बृहास्मृ. ८।४८. 　(२) बौध. १।३।१५.

(३) आध. १।३।३; हिध. २६।१।७५; ब्रक. १०९; मनु. २।४१ कृष्णं (कार्ष्णं); मभा. २।४१; संप्र. ४१२; संकौ. १२३; बाल. १।२९ पृ. १५१; संर. १९१.

(४) आध. १।३।४; हिध. २६।१।७६; ब्रक. १०९; संप्र. ४१२ र्णासनशा (र्याऽऽसीताधःशा); संर. १९१.

† एवं पूर्वोक्तशब्दनिर्वाहस्यातिदेशात् 'शयनं शायः। आसनं च शायश्च आसनशायौ। उपस्तीर्णौ तौ उपस्तीर्णासनशायौ। तौ स्तो यस्य स उपस्तीर्णासनशायी। तद्भिन्नोऽनुपस्तीर्णासनशायी' इति शब्दनिर्वाह उक्तो भवति।

§ संर. उज्ज्वलानुवादः।

$ संप्र. उज्ज्वलागतम्। संर. उज्ज्वलानुवादः।

¶ संप्र. ब्रकागतम् उगतं च।

(१) आध. १।३।५-७; हिध. २६।१।७७-७९; ब्रक. १०९; संप्र. ४१२; संर. १९१.

(२) आध. १।३।८; हिध. २६।१।८०; ब्रक. १०९; संप्र. ४१२.

(३) आध. १।३।९; हिध. २६।१।८१; ब्रक. १०९.

'काषायं चैके वस्त्रमुपदिशन्ति' इत्यारभ्य वासांस्यजिनानि च विहितानि। तत्र कामवशेन विशेषमाह– ब्रह्मेति। ब्रह्मवृद्धिः ब्राह्मणवृद्धिः, क्षत्रवृद्धिः क्षत्रियवृद्धिः। उ.

[1]अजिनं त्वेवोत्तरं धारयेत्॥

(१) उत्तरम् उत्तरीयम्। §ब्रक. १०९

(२) अथ स्वपक्षमाह– अजिनमिति। उत्तरम् उत्तरीयम्। तदजिनमेव धारयेत्। उ.

(३) अजिनं कृष्णाजिनमित्यर्थः। उत्तरम् उत्तरीयम्। आन. १५६

## वसिष्ठः

प्रतिवर्णं भिन्नमजिनम्

[2]कृष्णाजिनमुत्तरीयं ब्राह्मणस्य, रौरवं क्षत्रियस्य, गव्यं बस्ताजिनं वा वैश्यस्य॥

## विष्णुः

वर्णभेदेनाजिनभेदः

[3]मार्गवैयाघ्रबास्तानि चर्माणि॥

## शङ्खः

वर्णभेदेनाजिनभेदः

[4]मार्गवैयाघ्रबास्तानि चर्माणि ब्रह्मचारिणाम्॥

[5]कृष्णरुरुबस्ताजिनान्युत्तरीयाणि॥

## मनुः

वर्णभेदेनाजिनभेदः

[1]कार्ष्णरौरवबास्तानि चर्माणि ब्रह्मचारिणः।
वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च॥

(१) कृष्णशब्दो यद्यपि कृष्णगुणयुक्तवस्तुमात्रे वर्तते 'कृष्णा गौः, कृष्णः कम्बलः' इति, तथापीह स्मृत्यन्तराद्रौरवसाहचर्याच्च मृग एव प्रतीयते। रुरुः मृगजातिविशेषः। बस्तः छागः। सर्वत्र विकारेऽवयवे वा तद्धितः। कृष्णाजिनं ब्राह्मणः, रुरुचर्म क्षत्रियः, वैश्यश्छागचर्म वसीरन् आच्छादयेयुः। शणक्षुमोर्णाः, तत्र (? ताभिः) कृतानि च वस्त्राणि। चशब्दः समुच्चये। तत्रानुत्तरीयाणि शाणादीनि, चर्माण्युत्तरीयाणि, औचित्यात्। कौपीनाच्छादनानि च वस्त्राणि। आनुपूर्व्येण। नैकैकस्य सर्वैरभिसंबन्धः, नापि व्युत्क्रमेण। प्रथमस्य ब्रह्मचारिणः प्रथमेन चर्मणा वस्त्रेण च संबन्धो द्वितीयस्य द्वितीयस्थानस्थेन। तथा च दर्शितम्§। ननु चान्तरेणापि वचनं लोकत एवैतत्सिद्धम्। 'चूर्णिताक्षिप्तदग्धानां वज्रानिलहुताशनैः' इति यथाक्रमं संबन्धप्रतिपत्तिः– चूर्णिताः वज्रेण, आक्षिप्ताः अनिलेन, दग्धाः अग्निनेति। उच्यते– भवेदेतदेवं यदि भेदेन निर्देशः स्यात् समसंख्या(? ख्य)त्वं च। इह तु 'ब्रह्मचारिणः'

---

§ संप्र., मुक्ता. ब्रकवत्।

(१) आश्व. १।३।१०; हिध. २६।१।८२; विश्व. १।२९ (अजिनमेवोत्तरीयं धारयेयुः); ब्रक. १०९; ममा. १।१८ विश्ववत्, स्मृत्यन्तरम्; मवि. १।४१ (धारयेत्०); संत. ९३४ (अजिनमुत्तरीयम्); मुक्ता. ९४; आन. १५६ त्वेवो (चैवो); बाल. १।२९ पृ. १५१.

(२) वस्मृ. ११।४८; पमा. ४४६–४४७ क्षत्रिय (राजन्य); प्रपा. २२१ पमावत्; संप्र. ४१३ क्षत्रियस्य, गव्यं (राजन्यस्य, आव्यं); चम. २३ पमावत्; बाल. १।२९ पृ. १५१ पमावत्.

(३) विस्मृ. २७।२०; ब्रक. ११०; संप्र. ४१३; संग. ६७०. (४) शंस्मृ. २।९.

(५) विश्व. १।२९ (=) (उत्तरीयाणि०); स्मृच. २९ (जिना०); पमा. ४४६; प्रपा. २२१; संप्र. ४१३; चम. २३; मुक्ता. ९४; संम. २५; सिन्धु. ९५४ (कृष्णरुरुबस्तान्यजिनानि); बाल. १।२९ पृ. १५१.

§ तथापदार्थस्य पूर्वमदर्शितत्वादितः स्थानात् तदर्थदर्शकं किमपि स्मृत्यन्तरवचनं प्रभ्रष्टमिति भाति।

(१) मस्मृ. २।४१; अप. १।२९ पृ. ५७; ब्रक. १०९; मवि. पूर्व्ये (पूर्वे); स्मृच. २९ उत्त.; स्मृसा. ५ पू.; पमा. ४४६; मपा. २० मविवत्, उत्त.: २२ पू.; प्रपा. २२१; मर. ६ पू.; दीक. १।२९–३०; वीमि. १।२९; संप्र. ४११ उत्त.: ४१३ पू.; चम. २३: २४ उत्त.; मुक्ता. ९३ पू.: ९४ उत्त.; संम. २५; संकौ. १२३ उत्त.; बाल. १।२९ पृ. १५१; संग. ६६१ मविवत्, उत्त.; कुम. ९५४.

इत्येकशब्दोपादानान्न क्रमोऽवगम्यते । अयश्च ब्रह्मचारिणः, षडनुदेशिनः– त्रीणि चर्माणि त्रीणि वस्त्राणि । आनुपूर्व्यग्रहणे तु सति वाक्यान्तरोपात्तः क्रम आश्रीयते । तथा च चर्मभिः संबध्य पुनर्ब्रह्मचारिपदमावर्त्य वासोभिः संबध्यते । ततः संख्यासाम्यसिद्धिः । ईदृश एव विषये भगवता पाणिनिना यत्नः कृतः 'यथासंख्यमनुदेशः समानाम्' (पा. १।३।१०) इति ।

§ मेधा.

(२) कृष्णः कृष्णसारः । ‡ स्मृसा. ५

(३) रुरुः बहुशृङ्गो मृगः । ‡ दीक. १।२९

(४) रुरुः चित्रमृगः । $ मर. ६

(५) रुरुः व्याघ्रः । 'रुरुर्नखबिलकृत्' इति क्रमदीपिकायाम् । ‡ मच.

(६) कृष्णाया इदं कार्ष्णम् । कृष्णा एणी । रुरोरिदं रौरवम् । रुरुः गौरमृगः झषाब इति प्रसिद्धः ।

‡ वीमि. १।२९

(७) रुरुः पृषतमृगः । ‡ नन्द.

(८) शाणक्षौमाविकानि पक्षान्तरे पूर्वेषामलाभे वसीरन् आच्छादयेयुः । ‡ भाच.

## बृहस्पतिः

प्रतिवर्णं भिन्नं सर्ववर्णसाधारणं चाजिनम्

[१]**ब्राह्मणस्याजिनं कार्ष्णं रौरवं क्षत्रियस्य च ।**
**बस्ताजिनं तु वैश्यस्य सर्वेषां वा गवाजिनम् ॥**

§ गोरा., मवि., ममु., पमा., मपा., प्रपा., चम., संम., बाल. मेधागतम् ।

‡ शेषं मेधागतम् ।

$ शेषं स्मृसावत् ।

(१) स्मृच. २८ च (तु) उत्तरार्धे (बास्तं वैश्यस्य वासांसि शाणक्षौमाविकानि च ॥); संप्र. ४१४ उत्तरार्धे स्मृचवत्; मुक्ता. ९४ च (तु).

## यमः

वर्णभेदेन भिन्नं सर्ववर्णेष्वभिन्नं चाजिनम्

[१]**कृष्णाजिनं ब्राह्मणस्य रौरवं क्षत्रियस्य तु ।**
**बस्ताजिनं तु वैश्यस्य सर्वेषां रौरवाजिनम् ॥**

(१) सर्वेषां रौरवाजिनम् । इतरचर्म (यदा) न संभवतीति शेषः । ¶ ब्रक. ११०

(२) एतान्युत्तरीयाणि, 'कृष्णरुरुबस्तान्युत्तरीयाणि' इति शङ्खस्मरणात् । स्मृच. २९

[२]**सर्वेषां वा रौरवाजिनम् ॥**

इतरासंभवे इति शेषः । ‡ स्मृसा. ५

## भरद्वाजः

प्रतिवर्णं भिन्नमजिनम्, अजिनदोषाः

[३]**कृष्णसाररुरुबस्तानामजिनं क्रमशः स्मृतम् ।**
**विप्रक्षत्रियवैश्यानां बटूनां धारणाय च ॥**
**निर्लोमं प्राकनं दष्टं प्राणिभिर्मूषिकादिभिः ।**
**उपयुक्तं धृतं दग्धमधार्यमजिनं स्मृतम् ॥**

## बृहत्पराशरः

प्रतिवर्णं भिन्नमजिनम्

[४]**कार्ष्णं च रौरवं बास्तमजिनानि द्विजन्मनाम् ॥**

## पैठीनसिः

प्रतिवर्णं भिन्नमजिनम्

[५]**कृष्णरुरुपृषतानामजिनानि ॥**

¶ वीमि. ब्रकवत् ।

‡ संग. स्मृसावत् ।

(१) ब्रक. ११०; गृक. १४५ रौरवं (वैयाघ्रं) चतुर्थचरणे (शाणं क्षौमं च सर्वतः); स्मृच. २९ यस्य तु (यस्य च); गृर. ११४ तु वै (च वै) शेषं गृकवत्; वीमि. १।२९ चतुर्थपादमात्रम्; संप्र. ४१३–४१४; संग. ६७०.

(२) स्मृसा. ५; चम. २४; सिन्धु. ९५४ (सर्वेषां वा रौरवम्); बाल. १।२९ पृ. १५१; संग. ६७०.

(३) प्रपा. २४०.

(४) बृपसं. ६।१५४.

(५) ब्रक. ११०; संप्र. ४१३.

## आश्वलायनः

प्रतिवर्णमजिनभेदः, अजिनधारणफलम्

[1]विप्रस्य....... तस्य मृगाजिनम् ॥

....... क्षत्रियस्य ... स्याद्रौरवाजिनम् ॥

वैश्यस्य...... तस्याप्यजाजिनम् ॥

[2]प्रतिमां लक्ष्मसिद्ध्यर्थे मृगाजिनमिहेष्यते ॥

## स्मृत्यन्तरम्

मुख्यामुख्यकल्परूपाण्यजिनप्रमाणानि, अजिनमुत्तरीयम्

§[3]त्र्यङ्गुलं तु बहिर्लोम यद्वा स्याच्चतु-
रङ्गुलम् ।
अजिनं धारयेद्विप्रश्चतुर्विंशाष्टषोडशैः ॥

[4]उत्तरीयं समाख्यातं वासः कृष्णाजिनं शुभम् ॥
...... अजिनं च द्विहस्तकम् ।
बहिर्लोम त्र्यङ्गुलं च खण्डं वाऽथ त्रिखण्ड-
कम् ॥

चतुर्विंशाष्टषोडशाङ्गुलैः खण्डानि कारयेत् । विकल्पः शक्त्यपेक्षया कुलाचारापेक्षया वा । वीमि. १।२९

## अग्निपुराणम्

वर्णभेदेन भिन्नान्यजिनानि

[5]मार्गवैयाघ्रबास्तानि चर्माणि ब्रह्मचारिणाम् ॥

बस्तः छागः । ‡ चम. २४

## स्मृत्यर्थसारः

प्रतिवर्णभिन्नमजिनम्

[1]कार्ष्णरौरवबास्तानि विप्रादेरजिनानि तु ॥

## शाकलकारिका:

अजिनप्रमाणेऽनुकल्पाः

[2]अजिनं संधितं चैव चतुर्विंशाङ्गुलायतम् ।
त्र्यङ्गुलं च बहिर्लोम धारयेदुपवीतवत् ॥

[3]अखण्डं वा त्रिखण्डं वाऽष्टाचत्वारिंश-
दङ्गुलम् ।
चतुरङ्गुलविस्तीर्णं धारयेदजिनं सदा ॥

(१) खण्डत्रयपरिमाणमुक्तं स्मृत्यन्तरे– ' अङ्गुलं तु बहिर्लोम यद्वा स्याच्चतुरङ्गुलम् । अजिनं धारयेद्विप्रश्चतुर्विंशाष्टषोडशैः ॥ ' इति । चतुर्विंशाङ्गुल एकः खण्डः । अष्टाङ्गुलो द्वितीयः । षोडशाङ्गुलस्तृतीयः । त्रिभिः स्यूतैरष्टाचत्वारिंशदङ्गुलं परिमण्डलं संपद्यते ।

* संप्र. ४१४

(२) प्रावरणपर्याप्तोत्तरीयार्थाजिनासंभवे शाकलः– अखण्डमिति । अत्र परिषीवणार्थं किंचिदधिकं ग्राह्यम्, अन्यथाऽष्टाचत्वारिंशदङ्गुलमजिनं धार्यमित्यनेन विरोधापत्तेः । अत्राङ्गुलानि संस्कार्यस्य ग्राह्याणि ।

‡ संर. १९१–१९२

## रेणुकारिका:

प्रतिवर्णं भिन्नं सार्ववर्णिकं चाजिनम्,
अजिनमानेऽनुकल्पाः

[4]ब्राह्मणस्याजिनं कार्ष्णं रौरवं क्षत्रियस्य तु ।
आजं वैश्यस्य गव्यं वा उत्तरीयाणि तानि तु ॥

---

§ अस्य व्याख्यानं शाकलकारिकायां द्रष्टव्यम् ।

‡ बाल. चमवत् ।

(१) आश्वस्मृ. २।३७–४०.

(२) आश्वस्मृ. ११।१२७ ; प्रपा. २२७ लक्ष्म (ब्रह्म) ; संप्र. ४३७ लक्ष्म (लक्ष्य).

(३) गभा. २०३ प्रयोगरत्ने ; प्रर. ८३ (=) तु (च) ; संप्र. ४१४ त्र्यङ्गुलं (अङ्गुलं) ; संकौ. १२३ ; संर. १९१.

(४) वीमि. १।२९.

(५) चम. २४ ; बाल. १।२९ पृ. १५१.

* संकौ., संग. संप्रवत् ।

‡ शेषं संप्रवत् ।

(१) स्मृसार. ५.

(२) शाका. ३८ पृ. ४.

(३) संप्र. ४१४ ; संकौ. १२३ वाऽष्टा (वाऽष्ट) ; संग. ६७० ; संर. १९१. संस्कारप्रकाशादिसर्वेषु ग्रन्थेषु ' शाकलः ' इत्येव निर्देशः.

(४) रेका. १२०–१२२ पृ. २८.

कार्ष्णाद्यभावे सर्वेषां गव्यं वा तत्प्रधानतः ।
प्राधान्यं पुरुषस्योक्तं गव्यत्वच्यध्वरश्रुतौ ॥

[1]तत्र्यङ्गुलं बहिर्लोम यद्वा स्याच्चतुरङ्गुलम् ।
एकखण्डं त्रिखण्डं वा धार्यं तदुपवीतवत् ॥

---

(१) रेका. १२२–१२३ पृ. २८ ; संग. ६७० ( अङ्गुलं तु बहिर्लोम यद्वा स्याच्चतुरङ्गुलम् । अजिनं धारयेद्द्विप्रश्चतुर्विंशाष्टषोडशैः ॥ ) ; संवी. ७६ (भागः २) कारिकायां प्रयोगरत्ने च .

# § यज्ञोपवीतम्

## गोभिलगृह्यसूत्रम्

यज्ञोपवीते मुख्यामुख्यकल्पाः

**'यज्ञोपवीतं कुरुते सूत्रं वस्त्रं वाऽपि वा कुशरज्जुमेव ॥**

( १ ) अत्र सूत्रमिति मुख्यः पक्षः । अरण्यादौ तदलाभे वस्त्रं चौराद्युपहृतौ तस्याप्यभावे कुशरज्जुमिति उत्तरोत्तरमभावविधिरिति निबन्धारः । निगमपरिशिष्टम्— 'वाससा यज्ञोपवीतानि कुर्यात्तदभावे त्रिवृता सूत्रेण कुशमुञ्जवालप्रतिसररज्जुभिर्वा' । वालोऽत्र गोवालः, 'कार्पासक्षौमगोवालशरवल्कतृणोद्भवम् । सदा संभवतो धार्यमुपवीतं द्विजातिभिः ॥' इति देवलसंवादात् । शरगोवालादिषु नवगुणत्रिसरत्वादिनियमो नास्ति, सूत्र एव तदुपदेशात् । अवघातादयस्तु व्रीहिधर्मत्वात्तत्कार्यकारिष्वपि क्रियन्ते, गुणादयस्तु यज्ञोपवीतान्तर्गता एव, न तु धर्मा इति टीकाकारः । 'तदभावे त्रिवृता सूत्रेण' इत्येकस्याभिधानमिति न गोभिलादिविरोध इति बहवः । कल्पतरुकृतस्तु 'यज्ञोपवीतपदमुत्तरीये गौणं तद्धर्मविन्यासविशेषप्राप्त्यर्थम्' इत्याहुः । एवं व्याख्याने त्रिवृत्सूत्रादयोऽप्युत्तरीयप्रतिनिधय एव । तथा च कात्यायनः— 'तृतीयमुपवीतं वा योगपट्टं वा कुशरज्जुं वा सूत्रं वा परिधानस्योत्तरार्धे चोत्तरीयं कुर्यात्' इति ।

वीमि. १।२९

( २ ) यद्यप्येषु वाक्येषु \$असंभवयथासंभववाशब्दाः श्रूयन्ते तथाप्येषां कल्पानां मुख्यासंभवविषयत्वमेव द्रष्टव्यम्, न तुल्यबलत्वम्, कार्पासादीनामुत्पत्तिवाक्यशिष्टत्वेन बलवत्त्वात् । § संप्र. ४१५–४१६

( ३ ) पूर्वं 'यज्ञोपवीतिनाऽऽचान्तोदकेन च कृत्यम्' ( गोगृ. १।१।२ ) इत्यनेन यज्ञोपवीताचमनयोः कर्माङ्गतोक्ता । अथेदानीं तदुभयमपि क्रमेण व्याचिख्यासुः शिष्यानुजिघृक्षया यज्ञोपवीतं तावदाह— यज्ञोपवीतमिति । कुरुत इति विधौ लेट् । कुर्वीत धारयेदित्यर्थः । कीदृशं तदित्याह— सूत्रं सूत्रनिर्मितम् । तच्च नवभिस्तन्तुभिस्त्रिवृद् भवति । तथा च— 'त्रिवृदूर्ध्ववृतं कार्यं तन्तुत्रयमधोवृतम् । त्रिवृतं चोपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते ॥'

---

§ अत्र वर्णभेदेनोपवीतभेदाः मुख्यामुख्यकल्पाः धारणफलं चेत्येतावन्त एव विषयाः संगृहीताः । यज्ञोपवीतलक्षण-निर्माणप्रकारादयो विषया वर्णाश्रमधर्मकाण्डे संग्रहीष्यन्ते ।

\$अत्र असंभवयथासंभवशब्दविषये इदं विचार्यम्— प्रकाशे पूर्वोदाहृतवाक्येषु देवलवाक्ये 'सदा संभवतो धार्यम्' 'सदाऽसंभवतो०' 'यथासंभवतो०' इति त्रयः पाठाः समुपलभ्यन्ते । तत्र प्रथमः पाठः प्रकाशे मुद्रितः । उदाहृतवाक्यान्तरेषु कुत्रापि संभवासंभवयथासंभवान्यतमः शब्दः पाठभेदेनापि नोपलभ्यते । तथा च मुद्रितप्रकाशग्रन्थमनुरुध्योदाहृतवाक्येषु कुत्राप्यसंभवशब्दो यथासंभवशब्दश्च नास्ति, यमाश्रित्य मुख्यामुख्यकल्पत्वमतुल्यबलत्वं चात्र प्रतिपाद्यते । नाप्यत्रासंभवशब्दोपादानादेव प्रथमपाठमुद्रणं प्रामादिकं मत्वा द्वितीयो देवलपाठ एव प्रकाशाभिमत इति कल्पनाया अवसरः, असंभवशब्दस्य मुख्यामुख्यकल्पत्वातुल्यबलत्वयोर्बोधकत्वेन प्रकाशवाक्ये तदुपादानस्य वाक्यार्थविरुद्धत्वात् तद्बलेन तादृशपाठकल्पनाया असंभवात् । अत एव प्रकाशानुवादके संस्कारगणपतावत्रासंभवशब्दस्थाने संभवशब्दोपलम्भाच्चात्र प्रकाशवाक्येऽकारं प्रामादिकं मत्वा संभवशब्दकल्पनैव साधीयसी । तथा सति देवलवाक्ये प्रथमः पाठस्तृतीयः पाठो वा प्रकाशाभिमत इति संदिह्यते । तत्र प्रथमपाठे यथासंभवशब्दघटितं किंचिदुदाहृतवाक्यमुच्छिन्नमिति वा प्रकाशवाक्ये यथासंभवशब्दमुद्रणं प्रामादिकम्, वस्तुतः स शब्दो नास्त्येवेति वा कल्पनीयम्, तृतीयपाठे संभवशब्दघटितं वाक्यमुच्छिन्नमिति वा संभवशब्दोऽत्र नास्तीति वा कल्पनीयम्, पाठभेदेन वैकल्पिकयोः संभवयथासंभवशब्दयोरत्रोपादानमिति वा कल्पनीयमिति ।

(१) गोगृ. १।२।१. शेषस्थलादिनिर्देशाः कर्मपरिभाषाप्रकरणे ( सं. का. पृ. ११३१ ) द्रष्टव्याः ।

§ संग. संप्रवत् ।

इति कर्मप्रदीपोक्तलक्षणमित्यर्थः । अत्र मनुः— 'कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत् । शणसूत्रमयं राज्ञो वैश्यस्याऽऽविकसौत्रिकम् ॥' ( मस्मृ. २।४४ ) । इति चैवमादि स्मृत्यन्तरेभ्योऽवगन्तव्यम् । त्रिवृदिति नवगुणं सूत्रनवकमित्यर्थः, 'नवैव त्रिवृत्' इति श्रुतेः । तथा च देवलः— 'यज्ञोपवीतं कुर्वन्ति सूत्रेण नवतन्तुकम्' इति । मुख्यश्चायं पक्षः, इह वाशब्दाभावात्, उत्तरत्र वाशब्दाम्नानात् । वस्त्रं वा । वाशब्दोऽभावविकल्पार्थः, अरण्यादावुपवीतनाशे सूत्रलाभासंभवात् । तद्यज्ञोपवीतं कुरुते । अन्यथा ह्युपवीतस्य मेहनादावनर्थः स्यात्, उद्भूतमूत्रपुरीषक्षुत्पिपासादिवेगस्य क्षणमपि स्थातुमशक्यत्वात्, 'पिबतो मेहतश्चापि भुञ्जतोऽनुपवीतिनः । प्राणायामत्रिकं षट्कं नवकं च क्रमान्मतम् ॥' इति स्मरणात् । अपिवा अथवा चौरादिभिररण्यादौ वस्त्रस्याप्यपहारे कुशरज्जुमेव यज्ञोपवीतं कुरुते । एवकारोऽत्र सदोपवीतित्वनियमार्थः । अन्यथा कर्माधिकार एवाऽऽम्नानात्कर्माङ्गमेव यज्ञोपवीतमिति मन्यमानः 'कर्मण्येवोपवीती स्यात्, न सदैव' इति वदेत् । तच्च नो युज्यते । तथा चोक्तं मनुकात्यायनाभ्याम्— 'सदोपवीतिना भाव्यं सदा बद्धशिखेन च । विशिखो ह्युपवीतश्च यत्करोति न तत्कृतम् ॥' ( कास्मृ. १।४ ) इति । अस्य लम्बत्वप्रमाणमाह मनुः— 'पृष्ठवंशे च नाभ्यां च धृतं यद्विन्दते कटिम् । तद्धार्यमुपवीतं स्यान्नातो लम्बं न चोच्छ्रितम् ॥' इति । इदं च वामस्कन्धे धृत्वा परिमेयम् । अत्र स्मृत्यर्थसारे— 'विच्छिन्नं वाऽप्यधोयातं भुक्त्वा निर्मितमुत्सृजेत् ।' । मनुः— 'मेखलामजिनं दण्डमुपवीतं कमण्डलुम् । अप्सु प्राप्य विनष्टानि गृह्णीतान्यानि मन्त्रवत् ॥' ( मस्मृ. २।६४ ) इति । मन्त्रवत् समन्त्रकम् । मन्त्रश्चात्र उपनयनप्रकरणे दर्शयिष्यते ।

मृदुला.

## निगमपरिशिष्टम्

यज्ञोपवीतानुकल्पाः

¶[1]वाससा यज्ञोपवीतानि कुरुते तदभावे त्रिवृता सूत्रेण कुशमुञ्जबालत्वक्शणरज्जुभिर्वा ॥

## वृद्धहारीतः

यज्ञोपवीतानुकल्पः

[2]सर्वेषामप्यलाभे तु कुर्यात्कुशमयं द्विजः ॥

## बौधायनः

यज्ञोपवीतप्रकृतिद्रव्यविकल्पः

[3]कौशं सौत्रं वा... यज्ञोपवीतम् ॥

( १ ) कौशं कृमिकोशोद्भवम्, पट्टसूत्रमयमिति यावत् । तथा च आदित्यपुराणे— 'क्षौमजं वाऽथ कार्पासं पट्टसूत्रमथापि वा । दध्याद्यज्ञोपवीतं यो न तं हिंसन्ति वायसाः ॥' इति । सौत्रं कार्पासम् । .

ब्रक. १०७

( २ ) 'कौशं कृमिकोशोद्भवम्, पट्टसूत्रमयमिति यावत्' इति कल्पतरुः । वस्तुतस्तु कौशं कुशपत्रनिर्मितम् । तथा च गोभिलः— 'यज्ञोपवीतं कुरुते सूत्रं वस्त्रं कुशरज्जुं वा' इति । सौत्रं कार्पासम् । देवलः— 'कार्पासक्षौमगोवालशणवल्कतृणोद्भवम् । सदा संभवतो धार्यमुपवीतं द्विजातिभिः ॥' इति । $ संप्र. ४१५

## विष्णुः

वर्णभेदेन यज्ञोपवीतभेदः

[4]कार्पासशाणाविकान्युपवीतानि वासांसि च ॥

---

¶ अस्य वीमिव्याख्यानं गोभिलगृह्यसूत्रवचनव्याख्याने द्रष्टव्यम् ।

$ संग. संप्रवत् ।

(१) वीमि. १।२९ कुरुते (कुर्यात्) त्वक्शण (प्रतिसर) ; संप्र. ४१५ भिर्वा (मेव वा).

(२) वृहास्मृ. ८।४८.

(३) बौध. १।८।५. शेषस्थलादिनिर्देशाः कर्मपरिभाषाप्रकरणे ( सं. का. पृ. ११५३ ) द्रष्टव्याः .

(४) विस्मृ. २७।१९ शाण ( शण ) ; ब्रक. ११० (च०) ; संप्र. ४१४.

### शङ्खः

वर्णभेदेन यज्ञोपवीतभेदः

'यज्ञोपवीते कार्पासक्षौमोर्णानां यथाक्रमम् ॥

### मनुः

वर्णभेदेनोपवीतभेदः

'कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत् ।
शणसूत्रमयं राज्ञो वैश्यस्याऽऽविकसौत्रिकम् ॥

(१) यत्तु वर्णविशेषेण 'कार्पासमुपवीतं स्याद्विप्रस्य' इत्यादि, तज्जातुकर्णिवचनात् 'दीक्षितौ चेद्राजन्यवैश्यौ शाणाविके कुर्याताम्' इति दीक्षितविषयम् ।

विश्व. १।२९

(२) उपवीतशब्देन वासोविन्यासविशेष उच्यते । वक्ष्यति– 'उद्धृते दक्षिणे पाणौ' इति । तच्च धर्ममात्रम् । तस्य न कार्पासता संभवति । अतो धर्मेण धर्मी लक्ष्यते यस्यासौ विन्यासः । तत्कार्पासमुच्यते । अर्श आदित्वाद्वा मत्वर्थीयोऽकारः कर्तव्यः, उपवीतवदुपवीतमिति । ऊर्ध्ववृतं ऊर्ध्वां दिशं प्रति वर्त्यते वेष्ट्यते । त्रिवृत् त्रिगुणम् । कर्तनिष्पन्नाभ्यो लब्धसूत्रभावस्य त्रिगुणीकृतस्येदमूर्ध्वनिवर्तनं विधीयते । संहत्य तन्तुत्रयम् ऊर्ध्ववेष्टनेन रज्ज्वाकारं कृत्वा तेनोपवीतं कुर्वीत् । सा च रज्जुरेकैव धारयितव्या तिस्रः पञ्च सप्त वा । सत्रसंबन्धादि तद्यज्ञोपवीताख्यां लभते । यज्ञार्थोऽयमुच्यत इति भक्त्योपचर्यते । तत्रेष्टिपशुसोमानां यज्ञरूपत्वैकत्वादेकतन्तुकं क्रियते । अग्निचयसाध्यत्वाद्दहीनैकाहसत्रभेदाद्वा त्रितन्तुकम् । सोमसंस्थानां सप्तसंख्यत्वात् सप्त वा तन्तवः । त्रीणि सवनानि त्रिसंध्येन (१ द्विसंध्ये त्रीणि) इति पञ्च । सूत्राभावेऽपि पटादिनाऽपि कर्तव्यम् । स्मृत्यन्तर एवमुक्तम् । अविः मेषः, तस्य सूत्रम्, तेन कृतम् आविकसूत्रिकम् । अध्यात्मादित्वाट्ठञ् कर्तव्यः । 'अविकसूत्रिकम्' इति वा पठितव्यम् । तत्र च मत्वर्थीयेन ठना रूपसिद्धिः ।

मेधा.

(३) ऊर्ध्ववृतं दक्षिणावर्तवलितम् । ‡ गोरा.

(४) आविकसौत्रिकं ऊर्णासूत्रनिर्मितम् ।

व्रक. १०७

(५) उपवीतं ब्रह्मसूत्रं त्रिवृत् त्रिसूत्रकम् । तच्चोर्ध्ववृतं प्रदक्षिणवलितम् । तान्यपि सूत्राणि त्रिभिः सूत्रैः कृतानीति स्मृत्यन्तरसिद्धम् । तानि चाप्रदक्षिणवलितानि, सामर्थ्यात् । † मवि.

(६) आविकसूत्रिकं मेषरोमसूत्रनिर्मितम् ।

¶ स्मृसा. ५

(७) ऊर्ध्ववृतलक्षणमाह संग्रहकारः– 'करेण दक्षिणेनोर्ध्वगतेन त्रिगुणीकृतम् । वलितं मानवैः सूत्रं शास्त्र ऊर्ध्ववृतं स्मृतम् ॥' । ऊर्ध्वगतेन ऊर्ध्वस्थितेन दक्षिणकरेण यद्वलितं तदूर्ध्ववृतमित्यर्थः । § मपा. २१

---

(१) शंस्मृ. २।११.

(२) मस्मृ. २।४४ ; विश्व. १।२९ (=) (कार्पासमुपवीतं स्याद्विप्रस्य) एतावदेव ; मेधा. सौत्रि (सूत्रि) 'अविकसू' इत्यपि छेदः ; अप. १।२९ पृ. ५८ सौत्रि (सूत्रि) ; व्रक. १०७ ; उ. १।१५।१, २।४।२३ पृ. ; स्मृच. ३० द्वितीयपादे (ब्राह्मणस्य विशेषतः) सौत्रि (सूत्र) ; स्मृसा. ५ शण (शाण) सौत्रि (सूत्रि) ; पमा. ४४८ सौत्रि (सूत्र) ; मपा. २१ सौत्रिकम् (सूत्रजम्) ; प्रपा. २२३ मपावत् ; मर. ५ मपावत् ; वीक. १।२९–३० पमावत् ; गप. ८८ उत्तरार्धे (त्रिवृता ग्रन्थिनैकेन तस्यैको ग्रन्थिरिष्यते ॥) ; निप्र. ३१ गपवत् ; शूशि. ७४ पमावत् ; वीमि. १।२९ अपवत् ; संप्र. ४१४ मपावत् ; चम. २१ वृतं (कृतं) सौत्रि (सूत्र) ; मुक्ता. ९० स्मृसावत् ; संभ. २६ सौत्रिकम् (मुच्यते) ; सिन्धु. ९५५ पृ. ; विपा. १७० (भागः १।२) संभवत्, क्रमेण मनुः ; संको. १२३ पृ. ; आन. १५४ पृ. ; बाल. १।२९ पृ. १५२ पमावत् ; १।२९ पृ. १५५ पृ. ; संग. ६६४–६६५ मपावत् ; नन्द. अपवत् ; कृम. ९५५ संभवत्, उत्त. ; संर. १८७ पृ.

‡ शेषं मेधागतम् ।

† ममु. मविवत् । स्मृच., प्रपा., दीक., संप्र., संग. मविगतम् । आन. मविगतं मुक्तागतं च ।

¶ शेषं मविगतम् ।

§ संको. मपावत् ।

(८) ऊर्ध्ववृतं पूर्वं ऊर्ध्वाकारेण वृतं त्रिगुणितं यत्सूत्रं अधोवृतं त्रिवृत् तदेव त्रिवृत्कार्यम् । तदुक्तं छन्दोगपरिशिष्टे– 'ऊर्ध्वं तु त्रिवृतं कार्यं तन्तुत्रयमधोवृतम् । त्रिवृतं चोपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते ॥' इति । अतो नवगुणं प्राप्तम् । तथा च देवलः– 'यज्ञोपवीतं कुर्वीत सूत्राणि नव तन्तवः' इति । कार्पासवत् शणसूत्रादावपि ज्ञेयम् । मच.

(९) अथोपवीतम्– 'कार्पासमुपवीतं स्यात्' इत्यादि । विप्रस्य कार्पासम्, राज्ञः शणसूत्रमयम्, वैश्यस्य मेषलोमनिर्मितमुपवीतमित्यर्थः । उपवीतस्वरूपमाह– त्रिवृत् नवगुणम्, 'नव वै त्रिवृत्' इति श्रुतेः । तेन नवतन्तव उपवीतमिति लभ्यते । अत एव देवलः– 'यज्ञोपवीतं कुरुत सूत्राणि नव तन्तवः' । नवेति उपवीतप्रकृतिभूतसूत्रसंख्याकथनम् । सूत्राणीति वैकल्पिकक्षौमादिसूत्रबहुत्वापेक्षया बहुवचनम् । न केवलं नवतन्तुसमुदाय एवोपवीतमित्यभिप्रेरयन् (? प्रयन्) विशिनष्टि– ऊर्ध्ववृतमिति । उपलक्षणमेतत् । तथा च छन्दोगपरिशिष्टम्– 'उर्ध्वं तु त्रिवृतं कार्यं तन्तुत्रयमधोवृतम् । त्रिवृतं चोपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते ॥' । अत्र टीका– 'वामावर्तवलितं सूत्रमयं (? त्रयं) त्रिगुणीकृत्य दक्षिणावर्तवलितं च कार्यम् । तेन नव तन्तवः संपद्यन्ते । तदेव त्रिसरमुपवीतं स्यात् । तस्य च त्रिकस्यैको ग्रन्थिः' इति । एवं च यद्यपि कर्तकर्तौकार्यार्थमेव तन्त्ववयविनं भङ्क्त्वा त्रिगुणीकृत्याधोमुखं वर्तयित्वा पुनस्त्रिगुणीकृत्योर्ध्वमुखं वर्तयति (? न्ति), तथापि ग्रन्थिपातनानन्तरं नवसंख्यासिद्धये नवगुणं सूत्रमुभयतश्छिन्दन्ति । उपनयनकालीनोपवीते तु तदकरणं प्रमादादाचारानुसाराद्वेति स्मर्तव्यम् । ग्रन्थौ च त्रिपञ्चप्रवरापेक्षया त्रिपञ्चवारान् त्रिवृतां रज्जुमावर्तयन्ति, मनुना मेखलायां तदभिधानात्, 'एकत्र निर्णीतः ‡' इति न्यायादिति । तत्र भ्रमिर्दक्षिणावर्तेन, तस्यौत्सर्गिकत्वात् । न च प्रकृतिभूततन्तूनां नवसंख्यत्वे 'कार्पासमुपवीतं स्यात् षट्त्रिवृतं ब्राह्मणस्य' इति पैठीनसिविरोधः । नवगुणस्य त्रिसरत्वे 'एकेन ग्रन्थिना तन्तुर्द्विगुणस्त्रिगुणोऽपि वा' इति देवलीयद्विगुणत्वोक्तिविरोधश्चेति वाच्यम्, नवानां तन्तूनामसंभवे षट्कस्य, त्रिसरत्वासंभवे द्विसरत्वस्याऽऽश्रयणादिति । वीमि. १।२९

(१०) शणसूत्रमयं क्षौमम् । § चम. २१

(११) कार्पासविकारः कार्पासम् । सूत्रमिति यावत् । ऊर्ध्ववृतं सव्यहस्ततले न्यस्य दक्षिणहस्ततलेन ऊर्ध्ववर्तितम् । मुक्ता. ९०

(१२) आविकं अव्यूर्णासंभवम् । एवं च यदिदानींतनानां क्षत्रियवैश्यानां कार्पासोपवीतधारणं तत्र मूलं न विद्मः । $मदनरत्ने कात्यायनवचनम्– 'कार्पासक्षौमगोवालशणवल्कतृणोद्भवम् । तदाऽसंभवतो धार्यमुपवीतं द्विजातिभिः ॥' इति । असंभवतः असंभवात् । एवं कार्पासा (? कार्पासम) संभवे कार्यं (? धार्य)मित्युक्तं भवति, न तु पूर्वोक्तसंभवे इति ज्ञेयम् । † संम. २६

(१३) ऊर्ध्ववृतं सव्यहस्ततले विन्यस्य दक्षिणहस्ततलेनोर्ध्वमावर्तितम् । ऊर्ध्ववृतं त्रिवृदिति च शाणाविकसूत्रयोरपि प्रत्येकं विशेषणे । आविकसूत्रिकम्– अविभवम् आविकम्, रोमेति यावत् । सूत्रिकं सूत्रनिर्मितम् । अविरोमसूत्रनिर्मितमित्यर्थः । ¶ नन्द.

(१४) त्रिवृत् ऊर्ध्वं वृतं कार्यं तत् त्रिवृत् जातं तत् अधःसकाशात् तत् नवगुणं ऊर्ध्वं कार्यम् (इति) उदीच्यानां मतम् । अथ दाक्षिणात्यानां मतम्– पूर्वं तन्तुत्रयं अधोवृतं अधःसकाशात् ऊर्ध्वं कार्यम्, तत् त्रिवृतम् ऊर्ध्वं नवगुणम् अधः कार्यम् । ¶ भाच.

---

‡ 'शास्त्रार्थोऽन्यत्रापि तथा' इति शेषः ।

§ क्रम. चमवत् ।

$ एतदादिः 'इति ज्ञेयम्' इत्यन्तो ग्रन्थः पुस्तकान्तरे नास्ति । इदमाकारं च वचनं मदनरत्ने स्वयं चाग्रे देवलीयत्वेन धृतम् ।

† शेषं मचगतम् ।

¶ शेषं मुक्तागतम् ।

## देवलः

यज्ञोपवीते मुख्यामुख्यकल्पाः

**$ [1]कार्पासक्षौमगोवालशणवल्कतृणोद्भवम् ।**
**सदा संभवतो धार्यमुपवीतं द्विजातिभिः ॥**

( १ ) उक्तोपवीतालाभेऽपि स एवाऽऽह– 'कार्पास- ...... ॥' इति । क्षुमा अतसी । वल्कलं तरुत्वक् । तृणोद्भवं कुशनिर्मितम् । ¶ स्मृच. ३१–३२

( २ ) ( यथा )संभवतः कार्पासाद्यभावे गोबाला- दिजमपि ग्राह्यम् । स्मृसा. ५

( ३ ) त्रयाणामपि द्विजानां कार्पासादीन्युपवीतानि साधारणानीत्याह देवलः– 'कार्पास... जातिभिः ॥' । † मर. ६

( ४ ) तृणोद्भवमिति । तृणादिकमिति पाठे आदिना दर्भग्रहः । ‡ असंभवतः असंभवे । कृभ. ९५५

## बृहत्पराशरः

वर्णभेदेनोपवीतभेदः

**[1]कार्पासशणमेषौर्णान्युपवीतानि वर्णशः ॥**

## पैठीनसिः

वर्णभेदेन भिन्नं वर्णसाधारणं चोपवीतम्

**† [2]कार्पासमुपवीतं षट्तन्तुकं त्रिवृतं ब्राह्म- णस्य, क्षौमं राजन्यस्य, आविकं वैश्यस्य ॥**

( १ ) क्षुमा अतसी, तस्याः ( शणः ? ) क्षौमम् । § चम. २१

( २ ) द्विगुणे सूत्रे त्रिवृति कृते षट्तन्तुकं भवती- त्यर्थः । संग. ६६६

( ३ ) क्षौममिति । क्षुमा अतसी पश्चिमस्यां दिशि तृणभेदो वा, तदुत्थमित्युक्तम् । कृभ. ९५५

**[3]कार्पासं चोपवीतं सर्वेषाम् ॥**

## आश्वलायनः

उपवीतधारणफलम्

**[4]मेखला च पवित्रं च रक्षाशुद्ध्यर्थमेव वा ॥**

## ऋष्यशृङ्गः

उपवीतानुकल्पः

**[5]अपि वा वाससा यज्ञोपवीतार्थं कुर्यात्तद- भावे त्रिवृता सूत्रेण ॥**

---

$ अस्य वीमिव्याख्यानं गोभिलगृह्यसूत्रव्याख्याने द्रष्ट- व्यम् ।

¶ पमा. , संप्र. , मुक्ता. , संम. , विपा. , संर. स्मृच- गतम् ।

† शेषं स्मृचगतम् ।

‡ अस्माद्व्याख्यानात् 'सदाऽसंभवतः' इति सिन्धु- पाठः कृष्णंभट्टस्याभिप्रेत इति भाति ।

(१) स्मृच. ३२ वतो धा ( वतः का ) ; स्मृसा. ५ सदा सं ( यथासं ) ; पमा. ४४८ तृणोद्भवम् ( तृणा- दिकम् ) शेषं स्मृचवत् ; मपा. २१ तृणो (वृतो ) सदा सं ( सदाऽसं ) ; प्रपा. २२३ तृणोद्भवम् ( तृणादिकम् ) भवतो ( भावितं ) ; मर. ६ ; वीमि. १।२९ वल्क (वस्त्र ) ; संप्र. ४१५ ; चम. २१ द्वितीयपादे ( शाण- वल्कतृणादिकम् ) शेषं स्मृचवत् ; मुक्ता. ९१ ; संम. २६ सदा ( तदा ) कात्यायनः : २७ द्वितीयपादः चमवत् , भवतो ( भावितं ) ; सिन्धु. ९५५ वल्क ( बल्व ) शेषं स्मृसावत् ; विपा. १७१ (भागः २) तृणोद्भवम् ( तृणा- दिकम् ) सदा सं ( यथासं ) ; बाल. १।२९ पृ. १५२ स्मृसावत् , द्वितीयपादः चमवत् ; संग. ६६५ ; कृभ. ९५५ तृणोद्भवम् ( तृणादिकम् ) इत्यपि पाठः ; संर. १८७ बालवत् .

† अस्य वीमिव्याख्यानं 'कार्पासमुपवीतम्' इतिमनु- वचनव्याख्याने, संप्रव्याख्यानं च 'यज्ञोपवीतं कुर्वीत' इतिदेवलवचनव्याख्याने द्रष्टव्यम् ।

§ बाल. चमवत् ।

(१) बृपसं. ६।१५३.

(२) पमा. ४४८ ( षट्तन्तुकं त्रिवृतं० ) क्षौमं ( क्षौमेयं ) ; वीमि. १।२९ ( कार्पासमुपवीतं स्यात् षट्- त्रिवृतं ब्राह्मणस्य ) एतावदेव ; संप्र. ४१६ ; चम. २१ (षट्तन्तुकं त्रिवृतं० ) ; बाल. १।२९ पृ. १५३ चमवत् ; संग. ६६६ ; कृभ. ९५५ चमवत् . (३) संप्र. ४१५.

(४) आश्वस्मृ. ११।१२७ ; प्रपा. २२७ वा (च) ; संप्र. ४३७.

(५) स्मृच. ३२ ( वा० ) तार्थं ( तार्थान् ) ; पमा. ४४८ वाससा ( वाससी ) ; संप्र. ४१५ ; चम. २१ वा

## आदित्यपुराणम्

क्षौमकार्पासशाणोपवीतफलम्

[1]क्षौमजं वाऽथ कार्पासं शणसूत्रमथापि वा ।
दद्याद्यज्ञोपवीतं यो न तं हिंसन्ति वायसाः ॥

वायसाः राक्षसाः । § संप्र. ४१५

§ संग. संप्रवत् ।

वायसा ( वाससी ) तार्थे ( तार्थे ) ; मुक्ता. ९१ (अपि वा० ) तार्थे ( तार्थान् ).

(१) ब्रक. १०७ शण ( पट्ट ) ; संप्र. ४१५ ; संग. ६६५ दद्यात ( दद्या ).

## स्मृत्यर्थसारः

उपवीते मुख्यामुख्यकल्पाः वर्णसाधारणत्वं च

[1]कार्पासक्षौमगोवालशणवल्कतृणादिकम् ।
यथासंभवतो धार्यमुपवीतं द्विजातिभिः ॥

[2]वल्कं यज्ञोपवीतार्थे त्रिवृत्सूत्रं च कर्मसु ।
कुशामुञ्जवालतन्तुरज्जुर्वा सर्वजातिषु ॥

(१) स्मृसार. ४; हमा. २२५ (=) शण ( शाण ) यथासं (सदा सं ) ; गमा. २०३ शण (शाण).

(२) स्मृसार. ५ ; हमा. २२५–२२६ (=) तार्थे ( तार्थे ) वालतन्तुरज्जुर्वा ( वल्वजतन्तुरज्ज्वा वा ) ; गमा. २०३ वीतार्थे ( वीतार्थे ) रज्जुर्वा (रज्ज्वा वा) ; मुक्ता. ९२ पू. ; आन. १५६ पू .

# सावित्र्युपदेशः

## बौधायनगृह्यशेषसूत्रम्

वर्णभेदेन सावित्रीभेदः

'गायत्रीत्रिष्टुब्जगत्यः 'तत्सवितुर्वरेण्यम्, आ सत्येन, युञ्जते मनः' इति सावित्र्यो यथाक्रमं ब्राह्मणक्षत्रियवैश्यानाम् ॥

## कौषीतकिगृह्यसूत्रम्

वर्णभेदेन सावित्रीभेदः

'गायत्रीं ब्राह्मणायानुब्रूयात् ॥
त्रिष्टुभं क्षत्रियाय ॥
जगतीं वैश्याय ॥
सावित्रीं त्वेव ॥

## पारस्करगृह्यसूत्रम्

वर्णभेदेन भिन्ना वर्णसाधारणी च सावित्री

'गायत्रीं ब्राह्मणायानुब्रूयात् ॥
त्रिष्टुभं राजन्यस्य ॥
जगतीं वैश्यस्य ॥
सर्वेषां वा गायत्रीम् ॥

(१) त्रिष्टुभमिति । सावित्रीमनुब्रूयात् । जगतीमिति । सावित्रीमनुब्रूयात् । सर्वेषामिति । वाशब्दो विकल्पार्थः । कभा.

(२) तत्र 'तत्सवितुः' इति विश्वामित्रः प्रतिष्ठा गायत्री सविता होमानन्तरमाहवनीयेक्षणजपे । क्षत्रियाय तु 'देव सवितः' इति बृहस्पतिस्त्रिष्टुप् सविता वाजपेयाज्यहोमे । वैश्यस्य च 'विश्वा रूपाणि प्रति मुञ्चत' इति प्रजापतिर्जगती सविता उखासंभरणे रुक्मपाशप्रतिमोके । $ जभा.

(३) यद्वा सर्वेषां ब्राह्मणक्षत्रियविशां गायत्रीमेव गायत्रीछन्दस्कामेव सावित्रीं सवितृदेवताकां 'तत्सवितुः' इति सकलवेदशाखाम्नातां ऋचमनुब्रूयात् । ¶ हभा.

(४) त्रिष्टुप् छन्दो यस्याः सा त्रिष्टुप्, तां सावित्रीं त्रिष्टुभं 'देव सवितः' इत्यादिकां राजन्यस्य क्षत्रियस्य अनुब्रूयात् । पारिजाते– 'देव सवितरिति राजन्यस्य' इति । 'तां सवितुः' इति भर्तृयज्ञेनोदाहृता । 'जगतीं वैश्यस्य' जगतीछन्दस्कां सावित्रीं 'विश्वा रूपाणि प्रति मुञ्चत' इत्यृचं वैश्यस्यानुब्रूयात् । जगती छन्दो यस्याः सा जगती ताम् । 'युञ्जते मनः' इति भर्तृयज्ञभाष्ये । 'विश्वा रूपाणि' इति वैश्यस्य इति पारिजाते । † गभा.

## बौधायनः

वर्णभेदेन सावित्रीभेदः

'गायत्रीत्रिष्टुब्जगतीभिर्यथाक्रमम् ॥

उपनयीतेति शेषः । बौवि.

## मनुः

वेदत्रयादोंकारव्याहृतिगायत्रीणामुत्पत्तिः

§'अकारं चाप्युकारं च मकारं च प्रजापतिः ।
वेदत्रयान्निरदुहद्भूर्भुवः स्वरितीति च ॥

---

$ शेषं कभावत् । विपा. जभावत् ।

(१) बौगृशे. २।८।१२.

(२) कौगृ. २।५।४–७ ; बाल. १।१४ पृ. ४९.

(३) पागृ. २।३।७–१० ; मर. ६ ; मच. २।७७ (=).

¶ शेषं जभागतम् । विमा. हभावत् ।

† शेषं हभावत् । संग., संदी. गभावत् ।

§ यद्यप्येतौ श्लोकौ स्मृतावध्ययनारम्भे ओंकारादिविधेः संध्ययोर्गायत्रीजपविधेश्चार्थवादौ तथापि ततः सावित्र्युपदेशविधिप्राशस्त्यस्यापि सिद्धेरत्र संगृहीतौ ।

(१) बौध. १।३।१२.

(२) मस्मृ. २।७६ ; अप. १।१५ रदुह (रवह) ; ब्रक. १७९, २४५ ; स्मृच. १४३ ; निप्र. १६ (भागः २) रदुह (रमम) ; मुक्ता. ३३४ ; माच. यान्निर (याददु) ; बौवि. २।१८।३१.

(१) पूर्वस्य विधेरर्थवादः । अक्षरत्रयसमाहाररूप ओंकारः, तत्रैकैकस्योत्पत्तिमाह— वेदत्रयात् त्रिभ्यो वेदेभ्यः निरदुहत् उद्धृतवान् यथा दध्नो घृतमुद्ध्रियते । न केवलमक्षरत्रयम्, यावदिदमपरं भूर्भुवः स्वरिति ।
$ मेधा.

(२) ब्रह्मणः प्रणवं कुर्यादित्यस्यार्थवादमाह— अकारमिति । अकारोकारमकारात्मकः किलोङ्कारः । एतदक्षरत्रयं वेदत्रयात् सारभूतं प्रजापतिरुद्धृतवान् । तथा भूर्भुवः स्वरित्येतच्च महाव्याहृतित्रयमुद्धृतवान् । इदं (? इत्थं) चेयं (ओंकार)व्याहृतिस्तुतिः अध्ययनकाले तद्विधानार्था, अत्राकस्मात् स्तुतिः वर्तते इति प्रयोजनात् (?) । गोरा.

(३) प्रणवस्य प्रकृतस्तुतौ कार्यायां व्याहृतिगायत्र्योः स्तुतिस्तयोरप्यादौ जपार्था । ओंकारमात्रजपस्तु प्रागुक्तस्तदसंभवे । निरवृहत् उद्धृतवान् । 'इतीति' इतीतिद्वयेन प्रकारद्वयाभिधानेन भूर्भुवः स्वरित्येवंप्रकारा व्याहृतयः संगृहीताः । मवि.

(४) 'एतदक्षरमेतां च' इति वक्ष्यति, तस्यायं शेषः । † ममु.

(५) प्राणायामपूतस्यैव प्रणवोच्चारणाधिकार इत्युक्तेस्तदङ्गगायत्रीप्रणवव्याहृतिसंयुक्तं ज्ञापयन् (?) आदौ प्रणवस्य वेदत्रयसारतामाह— अकारं चेति द्वाभ्याम् ।
† मच.

(६) वेदग्रहणारम्भे व्याहृतित्रयसावित्र्योरपि प्रयोज्यतां श्लोकद्वयेनाऽऽह— अकारमिति । निरदुहत् निश्चकर्ष । अस्यानन्तरं द्वितीयस्येतिकरणस्यान्वयः, पश्चात् भूर्भुवः स्वरिति चेत्यन्वयः । ततोऽयमर्थः— इति एवं यथाऽकारादीन् वर्णान्निरदुहदेवं भूर्भुवः स्वरिति च निरदुहदिति । नन्द.

$ भाच. मेधागतम् ।

† शेषं मेधागतम् ।

[1]त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् ।
तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः ॥

(१) अयं 'तत्सवितुर्वरेण्यम्' इत्येतस्याः गायत्र्या उत्पत्त्यर्थवादो विधानार्थः । पूर्वश्लोके चार्थवादादेव व्याहृतीनामपि विधानम् । क्रमस्तु पाठावगम्यः । वक्ष्यति च— 'एतदक्षरमेतां च जपन् व्याहृतिपूर्विकाम्' इति । अदूदुहत् उद्धृतवानिति । यद्यपि तदित्येतत्प्रतीकेन 'तत्सवितुर्वृणीमहे' इति वा शक्यते लक्षयितुम्, न तु सा त्रिपदेति । त्रिपदा च ग्राह्या 'त्रिपदा चैव सावित्री' (मस्मृ. २।८१) इति । कश्यपादयोऽपि प्रजापतयः सन्ति, अतो विशिनष्टि— परमेष्ठीति । हिरण्यगर्भः । स हि परमे स्थानेऽनावृत्तिलक्षणे स्थितः । आदरातिशयार्थं चैतत्सावित्र्याः साक्षात् किलेयं सर्वमुख्येन प्रजापतिना वेदेभ्यः समुद्धृतेति । ¶ मेधा.

(२) अदूदुहत् सारप्राप्त्यर्थमाकृष्टवान् । § मवि.

(३) त्रिभ्य एव वेदेभ्यः ऋग्यजुःसामभ्यः ।
§ ममु.

(४) तेभ्यो गायत्र्यास्त्रीन् पादानदूदुहदित्याह— त्रिभ्य इति । तदित्यृचः 'तत्सवितुः' इत्याद्याया ऋचः । परमेष्ठी हिरण्यगर्भः । 'आपो ज्योतिः' इत्यादिशिरोऽपि ज्ञेयम्, 'सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह । त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥' इति श्रुतेः, 'गायत्रीं शिरसा सार्धं जपेद्व्याहृतिपूर्विकाम् । प्रति-

¶ गोरा., भाच. मेधागतम् ।

§ शेषं मेधागतम् ।

(१) मस्मृ. २।७७; अप. १।१५; ब्रक. १७९, २४५; स्मृच. १४४; उ. १।१।१०; निप्र. १६ (भागः २); संप्र. ३३८; मुक्ता. ३३४ श्लोकार्धौ व्यत्यासेन पठितौ; संको. १५६; संग. ६३६; कुभ, ९७०,

प्रणवसंयुक्तां त्रिरयं प्राणसंयमः ॥' (यास्मृ. १।२३) इति याज्ञवल्क्योक्तेश्च । गायत्रीत्युपलक्षणं त्रिष्टुब्जगत्योः, 'संवत्सरे षण्मास्ये चतुर्विंशत्यहे द्वादशाहे षडहे त्र्यहे वा सद्यस्त्वेव गायत्रीं ब्राह्मणायानुब्रूयात् आग्नेयो वै ब्राह्मण इति (श्रुतेः १), त्रिष्टुभं राजन्यस्य जगतीं वैश्यस्य सर्वेषां वा गायत्रीम्' इति (श्रुतेः)। मच.

(५) तस्माद्वेदत्रयसारत्वात् व्याहृतित्रयसावित्र्यौ वेदारम्भे प्रयोज्ये इति । ¶ नन्द.

(६) तथा चोपनयने सावित्र्या अनुवचने सर्वे वेदा अनूक्ता भवन्तीत्यर्थः । अथर्वणवेदाऽध्ययनार्थं तु पृथगुपनयनं कार्यम्, 'नान्यत्र संस्कृतो भृग्वङ्गिरसमधीयीत' इति श्रुतेः । भृग्वङ्गिरसं आथर्वणम् ।

कृभ. ९७०

## कात्यायनः

वर्णभेदेन भिन्ना सर्ववर्णसाधारणी च सावित्री

[1]'**गायत्र्या ब्राह्मणमुपनयेत्, त्रिष्टुभा राजन्यम्, जगत्या वैश्यम् । सर्वेषां वा गायत्रीम् ॥**

अनुब्रूयादिति शेषः । अप. १।१५

## शातातपः

वर्णभेदेन भिन्ना सावित्री

[2]'**तत्सवितुर्वरेण्यम्' इति सावित्री ब्राह्मणस्य, 'देव सवितः' इति राजन्यस्य, 'विश्वा रूपाणि' इति वैश्यस्य ॥**

## बृहत्पराशरः

वर्णभेदेन भिन्ना सर्ववर्णसाधारणी च सावित्री

[1]'**गायत्र्या त्रिष्टुब्जगत्या त्रयाणामुपनायनम् ।**
**गायत्र्यामविशेषो वा मुञ्जादिष्वपरेषु च ॥**
**तत्सवितुस्तां सवितुर्विश्वा रूपाणि वा क्रमात् ।**
**औपनायनिका मन्त्रा विप्रादीनामुदाहृताः ॥**

## लौगाक्षिः

वर्णभेदेन भिन्ना सावित्री

[2]'**तत्सवितुर्वरेण्यम्' इति ब्राह्मणस्य, 'तां सवितुः' इति राजन्यस्य, 'विश्वा रूपाणि' इति वैश्यस्य ॥**

## रेणुकारिकाः

वर्णभेदेन भिन्ना सर्ववर्णसाधारणी च सावित्री

[3]'**गुरुः प्रयच्छेत्सावित्रीं गायत्रीं ब्रह्मचारिणे ॥**
**सावित्रीं त्रिष्टुभं राज्ञे वैश्याय जगतीं तथा ॥**
**सर्वेषां वाऽपि गायत्रीम् ...... ॥**

---

¶ शेषं मेधागतम् ।

(१) मेधा. २।३८ (=) (सर्वेषां वा गायत्रीम्०); अप. १।१५; ब्रक. १०६ गायत्र्या (सावित्र्या) गायत्रीम् (सावित्री); स्मृसा. ५ ब्रकवत्; मपा. २३ ब्रकवत्; शूशि. ७२ ब्रकवत्; संप्र. ४२९ ब्रकवत्; बाल. १।१४ पृ. ४९ गायत्रीम् (सावित्रीम्) शेषं ब्रकवत्.

(२) स्मृसा. ५ देव सवितः (तां सवितुः); मपा. २३; मर. ६; गमा. २०८ (तत्सवितुर्वरेण्यमिति सावित्री ब्राह्मणस्य) एतावदेव; संप्र. ४३० सवितः (सवितुः); बाल. १।१४ पृ. ४९ सावित्री (सावित्रीं) शेषं संप्रवत्; संग. ६७७ सावित्री (सावित्रीं).

(१) बृपसं. ६।१५५–१५७.

(२) अप. १।१५; ब्रक. १०६.

(३) रेका. ५८, ६१, ६३ पृ. २३, २४.

## बौधायनगृह्यसूत्रम्

वर्णभेदभिन्नाः साधारणी च मेखलाः

[1]मौञ्जी ब्राह्मणस्य । ज्यामौर्वी राजन्यस्य । आवीसूत्रं वैश्यस्य । सर्वेषामेव वा मौञ्जीम् ॥

## आश्वलायनगृह्यसूत्रम्

वर्णभेदेन भिन्ना मेखलाः

[2]तेषां मेखलाः ॥

( १ ) भवन्ति । देभा.

( २ ) उच्यन्ते इति शेषः । गानावृ.

मौञ्जी ब्राह्मणस्य, धनुर्ज्या क्षत्रियस्य, आवी वैश्यस्य ॥

( १ ) ब्राह्मणस्यैव मौञ्जी, नान्यस्य । एवमुत्तरयोः क्षत्रियवैश्ययोः । * देभा.

( २ ) मौञ्जी नान्यस्य । ब्राह्मणस्य तु मौञ्जी वाऽन्या वा, न नियमः । एवमुत्तरयोर्ज्ञेयम् । गानावृ.

( ३ ) मुञ्जा तृणविशेषः । धनुर्ज्या धनुषोऽपनीय ग्राह्या मौर्वी । अविः ऊर्णायुः, तद्रोमभिः कृता आवी । $ अना.

## कौषीतकिगृह्यसूत्रम्

वर्णभेदेन भिन्ना मेखलाः

[3]मौञ्जी मेखला ब्राह्मणस्य ॥
धनुर्ज्या क्षत्रियस्य ॥ ]
ऊर्णासूत्री वैश्यस्य ॥

* प्रपा. देभावत् अनावच्च ।

$ संप्र. अनावत् । मर., संम., कृभ. अनागतम् ।

(१) बौगृ. २।५।१३; प्रपा. २२९ ( मौर्वीज्यां राजन्यम् आवीसूत्रं वैश्यं सर्वानेव वा मौञ्जी ) एतावदेव.

(२) आगृ. १।१९।१०–११; प्रपा. २२१; मर. ५; संप्र. ४३०; संम. २६; सिन्धु. ९५२–९५३.

(३) कौगृ. २।१।१५–१७.

## हिरण्यकेशिगृह्यसूत्रम्

वर्णभेदेन भिन्ना मेखलाः

[1]मौञ्जीं मेखलां त्रिवृतां ब्राह्मणस्य । ज्यां राजन्यस्य । अवीसूत्रं वैश्यस्य ॥

मौञ्जी मुञ्जानां विकारो मेखला । 'शक्तिविषये दक्षिणावृत्तानाम्' ( हिध. २६।१।६५ ) इति धर्मेषु विशेषः । त्रिवृता त्रिगुणा । अजादिपाठो विभाषाऽनुमेयः । सर्वेषां व्यञ्जनानामाकारं वष्टि भागुरिरित्यमीष्टिरस्तीत्येके । ज्या धनुषो रज्जुः । 'मौञ्जी चायोमिश्रा' ( हिध. २६।१।६७ ) इति धर्मेषूक्तम् । अविरेव अवी । 'सर्वतोऽक्तिन्नर्थादित्येके' इतीकारः । अव्याः सूत्रम् अवीसूत्रम् । अविलोममयी रज्जुरित्यर्थः । 'सैरी तामलीत्येके' ( हिध. २६।१।६८ ) इति धर्मेषु वचनात् ( १ नम् ) । $ मातृदृ.

## भारद्वाजगृह्यसूत्रम्

वर्णभेदेन भिन्ना मेखलाः

[2]मौञ्जीं मेखलां त्रिवृतं ब्राह्मणस्य, मौर्वीं राजन्यस्य, सौत्रीं वैश्यस्य ॥

## काठकगृह्यसूत्रम्

वर्णभेदेन भिन्ना मेखलाः

[3]सप्तमुञ्जां मेखलां धारयेत् ॥

( १ ) सप्तभिर्मुञ्जव्यक्तिभिस्त्रिवृद्यावती भवति तां मेखलां धारयेत् । अत्र मेहनसंबन्धिनः खस्य माला मेखलेति निर्वचनं कुर्वन्ति । मयूरव्यंसकादित्वात्साधु किल । 'मिह सेचने' । मिह्यते सिच्यते वीर्यादिकमनेनेति

$ संर. मातृदृगतम् ।

(१) हिगृ. १९।१।१४; संप्र. ४३१; संर. १९२.

(२) भागृ. १।२.

(३) कागृ. १।६.

मेहनम् आनन्देन्द्रियम्, तस्योपरि नाभेरधोभागे यत्स्थं तस्य माला। देव.

(२) 'इषीका यस्य हेमाभा पत्रं यस्य सुपिञ्जरम्। सप्तमुञ्ज इति ख्यातः स शरः पर्वढः स्मृतः ॥'। व्राक्ष.

(३) सप्तभिर्मुञ्जैः प्रविष्टैर्यावती त्रिवृद्भवति सा सप्तमुञ्जा ब्राह्मणस्य। स्थौल्ये नियम इति केचित्। वस्तुतस्तु 'इषका यस्य... स्मृतः॥' इति दर्शनात् सप्तमुञ्जः मुञ्जविशेषः, तेन त्रिवृत्तां सप्तमुञ्जां मेखलां रशनां धारयेदिति। आवि.

**'मौञ्जीं त्रिवृतं ब्राह्मणाय प्रयच्छति, मौर्वीं धनुर्ज्यां राजन्याय, सौत्रीं वैश्याय ॥**

(१) मौञ्जीं सप्तमुञ्जनिर्मिताम्। त्रिवृतं त्रिगुणवेष्टिताम्। 'त्रिवृद्रज्जुः', 'त्रिवृन्नवकम्', 'तत्र त्रिवृता यूपं परिव्ययीत' इत्यादौ रज्जौ त्रिवृच्छब्दः। 'त्रिवृत्स्तोमः' इत्यादौ त्रिवृच्छब्दो नवके। इहापि रज्जौ त्रिगुणायां त्रिवृच्छब्दः, तथा सदाचारात्। तेन भ्रान्त्या केचिन्नवगुणां मेखलां व्याचक्षते। मूर्वा नाम तृणविशेषः, तस्य विकारो मौर्वी, तां धनुर्ज्यां धनुषः प्रसार्य गुणं राजन्याय प्रयच्छति। सौत्रीं वैश्याय। सामान्याभिधानेऽपि स्मृत्यनुसारेण कर्पाससूत्रमयीम्। आदौ प्रयच्छति, तत आबध्नीयादिति क्रमो बोद्धव्यः। देव.

(२) किंभूताम्? मौञ्जीं सप्तमुञ्जां त्रिवृतां त्रिगुणां त्रिः परिवृतां च ब्राह्मणाय प्रयच्छति। पूर्वं ददाति, पश्चात्तु वाचयन्नाबध्नीते। त्रिवृच्छब्दो नवके सर्वत्र वेदे। शुष्कमीमांसकास्तु स्तोमविषयं नवकमिच्छन्ति। तेऽनधीतवेदत्वात्पदार्थानभिज्ञत्वाच्चावधीरणीयाः। यतो मेखलामधिकृत्य श्रुतिः– 'त्रिवृद्भवति त्रिवृता वै स्तोमेन' इति मेखलां गतं त्रिवृत्त्वं स्तोमे नवकेन स्तूयते। तथा 'नवाश्रिमभिचरणीयां कुर्यात्त्रिवृद्रज्जुः' इति। मौर्वी– मूर्वा गुच्छविशेषः श्रीपर्वतादौ प्रसिद्धः, तत्कृत्या ज्या धनुर्गुणः राजन्याय धनुषः अपनीय। सौत्रीं वैश्यस्य सत्यपि वि( ? अवि )शेषे शणसूत्रकृताम्। आवि.

(१) काग्र. ४१।१२.

## वाराहगृह्यसूत्रम्

वर्णभेदेन भिन्ना मेखलाः

**'मौञ्जीं त्रिगुणां त्रिः परिवीतां मेखलामाबध्नीत। मौर्वीं धनुर्ज्यां क्षत्रियस्य। शार्णीं वैश्यस्य ॥**

**सप्तमौञ्जीं मेखलां धारयेत् ॥**

## आग्निवेश्यगृह्यसूत्रम्

वर्णभेदेन भिन्ना मेखलाः

**'मौञ्जीमेखलां त्रिवृतां ब्राह्मणस्य, ज्यां राजन्यस्य, आविकं वैश्यस्य ॥**

## पारस्करगृह्यसूत्रम्

वर्णभेदेन भिन्ना मेखलाः, मेखलानुकल्पाः

**'मौञ्जी रशना ब्राह्मणस्य ॥**

(१) मौञ्जीति भवति। कभा.

(२) मौञ्जी मुञ्जमयी रशना मेखला। ¶ जभा.

(३) मौञ्जी– मुञ्जं तृणविशेषः, तन्मयी रशना मेखला ब्राह्मणस्य ब्रह्मचारिणो भवति। $ हभा.

(४) मुञ्जः शरः, तन्मयी मौञ्जी। § गभा.

**धनुर्ज्या राजन्यस्य ॥**

(१) ज्याशब्देन गुणो विधीयते। ‡ कभा.

(२) सामर्थ्याच्च स्नायुमयी वेणुमयी वा। इयं च त्रिवृन्न कार्या, ज्यात्वविनाशप्रसङ्गात्। † गभा.

(३) धनुर्ज्या धनुषोऽपनीय ग्राह्या। संग. ६६२

**मौर्वी वैश्यस्य ॥**

¶ विभा. जभावत्।

$ संग. हभावत्।

§ शेषं हभावत्। संदी. गभावत्।

‡ जभा., हभा., विभा., संदी. कभावत्।

† शेषं कभावत्।

(१) वागृ. ५, ६.

(२) आग्निगृ. १।१।१.

(३) पागृ. २।५।२१–२३ ; मर. ५ ; संप्र. ४३०.

(१) मुरुरिति तृणविशेषः। ¶ कमा.

(२) मूर्वः तृणविशेषः। संदी. ७६

[२]**मुञ्जाभावे कुशाश्मन्तकबल्वजानाम् ॥**

(१) संबन्धिनी रशना भवति। कमा.

(२) मुञ्जादीनामभावे कुशादीनां संबन्धिनी रशना क्रमेण भवति। § जमा.

(३) मुञ्जाभावे ब्राह्मणस्य कुशाश्मन्तकबल्वजानां संबन्धिनी रशना भवति। कुशमयी वा अश्मन्तकाख्यतृणमयी बाल्वजी वा भवतीति भर्तृयज्ञव्याख्याने लभ्यते। मुञ्जाभावशब्दोऽत्र धनुर्ज्यामौर्व्यभावोपलक्षणार्थं इति रेणुगर्गहरिहराः। मुञ्जाद्यभावे वर्णक्रमेण कुशाद्या ग्राह्या इति मदनपारिजाते। गमा.

## गोभिलगृह्यसूत्रम्

वर्णभेदेन भिन्ना मेखलाः, मेखलानुकल्पाः

[२]**मुञ्जकाशताम्बुल्यो रशनाः ॥**

(१) मुञ्जः शरः। तासूनः शनः, तद्भवा रसना तासूनी। संत. ९३०

(२) ताम्बलीतामलीशब्दौ पर्यायौ। संर. १९४

(३) तमुनिः शणः। रशना मेखला। 'रशना मेखला काञ्ची' इत्यमरः। अन्यत् पूर्ववत्। मृदुला.

†[३]**एतेनैवेतराणि द्रव्याणि व्याख्यातानि ॥**

$**अलाभे वा सर्वाणि सर्वेषाम् ॥**

---

¶ जमा., हमा., विमा., संग. कमावत्।

§ हमा., विमा., संदी. जमावत्।

† अस्य व्याख्यानमजिनप्रकरणे द्रष्टव्यम्।

$ अस्य व्याख्यानं वस्त्रप्रकरणे द्रष्टव्यम्।

(१) पागृ. २।५।२४ ; मर. ५ ; संप्र. ४३४.

(२) गोगृ. २।१०।१० ; ब्रक. १११ तामुन्यो (ताम्बूल्यो) ; संत. ९३० तामुन्यो (तासून्यो) ; संप्र. ४३२ (मुञ्जकाशताम्बूल्यो रशना भवन्ति) ; संर. १९४ तामुन्यो (ताम्बल्यो).

(३) गोगृ. २।१०।१३-१४. शेषस्थलादिनिर्देशा वस्त्राजिनप्रकरणयोर्द्रष्टव्याः.

## जैमिनिगृह्यसूत्रम्

वर्णभेदेन भिन्नाः साधारणी च मेखलाः

[१]**मौञ्जीं ब्राह्मणस्य, मौर्वीं राजन्यस्य, मुञ्जमिश्रां तामलीं वैश्यस्य, मौञ्जीं वा सर्वेषाम् ॥**

## वैखानसगृह्यसूत्रम्

वर्णभेदेन भिन्नाः मेखलाः

[२]**ब्राह्मणस्य... मौञ्जी मेखला ॥**

**क्षत्रियस्य... मौर्वी मेखला ॥**

**वैश्यस्य... शाणी मेखला ॥**

## बैजवापगृह्यसूत्रम्

[३]**मेखलां त्रिगुणां प्रसलविसृष्टां प्रदक्षिणं त्रिः परिनयन्ति ॥**

प्रसलं प्रदक्षिणं यथा भवत्येवं सृष्टां निर्मिताम्। परि समन्तात् नयन्ति प्रदक्षिणं यथा भवति तथा त्रिः वेष्टयन्ति। † ब्रक. ११२

## गौतमः

वर्णभेदेन भिन्ना मेखलाः

[४]**मौञ्जीज्यामौर्वीसौत्र्यो मेखलाः क्रमेण ॥**

(१) मुञ्जविकारा मौञ्जी। मूर्वा प्रसिद्धा, तद्विकारा मौर्वी। ज्या चासौ मौर्वी चेति समानाधिकरणसमासः। ततश्च धनुषोऽपनीय ग्राह्या। सूत्रं शणसूत्रम्। एकगुणा मौर्वी, इतरे त्रिवृतौ। यथाऽऽह मनुः— 'मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला। क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शणतान्तवी ॥' (मस्मृ. २।४२) इति। ज्यामौर्व्योर्द्वित्वव्यावृत्त्यर्थं क्रमग्रहणम्। केचिदभावे वैकल्पिकार्थमिति वर्णयन्ति। तथा च मनुः— 'मुञ्जाभावे तु कर्तव्या कुशाश्मन्तकबल्बजैः।

---

† संप्र. ब्रकवत्।

(१) जैगृ. १।१२. (२) वैगृ. २।४.

(३) ब्रक. ११२ ; संप्र. ४३२.

(४) गौध. १।१७ ; ममा. ; गौमि. १।१५ ; स्मृच. ३० क्रमेण + (तु) ; संप्र. ४३१ सौत्र्यो (शणसूत्र्यो) ; मुक्ता. ९५.

त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा ॥ ' ( मस्मृ. २।४३ ) इति । न्यायसिद्धे क्रमग्रहणस्यान्यार्थत्वादिति । मभा.

( २ ) मुञ्जः दर्भविशेषः , तद्विकारो मौञ्जी । मूर्वा अरण्यौषधिविशेषः , तद्विकारः मौर्वी । सौत्री सूत्रविकारः । एता वर्णक्रमेण मेखला भवन्ति । ‡ गौमि.

( ३ ) मूर्वा तेजिनी । ‡ स्मृच. ३०

( ४ ) ज्यापदेनैवार्थसिद्धौ मौर्व्युपादानं धनुषोऽपनीय ग्रहणासंभवे मूर्वानिर्मितरज्जुमात्रग्रहणार्थम् । संप्र. ४३१

## वृद्धहारीतः

ब्राह्मणस्य मेखला

**¹मौञ्जी वै मेखला... ॥**

## बौधायनः

वर्णभेदेन भिन्ना मेखलाः

**²मौञ्जी धनुर्ज्या शाणीति मेखलाः ॥**

एषां क्रमेणेत्यनुषज्यते । मौञ्जी ब्राह्मणस्य मेखलेत्यादि । बौवि.

## आपस्तम्बः हिरण्यकेशिधर्मसूत्रं च

वर्णभेदेन भिन्ना मेखलाः, क्षत्रियवैश्ययोर्मेखलाप्रकृतिविकल्पः , मेखलास्वरूपम्

**³मौञ्जी मेखला त्रिवृद् ब्राह्मणस्य शक्तिविषये दक्षिणावृत्तानाम् ॥**

( १ ) शक्तिविषये मुञ्जप्राप्तौ संभवन्त्याम् । दक्षिणावृत्तानां प्रदक्षिणावर्तिनाम् । योग्यत्वात् मुञ्जादिद्रव्याणामित्यर्थः । § ब्रक. १११

( २ ) मुञ्जानां विकारः मौञ्जी । त्रिवृत् त्रिगुणा । एवंभूता ब्राह्मणस्य मेखला भवति । सा च शक्तिविषये शक्तौ सत्यां दक्षिणावृत्तानां प्रदक्षिणावृत्तानां कर्तव्या । तद्धितार्थे गुणभूतानामपि मुञ्जानामेवैतद्विशेषणम् । उ.

**¹ज्या राजन्यस्य ॥**

**²मौञ्जी वाऽयोमिश्रा ॥**

( १ ) अयोमिश्रा लोहसूत्रमिश्रा । § ब्रक. १११

( २ ) अथवा अयोमिश्रा क्वचित्तु कालायसेन बद्धा मौञ्जी मेखला भवति राजन्यस्य । उ.

**³आवीसूत्रं वैश्यस्य ॥**

अविः ऊर्णायुः कम्बलप्रकृतिः । तत्संबन्धिनी ऊर्णा आवी । तत्कृतं सूत्रं आवीसूत्रम् । सा मेखला वैश्यस्य भवति । उ.

**⁴सैरी तामली वेत्येके ॥**

( १ ) सैरी सीरस्य हलस्य योक्त्रमिति यावत् । ताम्बूली मूलोदकवृक्षनिर्मितेति कपर्दी । ‡ ब्रक. १११

( २ ) सैरी सीरा वाहयोक्त्ररज्जुः । तामलः मूलोदसंज्ञको वृक्षः , तस्य त्वचा ग्रथिता तामली । उ.

---

‡ शेषं मभागतम् ।

(१) वृहास्मृ. ८।५०.

(२) बौध. १।३।१४ ; मुक्ता. ९५.

(३) आध. १।२।३३ ; हिध. २६।१।६५ मौञ्जी मेखला त्रिवृद् (त्रिवृन्मौञ्जी मेखला) ; ब्रक. १११ ; संप्र. ४३१ ; मुक्ता. ९५ ; संर. १९२ वृत्ता ( वृता ) शेषं हिधवत् , हिध.

§ संप्र. ब्रकवत् । मुक्ता. ब्रकगतम् ।

‡ संप्र. ब्रकवत् ।

(१) आध. १।२।३४ ; हिध. २६।१।६६ ; ब्रक. १११ ज्या ( धनुर्ज्या ) ; संप्र. ४३१ ब्रकवत् ; संर. १९२ हिध.

(२) आध. १।२।३५ ; हिध. २६।१।६७ ; ब्रक. १११ ; संप्र. ४३१ ; संर. १९२.

(३) आध. १।२।३६ ; हिध. २६।१।६८ ; ब्रक. १११ ; संप्र. ४३१ आवी (आविक) ; संर. १९२ हिध.

(४) आध. १।२।३७ ; हिध. २६।१।६८ ; ब्रक. १११ तामली ( ताम्बूली ) ; संप्र. ४३१ ब्रकवत् ; संर. १९२ हिध.

### वसिष्ठः

वर्णभेदेन भिन्ना मेखलाः

[1]मौञ्जी रशना ब्राह्मणस्य, धनुर्ज्या क्षत्रियस्य, शणतान्तवी वैश्यस्य ॥

### विष्णुः

वर्णभेदेन भिन्ना मेखलाः

[2]तेषां मुञ्जज्याबल्वजमय्यो मौञ्ज्यः ॥

### शङ्खः

वर्णभेदेन भिन्नाः साधारणी च मेखलाः

¶ [3]मौञ्जीज्याबन्धनानां ( ? मुञ्जज्याबल्वजानां ) तु क्रमान्मौञ्ज्यः प्रकीर्तिताः ॥

[4]सर्वेषां वा मौञ्जी ॥

### मनुः

वर्णभेदेन भिन्ना मेखलाः, मेखलानुकल्पाः, ग्रन्थिसंख्याविकल्पः, मेखलास्वरूपम्

[5]मौञ्जी त्रिवृत् समा श्लक्ष्णा कार्या विप्रस्य मेखला ।
क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शणतान्तवी ॥

---

¶ अत्र 'मौञ्जीबन्धो द्विजानां तु' इति स्मृतिपुस्तकान्तरपाठोऽप्यनुपपन्नः ।

(१) **वस्मृ.** ११।४७ ; **स्मृच.** ३० ; **संप्र.** ४३१ ; **मुक्ता.** ९५ रशना ( मेखला ) (शण०) ; **संग.** ६६२.

(२) **विस्मृ.** २७।१८ ; **संप्र.** ४३१ मौञ्ज्यः ( मेखलाः क्रमेण ).

(३) **शंस्मृ.** २।९.

(४) **संप्र.** ४३४ ; **संग.** ६६२–६६३.

(५) **मस्मृ.** २।४२ ; **विश्व.** १।२९ (=) प्रथमपादमात्रम् ; **अप.** १।२९ ; **व्रक.** ११० ; **ममा.** १।१७ ; **स्मृच.** ३० ; **स्मृसा.** ५ मौञ्जी ( सौत्री ) तान्तवी (संभवा) ; **पमा.** ४४७ ; **मपा.** २० ; **प्रपा.** २३१ पू. ; **मर.** ५ ; **संत.** ९३० तु ( च ) ; **वीमि.** १।२९ ; **संप्र.** ४३२ ; **चम.** २० ; **मुक्ता.** ९५ ; **संम.** २६ ; **सिन्धु.** ९५३ पू. ; **संको.** १२४ पू. ; **कुम.** ९५३ ; **संर.** १९२ मौञ्जी त्रिवृत् ( त्रिवृन्मौञ्जी ).

(१) मुञ्जः तृणजातिः, तद्विकारो मौञ्जी । सा ब्राह्मणस्य मेखला रशना कर्तव्या मध्यबन्धनी । त्रिवृत् त्रिगुणा । समा न क्वचित्सूक्ष्मा न क्वचित्सूक्ष्मतरा, किं तर्हि ? सर्वत एव समा । श्लक्ष्णा तनुत्वगुणयुक्ता परिमृष्टा च । क्षत्रियस्य पुनर्ज्या धनुर्गुणः । सा कदाचिच्चर्ममयी भवति, कदाचित्तृणमयी, भङ्गोमादिरज्जुर्वा । तदर्थमाह– मौर्वीति । तया धनुषोऽवतारितया श्रोणीबन्धः कर्तव्यः । यद्यपि त्रिवृत्तादिर्गुणो मेखलामात्राश्रितो न मौञ्ज्या एव, तथापि ज्यायाः स्वरूपनाशप्रसङ्गान्न भवति । शणतन्तुविकारः शणतान्तवी । छान्दसत्वादुत्तरपदवृद्धिः । अथवा केवलात्तन्तुशब्दात्तद्धिते कृते तदन्तस्य शणैः संबन्धः शणानां तान्तवीति । विकृतेर्विकारः प्रकृतिसंबन्धितया व्यपदिश्यते– 'गव्यं घृतम्' 'देवदत्तस्य पौत्रः' इति । तन्तुः सूत्रम् । शण(तान्तवी) मौञ्जीवत्कर्तव्या । गृह्यकारैर्वैश्यमेखलायाः त्रिवृत्तादिधर्मः सुस्पष्ट एवोक्तः । § मेधा.

(२) मुञ्जाख्यकक्षमयी त्रिगुणा समगुणा अपरुषा ब्राह्मणस्य मेखला कार्या । क्षत्रियस्य तु मूर्वामयी ज्या धनुर्गुणः मेखला कार्या । अत्र च ज्यात्वविनाशापत्तेस्त्रिवृत्त्वं नास्ति (पूर्वासांगान्धिषु तथा प्रसिद्धे ?) । वैश्यस्य शणसूत्रमयी । अत्र च त्रैगुण्यमनुवर्तते, गुणानामपेक्षणात् गृह्यस्मृतौ च गुणाम्नानात् । गोरा.

(३) श्लक्ष्णा मृदुस्पर्शा । † मवि.

(४) त्रिवृत् नवगुणीकृता । ¶ स्मृसा. ५–६

(५) मौर्वी मूर्वा तेजनी तन्मयी । $ मपा. २०

---

§ व्रक., स्मृच., चम., मुक्ता., संम., नन्द. मेधागतम् । ममु. मेधागतं गोरागतं च । संर. मेधानुवादः ।

† शेषं मेधागतम् । संप्र. मविगतम् ।

¶ शेषं मविगतम् । वीमि. स्मृसावत् ।

$ शेषं मेधागतम् । मर. मपावत् । शेषं मविगतम् ।

(६) 'त्रिगुणा प्रदक्षिणा मेखला भवति' इति प्रचेतसो वचनात् मेखलात्रयं तुल्यं त्रयाणाम्। ¶ मच.

(७) ज्यायां त्रिवृत्त्वमस्ति नास्तीति मतद्वयं बोध्यम्। $ कृम. ९५३

(८) समा ग्रन्थिरहिता। शणतान्तवतृणस्य वा मेखला, तन्तोः सूत्रस्य वा मेखला कार्या, शणतान्तवमिश्रिता वा कार्या। $ भाच.

**'मुञ्जालाभे तु कर्तव्याः कुशाश्मन्तकबल्वजैः।**
**त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा॥**

(१) आदिशब्दलोपमत्र स्मरन्ति 'मुञ्जाद्यलाभे' इति। कर्तव्या इति च बहुवचनमुपपन्नतरम्। भिन्नजातिसंबन्धितया सुव्यक्तो मेखलाभेदः। एकजातिसंबन्धित्वे तु केवलव्यक्तिभेदालम्बनं बहुवचनं स्यात्। विप्रस्येति च प्रकृतस्य बहुवचनेन परिणामः कर्तव्यः। विकल्पश्चैकविषयत्वे स्यात्। न च संभवन्त्यां गतौ विकल्पो युक्तः। तेन मुञ्जाभावे कौशी। ज्याया अभावेऽश्मन्तकेन। शाणानां बल्वजैः। तृणौषधिवचनात्कुशादयः। प्रतिनिधिनियमश्चायम्। कुशाद्यभावेऽप्यन्यन्मुञ्जादिसदृशमुपादेयम्। त्रिवृत्ता ग्रन्थिनैकेन। नायं ग्रन्थिसंख्याभेदो वर्णभेदेन, अपि तु प्रत्येकं विकल्पः। कुशादिमेखलास्वप्ययं ग्रन्थिभेदः। धर्मभेदश्चोद्यमानः स्मृत्यन्तरसमाचारस्यानित्यत्वेऽपि द्रष्टव्यः। मेधा.

(२) त्रयाणां ब्रह्मचारिणां प्रकृतस्याद्भावस्य तुल्यत्वात् कौशा(? श्या)दीनां बह्वीनामुपादानम्। मुञ्जालाभे मुञ्जाद्यलाभे इति व्याचक्षते। मुञ्जाद्यभावे कुशादिभिर्यथाक्रमं ब्राह्मणादिभिः कर्तव्याः। कुशादयस्तृणविशेषाः। एताश्च त्रिगुणेन ग्रन्थिनैकेन त्रिभिर्वा पञ्चभिर्वा कार्याः। वाशब्दात् ग्रन्थीनां विप्रादिभिः क्रमसंबन्धाभावः। ग्रन्थिभेदश्चायं मुख्यास्वपि भवति, "वि-(? चि)तस्य समोऽसि दैव्यो ग्रन्थिरसि मा विस्रंस' इति ग्रन्थिं कृत्वा" इति लौगाक्षिणा मुख्यासु ग्रन्थ्याम्नानात्। ग्रन्थिसंख्याभेदं च त्रैविद्यविदः स्मरन्ति। गोरा.

(३) यथार्षेयं ग्रन्थयः कार्या इत्यभिप्रायः। $ अप. १।२९

(४) अश्मन्तका इति उलपः। मुञ्जालाभ इति विशेषनिर्देशात् मौर्वीशाण्यलाभे क्षत्रियवैश्याभ्यामन्यस्तत्सदृशः प्रतिनिधिर्वाचनिक एवोपादेयः। सा च मौञ्जी त्रिगुणवलिता त्रिवृता कटौ त्रिर्वेष्टनेन धार्या। त्रिभिरपि च वेष्टनैरेको ग्रन्थिः त्रयो वा पञ्च वा। वाशब्दो विप्रादिक्रमेणान्वयनिरासार्थः। केचित्प्रवरसंख्याव्यवस्थया ग्रन्थिविकल्पः इत्याहुः। † मवि.

(५) अत्र च वाशब्दनिर्देशाद्ग्रन्थीनां न विप्रादिभिः क्रमेण संबन्धः, किंतु सर्वत्र यथाकुलाचारं विकल्पः। § ममु.

¶ शेषं मविगतम्।

$ शेषं मेधागतम्।

(१) मस्मृ. २।४३; मेधा. त्रिवृता (त्रिवृत्ता); अप. १।२९ कर्तव्याः (कर्तव्या); ममा. १।१७ लाभे तु कर्तव्याः (भावे तु कर्तव्या); स्मृच. ३० मभावत्; स्मृसा. ५; पमा. ४४७ श्मन्त (श्मान्त) शेषं मभावत्; मपा. २० मभावत्; मर. ५ वा (च) शेषं मभावत्; संत. ९३० श्मन्त (श्मान्त) शेषम् अपवत्; वीमि. १।२९ मभावत्; संप्र. ४३२ वा (च) उत्त.: ४३३ मभावत्, पू.; बम. २० मभावत्, क्रमेण मनुः; मुक्ता. ९५ अपवत्; आर. २ नैके (रेके) उत्त., वृद्धमनुः; संम. २६ वा (च) शेषम् अपवत्; सिन्धु. ९५३ प्रथमपादे (मौञ्ज्यभावे तु कर्तव्या) श्लोकार्धे व्यत्यासेन पठिते; संको. १२४ वा (च) शेषं ममावत्; संग. ६६२ मभावत्, पू.; कृम. ९५३ सर्वं सिन्धुवत्; संर. १९३ मभावत्.

$ चम., आर. अपवत्। स्मृसा., संम., संर. अपवत् मेधागतं च।

† शेषं गोरागतम्।

§ शेषं मेधागतम्।

( ६ ) अश्मन्तकाख्यं तृणम् । तथा बल्वजमपि ।
§ मपा. २०

( ७ ) कुशाद्यास्त्रयोऽपि तृणविशेषाः । § मर.५

( ८ ) अश्मन्तकः मालवतृणमिति नारायणसर्वज्ञः । बल्वज इति बगई इति प्रसिद्धतृणम् । † मच.

( ९ ) अश्मन्तकः कुशसदृशस्तृणविशेषः । बल्वजः सारय इति प्रसिद्धः । त्रिवृतेत्यादि चतस्रस्तृतीयाः इत्थंभूतलक्षणे । तेन त्रिरावृता गुणरज्ज्वा वर्तनत्रयेण त्रिसरपर्यवसितेन एकेन च ग्रन्थिना त्रिभिः पञ्चभिर्वा भ्रामणैर्लक्षितेन लक्षिता मेखला कार्येत्यन्वयः । भ्रामणे प्रवरसाम्येन व्यवस्थितो विकल्पः । वीमि. ११२९

( १० ) मुञ्जग्रहणम् उक्तद्रव्योपलक्षणम्, प्रतिनिधौ त्रित्वदर्शनात् । तेन मुञ्जमूर्वाशणानामभावे वर्णत्रयस्य क्रमेण कुशादयो ग्राह्या इत्यर्थं इति केचित् । वस्तुतस्तु एकैकस्याः मेखलायास्त्रयस्त्रयः प्रतिनिधयः, 'कुशाश्मन्तकबल्वजाः प्रतिनिधयो मेखलायाः' इत्याकारकश्रुतिकल्पने लाघवात् । अन्ये तु मुञ्जग्रहणाद्ब्राह्मणं प्रत्येवायं प्रतिनिध्युपदेशः, नान्यं प्रति । तथा च क्षत्रियादीनां विहितद्रव्यालाभे तत्तत्सदृशगुणं तृणादि ग्राह्यमित्याहुः । तन्न, 'एतासामप्यलाभे तु कुशाश्मन्तकबल्वजैः' इति वाक्येन मुञ्जशब्दस्योपलक्षणपरत्वावश्यंभावात्, वाचनिकात्प्रतिनिधेर्नैयायिकस्य दुर्बलत्वाच्च । वाचनिकस्याप्यभावे नैयायिको ग्राह्यः । उक्तं च त्रिकाण्डमण्डनाचार्यैः— 'शिष्टस्याभावतस्तुल्यं द्रव्यं प्रतिनिधीयते । यद्यद्यावत्सुसदृशं तत्तदेव हि गृह्यते ॥' इति । शिष्टस्य विहितस्येत्यर्थः । अत्र च मुञ्जादिस्थाने विहितानां कुशादीनां प्रतिनिधित्वान्मुञ्जधर्मतस्त्रिवृत्त्वादिधर्मलाभो भवति, नीवारेष्विव व्रीहिधर्माणां प्रोक्षणावघातादीनामिति । $ संप्र. ४३३

( ११ ) अश्मन्तकः तरुविशेषत्वक् । बल्वजः तृणविशेषः । ( त्रिवृत् ? ) त्रिवृतैकेन ग्रन्थिना त्रिवृद्भिः ( त्रिवृद् ? )ग्रन्थिभिः पञ्चत्रि( ? पञ्चभिस्त्रिभि )र्वोपलक्षिता । ‡ मुक्ता. ९५

( १२ ) अश्मन्तकं दारुविशेषः । † नन्द.

( १३ ) एकेन त्रिवृता मौञ्जी कार्या त्रिभिर्वा ग्रन्थिभिः त्रिवृता कार्या पञ्चभिर्ग्रन्थिभिः त्रिवृता वा कार्या । ‡ भाच.

§ शेषं मेधागतम् ।

† शेषं ममुवत् ।

$ शेषम् अपवत् मविगतं च । संग. संप्रगतम् ।

## व्यासः

विप्रस्य मुख्या मेखला अनुकल्पश्च, मेखलास्वरूपम्

**[१]मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला ।**
**मुञ्जालाभे कुशानां तु ग्रन्थिनैकेन वा त्रिभिः ॥**

## यमः

वर्णभेदेन भिन्ना मेखलाः, मेखलानुकल्पाः, मेखलास्वरूपम्

**[२]विप्रस्य मेखला मौञ्जी ज्या मौर्वी क्षत्रियस्य तु ।**
**शाणसूत्री तु वैश्यस्य मेखला धर्मतः स्मृताः ॥**
**[३]एतासामप्यलाभे तु कुशाश्मन्तकबल्वजैः ।**
**मेखलास्त्रिवृतः कार्या ग्रन्थिनैकेन वा त्रिभिः ॥**

त्रिवृत्त्वं त्रिर्वेष्टनेन । ग्रन्थिसंख्या च आचारात् प्रवरसंख्यया वा इत्यवस्थिता । ब्रक. १११

‡ शेषं मेधागतम् ।

† शेषं ममुवत् ।

(१) मुक्ता. ९५.

(२) स्मृच. ८० शाण ( शण ); पमा. ४४७; संप्र. ४३३ यस्य तु । शाण ( यस्य च । शण ); मुक्ता. ९५ मौर्वी ( मौञ्जी ) शाण ( शण ).

(३) ब्रक. १११; स्मृच ८० लाभे तु कुशाश्म ( भावे तु कुशाश्मा ); पमा. ४४७ लास्त्रिवृतः ( ला त्रिवृता ) शेषं स्मृचवत्; प्रपा. २२१ लाभे ( भावे ) लास्त्रिवृतः ( ला त्रिवृता ) त्रिभिः ( त्रिवृत् ); संप्र. ४३३ (=) पृ., ४३३–४३४; मुक्ता. ९५ कुशाश्म ( कुशाश्मा ) लास्त्रिवृतः ( ला त्रिवृता ).

## बृहत्पराशरः

वर्णभेदेन भिन्ना मेखलाः

[1]मुञ्जमौर्ण( ? र्व )शणानां तु त्रिवृता रशना स्मृता ॥

## पैठीनसिः

वर्णभेदेन भिन्ना मेखलाः , तत्र विकल्पा अनुकल्पा वा मतभेदेन

[2]मौञ्जी मेखलाऽश्मन्तकजा वा ब्राह्मणस्य, बैल्वजा मौर्वी वा राजन्यस्य, शाणी क्षौमी वा वैश्यस्य ॥

( १ ) अश्मन्तकः कुशसदृशः तृणविशेषः । ब्रक. १११

( २ ) क्षुमा अतसी । एतदुक्तं मुञ्जाद्यभावे वेदितव्यम् । अत एव मनुः– ' मुञ्जाभावे तु कर्तव्या... पञ्चभिरेव वा ॥ ' इति । स्मृच. ३०

( ३ ) मेखला कटिवेष्टनरज्जुः । अश्मन्तकः कुशसदृशस्तृणविशेष इति कल्पतरुः । बैल्वजा बिल्वत्वग्निर्मिता । मूर्वा तेजनी, मोलेति दाक्षिणात्यानां प्रसिद्धा, मरलेति द्रविडानाम् । तन्निर्मिता रज्जुर्मौर्वी । अयं च विकल्पो यथाशाखं यथासंभवं वा द्रष्टव्यः । संप्र. ४३१

## प्रचेताः

मेखलास्वरूपम्

[3]त्रिगुणा प्रदक्षिणा मेखला ॥

---

(१) बृपसं. ६।१५२.

(२) अप. १।२९ ( मौञ्जी मेखलाऽऽश्मन्तकी ब्राह्मणस्य ) एतावदेव ; ब्रक. १११ ; स्मृच. ३० ( मौञ्जी मेखला स्नातकी ब्राह्मणस्य बाल्वजी मौर्वी राजन्यस्य शाणी क्षौमी वा वैश्यस्य ) ; संप्र. ४३१ ; मुक्ता. ९५ कजा वा ( की च ) बैल्वजा ( बल्वजी ) ; संग. ६६२.

(३) स्मृच. ३० णा मे ( णमे ) ; ममु. २।४२ ( त्रिगुणाः प्रदक्षिणा मेखलाः ) ; मच. २।४२ मेखला + ( भवति ) ; संप्र. ४३३ ; मुक्ता. ९५ गुणा ( गुणं ).

## आश्वलायनः

वर्णभेदेन भिन्ना मेखलाः , मेखलाबन्धनफलम् , मेखलास्वरूपम् , मेखलानुध्यानम्

[1]विप्रस्य मेखला मौञ्जी ॥
ज्या मेखला क्षत्रियस्य ॥
वैश्यस्य मेखला शाणी ॥

[2]मेखला च पवित्रं च रक्षाशुद्ध्यर्थमेव वा ॥

[3]त्रिवृता मेखला कार्या त्रिवारं स्यात्समावृता ।
तद्ग्रन्थयस्त्रयः कार्याः पञ्च वा सप्त वा पुरः॥

'अत्र प्रवरसंख्यया नियमः । त्र्यार्षेयस्य ग्रन्थित्रयम्, पञ्चार्षेयस्य पञ्च, सप्तार्षेयस्य सप्त ' इति गर्गपद्धतौ । वृद्धाचारोऽप्येवमेव । † गभा. २३०

[4]वेदत्रयेणाऽऽवृतोऽहमिति मन्येत स द्विजः ।
तद्ग्रन्थयस्तदङ्गानि तद्रहस्यानि संस्मरेत् ॥

## स्मृत्यन्तरम्

मेखलादैर्घ्यम्

[5]मेखला सप्तहस्ता स्यात्.......... ॥

## स्मृत्यर्थसारः

मेखलास्वरूपम् , मेखलानुकल्पाः

[6]प्रव( ? यथ )र्षिग्रन्थिभिर्मौञ्जी त्रिवृत्स्याद्दक्षिणावृता ।
मुञ्जाभावे तु कर्तव्या कुशाश्मन्तकबल्वजैः ॥

---

† सिन्धु. , विपा. , संकौ. , संग. गभागतम् ।

(१) आश्वस्मृ. २।३७–३९.

(२) आश्वस्मृ. ११।१२७ ; प्रपा. २२७ वा (च) ; संप्र. ४३७.

(३) आश्वस्मृ. ११।१४६ पृ. ७२ मावृता (मावृतः) ; प्रपा. २२१, २२९ पुरः ( पुनः ) ; गभा. २०३ (=) प्रपावत् ; संप्र. ४३२ प्रपावत् ; सिन्धु. ९५३ प्रपावत् ; विपा. ४९२ तद्ग्रन्थयस्त्रयः ( तिस्रस्तद्ग्रन्थयः ) पुरः ( पुनः ) ; संकौ. १२४ प्रपावत् ; संग. ६६३ प्रपावत् , गदाधरभाष्ये.

(४) आश्वस्मृ. ११।१४७ ; प्रपा. २२१, २२९ ; संप्र. ४३२ ; संकौ. १२४.

(५) वीमि. १।२९. (६) स्मृसार. ५.

## निर्णयामृते

मेखलास्वरूपम्

'अथाऽऽवत्त्यैकविंशत्या शिरसि ब्रह्मचारिणः।
मेखला त्रिगुणीकृत्य कर्तव्या सांप्रदायिकैः ॥

ब्रह्मचारिणः शिरसः समन्तात् गुणमेकविंशतिवारं वेष्टयित्वा शिरोवेष्टनप्रमाणरज्जुर्ग्राह्या। सा त्रिवृता कार्या। उक्तं च निर्णयामृते– 'अथा...... सांप्रदायिकैः ॥'।

संग. ६६३

(१) संग. ६६३.

## रेणुकारिकाः

वर्णभेदेन भिन्ना मेखलाः, मेखला-स्वरूपम्, मेखलानुकल्पाः

'विप्रस्य मेखला मौञ्जी धनुर्ज्या क्षत्रियस्य तु ॥
मौर्वी वैश्यस्य विज्ञेया समा श्लक्ष्णाऽब्रवी-न्मनुः।

त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा ॥

प्रचेतोवचनादेषा मेखला स्यात्प्रदक्षिणा।
एतासामप्यलाभे तु कुशाश्मन्तकबल्वजैः ॥

(१) रेका. १२३–१२५ पृ. २८.

## बौधायनगृह्यसूत्रम्

वर्णभेदेन भिन्नप्रकृतिका अभिन्नप्रकृतिका वा दण्डाः, भिन्नप्रकृतिकत्वे प्रकृतिवृक्षविकल्पाः, क्षत्रियदण्डस्य विशेषः

**[1]पालाशं बैल्वं वा ब्राह्मणस्य। नैयग्रोधं स्कन्धजमवाङ्ग्रं रौहीतकं वा राजन्यस्य। बादरमौदुम्बरं वा वैश्यस्य। सर्वेषां वा वार्क्षम्॥**

## आश्वलायनगृह्यसूत्रम्

वर्णेषु दण्डप्रकृतिवृक्षभेदाभेदौ दण्डप्रमाणभेदश्च

**[2]तेषां दण्डाः॥**

उच्यन्ते इति शेषः। गानावृ.

**[3]पालाशो ब्राह्मणस्य, औदुम्बरः क्षत्रियस्य, बैल्वो वैश्यस्य, केशसंमितो ब्राह्मणस्य, ललाटसंमितः क्षत्रियस्य, प्राणसंमितो वैश्यस्य॥**

(१) दण्डादिनियमो मेखलाभिर्व्याख्यातः। † देभा.

(२) ते च क्रमेण मूर्धललाटनासाग्रप्रमाणाः यूपवक्राः सत्वचोऽनग्निदूषिता नृणामनुद्वेजकाः। ‡ अना.

(३) पलाशशब्दोऽत्र वृक्षवचनः, न पत्रवचनः, औदुम्बरादिसाहचर्यात्। संप्र. ४३४

---

† गानावृ. देभावत्।

‡ प्रपा. अनावत्। संम. अनागतम्।

(१) बौगृ. २।५।१७.

(२) आगृ. १।१९।१२; प्रपा. २२१; संप्र. ४३४; संम. २६.

(३) आगृ. १।१९।१३; प्रपा. २२१ प्राण (घ्राण); मर. ५ (केश...वैश्यस्य०); संप्र. ४३४ मरवत्: ४३६ (पालाशो...बैल्वो वैश्यस्य०) प्राण (घ्राण); संम. २६; संकौ. १२४ (पालाशो ब्राह्मणस्य, केशसंमितो ब्राह्मणस्य) एतावदेव.

**[1]सर्वे वा सर्वेषाम्॥**

(१) सर्वे वा दण्डाः सर्वेषां विकल्पेन भवन्ति 'पालाशो ब्राह्मणस्य' इत्येवमादयः। देभा.

(२) सर्वे दण्डाः सर्वेषां भवन्ति पालाशादयः। गानावृ.

(३) उक्ताश्चानुक्ताश्च। तथा च गौतमः– 'यज्ञियो वा सर्वेषाम्' इति। आपस्तम्बस्तु– 'वार्क्षो दण्ड इत्यवर्णसंयोगेनैक उपदिशन्ति' इति। $ अना.

## कौषीतकिगृह्यसूत्रम्

वर्णेषु दण्डप्रकृतिवृक्षभेदाभेदौ दण्डप्रमाणभेदश्च

**[2]पालाशो बैल्वो वा दण्डो ब्राह्मणस्य॥**

**नैयग्रोधः क्षत्रियस्य॥**

**औदुम्बरो वैश्यस्य॥**

**प्राणसंमितो ब्राह्मणस्य॥**

**ललाटसंमितः क्षत्रियस्य॥**

**केशसंमितो वैश्यस्य॥**

**सर्वे वा सर्वेषाम्॥**

## आपस्तम्बगृह्यसूत्रम्

वर्णेषु दण्डप्रकृतिभेदाभेदौ

**[3]पालाशो दण्डो ब्राह्मणस्य, नैयग्रोधः स्कन्धजोऽवाङ्ग्रो राजन्यस्य, बादर औदुम्बरो वा वैश्यस्य॥**

(१) राजन्यवैश्ययोर्विशेषविधानादेव सिद्धे ब्राह्मणग्रहणम् अयमपि विधिर्वर्णसंयुक्तो यथा स्यादिति।

---

$ प्रपा. अनावत्।

(१) आगृ. १।२०।१; प्रपा. २२१; संप्र. ४३५ पारस्कराश्वलायनौ; संम. २६.

(२) कौगृ. २।१।१८–२४.

(३) आपगृ. ११।१५; ब्रक. ११४ (नैयग्रोधस्कन्धजोऽवाङ्ग्रो राजन्यस्य) एतावदेव; मुक्ता. ९३; आन. १५६ (पालाशो दण्डो ब्राह्मणस्य) एतावदेव.

तेन 'वार्क्षो दण्डः' इत्ययं विकल्पो ब्राह्मणस्यापि भवति। इतरथा राजन्यवैश्ययोरेव स्यात् तयोरेव वर्णसंयुक्तं विधानमिति कृत्वा। न्यग्रोधस्य विकारो नैयग्रोधः। स्कन्धे जातः स्कन्धजः। अवाचीनाग्रः अवाङ्ग्रः। ङकारपाठश्छान्दसः। बदर्या विकारो बादरः। वृक्षप्रकरणात् उदुम्बरो वृक्षः, न ताम्रम्।

अनाकुला.

(२) अथ वर्णक्रमेण त्रिभिः सूत्रैर्दण्डानां गुणविधिमाह— पालाश इति। पालाशः पलाशवृक्षस्य विकारः। एवमुत्तरेष्वपि विग्रहः। ¶ ताद.

[१]वार्क्षो दण्ड इत्यवर्णसंयोगेनैक उपदिशन्ति॥

(१) वृक्षस्य विकारो वार्क्षः। यज्ञियस्य वृक्षस्य इति कल्पान्तरे। पूर्वो विधिर्वर्णसंयुक्तः, अयं तु सर्वसाधारणो न केनचित् वर्णविशेषेण संयुज्यते। अत्र च सामयाचारिक एव दण्डविधिः सर्वचरणार्थः सन्निहानूद्यते नैयग्रोधादिषु मन्त्रप्रापणार्थम्। अन्यथा पालाशस्यैव मन्त्रेणाऽऽदानं स्यात्, तूष्णीमन्येषाम्, 'सुश्रवः' इत्यस्य पालाशाभिधानत्वात् 'देवा वै ब्रह्मन्नवदन्त तत्पर्ण उपाशृणोत् सुश्रवा वै नाम' (तैसं. ३।५।७।२) इति। वार्क्षो दण्ड इत्येतावतैव सिद्धे अवर्णसंयोगेनेति वचनं कल्पान्तरयोरसंभेददर्शनार्थम्— यदि वर्णसंयुक्तः कल्पः प्रक्रान्तः स एवाऽऽ समावर्तनात् कर्तव्य इति।

अनाकुला.

(२) वार्क्षः वृक्षस्य यज्ञियस्य विकारः, न तु वेणुवेत्रादेः। अवर्णसंयोगेन सर्ववर्णानामविशेषेणैत्येकोपदिशन्ति। अत्र यद्यपि 'तत् पर्ण उपाशृणोत्सुश्रवा वै नाम' इत्यर्थवादेन मन्त्रस्थसुश्रवःशब्दस्य पालाशाभिधानलिङ्गत्वात् अनेन मन्त्रेण नैयग्रोधादिदण्डानामप्युपादाने लिङ्गविरोधः, तथापि 'दण्डमुत्तरेणाऽऽदत्ते' इति श्रुतिप्राबल्यात् लिङ्गं बाधित्वाऽनेनैव सर्वदण्डानामुपादानम्। धर्मशास्त्रे 'पालाशो दण्डो ब्राह्मणस्य' (आध. १।१।३८) इत्यादि पुनर्विधानं च 'त्रैविद्यकं ब्रह्मचर्यं चरेत्' (आध. १।१।२८) इत्युपनयनकालातिपत्तिप्रायश्चित्तानुष्ठानेऽपि तत्तद्वर्णेन तत्तद्दण्डधारणार्थम्। केचित्— तत्रैव सर्वचरणार्थं विहितानां दण्डानां गृह्येऽनुवादः सर्वेषामुपादानेऽपि श्रुत्यैतन्मन्त्रविधानार्थं इति। † ताद.

## हिरण्यकेशिगृह्यसूत्रम्

वर्णभेदेन दण्डप्रकृतिभेदः

[१]**बैल्वं पालाशं वा दण्डं ब्राह्मणस्य, नैयग्रोधं राजन्यस्य, औदुम्बरं वैश्यस्य॥**

बैल्वः बिल्वमयः पालाशः पलाशमयः दण्डो ब्राह्मणस्य। नैयग्रोधः वटमयः। 'स्कन्धजो( बादरो वा ? )ऽवाङ्ग्रदण्डः' इति धर्मेषु विशेषः। औदुम्बरेण बादरस्य धर्मेषु विकल्पः। 'वार्क्षो दण्ड इत्यवर्णसंयोगेनैक उपदिशन्ति' इति सर्वेषामनियतवृक्षत्वं दण्डानाम्। 'चतुष्प्रादेशं मस्तकललाटनासिकाग्रप्रमाणैः स्युः' इति सिद्धमात्मीयेषु दण्डेषु मेखलानां धर्मत एव सिद्धेर्वृक्षादिगुणवचनं धर्मगृह्यान्तरविहितविशेषविधिपरिग्रहार्थम् (१)।

मातृद.

## भारद्वाजगृह्यसूत्रम्

वर्णभेदेन दण्डप्रकृतिभेदः

[२]**बैल्वं पालाशं वा दण्डं ब्राह्मणस्य, नैयग्रोधं राजन्यस्य, औदुम्बरं वैश्यस्य॥**

## काठकगृह्यसूत्रम्

सशल्को दण्डः, वर्णभेदेन दण्डप्रकृतिभेदः

[३]**सशल्कदण्डः॥**

इह सामान्याभिधानेऽपि दण्डः पालाशादिः यथायथं वक्ष्यमाणः। सह शल्केन त्वचा वर्तमानो दण्डो यस्य स सशल्कदण्डः। स्यादित्यनुषङ्ग एव। ¶ देव.

---

¶ शेषम् अनाकुलागतम्।

(१) आपगृ. ११।१६ ; संप्र. ४३६ ; मुक्ता. ९३.

† मुक्ता., आन. तादगतम्।

¶ ब्राह्म., आवि. देवगतम्।

(१) हिगृ. १९।१।१४ ; मेधा. २।४५ (बैल्वः पालाशो ब्राह्मणस्य दण्डः) एतावदेव, गृह्यम् ; संप्र. ४३४ बैल्वं (बिल्वं) ; संर. १९३.

(२) भागृ. १।२. (३) कागृ. १।५.

[1]पालाशं दण्डं ब्राह्मणाय प्रयच्छति, आश्वत्थं राजन्याय, नैयग्रोधं वैश्याय ॥

(१) एवं प्रकृतं दण्डं पालाशं ब्राह्मणाय ब्रह्मचारिणेऽनुवचनान्ते प्रयच्छत्याचार्यः । अश्वत्थः$ वटः । वैश्याय न्यग्रोधसंबन्धिनं प्रयच्छति दण्डम् । देव.

(२) ततः पालाशं दण्डं ब्राह्मणाय प्रयच्छति तमेवं संस्कृतम् । ¶ पुनः पालाशग्रहणात्क्षत्रियवैश्ययोः पालाशच्छायायामेव स्थितयोः, न तु प्रातिस्विकदण्डच्छायागतयोः । क्षत्रियवैश्ययोः पालाशच्छायागतयोर्वाचने मन्त्रगतो ब्राह्मणशब्दो न विरुध्यते, ब्रह्मरूपत्वाद्ब्रह्मचारिणः । यथा 'अथ यत्कृष्णाजिनी दण्डी मेखल्युपवीती च भवति तद्ब्रह्मणो रूपम्' इति । क्षत्रियवैश्याभ्यामाश्वत्थनैयग्रोधावेव दीयेते, वाचनमात्रं तयोः प(?पा)लाशे । तदेतदुक्तम्— 'पालाशं दण्डं ...... वैश्याय' इति । आवि.

## वाराहगृह्यसूत्रम्

वर्णेषु दण्डप्रकृतिभेदाभेदौ, दण्डस्य सशल्कत्वम्

[2]पालाशं दण्डं ब्राह्मणाय प्रयच्छति, नैयग्रोधं क्षत्रियाय, आश्वत्थं वैश्याय ॥

[3]सशल्कदण्डः । ...यौपस्य वृक्षस्य दण्डी स्यात् ॥

## आग्निवेश्यगृह्यसूत्रम्

वर्णभेदेन दण्डप्रकृतिभेदः

[4]बैल्वं पालाशं वा दण्डं ब्राह्मणस्य, नैयग्रोधं राजन्यस्य, औदुम्बरं वैश्यस्य ॥

---

$ यद्यपि वटवाचकस्यापि न्यग्रोधशब्दस्य शमीपरत्वमाश्रित्याश्वत्थशब्दस्य वटवाचकत्वमत्र न विरुध्यते, तथापि नाश्वत्थशब्दस्य वटवाचकत्वं कोशेषूपलभ्यते ।

¶ प्रथमं पालाशग्रहणं पालाशच्छायागतस्य वाचनं च उपनयनप्रयोगप्रकरणे द्रष्टव्यम् ।

(१) काग्र. ४१।२२.

(२) वाग्र. ५.

(३) वाग्र. ६.

(४) आग्निग्र. १।१।१.

## पारस्करगृह्यसूत्रम्

वर्णेषु दण्डप्रकृतिभेदाभेदौ दण्डप्रमाणानि च

[1]पालाशो ब्राह्मणस्य दण्डः ॥

[2]बैल्वो राजन्यस्य ॥

औदुम्बरो वैश्यस्य ॥

(१) भवति । कभा.

(२) पालाशः पलाशवृक्षोद्भवः ब्राह्मणस्य ब्रह्मचारिणो दण्डो भवति । बैल्वः बिल्ववृक्षोद्भवः क्षत्रियस्य । औदुम्बरः उदुम्बरवृक्षोद्भवः वैश्यस्य । † हभा.

(३) पालाशशब्दोऽत्र वृक्षवचनः, न पत्रवचनः, औदुम्बरादिसाहचर्यात् । संग. ६७१

$[3]केशसंमितो ब्राह्मणस्य, ललाटसंमितः क्षत्रियस्य, घ्राणसंमितो वैश्यस्य ॥

(१) अत्राऽऽचार्येणासूत्रितमपि दण्डमानमुपयुक्तत्वादविरोधित्वाच्छाखान्तरीयं ग्राह्यम् । तच्च 'केशसंमितो ...... वैश्यस्य' इति दण्डं प्रक्रम्योक्तम् । यद्यपि

---

† संदी. हभावत् । गभा. हभागतम् ।

$ इदं सूत्रं पाग्र. २।५।२७-२८ इति सूत्रयोर्मध्ये हरिहरः विश्वनाथश्च पारस्करीयत्वेन व्याख्यातः । कर्कजयरामभाष्ययोर्नास्य व्याख्यानं विद्यते, प्रत्युत जयरामः इदं सूत्रं शाखान्तरीयत्वेनोल्लिख्य एतदुक्तं दण्डमानं ग्राह्यमिति ब्रवीति । गदाधरः एतत्सर्वं समालोच्य प्रक्षिप्तमिति वदति । ब्रह्मचारिकल्पतरुस्मृतिचन्द्रिकास्मृतिसारमदनरत्नवीरमित्रोदयासु पारस्करसूत्रपाठे एतत्सूत्रं न विद्यते । संस्कारगणपतौ सूत्रपाठे इदं विद्यते, व्याख्यावसरे तु नोल्लिखितं न वा व्याख्यातम् । संस्कारदीपके चैतत्संगृहीतं व्याख्यातं च ।

(१) पाग्र. २।५।२५ ; ब्रक. ११२ (पालाशो दण्डो ब्राह्मणस्य ) ; स्मृच. ३० ; स्मृसा. ६ ; मर. ५ ब्रकवत् ; वीमि. १।२९ ; संप्र. ४३४.

(२) पाग्र. २।५।२६-२७ ; ब्रक. ११२ ; स्मृच. ३० ; स्मृसा. ६ ; मर. ५ ; वीमि. १।२९ ; संप्र. ४३४.

(३) पाग्र. २।५।२७-२८ इति सूत्रयोर्मध्ये विमतपाठम् ; विभा. ब्राह्मणस्य + ( दण्डः ) ; संप्र. ४३६ विभावत्.

श्रुत्या 'मुखसंमितो भवत्येतावत्' इत्यादिकया ब्राह्मणमधिकृत्य मुखसंमितत्वमुक्तम्, तच्छ्रौतदण्डविषयम्, 'मुखसंमितमौदुम्बरं दण्डं प्रयच्छति' इत्यौदुम्बरमभिधाय(?राभिधानात्), अत्र पालाशस्य विधानात्। जभा.

(२) स च केशसंमितः पादादि(केश)मूलावधिप्रमाणकः ब्राह्मणस्य। क्षत्रियस्य ललाटसंमितः ललाटावधिपरिमाणः भ्रूमध्यावधिरित्यर्थः। वैश्यस्य ब्रह्मचारिणः पादादिरोष्ठावधिको दण्डः। हभा.

(३) अत्राऽऽचार्येणानुक्तमपि दण्डमानमुपयुक्तत्वादविरोधित्वाच्छाखान्तरीयं ग्राह्यम्। तच्च 'केश... वैश्यस्येति दण्डं प्रक्रम्योक्तम्' इति जयरामभाष्ये। इदं च सूत्रं सूत्रत्वेन हरिहरभाष्ये तिष्ठति। भर्तृयज्ञकर्कादिग्रन्थेषु नोपलभ्यते। अतः क्षिप्तमेतदित्याभाति। गभा.

(४) केशसंमितः केशमूलसंमितः ललाटसंमित इत्यर्थः। अन्यथा सर्ववापनादिपक्षो बाध्येतेत्यभिप्रायः। ललाटावधिः प्राणसंमित इत्यर्थः। प्राणावधिः मुखसंमित इत्यर्थः। विभा.

**[1]सर्वे वा सर्वेषाम्॥**

(१) सर्वेषामनियमेन भवन्ति। ‡ कभा.

(२) यद्वा सर्वेषां ब्राह्मणक्षत्रियविशां ब्रह्मचारिणां सर्वे पालाशबैल्वौदुम्बरा अनियमेन दण्डा भवन्ति। नियमोऽत्र नास्ति। मुख्यालाभे यथालाभमुपादेयम्। † हभा. ६

(४) एतेषामभावे सर्वेषां सर्वे यज्ञियाः। $ स्मृसा. ६

‡ जभा. कभावत्।

† गभा., विभा., संग., संदी. हभावत्।

$ वीमि. स्मृसावत्।

(१) **पागृ.** २।५।२८; **ब्रक.** ११२; **स्मृच.** ३०; **स्मृसा.** ६; **मर.** ५; **वीमि.** १।२९; **संप्र.** ४३५ पारस्कराश्वलायनौ.

## गोभिलगृह्यसूत्रम्

वर्णेषु दण्डप्रकृतिभेदाभेदौ

**[1]पार्णबैल्वाश्वत्था दण्डाः॥**

(१) पार्णः पालाशः। $ संत. ९३०

(२) पार्णः पालाशः। 'पलाशे किंशुकः पर्णो वातपोतः(?थः)' इत्यमरः। बिल्वाश्वत्थौ प्रसिद्धौ। पालाशादयः क्रमेण ब्राह्मणादीनां दण्डाः प्रशस्ता इत्यर्थः। तथा च पारस्करः— 'पालाशो ब्राह्मणस्य दण्डो बैल्वो राजन्यस्यौदुम्बरो वैश्यस्य सर्वे वा सर्वेषाम्' इति। एषामभावे सर्वेषां सर्वे यज्ञियाः। औदुम्बर इति कुलकल्पभेदेन। स्मृतिः— 'धारयेद्बैल्वपालाशौ दण्डौ केशान्तिकौ द्विजः। यज्ञार्हवृक्षजं वाऽथ सौम्यमव्रणमेव च॥' इति। मनुः— 'केशान्तिको ब्राह्मणस्य दण्डः कार्यः प्रमाणतः। ललाटसंमितो राज्ञः स्यान्नासासंमितो विशः॥' (मस्मृ. २।४) इति। केशस्य ललाटोर्ध्वकेशजन्मस्थानस्यान्तः केशान्तः। एवं चोर्ध्वस्थितस्य पुरुषस्य भूमितस्तत्पर्यन्तपरिमाणतो ब्राह्मणस्य दण्डः कार्यः। भ्रूमध्यसंमितो राज्ञः, नासाग्रसंमितो वैश्यस्येत्यर्थः। यत्तु— केशान्तिकः कर्णसमीपकेशमूलपर्यन्त इति कस्यचिद्व्याख्यानम्, तन्न, तथा सति ब्राह्मणक्षत्रिययोस्तस्य तुल्यपरिमाणत्वेन पृथगुपदेशानर्थक्यापत्तेरिति बोध्यम्। तथा— 'ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः। अनुद्वेगकरा नृणां सत्वचो नाग्निदूषिताः॥' इति। ऋजव इति। अग्रादन्यत्र, 'यूपवक्राः' इति गौतमेन नताग्रत्वस्य विधानात्। अव्रणाः अच्छिद्राः। सौम्यदर्शनाः अतिस्थौल्यादिना अभयानकाः, अनुद्वेगकराः स्वरूपेणाभीषणाः इति मुरारिः। अदुःखदाः परेषामघातुकानामिति वयम्। मृदुला.

$ वीमि. संतवत्।

(१) **गोगृ.** २।१०।११; **संत.** ९३० श्वत्था दण्डाः (श्वत्थदण्डाः); **वीमि.** १।२९ (पार्णबैल्वा दण्डाः); **संर.** १९४.

$'एतेनैवेतराणि द्रव्याणि व्याख्यातानि ॥

¶अलाभे वा सर्वाणि सर्वेषाम् ॥

## जैमिनिगृह्यसूत्रम्

वर्णेषु दण्डप्रकृतिभेदाभेदौ, ब्राह्मणदण्डप्रमाणम्, ब्राह्मणस्य काम्यो दण्डः

**'प्राणसंमितं पालाशं ब्राह्मणस्य, बैल्वं ब्रह्मवर्चसकामस्य, नैयग्रोधं राजन्यस्य, औदुम्बरं वैश्यस्य, पालाशं वा सर्वेषाम् ॥**

## वैखानसगृह्यसूत्रम्

वर्णभेदेन दण्डप्रकृतिभेदः, दण्डप्रमाणानि, दण्डस्वरूपम्

**'ब्राह्मणस्य पालाशो बैल्वो वा केशान्तो निर्व्रणोऽनुमृष्टोऽनुद्वेजनो यूपवद्वक्रो(? वदवक्रो) दण्डः ॥**

**क्षत्रियस्य नैयग्रोधो ललाटान्तो दण्डः ॥**

**वैश्यस्यौदुम्बरो नासिकान्तो दण्डः ॥**

## गौतमः

वर्णेषु दण्डप्रकृतिभेदाभेदौ, दण्डस्वरूपम्, दण्डप्रमाणानि

**'बैल्वपालाशौ ब्राह्मणदण्डौ ॥**

बैल्वः पालाशो वा ब्राह्मणस्य दण्डः। यद्यपि द्वन्द्वनिर्देशः, तथापि 'यज्ञियो वा सर्वेषाम्' इत्येकवचननिर्देशात् 'प्रतिगृह्येप्सितं दण्डम्' इति स्मृत्यन्तरदर्शनाच्च एकस्यैव धारणं युक्तम्। † मभा.

$ अस्य व्याख्यानमजिनप्रकरणे द्रष्टव्यम्।

¶ अस्य व्याख्यानं वस्त्रप्रकरणे (सं. का. पृ. ३०८१) द्रष्टव्यम्।

† गौमि. मभागतम्।

(१) गोगृ. २।१०।१३-१४. शेषस्थलादिनिर्देशा वस्त्राजिनप्रकरणयोर्द्रष्टव्याः.

(२) जैगृ. १।१२. (३) वैगृ. २।४.

(४) गौध. १।२४; विश्व. १।२९; मभा.; गौमि. १।२१.

सं. का. ३९०

**'आश्वत्थपैलवौ शेषे ॥**

(१) अश्वत्थः प्रसिद्धः। पीलुः कल्किः। शेषे क्षत्रियवैश्यविषये। तत्रापि क्षत्रियस्याऽऽश्वत्थः, वैश्यस्य पैलवः। मभा.

(२) पीलुः वृक्षविशेषः उताउता इति प्रसिद्धः। शेषे क्षत्रियवैश्यविषये। गौमि.

**'यज्ञियो वा सर्वेषाम् ॥**

(१) यज्ञार्हो वा स्यात्। विभीतकबिल्वकयावकादिवर्जितो वृक्षविशेष इत्यर्थः। वाशब्दोऽभावविकल्पार्थः, अतः पूर्वेषामभावे। अन्यथाऽपार्थो वाशब्दः। सर्वेषांग्रहणमनन्तरयोरेव मा भूदिति। ¶ मभा.

(२) यज्ञियः यज्ञार्हवृक्षीयः। स चाभिहितो ब्रह्मपुराणे— 'शमीपलाशन्यग्रोधप्लक्षवैकङ्कतोद्भवाः। अश्वत्थोदुम्बरौ बिल्वश्चन्दनः सरलस्तथा। सालश्च देवदारुश्च खदिरश्चेति यज्ञियाः॥' इति। † संप्र. ४३५

**'अपीडिता यूपवक्राः सशल्काः ॥**

इदानीं दण्डगुणमाह— अपीडिता इति। अपीडिताः वल्लीवेष्टनकीटाग्न्यादिभिरनुपहता इत्यर्थः। यूपवक्राः यूपवन्नताग्रा इत्यर्थः। सशल्काः सत्वचः। असमासात् सर्वे एवंरूपाः, न तु यथासंख्यम्। तथा चाऽऽह मनुः— 'ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः। अनुद्वेग-

¶ गौमि., स्मृच. मभागतम्।

† संग. संप्रवत्।

(१) गौध. १।२५; मभा.; गौमि. १।२२.

(२) गौध. १।२६; मभा.; गौमि. १।२३; स्मृच. ३०; प्रपा. २२१-२२२ यो वा स (यः स); संप्र. ४३५; मुक्ता. ९३; सिन्धु. ९५४; संकौ. १२४; संग. ६७१.

(३) गौध. १।२७; ब्रक. ११४; मभा.; गौमि. १।२४; स्मृच. ३०; पमा. ४४८ वक्राः सशल्काः (वक्त्राः सवल्काः); वीमि. १।२९ (यूपवक्राः) एतावदेव; संप्र. ४३६ पमावत्; मुक्ता. ९३; संग. ६७१ पमावत्.

करा नृणां सत्वचोऽनग्निदूषिताः ॥' ( मस्मृ. २।४७ ) इति । ¶ मभा.

'मूर्धललाटनासाग्रप्रमाणाः ॥

प्रमाणशब्दः प्रत्येकं संबध्यते । मूर्धप्रमाणा ब्राह्मणस्य, ललाटप्रमाणाः क्षत्रियस्य, नासाग्रप्रमाणा वैश्यस्य । तथा च मनुः— 'केशान्तिको ब्राह्मणस्य दण्डः कार्यः प्रमाणतः । ललाटसंमितो राज्ञः स्यात्तु नासान्तिको विशः ॥' ( मस्मृ. २।४६ ) इति । § मभा.

## बौधायनः

दण्डप्रकृतिर्यज्ञियो वृक्षः, वर्णेषु दण्डप्रमाणानि

'मूर्धललाटनासाग्रप्रमाणा याज्ञिकस्य वृक्षस्य दण्डाः ॥

( १ ) एषां क्रमेणेत्यनुषज्यते । याज्ञिकवृक्षविशेषाः पलाशादयो गृह्य एवोक्ताः । तेषां मध्ये प्रतिगृहीयादीप्सितं दण्डम् । बौवि.

( २ ) ब्राह्मणक्षत्रियवैश्यानां क्रमेण दण्डप्रमाणानीत्यर्थः, 'एषां क्रमेण' इति पूर्वत्रोपक्रमात् । अत्र मूर्धादिप्रमाणानि संस्कार्यस्य ग्राह्याणि । संर. १९३

## आपस्तम्बः हिरण्यकेशिधर्मसूत्रं च

वर्णेषु दण्डप्रकृतिभेदाभेदौ, क्षत्रियदण्डे विशेषः

'पालाशो दण्डो ब्राह्मणस्य, नैयग्रोधस्कन्धजोऽवाङ्ग्रो राजन्यस्य, बादर औदुम्बरो वा वैश्यस्य । वार्क्षो दण्ड इत्यवर्णसंयोगेनैक उपदिशन्ति ॥

( १ ) पालाशो दण्ड इत्यादि गृह्ये गतम् । उ.

( २ ) नैयग्रोधः वटमयः, स च— स्कन्धः शाखाविशेषः, तस्माज्जातः, अवाङ् अवाचीनम् अग्रं यस्यैतादृशश्च । बादरः बदरवृक्षजः । वार्क्षः वृक्षमात्रजः अनियतवृक्षजः, एतादृशो दण्डः सर्वेषां वर्णानां भवतीत्येक आचार्या उपदिशन्तीत्यर्थः । संर. १९३

## वसिष्ठः

वर्णभेदेन दण्डप्रकृति-प्रमाणभेदाः

'पालाशो बैल्वो वा दण्डो ब्राह्मणस्य, नैयग्रोधः क्षत्रियस्य वा, औदुम्बरो वा वैश्यस्य ॥

'केशसंमितो ब्राह्मणस्य, ललाटसंमितः क्षत्रियस्य, घ्राणसंमितो वैश्यस्य ॥

## विष्णुः

वर्णेषु दण्डप्रकृतिभेदाभेदौ, दण्डानां प्रमाणानि स्वरूपं च

'पालाशखादिरौदुम्बरा दण्डाः ॥

---

¶ गौमि., ब्रक., स्मृच., संप्र., मुक्ता., संग. मभागतम् ।

§ गौमि. मभावत् ।

(१) गौध. १।२८ ; मपा. ; गौमि. १।२५ ; स्मृच. ३० ; पमा. ४४८ ; संप्र. ४३६ ; व्रम. २१ प्रमाणाः ( प्रमाणः ) ; मुक्ता. ९३ ; सिन्धु. ९५४ चमवत् ; संको. १२४ चमवत् ; बाल. १।२९ पृ. १५१ चमवत्.

(२) बौध. १।३।१६ ; मुक्ता. ९३ णा याज्ञिक (णो याज्ञिय ) दण्डाः ( दण्डः ) ; संर. १९३ णा याज्ञिक ( णो यज्ञिय ) दण्डाः ( दण्डः ).

(३) आध. १।२।३८ ; हिध. २६।१।६९ पालाशो ( बैल्वः पालाशो वा ) धस्कन्ध ( धः स्कन्ध ) ; प्रपा.

२२२ ( अवार्क्षा दण्डा इत्यवर्णसंयोगेनैक उपदिशन्ति ) एतावदेव ; बाल. १।२९ पृ. १५० (नैयग्रो...दिशन्ति०), धर्मसूत्रम् ; संर. १९३ हिधवत्, हिध.

(१) वस्मृ. ११।४५ ; गोरा. २।४५ ( ब्राह्मणस्य बैल्वः पालाशो वा दण्डः ) एतावदेव ; मनु. २।४५ ( बैल्वः पालाशो वा दण्डः ) एतावदेव ; मच. २।४५ ( बैल्वः पालाशो वा ब्राह्मणदण्डः ) एतावदेव ; संम. २६ ( बैल्वः पालाशो वा ) एतावदेव.

(२) वस्मृ. ११।४६ ; ब्रक. ११३ केश ( घ्राण ) घ्राण ( केश ) ; स्मृच. ३० ; स्मृसा. ६ केश ( घ्राण ) क्षत्रिय ( राजन्य ) घ्राण (केश ) ; संप्र. ४३६ ब्रकवत् ; मुक्ता. ९३ ब्रकवत् ; आन. १५६ ( प्राणसममिति ब्राह्मणस्य ) एतावदेव.

(३) विस्मृ. २७।२१ दुम्बरा ( डुम्बरा ) ; ब्रक. ११३ खादिरौ ( खदिरौ ) ; संप्र. ४३४, ४३७ ; संग. ६७१.

¹केशान्तललाटनासादेशतुल्याः ॥
²सर्वे एव वा ॥
अकुटिलाः सत्वचश्च ॥

## शङ्खः

वर्णभेदेन दण्डप्रकृतिभेदाः, दण्डानां प्रमाणानि स्वरूपं च

³पर्णपिप्पलबिल्वानां क्रमाद्दण्डाः प्रकीर्तिताः ।
केशदेशललाटास्यतुल्याः प्रोक्ताः क्रमेण तु ॥
⁴अवक्राः सत्वचः सर्वे नाग्निदग्धास्तथैव च ॥

## शङ्खलिखितौ

दण्डप्रकृतयः, दण्डप्रमाणानि

⁵बिल्वपालाशखादिराश्वत्थपैलवौदुम्बरा
दण्डाः केशललाटवक्त्रान्ताः ॥

## मनुः

वर्णभेदेन दण्डप्रकृतिभेदः, दण्डप्रमाणानि, दण्डस्वरूपम्

⁶ब्राह्मणो बैल्वपालाशौ क्षत्रियो वाटखादिरौ ।
पैलवौदुम्बरौ वैश्यो दण्डानर्हन्ति धर्मतः ॥

---

(१) विस्मृ. २७।२२; ब्रक. ११३; संप्र. ४३७.

(२) विस्मृ. २७।२३–२४.

(३) शंस्मृ. २।१०; ब्रक. ११२ पू.; स्मृच. ३० शदेश (शावधि) टास्य (टांस) उत्त.; संप्र. ४३५ पू. : ४३७ शदेश (शावधि) टास्यतु (टान्तास्तु) उत्त.; मुक्ता. ९३ तु (ते) शेषं सर्वं स्मृचवत्.

(४) शंस्मृ. २।११. (५) संप्र. ४३७.

(६) मस्मृ. २।४५; अप. १।२९ वाट (वट) पैलवौ (पैप्पलौ) नर्हन्ति (नर्हति); स्मृच. २९ वाट (वट); पमा. ४४७; मपा. २२ दुम्बरौ (डुम्बरौ) नर्हन्ति (नर्हति); मर. ५; वीक. १।२९–३० पैलवौ (पैलवो) नर्हन्ति (नर्हति); संत. ९३० पैलवौदु (वैणवोडु); वीमि. १।२९; संप्र. ४३४ बैल्व (बिल्व) वाट (वट); चम. २१ पैलवौ (पैप्पलौ) नर्हन्ति (नर्हति); मुक्ता. ९३ पैलवौ (पैप्पलौ); संम. २६; सिन्धु. ९५४ मुक्तावत्; बाल. १।२९ पृ. १५० चमवत्; नन्द. मुक्तावत्; संर. १९३ ब्राह्मणो (ब्राह्मणे) यो वाट (ये वट) वैश्यो (वैश्ये) शेषं मुक्तावत्.

(१) सत्यपि द्वन्द्वनिर्देशे गुणविधिष्वेकत्वश्रवणात् 'केशान्तिकः' इति 'प्रतिगृह्येप्सितं दण्डम्' इति च, विकल्पितमेकदण्डधारणं प्रतीयते। 'बैल्वः पालाशो ब्राह्मणस्य दण्डः' इति गृह्ये गौतमीये चैकदण्डग्रहणमेवोक्तम्। इह केवला दण्डसत्ता श्रूयते 'दण्डानर्हन्ति'। दण्डा एते ब्रह्मचारिणां योग्याः। कस्यां क्रियायामित्येतदत्र चो(? नो)क्तम्, उत्तरत्र भविष्यति– 'प्रतिगृह्येप्सितम्' इति। तस्मिंश्च ग्रहणे दण्डस्योपादेयत्वाद्विवक्षितमेकत्वम्। अत इह द्विवचननिर्देशः 'देवश्चेद्वर्षेद्द्वयः कृषिं कुर्युः' इति यथा प्राप्तानुवादः। बिल्वपैलाशवटखदिरपीलूदुम्बरा वृक्षजातिविशेषनामधेयानि। बिल्वस्य विकारोऽवयवो वा बैल्वः। एवं सर्वत्र। प्रदर्शनार्थाश्चैते, 'यज्ञिया वा सर्वेषाम्' इति वचनात्। $ मेधा.

(२) धर्मतः कुलशीलानुरोधेन द्वयोर्द्वयोरन्यतरो बिल्वादिर्यस्य कुले यः परिगृहीत इत्यर्थः। अत एवात्र न विकल्पः। असवर्णेऽपि (?) न द्विद्विदण्डसमुच्चयः शङ्क्यः, 'प्रतिगृह्येप्सितं दण्डम्' इति वक्ष्यमाणत्वात्। औदुम्बरः काष्ठसाहचर्यान्न ताम्रमयः। मवि.

(३) पीलुः स्रंसी। † स्मृच. २९

(४) पैप्पलः आश्वत्थः। धर्मतः समानधर्मयोगादित्यर्थः। ब्राह्मणो बैल्वदण्डं धर्मतोऽर्हति, उभयोरपि ब्रह्मवर्चससंबन्धसामान्यात्। ब्रह्मवर्चसाधिकरणं ब्राह्मणः। बैल्वस्तु ब्रह्मवर्चसविकारः, 'असौ वा आदित्यो यतोऽजायत ततो बिल्व उदतिष्ठत्सयोन्येव ब्रह्मवर्चसमवरुन्धे' (तैसं. २।१।८।१,२) इति श्रुतेः। ब्राह्मणः पालाशं चार्हति, उभयोर्गायत्रत्वात्। 'गायत्रो वै ब्राह्मणो गायत्रः पर्णः' इति हि श्रूयते। वाटदण्डं क्षत्रियो धर्मतोऽर्हति, उभयोरेकवर्णत्वात्।

---

$ गोरा., ममु., संत., मच., संम., संर. मेधागतम्।

† शेषं मेधागतम्। वीमि., संप्र. स्मृचवत्तात्पर्यम्।

तदुक्तमैतरेयब्राह्मणे— 'क्षत्रं वा एतद्वनस्पतीनां यन्न्यग्रोधः क्षत्रं राजन्यः' (ऐब्रा. ७।५।५) इति । खादिरं चार्हति, उभयोर्बलिष्ठत्वसामान्यात् । वैश्यः पैप्पलमर्हति, अश्वत्थवैश्ययोरोजःसंबन्धात् । 'मरुतां वा एतदोजो यदश्वत्थः' (तैसं. २।३।१।५), 'मरुतो वै देवानां विशः' (तैसं ५।४।७।७) इति हि श्रूयते । उदुम्बरं चार्हति, उभयोः पशुसंबन्धसामान्यात् । पशुपालो वैश्यः प्रसिद्धः । पशुविकार उदुम्बरः, 'देवा वा ऊर्जं व्यभजन्त तत उदुम्बर उदतिष्ठत् ऊर्क् पशवः' (तैब्रा. १।१।३) इति श्रुतेः । § मुक्ता. ९३

(६) पैलवेति पाठे समानधर्मयोगोऽन्वेष्टव्यः । ‡ नन्द.

(७) ब्राह्मणस्य बैल्वपालाशौ भवतः पालाशस्याभावे बैल्वः बिल्ववृक्षस्य दण्डः कार्यः । § भाच.

**[1]केशान्तिको ब्राह्मणस्य दण्डः कार्यः प्रमाणतः ।**
**ललाटसंमितो राज्ञः स्यात्तु नासान्तिको विशः ॥**

(१) आकारविशेषवचनो दण्डशब्दः । दीर्घे काष्ठे संमितायामं दण्ड इत्युच्यते । कियत्तस्य दैर्घ्यमित्यपेक्षायामाह— केशान्तं गच्छति प्राप्नोति केशान्तगः मूर्धप्रमाणः । पादाग्रादारभ्य मूर्धावधिः केशान्तगः । केशा वाऽन्तोऽस्येति केशान्तकः । समासान्तः ककारः । प्रमाणतः प्रमाणेनानेन युक्तो दण्डः कार्यः कारयितव्यः ब्राह्मणस्याऽऽचार्येण । ललाटसंमितः ललाटान्तमितः ललाटान्तप्रमाणः । ललाटमात्रे चतुरङ्गुलेन मीयमानस्य दण्डशब्दवाच्यत्वाभावादेवं व्याख्यायते । पादाग्रादारभ्य यावल्ललाटान्तं प्राप्तः । एवं विशः वैश्यस्य नासान्तग इति । ¶ मेधा.

(२) केशललाटनासिकासमीपप्रमाणा यथाक्रमं ब्राह्मणादीनां दण्डाः कार्याः । ‡ गोरा.

(३) केशा एव अन्तः इव(?अव)च्छेदो यस्य । ललाटोपरिस्थकेशपर्यन्त इत्यर्थः । ललाटसंमितः ललाटादधो मितः । § मवि.

(४) ललाटोर्ध्वकेशजन्य(? नि)स्थानस्य अन्तः केशान्तः । एवं चोर्ध्वस्थितस्य पुरुषस्य भूमितस्तत्पर्यन्तो ब्राह्मणस्य, भ्रूमध्यदेशसंमितो राज्ञः, नासाग्रसंमितो वैश्यस्य प्रमाणतो दण्ड इत्यर्थः । यत्तु 'केशान्तिकः कर्णसमीपकेशमूलपर्यन्तः' इति कस्यचिद्व्याख्यानम्, तन्न, तथा सति ब्राह्मणक्षत्रिययोस्तत्तुल्यप्रमाणत्वे पृथगुपदेशानर्थक्यापत्तेरिति । वीमि. १।२९

**[1]ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः ।**
**अनुद्वेगकरा नृणां सत्वचोऽनग्निदूषिताः ॥**

(१) ऋजवः अवक्राः । सर्वे इत्यनुवादः, प्रकृतत्वाविशेषात् । अव्रणाः अच्छिद्राः । सौम्यं प्रियकरं दर्शनमेषां ते सौम्यदर्शनाः वर्णपरिशुद्धाः अकण्टकिताश्च । अनुद्वेगकराः । नैतैः कश्चिदुद्वेजयितव्यः श्वा वा मनुष्यो वा । नृणामिति प्रदर्शनार्थम् । सत्वचः अतष्टाः । अनग्निदूषिताः वैद्युतेन दावोत्थेन वाऽस्पृष्टाः । † मेधा.

---

§ शेषं मेधागतम् ।

‡ शेषं मुक्तावत् ।

(१) मस्मृ. २।४६ ; मेधा. न्तिको (न्तगो) 'केशान्तको' इत्यपि पाठः ; अप. १।२९ ; व्रक. ११३ ; मभा. १।२८ ; स्मृच. ३० ; स्मृसा. ६ ; पमा. ४४८ ; मपा. २२ राज्ञः स्यात्तु (राज्ञां तथा) ; मर. ५ न्तिको ब्राह्मणस्य (न्तको ब्राह्मणाय) ; संत. ९३० ; वीमि. १।२९ ; संप्र. ४३६ ; चम. २१ ; मुक्ता. ९३ ; बाल. १।२९ पृ. १५१ ; संग. ६७२.

¶ स्मृच., मच., संप्र. मेधागतम् ।

‡ ममु., भाच. गोरावत् ।

§ स्मृसा. मविवत् । नन्द. मविगतम् ।

† ममु., नन्द., भाच. मेधागतम् ।

(१) मस्मृ. २।४७ ; अप. १।२९ ; व्रक. ११३–११४ चोऽनग्निदूषि (चो नाग्निदुःखि) ; मभा. १।२७ ; स्मृच. ३० चोऽन (चो ना) ; स्मृसा. ६ स्मृचवत् ; पमा. ४४८ स्मृचवत् ; मपा. २२ ; प्रपा. २२१ ; मर. ५ ; संत. ९३० स्मृचवत् ; वीमि. १।२९ स्मृचवत् ; संप्र. ४३६ स्मृचवत् ; चम. २१ ; मुक्ता. ९३ ; संम. २६ नृणां (तृणां) शेषं स्मृचवत्, श्लोकगौतमः ; बाल. १।२९ पृ. १५१ ; संग. ६७१ उत्तरार्धे (अनुद्वेगकरान्

(२) ते दण्डा मृष्टनिश्छिद्रा भीषणीयाकाररहिताः सत्वचः अग्निदोषशून्याः स्युः । नच तैः किंचिद्भूतजातमुद्वेजनीयम् । गोरा.

(३) अव्रणाः मध्ये काष्ठभागे छेदशून्याः । सौम्यदर्शनाः भयाहेतवः । अनुद्वेगकराः निम्नोन्नतादिदोषेणाधृत्यहेतवः । न अग्निदूषिताः अग्निसंबन्धेन भ्रष्टपूर्वरूपाः । मवि.

(४) ऋजव इत्यग्रभागातिरिक्तभागे ऋजुत्वं ग्राह्यम् , गौतमेन नताग्रत्वस्य विहितत्वात् । अव्रणाः अच्छिद्राः । सौम्यदर्शनाः अतिस्थौल्यादिना अभयानकाः । अनुद्वेगकराः स्वरूपेणाभीषणाः । §स्मृसा. ६

(५) अनुद्वेगकराः नातिस्थूलाः । ‡मच.

## कात्यायनः

वर्णभेदेन दण्डप्रमाणभेदः , दण्डस्वरूपम्

[1]**केशान्तिको ब्राह्मणस्य दण्डः कार्यः प्रमाणतः ।**
**ललाटसंमितो राज्ञः स्यात्तु नासान्तिको विशः ॥**
**ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः ।**
**अनुद्वेगकरा नृणां सत्वचोऽनग्निदूषिताः ॥**

## व्यासः

दण्डानां प्रमाणानि स्वरूपं च

[2]**शिरोललाटनासाग्रप्रमाणा यूपवन्नताः ॥**

## यमः

वर्णेषु दण्डप्रकृतीनां भेदो मुख्यः अभेदोऽनुकल्पः

[3]**विप्रस्य दण्डः पालाशो बैल्वो वा धर्मतः स्मृतः ।**
**आश्वत्थः क्षत्रियस्याथ खादिरो वाऽपि धर्मतः ॥**

[1]**औदुम्बरोऽथ वैश्यस्य प्लाक्षो वा दण्ड उच्यते ।**
**एतेषामप्यलाभे तु सर्वेषां सर्वयज्ञियाः ॥**

## बृहत्पराशरः

वर्णभेदेन भिन्नानि दण्डप्रकृति–प्रमाणानि, दण्डस्वरूपम्

[2]**पलाशवटपीलूनां दण्डाश्च क्रमशः स्मृताः ॥**
**शिरोललाटनासान्ताः क्रमाद्दण्डाः प्रकीर्तिताः ।**
**अव्रणाः सत्वचोऽदग्धा उक्ताः शुभकरा नृणाम् ॥**

## पैठीनसिः

वैश्यदण्डप्रकृतयः , दण्डस्वरूपम्

[3]**औदुम्बरो बादरो वारणो वा वैश्यस्य ॥**

वारणः वरणवृक्षोद्भवः । संप्र. ४३४

[4]**अपीडिता यूपवक्त्राः( ? क्राः ) सशल्काः ॥**

## आश्वलायनः

वर्णभेदेन दण्डप्रकृतिभेदाः , दण्डध्यानम् , दण्डधारणफलम् , सर्वैराश्रमिभिर्दण्डो धार्यः

[5]**विप्रस्य...... दण्डः पालाश ईरितः ॥**
**....... क्षत्रियस्य दण्डश्चौदुम्बरः स्मृतः ॥**
**वैश्यस्य ...... दण्डो बैल्व उदाहृतः ॥**

[6]**अदान्तं दमयित्वा मां मार्गे संस्थापयन् स्वयम् ।**
**दण्डः करे स्थितो यस्मात्तस्माद्रक्षा यतो भयम् ॥**

---

§ वीमि. स्मृसावत् ।

‡ शेषं मेधागतम् ।

दण्डान् सत्वचो नाग्निदूषितान् ) ; संर. १९३ रा नृणां ( राश्चैव ) शेषं स्मृचवत् .

(१) कास्मृ. ३।१२३–१२४.

(२) स्मृच. ३० ; संप्र. ४३६ ; मुक्ता. ९३.

(३) ब्रक. ११३ आश्व (अश्व) ; स्मृच. ३० (=) ; संप्र. ४३५ मनुः ; मुक्ता. ९३ ब्रकवत् .

(१) अप. १।२९ उत्त. ; ब्रक. ११३ प्लाक्षो (प्लक्षो) षां सर्वय ( षामेव य ) ; स्मृच. ३० प्लाक्षो ( प्लक्षो ) तु ( ऽपि ) पूर्वार्धे कर्तृनिर्देशशून्यम् ; पमा. ४४८ लाभे ( भावे ) उत्त. ; वीमि. १।२९ उत्त. ; संप्र. ४३५ षां सर्वय (षामेव य) पूर्वार्धे मनुः ; चम. २१ सर्वे पमावत् ; मुक्ता. ९३ ; संम. २६ उत्त. ; बाल. १।२९ पृ. १५१ सर्वं पमावत् ; संग. ६७१ संप्रवत् , उत्त.

(२) बृपसं. ६।१५३–१५५.

(३) ब्रक. ११२ बादरो ( खादिरो ) ; संप्र. ४३५.

(४) संप्र. ४३६. (५) आश्वस्मृ. २।३७–३९.

(६) आश्वस्मृ. ११।१२८ पृ. ७१ यन् स्वयम् ( यन्नयम् ) द्रक्षा य ( द्यत्नाद्य ) ; प्रपा. २२७ द्रक्षा ( द्रक्ष ) ; संप्र. ४३७ यतो भ ( यतोऽभ ).

[1]इति नित्यं स विमृशन्पश्यन्दण्डं करे स्थितम्।
स्वधर्मं न त्यजेद्धीमान्विधर्माणि न चा-
ऽऽश्रयेत् ॥
[2]अदान्तं दमयन्दण्डो मार्गे संस्थापयन्नरान् ।
चतुराश्रमिणां हस्ते करोति वसतिं सदा ॥
विधर्मं त्यजतां नित्यं स्वधर्मं चरतामिह ।
दण्डो भोगाय रक्षायै स्वर्गाय च भवेदिह ॥
[3]स्वधर्मं त्यजतां नित्यं परधर्मप्रवर्तिनाम् ।
दण्डो नाशाय भवति नरकायासुखाय च ॥
[4]असत्कर्मकृतां दण्डः स्वमूर्ध्न्येव पतिष्यति ।
सत्कर्माऽऽचरतां नित्यं योगक्षेमाय कल्पते ॥
[5]चतुर्णामाश्रमाणां च दण्डधारणमिष्यते ।
त एते नियता नित्यं संयताः स्युः प्रयत्नतः ॥

## शौनकः

सर्ववर्णसाधारणो दण्डानुकल्पः

[6]एतेषामप्यलाभे तु सर्वेषां यज्ञियाः स्मृताः ॥

## कूर्मपुराणम्

दण्डस्य सर्ववर्णसाधारणौ मुख्यकल्पानुकल्पौ प्रमाणं स्वरूपं च

[7]धारयेद्बैल्वपालाशौ दण्डौ केशान्तिकौ द्विजः ।
यज्ञार्हवृक्षजं वाऽथ सौम्यमव्रणमेव च ॥

## भविष्यपुराणम्

वर्णभेदेन दण्डप्रकृतिभेदाः

[1]ब्राह्मणे बैल्वपालाशौ तृतीयः प्लक्षजस्तथा ।
न्यग्रोधखादिरौ क्षत्रे तथाऽन्यो वेतसोद्भवः ॥
[2]पैलवौदुम्बरौ वैश्ये तृतीयोऽश्वत्थजस्तथा ।
दण्डानेतान्महाबाहो धर्मतोऽर्हन्ति धारितुम् ॥

## स्मृत्यर्थसारः

वर्णभेदेन दण्डप्रकृतिभेदाः, दण्डानां प्रमाणानि स्वरूपं च

[3]पालाशाद्यास्तु सर्वेषां दण्डा याज्ञिकवृक्षजाः ।
पालाशबैल्वप्लाक्षास्ते वटवेतसखादिराः ॥
[4]वैणवोदुम्बराश्वत्थाः क्रमाद्विप्रादिषु स्मृताः ।
ते केशभालनासान्तप्रमाणाश्च क्रमाद्द्विजैः ॥
[5]धार्याः श्लक्ष्णाः ...... ॥

## रेणुकारिकाः

वर्णभेदेन दण्डप्रकृतिभेदाः, दण्डप्रकृत्यनुकल्पः, दण्डस्वरूपम्, दण्डप्रमाणेषु मतभेदाः

[6]विप्रस्य दण्डः पालाशो बैल्वः स्यात्क्षत्रियस्य तु ॥
औदुम्बरस्तु वैश्यस्य सर्वेषां सर्व एव वा ॥
एतेषामप्यलाभे तु सर्वेषां सर्वयज्ञियाः ।
अभावे विधिमाश्रित्य प्राहतुर्यमगौतमौ ॥

---

(१) आश्वस्मृ. ११।१२९ पृ. ७१ ; प्रपा. २२७ धर्माणि ( धर्मणि ); संप्र. ४३७ करे स्थि ( करस्थि ).
(२) आश्वस्मृ. ११।१३०-१३१ पृ. ७१ ; प्रपा. २२७.
(३) आश्वस्मृ. ११।१३२ पृ. ७१ वर्तिनाम् ( वर्तकान् ); प्रपा. २२७.
(४) आश्वस्मृ. ११।१३३ पृ. ७१ ; प्रपा. २२७ सत्कर्माऽऽच ( सत्कर्म च ).
(५) आश्वस्मृ. ११।१३४ पृ. ७१ ते नियता नित्यं ( व नियतां नित्यः ) ; प्रपा. २२७.
(६) संप्र. ४३५.
(७) वीमि. १।२९ (=) णमेव (ण एव) ; मुका. ९३ शौ दण्डौ केशान्तिकौ ( शो दण्डो केशान्तिको ); आन. १५६ पू.

(१) ब्रक. ११२ ; स्मृच. २९ ब्राह्मणे ( ब्राह्मणो ) तृतीयः ( क्षत्रियः ) क्षत्रे (क्षत्रः ) वेत ( वैत) पुराणे ; संप्र. ४३४; संग. ६७१ ब्राह्मणे ( ब्राह्मणो ) प्लक्ष ( प्लव ) न्यो वेत ( न्ये वैत ).
(२) ब्रक. ११२ दुम्बरौ ( दुम्बरो ) ; स्मृच. २९ वैश्ये तृ ( वैश्यस्तृ ) पू., पुराणे ; संप्र. ४३४-४३५ ; संग. ६७१.
(३) स्मृसार. ५ ; मुका. ९५ पूर्वार्धे ( दण्डाः पलाशन्यग्रोधपिप्पला यज्ञवृक्षजाः । ) पू.
(४) स्मृसार. ५ ; मुका. ९५ भाल (फाल) उत्त.
(५) स्मृसार. ५ ; मुका. ९५.
(६) रेका. १२६-१३२ पृ. २८-२९.

ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः ।
अनुद्वेगकरान् वृक्षा( ? करा नृणां ) सत्वचा
नाग्निदूषिताः ॥

यूपवत्तु नताग्राश्च लताद्यैरनवेष्टिताः ।
केशान्तिको ब्राह्मणस्य दण्डः कार्यः प्रमाणतः ॥

ललाटसंमितो राज्ञः स्यात्तु नासान्तिको विशः ।
नासान्तिको ब्राह्मणस्य राज्ञः स्याद्भालसंमितः ॥

केशान्तिकस्तु वैश्यस्य वसिष्ठोक्त्या भवन्त्यमी ।
केशावधिललाटांसतुल्याः शङ्खोक्तितः
क्रमात् ॥

# § उपनयनमुहूर्तः

## अयनर्तुमासपक्षविचारः

### बौधायनगृह्यसूत्रम्

त्रैवर्णिकान् रथकारं च प्रति विशेषाः साधारणश्च ऋतवः

**'वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यम्, शरदि वैश्यम्, वर्षासु रथकारमिति । सर्वानेव वा वसन्ते ॥**

### बौधायनगृह्यशेषसूत्रं हिरण्यकेशिगृह्यशेषसूत्रं च

विकलाङ्गाद्युपनयने ऋतोरनियमः

**'अथ षण्ढबधिरमूकानां संस्कारं व्याख्यास्यामः ॥**

**'ऋतुर्यथाकामी स्यात् ॥**

ऋतोर्यथाकामित्वेन वसन्ताद्यनियमोऽभिहितः ।

‡ संप्र. ४०२

### आश्वलायनगृह्यसूत्रम्

उपनयने उदगयनशुक्लपक्षविधिः

**† 'उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः ॥**

§ अस्मिन् विषये 'पुनरुपनयननिमित्तानि' इत्येतत्सर्वं प्रकरणमनुसंधेयम् ।

‡ संग. संप्रवत् ।

† अस्य देभा., गानावृ. इति व्याख्याने विवाहमुहूर्तप्रकरणे ( सं. का. पृ. ८७६,८८७ ) द्रष्टव्ये ।

(१) बौगृ. २।५।६ ; आन. १५३ (=) (ग्रीष्मे... वसन्ते० ).

(२) बौगृशे. २।९।१ ; हिगृशे. ३।१९. शेषस्थलादिनिर्देशा विकलाङ्गाद्युपनयनप्रयोगप्रकरणे द्रष्टव्याः .

(३) बौगृशे. २।९।२ ; संप्र. ४०१ ; बाल. १।१४ पृ. ६० ऋतुर्य ( ऋतुर्य्या ) ; संग. ६४१.

(४) आगृ. १।४।१. शेषस्थलादिनिर्देशा विवाहमुहूर्तप्रकरणे ( सं. का. पृ. ८७६ ) द्रष्टव्याः .

वर्णविशेषं प्रति ऋतुविशेषप्राशस्त्यमुक्तं श्रुतौ— 'वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यं वर्षासु रथकारम्' इति । अत्र 'माहिष्येण करण्यां तु रथकारः प्रजायते' इत्युक्तरथकारस्य वर्षाविधिः, तदीयोपनयने सप्रमाणत्वस्य विज्ञानेश्वरेणोपन्यासात्, न तु सौधन्वनस्य, तस्योपनयने प्रमाणाभावात् । नचैवं विप्रं प्रति वसन्तनियमात् 'विनर्तुना वसन्तेन कृष्णपक्षे गलग्रहे । अनध्याये चोपनीतः पुनः संस्कारमर्हति ॥' इति बृहस्पतिना वसन्ताभावे दोषकथनाच्चोत्तरायणस्य तं प्रति नित्यप्राप्ततया विधिवैयर्थ्यमिति वाच्यम्, केनापि निमित्तेन वसन्तालाभे तदन्योत्तरायणप्रापणार्थत्वात् । तथा च गर्गः— 'माघादिशुक्रान्तकपञ्चमासाः साधारणा वा सकलद्विजानाम्' इति । वृद्धगार्ग्यः— 'माघादिमासषट्के तु मेखलाबन्धनं मतम्' इति । न चैवमेताभ्यामेव शास्त्राभ्यां पौनरुक्त्यम्, उत्तरायणशून्यमाघादिभागाषाढान्त्यभागयोर्निवृत्त्यै उत्तरायणविधेरावश्यकत्वात् । न चोत्तरायणविधिनैव माघादिमासप्राप्तेस्तच्छास्त्रं व्यर्थमिति वाच्यम्, मकरार्कविशिष्टपौषनिषेधार्थत्वात्, पञ्चसंख्याविधेर्मिथुनार्कविशिष्टाषाढनिवृत्त्यर्थत्वाच्च, षट्संख्याविधेस्तु वैश्यं प्रति श्रावणादिनिषेधार्थत्वात् । अस्ति हि तं प्रति दक्षिणायनविधिर्बृहस्पतिवृद्धवसिष्ठोक्तः— 'विप्रस्य क्षत्रियस्यापि मौञ्जी स्यादुत्तरायणे । दक्षिणे तु विशां कुर्यान्नानध्याये न संक्रमे ॥' इति । शरदलाभे श्रावणाद्यन्यदक्षिणायनप्रापक(त्व)स्य वक्तुं शक्यत्वाच्च । एवं च ब्राह्मणेन दक्षिणायने उपनयनं न कार्यम्, नापि पौषाषाढयोः सत्यप्युत्तरायणे । उत्तरायणविशिष्टमाघादिपञ्चमासेषु कार्यम् । तत्रापि मीनार्कप्रभृतियावन्मिथुनप्रवेशं प्रशस्तः कालः, चान्द्रसौरान्यतरवसन्तलाभात्, 'मीनमेषयोर्वा वसन्तम्' इति बौधायनोक्तेः । मीनमेषयोस्तु प्रशस्ततरः, 'मृगकुम्भगते भानौ मध्यमं मीनमेषयोः ।

उत्तमं गोयुगस्थेऽर्केऽत्यधमं चोपनायनम् ॥' इति बृहस्पतिवचनात् । मृगः मकरः । गौः वृषः । युगं मिथुनम् । मीनार्कविशिष्टश्चैत्रोऽनेकनिषेधापवादकतया प्रशस्ततमः, 'मीनस्थितेऽर्के खलु चैत्रमासे शुभप्रदो ब्राह्मणमौञ्जिबन्धः ।' इति बृहस्पतिवाक्यस्य तदर्थत्वात् । अत एवोक्तं तेनैव– 'गोचराष्टकवर्गाभ्यां गुरुशुद्धिर्न लभ्यते । तदोपनयनं कार्यं चैत्रे मीनगते रवौ ॥ शुक्रे नष्टे तथा जीवे दुर्बले चन्द्रभास्करे । व्रतोपनयनं कार्यं चैत्रे मीनगते रवौ ॥ जीवभार्गवयोरस्ते सिंहस्थे देवतागुरौ । मेखलाबन्धनं शस्तं चैत्रे मीनगते रवौ ॥' । अमुनैवाऽऽशयेनाऽऽह राजमार्तण्डः– 'वसन्तसमये कुर्याद्व्दे गर्भाष्टमेऽपि वा । मेधावी मेखलाबन्धं जन्ममासेऽथ जन्मभे ॥' इति । अत्र वसन्तपदं मीनार्कविशिष्टचैत्रपरम्, निषेधसामान्यापवादकत्वेन क्लृप्तकालस्यैव निषेधविशेषापवादत्वबोधने लाघवात्, विप्रं प्रत्येव तद्विशेषप्रशस्ततमत्वज्ञापने लाघवात् । 'गर्भाष्टमेऽपि वा' इत्यव्ययाभ्यां तदनादरो ध्वन्यते । अत एव शौनकः– 'गर्भाष्टमे गर्गपराशराद्यैः फलं यदुक्तं व्रतबन्धने तु । ततोऽधिकं जन्मसु तारकासु मासेऽथ वा जन्मनि वाडवानाम् ॥' इति । वाडवानां ब्राह्मणानां यन्मीनार्के जन्ममासे जन्मनक्षत्रे चोपनयनं कर्तव्यमित्यनूद्य तद्गर्भाष्टमफलाधिकफलमिति तात्पर्यार्थः । यत्तु राजमार्तण्डः– 'जातं दिनं दूषयते वसिष्ठो ह्यष्टौ च गर्गो नियतं दशात्रिः । जातस्य पक्षं किल भागुरिश्च शेषाः प्रशस्ताः खलु जन्ममासि ॥ जन्ममासे तिथौ भे च विपरीतदले सति । कार्यं मङ्गलमित्याहुर्गर्गभार्गवशौनकाः ॥' इति, तन्मीनार्कचैत्रान्यकालविषयम् । त्रिविधेऽप्युक्तसमये शुक्लपक्षः प्रशस्ततमः, 'आपूर्यमाणपक्षे' इत्याश्वलायनोक्तेः । संकौ. ११९–१२०

## आपस्तम्बगृह्यसूत्रम्

प्रतिवर्णम् ऋतुनियमः

'**वसन्तो ग्रीष्मः शरदित्यृतवो वर्णानुपूर्व्येण ॥**

(१) उदगयने वसन्तनियमः ब्राह्मणस्य । क्षत्रियस्यापवादो नियमो वा । वैश्यस्यापवादः । पूर्वपक्षादयस्तु स्थिता एव । वर्षाण्यृतवश्च विधीयन्ते इह सामयाचारिकेषु च । तत्र सामयाचारिकेषु विधानं सर्वचरणार्थम्, इह विधानं वर्णनियमार्थम् । शास्त्रान्तरदृष्टानां कालान्तराणामिह प्रवृत्तिर्मा भूदित्येवं ब्रुवन्नेतज्ज्ञापयति– चौलादिषु शास्त्रान्तरदृष्टोऽपि कालः पक्षे भवतीति । अनाकुला.

(२) ऋतवः वसन्तादयः त्रयो ब्राह्मणादिवर्णक्रमेणोपनयनस्य काला भवन्ति । अयं चर्तुविधिः सामान्यविधिप्राप्तोदगयनस्य यथार्हं नियमापवादार्थः । पूर्वपक्षादिस्तु भवत्येव । धर्मशास्त्रे तु 'वसन्ते ब्राह्मणम्' (आध. १।१।१९) इत्यादिः 'शिशिरे च वा सर्वान्' इति भरद्वाजगृह्योक्तशिशिरप्रतिषेधार्थः । 'गर्भाष्टमेषु ब्राह्मणम्' इत्यादिस्तु 'अथ काम्यानि' (आध. १।१।२०) इत्यादि विधातुमनुवादः । ताद.

## हिरण्यकेशिगृह्यसूत्रम्

प्रतिवर्णम् ऋतुनियमः, शुक्लपक्षविधिः

'**वसन्ते ब्राह्मणम्, ग्रीष्मे राजन्यम्, शरदि वैश्यम् ॥**

सर्वत्रोपनयेदिति शेषः । कालस्यापि धर्मे सिद्धस्य पुनर्विधानं कालान्तरदर्शनादेकेषाम् 'उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः' इति । 'सप्तवर्षं ब्राह्मणं वसन्त उपनयेत्' इत्येव सिद्धे कालवयसोः किमर्थं पृथग्ग्रहणम्? अशक्तौ कामसंयोगे वाऽन्यस्मिन्नपि वयसि सर्वस्मिन्नप्युदगयने भवेदिति कालवयसोरनित्यत्वख्यापनार्थम् । तथा धर्मेषु– 'सप्तम आयुःकामम्' इत्यादि काम्यवयोनुक्रमणम् 'आ षोडशाद्ब्राह्मणस्यानात्ययः' इति 'यथा व्रतेषु समर्थः स्यात्' इत्येतदन्तम् । असंभवे कालविधिपरिग्रहणेनानियतवयस्त्वं च दृष्टम् । अथवैतानि धर्मत एव सिद्धानि । पृथग्वचनं गुणद्वयस्यैकस्मिन्वाक्ये विधातु-

(१) आपगृ. १०।४.

(१) हिगृ. १९।१।४–५; संर. १६६.

मशक्यत्वाद्यथा धर्मेषु पृथग्वचनं तथेहापि स्यादिति द्रष्टव्यम् । कालस्यानियतत्वं पूर्वत्रैव ख्यापितम् ।

* मातृवृ.

**आपूर्यमाणपक्षे ...... ॥**

क्रमेण ज्योत्स्नायाः( ? त्स्नया ) पूर्यते यः पक्षः स आपूर्यमाणपक्ष इत्यर्थः । तस्मिन् । * मातृवृ.

## मैत्रायणीयगृह्यसूत्रम्

त्रैवर्णिकान् प्रति प्रशस्ता ऋतवः, सर्वान्प्रत्युदगयनमनुकल्पः

**[1]वसन्तो ग्रीष्मः शरदित्यृतवो वर्णानुपूर्व्येण । माघादिषण्मासा वा सर्ववर्णानाम् । एतदुदगयनम् । अनयोर्विकल्पः ॥**

अत्रेदं तत्त्वम्— नात्र वसन्तेनोत्तरायणस्य संकोचः श्राद्धे दर्शस्यापराह्णविधिनेव, आधाने वसन्तादेः कृत्तिकादिनेव, सायंप्रातर्विधिना यावज्जीवविधेरिव युक्तः । आद्ययोः परस्परव्यभिचारान्नियमः, अन्त्ये निमित्ते साङ्गकर्मोक्तेः कालापेक्षा । इह तूत्तरायणं विना वसन्तस्याभावान्न नियमः, न वा निमित्तत्वम् । न च 'एकं वृणीते' इतिवदयुत्यानुवादः, तद्वद्वाक्यभेदापरिहारात् । उत्तरायणविधिवैयर्थ्यात्त्वनुकल्पोऽयमिति । माघ आदिर्येषां षण्णानाम्, एवं षट् । सिन्धु. ९२९–९३०

## भारद्वाजगृह्यसूत्रम्

त्रैवर्णिकान् रथकारं च प्रति विशेषाः सामान्यश्च ऋतवः, शुक्लपक्षविधिः

**[2]वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे हेमन्ते वा राजन्यम्, शरदि वैश्यम्, वर्षासु रथकारम्, शिशिरे वा सर्वान् । आपूर्यमाणपक्षे...... ॥**

* संर. मातृवृवत् ।

(१) संप्र. ३५५ (माघादिषण्मासाश्च सर्ववर्णानाम्) एतावदेव; सिन्धु. ९२९ मैत्रेयसूत्रे; संग. ६४५ संप्रवत्; संर. १७० ( एतदुदगयनमनयोर्विकल्पः० ) मैत्रेयसूत्रे.

(२) भागृ. १।१; मुक्ता. ८७ ( हेमन्ते वा० ) ( शिशिरे ..पक्षे० ).

## आग्निवेश्यगृह्यसूत्रम्

वर्णभेदेन भिन्ना ऋतवः, शुक्लपक्षविधिः

**[1]वसन्ते ब्राह्मणम्, ग्रीष्मे राजन्यम्, शरदि वैश्यम् । आपूर्यमाणपक्षे ...... ॥**

## वैखानसगृह्यसूत्रम्

वर्णभेदेन भिन्ना ऋतवः

**[2]वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यम्, शरदि वैश्यम् ॥**

## बौधायनः

वर्णभेदेन भिन्ना ऋतवः

**[3]वसन्तो ग्रीष्मः शरदित्यृतवो वर्णानुपूर्व्येण ॥**

अत्रापि विशेषमाह— वसन्त इति । उदगयनमात्रेऽपि केचिदिच्छन्ति । आह चाऽऽश्वलायनः— 'उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः' इति । तस्मादुदगयनेऽपि योग्यं नक्षत्रमारमेत(?) तदुपनयनं कर्तव्यम् । अथ कस्माद्वसन्तादावुपनयनोपसंहारो न भवति ? उच्यते— उदगयनशब्दानर्थक्यप्रसङ्गान्नोपसंहारो युक्तः । उदगयन एव हि वसन्तः, नान्यत्र । तस्माद्वसन्तेऽप्युपनयनं कर्तव्यम्, वसन्तादिश्रुतिः किमर्था ? विशेषज्ञापनार्था । अतश्च शुक्रास्तमयादिविरोधे सत्यपि वसन्ते कर्तव्यमिति वाक्यार्थः । बौवि.

## आपस्तम्बः हिरण्यकेशिधर्मसूत्रं च

वर्णभेदेन भिन्ना ऋतवः

**[4]वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यम्, शरदि वैश्यम् ॥**

(१) आग्निगृ. १।१।१. (२) वैगृ. २।३.

(३) बौध. १।३।११; चका. ७४७ (=).

(४) आध. १।१।१९; हिध. २६।१।२०; विश्व. १।१४ ( ग्रीष्मे...वैश्यम् ० ); अप. १।११–१३ पृ. २८ स्मृतिः; ब्रक. १००: १०२ विश्ववत्; स्मृच. २७; चका. ७४७ नयीत ( नयेत् ); हभा. १९९; स्मृसा. ४; पमा. ४४६; मपा. १७ (=) चकावत्; प्रपा. २१४; संसौ. १०५: १२० ( शरदि वैश्यमुपनयेत् ) एतावदेव;

## वसिष्ठः

वर्णभेदेन भिन्ना ऋतवः, साधारणा मासाः

[1]विप्राणामुपनयनं वसन्तसमये धराधिनाथानाम्।
ग्रीष्मर्तौ शरदि विशां मासाः साधारणाश्च माघाद्याः॥

वसन्तश्च सर्वथा सर्वदोषनिवारकतया विप्राणां प्रशस्तः। अत एव गुरुः– 'विनर्तुना वसन्तेन कृष्णपक्षे गलग्रहे। अनध्याये चोपनीतः पुनः संस्कारमर्हति ॥'। संसौ. १०६

## वृद्धवसिष्ठः

ब्राह्मणक्षत्रिययोरुदगयनस्य वैश्ये दक्षिणायनस्य विधिः

[2]विप्रस्य क्षत्रियस्यापि मौञ्जी स्यादुत्तरायणे।
दक्षिणे तु विशां कुर्यान्नानध्याये न संक्रमे॥

## शङ्खः

वर्णभेदेन भिन्ना ऋतवः

[3]वसन्तो ग्रीष्मः शरदिति कालाः॥

## शङ्खलिखितौ

वर्णभेदेन भिन्ना ऋतवः

[4]द्विजातीनां वसन्तो ग्रीष्मः शरदिति कालः॥

बाल. १।१४ पृ. ४५ विश्ववत्; संर. १६६ णमुपनयीत (णम्) हिष.

(१) वसं. २९।३ णाश्च (णाः पञ्च); संसौ. १०६ वृद्धवसिष्ठः; संप्र. ३५५ वृद्धवसिष्ठः.

(२) प्रपा. ११४; संत. ९२९ स्यादुत्तरायणे (स्याद्दक्षिणायने) तु विशां कुर्यान्ना (च विशां कार्यं ना) गर्गः; संप्र. ३५३ बृहस्पतिवृद्धवसिष्ठौ; मुक्ता. ८८; संको. ११९ : १२० बृहस्पतिवृद्धवसिष्ठौ; संग. ६४४ बृहस्पतिवसिष्ठौ; कृम. ९३३ (=) तु (च) कुर्यान्ना (कार्या ना) ये न (येऽपि); संर. १७० बृहस्पतिवृद्धवसिष्ठौ.

(३) विश्व. १।१४.

(४) चका. ७४७.

## मनुः

दक्षिणायने उपनयननिषेधः

[1]गोदानं $स्नानकं चैव समावर्तनकं तथा।
चौलापनयने चैव न कुर्याद्दक्षिणायने॥

## वृद्धमनुः

मलमासे उपनयननिषेधः

[2]अग्न्याधेयं प्रतिष्ठां च यज्ञदानव्रतानि च।
वेदव्रतवृषोत्सर्गचूडाकरणमेखलाः।
माङ्गल्यमभिषेकं च मलमासे विवर्जयेत्॥

## नारदः

वर्णभेदेन प्रशस्तर्तुभेदः, वर्णसाधारणा मासाः मासभेदेन फलभेदश्च

[3]शरद्ग्रीष्मवसन्तेषु व्युत्क्रमाच्च द्विजन्मनाम्।
मुख्यं साधारणं तेषां व्रतं माघादिपञ्चसु॥

[4]स्वकुलाचारधर्मज्ञो माघमासेऽथ फाल्गुने।
विधिज्ञश्चार्थवांश्चैत्रे वेदवेदाङ्गपारगः॥

[5]वैशाखे धनवान् वेदशास्त्रविद्याविशारदः।
उपनीतः कलाढ्यश्च ज्येष्ठे विधिविदां वरः॥

$ अत्र समावर्तनादन्यत् स्नानकं चिन्त्यम्। संस्कारगणपतिः 'गोदानासंस्कृतस्येह विवाहश्चेदुपस्थितः। याम्यायनेऽपि कुर्वीत गोदानं स्नानकं च वै॥' इति मरीचिवाक्ये 'चकारात्समावर्तनम्' इति व्याख्याति।

(१) धप्र. ४४ (=) स्नान (स्नात); संग. ७३१.

(२) अप. १।२२५ पृ. ५४९ माङ्ग्ल (मङ्ग्ल); स्मृच. ३७३ मेखलाः (मेखलाम्); पुम. १९ वृद्धमनुबृहस्पतिपैठीनसिज्योतिःपराशराः.

(३) ज्योना. २४।५ माच्च (मात्तु) व्रतं माघा (तपोमासा); संसौ. १०५; संप्र. ३५५; ज्योनि. १२२ ज्योनावत्.

(४) ज्योना. २४।६ मासेऽथ (मासेषु) ज्ञश्चार्थ (ज्ञमर्थ); संसौ. १०६; संप्र. ३५६; ज्योनि. १२२.

(५) ज्योना. २४।७ तः कला (तो बला); संसौ. १०६; संप्र. ३५६ वान् वेदशास्त्रविद्या (वांश्चैव वेदशास्त्र) ढ्यश्च (ज्ञश्च); ज्योनि. १२२.

### बृहस्पतिः

वर्णेष्वयनर्तुनियमः, पक्षविचारः , उदगयने सौरमासानां प्रशस्तमध्यमाधमत्वम् , मीनार्कविशिष्टचैत्र-प्राशस्त्यम् , मलमासे निषेधः

[1]विप्रस्य क्षत्रियस्यापि मौञ्जी स्यादुत्तरायणे ।
दक्षिणे तु विशां कुर्यान्नानध्याये न संक्रमे ॥

[2]श्रीविद्याबलकारि चोपनयनं
प्रोक्तं वसन्ते शिशो-
र्ग्रीष्मे क्षत्रियवैश्ययोः शुभकरं
पूर्वाह्णपक्षे सिते ।
कृष्णे च प्रतिपद्दिनं शुभकरं
नैकादशी द्वादशी
रिक्तानध्ययनं विना शुभदिने
चन्द्रे शुभैर्वीक्षिते ॥

वसन्तादिलक्षणमाह वृद्धवसिष्ठः— 'वसन्तश्चैत्र-वैशाखौ ग्रीष्मः शुक्रशुची तथा । इषोर्जौ च शरच्चान्द्र-मासाः श्रौतादिकर्मणि ॥' इति । वराहमिहिरस्तु गौण-मपि वसन्तमाह— 'माघश्च फाल्गुनश्चैव वसन्तऋतु-रिष्यते । मधुश्च माधवश्चापि मुख्यो द्वेधाऽयमुच्यते ॥' । सोऽयं चान्द्रो वसन्तः । वृद्धगर्गस्तु सौरमप्याह— 'मीन-मेषौ रविर्यावद्वसन्तस्तावदिष्यते । नृयुग्मवृषभौ ग्रीष्मो-ऽनन्तराश्च ऋतुः शरत् ॥' इति । अनन्तराः कर्कसिंह-कन्यातुलाः राशयः शरदृतुः । बौधायनोऽपि मीनमेषयो-र्मेषवृषयोर्वा वसन्त इति । संप्र. ३५४

[3]मृगकुम्भगते भानौ मध्यमं मीनमेषयोः ।
उत्तमं गोयुगस्थेऽर्के ह्यधमं चोपनायनम् ॥

मृगः मकरः , गौः वृषः , युगं मिथुनम् ।
§ संको. १२०

[4]गुरौ भृगौ नष्टगते च चैत्रे
कार्यं न माङ्गल्यमनर्थकारि ।
मीनस्थितेऽर्के खलु चैत्रमासे
शुभप्रदो ब्राह्मणमौञ्जिबन्धः ॥

[2]गोचराष्टकवर्गाभ्यां गुरुशुद्धिर्न लभ्यते ।
तदोपनयनं कार्यं चैत्रे मीनगते रवौ ॥

[3]शुक्रे नष्टे तथा जीवे दुर्बले चन्द्रभास्करे ।
व्रतोपनयनं कार्यं चैत्रे मीनगते रवौ ॥

[4]जीवभार्गवयोरस्ते सिंहस्थे देवतागुरौ ।
मेखलाबन्धनं शस्तं चैत्रे मीनगते रवौ ॥

[5]अतीव नष्टे सुरराजपूज्ये
सिंहस्थिते वा द्विजपुंगवानाम् ।
व्रतं प्रशस्तं खलु मासि चैत्रे
कर्तुश्चिरायुः सुखसंपदे स्यात् ॥

[6]अग्न्याधेयं प्रतिष्ठां च यज्ञदानव्रतानि च ।
वेदव्रतवृषोत्सर्गचूडाकरणमेखलाः ।
माङ्गल्यमभिषेकं च मलमासे विवर्जयेत् ॥

[7]शुक्लपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना ॥

---

§ संर. संकौवत् ।

(१) संसौ. ११०. शेषस्थलादिनिर्देशा अस्मिन्नेव प्रकरणे वृद्धवसिष्ठवचने द्रष्टव्याः .

(२) संसौ. १०७ शुभैर्वी ( शुभे वी ) ; संप्र. ३५४ ; संग. ६४४ पू .

(३) संसौ. १०८ ; संप्र. ३५६ ; संको. १२० र्केह्य ( र्केऽत्य ) ; कृम. ९३१ ; संर. १७१.

(१) संसौ. १०७ माङ्ग्य ( मङ्ग्य ) ; संप्र. ३५७ संसौवत् ; संको. १२० उत्त. ; संग. ६४५ ; संर. १७१ उत्त.

(२) संसौ. १०६ ; संप्र. ३५७ ष्टक (ष्टम) ; संको. १२० वर्गाभ्यां ( वर्षाभ्यां ) ; संग. ६४५ ; संव. ९९ गुरुशु (यस्य शु) तदो (तस्यो) रत्नकोशे ; संर. १७१.

(३) संसौ. १०६ ; संप्र. ३५७ ; संको. १२० ; संग. ६४५ ; कृम. ९३२ (=) व्रतो ( तदो ) ; संर. १७१.

(४) संसौ. १०७ ; संप्र. ३५७ ; संको. १२० ; संग. ६४५ वीरमित्रोदये ; कृम. ९३२.

(५) संसौ. १०७ ; संप्र. ३५७.

(६) पुम. १९ वृद्धमनुबृहस्पतिपैठीनसिज्योतिः-पराशराः .

(७) प्रपा. २१५ ; गभा. २०१ ; संप्र. ३५९ ; चम. १४ ; संम. २२ : ६५ कृष्णश्चा ( कृष्णोऽप्य ) ; सिन्धु. ९३३ ; विपा. ४७४ ; ज्योनि. १२२ पक्षः ( पक्षे ) कृष्णश्चा ( कृष्णे चा ) ; संको. १२० ; बाल. १।१४ पृ. ४६ ; संग. ६४५ ; संर. ८२१.

¹मिथुने संस्थिते भानौ ज्येष्ठमासो न दोषकृत् ॥

## पराशरः

शुक्लः पक्षो मुख्यः कृष्णो गौणः

²आपूर्यमाणो मुख्यः स्यात्सर्वस्मिञ्शुभकर्मणि ।
कृष्णो गौणो दशान्तः स्यान्नागान्तो व्रतबन्धने ॥

दशान्तः दशम्यन्तः । नागान्तः पञ्चम्यन्तः ।

पुम. ४३२

## ज्योतिःपराशरः

उपनयने मलमासनिषेधः

³अग्न्याधेयं प्रतिष्ठां च यज्ञदानव्रतानि च ।
वेदव्रतवृषोत्सर्गचूडाकरणमेखलाः ।
माङ्गल्यमभिषेकं च मलमासे विवर्जयेत् ॥

## पैठीनसिः

उपनयने मलमासनिषेधः

⁴अग्न्याधेयं प्रतिष्ठां च यज्ञदानव्रतानि च ।
वेदव्रतवृषोत्सर्गचूडाकरणमेखलाः ।
माङ्गल्यमभिषेकं च मलमासे विवर्जयेत् ॥

## गर्गः

वर्णभेदेनर्तुभेदः, सर्ववर्णसाधारणा मासाः, ज्येष्ठपुत्रं प्रति ज्येष्ठमासनिषेधः, जन्ममासजन्मपक्षनिषेधः

⁵विप्रं वसन्ते क्षितिपं निदाघे
वैश्यं घनान्ते व्रतिनं विदध्यात् ।
†माघादिशुक्रान्तिकपञ्चमासाः
साधारणा वा सकलद्विजानाम् ॥

---

† अस्य संकौव्याख्यानम् आश्वलायनगृह्यसूत्रव्याख्याने द्रष्टव्यम् ।

(१) गभा. २०१ ; सिन्धु. ९३३ ; विपा. ४७४ ; संग. २२९. (२) पुम. ४३२, ४३८.

(३) पुम. १९ वृद्धमनुबृहस्पतिपैठीनसिज्योतिःपराशराः .

(४) पुम. १९ वृद्धमनुबृहस्पतिपैठीनसिज्योतिःपराशराः .

(५) प्रपा. २१४ शुक्रा (शुक्ला); गभा. २०१ प्रपावत्; संप्र. ३५४ पू. : ३५५ प्रपावत्, उत्त.; मुक्ता.

(१) शुक्लः ज्येष्ठः । विपा. ४७१

(२) निदाघः ग्रीष्मर्तुः । घनान्तः शरदृतुः । नन्वेवं विप्रं प्रति वसन्तनियमात् ' विनर्तुना वसन्तेन कृष्णपक्षे गलग्रहे । अनध्याये चोपनीतः पुनःसंस्कारमर्हति ॥ ' इति बृहस्पतिना वसन्ताभावे दोषकथनाच्चोत्तरायणस्य विप्रं प्रति नित्यप्राप्ततया विधिवैयर्थ्यमिति चेन्न । केनापि निमित्तेन वसन्तालाभे तदन्योत्तरायणप्रापणार्थत्वात्, तथा च गर्गः– ' माघादिशुक्रान्तकपञ्चमासाः साधारणा वा सकलद्विजानाम् । ' इति । शुक्रः ज्येष्ठमासः सोऽन्तके प्रान्ते येषां ते शुक्रान्तकाः । स्वार्थे कप्रत्ययः । ते च ते पञ्च मासाश्चेति कर्मधारयः । वृद्धगार्ग्यः– ' माघादिमासषट्कं तु मेखलाबन्धने मतम् । ' इति । मैत्रेयसूत्रेऽपि– ' वसन्तो ग्रीष्मः शरदृतवो वर्णानुपूर्व्येण माघादिषण्मासा वा सर्ववर्णानाम् ' इति । आनुपूर्व्यं क्रमः । उत्तरायणशून्यमाघादिभागाषाढान्त्यभागयोर्निवृत्त्यै उत्तरायणविधेरावश्यकत्वान्नैताभ्यां शास्त्राभ्यां पौनरुक्त्यम् । एतच्छास्त्रस्य मकरार्कविशिष्टपौषनिषेधार्थत्वेन पञ्चसंख्याविधेर्मिथुनार्कविशिष्टाषाढनिवृत्त्यर्थत्वेन च सार्थक्यान्न माघादिमासविधायकशास्त्रस्योत्तरायणविधायकशास्त्रेणैव प्राप्तावपि व्यर्थता । षट्संख्याविधेस्तु वैश्यं प्रति श्रावणादिनिषेधार्थत्वात्केनापि निमित्तेन शरदलाभे दक्षिणायनान्तर्गताषाढभागप्रापणार्थत्वाच्च न व्यर्थता । अस्ति हि तं प्रति दक्षिणायनविधिर्बृहस्पतिवृद्धवसिष्ठोक्तः– ' विप्रस्य क्षत्रियस्यापि मौञ्जी स्यादुत्तरायणे । दक्षिणे तु विशां कुर्यान्नानध्याये न संक्रमे ॥ ' इति । एवं च ब्राह्मणेन दक्षिणायन उपनयनं नैव कार्यम्, नापि पौषाषाढयोः सत्यप्युत्तरायणे । उत्तरायणविशिष्टमाघादिपञ्चमासेषु कार्यम् । तत्रापि मीनार्कप्रभृति यावन्मिथुनप्रवेशं प्रशस्तः कालः, चान्द्रसौरान्यतरवसन्तलाभात् ।

---

८८ शुक्रान्ति (शुक्रान्त) कलद्वि (कला द्वि) धर्मसारसुधानिधौ ; सिन्धु. ९२९ ; विपा. ४७१ ; संकौ. ११९ शुक्रान्ति (शुक्रान्त) उत्त. ; संग. ६४४ पू. ; पुम. ४३८ शुक्रान्ति (शुक्रादि) गार्ग्यः; संर. १७० संकौवत् .

मीनमेषयोस्तु प्रशस्ततरः, 'मीनमेषयोर्वा वसन्तः' इति बौधायनोक्तेः। 'मृगकुम्भगते भानौ मध्यमं मीनमेषयोः। उत्तमं गोयुगस्थेऽर्के ह्यधमं चोपनायनम्॥' इति बृहस्पतिवचनाच्च। संर. १७०-१७१

'ज्येष्ठमासे विशेषेण सर्वज्येष्ठस्य चैव हि।
उपनीतस्य पुत्रस्य जडत्वं मृत्युरेव च॥

'विवाहे मेखलाबन्धे जन्ममासं विवर्जयेत्।
विशेषाज्जन्मपक्षं तु वसिष्ठाद्यैरुदाहृतम्॥

यस्तु 'विवाह...... रुदाहृतम्॥' इति, 'न जन्ममासे जन्मर्क्षे न जन्मदिवसेऽपि वा। आद्यगर्भसुतस्याथ दुहितुर्वा करग्रहः॥' इति गर्गनारदाभ्यां जन्ममासनिषेधः कृतः, स गर्भाष्टमवर्षातिरिक्तवर्षविषयः ब्राह्मणातिरिक्तविषयो वा, जन्मतिथिपक्षनिषेधस्तु विषयविशेषव्यवस्थापकप्रमाणाभावात्सर्वविषय एवेत्यवगम्येत। संप्र. ३५८

## वृद्धगार्ग्यः

माघादिमासविधिः श्रावणादिनिषेधश्च

'माघादिमासषट्के तु मेखलाबन्धनं मतम्।
चूडाकरणमन्नं च श्रावणादौ विवर्जयेत्॥

(१) बका. ७४७ ज्येष्ठमासे वि (यदि मासवि) चैव हि (पुत्रक) पुत्र (विप्र) रत्नकोशे; प्रपा. २१४; संप्र. ३५७ रेव च (मादिशेत्); मुक्ता. ८८ ज्येष्ठमासे (ज्येष्ठे मासि) वृद्धवसिष्ठः; संम. २१ च (वा); विपा. ४७२ मुक्तावत् संप्रवच्च; ज्योनि. १२२ ज्येष्ठमा (ज्येष्ठे मा) पुत्रस्य ज (च शिशोर्ज); पुम. ४३८ मुक्तावत् संमवच्च, रत्नकोशे; संर. १७१ (ज्येष्ठमासे विशेषेण ज्येष्ठपुत्रस्य नैव हि। मौञ्जीबन्धं प्रकुर्वीत कृतश्चेन्मृत्युदो भवेत्॥).

(२) संप्र. ३५८; संम. ६५ (=) मेखलाबन्धे (चोपनयने); पुम. ४३८ पू.

(३) अस्य स्थलादिनिर्देशाः अन्नप्राशनमुहूर्तप्रकरणे (सं. का. पृ. २८६२) द्रष्टव्याः.

## आश्वलायनः

उपनयने सौरमानम्, दक्षिणायनकृष्णपक्षैकदेशयोर्निषेधः

'चौलोपनयगोदानसमावर्तविवाहकाः।
व्यवहाराश्च सौरेण कार्या यात्रादयोऽपि च॥

'उपनीतौ व्रते चौले समावर्तनकर्मणि।
कृष्णपक्षः प्रवर्ज्यः स्याद्दक्षिणायनमेव च॥
ऊर्ध्वं यत्नेन पञ्चम्याः कृष्णपक्षं प्रवर्जयेत्।
श्रौते स्मार्ते च मतिमान् सप्तमी स्यान्महापदि॥

## शौनकः

जन्ममासप्राशस्त्यम्

'जन्मोदये जन्मसु तारकासु
मासेऽथवा जन्मनि जन्मराशौ।
व्रतेन विप्रो न बहुश्रुतोऽपि
प्रज्ञाविशेषैः प्रथितः पृथिव्याम्॥
†गर्भाष्टमे गर्भपराशराद्यैः
फलं यदुक्तं व्रतबन्धने तु।
ततोऽधिकं जन्मसु तारकासु
मासेऽथवा जन्मनि वाडवानाम्॥

† अस्य संकीर्णव्याख्यानम् आश्वलायनगृह्यसूत्रवचनव्याख्याने द्रष्टव्यम्।

(१) आश्वस्मृ. ३।६३ पृ. ८.

(२) आश्वस्मृ. ११।३२०-३२१ पृ. ८०.

(३) संत. ९२९ जन्मराशौ (जन्मभे वा) प्रज्ञा (विद्या) कृत्यचिन्तामणौ; संसौ. १०९ राजमार्तण्डः; संप्र. ३५८; संग. २३० जन्मराशौ (जन्मभे वा) उत्तरार्धे (ऊढाऽङ्गनाऽनेकविधानि धत्ते सौख्यानि भोगं खलु बान्धवानाम्॥) चण्डेश्वरः, ६४५; संव. ९८ ऽथवा (तथा) न बहु (ऽल्पपरि); पुम. ४३८ राशौ (चन्द्रे) शेषैः प्र (शेषप्र) रत्नकोशे.

(४) संसौ. १०९ राजमार्तण्डः; संप्र. ३५८; संको. १२०; संग. ६५३ राजमार्तण्डः; संव. ९८; पुम. ४३८ बन्धने तु (बन्धनेन) वाडवा (बालका) रत्नकोशे.

(१) उदये लग्ने । व्रतेन उपनयनेन ।
संत. ९२९

(२) वाडवाः ब्राह्मणाः । जन्मस्विति बहुवचनं तिसृणां जन्मताराणां परिग्रहार्थम् । 'पितुः सूर्यबलं श्रेष्ठं शाखावर्णेशयोर्बटोः । सर्वेषां गुरुचन्द्रार्कबलं श्रेष्ठं व्रतादिषु ॥' । रत्नकोशे— 'विवाहे मेखलाबन्धे जन्ममासं विवर्जयेत् । विशेषाज्जन्मपक्षं तु वसिष्ठाद्यैरुदाहृतम् ॥' । तदेतदुपेक्ष्यम्, विधायकवचनानामानर्थक्यापातात् उपजीव्यवसिष्ठनारदवचनविरोधाच्च । तद्वचनमन्नप्राशनावसरे निरूपितम् । तस्मादमूलकमेव तत् । अपरे तु— कुतश्चित्कारणाच्चौलेन सहोपनयनं क्रियते, 'उपनीत्या सहेष्यते' इति च येषां च कुलाचारस्तेषामयं निषेध इत्याहुः । तथा च चौलसध्रीचीन उपनयने जन्मर्क्षजन्ममासादिनिषेधसिद्धौ तेनैव न्यायेन चौलविरुद्धेषु रोहिण्यादिषु उपनयनं न कार्यमिति सिध्यति । तदेतद्देशाचारानुरोधेन व्यवस्थापनीयम् ।
¶ संसौ. १०९–११०

(३) जन्ममासनिषेधस्तु आद्यगर्भविषयः क्षत्रियवैश्ययोः । विप्राणां तु वाडवानामिति विशेषोक्तेराद्यगर्भसाधारणं (जन्ममासे ?) उपनयनं जन्ममासादौ प्रशस्तमिति ज्ञेयम् । † संव. ९८

## कश्यपः

वर्णेषु मुख्या ऋतवः गौणसाधारणमासाश्च

**'ऋतौ वसन्ते विप्राणां ग्रीष्मे राज्ञां शरद्यथ ।**
**विशां मुख्यं च सर्वेषां द्विजानां चोपनायनम् ।**
**साधारणं च मासेषु माघादिषु च पञ्चसु ॥**

अत्र विप्रादिपदैरेव द्विजप्राप्तौ पुनः 'द्विजानां च' इति समुच्चयाभिधानं द्विजानुलोमजाभिप्रायेणेति मन्तव्यम् । ततश्च मूर्धावसिक्तादीनां क्षत्रियादिकाल एवोपनयनं सिध्यति, तेषां तद्धर्मत्वात् । संप्र. ३५५

¶ संप्र., संग. संसौगतम् ।

† शेषं संसौगतम् ।

(१) संप्र. ३५५ तृतीयार्धं नास्ति ; संव. ९५–९६.

## स्मृत्यन्तरम्

शुक्लपक्षः प्रशस्तः, कृष्णपक्षस्याऽऽद्यौ तृतीयौ मध्यमाधमौ, अन्त्यतृतीयो वर्ज्यः

**'शुक्लपक्षः शुभः प्रोक्तः कृष्णपक्षे त्रिधाकृते ।**
**अन्त्यभागं विनाऽन्यौ द्वौ गणितौ मध्यमाधमौ ॥**

(१) शुक्लपक्षस्य प्राशस्त्ये हेतुमाह वत्सः— 'पूर्वाह्णः पूर्वपक्षश्च उत्तरायणमेव च । देवानामप्यहश्चेति दिवसो निर्मलस्तथा ॥' इति । संप्र. ३५९

(२) कृष्णपक्षे त्रेधा विभक्तेऽन्त्यतृतीयोंऽशो निषिद्धः मध्यमप्रथमांशौ (प्रशस्त)प्रशस्ततरौ, 'शुक्लपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना ।' इति बृहस्पत्युक्तेः, '$शुक्लपक्षः ...... माधमौ ॥' इति स्मृत्यन्तराच्च ।
संकौ. १२०

## अनिर्दिष्टकर्तृकवचनानि

उदगयने मीनसूर्यविशिष्टचैत्रप्राशस्त्यम्, मेषसूर्यविशिष्टचैत्रनिषेधः, दक्षिणायननिषेधः, वर्णेषु प्रशस्ता ऋतवः साधारणा मासाश्च

**'सौम्यायने व्रतं कार्यं चैत्रे मासि विशेषतः ।**
**विवाहं नैव मीनस्थे मेषस्थेऽर्के व्रतं नहि ॥**

चैत्रे मासि मेषार्कस्य निषेधात् वैशाखे न दोषः । केशवार्कः— 'झषो न निन्द्यो यदि फाल्गुने स्यादजस्तु वैशाखगतो न निन्द्यः । मघाश्रितौ द्वावपि वर्जनीयावित्यादिवाचामियमेव युक्तिः ॥' इति । इदं गणेशदैवज्ञैरभ्यधायि, तन्निर्मूलमिव प्रतिभाति, मूलवाक्याभावात् ।
संव. ९९

$ वचनस्यास्य मध्यमप्रथमांशयोः प्रशस्तत्वप्रशस्ततरत्वयोः प्रमाणभावश्चिन्त्यः, मध्यमत्वाधमत्वयोः स्पष्टमुक्तत्वात् ।

(१) संसौ. १११ अन्त्यभा (अन्त्यं भा) ; संप्र. ३५९ ; संकौ. १२० ; संग. ६४५.

(२) संव. ९९.

$ [1]रात्रिभागः समाख्यातः खरांशोर्दक्षिणायने- (? नम्)।
व्रतबन्धादिकं तस्मिंश्चूडाकर्म च वर्जयेत् ॥

[2]ऋतुर्वसन्तः शुभदोऽग्रजानां
ग्रीष्मो नृपाणां च शरद्विशां च ।
व्रतस्य बन्धे यदि वाऽखिलानां
माघादयः पञ्च भवन्ति मासाः ॥

यजुःशाखिनां तु पुनः वसन्तग्रहणं नियमार्थमित्युक्तं धर्मभाष्ये । वसन्तादयोऽपि सूर्यस्य राशिद्वययोगाद्भवन्ति । एतदपि तत्रैवोक्तम्— 'मृगादिराशिद्वयभानुयोगात् षडर्तवः स्युः शिशिरो वसन्तः । ग्रीष्मश्च वर्षाश्च शरच्च तद्वद्धेमन्तनामा कथितश्च षष्ठः ॥' । मृगः मकरः । अनेन मीनमेषयोः वसन्त इत्युक्तं भवति । श्रुतिस्तु मधुमाधवौ वसन्तः इत्याह– 'मधुश्च माधवश्च वासन्तिकावृतू' इति । मधुमाधवौ चैत्रवैशाखौ ।
स्मृच. २७

[3]माघादिषु च मासेषु मौञ्जी पञ्चसु शस्यते ॥

एतच्च वर्णत्रयसाधारणम् । तदुक्तं ज्योतिःशास्त्र एव 'ऋतुर्वसन्तः ......॥' इति । † स्मृच. २७

[1]शुद्धिर्नैव गुरोर्यस्य वर्षे प्राप्तेऽष्टमे यदि ।
चैत्रे मीनगते भानौ तस्योपनयनं शुभम् ॥

**संग्रहकारः**

चन्द्रबलादिसत्त्वे कृष्णपक्षैकदेशः शस्तः

[2]चन्द्रे जीवे च वेदेशे वर्णेशे च बलान्विते ।
कृष्णपक्षे व्रतं शस्तं द्वित्रिपञ्चमिते तिथौ ॥

**वराहः**

माघादिमासविधिः, ज्येष्ठपुत्रं प्रति ज्येष्ठस्य सर्वान् प्रति जन्ममासस्य च निषेधः

[3]माघादिपञ्चमासेषु मेखलाबन्धनं शिशोः ।
ज्येष्ठमासे न ज्येष्ठस्य जन्ममासे न सर्वेषाम् ॥

**चण्डेश्वरः**

मासफलानि

[4]माघे द्रविणशीलाढ्यः फाल्गुने च दृढव्रतः ।
चैत्रे भवति मेधावी वैशाखे कोविदो भवेत् ॥
[5]ज्येष्ठे गृही च नीतिज्ञ आषाढे क्रतुभाजनः ।
मार्गशीर्षे भवेद्भ्रष्टः शेषे दुःखमवाप्नुयात् ॥

(१) अत्राऽऽषाढो हरिशयनात्प्रागेव ग्राह्यः, न परस्तात् । सोऽपि मिथुनस्थे रवौ, न कर्के, दक्षिणायननिषेधस्य प्रागेवोक्तेः । गुरुः— 'मृगकुम्भगते भानौ मध्यमं मीनमेषयोः । उत्तमं गोयुगस्थेऽर्के ह्यधमं चोपनायनम् ॥' । अत्राऽऽषाढे च मिथुनसंक्रमे उपनयनस्याधमफलता प्रोक्ता इति प्रागुक्तमाषाढस्योत्तमं यत्फलं (यः ?) राजमार्तण्डो(ण्डेन) तदुपेक्षा । अत एव नारदेन सर्ववर्णसाधारणं माघादिपञ्चकमित्युक्तम्, न तु

$ अस्य कृभव्याख्यानं 'नैमित्तिकमनध्यायम्' इति तिथिप्रकरणे वसिष्ठवचनव्याख्याने द्रष्टव्यम् ।

† बाल. स्मृचवत् ।

(१) कृभ. ९३३.

(२) स्मृच. २७ अग्रजानां (अग्रजन्मनां) ज्योतिःशास्त्रे; चका. ७४७ ज्योतिःशास्त्रे; मुक्ता. ८७–८८ स्मृचवत्, चन्द्रिकायाम्; बाल. १।१४ पृ. ४६ प्रथमपादमात्रम्, हेमाद्रौ.

(३) स्मृच. २७; चका. ७४७ च (तु); गमा. २०१; मुक्ता. ८८ च मासेषु मौञ्जी (तु मौञ्जीबन्धः); संम. २१ च (तु); सिन्धु. ९२९; विपा. ४७१ हेमाद्रौ; बाल. १।१४ पृ. ४६. विधानपारिजातभिन्नग्रन्थेषु 'ज्योतिःशास्त्रे' इति निर्देशः.

(१) गमा. २०१; सिन्धु. ९३१–९३२; विपा. ४७२–४७३. (२) ज्योनि. १२२.

(३) प्रपा. २१४ दिपञ्चमा (दिषु च मा) वराहमिहिरः, पू.; प्रर. ८१; चम. १४; बाल. १।१४ पृ. ४६ (ज्येष्ठस्य जन्ममासे न०).

(४) संत. ९२८ कृत्यचिन्तामणौ; संसौ. १०८; संप्र. ३५६; संम. २१ शीलाढ्यः (शीलाख्यः).

(५) संत. ९२८ गृही च नी (गहननी) उत्तरार्धे (शेषेष्वन्येषु रात्रिः स्यान्निषिद्धं निशि च व्रतम् ॥) कृत्यचिन्तामणौ; संसौ. १०८; संप्र. ३५६; संम. २२ गृही च नी (तु गृहनी) भाजनः (भाग्भवेत्).

षट्कम् । तेषां च पञ्चानामेव फलानि तत्रोक्तानि । § संसौ. १०८

(२) एतेन माघादिषण्णां मासानां नित्यत्वे सत्येव काम्यत्वमपि सिध्यति । यत्तु 'मृगकुम्भगते भानौ मध्यमं मीनमेषयोः । उत्तमं गोयुगस्थेऽर्के ह्यधमं चोपनायनम् ॥' इति बृहस्पतिना मिथुनार्कस्याधमत्वमुक्तम्, तद्ब्राह्मणाभिप्रायेण, तं प्रति वसन्तस्यैव मुख्यत्वात्, आषाढस्य च कथमपि वसन्तत्वाभावात् । क्षत्रियं प्रति तु न तस्याधमत्वम्, ग्रीष्मत्वेन मुख्यत्वात् । एवं वैश्यं प्रत्यपि साधारणकालत्वान्मुख्यत्वमेव । तस्मादियमुत्तमादिव्यवस्था ब्राह्मणं प्रत्येव । अत्राऽऽषाढो हरिशयनात्प्रागेव ग्राह्यः । नन्वयं मार्गशीर्षप्रतिषेधः कं प्रति ? न तावद्ब्राह्मणक्षत्रियौ प्रति, तयोर्दक्षिणायननिषेधेनैव तदप्राप्तेः । नापि वैश्यं प्रति, तस्यापि शरदवच्छिन्नदक्षिणायनस्यैव विधानात्तदप्राप्तेः । नापि नित्यानुवादः, निष्प्रयोजनत्वादिति चेत्, मैवम्, मार्गशीर्षाद्युत्तरायणवादिमते मार्गशीर्षप्राप्तौ निषेधप्रवृत्तेः सावकाशत्वात् । न च पौषेऽतिप्रसङ्गः, सामान्यत एव तस्य निषिद्धत्वादित्यलम् । संप्र. ३५६–३५७

## नृसिंहः

उदगयनविधिः

[१]'उत्तरायणगे सूर्ये कर्तव्यं ह्युपनायनम् ॥

## राजमार्तण्डः

वसन्त–जन्ममासयोर्विधिः फले च, माघादिमासफलानि

¶[२]'वसन्तसमये कुर्यादब्दे गर्भाष्टमेऽपि वा ।
मेधावी मेखलाबन्धं जन्ममासेऽथ जन्मभे ॥

[१]'यज्वा वसन्तसमये बहुवित्तभागी
गर्भाष्टमे विविधशास्त्रविशारदस्तु ।
वेदार्थपालनपरः खलु जन्ममासे
ऋक्षेऽपि जन्मनि बटुः क्रतुभाजनं स्यात् ॥
[२]'माघे मासि महाधनो धनपतिः
प्रज्ञायुतः फाल्गुने
मेधावी भवति व्रतोपनयने
चैत्रे च वेदान्वितः ।
वैशाखे निखिलोपभोगसहितो
ज्येष्ठे वरिष्ठो बुध-
स्त्वाषाढे सुमहाविपक्षविजयी
ख्यातो महान्पण्डितः ॥

## मुहूर्तचिन्तामणिः

ब्राह्मणस्य ज्येष्ठादिपुत्रान् प्रति क्षत्रियवैश्ययोर्द्वितीयादिपुत्रान् प्रति च जन्ममासः प्रशस्तः

[३]'जन्मर्क्षमासलग्नादौ व्रते विद्याधिको व्रती ।
आद्यगर्भेऽपि विप्राणां क्षत्रादीनामनादिमे ॥

सामान्यतो निषिद्धस्य जन्ममासादेरत्र व्रतबन्धेऽपवादमनुष्टुभाऽऽह– जन्मर्क्षेति । जन्मनक्षत्रे जन्ममासे जन्मलग्ने च, आदिशब्देन जन्मतिथिः, एतेषु सत्स्वपि दोषेषु विप्राणामाद्यगर्भे अपिशब्दात् द्वितीयगर्भादावपि व्रती बालो व्रते ¶यज्ञोपवीते विद्याधिकः स्यात् । क्षत्रादीनां क्षत्रियवैश्यानां पुनरनादिमे द्वितीयगर्भाद्ये बालके सति जन्मर्क्षमासलग्नादौ विद्याधिको व्रती स्यात् । आद्य-

---

§ संम. संसौगतम् ।

¶ अस्य संकौव्याख्यानम् आश्वलायनगृह्यसूत्रव्याख्याने द्रष्टव्यम् ।

(१) प्रपा. २१४ ह्युप ( ह्यौप ) ; गभा. २०१ प्रपावत् ; प्रर. ८१ ; संप्र. ३६३ ; चम. १४ प्रपावत् ; बाल. १।१४ पृ. ४५ प्रपावत् ; संग. ६४४.

(२) संसौ. १०८ ; संप्र. ३५८ ; संकौ. १२० ; संग. ६४५, ६५३ ; संर. १७२ कुर्या ( दद्या ) पि वा

¶ नायं व्रतपदार्थः, नाप्यत्र युज्यते । 'उपनयने' इत्येव व्याख्यातुं युक्तम् ।

( ष्टमे ) उत्तरार्धे ( मेखलां जन्ममासेऽपि जन्मभे च तिथावपि ॥ ).

(१) संसौ. १०९ यज्वा ( यद्वा ) विविध (विधि) बटुः क्र ( बहुक्र ) ; संप्र. ३५८.

(२) मपा. १८ प्रज्ञायुतः ( प्राज्ञो बली ) उत्तरार्धे ( वैशाखे सुभगः सुखी पटुमतिर्ज्येष्ठे बलिष्ठो बुध आषाढेऽपि महाविपक्षविजयी ख्यातो महापण्डितः ॥ ) सुरेश्वरः ; संसौ. १०७ ; संप्र. ३५५–३५६.

(३) मुचि. ५।४५ ; संब. ९८ ; संर. १७२.

गर्भे तु तेषां सर्वथा प्रतिषेध एवेति । ...... ननु– ' विवाहे चोपनयने जन्ममासं च वर्जयेत् । विशेषाज्जन्मपक्षं तु वसिष्ठाद्यैरुदाहृतम् ॥ ' इति जगन्मोहने गर्गवचनं कथं संगच्छेतेति चेत्, सत्यम्, क्षत्रियाणां विशां चाऽऽद्यगर्भनिषेधार्थं भविष्यति । तथा सति द्वितीयगर्भादावुपनयनादिमङ्गलकृत्यं सुखोदर्कं स्यात् । विप्राणां तु ' बाडवानाम् ' इति विशेषोक्तेराद्यगर्भानाद्यगर्भसाधारणमुपनयनं जन्ममासादौ । कुत इति चेत्, शृणु, यो जन्ममासादौ निषेधः स आद्यगर्भस्यैव । सोऽप्युपनयनवाक्येनापोद्यते । द्वितीयगर्भादौ तु निषेध एव नास्ति । किं तदपवादेन ? ¶ पीटी.

## मौञ्जीपटले

मीनरवियुतचैत्रस्य गुरुदोषापवादकत्वम्

[1]जन्मभादष्टगे सिंहे नीचे वा शत्रुभे गुरौ ।
मौञ्जीबन्धः शुभः प्रोक्तश्चैत्रे मीनगते रवौ ॥

## मुहूर्तगणपतौ

मास–पक्षविधिः, जन्ममास–मीनरवियुतचैत्र-मासयोः प्राशस्त्यम्

[2]माघात्पञ्चसु मासेषु शुक्ले जीवज्ञभार्गवे ।
केचित्तु कृष्णपक्षेऽपि प्रथमत्रिलवे जगुः ॥
जनुर्मासभलग्नादौ विप्राणां व्रतबन्धनम् ।
बहुविद्याप्रदं विद्यादाद्यगर्भभुवामपि ॥

¶ संव. पीटीगतम् ।

(१) संप्र. ८०८ नीचे वा ( नीचस्थे ); सिन्धु. ९३२ (=) दष्टगे ( दष्टमे ); विपा. ४७३ (=) सिन्धुवत्; ज्योनि. ९३ मादष्ट ( माद्दुष्ट ); संर. १७१ शत्रुभे ( शत्रुगे ) शेषं ज्योनिवत्.

(२) संव. १०४, १०५.

चैत्रे मासि रवौ मीने विबलेऽपि गुरौ बटोः ।
व्रतबन्धः प्रशस्तः स्याच्चैत्रे मीने यतः शुभः ॥

## शौनककारिकाः

अयनपक्षविधिः

[1]तथोत्तरायणे चैव शुक्लपक्षे ...... ॥

## रेणुकारिकाः

वर्णभेदेनर्तुभेदः, सर्वसाधारणा मासाः, चैत्रप्राशस्त्यम्, यजुःशाखिनं प्रति वसन्त एव, शुक्लपक्षविधिः

[2]ऋतुर्वसन्तः शुभदोऽग्रजानां
ग्रीष्मो नृपाणां च शरद्विशां च ।
व्रतस्य बन्धे यदि वाऽखिलानां
माघादयः पञ्च भवन्ति मासाः ॥

[3]अतीव तुष्टे सुरराजपूज्ये
सिंहस्थिते वा द्विजपुंगवानाम् ।
व्रतस्य बन्धः खलु मासि चैत्रे
कृतश्चिरायुः शुभसौख्यदः स्यात् ॥

एतदष्टवर्षविषयम् । गभा. २०१

[4]वसन्त एवोपनयेद्यजुषः शाखिनां बटुम् ।
पुनर्वसन्तग्रहणाद्धर्मभाष्ये निरूपितम् ॥
[5]लग्नाधिपे च बलिनि शुक्लपक्षे व्रतं शुभम् ॥

(१) शौका. २ पृ. ४१; प्रपा. २१४.

(२) रेका. ८ पृ. २०.

(३) रेका. १० पृ. २०; गभा. २०१; ज्योनि. ९३ शुभसौख्यदः ( सुखसंपदे ) कारिकानिबन्धे.

(४) रेका. ११ पृ. २०.

(५) रेका. १६ पृ. २१.

## वसिष्ठः

नैमित्तिकानध्यायादितिथीनां प्रतिप्रसवः, स च अतीतकालादिवटुविषयक इति निबन्धारः, प्रशस्ताः तिथयः

**[1]नैमित्तिकमनध्यायं कृष्णे च प्रतिपद्दिनम् ।**
**मेखलाबन्धने शस्तं चौले वेदव्रतेष्वपि ॥**
**[2]प्रशस्ता प्रतिपत्कृष्णे न पूर्वपरसंयुता ॥**

( १ ) एतदतीतकालस्याऽऽर्तस्य बटोरुपनयनविषयम्, 'प्रशस्ता प्रतिपत्कृष्णे कदाचिच्छुभगे विधौ । चन्द्रे बलयुते लग्ने वर्षाणामपि लङ्घने ॥' इति व्यासोक्तेरित्याहुः । एवं सप्तम्यपि, ¶तस्य गलग्रहत्वोक्तेः । $ सिन्धु. ९३२–९३३

[एतदिति । इदमुपलक्षणम्, प्रायश्चित्तार्थोपनयनविषयताया अपि 'स्वाध्यायवियुजो घस्राः' इत्यत्र वक्तव्यत्वात् । प्रतिपत्पदं सप्तम्यादेरुपलक्षणमित्याह– एवमिति । सप्तम्यपीति । अपिना त्रयोदशीसमुच्चयः, तस्यापि गलग्रहत्वात् । अतीतकालस्येत्यादि वर्तते । एवं 'माघादिमासषट्केषु' इति षष्ठ आषाढः 'माघादिशुक्रान्तकपञ्चमासाः' इत्यनेन विरोधात्, पञ्चम्यन्तकृष्णपक्षश्च 'आपूर्यमाणपक्षे' इत्यनेन विरोधादधार्यविषयकः । एवं 'सार्वकालमेके विवाहम्' इति चाधार्यकन्याविषयकमिति बोध्यम् । यत्तु 'चैत्रे कृष्णद्वितीयायां तिसृष्वेवाष्टकासु च । मार्गे च फाल्गुने चैव आषाढे कार्तिके तथा ॥' इत्यनध्यायवचनम्, तत्र कृष्णद्वितीयायामित्यनुषङ्गाच्चैत्रादिपञ्चकृष्णद्वितीयालाभात्तदन्यकार्तिकमार्गशीर्षयोरुपनयनाभ्यनुज्ञा वैश्यपरा, 'विप्रस्य क्षत्रियस्यापि मौञ्जी स्यादुत्तरायणे । दक्षिणे च विशां कार्या नानध्यायेऽपि संक्रमे ॥' इति वचनात् । विप्रक्षत्रिययोः प्रायश्चित्तार्थोपनयनपरा च, 'अनध्यायेऽपि कुर्वीत यस्य नैमित्तिकं भवेत्' इति वचनात्, 'अनध्यायेऽपि' इत्यपिना वैश्योपनयन( ? दक्षिणायन )संग्रहात् । एवं च 'रात्रिभागः समाख्यातः खरांशोर्दक्षिणायने(? नम्) । व्रतबन्धादिकं तस्मिंश्चूडाकर्म च वर्जयेत् ॥' इति दक्षिणायननिषेधो न तत्र प्रवर्तते । एवं 'चन्द्रे बलयुते लग्नाच्छुभभावे शुभे स्थिते । चतुर्दशीं प्रशंसन्ति कुमारे वयसाऽधिके ॥' इति चाधार्यविषयं प्रायश्चित्तोपनयनविषयं चेति रामचन्द्रः । कृभ.]

( २ ) अयं च प्रतिपद्दिनविधिर्नैमित्तिकानध्यायविधिश्चातीतकालस्याऽऽर्तस्य बटोरुपनयनविषयः, 'प्रशस्ता प्रतिपत्कृष्णे कदाचिच्छुभगे विधौ । चन्द्रे बलयुते लग्ने वर्षाणामतिलङ्घने ॥' इति व्यासोक्तेः । एवं 'चन्द्रे बलयुते लग्नाच्छुभभावे शुभेक्षितौ । चतुर्दशीं प्रशंसन्ति कुमारे वयसाऽधिके ॥' इति चतुर्दशीविधिरपि । 'स्वाध्यायवियुजो घस्राः कृष्णप्रतिपदादयः । प्रायश्चित्तनिमित्ते तु मेखलाबन्धने मताः ॥' इति कालादर्शादिधृतवृद्धगार्ग्यवचनात्सर्वेषां नैमित्तिकानध्यायानां कृष्णप्रतिपदादिनित्यानध्यायानां च प्रायश्चित्तोपनयनपरतैव, नापूर्वोपनयनपरता । अमावास्या त्वत्रापि निषिद्धैव, 'अमावास्या तु सर्वत्र निन्दिता शुभकर्मणि ।' इति वचनात् । अपरार्के– 'नष्टे चन्द्रेऽष्टमे शुक्रे निरंशे भास्करे तथा । कर्तव्यं नोपनयनं नानध्याये गलग्रहे ॥' । संर. १७३

---

¶ विधेयप्राधान्येन पुंस्त्वम् । एवं कृष्णंभट्टयामपि ।

$ विपा. सिन्धुवत् ।

(१) वसं. २९।३१ द्दिनम् (द्दिने) बन्धने (बन्धनं); संसौ. ११८; संम. २३ तेष्वपि (तेऽथवा); सिन्धु. ९३२; विपा. ४७३; बाल. १।१४ पृ. ५१ : १।१४ पृ. ५२ निर्देशमात्रम्; संर. १७३ तेष्वपि (तेषु च).

(२) वसं. २९।३२ कृष्णे (कृष्णा); संसौ. ११८ पूर्वप (पूर्वाप); सिन्धु. ९३२ पूर्वप (पूर्वा प); विपा. ४७३ वसंवत् संसौवत् च; बाल. १।१४ पृ. ४६ सिन्धुवत्.

'चातुर्मास्यद्वितीया च तृतीया चाक्षया तथा ।
उपनीतस्तदा श्रीमान् विद्यावान् धनवान् भवेत् ॥

चातुर्मास्येऽतिक्रान्ते सति या द्वितीया सा चातुर्मास्यद्वितीया । कार्तिकीं पौर्णमासीमतीत्य समनन्तरभाविनी द्वितीयेत्यर्थः । एतच्च वैश्योपनयनविषयम् । तस्य हि शरदि प्राशस्त्यमापस्तम्बेन विहितम् 'शरदि वैश्यमुपनयेत्' इति । संसौ. १२०

'विधातृगौरीफणिषण्मुखेन्द्र-
यमाः सकामास्तिथयः प्रशस्ताः ।
मध्येऽर्करुद्रेऽपि च ते प्रशस्ते
सुहृत्स्वतुङ्गर्क्षगते शशाङ्के ॥
'त्यक्त्वा चतुर्थीमपि कृष्णपक्षे
त्वाद्यं त्रिभागं शुभदं व्रते च ॥

विधाता द्वितीया । गौरी तृतीया । फणिः( १णी ) पञ्चमी । षण्मुखः षष्ठी । इन्द्रः सप्तमी । यमः चतुर्थी । कामः त्रयोदशी । अर्कः द्वादशी । रुद्रः एकादशी । संप्र. ३६१

'या चैत्रवैशाखसिता तृतीया
माघस्य सप्तम्यथ फाल्गुनस्य ।
कृष्णद्वितीयोपनये प्रशस्ताः
प्रोक्ता भरद्वाजमुनीन्द्रमुख्यैः ॥

( १ ) चैत्रवैशाखतृतीये मन्वादियुगादी । माघसितसप्तम्यपि मन्वादिः । एतासामनध्यायत्वं वक्ष्यते । संम. २२

( २ ) युगादिमन्वादिचातुर्मास्यद्वितीयात्वेन निषेधितानां प्रतिप्रसवमुपनयने आहतुर्वसिष्ठभरद्वाजौ– 'या चैत्रवैशाख... ॥' इति । बाल. १।१५१ पृ. ४१२

( ३ ) यद्यपि चैत्रशुद्धतृतीया मन्वादिः, वैशाखशुद्धतृतीया युगादिः, तथापि ते उमे तृतीये नानध्यायौ, तथैव फाल्गुनकृष्णद्वितीयाऽपि नानध्यायः, तासां प्राशस्त्याभिधानात् । तथा च वसिष्ठः– 'या चैत्रवैशाख... ॥' इति । अन्यासां युगादिमन्वादीनां व्रतबन्धे अप्रसङ्गादेवाग्रहणम् । केचिदाचार्याः 'या चैत्रवैशाख...... ' इति वचनं लिखित्वाऽपि स्वेच्छया नाङ्गीकुर्वन्ति । तत्र शपथमात्रमेव, प्रमाणं न पश्याम इत्यलम् । तन्मते ते तृतीये अनध्यायत्वेन ज्ञेये । संव. १०१

## नारदः

श्रेष्ठमध्यमातिनिन्दितास्तिथयः

'शुक्लपक्षे द्वितीया च तृतीया पञ्चमी तथा ।
त्रयोदशी च दशमी सप्तमी व्रतबन्धने ॥
'श्रेष्ठास्त्वेकादशी षष्ठी द्वादश्येतास्तु मध्यमाः ।
एकां चतुर्थीं संत्यज्य कृष्णपक्षे तु मध्यमाः ॥

---

(१) **वसं.** २९।३२–३३ या च ( यायं ) या तथा ( ये तिथी ) तस्तदा ( तो यतः ); **संसौ.** १२०; **बाल.** १।१४ पृ. ४६ तस्तदा ( तो यतः ) उत्त.; **कृम.** ९३७ या च ( या या ).

(२) **वसं.** २९।३५ खेन्द्रयमाः ( खाद्रियमाः ); **संसौ.** १११ रुद्रेऽपि च ( रुद्रे अपि ); **संप्र.** ३६१ सुहृत्स्व ( सुहृत्स ).

(३) **वसं.** २९।३६; **संसौ.** ११२; **संप्र.** ३६१; **संव.** ९६ अशुद्धिबहुलो ग्रन्थः.

(४) **वसं.** २९।३९ सिता तृ (सिततृ) म्यथ (म्यपि); **संसौ.** ११९ म्यथ (म्यपि) कृष्णद्वि (कृष्णे तृ) शस्ताः ( शस्ता ); **संम.** २२ माघस्य ( माघेऽथ ) कृष्णद्वि ( कृष्णे द्वि ) भरद्वाजवसिष्ठौ; **बाल.** १।१४ पृ. ५१ (प्रोक्ता ... मुख्यैः ०) शेषं संमवत्: १।१५१ पृ. ४१२ सिता ( गता ) शस्ताः ( शस्ता ) शेषं सर्वं संमवत्; **संव.** १०१ कृष्णद्वि ( कृष्णे द्वि ) शस्ताः ( शस्ता ) मुनीन्द्र ( वसिष्ठ ).

(१) **ज्योना.** २४।८; **संसौ.** १११; **संप्र.** ३६०; **ज्योनि.** १२२; **पुम.** ४३८.

(२) २४।९ उत्तरार्धे ( एका चतुर्थी संत्याज्या कृष्णपक्षे च मध्यमाः ॥ ); **संसौ.** १११ तु ( ऽपि ); **संप्र.** ३६०; **ज्योनि.** १२२ श्रेष्ठास्त्वे ( श्रेष्ठा त्वे ) संत्यज्य ( संत्यक्त्वा ) तु ( ऽपि ); **संकौ.** १२० उत्त.; **पुम.** ४३८ शी षष्ठी द्वादश्येतास्तु ( शीषष्ठीद्वादश्यस्तु हि ) पक्षे तु मध्यमाः ( पक्षे तु मध्यमाम् ).

'आ पञ्चम्यास्तु तिथयः पराः स्युरतिनिन्दिताः ॥

(१) यत्तु बृहस्पतिनृसिंहवसिष्ठैरुत्तमत्वेनोक्तायाः षष्ठ्याः नारदेन मध्यमत्वमुक्तं तत् गर्गमते तस्याः गलग्रहत्वमभिप्रेत्य इति न विरोधः । संप्र. ३६१

(२) पराः §तृतीयांशगताः । संकौ. १२०

## बृहस्पतिः

श्रेष्ठा मध्यमाश्च तिथयः

'द्वितीया पञ्चमी षष्ठी सप्तमी दशमी तथा ।
त्रयोदशी तृतीया च शुक्ले श्रेष्ठाः प्रचोदिताः ।
द्वादश्येकादशी चैव मध्यमास्तिथयस्तथा ॥
'मध्यमाश्च प्रशंसन्ति चन्द्रे च बलसंयुते ।
कृष्णे चैव प्रशस्ताः स्युस्तिथयश्चोपनायने ॥
'कृष्णे च प्रथमा पूज्या कदाचिच्छुभगे विधौ ॥
'चन्द्रे बलयुते लग्नाच्छुभभावे शुमेक्षिते ।
चतुर्दशीं प्रशंसन्ति कुमारे वयसाऽधिके ॥

(१) 'द्वादश्येकादशी चैव' इत्यत्र शुक्ले इत्यनुषङ्गः । मध्यमा इति । शुक्लपक्षीयाः मध्यमाः प्रशस्ताश्च तिथयश्चन्द्रस्य बलवत्त्वे कृष्णपक्षेऽप्युपनयने स्युरिति प्रशंसन्त्येवाऽऽचार्याः । पृ. ३५९

यत्तु मदनरत्नेन 'प्रथमाः' इति बहुवचनान्तं पाठं कल्पयित्वा 'प्रथमाः आद्याः पञ्चम्यन्ताः' इति व्याख्यातम्, तदसत्, पूर्ववाक्ये कृष्णपक्षीयषष्ठीसप्तम्यादीनामपि ग्रहणेन परिसंख्यासंभवात्, 'द्वादश्येकादशी ... प्रशस्ता प्रतिपत्कृष्णे... ॥' इति व्यासवाक्ये '† कृष्णे च प्रतिपद्दिनं शुभकरम्' इति पूर्वोक्तबृहस्पतिवाक्ये च साक्षात्प्रतिपच्छन्दोपादानाच्च । पृ. ३६०

अत्रेयं व्यवस्था । कृष्णपक्षे प्रतिपच्चतुर्दश्योरुपादानं व्रात्योपनयनविषयम्, 'वर्षाणामतिलङ्घने' 'कुमारे वयसाऽधिके' इति व्यासबृहस्पतिवाक्यात् । अतिलङ्घनं षोडशाद्यतिक्रमः । ततश्चानध्यायत्वेन दुष्टफलकत्वेन च तन्निषेधो नातीतकालबटुविषय इति न विरोधः । चतुर्थीसप्तमीत्रयोदशीनां गलग्रहत्वेऽप्युपादानं मूकाद्युपनयनविषयम्, तेषामध्ययनाभावेन तस्यादोषत्वात् ।

संप्र. ३६१

(२) प्रथमाः पञ्चमीपर्यन्ताः । पुम. ४३८

## व्यासः

कृष्णपक्षीयप्रशस्तमध्यमास्तिथयः, कासांचिन्निषिद्धतिथीनां प्रतिप्रसवः

'द्वादश्येकादशी चैव मध्यमा चोपनायने ।
प्रशस्ता प्रतिपत् कृष्णे कदाचिच्छुभगे विधौ ॥
§'चन्द्रे बलयुते लग्ने वर्षाणामतिलङ्घने ।
शेषेषु वर्जयेद्विद्वान् द्विजानामुपनायनम् ॥

---

§ त्रिधा विभक्तस्य पक्षस्येत्यादिः ।

(१) ज्योना. २४।१० ; संसौ. १११ ; संप्र. ३६१ ; ज्योनि. १२२ ; संकौ. १२० ; पुम. ४३८ पराः स्युर (परास्तु भ ).

(२) प्रपा. २१५ षष्ठपादे (मध्यमौ च तिथी विना) ; संप्र. ३५९ ; संग. ६४५–६४६ ; पुम. ४३८ श्रेष्ठाः प्रचोदिताः ( श्रेष्ठा प्रकीर्तिता ).

(३) प्रपा. २१५ माश्च ( मौ च ) च ( तु ) ; संप्र. ३५९ ; संग. ६४६ पू. ; पुम. ४३८ चैव प्रशस्ताः स्युस्ति ( पञ्च प्रशंसन्ति ति ) उत्त. ; कुम. ९३२ (=) सर्वं पुमवत्.

(४) संप्र. ३६० ; संग. ६४६ ; पुम. ४३८ मा पूज्या ( माः पूज्याः ) विधौ ( तिथौ ).

(५) संप्र. ३६० : ३६१ चतुर्थपादमात्रम् ; संकौ. १२०–१२१ (=) ; संग. ६४६ लग्नाच्छु ( लग्ने शु ) ; कुम. ९३४ (=) शुमेक्षिते ( शुभे स्थिते ) ; संर. १७३ (=) क्षिते ( क्षितौ ).

† वचनमिदम् 'श्रीविद्याबलकारि' इति श्लोकस्योत्तरार्धम् अयनर्तुमासपक्षविचारप्रकरणे ( सं. का. पृ. ३१२८ ) द्रष्टव्यम् ।

§ संप्रव्याख्यानं बृहस्पतिवचने संकौव्याख्यानं च नृसिंहवचने द्रष्टव्यम् ।

(१) संसौ. ११२ मा चोपनायने (मं चोपनायनम्) : ११९ उत्त. ; संप्र. ३६० ; सिन्धु. ९३३ उत्त. ; विपा. ४७३ कृष्णे (कृष्णा) उत्त. ; संकौ. १२० उत्त. ; बाल. १।१४ पृ. ५१ विधौ ( रवौ ) उत्त. ; संग. ६४६ (=) ; संर. १७३ उत्त.

(२) संसौ. ११२ : ११९ पू. ; संप्र. ३६० :

## भरद्वाजः

कासांचिन्निषिद्धतिथिनां प्रतिप्रसवः

'या चैत्रवैशाखसिता तृतीया
माघस्य सप्तम्यथ फाल्गुनस्य ।
कृष्णे द्वितीयोपनये प्रशस्ताः
प्रोक्ता भरद्वाजमुनीन्द्रमुख्यैः ॥

( १ ) अत्र नैमित्तिकानध्यायेषु क्वचित्प्रतिप्रसवमाह भरद्वाजः– ' या चैत्रवैशाख ...... ' इति । प्रपा. २१६

( २ ) चैत्रवैशाखसिततृतीये मन्वादियुगादी । माघसितसप्तम्यपि मन्वादिः । एतासामनध्यायत्वं वक्ष्यते । ¶ संम. २२

( ३ ) अत्रापि कृष्णप्रतिपद्वज्ज्ञेयम् । सिन्धु. ९३७

[ येति । चैत्रशुक्लतृतीयाया रथसप्तम्याश्च मन्वादित्वेन वैशाखशुक्लतृतीयाया युगादित्वेन फाल्गुनकृष्णद्वितीयायाश्चातुर्मास्यद्वितीयात्वेन निषेधे प्राप्तेऽयं प्रतिप्रसवः । नन्वस्य ' अप्रशस्ता ' इति छेदान्निषेधपरता युक्तेति चेत् , न, ' चातुर्मास्यद्वितीया या तृतीया चाक्षया तथा । उपनीतो यतः श्रीमान् विद्यावान् धनवान् भवेत् ॥ ' इति वासिष्ठात् । अत्रापीति । ‡ वक्ष्यमाणप्रायश्चित्तार्थोपनयनेऽपीत्यर्थः । कृभ. ]

¶ संकौ. संमवत् ।

‡ व्याख्यानमिदं चिन्त्यम् । तदनुसारेण ' प्रायश्चित्तार्थोपनयनेऽपि कृष्णप्रतिपद्वज्ज्ञेयम् ' इति वाक्यव्यक्तिर्निष्पन्ना । तत्र कृष्णप्रतिपदुपनयनयोः कालत्व-कालानुष्ठेयकर्मत्वरूपाभ्यां वैषम्यात् दृष्टान्तदार्ष्टान्तिकभावो न संभवति । वक्ष्यमाणस्य प्रायश्चित्तार्थोपनयनस्य ' अत्र ' इतीदमर्थताऽपि नोपपद्यते । तस्मात् ' चैत्रशुक्लतृतीयादिविषयेऽपि ' इति व्याख्येयम् । पूर्वं कृष्णप्रतिपद्विषये ' एतदतीतकालस्याऽऽर्तस्य बटोरुपनयनविषयम् ' इति यदुक्तं तत् चैत्रशुक्लतृतीयादिविषयेऽपि ज्ञेयमित्यर्थः ।

३६१ द्वितीयपादमात्रम् ; सिन्धु. ९३३ मतिल (मपि ल) पू. ; विपा. ४७३ सर्वं सिन्धुवत् ; संकौ. १२० पू. ; बाल. १।१४ पृ. ५१ पू. ; संग. ६४६ द्वितीयपादमात्रम् ; संर. १७३ पू.

(१) प्रपा. २१६ माघस्य (मावे च) ; गभा. २०२

( ४ ) युगादित्वेन मन्वादित्वेन चातुर्मास्यद्वितीयात्वेन च निषेधितानां प्रतिप्रसवमाह भरद्वाजः– ' या चैत्र...... ॥ ' इति । ' शुचावूर्जे तपस्ये च या द्वितीया विधुक्षये । चातुर्मास्यद्वितीयास्ताः प्रवदन्ति मनीषिणः ॥ ' इति गर्गः । बाल. १।१४ पृ.४६

## बादरायणः

पञ्चदशतिथिफलानि

'प्रतिपदि मदिरासक्तः श्रुतिमेधाधिको द्वितीयायाम् ।
नीतिज्ञो मेधावी जितसकलारिस्तृतीयायाम् ॥

'मन्दधिया हतचित्तो दीनश्चपलश्चतुर्थ्यां स्यात् ।
पञ्चम्यां बहुवित्तः पूर्णायुर्धनपतिर्मतिमान् ॥

'षष्ठ्यामशुचिः सततं सप्तम्यां व्याधिसंततः ।
अल्पायुरथाष्टम्यां नवमे धनवर्जितः सदा पुरुषः ॥

दशम्यामर्थसंपत्तिरेकादश्यां गुणान्वितः ।
द्वादश्यां नीतिशास्त्रज्ञो निधनाय त्रयोदशी ।
चतुर्दश्यां भवेन्नाशः पञ्चदश्यां क्षयी भवेत् ॥

द्विती ( तृती ) व्यासः ; संप्र. ३६२ शस्ताः (शस्ता) ; कम. १५ सिता ( सिते ) शेषं प्रपावत् संप्रवच्च ; संम. २२ माघस्य ( मावेऽथ ) भरद्वाजवसिष्ठौ ; सिन्धु. ९३७ संप्रवत् , व्यासः ; विपा. ४७५ सर्वं गभावत् ; ज्योनि. १२३ माघस्य ( माघेऽपि ) कृष्णे द्वि ( कृष्णद्वि ) मुख्यैः ( वर्यैः ) मनुः ; संकौ. १२१ संप्रवत् ; बाल. १।१४ पृ. ४६ प्रपावत् संप्रवच्च : १।१५१ पृ. ४१२ सिता ( गता ) मुख्यैः ( वर्यैः ) शेषं सर्वं संमवत् संप्रवच्च ; संग. ६४७ तृती ( द्विती ) कृष्णे द्वि ( कृष्णतृ ) ज्योतिर्निबन्धे ; पुम. ४३८ सर्वं गभावत् संप्रवच्च ; संर. १७४ संप्रवत् .

(१) संसौ. ११३ ; संप्र. ३६३.

(२) संसौ ११३ हतचित्तो (कृतवित्तो) ; संप्र. ३६३.

(३) संसौ. ११३ ; संप्र. ३६३.

## रोमशसंहिता

याजुषान् प्रति सोपपदाप्रतिप्रसवः

§[1]वेदव्रतोपनयने स्वाध्यायाध्ययने तथा ।
न दोषो यजुषां सोपपदास्वध्यापनेऽपि च ॥

## ब्रह्माण्डपुराणम्

अष्टकातिथिनिषेधः

[2]अष्टकास्तु समाख्याताः सप्तम्यादिदिनत्रयम् ।
मार्गशीर्षे तथा पौषे माघमासे तथैव च ॥
[3]तिस्रोऽष्टकाः समाख्याताः कृष्णपक्षेषु सूरिभिः ।
शास्त्रं न तत्राधीयीत व्रतबन्धं विवर्जयेत् ॥

## अनिर्दिष्टकर्तृकवचनानि

षष्ठी–रिक्तातिथिफलानि, वर्ज्यतिथयः

[4]षष्ठ्यामशुचिरुग्भार्यो रिक्तासु बहुदोषभाक् ॥
[5]माघस्याऽऽद्या द्वादशी च द्वितीया
वर्ज्या कृष्णा फाल्गुनस्य द्वितीया ।
चैत्रे वैशाखे ( च ) शुद्धा तृतीया
ज्येष्ठे वर्ज्या शुक्लपक्षद्वितीया ॥

§ अस्य संख्याख्यानं पुनरुपनयननिमित्तप्रकरणे स्मृतिसारवचनव्याख्याने ( सं. का. पृ. ३०७८ ) द्रष्टव्यम् ।

(१) **गभा.** २०२ ध्यापने ( ध्ययने ) चण्डेश्वरः ; **सिन्धु.** ९३८–९३९ सर्वं गभावत् ; **विपा.** ४७६ सर्वं गभावत् ; **ज्योनि.** १२३ ध्यापनेऽपि ( ध्ययनेषु ) ; **संग.** ६४८ सर्वं गभावत् ; **संर.** १७४, ३३१ स्मृत्यन्तरम्.

(२) **मपा.** १०५ पू. ; **मर.** ११ कास्तु ( का तु ) ख्याताः (ख्याता) पू. ; **विपा.** ५३३ (=) मरवत् ; **बाल.** १।१४ पृ. ५० ( = ) प्रथमपादे ( अष्टका च समुद्दिष्टा) पू. ; **पुम.** ४४२ (=) ख्याताः (ख्याता) पू.

(३) **मपा.** १०५ न तत्रा ( तत्र ना ) उत्त. ; **मर.** ११ न तत्राधीयीत ( तु तत्राध्येयं ) उत्त. ; **विपा.** ५३३ (=) ; **बाल.** १।१४ पृ. ५० ( = ) उत्तरार्धे ( नाधीयीत च शास्त्राणि व्रतबन्धं च वर्जयेत् ॥ ) उत्त. ; **पुम.** ४४२ (=) न तत्राधीयीत ( तु तत्र नाध्येयं ) विवर्ज ( च वर्ज ) उत्त. (४) **संत.** ९२९.

(५) **ज्योनि.** १२३.

## संग्रहकारः

शुक्लकृष्णतिथयः, आपत्कालतिथयः

[1]चन्द्रे जीवे च वेदेशे वर्णेशे च बलान्विते ।
कृष्णपक्षे व्रतं शस्तं द्वित्रिपञ्चमिते तिथौ ॥
व्रतं शुक्ले त्रिपञ्चाङ्कदशेशार्कमिते तिथौ ।
देयं(? ज्ञेयं) द्विसप्तकामेषु कुमारे वयसाऽधिके ॥
कृष्णे भूनेत्रवह्नीषुतिथौ स्वेशे बले सति ।
संकटादौ व्रतं कार्यमिति प्राह बृहस्पतिः ॥

## सुरेश्वरः

ग्राह्याः तिथयः, तिथिफलानि, निषिद्धाः तिथयः

[2]तृतीयैकादशी ग्राह्या पञ्चमी दशमी तथा ।
द्वितीयायां च मेधावी भवेद्दर्पबलान्वितः ॥
[3]रिक्तायामर्थहानिः स्यात्पौर्णमास्यां तथैव च ।
प्रतिपद्यपि चाष्टम्यां कुलबुद्धिविनाशकृत् ॥
[4]सप्तम्यामष्टम्यां च प्रतिपदि रिक्ताचतुर्दश्याम् ।
आयुर्विद्यानाशो व्रतबन्धे पञ्चदश्यां वा ॥
[5]न च षष्ठ्यामथाष्टम्यां पञ्चदश्यां न पर्वणि ।
प्रतिपत्सु न कर्तव्यो न विष्टिकरणे तथा ॥

अत्र षष्ठीनिषेधः प्रदोषयुक्तषष्ठीविषयः, 'षष्ठी च द्वादशी चैव अर्धरात्रोननाडिका । प्रदोषे न त्वधीयीत तृतीया नवनाडिका ॥' इति मुहूर्ततत्त्ववाक्यात् । प्रतिपन्निषेधस्तु शुक्लप्रतिपद्विषय इति न विरोधः ।

संप्र. ३६१–३६२

[6]रिक्तासु च न कर्तव्यस्त्र्यहःस्पृग्दिवसे तथा ॥

(१) **ज्योनि.** १२२–१२३.

(२) **मपा.** १८ ; **गभा.** २०२ दर्पं ( दर्थ ) मदनपारिजाते ; **संसौ.** १११ दशमी ( द्वादशी ) दर्प (दर्थ), श्लोकार्धे व्यत्यासेन पठिते.

(३) **मपा.** १८ ; **गभा.** २०२ मदनपारिजाते ; **संसौ.** १११ नाशकृत् ( नाशनम् ). (४) **मपा.** १८.

(५) **मपा.** १८ ; **संप्र.** ३६१ नृसिंहप्रसादे.

(६) **मपा.** १८.

## नृसिंहः

प्रशस्ता मध्यमा निषिद्धाश्च तिथयः

'तृतीया पञ्चमी षष्ठी द्वितीया चापि सप्तमी ।
पक्षयोरुभयोश्चैव विशेषेण सुपूजिताः ॥

'धर्मकामौ सिते पक्षे कृष्णे च प्रथमा तथा ।
कृष्णे त्रयोदशीं केचिदिच्छन्ति मुनयस्तथा ॥
'द्वादश्येकादशी चैव मध्यमे च प्रचक्षते ॥

(१) धर्मः दशमी । कामः त्रयोदशी । ते उभे शुक्ले कृष्णे चेत्यन्वयः । प्रथमा प्रतिपत् । साऽपि कृष्णे पक्षे चन्द्रबले सति ग्राह्या । तथा च बृहस्पतिः— 'कृष्णे च प्रथमा पूज्या कदाचिच्छुभगे विधौ ।' इति । यत्तु मदनरत्नेन 'प्रथमाः' इति बहुवचनान्तं पाठं कल्पयित्वा प्रथमाः आद्याः पञ्चम्यन्ता इति व्याख्यातम्, तदसत्, पूर्ववाक्ये कृष्णपक्षीयषष्ठीसप्तम्यादीनामपि ग्रहणेन परिसंख्यासंभवात्, 'द्वादश्येकाशी चैव मध्यमा चोपनायने । प्रशस्ता प्रतिपत् कृष्णे कदाचिच्छुभगे विधौ ॥ चन्द्रे बलयुते लग्ने वर्षाणामतिलङ्घने । शेषेषु वर्जयेद्विद्वान् द्विजानामुपनायनम् ॥' इति व्यासवाक्ये 'कृष्णे च प्रतिपद्दिनं शुभकरम्' इति पूर्वोक्तबृहस्पतिवाक्ये च साक्षात्प्रतिपच्छब्दोपादानाच्च । ‡ संप्र. ३६०

(२) 'मध्यमे च' इत्यत्र पक्षद्वये इति बोध्यम् । यस्तु 'प्रथमा तथा' इति प्रतिपद्विधिः स कृतप्रायश्चित्तव्रात्योपनयनविषयः, 'प्रशस्ता प्रतिपत्कृष्णे कदाचिच्छुभगे विधौ । चन्द्रे बलयुते लग्ने वर्षाणामतिलङ्घने ॥' इति व्यासोक्तेः । एवं 'चन्द्रे बलयुते लग्नाच्छुभभावे शुभेक्षिते । चतुर्दशीं प्रशंसन्ति कुमारे वयसाऽधिके ॥' इति चतुर्दशीविधिरपि । अतिलङ्घनाधिकशब्दाभ्यां गौणकालातिक्रमस्य विवक्षितत्वात् । संकौ. १२०–१२१

(३) कृष्णे चेत्यत्र चकारः सिते पक्ष इत्यस्यानुकर्षणार्थः । तेन शुक्लप्रतिपदोऽपि ग्रहणम् । केचिदाचार्याः कृष्णपक्षान्तर्वर्तिनीं त्रयोदशीमप्युपनयने स्वीकुर्वन्ति । ‡ संर. १७२

'द्विजानां व्रतबन्धस्तु स्वाध्यायेषु प्रशस्यते ।
रिक्ताविष्टिविवर्ज्येषु महानाम्निकमेव च ॥

## भुजबलः

वर्ज्यतिथयः

'चैत्रकृष्णद्वितीयायां तिसृष्वेवाष्टकासु च ।
मार्गे च फाल्गुने चैव आषाढे कार्तिके तथा ।
पक्षयोर्माघमासस्य द्वितीयां परिवर्जयेत् ॥

उपनयने उत्तरायणशुक्लपक्षयोर्विधानात् कार्तिकादौ कृष्णपक्षे च द्वितीयाया निषेधः 'पुनः संस्कारमर्हति' इत्युक्तप्रायश्चित्तरूपोपनयनपरः वैश्योपनयनपरश्च । संत. ९२९

## मुहूर्ततत्त्वे

गलग्रहाः षष्ठी च वर्ज्याः

'प्रतिपत्पूर्वचतुष्कं नवमीपूर्वत्रयं चतुर्थी च ।
अष्टौ गलग्रहास्त्याज्या गर्गस्य मते तथा षष्ठी ॥

---

‡ संग. संप्रगतम् ।

(१) प्रपा. २१५ सुपू (तु पू); संप्र. ३५९; चम. १४–१५ चापि (वाऽपि) ण सुपू (णैव पू); सिन्धु. ९३२; विपा. ४७३ जिताः (जिता); ज्योनि. १२२; संकौ. १२० पक्षयोरुभ (उभयोः पक्ष); बाल. १।१४ पृ. ४६ चमवत्; संग. ६४६ चापि (वाऽपि); संर. १७२ संगवत्.

(२) प्रपा. २१५–२१६ कृष्णे त्र (कृष्णत्र); संप्र. ३६०; चम. १५ उत्त.; सिन्धु. ९३२ कृष्णे त्र (शुक्लत्र); विपा. ४७३ मुनयस्तथा (मुनिसत्तमाः) शेषं सिन्धुवत्; ज्योनि. १२२ प्रपावत्; संकौ. १२०; बाल. १।१४ पृ. ४६ उत्त.; संग. ६४६; संर. १७२.

(३) प्रपा. २१६ च (तु); संप्र. ३६०; ज्योनि. १२२; संकौ. १२०; संर. १७२.

‡ शेषं संप्रगतं संकौगतं च ।

(१) चम. ६४.

(२) संत. ९२८; कृम. ९३३ (=) चैत्रकृ (चैत्रे कृ) तृतीयार्धं नास्ति.

(३) संप्र. ३६२; संकौ. १२१; संर. १७४ प्रतिपत्पूर्वं (त्रयोदश्यादि) नवमीपूर्वं (सप्तम्यादि).

अत्राप्यपवादः षष्ठीसप्तमीत्रयोदशीनां विनियोगोपन्यासेन दर्शितः। अयं गलग्रहापवादश्च मूकाद्युपनयनविषय इति केचित्। ‡ संकौ. १२१

## मुहूर्तचिन्तामणिः

शुक्ले कृष्णे च ग्राह्यतिथयः

[१]द्विश्रीषुरुद्ररविदिक्प्रमिते तिथौ च
कृष्णादिमत्रिलवकेऽपि न चापराह्णे ॥

द्वितीयातृतीयापञ्चम्येकादशीद्वादशीदशमी–संज्ञितासु तिथिषु च व्रतं सत्स्यात्। कृष्णादिमेति। विहितमासानां कृष्णपक्षस्याऽऽदिमे त्रिके पञ्चमीपर्यन्तं सत्स्यात्। न चेति। त्रिधा विभक्तस्य दिवसस्य त्रयो भागाः क्रमेण पूर्वाह्णमध्याह्नापराह्णसंज्ञका भवन्ति। तत्रापराह्णभागे च व्रतं न स्यात्। पीटी.

## व्यवहारोच्चये

अनध्यायगलग्रहयोरनिष्टे फले

[२]अनध्याये तिथौ दुःखी दुराचारोऽतिदुर्मतिः।
गलग्रहे व्रती बालः स्वल्पायुरुपजायते ॥

‡ संर. संकौवत्।

(१) मुचि. ५।४०; संब. ९५.

(२) संसौ. १२१.

## ज्योतिष्फलोदये

सोपपदातिथिनिषेधः

[१]ज्येष्ठे द्वितीया सितजाऽऽश्विने तु
दशम्यथो माघसिता चतुर्थी।
सद्वादशी सामगबह्वृचाभ्यां
त्याज्यास्त्विमाः सोपपदा व्रतादौ ॥

## मुहूर्तगणपतौ

ग्राह्यतिथयः, अनध्याया गलग्रहाश्च वर्ज्याः

[२]द्वित्र्येकादशदिक्पञ्चद्वादशप्रमिते तिथौ।
शुक्लपक्षे तथा कृष्णे पञ्चमीद्वित्रिके शुभम् ॥
संक्रान्तियुगमन्वादिद्वितीयाज्येष्ठशुक्लगाः।
चैत्रकृष्णतृतीया च द्वादशी माघशुक्लजा ॥
प्रतिपक्षेऽष्टमी चैव चतुर्दश्या दिनत्रयम्।
अनध्याया इमे वर्ज्याः स्वाध्यायव्रतबन्धयोः ॥
सप्तम्याश्चितयं चैव त्रयोदश्याश्चतुष्टये।
चतुर्थी व्रतबन्धादावष्टौ वर्ज्या गलग्रहाः ॥

(१) चम. १५; बाल. ११४ पृ. ४६ चतुर्थी (चतुर्दशी).

(२) संच. १०४–१०५.

# वाराः

—०—

## वसिष्ठः

प्रशस्ता मध्यमाश्च वाराः

[1]शस्ताः सितेज्येन्दुजवासरास्ते
रवीन्दुवारौ खलु मध्यमौ तौ ॥

## नारदः

प्रशस्तमध्यमाधमाः वर्ज्याश्च वाराः

[2]आचार्यसौम्यकाव्यानां वाराः शस्ताः शशीनयोः ।
वारौ तौ मध्यफलदावितरौ निन्दितौ व्रते ॥

इनः सूर्यः । संप्र. ३६४

[3]गुरुशुक्रबुधानां तु वाराः श्रेष्ठतमाः स्मृताः ।
अधमः सोमवारस्तु सूर्यवारस्तु मध्यमः ॥

[4]वारौ मन्दारयोर्वर्ज्यौ कृष्णे वर्ज्यो निशापतेः ।
अस्तंगतस्य सौम्यस्य वारो वर्ज्यो द्विजन्मनि ॥

( १ ) द्विजन्मनि उपनयने । † प्रपा. २१६

( २ ) आरः भौमः । § संप्र. ३६४

( ३ ) मन्दः शनिः । ¶ विपा. ४७६

( ४ ) निशापतिः चन्द्रः । सौम्यः बुधः । * संर. १७५

---

† संग. प्रपावत् ।

§ शेषं प्रपावत् ।

¶ शेषं प्रपावत् संप्रवच्च ।

(१) वसं. २९।३६ ; संसौ. ११२.

(२) ज्योना. २४।१३ ; संसौ. १२५ सौम्यकाव्यानां ( काव्यसौम्यानां ) उत्तरार्धे ( वारौ मध्यफलौ प्रोक्तौ निन्दिताावितरौ व्रते ॥ ) ; संप्र. ३६४ संसौवत् , बृहन्नारदः ; ज्योनि. १२३ ; संव. ९६.

(३) प्रपा. २१६ अधमः (मध्यमः) रस्तु म ( रश्च म ) ; संप्र. ३६३ ; विपा. ४७६ माः स्मृताः । अधमः (मा व्रते । मध्यमः) ; संको. १२१ ; संग. ६५० ; संर. १७५.

(४) प्रपा. २१६ ; संप्र. ३६४ ; विपा. ४७६ ; ज्योनि. १२३ ; संको. १२१ ; संग. ६५० ; संर. १७५ जन्मनि ( जन्मनाम् ).

[1]सर्वेषां जीवशुक्रज्ञवाराः प्रोक्ता व्रते शुभाः ।
चन्द्रार्कौ मध्यमौ ज्ञेयौ सामबाहुजयोः कुजः ॥

सर्वेषां ब्राह्मणादीनाम् । जीवः बृहस्पतिः । ज्ञः बुधः । बाहुजः क्षत्रियः । संर. १७५

## बृहस्पतिः

शुभाशुभवाराः , वेदभेदेन वारभेदाः

[2]पापग्रहाणां वाराः स्युर्न शुभाश्चन्द्रवासरः ।
सिते पक्षे प्रशस्तः स्यात्कृष्णे वारो विधोर्नहि ।
शुभो बुधो नास्तमितः पापग्रहयुतो न च ॥

[3]बह्वृचानां गुरोर्वारो यजुर्वेदजुषां कवेः ।
सामगानां धरासूनोरथर्वविदुषां रवेः ॥

शाखाधिपवारानाह बृहस्पतिः— ' बह्वृचानां ...॥ ' इति । अमुनैव वाक्येन बह्वृचशाखाधिपो गुरुरिति ध्वन्यते । संको. १२१

[4]विकुजार्किदिनं शस्तं सामगानां कुजः शुभः ॥

कुजः भौमः । आर्किः शनैश्चरः । तदुभयातिरिक्तं दिनमुपनयने शस्तम् । तस्यापवादः ' सामगानां कुजः शुभः ' इति । यदा तु स्वशाखाधिपतिवारो न लभ्यते तदा शाखान्तराधिपवारोऽपि ग्राह्यः , सामान्यविधि-

---

* शेषं संप्रवत् विपावच्च ।

(१) सिन्धु. ९४० ; विपा. ४७६ ज्योतिर्निबन्धे ; संर. १७५.

(२) संप्र. ३६४ ; संग. ६५० शुमा (शुभ) ; पुम. ४३९.

(३) प्रपा. २१६ सूनो ( सूनु ) रवेः ( रविः ) ; संप्र. ३६५ ; सिन्धु. ९४१ वारो ( वारे ) कवेः (बुधे) ; विपा. ४७७ सिन्धुवत् ; संको. १२१ ; संग. ६५१ सिन्धुवत् .

(४) संसौ. १२६ दिनं ( दिने ) ; संप्र. ३६६.

बलात् । विशेषविधिस्तु प्राशस्त्यार्थः, न परिसंख्यार्थः, सामान्यविध्यानर्थक्यादिति । संप्र. ३६६

## वराहमिहिरः

वेदभेदेन वारभेदः

[1]गुरोः कवेर्लोहितस्य मिहिरस्य च वासराः ।
ऋग्यजुःसामाथर्वणां शस्ताः स्युर्व्रतबन्धने ॥

लोहितः अङ्गारकः । मिहिरः सूर्यः ।

§ प्रपा. २१६

## सुरेश्वरः

प्रशस्ता वाराः

[2]वारेषु शुक्रार्कबृहस्पतीनां
हितानुबन्धी द्विजमौञ्जिबन्धः ॥

## राजमार्तण्डः

वारफलानि

[3]मेधा भानुदिने जडः शिशिरगौ
चन्द्रात्मजे बोधवान्
पश्चत्वं कुजमन्दयोर्भृगुसुते
वाग्मी बलीयाञ्छुचिः ।
षट्कर्माभिरतः सुखी सुरगुरौ
विद्वांश्चिरायुर्भवेद्
धिष्ण्ये पापनिपीडितेऽथ हिमगौ
मूढो गतायुर्भवेत् ॥

सामगानां तु भौमवासरोऽपि प्रशस्तः । तदुक्तं नारदेन– 'शाखाधिपतिवारश्च शाखाधिपबलं शिशोः । शाखाधिपतिलग्नं च त्रितयं दुर्लभं व्रते ॥ '। तथा– ' विकुजार्किदिने शस्तं सामगानां कुजः शुभः । ' इति च गुरुवचनम् । यत्र तु स्वशाखाधिपतिवारो न लभ्यते, स्वशाखानक्षत्राणि वा न लभ्यन्ते, तत्र शाखान्तरोक्तवारादिषु व्रतं शुभमेवेति केवलं शनिवारस्यैव निषेधः, अन्ये तु यथास्वं प्रशस्ताः । ‡ संसौ. १२६

## मुहूर्तचिन्तामणिः

शुभा वाराः

... [1]अर्कविद्गुरुसितेन्दुदिने व्रतं सत् ॥

सूर्यबुधगुरुशुक्रचन्द्रदिवसेषु व्रतं सत् स्यात् । अर्थान्द्भौमशनी निषिद्धौ । जगन्मोहने गुरुः– 'पापग्रहाणां वाराः स्युर्न शुभाश्चन्द्रवासरः । सिते पक्षे प्रशस्तः स्यात्कृष्णे वारो विधोर्नहि । शुभो बुधो नास्तमितः पापग्रहयुतोऽपि वा ॥ ' इति रविवारं निषेधति स्म । अत्र सूर्यस्य प्राबल्यदौर्बल्ययोर्व्रतबन्धस्य विधिनिषेधाविति विषयविवेकः । पीटी.

## मुहूर्तगणपतौ

वेदभेदेन वारभेदः

[2]ऋग्वेदाध्यायिनां जीवे प्रशस्तं व्रतबन्धनम् ॥
...... भार्गवे यजुषां व्रतम् ॥
..... भूमिसुते श्रेष्ठं सामगानां व्रतं तथा ॥
......... बुधे शस्तमथर्वणाम् ॥

## रेणुकारिका:

प्रशस्ता वाराः

[3]विकुजार्किदिने शस्तं सामगानां कुजस्य तु ॥

---

§ संप्र., संग. प्रपावत् ।

(१) प्रपा. २१६ ; संप्र. ३६५ थर्वणां (थर्विणां) ; मुक्ता. ८८ मिहिरस्य (अङ्गिरस्य) सायणीये ; संग. ६५१.

(२) मपा. १८ मौञ्जि (मुञ्ज) ; गभा. २०१ मदनपारिजाते ; संसौ. १२८ भुजबलः .

(३) संसौ. १२५–१२६ ; संप्र. ३६५.

‡ संप्र. संसौगतम् ।

(१) मुचि. ५।४० ; बाल. १।१४ पृ. ६६ (=) ; संव. ९५.

(२) संव. १०४.

(३) रेका. १६ पृ. २१.

# नक्षत्राणि

## आश्वलायनगृह्यसूत्रम्

कल्याणनक्षत्रविधिः

[1]**कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः ॥**

कल्याणे नक्षत्रे । कल्याणमिति प्रशस्तम् । शास्त्राविरुद्धमित्यर्थः । तस्मिन् कल्याणे नक्षत्रे । ¶ देमा.

## हिरण्यकेशिगृह्यसूत्रम्

पुण्य–पुंनामकनक्षत्रविधिः

[2]**पुण्ये नक्षत्रे विशेषेण पुंनामधेये ॥**

पुण्ये शुभे नक्षत्रे विशेषेण पुंनामधेये पुंशब्देनाभिधेये उपनयेत् ब्राह्मणादीन् । ऋतुभिरस्य विधेः समुच्चयसंभवात् विशेषेणेति वचनात् पुंनामधेये विशिष्टमुपनयनम् , अन्यस्मिन्नपि पुण्ये, न गर्हिते । अश्वयुक्पुनर्वसू तिष्यो हस्तः शतभिषक्प्रोष्ठपदा इति पुंनामधेयानि ।

† मातृद.

## भारद्वाजगृह्यसूत्रम्

पुण्य–पुंनामकनक्षत्रविधिः

[3]**पुण्ये नक्षत्रे विशेषेण पुंनामधेये ॥**

## आग्निवेश्यगृह्यसूत्रम्

पुण्य–पुंनामकनक्षत्रविधिः

[4]**पुण्ये नक्षत्रे विशेषेण पुंनामधेये ॥**

¶ गानावृ., अना. देमावत् ।

† संर. मातृदवत् ।

(१) आगृ. १।४।१. शेषस्थलादिनिर्देशाः ‘ विवाहमुहूर्तः– नक्षत्रविचारः ’ इत्यस्मिन् प्रकरणे ( सं. का. पृ. ८९६ ) द्रष्टव्याः .

(२) हिगृ. १९।१।५ ; संर. १६६.

(३) भागृ. १।१.

(४) आग्निगृ. १।१।१.

## वैखानसगृह्यसूत्रम्

पुंनामकनक्षत्रविधिः

[1]**प्रोष्ठपदाहस्तावश्विन्यनूराधा पूर्वोत्तरपुनर्वसू मृगशिरो वा यावन्ति पुंनामानि नक्षत्राणि तत्र ...... ॥**

## वसिष्ठः

ग्राह्यनक्षत्राणि, शुभांशावच्छेदेन ग्राह्यनक्षत्राणि, वर्ज्यनक्षत्राणि

[2]**हस्तत्रये च श्रवणत्रये च**
**धातृद्वये त्र्युत्तरमैत्रमेषु ।**
**पौष्णद्वये चादितिभद्वये च**
**शस्तं द्विजानां खलु मौञ्जिकर्म ॥**

[3]**उत्तरासु तिसृषूपनायनं**
**हस्तमैत्रमृगरोहिणीष्वपि ।**
**त्वाष्ट्रपूषभपुनर्वसुष्वपि**
**श्रेष्ठमप्यशुभभागगे विधौ ॥**

उत्तरादिदशनक्षत्रेषु चन्द्रे दुष्टांशस्थितेऽपि दोषो नास्तीत्याह वसिष्ठः– ‘ उत्तरादि ... ॥ ’ इति ।

प्रपा. २१६

[4]**दस्रपुष्यवसुवारुणानिल-**
**श्रोत्रमेष्वपि च यद्व्रतं विधौ ।**
**शोभनांशकगते शुभावहं**
**मध्यमानि षडिमानि भानि तु ॥**

(१) वैगृ. २।५.

(२) वसं. २९।३७ ; बाल. १।१४ पृ. ६१, ६३, ६७ : पृ. ६२ (=) : पृ. ६६, ६९ निर्देशमात्रम् .

(३) प्रपा. २१६ रासु ति (रादिति) णीष्वपि (णीषु च) पूषभ ( वासव ) भागगे ( भागमे ) ; संसौ. १२७ ; संप्र. ३६६ ; बाल. १।१४ पृ. ६२, ६३, ७० : पृ. ६५ निर्देशमात्रम् .

(४) संसौ. १२७ षडिमानि ( कथितानि ) ; संप्र. ३६७ संसौवत् ; बाल. १।१४ पृ. ६२, ६३ च यद्व्रतं ( वटोर्व्रतं ).

[१]उक्तेष्वेतेषु ऋक्षेषु शुभांशेषूपनायनम् ।
कुर्वीत शुभकामस्तु नैव क्रूरांशकेषु तु ॥
[२]सप्तपञ्चमचन्द्राष्टसप्तविंशतिमेषु च ।
वैनाशिके त्रिजन्मर्क्षे नेष्टं तेषूपनायनम् ॥

## नारदः

ग्राह्यवर्ज्यनक्षत्राणि, जन्मनक्षत्रविधिः

[१]श्रेष्ठान्यर्कत्रयान्त्येज्यचन्द्रादित्युत्तराणि च ।
विष्णुत्रयाश्विमित्राब्जयोनिभान्युपनायने ॥

(१) अर्कत्रयं हस्तचित्रास्वातयः । अन्त्यं रेवती । इज्यः पुष्यः । चन्द्रः मृगशीर्षम् । अदितिः पुनर्वसुः । विष्णुत्रयं श्रवणधनिष्ठाशततारकाः । अब्जयोनिभं रोहिणी । संप्र. ३६६

(२) अश्विनाश्विनी । मित्रः अनूराधाः ।
‡ संर. १७७

[४]जन्मभाद्दशमं कर्म संघातर्क्षं च षोडशम् ।
अष्टादशं सामुदायं त्रयोविंशं विनाशनम् ।
मानसं पञ्चविंशर्क्षं नाऽऽचरेच्छुभमेषु तु ॥

‡ शेषं. संप्रवत् ।

(१) संप्र. ३७० शकेषु ( शकेन ) ; बाल. १।१४ पृ. ६२.

(२) प्रपा. २१५ ; संग. ६५३ जन्मर्क्षे ( जन्मर्क्ष ) उत्त. , बृहस्पतिः .

(३) ज्योना. २४।१०–११ चन्द्रा ( रुद्रा ) त्रयाश्वि (त्रयाश्व) ; संसौ. १२६ ; संप्र. ३६६ ; सिन्धु. ९३९ ; विपा. ४७७ ; ज्योनि. १२३ ; बाल. १।१४ पृ. ६१, ६२, ६३, : पृ. ६५, ६६ निर्देशमात्रम् : पृ. ६७ राणि च ( रास्तथा ) ; संग. ६५१ ; पुम. ४३९ ; संर. १७७.

(४) ज्योना. २४।११–१२ र्क्षं च ( र्क्षे च ) दायं ( दाये ) विंशर्क्षं ( विंशर्क्षे ) षु तु ( व यत् ) ; संप्र. ३७० ; ज्योनि. १२३–१२४ नाशनम् ( नाशमम् ) ; पुम. ४३९ ज्योनिवत् .

‡[१]पट्टबन्धनचौलान्नप्राशने चोपनायने ।
शुभदं जन्मनक्षत्रमशुभं त्वन्यकर्मणि ॥

## बृहस्पतिः

उत्तममध्यमवर्ज्यनक्षत्राणि

[१]त्रिषूत्तरेषु रोहिण्यां हस्ते मैत्रे च वासवे ।
त्वाष्ट्रे सौम्यपुनर्वस्वोरुत्तमं ह्यौपनायनम् ॥
[२]वारुणे वैष्णवे पुष्ये वायव्ये पौष्णमे तथा ।
अश्विन्यां षट्सु मेषूक्तं मध्यमं व्रतबन्धनम् ।
शेषेषु वर्जयेद्विद्वान् द्विजानामुपनायनम् ॥

(१) मैत्रम् अनूराधा । वासवं धनिष्ठा । त्वाष्ट्रं चित्रा । सौम्यं मृगशिरः । वारुणं शतभिषक् । वैष्णवं श्रवणः । वायव्यं स्वाती । प्रोष्ठपदा उत्तराभाद्रपदा । पौष्णं रेवती । † प्रपा. २१६

‡ अस्य व्याख्यानसंग्रहः 'अन्नप्राशनमुहूर्तः' इत्यस्मिन् प्रकरणे ( सं. का. पृ. २८६१ ) द्रष्टव्यः ।

† संप्र. , संग. , संर. प्रपागतानि ।

(१) ज्योना. २२।४ . शेषस्थलादिनिर्देशः 'अन्नप्राशनमुहूर्तः' इत्यस्मिन् प्रकरणे ( सं. का. पृ. २८६१) द्रष्टव्याः .

(२) प्रपा. २१६ स्वोरुत्तमं ( स्वोः प्रशस्तं ) ; संसौ. १२६ सौम्यपु (सौम्ये पु) ; संप्र. ३६६ प्रपावत् ; सिन्धु. ९३९ ह्यौप ( ह्युप ) ; विपा. ४७७ सिन्धुवत् ; बाल. १।१४ पृ. ६१, ६२, ६३ संसौवत् : पृ. ६५, ६६ निर्देशमात्रम् : पृ. ६८ संसौवत् प्रपावत् च; संग. ६५१ प्रपावत् ; पुम. ४३९ संसौवत् , राजमार्तण्डः ; संर. १७७ सिन्धुवत् .

(३) प्रपा. २१६ पौष्णमे तथा ( प्रोष्ठपद्यपि ) व्रतबन्धनम् ( चैव पौष्णभे ) तृतीयार्धं नास्ति, क्रमेण बृहस्पतिः ; संसौ. १२७ बन्धनम् ( बन्धने ) ; संप्र. ३६६–३६७ अश्विन्यां ( अश्विभे ) ; बाल. १।१४ पृ. ६१, ६२, ६३ मं व्रतबन्धनम् ( मत्वं चतुर्मुखैः ) मुपना ( मौपना ) : पृ. ६५, ६६ निर्देशमात्रम् : पृ. ६८ पौष्णमे तथा । अश्विन्यां ( प्रौष्ठपद्यपि । आश्विने ) व्रतबन्धनम् ( चैव पौष्णभे ) तृतीयार्धं नास्ति ; पुम. ४३९ नामुप ( तेरौप ) राजमार्तण्डः .

(२) अथ पुनर्वसूपनयनसंशयनिरासार्थं व्रतबन्धे नक्षत्रनिर्णयः क्रियते । तत्र तावज्ज्योतिर्विदामभिमतमुच्यते । तथाहि– "अथोपनयने नक्षत्रनिर्णयमाह गुरुः– 'त्रिषूत्तरेषु रोहिण्यां हस्ते मैत्रे च वासवे । त्वाष्ट्रे सौम्ये पुनर्वस्वोरुत्तमं ह्योपनायनम् ॥ वारुणे वैष्णवे पुष्ये वायव्ये पौष्णमे तथा । अश्विन्यां षट्सु मेषूक्तं मध्यमत्वं चतुर्मुखैः । शेषेषु वर्जयेद्विद्वान्द्विजाना-मौपनायनम् ॥' इति । वसिष्ठोऽपि– 'हस्तत्रये च श्रवणत्रये च धातृद्वये त्र्युत्तरमैत्रमेषु । पौष्णद्वये चादिति-भद्वये च शस्तं द्विजानां खलु मौञ्जिकर्म ॥' इति । कश्यपोऽपि– 'मैत्रे विष्णुत्रये हस्तत्रयर्क्षेषूत्तरात्रये । धातृद्वयादितीज्यान्त्यदस्रर्क्षेषूपनायनम् ॥' इति । एवं बृहस्पत्यादिसंहितावाक्येषु त्रैवर्णिकानां पुनर्वस्वोरुपनयनमुक्तम् । ब्राह्मणोपनयने पुनर्वसुनिषेधकं राजमार्तण्डे क्वचित् दृश्यमानम् 'चन्द्रतारानुकूल्येऽपि ग्रहाब्देषु शुभेष्वपि । पुनर्वसौ कृतो विप्रः पुनःसंस्कार-मर्हति ॥' इति वचनं बहुवृषिवचनविरोधादुपनयनविषये हेमाद्रिमदनरत्नादिप्राचीननिबन्धकारैर्नवीनैश्च प्रतापमार्तण्डमुहूर्तचिन्तामणिप्रभृतिमी राजमार्तण्डीयवचनानि लिखद्भिरप्यलिखनाच्च निर्मूलं केनचित् क्षिप्तमिति गम्यते, 'माघषट्के सितारेज्यबुधे पौष्णश्रुतिद्वये । हस्तत्रये धातृषट्सु ब्राह्मणस्योपनायनम् ॥' इति तद्वचनविरुद्धार्थोक्तेश्च । तेनानिषिद्धं पुनर्वस्वोरुपनयनमन्यनक्षत्रवद्भवत्येव । समूलं मत्वा निषेधं परिपालयन्तो ब्राह्मणानां पुनर्वस्वोरुपनयनं नेति ये वदन्ति तत्तेषामज्ञानविलसितम्" इति मुनीश्वरज्योतिर्वित्प्रभृतय आहुः । यजुःशाखिनः श्रीधरदीक्षिता अप्येवम् ।

"अथ व्रतबन्धे नक्षत्राण्याह वसिष्ठः– 'हस्तत्रये ...... मौञ्जिकर्म ॥' । कश्यपोऽपि– 'मैत्रे विष्णु- ...... पनायनम् ॥' । निर्णयसिन्धौ नारदः– 'श्रेष्ठान्यर्कत्रयान्त्येज्यचन्द्रादित्युत्तराणि च । विष्णुत्रयाश्विमित्राब्जयोनिभान्युपनायने ॥' । तत्रैव बृहस्पतिः– 'त्रिषूत्तरे...... नायनम् ॥' । पुनर्वसुनिषेधमाह राजमार्तण्डः– 'चन्द्रतारा...... मर्हति ॥' । अस्य मानुषत्वात् आर्षैः कश्यपवसिष्ठनारदबृहस्पतिप्रमुखसंहितादिभिर्विरोधाद्दुर्बलत्वम् । यतः आर्षानार्षविरोधे आर्षं बलवत् । अथ यथाकथंचित् गतिश्चिन्तनीयेति चेत्तर्हि देशाचारतो व्यवस्था । इमं निषेधं प्राच्या एव आद्रियन्ते, न तु दाक्षिणात्याः । ते तु आर्षवचनबलात् पुनर्वस्वोरुपनयनं कारयन्ति । यतः– 'श्रुतिस्मृतिविरोधे तु श्रुतिरेव बलीयसी । श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ ॥ स्मृतिद्वैधे तु विषयः कल्पनीयः पृथक् पृथक् ॥' इति न्यायादित्यलं विस्तरेण" इति तत्र ब्राह्मणादीनां व्रतबन्धो भवतीति पार्थपुरनिवासिकृष्णज्योतिर्वित्संमत्या हरिहरज्योतिर्वित्संमत्या च रामज्योतिर्वित्पौत्रदिवाकरज्योतिर्वित्प्रभृतय आहुः ।

"अथोपनयने नक्षत्रादि विचार्यते– 'हस्तत्रये... मौञ्जिकर्म ॥' । जगन्मोहनसंज्ञकज्योतिर्निबन्धे गुरुः– 'त्रिषूत्तरे...... मौपनायनम् ॥' । तत्रैव नारदः– 'श्रेष्ठान्यर्क...... नायने ॥' । तत्रैव वसिष्ठः– 'उत्तरासु तिसृषूपनायनं हस्तमैत्रमृगरोहिणीष्वपि । त्वाष्ट्रपूषभपुनर्वसुष्वपि श्रेष्ठमप्यशुभभागगे विधौ ॥ दस्रपुष्यवसुवारुणानिलश्रोत्रमेष्वपि बटोर्व्रतं विधौ । शोभनांशकगते शुभावहं मध्यमानि षडिमानि भानि तु ॥ उक्तेष्वेतेषु ऋक्षेषु शुभांशेषूपनायनम् । कुर्वीत शुभकामस्तु नैव क्रूरांशकेषु तु ॥' इति । जगन्मोहनादौ राजमार्तण्डवचनान्यन्यान्यपि लिखितानि, परं तु पुनर्वसुनिषेधकं वचनं न लिखितम् । कल्याणकल्पद्रुमाख्यज्योतिर्निबन्धे तु वेदपरत्वेन नक्षत्राणां विशेषोऽभिहितः– ज्योतिःसागरे– 'मूले हस्तत्रये सार्पे शैवे पूर्वात्रये श्रुतौ । ऋग्वेदाध्यायिनां कार्यं मेखलाबन्धनं बुधैः ॥ पुष्ये पुनर्वसौ पौष्णे हस्ते मैत्रे शशाङ्कभे । ध्रुवमेषु च शस्तं स्याद्यजुषां व्रतबन्धनम् ॥ पुष्यवासवहस्ताश्विशिवकर्णोत्तरात्रयम् । प्रशस्तं मेखलाबन्धे बटूनां सामगायिनाम् ॥ मृगमैत्राश्विनीहस्तत्रितयादितिवासवाः । अथर्वशाखिनां शस्तो भगणोऽयं व्रतार्पणे ॥' । अन्यत्रापि बहूनि वचनानि मौञ्जीबन्धे पूर्वार्थकान्येवोक्तानि । पुनर्वसुनिषेधकं वचनं राजमार्तण्डीयत्वेन केनचिल्लिखितम्– 'चन्द्रतारा......

मर्हति ॥ ' इति । इदं वचनं हेमाद्रिमदनरत्नादिप्राचीननिबन्धकारैरुपनयनविषये राजमार्तण्डीयवचनान्यन्यानि लिखद्भिरपि न लिखितम्, नवीनैरपि मुहूर्तचिन्तामणिप्रतापमार्तण्डादिभिर्न लिखितम्, अतो निर्मूलम् । समूलत्वे तु वेदपरत्वेनोक्तवचनेषु ऋग्वेदिनां पुनर्वस्वोरनुक्तत्वादृग्वेदिब्राह्मणविषयम् । मुहूर्तमालायामपीत्थमेव व्यवस्थापितम् " इत्यन्ये ज्योतिर्विद आहुः ।

" अथोपनयने नक्षत्रनिर्णयः । तत्र तावत् वसिष्ठः– ' हस्तत्रये...... मौञ्जिकर्म ॥ ' ' उत्तरासु तिसृषु...... भानि तु ॥ ' इति । कश्यपोऽपि– ' मैत्रे विष्णु...... नायनम् ॥ ' । गुरुरपि– ' त्रिषूत्तरे...... मौपनायनम् ॥ ' । तान्येवाह– ' कृत्तिकाभरणीमूलज्येष्ठार्द्रासु विशाखयोः । पूर्वात्रये च सार्पर्क्षे न कुर्यादौपनायनम् ॥ ' इति । चकारान्मघायाम् । नारदोऽपि– ' श्रेष्ठान्यर्क...... न्युपनायने ॥ ' इति । भृग्वादिप्रोक्तनक्षत्राणि तु कल्याणकल्पद्रुमाख्ये ज्योतिर्निबन्धे ज्योतिःसागरस्थत्वेनोदाहृतानि– ' मूले हस्त ...... व्रतार्पणे ॥ ' इति । मुहूर्तमालायामपि– ' माघषट्के ......नायनम् ॥ ' इति । पुनर्वसुसंग्राहकपौरुषाधुनिकनिबन्धवचनानि तु अनतिप्रयोजनकत्वान्नेह लिखितानि । अत्र च वासिष्ठादिवाक्येभ्यः प्रतीयमानेन गुरुवाक्यैकवाक्यतां भजता निषेधेन ब्राह्मणोपनयने स्पष्ट एव षोडशर्क्षनियमः । परं तु तत्रोत्तममध्यमत्वोक्तेस्तारतम्यमवधेयम् । यत्तु वासिष्ठादौ द्विजपदस्य त्रैवर्णिकसामान्यार्थत्वेन वासिष्ठादीनां प्राशस्त्यपरत्वमिति, तन्न, तथा सति गुरुवचनस्थनिषेधस्य त्रैवर्णिकपरत्वापत्त्या वेदपरवाक्योक्तावशिष्टपञ्चानां निर्विषयत्वस्य वैकल्पिकत्वस्य वा प्रसङ्गेन द्विजपदस्य ब्राह्मणार्थत्वावधारणात् । यत्तु ब्राह्मणोपनयने पुनर्वसुनिषेधकं वचनं राजमार्तण्डे– ' चन्द्रतारा...... मर्हति ॥ ' इति, अन्यत्रापि ' त्र्यहःस्पृशि मले मासि शूद्रत्वमधिगच्छति । पुनर्वसुकृतो विप्रः पुनः संस्कारमर्हति ॥ ' इति, तत्संहिताग्रन्थेष्वदर्शनात्पुनर्वसूपनयनाचारात्पूर्वोक्तमुहूर्तमालावचनविरोधाच्च मानुषत्वान्निर्मूलमेवेति सकलज्योतिर्विदः । अथ यथाकथंचिद्गतिश्चिन्तनीयेति चेत्तर्हि येषामुक्तवेदविशेषपरवाक्येषु पुनर्वस्वनभिधानं तत्परोऽयं निषेधः । ' नादितौ च ' इत्यादिदीपिकास्थनिषेधोऽपि तद्विषय एव । केचित्तु समूलत्वेऽपि नायं व्रतबन्धनिषेधः, अपि तु केनचिन्निमित्तेन पुनःसंस्कारप्रसक्तौ पुनर्वसाविति तदर्थः । न च ' विप्रः कृतः ' इत्यस्य पूर्वार्धस्य चानन्वयापत्तिः, चन्द्रताराद्यानुकूल्येऽपि संस्कृतो विप्रः पुनर्वसौ पुनः संस्कारमर्हतीति तदर्थात्, कष्टान्वयादेश्चादूषणत्वादित्याहुः । अन्ये तूक्तवचनस्य समूलत्वे पुनर्वसौ दाक्षिणात्यानामुपनयनाचारात् प्राच्यानां चानाचारात् देशाचारतो व्यवस्था, ' स्मृतिद्वैधे तु विषयः कल्पनीयः पृथक् पृथक् ' इति न्यायात्, ' देशाचारस्तावदादौ विचिन्त्यो देशे देशे या स्थितिः सैव कार्या । लोके दुष्टं पण्डिता वर्जयन्ति दैवज्ञोऽतो लोकमार्गेण यायात् ॥ ' इति वचनाच्चेत्याहुः । अपरे तु उक्तनिषेधस्य विप्रपरत्वे पूर्वोक्तदोषादविप्रपरत्वमाहुः । इत्थं च क्षत्रियविशोर्द्वाविंशतौ ब्राह्मणानां षोडशसु भेषु वेदपरवचनैर्यथायथमुपनयनम् । इदं च सर्वं वचनप्रामाण्ये, अन्यथा तु ' न चाऽऽशङ्का न चोत्तरम् ' इति दिक् " इत्यन्ये ज्योतिर्विद आहुः ।

" राजमार्तण्डकृतोपनयनप्रकरणे विप्रस्य पुनर्वसुनिषेध उक्तः– ' चन्द्रतारानुकूलेषु ' इति । तत्र केचिदेतद्वचनस्यान्यथाऽर्थं कुर्वन्ति– ' पुनःसंस्कारे प्राप्ते पुनर्वसुनक्षत्रं प्रशस्तम् ' इति । एवं चेत्पूर्वार्धमनन्वितं स्यादिति विप्रस्यैवायं निषेधः, नेतरेषामिति निर्णीतमन्यैः । तदयुक्तम्, यत आब्रह्मादिविनिःसृतग्रन्थविस्तरदृशां त्रिस्कन्धज्योतिःशास्त्रन्यायादिशास्त्रविदां श्रीवराहमिहिराचार्यादीनां हेमाद्र्यादिनिबन्धकाराणां च ग्रन्थेषु आर्षग्रन्थेष्वपि पुनर्वसुनिषेधो न दृश्यते । तथा च गुरुः– ' त्रिषूत्तरेषु ' इत्यादि ' द्विजातेरुपनायनम् ' इत्यन्तम् । वसिष्ठोऽपि– ' उत्तरासु...... भानि तु ॥ ' इति । नारदोऽपि– ' श्रेष्ठान्यर्क...... भान्युपनायने ॥ ' इति । अन्यान्यप्यार्षवाक्यानि विप्रादेरुपनयने बोध्यानि । तथा मानुषग्रन्थेष्वपि । तत्र तावत्सांवत्सराचार्यैः श्रीगणेशदैवज्ञैः स्वकृतग्रन्थे मुहूर्ततत्त्वाख्ये वेदशाखापरत्वेनोप-

नयने लिखितानि नक्षत्राणि— 'ऋग्वित्स्वाहीशपूर्वेविवरुणचरभक्षिप्रमैत्रैर्यजुर्विद् श्रौवाढयैस्तैर्विमित्राब्जजनिभिरपरोऽन्यस्तु तैर्ध्युत्तरैश्च । स्वालामेऽमीन्द्रराधाम्बुपयमपितृतोऽन्येषु सर्वे ...' इति। एवं चैतेषु सकलग्रन्थेषु तन्निषेधाभावात् पूर्वोक्ततद्वचनस्य मूलं मृग्यम्। न हि तदनुरोधेनानेकस्मृतिवाक्यानामपलापः कर्तुमुचितः। नापि क्षत्रियपरता तेषां सुवचा, 'ब्राह्मणस्योपनायनम्' इत्येवं वाक्यानामपि सत्त्वात्, ग्रन्थान्तरे चतुर्थचरणे तथा पाठस्यापि दर्शनाच्च। एवं सति तन्निषेधवाक्यं दत्तजलाञ्जलिरेव स्यात्। नन्वेवं दीपिकाकारेणान्यैरपि आधुनिकग्रन्थकारैः कथं तन्निषेधो लिखित इति चेन्न, तद्वचनविश्वासेनैवोपनयनप्रकरणे त्याज्यपदार्थेष्वदितेरपि प्रक्षेपस्यान्धपरंपरान्यायेन तैः करणात्। किंच, उपनयने पुनर्वसुऋक्षस्य फलाधिक्यमपि स्मर्यते। तथा च नारदः— 'शुभांशकगते चन्द्रे व्रती विद्याविशारदः। पापांशगे स्वांशगे वा दरिद्रो नित्यदुःखितः॥ श्रवणादितिनक्षत्रे कर्कोशस्थे निशाकरे। तदा व्रती वेदशास्त्रधनधान्यसमृद्धिमान्॥' इति। न च सकलवचनानुरोधेन 'ग्रहान्देष्वशुभेष्वपि' इति पाठान्तरं कल्प्यम्, तथा सति उपनयनसंस्कारानन्तरं पुनःसंस्कारं नामान्यसंस्कारं पुनर्यशादिरूपसंस्कारम् अर्हति लभते इत्यर्थं इति वाच्यम्, ज्योतिःशास्त्रे पाठान्तरकल्पनेनार्थान्तरकल्पनस्यान्याय्यत्वात्। तथा चोक्तं वराहमिहिराचार्यैः— 'ज्यौतिषमागमसिद्धं विप्रतिपत्तौ न योग्यमस्माकम्। स्वयमेव विकल्पयितुं किं तु बहूनां मतं वक्ष्ये॥' इति। तस्मात्प्राचीनपाठस्य यथाकथंचिद्गतिश्चिन्त्या, स्वयं नान्यथयितव्यम्। सा चेत्थम्— देशाचारतो व्यवस्थेति। अयमेव समीचीनः पन्थाः। तदयमत्र तात्पर्यार्थः— यैस्तन्निषेधवचनं परिपाल्यते प्राच्यैस्तैरेव स्वदेशे तदृक्षं तत्र त्याज्यम्, अन्यैस्तु वेदशास्त्रधनधान्यसमृद्धिमिच्छद्भिरवश्यमादरणीयमिति। तथा चोक्तं श्रीपतिदैवज्ञैः— 'शास्त्रस्वरूपं बहवोऽपि बुद्ध्वा वदन्ति यद्यानुमतं हितं नः। देशं गतोऽप्येकविलोचनानां निमील्य नेत्रं निवसेन्मनीषी॥' इत्यलम्" इति विठ्ठलज्योतिर्वित्प्रभृतय आहुः।

"अथोपनयने नक्षत्रनिर्णयः। तत्र 'मूले हस्तत्रये ......व्रतार्पणे॥' इति कल्याणकल्पद्रुमाख्यज्योतिर्निबन्धे ज्योतिःसागरस्थत्वेनोदाहृतानि अन्यानि च 'ऋग्वित्स्वाहीश...... ध्युत्तरैश्च॥' इत्यादीनि मुहूर्ततत्त्वादिसंगृहीतानि वचनान्यालोच्य रचितोऽयं संग्रहः— 'क्षिप्रध्रुवाहिचरमूलमृदुत्रिपूर्वारौद्रेऽर्कविद्गुरुसितेन्दुदिने व्रतं सत्' इति। अस्य च क्षिप्रेषु हस्ताश्विपुष्येषु ध्रुवेषु रोहिण्युत्तरोत्तराषाढोत्तरभाद्रपदाभिधेषु अहौ आश्लेषायां चरेषु श्रवणधनिष्ठाशततारापुनर्वसुस्वात्यभिधेषु मूले मृदुषु मृगरेवतीचित्रानुराधासु त्रिपूर्वासु पूर्वापूर्वाषाढापूर्वाभाद्रपदाभिधेषु रौद्रे आर्द्रायां च व्रतं सत् शुभमित्यर्थः। न चोदाहृतेषु ज्योतिःसागरस्थवचनेषु शतभिषजोऽनुपलब्धेः मुहूर्ततत्त्वसंग्रहे 'विवरुण' इति पर्युदासाच्च कथमत्र तत्संग्रह इति वाच्यम्, अव्यवधानेनोदाहरिष्यमाणेषु 'हस्तत्रये च श्रवणत्रये च' इत्यादिषु वासिष्ठादिवचनेषु तत्संग्रहात्, मुहूर्ततत्त्वीयनिषेधस्य ऋग्वेदिमात्रपरत्वात्, अस्य च संग्रहस्य साधारणत्वात्। न च तथापि श्रीपतिराजमार्तण्डादिभिः 'अश्विनीमृगचित्रासु हस्ते स्वात्यां च शाक्रभे।' इत्यादिना 'हस्तत्रये दैत्यरिपुत्रये च शाक्रेन्दुपुष्याश्विनरेवतीषु।' इत्यादिना च शाक्रस्य ज्येष्ठाभिधस्यापि संग्रहादिह न्यूनता शङ्क्या, संहितास्वदर्शनेन संदिग्धमूलतया मुहूर्ततत्त्वाद्यसंगृहीततया च न्यूनताशङ्कानुपपत्तेः। उक्तं च— 'प्राजापत्यादिषट्कर्क्षे भगर्क्षादिषु पञ्चसु। मूलादिदशके चैव सभैत्रे व्रतबन्धनम्॥' इति। तथा च सिद्धं द्वाविंशतिभेषु ऋग्वेदाद्यध्यायिनां वेदपरवचनैर्यथायथं मुख्य उपनय इति। अत्र ब्राह्मणानां नियममाह वसिष्ठः— 'हस्तत्रये... भानि तु॥' इति। कश्यपोऽपि— 'मैत्रे विष्णुत्रये... उपनायनम्॥' इति। जगन्मोहने गुरुरपि— 'त्रिषूत्तरेषु......पनायनम्॥' इति। नारदोऽपि— 'श्रेष्ठान्यर्क... न्युपनायने॥' इति। अन्यत्रापि— 'हस्तत्रयश्रवणसार्पशिवर्क्षपूर्वामूलेषु बह्वृचबटूपनयः प्रशस्तः। पुष्यादितिद्रुहिणपौष्णशशाङ्कसूर्यमैत्रो-

त्तरासु यजुषां रशनानिबन्धः । पुष्योत्तराश्विशिववासवकर्णहस्तैर्विद्यार्थिनो व्रतविधिः खलु सामगानाम् । मृगाश्विमैत्रादितिवासवेषु करे शुभेऽथर्वविदां प्रदिष्टः ॥' इति । अत्र च वासिष्ठे द्विजग्रहणात् गुरुवाक्ये च द्विजानामन्यवर्जनात् नारदेन चोक्तानां श्रेष्ठत्वोक्तेरितरेषां निन्दावगमात् तदाक्षिप्तेन गुरुवाक्यैकवाक्यतां भजता निषेधेन विप्रोपनयने स्पष्ट एव षोडशर्क्षनियमः । परं तु तत्रोत्तममध्यमत्वोक्तेस्तारतम्यमवधेयम् । यत्तु वासिष्ठे द्विजपदस्य त्रैवर्णिकसामान्यार्थत्वेन वासिष्ठस्य प्राशस्त्यपरत्वम्, वचनान्तरेण तु तेष्वपि तारतम्यमित्याहुः, तन्न, गुरुवाक्यस्थनिषेधस्य त्रैवर्णिकपरत्वेऽवशिष्टपञ्चानां निर्विषयत्वस्य वैकल्पिकत्वस्य वा प्रसङ्गात् तदेकवाक्यतया वसिष्ठवाक्यस्थद्विजपदस्य ब्राह्मणार्थत्वावधारणात् । तस्मादुक्त एवार्थो वाक्यानामिति सिद्धम् । अत्र विप्रोपनयने पुनर्वसुनिषेधो राजमार्तण्डे– 'चन्द्रतारानुकूल्येऽपि ...' इति । 'नुकूलेषु' इति पाठान्तरम् । अन्यत्रापि 'त्र्यहःस्पृशि मले...' इति । इदं वाक्यद्वयं संहिताग्रन्थेष्वदर्शनान्नाऽऽद्रियन्ते ज्योतिर्विदः । आचरन्ति च पुनर्वस्वोरुपनयनम् । समूलत्वे तु उदाहृतेषु वेदविशेषपरवाक्येषु येषां पुनर्वस्वोरनभिधानं तत्परोऽयं निषेधः । केचित्तु 'यदि संस्कृतो विप्रः पुनःसंस्कारमर्हति तदा पुनर्वसाविति वदन्ति(न्तः) नायं निषेधः, अपि तु चतुष्कपालवन्नैमित्तिकः पुनःसंस्कारविधिरित्यप्याहुः । इत्थं च क्षत्रियविशोर्द्वाविंशतिभेषु यथायथं व्यवस्था, ब्राह्मणानां तु षोडशसु । ऋक्सामाध्यायिब्राह्मणानां पुनर्वसुनिषेधो नैमित्तिकविधानं वा वचनप्रामाण्ये, अन्यथा तु 'न चाऽऽशङ्का न चोत्तरम्' इति दिक्" इत्यंपरे ज्योतिर्विद आहुः ।

अथ धर्मशास्त्रज्ञाभिमतमुच्यते । तत्र केचित् "गुर्वादिवाक्येनाविशेषेण ऋग्वेदादिवेदविद्ब्राह्मणमात्रस्य पुनर्वस्वोरुपनयनप्राप्तौ विशेषतो वेदभेदात् व्यवस्थोक्ता ज्योतिर्निबन्धे– 'मूले हस्तत्रये... व्रतार्पणे ॥' इति । अतश्च यजुरथर्ववेदिविप्रविशेषविषयत्वेन पुनर्वसुव्यवस्थायां राजमार्तण्डीयं 'चन्द्रतारा' इति तन्निषेधवाक्यमृक्सामवेदिविप्रगोचरमिति न कोऽपि विरोधः । वस्तुतस्त्वेतत्तत्र प्राच्यानामुपनयना(ना)चरणाचारनिबन्धनमित्यलम्" इति धर्मशास्त्रज्ञा आहुः ।

"अथोपनयने नक्षत्राणि । हेमाद्रौ स्मृतिचन्द्रिकायां च ज्योतिःशास्त्रे– 'हस्तत्रये पुष्यधनिष्ठयोश्च पौष्णाश्विसौम्यादितिविष्णुभेषु । शस्ते तिथौ चन्द्रबलेन युक्ते कार्यौ द्विजानां व्रतबन्धमोक्षौ ॥' । पौष्णं रेवती । सौम्यं मृगः । अदितिभं पुनर्वसुः । अत्र दशोपादानं व्रतविसर्गसाधारण्यात् । नारदस्तु व्रतमात्रे उत्तरात्रयं शततारकाऽनुराधा रोहिणीत्यन्यान्यपि षडाह– 'श्रेष्ठान्यर्क... नायने ॥' । वसिष्ठोऽप्येतान्येव षोडशाऽऽह– 'हस्तत्रये ... मौञ्जिकर्म ॥' । कश्यपोऽप्येतान्येव षोडशाऽऽह– 'मैत्रे विष्णु.... नायनम् ॥' । प्रयोगपारिजाते तूत्तममध्यमवर्ज्यभेदेन त्रैविध्यमुक्तम्– बृहस्पतिः– 'त्रिषूत्तरे....नायनम् ॥' । मैत्रम् अनुराधा । वासवं धनिष्ठा । त्वाष्ट्रं चित्रा । सौम्यं मृगः । एवं दशोत्तमानि । मध्यमानि सप्त– 'वारुणे वैष्णवे पुष्ये वायव्ये प्रौष्ठपद्यपि । आश्विने षट्सु भेषूक्तं मध्यमं चैव पौष्णभे ॥' । वारुणं शतभिषक् । वायव्यं स्वाती । प्रौष्ठपत् उत्तराभाद्रपदा । वर्ज्यानि दशाऽऽह गुरुः– 'कृत्तिका... नायनम् ॥' । विशाखयोरिति द्विवचनं ताराद्वित्वात्, नोत्तरनक्षत्रं गृहीत्वा, अनुराधायाः सर्वैर्विधानेनोत्तमत्वात् । अन्यच्च– 'मघा च भरणी ज्येष्ठा विशाखा चैव कृत्तिका । नक्षत्रपञ्चकं प्राज्ञैर्न ग्राह्यं व्रतबन्धने ॥' इति । नृसिंहस्तु व्यवस्थामाह– 'रौद्रे शैवद्विजः कुर्याद्वैष्णवे वैष्णवस्तथा । वासवर्क्षे सवर्णाश्च वारुणे कुण्डगोलकौ ॥' । रौद्रम् आर्द्रा । वासवं धनिष्ठा । वारुणं शतभिषक् । सवर्णमात्रस्य वासवोक्तेः कुण्डगोलकोक्त्या सर्वेऽप्यसवर्णा उपलक्ष्यन्ते । ज्योतिर्निबन्धे तु वेदभेदाद्व्यवस्थोक्ता– 'मूले हस्तत्रये... व्रतार्पणे ॥' । ध्रुवाणि चत्वारि– रोहिण्युत्तरात्रयं च । अन्यत्र– 'रुद्राहिमूलहरिपूर्वकरत्रिकेषु ध्रौवादितीज्यकरमित्रमृगान्त्यभेषु । ऋग्विन्मुखाः...' इत्यादिवेदपरत्वेन नक्षत्राण्युक्त्वा 'मित्रेन्द्रवारुणमघायमभान्यभेषु स्वासंभवे तु सकला व्रत-

माचरेयुः ॥ ' इति । ब्राह्मणस्य पुनर्वसुनिषेधमाह राजमार्तण्डः— 'चन्द्रतारा...मर्हति ॥ '। विप्रः कृतः उपनीत इत्यर्थः । केचित् पुनःसंस्कारं पुनरुपनयनं विप्रस्य पुनर्वसावित्यर्थः, न त्वयं पुनर्वसुनिषेध इत्याहुः । तच्चिन्त्यम्, कृतपदानन्वयात् आद्यपद्ये पूर्वार्धानन्वयाच्च, दीपिकायां च— ' जीवार्केन्दूडुशुद्धौ हरिशयनबहिर्भास्करे चोत्तरस्थे स्वाध्याये वेदवर्णाधिप इह शुभदे क्षौरभे नादितौ च ॥ ' इति अदितौ पुनर्वसौ नेत्येवं पुनर्वसुनिषेधाच्च । स तु विप्रविषय उपसंहृतः पूर्वश्लोकाभ्याम् । अयं चाऽऽचारः प्राच्यानाम्, न दाक्षिणात्यानाम् । उक्तं च वराहेण— ' देशाचार... यायात् ॥ " इति मीमांसकशंकरभट्टाः स्वकृते धर्मप्रकाशे उपनयने नक्षत्रनिर्णयमाहुः ।

" नाना वचांसि साधूनामसाधूनां विचिन्वताम् । पुनर्वसूपनयनसंशयच्छेदिलेखनम् ॥ ' । ' हस्तत्रये च....... मौञ्जिकर्म ॥ ' इत्यादिवासिष्ठ( ? ष्ठादि )वचःसु सर्वेष्वादित्यनक्षत्रविधानमिष्टम् । श्रीराजमार्तण्डनिबन्धवाक्यात्पुनर्वसोरत्र निषेध इष्टः— ' चन्द्रतारा... ... मर्हति ॥ ' । ' केचिद्विधिनिषेधाभ्यामत्रेच्छन्ति विकल्पनम् । युक्तं न तद्वस्तुनि नो भवेद्रूपविभेदनम् ॥ अन्य आहुर्विभिन्नासु शाखासूक्तविधानतः । तच्छाखीयपुमर्थत्वं यच्छाखायां विधिर्भवेत् ॥ स्मृतीनामव्यवस्थानान्न युक्तमिदमप्यतः । आचारतो व्यवस्था स्यादित्याहुरपरे बुधाः ॥ प्राच्यानामननुष्ठानादनुष्ठानात्पुनर्वसौ । सर्वेषां दाक्षिणात्यानां व्यवस्थाऽऽचारतो ह्यतः ॥ परे पुनःपदच्छेदे वसाविति च देवता । प्रोच्यते वासवं तेन धनिष्ठाया निषेधनम् ॥ पुनःसंस्कारकरणे कालो ह्यत्र विधीयते । न निषेधोऽयमित्याहुरपरे धर्मवेदिनः ॥ एतन्न युक्तं योगाद्धि रूढिरेव बलीयसी । आचारोऽपि च निर्मूलो न प्रमाणमिहेष्यते ॥ पदस्य कृत इत्यस्य संबन्धो न तथा भवेत् । अतो व्यवस्था कल्प्या स्यादेतद्विधिनिषेधयोः ॥ किमत्र कल्पनीयं हि क्लृप्ता ज्योतिर्निबन्धके । वेदभेदाद्व्यवस्थोक्ता तद्वाक्येषु स्फुटा यथा ॥ मूले हस्तत्रये... व्रतार्पणे । ज्योतिःशास्त्रव्यवस्थेयं ज्योतिःशास्त्रेण वै भवेत् । काम्याभ्युदयकारित्वाद् दृष्टार्थत्वाद्द्वयोरपि ॥ इत्यादिवाक्येषु हि वेदभेदात् स्पष्टे व्यवस्थाकथने वृथैव । मोहो न कार्यः खलु यौक्तिकोऽत्र शङ्काः कुतर्कैर्बहुधाः क्रियन्ते ॥ " इति गागाभट्टा आहुः ।

" पुनर्वस्वोर्ब्राह्मणस्योपनयनं भवति न वेति प्रश्ने वचनाद्भवतीत्युत्तरम् । तथा च वसिष्ठः— ' हस्तत्रये च ... विधौ ॥ ' इति । एवं गुरुकश्यपनारदादिवाक्यान्यपि पुनर्वसुप्रापकाणि द्रष्टव्यानि । ननु विप्रविषयकतन्निषेध(क)स्य चन्द्रेत्यादिराजमार्तण्डवाक्यस्य का गतिरिति चेत्, न काऽपि, तस्य ज्योतिर्निबन्धधर्मशास्त्रसंहितादिग्रन्थेषु मूलादर्शनेन निर्मूलत्वादिति बहवः । समूलत्वे तु वसिष्ठादिभिः सामान्यतो द्विजपुरस्कारेण विहितस्य विप्रविषयकविशेषवचनेनाऽऽहवनीयस्य पदेनेव बाधाद्विप्रस्य तत्र तन्न भवत्येवेति केचिदूचुः । अन्ये तु— दाक्षिणात्यानां तत्र तदाचरणदर्शनात्प्राच्यानां च तददर्शनाद्देशाचारतो व्यवस्था । यद्यपि सा होलाकाधिकरणविरुद्धा तथाऽपि सर्वनिबन्धृभिर्बहुषु स्थलेषु तथोक्तेरत्रापि तथेत्याहुः । परे तु— विप्रं प्रत्यपि सामान्यवचनेन तदप्राप्तौ तत्सापेक्षस्य निषेधस्याऽऽत्मलाभायोगात्तत्प्राप्तस्य चोपजीव्यत्वेन सर्वथा बाधायोगादगत्या ' न तौ पशौ करोति ' इतिवत् विकल्प एवेति तस्यापि तत्र तद्भवत्येव पक्षे । पाक्षिकत्वेऽपि ग्रहणाग्रहणवदभ्युपगमपक्ष एव श्रेयानिति वदन्ति । अपरे तु द्विजसामान्यतो विहितानां भानां यजुर्वेदिप्रभृतिविशेषविहितैस्तैश्चतुर्धाकरणन्यायेनोपसंहारात् तत्र चाऽऽदित्यस्यापि विधानेन तन्निषेधस्तद्भिन्नविषय इति जगदुः । इतरे तु ' हस्तत्रये धातृषट्सु ब्राह्मणस्योपनायनम् ' इति मुहूर्तमालावचनविरोधपरिहाराय ' पुनर्वसौ कृतो विप्रः ' इत्यत्र ' अविप्रः' इत्यकारप्रश्लेषेण विप्रभिन्नविषयता तस्येत्यभिदधति । ( केश्चित्— ) ' पुनर्वसौ कृतो विप्रः ' इति पुनःसंस्कारविधानद्वारको न निषेधः, किंतु 'अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेष्वपि । तीर्थयात्रां विना गच्छन् पुनःसंस्कारमर्हति ॥ ' इत्यादिभिर्यत्र पुनरुपनयनप्राप्तिस्तत्र तदनुवादेन विप्रस्य पुनर्वसुविधिरित्युच्यते । वयं तु— विप्रस्याऽऽदित्यविधायकेन मुहूर्तमालावचनेन विरोधपरिहाराय राजमार्तण्डवचनं नक्षत्रान्तरनिषेधकत्वेनैवं

व्याख्येयम् । तथाहि– प्रथमः पुनःशब्दोऽव्ययानामनेकार्थत्वादप्यर्थः 'कृतः' इत्यनन्तरं योज्यः । तथा च 'चन्द्राद्यानुकूल्येऽपि वसौ वसुदैवत्ये धनिष्ठानक्षत्रे संस्कृतोऽपि पुनःसंस्कारमर्हति' इति वचोभङ्ग्या वसुदैवत्यं नक्षत्रमेवात्र निषिध्यते, न पुनर्वसुनक्षत्रमिति तत्रोपनयने तस्य न कोऽपि दोषलेशावकाश इति। अथवा वसिष्ठादिवचननिचयाविरोधाय राजमार्तण्डीयमपि पुनर्वसुविधायकतयैवं व्याख्येयम् । तथाहि– 'पुनःसंस्कारः(?रम्)' इत्ययं पुनःशब्दस्त्वर्थो विशेषद्योतकः पुनर्वसावित्यनेनान्वेति । 'चन्द्रतारानुकूलेऽपि' इत्यपिना तदनानुकूल्येऽपि 'ग्रहाब्देषु शुभेष्वपि' इत्यपिना अशुभेष्वपि पुनर्वसौ विशेषतो विप्रः संस्कारमर्हतीति निश्चयः कृत इति । तथा चान्यनक्षत्रेषु चन्द्राद्यानुकूल्यं नियतम्, पुनर्वसौ तु नेति पुनर्वस्वोरुत्तमत्वद्योतकमिति न विरोध इति 'न चाऽऽशङ्का न चोत्तरम्' इति दिक्" इति भैयाभट्टा आहुः ।

"पुनर्वसुनक्षत्रे विप्रोपनयनं कार्यम्, न कार्यमिति विरुद्धशास्त्रदर्शनप्रयुक्तसंशयनिवृत्त्यै लिख्यतेऽदः– "विधिस्तावदवादि वसिष्ठेन– 'उत्तरासु ... विधौ ॥' इति । एवं बृहस्पत्यादिवचांस्यप्यनुसंधेयानि । निषेधो द्योतितो राजमार्तण्डेन– 'चन्द्रतारा....मर्हति ॥' इति । अत्र प्रायश्चित्तविधानान्निषेधो द्योत्यत इति विरोधप्रतिभासः । तत्र सामान्यशास्त्रसहकृतदाक्षिणात्याचारविरोधान्निर्मूलमेव निषेधशास्त्रमिति दैवज्ञाः । तन्न, वक्ष्यमाणरीत्या निषेधद्योतकत्वाभावेन विरोधाभावात् । अन्ये तु प्राच्याचारवशेन प्राच्यविषयं निषेधशास्त्रमिति । तदप्यसत्, होलाकाधिकरणविरोधात् उक्तहेतोश्च । भवतु तर्हि निषेधे विप्रग्रहणाद्विधिः क्षत्रियादिविषय इति चेत् न, 'संस्कृतो वेदमधीयीत' इति वचसीव संस्कृतार्थकृतपदगतभूतार्थकनिष्ठाप्रत्ययेन प्राप्तसंस्कारस्यैवाभिधाने निषिद्धसंस्कारलाभासंभवेन निषेधानुमानासंभवात्, प्रत्युत विधेरेवानुमानसंभवात् । एतेन 'मूलहस्त...व्रतार्पणे ॥' इति ज्योतिर्निबन्धोदाहृतवचोभिर्व्यवस्थाबोधनात् निषेधशास्त्रमृग्वेदिसामवेदिविप्रविषयमिति मतमप्यपास्तम्, निषेधस्यैवाभावात्, सकलज्योतिर्वित्संमतेन सर्ववेदाध्यायिनामुपनयनस्य पुनर्वस्वोराचारेण विरोधाच्च, वृधन्वतीभ्यां पूर्णमासावयवस्येव पुनर्वस्वादिषु येषु भेषु येषां नैवोपनयनसंस्कारलाभस्तावत्स्वपि भेषु कृतोपनयनानां तेषां न्यायादेव पुनःसंस्कारे प्राप्ते ब्राह्मणस्यैव पुनर्वस्वोरेव विशिष्य पुनःसंस्कारशास्त्रस्य निस्तात्पर्यकत्वापत्तेश्च, व्यवस्थावादिवक्तव्यायाः 'यत्पुनर्वस्वोरुपनयनं कुर्वीत तद्यजुर्वेदिनामेव' इति वचनव्यक्तेः श्लोकचतुष्टयपठितहस्तादिष्वसंभवेन तत्सहपठितपुनर्वस्वोरप्यसंभवाच्च, मूलश्रुतिषु भिन्नास्वपि प्रायपाठानुरोधेनैकरूपवचनव्यक्तेरेवौचित्यात् । एवं सामान्यविधिप्राप्तं पुनर्वसुऋक्षं यजुरथर्वाध्यायिषु विशेषशास्त्रेणोपसंह्रियत इत्यप्ययुक्तम् । सामान्यशास्त्रस्य विशेषतात्पर्यनिर्णयो ह्युपसंहारः । न च स प्रकृते संभवति, 'पुरोडाशं चतुर्धा करोति' इति सामान्यशास्त्रगतपुरोडाशस्याऽऽग्नेयपरत्ववत् वासिष्ठसामान्यवाक्यगतोपनयनशब्दस्य यजुरथर्वाध्यायितत्परत्वे पुनर्वस्वोरिव हस्तादिष्वपि तद्भिन्नानामुपनयनासंभवस्वीकारे तेषु तेषां तद्विध्यनुपपत्तेः, तत्संभवस्वीकारे उपसंहार्यविधौ हस्तादिपाठस्य निस्तात्पर्यकत्वापत्तेः । भवतु तर्हि 'यः संस्कृतः पुनःसंस्कारमर्हति स पुनर्वसौ' इति वचनव्यक्त्याश्रयणेन पुनःसंस्कारे पुनर्वसुनियमः । अस्ति च तत्प्राप्तिरकालोपनीतस्य 'विनर्तुना वसन्तेन' इत्यादिशास्त्रात्, अस्ति चान्यस्यापि 'मृतशय्याप्रतिग्राही पुनःसंस्कारमर्हति' इत्यादिशास्त्रात्, तथा प्रत्यन्तदेशगमनादिनिमित्तिकेति चेत् न, आद्यविषये संस्कारोत्पत्त्यभावेन संस्कृतपुनःसंस्कारानुवादानुपपत्तेः, द्वितीयेऽपि प्रतिग्रहादिना पूर्वसंस्कारनाशे सति तदनुवादासंभवात् । संस्कृतः सन् यः पुनःसंस्कारमर्हतीति हि पूर्वसंस्कारविशिष्टस्यैव पुनःसंस्कारान्वयः प्रतीयते, विशेषणत्वे संभवत्युपलक्षणत्वस्यान्याय्यत्वात् । भवतु तर्हि प्रथमपुनःशब्दमप्यर्थमङ्गीकृत्य 'वसौ धनिष्ठानक्षत्रे संस्कृतोऽपि पुनःसंस्कारमर्हति' इति वचनव्यक्त्याश्रयणेन धनिष्ठानिषेधपरत्वमिति चेत् न, पुनर्वसुशब्दगतरूढिबाध– पुनःपदगताप्रसिद्धार्थकल्पन– व्यवहिता-

न्वय– धनिष्ठाविधायकशास्त्रान्तरविरोधेभ्यः । भवतु तर्हि पूर्वार्धगतमपिशब्दमनुक्तसंग्रहार्थं स्वीकृत्योत्तरार्धगतं द्वितीयपुनःशब्दं विशेषद्योतकं त्वर्थमङ्गीकृत्येदृशवाक्यार्थः– 'चन्द्रादिष्वनुकूलेष्वपि ग्रहादिष्वशुभेष्वपि पुनर्वसौ विशेषतो विप्रः संस्कारमर्हति' इति पुनर्वसोरुत्तमत्वद्योतकमेतदिति चेत् न, पुनर्वसुगतविप्रसंस्कारानुवादेन अनुकूलाशुभात्मकानेककालविधौ विशिष्टानुवादद्वैविध्याद्विधेयभूयस्त्वाच्च बहुतरदुष्परिहरवाक्यमेदापत्तेः, कृत इति पदस्याजागलस्तनायमानत्वापत्तेश्च। का तर्हि समूलत्वेन स्वीकृतस्य वचनस्याऽस्य गतिरिति चेत्, कृतैकवेदाध्ययनस्य पुंसोऽपरवेदाध्ययनाङ्गत्वेन विहितपुनःसंस्कारे पुनर्वसुनियामकमिति गृहाण। उक्तश्चाऽऽश्वलायनगृह्यकारिकायामीदृशः पुनःसंस्कारः– 'वेदान्तरमधीत्येममृग्वेदं ये त्वधीयते। उपनीतिरियं तेषामलङ्करणवर्जिता॥' इति। जयन्तेनापि– 'यजुर्वेदं चाधीत्य ऋग्वेदमध्येतुकामस्यैतदेवोपनयनमलङ्कारवर्जं भवति' इति। अस्ति चात्र पुनःसंस्कारे पूर्वसंस्कारविशिष्टानुवादनिमित्तो वाक्यभेदः, विशेषणानां विलक्षणसंस्कारोद्देश्यतापरिचायकत्वात् 'य इष्टया पशुना' इति वचने इष्टयादिपदवत्, प्रायश्चित्तार्थे पुनःसंस्कारादत्र फलवैलक्षण्येनेतिकर्तव्यतावैलक्षण्येन प्रकरणान्तरवशेन चापूर्ववैजात्ये विवादाभावात्। लभ्यते चैवं सति नियमविधित्वं लघीयः। निषेधोन्नयने त्वपूर्वविधित्वेन गौरवमापद्येत। दृश्यते च प्रथमवत्सरगतार्त्यादिनिमित्तके ईदृशे एवाग्निपुनःसंस्कारे पुनर्वसुनियमो बौधायनायुक्तः। यत्तु सामान्यप्राप्तस्यापि पुनर्वसोर्यजुर्वेद्यादीन् प्रति पुनर्वचनं तत्सहपठितहस्तादिभान्तरवत्प्राशस्त्याभिप्रायमिति सर्वमनवद्यम्" इत्यनन्तदेवा आहुः।

बाल. १।१४ पृ. ६१–७२

'कृत्तिकाभरणीमूलज्येष्ठार्द्रासु विशाखयोः।
पूर्वात्रये च सार्पर्क्षे न कुर्यादौपनायनम्॥

सार्पर्क्षम् आश्लेषा। $ प्रपा. २१६

## वृद्धगार्ग्यः

नक्षत्रविधिः

'हस्तत्रये पुष्यधनिष्ठयोश्च
पौष्णाश्विसौम्यादितिविष्णुभेषु।
शस्ते तिथौ चन्द्रबलेन युक्ते
कार्यौ द्विजानां व्रतबन्धमोक्षौ॥

पौष्णं रेवती। सौम्यं मृगः। अदितिभं पुनर्वसुः। अत्र दशोपादानं व्रतविसर्गसाधारण्यात्। नारदस्तु व्रतमात्रे उत्तरात्रयं शततारकाऽनुराधा रोहिणीत्यन्यान्यपि षडाह– 'श्रेष्ठान्यर्कत्रया ... ... ॥'।

बाल. १।१४ पृ. ६७

## कश्यपः

नक्षत्रविधिः

'मैत्रे विष्णुत्रये हस्तत्रयर्क्षेषूत्तरात्रये।
धातृद्वयादितीज्यान्त्यदस्रर्क्षेषूपनायनम्॥

## अनिर्दिष्टकर्तृकवचनानि

वेदभेदेन नक्षत्रभेदः, सर्ववेदसाधारणानि नक्षत्राणि, वर्ज्यनक्षत्राणि, क्षौरनक्षत्राणामुपनयनेऽतिदेशः

'हस्तत्रयश्रवणसार्पशिवर्क्षपूर्वा-
मूलेषु बह्वृचवटूपनयः प्रशस्तः।
पुष्यादितिद्रुहिणपौष्णशशाङ्कसूर्य-
मैत्रोत्तरासु यजुषां रशनानिबन्धः॥

(१) प्रपा. २१६ क्रमेण बृहस्पतिः; संप्र. ३६०; बाल. १।१४ पृ. ६३, ६८; संग. ६५२.

$ संप्र. प्रपावत्।

(१) अप. १।१४ (=) हस्तत्र (हस्तात्त्र) उत्तरार्धे (शस्ते तिथौ चन्द्रबलोपयुक्ते कार्यो द्विजानामुपनायनो विधिः॥); स्मृच. २७ (=) तिथौ (विधौ); चका. ७४९ ज्योतिःशास्त्रे; मुक्ता. ८८; सिन्धु. ९३९ ज्योतिषे; विपा. ४७७ बृहस्पतिः; बाल. १।१४ पृ. ६७ ज्योतिःशास्त्रे.

(२) बाल. १।१४ पृ. ६१ दस्रर्क्षेषू (हस्तर्क्षेष्वौ), पृ. ६३ : पृ. ६६ निर्देशमात्रम् : पृ. ६७ दस्रर्क्षे (दस्रभे).

(३) बाल. १।१४ पृ. ६६.

**पुष्योत्तराश्विशिववासवकर्णहस्तै-**
**र्विद्यार्थिनो व्रतविधिः खलु साम-**
**गानाम् ॥**
**मृगाश्विमैत्रादितिवासवेषु**
**करे शुभेऽथर्वविदां प्रदिष्टः ॥**
[1]**रुद्राहिमूलहरिपूर्वकरत्रिकेषु**
**ध्रौवादितीज्यकरमित्रमृगान्त्यभेषु ।**
**ऋग्विन्मुखाः ........ ॥**
**मिश्रेन्द्रवारुणमघायमभान्यभेषु**
**स्वासंभवे तु सकला व्रतमाचरेयुः ॥**
[2]**प्राजापत्यादिषट्कर्क्षे भगर्क्षादिषु पञ्चसु ।**
**मूलादिदशके चैव समैत्रे व्रतबन्धनम् ॥**

अर्थाद्भरणीकृत्तिकामघाविशाखाज्येष्ठासु न कार्य-मित्यर्थः । एतानि सर्वशाखामेलकाभिप्रायेणोक्तानि ।

संव. ९६

[3]**मघा च भरणी ज्येष्ठा विशाखा चैव कृत्तिका ।**
**नक्षत्रपञ्चकं प्राज्ञैर्न ग्राह्यं व्रतबन्धने ॥**
[4]**यान्युक्तानि क्षौरेषु भानि तान्येव चूडाकरणे ।**
**उपनयने गोदाने केशान्ते च शस्तानि ॥**

## संग्रहे

वेदभेदेन नक्षत्रभेदः, जन्मनक्षत्रात्सप्तविंश-नक्षत्रविषये विशेषः

[5]**पूर्वाहस्तत्रयाह्यैशश्रुतिमूलेषु बह्वृचाम् ।**
**यजुषां पौष्णमैत्रार्कादित्यपुष्यमृदुध्रुवैः ॥**
**सामगानां हरीशार्कवसुपुष्योत्तराश्विभैः ।**
**धनिष्ठादितिमैत्रार्केष्विन्दुपौष्णेष्वथर्वणाम् ॥**

(१) बाल. १।१४ पृ. ६८.
(२) बाल. १।१४ पृ. ६६ ; संव. ९६.
(३) बाल. १।१४ पृ. ६८.
(४) चका. ७७८ ज्योतिःशास्त्रे ; पुम. ४४ शस्तानि + ( तानि ) हेमाद्रौ ज्योतिःशास्त्रे.
(५) ज्योनि. १२४.

[1]**जन्मर्क्षात्पूर्वनक्षत्रं सप्तविंशतिमं भवेत् ।**
**सर्वकर्मविनाशः स्याच्चन्द्रो व्ययगतो यदि ॥**
[2]**सप्तविंशतिनक्षत्रमेकराशिसमन्वितम् ।**
**सर्वेषु शुभदं प्रोक्तं विवाहोपनयादिषु ॥**

## शार्ङ्गधरीये

वेदभेदेन भिन्नानि सर्ववेदसाधारणानि च नक्षत्राणि

[3]**मूलार्द्रश्रवणाश्लेषापूर्वात्रयकरत्रये ।**
**बह्वृग्बटोर्व्रतं देयं विद्यावित्तसुखाप्तये ॥**
**त्र्युत्तरारोहिणीहस्तरेवतीमृगमैत्रभे ।**
**आदित्यपुष्यभे शस्तं यजुषां मौञ्जिबन्धनम् ॥**
**पुष्याश्विनीधनिष्ठार्द्राश्रुतिहस्तोत्तरात्रये ।**
**मौञ्जीबन्धः शुभः प्रोक्तः सामगस्य बटोर्बुधैः ॥**
**हस्तपुष्यमृगादित्यपूषवस्वश्विभैः स्मृतम् ।**
**अथर्वशाखिनां शस्तं रशनाबन्धनं बुधैः ॥**
[4]**श्रवणादित्यपौष्णादिद्वये हस्तत्रये मृगे ।**
**सर्वेषां मेखलाबन्धः शुभः प्रोक्तो द्विजन्मनाम् ॥**

( १ ) प्रातिस्विकनक्षत्रासंभवे सामान्यतो विहितानि नक्षत्राणि ग्राह्याणि, अन्यथा सामान्यविध्यानर्थक्यापत्तेः, विशेषविधीनां तत्प्राशस्त्यमात्रपरत्वेनान्यपरिसंख्यार्थत्वा-भावात् । अत एव सारसमुच्चये– 'मघाग्नेयविशाखेन्द्रयाम्यं हित्वा च वारुणम् । व्रते शस्तानि सर्वेषां चेच्छाखोक्तं न लभ्यते ॥' । शार्ङ्गधरीयेऽपि– 'श्रवणादि...... नाम् ॥' इति । उक्तान्यपि नक्षत्राणि दुष्टग्रहाक्रान्त्यादि-दुष्टानि त्याज्यानि । तथा च ऋक्षोच्चये– 'दशयोग-चक्रशुद्धैर्नक्षत्रैः कारयेच्छुभं कर्म । केतुतमःसूर्यार्कि-क्षितितनयानुपहतैः पटुभिः ॥' इति ।

संप्र. ३६९–३७०

( २ ) वेदविशेषेण नक्षत्रविशेषविधिर्ज्योतिर्निबन्धे– 'मूले हस्तत्रये सार्पे शैवे पूर्वात्रये तथा । ऋग्वेदा-

(१) प्रपा. २१५ (=) विंशतिमं (विंशतिभं), ३२८.
(२) प्रपा. २१५ (=) , ३२८.
(३) संप्र. ३६९.
(४) संप्र. ३६९ ; संकौ. १२२ ; संर. १७७.

ध्यायिनां कार्यं मेखलाबन्धनं बुधैः ॥ पुष्ये पुनर्वसौ पौष्णे हस्ते मैत्रे शशाङ्कभे । ध्रुवेषु च प्रशस्तं स्याद्यजुषां मौञ्जिबन्धनम् ॥ पुष्यवासवहस्ताश्विशिवविष्णूत्तरात्रयम् । प्रशस्तं मेखलाबन्धे बटूनां सामगायिनाम् ॥ मृगमैत्राश्विनीहस्तरेवत्यादित्यवासवम् । अथर्वशाखिनां शस्तो भगणोऽयं व्रतार्पणे ॥' इति । हस्तत्रयं हस्तश्चित्रा स्वातीति । पूर्वात्रयं पूर्वा पूर्वाषाढा पूर्वाभाद्रपदेति । शैवम् आर्द्रा । एषामसंभवे सारसमुच्चये– 'मघाग्नेयविशाखेन्द्रयाम्यं हित्वा च वारुणम् । व्रते शस्तानि सर्वेषां चेच्छाखोक्तं न लभ्यते ॥' । आग्नेयं कृत्तिका । इन्द्रः ज्येष्ठा । याम्यं भरणी । वारुणं शततारका । शार्ङ्गधरीये– 'श्रवणादित्य-... द्विजन्मनाम् ॥' इति । आदित्यं पुनर्वसुः । स च ऋक्सामशाखिव्यतिरिक्तविषयः, व्यवस्थावाक्यानुसारेण ऋक्सामशाखीतरान्प्रत्यप्रवृत्तेन 'चन्द्रतारानुकूलेषु ग्रहान्वेषु शुभेष्वपि । पुनर्वसौ कृतो विप्रः पुनःसंस्कारमर्हति ॥' इति राजमार्तण्डवाक्येनोक्तशाखिनः प्रत्येव व्यवस्थावाक्यप्राप्तायाः पुनर्वसुनिवृत्तेः सर्वसाधारणविनियोगविधिनाऽपवादप्रसक्तौ प्रतिप्रसवे लाघवात् । वस्तुतस्तु ज्योतिर्वित्प्रसिद्धवसिष्ठादिसंहितासु क्वचिदपि पुनर्वसुनिषेधादर्शनात्तासु हेमाद्र्यादिमहानिबन्धेषु च पुनर्वसुविधेरेव प्रतीतेर्दाक्षिणात्यसकलशिष्टानां पुनर्वसावुपनयनाचारस्योपलम्भाच्च राजमार्तण्डवाक्यं निर्मूलम् । समूलत्वेऽपि न यजुर्वेदिप्रभृतिविषयम्, उक्तव्यवस्थौचित्यात् । यत्तु विप्रपदोपेतैतद्वाक्यबलेन यजुर्वेद्यादीन् प्रति पुनर्वसुविधिरेव क्षत्रियवैश्यविषय इति, तन्न, नक्षत्रान्तरे वर्णत्रयसाधारणस्य तस्य तथात्वे वैरूप्यापत्तेः, जातिवाचकविप्रपदोपेतत्वेन सामान्यशास्त्रात् व्यक्तिवाचिपदोपेतत्वेन विशेषशास्त्रस्योक्तविधेर्बलवत्त्वात्, सावकाशताया उभयत्र तुल्यत्वेनाविनिर्गमकत्वात्, आदित्यवारनिषेधात् नक्तविधेर्बलवत्त्वे महानिबन्धोक्तन्यायेन कल्प्यनिषेधात् क्लृप्तविधेः सुतरां बलवत्त्वाच्च, प्रतिप्रसवत्वप्रयुक्तलाघवस्य सामान्यप्रवृत्तशास्त्रसंकोचकतायाः पौष्णपेषणादौ क्लृप्तत्वेन तद्विरुद्धकल्पनाया अन्याय्यत्वाच्च, विप्रान् प्रति सर्वथैव पुनर्वसुनिषेधे 'सर्वेषां द्विजन्मनाम्' इति बहुत्वोक्तेर्द्विजन्मद्वयेऽनुपपत्तेश्च, अस्मन्मते तूक्तनिषेधस्य निर्मूलत्वेऽन्यशाखिनोऽपि प्रति अनुकल्पत्वेन पुनर्वसुविध्यङ्गीकारेण तदुपपत्तेः, समूलत्वेऽपि यजुर्वेद्यात्मकत्रिवर्णविषयत्वात् । संकौ. १२२

## कृत्यचिन्तामणौ

नक्षत्रविधिः

'स्वातीशक्रधनाश्विमित्रकरभे पौष्णेज्यचित्राहरि-
ष्विन्दौ तोयपतौ भगेऽदितिसुते भाद्रद्वये सागरे ।
केन्द्रस्थे भृगुजेऽङ्गिरःशशिसुते चन्द्रे च तारे शुभे
कर्तव्यं व्रतकर्म मङ्गलतिथौ वाराः सितार्केज्यकाः ॥

अदितिसुतः उत्तराफल्गुनी । सागरः पूर्वाषाढा ।
संत. ९२८

## सुरेश्वरः

नक्षत्रविधिः, वर्ज्यनक्षत्राणि

'हस्तत्रये दैत्यरिपुत्रये च
शक्रेन्दुपुष्याश्विनिरेवतीषु ।
वारेषु शुक्रार्कबृहस्पतीनां
हितानुबन्धी द्विजमौञ्जिबन्धः ॥

'न विपज्जन्मतारासु नैधने प्रत्यरौ तथा ।
संपत्करे तथा क्षेमे साधके मित्रसंज्ञके ।
मित्रं परममित्रं च ताराः सर्वत्र शोभनाः ॥

---

(१) संत. ९२८ भुजबलभीमकृत्यचिन्तामण्योः .

(२) मपा. १८ मौञ्जि (मुञ्ज) ; गमा. २०१ मदनपारिजाते ; संसौ. १२८ भुजबलः ; संप्र. ३६८ पू., भुजबलः ; बाल. १।१४ पृ. ६६ शक्रे ( शाक्रे ) पू., राजमार्तण्डः ; संव. ९६ शक्रे ( शाक्रे ) पू., भुजबलराजमार्तण्डयोः .

(३) मपा. १८.

## नृसिंहः

शैव-वैष्णव-सवर्ण-कुण्डगोलकान् प्रति नक्षत्रविशेषविधिः

[1]रौद्रे शिवद्विजः कुर्याद्वैष्णवे वैष्णवस्तथा ।
वासवर्क्षे सवर्णश्च वारुणे कुण्डगोलकौ ॥

(१) रौद्रम् आर्द्रा । प्रपा. २१६

(२) वासवं धनिष्ठा । वारुणं शतभिषक् । सवर्ण-मात्रस्य वासवोक्तेः कुण्डगोलकोक्त्या सर्वेऽप्यसवर्णा उपलक्ष्यन्ते । बाल. १।१४ पृ. ६८

## भुजबलभीमे

नक्षत्रविधिः

§[2]स्वातीशक्रधनाश्विमित्रकरभे
पौष्णेज्यचित्राहरि-
ष्विन्दौ तोयपतौ भगेऽदितिसुते
भाद्रद्वये सागरे ।
केन्द्रस्थे भृगुजेऽङ्गिरःशशिसुते
चन्द्रे च तारे शुभे
कर्तव्यं व्रतकर्म मङ्गलतिथौ
वाराः सितार्केज्यकाः ॥

## श्रीपतिनिबन्धे

नक्षत्रविधिः

[3]अश्विनीमृगचित्रासु हस्ते स्वात्यां च शक्रभे ।
पुष्ये च पूर्वफाल्गुन्यां श्रवणे पौष्णभे तथा ।
वासवे शततारासु व्रतबन्धः प्रशस्यते ॥

## राजमार्तण्डे

नक्षत्रविधिः

[1]हस्ते चित्राश्विशक्रादितिविधिवरुणो-
पेन्द्रपुष्येन्दुपौष्ण-
स्वातिष्वव्याहतासु स्मृतमुपनयनं
भार्गवाद्यैर्मुनीन्द्रैः ॥

## विधिसंग्रहे

नक्षत्रविशेषे वर्ज्यांशाः

[2]प्रथमान्त्यतृतीयांशा विपत्प्रत्यरनैधने ।
वर्जनीया विशेषेण नाशुभोपनये विपत् ॥

## विधिरत्ने

वर्ज्यनक्षत्राणि

[3]चन्द्राष्टमं विनाशर्क्षं सप्तविंशतिभं तथा ।
अन्येषु शुभकार्येषु विपदा सहितानि तु ।
वर्ज्यान्येतानि शेषाणि शुभानि शुभकर्मसु ॥

## ऋक्षोच्चये

लत्तापातादिदोषरहितानि नक्षत्राणि ग्राह्याणि

[4]दशयोगचक्रशुद्धैर्नक्षत्रैः कारयेच्छुभं कर्म ।
केतुतमःसूर्यार्किक्षितितनयानुपहतैः षड्भिः ॥

उपघातः नक्षत्राणां लत्तापातादिकः । तत्र केशवादयः उपलक्षणम् । शुभानामपि वेधादि त्याज्यमेव । तदेतत्सर्वं विवाहसौख्ये प्रपञ्चयिष्यते । संसौ. १३०

## ज्योतिर्निबन्धे

वेदभेदेन नक्षत्रभेदाः

[5]मूले हस्तत्रये सार्पे शैवे पूर्वात्रये तथा ।
ऋग्वेदाध्यायिनां कार्यं मेखलाबन्धनं बुधैः ॥

---

§ व्याख्यानं कृत्यचिन्तामणिवचने द्रष्टव्यम् ।

(१) प्रपा. २१६ शिव (शैव); संप्र. ३६९; बाल. १।१४ पृ. ६८ शिव (शैव) वर्ण (वर्णा); संग. ६५२.

(२) संत. ९२८ भुजबलभीमकृत्यचिन्तामण्योः .

(३) संसौ. १२९ णे पौष्णभे ( णं रेवतीं ) तृतीयार्धे ( शतभिषा च सुयुक्ता च व्रतबन्धे प्रशस्यते ॥ ); संप्र. ३६८ प्रथमार्धमात्रम्; बाल. १।१४ पृ. ६६ शक्र (शाक्र) प्रथमार्धमात्रम्; संव. ९६.

(१) संसौ. १२९; संप्र. ३६८; संव. ९६ (=) चित्राश्विशक्रा (शक्राश्विचित्रा).

(२) प्रपा. २१५.

(३) प्रपा. २१५.

(४) संसौ. १३० येच्छुभं कर्म (येद्गृहारम्भे); संप्र. ३७०.

(५) संसौ. १२७; संप्र. ३६८; संकौ. १२२; बाल. १।१४ पृ. ६२, ६४ तथा (श्रुतौ) ज्योतिःसागरे :

¹पुष्ये पुनर्वसौ पौष्णे हस्ते मैत्रे शशाङ्कभे ।
ध्रुवेषु च प्रशस्तं स्याद्यजुषां मौञ्जिबन्धनम् ॥

²पुष्यवासवहस्ताश्विशिवकर्णोत्तरात्रयम् ।
प्रशस्तं मेखलाबन्धे बटूनां सामगायिनाम् ॥

³मृगमैत्राश्विनीहस्तरेवत्यदितिवासवम् ।
अथर्वशाखिनां शस्तो भगणोऽयं व्रतार्पणे ॥

(१) हस्तत्रयं हस्तश्चित्रा स्वातीति पूर्वात्रयं पूर्वा पूर्वाषाढा पूर्वाभाद्रपदेति । शैवम् आर्द्रा ।
संकौ. १२२

(२) ध्रुवाणि चत्वारि रोहिण्युत्तरात्रयं च ।
बाल. १।१४ पृ. ६८

(३) सार्पम् आश्रेषाः । पौष्णं रेवती । मैत्रम् अनूराधाः । शशाङ्कभं मृगशिरः । वासवं ज्येष्ठा । अश्विनौ अश्विनी । शिवः आर्द्रा । विष्णुः श्रवणम् । अदितिः पुनर्वसू । $ संर. १७७

$ शेषं बालवत् संकौगतं च ।

पृ. ६६ निर्देशमात्रम्, ज्योतिःसागरे : पृ. ६७ निर्देशमात्रम्, पृ. ६८, ७१ ; **संग.** ६५२ ; **संव.** १०३ (=) ; **पुम.** ४३९ बुधैः ( बटोः ) ; **कृभ.** ९३९ (=) ; **संर.** १७७ कार्यं ( शस्तं ).

(१) **संसौ.** १२७ ; **संप्र.** ३६८ ; **संकौ.** १२२ ; **बाल.** १।१४ पृ. ६२, ६४ ध्रुवेषु च प्रश ( ध्रुवभेषु च श) मौञ्जि ( व्रत) ज्योतिःसागरे : पृ. ६६ निर्देशमात्रम्, ज्योतिःसागरे : पृ. ६७ निर्देशमात्रम् : पृ. ६८, ७१ ध्रुवेषु च प्रश ( ध्रुवभेषु च श ) ; **संग.** ६५२ मैत्रे श ( मैत्रश ) ; **संव.** १०३ (=) संगवत् ; **पुम.** ४३९ ; **कृभ.** ९३९ (=) ; **संर.** १७७.

(२) **संसौ.** १२७ ; **संप्र.** ३६८ ; **संकौ.** १२२ कर्णो ( विष्णू ) ; **बाल.** १।१४ पृ. ६३, ६४ ज्योतिःसागरे : पृ. ६६ निर्देशमात्रम्, ज्योतिःसागरे : पृ. ६७ निर्देशमात्रम्, पृ. ६८, ७१ ; **संग.** ६५२ ; **संव.** १०३ (=) ; **पुम.** ४३९ ; **कृभ.** ९४० (=) कर्णो ( विष्णू ) बन्धे ( बन्धं ) ; **संर.** १७७ कर्णो ( विष्णू ) गायि ( वेदि ).

(३) **संसौ.** १२८ शाखि ( पाठि ) ; **संप्र.** ३६८ ; **संकौ.** १२२ त्यदिति (त्यादित्य) ; **बाल.** १।१४ पृ. ६३,

¹पूर्वाहस्तत्रये सार्पश्रुतिमूलेषु बह्वृचाम् ।
यजुषां पौष्णमैत्रार्कादित्यपुष्यमृदुध्रुवैः ॥
सामगानां हरीशार्कवसुपुष्योत्तराश्विभैः ।
धनिष्ठादितिमैत्रार्केष्विन्दुपौष्णेष्वथर्वणाम् ॥

## मुहूर्ततत्त्वे

वेदभेदेन नक्षत्रभेदाः, सर्ववेदसाधारणानि नक्षत्राणि

²ऋग्वित्साहीशपूर्वैर्विवरुणचरभ-
क्षिप्रमैत्रैर्यजुर्विद्
ध्रौवाढ्यैस्तैर्विमित्राब्जजनिभिरपरो-
ऽन्त्यस्तु तैर्व्युत्तरैश्च ।
स्वालामेऽग्नीन्द्रराधाम्बुपयमपितृतो-
ऽन्येषु सर्वे...... ॥

## मुहूर्तमार्तण्डः

वर्ज्यनक्षत्राणि

³शस्तो द्वीशाग्निशाक्रान्तकपितृरहितैः
सर्वभैर्मौञ्जिबन्धः ॥

## मुहूर्तचिन्तामणिः

साधारणनक्षत्राणि वेदभेदेन विशेषनक्षत्राणि च

⁴क्षिप्रध्रुवाहिचरमूलमृदुत्रिपूर्वा-
रौद्रे....... व्रतं सत् ॥

क्षिप्राणि अश्विनीपुष्यहस्ताः । ध्रुवाणि प्रसिद्धानि । अहिः आश्लेषा । चराणि श्रवणधनिष्ठाशतभपुनर्वसु-

६४ द्वितीयपादे ( त्रितयादितिवासवाः ) ज्योतिःसागरे : पृ. ६६ निर्देशमात्रम्, ज्योतिःसागरे : पृ. ६७ निर्देशमात्रम् : पृ. ६८ शाखि ( वेदि ) : पृ. ७१ हस्तरे (हस्तं रे ) शाखि ( वेदि ) ; **संग.** ६५२ ; **संव.** १०३ (=) संसौवत् ; **पुम.** ४३९ संसौवत् ; **कृभ.** ९४० (=) ; **संर.** १७७ शाखि ( वेदि ).

(१) **सिन्धु.** ९३९ ; **विपा.** ४७७.

(२) **बाल.** १।१४ पृ. ६५.

(३) **प्रका.** २०४.

(४) **मुचि.** ५।४० ; **बाल.** १।१४ पृ. ६६ (=) ; **संव.** ९५.

स्वात्यः। मूलमृदूनि प्रसिद्धानि। तिस्रः पूर्वाः। रौद्रम् आर्द्रा। एषु द्वाविंशतिभेषु व्रतबन्धनं सत् शुभफलदातृ भवेत्। उक्तं च– 'प्राजापत्यादिषड्क्षे भगर्क्षादिषु पञ्चसु। मूलादिदशके चैव समैत्रे व्रतबन्धनम्॥' इति। अर्थाद्भरणीकृत्तिकामघाविशाखाज्येष्ठासु न कार्यमित्यर्थः। एतानि सर्वशाखानक्षत्रमेलकाभिप्रायेणोक्तानि।

पीटी.

[1]वेदक्रमाच्छशिशिवाहिकरत्रिमूल-
पूर्वासु पौष्णकरमैत्रमृगादितीज्ये।
ध्रौवेषु चाश्विवसुपुष्यकरोत्तरेश-
कर्णे मृगान्त्यलघुमैत्रधनादितौ
सत्॥

अथ पूर्वं द्वाविंशतिनक्षत्राण्यभिहितानि सामान्यतः। तेषां वेदपरत्वेन विशेषं वसन्ततिलकयाऽऽह– वेदक्रमादिति। मृगार्द्राश्लेषाहस्तचित्रास्वातीमूलपूर्वात्रयेषु ऋग्वेदाध्यायिनाम्, रेवतीहस्तानुराधामृगपुनर्वसुपुष्यरोहिण्युत्तरात्रयेषु यजुर्वेदाध्यायिनाम्, अश्विनीधनिष्ठापुष्यहस्तोत्तरात्रयार्द्राश्रवणेषु सामवेदाध्यायिनाम्, मृगरेवतीपुष्याश्विनीहस्तानुराधाधनिष्ठापुनर्वसुष्वथर्वणवेदाध्यायिनां पूर्वश्लोकानुवृत्ततत्पदपरामृष्टमुपनयनं सत् शुभमित्यर्थः।

पीटी.

## सारसमुच्चये

विशेषनक्षत्रालाभे सर्ववेदसाधारणानि नक्षत्राणि

[2]मघाग्नेयविशाखेन्द्रयाम्यं हित्वा च वारुणम्।
व्रते शस्तानि सर्वेषां चेच्छाखोक्तं न लभ्यते॥

आग्नेयं कृत्तिका। इन्द्रः ज्येष्ठा। याम्यं भरणी। वारुणं शततारका। $ संकौ. १२२

$ संर. संकौवत्।

(१) मुचि. ५।५७; संव. १०३.

(२) संप्र. ३६९; संकौ. १२२; संर. १७८ खेन्द्र (खैन्द्र) चेच्छाखो (चेद्वेदो).

## व्यवहारनिबन्धे

वेदभेदेन नक्षत्रभेदाः

[1]हस्तत्रयश्रवणसार्पशिवर्क्षपूर्वा-
मूलेषु बह्वृचबटूपनयः प्रशस्तः।
तिष्यादितिद्रुहिणसूर्यशशाङ्कपौष्ण-
मैत्रोत्तरासु यजुषां रशनानिबन्धः॥
[2]वस्वश्वितिष्यशिवविष्णुकरोत्तरासु
यज्ञार्थदो व्रतविधिः खलु सामगानाम्।
शशाङ्कहस्तत्रिपुनर्वसौ च
पुष्याश्विमेऽथर्ववेदो विधिश्च॥

## मुहूर्तमालायाम्

ब्राह्मणं प्रति नक्षत्राणि

[3]...... पौष्णश्रुतिद्वये।
हस्तत्रये धातृषट्सु ब्राह्मणस्यौपनायनम्॥

## मुहूर्तगणपतौ

मतभेदेन सर्वसाधारणानि नक्षत्राणि, वेदभेदेन विशेषनक्षत्राणि

[4]हस्तत्रये मृगे पुष्ये श्रवणद्वितयेऽश्विभे।
रेवत्यां च प्रशस्तं स्यान्मेखलाबन्धनं बटोः॥
षष्ठ्यर्केन्दुकुजे मूले पूर्वाश्लेषोत्तराशते।
पुनर्वस्वनुराधार्द्रे रोहिण्यां कैश्चिदिष्यते॥
आर्द्राहस्तत्रये मूले पूर्वाश्लेषाश्रवे तथा।
ऋग्वेदाध्यायिनां जीवे प्रशस्तं व्रतबन्धनम्॥
त्र्युत्तरे रेवतीपुष्ये पुनर्वस्वनुराधयोः।
मृगे हस्ते च रोहिण्यां भार्गवे यजुषां व्रतम्॥
अश्विन्यां श्रवणे पुष्ये धनिष्ठार्द्रोत्तरात्रये।
हस्ते भूमिसुते श्रेष्ठं सामगानां व्रतं तथा॥

(१) संसौ. १२८; संप्र. ३६८ त्रयश्रवणसार्प (त्रये सार्प).

(२) संसौ. १२८; संप्र. ३६८–३६९ वस्वश्वि (विश्वाश्वि).

(३) बाल. १।१४ पृ. ६४ : पृ. ७० उत्त.

(४) संव. १०४.

मृगे हस्तेऽश्विनीपुष्ये धनिष्ठारेवतीषु च ।
पुनर्वस्वनुराधायां बुधे शस्तमथर्वणाम् ॥
पुनर्वसौ व्रतं नेष्टं शतभे चेति केचन ॥

## रेणुकारिकाः

### नक्षत्रविधिः

[1]पौष्णोत्तरापुष्यमृगानुराधा-
ब्राह्मार्कमादित्ययुते शुभेषु ॥

(१) रेका. १९ पृ. २१.

# योगाः करणानि च

## बृहस्पतिः

प्राह्यवर्ज्यानि योगकरणानि

[1]व्याघातं परिघं वज्रं व्यतीपातं च वैधृतिम् ।
गण्डातिगण्डौ शूलं च विष्कम्भं चैव वर्जयेत् ।
शिष्टाष्टादशयोगेषु प्रशस्तं ह्यौपनायनम् ॥

[2]बवादीनां तु षट्कं स्यादुपनाये सुपूजितम् ।
शकुन्यादीनि विष्टिं च वर्जयेत्तु विशेषतः ॥

---

(१) प्रपा. २१६ शिष्टाष्टादशयो ( शिष्टेषु चैव यो ) मुहूर्तसंग्रहे ; संप्र. ३७० गण्डौ शूलं ( गण्डशूलं ) ; विपा. ४७८ शस्तं ह्यौ ( शस्तमु ) नारदः ; संको. १२२ तृतीयार्धमात्रम् ; पुम. ४४० संप्रवत् , तृतीयार्ध नास्ति ; संर. १७८ विपावत् , तृतीयार्ध नास्ति.

(२) प्रपा. २१७ श्रीपतिः ; संप्र. ३७१ ; विपा. ४७८ गर्गः ; संको. १२२ येत्तु ( येच्च ) ; संर. १७८ संकोवत् .

## श्रीपतिः

वर्ज्या योगा योगघटिकाश्च

[1]सवैधृतिस्तु व्यतिपातनामा
सर्वोऽप्यनिष्टः परिघस्य चार्धम् ।
तिस्रस्तु योगे प्रथमे सवज्रे
व्याघातसंज्ञे नव पञ्च शूले ।
गण्डेऽतिगण्डे च षडेव नाड्यः
शुभेषु कार्येषु विवर्जनीयाः ॥

प्रथमो योगः विष्कम्भः । संर. १७८

---

(१) प्रपा. २१७ गण्डेऽति ( गण्डाति ) ; संप्र. ३७० ; विपा. ४७८ ; संको. १२२ ; संर. १७८.

## ज्योतिर्मनुः

मुख्यमध्यमगर्हिता दिवसभागाः

[1]सर्वदेशेषु पूर्वाह्णे मुख्यं स्यादुपनायनम् ।
मध्याह्ने मध्यमं प्रोक्तमपराह्णे च गर्हितम् ॥

( १ ) क्वचिदपराह्णोपनये पुनःसंस्कार इत्युक्तम् ।

संसौ. १२१

( २ ) उत्तरार्धेऽपि सर्वदेशेष्वित्यनुषज्यते ।

संर. १७८

## नारदः

दिवाकरणविधिः

[1]नराणां सवनं पुंसः सीमन्तः कर्णवेधनम् ।
नामकर्मक्रिया चौलं विद्यारम्भोपनायने ।
दिवा कार्याणि चान्यानि कर्तव्यानि दिवैव हि ॥

(१) संसौ. १२१ मनुः ; संप्र. ३७१ मनुः ; संम. २३ च ( तु ) ; संकौ. १२२–१२३ मनुः ; संग. ६५४ मनुः ; पुम. ४३८ स्यादुप ( स्याच्चोप ) मानवीयसंहितायाम् ; संर. १७८ मनुः .

(१) प्रपा. २०० ; संप्र. ३११ सीमन्तः (सीमन्तं).

# लग्न—लग्नांशविचारः

**वसिष्ठः**

सौम्यग्रहस्वामिकाः सौम्यग्रहैर्युक्ता दृष्टा वा लग्नलग्न-नवांशा ग्राह्याः, कर्कटांशनिषेधः, मेषादिलग्नफलानि

[1]श्रुतिस्मृतीनां पदमुत्तमं द्विज-
स्तदुत्तमत्वं व्रतबन्धलग्नतः।
तस्माद्द्विजानां तदवाप्तिकारणं
तल्लग्नशुद्धिं कथयामि शास्त्रतः॥

[2]लग्नाय सौम्यग्रहराशयो ये
ग्राह्या न पापग्रहराशयो ये।
ग्राह्याश्च तेऽपि प्रबलैश्च सौम्यै-
रधिष्ठिताश्चापि निरीक्षिता वा॥

लग्नार्थं शुभग्रहराशयो ग्राह्याः, नाशुभग्रहराशयः। तेऽपि शुभग्रहेण युक्ता दृष्टा वा ग्राह्या इत्यर्थः। संप्र. ३७६

[3]शेषैः सुदुष्टः सततं हि काल-
स्तेभ्योऽपि मार्ष्टुं गुरुरप्यशक्तः।
दोषैर्न चाऽऽद्याः सगुणैर्गुणाढ्या-
स्तस्मात्स कालः शुभदः शुभेषु॥

[4]एवं सत्समयं वीक्ष्य शोभनं च समाचरेत्।
मङ्गले दिवसे तस्मिंश्चन्द्रताराबलान्विते॥

[5]कुलीरकांशं परिहृत्य सौम्य-
नवांशका मौञ्जिविधौ प्रशस्ताः।
ते निन्दिताः क्रूरनभश्चराणां
खेटस्य वर्गा अपि चैवमूह्याः॥

[1]न नैधनं नैधनशुद्धिलग्नं
न नैधनर्क्षे न च तन्नवांशः।
न नैधनेशो न तदंशकेशो
लग्ने प्रशस्तो न च रात्रिनाथः॥

[2]मेषे भवति वाक्कुण्ठो वित्तविद्यायुतो वृषे।
युग्मे वेदान्तदर्शी च कुलीरे च षडङ्गवित्॥

[3]शिल्पकर्मरतः सिंहे षष्ठे भवति पण्डितः।
तुलायां वणिजः प्राप्तिः काण्डपृष्ठस्तु वृश्चिके॥

[4]सर्वत्र पूजितश्चापे शूद्रवृत्तिर्मृगे तथा।
राजप्रेष्यो भवेत्कुम्भे मीने वेदान्तपारगः॥

काण्डपृष्ठः शस्त्राजीवी। 'शस्त्राजीवे काण्डपृष्ठा-युधीयायुधिकाः समाः' इत्यमरः। संसौ. १३१

[5]पापग्रहाणां षड्वर्गे न प्रशस्तमितीरितम्।
प्रोक्तेष्वेतेषु सर्वेषु दोषे यदि तदा भवेत्॥
अपवादादिभिर्दोषैर्नाशो यदि शुभैर्भवेत्।
पापग्रहेक्षिते लग्ने जीवितार्थी न कारयेत्।
चन्द्रो वा क्रूरदृग्युक्तो मूढत्वं संप्रयच्छति॥

---

(१) वसं. २९।१; संसौ. ९६.

(२) वसं. २९।४० लग्नाय सौ (लग्नादिसौ) ग्राह्या न (ग्रहा न); संप्र. ३७६. (३) वसं. २९।४१.

(४) वसं. २९।४२ सत्सम (तत्सम); संसौ. १३१ च समाचरेत् (तु समादिशेत्); संप्र. ३८० संसौवत्.

(५) वसं. २९।४३ उत्तरार्धे (ते निन्दिताः क्रूरनभश्चराणां चेद्ग्रमांशा अपि मानवस्य॥); संसौ. १३१-१३२; संप्र. ३७९; संग. ६५५ सौम्यन (सौम्यं न) चैवमू (चैव ग्रा).

(१) वसं. २९।४४ शुद्धि (शुद्ध) वांशः (वांशं) नेशो (नेशं) केशो (केशं) शस्तो (शस्तं); संसौ. १३२; संप्र. ३७९; संग. ६५५ वांशः (वांशकः).

(२) संसौ. १३०; संप्र. ३७७; संग. ६५४.

(३) संसौ. १३०; संप्र. ३७७; संग. ६५४ पृष्ठस्तु (पृष्ठश्च).

(४) संसौ. १३० प्रेष्यो (प्रेक्षो); संप्र. ३७७; संग. ६५४ संसौवत्.

(५) संसौ. १३१.

## नारदः

सौम्यस्वामिकाः सौम्ययुताः सौम्येक्षिता वा लग्नलग्न-नवांशा ग्राह्याः, मेषादीनां लग्नतन्नवांशानां फलानि

[1]शुभलग्ने शुभांशे च नैधने शुद्धिसंयुते ।
लग्ने त्वनैधने सौम्यैः संयुक्ते वा निरीक्षिते ॥

[2]दृष्टे जीवार्कचन्द्राद्यैः पञ्चभिर्बलिभिर्ग्रहैः ।
स्थानादिबलसंपूर्णैश्चतुर्भिर्वा समन्विते ॥

[3]ईक्षिते वा चैकविंशन्महादोषविवर्जिते ।
राशयः सकलाः श्रेष्ठाः शुभग्रहयुतेक्षिताः ॥

[4]शुभा नवांशाश्च तथा ग्राह्यास्ते शुभराशयः ।
न कदाचित्कर्कटांशः शुभेक्षितयुतोऽपि वा ॥

[5]तस्माद्गोमिथुनान्त्याश्वतुलाकन्यांशकाः शुभाः ।
एवंविधे लग्नगते नवांशे व्रतमीरितम् ॥

[6]वाक्कुण्ठः श्रुतिमान् वक्ता जडः क्रूरोऽर्थवान् गुणी ।
क्रूरः पूज्यः खरः प्रेष्यो धीमान् मेषाद्भवेद्वटुः ॥
रव्याद्यंशैः क्रमात्क्रूरो जडः पापरतः पटुः ।
यज्वा च दीक्षितो मूर्खः षड्वर्गेणापि तत्फलम् ॥

## बृहस्पतिः

रविस्वामिकलग्ननिषेधः, शुभाशुभनवांशाः

[1]उपनीतो रवेर्लग्ने हन्यते भूपते रुषा ।
तेन दृष्टे युते लग्ने बहुरोगी द्विजो भवेत् ॥

[2]विद्यान्वितः सदाचारो दानधर्मदयापरः ।
आयुष्मान्धनवांश्चैव सौम्यभृग्वङ्गिरोंशके ॥

भवतीति शेषः । संप्र. ३७९

[3]विद्याहीनं दुराचारं दानधर्मविवर्जितम् ।
आयुःक्षयं च दारिद्र्यं पापांशे व्रतबन्धने ॥

बटुं करोतीति शेषः । संप्र. ३७९

## भरद्वाजः

शुभग्रहैर्युतं दृष्टं वा तथा राशीशस्वामिकं राशिमित्रस्वामिकं वा लग्नं ग्राह्यम्

[4]असत्फलप्रदे राशावपि लग्ने शुभेक्षिते ।
शुभयुक्तेऽपि वा तेषां वदेच्छुभफलानि वै ॥

[5]चन्द्रलग्नं शरीरं स्याल्लग्नं स्यात्प्राणसंमितम् ।
ते उभे संपरीक्ष्यैव कर्तव्यं श्रेय इच्छता ॥

[6]जन्मचन्द्रर्क्षमेशस्य मैत्रमेकाधिपत्यभम् ।
तुङ्गं चापि शुभं विद्यादशुभं रिपुनीचभम् ॥

## अनिर्दिष्टकर्तृकवचनम्

लग्नांशफलानि

[7]*भवेत्क्रूरो जडः पापः पटुर्यज्वा मखान्वितः ।
मूर्खश्चार्कादिभागेषु क्रमेणोदयवर्तिषु ॥

---

(१) ज्योना. २४।२४ ; ज्योनि. १२४ ; संग. ६५४ संयुक्ते ( संयुते ) ; पुम. ४३४.

(२) ज्योना. २४।२५ ; ज्योनि. १२४ दृष्टे जी ( इष्टैर्जी ) समन्विते ( शुभान्वितैः ).

(३) ज्योना. २४।२६ ; संप्र. ३७७ उत्त. ; ज्योनि. १२४ वा चैक ( वाऽत्रैक ) ; संग. ६५४ उत्त., ज्योतिर्निबन्धे.

(४) ज्योना. २४।२७ उत्तरार्धे ( पापग्रहस्य लग्नांशः शुभेक्षितयुतोऽपि वा ॥ ) ; ज्योनि. १२४ शाश्च ( शा न ) ; संग. ६५४ ज्योनिवत्, ज्योतिर्निबन्धे.

(५) ज्योना. २४।२८ श्वतुला ( श्च तुला ) ; ज्योनि. १२४ ; संग. ६५४ ज्योनावत्, ज्योतिर्निबन्धे.

(६) ज्योनि. १२४.

* चकाग्रन्थे अतीवाशुद्धोऽयं श्लोकः पीयूषधारातः शोधितः ।

(१) प्रपा. २१७ ; संप्र. ३७७.

(२) संसौ. १३१ चारो ( चारे ) शके ( शकाः ) : १३७ (=) दयापरः ( परायणः ) ; संप्र. ३७९ ; संग. ६५५ दानधर्मद ( ऽहीनधर्मो द ) शके ( शकः ).

(३) संसौ. १३१ : १३७ (=) ; संप्र. ३७९ च दा ( सदा ) बन्धने ( बन्धनम् ).

(४) संसौ. १३७ ; संप्र. ३८१.

(५) प्रपा. २१३. (६) प्रपा. २१५.

(७) चका. ७५० ज्योतिःशास्त्रे.

## सुरेश्वरः

वर्णभेदेन लग्नभेदः

[1]वृषभश्च तुला कन्या ब्राह्मणानामुदाहृताः ।
सिंहो धन्वी तथा मीनः क्षत्रियाणां प्रकीर्तिताः ।
युग्मं तथा कर्कटको वैश्यानां परिकीर्तितः ॥

## नृसिंहः

गुरुशुक्रबुधानामुदये तेषां लग्नानि शुक्लपक्षे चन्द्रलग्नं चेति शस्तानि, गुरुशुक्रलग्नयोः फले, गुरुशुक्र-बुधांशाः तद्दृष्टा वा अंशाः प्रशस्ताः, चन्द्रांशो मध्यमः

[2]गुरुशुक्रोदये शस्तमनस्तस्य बुधस्य च ।
पूर्वपक्षे विधोः शस्तं नेतरेषां द्विजन्मनि ॥
[3]जीवोदये नृपद्वाःस्थो दीर्घायुर्धनवान् महान् ।
सितोदये महाज्ञानी वित्तवानायुषो गुणी ।
उपनीतौ समादेश्यमेवं ग्रहवशात्फलम् ॥

अथ स्वाम्युदयविशेषेण लग्नफलनिर्णयः । तत्र नृसिंहः– गुरुशुक्रोदय इति । संप्र. ३७७

[4]जीवभार्गवसौम्यानां वारवर्गोदयांशकान् ।
ईक्षणं च प्रशंसन्ति चान्द्रं सर्वे च मध्यमम् ॥

अत्रांशकशब्दो नक्षत्रांशेषु वर्तते । अतो गुरुबुधशुक्रांशकेष्वेवोपनयनं कर्तव्यम् । प्रपा. २१६

## श्रीपतिः

लग्नांशानां फलानि

[5]शन्यंशे ह्युदयति मूर्खताऽर्कभागे
क्रूरत्वं भवति च पापधीः कुजांशे ।
चन्द्रांशे त्वतिजडता बुधे पटुत्वं
यज्वत्वं गुरुभृगुभागयोर्गृणन्ति ॥

(१) मपा. १९.

(२) प्रपा. २१७ ; संप्र. ३७७ ; संग. ६५४.

(३) प्रपा. २१७ नृपद्वाःस्थो दी ( तु यज्वा स्याद्दी ) युषो ( युषी ) ; संप्र. ३७७.

(४) प्रपा. २१६.

(५) संप्र. ३८७.

## राजमार्तण्डः

द्वादशानां मेषादिलग्नानां फलानि

[1]मेषे भवति रुजाऽऽर्तो
धीमान् गवि रोगशोकपरिहीनः ।
गदवान्मन्मथलग्ने
विधुरो दुःखी कुलीरे च ॥

[2]करिकुलवैरिणि बलवान्
विद्यावानेव योषिति क्रूरः ।
सुभगः सुखोपभोक्ता
तौलिनि कीटे विनाशमुपयाति ॥

[3]धनुषि धनाढ्यः श्रेयान्
यादसि सघटे धनैः परित्यक्तः ।
षट्कर्माभिरतः स्या-
न्मीने धनवान्प्रवक्ता च ॥

## श्रीधरीये

मेषादिलग्नफलानि, असत्फलमपि लग्नं शुभग्रहैर्युक्तं दृष्टं वा ग्राह्यम्

[4]जडत्वं मेषलग्ने स्याद्विद्वान् श्रीमान्वृषोदये ।
नृयुग्मलग्ने ज्ञानी स्यात्सषड्ङ्गश्च कर्कटे ॥
बहुशिल्पो हरेर्लग्ने पण्डितः कन्यकोदये ।
तुलोदये वणिग्जीवी वृश्चिके काण्डपृष्ठभृत् ॥
सर्वैः संपूज्यते चापे मकरे शूद्रतां व्रजेत् ।
नृपप्रेष्यो घटे लग्ने वेदशास्त्रार्थविज्झषे ॥
असत्फलप्रदे राशावपि लग्ने शुभेक्षिते ।
शुभयुक्तेऽथवा तेषां शुभमेव फलं विदुः ॥

(१) मपा. १९ रुजाऽऽर्तो ( सुरापो ) दुःखी ( ऽधीरः ) सुरेश्वरः ; संसौ. १३४.

(२) मपा. १९ सुरेश्वरः ; संसौ. १३४ वान्नेव ( वाने च ).

(३) मपा. १९ सुरेश्वरः ; संसौ. १३५ सघटे ( च घटे ).

(४) प्रपा. २१७.

## मुहूर्तचिन्तामणिः

लग्नांशफलानि

[1]क्रूरो जडो भवेत्पापः पटुः षट्कर्मकृद्वटुः ।
यज्ञार्थभाक्तथा मूर्खो रव्याद्यंशे तनौ क्रमात् ॥

(१) मुचि. ५।४९ ; संग. ६५५ ; संब. १००.

व्रतबन्धलग्ने रव्याद्यंशफलमनुष्टुभाऽऽह— क्रूर इति । षट्कर्माणि अध्ययनाध्यापनयजनयाजनदानप्रतिग्रहाः । तथा सति वृषमिथुनकन्यातुलाधनुर्मीनांशा ग्राह्या इति निष्कृष्टोऽर्थः ।

पीटी.

## वसिष्ठः

सूर्यादिनवांशगतचन्द्रफलानि, स्फूर्जित-कुजित-रुधिर-रन्ध्र-ग्राससंज्ञकदोषस्वरूपं तत्फलानि च, द्वादशभावस्थितग्रहफलानि, केचिच्छुभयोगाः

[1]सूर्यांशकगते चन्द्रे महापातककृद् व्रती।
पुण्योपजीवी स्वांशस्थे नीचे निःस्वः खलो भवेत् ॥

[2]श्रवणादितिकर्कांशसंस्थिते यदि शीतगौ।
विद्यावान् धनवाञ् छ्रीमान् वृत्तवाञ् जायते व्रती ॥

[3]कुजांशकगते चन्द्रे शस्त्रजीवी खलो व्रती।
बुधांशकगते चन्द्रे वेदवादी भवेद्वटुः ॥

[4]जीवांशकगते यज्वा साङ्गवेदविशारदः।
शुक्रांशगे धनी दाता विद्यावित्तविशारदः ॥

[5]क्षिप्रोद्वाही यज्ञकृत्स्यात्सत्रदो भोगवान् भवेत्।
सौरांशकगते चन्द्रे सदा चाण्डालसेवकः ॥

(१) वसं. २९।२५ ; संसौ. १३६ जीवी (सेवी) चतुर्थपादे (नीचांशे खलः सदा) ; संप्र. ३८० उत्तरार्धे (पुण्योक्तसेवी स्वांशस्थे नीचांशस्थः खलः सदा ॥) ; संग. ६५५ उत्तरार्धे (पुण्योक्तसेवी स्वांशस्थे नीचांशस्थः खलस्तदा ॥).

(२) वसं. २९।२६ वृत्तवाञ् जायते (व्रतवान् भोगवान्) ; संसौ. १३६ ; संप्र. ३८०.

(३) वसं. २९।२७ ; संसौ. १३६–१३७ खलो व्रती + (सौरांशकगते चन्द्रे सदा चण्डालसेवकः।) वादी भवेद्वटुः (वेदी भवेद्बुधः) ; संप्र. ३८० वादी भवेद्वटुः (वेदी भवेद्द्विजः) शेषं संसौवत् ; संग. ६५५ (कुजांशकगते चन्द्रे वेदवेदी भवेद्द्विजः ॥).

(४) वसं. २९।२८ ; संसौ. १३७ यज्वा (चन्द्रे) शगे (शके) ; संप्र. ३८० वित्त (वृत्त) शेषं संसौवत् ; संग. ६५५ संसौवत्.

(५) वसं. २९।२९ ; संसौ. १३७ उत्तरार्धं क्रमभेदेन पूर्वं गतम् ; संप्र. ३८० संसौवत् ; संग. ६५५ पू.

[1]शुक्ले स्वांशे निशानाथे वित्तवान्यज्ञकृद्भवेत्।
कृष्णे स्वांशगतश्चन्द्रो जातिभ्रंशं करोति च ॥

[2]प्रालेयरश्मौ यदि लग्नसंस्थे
बलक्षपक्षेऽपि भवेत्स रोगी।
व्रती च सौम्यग्रहवर्गगेऽपि
खलोऽतिनिःस्वः श्रुतिकर्महीनः ॥

[3]दृष्टाः पञ्च ग्रहा यस्य राशेस्तल्लग्नसंज्ञकम्।
रविचन्द्रेज्यमुख्यास्ते चत्वारो वा बलान्विताः ॥

[4]नीचस्थिताः शत्रुगृहस्थिताश्च
पराजिताश्चास्तमुपागताश्च।
लग्ने ग्रहास्ते स्वफलं प्रदातुं
क्षमा न किंचिद्रिपुदृष्टदेहाः ॥

[5]सूर्यभौमशनिराहुकेतवः
क्रूरसंज्ञखचराः क्षयेन्दुना।
पूर्णचन्द्रगुरुशुक्रसोमजाः
सर्वकर्मसु हि सौम्यखेचराः ॥

[6]रवौ लग्नादिकेन्द्रस्थे दोषाः स्फूर्जितसंज्ञकाः।
तत्रोपनीतस्य शिशोः कुलनाशो भवेत्तदा ॥

(१) संसौ. १३७ ; संप्र. ३८० ; संग. ६५५ गतश्चन्द्रो (गते चन्द्रे).

(२) वसं. २९।४५ ; संसौ. १३२ च (न) ; संप्र. ३८० च (न).

(३) वसं. २९।४६ स्तल्लग्नसंज्ञकम् (स्तद्ग्रहसंज्ञके) ; संसौ. १३२ ; संप्र. ३७७ ; संग. ६५६.

(४) वसं. २९।४७ मुपागताश्च (मिता ग्रहेन्द्राः) ; संसौ. १३२ ; संप्र. ३७७ ; संग. ६५६.

(५) वसं. २९।४८ ; संसौ. १३२ क्षयेन्दुना (क्षयचन्द्रः) कर्मसु हि सौ (सौम्यसहसौ) ; संप्र. ३७८ संसौवत्.

(६) वसं. २९।४९ ; संसौ. १३२ द्वितीयपादे (दोषः स्फुरितसंज्ञकः) ; संप्र. ३७८ संसौवत् ; संग. ६५७ संसौवत्.

¹कुजे लग्नादिकेन्द्रस्थे दोषः कुजितसंज्ञकः ।
तत्रोपनीतं बटुकं हन्ति वर्षान्न संशयः ॥
²शनौ लग्नादिकेन्द्रस्थे दोषो रुधिरसंज्ञकः ।
करोति महतीं पीडां व्रतिनो वा गुरोश्च वा ॥
³राहौ लग्नादिकेन्द्रस्थे दोषो रन्ध्राह्वयो भवेत् ।
व्रतिनो जननीं हन्ति त्वथवा धनसंचयम् ॥
⁴केतौ लग्नादिकेन्द्रस्थे दोषश्च ग्राससंज्ञकः ।
समग्रं व्रतिनां वृत्तं वित्तं विद्यां विनाशयेत् ॥
⁵लग्नषष्ठाष्टमान्त्यस्थः करोति च निशाकरः ।
व्रतिनो रोगमधनं निधनं दुःखसंचयम् ॥
⁶बुधो लग्नगतो जीवः शुक्रो वाऽप्यथ शास्त्रपः ।
करोति व्रतिनं नूनं व्रतविद्याविशारदम् ॥

(१) वसं. २९।५० द्वितीयपादे ( दोषाः स्फूर्जितसंज्ञकाः ) बटुकं (कौमारं) ; संसौ. १३२ ; संप्र. ३७८ ; संग. ६५७.

(२) वसं. २९।५१ ; संसौ. १३३ रुधिर ( रुदित ) गुरोश्च वा ( गुरोस्तथा ) ; संप्र. ३७९ संसौवत् ; संग. ६५७ अत्र 'शनौ' इति पदवर्जं ग्रन्थः प्रमादात् गलित इति भाति.

(३) वसं. २९।५२ चतुर्थपादे ( चार्थं वा न च संशयः ) ; संसौ. १३३ व्रतिनो ( व्रतिनां ) ; संप्र. ३७९ संसौवत् ; संग. ६५७ अत्र 'राहौ' इति पदस्य स्थाने 'शनौ' इति पूर्वश्लोकादिमपदं प्रमादात् पठितम् .

(४) वसं. २९।५३ ग्रास ( उग्र ) उत्तरार्धे ( समग्रं व्रतिनो वित्तव्रतविद्याविनाशनम् ॥ ) ; संसौ. १३३ वित्तं विद्यां ( वित्तविद्या ) ; संप्र. ३७९ उत्तरार्धे (समग्रव्रतिनां वृत्तवित्तविद्या विनाशयेत् ॥ ) ; संग. ६५७ समग्रं व्र ( समग्रव्र ).

(५) वसं. २९।५४ निधनं ( निर्धनं ) ; संसौ. १३३ करोति च ( करोत्येव ) मधनं ( मिथुनं ) ; संप्र. ३७९ संसौवत् ; संग. ६५८ लग्नष ( लग्ने ष ) शेषं संसौवत् .

(६) वसं. २९।५५ ; संसौ. १३३ (बुधे लग्नगते जीवे सशुक्रेऽप्यथवा स्थिते । करोति व्रतिनं नूनं वित्तविद्यासुखान्वितम् ॥ ) ; संप्र. ३७८ ( बुधे लग्नगते जीवे शुक्रे चाप्यथवा स्थिते । करोति व्रतिनं नूनं वित्तविद्यासुखान्वितम् ॥ ) ; संग. ६५७ संप्रवत् .

¹द्वितीयस्था ग्रहाः सौम्याः सौख्यारोग्यबलप्रदाः ।
तत्र पापग्रहाः सर्वे नूनं तत्फलनाशदाः ॥
²तृतीयस्थाः शुभाः पापा व्रतविद्याधनप्रदाः ।
चतुर्थस्थानगाः सौम्याः संपद्भोगसुखप्रदाः ॥
³पञ्चमस्थानगाः सौम्या नृपपूजार्थसिद्धिदाः ।
तत्र पापग्रहाः सर्वे सदा तत्फलनाशनाः ॥
⁴षष्ठस्थाः खेचराः सौम्या दुःखशोकभयप्रदाः ।
तत्रस्थाः क्रूरखचराः सदा तत्फलनाशनाः ॥
⁵लग्नात्सप्तमगाः सौम्या वित्तविद्यासुखप्रदाः ।
सर्वे ग्रहाश्चाष्टमस्था निधनाधनशोकदाः ॥
⁶नवमे सौम्यखचरा वित्तायुष्यसुखप्रदाः ।
तत्र पापाः सौम्यखेटकृततत्फलनाशकाः ॥
⁷सौम्याः कुर्वन्ति दशमे वृत्तविद्याधनान्वितम् ।
सर्वे ग्रहाश्च लाभस्थाः कुर्वन्त्यभिमतं फलम् ॥

(१) वसं. २९।५६ ; संसौ. १३३ द्वितीयपादे ( सौख्यभोगकराः सदा ) पू. ; संप्र. ३७८ चतुर्थपादे ( सर्वस्वफलनाशनाः ) शेषं संसौवत् ; संग. ६५७ द्वितीयपादे ( सौख्यभोगकरास्तदा ) शेषं संप्रवत् .

(२) वसं. २९।५७ सुख ( धन ) ; संसौ. १३३ उत्त. ; संप्र. ३७८ द्वितीयपादे ( वित्तभोगकराः सदा ) ; संग. ६५७ संप्रवत् .

(३) वसं. २९।५८ तत्फलनाशनाः (सत्फलनाशदाः) ; संसौ. १३३-१३४ नाशनाः ( नाशकाः ) ; संप्र. ३७८ ; संग. ६५७.

(४) वसं. २९।५९ खेचराः ( खचराः ) नाशनाः ( नाशदाः ) ; संसौ. १३४ ; संप्र. ३७८ ; संग. ६५७.

(५) वसं. २९।६० वित्त ( व्रत ) ; संसौ. १३४ तृतीयपादे ( सर्वग्रहा अष्टमगा ) ; संप्र. ३७८ संसौवत् ; संग. ६५७ संसौवत् .

(६) वसं. २९।६१ सुख ( शुभ ) ; संसौ. १३४ चतुर्थपादे (फलस्यैव विघातदाः) ; संप्र. ३७८ संसौवत् ; संग. ६५७ चतुर्थपादे ( फलस्यैव विघातकाः ).

(७) वसं. २९।६२ वृत्त ( वृत्ति ) ; संसौ. १३४ पू. ; संप्र. ३७८ पू. ; संग. ६५७ पू.

[1]व्ययस्थानस्थिताः सर्वे कुर्वन्ति व्यय-
शीलिनम् ।
खलं नीचं पापरतं बुद्धिहीनं विदेशगम् ॥
[2]द्वादशस्थं रविं भौमः पश्यन्नाचार्यनेत्रहा ।
बलिनं बलवान्नूनमचिरात्तु न संशयः ॥
[3]विशेषान्निधनस्थाने ग्रहा नेष्टा व्रतादिषु ।
आचार्यमशुभा घ्नन्ति शिष्यं घ्नन्त्यशुभेतराः ॥
[4]चन्द्रात्स्मरारिरन्ध्रेषु यद्येकस्मिन् शुभग्रहे ।
स्थिरधीयोगसंज्ञोऽयं शुभयोगो द्वि-
जन्मनाम् ॥
[5]केन्द्रत्रिकोणगे जीवे भानुः शुक्रोऽथवा व्यये ।
द्वितीये ज्ञे शुभो योगो द्विजानामुपनायने ॥
लग्नार्थभ्रातृगे जीवे शुक्रे वा ज्ञेऽथ कण्टके ।
त्रिषडेकादशे क्रूरा योगोऽयं व्रत उत्तमः ॥

## नारदः

अंशविशेषगतचन्द्रफलानि, भावविशेषगतशुभाशुभग्रह-
फलानि, लग्नगतचन्द्रनिषेधः, स्फूर्जितकूजित-
रुदितरन्ध्रोग्रयोगानां स्वरूपाणि फलानि च

[6]शुभांशकगते चन्द्रे व्रती विद्याविशारदः ।
पापांशगे स्वांशगे वा दरिद्रो नित्यदुःखितः ॥
[7]श्रवणादितिनक्षत्रे कर्कांशस्थे निशाकरे ।
तदा व्रती वेदशास्त्रधनधान्यसमृद्धिमान् ॥

[1]त्रिषडायगतैः पापैः षडष्टान्त्यविवर्जितैः ।
शुभैः षष्ठाष्टलग्नान्त्यवर्जितेन हिमांशुना ॥
स्वोच्चसंस्थोऽपि शीतांशुर्व्रतिनो यदि लग्नगः ।
तं करोति शिशुं निःस्वं सततं क्षयरोगिणम् ॥
[2]स्फूर्जितं केन्द्रगे भानौ व्रतिनो वंशनाशनम् ।
कूजितं केन्द्रगे भौमे शिष्याचार्यविनाशनम् ॥
[3]करोति रुदितं केन्द्रसंस्थे मन्देऽतुलान् गदान् ।
लग्नात्केन्द्रगते राहौ रन्ध्रं मातृविनाशनम् ॥
[4]उग्रं केन्द्रगते केतौ तातवित्तविनाशनम् ।
पञ्चदोषेतरल्लग्नं शुभदं चोपनायने ॥

## बृहस्पतिः

सुनफानफादुरुधराख्ययोगानां स्वरूपं शुभत्वं
च, नानाविधाः शुभयोगाः

[5]चन्द्रादर्थे व्यये वाऽपि तथैवोभयतो ग्रहाः ।
सुनफाऽनफा चैव योगा दुरुधराः शुभाः ॥
चन्द्रात्स्मरारिरन्ध्रेषु यद्येकस्मिन् शुभग्रहे ।
स्थितेऽधियोगसंज्ञः स्याच्छुभयोगो द्विजन्मनि ॥
मीने स्वांशगते लग्ने वृषे तत्त्वकला बुधे ।
सर्वेऽपि तुङ्गगाः शुभदाः शुभयोगो द्विजन्मनि ॥
तत्त्वकला पञ्चविंशतितमी लिप्ता । प्रपा. २१८
जीवेन्दू कर्कगौ लग्ने सितज्ञौ मेषगे रवौ ।
वृषांशेऽन्ये त्रिषष्ठाये काले कुर्याद्द्विजन्म तत् ॥
अनिष्टस्थानगो यश्च तस्य चाष्टकवर्गके ।
तद्युक्तराशिर्बह्वक्षः सोऽसौ दोषं न यच्छति ॥
एते शुभप्रदा योगा द्वितीये जन्मनीरिताः ।
सत्स्वप्यत्यन्तदोषेषु शुभं दद्युर्निजैर्बलैः ॥

---

(१) वसं. २९।६३ ; संसौ. १३४ ( व्ययस्थान-स्थिताः० ) नीचं ( हीनं ) ; संप्र. ३७८ नीचं (हीनं) ; संग. ६५७ शीलि ( शालि ) नीचं ( हीनं ).

(२) वसं. २९।६४ ; संसौ. १३९ चिरात्तु न ( चिरान्नात्र ) ; संप्र. ३८२ संसौवत् .

(३) संसौ. १४० ; संप्र. ३८२.

(४) संसौ. १४० ग्रहे ( ग्रहैः ) ; संप्र. ३८२.

(५) संसौ. १४० ; संप्र. ३८२.

(६) ज्योना. २४।२२ शुभांशकगते ( तस्माच्छुभांशगे ) पापांश ( पापाष्ट ) ; ज्योनि. १२४ शुभांशकगते ( तस्माद्वेदांशगे ) ; बाल. १।१४ पृ. ६५.

(७) ज्योना. २४।२३ कर्कांश ( कर्क्यंश ) ; ज्योनि. १२४ ज्योनावत् ; बाल. १।१४ पृ. ६५ ; संग. ६५२ कर्कांशस्थे ( कर्मसंस्थे ).

(१) ज्योना. २४।२९–३० ; ज्योनि. १२४, १२५.

(२) ज्योना. २४।३१ ; ज्योनि. १२५ संग्रहे ; संव. १००.

(३) ज्योना. २४।३२ रन्ध्रं मातृ ( रन्ध्रमात्र ) ; ज्योनि. १२५ संग्रहे.

(४) ज्योना. २४।३३ तरल्लग्नं ( तरं लग्नं ) चोप ( नोप ) ; ज्योनि. १२५ तात ( वृत्त ) संग्रहे.

(५) प्रपा. २१८.

यथोक्तकालदौर्लभ्याद्योगान् वच्मि शुभप्रदान् ।
द्विजन्मकालसंभूतदोषाणां कुलनाशनान् ॥
केन्द्रे त्रिकोणे वा जीवे भानौ शुक्रेऽथवा व्यये ।
द्वितीये वे शुभो योगो द्विजानां चोपनायने ॥
लग्नार्थभ्रातृगे शुक्रे जीवो वाऽन्योऽथ कण्टके ।
त्रिषडेकादशे पापे न कोऽप्यष्टमगो यदि ॥
गुरौ केन्द्रे भवे भानौ चन्द्रे शुभनवांशके ।
शुभग्रहदृशा युक्तः शुभराश्युदयो यदि ॥
भृगौ मीने वृषे चापे जीवे केन्द्रत्रिकोणगे ।
कर्किचापझषस्थेऽस्मिन् योगः शुभग्रहोदये ॥
दशमायोदयान् याताः शुक्रभान्विन्दुजाः क्रमात् ।
चन्द्रे शुभनवांशस्थे योगः स्यादौपनायने ॥
बुधार्कशुक्राः कर्मायलग्नगाः क्रमशो बली ।
चन्द्रः शुभांशगो योगो द्विजन्मनि शुभोदये ॥
मेषगोकर्कटान् याता भानुशुक्रेन्दवः क्रमात् ।
यमोदये भवेद्योगो द्विजोपनयने शुभः ॥

यमः मिथुनम् । प्रपा. २१८

जीवे शुक्रेऽथवा मीने लग्ने भवगते रवौ ।
व्यये कर्मणि वा सौम्ये शुभयोगो द्विजन्मनि ॥
[1]चन्द्रलग्नेऽमिशस्तः स्यात्क्षयरोगी सितेतरे ।
शुक्लपक्षे भवेद्यज्वा स्वमे तुङ्गे विशेषतः ॥

कश्यपस्तूच्चस्थं सदैव न्यषेधीत्– ' वर्धमानोऽपि वा पूर्णश्चन्द्रो वा यदि तुङ्गगः । निःस्वं करोति व्रतिनं लग्नगः क्षयरोगिणम् ॥ ' इति । अनयोः पक्षयोर्देशाचारतो व्यवस्था । स्वगृहगतस्तूत्तम एव मतद्वये । संव. ९७

[2]लग्ने हिमांशुर्यदि शुक्लपक्षे
स्तम्भप्रतिष्ठाव्रतबन्धकाले ।
आयुःसहस्रं हि निकेतनानां
नृणां सदावृत्तिविवृद्धिहेतुः ॥

(१) ज्योनि. १२५ चन्द्रलग्ने ( चन्द्रोदये ) शुक्लपक्षे ( सिते पक्षे ) ; संव. ९७.

(२) ज्योनि. १२५.

### भरद्वाजः

भावफलप्रशंसा, ग्रहयोगविशेषः

[1]सीमन्तजन्मचौलोपनीतियात्राप्रवेशने ।
अभिषेके विवाहे च शस्तं भावफलं विदुः ॥
[2]अप्यष्टमारिरिष्फर्क्षे क्षेत्रेशस्योक्तलक्षणाः ।
शुभैर्दृष्टाश्च युक्ता वा कर्मणां शुभदा नृणाम् ॥

### गर्गः

ग्रहयोगशुभाशुभत्वं गोचरेणैव ग्राह्यम् ,
न वामवेधादिना

[3]मौञ्जीबन्धे विवाहे च प्रतिष्ठायां विशेषतः ।
गोचरेणैव कर्तव्यं वेधादिकमकारणम् ॥

वेधं वामवेधप्रयुक्तम् । संको. १२१

### कश्यपः

सूर्यादिग्रहाणां द्वादशसु भावेषु फलानि,
पञ्चमभावशुद्धिप्रशंसा

[4]भास्करो लग्नगः कुर्याद्वटुं भूपतिसेवकम् ।
वसुस्थः स्वर्णरहितं भ्रातृस्थः सुखिनं सदा ॥
[5]बन्धुगो दुःखिनं नित्यं सुतगो मतिवर्जितम् ।
शत्रुगो रोगरहितं सप्तमो भोगवर्जितम् ॥
[6]अष्टमो दृष्टिरहितं नवमो धर्महारिणम् ।
व्यापारगो भिषग्वृत्तिं दीर्घायुषमथाऽऽयगः ॥
[7]रिष्फगो हानियुक्तं च फलमेतद्गुरोरपि ।
सिते चन्द्रे लग्नसंस्थे शुभं स्यादसितेऽशुभम् ॥

(१) संसौ. १३७ ; संप्र. ३८१.

(२) प्रपा. २१५.

(३) संसौ. १०५ ; संको. १२१ वेधादिक ( वैधं बल ) राजमार्तण्डः ; संव. ९८ मौञ्जी ( व्रत ) ; संर. १७५ पू. , राजमार्तण्डः .

(४) संसौ. १३८ ; संप्र. ३८१ ; संग. ६५५.

(५) संसौ. १३८ मति ( गति ) ; संप्र. ३८१ ; संग. ६५५.

(६) संसौ. १३८ ; संप्र. ३८१ ; संग. ६५५ व्यापार ( व्ययारि ).

(७) संसौ. १३८ ; संप्र. ३८१ ; संग. ३५६.

[1]वसुगे स्याद्धनप्राप्तिस्तृतीये सुखसंस्थितिः।
चतुर्थे बुद्धिवैषम्यं पञ्चमे सौख्यमुत्तमम् ॥
[2]षष्ठे तु व्याधिपीडा स्यात्सप्तमे सुखसंगतिः।
अष्टमे निधनप्राप्तिर्नवमे धर्मसंचयः ॥
[3]दशमे स्यात्सदाचारो लाभे स्याद्धनसंचयः।
दारिद्र्यं रिष्फगे विद्याच्चन्द्रे फलमुदाहृतम् ॥
[4]मृतिर्नाशः सुखं काणो हानिर्वृद्धिर्मृतिर्गदः।
अधर्मो दुर्मतिर्वृद्धिर्नाशो लग्नात्कुजे फलम् ॥
[5]बुद्धिर्वृद्धिर्वित्तनाशो लाभः पुत्रो मृतिः सुखम्।
आयुःक्षयो धर्मसौख्ये कोशलाभः क्षयः क्रमात् ॥
[6]सौम्ये लग्नादिराशीनां फलमेतदुदाहृतम्।
षष्ठाष्टमे विना जीवः सर्वत्र शुभकृत्सदा ॥
[7]सर्वत्र शुभकृच्छुक्रः षष्ठसप्ताष्टमं विना।
निन्दां हानिं सुखं रोगं द्यूतं कामं जडं
मृतिम्।
विपत्क्लेशौ सुखं मृत्युमुदयात्कुरुते शनिः ॥
[8]मेखलाबन्धकाले तु सर्वथा पञ्चमं गृहम्।
शुभयुक्तं प्रशंसन्ति तदालोकितमेव वा ॥
*[9]वर्धमानोऽपि वा चन्द्रः पूर्णो वा यदि तुङ्गगः।
निःस्वं करोति व्रतिनं लग्नगः क्षयरोगिणम् ॥

* व्याख्यानं 'चन्द्रलग्ने' इति बृहस्पतिवचनव्याख्याने द्रष्टव्यम्।

(१) संसौ. १३८ पू.; संप्र. ३८१; संग. ६५६.
(२) संसौ. १३८ उत्त.; संप्र. ३८१; संग. ६५६.
(३) संसौ. १३८ चयः (ग्रहः); संप्र. ३८१; संग. ६५६ चारो (चारी) चयः (ग्रहः) विद्या (विन्द्या).
(४) संसौ. १३८ र्नाशः (र्नाशं); संप्र. ३८१; संग. ६५६ संसौवत्.
(५) संसौ. १३९; संप्र. ३८१; संग. ६५६ सुखम् (सुखी).
(६) संसौ. १३९; संप्र. ३८२; संग. ६५६.
(७) संसौ. १३९; संप्र. ३८२; संग. ६५६ षष्ठसप्ता (सप्तषष्ठा).
(८) संसौ. १३९; संप्र. ३८२; संग. ६५६.
(९) संब. ९७.

## अनिर्दिष्टकर्तृकवचनानि

पञ्चमभावशुद्धिः, चन्द्रनवांशफलानि, सूर्यादीनां द्वादशसु भावेषु फलानि, इष्टानिष्टभावफलापवादाः, दृष्टिविशेषफलानि

[1]गृहप्रवेशे हिबुकं मौञ्जीबन्धे तु पञ्चमम्।
विवाहे वर्जयेद् द्यूनं यात्राकाले तथाऽष्टमम् ॥
क्रूरयोगादिदूषितमिति पूर्वतोऽनुवर्तनीयम्।
* संसौ. १३९

[2]सूर्यांशकयुते चन्द्रे शस्त्रजीवी भविष्यति।
कृष्णे स्वांशे निशानाथे प्रतिषिद्धस्य सेवकः ॥
सिते पक्षे विधौ स्वांशे सोमपः स्या-
च्छिशुर्बुधः।
भौमस्यांशे निशानाथे ह्यभिशस्तो भवेद्बटुः ॥
बुधांशकगते चन्द्रे द्विजन्मनि बटोः शुभम्।
अनस्तगे बुधे वेदविद्वान्स्याच्छास्त्रपारगः ॥
गुरोरंशगते चन्द्रे द्विजन्मनि बटोः शुभम्।
आयुर्धीज्ञानयज्ञादि जीवः शास्त्रार्थवित्ततः ॥
शुक्रांशकगते चन्द्रे द्विजानां तु द्विजन्मनि।
वेदवेदाङ्गशास्त्रार्थज्ञानायुःश्रीविवर्धनम् ॥
चन्द्रे शनैश्चरांशस्थे दुर्वृत्तः पापकृद्बटुः।
यद्यंशेशः स्ववर्गस्थो द्विगुणं त्रिगुणं फलम् ॥
[3]द्वितीयेऽर्के धनैर्हीनस्तृतीये च सुखी बटुः।
चतुर्थे देहनाशः स्यात्पञ्चमे ज्ञाननाशनम् ॥
षष्ठे शत्रुविनाशः स्यात्सप्तमे व्याधिदो रविः।
अष्टमे मृत्युदो भानुर्नवमे वित्तनाशनः ॥
दशमे विजयारोग्यदाताऽऽयुष्यप्रदो भवे।
द्वादशे वित्तनाशाय स्थितो भानुर्विलग्नतः ॥
एवं फलं बटोर्दद्याद्भानुर्वाऽत्राथ शीतगोः।
औपनायनिके काले शिशोर्जन्मोपनायने ॥

* संप्र., संग. संसौवत्।

(१) संसौ. १३९; संप्र. ३८२ संहितान्तरे; संग. ६५६ संहितान्तरे.
(२) प्रपा. २१६. (३) प्रपा. २१७–२१८.

चन्द्रोदयेऽभिशस्तः स्यात्क्षयरोगी सितेतरे।
सिते पक्षे बहुज्ञः स्याद्धर्मवान्यज्ञकृत्सुखी ॥
द्वितीये शान्तिदश्चन्द्रस्तृतीये भोगसौख्यदः।
आर्जवं च चतुर्थस्थः पञ्चमे शुभदो भवेत् ॥
व्याधिप्रदोऽथ षष्ठे स्यात्प्रीतिदः सप्तमे स्थितः।
अष्टमे व्याधित(?द)श्चन्द्रो नवमे धर्मदः शिशोः ॥
दशमेऽतीव पूज्यत्वं मोदमेकादशे शशी।
द्वादशेऽतिप्रमादं च कुर्याल्लग्नाद् द्विजन्मनि ॥
भूमिपुत्रोदये सद्यो मृत्युः स्याच्छ्लग्नतः शिशोः।
वैवर्ण्यदः कुजोऽर्थस्थः सौख्यं भ्रातृगतश्च सः ॥
अङ्गतापं चतुर्थस्थः पञ्चमेऽप्यापदं ददत्।
वृद्धिं षष्ठे कुजो दद्यात्सप्तमेऽवज्ञदः कुजः ॥
व्याधिं मृत्युं कुजो मृत्यौ शोकं च नवमं गतः।
दशमे भयदो भौमो भवे सर्वशुभप्रदः।
द्वादशे हानिदो नृणामौपनायनिकर्क्षतः ॥
बुधः सर्वर्क्षगः सौख्यबुद्धिवित्तान्वितं शिशुम्।
शास्त्रार्थपारगं कुर्याद्विना षष्ठाष्टमं सदा ॥
सर्वत्र शुभकृज्जीवः पुत्रारोग्यायुषे सदा।
शास्त्रार्थपारगं कुर्याच्छिशोरष्टारिमे विना ॥
शुक्रश्च सर्वभावस्थः सर्वसंपत्समृद्धिदः।
षष्ठाष्टमस्मरान्मुक्त्वा शिशोर्लग्नाद्द्विजन्मनि ॥
अर्कात्मजोदये दोषैरभिशस्तोऽतिपातकैः।
द्वितीये भास्करिर्हानिं तृतीये सर्वसंपदः ॥
रोगितां च चतुर्थस्थः पञ्चमे मूढतां शनिः।
षष्ठे सत्त्वं कलाज्ञत्वं सप्तमे रोगदो भवेत् ॥
अष्टमे मरणं दद्यान्नवमे च विपत्प्रदः।
क्लेशं च दशमे मन्दः सौख्यमाये व्यये व्ययम् ॥
राहूदये तु हीनाङ्गो महाकुलविनाशनः।
द्वितीये मोक्षदो राहुस्तृतीये लाभदः शिशोः ॥
चतुर्थे भ्रंशदो देशात्पञ्चमे चोरभावदः।
षष्ठे सर्वश्रियं प्राहुः शा(?रा)स्ततः सप्तमे शिशोः ॥
अष्टमे तु विषान्मृत्युर्नवमे विबलं तथा।
दशमे पापिनं क्रूरं भवे कुर्यान्महासुखम् ॥
व्यये भ्रंशं शिशोर्लग्नादौपनायनिकात्सदा।
केतूदये तु कुष्ठी स्यादुपरागसमीपतः ॥ *
पापग्रहेक्षिते लग्ने जीवितार्थी न कारयेत्।
चन्द्रश्च पापदृष्टश्चेन्मूढत्वं संप्रयच्छति ॥
अष्टमस्थान्ग्रहान्सर्वान्सदा नेच्छन्ति पण्डिताः।
विना स्वतुङ्गस्वर्क्षादिवर्गस्थान्बलिनो ग्रहान् ॥
एवं भावफलं प्रोक्तं ग्रहाणां लग्नराशितः।
इष्टानिष्टफलं वच्मिन्ब्राह्मणा ब्रह्मचारिणः ॥
अनिष्टस्थानगा एते स्वापवादैः शुभं फलम्।
दद्युस्ते गदितं शास्त्रे पितामहमुखोदिते ॥
अनिष्टस्थानगोऽप्यत्र ग्रहः कोऽपि न दोषकृत्।
शुभदृष्टियुतः प्राणी(?) शुभवर्गे यदि स्थितः ॥
विद्यां प्राप्तां नाशयेतां मन्दभौमौ द्वितीयगौ।
अन्योन्यमथवा दृष्टौ द्वादशस्थौ तु बन्धदौ ॥
अर्के लग्नाद्व्ययर्क्षस्थं यदि भौमो निरीक्षते।
बलवानचिरादन्धं गुरुं च विबलश्चिरात् ॥
व्ययस्थं रविमार्किर्वा स्वदृष्ट्या यदि पश्यति।
शिष्यविद्यां हरेत्प्राणी विबलो रोगदः शिशोः ॥
पापाः पापैर्युता दृष्टाः शुभदृष्टिविवर्जिताः।
पापं शिशोः प्रयच्छन्ति विपरीते सुशोभनम् ॥
चन्द्रश्च शुभसंदृष्टः पापदृष्टिविवर्जितः।
शुभमेव फलं दद्याद्विपरीते तथेतरत् ॥
[1]षट्कर्मकृत्प्रवरधीः सुरराजपूज्यः
स्याद्दीक्षितो भृगुसुतेऽतिसुखी धनी च।
अध्यापकः शशिसुते रविजेऽन्त्यसेवी
राजोपजीव्य हिमरोचिषि कर्कटस्थे ॥
शस्त्रास्त्रजीवी निपुणो वैश्यवृत्तिस्तु जायते।
कण्टकस्थायिनि क्षोणीनन्दने व्रतबन्धने ॥

---

* अतः परं द्वितीयादिस्थानस्थितकेतुफलप्रतिपादकाः श्लोका उच्छिन्नाः स्युरिति भाति।

(१) चका. ७५०.

गुरौ केन्द्रे गते शुक्रे नवपञ्चमवर्तिनि ।
चन्द्रशुक्रांशगे सर्वे सर्ववेदी भवेन्नरः ॥

सप्तांशगे कृतघ्नो
विषयात्साक्षाद्भवेद्गुरुद्रोही ।
विद्यार्थी शीलसंयुक्तः
षष्ठेऽष्टमगे व्यसुः शशिनि ॥
जीवे सार्के निर्गुणो वित्तहीनः
क्रूरः सौरैश्चान्त्यगश्चापि सौम्यः ।
भानोः पुत्रे नामासः स्यात्
शुक्रेन्दुः सौम्यवत्सर्वदा मे ॥ (?)

## संग्रहे

केन्द्रस्थितग्रहफलानि, नानाविधा इष्टानिष्टा ग्रहयोगाः, अनिष्टयोगापवादः

(१)केन्द्रस्थितैरिनाद्यै-
र्नृपसेवी विट्क्रियोऽन्यवृत्तिश्च ।
वेदाभ्यासी यज्वा
क्रतुकर्ता हीनसेवको भवति ॥

सिते त्रिकोणगे चन्द्रे शुक्रांशे लग्नगे गुरौ ।
उपनीतो भवेद्विप्रो वेदशास्त्रार्थपारगः ॥

चन्द्रक्रूरास्तनौ नेष्टाः सर्वे रन्ध्रे व्यये कविः ।
सितेन्दुलग्नपाः षष्ठे मौञ्जीविद्यादिकर्मसु ॥

रविः खायगतः श्रेयान् व्ययाष्टतनुगः शशी ।
कुजार्किराहुशिखिनस्त्रिषडायगताः शुभाः ॥

अनिष्टस्थानगोऽप्यत्र ग्रहः कोऽपि न दोषकृत् ।
शुभदृष्टः शुभो यस्मात्सौम्यवर्गे यदि स्थितः ॥
व्ययस्थोऽर्कः कुजार्किभ्यां दृष्टो विद्यां
हरेद्बटोः ।
शुभदृष्टो न दोषाय तथेन्दुर्गुरुरब्रवीत् ॥

लग्नस्थितेषु रन्ध्रेषु पापेषु मरणं बटोः ।
सौख्यं स्यात्त्रिषडायेषु जडत्वमितरेषु च ॥

(१) ज्योनि. १२४–१२६.

अरन्ध्रारिगताः श्रेष्ठाः शुभाः सर्वत्रगा व्रते ।
व्ययेऽपि न शुभः शुक्रस्तथाऽब्जोऽर्येष्टलग्नगः ॥
अनिष्टस्थानगोऽप्यत्र ग्रहः कोऽपि न दोषकृत् ।
सद्वर्गे शुभदृष्टो वा स्वोच्चे स्वस्थे विशेषतः ॥
विद्यां प्राप्तां नाशयेतां मन्दभौमौ द्वितीयगौ ।
अन्योन्यमथवा दृष्टौ द्वादशस्थौ तु बन्धदौ ॥
यथोक्तसमयालाभे योगान् वच्मि शुभप्रदान् ।
द्विजन्मकालसंभूतान् वसिष्ठाङ्गिरसोक्तितः ॥
जीवे केन्द्रे त्रिकोणे वा भानौ शुक्रेऽथवा व्यये ।
धने च चोपनीतस्तु वेदविद्याविशारदः ॥
लग्नार्थभ्रातृगे शुक्रे जीवे कोणार्थकण्ठके ।
त्रिषडेकादशे क्रूरे व्रती भवति धार्मिकः ॥
गुरौ केन्द्रे भवे भानौ चन्द्रे शुभनवांशगे ।
शुभग्रहदशायुक्ते चिरायुर्धनवान्भवेत् ॥
भृगौ मीने वृषे वाऽपि जीवे केन्द्रत्रिकोणगे ।
कर्किचापझषस्थेऽस्मिन् व्रती वेदार्थविद्भवेत् ॥
दशमायोदये याताः शुक्रभानुबुधाः क्रमात् ।
चन्द्रे शुभांशगे शुद्धे रन्ध्रे विद्यार्थवान् बटुः ॥
बुधार्किशुक्रकर्मायलग्नगाः क्रमशो यदि ।
जीवशुक्रबुधाः केन्द्रे बलिनोऽर्केन्दुवेदपाः ।
उपनीतस्तदा शिष्यो दीर्घायुर्यज्ञकृद्भवेत् ॥

## कृत्यचिन्तामणौ

शुक्रादीनां केन्द्रस्थितिरिष्टा

(१)केन्द्रस्थे भृगुजेऽङ्गिरःशशिसुते
चन्द्रे च तारे शुभे
कर्तव्यं व्रतकर्म ...... ॥

## भुजबलभीमे

शुक्रादीनां केन्द्रस्थितिरिष्टा

(२)केन्द्रस्थे भृगुजेऽङ्गिरः शशिसुते
चन्द्रे च तारे शुभे
कर्तव्यं व्रतकर्म ...... ॥

(१) संत. ९२८ भुजबलभीमकृत्यचिन्तामण्योः .
(२) संत. ९२८ भुजबलभीमकृत्यचिन्तामण्योः .

### श्रीपतिः

इष्टानिष्टा नानाविधा ग्रहयोगाः

[1]लग्ने जीवे भार्गवे च त्रिकोणे
शुक्रांशस्थे स्याद्द्विधौ वेदवेदी ।
सौरांशस्थे सूरिलग्ने सशुक्रे
विद्याशीलप्रोज्झितः स्यात्कृतघ्नः ॥

[2]सार्के जीवे निर्गुणोऽर्थेन हीनः
क्रूरः सारे स्यात्पटुः सत्समेते ।
भानोः पुत्रेणालसो निर्घृणश्च
स्याच्छुक्रेन्दू जीववत्संप्रकल्प्यौ ॥

[3]पुत्राढ्यं तनये विनिर्जितरिपुं
कीर्त्या युतं षष्ठमे
जामित्रे शशिपुत्रजीवभृगुजाः
कीर्त्याऽथ मेधायुतम् ।
नानारोगसमाकुलं निधनगा
धर्मे विधर्मध्वजं
कुर्युः कर्मगताः कविं द्विजवरं
मौञ्जिव्रते दीक्षितम् ॥

लाभे चारुविभूतिसंयुतमलं
नानाव्ययं रिष्फगा
लग्ने सौरिदिवाकरावनिसुता
नाशं वधं बन्धनम् ।
वित्ते वित्तविनाशमाशु सहजे
नैरुज्यमिष्टागमं
बन्धौ बन्धुविरोधमेव तनये
पुत्रक्षयं षष्ठभे ॥

सौभाग्यार्थसुखादि दारमरणं
यच्छन्ति जामित्रमे ... ॥

निधनभवनसंस्था मृत्युमर्थप्रणाशं
तपसि विविधिहानिं धर्म-
हानिं दिशन्ति ।
विजयति रविजामारा(?)नीचवृत्तिं
तथाऽये
सुकृदि(?सपदि) विभवलाभं
रिष्फगोऽर्थक्षयं च ॥

[1]त्रिषट्खगोऽर्कस्त्रिधमास्तकर्मग-
श्चन्द्रस्त्रिषष्ठाः शनिराहुभौमाः ।
सर्वे च लाभे द्वित्रिकोणकेन्द्रगाः
शुभाः शुभाः स्युर्व्रतबन्धकाले ॥

रन्ध्रान्त्यारिगतः शुक्रो लग्नेशो वा षडष्टगः ।
चन्द्रो लग्नारिरन्ध्रस्थो बटोः प्राणापहारकः ॥

शुक्रश्च सर्वभावस्थः सर्वसंपत्समृद्धिदः ।
षष्ठाष्टमस्वरान्मुक्त्वा शिशोर्लग्नाद्द्विजन्मनः ॥

मौञ्जीबन्धे विशेषेण प्राग्लग्नं पञ्चमं तथा ।
भाव्यं क्रूरग्रहैर्भुक्तं(? मुक्तं) भृगुराह तथा-
ऽष्टमम् ॥

### महेश्वरः

केन्द्रस्थितग्रहफलानि, इष्टानिष्टग्रहयोगाः

[2]तिग्मांशौ भूपसेवी भवति हिमकरे
वैश्यवृत्तिस्तु भौमे
केन्द्रस्थे शस्त्रवृत्तिर्हिमकरतनये-
ऽध्यापकश्च द्विजन्मा ।
प्राज्ञः षट्कर्मकृत्स्याद्विबुधपतिगुरौ
भार्गवे दीक्षितस्तु
द्रव्यैः सौख्यैः समृद्धः खरकरतनये
सेवकश्चान्त्यजानाम् ॥

---

(१) संसौ. १४० ; संप्र. ३८२-३८३ क्रे विद्या-शीलप्रो ( क्रेऽविद्याशीलः प्रो ).

(२) संसौ. १४० ; संप्र. ३८३ समेते ( समेतः ).

(३) संसौ. १३५-१३६.

(१) ज्योनि. १२५.

(२) संसौ. १३६.

**[1]जीवे लग्नमधिष्ठिते भृगुसुते**
**धर्मात्मजस्थे विधौ**
**शुक्रांशेऽखिलवेदविद्ग्विसुते**
**स्वांशे कृतघ्नोऽधमः ॥**

## मुहूर्तचिन्तामणिः

नानाविधा इष्टानिष्टा ग्रहयोगाः , चन्द्रनवांशफलानि,
केन्द्रस्थितग्रहफलानि

**[2]कवीज्यचन्द्रलग्नपा रिपौ मृतौ व्रतेऽधमाः ।**
**व्ययेऽब्जभार्गवौ तथा तनौ मृतौ सुते खलाः ॥**

अथ व्रतबन्धे सामान्यतो लग्नभङ्गयोगं प्रमाणिकयाऽऽह– कवीज्येति । रिपौ षष्ठस्थाने मृतौ अष्टमस्थाने चेत् शुक्रबृहस्पतिचन्द्रलग्नस्वामिनो भवन्ति तदा अधमाः मरणकारकाः स्युः । अब्जभार्गवौ चन्द्रशुक्रौ व्यये चेद्भवतः तदा मरणकरावित्यर्थः । खलाः पापग्रहा लग्नाष्टमपञ्चमस्थानेषु स्थिताश्चेत्तदा तथा मरणकरा इत्यर्थः ।
¶ पीटी.

**व्रतबन्धेऽष्टषड्रिष्फवर्जिताः शोभनाः शुभाः ।**
**त्रिषडाये खलाः पूर्णो गोकर्कस्थो विधुस्तनौ ॥**

अथ सामान्यतो लग्नशुद्धिमनुष्टुभाऽऽह– व्रतेति । शुभाः शुभग्रहाः अष्टमषष्ठद्वादशस्थानस्थिताश्चेन्न स्युः तदा व्रतबन्धे शोभनाः शुभफलदायकाः । खलाः पापाः तृतीयषष्ठैकादशस्थानस्थिताः शोभनाः । पूर्ण इति । पूर्णः शुक्लपक्षीयः विधुः कर्कस्थो वृषस्थश्च सन् तनौ लग्नस्थितो यदि भवेत् तदैव शुभः , नान्यथा । ¶ पीटी.

**[3]विद्यानिरतः शुभराशिलवे पापांशगते हि**
**दरिद्रतरः ।**
**चन्द्रे स्वलवे बहुदुःखयुतः कर्णादितिभे धन-**
**वान् स्वलवे ॥**

चन्द्रनवांशफलं स्वनवांशे सापवादं तोटकेन छन्दसाऽऽह– विद्यानिरत इति । यस्मिन्कस्मिंश्चिद्राशौ चन्द्रो यदि शुभग्रहराशिनवांशे स्यात्तदा व्रती विद्यानिरतो भवेत् । यदि पापग्रहराशिनवांशे चन्द्रस्तदा दरिद्रतरः धनधान्यरहितः स्यात् । यदि स्वलवे कर्कांशे स्यात्तदा बहुदुःखयुतो भवेत् । स्वांशस्थितस्य चन्द्रस्यापवादमाह –कर्णेति । यदि कर्णे श्रवणनक्षत्रे अदितौ पुनर्वसुभे चोपनयने सति* स्वांशः चन्द्रस्य नवांशः चेत् ( १ स्वांशे चन्द्रः स्वनवांशे चेत् ) स्यात्तदा व्रती धनवान् स्यात् ।
$ पीटी.

**राजसेवी वैश्यवृत्तिः शस्त्रवृत्तिश्च पाठकः ।**
**प्राज्ञोऽर्थवान् म्लेच्छसेवी केन्द्रे सूर्यादि-**
**खेचरैः ॥**

केन्द्रस्थानां सूर्यादीनां फलमनुष्टुभाऽऽह– राजसेवीति । केन्द्रे सूर्यादिग्रहैः प्रत्येकं स्थितैः क्रमादिदं फलं ज्ञेयमित्यर्थः । $ पीटी.

**[1]शुक्रे जीवे तथा चन्द्रे सूर्यभौमार्किसंयुते ।**
**निर्गुणः क्रूरचेष्टः स्यान्निर्घृणः सद्युते पटुः ॥**

चन्द्रगुरुशुक्राणां ग्रहयुतौ फलमनुष्टुभाऽऽह– शुक्र इति । शुक्रे तथा जीवे गुरौ तथा चन्द्रे च प्रत्येकं सूर्यसंयुते व्रती निर्गुणः स्यात् । एवं भौमसंयुते सति क्रूरचेष्टः क्रूरा हिंसनशीला चेष्टा हस्तादिचापलं यस्य स तादृशः स्यात् । तथा आर्किः शनिः , तेन संयुते निर्घृणः † निर्लज्जः निर्दयो वा स्यात् । तथा तस्मिन्नेव शुक्रे जीवे चन्द्रे वा प्रत्येकं सद्भिः चन्द्रबुधगुरुशुक्रैः युते पटुः सर्वविद्यानिपुणः स्यात् । ¶ पीटी.

---

¶ संव. पीटीगतम् ।

(१) संव. १०१.

(२) मुचि. ५।४१–४२ ; संव. ९६.

(३) मुचि. ५।५०–५१ ; संव. १००.

* वाक्यादौ यदिशब्दप्रयोगादियं सतिसप्तमी अव्युत्पन्ना । यदिशब्दो माऽस्तु, ‘ उपनयनं चेत् तदा ’ इति वाऽस्तु ।

$ संव. पीटीगतम् ।

† घृणाशब्दस्य लज्जार्थकत्वमप्रसिद्धम् ।

(१) मुचि. ५।५२ ; संव. १००–१०१.

[1]विधौ सितांशगे सिते त्रिकोणगे तनौ गुरौ ।
समस्तवेदविद्व्रती यमांशगेऽतिनिर्घृणः ॥

चन्द्रवशेन शुभाशुभयोगौ प्रमाणिकयाऽऽह— विधाविति । विधौ चन्द्रे शुक्रांशगे सति शुक्रे नवमपञ्चमस्थानस्थिते गुरौ लग्नस्थे सति व्रती बटुः समस्तान् चतुरः वेदान् वेत्ति जानाति तादृशः स्यात् । एवं यमांशगे शनिनवांशस्थिते चन्द्रे सति लग्ने गुरौ च सति सिते त्रिकोणगे सत्यप्यतिनिर्घृणः स्यात् । अपरे तु गुरुशुक्रयुक्तेऽपि शन्यंशस्थे चन्द्रे सत्यतिनिर्घृण इति व्याचक्षते । § पीटी.

## मौञ्जीपटले

सूर्यस्य लग्न-दशमभावस्थितिः प्रशस्ता

[2]शुभदो बलवान् भानुर्लग्नगो दशमस्तथा ।
सर्वशाखाधिपो यस्मात्सर्वेषां व्रतबन्धने ॥
सर्वशाखाधिपो भानुः केचिदूचुर्महर्षयः ।
तस्माद्गत्यन्तराभावे लग्नस्थोऽर्कः प्रशस्यते ॥

§ संव. पीटीगतम् ।

(१) मुचि. ५।५३ ; संव. १०१ तनौ गुरो ( गुरौ तनौ ).

(२) ज्योनि. १२५.

## मुहूर्तगणपतिः

इष्टानिष्टग्रहस्थितयः , केन्द्रगतग्रहफलानि

[1]त्रिषट्संस्थाः खलाः खेऽर्कश्चन्द्रो द्विघूनख-त्रिगः ।
सौम्याः केन्द्रत्रिकोणस्था लाभे सर्वे व्रते शुभाः ॥
जीवेन्दुभृगुलग्नेशा व्रते नेष्टाः षडष्टगाः ।
शुक्रेन्दू व्ययगौ नेष्टौ खला लग्नाष्टपञ्चगाः ॥
व्रते सौम्याः शुभाः प्रोक्ताः षडष्टान्त्यविवर्जिताः ।
शुक्रे स्वर्क्षोच्चगश्चन्द्रो लग्ने श्रेष्ठो रविः क्वचित् ॥
इज्यशुक्रांशगौ लग्नचन्द्रौ शस्तौ व्रते मतौ ।
नान्यत्राथ निजांशेऽब्जः पुनर्वसुभवे शुभः ॥
भूपाश्रयी वणिग्वृत्तिः शस्त्रभृत्पाठकोत्तमः ।
पण्डितश्चार्थवान् म्लेच्छसेवी केन्द्रेऽर्कतः क्रमात् ॥
लग्ने गुरुर्भृगुः कोणे शुक्रांशेऽब्जः शुभो व्रते ।
गुरुश्चन्द्रो भृगुर्नेष्टो रविभौमार्किसंयुतः ॥

(१) संव. १०५.

# गुरु–शुक्र–शाखेश–वर्णेशादिविचारः

## वसिष्ठः

शाखेशविभागः , गुरुशुक्रशाखेशवर्णेशानां बलमिष्टमस्त-
बाल्यवार्धक्यानि चानिष्टानि , तत्रापि आचार्यशिष्य-
योर्गुरुबलमिष्टम् , गुरुबलान्मुख्यकालो बलीयान् ,
शाखेशगुरुशुक्राणां नानाविधा इष्टानिष्ट-
स्थितयः , स्थानभेदेन गुरुदोषस्य
शाम्यत्वमशाम्यत्वं च

**[१]ऋग्यजुःसामशाखेशा गुरुशुक्रधरात्मजाः ।**
**अथर्वणस्य वेदस्य शाखेशश्चन्द्रनन्दनः ॥**

**[२]शाखेशगुरुशुक्राणां मौढ्ये बाल्ये च वार्धके ।**
**नैवोपनयनं कार्यं वर्णेशे दुर्बलेऽपि च ॥**

**$[३]शाखेश्वरस्ववर्णेशगुरूणां बलपूर्वकम् ।**
**ततोऽप्येषां गुरुबलं मुख्यमाचार्यशिष्ययोः ॥**

शाखेशादिबलपूर्वकं यस्मादुपनयनं ततः कारणा-
दाचार्यशिष्ययोर्गुरुबलमन्वेष्यम् । संप्र. ३७४

**[४]उक्तेऽपि वर्षे न गुरुर्बली चे-**
**च्छान्त्या प्रशस्तं व्रतबन्धकर्म ।**
**अनुक्तवर्षेषु बलप्रदोऽपि**
**नैवैतयोरब्दबलं बलीयः ॥**

अथ यत्र मुख्ये काले गुरुशुद्धिर्नास्ति तत्र किं नु गुरुशुद्धिं निरस्य मुख्यकाल एवोपनयनं विधेयमुत गुरुशुद्ध्यनुरोधाद्गौणकालस्वीकरणमिति वीक्षायां मुख्य एव कालः प्रधानम् , गुरुदोषस्तुरं शान्त्या निरसनीयः , तदेतदाह– उक्त इति । संसौ. १०२

**[१]शाखेशगुरुशुक्राणामेकस्मिञ्छत्रुनिर्जिते ।**
**विद्यावृत्तार्थिमिस्तत्र न कार्यमुपनायनम् ॥**

**[२]शाखेशे वा गुरौ शुक्रे स्वनीचगृहसंस्थिते ।**
**तदोपनीतः स्वल्पायुर्विद्यावित्तादिवर्जितः ॥**

**[३]नीचांशसंस्थिते शुक्रे शाखेशे वा बृहस्पतौ ।**
**स्वकुलाचारविभ्रष्टो नीचकर्मरतो व्रती ॥**

**[४]नीचर्क्षनीचांशकसंस्थिते च**
**शाखेश्वरे वाऽऽस्फुजितीन्द्रपूज्ये ।**
**व्रती शिशुर्हीनकुलप्रसक्तः**
**शस्त्रोपजीवी स्वकुलं विसृज्य ॥**

---

$ संस्कारसौख्ये पूर्वं 'वृद्धवशिष्ठः' इत्यधिकृत्य वचनद्वयं संगृह्य तत एकं वराहवचनं संगृहीतम् । ततः 'पुनर्वशिष्ठः' इत्यधिकृत्य एतदादीनि वचनानि संगृहीतानि । तत्र केवलोऽपि वशिष्ठशब्दः पूर्वं दूरतरपर्यन्तं वशिष्ठाधिकाराभावात् संनिकृष्टाधिकृतवृद्धवशिष्ठपर एवेति युक्तमुपगम्य एतदादीनि वचनानि सौख्यकारस्य वृद्धवशिष्ठीयान्येवाभिमतानीति निर्णीतम् ।

(१) **वसं.** २९।४ ; **संसौ.** १०१ वृद्धवसिष्ठः .

(२) **वसं.** २९।५ मौढ्ये ( प्रौढ्ये ) ; **संसौ.** १०१ लेऽपि च ( ले सति ) वृद्धवसिष्ठः ; **संप्र.** ३७३ मौढ्ये ( मौर्ख्ये ) शेषं सर्वं संसौवत् ; **संव.** ९७ संसौवत् .

(३) **वसं.** २९।६ ; **संसौ.** १०१ प्येषां ( न्वेष्यं ) मुख्य ( पुण्य ) वृद्धवसिष्ठः ; **संप्र.** ३७४ प्येषां (न्वेष्यं) मुख्य ( तुल्य ) वृद्धवसिष्ठः .

(४) **वसं.** २९।७ वर्षेषु ( वर्षेऽपि ) नैवैत ( न वै त ) लं बलीयः ( लो बलीयान् ) ; **धप्र.** ४० अशुद्धिबहुलः श्लोकः , वृद्धवसिष्ठः ; **संसौ.** १०२ गुरुर्बली चे ( बली गुरुश्चे ) वृद्धवसिष्ठः ; **संप्र.** ३७४ सर्वं संसौवत् ; **संको.** १४३ सर्वं संसौवत् , पू. ; **संव.** ९८ उत्त. , नारदः : १११ सर्वं संसौवत् , पू. .

(१) **वसं.** २९।८ वृत्ता ( वृता ) कार्यमु ( कार्यं चो ) ; **संसौ.** १०२ वृद्धवसिष्ठः ; **संप्र.** ३७४ वृद्धवसिष्ठः .

(२) **वसं.** २९।९ स्वल्पायुर्विद्यावित्तादि ( स शिशुर्विद्यावृत्तिवि ) ; **संसौ.** १०२ स्थिते (श्रिते) वृद्धवसिष्ठः ; **संप्र.** ३७४ सर्वं संसौवत् .

(३) **वसं.** २९।१० विभ्रष्टो ( विच्छ्रेष्ठो ) ; **संसौ.** १०२ वृद्धवसिष्ठः ; **संप्र.** ३७५ वृद्धवसिष्ठः .

(४) **वसं.** २९।११ च ( ऽपि ) ; **संसौ.** १०२–१०३ वृद्धवसिष्ठः ; **संप्र.** ३७५ वृद्धवसिष्ठः .

[1]स्वारिनीचगते जीवे शाखेशे वा भृगोः सुते ।
उपनीतस्तदा बालः क्षिप्रादन्त्यजसेवकः ॥

[2]शाखेशगुरुशुक्राणामेकस्मिन्स्वारिराशिगे ।
परदारेष्वभिरत उपनीतस्तदा शिशुः ॥

[3]शाखेशगुरुशुक्राणां मध्ये शत्रुनवांशगे ।
एकस्मिन्नुपनीतो यस्तदा मूर्खः खलो भवेत् ॥

[4]शत्रुराशौ तदंशस्थे चैकस्मिन्खचरे व्रती ।
शाखेशगुरुशुक्राणां महापातककृद्भवेत् ॥

[5]स्वनीचस्वारिषड्वर्गसंस्थे जीवेऽथवा सिते ।
शाखेशे वा तदा बालो महापातककृद्व्रती ॥

[6]अधिशत्रुगृहस्थे वा तदंशस्थे गुरौ भृगौ ।
शाखेशे वा व्रती बालस्तदा चाण्डालसेवकः ॥

[7]शत्रुनीचाधिशत्रृक्षे स्वांशे वा स्वोच्चभागगे ।
शाखेशे वा गुरौ शुक्रे न नीचफलमश्नुते ॥

(१) वसं. २९।१२ ; संसौ. १०३ स्वारिनीचगते ( नीचारिभागगे ) वृद्धवसिष्ठः ; संप्र. ३७५ गते ( भंगे ) वृद्धवसिष्ठः .

(२) वसं. २९।१३ स्मिन्स्वारि ( स्मिञ्छत्रु ) रेष्वभिरत उ ( रासु निरतश्चो ) ; संसौ. १०३ वृद्धवसिष्ठः ; संप्र. ३७५ वृद्धवसिष्ठः .

(३) वसं. २९।१४ शत्रु ( शुक्र ) ; संसौ. १०३ शगे ( शके ) वृद्धवसिष्ठः ; संप्र. ३७५ सर्वं संसौवत् .

(४) वसं. २९।१५ ; संसौ. १०३ स्मिन्खचरे ( स्मिन्नत्र यो ) कृद्भवेत् ( कारकः ) वृद्धवसिष्ठः ; संप्र. ३७५ स्मिन्खचरे ( स्मिंस्तत्र यो ) कृद्भवेत् ( कारकः ) वृद्धवसिष्ठः .

(५) वसं. २९।१६ ; संसौ. १०३ वृद्धवसिष्ठः ; संप्र. ३७५ वृद्धवसिष्ठः .

(६) वसं. २९।१७ ; संसौ. १०३ गुरौ ( ऽथवा ) चाण्डा (चण्डा) वृद्धवसिष्ठः ; संप्र. ३७५ सर्वं संसौवत् .

(७) वसं. २९।१८ ; संसौ. १०३ शत्र्वृक्षे (शत्रुस्थे) वृद्धवसिष्ठः ; संप्र. ३७५ स्वोच्च ( मित्र ) शेषं सर्वं संसौवत् ; संब. ९७ संसौवत् .

[1]स्वमित्रराशिसंस्थे वा स्वमित्रांशे च संस्थिते ।
गुरौ भृगौ वा शाखेशे व्रती विद्यायुतस्तदा ॥

[2]स्वमित्रगेहे मित्रांशसंश्रिते भृगुनन्दने ।
शाखेशे वा गुरौ वाऽपि वेदविद्यायुतो व्रती ॥

[3]स्वाधिमित्रगृहस्थे वा स्वाधिमित्रांशगेऽपि वा ।
गुरौ शाखाधिपे शुक्रे वित्तविद्याधिको व्रती ॥

[4]स्वाधिमित्रगृहे स्वाधिमित्रांशकगते व्रती ।
गुरौ भृगौ वा शाखेशे वित्तविद्याविशारदः ॥

[5]तुङ्गस्थे वा तदंशस्थे गुरौ शाखाधिपे सिते ।
उपनीतस्तदा बालो विद्यावान् धनवान् भवेत् ॥

[6]स्वतुङ्गतुङ्गांशगते शाखेशे वा गुरौ सिते ।
व्रती शिशुर्बलायुष्यवृत्तविद्याविशारदः ॥

[7]धर्मार्थलाभसुतभाग्यगते सुरेज्ये
मौञ्जीव्रतं शुभकरं तु बटोः पितुश्च ।
जन्माष्टबन्धुरिपुरिष्फनभस्तृतीये
दारिद्र्यशोकबहुरोगकरं द्विजन्म ॥

(१) वसं. २९।१९ ; संसौ. १०४ शे च सं ( शकसं ) युतस्तदा ( मवाप्नुयात् ) वृद्धवसिष्ठः ; संप्र. ३७५ सर्वं संसौवत् .

(२) वसं. २९।२० ( स्वमित्रगेहे मित्रांशे संस्थे भार्गवनन्दने । गुरौ शाखाधिपे वाऽपि विद्यायुक्तो भवेद्व्रती ॥ ) ; संसौ. १०४ वृद्धवसिष्ठः ; संप्र. ३७५ वृद्धवसिष्ठः .

(३) वसं. २९।२१ शुक्रे ( वाऽपि ) ; संसौ. १०४ वृद्धवसिष्ठः ; संप्र. ३७५ वृद्धवसिष्ठः .

(४) वसं. २९।२२ वित्तवि ( तत्र वि ) ; संसौ. १०४ वृद्धवसिष्ठः ; संप्र. ३७६ वृद्धवसिष्ठः .

(५) वसं. २९।२३ सिते ( सति ) ; संसौ. १०४ वृद्धवसिष्ठः ; संप्र. ३७६ वृद्धवसिष्ठः .

(६) वसं. २९।२४ बलायुष्यवृत्त ( धनायुष्यव्रत ) ; संसौ. १०४ वृद्धवसिष्ठः ; संप्र. ३७६ वृद्धवसिष्ठः .

(७) संसौ. १०१ भाग्य ( सप्त ) करं द्विजन्म ( करो द्विजानाम् ) भरद्वाजः ; संप्र. ३७२.

'बन्धौ तृतीये रिपुराशिसंस्थे
वाञ्छन्ति पूजां दशमे सुरेज्ये ।
नेच्छन्ति पूजां जनिगे व्ययस्थे
पुरातना अष्टमगेऽपि सूरौ ॥

(१) धर्मः नवमं स्थानम् । लाभः एकादशम् । सुतः पञ्चमम् । अर्थः द्वितीयम् । भाग्यं सप्तमम् । बन्धुः चतुर्थम् । रिप्फः द्वादशम् । नभः दशमम् । द्विजन्म द्वितीयं जन्म, उपनयनमित्यर्थः । जनिगे जन्मराशिस्थे । संप्र. ३७२

(२) केचित्– दुष्टस्थानेषु स्थिते बृहस्पतौ शान्त्याऽपि नोपनयनाधिकार इत्याह वसिष्ठः– 'बन्धौ तृती... सूरौ ॥' इति । बन्धुः चतुर्थः । रिपुराशिः षष्ठः । जनिः जन्मराशिः । व्ययः द्वादशो राशिः । अतिसंकटे एतेष्वपि राशिषु पूजाहोमादेर्द्विगुणत्वादिवृद्धिकल्पनयोपनयनं कार्यम्, न तूक्तसंवत्सरातिक्रमः कार्यः । तथा च गुरुः – 'तस्माद्ग्रहेभ्यः कालस्वाद्बली संवत्सरो मतः' इति । † संकौ. १२१

'नीचारिराशावतिनीचभागे
पराजिते वाऽपि गुरौ सिते वा ।
मौञ्जीव्रतं यस्य करोति नूनं
स वेदशास्त्रस्मृतिधर्महीनः ॥

## वृद्धवसिष्ठः

आचार्यस्य गुरुबले बटोस्तन्न विचार्यम्

'आचार्यस्य बलं श्रेष्ठं बटोरन्त्याष्टमो यदि ।
न विचार्यं बलं तत्र कारयेदुपनायनम् ॥

† संर. संकौवत् ।

(१) संसौ. १०१ भरद्वाजः ; संप्र. ३७२ वाञ्छन्ति ( इच्छन्ति ) अष्टम ( ह्यष्टम ) : ८०२–८०३ लल्लः ; संकौ. १२१ वाञ्छन्ति ( इच्छन्ति ) ; संर. १७६ वाञ्छन्ति...सूरौ ( इच्छन्ति पूजां जनिगे व्ययस्थे । पुरातना अष्टमगेऽपि सूरौ शान्त्याऽपि नैवोपनयाधिकारः ॥ ).

(२) संप्र. ३७३–३७४.

(३) ध्रप्र. ४०.

## वृद्धमनुः

शुक्रस्य बाल्यवृद्धत्वास्तमया अनिष्टाः

'बाले वा यदि वा वृद्धे शुक्रे वाऽस्तमुपागते ।
मलमास इवैतानि* वर्जयेद्देवदर्शनम् ॥

## नारदः

गुरुबलान्मुख्यकाले बलीयान्, गुरुशुक्रशाखेशानामनस्त इष्टः, शाखेशविभागः, गुरुशुक्रशाखेशवर्णेशबलमिष्टम्, गुरुशुक्रशाखेशानां नानाविधा इष्टानिष्टस्थितयः, वर्णेशबलाच्छाखेशबलं बलीयः

'बालस्य बलहीनोऽपि शान्त्या जीवो बलप्रदः ।
यथोक्तवत्सरे कार्यमनुक्ते नोपनायनम् ॥

गर्भाष्टमादिनित्यकाले बटोर्गुरुबलालाभे शान्त्या तल्लाभः, अनित्यकालेषु नैवमित्याह नारदः– 'बालस्य ...॥' इति । अनुक्ते, नित्यत्वेनेति शेषः । ¶ संकौ. १२१

'दृश्यमाने गुरौ शुक्रे शाखेशे चोत्तरायणे ।
वेदानामधिपा जीवशुक्रभौमबुधाः क्रमात् ॥

'ऋग्वेदाधिपतिर्जीवो यजुर्वेदाधिपः सितः ।
सामवेदाधिपो भौमः सौम्यसौरी त्वथर्वणः ॥

* एतच्छब्दार्थोऽयनर्तुमासपक्षविचारप्रकरणे ( सं. का. पृ. ३१२७ ) द्रष्टव्यः ।

¶ संर. संकौवत् ।

(१) अप. १।२२५ पृ. ५४९ वाऽस्त ( चास्त ) ; स्मृच. ३७३ ; पुम. १९ ( = ) अपवत्.

(२) ज्योना. २४।३ ; संसौ. १०० बल ( शुभ ) यथोक्तव ( यथोक्ते व ) ; संप्र. ३७२ ; सिन्धु. ९३२ नोप ( चोप ) ; विपा. ४७३ ; ज्योनि. १२१ ; संकौ. १२१ ; संव. ९८ ; संर. १७६.

(३) ज्योना. २४।४ शाखेशे ( दिनेशे ) ; संप्र. ३६४ ; ज्योनि. १२२ ; पुम. ४३७–४३८ पृ. .

(४) प्रपा. २१५.

[1]स्वनीचगे तदंशे वा स्वारिभे वा तदंशके।
गुरौ भृगौ च शाखेशे कुलशीलविवर्जितः॥
[2]स्वाधिशत्रुगृहस्थे वा तदंशस्थेऽथवा व्रती।
शाखेशे वा गुरौ शुक्रे महापातककृद्भवेत्॥
[3]स्वोच्चसंस्थे तदंशे वा स्वराशौ वा त्रिकोणगे।
शाखेशे वा गुरौ शुक्रे केन्द्रगे वा त्रिकोणगे।
अतीव बलवांश्चैव वेदवेदाङ्गपारगः॥
[4]परमोच्चगते जीवे शाखेशे वाऽथवा सिते।
व्रती शिशुर्धनाढ्यश्च वेदशास्त्रविशारदः॥
[5]मित्रराशिगते जीवे तदंशे वा स्वशाखपे।
शुक्रे वाऽऽचार्यसंयुक्ते तदा तत्र व्रती शिशुः॥
[6]स्वस्वमित्रगृहस्थे वा तस्योच्चस्थे तदंशके।
गुरौ भृगौ वा शाखेशे विद्याधनसमन्वितः॥
[7]शाखाधिपतिवारश्च शाखाधिपबलं तथा।
शाखाधिपतिलग्नं च दुर्लभं त्रितयं व्रते॥

(१) ज्योना. २४।१५; ज्योनि. १२४ च (वा) कुल (कला).

(२) ज्योना. २४।१६ पातक (घातक); ज्योनि. १२४ तदंशस्थे (तदंशे वा).

(३) ज्योना. २४।१७–१८ द्वितीयपादे (स्वराशौ राशिगे गणे); ज्योनि. १२४ बल (धन).

(४) ज्योना. २४।१८–१९; ज्योनि. १२४.

(५) ज्योना. २४।१९–२० शाखपे (राशिगे); ज्योनि. १२४ वाऽऽचार्य (वा चार).

(६) ज्योना. २४।२०–२१; ज्योनि. १२४ स्वस्व (स्वाधि).

(७) ज्योना. २४।२१ तथा (शिशोः); गभा. २०२; संसौ. १०५ तथा (शिशोः) चतुर्थपादे (त्रितयं दुर्लभं भवेत्) : १२६ तथा (शिशोः) चतुर्थपादे (त्रितयं दुर्लभं व्रते); संप्र. ३६४; सिन्धु. ९४०; विपा. ४७६ ज्योतिर्निबन्धे; संको. १२१; संव. ९७ संसौ. १२६ वत्; पुम. ४३९; संर. १७५.

[1]जन्मभ्रातृचतुर्थारिमृत्युकर्मव्यये गुरौ।
मृत्युपातकरोगाश्च रिपुः शस्त्रमृतिर्मृतिः।
सुरापीत्वं च विज्ञेयं क्रमादेतत्फलं शिशोः॥
[2]नैवोपनयनं कार्यं वर्णेशे दुर्बलेऽपि वा।
स्ववेदाधिपतौ कुर्याद्बलिष्ठे व्रतबन्धनम्॥
[3]द्विजन्मवर्षकाले प्राक् प्रोक्ते वर्षे गुरौ यदि।
गते विरोधं वर्षे स्याद्बलवच्छ्रुतिचोदनात्।
गुरोर्गतिः स्मृतिप्रोक्ता विबला हि श्रुतेः स्मृतिः॥

## बृहस्पतिः

इष्टानिष्टगुरुस्थितयः, सकृदर्चनद्विगुणार्चनशाम्यदोषा गुरुस्थितयः, गुरुशुक्रयोरस्तबाल्यवार्धक्यान्यनिष्टानि

[4]झषचापकुलीरस्थो जीवोऽप्यशुभगोचरः।
अतिशोभनतां दद्याद्विवाहोपनयादिषु॥
[5]एवं शुभेऽब्दे देवेज्यो जन्मकर्मव्ययारिभिः।
तृतीयबन्धुरन्ध्रैश्च विनाऽन्यत्र शुभप्रदः॥
[6]विशेषाद्देवमन्त्री चेदशुभे गोचरे स्थितः।
चापे मीने कुलीरे वा शुभदश्चोपनायने॥
[7]भृगोरङ्गिरसो मौढ्ये कर्तव्यं नोपनायनम्।
तयोर्बाल्ये च वार्धक्येऽधिमासे दक्षिणायने॥

(१) प्रपा. २१४ पीत्वं (पित्वं); संप्र. ३७२ रिपुः शस्त्रमृ (रिपुशस्त्रम).

(२) संप्र. ३७२.

(३) प्रपा. २१४; संप्र. ३७४ वर्षकाले प्राक् (काले वर्षात्तु) रौ यदि (रोर्यदि) विरोधं (विरोधे).

(४) अस्य स्थलादिनिर्देशा विवाहमुहूर्तप्रकरणे (सं. का. पृ. १००८) द्रष्टव्याः.

(५) प्रपा. २१४; संसौ. १०० रिभिः (रिभम्) रन्ध्रैश्च (रन्ध्रांश्च); संप्र. ३७३.

(६) संसौ. १००; संप्र. ३७३ वा (च).

(७) प्रपा. २१५; संसौ. १०५; चम. १४ पू.; विपा. ४७६ (=) पू.; बाल. १।१४ पृ. ४६ पू..

भृगुः शुक्रः । अङ्गिराः गुरुः । § प्रपा. २१५

¹व्रते जन्मत्रिखारिस्थो जीवोऽपीष्टोऽर्चना-
त्सकृत् ।
शुभोऽतिकाले तुर्याष्टव्ययस्थो द्विगुणार्चनात् ॥

## भरद्वाजः

इष्टा गुरुस्थितयः

²धनुर्मीनकुलीरस्थो जीवो जन्मान्त्यमृत्युगः ।
अतिसौख्यं बटोः कुर्याद्वसिष्ठवचनं तथा ॥

( १ ) मृत्युः अष्टमं स्थानम् । संप्र. ३७३

( २ ) राशिविशेषस्थस्य गुरोरष्टमादिस्थानस्थित-स्यापि नाधिकारप्रतिबन्धकत्वमित्याह भरद्वाजः– ' धनु-र्मीन... ॥ ' इति । धनुर्मीनौ हि गुरुस्वामिकौ । कुलीरः कर्कः, स च गुरोरुच्चं स्थानम् ।

* संकौ. १२१–१२२

## शातातपः

गुरुशुक्रयोरस्तबाल्यवृद्धत्वान्यनिष्टानि

³अस्तंगते गुरौ शुक्रे वृद्धे बाले मलिम्लुचे ।
व्रतारम्भापवर्गं च न कुर्यान्मौञ्जिबन्धनम् ॥

## पराशरः

वर्णेशविभागः, वर्णेशबलमिष्टम्

⁴पती सितेज्यौ विप्राणां नृपाणां कुजभास्करौ ।
वैश्यानां शशभृत्सौम्याविति वर्णाधिपाः
स्मृताः ॥

¹सदाऽनुकूले चैकस्मिन् वर्णेशे बलशालिनि ।
ब्राह्मणादेः प्रकुर्वीत कुमारं व्रतचारिणम् ॥

## अत्रिः

गुरुशुक्रयोरनिष्टा स्थितयः

²पराजितेऽतिनीचस्थे नीचे शुक्रे गुरौ तथा ।
व्रतिनं यदि कुर्वीत स भवेद्वेदवर्जितः ॥

## वृद्धगर्गः

शाखेशबलवारौ इष्टौ

³शाखाधिपे बलिनि केन्द्रगते च मौञ्जी-
बन्धस्तदीयदिवसेषु शुभाय क्लृप्तः ।
अस्मिन् बलेन रहिते तु पुनर्द्विजानां
स्याद्वर्णसंकर इति प्रवदन्ति तज्ज्ञाः ॥

तदीयदिवसेषु शाखाधिपतिवारेषु । § संप्र. ३६४

## गार्ग्यः

गुरुशुक्रयोरस्तबाल्यवृद्धत्वान्यनिष्टानि

⁴अस्तंगते गुरौ शुक्रे बाले वृद्धे मलिम्लुचे ।
उपायनमुपारम्भं व्रतानां नैव कारयेत् ॥

## शौनकः

सिंहस्थगुरुदोषापवादः

⁵सिंहस्थे देवगुरौ मेषस्थो यदि भवे-
त्सहस्रांशुः ।
मङ्गलकार्यं कुर्यादिति नारदपराशरौ वदतः ॥

---

§ चम., बाल. प्रपावत् ।

* संर. संकौगतम् ।

(१) ज्योनि. १२१ ; सिन्धु. ९३१ शुभोऽति ( शुभाति ) ग्रन्थान्तरे ; विपा. ४७२ त्रिखा ( त्रिका ) ग्रन्थान्तरे ; संर. १७७ विपावत्, राजमार्तण्डः .

(२) संसौ. १०० ; संप्र. ३७३ ; संकौ. १२२ ; संर. १७६.

(३) लता. ३२.

(४) संप्र. ३६५ ; संकौ. १२१ ; संग. ६५१ ; पुम. ४३९ ; संर. १७५.

§ संग., संर. संप्रवत् ।

(१) संप्र. ३६५ ; संकौ. १२१ वर्णेशे ब ( वर्णे-शब ) ; संग. ६५१ चैक ( वैक ) णादेः ( णानां ) रं व्रतचारिणम् (रव्रतचारिणाम् ) ; पुम. ४३९ ; संर. १७५.

(२) संप्र. ३७३ ; पुम. ४३९ जितेऽतिनी ( जिते च नी ) ; संर. १७३.

(३) चका. ७४९ पु शुभाय क्लृप्तः ( ऽथ सुखाप्तये च ) तज्ज्ञाः ( सुज्ञाः ) ज्योतिःशास्त्रे ; संप्र. ३६४ ; मुक्ता. ८८ च (तु) शुभाय (सुखाय) ; संकौ. १२१ ; संग. ६५१ ; पुम. ४३९ शुभाय क्लृप्तः (सुखाप्तये च) ; संर. १७५.

(४) संत. ८८५.

(५) संर. १७१.

## अनिर्दिष्टकर्तृकवचनानि

शाखेशविभागः, रविगुरुबलमावश्यकम्, इष्टानिष्टगुरुस्थितयः

[1]गुरुर्भृगुसुतो धात्रीपुत्रः शशधरात्मजः ।
स्युरेते ऋग्यजुःसामाथर्वणामधिपाः क्रमात् ॥

भृगुसुतः शुक्रः । धात्रीपुत्रः अङ्गारकः । शशधरात्मजः बुधः । एते ऋगादीनां क्रमेण अधिपा भवन्ति । तस्मिन् वारे तच्छाखीयस्योपनयनं कार्यमित्यभिप्रायः । § स्मृच. २७

[2]रविशुद्धौ गृहकरणं रविगुरुशुद्धौ व्रतोद्वाहौ ।
क्षौरं ताराशुद्धौ शेषं चन्द्राश्रितं कर्म ॥

[3]उच्चस्थः स्वगृहे सुहृद्भवनगो वाचस्पतिर्नित्यशः
पूर्णायुर्विविधार्थसौख्यजनको जन्माष्टमस्थोऽपि चेत् ।
नीचस्थोऽरिगृहे दिवाकरकरच्छायानुगामी सदा-
ऽपीष्टोऽनिष्टफलं ददाति नियतं वैधव्यदुःखास्पदम् ॥

### संग्रहे

अर्चनेन गुर्वादिदोषशमनम्, गुर्वादिदोषापवादाः, गुर्वादिबलान्मुख्यकालो बलीयान्, विन्ध्योत्तरदेशे गुरुदोषप्रतिप्रसवः, शाखेशवर्णेशविभागौ

[4]व्रतकाले तु संप्राप्ते यस्य शुद्धिर्न लभ्यते ।
कृत्वाऽर्चां शक्तितः पश्चाद्विधेयं मौञ्जिबन्धनम् ॥
शुद्धिर्न विद्यते यस्य वर्षे प्राप्तेऽष्टमे यदि ।
चैत्रे मीनगते भानौ तस्योपनयनं शुभम् ॥
जन्मभाद्दुष्टगे सिंहे नीचे वा शत्रुभे गुरौ ।
मौञ्जीबन्धः शुभः प्रोक्तश्चैत्रे मीनगते रवौ ॥
हरिनीचारिभागेऽपि व्रतोद्वाहादि मङ्गलम् ।
न निषिद्धं यदि स्वोच्चे स्वभे वा संस्थितो गुरुः ॥
गोचरेऽपि सुराचार्यो वेदवर्णेश्वरोऽथवा ।
अशुभोऽपि शुभो ज्ञेयो यदि स्वोच्चे स्वभे स्थितः ॥
मुख्यकालस्तु बलवान्व्रते गोचरशुद्धितः ।
यतो निषिद्धवर्षस्य शान्तिर्नो दृश्यते क्वचित् ॥
मीनस्थे पद्मिनीमित्रे नीचेऽरिभे च वाक्पतौ ।
व्रतादिषु निरोधः स्याद्विन्ध्यस्योत्तरवासिनाम् ॥
[5]ऋगथर्वसामयजुषामधिपा गुरुसौम्यभौमसिताः ।
जीवो विप्राणां क्षत्रियस्य चोष्णगुर्विशां चन्द्रः ॥

### लल्लः

शाखेशगुरुरविचन्द्राणां बलमिष्टम्, अनिष्टा गुरुशुक्रस्थितयः, गुरोर्वक्रत्वातिचारबाल्यवृद्धत्वास्तमयाः सिंहस्थत्वं नेष्टानि

[1]शाखाधीशे बलवति
केन्द्रगते वा तदीयदिवसे वा ॥

[2]नीचशत्रुगृहगे पराजिते
वृत्रशत्रुसचिवेऽथवा भृगौ ।
यस्य मौञ्जरशना निबध्यते
स श्रुतिस्मृतिमखक्रियोज्झितः ॥

[3]उपनयनं विप्राणां गोदानविवाहमङ्गलादीनि ।
कुर्याद्बलवति चन्द्रे जीवे भानौ च नियमेन ॥

---

§ मुक्ता. स्मृचगतम् ।

(१) स्मृच. २७ ज्योतिःशास्त्रे ; चका. ७४९ धात्री ( भूमि ) ज्योतिःशास्त्रे ; मुक्ता. ८८ ; पुम. ४३८ हेमाद्रौ ज्योतिषे.

(२) संसौ. १०५.

(३) संव. ९९.

(४) ज्योनि. १२१-१२२.

(५) गमा. २०२.

---

(१) प्रपा. २१५.

(२) प्रपा. २१४ ; संप्र. ३७३ मौञ्ज ( मौञ्जि ).

(३) प्रपा. २१५.

[1]नीचस्थे वक्रसंस्थे ह्यतिचरणगते
बालवृद्धेऽस्तगे वा
संन्यासो देवयात्राव्रतनियमविधिः
कर्णवेधश्च दीक्षा ।
मौञ्जीबन्धो नराणां परिणयनविधि-
र्वास्तुदेवप्रतिष्ठा
वर्ज्याः सद्भिः प्रयत्नात्त्रिदशपतिगुरौ
सिंहराशिस्थिते च ॥

## दुर्गादित्यः

गुरुशुक्रचन्द्राणामस्तमयो नेष्टः

[2]दिनकरविप्लुतमूर्तिषु सुरगुरुदितिपुत्रमन्त्रि-
चन्द्रेषु ।
कुर्यान्न व्रतबन्धं तथैव गोदानमपि न कार्यम् ॥

## भीमपराक्रमः

गुरुचन्द्रसूर्यबलानीष्टानि, वर्णभेदेनेष्टानि साधा-
रणासाधारणानि ग्रहबलानि

[3]शस्ते शशिनि सुरेज्ये
सवितरि शस्ते च मेखलाबन्धः ।
भवति चिरायुर्विद्वा-
नुक्ते संवत्सरे विप्रः ॥

[4]विप्राणां गुरुसितयो राज्ञां रविभौमयोर्बलं
शस्तम् ।
इन्दोर्विशां रवीन्दुत्रिदशेज्यबलेऽखिलानां तु ॥

## माधवीये

वर्णेशगुरुशुक्रचन्द्रबलानीष्टानि

[5]वर्णेशे बलिनि द्वितीयजननं
त्रैवर्णिकानां शुभं
सर्वेषामपि वीर्यशालिषु तथा
जीवेऽप्यतीक्ष्णांशुगे ।

---

(१) अस्य स्थलादिनिर्देशाः विवाहमुहूर्तप्रकरणे. ( सं. का. पृ. १०२२ ) द्रष्टव्याः .

(२) संसौ. १५४ ; संप्र. ५७०.

(३) संसौ. १०० ; संप्र. ३७१.

(४) संसौ. १०४ तु ( च ) ; संप्र. ३७६.

(५) प्रपा. २१५.

सं. का. ३९८

शाखास्वामिनि केन्द्रगे बलयुते
वारे च तस्योत्तमे
तस्मिन् क्षीणबले तथा सुरगुरौ
शुक्रे च तन्नेष्यते ॥

## श्रीपतिः

शाखेशगुरुशुक्राणां बलमिष्टम्, अशुभभावस्थितोऽपि
स्वोच्चादिराशिस्थितो गुरुर्बलीयान्

[1]शाखाधिपे बलिनि केन्द्रगतेऽथ वाऽस्मिन्
वारेऽस्य चोपनयनं कथितं
द्विजानाम् ।
नीचस्थितेऽरिगृहगेऽथ पराजिते वा
जीवे भृगावुपनयः स्मृतिकर्महीनः ॥

अस्य शाखाधिपस्य । संत. ९२९

[2]स्वोच्चे स्वमित्रे स्वगृहे त्रिकोणे
जीवे गते यद्युपनीतिकाले ।
शिशोः सहोत्थे चतुरस्रजन्म-
कर्मान्त्यषष्ठेऽपि शुभं वदन्ति ॥

## रत्नमालायाम्

वर्णेशगुरुचन्द्रसूर्याणां बलमिष्टम्

[3]वर्णाधिपे बलोपेते उपनीतिक्रिया हिता ।
सर्वेषां च गुरौ चन्द्रे सूर्ये च बलशालिनि ॥

## राजमार्तण्डः

गुरुबलमावश्यकम्, पितुः सूर्यबलं बटोः शाखेशवर्णेशबले
सर्वेषां गुरुचन्द्रसूर्यबलानीष्टानि, गुरुशुक्रयोरस्तमनं
सूर्यस्य निरंशत्वं चानिष्टम्

[4]जीवोदये जीवगृहे( ? होदये ) वा
जीवांशके जीवनिरीक्षिते वा ।
अल्पश्रुतोऽपि व्रतबन्धनेषु
वागीशतुल्यो भवति द्विजेन्द्रः ॥

---

(१) प्रपा. २१५ स्मिन् वारेऽस्य ( स्य वारेऽपि ) कथितं ( गदितं ) तृतीयपादे ( नीचस्थिते रिपुगृहे च पराजिते च ) गावुपनयः ( गौ श्रुतिविधिः ) ; संत. ९२९ (=).

(२) प्रपा. २१४, ३१७.

(३) संप्र. ३७६ ; संब. ९७ उत्त. , श्रीपतिः .

(४) संसौ. १३५.

**प्रशस्तं वाक्पतिक्षेत्रे तद्युक्ते चान्यवेश्मनि ।**
**तद्द्रेष्काणे नवांशे वा त्रिंशांशे द्वादशांशके ॥**

**[1]पितुः सूर्यबलं श्रेष्ठं शाखावर्णेशयोर्बटोः ।**
**सर्वेषां गुरुचन्द्रार्कबलं श्रेष्ठं व्रतादिषु ॥**

सर्वेषामित्यनेन येषां न शाखाधिपो गुरुस्तेषामपि बटूनां तत्पितॄणां च गुरुबलमावश्यकम् । उभयोरलाभे बटोरावश्यकमिति ध्वन्यते । † संकौ. १२१

**[2]अस्तंगते दैत्यगुरौ गुरौ वा**
**शर्क्षेऽथवा पापयुतेऽप्यभुक्ते ।**
**व्रतोपनीतो दिवसैः प्रणाशं**
**प्रयाति देवैरपि रक्षितो यः ॥**

**[3]नष्टे शुक्रेऽथवा जीवे निरंशे चैव भास्करे ।**
**उपनीतस्य शिष्यस्य जडत्वं मृत्युरेव च ॥**

## श्रीधरीये

गुरुबलमावश्यकम्

**[4]उक्तौ गर्भाष्टमाद्युक्तवर्षे**
**विप्रादीनामुच्यते मौञ्जिबन्धः ।**
**अर्थायस्त्रीधर्मपुत्राख्यसंस्थे**
**स्याद्वागीशे जन्मचन्द्रर्क्षयोश्च ॥**

ऋक्षशब्दो राशौ वर्तते । स च जन्मचन्द्रयोरुभयत्र संबध्यते जन्मराशिश्चन्द्रराशिश्चेति । अत्र जन्मशब्दस्य पूर्वोक्त्या तस्य प्राधान्यं विवक्षितम् । सुतस्य जन्मचन्द्रलग्नयोः अर्थायस्त्रीधर्मपुत्राख्यसंस्थे द्वितीयैकादशसप्तमनवमपञ्चमराशिषु वागीशे स्थिते सति मौञ्जीबन्धनं स्यात् । शिष्टेषु सप्तसु स्थानेषु जीवे स्थिते न शस्तमिति । स्यादिति सत्तामात्रार्थसूचकेन क्रियापदेन नियतो वर्षविधिः प्रबलो भवति, श्रुतेर्बलवत्त्वात् ।

प्रपा. २१३–२१४

## अर्णवे

वर्णेशविभागः, शाखेशवर्णेशबले इष्टे

**[1]ब्राह्मणस्य गुरुः प्रोक्तो नृपस्य ज्योतिषां पतिः ।**
**बुधो वैश्यस्य शूद्रस्य सुखदः शीतदीधितिः ॥**

§ अत्र शूद्रशब्देन पारशवो गृह्यते, तस्य 'एतया निषादस्थपतिं याजयेत्' इति यागदर्शनेन संस्कारावश्यंभावात् । संप्र. ३६५

**[2]शाखाधिपे मुख्यगृहेण युक्ते**
**कुर्याद्दिने चाप्युपनायमाख्यम् ।**
**तद्वत्कुलेशे विधिमेशयुक्ते**
**समस्तसंपत्तिसुखानि च स्युः ॥**

कुलेशः जात्यधिपतिः । प्रपा. २१५

---

† संर. संकौवत् ।

(१) संसौ. १०९ ; संप्र. ३७६ ; संकौ. १२१ चन्द्रार्क ( चन्द्रर्क्ष ) ; संर. १७५ व्रतादिषु (प्रकीर्तितम् ) शेषं संकौवत् .

(२) संत. ९२९ शर्क्षेऽथ ( ऋक्षेऽपि ) प्यभुक्ते ( प्यनुक्ते ) कृत्यचिन्तामणौ ; संसौ. १०० यः (ऽपि).

(३) संसौ. १०० शुक्रेऽथवा जीवे (जीवे तथा शुक्रे) शिष्य ( विप्र ) रेव च ( मादिशेत् ) ; पुम. ४३९ च ( वा ) ; संर. १७४.

(४) प्रपा. २१३.

§ आदर्शपुस्तकटिप्पण्यां पुस्तकान्तरपाठोऽयम् । शूद्रशब्दप्रवृत्तेः पारशवे संकोचोक्तिरियं वर्णेशत्वोक्तेरुपनयनमात्रं प्रयोजनमित्यभिमानेन । वस्तुतस्तु प्रयोजनान्तरस्यापि सद्भावाच्छूद्रशब्दस्य शूद्रत्वावच्छिन्ने प्रवृत्तिरेव युक्ता । अत एव वराहमिहिरादिभिर्विप्रादिवर्णचतुष्टयेन सहान्त्यजानामप्यधीश उक्तः । प्रयोजनान्तरं तु "प्रयोजनं हृतनष्टादिषु ग्रहबलाच्चौरादीनां ग्रहोक्तवर्णप्रभावः एषामुपघाते तद्वर्णोपघातः । तथा च सत्यः– 'अजये जये च तुष्टावप्रीतौ वित्तनाशने लाभे । तेभ्यस्तेभ्यः कुर्युर्गुणांश्च दोषांश्च पक्षांस्तान् ॥" इति श्रीभट्टोत्पलेनोक्तम् । एवमपि पारशवोपनयने वर्णेशबलोपादानं सिध्यत्येव ।

(१) प्रपा. २१५ ; संप्र. ३६५.

(२) प्रपा. २१५.

## मुहूर्तचिन्तामणिः

वर्णेशशाखेशविभागौ, वर्णेशशाखेशगुरुशुक्रचन्द्र-सूर्याणां बलमिष्टम्, गुरोः श्रेष्ठाः पूजाशाम्य-दोषास्तदशाम्यदोषाश्च स्थितयः, गुरोः शुभाशुभस्थित्योरपवादौ

[1]विप्राधीशौ भार्गवेज्यौ कुजार्कौ
राजन्यानामोषधीशो विशां च।
शूद्राणां ज्ञश्चान्त्यजानां शनिः स्या-
च्छाखेशाः स्युर्जीवशुक्रारसौम्याः॥

अथ वर्णेशशाखेशयोः प्रयोजनस्य वक्ष्यमाणत्वाद्वर्णाधीशं शाखाधीशं च शालिन्याऽऽह– विप्रेति। विप्राधीशाविति समासान्तर्गतमप्यधीशपदमन्यत्रानुषज्यते। तेन शुक्रबृहस्पती ब्राह्मणानां स्वामिनौ, भौमसूर्यौ क्षत्रियाणां स्वामिनौ, चन्द्रो वैश्यानां स्वामी, बुधः शूद्राणां स्वामी, शनिः अन्त्यजानां चाण्डालादीनां प्रतिलोमजातीनां स्वामी। 'ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः' इति वेदक्रमात् जीवशुक्रारसौम्याः शाखेशाः स्युः। ऋग्वेदस्य गुरुः, यजुषः शुक्रः, साम्नो भौमः, अथर्वणस्य बुधः स्वामीत्यर्थः। § पीटी.

शाखेशवारतनुवीर्यमतीव शस्तं
शाखेशसूर्यशशिजीवबले व्रतं सत्।
जीवे भृगौ रिपुगृहे विजिते च नीचे
स्याद्वेदशास्त्रविधिना रहितो व्रतेन॥

अथानयोर्वर्णेशशाखेशयोः प्रयोजनं वसन्ततिलकयाऽऽह– शाखेशेति। यः स्वशाखाधिपस्तस्यैव वारः तनुः लग्नं च वीर्यं च गोचरोक्तप्रकारेण स्वगृहाद्यवस्थितत्वेन वा बलवत्त्वं च तद्व्रतेऽतिशस्तम्। यथा गुरुः ऋग्वेदिनामीशोऽतो गुरुवारे गुरुलग्ने धनुर्मीनाख्ये गुरुबले च सत्युपनयनं शुभम्। एवं सर्वत्रापि ध्येयम्। शाखेशेति। शाखा वेदः, तस्येशः स्वामी। तुल्यन्यायत्वाद्वर्णेशोऽपि ग्राह्यः। सूर्यशशिजीवाः प्रसिद्धाः। एषां बले सति व्रतं सत् स्यात्, अन्यथा नेत्यर्थः। शाखेशादीनां निर्बलत्वे फलमाह– जीव इति। जीवे वा भृगौ वा चकाराच्छाखेशे वर्णेशे वा विजिते युद्धे पराजिते वा नीचे स्वनीचराशिस्थिते सति व्रतेनानुष्ठितेन सता वेदशास्त्रविधिना– वेदः वेदाध्ययनम्, शास्त्रं शास्त्राध्ययनम्, विधिः नित्यनैमित्तिकश्रौतस्मार्तकर्मानुष्ठानाख्यः, तेषां समाहारद्वन्द्वः, तेन रहितो व्रती स्यात्।

ननु शुक्रे शत्रुगृहस्थे नीचगृहस्थे वा बटोरुपनयनं निषिद्धमित्युक्तं तदयुक्तम्। शुक्रशत्रू रविचन्द्रौ, तद्गृहे सिंहकर्कौ, तन्नीचं च कन्या, ततः कर्कसिंहकन्याराशिस्थे शुक्रे बटोरुपनयनं न कार्यमिति तु वाक्यार्थः संपद्यते। यदा शुक्रस्य कर्कादिराशित्रयावस्थितिस्तदा सामान्यतः सूर्यस्यापि दक्षिणायनगतत्वादेवोपनयननिषेधे सिद्धे पुनर्निषेधो व्यर्थः। अत्रेयं समाधिसरणिः यथा– यद्यपि सामान्यतः सूर्यस्य दक्षिणायनगतत्वं संभवति तथापि विशेषः कदाचिदसंभवोऽप्यापतति। स्पष्टीकृतिवशतो हि सूर्यात्प्राक् पश्चाद्वा एकराश्यन्तरितो राशिद्वयान्तरितो वा शुक्रः संभवति। तदा कर्कादिराशिस्थे सूर्ये शुक्रस्य स्पष्टीकृत्या कर्कादिराश्यवस्थितिः संभवतीति उपनयनकालदूषिका व्यर्थैव, दक्षिणायनसद्भावात्। यदा तु वृषमिथुनस्थिते सूर्ये स्पष्टीकृत्या कर्कसिंह(? कर्कादि)राश्यवस्थितिः शुक्रस्य संभवति विहितकालदूषिकेति सार्थक एव निषेधः। ननु शत्रुक्षेत्रावस्थितशुक्रनिषेधोऽभिहितरीत्या युक्त एव, परं नीचराश्यवस्थितशुक्रनिषेधो व्यर्थ एव। यतः स्पष्टीकृत्या जातोऽपि कन्यास्थितः शुक्रः कदाचिदपि दक्षिणायनं न व्यभिचरति। सत्यम्। 'शरद्ग्रीष्मवसन्तेषु व्युत्क्रमात्तु द्विजन्मनाम्। मुख्यं साधारणं तेषां व्रतं माघादिपञ्चसु॥' इति नारदादिवाक्येभ्यः शरत्काले वैश्यानामुपनयनं विहितमित्यवगम्यते। तत्र कदाचिच्छुक्रस्य नीचराशिकन्यावस्थित्योपनयननिषेधेन वचनसार्थक्यात्। यदा तु– 'विप्रस्य क्षत्रियस्यापि मौञ्जी स्यादुत्तरायणे। दक्षिणे तु विशां कुर्यान्नानध्याये न संक्रमे॥' इति वृद्धवसिष्ठवाक्याद्दक्षिणायनेऽपि वैश्यानां

---

§ संव. पीटीगतम्।

(१) मुचि. ५।४३–४४; संव. ९७.

मौञ्जी प्रशस्ता, तदा तु सुतरां शुक्रस्य शत्रुगृहनीचगृहस्थितत्वदोषोक्तिः सार्थिकैवेति ।

ननु शत्रुगृहस्थे गुरावप्युपनयनं निषिद्धमित्युक्तम् । तत्र गुरोः शत्रू बुधशुक्रौ, तद्गृहाणि मिथुनकन्यावृषतुलाख्यानि, तत्स्थे गुरौ बटोरुपनयननिषेधो नीचस्थितगुरुवच्छिष्टैः कुतो नाङ्गीक्रियत इति । उच्यते तत्र शिष्टाशयो यथा– ‡गुरोरस्ते सिंहस्थे मकरस्थे वा गुरौ समस्तशुभकर्मणामारम्भो निषिद्धः, तथा दोषप्रकरणे पाठात् । तथा 'स्वनीचगे' (ज्योना. २४।१५) इत्यादिवाक्यस्योपनयनप्रकरण एव पाठादनावश्यकता प्रतीयते । आवश्यकत्वे तु दोषप्रकरण एव निषेधो वक्तव्यः स्यात् । नच तत्रोक्तौ सकलशुभकर्मणां निषेधः स्यादिति वाच्यम् ।

'स्वनीचगे' इत्यस्य वाक्यस्य शेषे 'कुलशीलविवर्जितः' इति चरणरूपे 'मौञ्जीबन्धं न कारयेत्' इति पठितव्यमिति तस्यैव निषेधः सेत्स्यति । ननु मौञ्जीबन्धनपदमुपलक्षणत्वेन व्याख्यास्यते, यथा– 'उपनयनं गोदानं पाणिग्रहणं गृहप्रवेशगमनानि । अस्तमितेषु न कुर्यात्सुरगुरुभृगुपुत्रचन्द्रेषु ॥' इत्यादिषूपनयनादिपदानि । सत्यम् । सर्वत्रोपलक्षणत्वं वाक्यान्तराणि विना व्याख्यातुं दुर्घटम् । अत्र हि 'वापीकूपतडागयागगमनम्' इत्यादिश्लोकोचयादिवाक्यैकवाक्यतावशादुपनयनादिपदानि उपलक्षणत्वेन व्याक्रियन्ते, न केवलानि, सदृशवाक्यान्तराभावात् । एवं सति दोषप्रकरण एव निषेधे वक्तव्ये यदुपनयनप्रकरणे दोषाभिधानं तद्बटोः कालान्तरे संभवति वृषमिथुनकन्यातुलास्थे गुरावुपनयनं न कार्यमित्येवंपरम् । तदसंभवे तु भवत्येव, कालान्तराभावात् । नीचस्थितगुरौ तु सर्वथा न भवति, दोषप्रकरणे पाठात् गुर्वादिस्तवत् । नीचराशिगतत्वेन निषेधे सिद्धे तदंशकनिषेधो राश्यन्तरगेऽपि गुरौ नीचांशकहान्यर्थमित्यलमतिप्रसङ्गेन ।

‡ पीटी.

[1]बटुकन्याजन्मराशेस्त्रिकोणायद्विसप्तगः ।
श्रेष्ठो गुरुः खषट्त्र्याद्ये पूजयाऽन्यत्र निन्दितः ॥

अथ गुरुबलमनुष्टुभाऽऽह– बटुकन्येति । बटुः उपनयनाधिकारी । उपलक्षणत्वाद्वरोऽपि । तथा कन्या स्त्रीजात्यपत्यम् । तज्जन्मराशेः नवपञ्चमैकादशद्वितीयसप्तमस्थानस्थितो गुरुः श्रेष्ठः उत्तमः । खेति । दशमषट्तृतीयप्रथमस्थानस्थितो गुरुः पूजया धर्मशास्त्रोक्तपूजाविधानेन स्वनुष्ठितेन श्रेष्ठः । अन्यत्र चतुर्थद्वादशाष्टमाख्यनिन्द्यस्थानस्थितः सन् द्विगुणत्रिगुणादिपूजया स्वनुष्ठितयाऽपि निन्द्यः निषिद्ध इत्यर्थः । पीटी.

[2]स्वोच्चे स्वभे स्वमैत्रे वा स्वांशे वर्गोत्तमे गुरुः ।
रिःफाष्टतुर्यगोऽपीष्टो नीचारिस्थः शुभोऽप्यसन् ॥

---

‡एतदादिर्ग्रन्थश्चिन्त्योपपत्तिकः । तथाहि–नारदसंहितायां सर्वशुभकर्मसाधारणं दोषप्रकरणं न पृथगस्ति, किंतु विवाहाध्याये एव दोषनिरूपणमस्ति । तत्र च 'नास्तंगते सिते जीवे न तयोर्बाल्यवृद्धयोः । न गुरौ सिंहराशिस्थे सिंहांशकगतेऽपि वा ॥' (ज्योना. २७।३।४) इति निषेधो न सर्वशुभकर्मसाधारणः, 'विवाहं देवतानां च प्रतिष्ठां चोपनायनम्' इतिप्रकृतकर्मविशेषसंबन्धात् । 'अस्तगा नीचगाः शत्रुराशिगाश्च पराजिताः । न शक्तास्ते फलं दातुं दानमश्रोत्रिये यथा ॥' (ज्योना. २७।३।१०३, १०४) इति वचनस्य तु स्वशब्दैर्दृष्टान्तस्वारस्याच्च अस्तगादीनां फलदानसामर्थ्याभावपरत्वम्, न विपरीतफलदानसामर्थ्यपरत्वम् । तेन तस्य तद्द्वारकं निषेधे पर्यवसानं दुर्घटम् । किंच तस्य कथंचिन्निषेधपर्यवसायित्वाभ्युपगमेऽपि सर्वकर्मसाधारणदोषप्रकरणपठितत्वस्याऽऽवश्यकत्वे हेतुत्वम् उपनयनप्रकरणपठितत्वस्य चानावश्यकत्वे हेतुत्वं प्रमाणानुक्तेरसिद्धम्, प्रत्युत सामान्यविध्यपेक्षया विशेषविधेर्बलीयस्त्वस्य स्वभावसिद्धत्वेन व्यत्यासेनैव हेतुहेतुमद्भावो न्यायसिद्धः । अत एव 'स्वनीचगे' (ज्योना. २४।१५,१६) इति वचनस्य पाठं भित्त्वा पीयूषाकाराभिमते सामान्यदोषप्रकरणे निवेशोऽपि विशेषविषयकत्वानपायादकिंचित्करः । अत्राऽऽवश्यकताशब्दो निषेधनित्यत्वपरः अनावश्यकताशब्दश्च यथासंभवानुष्ठेयत्वरूपानित्यत्वपरो ग्राह्यः ।

‡ संव. पीटीगतम् ।

(१) मुचि. ५।४६; संव. ९८.

(२) मुचि. ५।४७; संव. ९९.

अथ ग्रन्थकृत्स्वमतेन गुरुदोषस्यापवादमनुष्टुभाऽऽह– स्वोच्च इति। गुरुर्द्वादशाष्टमचतुर्थाख्यनिन्द्यस्थानस्थितोऽपि यदि स्वोच्चस्थाने कर्के स्वभे धनुर्मीनाख्ये स्वमैत्रे स्वमित्रगृहे मेषवृश्चिकाख्ये स्वांशे यस्मिन् कस्मिंश्चिद्राशौ धनुर्मीननवांशे वर्गोत्तमे वर्गोत्तमनवांशे, यथा वृषराशौ वृषनवांशे गुरुः वर्गोत्तम इति। उपलक्षणत्वात् स्वोच्चादिनवांशेऽपि वा स्थितः स्यात्तदेष्टशुभफलदाता। कैमुतिकन्यायेनाप्यन्येषु स्थानेष्वेतादृशो गुरुः शुभ एव। ननु गुरोः सूर्यसोमौ मित्रे। एवं सति सिंहकर्कावित्यपि कुतो न व्याख्यातमिति चेन्न। सिंहस्थस्य गुरोः स्वरूपेणैव निषेध इत्युक्तं प्राक्। कर्कस्थो गुरुरुच्चस्थ एवेति पुनरुक्तिः। अतः साधीयः प्राग्व्याख्यातम्। ‡नीचं मकरः, अरिस्थः मिथुनकन्यातुलावृषराशिस्थः गुरुः गोचरेण शुभोऽप्यसन् अनिष्टफलदातेत्यर्थः। $ पीटी.

## शिरोमणौ

भावेषु राशिषु च गुरोरिष्टानिष्टस्थितयः, पूजया शाम्या अशाम्याश्च दोषाः

[१]द्विपञ्चसप्तनवमस्थितो जीवः शुभप्रदः।
व्रतबन्धे तु पुत्रस्य कन्यायाश्च परिग्रहे॥
जन्मत्रिदशमारिस्थः पूजया शुभदो गुरुः।
चतुर्थे द्वादशे जीवे द्विगुणं पूजयेद्गुरुम्।
न शुभोऽष्टमराशिस्थो न तु पूजाशतैरपि॥
धनुर्मीनकुलीरस्थो जीवो जन्मान्त्यमृत्युगः।
विवाहमेखलादीनामबलोऽपि बलप्रदः॥
कर्कमीनधनुस्थोऽपि बटोश्चेदष्टमे यदि।
श्रुत्या चोक्तं विना वर्षे न कुर्याद्व्रतबन्धनम्॥

‡ अत्र 'नीचं मकरः, तत्स्थः' इति, 'नीचः मकरस्थः' इति वा व्याख्यातुमुचितम्।

$ संव. पीटीगतम्।

(१) धप्र. ४०.

## रत्नसंग्रहे

शाखेशवर्णेशविभागौ

[१]ऋगथर्वसामयजुषामधिपा गुरुसौम्यभौमसिताः।
जीवसितौ विप्राणां क्षत्रस्याऽऽरोष्णगू विशां चन्द्रः॥

## मुहूर्तगणपतौ

वर्णेशशाखेशगुरुशुक्रचन्द्रसूर्यताराणां बलमावश्यकम्, वर्णेशशाखेशविभागौ

[२]निजवर्णेशशाखेशभास्वद्वागीश्वरेन्दुषु।
वीर्यवत्सु द्विजातीनां व्रतबन्धः शुभप्रदः॥
जीवशुक्रौ तु विप्रेशौ भूभुजां रविमङ्गलौ।
विशोऽब्जो क्षत्र शूद्राणामन्त्यजानां पतिः शनिः॥
ऋग्वेदेशो गुरुः प्रोक्तो यजुषां भार्गवः पतिः।
सामवेदेश्वरो भौमः पतिश्चाथर्वणां बुधः॥
गुरुसूर्यबलं ज्ञेयं विवाहे यद्वि वक्ष्यते।
चन्द्रताराबलं पूर्वमुक्तं ग्राह्यं बटोः शुभम्॥

## रेणुकारिकाः

गुरुशुक्रचन्द्रबलानीष्टानि, गुरुदोषापवादः, शाखेशविभागः, गुरुशुक्रबुधानामस्तः शिशुत्वं चानिष्टम्

[३]कुमारकर्क्षावृगुरौ संस्थे दशप्रथमषट्त्रिषु।
तत्पूजास्नानतः पुण्यं व्रतबन्धं विदुर्बुधाः॥
[४]द्वादशाष्टमबन्धुस्थे मनसाऽपि न चिन्तयेत्॥
[५]अतीव दुष्टे सुरराजपूज्ये
सिंहस्थिते वा द्विजपुङ्गवानाम्।
व्रतस्य बन्धः खलु मासि चैत्रे
कृतश्चिरायुः शुभसौख्यदः स्यात्॥

(१) सिन्धु. ९४०; विपा. ४७६.
(२) संव. १०४.
(३) रेका. ९ पृ. २०.
(४) रेका. १० पृ. २०; गमा. २०१.
(५) रेका. १० पृ. २०; गमा. २०१; ज्योनि. ९३ शुभसौख्यदः (सुखसंपदे) कारिकानिबन्धे.

[1]गुरुर्भृगुसुतो धात्रीपुत्रः शशधरात्मजः ।
स्युरेते ऋग्यजुःसामाथर्वणामधिपाः क्रमात् ॥

नास्तंगते नीचराशिं गते जीवे शिशावपि ।
मेखलाबन्धनं कुर्याद्बुधे तद्वद्भृगावपि ॥
सूर्येन्दुवागीशबलं विधेयं
मौञ्जीनिबन्धे यजुषां हिताप्त्यै ॥

(१) रेका. १७–१९ पृ. २१.

## § निषिद्धकालाः

### वसिष्ठः

पूर्वसंध्यामेघगर्जनविशिष्टं दिनम् ऋतुमासतिथिनक्षत्राणामन्ताः विषनाड्यः योगकरणविशेषादिरूपाश्च काला अनिष्टाः, अनध्यायपूर्वोत्तरदिने अनिष्टे

**'व्रतेऽह्नि पूर्वसंध्यायां वारिदो यदि गर्जति ।**
**तद्दिनं स्यादनध्यायो व्रतं तत्र विवर्जयेत् ॥**

( १ ) यत्तु लल्लेन वसिष्ठनाम्नोदाहृतं वचनम् 'व्रतेऽह्नि.... विवर्जयेत् ॥' इति तदपि समूलत्वेऽकालिकगर्जविषयम्, † हारीतैकवाक्यत्वात् । 'शरदि वैश्यस्योपनयनविधानेन तद्विषये पूर्वोक्तस्यैव निषेधस्यानुवादः । तत्र काले वृष्टौ यथाऽनध्यायाभावस्तथैतद्विषयेऽपीति शङ्कावारणार्थश्च सः' इत्येके । "सामान्यतस्तद्दिने एवानध्यायः । न तु त्र्यहमित्येवं परिसंख्यायां याज्ञवल्क्येन विरोधः । ऋतुविषये त्वधिकाप्राप्तेऽर्थर्थतैव वचनस्याऽऽपतति । व्रतविवर्जनेऽनध्यायत्वमेव निमित्तम्, अतस्तदुक्तिः । 'व्रतं तत्रैव वर्जयेत्' इति नियमे चतुर्दश्यादौ तदापत्तिः । 'नैमित्तिकानध्यायेषु पूर्वसंध्यागर्ज एव, तत्रापि तद्दिने एव' इति नियमे तत्र गर्जादिसंनिपाते उपनयनापत्तिः । किंचैवं द्वेधापरिसंख्याकल्पनापेक्षया महानाम्न्यादिव्रतविषयत्वमस्य वक्तुमुचितम्, 'नैमित्तिकमनध्यायम्' इत्यादिप्राग्लिखितवसिष्ठवचनेन वेदव्रतेषु कालातिक्रमे तदनुज्ञया तदनतिक्रमे तेषां त्याज्यत्वप्रतीतेः प्रतिपद्वत्, महाव्रतप्रकरणीयैतरेयब्राह्मणाच्च" इत्यन्ये । एतेन मध्यदेशे माघे नियतवृष्टिसत्त्वेन तस्यापि कालत्वेन संध्यागर्जादौ नानध्याय इति निरस्तम् । कालगर्जादावपि दिनमात्रमनध्यायस्य सत्त्वाच्च । यत्तु 'गाण्डीवमेतत्पार्थस्य लोकेषु विदितं धनुः । एतद्वर्षसहस्रं तु ब्रह्मा पूर्वमधारयत् ॥' इत्युपक्रम्य 'पार्थः पञ्च च षष्टिं च वर्षाणि श्वेतवाहनः' इति, तत्तु 'पक्षा वै मासाः' इति श्रुत्यनुसारेण षट्सु मासेषु वर्षव्यवहारान्नानुपपन्नमिति न तदेकवर्षमध्ये द्वौ वर्षाकालावित्यत्र गमकम् ।

बाल. १।१४ पृ. ५२

( २ ) व्रत्येऽह्नि उपनयनदिवसे । वारिदः मेघः तद्दिने व्रत्यदिने उपनयनदिने इति यावत् । व्रतम् उपनयनम् । तत्र अनध्याये । अनेन वचनेन सर्वस्यैवोपनयनक्रियाकलापस्य निषेधे प्राप्ते नान्दीश्राद्धोत्तरं वेदारम्भरहितस्य सर्वस्योपनयनस्य कर्तव्यतोक्ता ज्योतिर्निबन्धे– 'नान्दीश्राद्धे कृते चेत्स्यादनध्यायस्त्वकालिकः । मौञ्जीबन्धं तदा कुर्याद्वेदारम्भं न कारयेत् ॥' इति । देशभेदेनाऽऽर्द्रादिज्येष्ठान्तव्यतिरिक्तेषु मृगादिविशाखान्तव्यतिरिक्तेषु नक्षत्रेषु वा यद्वृष्टिगर्जनादिकं तदकालिकम्, तन्निमित्तोऽनध्यायोऽकालिकः । स च नान्दीश्राद्धोत्तरं चेत्तदा मौञ्जीबन्धम् उपनयनं कुर्यात्, तत्रत्यं वेदारम्भमात्रं तु नैव कारयेदित्यर्थः । 'नान्दीश्राद्धे कृते' इति वचनान्नान्दीश्राद्धात्प्राग्वारिदगर्जने मौञ्जीबन्धोऽपि न भवति । 'वेदारम्भं न कारयेत्' इति निषेधस्तु येषां सूत्रे वेदारम्भस्तद्दिन एव विहितस्तत्परः ।

---

§ तिथिनक्षत्रादिरूपाः केचिन्निषिद्धकाला गुरुशुक्रास्तबाल्याद्यवच्छिन्नाश्च निषिद्धकालास्तत्तत्प्रकरणेषु द्रष्टव्याः ।

† यद्यपि 'सायंसंध्यास्तनिते रात्रिः ( ? त्रिम् ), प्रातःसंध्यास्तनितेऽहोरात्रम्' इति पूर्वधृते हारीतवचने स्तनितस्याकालिकत्वं नोक्तम्, तथापि तस्य तत्परत्वं प्रकरणवशादस्तीति बालंभट्टस्याभिमतं स्यात् ।

(१) वसं. २९।३३ व्रतेऽह्नि ( व्रते हि ) यो व्रतं तत्र ( यं व्रतबन्धं ) ; गभा. २०२ तद्दिनं ( तद्दिने ) लल्लः ; संसौ. १२३ ; सिन्धु. ९४१ सर्वं गभावत् ; विपा. ४७८ सर्वं गभावत् ; संकौ. १२३ सर्वं गभावत् : १५५–१५६ व्रते ( व्रत्ये ) तद्दिनं ( तद्दिने ) लल्लादिनिबन्धोदाहृतं वसिष्ठवचः ; बाल. १।१४ पृ. ५२ सर्वं संकौ. १५५-१५६ वत् ; संग. ६४९ सर्वं गभावत् ; संब. १०० ध्यायो ( ध्यायं ) ; पुम. ४४० व्रतेऽह्नि (व्रताह्नि) लल्लः ; संर. १७९ संकौ. १५५–१५६ वत्, लल्लः .

सत्याषाढसूत्रानुसारिभिरकालिकानध्यायेऽपि मौञ्जीबन्ध एतस्माद्वचनात्कर्तव्य एव । वेदारम्भस्त्वविहितत्वादेव न भवति । ननु 'गायत्र्यारम्भेणैव सर्ववेदारम्भो भवति' इति प्रयोगान्तर उक्तत्वाद्गायत्र्युपदेशात्मकारम्भ एव सर्ववेदारम्भः, तस्य च 'वेदारम्भं न कारयेत्' इत्यनेन निषेध इति चेन्न, तस्य अथर्ववेदव्यतिरिक्त-सर्ववेदा( न्तरा ? )ध्ययनार्थकपुनरुपनयननिवृत्तिबोधना-र्थत्वात् । न चात्र किं मानमिति वाच्यम्, 'सर्वेभ्यो वै वेदेभ्यः सावित्र्यनूच्यत इति हि ब्राह्मणम्' इति धर्मसूत्रस्य "अगृह्यमाणविशेषत्वात् एकमेवोपनयनं सर्वार्थमिति न्यायः । अस्मिन्नर्थे शाट्यायनब्राह्मणमेव पठितम् । अथर्ववेदस्य तु पृथगुपनयनं वचनात्कर्त-व्यम् । तथा च तत्रैव श्रुतम्— 'नान्यत्र संस्कृतो भृग्व-ङ्गिरसोऽधीयीत' इति । अन्यत्र अन्यवेदार्थम् । भृग्वङ्गि-रसः अथर्ववेदः" इत्युज्ज्वलाकृद्व्याख्यानस्य च मान-त्वात् । संर. १७९–१८०

( ३ ) विवर्जयेदिति विशेषेण वर्जयेदित्यर्थः । पूर्व-संध्यागर्जने दोषोऽधिक इति भावः । कृभ. ९४१

[१]पापग्रहेक्षिते लग्ने मौढ्ये च गुरुशुक्रयोः ।
ऋत्वन्ते चैव मासान्ते तिथ्यन्ते विषनाडिषु ॥
[२]नक्षत्रान्ते च विष्ट्यां च षडशीतिमुखे तथा ।
दिनक्षये व्यतीपाते सग्रहे ग्रहपीडिते ॥
[३]शून्यमासदिने राशौ ग्रहदोषसमन्विते ।
कालकर्णिकलौ वज्रे विष्कम्भे परिघे तथा ॥
[४]मूले च वैधृतौ चैव कण्टके स्थूलकण्टके ।
अष्टम्यां चैव रिक्तायां सर्वोत्पातादिदूषिते ॥
[५]उक्तादन्यर्क्षसंयोगे चन्द्रे गण्डातिगण्डयोः ।
उडुपक्षीणकाले च वर्जयेदुपनायनम् ॥

(१) संसौ. ११० ; पुम. ३३९.

(२) संसौ. ११० क्षये ( द्वये ) ; पुम. ४३९.

(३) संसौ. ११० सदिने राशौ ( से दिने रात्रौ ) पू. ; पुम. ४३९.

(४) पुम. ४४०.

(५) संसौ. ११० उक्त. ; पुम. ४४०.

[१]अनध्यायस्य पूर्वेद्युस्तस्य चैवापरेऽहनि ।
व्रतबन्धं विसर्गं च विद्यारम्भं न कारयेत् ॥

( १ ) 'अनध्यायात्परेऽहनि' इति द्वितीयेतरविष-यम्, सुरेश्वरेण तस्याः प्रतिपदोपादानात् । संसौ. ११२

( २ ) 'अनध्यायात्परेऽहनीति' द्वितीयेतरविष-यम्, बृहस्पत्यादिभिः तस्याः साक्षादुपादानात् । संप्र. ३६३

( ३ ) "'अनध्यायात्परेऽहनि' इति द्वितीयेतर-विषयम् । द्वितीयायाः सुरेश्वरेण प्रतिपदोक्तत्वात्" इत्यपि व्याख्या *तत्रैव । अत्रानध्यायपदं नित्यानध्याय-परम्, न तु नैमित्तिकानध्यायपरम्, तेषामनित्यत्वेन नित्यानित्यसंयोगविरोधात् । ननु 'सतम्यादित्रयम्' इति नवम्या अपि निषेधात्कोऽस्य विषयः ? उच्यते । निषेध-द्वयवशाद्दोषाधिक्यकल्पनेति केचित् । पितामहचरणास्तु यदा नवमी दशदण्डा तदा 'निषेधः कालमात्रके' इतिवचनात्तदुत्तरमुपनयनं प्राप्तमनेन निषिध्यत इत्याहुः । ‡संम. २२–२३

## नारदः

तिथिरूपनित्यानध्यायास्तत्पूर्वापरतिथयः अन्ये चानध्यायास्त्याज्याः

[२]चतुर्दशीद्वयं चैव प्रतिपच्चाष्टमी तथा ।
पक्षयोरुभयोरेवमनध्यायाष्टकं विदुः ॥

* 'टोडरानन्दे कारिकानिबन्धे' इति प्रकृतम् ।

‡ कृभ. संमवत् ।

(१) संसौ. ११२ द्युस्तस्य चैवाप ( द्युरनध्यायात्प ) व्रतबन्धं ( व्रतारम्भं ) कारिकानिबन्धे ; संप्र. ३६३ सर्वं संसौवत् ; संम. २२ ध्यायस्य ( ध्यायाच्च ) शेषं संसौ-वत्, टोडरानन्दे कारिकानिबन्धे ; सिन्धु. ९३५ ; विपा. ४७४ चैवाप ( चैव प ) ; ज्योनि. १२३ द्युस्तस्य चैवाप ( द्युरनध्यायात्प ) कारिकानिबन्धे ; संकौ १२१ न कार-येत् ( विवर्जयेत् ) शेषं संसौवत्, स्मृत्यन्तरे ; संग. ६४८ चण्डेश्वरः ; संर. १७४ न कारयेत् ( च वर्जयेत् ) शेषं संसौवत्, स्मृत्यन्तरे. (२) ज्योनि. १२३.

पूर्वापरतिथिभ्यां तु तदुक्तं मौञ्जिबन्धने ।
त्याज्या अन्येऽप्यनध्यायाः परित्यक्तास्तु केवलाः ॥

## वृद्धगर्गः

अनध्याया माघे तिथिविशेषाश्च वर्ज्याः

[1]स्मृतिषूक्काननध्यायान् सप्तमीं च त्रयोदशीम् ।
पक्षयोर्माघमासस्य द्वितीयां परिवर्जयेत् ॥

## अनिर्दिष्टकर्तृकवचनम्

महादोषास्त्याज्याः

[2]अथोपनयनं वक्ष्ये द्विजानां शुभकाङ्क्षिणाम् ।
त्यजेत्तत्र महादोषांस्त्याज्यप्रकरणोदितान् ॥

## संग्रहकारः

तिथिविशेषा अनध्यायाश्च वर्ज्याः

[3]रिक्ताष्टमीपर्वतिथीननध्यायांश्च वर्जयेत् ॥

वर्ज्यास्तिथयः संग्रहे– 'रिक्ताष्टमी...... ॥' इति । अनध्यायान् नित्यान्नैमित्तिकांश्च ।

$ प्रपा. २१६

## सुरेश्वरः

अकालवर्षभूकम्पनिर्घातगलग्रहेषु अनध्याये च निषेधः

[4]कुर्यान्नाकालवर्षे च व्रतोपनयनं द्विजः ।
नानध्याये न भूकम्पे निर्घाते न गलग्रहे ॥

## राजमार्तण्डे

बहुग्रहभिन्नभे पापोत्पातपीडितभे रात्रौ संध्याया-मनध्याये गलग्रहे च व्रतनिषेधः

[5]न भूरिग्रहभिन्ने भे न पापोत्पातपीडिते ।
न रात्रौ न च संध्यायां नानध्याये गलग्रहे ॥

## दैवज्ञमनोहरे

गलग्रहप्रदोषयोरनिष्टफलम्

[1]गलग्रहे प्रदोषे च स्वल्पायुरुपजायते ॥

## मुहूर्तचिन्तामणिः

कृष्णपक्षप्रदोषानध्यायशनिवाररात्र्यपराह्णप्राक्संध्यागर्जित-गलग्रहाः उत्पातादिदोषाः ग्रहकृतलग्नदोषाश्च वर्ज्याः

[2]कृष्णे प्रदोषेऽनध्याये शनौ निश्यपराह्णके ।
प्राक्संध्यागर्जिते नेष्टो व्रतबन्धो गलग्रहे ॥

अथ व्रतबन्धे वर्ज्यपदार्थाननुष्टुभाऽऽह– कृष्ण इति । एषु दुष्टपदार्थेषु सत्सु व्रतबन्धो नेष्ट इति वाक्यार्थः । तत्र कृष्णे प्रथमत्रिभागरहितकृष्णपक्षे ... तथा प्रदोषे यस्मिन् दिने संध्याकाले प्रदोषो भवेत्तद्दिवसे व्रतबन्धो नेष्टः । प्रदोषलक्षणं स्वयमेव वक्ष्यति । अनध्यायेऽपि नेष्टः । अनध्यायानग्रे वक्ष्यति । शनौ नेष्टः । अत्र संमतिरुक्ता । निशि रात्रौ नेष्टः । अपराह्णकेऽपि नेष्टः । अत्र संमतिवाक्यं प्रागलेखि । इयं पुनरुक्तिः स्मरणा-विच्छेदार्था । तथा प्राक्संध्या प्रातःसंध्या, तस्यां गर्जिते मेघध्वनौ अनध्यायनिमित्ते सति नेष्टः । ... तथा गलग्रहे गलग्रहाख्ये दिवसे व्रतबन्धो नेष्टः । गलग्रहानाह गुरुः– 'त्रयोदश्यादिचत्वारि सप्तम्यादिदिनत्रयम् । चतुर्थी चैकतः प्रोक्ता अष्टावेते गलग्रहाः ॥' । यत्तु वसिष्ठेन– 'कृष्णपक्षे चतुर्थी च सप्तम्यादिदिनत्रयम् । त्रयोदशी-चतुष्कं च अष्टावेते ग्रलग्रहाः ॥' इत्यत्र कृष्णपक्षीय-चतुर्थीग्रहणं कृतं तद्दोषाधिक्यप्रतिपत्त्यर्थम्, न तु शुक्ल-पक्षीयचतुर्थ्या अग्रहणार्थम् । कुतः ? गुरुवाक्यस्य वैयर्थ्या-पत्तेः । § नन्वत्र रात्रिनिषेधो व्यर्थः, यतो दिवसे पूर्वा-

§ नेदं विचारसहम् । तथाहि– परमार्थतः सर्वेषामार्षा-नार्षग्रन्थानां मूलश्रुत्यनुवादत्वेनैव प्रामाण्येऽपि व्यवहारे प्रतिशास्त्रग्रन्थमवान्तरपृथक्शास्त्रत्वमाश्रित्य प्रतिशास्त्रं विधीनां पृथक्त्वं तत्तच्छास्त्रव्यवस्थितमेवानुवादत्वं च

$ चम., बाल. प्रपावत् ।

(१) संत. ९२८.

(२) ज्योनि. १२१.

(३) प्रपा. २१६ ष्टमी (षष्ठी) तिथीन (तिथीर); संप्र. ३६२; चम. १५; बाल. १।१४ पृ. ४६.

(४) मपा. १९.

(५) संसौ. १२९.

(१) संग. ६५०.

(२) मुचि. ५।४८; बाल. १।१४ पृ. ५० (=); संग. ६५० द्वितीयपादे (रात्रौ निश्यपराह्णिके) चिन्ता-मणौ; संब. ९९.

ह्वादयस्त्रयः काला उपनयने श्रेष्ठमध्यमाधमा उक्ताः। यदाह मनुः— 'सर्वदेशेषु पूर्वाह्णे मुख्यं स्यादुपनायनम्। मध्याह्ने मध्यमं प्रोक्तमपराह्णे च गर्हितम्॥' । तत्र 'अपराह्णोपनीतस्तु पुनःसंस्कारमर्हति' इत्यपराह्णकालस्यातिनिषिद्धत्वात्कैमुतिकन्यायेन रात्रिरपि निषिद्धेति वाचनिको रात्रिनिषेधो व्यर्थ इति चेत्। सत्यम्। 'अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च। तीर्थयात्रां विना गत्वा पुनःसंस्कारमर्हति॥' इति पुनःसंस्कारनिमित्तापत्तौ 'निमित्तानन्तरमेव नैमित्तिकम्' इति न्यायेन पुनरुपनयने प्राप्ते यदि रात्रिसद्भावस्तदोपनयनं मा भूदिति रात्रिपदोक्तिः। अनयैव रीत्या प्रदोषोक्तिरपि सार्थिका। यतः सायंकालीनसमयः प्रदोषशब्दवाच्यः, 'प्रदोषो रजनीमुखम्' इत्यमरोक्तेः। वयं तु प्रदोषग्रहणाद्यद्दिने लक्षणविशिष्टः प्रदोषो भवेत्तद्दिनमुपनये त्याज्यमिति ब्रूमः। ननु यत्रापराह्णकालो निन्दितस्तत्र प्रदोषस्तु सुतरां निन्द्य इति प्रदोषग्रहणसामर्थ्यात् पुनरुपनयननिषेधार्थं प्रदोषग्रहणमिति चेन्न। रात्रिपदवत्सर्वथा वैयर्थ्ये सत्येवं गतिर्युक्ता। न च तदत्र पश्यामः, निबन्धकर्तृभिरुपनयनप्रकरण एव प्रदोषलक्षणवाक्यानां लिखितत्वात्, यद्यपि तानि, 'सर्वविद्याविघातकृत्' इति 'ब्रह्म नाधीयते नरैः' इत्यादीनि च सामान्यतो विद्यारम्भवेदारम्भविषयकाणि, तथापि प्रथमातिक्रमे कारणाभावादक्षरस्वीकार एव तल्लेखनस्य युक्तत्वात्। अत एव शिष्टाः सायं यद्दिने प्रदोषस्तद्दिने गलग्रहरहितेऽप्युपनयनं (न) कुर्वन्ति। उक्तं च शार्ङ्गधरीये— 'स्वाध्याये पूर्वाह्णे प्रदोषरहिते तथा विरिक्ते च। हित्वा शनिकुजवारौ स्वाध्याये पूर्वपरदिवसे च॥' । नन्वनध्यायेषु गलग्रहेषु च व्रतबन्धो निषिद्ध इत्युक्तम्, तदयुक्तम्। विहिततिथ्यभावादेव भविष्यति। विहिताश्च तिथय इमाः— द्वितीयातृतीयापञ्चमीषष्ठीदशम्येकादशीद्वादश्यः 'द्वित्रीषु' इत्यादिनोक्ताः। उच्यते— द्विविधा अनध्यायाः नित्या नैमित्तिकाश्च। नित्या अष्टम्यादयः, नैमित्तिका मन्वाद्याः(१ द्यादयः)। तत्र मन्वादिराषाढशुक्लदशमी स्वाध्याय एव, सोपपदा अपि स्वाध्याया एव, संक्रान्तिः कदाचित्स्वाध्यायेष्वपि स्यादित्येतासु तिथिषु व्रतबन्धो मा भूदिति आसामनध्यायत्वोक्तिः। चैत्रशुद्धवैशाखशुद्धतृतीययोर्मन्वादियुगाद्योस्तु 'या चैत्रवैशाखसिता तृतीया' इत्यादिवसिष्ठवाक्येन वाचनिकं व्रतबन्धविषयत्वम्। अन्यासां मन्वादिस्वाध्यायतिथीनां दक्षिणायनगतानामनध्यायत्वे प्रथमवेदारम्भो मा भूदिति प्रयोजनम्, 'ब्रह्म नाधीयते नरैः' इति वाक्यान्तेऽभिधानात्। वेदस्योपलक्षणत्वात्सकलविद्यारम्भोऽपि। एतच्च सामान्यतः सर्वासामप्यनध्यायतिथीनां प्रयोजनम्। मन्वादितिथिषु दानादिकमपि

---

व्यवह्रियते। न हि समानविषयकेष्वनेकस्मृतिगतविध्याकारवाक्येष्वेकस्यैव विधित्वमन्येषामनुवादत्वं चेति कल्पयितुं शक्यम्, विनिगमनाविरहात्कस्यापि विधित्वकल्पनायोगात्, स्मृतीनां स्मृतिमूलकत्वापत्तेश्च। एवं निषेधेष्वपि बोध्यम्। तथा च मनुशास्त्रीयनिषेधेन चिन्तामणिशास्त्रीयनिषेधस्य व्यर्थत्वाक्षेपो नोपपद्यते। किंच, चिन्तामणिवचनोक्तानां कृष्णपक्षादिविषयकाणां सर्वेषां निषेधानां स्मृतिशास्त्रेषु स्वशब्दोक्तत्वेऽपि तत्र न व्यर्थत्वमापादितम्, रात्रिनिषेधस्य आर्थत्वेऽपि तत्र व्यर्थत्वमापादितमिति तु सुतरां नोपपद्यते। तस्मात् 'न चापराह्णे' (५।४०) इतिचिन्तामणिगतनिषेधमूलककैमुतिकन्यायसिद्धरात्रिनिषेधमाश्रित्य वैयर्थ्यापादनं कर्तुमुचितम्। वस्तुतस्तु अपराह्णोपनयनस्यापि पुनरुपनयननिमित्तत्वात् तत्रापि निमित्तानन्तरनैमित्तिकन्यायेन रात्र्युपनयनप्राप्तावपि यदि कैमुतिकन्यायेन रात्रिनिषेधः कल्प्यते तर्हि धर्मिग्राहकमानादेव रात्रिनिषेधस्य निमित्तानन्तरनैमित्तिकन्यायबाधकत्वस्यापि सिद्धत्वात् तदर्थरात्रिनिषेधस्य वैयर्थ्यं तदवस्थमेव। किंच, नैमित्तिकोपनयननिवृत्त्यर्थं पुनर्निषेधापेक्षायामपराह्णादिविषयेषु पुनर्निषेधाभावात् तत्र प्राप्तं तत् कथं वार्यताम्? तस्मात् रात्रिनिषेधस्यापूर्वत्वं वाऽस्तु, स्पष्टत्वार्थं कैमुतिकन्यायसिद्धस्यानुवादत्वं वाऽस्तु, न तत्रोक्ततात्पर्यसंभवः। निमित्तानन्तर्यं तु स्वभावप्रबलसर्वविधिनिषेधानुरोधेनैव कल्पनीयम्, यथा जननशान्तिषु द्वादशाहकर्तव्यताविधेर्वा आशौचानुष्ठाननिषेधस्य वाऽनुरोधेन जननाद्यवहिते द्वादशाहादिकाले आनन्तर्यं कल्प्यत इति। 'अनयैव रीत्या' इत्यादिग्रन्थे च महती व्याकुलता। अतस्तद्विवृतेः शुद्धिकल्पनायाश्चापि गरीयस्त्वात्साऽत्रोपेक्षिता।

प्रयोजनं स्मर्यते मत्स्यपुराणे— ' मन्वन्तरादयश्चैते दत्तस्याक्षयकारकाः ' इति । अथ चतुर्दश्यादयो यद्यनध्याया नोच्येरंस्तदा विहितप्रतिषिद्धत्वाभावान्मध्यमत्वावसाय-स्तिथीनां स्यात् । तत्र यथा स्वशाखीयनक्षत्रालाभे अनिषिद्धान्यन्यान्यपि नक्षत्राणि गृह्यन्ते तथा कदाचिद्विहित-तिथ्यलाभे मध्यमतिथिष्वप्युपनयनं स्यात् , तन्मा भूदित्येतदर्थं चतुर्दश्यादीनामनध्यायत्वम् । एतदेव समाधानं तुल्यन्यायत्वाद्गलग्रहेष्वपि ध्येयम् । पीटी.

[१]उत्पातान्सहपातदग्धतिथिभि-
र्दुष्टांश्च योगांस्तथा
चन्द्रेज्योशनसामथास्तमयनं
तिथ्याः क्षयर्द्धी तथा ।
गण्डान्तं च सविष्टिसंक्रमदिनं
तन्वंशपास्तं तथा
तन्वंशेशविधूनथाष्टरिपुगान्
पापस्य वर्गांस्तथा ॥
[२]सेन्दुक्रूरखगोदयांशमुदया-
स्ताशुद्धिचण्डायुधान्
खार्जूरं दशयोगयोगसहितं
जामित्रलत्ताव्यधम् ।
बाणोपग्रहपापकर्तरि तथा
तिथ्यृक्षवारोत्थितं
दुष्टं योगमथार्धयामकुलिका-
द्यान्वारदोषानपि ॥
[३]क्रूराक्रान्तविमुक्तभं ग्रहणभं
यत्क्रूरगन्तव्यभं
त्रेधोत्पातहतं च केतुहतभं
संध्योदितं भं तथा ।
तद्वच्च ग्रहभिन्नयुद्धगतभं
सर्वानिमान्संत्यजे-
दुद्वाहे शुभकर्मसु ग्रहकृतां-
ल्लग्नस्य दोषानपि ॥

अथ विवाहादिशुभकार्येष्वावश्यकान्वर्ज्यदोषानविस्मरणार्थं शार्दूलविक्रीडितत्रयेणाऽऽह—उत्पातानिति । उत्पातादीन् दोषानुद्वाहे विवाहे यज्ञोपवीतादिशुभकर्मसु च संत्यजेदिति तृतीयश्लोकगतेनान्वयः । उद्वाहग्रहणं गोबलीवर्दन्यायेन मुख्यत्वसूचनार्थम् । उत्पातान् त्रिविधान् दिव्यान्तरिक्षभौमान् लक्षणया तत्संबन्धिसप्तवर्ज्यदिवसान् त्यजेत् । ... पातः महापातः क्रान्तिसाम्यमिति यावत् । तद्गणितप्रसिद्धम् । दग्धतिथयः ' चापान्त्यगे गोघटगे ' इत्यादिनोक्ताः । एतैः सह संत्यजेदिति संबन्धः । तथा दुष्टान् व्यतीपातवैधृतिपरिघार्धादीन् । अथ चन्द्रेज्योशनसां चन्द्रगुरुशुक्राणां अस्तमयनम् अस्तं च । तिथ्याः क्षयर्द्धी तिथिवृद्धितत्क्षयं च । पुनर्गण्डान्तं नक्षत्रतिथिलग्नैः त्रिविधम् । विष्टिर्भद्रा, संक्रमदिनम्— ' देवद्व्यङ्क ' इत्यादिना संक्रमकालादुभयतो वर्ज्या घटिकाः, अयनेषु विषुवेषु च पूर्वापरं त्रिदिनमिति विशेषो ध्येयः , ताभ्यां सहितमिति पूर्वेण संबन्धः । तन्वंशपास्तमिति । तनुः लग्नम् , अंशः लग्नगतविहितनवांशः , तौ पात इति तन्वंशपौ, तयोरस्तं लग्नाधीशलग्ननवांशाधीशास्तं चेत्यर्थः । तथा तन्वंशेशविधून् लग्नेशनवांशेशचन्द्रान् अष्टरिपुगान् अष्टमषष्ठस्थानगान् । तथा पापस्येत्येकत्वमविवक्षितम् , पापग्रहाणां वर्गान् । सेन्दुक्रूरखगोदयांशम्— इन्दुश्च क्रूरखगश्चेन्दुक्रूरखगौ, उदयः लग्नं च अंशः नवांशश्च उदयांशमिति समाहारद्वन्द्वैकवचनम् , इन्दुक्रूरखगाभ्यां सहितमुदयांशम् । इन्दुसहितं लग्नं लग्नांशं क्रूरग्रहेण सहितं लग्नं लग्नांशं चेत्यर्थः । उदयास्ताशुद्धिचण्डायुधान् उदयाशुद्धिरस्ताशुद्धिश्च ' इष्टोदयांशे निजपत्यदृष्टे वरस्य मृत्युस्तदसंयुते वा । अस्तांशकेऽप्येवमदृष्टयुक्ते स्वस्वामिना नाशमुपैति कन्या ॥ ' इति वसिष्ठाद्युक्तम् (१ क्ता) । 'इतरथा ज्ञेयमशुभम्' इति ग्रन्थकर्त्राऽप्युक्तं प्राक् । चण्डायुधं ' हर्षणवैधृतिसाध्या ' इत्या-

(१) मुचि. ६।१०५ ; संग. ६५२–६५३ तन्वंशेश ( तन्वंशे स ).

(२) मुचि. ६।१०६ ; संग. ६५३ सहितं (सहितां) तिथ्यृक्षवारो ( तिथ्यर्क्षयोगो ).

(३) मुचि. ६।१०७ ; संग. ६५३ यत्क्रूरग ( क्रूरस्य ग ).

दिनोक्तम् । खार्जूरम् ‘ व्याघातगण्डे ’ इत्यादिनोक्तम् । दशयोगः– ‘ सूर्यर्क्षचन्द्रर्क्षयुतेः ’ इत्यादिनोक्तः, योगः ग्रहयुतिश्च, तत्सहितम् । जामित्रलत्ताव्यधम् । समाहारद्वन्द्वैकवचनम् । जामित्रं द्विविधम्– लग्नजामित्रं चन्द्रजामित्रं च ‘ लग्नाच्चन्द्रः ’ इत्यादिनोक्तम् । लत्ता ‘ शराद्रुपूर्णेन्दुमिता ’ इत्युक्ता । व्यधं वेधं सप्तशलाकोक्तं पञ्चशलाकोक्तं च । बाणाः पञ्चकम् । उपग्रहः प्रसिद्धः ‘शराष्टदिक्शक्र ’ इत्यादिनोक्तः । पापकर्तरी क्रूरग्रहकर्तरी । समाहारद्वन्द्वैकवचनम् । तिथ्यृक्षवारोत्थितं दुष्टं योगं तिथिनक्षत्रवारैः उत्थितम् उत्पन्नं दुष्टयोगम् । तथा तिथिनक्षत्रोद्भवम्– ‘ वैश्वमादिम ’ इत्यादि( ? दिम् ), तिथिवारोद्भवं ‘ सूर्येशपञ्च ’ इत्यादि( ? दिम् ), नक्षत्रवारोद्भवं ‘ याम्यं त्वाष्ट्रम् ’ इत्यादि( ? दिम् ), तिथिनक्षत्रवारोद्भवं ‘ हस्तार्कपञ्चमी ’ इत्यादि( ? दिम् ) अनेकं दुष्टयोगम् । अथार्धयामकुलिकाद्यान् वारदोषानपि । स्पष्टार्थम् । आदिशब्देन दुर्मुहूर्तादिकान् । क्रूराक्रान्तविमुक्तभं क्रूराक्रान्तं क्रूरविमुक्तं च भम् । ग्रहणभं यस्मिन् भे सूर्यचन्द्रोपरागो जातस्तद्भम् । यत् क्रूरगन्तव्यभं क्रूरेण जिगमिषितं यद्भं नक्षत्रम् । त्रेधोत्पातहतं च भं त्रिविधोत्पातैः दिव्यभौमान्तरिक्षैरुत्पातैर्हतम् । तन्मासषट्कं त्याज्यम् । एवं ग्रहनक्षत्रमपि । केतुहतभं च केतुना हतं भं च । ननु केतोर्दिव्योत्पातत्वात्त्रेधोत्पातहतमित्यनेनैव निषिद्धमिति किं पुनर्विशेषनिषेधेन ? उच्यते । अशुभफलदकेतोराधूमनैः स्पर्शैः स्थानैश्च नक्षत्रान्तरेऽपि दोषवत्ताऽस्ति । ...... तथा संध्योदितं भम् । अत्र संध्याशब्देन सायंसंध्या गृह्यते । तत्रोदितं तत्काले यस्य नक्षत्रस्य क्षितिजे उदयस्तत्तु सूर्यर्क्षाच्चतुर्दशं नक्षत्रमित्यर्थः । न तु प्रातःसंध्यायाम्, तत्र हि सूर्येणाऽऽक्रान्तभुक्तभान्यतमसत्त्वात् । ननूपग्रहत्वादेव निषेधे सिद्धे पुनर्दोषाभिधानं किमर्थम् ? उच्यते । उपग्रहर्क्षदोषस्य सत्यावश्यकत्वे कुरुबाह्लीकविषयत्वाच्चतुर्दशस्य तु भस्य दोषाधिक्यसूचनादावश्यकेऽपि सर्वदेशविषयत्वेन निषेधो यथा स्यादिति । तद्वच्च ग्रहभिन्नयुद्धगतभं ग्रहेण भेदितं ग्रहयुद्धगतं च षण्मासं निषिद्धम् । तथा ग्रहकृतान् लग्नस्य दोषान् ‘ व्यये शनिः खेऽवनिजः ’ इत्यादिकान् संत्यजेत् । पीटी.

## रत्नकोशे

चन्द्रादर्शनशुक्रास्तमनसूर्यनिरंशत्वानध्यायगलग्रहेषूपनयननिषेधः

**‘नष्टे चन्द्रेऽस्तगे शुक्रे निरंशे चैव भास्करे ।**
**कर्तव्यं नोपनयनं नानध्याये गलग्रहे ॥**

( १ ) राशेः प्रथमभागस्थितसूर्यो निरंशः । चतुर्थी सप्तमी नवमी त्रयोदशी गलग्रहः । अप. १।१४ पृ. ३२

( २ ) गलग्रहोऽपि तत्रैवोक्तः– ‘ त्रयोदशीचतुष्कं तु सप्तम्यादित्रयं तथा । चतुर्थ्येकाकिनी प्रोक्ता अष्टावेते गलग्रहाः ॥ ’ । $ स्मृच. २७

## मुहूर्तगणपतौ

कृष्णपक्षशनिवारापराह्णप्रदोषरात्रिगलग्रहानध्यायेषु निषेधः

**‘कृष्णपक्षे शनौ रात्रौ प्रदोषे वा गलग्रहे ।**
**अनध्यायेऽपराह्णे च न कुर्याद्व्रतबन्धनम् ॥**

## रेणुकारिकाः

चन्द्रादर्शनशुक्रास्तमयसूर्यनिरंशत्वानध्यायगलग्रहेषु निषेधः

**‘नष्टे चन्द्रेऽस्तगे शुक्रे निरंशे चैव भास्करे ।**
**कर्तव्यं नोपनयनं नानध्याये गलग्रहे ॥**

---

$ शेषम् अपगतम् । चका., प्रपा., चम., संम., संकौ., बाल. स्मृचवत् ।

(१) अप. १।१४ (=) ; स्मृच. २७ (=) कर्तव्यं नो ( कर्तव्यमौ ) ; चका. ७५१ नोप ( चोप ) ; प्रपा. २१६ स्तगे ( ष्टमे ) अपरार्के ; संप्र. ३६२ सर्वं प्रपावत् ; चम. १५ सर्वं प्रपावत् ; मुक्ता. ८८ स्तगे शुक्रे ( ष्टमे शुक्रे ) अपरार्के ; संम. २२ नयनं ना ( नयनम ) ; संकौ. १२१ चैव भास्करे ( भास्करे तथा ) शेषं सर्वं प्रपावत् ; बाल. १।१४ पृ. ४६ सर्वं प्रपावत् ; संव. १०० नष्टे ( क्षीणे ) शेषं सर्वं प्रपावत् ; संर. १७३ चैव भास्करे ( भास्करे तथा ) शेषं सर्वं प्रपावत् .

(२) संव. १०४.

(३) रेका. १२ पृ. २० ; संग. ६४६ चन्द्रेऽस्तगे ( चन्द्रे गते ).

# गुणदोषयोर्बलाबलविचारः

## वसिष्ठः

दुर्बलगुणेभ्यो दोषा बलीयांसः , बलवद्भ्योऽपि दोषेभ्यो बलीयांसो गुणविशेषाः

[1]दोषोऽप्येको गुणान्हन्ति तद्विरोधी गुणो न चेत् ।
पञ्चगव्ययुतं पूर्णं कुम्भं मद्यलवो यथा ॥

[2]लग्नं सर्वगुणोपेतं दोषेणैकेन दूषितम् ।
त्यजेत्तदङ्गुलमिव ह्युरगक्षतदूषितम् ॥

[3]दोषोऽप्येको निहन्त्येव सकलं गुणसंचयम् ।
लग्नोत्थं शुभखेटोत्थमनृतं सुकृतं यथा ॥

[4]पञ्चाङ्गलग्नलग्नांशशुभग्रहकृतान् गुणान् ।
दोषोऽप्येको गुणान् हन्ति स्वैरिणी स्वजनानिव ॥

[5]निहन्ति सिद्धामृतयोगजाता-
न्पञ्चाङ्गजातानपि लग्नजातान् ।
शुभग्रहोत्थानखिलान्गुणौघा-
नेकोऽपि दोषो हि यथा नृकोऽज्ञान् ॥

[6]गुणाननेकाञ्छुभखेटजाता-
न्पञ्चाङ्गलग्नामृतयोगजातान् ।
एकोऽपि दोषः सुतरां निहन्ति
स्वपुण्यराशीनिव कूटसाक्षी ॥

(१) वसं. २९।६५ गुणो ( गुणे ) ; संसौ. १४१ युतं ( मयं ) ; संप्र. ३८३–३८४ युतं पूर्णं कु ( मयं पूर्णकु ).

(२) वसं. २९।६६.

(३) वसं. २९।६७ ; संसौ. १४१ गुण ( पुण्य ) ; संप्र. ३८४ संसौवत् .

(४) वसं. २९।६८ ; संसौ. १४१ ; संप्र. ३८४.

(५) वसं. २९।६९ ; संसौ. १४२ ( हि० ) ; संप्र. ३८४.

(६) वसं. २९।७० स्वपुण्य ( सुपुण्य ) ; संसौ. १४२ ( ऽपि० ) ; संप्र. ३८४.

[1]एकस्मिन् कूटगे दोषे नाशयत्यखिलान् गुणान् ।
शरीरस्थे क्षये रोगे यथा द्राक् सप्त धातवः ॥

[2]सर्वानिमानतिबलः स्फुरदंशुजालो
लग्नोपगः प्रशमयेत्सुरराजमन्त्री ।
एको बहूनि दुरितानि सुदुस्तराणि
भक्त्या प्रयुक्त इव शूलधरे प्रणामः ॥

एकोऽपि केन्द्रगः सौम्यः सकलं दोषसंचयम् ।
विनाशयति घर्मांशुरुदितस्तिमिरं यथा ॥

[3]शुभग्रहः स्वोच्चसंस्थो लग्नं पश्यति चेद्यदा ।
तदा दोषा लयं यान्ति ग्रीष्मे कुसरितो यथा ॥

[4]निरीक्ष्यमाणे लग्ने तु मित्रर्क्षस्थैः शुभग्रहैः ।
दोषा लयं ययुः सर्वे लग्नलग्नांशसंभवाः ॥

[5]स्वोच्चांशगैः शुभैर्लग्ने दृष्टे युक्ते यदा तदा ।
लग्नलग्नांशसंभूताः सर्वे दोषा लयं ययुः ॥

[6]एकोऽपि सौम्यखचरः स्वाधिमित्रगृहस्थितः ।
आलोकयति चेल्लग्नं सर्वदोषविनाशकृत् ॥

[7]मित्राधिमित्रस्वक्षेत्रसंस्थे सति शुभग्रहे ।
वीक्षमाणे यदा लग्नं तदा दोषा लयं ययुः ॥

(१) वसं. २९।७१.

(२) वसं. २९।७२–७३ ; संसौ. १४२ ; संप्र. ३८४.

(३) वसं. २९।७४ यान्ति ( प्राप्ता ) ; संसौ. १४२ चेद्यदा ( चेद्यथा ) ; संप्र. ३८४.

(४) वसं. २९।७५ द्वितीयपादे (मित्रसंस्थे शुभग्रहे) ; संसौ. १४२ ; संप्र. ३८४.

(५) वसं. २९।७६ गैः शुभैर्ल ( गे शुभे ल ) सर्वे दो ( सर्वदो ) ययुः ( गताः ) ; संसौ. १४२ सर्वे दो ( सर्वदो ) ; संप्र. ३८५ ग्ने दृष्टे युक्ते ( ग्नैर्दृष्टे लग्ने ).

(६) वसं. २९।७७ ; संसौ. १४३ ; संप्र. ३८५.

(७) वसं. २९।७८ वीक्ष ( वीक्ष्य ) लग्नं ( लग्न ) ; संसौ. १४३ ; संप्र. ३८५.

'ये पापखेटप्रभवाश्च दोषा
विलग्नलग्नांशकसंभवा ये ।
केन्द्रे गुरुस्तान्विमलीकरोति
फलं यथाऽम्भः कतकद्रुमस्य ॥

**बृहस्पतिः**

बलवद्गुणेन दुर्बलदोषबाधः

'दोषे बलविहीने च गुणे बहुबलैर्युते ।
अपवादबलैर्दोषप्रध्वंसो भावगे शुभे ॥

(१) वसं. २९।७९ मलीक ( मलान् क ); संसौ. १४३ ; संप्र. ३८५.

(२) प्रपा. २१८.

**श्रीपतिः**

सर्वथा निर्दोषता दुर्लभा, बहुगुणैरल्पदोषबाधः

'समस्तगुणसंपदां न खलु लब्धिरल्पैर्दिनै-
र्गुणप्रचुरता ततो बहुमता च
दोषाल्पता ।
न भूरिगुणसंचये प्रभवतीह दोषोऽल्पको
ह्युदर्चिषि हुताशने सलिल-
बिन्दुरेको यथा ॥

अल्पैर्दिनैरित्युपलक्षणम् । बहुभिरपि दिवसैर्निर्दोषं न लभ्यते । † संसौ. १४१

**कश्यपः**

निर्दोषगुणवत्ता दुर्लभा

'निर्दोषं गुणसंयुक्तं देवैरपि सुदुर्लभम् ॥

† संप्र. संसौवत् ।

(१) संसौ. १४१ ; संप्र. ३८३.

(२) संसौ. १४१ ; संप्र. ३८३.

# मुहूर्तविषयकसंकीर्णवचनानि

## नारदः

मुहूर्तप्रशंसा, दैवज्ञपूजा

[1]एवं सम्यग्विचार्यैव काले निर्दोषतां गते ।
कृतोपवीतः शिष्यः स्याद्दीर्घायुः सर्वसम्पत्कृत् ॥
दैवज्ञं सम्यगभ्यर्च्य पुरः कनकभूषणैः ।
वस्त्रगोभूयुतैर्भृत्यैर्यथाशक्ति न वञ्चयेत् ॥

## कृत्यचिन्तामणौ

इष्टानि तिथिवारनक्षत्राणि ग्रहसंस्थानं
चन्द्रबलताराबले च

[2]स्वातीशक्रधनाश्विमित्रकरभे
पौष्णेज्यचित्राहरि-
ष्विन्दौ तोयपतौ भगेऽदितिसुते
भाद्रद्वये सागरे ।
केन्द्रस्थे भृगुजेऽङ्गिरःशशिसुते
चन्द्रे च तारे शुभे
कर्तव्यं व्रतकर्म मङ्गलतिथौ
वाराः सितार्केज्यकाः ॥

अदितिसुतः उत्तराफल्गुनी । सागरः पूर्वाषाढा ।

संत. ९२८

## भुजबलभीमे

इष्टानि तिथिवारनक्षत्राणि ग्रहसंस्थानं
चन्द्रबलताराबले च

[3]स्वातीशक्रधनाश्विमित्रकरभे
पौष्णेज्यचित्राहरि-
ष्विन्दौ तोयपतौ भगेऽदितिसुते
भाद्रद्वये सागरे ।
केन्द्रस्थे भृगुजेऽङ्गिरःशशिसुते
चन्द्रे च तारे शुभे
कर्तव्यं व्रतकर्म मङ्गलतिथौ
वाराः सितार्केज्यकाः ॥

## राजमार्तण्डः

इष्टानि अयनपक्षवारगुरुबलचन्द्रबलानि

[1]शुक्ले पक्षे शुभस्थे शशिनि शुभकरे
देवपूज्येऽथ वारे
सम्यग्भानोः सितस्य त्रिदशपतिगुरो-
श्चोत्तरे तिग्मभानौ ॥

## कालविधाने

शुक्लपक्षचन्द्रबलगुरुशुक्रोदयशाखेशबलशुभलग्न-
शुभनक्षत्राणीष्टानि

[2]शुक्ले पक्षे निर्मले शीतभानौ
शुक्रे जीवे चाम्बरे दृश्यमाने ।
शाखाधीशे शक्तियुक्तेऽनुकूले
राशावृक्षे स्याच्छिशोर्मौञ्जिबन्धः ॥

अत्र शुक्ले पक्षे इत्यनेन प्रथमपक्षस्य प्राधान्यमुच्यते । निर्मले शीतभानौ (इति) कुमारस्य चन्द्रबलप्राधान्यमुच्यते । शुक्रे जीवे चाम्बरे दृश्यमाने इति । गुरुशुक्रयोरनस्तमितयोरबालवृद्धयोः सतोरित्यर्थः । शाखाधीशे शक्तियुक्ते इति । शाखाः ऋगादयः, तदधीशाः गुरुसितभौमशनैश्चराः, एतेषां मध्ये निजशाखाधिपे शक्तियुक्ते सति केन्द्रगते तदीयदिवसे वोपनयनं कर्तव्यम् । अथ राश्यानुकूल्यमाह– (अनुकूले) राशावृक्षे स्याच्छिशोर्मौञ्जिबन्ध इति । *वाशब्दः समुच्चये । अनुकूले राशौ इत्यनेन शिशो-

---

(१) प्रपा. २१८ (=) ; विपा. ४७८ पुरः (वस्त्रैः) द्वितीयतृतीयार्धे व्यत्यासेन पठिते, चतुर्थार्धं नास्ति.

(२) संत. ९२८.  (३) संत. ९२८.

* यद्यपि पारिजातपुस्तके मूलवचने प्रतीके चास्मद्गृहीत एव पाठो मुद्रितस्तथाऽपि वाशब्दघटितः पाठो-

(१) संसौ. १२८.

(२) प्रपा. २१४–२१५ ; संप्र. ३५९ ( शुक्ले पक्षे निर्मले शीतभानौ राशौ चर्क्षे स्याच्छिशोर्मौञ्जिबन्धः ॥ ) ; संग. ६४५ संप्रवत् .

जन्मलग्नचन्द्रलग्नयोरनुकूले राशौ मौञ्जिबन्धः कर्तव्य इति प्रतिपाद्यते । ऋक्षे इत्यत्राप्यनकूले इत्यनुवर्तते । शिशोरनुकूले नक्षत्रे मौञ्जीबन्धनं स्यादित्यन्वयः ।

प्रपा. २१५

## मुहूर्तचिन्तामणिः

सर्वविप्रपुत्राणां क्षत्रियवैश्ययोर्द्वितीयादिपुत्राणां चोपनयने जन्ममासतिथिनक्षत्रलग्नानि प्रशस्तानि

***[1]जन्मर्क्षमासलग्नादौ व्रते विद्याधिको व्रती ।**
**आद्यगर्भेऽपि विप्राणां क्षत्रादीनामनादिमे ॥**

## दीपिकायाम्

व्रते गुरुरविशाखेशवर्णेशबलानि उदगयनं स्वाध्यायदिनं तिथिवारनक्षत्रलग्नविशेषाश्चन्द्रबलं गुरोरस्तादिचाराभावश्चेत्येतानीष्टानि

**[2]जीवार्केन्दुब्धशुद्धौ हरिशयनबहिर्भास्करे चोत्तरस्थे**
**स्वाध्याये वेदवर्णाधिप इह शुभदे क्षौरमे नादितौ च ।**
**शुक्रार्केज्यर्क्षलग्ने रविमदनतिथिं प्रोज्झ्य षष्ठाष्टमेन्दुं**
**नो जीवास्तातिचारेऽर्कसितगुरुदिने कालशुद्धौ व्रतं स्यात् ॥**

रविमदनतिथिं सप्तमीत्रयोदशीम् । षष्ठाष्टमेन्दुं लग्नापेक्षया । प्रोज्झ्य त्यक्त्वा । संत. ९२८

## मुहूर्तमालायाम्

व्रते इष्टानि मासवारनक्षत्राणि

**[1]माघषट्के सितारेज्यबुधे पौष्णश्रुतिद्वये ।**
**हस्तत्रये धातृषट्सु ब्राह्मणस्यौपनायनम् ॥**

## शौनककारिकाः

उदगयनं शुक्लपक्षः शुभानि तिथिवारनक्षत्रलग्नानि गुरुबलं दोषाभावश्चेत्येतानीष्टानि

**[2]शुद्धाष्टमादौ सूत्रोक्तवत्सरे दोषवर्जिते ।**
**लग्नद्वयस्यापि वशे शुभस्थानस्थिते गुरौ ॥**

**[3]तथोत्तरायणे चैव शुक्लपक्षे गुणान्विते ।**
**नक्षत्रगुणसंपन्ने तिथिवारसमन्विते ।**
**मुहूर्ते बहुमौहूर्तविहिते दोषवर्जिते ॥**

ऽभिप्रेत इत्यस्माद्व्याख्यानान्निश्चीयते । स तु 'राशौ वर्क्षे' इति वा 'वा शिशोर्मौ' इति वेति न निर्णीयते ।

* अस्य व्याख्यानम् अयनर्तुमासपक्षविचारप्रकरणे ( सं. का. पृ. ३१३३–३१३४ ) द्रष्टव्यम् ।

(१) मुचि. ५।४५ ; संव. ९८ ; संर. १७२.

(२) संत. ९२८ ; संप्र. ३६७ ; बाल. १।१४ पृ. ६८ पू.

(१) बाल. १।१४ पृ. ६१, ६४ : ७० उत्त.

(२) शौका. १ पृ. ४१ ; प्रपा. २१४.

(३) शौका. २ पृ. ४१–४२ नक्षत्रगु ( नक्षत्रे गु ) तृतीयार्धं नास्ति ; प्रपा. २१४ गुणा ( बला ).

## आश्वलायनगृह्यसूत्रम्

पुनरुपनयने कालानियमः

[1]**कालश्च ॥**

(१) कालश्चानियतः । देभा.

(२) उदगयनादिरनिरुक्तः । ‡ गानावृ.

(३) यो निरुक्तः कालः सोऽत्र न भवति । अत्र यस्यकस्यचित् कालस्यावर्जनीयत्वादुक्तकालस्य प्रतिषेधो विधेयः । तदर्थं पूर्वत्रानिरुक्तवचनम् । अभिहितः कालः अष्टमवर्षादिरत्र न भवतीति । अनारभ्यमाणे एतस्मिन् यावतो वेदानध्येतुं शक्नोति कुमारस्तावन्त्युपनयनानि तस्मिन्नेव काले स्युरिति सूत्रारम्भः । अना.

(४) यद्यपि 'अथोपेतपूर्वस्य' इत्युक्त्वा 'अनिरुक्तं परिदानं कालश्च' इत्याश्वलायनेन पुनरुपनयने कालानियम उक्तस्तथाऽपि निमित्तानन्तरमेव सः । तदानीमकरणे तु पूर्वोक्तकालो ज्ञेयः । प्रतिवेदमुपनयने कालानियम इति तु युक्तम् । सिन्धु. ९३८

## आग्निवेश्यगृह्यसूत्रम्

पुनरुपनयनं शुक्लपक्षपुण्यनक्षत्रयोः

[2]**पूर्वपक्षे पुण्ये नक्षत्रे ॥**

## वृद्धवसिष्ठः

अनध्यायेऽपि नैमित्तिकमुपनयनम्

[3]**अनध्यायेऽपि कुर्वीत यस्य नैमित्तिकं भवेत् ॥**

---

‡ प्रपा., संप्र., संम., विपा. गानावृवत् ।

(१) आगृ. १।२२।२५ ; प्रपा. २३९ ; संप्र. ५४३ ; संम. २७ ; सिन्धु. ९३८ ; विपा. ४७७ ; संको. १५६ ; बाल. १।१४ पृ. ५७ ; कृभ. ९७२.

(२) आग्निगृ. २।७।१.

(३) मुक्ता. ८८ यस्य ( यस्तु ) त्तिकं ( त्तिको ) ; कृभ. ९३३ (=).

## मनुः

पुनरुपनयने वसन्तादिकालानियमः

[1]**कालश्चैव वसन्तादिर्न निरीक्ष्यः कथंचन ॥**

नैमित्तिकत्वादिति भावः । आन. १६५

## व्यासः

पुनरुपनयने शुक्लचतुर्दशीकृष्णप्रतिपदाविष्टे

[2]**विप्रश्चातीतकालश्चेच्छस्ता शुक्ला चतुर्दशी ।**
**कृष्णे तु प्रतिपच्चेष्टा प्रायश्चित्तोपनायने ॥**

## वृद्धगार्ग्यः

पुनरुपनयने अनध्यायादिनिषिद्धकालानुज्ञा

[3]**अनध्याये प्रकुर्वीत यस्तु नैमित्तिको भवेत् ।**
**सप्तमी माघशुक्ले तु तृतीया चाक्षया तथा ।**
**बुधत्रयेन्दुवाराश्च शस्तानि व्रतबन्धने ॥**

(१) यत्तु बृहद्गार्ग्यवचनम् 'अनध्याये' इति (तत्) प्रायश्चित्तार्थोपनयनपरम् । ‡ गभा २०२

(२) अपिना दक्षिणायनकृष्णपक्षयोः समुच्चयः । नैमित्तिकं प्रायश्चित्तरूपम् । संत. ९२९

[4]**स्वाध्यायवियुजो घस्राः कृष्णप्रतिपदादयः ।**
**प्रायश्चित्तनिमित्ते तु मेखलाबन्धने मताः ॥**

(१) घस्राः वासराः । मुक्ता. ८८

---

‡ सिन्धु. गभावत् ।

(१) मुक्ता. ११८ ; आन. १६५ (=).

(२) मुक्ता. ८८.

(३) गभा. २०२ ध्याये ( ध्यायं ) बृहद्गार्ग्यः ; संत. ९२९ ये प्रकु ( येऽपि कु ) यस्तु ( यस्य ) त्तिको ( त्तिकं ) प्रथमार्धमात्रम्, गर्गः ; मुक्ता. ८८ वाराश्च ( वाराणि ) तृतीयार्धमात्रम् ; सिन्धु. ९३८ बृहद्गार्ग्यः.

(४) गभा. २०२ निर्णयामृते कालादर्शे च ; मुक्ता. ८८ ; संम. २३ प्रथमपादे ( नैमित्तिकानध्यायाः ) ; सिन्धु. ९३८ बृहद्गार्ग्यः ; कृभ. ९३३ (=) प्रथमपादमात्रम् ; संर. १७३.

(२) स्वाध्यायवियुजो घस्राः स्वाध्यायवर्जित-दिनानि। कृभ. ९३८

(३) वियुजः विषमाः। घस्रा दिनानि। स्वाध्याय-वियुजो दिवसास्तृतीयापञ्चमीसप्तमीनवम्येकादशीत्रयो-दश्यन्ताः प्रायश्चित्तोपनयन उपयुज्यन्त इत्यर्थः। संर. १७३

## आश्वलायनः

पुनरुपनयने कालानियमः

[1]उत्तरायणकालादिर्नियतिर्न विधीयते ॥

(१) आश्वस्मृ. ११।१९० ; प्रपा. २३९ ; संप्र. ५४४.

## संग्रहकारः

पुनरुपनयनेऽप्यनापदि निषिद्धकालानुज्ञा

[1]कृष्णे कामद्वये देशे शुभा मौञ्जीति यद्वचः।
तत्पुनः प्राप्तसंस्कारविषयं संकटाद्दते ॥

## शौनककारिका:

पुनरुपनयने कालानियमः

[2]तत्रोदगयनादिश्च कालो नापेक्ष्यतेऽत्र तु ॥

(१) ज्योनि. १२२.

(२) प्रपा. २३९ तत्रो (तथो) ; संप्र. ५४५ ; विपा. ४८८ ; कृभ. ९७१.

## वृद्धविष्णुः

नान्दीश्राद्धोत्तरमकालिकानध्याये उपनयनानुज्ञा वेदारम्भनिषेधश्च

***'नान्दीश्राद्धे कृते चेत्स्यादनध्यायस्त्वकालिकः ।**
**तदोपनयनं कार्यं वेदारम्भं न कारयेत् ॥**

(१) अकालिकः गर्जननिर्घातादिनिमित्तकः । आश्वलायनानामुपनयनदिने वेदारम्भाभावात् †वेदारम्भाकरणं तु यजुर्वेदिविषयम् । आश्वलायनस्तु वृद्धिश्राद्धदिनात्षड्दिनमध्ये मुहूर्तान्तरे सति तेनैव नान्दीश्राद्धेन तत्रोपनयनं कुर्यात् । तदूर्ध्वं तु मुहूर्ते श्राद्धान्तरपूर्वकमुपनयनं यथाकालं कुर्यात् । पृ. ८१

* संख्याख्यानं निषिद्धकालप्रकरणे 'व्रतेऽह्नि पूर्वं ..' इति वसिष्ठवचनव्याख्याने (सं. का. पृ. ३१८७) द्रष्टव्यम्।

† 'वेदारम्भाकरणात्तु' इति पाठोऽत्र भवितुं युक्तः । तथा पाठे 'यजुर्वेदिनः प्रति संनियोगशिष्टयोरेवोपनयनवेदारम्भयोर्वचनविषयत्वस्यौचित्यात् वेदारम्भनिषेधात् संपूर्णं वचनं यजुर्वेदिविषयम्' इति तात्पर्यार्थसंपत्तेराश्वलायनाविषयत्वतात्पर्यकाग्रिमग्रन्थाविरोधः । यथाश्रुतपाठे तु कौस्तुभोक्तमतान्तरवत् 'कार्यम्' इत्यन्तवचनस्याऽऽश्वलायनसाधारणत्वप्रतीतेरग्रिमग्रन्थविरोधः ।

(१) गभा. २०२ श्राद्धे कृते ( श्राद्धं कृतं ) ज्योतिर्निबन्धे : २३१ ; प्रर. ८१ चेत्स्या ( पश्चा ) तृतीयपादे ( मौञ्जीबन्धं तदा कुर्याद् ) क्रमेण वृद्धविष्णुः ; चम. १७ चेत्स्या ( पश्चा ) तृतीयपादे ( मौञ्जीबन्धं ततः कुर्याद् ) क्रमेण विष्णुः ; सिन्धु. ९४१ सर्वं गभा. २०२ वत् ; विपा. ४७९ सर्वं गभा. २०२ वत् ; ज्योनि. १२३ (=) वेदा ( विद्या ) ; संकौ. १२३ सर्वं गभा. २०२ वत् ; बाल. १।१४ पृ. ४८ प्ररवत् , क्रमेण विष्णुः : १।१४ पृ. ५३ न कार (विवर्ज) ज्योतिर्निबन्धे ; संग. ६४९ सर्वं गभा. २०२ वत् ; संर. १७९ तृतीयपादे ( मौञ्जीबन्धं तदा कुर्याद् ) ज्योतिर्निबन्धे.

यदा गर्जनाद्यनध्यायशङ्का तदा दिवैव चरुं श्रपयेत् , होमस्तु सायंसंध्योत्तरमेव, तदा नानध्यायदोषः । तदुक्तं संग्रहे– 'न संध्यागर्जिते काले न वृष्ट्युत्पातदूषिते । ब्रह्मौदनं पचेदग्नौ पक्वं चेन्न निवर्तते ॥' तथा 'ब्रह्मौदनं पचेदह्नि पक्वमन्नं न दुष्यति' । तथा चोपनयनानुप्रवचनीयचरुश्रपणयोरन्तराऽनध्याये पुनरुपनयनम् ।

§ प्रर. ८७

(२) एतद् बह्वृचातिरिक्तानाम् , तेषां तद्दिने वेदारम्भाभावात् । अतस्तेषामुपनयनं न भवत्येव । ऐतरेयोपनिषदि 'मृगादिज्येष्ठान्तं वर्षर्तुः , तं विना वर्षादौ त्रिरात्रमनध्यायः' इति वेदभाष्ये उक्तम् । एतच्च प्रातः स्तनिते, सायं स्तनिते तु दिवैव चरुं श्रपयित्वा सायंसंध्योत्तरं होमं कुर्यात् , 'न संध्यागर्जिते काले न वृष्ट्युत्पातदूषिते । ब्रह्मौदनं पचेदग्नौ पक्वं चेन्न निवर्तते ॥ (तथा) ब्रह्मौदनं पचेदग्नौ( ? दह्नि ) पक्वमन्नं न दुष्यति ॥' इति संग्रहोक्तेरिति प्रयोगरत्ने भट्टचरणाः ।

¶ सिन्धु. ९४१–९४२

[ न भवत्येवेति । लक्षेन निषेधात् । कौस्तुभे तु "कार्यमित्यन्तं सावधारणम् , 'वेदारम्भं न कारयेत्' इति निषेधस्तु संभवत्प्रासिकविशेषविषयः" इत्युक्तम् , तत्तु नूतनोपनयनानुष्ठानप्रचारलाभाय एवकारपूरणम् , न तु तज्जन्यबाटवसंस्कारलाभायेति वदन्ति । कृभ. ९४१ ]

(३) यत्तु ज्योतिर्निबन्धे– 'नान्दीश्राद्धं... कारयेत् ॥' इति, एतन्न बह्वृचविषयम् , तेषामुपनयने वेदारम्भाभावेन निषेधासंभवादिति बहवः । केचित्तु– कार्यमित्यन्तं सर्वसाधारणम् , निषेधस्तु संभवत्प्रासिकविशेषविषयोऽस्तु, 'आर्षेयं वृणीते' इत्यादेः साधारणत्वेऽपि याज्ञिकमते 'न चतुरो वृणीते' इत्यादिनिषेधयोर्द्व्यामुष्यायणविषयत्ववदित्याहुः । संकौ. १२३

§ चम. प्ररवत् ।

¶ विपा. सिन्धुगतम् ।

(४) यत्तु ज्योतिर्निबन्धे— 'नान्दीश्राद्धे...... विवर्जयेत्' इत्युक्तम्, तत्र बह्वृचविषयम्। तेषामुपनयने वेदारम्भाभावेन निषेधासंभवात्। तदर्थस्तु नान्दीश्राद्धे कृते यद्यकालभवोऽनध्यायः स्यात्तदोपनयनं कार्यं वेदारम्भस्तु वर्ज्य इति बहवः प्रामाणिकाः। यत्तु कार्यमित्यन्तं सर्वसाधारणं निषेधस्तु संभवत्प्राप्तिकविषय इति तन्न। संनियोगशिष्टन्यायेनोभयोरेकविषयत्वौचित्यात्। वाक्यभेदापत्तेश्च। वेदारम्भातिरिक्ताङ्गकमुपनयनं कार्यमित्येकवाक्यतौचित्यात्। '† वेदारम्भं तु वर्जयेत्' इति पाठे तथाऽर्थासंभवाच्चेति दिक्। बाल. १।१४ पृ. ५३

†वर्जनस्य पर्युदासरूपत्वात् वाक्यभेदासंभवात् 'उपनयनविधिः सर्वविषयः, वेदारम्भाभावस्तु यजुर्वेदिविषयः' इति वाक्यार्थद्वयस्यासंभव इति ग्रन्थस्यास्य तात्पर्यम्। बालंभट्टयां मूलवचने 'वेदारम्भं विवर्जयेत्' इति पाठो मुद्रितः। विवर्जयेत्, वर्जयेत् इत्यनर्थान्तरम्। नापि 'न कारयेत्' इति पाठः पराभिमतत्वेन व्याख्याने उल्लिखितः। तथा च पाठान्तरत्वमभिप्रेत्य प्रवृत्तोऽयं ग्रन्थो न संगच्छते।

(५) एतच्चाऽऽश्वलायनकात्यायनाद्यन्यविषयम्, तेषां तद्दिने वेदारम्भाभावात्। अत एषामुपनयनं तद्दिने न भवत्येव। संग. ६४९

## अनिर्दिष्टकर्तृकवचनम्

नान्दीश्राद्धोत्तरमुल्कापातादौ सूतकादौ चोपनयननिषेधः

**[1]नान्दीश्राद्धे कृते पश्चादुल्कापाताग्निवृष्टिषु।**
**सूतकादिनिमित्तेषु न कुर्यान्मौञ्जिबन्धनम्॥**

## रेणुकारिका:

नान्दीश्राद्धोत्तरमकालिकानध्याये उपनयनानुज्ञा वेदारम्भनिषेधश्च

**[2]नान्दीश्राद्धे कृते चेत्स्यादनध्यायस्त्वकालिकः।**
**तदोपनयनं कार्यं वेदारम्भं न कारयेत्॥**

अतः 'न कारयेत्' इत्येव पाठो मूलवचने बालंभट्टस्याभिमत इति भाति।

(१) प्रपा. २४५; धप्र. ४० दुल्कापा (द्विद्युत्पा).
(२) रेका. १५ पृ. २१; गमा. २०२.

# अधिकारार्थप्रायश्चित्तम्

## वृद्धविष्णुः

सावित्र्युपदेशतद्ग्रहणाधिकारसिद्ध्यर्थमुपनेतु-
रुपनेयस्य च प्रायश्चित्तम्

**[1]कृच्छ्रत्रयं चोपनेता त्रीन् कृच्छ्रांश्च बटु-**
**श्चरेत् ।**
**सावित्रीमभ्यसेदग्निपवित्राणि च संस्मरन् ॥**
**[2]सहस्रं द्वादशावृत्तं सावित्रीं प्रजपेद्बुधः ।**
**स्वाधिकारार्थमेवास्याः प्रदानार्थं हि तत्स्मृतम् ॥**

( १ ) आचार्यकुमारयोः उपनेतृत्वोपनेयत्वाधिकार-सिद्ध्यर्थं प्रत्येकं कृच्छ्रत्रयमाचरितव्यम् । तदाह वृद्ध-विष्णुः– ' कृच्छ्रत्रयं ...... चरेत् । ' इति । आचा-र्यस्य विशेष उच्यते– ' सावित्री ...... स्मृतम् ॥ ' इति । ¶ प्रपा. २२०

( २ ) अग्निपवित्राणि ' अग्निः शुचिव्रततमः ' इत्या-दीनि । प्रजपेदिति नित्याभ्यासमेवानूद्य संख्याविशेषमाह – सहस्रमिति । तत्प्रयोजनमाह– स्वाधिकारार्थमिति । अस्याः प्रदानार्थं यः स्वाधिकारस्तदर्थमित्यन्वयः । ‡ संप्र. ४०९

( ३ ) संस्मरन्निति लडादेशेन गायत्रीजपं संकल्प्य तस्मात्पूर्वं मानसजप एतेषां गायत्रीजपाधिकारसिद्ध्यर्थं कार्य इति ज्ञाप्यते । इत्थं हि संस्मरणस्याभ्यसेदित्युक्त-भावनासमकालत्वं लभ्यते । * सावित्रीपदसमानाधि-करणसहस्रपदस्य संख्याविशिष्टसंख्येयपरत्वाच्च द्वादशा-वृत्तमित्यस्य न संख्यायामन्वयः, ' पञ्च पञ्चाशतस्त्रिवृतः'

---

* सहस्रसंख्याविशिष्टरूपसहस्रपदार्थे सहस्रसंख्यारूपविशे-षणांशमात्रे वा न द्वादशावृत्तपदार्थान्वयः, किंतु सावित्री-पदार्थे । तेन द्वयोः संख्ययोः शुद्धसावित्रीपदार्थे वैशिष्ट्यबोधात् ' सहस्रं सावित्र्यः द्वादश च सावित्र्यः ' इत्यर्थः संपद्यते इति ग्रन्थतात्पर्यार्थः ।

अत्रेदं पक्षान्तरमपि विचार्यम्– सहस्रशब्दस्य संख्या-विशिष्टसंख्येयपरत्वेऽपि द्वादशावृत्तपदार्थस्य संख्याया-मन्वयो व्युत्पत्तिविरोधेऽप्याश्रयणीयः । यतः स्मृतिकारो यदि द्वादशावृत्तपदार्थस्य सावित्रीपदार्थेऽन्वयमविवक्षिष्यत् तर्हि ' द्वादशावृत्ताम् ' इत्येवावक्ष्यत् । अपि च, ' पञ्चपञ्चा-शतस्त्रिवृतः ' इति दृष्टान्ते पार्ष्ठिकान्वयवेलायां यथा संख्यायामन्वयस्तथाऽत्रापि संभवत्येवेति दृष्टान्तोऽपि संख्या-न्वयोपगमेऽनुकूल एव । तदुक्तं भाट्टदीपिकायाम्– ' तेन तादृशक्रतुवर्तिनी पञ्चत्वसंख्यावच्छिन्ना पञ्चाशत्संख्या इति पार्ष्ठिकान्वयवेलायां फलितोऽर्थः ' (जैसू. ६।७।३१-४०) इति । एवं सति द्वादशत्वसंख्यावच्छिन्नसहस्रसंख्याकजप-विषयको बहुदेशीयशिष्टाचारोऽप्यनुगृहीतो भवति । तस्मात् द्वादशाधिकसहस्रसंख्यायामेव रुचिश्चेत् ' सहस्रं द्वादशावृत्तं

---

¶ संम., विपा. प्रपावत् ।

‡ शेषं प्रपावत् । संग. संप्रवत् ।

(१) **प्रपा.** २२० दग्निप ( दग्निं प ) ; **गभा.** २३१ पू. ; **प्रर.** ८१ पू. ; **संप्र.** ४०९ स्मरन् ( स्मरेत् ) ; **वम.** १७ विष्णुः ; **मुक्ता.** ९९ बटु ( पर ) दग्निप (न्नित्यं प) विष्णुः ; **संम.** २४–२५ प्रपावत् ; **विपा.** ४८५ प्रपावत्, बृहद्विष्णुः ; **संकौ.** ११८ ; **आन.** १५९ दग्निप ( न्नित्यं प ) ; **बाल.** १।१२ पृ. ३९ (=) पू. : १।१४ पृ. ४८ प्रपावत्, विष्णुः ; **संग.** ६५९ संप्रवत् ; **संव.** १०६ संप्र-वत्, विष्णुः ; **कृम.** ९२५ (=) पू. : ९३० (=) द्वितीयपादमात्रम् ; **संर.** १८३ संप्रवदपि पाठान्तरम्, बृहद्विष्णुः .

(२) **प्रपा.** २२० वृत्तं ( र्त्यं च ) प्रज ( च ज ) दाना ( धाना ) ; **गभा.** २३१ पूर्वार्धे ( आचार्यो द्वादश-सहस्रं गायत्रीं च जपेत्तथा । ) पू. ; **संप्र.** ४०९ ; **वम.** १७ वृत्तं ( र्त्यं च ) वास्याः ( वास्य ) विष्णुः ; **संम.** २५ वृत्तं (र्त्यं च) ; **विपा.** ४८५ प्रथमपादे (आचार्यो दशसाहस्रं ) बृहद्विष्णुः ; **संकौ.** ११८ ; **बाल.** १।१४ पृ. ४८ वृत्तं ( न्यञ्च ) विष्णुः ; **संग.** ६५९ ; **संव.** १०६ विष्णुः ; **कृम.** ९२६ संमवत्, विष्णुः ; **संर.** १८३ पूर्वार्धे (गुरुर्द्वादशसाहस्रं सावित्रीं प्रजपेत्ततः । ) चतुर्थपादे ( प्रदानार्थमिदं स्मृतम् ) इत्यपि पाठः, बृहद्विष्णुः .

इत्यत्र त्रिवृतामिति विपरिणामाभावे पञ्चसंख्याया इव पञ्चाशत्संख्यायाम् । संभवति तु विशेष्ये एकसंख्यापरिच्छिन्नेऽपि संख्यान्तरपरिच्छिन्नावृत्तिवैशिष्ट्यस्य वक्तुं शक्यत्वात् । ततश्च द्वादशाधिकसहस्रसंख्यो जपः कार्य इति तात्पर्यार्थः । गायत्र्याः प्रदानार्थं योऽधिकारस्तदर्थमित्यन्त्यार्धे योजना । ¶ संकौ. ११८

(४) 'कृच्छ्रत्रयं...... चरेत्' इति प्रायश्चित्तं कामचारादिनिमित्तमिति न भ्रमः कार्यः, तस्य प्रागुपनयनादनुज्ञातत्वात् । किंतु उपनेतृत्वाधिकारार्थम् ।

कृभ. ९२५

(५) बटोः प्रायश्चित्तं ब्राह्मणभोजनादिसुगमप्रत्याम्नायद्वारैव, असामर्थ्यात् । गायत्रीजपरुद्रैकादशिन्यादि वैदिकाः प्रत्याम्नाया एतस्य नैव भवन्ति, अनधिकारात् । उपनेत्रा वा मुख्यकल्पेन चरितव्यम्, 'ऊनद्वादशवर्षस्य प्रायश्चित्तं चरेत्पिता' इति वचनात् । पितेत्युपलक्षणमुपनेतुः । आचार्यस्य गायत्र्युपदेशाधिकारार्थं जपमभ्याह स एव– 'सावित्रीमभ्यसेदग्निपवित्राणि च संस्मरन् । गुरुर्द्वादशसाहस्रं सावित्रीं प्रजपेत्ततः । स्वाधिकारार्थमेवास्याः प्रदानार्थं हि तत्स्मृतम् ॥' इति । 'प्रदानार्थमिदं स्मृतम्' इत्यपि क्वचित्पाठः । अग्निपवित्राणि 'अग्न आयूंषि पवसे' इत्यादयः 'देवस्य त्वा' इतिप्रश्नान्तर्गताः षण्मन्त्राः । संस्मरन्निति लडादेशेन द्वादशसहस्रं द्वादशाधिकसहस्रं वा गायत्रीजपं संकल्प्य तस्मात्पूर्वं मानसो जप एतेषां गायत्रीजपाधिकारसिद्ध्यर्थं कार्य इति ज्ञाप्यते । अभ्यसेदित्यस्य जपेदित्यर्थः । द्वितीयार्धे 'सावित्रीं प्रजपेत्' इति वचनमनुवादः । 'सावित्रीं प्रजपेत्' इत्यस्य विधायकत्वे तु सकृज्जपविधायकमेकम्, अन्यत् द्वादशसहस्रद्वादशाधिकसहस्रान्यतरसंख्यजपविधायकम्, नातः पुनरुक्तिदोषः । अस्मिन्पक्षे गायत्रीजपं संकल्प्याग्निपवित्रसंज्ञकान् षण्मन्त्रान् सकृज्जपित्वा सावित्रीं सकृदुक्त्वा द्वादशसहस्रद्वादशाधिकसहस्रान्यतरसंख्यया सावित्रीं प्रजपेदिति क्रमः । संस्मरेदिति पाठे तु– अग्निपवित्राणि जपित्वा सकृद्गायत्रीमुक्त्वा संकल्पपूर्वकं द्वादशसहस्रं द्वादशाधिकसहस्रं वा गायत्रीं जपेदित्येवं क्रमः । गुरुरत्राऽऽचार्यः । अस्या गायत्र्याः प्रदानार्थं यः स्वस्याधिकारस्तदर्थमिदं स्मृतमित्यन्त्यार्धे योजना । संर. १८३–१८४

च प्रजपेत्' इति चकारमध्याहृत्य सहस्रद्वादशावृत्तपदार्थयोः समुच्चित्य क्रियाविशेषणत्वेन जपक्रियायामन्वयः स्वीकार्य इति सरलः पन्थाः । तथापि उक्तोपपत्त्या द्वादशत्वावच्छिन्नसहस्रसंख्याकत्वं पक्षप्राप्तं दुर्निवारमेव । अत एव गोपीनाथभट्टैः त्रिकाण्डमण्डनाचार्यमहादेवदीक्षितैश्च स्वीयग्रन्थयोः संख्याविकल्प उक्तः । श्रीमदण्णाशास्त्रिवारेमहोदयैरपि 'आचार्यो दशसाहस्रम्' इति पाठं स्वीकृत्य 'अयुतगायत्रीजपमहं करिष्ये' इति संकल्प उक्त इति ।

¶ संव. संकौगतम् ।

## अनिर्दिष्टकर्तृकवचनम्

प्रायश्चित्तानुष्ठाने असमर्थोपनेयस्योपनेता प्रतिनिधिः

*[1]'ऊनद्वादशवर्षस्य प्रायश्चित्तं चरेत्पिता ॥

* अस्य संख्याख्यानं वृद्धविष्णुवचने द्रष्टव्यम् ।

(१) संर. १८३.

# कालातिक्रमादिनिमित्तकप्रायश्चित्तानि

## वैखानसगृह्यसूत्रम्

व्रात्यस्योद्दालकव्रतमश्वमेधावभृथं व्रात्यस्तोमो वा प्रायश्चित्तं पुनर्गर्भाधानादिसंस्कारा उपनयनं च, षोडशवर्षातीतस्याव्रात्यस्योद्दालकव्रतं गर्भाधानादिसंस्कारा ब्राह्मणभोजनं सुवर्णपशुदानानि च, तत्पितुश्चान्द्रायणं होमश्च, उपनयनम्, संकटे न्यूनजातिसमाश्रितस्य सुवर्णादिदानानि होमश्च, तत उपनयनम्

**[1]तेषामुद्दालकप्रायश्चित्तम् । द्वौ मासौ यावकेन मासं क्षीरेणाऽऽमिक्षयाऽर्धमासमष्टरात्रं घृतेनायाचितं षड्रात्रं त्रिरात्रमुदकेनोपवासमहोरात्रं वर्तेत इत्येतदुद्दालकम् । अनेन वाऽश्वमेधावभृथस्नानेन वा व्रात्यस्तोमेन वेष्ट्वा पुनर्गर्भाधानादिसंस्कारान्कृत्वा शुद्धा उपनेयाः सावित्रीपतिता भवन्तीति विज्ञायते ॥**

**[2]षोडशे वर्षेऽतीते पूर्वोक्तमुद्दालकप्रायश्चित्तं गर्भाधानादिसंस्कारं च कृत्वा शुद्धे ब्राह्मणभोजनसुवर्णपशुदानानि कुर्यात् । पिता चान्द्रायणं चरित्वा तस्य जातकाग्निमाधायाऽऽघारं हुत्वा मिन्दाहुती पूर्णाहुती ब्राह्मं वैष्णवं चाष्टशतमावर्त्य हुत्वा पूर्ववदुपनयनं कुर्यात् ॥**

**व्याधिदुर्भिक्षाचैरन्त्यजातौ न्यूने समाश्रिते सुवर्णपशुभूम्यादीन् दत्त्वाऽग्निमाधाय वैष्णवं यद्देवादीन् ब्राह्ममैन्द्रं वारुणं मूलहोमं व्याहृत्यन्तं हुत्वोपनयनं कुर्यात् ॥**

(१) वैगृ. २।३.

(२) वैगृ. ६।७.

## आपस्तम्बः हिरण्यकेशिधर्मसूत्रं च

अतिक्रान्तकालस्य मासद्वयं ब्रह्मचर्यचरणं संवत्सरमुदकोपस्पर्शनं च प्रायश्चित्तं तत उपनयनम्, पितुः पितृपितामहयोः पितृपितामहप्रपितामहानां वाऽनुपनीतत्वे सति स्वस्य कालानतिक्रमे तदतिक्रमे चोत्तरोत्तरमधिकं सर्वेषां ब्रह्मचर्यादिप्रायश्चित्तं तत उपनयनं च, कृतप्रायश्चित्तापत्यस्य प्रथमोक्तप्रायश्चित्तपूर्वकमुपनयनम्, कृतप्रायश्चित्तापत्यापत्यस्य प्रायश्चित्तं विनोपनयनम्

*** [1]अतिक्रान्ते सावित्र्याः काल ऋतुं त्रैविद्यकं ब्रह्मचर्यं चरेत् ॥**

(१) ¶ तदानीं प्रायश्चित्तमाह— अतिक्रान्त इति । यस्य यः सावित्र्याः काल उक्तः तदतिक्रमे त्रैविद्यकं त्र्यवयवा विद्या तामधीयते ये ते त्रैविद्याः, तेषामिदं त्रैविद्यकम्, एवंभूतं ब्रह्मचर्यम् अग्निपरिचर्यामध्ययनं गुरुशुश्रूषामिति परिहाप्य सकलं ब्रह्मचारिधर्मं चरेत् । कियन्तं कालम्? ऋतुम् । ' कालाध्वनोः ' ( पा. सू. २।३।५ ) इति द्वितीया । ऋतुमिति वचनादृत्वारम्भे प्रायश्चित्तारम्भमिच्छन्ति । ‡ उ.

* एतत्प्रकरणगृहीतानामापस्तम्बधर्मसूत्राणां संख्याख्यानमुज्ज्वलावत् ।

¶ 'यथा व्रतेषु समर्थः स्यात् तथैतावान् कालः प्रतीक्ष्यः । पूर्वमेव तु सामर्थ्ये सत्यष्टमवर्षाद्यतिक्रमे वक्ष्यमाणं प्रायश्चित्तमेव भवति । एवं षोडशादिभ्य ऊर्ध्वं कियन्तं चित्कालमसमर्थानां पश्चात्सामर्थ्ये सति प्रायश्चित्तं भवत्येव ' इति गौणकालविषयकपूर्वसूत्रीयोज्ज्वलाऽत्रानुसंधेया ।

‡ मुक्ता. उज्ज्वलानुवादः । संग. उगतम् ।

(१) आध. १।१।२८ ; हिध. २६।१।२६ ; मपा. ८७२ क्रान्ते + ( तु ) ; प्रपा. २१३ ; संप्र. ३५० ; मुक्ता. ८९ ; आन. १५३ ; बाल. १।३८ ; संग. ६९७ ; कुभ. ९३० ; संर. १६७ सर्वाणि सूत्राणि हिरण्यकेशिधर्मसूत्रे.

(२) अयमर्थः— विप्रादीनां षोडशद्वाविंशतिचतुर्विंशतिवर्षात्मके सावित्र्युपनयनस्य काले अतिक्रान्ते ऋतुं मासद्वयं यावत् त्रैविद्यकं ब्रह्मचर्यं वेदत्रयसंबन्धि भैक्षाशनगुरुशुश्रूषणादिकं चरेत्। वेदत्रयार्थमृतुत्रयं ब्रह्मचर्यं चरेदित्यर्थः। मपा. ८७२

(३) ऋतुः द्वौ मासौ। संप्र. ३५०

(४) $पातित्ये तु असमर्थस्य मनुः— 'येषां द्विजानां सावित्री नानूच्येत यथाविधि। तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनाययेत्॥' (मस्मृ. ११।१९१)। शक्तस्य सामग्रीवैकल्येन पञ्चदशवर्षातिक्रमे तु यमः— 'सावित्री पतिता यस्य दश वर्षाणि पञ्च च। सशिखं वपनं कृत्वा व्रतं कुर्यात्समाहितः॥ एकविंशतिरात्रं तु पिबेत्प्रसृतियावकम्। हविषा भोजयेच्चैव ब्राह्मणान् सप्त पञ्च च॥'। द्वादशेत्यर्थः। 'ततो यावकशुद्धस्य तस्योपनयनं स्मृतम्' इति। उपनेत्रादिसकलसामग्रीसत्त्वेऽपि कामतो गौणकालातिक्रमे तु उद्दालकव्रतं चरेत् 'पतितसावित्री(क) उद्दालकव्रतं चरेत्— द्वौ मासौ यावकेन वर्तयेत्, मासं पयसा, अर्धमासमामिक्षया, अष्टरात्रं घृतेन, षड्रात्रमयाचितं हविष्यं भुञ्जीत, त्रिरात्रमब्भक्षः, अहोरात्रमुपवसेत्। व्रात्यस्तोमेन वा यजेत' इति वसिष्ठोक्तेः। तथा च याज्ञवल्क्योक्तो व्रात्यस्तोमः सकलसामग्रीसत्त्वेऽपि अकृतोपनयने बोध्यः। उद्दालकव्रताशक्तस्य तु आपस्तम्बः— 'अतिक्रान्ते सावित्र्याः काले ऋतुं त्रैविद्यकं ब्रह्मचर्यं चरेदथोपनयनं ततः संवत्सरमुदकोपस्पर्शनमथाध्ययनम्' इति। वस्तुतस्तु व्रात्यस्तोमं विनोपनयने नाधिकारः, 'सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः' इति वचनात्। स चानुपनीतेनानाहिताग्निनाऽविदुषाऽपि अवकीर्णिपशुवत् कार्यः। यागोपयुक्ताध्ययनमगत्या कार्यम्। ततः स्मृत्युक्तं प्रायश्चित्तं कृत्वोपनयनं कार्यमिति। केचित्तु गौणकालानन्तरे संवत्सरे यमोक्तं यावकव्रतम्, तदुत्तरोत्तरं संवत्सरेषु क्रमेण मनूक्तं कृच्छ्रत्रयमापस्तम्बोक्तमृतुत्रैविद्यकं ब्रह्मचर्यमुद्दालकव्रतं व्रात्यस्तोमो वेत्याहुः। ¶ कृम. ९२८–९३०

$ पञ्चदशवर्षातिक्रमेण पातित्ये प्राप्ते गुरुप्रायश्चित्तासमर्थस्येत्यर्थः।

[१]अथोपनयनम्॥

एवं चरितव्रत उपनेतव्यः। उ.

[२]ततः संवत्सरमुदकोपस्पर्शनम्॥

ततः उपनयनादारभ्य संवत्सरमुदकोपस्पर्शनं कर्तव्यम्। शक्तस्य त्रिषवणं स्नानम्, अशक्तस्य यथाशक्ति। ‡ उ.

[३]अथाध्याप्यः॥

(१) एवं चरितव्रतः पश्चादध्याप्यः। उ.

(२) अथाध्यापनीयः। एतदुद्दालकव्रताशक्तस्य। मपा. ८७२

(३) एवं च समर्थस्योपपन्नस्य शुद्धाष्टमाद्यतिक्रमेऽपि असमर्थस्यानुपपन्नस्य गौणकालातिक्रमेऽपि प्रायश्चित्तं भवत्येवेति वेदितव्यम्। शुद्धाष्टमातिक्रमे यावन्तो मासा अतीतास्तावन्तः कृच्छ्रा अनुष्ठेयाः, 'मासि मासि भवेत्कृच्छ्रं संस्काराणामतिक्रमे' इति स्मृतेः। कालातिक्रम इत्यर्थः। इदमुपनयने मरणे च वेदितव्यम्, अन्येषामुक्तत्वात्। सर्वात्मना असमर्थस्य गौणकालातिक्रमे-

¶ शेषं उगतम्।

‡ मुक्ता., आन. उवत्। मपा. उगतम्।

(१) आध. १।१।२९; हिध. २६।१।२७ अथो (तत उ); मपा. ८७२; प्रपा. २१३; संप्र. ३५०; मुक्ता. ८९; आन. १५३; बाल. १।३८; संग. ६९७; कृम. ९३०; संर. १६७ हिधवत्.

(२) आध. १।१।३०; हिध. २६।१।२८ (अथोदकोपस्पर्शनम्); मपा. ८७२ स्पर्शनम् (सर्पणम्); प्रपा. २१३; संप्र. ३५०; मुक्ता. ८९; आन. १५३; बाल. १।३८; संग. ६९७; कृम. ९३०; संर. १६७ हिधवत्.

(३) आध. १।१।३१; हिध. २६।१।२९; मपा. ८७२; प्रपा. २१३; संप्र. ३५०; मुक्ता. ८९; आन. १५३; संग. ६९७; कृम. ९३० (अथाध्ययनम्); संर. १६७.

ऽपि कंचित्कालं प्रतीक्ष्य सामर्थ्ये सति वसिष्ठोक्तरीत्या प्रायश्चित्तं ( कर्तव्यम् । ? ) कृत्वा उपनीयाध्याप्य इति सिद्धान्तः । आन. १५३–१५४

[1]**अथ यस्य पिता पितामह *इत्यनुपेतौ स्यातां ते ब्रह्महसंस्तुताः ॥**

यस्य माणवकस्य पिता पितामहश्चानुपेतौ स्यातां स्वयं च, ते तथाविधाः समाणवका ब्रह्महसंस्तुताः ब्रह्महण इत्येव कीर्तिताः ब्रह्मवादिभिः । अतस्मिन् तच्छब्दयोगस्तद्धर्मप्राप्त्यर्थः । एवं च 'श्मशानवच्छूद्रपतितौ' इत्यध्ययननिषेधप्रकरणे वक्ष्यते । ततश्च ब्रह्म यथा ब्रह्महसमीपे नाध्येयमेवमेषामपीति । ‡ उ.

[2]**तेषामभ्यागमनं भोजनं विवाहमिति च वर्जयेत् ॥**

(१) तेषाम् एतेषाम् अभ्यागमनम् आभिमुख्येन गमनं मातापितृपुत्रदारशरीररक्षणार्थमपि वर्जयेत्, यद्यपि भिक्षा- ( ? रक्षा ) सर्वतः प्रतिग्राह्येति वक्ष्यते । भोजनमुद्यतमपि वर्जयेत् 'अपि दुष्कृतकारिणः' इति सत्यपि वचने । विवाहं च वर्जयेत्, यद्यपि 'स्त्रीरत्नं दुष्कुलादपि' इति मानवस्मरणम् । उ.

( २ ) तेषां गमनं तान्प्रति संस्कार्यार्थं गमनम् । मपा. ८७३

( ३ ) इतिकरणं समाप्तौ । त्रितयमेव वर्जयेत्, नान्यदित्यर्थः । * संप्र. ३५२

[1]**तेषामिच्छतां प्रायश्चित्तम् ॥**

( १ ) इच्छतामिति वचनान्न बलात्कारेण प्रायश्चित्तं कारयितव्यम् । ¶ उ.

( २ ) तेषां शुद्धिमिच्छतामिदं वक्ष्यमाणं प्रायश्चित्तम् । मपा. ८७३

[2]**यथा प्रथमेऽतिक्रम ऋतुरेवं संवत्सरः ॥**

( १ ) यथा प्रथमेऽतिक्रमे ब्रह्मचर्यस्य ऋतुः कालः एवमन्यस्मिन्नतिक्रमे संवत्सरः कालः । † उ.

( २ ) ऋतोः स्थाने संवत्सरः । ततश्च प्रतिपुरुषं वत्सरत्रितयं ब्रह्मचर्यं कार्यम् । मपा. ८७३

[3]**अथोपनयनम् ॥**

---

* अत्र हिधपुस्तके 'इत्यनुपनीतौ' इति पाठो मुद्रितः, तत्रत्यमहादेवदीक्षितोज्ज्वलायामपि 'इत्यनुपनीतौ' इत्येतावदेव मुद्रितम् । संरपुस्तके तु सूत्रानुवादे 'इत्यनुपेतौ' इत्यापस्तम्बसूत्रवत् पाठो मुद्रितः, तत्रत्यदीक्षितोज्ज्वलानुवादे च 'इति अनुपेतौ अनुपनीतौ' इति पाठो मुद्रितः । एवमग्रे 'यथा प्रथमे०' इति सूत्रे सूत्रपुस्तके संरपुस्तके च 'संवत्सरम्' इति दृष्टान्तविषमः पाठो मुद्रितः । 'ऋतुः' इति दृष्टान्तः प्रथमान्तोऽस्ति । उभयत्रापि 'संवत्सरः कालः' इत्युज्ज्वला समाना । तस्मात् आपस्तम्बसूत्रसाम्यानुरोधाच्च उभयत्रापि आधवदेव हिधपाठः स्यादिति भाति ।

‡ संप्र., संग. उवत् । मपा. उगतम् ।

(१) आध. १।१।३२; हिध. २६।१।३० पेतौ ( पनीतौ ); विश्व. १।३८ (अथ...स्यातां०); पमा. १२१ ( खण्डः २ भागः २ ); मपा. ८७२ ता पितामह ( तृपितामहौ ) पेतौ ( पनीतौ ); संप्र. ३५१; बाल. १।८१ विश्ववत्; संग. ६९८; संर. १६८.

(२) आध. १।१।३३; हिध. २६।१।३१ (च०); विश्व. १।३८ हमिति ( ह इति ); पमा. १२१–१२२ ( खण्डः २ भागः २ ); मपा. ८७२ षामभ्याग ( षां ग ) मिति च ( मपि ); संप्र. ३५१ ( च० ); मुक्ता. २८; संग. ६९८ ( च० ); संर. १६८ ( च० ).

* शेषम् उवत् ।

¶ संप्र. उवत् ।

† संप्र., संग. उवत् ।

(१) आध. १।१।३४; हिध. २६।१।३२; पमा. १२२ ( खण्डः २ भागः २ ); मपा. ८७२; संप्र. ३५१; संग. ६९८; संर. १६८.

(२) आध. १।१।३५; हिध. २६।१।३३ वत्सरः ( वत्सरम् ); पमा. १२२ ( खण्डः २ भागः २ ); मपा. ८७२; संप्र. ३५१; संग. ६९८; संर. १६८ हिधवत्.

(३) आध. १।१।३६; पमा. १२२ ( खण्डः २ भागः २ ); मपा. ८७२; संप्र. ३५१; संग. ६९८.

[1]तत उदकोपस्पर्शनम् ॥

चरितव्रतस्योपनयनं कार्यम् । उदकोपस्पर्शनं वक्ष्यमाणैर्मन्त्रैः संवत्सरं शिरस्यद्भिर्मार्जनम् । संप्र. ३५२

[2]प्रतिपूरुषं संख्याय संवत्सरान् यावन्तोऽनुपेताः स्युः ॥

( १ ) यदि पितैवानुपेतः ततः संवत्सरमेकम् । अथ पितामहोऽपि, ततो द्वौ । अथ स्वयमपि यथाकालमनुपेतः, ततः संवत्सरानिति । ¶ उ.

(२) केचन संवत्सरमुदकोपस्पर्शनमिति व्याचक्षते । § मपा. ८७३

[3]सप्तभिः पावमानीभिः 'यदन्ति यच्च दूरके' इत्येताभिर्यजुष्पवित्रेण सामपवित्रेणाऽऽङ्गिरसेनेति ॥

अथोदकोपस्पर्शने मन्त्राः— सप्तभिरिति । पवमानः सोमः देवता यासां ताः पावमान्यः । यजुष्पवित्रेण 'आपो अस्मान्मातरः शुन्धन्तु' इत्यनेन । सामपवित्रेण 'कया नश्चित्र आभुवत्' इत्यादिगीतेन वामदेव्येन साम्ना । आङ्गिरसेन 'हंसः शुचिषत्' इत्यनेन । एतैरञ्जलिना शिरस्यपोऽवसिञ्चेत् । $ उ.

[1]अपि वा व्याहृतिभिरेव ॥

पूर्वैः सह व्याहृतीनां विकल्पः । $ उ.

[2]अथाध्याप्यः ॥

( १ ) गतम् ¶ तत्र 'यस्य पिता पितामहः' इत्युपक्रमे 'यस्य' इत्येकवचनम्, अन्ते 'अध्याप्यः' इति । मध्ये तु 'ब्रह्महसंस्तुताः' 'तेषामभ्यागमनम्' 'तेषामिच्छताम्' इति बहुवचनम् । तत्रोपक्रमोपसंहारानुसारेण माणवकस्यैव प्रायश्चित्तमुपनयनमध्यापनं च, बहुवचनं तु तथाविधमाणवकबहुत्वापेक्षमित्यवोचाम । उ.

( २ ) वस्तुतस्तु बहुवचनं त्रिष्वपि जीवत्सु त्रयाणामपि प्रायश्चित्तोपनयनाध्यापनानि भवन्तीत्यभिप्रायेण संगच्छते । § संप्र. ३५३

[3]अथ यस्य प्रपितामहादि नानुस्मर्यत उपनयनं ते श्मशानसंस्तुताः ॥

( १ ) प्रपितामहादि प्रपितामहादारभ्य प्रपितामहः पितामहः पिता स्वयं च यथाकालमिति । ते तथाविधा माणवकाः श्मशानसंस्तुताः । एतेन 'श्मशाने सर्वतः शम्याप्रासात्' इत्यध्ययननिषेध एषामपि संनिधौ भवति । * उ.

---

¶ संप्र., संग. उवत् ।

§ शेषम् उवत् ।

$ संप्र., संग. उवत्, मपाव्याख्यानमशुद्धिबहुलमिति न संगृहीतम् ।

(१) आध. १।१।३७ ; पमा. १२२ ( खण्डः २ भागः २ ) तत उद ( ततः संवत्सरमुद ) ; मपा. ८७२ ; संप्र. ३५१ ; संग. ६९८.

(२) आध. १।२।१ ; हिध. २६।१।३४ ; पमा. १२२ ( खण्डः २ भागः २ ) ; मपा. ८७२ पूरु ( पुरु ) पेताः ( पनीताः ) ; संप्र. ३५२ पूरु ( पुरु ) ; संग. ६९९ संप्रवत् ; संर. १६८ संप्रवत् .

(३) आध. १।२।२ ; हिध. २६।१।३५ ; पमा. १२२ ( खण्डः २ भागः २ ) ; मपा. ८७२ दन्ति य ( दस्ति त ) यंजुष्प ( यंशप ) रसेनेति ( रसेति ) ; संप्र. ३५२ ; संग. ६९९ सामप ( सोमः प ) ; संर. १६८ रसेनेति ( रसेन ).

$ संप्र., संग. उवत् ।

§ शेषमुज्ज्वलानुवादः ।

* संप्र., संग. उवत् । मपा. उगतम् ।

(१) आध. १।२।३ ; हिध. २६।१।३६ ; पमा. १२२ ( खण्डः २ भागः २ ) अपि ( अथ ) ; मपा. ८७२ भिरेव ( रेव ) ; संप्र. ३५२ ; संग. ६९९ ; संर. १६८ ( वा० ).

(२) आध. १।२।४ ; हिध. २६।१।३७ ; पमा. १२२ ( खण्डः २ भागः २ ) ; मपा. ८७२ ; संप्र. ३५२ ; संग. ६९९ ; संर. १६८.

(३) आध. १।२।५ ; हिध. २६।१।३८ ; पमा. १२२ ( खण्डः २ भागः २ ) दि नानु (देर्नानु) ; मपा. ८७२ दि नानुस्म ( दीनां न स्म ) ; संप्र. ३५३ पमावत् ; संग. ६९९ दि नानुस्मर्यत उ ( दिर्नानुस्मर्येतो ) वीरमित्रोदये ; संर. १६९ प्रपिता ( पिता ).

( २ ) § यस्य माणवकस्य पितामहादि पितामहादारभ्य प्रपितामहस्तस्य पिता पितामहप्रपितामहाद्या अनुपनीताः स्वयं च यथाकालमनुपनीतस्ते तथाविधा माणवकाः श्मशानसंस्तुताः । $ संर. १६९

[1]**तेषामभ्यागमनं भोजनं विवाहमिति च वर्जयेत्तेषामिच्छतां प्रायश्चित्तं द्वादश वर्षाणि त्रैविद्यकं ब्रह्मचर्यं चरेदथोपनयनं तत उदकोपस्पर्शनं पावमान्यादिभिः ॥**

( १ ) गतम् । पावमान्यादिभिरित्यनेनैव प्रतिपूरुषं संख्याय संवत्सरानित्येतदपि द्रष्टव्यम् । ‡ उ.

( २ ) तेषामभ्यागमनादि पूर्ववन्न कार्यम् । तत्र माणवकस्य द्वादशाब्दं त्रैविद्यकं ब्रह्मचर्यं प्रायश्चित्तम् । पूर्वेषां तु पूर्वमेवोक्तम् । ¶ संप्र. ३५३

[2]**अथ गृहमेधोपदेशनम् ॥**

गृहमेधः गृह्यशास्त्रं गृहस्थधर्मो वा । उ.

**नाध्यापनम् ॥**

( १ ) नाध्यापनं कृत्स्नस्य वेदस्य, किं तु गृह्यमन्त्राणामेवेति । † उ.

( २ ) ततोऽध्यापनं नास्ति, किंतु गृहस्थाश्रमस्वीकारः । मपा. ८७३

[3]**ततो यो निर्वर्तते तस्य संस्कारो यथा प्रथमेऽतिक्रमे ॥**

ततः एवं कृतप्रायश्चित्तात् गृहस्थीभूताद्यो निव( ? निर्व)र्तते उत्पद्यते तस्योपनयनसंस्कारः कर्तव्यः । कथम् ? यथा प्रथमेऽतिक्रमे ऋतुं त्रैविद्यकं ब्रह्मचर्यं चारयित्वेत्यर्थः । § उ.

[4]**तत ऊर्ध्वं प्रकृतिवत् ॥**

ततः यो निव( ? निर्व )र्तते तस्य प्रकृतिवत् यथाप्राप्तमुपनयनं कर्तव्यमिति । यस्य तु प्रपितामहस्य पितुरारभ्य नानुस्मर्यत उपनयनं तत्र प्रायश्चित्तं नोक्तम्, धर्मज्ञैरूहितव्यम् । एवं ततः पूर्वेष्वपि । * उ.

## वसिष्ठः

व्रात्यस्योद्दालकव्रतमश्वमेधावभृथं व्रात्यस्तोमो वा प्रायश्चित्तम्, उद्दालकव्रतस्वरूपम्

[1]‡**पतितसावित्रीक उद्दालकव्रतं चरेत् ॥**

[2]**द्वौ मासौ यावकेन वर्तयेन्मासं पयसाऽर्धमासमामिक्षयाऽष्टरात्रं घृतेन षड्रात्रमयाचितेन त्रिरात्रमब्भक्षोऽहोरात्रमुपवसेत् ॥**

---

§ यद्यपीदं व्याख्यानमन्ते ' इति व्याख्यातमुज्ज्वलाकृता ' इत्युक्तेरितरत्रवदत्रापि महादेवोज्ज्वलानुवाद इति निर्णीयते, तथापि हिधपुस्तके हरदत्तोज्ज्वलावदेव महादेवोज्ज्वलामुद्रणाद्विरोधः ।

$ शेषम् उवत् ।

‡ मपा. उगतम् ।

¶ संग. संप्रवत् ।

† संप्र. , संग. उवत् ।

(१) आध. १।२।६ ; हिध. २६।१।३९ ( च० ) रेदथो ( रेत्तत उ ) नं तत उ ( नमथो ) न्यादिभिः ( नीभिः ) ; पमा. १२२–१२३ (खण्डः २ भागः २) ; मपा. ८७२ (च०) ; संप्र. ३५३ (च०) ; संग. ६९९ ( च० ) नं भोजनं वि ( नभोजनवि ) ; संर. १६९ (भोजनं०) (च० ) रेदथो (रेत्तत उ) नं तत उ (नमथो).

(२) आध. १।२।७–८ ; हिध. २६।१।४०–४१ ; मपा. ८७२ ; संप्र. ३५३ ; संग. ६९९ ; संर. १६९.

§ मपा. , संप्र. , संग. उवत् ।

* मपा. , संप्र. , संग. उगतम् ।

‡ एतत्प्रकरणगतवासिष्ठाद्यनेकवचनानां संप्रव्याख्यानं यमवचनेषु द्रष्टव्यम् । एतेषां क्रमव्याख्यानम् ' अतिक्रान्ते साविच्याः ' इत्यापस्तम्बवचनव्याख्याने द्रष्टव्यम् ।

(१) आध. १।२।९ निर्व (निव) ; हिध. २६।१।४२ ; मपा. ८७२ यो निर्व ( निव ) ; संप्र. ३५३ ; संग. ६९९ आधवत् ; संर. १६९.

(२) आध. १।२।१० ; हिध. २६।१।४३ ; मपा. ८७२ ; संप्र. ३५३ ; संग. ६९९ ; संर. १६९.

(३) वस्मृ. ११।५६ ; स्मृच. २८ ; पमा. १२१ ( खण्डः २ भागः २ ) ; मपा. ८७१ ; प्रपा. २१२ ; संप्र. ३५१ ; मुक्ता. ८९ ; आन. १५३ ; बाल. १।३८ ; संग. ६९८ ; कृम. ९२९.

(४) वस्मृ. ११।५७ ; स्मृच. २८ याचितेन (याचितं) ; पमा. १२१ (खण्डः २ भागः २) याचितेन

[1]अश्वमेधावभृथं वा गच्छेत् ॥

[2]व्रात्यस्तोमेन वा यजेत ॥

(१) अस्यार्थः— उद्दालकेन दृष्टमित्येतदुद्दालकव्रतम्। तत्र 'द्वौ मासौ यावकेन' इत्यादिना तत्स्वरूपमाह। यावकः यवकृता यवागूः, तयैव मासद्वयं वर्तेत। अयाचितं तु सर्वव्रतसाधारणं हविष्यं भुञ्जीत, विशेषानभिधानात्। तच्च सकृदेव कार्यम्, प्रायश्चित्तस्य दुःखात्मकत्वात्। उपवासे तूदकस्यापि निवृत्तिः, पूर्वमब्भक्षणेनैव त्रिरात्रविधानादिति। $ स्मृच. २८

(२) तत्र मानवमापद्विषयम्, उद्दालकव्रतं त्वनापद्विषयम्। पमा. १२१ (खण्डः २ भागः २)

(३) व्रात्यस्तोमो नाम क्रतुविशेषः। तदनुष्ठानमनुपनीतस्यापत्नीकस्यानधीतवेदस्यानाहिताग्नेर्वचनादिति वेदितव्यम्। † आन. १५३

## शङ्खलिखितौ

व्रात्यस्य चान्द्रायणगोप्रदाने प्रायश्चित्तम्,
चान्द्रायणानुकल्पः

[1]व्रात्यश्चान्द्रायणं चरेद्गोप्रदानं च कुर्यात्। चान्द्रायणाशक्तौ धेन्वष्टकं तन्मूल्यं वा सार्धद्वाविंशतिकार्षापणाः ॥

गोमूल्यं कार्षापण एकः, मिलित्वा सार्धत्रयोविंशतिकार्षापणा देयाः। संत. ९२७

## विष्णुः

कालातिक्रमे कृच्छ्रत्रयं प्रायश्चित्तम्

[1]येषां द्विजानां सावित्री नानूच्येत यथाविधि। तांश्चारयित्वा त्रीन्कृच्छ्रान्यथाविध्युपनाययेत् ॥

(१) पितृमातृरहितस्य निःस्वस्य देशोपप्लवादिना पतितसावित्रीकस्य वा विषये तु मनुविष्णू— 'येषां द्विजानां... नाययेत् ॥' । कृच्छ्रं प्राजापत्यम्। तत्त्रयाशक्तौ धेनुत्रयं तन्मूल्यं नवकार्षापणा वा देयाः। संत. ९२७

(२) त्रीन् प्राजापत्यांश्चारयित्वा यथाविध्युपनाययेत्। ... यत्किंचिदुपनयनाङ्गहानेऽप्येतदेव, 'नानूच्येत यथाविधि' इति सामान्येनाभिधानात्। वै.

## मनुः

कालातिक्रमे कृच्छ्रत्रयं प्रायश्चित्तम्

[1]§येषां द्विजानां सावित्री नानूच्येत यथाविधि।
तांश्चारयित्वा त्रीन्कृच्छ्रान्यथाविध्युपनाययेत् ॥

(१) 'आ षोडशाद्ब्राह्मणस्य' इत्यादिनोपनयनकालनियमः कृतः। तदतिक्रमे प्रायश्चित्तमिदम्। गर्भाष्टमात्प्रभृति यावत्षोडशवर्षं ब्राह्मणस्य सावित्री नानूच्येत। सावित्र्यनुवचनेनोपनयनाख्यसंस्कारो लक्ष्यते। अस्मिन्काले यद्युपनयनं न क्रियेत। एवम् आ द्वाविंशात्क्षत्रियस्य, आ चतुर्विंशतेर्विशः। अत ऊर्ध्वं

---

$ मुक्ता. स्मृचवत्।

† शेषं स्मृचगतम्।

(याचितं हविष्यं भुञ्जीत); मपा. ८७१ सार्धमास (सा पक्ष); प्रपा. २१२-२१३ वसेत् (वासः); संप्र. ३५१ वसेत् (वासश्च); मुक्ता. ८९ तेन त्रिरात्रमब्भक्षोऽ (तं त्रिरात्रम); आन. १५३; संग. ६९८ संप्रवत्; कुम. ९२९-९३० पमावत्.

(१) वस्मृ. ११।५८ (वा०); स्मृच. २८; पमा. १२१ (खण्डः २ भागः २); मपा. ८७१ वभृथं वा (यावभृथं); संप्र. ३५१; मुक्ता. ८९; आन. १५३; संग. ६९८.

(२) वस्मृ. ११।५९ यजेत (यजेत्); स्मृच. २८; पमा. १२१ (खण्डः २ भागः २); मपा. ८७१; संप्र. ३५१; मुक्ता. ८९; संग. ६९८; कुम. ९३०.

(३) संत. ९२७.

§ अस्य कृमल्याख्यानम् 'अतिक्रान्ते सावित्र्याः' इत्यापस्तम्बवचनव्याख्याने, संतव्याख्यानं च विष्णुवचने द्रष्टव्यम्।

(१) विस्मृ. ५४।२६; संत. ९२७ नूच्येत (नुष्ठेत) मनुविष्णू.

(२) मस्मृ. ११।१९१; पमा. १२० (खण्डः २ भागः २); मपा. ८७१ नानू (नाऽऽऽऽले); संत. ९२७ नूच्येत (नुष्ठेत) मनुविष्णू; संप्र. ३५०; संग. ६९७; कुम. ९२८.

त्रीन् कृच्छ्रांश्चारयितव्यः। निरुपपदकृच्छ्रश्रवणे प्राजापत्यप्रत्यय इति स्मृतितन्त्रसिद्धिः। अन्ये तु कृच्छ्रातिकृच्छ्रानाहुः। कृच्छ्रेषु कृतेषूपनेतव्याः। यथाविधीत्यनुवादः। * मेधा.

(२) यथाविधि स्वगृह्योक्तप्रकारेण परमतेन स्वमतेनापि (अ ?)संपूर्णविधिना वा नानूच्येतेत्यर्थः। कृच्छ्रान् प्राजापत्यानिति। मवि.

(३) यत्तु याज्ञवल्क्यादिभिर्व्रात्यस्तोमादिप्रायश्चित्तमुक्तं तेन सहास्य गुरुलाघवमनुसंधाय जातिशक्त्याद्यपेक्षो विकल्पो मन्तव्यः। † ममु.

(४) नानूच्येत गुरोरुच्चारणानन्तरं नाधीयीत। † मच.

## याज्ञवल्क्यः

व्रात्यस्य व्रात्यस्तोमः उद्दालकव्रतं वा प्रायश्चित्तम्, उद्दालकव्रतस्वरूपम्

**[१]§अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः।**
**सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः॥**
**[२]यवोद्भवयवागूं च पिबेन्मासद्वयं प्रति।**
**पयः पिबेदेकमासमामिक्षां चार्धमासकम्॥**
**पिबेद्घृतं चाष्टरात्रं निशाषट्कमयाचितम्।**
**ततस्त्रिरात्रमब्भक्षस्त्वहोरात्रमुपोषणम्॥**

## यमः

गौणकालातिक्रमे व्रतविशेषः प्रायश्चित्तं तत्स्वरूपं च

**[३]‡सावित्री पतिता यस्य दश वर्षाणि पञ्च च।**
**ब्राह्मणस्य विशेषेण तथा राजन्यवैश्ययोः॥**

**[१]प्रायश्चित्तं भवेदेषां प्रोवाच वदतां वरः।**
**विवस्वतः सुतः श्रीमान्यमो धर्मार्थतत्त्ववित्॥**
**[२]सशिखं वपनं कृत्वा व्रतं कुर्यात्समाहितः।**
**एकविंशतिरात्रं च पिबेत्प्रसृतियावकम्॥**
**[३]हविषा भोजयेच्चैव ब्राह्मणान् सप्त पञ्च वा।**
**ततो यावकशुद्धस्य तस्योपनयनं स्मृतम्॥**

(१) यत्तु यमवचनं 'सावित्री पतिता......' इति, तन्मनुसमानविषयम्। पमा. १२१ (खण्डः २ भागः २)

(२) इदं चातिक्रान्तषोडशवर्षस्य सप्तदशे वर्षे उपनयने द्रष्टव्यम्, निमित्तप्रायश्चित्तयोरल्पत्वात्। अष्टादशेऽब्दे तूपनयने प्राजापत्यत्रयम्। तथा च मनुः– 'येषां द्विजानां सावित्री नानूच्येत यथाविधि। तांश्चारयित्वा त्रीन्कृच्छ्रान्यथाविध्युपनाययेत्॥' (मस्मृ. ११।१९१) इति। अस्मिन्नेव विषये आश्वलायनः– 'गवां दानेन भूम्या वा प्राजापत्यत्रयेण वा। चान्द्रायणेन वा शुद्धास्ते भवन्तीह सत्तमाः॥' इति। गवां तिसृणाम्। एकोनविंशेऽब्द उपनयने त्वापस्तम्बः–

---

* गोरा., नन्द., माच. मेधागतम्।

† शेषं मेधागतम्।

§ अस्य व्याख्यानानि व्रात्यविचारप्रकरणे (सं. का. पृ. ३०६३) द्रष्टव्यानि।

‡ एषां वचनानां कृभव्याख्यानम् 'अतिक्रान्ते' इत्यापस्तम्बवचनव्याख्याने, संतसंमव्याख्याने च क्रमेण उपनयनकालप्रकरणान्तर्गतयोः 'आ षोडशात्' इति गोमिलाश्वलायनगृह्यसूत्रव्याख्यानयोः (सं. का. पृ. ३०३५, ३०३०) द्रष्टव्यानि।

(१) यास्मृ. १।३८. शेषस्थलादिनिर्देशो व्रात्यविचारप्रकरणे (सं. का. पृ. ३०६३) द्रष्टव्याः. (२) प्रपा. २१३.

(३) ममु. २।३८ प्रथमचरणे (पतिता यस्य सावित्री); पमा. १२१ (खण्डः २ भागः २) पू.; मपा. ८७१ पू.; संत. ९२७ ममुवत्; मच. २।३८ ममुवत्, पू; संप्र. ३४३, ३४९ पू.; संम. २२ पू.; संको. ११९ पू.; संग. ६९७ पू.; कृभ. ९२८ पू.

(१) ममु. २।३८; संत. ९२७ पू.

(२) ममु. २।३८ पू.; पमा. १२१ (खण्डः २ भागः २); मपा. ८७१; मच. २।३८ पू.; संप्र. ३४३ पू., ३४९-३५०; संम. २२ पू.; संको. ११९; संग. ६९७; कृभ. ९२८-९२९ च (तु).

(३) ममु. २।३८ षा भोजयन्चैव (ष्यं भोजयेदन्नं) पू.; पमा. १२१ (खण्डः २ भागः २) वा (च); मपा. ८७१ हविषा (हविष्यं) वा (च); मच. २।३८ सर्वं ममुवत्; संप्र. ३५०; संको. ११९; संग. ६९७; कृभ. ९२९ वा (च).

'अतिक्रान्ते सावित्र्याः काले ऋतुं त्रैविद्यकं ब्रह्मचर्यं चरेदथोपनयनं ततः संवत्सरमुदकोपस्पर्शनमथाध्याप्यः' इति । ऋतुः द्वौ मासौ । विंशेऽब्दे उपनयने मनूक्तं त्रैमासिकमुपपातकसामान्यप्रायश्चित्तम् । एकविंशेऽब्दे उपनयने चातुर्मासिकमुद्दालकव्रतं चरेत् । तथा च वसिष्ठः— 'पतितसावित्रीक उद्दालकव्रतं चरेत् द्वौ मासौ यावकेन वर्तयेन्मासं पयसाऽर्धमासमामिक्षयाऽष्टरात्रं घृतेन षड्रात्रमयाचितेन त्रिरात्रमब्भक्षोऽहोरात्रमुपवासश्च' इति । द्वाविंशेऽब्दे उपनयनेऽश्वमेधावभृथस्नानम् । तदाह वसिष्ठः— 'अश्वमेधावभृथं वा गच्छेत्' इति । त्रयोविंशेऽब्दे उपनयने व्रात्यस्तोमः प्रायश्चित्तम्, 'व्रात्यस्तोमेन वा यजेत' इति वसिष्ठस्मरणात्, 'व्रात्यस्तोमादृते क्रतोः' इति योगिस्मरणाच्च । वाशब्दो व्यवस्थितविकल्पार्थः । उक्तकल्पानां गुरुलघुभावात् व्यवस्था चेयमेव साधीयसी, '$ गुरुणि गुरूणि लघुनि लघूनि' इत्यापस्तम्बस्मरणात् । एवं क्षत्रियवैश्ययोरपि द्वाविंशाच्चतुर्विंशा( द )ब्दादूर्ध्वं यथोक्तक्रमेणैतानि प्रायश्चित्तानि पादपादहान्या योज्यानि । अत ऊर्ध्वमातृतीयकालसमाप्तेर्व्रात्यस्तोम एव दक्षिणाधिक्यपक्षाश्रयणेन योजनीयः । तृतीयकालादूर्ध्वं गौणतमोऽपि कालो नास्तीति क्षत्रियवैश्ययोः पातित्यमेव, न ब्राह्मणस्य, 'न ब्राह्मणः पतनमृच्छति' इति गौतमेन ब्राह्मणपदोपादानात् । ¶ संप्र. ३५०–३५१

( १ ) इदं चोक्तावधिगौणकालानन्तरवत्सरे संभवदुपनयनस्य ज्ञेयम् । तदुत्तरोत्तरसंवत्सरेषु तु क्रमेण मनूक्तं कृच्छ्रत्रयमापस्तम्बोक्तं द्वैमासिकं त्रैविद्यकं ब्रह्मचर्यं वसिष्ठोक्तं त्रिरात्राधिकमासचतुष्टयसाध्यमुद्दालकव्रतं तदुक्तमेवाश्वमेधावभृथस्नानं तदुक्तमेव व्रात्यस्तोमानुष्ठानमिति व्यवस्थया कृतप्रायश्चित्तानामुपनयनं बोध्यम् । संको. ११९

## आश्वलायनः

कालातिक्रमे गवां दानं भूमिदानं प्राजापत्यत्रयं चान्द्रायणं वा प्रायश्चित्तम्

**[1]येऽद्विजत्वं गताः कालानतीत्योक्तान्द्विजातयः ।**
**ते तद्दोषस्य निर्वृत्त्यै चरेयुर्निष्कृतिं बुधाः ॥**
**[2]गवां दानेन भूम्या वा प्राजापत्यत्रयेण वा ।**
**चान्द्रायणेन वा शुद्धास्ते भवन्तीह सत्तमाः ॥**

गवां तिसृणाम् । $ संप्र. ३५०

## स्मृत्यन्तरम्

सप्तदशवर्षपर्यन्तमनुपनीतस्यावकीर्णिनोऽवकीर्णिव्रतं ततः परं व्रात्यस्तोमोऽवकीर्णिव्रतं च प्रायश्चित्तम्

**[3]विप्लुतमवकीर्णिव्रतेन शुद्धमुपनयेदूनसप्तदशवर्षम्, अत ऊर्ध्वं व्रात्यावकीर्णिव्रताभ्याम् ॥**

## कपिलसंहिता

कालातिक्रमे उपनेतुर्ब्रह्मकूर्चप्राशनमाब्दिकव्रतं लक्षगायत्रीजपश्च प्रायश्चित्तम्

**[4]यदि कालो ह्यतिक्रान्तो निमित्तैश्च दुरासदैः ।**
**कालातिपत्तिजनितदोषनिष्कृतिमादितः ॥**

कुर्यादिति शेषः । प्रपा. २१३

**पिता विद्वदनुज्ञातो विधिवद्ब्रह्मकूर्चकम् ।**
**उपोष्य प्राशयेदादौ ततश्चाब्दं व्रतं चरेत् ।**
**गायत्रीं च जपेल्लक्षमधिकारप्रसिद्धये ॥**

---

$ वचनमिदमापस्तम्बग्रन्थेषु नोपलभ्यते । 'गुरुषु गुरूणि लघुषु लघूनि' (बौध. ३।१०।१७) इति बौधायनधर्मसूत्रमस्ति ।

¶ उपनयनकालप्रकरणे ( सं. का. पृ. ३०४२) 'षोडशाब्दानि' इति शङ्खवचनेऽपि संप्रव्याख्यानं द्रष्टव्यम् । संग. संप्रवत् ।

$ संग. संप्रवत् ।

(१) आश्वस्मृ. २।२६–२७; प्रपा. २१३ येऽद्वि ( ये द्वि ).

(२) आश्वस्मृ. २।२७–२८ भव ( भज ); प्रपा. २१३; संप्र. ३५०; संग. ६९७.

(३) मभा. २।११; गौमि. २।३ येदूनसप्तदशवर्षम् ( येन्न सप्तदशम् ).

(४) प्रपा. २१३.

## स्मृत्यर्थसारः

कालातिक्रमतारतम्येन प्रायश्चित्ततारतम्यम्, उद्दालक-व्रतस्वरूपम्, व्रात्यपितृकत्वादौ आपस्तम्बोक्त-प्रायश्चित्तातिदेशः

[1]अथ व्रात्यादौ प्रायश्चित्तम्...... व्रात्यत्वे तूपनेत्राद्यभावेनोपनयनकालातिक्रमे चान्द्रादि-व्रतचतुष्केऽन्यतमं शक्त्या कारयित्वोपनयनं कार्यम्। अनापदि कालातिक्रमे त्रैमासिकं कार-यित्वोपनयेत्। तत्रैव पञ्चदशवर्षादूर्ध्वमपि कियत्कालातिक्रम औद्दालकं व्रतं चरेत्। तत्रै-(? त्त्वे)वम्– द्वौ मासौ यावकेन वर्तये-न्मासं पयसा पक्षमामिक्षया अष्टरात्रं घृतेन षड्रात्रमयाचितेन त्रिरात्रमब्भक्षः, अहोरात्र-मुपवसेदिति। व्रात्यस्तोमेन वा यजेत। यस्य पिता पितामहो वाऽनुपनीतौ स्यातां तस्याब्दं त्रैविद्यकं ब्रह्मचर्यम्। यस्य प्रपितामहादेर्नानु-स्मर्यत उपनयनं तस्य द्वादशाब्दत्रैविद्यकं ब्रह्म-चर्यमित्यापस्तम्बोक्तं कृत्वोपनयनम्॥

(१) स्मृसार. ११४.

## हेमाद्रौ

अष्टमादिवर्षातिक्रमे वर्षभेदेन प्रायश्चित्तभेदः

[1]यदि कामादष्टमाब्दं लङ्घयित्वा चरेद्व्रतम्।
नवमे ततकृच्छ्रं स्याद्दशमे तच्च कायिकम्॥
एकादशे द्वादशे वा व्यतिक्रम्यैन्दवं चरेत्।
तत आषोडशात्कुर्यादैन्दवं त्रयमेव च॥

(१) आन. १५२.

# * वेदिनिर्माणविधिः

## अनिर्दिष्टकर्तृकवचनानि

वेदेर्मानं दिक् च

[1]प्राक्प्रत्यगूर्ध्वे पदषट्कयुक्ता-
मुदीच्ययाम्यानि पदानि पञ्च ।
एवंविधा ज्योतिषरत्ननिर्मिता
बटोः शतायुर्भवतीह वेदिका ॥

[2]अष्टविंशाङ्गुलं पीठमुन्नतं स्यात्षडङ्गुलम् ।
अष्टाङ्गुलं तु विस्तारं कुर्यादौदुम्बरादिना ॥

[3]पश्चिमाभिमुखं द्वारं यद्वा चेदुत्तरामुखम् ।
वेदिका तु तदा कार्या गृहान्निर्गमदक्षिणे ॥

निर्गमशब्देन द्वारमुच्यते । पश्चिमाभिमुखद्वारोत्तराभिमुखद्वारयोर्दक्षिणे वेदिकरणोक्त्या दक्षिणाभिमुखद्वारपूर्वाभिमुखद्वारयोर्वामभागे वेदिः कार्येत्यर्थादवगतं भवति । एवं च नैर्ऋत्यां वेदिर्न भवतीति तात्पर्यार्थः सिध्यति । केवलं दक्षिणामुखं तु द्वारं शिल्पशास्त्रे निषिद्धम् । एवं चावशिष्टं पूर्वाभिमुखमेव द्वारं तस्य वामभागे वेदिर्भवतीत्यर्थः सिध्यति । संर. १८५

## संग्रहे

वेदेर्मानमाकारश्च

[4]आचार्यस्य पदैः षड्भिश्चतुर्भिरथवा पदैः ।
आयामविस्तारवती बटोर्वेदी करोन्नता ॥

[5]लम्बा भित्तिर्द्विहस्ता स्यादुन्नता त्रिदशाङ्गुला ।
प्रत्यग्वेद्यां च सा कार्या विस्तारादूद्वादशाङ्गुला ॥

[1]अष्टावष्टौ प्रकुर्वीत सोपानान्यथ पार्श्वयोः ।
तन्मध्ये कलशाकारमिति यज्ञविदां मतम् ॥

विवाहवेदिदृष्टाः कूर्मपृष्ठोन्नतत्वप्रागुदक्प्रवणत्वपुष्पमालारम्भास्तम्भाद्युपशोभितत्वादयो धर्मा अविरोधादत्रापि ज्ञेयाः । शिष्टास्त्विदानीं विवाहवेदिवदेव वेदिं कुर्वन्ति । संर. १८५

## ज्योतिर्निबन्धे

आचार्यहस्तमाननिर्मितमण्डपमध्ये चतुरस्रा वेदिः

[2]आचार्यहस्तमानेन मण्डपे निर्मिते शुभे ।
मध्ये वेदी प्रकर्तव्या चतुरश्रा समन्ततः ॥

यथोक्तमण्डपकरणानुकूल्ये सति षोडशद्वादशान्यतमसंख्यहस्तपरिमितोऽसंभवेऽष्टहस्तपरिमितः स्थलानुरोधेन वा चतुर्द्वारोपशोभितस्तोरणैर्युक्तो दृढस्तम्भचतुष्टययुक्तः सद्मनो वामभागे द्वारसमीपे वा मण्डपः कार्यः । अत्राऽऽचार्यहस्त एव ग्राह्यः, न तु संस्कार्यस्य, अन्यथा मण्डपस्याष्टहस्तत्वपक्षेऽतिलघुतापत्तेः , ' आचार्यहस्त... ' इति ज्योतिर्निबन्धवचनाच्च । आचार्येति संस्कारकोपलक्षणम् । तेन विवाहेऽपि मण्डपः संस्कारकस्य पित्रादेर्हस्तेनैव । ' कन्याहस्तैः पञ्चभिः सप्तभिर्वा कार्या वेदिः कूर्मपृष्ठोन्नता सा ' इति वचनेन वेदिविषय एव कन्याहस्तपरिमाणत्वे प्रतिपादिते मण्डपे संस्कारकहस्तपरिमाणत्वमर्थतः प्रतिपादितं भवति । तत्राऽऽग्नेय्यामाम्रमयो जम्बूमयो वा स्तम्भः , नैर्ऋत्यां खादिरो धात्रीवृक्षजो वा, वायव्यामौदुम्बरः शमीमयो वा, ईशान्यां बादर आश्मन्तको वा । संर. १९९–२००

---

* वेदेर्मण्डपमध्ये करणीयत्वान्मण्डपनिर्माणविधिर्विवाहभागोक्तोऽत्रानुसंधेयः ।

(१) धप्र. ४६ अशुद्धिबहुलो ग्रन्थः ; संग. ६२२.
(२) धप्र. ४६. (३) संर. १८५.
(४) धप्र. ४६ (=) पदैः ( करैः ) उत्तरार्धे (विस्तृता चतुरस्रा च चतुरस्रा करोन्नता ॥) ; संग. २२२ पदैः ( करैः ) तृतीयपादे ( विस्तृता चतुरस्रा च ) धर्मप्रवृत्तौ ; संर. १८४.
(५) धप्र. ४६ (=) त्रिदशा ( त्रिंशद ) द्यां च सा कार्या विस्ताराद् ( द्या विवाहे च विस्तृता ) ; संग. २२२ (लम्बा भित्तिर्द्विहस्ता च द्वात्रिंशदङ्गुलोन्नता । प्राग्वेद्या विवाहे च विस्तृता द्वादशाङ्गुला ॥ ) धर्मप्रवृत्तौ ; संर. १८५.

(१) धप्र. ४६ (=) तन्मध्ये ( तदग्रे ) ; संग. २२२ तन्मध्ये कलशा ( तदग्रे कुण्डला ) धर्मप्रवृत्तौ ; संर. १८५. (२) संर. १९९.

## बौधायनगृह्यसूत्रम्

ब्राह्मणभोजनम् , पुण्याहवाचनम् , कुमारभोजनम् , केशवपनम् , यज्ञोपवीतधारणम् , अग्निस्थापनसमिदभ्याधाने, अश्मनि कुमारास्थापनम् , वस्त्रमेखलाजिनदण्डधारणम् , परिदानम् , उपनयनम् , होमः , हुतशेषनिधानम्

[1]अथाऽऽहुतः ॥

[2]ब्राह्मणानन्नेन परिविष्य 'पुण्याहं स्वस्ति ऋद्धिम्' इति वाचयित्वा कुमारं भोजयित्वा तस्य चौलवत्तूष्णीं केशानोप्य स्नातं शुचिवाससं बद्धशिखं यज्ञोपवीतं प्रतिमुञ्चन् वाचयति– 'यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्रियं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥' इति ॥

[3]यज्ञोपवीतिनमप आचमय्याथ देवयजनमुदानयति ॥

[4]अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात् कृत्वा पालाशीं समिधमाज्येनाक्त्वाऽभ्याधापयन् वाचयति– 'आयुर्दा देव जरसं गृणानो घृतप्रतीको घृतपृष्ठो अग्ने । घृतं पिबन्नमृतं चारु गव्यं पितेव पुत्रं जरसे नयेमं स्वाहा ॥' इति ॥

अथैनमुत्थाप्योत्तरेणाग्निं दक्षिणेन पदाऽश्मानमास्थापयति– 'आतिष्ठेममश्मानमश्मेव त्वं स्थिरो भव । अभि तिष्ठ पृतन्यतः सहस्व पृतनायतः ॥' इति ॥

अथैनं तिष्ये वासः सद्यःकृत्तोतं परिधापयन् वाचयति–'या अकृन्तन्नवयन् या अतन्वत याश्च देवीरन्तानभितोऽददन्त । तास्त्वा देवीर्जरसा संव्ययन्त्वायुष्मानिदं परिधत्स्व वासः ॥' इति ॥

परिहितमनुमन्त्रयते– 'परिधत्त धत्त वाससैनं शतायुषं कृणुहि दीर्घमायुः । बृहस्पतिः प्रायच्छद्वास एतत्सोमाय राज्ञे परिधातवा उ ॥ जरां गच्छासि परिधत्स्व वासो भवा कृष्टीनामभिशस्तिपावा । शतं च जीव शरदः सुवर्चा रायश्च पोषमुप संव्ययस्व ॥ परीदं वासो अधिधाः स्वस्तयेऽभूरापीनामभिशस्तिपावा । शतं च जीव शरदः पुरूचीर्वसूनि चार्यो विभजासि जीवन् ॥' इति ॥

[1]अथैनं मौञ्जीं मेखलां त्रिवृतां त्रिः प्रदक्षिणं परिव्ययन् वाचयति । मौञ्जीं ब्राह्मणस्य । ज्यामौर्वीं राजन्यस्य । आवीसूत्रं वैश्यस्य । सर्वेषामेव वा मौञ्जीम् । 'इयं दुरुक्तात्परिबाधमाना शर्म वरूथं पुनती न आगात् ॥ प्राणापानाभ्यां बलमाभरन्ती प्रिया देवानां सुभगा मेखलेयम् ॥' इति ॥

---

(१) बौगृ. २।५।१.

(२) बौगृ. २।५।७ ; प्रपा. २२९ (भुक्तवन्तं वापितशिरसं स्नातं बद्धशिखं यज्ञोपवीतं प्रतिमुञ्चन् वाचयति– 'यज्ञोपवीतं परमम्' इत्यादि ) एतावदेव ; मुक्ता. ९० ( यज्ञोपवीतं प्रतिमुञ्चन् वाचयति– 'यज्ञोपवीतं परमम्' इति ) एतावदेव ; आन. १५५ ( यज्ञोपवीतं प्रतिमुञ्चन् वाचयति– 'यज्ञोपवीतं परमं पवित्रं...तेजः' इति ) एतावदेव ; बाल. १।२९ पृ. १५६ (ब्राह्मणानन्नेन परिविष्य०) ('स्वस्ति ऋद्धिम्' इति०) मुञ्चन् वाचयति (मुञ्चयति) मग्रियं ( मग्र्यं ) ; संर. १८६ ( स्नातं शुचिवाससं बद्धशिखं प्रतिमुञ्चन् वाचयति– 'यज्ञोपवीतं प० बलमस्तु तेजः' इति ) एतावदेव.

(३) बौगृ. २।५।८ ; बाल. १।२९ पृ. १५६ (यज्ञोपवीतिनमप आचामय्य ) एतावदेव ; संर. १८६ मय्याथ दे ( मय्य दे ). (४) बौगृ. २।५।९–१२.

(१) बौगृ २।५।१३ ; अप. १।२९ ( अथैनं मौञ्जीं मेखलां त्रिवृतं त्रिः प्रदक्षिणं परिव्ययति ) एतावदेव ; प्रपा. २२९ नं मौञ्जीं मे (तां मौञ्जीमे) मौञ्जीं ब्रा...वा मौञ्जीम् (मौर्वीज्यां राजन्यम् आवीसूत्रं वैश्यं सर्वानेव वा मौञ्जी ) ( इति० ).

[1]परिवीतामनुमन्त्रयते– 'ऋतस्य गोप्त्री तपसः परस्पी घ्नती रक्षः सहमाना अरातीः। सा नः समन्तमनु परीहि भद्रया भर्तारस्ते मेखले मा रिषाम ॥' इति ॥

[2]ग्रन्थिं करोति– 'प्राणानां ग्रन्थिरसि स मा विस्रंसः' इति नाभिदेशे ॥

[3]अथास्मा अजिनं प्रतिमुञ्चन् वाचयति। कृष्णाजिनं ब्राह्मणस्य। रौरवं राजन्यस्य। बस्ताजिनं वैश्यस्य। सर्वेषां वा कृष्णाजिनम्। 'मित्रस्य चक्षुर्धरुणं बलीयस्तेजो यशस्वि स्थविरं समिद्धम्। अनाहनस्यं वसनं जरिष्णु परीदं वाज्यजिनं दधेऽहम् ॥' इति ॥

अथास्मै दण्डं प्रयच्छति। पालाशं बैल्वं वा ब्राह्मणस्य। नैयग्रोधं स्कन्धजमवाङग्रं रौहीतकं वा राजन्यस्य। बादरमौदुम्बरं वा वैश्यस्य। सर्वेषां वा वार्क्षम् ॥

'सोमोऽसि सोमपं मा कुरु' इति पालाशम् ॥

'ब्रह्मवर्चसमसि ब्रह्मवर्चसाय त्वा' इति बैल्वम् ॥

'ओजोऽस्योजो मयि धेहि' इति नैयग्रोधम् ॥

'बलमसि बलं मयि धेहि' इति रौहीतकम् ॥

'पुष्टिरसि पुष्टिं मयि धेहि' इति बादरम् ॥

'ऊर्गस्यूर्जं मयि धेहि' इत्यौदुम्बरम् ॥

'अहं वृक्षस्य रेरिवा। कीर्तिः पृष्ठं गिरेरिव। ऊर्ध्वपवित्रो वाजिनीव स्वमृतमस्मि। द्रविणं सवर्चसम् ॥' इति वार्क्षम् ॥

'को नामास्यसौ नामास्मि' इति शाट्यायनकम् ॥

(१) बौगृ. २।५।१४ ; प्रपा. २२९ ( परिवीतामनुमन्त्रयते० ).

(२) बौगृ. २।५।१५ ; प्रपा. २२९ ( स० ).

(३) बौगृ. २।५।१६–३८.

अथैनं दक्षिणे हस्ते गृह्णाति– 'यस्मिन् भूतं च भव्यं च सर्वे लोकाः समाहिताः। तेन गृह्णामि त्वामहं मह्यं गृह्णामि त्वामहं प्रजापतिना त्वा मह्यं गृह्णाम्यसौ ॥' इति ॥

अथैनं देवताभ्यः परिददाति– 'देवेभ्यस्त्वा परिददामि विश्वदेवेभ्यस्त्वा परिददामि विश्वेभ्यस्त्वा देवेभ्यः परिददामि सर्वेभ्यस्त्वा देवेभ्यः परिददामि सर्वाभ्यस्त्वा देवताभ्यः परिददाम्यसौ' इति ॥

अथैनमुपनयति– 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामुपनयेऽसौ' इति ॥

अथ कुमारः पक्वाज्जुहोति– 'यश्छन्दसामृषभो विश्वरूपश्छन्दोभ्योऽध्यमृतात्संबभूव। स मेन्द्रो मेधया स्पृणोत्वमृतस्य देव धारणो भूयासं स्वाहा ॥' इति ॥

अथाऽऽज्याहुतीरुपजुहोति– 'क्षेत्रियै त्वा निर्ऋत्यै त्वा' इति षड्भिरनुच्छन्दसम् ॥

एवमेव ब्रह्मसूक्तेन हुत्वा 'ब्रह्म जज्ञानम्' इति षड्भिः ॥

स्विष्टकृत्प्रभृति सिद्धमा धेनुवरप्रदानात् ॥

अग्रेणाग्निं पलाशपर्णेषु हुतशेषं निदधाति– 'नमो अस्तु नीलग्रीवाय' इति ॥

सावित्रीव्रतम्, तत्र समिदभ्याधानम्, सावित्र्यनुवाचनम्, हविःशेषप्राशनम्, आदित्योपस्थानम्, धर्मसंशासनम्, भिक्षायाचनम्, श्रद्धामेधाप्रतिमापूजनमाशीर्वाचनं च, त्र्यहमग्निधारणं व्रतं च, समिदाधानम्, अव्रत्यप्रायश्चित्तहोमः, समिदभ्याधानमाशीर्वाचनं च, नूतनदण्डादिधारणम्, वस्त्रादानम्, आचार्यगृहगमनम्

अथ सावित्रव्रतम् ॥

अथ पालाशीश्चतस्रः समिध आर्द्राः सपलाशाः सप्ररोहाः प्रादेशमात्रीरपरिशुष्काग्रा

घृतान्वक्ता अभ्याधापयन् वाचयति। याज्ञिकानां वा वृक्षाणामन्यतमस्य ॥

'अग्ने व्रतपते सावित्रं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा' ॥

'वायो व्रतपते०, आदित्य व्रतपते०, व्रतानां व्रतपते सावित्रं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा' इति ॥

अपरेणाग्निमुदगग्रं कूर्चं निधाय तस्मिन् प्राङ्मुख आचार्य उपविशति– 'राष्ट्रभृदस्याचार्यासन्दी मा त्वद्योषम्' इति ॥

[1]तस्याग्रेण कुमारो दर्भेषु प्रत्यङ्मुख उपविश्य पादावन्वारभ्याऽऽह– 'सावित्रीं भो अनुब्रूहि' इति ॥

[2]तस्मा अन्वाह। 'ओम्' इति प्रतिपद्यते। 'तत्सवितुर्वरेण्यम्' इत्येतां पच्छोऽर्धर्चशस्ततः समस्तां व्याहृतीर्विहृताः पादादिष्वन्तेषु वा तथाऽर्धर्चयोरुत्तमां कृत्स्नायामिति ॥

[3]अथ कुमारः पक्वादुपादाय प्राश्नाति– 'शरीरं मे विचर्षणम्। जिह्वा मे मधुमत्तमा। कर्णाभ्यां भूरि विश्रुवम्। ब्रह्मणः कोशोऽसि मेधया पिहितः। श्रुतं मे गोपाय॥' इति ॥

अथ हैके प्राक्सावित्र्याः प्राश्नाति 'ब्रह्म वा अन्नम्' इति वदन्तः ॥

तदु तथा न कुर्यात्। नानु(?नू)क्तायां सावित्र्यां प्राश्नीयादित्यनूक्तायामनूक्तायां सावित्र्यां प्राश्नीयादिति शाट्यायनकम् ॥

अथाप उपस्पृश्य ज्योतिष्मत्याऽऽदित्यमुपतिष्ठते– 'उद्वयं तमसस्परि' इति ॥

(१) बौगृ. २।५।३९ ; बाल. १।२९ पृ. १५६ (तस्याग्रेण...भ्याऽऽह० ).

(२) बौगृ. २।५।४० ; बाल. १।२९ पृ. १५६ शस्ततः स (शः स) र्धर्चयोरुत्तमां (र्धर्चश उत्तमायां).

(३) बौगृ. २।५।४१–४८.

अथैनं संशास्ति– 'ब्रह्मचार्यसि, अपोऽशान, कर्म कुरु, मा दिवा सुषुप्थाः, समिध आधेहि, भैक्षाचर्यं चर, सदाऽरण्यात् समिध आहर, उदकुम्भं चाऽऽहर, आचार्याधीनो भव, वेदमधीष्व' इति ॥

स एवमेवैतत् सर्वं करोति ॥

अथास्मा अरिक्तं पात्रं प्रयच्छन्नाह– 'मातरमेवाग्रे भिक्षस्व' इति ॥

स मातरमेवाग्रे भिक्षेत ॥

[1]'भवति भिक्षां देहि' इति ब्राह्मणो भिक्षेत ॥

[2]'भिक्षां भवति देहि' इति राजन्यः ॥

'देहि भिक्षां भवति' इति वैश्यः ॥

[3]तत्समाहृत्याऽऽचार्याय प्राह– 'भैक्षमिदम्' इति। तत् 'सुभैक्षम्' इतीतरः प्रतिगृह्णाति ॥

उत्तरेणाग्निं द्वे स्त्रीप्रतिकृती कृत्य गन्धैर्माल्येन चालंकृत्य त्रिवृताऽन्नेन ब्राह्मणान् संपूज्याऽऽशिषो वाचयित्वा– 'श्रद्धामेधे प्रीयेताम्' इति ॥

त्र्यहमेतमग्निं धारयन्ति क्षारलवणवर्जमधःशय्या च ॥

एतस्मिन्नेवाग्नौ व्याहृतीभिः सायंप्रातः समिधोऽभ्यादध्यात् ॥

एवमन्यस्मिन्नपि सदा ॥

अथैनं प्रदक्षिणमग्निं परिसमूहति– 'जुषस्व नः समिधमग्ने अद्य शोचा बृहद्यजतं धूममृण्वन्। उपस्पृश दिव्यं सानु स्तूपैः सं रश्मिभिस्ततनः सूर्यस्य ॥' इति ॥

अथैनं प्रदक्षिणमग्निं परिषिञ्चति– 'अदितेऽनुमन्यस्व' इति दक्षिणतः प्राचीनम्, 'अनुमतेऽनुमन्यस्व' इति पश्चादुदीचीनम्, 'सर-

(१) बौगृ. २।५।४९ ; मुक्ता. ९५ ; आन. १५७.

(२) बौगृ. २।५।५०–५१ ; मुक्ता. ९५.

(३) बौगृ. २।५।५२–७२.

स्वते ऽनुमन्यस्व ' इत्युत्तरतः प्राचीनम् , ' देव सवितः प्रसुव ' इति समन्तं प्रदक्षिणम् । समन्तमेव वा तूष्णीम् ॥

तस्मिन् व्याहृतीभिः सायंप्रातः समिधोऽभ्यादधाति– ' भूः स्वाहा, भुवः स्वाहा, सुवः स्वाहा, भूर्भुवः सुवः स्वाहा ' इति ॥

तथैव परिसमूह्य तथैव परिषिञ्चति । ' अन्वमंस्थाः , प्रासावीः' इति मन्त्रान्तान् संनमयति ॥

अथैनमुपतिष्ठते– ' यत्ते अग्ने तेजः ' इति तिसृभिः , ' मयि मेधां मयि प्रजाम् ' इति तिसृभिः , ' षोढाविहितो वै पुरुषः ' इत्येतस्माद्ब्राह्मणात् ॥

अथ तिसृषु व्युष्टास्वेतमग्निमादाय तां दिशं यन्ति यत्रास्य पलाशः स्पष्टो भवति ॥

तं प्रदक्षिणं परिसमूहति– ' सुश्रवः सुश्रवसं मा कुरु यथा त्वं सुश्रवः सुश्रवा अस्येवमहं सुश्रवः सुश्रवा भूयासं यथा त्वं सुश्रवः सुश्रवो देवानां निधिगोपोऽस्येवमहं ब्राह्मणानां ब्रह्मणो निधिगोपो भूयासम् ' इति ॥

तस्याग्रेणोत्तरेण वाऽग्निमुपसमाधाय संपरिस्तीर्याथाव्रत्यप्रायश्चित्ते जुहोति– 'यन्म आत्मनो मिन्दाऽभूत्, पुनरग्निश्चक्षुरदात्' इति द्वाभ्याम्॥

अथ पालाशीश्चतस्रः समिध आर्द्राः सपलाशाः सप्ररोहाः प्रादेशमात्रीरपरिशुष्काग्रा घृतान्वक्ता अभ्याधापयन्वाचयति । याज्ञिकानां वा वृक्षाणामन्यतमस्य ॥

' अग्ने व्रतपते सावित्रं व्रतमचारिषं तदशकं तन्मे राधि स्वाहा ' ॥

' वायो व्रतपते० , आदित्य व्रतपते० व्रतानां व्रतपते सावित्रं व्रतमचारिषं तदशकं तन्मे राधि स्वाहा ' इति ॥

तथैव सुश्रवसमभ्यर्च्य त्रिवृताऽन्नेन ब्राह्मणान् संपूज्याऽऽशिषो वाचयित्वा ॥

अत्रैके दण्डमजिनं मेखलां वासश्चातिसृजन्ति ॥

अन्यान्यादायास्य वास आदत्ते– ' यस्य ते प्रथमवास्यं हरामस्तं त्वा विश्वे अनुमदन्तु देवाः । तं त्वा भ्रातरः सुहृदो वर्धमानमनुजायन्तां बहवः सुजातम् ॥ ' इति ॥

अथाधोनाभ्युपरिजान्वाच्छाद्य दण्डमजिनं मेखलां च धारयन् श्राद्धसूतकमैथुनमधुमांसानि वर्जयन् भैक्षाहारोऽधःशायी चाऽऽचार्यस्य गृहानेतीति विज्ञायत आचार्यो वै ब्रह्मेति ॥

## बौधायनगृह्यशेषसूत्रम्

सावित्र्यनुवचनोत्तरं प्राशनम् , आत्मसमारोपितोपनयनाग्नेः समिदाधानार्थं लौकिकाग्नौ प्रणयनम् , राजन्यवैश्ययोरनुलोमानां च प्रयोगे विशेषाः

[1]उपनयने सावित्रीमुक्त्वा प्राश्नाति न प्राक् ॥

सावित्रीमर्थायार्थायाग्निं प्रणयति ॥

अपवृत्ते कर्मणि लौकिकः संपद्यते ॥

[2]अथ राजन्यवैश्ययोरुपनयनं प्रसिद्धम् ॥

एतावदेव नाना ॥

आचार्य एव पक्वाज्जुहोति ॥

ब्रह्मसूत्रमवोद्धृत्य त्रिष्टुब्भी राजन्यस्य ' जिघर्म्यग्निम् , आ त्वा जिघर्मि, आयुर्दा अग्ने हविषो जुषाणः ' इति । जगतीभिर्वैश्यस्य ' जनस्य गोपा अजनिष्ट जागृविः, त्वामग्ने मानुषीरीडते विशः , सप्त ते अग्ने समिधः सप्त जिह्वाः ' इति ॥

वैश्यस्य रथकारस्यैतावदेव नानाऽऽचार्य एव पक्वाज्जुहोति– ' तत्सवितुर्वरेण्यम् ' इति ॥

अथाऽऽज्याहुतीरुपजुहोति– ' क्षेत्रियै त्वा निर्ऋत्यै त्वा ' इति षड्भिरनुच्छन्दसम् । नात्र जगतीभिर्वैश्यस्य जुहोति ॥

अथाग्रेणाग्निं हुतशेषं दत्त्वा विरमेत् ॥

---

(१) बौगृशे. १।३।१०–१२.
(२) बौगृशे. २।८।१–११.

ब्राह्मणेन क्षत्रियायामुत्पन्नो ब्राह्मणवदेव । एतावदेव नाना तस्य 'क्षेत्रियै त्वा' इति व्याहृतीभिश्चेत्युपहोमः ॥

क्षत्रियवदम्बष्ठस्य 'क्षेत्रियै त्वा' इत्येवोपहोमः ॥

क्षत्रियाद्वैश्यायामुत्पन्नः क्षत्रियवदेव 'क्षेत्रियै त्वा' सावित्र्या चोपहोमः ॥

वैश्याच्छूद्रायामुत्पन्नस्तूष्णीं वैश्यवत् ॥

कुमारभोजनम्, केशवपनम्, अजिनादिधारणम्, सावित्र्यनुवचनम्, संध्यावन्दनम्, समिद्धोमः, भस्मधारणम्, वर्णभेदेन भस्मपुण्ड्राकारभेदः

[1]अथाऽऽहुते प्रसिद्धमुपनयनम् ॥

एतावदेव नाना ॥

कुमारं भोजयित्वा गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलमुपलिप्य मङ्गलानि संस्तीर्य तेषु प्राङ्मुख आचार्य उपविश्य तस्याग्रेण कुमारो दर्भेषु प्रत्यङ्मुख उपविश्योभयीरपः संनिषिञ्चति । उष्णासु शीता आनयति । तस्य चौलवत्तूष्णीं केशानोप्य स्नाप्याऽऽच्छाद्यालंकृत्याऽऽदित्याभिमुखस्तिष्ठन् । 'अजिनं वासो वा दक्षिणत उपवीय दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतम्' इति ब्राह्मणम् ॥

यज्ञोपवीतिनमप आचमय्य देवयजनमुदानयति ॥

कृष्णाजिनं ब्राह्मणस्येत्यादि । चतुरङ्गुलं ब्राह्मणस्य, त्र्यङ्गुलं राजन्यस्य, द्व्यङ्गुलं वैश्यस्योपवीतवद्बध्नाति ॥

अथ 'सावित्रीं भो अनुब्रूहि' इत्युक्त्वा कुमारस्य दक्षिणे कर्णे उपदिशेदित्येके । 'कर्णाभ्यां भूरि विश्रुवम्' इत्युक्त्वोन्मुखावलोकनं कृत्वा वाचयति सावित्रीम् ॥

(१) बौगृशे. २।११।१–११.

अथ सायंप्रातःसंध्यां गृहस्थवत्समापयति ॥

अथैनमग्निमुपसमाधाय प्रोक्षणीः संस्कृत्य परिसमूह्य परिषिच्य व्याहृतीभिः समिध आधापयति । षोढाविहितेनोपस्थापयति ॥

तदाग्नेयं भस्म संगृह्य वामपाणितले निक्षिप्य 'मा नस्तोके' इत्यद्भिः 'शं नो देवीरभिष्टये' इति संसृज्य संमेल्य तिर्यक्पुण्ड्रमेकपुण्ड्रं वा ब्राह्मणस्य वर्तुलाकारं राजन्यस्यार्धचन्द्राकृतिं वैश्यस्य ॥

अङ्गानि संधापयति 'सरस्वती' इति शिरसि, 'मेधावी' इति ललाटे, 'तेजस्वी' इति वक्षसि, 'वर्चस्वी' इति दक्षिणेऽसे, 'ब्रह्मवर्चसी' इत्युत्तरेऽसे, 'आयुष्मान्' इति ग्रीवायाम्, 'भूयासम्' इति पिठरे, 'स्वस्ति' इति शिरसि, अन्येषां स्त्रीणां वोर्ध्वपुण्ड्रम् ॥

प्रोक्षणीषु करं प्रक्षाल्य नमस्कृत्य प्रोक्षणीशेषं गेहस्योपरिष्टान्निनयेदित्याह भगवान्बोधायनः ॥

## आश्वलायनगृह्यसूत्रम्

अलंकरणम्, केशवपनम्, वस्त्राजिनान्यतरप्रावरणम्, होमः, अञ्जल्यवक्षारणम्, हस्तग्रहणम्, आदित्यदर्शनम्, परिदानम्, हृदयालम्भनम्, समिद्धोमः, सावित्र्यनुवाचनम्, हृदये पाणिनिधानम्, मेखलाबन्धनम्, दण्डदानम्, ब्रह्मचारिधर्मोपदेशः, भिक्षाचरणम्, अनुप्रवचनीयहोमः, व्रताचरणम्, मेधाजननम्

§ [1]अलंकृतं कुमारं कुशलीकृतशिरसमहतेन वाससा संवीतमैणेयेन वाऽजिनेन ब्राह्मणं रौरवेण क्षत्रियमाजेन वैश्यम् ॥

§ वस्त्राजिनविषयकाणि व्याख्यानानि 'वस्त्रम्' 'अजिनम्' इति प्रकरणयोः (सं. का. पृ. ३०८०, ३०८६) द्रष्टव्यानि ।

(१) आगृ. १।१९।८; मपा. १९ (ऐणेयेन... वैश्यम्०) शौनकः; प्रपा. २२१ (अलंकृतं कुमारं कुशलीकृतशिरसम्०) : २२४ मपावत्; संप्र. ४१०

( १ ) तत्र कुमारस्य अलंकरणं भूषणादीत्येतदुक्तं भवति । कुशलीकृतशिरसमिति वापितशिरसमित्यर्थः ।

¶ देभा.

( २ ) द्वितीयानिर्देशादुपनयेदिति व्यवहितमपि संबध्यते । कुमाराधिकारे पुनः कुमारग्रहणम् 'अथोपेतपूर्वस्य' इत्युपनीतस्य पुनरुपनयनेऽलंकारो मा भूदिति । व्याख्यातं कुशलीकरणम् । ...... एवं संवीतं कुमारमुपनयेत् । उपनयनं नाम पितृकुलात् विधिवदाचार्यकुलप्रापणम् । अस्मिन्नवसरे यज्ञोपवीतधारणम् । यथाह बोधायनः— "स्नातं बद्धशिखं यज्ञोपवीतं प्रतिमुञ्चन् वाचयति— 'यज्ञोपवीतं परमं पवित्रम्' इति" ।

अना.

( ३ ) कुशलीकरणं वपनम् । तथाऽऽशिषो वाचयेत् । ततो भोज्यं तु भुक्तवतः कुमारस्य शिरसो वपनं स्नानं च भवेदिति ।

† प्रपा. २२४

[1]**समन्वारब्धे हुत्वोत्तरतोऽग्नेः प्राङ्मुख आचार्योऽवतिष्ठते ॥**

( १ ) समन्वारब्धे जुहोति आचार्यः । कस्मिन् समन्वारब्धे ? कुमारे । कस्मात् ? अधिकृतत्वात् । हुत्वा उत्तरतोऽग्नेः प्राङ्मुख आचार्योऽवतिष्ठते ।

§ देभा.

( २ ) आज्यस्य बर्हिष्यासादनं कृत्वा समन्वारब्धे ब्रह्मचारिणि इध्माधानाघारान्तं कृत्वा पूर्वोक्ताज्याहुतीर्हुत्वा उत्तरतोऽग्नेः प्राङ्मुख आचार्योऽवतिष्ठते । ब्रह्मचारी तु तीर्थेन प्रविश्य आचार्यस्य दक्षिणत उपविशेत् । तीर्थं नाम प्रणीतानां पश्चिमो देशः । सर्वत्र तीर्थेनैव प्रविश्य कर्म कुर्यात् ।

‡ गानावृ.

[1]**पुरस्तात्प्रत्यङ्मुख इतरः ॥**

पुरस्तादाचार्यस्य प्रत्यङ्मुखोऽवतिष्ठते इतरः कुमारः ।

§ देभा.

[2]**अपामञ्जली पूरयित्वा 'तत्सवितुर्वृणीमहे' इति पूर्णेनास्य पूर्णमवक्षारयति । आसिच्य 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णाम्यसौ' इति तस्य पाणिना पाणिं साङ्गुष्ठं गृह्णीयात् ॥**

( १ ) स्थित्वा अपामञ्जली पूरयित्वा आचार्य आत्मनः कुमारस्य च । तत्रार्थादाचार्यस्यान्यः पूरयति । 'तत्सवितुर्वृणीमहे' इत्येतयर्चा पूर्णेनाञ्जलिना आचार्यः पूर्णमञ्जलिमवक्षारयति कुमारस्य । आसिच्य 'देवस्य त्वा' इत्यनेन मन्त्रेण तस्य कुमारस्य पाणिना पाणिं साङ्गुष्ठं गृह्णीयात् । अथोदा( ? अथाऽऽ )सेचने सिद्धे किमर्थमासेचनग्रहणं पुनः क्रियते ? तत्रेदं प्रयोजनम्— कथमाचार्य आसेचनं कुर्यात् । असाविति सर्वनामनिर्देशस्थाने विभक्त्यर्थः ( ? ) ।

देभा.

( २ ) अपामुभयोरञ्जली पूरयित्वा स्वस्य पूर्णनाञ्जलिनाऽस्य पूर्णमञ्जलिमवक्षारयति 'तत्सवितुर्वृणीमहे' इति मन्त्रेण । ब्रह्मचारिणोऽञ्जलौ आत्मनोऽञ्जलिमवसिञ्चतीत्यर्थः । ततः 'देवस्य त्वा' इति मन्त्रेण तस्य पाणिं साङ्गुष्ठं गृह्णीयात् । आचार्याञ्जलिमर्थादन्यः पूरयति । आसिच्येति वचनं कथम् ? आचार्योऽवक्षारणं कुर्यात्,

---

¶ गानावृ. देभागतम् ।

† शेषम् अनागतम् ।

§ अना. देभावत् ।

‡ प्रपा. गानावृवत् ।

§ गानावृ., अना., प्रपा. देभावत् ।

( अहतेन वाससा संवीतम् ) एतावदेव : ४१२ ( अलंकृतं......संवीतम्० ) ; संभ. २५ वाऽजिनेन ब्रा (वा ब्रा) शेषं प्रपा. २२१ वत् ; सिन्धु. ९५४ प्रपा. २२१ वत् ; संकौ. १२३ ( ऐणेयेन वाऽजिनेन ब्राह्मणम् ) एतावदेव ; संग. ६६१ संप्र. ४१० वत् : ६७० संप्र. ४१२ वत् .

(१) आग. १।२०१२ ; प्रपा. २२४ ; संप्र. ४२४ ; संकौ. १२६ ( समन्वारब्धे हुत्वा० ) ; कुम. ९४६.

(१) आग. १।२०१३ ; प्रपा. २२४ ; संप्र. ४२४ ; संकौ. १२६ ; कुम. ९४६.

(२) आग. १।२०१४ ; प्रपा. २२४ क्षारयति + ( अप ) ; संप्र. ४२४.

न कुमार इत्येवमर्थम् । इतरथा 'पूर्णेनास्य पूर्णमवक्षारयति' इत्युक्ते कस्याञ्जलिं कोऽवक्षारयतीति संदेहः स्यात् । आसिच्येति वचने तूच्यमाने समानकर्तृकत्वनिर्देशात् यः पाणिं गृह्णाति सोऽवसिञ्चतीति ज्ञायते । तेनाऽऽचार्योऽवक्षारयतीति सिद्धम् । असावित्यस्य स्थाने संबुद्ध्या ब्रह्मचारिनाम ब्रूयात् । § गानावृ.

**¹ 'सविता ते हस्तमग्रभीदसौ' इति द्वितीयम्, 'अग्निराचार्यस्तवासौ' इति तृतीयम् ॥**

(१) 'सविता ते' इत्यनेन मन्त्रेण द्वितीयं पाणिं गृह्णाति । 'अग्निराचार्यस्तव' इति तृतीयं पाणिं गृह्णाति। ¶ देभा.

(२) संख्यावचनं प्रथमहस्तग्रहणदृष्टाञ्जलिपूरणादिधर्मप्राप्त्यर्थम् । $ गानावृ.

**आदित्यमीक्षयेत्– 'देव सवितरेष ते ब्रह्मचारी तं गोपाय स मामृत' इत्याचार्यः ॥**

(१) आदित्यमीक्षयेत् 'देव सवितः' इत्यनेन मन्त्रेण । आचार्य इमं मन्त्रं ब्रूते । तत्रैके द्विधैनं मन्त्रं कुर्वन्ति– 'देव सवितरेष ते ब्रह्मचारी तं गोपाय' इत्याचार्यस्य भवति, 'स मामृत' इति ब्रह्मचारिण इति । अनेन मन्त्रेण आचार्यमीक्षते इति । एवमेके कर्मेदं प्रतिभाष्यन्ते विप्रतिपन्नाः । तदेतन्नोपपद्यते द्विधाकरणं मन्त्रस्य, अविभक्तत्वात् । *मन्त्रविभागकरणं नास्ति (इति) न मन्त्रविभागः स्यात् । ननु च अनितिका अपि मन्त्रा भवन्ति, † रथारोहे चक्रयोरधिष्ठानस्य च यथा भिन्नः । ‡ इति नास्ति । एवमिहापि । तदेतन्नोपपद्यते । कस्मात् ? (अ)तुल्यत्वात् । तत्र स एव प्रयोक्ता उभयोर्मन्त्रयोः, इह तु कर्त्रन्तरम् । तस्मात् एकमिच्छन्ति । ननु च येऽप्येकमिच्छन्ति तेषामप्याचार्यग्रहणमकर्तव्यम् । कस्मात् ? आचार्यस्यैवायं मन्त्रो भविष्यतीति यथाऽन्येषु मन्त्रेषु । तत्तु क्रियते ज्ञापकार्थम् । अन्यत्र कुर्वन्तीक्षितुं (? ईक्षितुः) मन्त्रो यथा स्यात् "$भुक्तवन्तमपामञ्जलिपूर्णमादित्यमुपस्थापयेत् 'त्वं व्रतानाम्'" (आश्रौ. ८।१४।६) इत्ययम् । तस्मादाचार्यग्रहणमपि कर्तव्यम् आचार्यस्यैवायं मन्त्रो भवतीति साधितम् (? साधयितुम्) । ¶ देभा.

(२) ततो ब्रह्मचारिणमादित्यमीक्षयेन्मन्त्रेणाऽऽचार्यः । आचार्यग्रहणं ज्ञापनार्थम्– अन्यत्रेक्षणे ब्रह्मचारिणो मन्त्रो नाऽऽचार्यस्येति । तेन "आदित्यमीक्षयेत्– 'मित्रस्य त्वा चक्षुषा प्रतीक्षे" (आश्रौ. ८।१४।१७) इत्यत्र ब्रह्मचारिणो मन्त्रः सिद्धः । § गानावृ.

**'कस्य ब्रह्मचार्यसि प्राणस्य ब्रह्मचार्यसि कस्त्वा कमुपनयते काय त्वा परिददामि' इति ॥**

(१) 'कस्य ब्रह्मचार्यसि' इत्ययं चाऽऽचार्यस्यैव भवति मन्त्रः । कस्मात् ? अधिकृतत्वात् प्रदानसंयोगाच्च । प्रजापतयेऽसौ ब्रह्मचारी प्रदीयते प्रजापतिना उपनीतोऽसावित्येतदुक्तं भवति । देभा.

(२) जपेदिति शेषः । मन्त्रलिङ्गात् प्रजापतये ब्रह्मचारी प्रदीयते । तेनाऽऽचार्यस्यायं मन्त्रः । § गानावृ.

---

§ अना., प्रपा. गानावृवत् ।

¶ अना. देभावत् ।

$ प्रपा. गानावृवत् ।

* मन्त्रविभागकरणम् इतिकारः, स नास्ति इति हेतोर्मन्त्रविभागो न स्यादित्यर्थः ।

† "रथमारोक्ष्यन्नाना पाणिभ्यां चक्रे अभिमृशेत्– 'अहं ते पूर्वे पादावालभे बृहद्रथन्तरे ते चक्रे, वामदेव्यमक्षः' इत्यक्षाधिष्ठाने" (आगृ. २।६।१,२) इति रथारोहणे चक्रयोरक्षाधिष्ठानयोश्च मन्त्राभ्याममिमर्शनं विहितम् । तत्र मन्त्रविभागकरणमितिकारो नास्ति । व्याख्यातं च नारायणेन 'इतिकारोऽध्याहार्यः' इति ।

‡ इति इतिकार इत्यर्थः ।

$ उपस्थापनमन्त्रस्योदाहरणत्वं चिन्त्यम् ।

¶ अना. देभावत् ।

§ प्रपा. गानावृवत् ।

(१) आगृ. १।२०।५-८ ; प्रपा. २२४ ; संप्र. ४२४.

( ३ ) परिदद्यादिति शेषः, मन्त्रलिङ्गात् । वक्ष्यति च–'एतेन वापनादि परिदानान्तं व्रतादेशनं व्याख्यातम्' इति 'परिदानं कालश्च' ( आगृ. १।२२।२०,२४, २५) इति च । अना.

**'युवा सुवासाः परिवीत आगात्' इत्यर्धर्चेनैनं प्रदक्षिणमावर्तयेत् ॥**

( १ ) 'युवा सुवासाः' इत्यर्धर्चेनैनं प्रदक्षिणं ब्रह्मचारिणमावर्तयेत् । एनमिति प्राप्नोति । कस्मात् ? अधिकृतत्वात् । तत्र प्रारभ्यते कथमावर्तयितुर्मन्त्रः स्यात्, नाऽऽवर्त्यमानो ब्रूयात् कुमारः । देभा.

( २ ) अनेनार्धर्चेन एनं ब्रह्मचारिणं प्रदक्षिणमावर्तयेत् । एनमिति वचनं कथमावर्तयितुर्मन्त्रः स्यात्, नाऽऽवर्त्यमानो ब्रूयात्कुमार इत्येवमर्थम् । अर्धर्चग्रहणमृङ्निवृत्त्यर्थम् । अन्यथा 'ऋचं पादग्रहणे' ( आश्रौ. १।१।१७ ) इत्यृक् स्यात् । * गानावृ.

**'तस्याध्यंसौ पाणी कृत्वा हृदयदेशमालभेतोत्तरेण ॥**

( १ ) तस्य ब्रह्मचारिणः अध्यंसौ । अधीत्युपरिभावे । अंसयोरुपरि पाणी कृत्वा ( अंसयोः ? ) हृदयदेशमालभेतोत्तरेणार्धर्चेन या प्रकृता ऋक् । ( आलभेतेत्युक्तं भवति ? ) । देभा.

( २ ) अधीत्युपरिभावे । ब्रह्मचारिणोंऽसयोरुपरि स्वस्य पाणी कृत्वा तस्य हृदयदेशं स्पृशेदुत्तरेणार्धर्चेन । $ गानावृ.

( ३ ) तस्य कुमारस्याध्यंसौ अंसयोरुपरि पाणी कृत्वा गमयित्वा तस्य हृदयदेशमालभेत उत्तरेणार्धर्चेन 'तं धीरासः' इत्यनेन । अर्थादुभौ प्राङ्मुखौ भवतः, पुरस्तात् ( ? पश्चात् ) आचार्यः । अना.

* अना., प्रपा. गानावृवत् ।

$ प्रपा. गानावृवत् ।

(१) आगृ. १।२०।९; प्रपा. २२४ माल ( मस्याऽऽल ); संप्र. ४२४,

**'अग्निं परिसमुह्य ब्रह्मचारी तूष्णीं समिधमादध्यात् । तूष्णीं वै प्राजापत्यम् । प्राजापत्यो ब्रह्मचारी भवतीति विज्ञायते ॥**

( १ ) तत्र परिसमु( † ? समु )ह्येत्येतदपार्थकम् । कस्मात् ? प्रकृतत्वात् । अग्नेः संस्कारार्थं परिसमूहनं क्रियते । संस्कृतश्चायमग्निः तेनाग्निं परिसमूह्येति । सकृन्मन्त्रमारब्धम् । तदिदमारम्भप्रयोजनं भवति । अन्यार्थमारभ्यते । कस्मात् ? तत्रैवाऽऽरभ्यते यत्र प्रयोजनमिति । प्रकरणमुपजीवन्नाचार्य इहाऽऽरभते । प्रथमं चेदं समिदाधानम् । तस्मादत्रापि प्रारब्धम् । किं पुनः प्रयोजनमिति ? सायंप्रातः समिधमादध्यादित्यत्र । ब्रह्मचारिग्रहणमाचार्यनिवृत्त्यर्थम् । अतश्च ज्ञापितं भवति ब्रह्मचारिग्रहणात् यथा आचार्यस्यैव पूर्वमन्त्रा( ? तन्त्राणि ) भवन्तीति । तूष्णीं यत्कर्म क्रियते तत् प्राजापत्यम् । विज्ञायते इति ब्राह्मणम् । यस्मात् प्राजापत्यो ब्रह्मचारी तस्मात्तूष्णीं समिधमादधाति । कथं पुनः प्राजापत्यो ब्रह्मचारी भवतीति विज्ञायते ? यस्मादयं परिदत्तः– 'कस्त्वा कमुपनयते काय त्वा परिददामि' इति । अनेन प्राजापत्यः संवृत्तः । सर्वत्र च प्राजापत्याहुतिषु तूष्णीमेवोपदेशः । तेनोपपद्यते तेषां प्राजापत्यो ब्रह्मचारीति । देभा.

( २ ) अत्र परिसमूहनमनर्थकम्, संस्कृतत्वादग्नेः । उच्यते । सायंप्रातः समिदाधाने परिसमूहनपर्युक्षणे यथा स्यातामिति परिसमूहनवचनम् । अत्र तु परिसमूहनाद्यकृत्वैव तस्मिन्नेवाग्नौ ब्रह्मचारी तूष्णीं समिधमादध्यात् । ब्रह्मचारिवचनमाचार्यनिवृत्त्यर्थम् । यस्मात् यत्प्राजापत्यं तत्तूष्णीम्, ब्रह्मचारी च प्राजापत्य इति श्रूयते, तस्मात्तूष्णीं समिधमादध्यात् । ¶ गानावृ.

† यद्यपि 'समूह्य' इति दीर्घोकारविशिष्टः पाठो मूले बहुषु पुस्तकेषु मुद्रितोऽस्ति, तथापि 'उपसर्गाद्ध्रस्व ऊहतेः' ( पा. सू. ७।४।२३ ) इत्यनुशासनानुसारी ह्रस्वोकारविशिष्टः पाठ एव साधुः ।

¶ प्रपा. गानावृवत् ।

(१) आगृ. १।२०।१०; प्रपा. २२४; संप्र. ४२७.

( ३ ) यद्यप्यसावग्निः पूर्वमेव परिसमूहनेन संस्कृतः, तथापि वचनात् पुनरपि परिसमूहितव्यः। अपर आह– वक्ष्यति 'सायंप्रातः समिधमादध्यात्' इति, तदर्थोऽयं परिसमूहनविधिरिति। ब्रह्मचारिग्रहणमाचार्यनिवृत्त्यर्थम्। मन्त्रानुपदेशादेव सिद्धे तूष्णींग्रहणं तूष्णींहोमधर्मप्राप्त्यर्थं 'प्रजापतिं मनसा ध्यायन्' इति। अना.

[1]**मन्त्रेण हैके– 'अग्नये समिधमाहार्षं बृहते जातवेदसे। तया त्वमग्ने वर्धस्व समिधा ब्रह्मणा वयं स्वाहा॥' इति॥**

( १ ) एके आचार्याः समिदाधानं मन्त्रेणेच्छन्ति। तत्र हकारोऽभिमतपक्षप्रदर्शनार्थः। पूर्वपक्षस्य श्रुतिसंयोगात् बलीयस्त्वं दृष्ट्वा इह हकारः प्रयुज्यते। तस्मात्तुल्यबलीयस्त्वं भवति। तुल्ययोगे च विकल्प उपपद्यते। 'अग्नये समिधमाहार्षम्' इत्यनेन मन्त्रेण। देभा.

( २ ) एके मन्त्रेण समिदाधानमिच्छन्ति। हशब्दोऽभिमतज्ञापनार्थः। तेन पूर्वस्य श्रुत्याकृष्टत्वेऽपि उभयोस्तुल्यत्वं सिद्धम्। † गानावृ.

( ३ ) 'अग्नये समिधम्' इति मन्त्रोऽविज्ञातस्वरत्वात् 'विभाषा छन्दसि' (पा. सू. १।२।३६) इत्येकश्रुत्या विधानाच्चैकश्रुत्येनैव प्रयोक्तव्यः। अतः 'सर्वत्राप्यविज्ञातस्वरा मन्त्रा ऐकश्रुत्येनैव प्रयोक्तव्याः' इति जयन्तः। संकौ. १२६

[2]**स समिधमाधायाग्निमुपस्पृश्य मुखं निमार्ष्टि त्रिः– 'तेजसा मा समनज्मि' इति॥**

( १ ) सः ब्रह्मचारी समिधमाधाय अग्निमुपस्पृश्य मुखं निमार्ष्टि त्रिः 'तेजसा मा समनज्मि' इत्यनेन मन्त्रेण। तत्र 'सः' इत्यनर्थकम्। कस्मात्? प्रकृतत्वात्। तत्राऽऽरभ्यते नियमार्थम्– अन्यत्र समिदाधाने न ब्रह्मचारी प्रसज्येत, 'समिधौ वा, जपेद्वा' (आगृ. ३।६।१०, ११) इत्यत्र मा भूदिति। समिद्ग्रहणं न कर्तव्यम्, प्रकृतत्वात्। तत्क्रियते उभयोरपि पक्षयोर्यथा स्यादिति। तदेतन्नोपपद्यते, तत्र समिद्ग्रहणस्य प्रत्यक्षोपदेशात्। तत्क्रियते कथमयं विधिः कृत्स्न उभयत्र स्यादिति। आधायग्रहणं किमर्थम्? 'सायंप्रातः समिधमादध्यात्' इत्यत्र सायंप्रातर्यथा स्यादुत्तरो विधिरिति। देभा.

( २ ) ब्रह्मचारी समिधमाधायाग्निमुपस्पृश्य मुखं निमार्ष्टि मन्त्रेण त्रिः। मन्त्रावृत्तिरुक्ता। सग्रहणं 'समिधौ वा, जपेद्वा' इत्यत्र वक्ष्यमाणो विधिर्मा भूत्। समिद्ग्रहणमुभयोरपि पक्षयोरुत्तरो विधिर्यथा स्यादिति। आधायग्रहणं 'सायंप्रातः समिधमादध्यात्' इत्यत्रापि यथा स्यात्। ‡ गानावृ.

( ३ ) स इत्युच्यते नियमार्थम् अन्यत्र समिदाधाने संमार्जनं मा भूदिति 'समिधौ वा, जपेद्वा' इति। समिद्ग्रहणमनर्थकम्, प्रकृतत्वात्। तत् क्रियते उभयोरपि पक्षयोर्यथा स्यादिति मन्त्रपक्षे चामन्त्रपक्षे च। आधायग्रहणं 'सायंप्रातः समिधमादध्यात्' इत्यत्राप्युत्तरो विधिर्यथा स्यादिति। प्रतिनिमार्जनं अग्नेरुपस्पर्शनं मन्त्रश्च भवति। अना.

**तेजसा ह्येवाऽऽत्मानं समनक्तीति विज्ञायते॥**

( १ ) अथ श्रुत्याकर्षः कस्मात् क्रियते? यथाऽग्नेरप्युपस्पर्शनं त्रिः स्यादित्येवमर्थम्। † देभा.

( २ ) ब्राह्मणानुकर्षणं प्ररोचनार्थम्। अना.

[1]**'मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु॥ मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु॥ मयि मेधां मयि प्रजां मयि सूर्यो**

---

† अना., प्रपा. गानावृवत्।

(१) आगृ. १।२१।१; प्रपा. २२४; संप्र. ४२७ (मन्त्रेण हैके) एतावदेव; संकौ. १२६ (=) (अग्नये समिधम्) इति निर्देशमात्रम्.

(२) आगृ. १।२१।२–३; प्रपा. २२४.

‡ प्रपा. गानावृवत्।

† गानावृ. देभावत्।

(१) आगृ. १।२१।४; प्रपा. २२४; संप्र. ४२८ (मयि मेधां... इत्युपस्थाय०); संकौ. १२५ (जान्वाच्योपसंगृह्य) एतावदेव; बाल. १।२९ पृ. १५६ (आचार्यो ब्रूयादधीहि भोः सावित्रीं भो अनुब्रूहीति) एतावदेव; कृम. ९४६ संप्रवत्.

**भ्राजो दधातु ॥ यत्ते अग्ने तेजस्तेनाहं तेजस्वी भूयासम् ॥ यत्ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासम् ॥ यत्ते अग्ने हरस्तेनाहं हरस्वी भूयासम् ॥ ' इत्युपस्थाय *जान्वाच्योपसंगृह्य ब्रूयात्– 'अधीहि भोः सावित्रीं भो अनुब्रूहि ' इति ॥**

( १ ) 'मयि मेधाम्' इत्यनेन मन्त्रेणोपस्थाय जान्वाच्योपसंगृह्य ब्रूयात् । किमिति ? 'अधीहि भोः सावित्रीं भो अनुब्रूहि' इति । देभा.

( २ ) षड्भिरुपस्थाय दक्षिणं जान्वाच्य विधिवदुपसंगृह्याऽऽचार्यं ब्रूयात् 'अधीहि' इति प्रैषेण । गानावृ.

( ३ ) ततः 'मयि मेधाम्' इत्यादिभिरग्निमुपतिष्ठेत । एतच्च 'सायंप्रातः समिधमादध्यात्' इत्यत्र नित्येऽपि समिदाधाने भवति । आचारप्राप्तं भसितधारणम् । उपस्थाय जान्वाच्य दक्षिणजानुं( ? नु ) भूमौ कृत्वाऽऽचार्यमुपसंगृह्णीयात् । उपसंग्रहणम् अभिवादनम् । तच्च दक्षिणोत्तराभ्यां पाणिभ्यामाचार्यस्य पादौ स्पृष्ट्वा कर्तव्यम् । दक्षिणेन दक्षिणं सव्येन सव्यम् । एवमुपसंगृह्य 'अधीहि भोः सावित्रीम्' इत्यादिमन्त्रं ब्रूयादाचार्यं प्रति । अना.

( ४ ) उपस्थानं नाम मन्त्रार्थस्मरणपूर्वकं प्रणतियुक्तमुपस्थानम् । ‡ प्रपा. २२५

**'तस्य वाससा पाणिभ्यां च पाणी संगृह्य सावित्रीमन्वाह पच्छोऽर्धर्चशः सर्वाम् ॥**

( १ ) तस्य ब्रह्मचारिणः वाससा पाणिभ्यां च पाणी संगृह्णाति । कतरेण वाससा पाणी संगृह्णातीत्येतत्संदिह्यते । ब्रवीति– यदुत्तरं वास आचार्यस्य तेन गृह्णाति । अत एवास्याधिकारात् । अधिकार आरभ्यते । कथम् ? ब्रह्मचारिणो यद्वासस्तेन पाणी संगृह्णीयादिति । संगृह्य सावित्रीमन्वाह पच्छः अर्धर्चशः सर्वामिति । देभा.

( २ ) तस्य ब्रह्मचारिणः परिहितेन वाससा, प्रावरणस्यानित्यत्वात्, स्वस्य पाणिभ्यां च तस्य पाणी गृहीत्वा सावित्रीमन्वाह । ‡ गानावृ.

( ३ ) तस्येत्युच्यते ब्रह्मचारिणो यद्वासः तेन यथा स्यादिति । तस्य वाससाऽऽत्मनश्च पाणिभ्यां ब्रह्मचारिणः पाणी संगृह्य सावित्रीमन्वाह प्रथमं पच्छः ततोऽर्धर्चशः ततः सर्वामिति । 'तत्सवितुर्वरेण्यम्' इत्येषा सावित्री, प्रसिद्धेः, न या काचन सवितृदेवत्या । अना.

**'यथाशक्ति वाचयीत ॥**

( १ ) यथाशक्ति वाचयीत पच्छस्तथाऽर्धर्चशः तथा सर्वाः( ? र्वाम् ) । एवं पच्छ इत्युच्यमाने तथा सर्वा वाचयति यथा शक्तिर्भवति । देभा.

( २ ) स्वयं पादं पादमुक्त्वा तेन वाचयति । यदि ब्रह्मचारी पादं पादं वक्तुं न शक्नोति ततस्तेन यथाशक्ति वाचयीत । एवमर्धर्चशः , एवं सर्वाम् । $ गानावृ.

**'हृदयदेशेऽस्योर्ध्वाङ्गुलिं पाणिमुपदधाति– 'मम व्रते हृदयं ते दधामि मम चित्तमनु चित्तं ते अस्तु । मम वाचमेकव्रतो जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यम् ॥ ' इति ॥**

( १ ) वाचयित्वा हृदयदेशेऽस्योर्ध्वाङ्गुलिं पाणिमुपदधाति 'मम व्रते' इत्यनेन मन्त्रेण । हृदयदेशे हृदयदेशसमीपे उपदधाति स्थापयतीत्यर्थः । देभा.

---

* गायत्र्युपदेशे सिन्धु., कुभ., संकौ. इत्येतेषां दिङ्नियमविषयकाः शास्त्रार्थाः कौषीतकिगृह्यसूत्रेषु द्रष्टव्याः ।

‡ शेषं गानावृवत् ।

(१) आगृ. १।२१।५ ; प्रपा. २२४ ; संप्र. ३४१ ( तस्य...संगृह्य० ), ४२८ ; बाल. १।२९ पृ. १५६.

‡ प्रपा. गानावृवत् ।

$ अना., प्रपा. गानावृवत् । गायत्र्युपदेशे दिङ्नियमविषयकः शास्त्रार्थः कौषीतकिगृह्यसूत्रेषु द्रष्टव्यः ।

(१) आगृ. १।२१।६ ; प्रपा. २२४ ; संप्र. ३४१, ४२८ ; बाल. १।२९ पृ. १५६ शक्ति + ( वा ).

(२) आगृ. १।२१।७ ; प्रपा. २२४ ; संप्र. ४३० पाणिमुप ( पाणिं नि ).

(२) ब्रह्मचारिणो हृदयदेशसमीपे स्वस्य पाणि-मूर्ध्वाङ्गुलिमुपदधाति स्थापयति मन्त्रेण । § गानावृ.

'मेखलामाबध्य दण्डं प्रदाय ब्रह्मचर्यमादि-शेत् ॥

(१) एतस्मिन् काले मेखलामाबध्नाति । दण्डं च प्रदाय ब्रह्मचर्यमादिशेत् । देभा.

(२) ततो मेखलामाबध्य दण्डं प्रदाय ब्रह्मचर्यमादि-शेत् । ‡ गानावृ.

(३) या यस्य मेखला तां तस्याऽऽबध्य यो यस्य दण्डः तं तस्मै प्रदाय 'ब्रह्मचार्यसि' इत्यादिना ब्रह्म-चर्यमादिशेत् । अना.

²'ब्रह्मचार्यसि, अपोऽशान, कर्म कुरु, दिवा मा स्वाप्सीः, आचार्याधीनो वेदमधीष्व' इति॥

(१) ब्रह्मचार्यसि ब्रह्मचारी त्वमसि । अपोऽ-शानेति । अतः प्रभृत्याचमनं कुरु इत्येतदुक्तं भवति । कर्म कुरु यच्छास्त्रविहितम् । दिवा मा स्वाप्सीः । दिवा-शयनप्रतिषेधः । आचार्याधीनो भव । वेदमधीष्व । सततं शयनपानभोजनादिषु अध्ययनेषु च नित्यमाचार्या-धीनेन भवितव्यमित्येतदुक्तं भवति । देभा.

(२) इत्थमादिशेदित्याह– ब्रह्मेति । इदानीं ब्रह्म-चार्यसि । अपोऽशान । मूत्रपुरीषादौ शास्त्रविहितमाच-मनं कुर्वित्यर्थः । कर्म कुरु । यच्छास्त्रविहितं कर्म संध्योपासनादि । दिवा मा स्वाप्सीरिति दिवाशयन-प्रतिषेधः । आचार्याधीनो नित्यं भव । वेदमधीष्व वेदा-ध्ययनं कुरु । ‡ गानावृ.

(३) दृष्टार्थत्वादादेशस्य मन्त्रार्थमपि ब्रूयात् । त्वमिदानीं ब्रह्मचार्यसि । अपोऽशान मयाऽनुज्ञातोऽप एवाशान । कर्म कुरु समिदाधानभिक्षाचरणादि । दिवा मा स्वाप्सीः । स्पष्टम् । आचार्याधीनः तच्छासने तिष्ठन् वेदमधीष्व इति मन्त्रार्थः । अना.

¹'अप्रत्याख्यायिनमग्रे भिक्षेत, अप्रत्याख्या-यिनीं वा ॥

(१) यो हि न प्रत्याचष्टे ईदृग्लक्षणं प्रथमं भिक्षेत । अप्रत्याख्यानशीलः अप्रत्याख्यायी । तं याचेत् । अग्रे प्रथममित्यर्थः । पश्चादन्यान् । तत्र संशयः– किमेत-द्भिक्षान्तरम्, आहोस्विद्याचनोपायः ? इति । किंचातः ? यदि तावद्याचनोपायः– अप्रत्याख्यायिनं याचित्वा पश्चा-दन्येषां नियमः । तस्मादन्यत्रापि याचते । अप्रत्याख्या-यिनीं वा स्त्रियं याचेत । तत्र सायंप्रातः भिक्षेत, तस्यायं विधिः । नेत्युच्यते । भिक्षान्तरमेव गम्यते । देभा.

(२) अयं नियमोऽनुप्रवचनीयभैक्षे । कुतः ? 'अनुप्रवचनीयं भवान् ददातु' इति भैक्षमन्त्रात् । ‡ गानावृ.

(३) $ आङो ह्रस्वश्छान्दसः । अपपाठो वा । यो न प्रत्याचष्टे तं प्रथमं भिक्षेत । ततो यथासंभवम् । एवंभूतां स्त्रियं वा प्रथमं भिक्षेत । अना.

(४) यद्यपि 'अप्रत्याख्यायिनमग्रे भिक्षेत' इति सूत्रे *पुंभिक्षाया एव प्राथम्यं प्रतीयते, तथापि

§ अना., प्रपा. गानावृवत् ।

‡ प्रपा. गानावृवत् ।

(१) आगृ. १।२२।१ ; प्रपा. २२४ ; संप्र. ४३७.

(२) आगृ. १।२२।२ ; मिता. ३।५ (=) ( कस्य ब्रह्मचार्यसि, अपोऽशान, कर्म कुरु, दिवा मा स्वाप्सीः ) एतावदेव ; प्रपा. २२४ ; संप्र. ४३७ ( इति० ).

‡ प्रपा., संप्र. गानावृवत् ।

$ 'अप्रत्यख्यायिनम्' इति पाठं मन्यते इति कल्प्यते ।

* अत्रैवकारेण स्त्रीभिक्षाप्राथम्यव्यावृत्तिर्नोपपद्यते, स्त्री-भिक्षाप्राथम्यस्याप्याश्वलायनेन विकल्पेन विधानात् । विकल्प-विधायकवाक्यान्तराणामपि सत्त्वाच्च । अत एवाग्रे 'मातृ-भिक्षाया एव' इति पुंभिक्षाप्राथम्यव्यावृत्तिरपि नोपपद्यते, पुंभिक्षाप्राथम्यविधेर्निर्विषयत्वापत्तेश्च । नापि मातृभिन्न-स्त्रीभिक्षाप्राथम्यव्यावृत्तिरप्युपपद्यते, विकल्पेन तत्प्राथम्य-

(१) आगृ. १।२२।७ ; मेधा. २।५० गृह्यम् ; मपा. ३३ वा ( च ) शौनकः ; प्रपा. २२९ ; मच. २।५० ( अप्रत्याख्यायिनीं चाग्रे भिक्षेत ) एतावदेव, गृह्यम् ; संप्र. ४३७, ४८५ ; संम. ४० ; संग. ६८९ शौनकः ; कृम. ९४७ ( अप्रत्याख्यायिनीं वा० ) ; संर. २८८.

†एतत्कात्यायनवाक्याद्वाक्यान्तराच्च मातृभिक्षाया एव प्राथम्यम्, अविशेषप्रवृत्तस्य सूत्रस्य स्त्रीभिक्षाप्राथम्येऽप्यविरोधात्। कृभ. ९४७

¹ ¶ '**भवान् भिक्षां ददातु' इति, 'अनुप्रवचनीयम्' इति वा ॥**

(१) 'भिक्षां भवान् ददातु' इत्येवं भिक्षां याचेत। अनुप्रवचनीयोपदेशात् गम्यते अनुप्रवचनीयार्थमिदं भिक्षायाचनमिति। भवत्पूर्वमित्येवम्(?)। इदं तु भिक्षायाचनं सर्वेषां वर्णानां भवत्यविशेषात्। यदा तु स्त्रियं याचेत तदा 'भिक्षां भवती ददातु' इति, 'अनुप्रवचनीयम्' वेति। देभा.

(२) स्त्रीभिक्षा चेदुभयत्र मन्त्रे 'भवती भिक्षां ददातु' इति ब्रूयात्। § गानावृ.

(३) अनेन मन्त्रेण सर्वेषां वर्णानां पुरुषं प्रति याचनम्। यदा तु स्त्री याच्यते तदा 'भिक्षां भवती ददातु' इति। 'अनुप्रवचनीयं भवान् ददातु' इति वा भिक्षां याचते। अस्मादेवं ज्ञायते– अनुप्रवचनीयार्थे भिक्षान्तरमिदम्, न सायंप्रातर्भिक्षाचरणे गुणविधिरिति। तत्र मनुराह– 'भवत्पूर्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः। भवन्मध्यं तु राजन्यो वैश्यस्तु भवदुत्तरम्॥'। अना.

(४) भिक्षापदस्थानेऽनुप्रवचनीयपदं वा पठेत्। स्त्रियं प्रति भिक्षा चेदुभयविधेऽपि मन्त्रे भवतीपदस्यैवाऽऽदौ प्रयोग इति वृत्तिकृत्। शौनकस्तु स्त्रीपुरुषयोरुभयोरपि भिक्षणे भिक्षाशब्दस्यैवाऽऽदौ प्रयोगं †वक्ष्यति। संप्र. ४३८

(५) यद्यपि 'भिक्षां भवान् ददातु अनुप्रवचनीयमिति वा' इति सूत्रे भिक्षाया भवन्मध्यतोक्ता, तथापि 'भवत्पूर्वां ब्राह्मणो भिक्षेत, भवन्मध्यां राजन्यः, भवदन्त्यां वैश्यः' इति वचनात्, 'आदिमध्यावसानेषु भवच्छब्दोपलक्षिता। ब्राह्मणक्षत्रियविशां भिक्षाचर्या यथाक्रमम्॥' इति याज्ञवल्क्योक्तेश्च, 'भवत्पूर्वामिति शास्त्रान्तरोक्तो विधिर्द्रष्टव्यः' इति वृत्तिग्रन्थाच्च भवत्पूर्वकतैव। एवं च सूत्रे कारिकायां (च) यद् भवन्मध्यत्ववचनं तत् क्षत्रियपरम्। अथवा, अनुप्रवचनीयभिक्षायाम् 'अप्रत्याख्यायिनम्' इत्यादिसूत्रोक्तायां भवन्मध्यतैव, 'अनुप्रवचनीयं भवान्ददातु' इति पक्षान्तरे तथैवोक्तेः। अन्यथा वैरूप्यं स्यात्। 'भवत्पूर्वाम्' इत्यादिवृत्तिग्रन्थस्य याज्ञवल्क्यवचसां च सायंप्रातर्भिक्षापरत्वेनोपपत्तेरिति। कृभ. ९४७

¹**तदाचार्याय वेदयीत, तिष्ठेदहःशेषम्॥**

(१) तत् अनुप्रवचनीयार्थे भिक्षामाहृताम् आचार्याय वेदयीत। तद्वेदयित्वा तिष्ठेदहःशेषम्। शिष्टं

---

विधायकवचनानामपि सत्त्वात्। तस्मादप्रत्याख्यानस्याऽऽवश्यकत्वात् मृदुस्वभावासु स्त्रीषु तत्रापि मातरि तत्संभवस्योत्कटत्वात् आश्वलायनानामपि मातृभिक्षाप्राथम्यस्योचितत्वेऽपि पुंभिक्षाप्राथम्ये न प्रत्यवायो न वा कर्मवैकल्यमिति प्रतिभाति। 'अविशेषप्रवृत्तस्य' इत्यपि चिन्त्यम्, पुंस्त्वादिरूपस्य तत्संनियोगेन प्राथम्यरूपस्य च विशेषस्य सूत्रे उक्तत्वात्।

† 'मातरमेवाग्रे भिक्षेत' इति सिन्धुधृतकात्यायनवचनस्यैतच्छब्देन परामर्शः। नैतादृशं कात्यायनवचनमुपलभ्यते। 'मातरं प्रथमामेके' इति पारस्करगृह्यसूत्रमस्ति। न तु तत्र केवलमवधारणं नास्ति, मतान्तरत्वदर्शनमप्यस्ति।

¶ अयं वैदिकसंप्रदायानुगृहीतः पाठः। अस्मिन्पाठे स्त्रीभिक्षामन्त्रस्यापि भवत्पूर्वकत्वकल्पना न्याय्या। वृत्तिकारेण तु पूर्वसूत्रव्याख्याने पुंभिक्षामन्त्रो भवत्पदमध्य उक्तः। अत्र स्त्रीभिक्षामन्त्रस्तु भवत्पूर्व उक्तः। अस्मिन्वैषम्ये प्रमाणं मृग्यम्।

§ प्रपा. गानावृवत्।

(१) आगृ. २।२२।८; प्रपा. २२९; संप्र. ४३७–४३८ भवान् भिक्षां (भिक्षां भवान्); कृभ. ९४७ संप्रवत्.

† संस्कारप्रकाशे शौनकवचनानुवादस्य भविष्यत्त्वाभिप्रायेणायं प्रयोगो यथाकथंचित् संगमनीयः।

(१) आगृ. १।२२।९; मेधा. २।५।१ (तदाचार्याय वेदयीत०) गृह्यकारः; प्रपा. २२९; धप्र. ४१ मेधावत्; संप्र. ४३८ यीत (येत); कृभ. ९६३ मेधावत्.

यदहस्तावल्लक्षणं स्थानं चोद्यते । आसनं न भवति ।
देभा.

( २ ) तल्लब्धमाचार्याय निवेद्य तस्मिन्नहनि यावच्छिष्टं तावन्तं कालं तिष्ठेत् आसनादि न कुर्यात् ।
$ गानावृ.

**'अस्तमिते ब्रह्मौदनमनुप्रवचनीयं श्रपयित्वाऽऽचार्याय वेदयीत ॥**

( १ ) अस्तमिते ब्रह्मौदनं श्रापयति । ब्रह्मणः ओदनः ब्रह्मौदनः , तं श्रपयति ब्रह्मचारी पाकयज्ञविधानेन । अथवा ब्राह्मणानामर्थायायमोदन उच्यते । अनुप्रवचनीयमिति वाऽस्य संज्ञा भवति । तं शृतमाचार्याय वेदयीत ब्रह्मचारी ।
देभा.

( २ ) ब्रह्मस्य ओदनो ब्रह्मौदनः । ब्रह्मशब्दो ब्राह्मणवाचकः । तेन ब्राह्मणभोजनं विधास्यमानमत एव चरोर्भवति । अनुप्रवचननिमित्तम् अनुप्रवचनीयम् । पाकयज्ञविधानेन ब्रह्मचारी अनुप्रवचनीयं श्रपयित्वाऽऽचार्याय वेदयीत 'शृतः स्थालीपाकः' इति ।
‡ गानावृ.

( ३ ) अस्तमित इत्युच्यते । कस्मिन्नस्तमिते ? आदित्ये । कुत एतत् ? 'तिष्ठेदहःशेषम्' इत्युक्तत्वात् प्रसिद्धेश्च । ब्रह्मौदनम् । वक्ष्यति 'ब्राह्मणान् भोजयित्वा' इति, तेनासौ ब्रह्मौदनः । अनुप्रवचनीयः । 'सावित्रीं भो अनुब्रूहि' 'सावित्रीमन्वाह' इति च सावित्र्यनुप्रवचनं विहितम् । तन्निमित्तोऽयं स्थालीपाकः । तत्र 'तदस्य' ( पा. सू. ५।१।१०४ ) 'प्रयोजनम्' ( पा. सू. ५।१।१०९ ) इत्यधिकारे 'अनुप्रवचनादिभ्यश्छः' ( पा. सू. ५।१।१११ ) । निमित्तमपि प्रयोजनमुच्यते, यथा 'रक्षोहागमलध्वसंदेहाः प्रयोजनम्' इत्यत्राऽऽगमः प्रयोजनं व्याकरणस्येति । तं श्रपयति ब्रह्मचारी । स्थालीपाकं श्रपयित्वाऽऽचार्याय वेदयति ।
अना.

**'आचार्यः समन्वारब्धे जुहुयात्– 'सदसस्पतिमद्भुतम्' इति ॥**

( १ ) पश्चादाचार्यः समन्वारब्धे ब्रह्मचारिणि 'सदसस्पतिमद्भुतम्' इत्यनेन मन्त्रेण प्रथमामाहुतिं जुहोति ।
¶ देभा.

( २ ) ततः समन्वारब्धे ब्रह्मचारिणि इध्माधानाद्याघारान्तं कृत्वाऽनया जुहुयात् । † गानावृ.

**सावित्र्या द्वितीयम् ॥**

( १ ) सावित्री प्रथमा( ? प्रकृता ) ऋक् । तया द्वितीयां जुहोति । द्वितीयग्रहणमपार्थकम् । उपदेशादेव द्वितीया भवति । द्वितीयेत्युच्यते अधिकारार्थम् । अधिकारे सति किं प्रयोजनम् ? –
देभा.

( २ ) सावित्री 'तत्सवितुर्वरेण्यम्' इत्येषा प्रसिद्धा । द्वितीयग्रहणमुत्तरार्थम् । $ गानावृ.

**यद्यत्किंचात ऊर्ध्वमनूक्तं स्यात् ॥**

( १ ) यदि नोच्यते यद्यत्किंचात ऊर्ध्वमिति तृतीया प्रसज्येत । अतोऽधिकारः क्रियते । कथम् । अनूक्तेन सावित्र्या च एका आहुतिः स्यादिति । यद्यत् किंचात ऊर्ध्वमित्युक्तं भवति । तत्रानेकधा प्रतिपन्नाः । केचित्तावत्प्रतिमण्डलं होममिच्छन्ति । अन्ये प्रत्यनुवाकम् । अन्ये प्रतिसूक्तम् । प्रत्यृचमपरे । सर्वथा चोपपद्यते । यः शक्यते स कर्तव्यः । अस्य तु वाक्यस्य नैवायमर्थः । किं कारणम् । अनुशब्देनोदितत्वात् । यत्रानुशब्दो भवति तत्रानुप्रवचनीयं प्राप्नोति । यथा महानाम्नी सुकृतमिति व्रतानुप्रवचने प्राप्नोति । उपनिषदि च तत्र प्रत्यृचमिच्छन्ति । देभा.

---

$ अना. , प्रपा. , संप्र. गानावृवत् ।

‡ प्रपा. , संप्र. गानावृवत् ।

(१) आगृ. १।२२।१० ; मेधा. २।५१ (अनुप्रवचनीयं श्रपयेत् ) एतावदेव, गृह्यकाराः ; प्रपा. २३० ; धप्र. ४१ ( अस्तमिते ब्रह्मौदनम् ) एतावदेव ; संप्र. ४३९–४४० ; कृम. ९६३ धप्रवत् .

¶ अना. देभावत् ।

† प्रपा. गानावृवत् ।

$ अना. , प्रपा. , संप्र. गानावृवत् ।

(१) आगृ. १।२२।११–१६ ; प्रपा. २३० ; संप्र. ४४०.

(२) अत्र सावित्री अनूक्तेति कृत्वा सावित्र्या द्वितीयं जुहोति । अत ऊर्ध्वमपि महानाम्न्यादिव्रतेषु यद्यदनूक्तं तेन तेन द्वितीयं जुहोति । एतदुक्तं भवति । महानाम्न्यादिव्रतेषु श्रावणान्ते अनुप्रवचनीयहोमः कार्यः । तत्र सावित्र्याः स्थाने 'महानाम्नीभ्यः स्वाहा' 'महाव्रताय स्वाहा' 'उपनिषदे स्वाहा' इत्येवं द्वितीयं जुहोति, अन्यत्समानमिति । द्वितीयग्रहणं महानाम्न्यादिनामधेयेन होमार्थम् । इतरथा मन्त्रेण होमे क्रियमाणे प्रतिमन्त्रं स्वाहाकारः स्यात्, स च प्रदानार्थ इति कृत्वा अनेका आहुतयः स्युः, ततश्चोत्तरासां द्वितीयत्वं न स्यात् । तस्माद्द्वितीयग्रहणम् । * गानावृ.

(३) द्वितीयमिति वर्तते । अतः सावित्रीप्रवचनादूर्ध्वं यद्यदनूक्तम् अनुब्रूहीति चोदितं वा, यथाऽऽह– 'महानाम्नीर्भो अनुब्रूहीति, संमील्यानुब्रूयात्' (आश्रौ. ८।१४।१५,१६) इति, तच्च तत्र द्वितीयं भवति । तत्र होमे विप्रतिपत्तिः– यथा सावित्र्या होमस्तथाऽत्रापि महानाम्नीभिर्होम इति केचित्, अपरे 'महानाम्नीभ्यः स्वाहा' इति होममिच्छन्ति । एवं महाव्रतानुप्रवचने ['व्रतमनुयुज्यानुक्रोशिने प्रब्रूयादुत्तरमहः' (आश्रौ. ८।१४।१) इति ?] 'महाव्रताय स्वाहा' इति होमः, उपनिषदनुप्रवचने 'उपनिषदे स्वाहा' इति । ¶ अनयोस्तु पक्षान्तरस्यासंभव एव । अना.

## ऋषिभ्यस्तृतीयम् ॥

(१) तत्र संशयः– किमयं मन्त्रः, उत उपदेशः ? इति । येषां मन्त्रः तेषाम् 'ऋषिभ्यः स्वाहा' इति प्राप्नोति । येषामुपदेशः तेषां यावन्त ऋषय उक्तास्तेषां प्रत्यृषि होमः प्राप्नोति । तत्रायं मन्त्र इत्युच्यते । कथं पुनर्ज्ञायते ? तृतीयग्रहणात् । नेत्युच्यते । तृतीयग्रहणस्येदं प्रयोजनम्– द्वितीयग्रहणेऽनुवर्तमाने अयमपि द्वितीय एव स्यात् । तस्मात्तृतीयग्रहणं कर्तव्यम् । अथ ऋषिभ्यस्तृतीयमिति संख्यावचनं किमर्थम् ? तत्राप्यापातत अन्य ऋषयः । तत्रानेकपक्षतया ऋष्ययोश्चदासवानुच्यते (?) तृतीयामाहुतिमिच्छन्ति । तत्प्रबोधनम् । एवमेकेऽनुप्रवचनमिच्छन्ति । बहुधा चात्र विप्रतिपत्तिः । आगमस्त्वयं चानुप्रवचनीयो महानाम्नीषु महाव्रते उपनिषदि च इति । नान्यत्रेति । एवं ब्रुवतामृषिभ्य इति मन्त्रोऽयमिति ज्ञापितं भवति । देभा.

(२) तृतीयवचनमृषिभ्य इत्यस्य विधायकत्वं निवर्त्य मन्त्रत्वज्ञापनार्थम् । तेन 'ऋषिभ्यः स्वाहा' इति जुहोति । † गानावृ.

## सौविष्टकृतं चतुर्थम् ॥

(१) अथ संख्याविधानानि किमर्थानि ? नियमार्थानि । नियमे सति आज्यभागो निवर्तते । देभा.

(२) संख्यावचनं नियमार्थम् । चतुर्थमेव न षष्ठमिति । तेनात्राऽऽज्यभागौ न भवतः । ¶ गानावृ.

(३) ततश्च 'सदसस्पतिम्' इत्यृचा प्रथमाहुतिः । 'तत्सवितुः' इति द्वितीया, 'ऋषिभ्यः स्वाहा' इति तृतीया, स्विष्टकृच्चतुर्थी । ततः प्रायश्चित्तादिहोमशेषः । $ प्रपा. २३०

## ब्राह्मणान्भोजयित्वा वेदसमाप्तिं वाचयीत ॥

(१) तत एव ब्रह्मचारिणश्चरोः ब्राह्मणान् भोजयति । कस्मात् ? अधिकृतत्वात्, तस्य च ब्राह्मणार्थत्वात् । देभा.

(२) संस्थाजपान्तं कृत्वा ब्राह्मणान्भोजयित्वा 'वेदसमाप्तिं भवन्तो ब्रुवन्तु' इति ब्रूयात् । ते च 'वेदसमाप्तिरस्तु' इति ब्रूयुः । † गानावृ.

## [1]अत ऊर्ध्वमक्षारालवणाशी ब्रह्मचार्यधःशायी त्रिरात्रं द्वादशरात्रं संवत्सरं वा ॥

* प्रपा., संप्र. गानावृवत् ।

¶ महाव्रतोपनिषद्व्रतयोरध्येययोरारण्यकभागयोरमन्त्रत्वात् पक्षान्तरासंभव इत्यर्थः ।

† अना., प्रपा., संप्र. गानावृवत् ।

¶ अना. गानावृवत् ।

$ संप्र. प्रपावत् ।

(१) आगृ. १।२२।१७ ; प्रपा. २३० ; संप्र. ४४३.

( १ ) अत ऊर्ध्वमेते नियमा भवन्ति । अक्षारलवणाशित्वम् । ब्रह्मचारिग्रहणं आचार्यनिवृत्त्यर्थम् । कियन्तं कालमिति ? त्रिरात्रं द्वादशरात्रं संवत्सरं वेति । अत ऊर्ध्वमिति कस्मात् ? संबन्धकरणार्थम् । संबन्धे किं प्रयोजनम् ? कथमेतानि व्रतानि अत ऊर्ध्वमेव स्युः, न प्रागिति सिद्धं भवति । प्राक् भोजने अक्षारलवणाशित्वं न प्रसज्येत । भुक्तवन्तमभुक्तवन्तं वा कुमारमुपनयन्तीत्यनियमः सिद्धो भवति । देभा.

( २ ) अत ऊर्ध्वमिति कस्मात् ? पूर्वेण संबन्धकरणार्थम् । प्रयोजनमुपरिष्टाद्वक्ष्यामः । ब्रह्मचारिवचनमाचार्यनिवृत्त्यर्थम् । गानावृ.

( ३ ) अतः अनुप्रवचनीयात् ऊर्ध्वमस्यैते भवन्ति– अक्षाराशित्वमलवणभोजित्वमधःशायित्वं च । क्षारम् अम्लं लकुचादि । त्रिरात्रादयो नियमस्य कालाः । उपदेशक्रमादेव सिद्धे अत ऊर्ध्वमिति वचनं पूर्वेण सह संबन्धकरणार्थं प्राग्भोजने नियमो मा भूदिति । तेन भुक्तवत उपनयनं सिद्धं भवति । यथाहाऽऽपस्तम्बः– ' आशिषो वाचयित्वा कुमारं भोजयित्वा ' इति । ब्रह्मचारिग्रहणमाचार्यस्य मा भूदिति । ¶ अना.

[1]चरितव्रताय मेधाजननं करोति ॥

( १ ) योऽयं नियम उक्तः तस्यान्ते मेधाजननं नाम कर्म करोति । चरितव्रतायेति न वक्तव्यम् । तदपि संबन्धार्थमेव । संबन्धे सति किं प्रयोजनम् ? यत्र मेधाजननं तत्र कथं ब्रह्मचर्यं स्यादिति । यत्र ब्रह्मचर्यं तत्रानुप्रवचनीयम् । एतत्प्रयोजनम् । क्व पुनः मेधाजननं ना( मा ? )स्ति ? उत्तरत्र वक्ष्यति–कृताकृतमिति । तत्र व्रतस्यास्य कृताकृतत्वं भवति । देभा.

( २ ) चरितव्रतायेतिवचनं मेधाजननेन व्रतस्य संबन्धार्थम् । यत्रोपनयने मेधाजननमस्ति तत्रैव व्रतचर्या । यत्र व्रतचर्या तत्रैवानुप्रवचनीयम् । उपनीतपूर्वस्य मेधाजननाभावे त्रितयमपि निवर्तते । ‡ गानावृ.

[1]अनिन्दितायां दिश्येकमूलं पलाशं कुशस्तम्बं वा पलाशापचारे प्रदक्षिणमुदकुम्भेन त्रिः परिषिञ्चन्तं वाचयति– ' सुश्रवः सुश्रवा असि यथा त्वं सुश्रवः सुश्रवा अस्येवं मां सुश्रवः सौश्रवसं कुरु । यथा त्वं देवानां यज्ञस्य निधिपोऽस्येवमहं मनुष्याणां वेदस्य निधिपो भूयासम् ॥ ' इति ॥

( १ ) तत्र तिस्रो दिशः निन्दिताः– दक्षिणा प्राग्दक्षिणा प्रत्यग्दक्षिणेति । अन्याः सर्वा अनिन्दिताः । एकमूलं पलाशं त्रिशाखमित्यर्थः । परिषिञ्चति । कुशस्तम्बं वा पलाशापचारे । पलाशाभावे कुशस्तम्बं वा परिषिञ्चति । अथ पुनः पलाशग्रहणं कुर्वन्नेतत् ज्ञापयति– अनेकमूलस्याप्यभावे कुशस्तम्बं परिषिञ्चेत् । ब्रह्मचारी परिषिञ्चति । तं परिषिञ्चन्तम् आचार्यस्त्रिरेव वाचयति ' सुश्रवः ' इत्येतं मन्त्रम् । एतावदुपनयनम् । देभा.

( २ ) इदं मेधाजननम् । तिस्रो निन्दिता दिशः– दक्षिणा प्राग्दक्षिणा प्रत्यग्दक्षिणेति । अन्याः सर्वा अनिन्दिताः । तस्यां दिश्येकमूलं पलाशम्, कुशस्तम्बं वा पलाशाभावे, प्रदक्षिणमुदकुम्भेन त्रिः परिषिञ्चन्तं ब्रह्मचारिणं वाचयति ' सुश्रवः ' इति मन्त्रम् । एकमूलम् अशाखमित्यर्थः । पुनः पलाशग्रहणम् अनेकमूलस्याप्यभावे कुशस्तम्बं परिषिञ्चेदिति । $ गानावृ.

( ३ ) अनिन्दितस्यामिति छान्दसं रूपम्, यथा ' यदिन्द्राग्नी अवमस्यां पृथिव्यां मध्यमस्याम् ' इति । तिस्रो दिशो निन्दिताः– दक्षिणा प्राग्दक्षिणा प्रत्यग्दक्षिणेति । एक-

¶ प्रपा. अनागतम् ।

(१) आगृ. १।२२।१८ ; प्रपा. २३० ; संप्र. ४४३.

‡ अना., प्रपा. गानावृवत् ।

$ प्रपा. गानावृवत् ।

(१) आगृ. १।२२।१९ ; प्रपा. २३७ ; संप्र. ४४४ ( यथा त्वं सुश्रवः ... इति० ).

मूलम् अशाखाजम्। शाखाजस्य हि द्वे मूले भवतः, *पूर्वं यस्य शाखा छित्त्वा निमिता, निमितायाश्च शाखाया इदानीमपरेति( ? रमिति ) । मूलप्रदेशे शाखारहितमित्येके। पलाशापचार इति सर्वथाऽनेकमूलस्यापि पलाशस्याभाव एव कुशस्तम्बपरिग्रहार्थम्। तं ब्रह्मचारी त्रिः परिषिञ्चति। आचार्यस्त्रिर्वाचयति 'सुश्रवः सुश्रवा असि' इत्येवं मन्त्रम्। यद्यपि सुश्रवा इति पलाशस्याभिधानम्, 'देवानां ब्रह्मवादं वदतां यत्। उपाशृणोः सुश्रवा वै श्रुतोऽसि' ( तैब्रा. १।२।१।६ ) इति दर्शनात्, तथापि कुशस्तम्बेऽपि मन्त्रो भवत्येव, वचनात्, 'ऐन्द्या गार्हपत्यमुपतिष्ठते' इतिवत्। अना.

¹इत्यनुपेतपूर्वस्य ॥

( १ ) उपनयनविधानम् अनुपेतपूर्वस्य भवति। उत्तरविवक्षयेदमारभ्यते। उपेतपूर्वस्य विशेषं वक्ष्यति। देभा.

( २ ) एतदुपनयनविधानमनुपेतपूर्वस्य। उत्तरविवक्षयेदमारभ्यते। § गानावृ.

( ३ ) एवमनुपेतपूर्वस्योपनयनमुक्तम्। अना.

## कौषीतकिगृह्यसूत्रम्

वपनालंकरणे, होमः, मेखलाजिनयज्ञोपवीतधारणम्, अञ्जल्यवक्षारणपूर्वकमुपनयनम्, हृदयाभिमर्शः, व्रतादेशनम्, ब्रह्मचारिधर्मोपदेशः, समिदाधानम्, सावित्र्युपदेशः, मन्त्राचमनम्, दण्डप्रदानम्, दक्षिणादानम्, भिक्षाचरणम्, भिक्षाप्राथम्ये विकल्पः, नित्या ब्रह्मचारिधर्माः

²येनाऽऽबद्धेनोपनयेताऽऽचार्याधीनं तत् ॥ परिवाप्योपनेयः स्यात् ॥

आप्लुत्यालंकृत्य ॥

हुत्वा जघनेनाग्निं तिष्ठतः प्राङ्मुख आचार्यः प्रत्यङ्मुख इतरः ॥

तिष्ठंस्तिष्ठन्तमुपनयेत् ॥

* 'मित्रस्य चक्षुर्धरुणं बलीयस्तेजो यशस्वि स्थविरं समृद्धम्। अनाहनस्यं वसनं चरिष्णु परीदं वाज्यजिनं दधेऽहम् ॥' ॥

¹'इयं दुरुक्तात्परिबाधमाना वर्णं पवित्रं पुनती न आगात्। प्राणापानाभ्यां बलमाविशन्ती सखा देवी सुभगा मेखलेयम् ॥' इति त्रिर्मेखलां प्रदक्षिणं त्रिः परिवेष्ट्य ॥

ग्रन्थिरेकस्त्रयोऽपि वाऽपि वा पञ्च ॥

²यज्ञोपवीतं कृत्वा 'यज्ञोपवीतमसि यज्ञस्य त्वोपवीतेनोपनह्यामि' इति ॥

³अञ्जली पूरयित्वाऽथैनमाह– 'को नामासि' इति ॥

⁴'असावहं भो ३ः' इतीतरः ॥

---

* पूर्वं प्रथमं मूलमित्यर्थः। निमितेति। तस्येति शेषः।

§ प्रपा., संप्र. गानावृवत्।

(१) आगृ. १।२२।२१; प्रपा. २३९ इत्यनु ( अनु ); संप्र. ५४३ प्रपावत्.

(२) कौगृ. २।१।२५–३०.

* अत्रेदमवधेयम्– मन्त्ररूपमिदं सूत्रं बहुषु सूत्रपुस्तकेषु नास्तीत्यादर्शपुस्तके टिप्पण्यामुक्तम्। ब्लूमफील्डमहोदयेन स्वीये मन्त्रकोशेऽस्यैतत्स्थलं निर्दिष्टम्। अत्र 'इत्यजिनं धारयेत्' इतिविध्यभावात् साकाङ्क्षता। सर्वेषु गृह्यसूत्रान्तरेषु मेखलाबन्धनादूर्ध्वमजिनधारणमुक्तम्, न कुत्रापि ततः प्राक्। कौषीतकिगृह्यसंग्रहेऽपि मेखलाबन्धनाविधानादूर्ध्वमेव यज्ञोपवीतविधानात्पूर्वमयं मन्त्रः पठितः। तत्रापि मन्त्र एव केवलं पठितः, न धारणं विहितमिति वाक्यस्य साकाङ्क्षता। तस्मादस्य सूत्रस्य सत्त्वं क्रमश्च संदिह्यते।

(१) कौगृ. २।२।१–२.

(२) कौगृ. २।२।३; स्मृच. ३१ ( यज्ञोपवीतं कृत्वा० ) त्वोप ( त्वा यज्ञोप ); संत. ९३४ ( यज्ञोपवीतिनं कुर्यात् ) एतावदेव.

(३) कौगृ. २।२।४.

(४) कौगृ. २।२।५; मनु. २।१२२ ( असावहं भो इत्यात्मनो नामाऽऽदिशेत् ); मच. २।१२४ ( असावहं भोः इत्यात्मनो नामादि ब्रूयात् ).

[1] 'समानार्षेयः' इत्याचार्यः ॥

'समानार्षेयोऽहं भो ३ः' इतीतरः ॥

'ब्रह्मचारी भवान् ब्रूहि' इति ॥

'ब्रह्मचार्यहं भो ३ः' इतीतरः ॥

'भूर्भुवः स्वः' इति अस्याञ्जलावञ्जलीन्त्री-नासिच्य ॥

दक्षिणोत्तराभ्यां पाणिभ्यां पाणी संगृह्य जपति ॥

'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामुपनयाम्यसौ' इति ॥

'गणानां त्वा' इति गणकामान् ॥

'आ गन्ता मा रिषण्यत' इति योधान् ॥

महाव्याहृतिभिर्व्याधितान् ॥

[2] 'भगस्ते हस्तमग्रभीत् सविता हस्तमग्रभीत् । पूषा ते हस्तमग्रभीदर्यमा हस्तमग्रभीत् ॥ मित्रस्त्वमसि धर्मणाऽग्निराचार्यस्तवासावहं चोभौ, अग्न एतं ते ब्रह्मचारिणं परि ददामि, इन्द्रैतं ते ब्रह्मचारिणं परि ददामि, आदित्यैतं ते ब्रह्मचारिणं परि ददामि, विश्वे देवा एतं वो ब्रह्मचारिणं परि ददामि, दीर्घायुत्वाय सुप्रजास्त्वाय सुवीर्याय रायस्पोषाय सर्वेषां वेदानामाधिपत्याय सुश्लोक्याय स्वस्तये' ॥

'ऐन्द्रीमावृतमावर्त आदित्यस्याऽऽवृतमन्वावर्ते' इति दक्षिणं बाहुमन्वावृत्य ॥

दक्षिणेन प्रादेशेन दक्षिणमंसमन्ववहृत्य 'अरिष्यतस्ते हृदयस्य प्रियो भूयासम्' इति हृदयदेशमभिमृशति ॥

तूष्णीं प्रसव्यं पर्यावृत्य ॥

अथास्योर्ध्वाङ्गुलिं पाणिं हृदये निधाय जपति ॥

(१) कौगृ. २।२।६–१५.

(२) कौगृ. २।३।१–५.



[1] 'मम व्रते हृदयं ते दधामि मम चित्तमनु चित्तं ते अस्तु । मम वाचमेकमना जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यम् ॥' ‡ इति ॥

'कामस्य ब्रह्मचर्यस्यासौ' इति ॥

तेनैव मन्त्रेण तथैव पर्यावृत्य ॥

दक्षिणेन प्रादेशेन दक्षिणमंसमन्वारभ्य जपति ॥

'ब्रह्मचार्यसि, समिधमा धेहि, अपोऽशान, कर्म कुरु, मा दिवा सुषुप्थाः, वाचं यच्छाऽऽसमिदाधानात्' ॥

'एषा ते अग्ने समित्' इति अभ्यादधाति समिधं तूष्णीं वा ॥

[2] संवत्सरे सावित्रीमन्वाह ॥

त्रिरात्रे ॥

अन्वक्षं वा ॥

[3] गायत्रीं ब्राह्मणायानुब्रूयात् ॥

त्रिष्टुभं क्षत्रियाय ॥

जगतीं वैश्याय ॥

सावित्रीं त्वेव ॥

[4] उत्तरेणाग्निमुपविशतः ॥

प्राङ्मुख आचार्यः प्रत्यङ्मुख इतरः ॥

[5] 'अधीहि भो ३ः' इत्युक्त्वा ॥

[6] आचार्य ओंकारं प्रयुज्याथेतरं वाचयति– 'सावित्रीं भो अनुब्रूहि' इति ॥

‡ गृह्यसंग्रहपाठेऽयमितिकारो नास्ति, मन्त्रस्य च 'कामस्य ब्रह्मचर्यस्यासौ' इत्यन्तत्वम् । तदनुरोधेन मध्येऽयमितिकारो नोपपद्यते, नापि मन्त्रावयव इति गम्यते ।

(१) कौगृ. २।४।१–६.

(२) कौगृ. २।५।१–३.

(३) कौगृ. २।५।४–७ ; बाल. १।१४ पृ. ४९.

(४) कौगृ. २।५।८–९ ; सिन्धु. ९४५ ; संको. १२६ ; बाल. १।१४ पृ. ४९.

(५) कौगृ. २।५।१० ; सिन्धु. ९४५ (इत्युक्त्वा०) ; बाल. १।१४ पृ. ४९.

(६) कौगृ. २।५।११ ; बाल. १।१४ पृ. ४९.

'अथास्मै सावित्रीमन्वाह 'तत्सवितुर्वरेण्यम्' इत्येतां पच्छोऽर्धर्चशोऽनवानम् ॥

²'आपो नाम स्थ शिवा नाम स्थोर्जा नाम स्थाजरा नाम स्थाभया नाम स्थामृता नाम स्थ, तासां वोऽशीय सुमतौ मा धत्त' इत्येवं त्रिरप आचमय्य ॥

'स्वस्ति नो मिमीताम्' इति पञ्चर्चेन दण्डं प्रयच्छति ॥

वरो दक्षिणा ॥

प्रदक्षिणमग्निं पर्याणीय भिक्षते ग्रामम् ॥

मातरं त्वेव प्रथमाम् ॥

या वैनं न प्रत्याचक्षीत ॥

आचार्याय भैक्ष्यं निवेदयित्वाऽनुज्ञातो गुरुणा भुञ्जीत ॥

अहरहः समिदाधानं भिक्षाचरणमधःशय्या गुरुशुश्रूषेति ब्रह्मचारिणो नित्यानि ॥

(१) अत्र स्तरणाघाराज्यभागाः पाक्षिकाः । उपलेपनोल्लेखनाद्याघाराज्यभागान्तं कृत्वा महाव्याहृतिचतुष्टयं हुत्वा ततो यथागोत्रस्थिति कृतमुण्डनक्रियं कृतस्नानं यथाविभवमलंकृतमहतवाससाऽऽच्छादितं कृष्णाजिनोत्तरीयं माणवकं कृत्वा पश्चादग्नेः प्रत्यङ्मुखं स्थितं कुर्यात् । ततः आचार्यः प्राङ्मुखः स्थितः 'इयं दुरुक्तात् परिबाधमाना वर्णं पवित्रं पुनती न आगात् । प्राणापानाभ्यां बलमाविशन्ती सखा देवी सुभगा मेखलेयम् ॥' इत्यनेन मन्त्रेण मौञ्जमेखलया कटिप्रदेशं प्रदक्षिणया त्रिः परिवेष्टयति । त्रिभिरावेष्टनैर्नव गुणा भवन्ति । ग्रन्थीन् यथागोत्रं प्रवरसंख्यया कुर्यात् । मेखलामन्त्रयज्ञोपवीतमन्त्रे$ माणवकेनाप्युच्चारयितव्ये, मन्त्रलिङ्गात् । 'मित्रस्य चक्षुर्धरुणं बलीयस्तेजो यशस्वि द्रविणं समिद्धम् । अनाहनस्यं वसनं जरिष्णु परीदं वाज्यजिनं दधेऽहम् ॥' । 'यज्ञोपवीतमसि यज्ञस्य त्वोपवीतेनोप नह्यामि' इत्यनेन मन्त्रेण त्रिवृतमूर्ध्वीकृतं कार्पासमयं लोकप्रसिद्धं यज्ञोपवीतं गृहीत्वा माणवकस्य दक्षिणं बाहुं प्रवेशयित्वा शिरः प्रवेश्य वामे स्कन्धे स्थापयेत् । एवं यज्ञोपवीतीत्युच्यते । † विपरीते तु न, अप्राचीनावीतिनं कृत्वा ततो माणवकस्याऽऽत्मीयं चाञ्जलिमुदकेन पूरयित्वा 'को नामासि' इत्याचार्यो माणवकं पृच्छति । 'समानार्षेयोऽहं भोः' इति माणवकः स्वं नाम कथयति । ततः 'ब्रह्मचारी भवान्ब्रूहि' इत्याचार्यः पृच्छति । 'ब्रह्मचार्यहं भोः' इति माणवकः कथयति । एवं पृष्ट्वाऽऽख्यातवृत्त आचार्यो माणवकाञ्जलौ 'भूर्भुवः स्वः' इत्यनेन मन्त्रेणोदकाञ्जलींस्त्रीनासिच्य माणवकाञ्जलिं स्वहस्तसंपुटेन दक्षिणहस्तोत्तरेण गृहीत्वा 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यामुपनयामि देवदत्त' इति मन्त्रं माणवकनामोपलक्षितं जपेत् । अथ माणवकः समूहाधिपत्यमिच्छति ततः 'गणानां त्वा गणपतिं हवामहे' इत्येतामृचं जपेत् । 'आ गन्ता मा रिषण्यत' इत्यनेन-(१ इत्यनया) ऋचा क्षत्रियान् उपनयेत् । अथ माणवकस्त्रैवर्णिको व्याधितो भवति ततो महाव्याहृतीश्चतस्रो जपेत् । 'ॐ भूः ॐ भुवः ॐ स्वः ॐ (महर् ?) भूर्भुवः स्वः उपनयामि देवदत्त' इत्यनेन मन्त्रेण । एवं त्रयाणामपि वर्णानां मन्त्रे माणवकनाम उच्चारयितव्यम् । अपरे त्वेवं व्याचक्षते— 'देवस्य त्वा सवितुः' इत्यनेन सह समुच्चय इति । ततस्तथा गृहीताभ्यामेव हस्ताभ्यां 'भगस्ते हस्तमग्रभीत्सविता हस्तमग्रभीत् । पूषा ते हस्तमग्रभीदर्यमा हस्तमग्रभीत् ॥ मित्रस्त्वमसि धर्मणाऽग्निराचार्यस्तव देवदत्तोऽहं चोभावग्न एतं ते ब्रह्मचारिणं परिददामीन्द्रैतं ते ब्रह्मचारिणं परिददाम्यादित्यैतं ते ब्रह्मचारिणं परिददामि विश्वेदेवा एतं वो ब्रह्मचारिणं परि-

$ मन्त्रशब्दस्य नपुंसकत्वं न साधु ।

(१) कौगृ. २।५।१२; बाल. १।१४ पृ. ४९ शोऽनवानम् (शः सर्वशश्च).

(२) कौगृ. २।६।१-८.

† 'विपरीते तु प्राचीनावीती । तं कृत्वा' इति शुद्धिः कल्प्यते । अस्माद्व्याख्यानात् मूले 'यज्ञोपवीतिनम्' इति पाठमभिप्रैतीति प्रतिभाति ।

ददामि दीर्घायुत्वाय सुप्रजास्त्वाय सुवीर्याय रायस्पोषाय सर्वेषां देवानामाधिपत्याय सुश्लोक्याय स्वस्तये' इतीमं मन्त्रं माणवकनामोपलक्षितं जपित्वा ततः 'ऐन्द्रीमावृतमावर्त आदित्यस्याऽऽवृतमन्वावर्ते' इत्यनेन मन्त्रेण माणवकं प्रदक्षिणमावर्तयित्वा प्राङ्मुखं करोति। माणवकोऽपि मन्त्रमुच्चारयति। आचार्यो माणवकस्य दक्षिणकक्षान्तरे स्वं दक्षिणं हस्तं प्रवेशयित्वा 'अरिष्यतस्ते हृदयस्य प्रियो भूयासम्' इत्यनेन मन्त्रेण दक्षिणप्रादेशेन हृदयदेशमभिमृश्योदकं स्पृष्ट्वा ततस्तूष्णीमप्रदक्षिणं पर्यावृत्याऽऽत्मनोऽभिमुखं कृत्वा माणवकस्य हृदये ऊर्ध्वाङ्गुलिं पाणिं स्थापयित्वा 'मम व्रते हृदयं ते दधामि मम चित्तमनु चित्तं ते अस्तु मम वाचमेकमना जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यमा(न्व)क्षिकस्य सावित्रस्य ब्रह्मचर्यस्य देवदत्त' इति मन्त्रं माणवकोपलक्षितं जपेत्। अथ वा 'त्रैरात्रिकस्य सावित्रस्य ब्रह्मचर्यस्य', अथवा '‡ द्वादशरात्रिकस्य सावित्रस्य ब्रह्मचर्यस्य', अथवा 'सांवत्सरिकस्य' इति। उदकं स्पृष्ट्वा ततः 'ऐन्द्रीमावृतमावर्ते' इत्यनेन मन्त्रेण पूर्वोक्तेन पुनः प्रदक्षिणमावर्तयित्वा प्राङ्मुखं कृत्वा दक्षिणेन प्रादेशेन माणवकस्य दक्षिणस्कन्धप्रदेशमन्वारभ्य 'ब्रह्मचार्यसि, समिधमाधेहि, अपोऽशान, कर्म कुरु, मा दिवा सुषुप्थाः, वाचं यच्छाऽऽसमिदाधानात्' इति मन्त्रं जपित्वा तथा कथयति यथा माणवकस्य प्रतिपत्तिर्भवति। ततः 'एषा ते अग्ने समित्तया वर्धस्व चाऽऽच प्यायस्व वर्धिषीमहि च वयमा च प्यासिषीमहि स्वाहा' इत्यनेन मन्त्रेण माणवकस्तस्मिन्नेवाग्नौ समिधमादध्यादमन्त्रकं वा।

सावित्र्यनुवचनं वक्ष्यामः। अस्मिन् कर्मणि त्रयः पक्षाः— संवत्सरे सावित्रीमन्वाह, त्रिरात्रम्, अन्वक्षं वेति। तत्र तावच्छिष्टैरन्वक्षपक्ष एवाङ्गीकृतः। स उच्यते— समिदाधानान्तमुपनयनकर्म कृत्वा तस्मिन्नेव तत्रोत्तरेणाग्निं प्राङ्मुख आचार्यः प्रत्यङ्मुखो माणवको द्वावप्युपविशतः। तत आचार्यः माणवकम् 'अधीहि भोः' इति चोदयति। तत आचार्य ओंकारं कृत्वा 'सावित्रीं भो अनुब्रूहि' इति माणवकं वाचयति। तत आचार्य ओंकारं कृत्वा 'तत्सवितुर्वरेण्यम्' इत्येतामृचं पादं पादं पाठयित्वाऽर्धर्चमर्धर्चं पाठयेत्। ततः कृत्स्नामेव। मध्येऽवसानं न कर्तव्यम्। एतामेव वर्णत्रयस्यापि समनुब्रूयादिति स्मृत्यन्तरीयदर्शनम्। एतां पाठयित्वा 'आपो नाम स्थ शिवा नाम स्थोर्जा नाम स्थाभया नाम स्थामृता नाम स्थ तासां वोऽशीय सुमतौ मा धत्त' इत्यनेन मन्त्रेण अकारान्तेन स्मृत्यन्तरोक्तेन विधिना त्रिराचमयन्ति। मन्त्र आवर्तते। ततोऽग्नेः पश्चात्प्रत्यङ्मुखस्थितस्य माणवकस्य प्राङ्मुख आचार्यः स्थित एव 'स्वस्ति नो मिमीतामश्विना भगः' इति पञ्चर्चेन पालाशं बैल्वं वा दण्डं नासाग्रसंमितमर्पयति। तत आचार्याय माणवको गां ददाति। तत आचार्यो माणवकं प्रदक्षिणमग्निं पर्याणीय ततो महाव्याहृतिचतुष्टयं जुहुयात्। ततः पाक्षिकः स्विष्टकृत्। ततो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समापनीयमिति। मार्जनं गायत्र्यैव। प्राणायामत्रयं गायत्र्यैव। दशकृत्वो मार्जनम्। अघमर्षणमपि त्रिःकृत्वोऽञ्जलिप्रक्षेपः। उपस्थानमष्टादश। अग्निकार्ये मन्त्रस्थाने गायत्र्येव। माणवकोऽपि भिक्षाटनं करोति। 'भवती भिक्षां देहि' इत्यनेनाभिधानेन मातरमेव प्रथमं याचेत्। मातुरभावे या अवश्यं ददाति तां याचेत्। ततस्तावद्भ्रमति यावदशनपरिमाणं पूर्णम्। तत आगत्य 'इदं भैक्षम्' इत्याचार्यस्य कथयित्वाऽभ्यनुज्ञातो भुञ्जीत। अग्निकार्यं भिक्षाचरणं भूमौ शयनं गुरुशुश्रूषा एतानि ब्रह्मचारिणो नित्यं कर्तव्यानि। अन्यच्च क्षेत्रं हिरण्यं गामश्वं छत्रोपानहं ततो धान्यमन्नमथो शाकं गुरवे प्रीतिमान्माणवको ददाति। एतदपि शक्त्या कर्तव्यमिति। क्षत्रियस्य विशिष्टस्य माणवकस्योपनयने विशेषानाह— माञ्जिष्ठं क्षौमं वासः अहतं वा, रौरवं चर्म उत्तरीयम्, धनुर्गुणो मेखला, नैयग्रोधो ललाटसंमितो दण्डः। 'देवस्य त्वा' इति

---

‡ अयं पक्षो मूले नोपलभ्यते, स्वयमपि चाग्रे एतद्व्यतिरिक्तपक्षत्रयमेव वक्ष्यति। तेन केनचित् प्रक्षिप्तोऽयं ग्रन्थांश इति भाति। शुक्रियव्रते त्वस्ति पक्षोऽयम्।

जपित्वा 'आ गन्ता मा रिषण्यत' इति जपेत्। सावित्र्यनुवचने 'त्रिष्टुभं क्षत्रियाय' इत्युक्तम्। ततः 'आ कृष्णेन रजसा वर्तमानः' इत्येतामृचमनुब्रूयात्। विद्यमाने ग्रामे ग्रामो दक्षिणा दातव्या। अविद्यमाने ग्रामे गौर्देया। 'भिक्षां भवती देहि' इति भक्ष(?भिक्षा)-याचनाभिधानम्। शेषं समानमिति। वैश्यस्य वर्णविशिष्टस्य विशेषान् वक्ष्यामः– पीतकौशेयं वासः अहतं वा, गव्यं चर्मोत्तरीयम्, ऊर्णासूत्री मेखला, औदुम्बरः केशसंमितो दण्डः। सावित्र्यनुवचने 'जगतीं वैश्याय' इत्युक्तम्। तत्र 'अभीवृतम्' इत्यृचमनुब्रूयात्। 'भिक्षां देहि भवती' इति भिक्षाचरणाभिधानम्। अश्वो दक्षिणा, अविद्यमाने गौः। शेषं समानम्। दण्डाश्च सर्वजातीयाः सर्वप्रमाणाश्च विकल्पेन सर्वेषां भवन्ति। यदि त्रिरात्रपक्षः संवत्सरपक्षः साविम्यनुवचनेऽङ्गीक्रियते तदा तत् लौकिकस्य संस्काररहितस्याग्नेरुत्तरतः कर्तव्यमिति। कौग्रस.

(२) गायत्र्युपदेशश्चोत्तरतोऽग्नेः कार्यः, 'उत्तरेणाग्निमुपविशतः प्राङ्मुख आचार्यः प्रत्यङ्मुख इतरोऽधीहि भोः' इति शाङ्खायनसूत्रोक्तेः। यद्यपि कात्यायनेन 'अथास्मै सावित्रीमन्वाहोत्तरतोऽग्नेः प्रत्यङ्मुखाय' इत्युक्त्वा 'दक्षिणतस्तिष्ठत आसीनाय वैके' इति विकल्प उक्तः, तथापि कातीयानामेव सः। बह्वृचानां तूत्तर एव, वेदैक्यात्। सिन्धु. ९४५–९४६

[वेदैक्यादिति। वस्तुतस्तु 'गायत्र्युपदेशोऽग्नेरुत्तरतः' इत्येतच्छाखान्तरीयाणामेव, न त्वाश्वलायनानाम्, तेषां नारायणवृत्तौ प्रयोगपारिजाते जीर्णप्रयोगरत्नपुस्तके च गायत्र्युपदेशार्थमग्नेरुत्तरतो गमनस्यानुक्तेः। तथाहि– प्रथमतः अवक्षारणार्थं बटुनाऽग्नेरुत्तरदेशे गन्तव्यम्, 'समन्वारब्धे हुत्वोत्तरतोऽग्नेः प्राङ्मुख आचार्योऽवतिष्ठते पुरस्तात्प्रत्यङ्मुख इतरः' इत्याश्वलायनोक्तेः। अवक्षारणानन्तरमग्निकार्ये गुरुदक्षिणत एव स्वस्थाने उपविश्य कार्यम्, 'ततः पूर्ववदासीत गुरुः शिष्योऽपि चाऽऽत्मना। व्यवधानं परिहरन्नग्नेर्गत्वाऽन्तिकं गुरोः। आसित्वा दक्षिणे तस्य बर्हिः परिसमुह्य च॥' इति शौनकोक्तेः। आश्वलायनः 'अग्नये समिधम्' इत्यादि 'इरस्वी भूयासम्' इत्यन्तमग्निकार्यमुक्त्वाऽऽह– 'जान्वाच्योपसंगृह्य ब्रूयादधीहि भोः सावित्रीं भो अनुब्रूहि' इति। शौनकोऽपि– 'मयि मेधां मयीत्याद्यैः षड्भिर्मन्त्रैर्विभावसुम्। उपतिष्ठेद्गुरुरपि अग्नेः पश्चिमभूतले॥ आसीत प्राङ्मुखः शिष्योऽप्याचार्याभिमुखो भवेत्। भूतले दक्षिणं जानुं-(?नु) पातयित्वाऽभिवादयेत्॥' इति। जयन्तोऽप्याह– 'अथोभयोरप्यग्नेः पश्चाद्यथोपदेष्टुं शक्यते तथोपविशत्याचार्यः' इति। जीर्णप्रयोगरत्नेऽपि 'मयि मेधाम्' इत्यादिषण्मन्त्रैरग्न्युपस्थानमुक्त्वा "दक्षिणं जान्वाच्य विधिवदुपसंगृह्याऽऽचार्यं ब्रूयात्– 'अधीहि भोः" इत्याद्युक्तम्। तस्मादाश्वलायनस्योत्तरतो गायत्र्युपदेशार्थं गमनं प्रमाद एवेति। कृभ.]

(३) 'जान्वाच्योपसंगृह्य' इति सूत्रोक्तप्रकार उपदेशश्चाग्नेरुत्तरदेशे कार्यः, 'अथास्मै सावित्रीमन्वाहोत्तरतोऽग्नेः प्रत्यङ्मुखायोपविष्टायोपसन्नाय, दक्षिणतस्तिष्ठत आसीनायेत्येके' इति पारस्करोक्तेः, इत्थमेव कातीयसूत्राच्च, कल्पसूत्राधिकरणोक्तरीत्या 'षडङ्गमेके' इतिवदत्रत्यैकीयत्वोक्त्या दक्षिणत उपविष्टायोपदेशस्यानभिमतत्वसूचनाच्च, † 'उत्तरेणाग्निमुपविशतः प्राङ्मुख आचार्यः प्रत्यङ्मुख इतरः' इतिगायत्र्युपदेशपरशाङ्खायनसूत्रवाक्यशेषस्य 'अध्यासीनो दिशमेकां प्रशस्तां प्राचीमुदीचीमपराजितां वा' (ऋ. प्राति. १५।१) इत्यस्य व्याख्यावसरे 'एकः श्रोता दक्षिणतो निषीदेत्' (ऋ. प्राति. १५।२) इत्येतन्निषिध्यतेऽनेन

† शाङ्खायनगृह्यसूत्रनारायणभाष्यानुवादगर्भोऽयं ग्रन्थो व्याकुलः। तथाहि– 'अध्यासीनो' इत्यादिवाक्यं नोक्तशाङ्खायनसूत्रवाक्यशेषः, अपि तु ऋग्वेदप्रातिशाख्यीयम्। अत एव तस्य न शाङ्खायनसूत्रभाष्यव्याख्येयत्वम्। 'एकः श्रोता' इत्यादिवाक्यमपि पूर्वोक्तप्रातिशाख्यवाक्यस्यैव शेषः, न तद्व्याख्यानांशः। अत्र "...शाङ्ख्यायनसूत्रस्य व्याख्यावसरे– 'अध्यासीनो...मपराजितां वा, एकः श्रोता दक्षिणतो निषीदेत्' इत्येतन्निषिध्यतेऽनेन सूत्रेण– इति तद्भाष्याच्च" इति ग्रन्थेन भाव्यम्।

सूत्रेणेति तद्भाष्याच्च, 'उदगग्नेरुत्सृप्य प्राङाचार्य उपविशति, उदगग्रेषु दर्भेषु प्रत्यङ्माणवकः' इति छन्दोगसूत्रव्याख्यावसरे 'उत्तरत एवाग्नेः' इति तद्भाष्योक्तेश्च, 'उत्तरतोऽग्नेः प्राङ्मुख आचार्योऽवतिष्ठते पुरस्तात्प्रत्यङ्मुख इतरः' इत्याश्वलायनेनापि गायत्र्युपदेशाङ्गेऽवधारणादावुत्तरदेशोपदेशस्य प्रयोगविषयत्वेन गायत्र्युपदेशेऽपि तद्देशत्वौचित्यसूचनाच्च । होमदेशनिरूपितोत्तरदेशस्योक्तसूत्रेषु विधित्सितत्वेन होमस्य सत्यप्यङ्गत्वे तद्देशत्वमनाशङ्क्यम् । तत्तद्धोमसमयेऽग्नेः पश्चादुभयोर्दक्षिणोत्तरभावेन जयन्तादिभिरुपवेशनविधानाच्च । अस्मादेव ब्रह्मचारिणो दक्षिणदेशे स्थितिनियमाद्ब्रह्मचारिकर्तृके संस्थाजपोपस्थानादौ परिभाषाप्राप्तं नाग्नेः प्रत्यगुदग्देशावस्थानं भवति, अनियतदेशप्राप्तौ परिभाषाया नियमार्थत्वात् मानान्तरनियतदेशबाधेनापूर्वविधित्वासंभवात् । योऽपि जयन्तग्रन्थः– 'अथोभयोरप्यग्नेः पश्चाद्यथोपवेष्टुं शक्यं तथोपविशत्याचार्यस्तस्याभिमुखो ब्रह्मचारी' इति, ब्रह्मचारिणोऽग्नेः पृष्ठतः करणस्य परिभाषाविरुद्धत्वात् अनेकोदाहृतसूत्रानुरोधाच्च अग्नेः प्रत्यगुदग्देश एव पश्चादिति तत्र निर्दिष्ट इति द्रष्टव्यम् । संको. १२५–१२६

(४) शाङ्खायनः– 'गायत्रीं ब्राह्मणाया...... उत्तरेणाग्निमुपविशतः' । अन्वक्षादित्वे उच्यमानायां सावित्र्याम् अग्निं स्थापिताग्निम् उत्तरेण आचार्यमाणवकौ उपविशतः । 'प्राङ्मुख आचार्यः प्रत्यङ्मुख इतरः' । आचार्यमाणवकौ प्राङ्मुखप्रत्यङ्मुखावुपविशतः । 'अभ्यासीनो दिशमेकां प्रशस्तां प्राचीमुदीचीमपराजितां वा । एकः श्रोता दक्षिणतो निषीदेत्' (ऋ. प्राति. १५।१,२) इत्येतन्निषिध्यतेऽनेन सूत्रेण । 'अधीहि भो इत्युक्त्वाऽऽचार्यः' । अथाचार्यः 'धीहि भोः' इति माणवकमुक्त्वा वक्ष्यमाणं कुर्यात् । 'आहूतोऽध्ययनं कुर्यात्' इति स्मृतिः । बाल. १।१४ पृ. ४९

## आपस्तम्बगृह्यसूत्रम्

ब्राह्मणभोजनम्, आशीर्वाचनम्, कुमारभोजनम्, केशवपनम्, अग्निमुखम्, समिदाधानम्, अश्मन्यास्थापनम्, वासःपरिधापनम्, मेखलाजिनधारणम्, अञ्जल्यवक्षारणम्, परिदानम्, उपनयनम्, प्रश्नप्रतिवचने, प्रत्यगाशीर्वाचनम्, होमः, सावित्र्यनुवाचनम्, दण्डग्रहणम्, 'स्मृतं च मे' इत्यादिमन्त्रवाचनम्, आदित्योपस्थानम्, काम्यहस्तग्रहणम्, त्र्यहमग्निधारणं व्रतं च, समिदाधानम्, धर्मोपदेशः, वस्त्रादानम्

**'ब्राह्मणान् भोजयित्वाऽऽशिषो वाचयित्वा कुमारं भोजयित्वाऽनुवाकस्य प्रथमेन यजुषाऽपः संसृज्योष्णाः शीतास्वानीयोत्तरया शिर उनत्ति ॥**

(१) अथोपनयनविधिः । पूर्वेद्युर्नान्दीश्राद्धम् । ततः श्वोभूते ब्राह्मणान् भोजयित्वा तैराशिषो वाचयति– पुण्याहं स्वस्त्यृद्धिमिति । ततः कुमारं भोजयेत् । एवमन्तं पित्रादेः कर्म । अथाऽऽचार्यः उष्णाः शीताश्चापः संसृजति अनुवाकस्योत्तरस्य प्रथमेन यजुषा 'उष्णेन वायो' इत्येतेन । संसृष्टंश्चोष्णाः शीतास्वानयति, न शीता उष्णासु । ततस्ताभिरद्भिः कुमारस्य शिर उनत्ति क्लेदयति उत्तरयर्चा 'आप उन्दन्तु' इत्येतया । उत्तरेण यजुषेत्येव सिद्धे अनुवाकस्य प्रथमेन यजुषेत्युक्तं संज्ञाकरणार्थम् । तेन '‡ उष्णेन वायवुदकेनेत्येधः' इत्यत्रानुवाकस्य ग्रहणं भवति । अन्यथा संशयः स्यात्– अनुवाको मन्त्रा वेति । उष्णाः शीतास्वानीयेत्येव सिद्धे संसृज्येतिवचनं सर्वार्थत्वप्रदर्शनार्थम् । आरमनश्च नापितस्य च या उन्दनार्थास्ताः संसृजति । तथान्येषां व्यक्तम्– "नापितं शिष्यात्– 'शीतोष्णाभिरद्भि-

‡ इदं वाक्यं श्रौत-गृह्य-धर्मसूत्रेष्वभावात् आपस्तम्बमन्त्रपाठीयं स्यात् ।

(१) आपगृ. १०।५; बाल. १।१२ पृ. ३५.

रवयं कुर्वाणोऽक्षण्वन् कुशलीकुरु" (आगृ. १।१७।१६) इति। अनाकुला.

(२) ब्राह्मणान् भोजयित्वेत्यनेन यच्छ्राद्धं धर्मशास्त्रे 'शुचीन् मन्त्रवतः सर्वकृत्येषु भोजयेत्' (आध. २।१५।९) इति विहितम्, यदेव नान्दीश्राद्धमभ्युदयश्राद्धमिति प्रसिद्धम्, तदेवोच्यते। तच्च स्मृत्यन्तरप्रसिद्धविधिना कर्तव्यम्। तस्य त्विह पुनः पाठः पाठक्रमेणानुष्ठानार्थः। अन्यथा पदार्थानां बद्धक्रमत्वाद्विवाहादिष्विवान्त एव स्यात्। आशीर्वचनेऽपि धर्मशास्त्रविहितेऽयमेव न्यायः। आशीर्वचनविधिश्च भाष्योक्तः। केचित्— पूर्वेद्युर्नान्दीश्राद्धम्, आचारात् स्मृत्यन्तराच्च। श्वोभूते च ब्राह्मणानां भोजनं भुक्तवद्भिरेवाऽऽशिषां वाचनार्थम्। सर्वकर्मणां चान्ते 'शुचीन् मन्त्रवतः सर्वकृत्येषु भोजयेत्' इति वचनादिति। अत्र च कुमारस्य स्वभोजनात्प्राक् 'यज्ञोपवीतं परमं पवित्रम्' इत्यादिमन्त्रेण यज्ञोपवीतधारणम्, 'भोजन आचमने स्वाध्याये च यज्ञोपवीती स्यात्' (आध. १।१५।१) इति धर्मशास्त्रवचनात्। केचित्— समिदाधानात्प्रागेवेति। कुमारभोजनं च विना क्षारलवणादिभिः। आद्यन्तयोश्च द्विराचमनम्। केचित्— एवमन्तं मातापितरौ कुरुतः, अत ऊर्ध्वमाचार्य इति। अनुवाकस्य प्रथमेन यजुषा 'उष्णेन वायो' इत्यनेन अपः उष्णाः शीताश्च संसृजति। संसृजंश्चोष्णाः शीतास्वानयति, न त्वनियमेन। अत्र चानुवाकग्रहणं गृह्यमन्त्राः समाम्नाता एव, न कल्पसूत्रस्था इति ज्ञापनार्थम्। तत्प्रयोजनं चैते ब्रह्मयज्ञादिष्वध्येतव्या इत्युक्तम्। ततस्ताभिरद्भिः 'आप उन्दन्तु' इत्येतया कुमारस्य शिर उनत्ति प्रागारम्य प्रदक्षिणमुनत्ति क्लेदयति। ताद.

**'त्रींस्त्रीन् दर्भानन्तर्धायोत्तराभिश्चतसृभिः प्रतिमन्त्रं प्रतिदिशं प्रवपति ॥**

---

(१) आपगृ. १०।६; सिन्धु. ९२१ (त्रींस्त्रीन्... मन्त्रं०); बाल. १।१२ पृ. ३३ सिन्धुवत्: १।१२ पृ. ३४ (त्रींस्त्रीन् दर्भानन्तर्धाय०), १।१२ पृ. ३५.

(१) प्रवपति प्रथमं वपति वपनं प्रारभते इत्यर्थः। तेन पूर्वं मन्त्रवद्वपनं करोत्याचार्यः, पश्चान्नापित इत्युक्तं भवति। तत्रायं प्रयोगः— कुमारस्य शिरसि प्राच्यां दिशि त्रीन् दर्भानन्तर्धाय 'येनावपत्' इत्येतया प्रच्छिनत्ति क्षुरेण। असावित्यस्य स्थाने तस्य नाम प्रथमया विभक्त्या गृह्णाति, यथा 'असावयं यज्ञदत्तशर्मा'। एवं सर्वत्रादसः प्रयोगे नाम निर्देष्टव्यम्। प्रच्छिद्याऽऽनडुहे शकृत्पिण्डे यवमति केशान् प्रक्षिपति। अथाप उपस्पृश्य तथैव दक्षिणस्यां दिशि 'येन पूषा' इति, प्रतीच्यां 'येन भूयः' इति, उदीच्यां 'येन पूषा' इति। अत्र संबुद्धया नामग्रहणं 'तेन ते वपामि यज्ञदत्तशर्मन्नायुषा' इति। अनाकुला.

(२) ततः 'येनावपत्' इत्यादिभिश्चतसृभिः प्रतिमन्त्रं प्रतिदिशं त्रींस्त्रीन् दर्भानन्तर्धाय केशान् प्रवपति। प्रशब्दात् कुशलीकरणमप्याचार्यस्यैव। तत्र प्रथमे मन्त्रे असावित्यस्य स्थाने विष्णुशर्मेति कुमारस्य नामग्रहणम्। चतुर्थे तु संबुद्धया। ताद.

(३) आपस्तम्बानां चूडाकर्मणि शिखास्थापनमुक्तम् —तत्रैकार्षेयस्यैका द्व्यार्षेयस्य द्वे इत्यादि। तासां यावज्जीवं धारणमुपनयने वपनं वेति संशये मध्यशिखावर्जमन्यासां वपनम्, 'प्रतिमन्त्रं प्रतिदिशं वपति' इति सूत्रात्, 'रिक्तो वा एषः' इति वचनात्, 'विशिखः' इति स्मृतेः, 'सत्रेषु वचनाद्वपनं शिखायाः' (आध. १।१०।९) इत्यत्रैकवचनाच्च। अतो मध्यशिखास्थापनं युक्तमिति। केचित्तु— अत्र सूत्रतात्पर्यं त्वेवम्— चौले स्थापितानां शिखानां यावज्जीवं स्थापनमेव, चौले 'यथर्षि शिखा निदधाति' इत्युपदेशात्। उपनयने तु 'प्रतिदिशं वपति' इति धर्मोपदेशः, सौकर्यात्। वपनं तु चौलवदेवेत्याहुः।

अन्ये तु— आपस्तम्बानां चूडाकर्मणि शिखास्थापनमेकार्षेयस्यैका द्व्यार्षेयस्य द्वे इत्याद्युक्तम्, तासां च संस्कार्यत्वम्, 'शिखा निदधाति' इति द्वितीयासंयोगात्। अनुपयुक्तस्य संस्कारासंभवात्, 'विशिखः' इत्यादिनाऽविशेषात् सर्वासामेव कर्मण्युपयोगो वाच्य इति सर्वासां

कर्माङ्गत्वम् । तत्रैकस्या एव कर्माङ्गत्वकल्पने वैरूप्यं स्यात् । गोदानादौ तु वचनादेव सर्वशिखावपनम् । एवं सत्रेऽपि । तथा च वचनेन विनाऽन्यत्र वपनं न भवति । उपनयने तु 'प्रतिमन्त्रम्' इति सूत्रमवष्टभ्य सर्वशिखावपनं 'विशिखः' 'रिक्तो वै' इत्यादिवचनान्यथानुपपत्त्या मध्यमशिखास्थापनं च कैश्चिदुच्यते । तत्र 'प्रतिमन्त्रम्' इति सूत्रस्य चौलेऽपि विद्यमानत्वात्, चौलस्य च पूर्वभावित्वात्, तत्र च शिखावर्जमेवानेन सूत्रेण वपनं विधीयते इत्यर्थस्य निर्णीतत्वात् तद्वदेवोपनयनादौ प्राप्नोति । इति शिखावपनमुपनयने नैव भवतीति सिद्धान्तः । सुदर्शनभाष्यमप्येवं समञ्जसम् । हिरण्यकेशिसूत्रभाष्ये तु स्पष्ट एवायमर्थ उक्त इति दिगित्याहुः ।

वस्तुतस्तु उपनयने आपस्तम्बेन 'उत्तराभिश्चतसृभिः प्रतिमन्त्रं प्रतिदिशं वपति' इत्युक्तं तस्यायं भावः सुदर्शनाभिमतः– उत्तराभिश्चतसृभिः 'येनावपत्' इत्यादिभिः प्रतिमन्त्रं शिखातः प्रतिदिशं प्रवपति । प्रशब्दात् कुशलीकरणमाचार्य एव करोतीत्यर्थः । यत्र यत्र समावर्तनादौ वपनोपदेशस्तत्र सर्वत्र शिखावर्जितमेव वपनम्, चौले 'यथर्षि शिखा निदधाति यथा वैषां कुलधर्मः स्यादपां संसर्जनाद्या केशनिधानात् समानम्' इत्युक्तत्वात् । तथा च 'यथर्षि शिखा निदधाति' 'केशान् प्रवपति' इति चौले निर्णीतत्वात् 'रिक्तो वै' इति श्रुत्या शिखावपनप्रतिषेधाच्च न शिखावपनमुपनयने । यत्तु 'सत्रेषु तु वचनाद्वपनं शिखायाः' इत्यत्रैकवचनाच्चौले स्थापितशिखानां मध्यशिखावर्जमुपनयने वपनं युक्तम्, सुदर्शनेन लिखितत्वादिति, तन्न, गोदाने शिखावर्जितसर्वकेशवपनमिति पक्षे यथर्षिशिखावर्जितसर्वकेशवपनम्, 'रिक्तो वै' इति श्रुत्या शिखावपनप्रतिषेधादित्यस्य सुदर्शनाचार्यैरुक्तत्वात् । तथा चैकवचनमविवक्षितं 'ग्रहं संमार्ष्टि' इतिवदिति बोध्यम् । यदपि येषां मते तद्विवक्षितं तेषां यथर्षिस्थापितानां शिखानां मध्ये एकस्या एव वपनमस्तु सत्रे, 'विशिखः' इति निषेधाच्चेति, तदपि न, यतो यत्र वचनाद्वपनं तत्र नायं निषेधः, अन्यथा सत्रिरण्डाप्रायश्चित्तिच्छन्दोगयत्यादीनामपि शिखाधारणं स्यात् । तस्मात् चौले स्थापितानां शिखानां मध्यशिखावर्जमुपनयने वपनमिति सर्वथा न युक्तमिति दिगिति बोध्यम् ।

तदयं निर्गलितोऽर्थः– आपस्तम्बानामुपनयने चूडाकर्मस्थापितशिखावर्जमुक्तविधिना वपनमिति सुदर्शनभाष्यसंमतोऽर्थः । न च 'उत्तराभिः' इत्यादिसूत्रस्थस्य 'प्रतिदिशम्' इति पदस्य स्वरसाद्दिक्स्थकेशान्तःपातिमध्यमेतरशिखावपनमाभासमानम् 'अप्रतिषिद्धमनुमतम्' इतिन्यायेन सुदर्शनसंमतमिति वाच्यम्, चूडाकर्मस्थापितशिखानामविशेषेण पुरुषार्थताया बन्धनाश्रयतया कर्मार्थताया वाऽवगतत्वेन 'प्रतिदिशं प्रवपति' इत्यस्य बाधप्रसङ्गाभावेन चोक्तभानायोगात्, आर्थिककुशलीकरणपरतया प्रशब्दं व्याकुर्वतां भाष्यकृतां स्पष्टमेवात्रानुमतेरवगमाच्च । यदि हि मध्येतरशिखावपनमनुमन्येयुराचार्याः तर्हि प्रशब्दमेतत्परतयैव व्याकुर्युः । न हि विधिविषयशिखानामन्तरेण वचनं युज्यते वपनम् । प्रतिदिशशब्दस्य तु मन्त्रविधानार्थस्य नास्ति तत्र सामर्थ्यमित्युक्तमेव । किंच, समावर्तने 'अपां संसर्जनाद्या केशनिधानात्समानम्' इति सूत्रे सर्वमुपनयनेन समानमिति व्याकुर्वद्भिः स्पष्टमेव तत्प्रतिषिद्धम्, उपनयने मध्यमेतरशिखानां वपने समावर्तने तासामभावेनोपनयनसाम्येन वपनासंभवात् । इति नोपनयने शिखावपनं भाष्यकृत्संमतम् । येऽपि गोदाने 'रिक्तो वा एषः' इति श्रुतिमवष्टभ्य शिखानां वपनं नेच्छन्ति तेऽपि सर्वासामेव नेच्छन्ति, तन्मते गोदानशब्दप्रवृत्तिनिमित्ततया यथर्षिशिखेतरकेशवपनस्य भाष्यकृद्भिरभिधानात् । हिरण्यकेशिनां गोदाने 'सशिखं वापयते' इति 'शिखामत्रावशिनष्टि' इति च सूत्रं 'सह शिखाभिः, शिखामेकां मध्यममात्राम्' इति व्याचक्षाणैर्मातृदत्तैरप्येष एवार्थः स्वीकृत इति । अथ भाष्यकृतोऽननुरुध्य प्रवपतीति प्रशब्दस्य शिखासहितवपनमर्थः, तत्र च 'रिक्तो वा एषोऽनपिहितः' इति श्रुतिबलात् 'माऽस्याऽऽयुः प्रमोषीः' इति मन्त्रलिङ्गबलाच्च मध्यमशिखास्थापनमित्युच्यते, तदा सत्रवदेका-

षेयस्योपनयने विशिखतापत्तिरिति दिक् । एवं सिद्धे शिखावर्जवपने उपनीत्या सह चौलपक्षे जातवपनस्योपनयनाङ्गवपनं न भवति, अर्थलोपात् । अत एव 'पर्वणि सोमाधाने वा कृतवपनस्य पर्वणि यजनीये वा दीक्षायां न वपनम्' इति सौमिकवपने रामाण्डारः । कात्यायनीयं 'खातलूनच्छिन्नावहतपिष्टदुग्धदग्धेषु यजुःक्रियासंभवात्' (काश्रौ. १।२५६) इति सूत्रं 'खाते यूपावटे, लूने बर्हिषि, छिन्ने यूपे, अवहतेषु व्रीहिषु, पिष्टेषु तण्डुलेषु, दुग्धे पयसि, दग्धे महावीरे, एतेषु यजुष्क्रिया न संभवति । कुत एतत्? द्वाराभावात् । क्रियाद्वारको हि मन्त्र इति । एतच्चासंभवविषयमेव द्रष्टव्यम्' इति ग्रन्थेन व्याकुर्वन् कर्कोऽप्यत्रार्थेऽनुकूलतां धत्त इति ध्येयम् ।

उपेन्द्रस्तु 'छिन्ने लूने तथा पिष्टे सांनाय्ये मार्तिके तथा । पश्चान्मन्त्राः प्रयोक्तव्या मन्त्रा यज्ञार्थसाधकाः ॥' इति भरद्वाजवचनादुक्तविषये वपनाख्यं संस्कारमाह । तस्य च पूर्वोक्तकात्यायनसूत्रशेषम् 'असंभवात्' इति 'लोकनिष्पन्ने गृहीते यजुःक्रिया भवति यजुर्युक्तं क्रियामात्रं भवति, तावन्मात्रस्यासिद्धत्वात्, लौकिकस्य क्रियामात्रस्य सिद्धत्वात्' इति ग्रन्थेन व्याकुर्वन् देवयाज्ञिकः संमतिमादधाति इति सर्वमनवद्यम् ।

बाल. १।१२ पृ. ३४–३७

**'वपन्तमुत्तरयाऽनुमन्त्रयते दक्षिणतो माता ब्रह्मचारी वा ॥**

**आनडुहे शकृत्पिण्डे यवानिधाय तस्मिन् केशानुपयम्योत्तरयोदुम्बरमूले दर्भस्तम्बे वा निदधाति ॥**

(१) एवमाचार्येण प्रतिदिशं प्रवपने कृते नापितस्तस्य केशान् वपति संसृष्टाभिरेवाद्भिरबर्थं कुर्वाणः । तं नापितं वपन्तमुत्तरयर्चा 'यत्क्षुरेण' इत्येतयाऽनुमन्त्रयत आचार्यः ।

अथ कुमारस्य माता ब्रह्मचारी वा कश्चित् तस्य दक्षिणत उपविश्य कस्मिंश्चित् पात्रे आनडुहं शकृत्पिण्डं कृत्वा यवांश्च तस्मिन् पिण्डे निधाय तस्मिन् केशानुपयच्छति उपगृह्णाति यथा भूमौ न पतन्ति तथा । सर्वानुपयम्य ततस्तान् केशानुदुम्बरस्य वृक्षस्य मूले दर्भस्तम्बे वा निदधाति उत्तरयर्चा 'उप्त्वाय केशान्' इत्येतया । यदि माता तामन्यो मन्त्रं वाचयति । अनाकुला.

(२) दक्षिणत उपविश्य कुमारस्य माता ब्रह्मचारी वा कश्चित् 'यत् क्षुरेण' इत्येतया वपन्तमाचार्यमनुमन्त्रयते । कस्मादेवं सूत्रच्छेदः? उच्यते । 'अस्य कुमारस्याऽऽयुर्मा प्रमोषीः' इति मध्यमपुरुषलिङ्गकेऽनुमन्त्रणे वपनव्यापृताचार्यकर्तृकत्वविरोधात्, मातृब्रह्मचारिव्यतिरिक्तस्य प्रकृतस्याभावात् ।

¶ उपनयनस्य प्रकृतत्वान्माता ब्रह्मचारी वा 'उप्त्वाय केशान्' इत्येतया 'आनडुहे शकृत्पिण्डे' इत्यादि यथोपदेशं करोति । केचित्– आचार्यः पूर्वं वपनमारभते । ततो नापितः संसृष्टाभिरेवाद्भिरबर्थं कुर्वन् केशान् प्रवपति । तं च वपन्तमुत्तरया आचार्योऽनुमन्त्रयते । दक्षिणतो मातेत्युक्तार्थमेवेति । तन्न, एतद्वपनं नापितः समापयतीत्यत्र वचनाभावात्, तदकल्पनायां चानुपपत्त्य-

---

(१) आपगृ. १०।७–९.

¶ अत्र 'उपनयनस्य' इति पदं न संगच्छते, पूर्वसूत्रे मातृब्रह्मचारिणोरुक्तत्वेन तयोः प्रकृतत्वस्यैव तस्यास्तस्य वोपयमननिधानयोः कर्तृत्वे हेतुत्वस्य न्याय्यत्वेन उपनयनप्रकृतत्वस्य तत्र हेतुत्वानुपपत्तेः । इदमप्यत्रावधेयम्– सुदर्शनाचार्य उपनयने वपनांशे उपनयनविकृत्योश्चौलसमावर्तनयोश्च नापितकर्तृकं वपनं नेच्छति । चौलविकृतौ गोदाने तु 'वापयते' इतिणिजन्तप्रयोगबलात् नापितकर्तृकमपि वपनमिच्छतीति प्रतीयते । सर्वेषु गृह्यसूत्रेषूपनयने औत्सर्गिकं नापितकर्तृकत्वं वपनस्य प्रतीयते । आधुनिक्यां याज्ञिकशिरोमणिमहादेवसोमयाजिप्रणीतापस्तम्बीयसंस्काररत्नमालायामपि चौलोपनयनगोदानसमावर्तनेषु आचार्यादिप्रारब्धस्य वपनस्य नापितकर्तृकं समापनमुक्तमिति शिष्टाचारोऽप्यत्रत्वे तादृश एव स्यादिति प्रतीयते । अनुमन्त्रणं तु तेन वपत आचार्यस्यैव मातृब्रह्मचार्यन्यतरकर्तृकं वदता सुदर्शनाचार्योऽनुसृत इति ।

भावात्, प्रशब्दस्य निपातस्य प्रमाणान्तरावगतार्थद्योतकत्वात्, उक्तसूत्रभेदेन स्ववाक्योक्तस्यैव मात्रादेरनुमन्त्रणकर्तृत्वोपपत्तेश्च । ताद.

**स्नातमग्नेरुपसमाधानाद्याज्यभागान्ते पालाशीं समिधमुत्तरयाऽऽधाप्योत्तरेणाग्निं दक्षिणेन पदाऽश्मानमास्थापयति– 'आतिष्ठ' इति ॥**

(१) स्नातं कुमारं शुचिवाससं बद्धशिखं यज्ञोपवीतमासञ्जति 'यज्ञोपवीतं परमं पवित्रम्' इति । 'ततस्तं यज्ञोपवीतिनं देवयजनमुदानयति' (बौगृ. २।५।८) इति बौधायनः । तस्य सर्वस्योपलक्षणं स्नातवचनम् । ततोऽग्नेरुपसमाधानादि तन्त्रं प्रतिपद्यत आचार्यः । विवाहवदग्न्युत्पत्तिः । शम्याः परिध्यर्थे । सकृत् पात्रप्रयोगः । वासोमेखलादीनामपि सह सादनम् । तत आज्यभागान्ते कुमारं पालाशीं समिधमाधापयति उत्तरयर्चा 'आयुर्दा देव' इत्येतया । कुमारो मन्त्रेण समिधमादधाति । तमाचार्यः प्रयुङ्क्ते मन्त्रं च वाचयति, समिधं चाऽऽधापयति । देवताया अभिधेयत्वान्न मन्त्रलिङ्गविरोधः । अन्ये त्वाचार्यस्यैव मन्त्रप्रयोगमिच्छन्ति । आधाप्य समिधमुत्तरेणाग्निम् अश्मानं प्रतिष्ठितमनेनाऽऽस्थापयति दक्षिणेन पदा 'आतिष्ठेमम्' इति मन्त्रेण । अयं मन्त्र आचार्यस्यैव, कुमारस्याभिधेयत्वात् । तेनाऽऽचार्यो मन्त्रमुक्त्वा दक्षिणं पादं हस्ताभ्यां गृहीत्वाऽश्मनि निधापयति । अनाकुला.

(२) अथाग्नेरुपसमाधानादि तन्त्रं प्रतिपद्यते । पात्रासादनकाले अश्मवासोमेखलाजिनदण्डकुशकूर्चांश्च सहैव सादयति । केचित्– दर्व्यादीन्यपि सहैवेति । आज्यभागान्ते कृते स्नातं कुमारम् 'आयुर्दा देव' इत्येतया पालाशीं समिधं हस्ते गृहीत्वाऽऽधापयति । मन्त्रान्ते चाऽऽधेहीति ब्रूयात् । आधापनमन्त्रश्चायम् । केचित्– आधानमन्त्रं वाचयीताऽऽचार्य इति । तेषां 'जरसे नयेमम्' इति मन्त्रलिङ्गविरोधः । अथाऽऽधापनार्थे मन्त्रे अश्मास्थापनमन्त्रवत् कुमाराभिधानार्थमुच्चारणं स्यात्, न देवताभिधानार्थम्, सकृदुच्चरितस्योभयाभिधानाशक्तेरिति चेत्, न, 'घृतपृष्ठो अग्ने' इतीह देवताया एवाभिधेयत्वात् । अत एवोक्तं 'मन्त्रमुक्त्वाऽऽधेहि जुहुधीति ब्रूयात्' इति । शेषं व्यक्तम् । ताद.

**¹वासः सद्यःकृत्तोतमुत्तराभ्यामभिमन्त्र्योत्तराभिस्तिसृभिः परिधाप्य परिहितमुत्तरयाऽनुमन्त्रयते ॥**

(१) एकस्मिन्नेवाहनि तन्तुक्रिया वयनक्रिया च यस्य तत् सद्यःकृत्तोतम् । एवंभूतं वास उत्तराभ्याम् ऋग्भ्यां 'रेवती त्वा' इत्येताभ्यां अभिमन्त्रयेत । ततस्तदुत्तराभिस्तिसृभिः 'या अकृन्तन्' इत्येताभिः परिधापयति । आचार्यस्यैव मन्त्राः । 'वचनादेकम्' (आपप. १।४७) इति तिसृणामन्ते परिधापनम् । ततः तं परिहितवन्तं कुमारम् आचार्यः उत्तरया 'परीदं वासः' इत्येतया अनुमन्त्रयते । अनाकुला.

(२) वासः यत् शाण्यादि धर्मशास्त्रे विहितं तत् सद्यःकृत्तोतं सद्य एव छिन्नोतम्, नान्यस्मिन्नहनि प्रशस्तेऽपि । $ ताद.

(३) उपनयने प्रथमतः कौपीनं धार्यम्, ततोऽहतेन वाससा परिधापनीयम्, उत्तरीयं च कृष्णाजिनमिति व्यवस्था । न च 'वासः ...' इत्यापस्तम्बवचनात् परिहितवस्त्रपुच्छेनैवाऽऽच्छादनीयमिति मन्तव्यम्, 'वासश्चतुर्थीमुत्तरयाऽऽदत्तेऽन्यत्परिधाप्य' (आपगृ. ११।२४) इति वचनाच्चतुर्थदिनेऽपि विनैव कौपीनं कटिवेष्टितवस्त्रैकदेशेनाऽऽच्छादनप्रसङ्गात् । तस्मात्तद्वचनं कौपीनादुपरि मन्त्रतो वेष्टनीयमित्येवंपरम् । मुक्ता. ९४

(४) परिवीय परितो वेष्टयित्वेत्यर्थः । न कौपीनरूपेणेत्यर्थः । आन. १५६

---

$ शेषं अनाकुलानुवादः ।

(१) आपगृ. १०।१० ; मुक्ता. ९४ (परिहितमुत्तरयाऽनुमन्त्रयते० ) ; आन. १५६ ( वासः सद्यःकृत्तोतमुत्तराभ्यां परिवीय ) एतावदेव.

**'मौञ्जीं मेखलां त्रिवृतां त्रिः प्रदक्षिणमुत्तराभ्यां परिवीयाजिनमुत्तरमुत्तरया ॥**

( १ ) अथ मेखलामुत्तराभ्यामृग्भ्याम् 'इयं दुरुक्तात्' इत्येताभ्यां त्रिः प्रदक्षिणं परिव्ययति कुमारम् । स्वयमेव मन्त्रमुक्त्वा तं वाचयत्याचार्यः, मन्त्रलिङ्गात् । त्रिवृत् मेखला मौञ्जी मुञ्जतृणैः कल्पिता । त्रिवृत् त्रिगुणा । त्रिवृतामिति छान्दसो दीर्घपाठः । ततोऽजिनमुत्तरं वासः करोति उत्तरयर्चा 'मित्रस्य चक्षुः' इत्येतया स्वयमेव मन्त्रमुक्त्वा । सामयाचारिकेषु वर्णविशिष्टा मेखलाविशेषाश्चोदिताः । इदं तु सर्ववर्णानां मौञ्जीप्राप्त्यर्थं वचनम् । अजिनविशेषास्तु सामयाचारिका इहापि प्रत्येतव्याः 'कृष्णं ब्राह्मणस्य' इत्यादयः । † अनाकुला.

( २ ) त्रिवृतामिति च 'शक्तिविषये दक्षिणावृत्तानाम् । ज्या राजन्यस्य' (आध. १।२।३३-३४) इत्यादीनां प्रदर्शनार्थम् । ‡ ताद.

**'उत्तरेणाग्निं दर्भान् संस्तीर्य तेष्वेनमुत्तरयाऽवस्थाप्योदकाञ्जलिमस्मा अञ्जलावानीयोत्तरया त्रिः प्रोक्ष्योत्तरैर्दक्षिणे हस्ते गृहीत्वोत्तरैर्देवताभ्यः परिदायोत्तरेण यजुषोपनीय 'सुप्रजाः' इति दक्षिणे कर्णे जपति ॥**

( १ ) अथाऽऽचार्यः उत्तरेणाग्निं दर्भान्संस्तीर्य तेष्वेनं कुमारम् उत्तरया 'आगन्त्रा समगन्महि' इत्येतयाऽवस्थापयति । कुमारस्य मन्त्रः, आचार्यो वाचयति । अवस्थाप्य स्वयं च पश्चात् भूमाववस्थाय स्वमञ्जलिमुदकेन पूरयित्वा तमञ्जलिमस्मै कुमाराय प्रतिमुखं दर्भेष्ववस्थिताय प्रोक्षणार्थमानयति तस्याञ्जलौ । अस्मा इति चतुर्थीनिर्देशात् कुमारार्थोऽयमुदकाञ्जलिः । तेन प्रोक्षणस्य कुमारः कर्ता भवति । आनीय ततः प्रोक्षणं प्रयोजयत्याचार्यः उत्तरयर्चा 'समुद्रादूर्मिः' इत्येतया । कुमारस्य मन्त्रः, आचार्यो वाचयति । त्रिः प्रोक्षयति सकृन्मन्त्रेण द्विस्तूष्णीम् । सव्येन धारणमुदकस्य, दक्षिणेन प्रोक्षणम् । प्रोक्ष्येत्यत्र णिचो लोपो द्रष्टव्यः । अथ कुमारस्य हस्तं गृह्णाति उत्तरैर्दशभिर्मन्त्रैः 'अग्निष्टे हस्तमग्रभीत्' इत्यादिभिः । प्रतिमन्त्रं ग्रहणावृत्तिः । तत उत्तरैरेकादशभिः 'अग्नये त्वा परिददामि' इत्यादिभिः तं देवताभ्यः परिददाति । सर्वेष्वसौशब्देषु नामग्रहणं संबुद्ध्या । परिदाय तमुत्तरेण यजुषा 'देवस्य त्वा सवितुः' इत्येतेन उपनयते विद्यानुष्ठानार्थमाचार्यः स्वकुलं प्रापयतीत्यर्थः । यजुरुच्चारणमेव तत्र व्यापारः, नान्यः कश्चित् । नामग्रहणं च संबुद्ध्या । केचित्— असावित्यन्तोदात्तस्य पाठात् आचार्यस्य नाम प्रथमया निर्देश्यं मन्यन्ते । एतत्संबन्धात् समस्तमेव कर्मोपनयनम्, यथा पशुबन्ध इति । उपनीय 'सुप्रजाः' इति दक्षिणे कर्णे जपति । 'सुपोषः पोषैः' इत्येवमन्तो जपः । अनाकुला.

( २ ) उत्तरया 'आगन्त्रा समगन्महि' इत्येतया । अस्मा इति चतुर्थी षष्ठ्यर्थे । उत्तरया 'समुद्रादूर्मिः' इत्येतया त्रिः प्रोक्षति सकृन्मन्त्रेण द्विस्तूष्णीम् । उत्तरैः 'अग्निष्टे हस्तमग्रभीत्' इत्यादिभिर्दशभिर्मन्त्रैः । सर्वेषां चान्ते सकृद्धस्तग्रहणम् । उत्तरैः 'अग्नये त्वा परिददामि' इत्येकादशभिः प्रतिमन्त्रं देवताभ्यो मन्त्रलिङ्गप्रतीताभ्यः परिददाति रक्षणार्थम् । ततश्च यदि सकृत्परिदानं स्यात् तदा विध्यपराधात् सर्वप्रायश्चित्तं होतव्यम् । असौशब्देषु च सर्वेषु संबुद्ध्या नामग्रहणम् । उत्तरेण यजुषा 'देवस्य त्वा सवितुः' इत्यनेन उपनयते आत्मनः समीपं नयति । नामग्रहणं च संबुद्ध्यैव । केचित्— कुमारः स्वाञ्जलावाचार्येणाऽऽनीतमुदकं सव्ये हस्ते धारयन् दक्षिणेन हस्तेनाऽऽत्मानं त्रिः प्रोक्षति, आचार्यस्तु प्रोक्षयति, णिचश्च लोपो द्रष्टव्यः, हस्तग्रहणं च प्रतिमन्त्रमित्यनेककल्पनासापेक्षं व्याचक्षते । ताद.

---

† प्रपा. अनाकुलागतम् ।

‡ शेषम् अनाकुलागतम् ।

(१) आपगृ. १०।११; प्रपा. २२९ (अथैतां मौञ्जीं मेखलां त्रिवृतां त्रिःप्रदक्षिणमुत्तराभ्यां परिवीयति); आन. १५६ (मौञ्जीं मेखलां त्रिवृतां त्रिः प्रदक्षिणम्) एतावदेव.

(२) आपगृ. १०।१२.

[१] '**ब्रह्मचर्यमागाम्' इति कुमार आह ॥**

'सवित्रा प्रसूतः' इत्येवमन्तो मन्त्रः । आहेति उच्चैःप्रयोगार्थम् । अनाकुला.

**प्रष्टं परस्य प्रतिवचनं कुमारस्य ॥**

'को नामासि' इत्येवमादयश्चत्वारो मन्त्राः पृष्टप्रतिवचनार्थाः । तत्र यत्र पृष्टं तत आरभ्य कर्माऽऽचार्यस्येत्यर्थः । प्रष्टमिति संप्रसारणाभावश्छान्दसः, अपपाठो वा । यत् प्रतिवचनं तत् कुमारस्य । असौ-शब्देषु नाम निर्दिशति कुमारः प्रथमया । आचार्यः संबुद्ध्या कुमारस्य नाम । तत्र 'को नामासि' इत्याचार्यः, 'यज्ञशर्मनामाऽस्मि' इति कुमारः । 'कस्य ब्रह्मचार्यसि श्रीयज्ञशर्मन्' इत्याचार्यः, 'प्राणस्य ब्रह्मचार्यस्मि यज्ञशर्मा' इति कुमारः । आहेत्यनुवृत्तेरुच्चैः प्रयोगः । ¶ अनाकुला.

**शेषं परो जपति ॥**

(१) पृष्टप्रतिवचनादूर्ध्वम् अनुवाकस्य यः शेषः तम् 'एष ते देव सूर्य' इत्यादिकं परः आचार्यो जपति । अनाकुला.

(२) शेषम् अनुवाकशेषैकदेशं 'विष्णुशर्मैष ते देव' इत्यादि 'अनुसंचर विष्णुशर्मन्' इत्येवमन्तमाचार्यो जपति, 'अध्वनामध्वपते' इत्यस्य प्रत्यगाशिषो वाचनविधानात् । ताद.

**प्रत्यगाशिषं चैनं वाचयति ॥**

(१) तत्रैव शेषे या प्रत्यगाशीः 'अध्वनामध्वपते' इत्येवमाद्या तामेनं कुमारं वाचयति । अनाकुला.

(२) आत्मगाम्याशीः फलं यस्मिन् मन्त्रे स प्रत्यगाशीः । जात्यभिप्रायमेकवचनम् । 'अध्वनाम्' इत्यारभ्य आ उपनयसनमाप्तेर्ये प्रत्यगाशिषो मन्त्राः 'योगे योगे' इत्यादयः, तान् सर्वान् कुमारं वाचयति । ताद.

¶ ताद. अनाकुलागतम् ।

(१) आपगृ. ११।१–६.

**उक्तमाज्यभागान्तम् ॥**

**अत्रैनमुत्तरा आहुतीर्हावयित्वा जयादि प्रतिपद्यते ॥**

(१) आज्यभागान्तं तन्त्रं प्रागेवोक्तम् । अत्र इदानीम् एनं कुमारम् उत्तरा एकादश प्रधानाहुतीर्हावयति 'योगे योगे' इत्येवमाद्याः । उत्तरैर्मन्त्रैः कुमारो जुहोति, तमाचार्यः प्रयुङ्क्ते मन्त्रवाचनेन । द्वितीयचतुर्थयोरपि मन्त्रयोः कुमार एव वक्ता, देवताभिधानार्थत्वात् । अपर आह– लिङ्गविरोधादाचार्यो वक्ता, कुमारस्तु होतेति । प्रधानहोमेषु हावयित्वेति वचनात् उपहोमेष्वाचार्य एव कर्ता । अनाकुला.

(२) इदमनुवादमात्रं मा भूदिति साध्याहारं व्याख्यायते । न केवलम् 'अध्वनाम्' इत्यारभ्य प्रत्यगाशिषो मन्त्रान् वाचयति, आज्यभागान्तमुक्त्वा ये पश्चात् प्रत्यगाशिषो मन्त्राः मेखलापरिव्ययणादिषूक्ताः 'इयं दुरुक्तात्' इत्याद्यास्तानपि स्वयमुक्त्वा वाचयति । उक्तमिति जात्यभिप्रायम् ।

इदं त्विह वक्तव्यम्– यासु मेखलापरिव्ययणादिषु कुमारप्रधानासु संस्कारक्रियासु ये प्रत्यगाशिषो मन्त्रास्तत्रोदकैराख्यातैः करणत्वेन चोदिताः, क्रियाः तैर्मन्त्रैः कृत्वा पश्चाद्वाचयति, स्वतः करणमन्त्राणां क्रियागुणभूतैः कर्तृभिरेवोच्चार्यत्वात् कुमारस्य चात्र संस्कार्यत्वेन प्राधान्यात् । यत्र पुनर्होमादिषु कुमारस्य गुणभाव एव, न संस्कार्यत्वम्, तत्र तान् प्रत्यगाशिषो वाचयत्येव । केचित्– परिव्ययणादिष्वपि कुमारस्यैव मन्त्रः, परस्तु वाचयत्येवेति ।

अत्र अस्मिन् क्रमे, न तु 'यथोपदेशं प्रधानाहुतीः' (आपगृ. २।७) इति सामान्यवचनादाज्यभागानन्तरमेव । एनं कुमारम् उत्तराः 'योगे योगे' इत्येकादशर्चः प्रत्यगाशिषो वाचयन् हस्ते गृहीत्वा प्रतिमन्त्रं हावयति । तत्र द्वितीयचतुर्थौ 'इममग्न आयुषे' 'अग्निष्ट आयुः प्रतराम्' इति लिङ्गविरोधात् 'आयुर्दा देव जरसम्' इतिवत् स्वयमेव ब्रूयात्, नैनं वाचयति । केचित्– एतयोरपि देवताभिधानार्थत्वात् कुमारस्यैवो-

चारणमिति । ततो 'जयाभ्यातानान् राष्ट्रभृतः' इति सामान्यविधिप्रसिद्धमेवाऽऽचार्यो जयादि प्रतिपद्यते । ततश्च 'अग्निर्भूतानामधिपतिः स माऽवतु' इत्यादीनां प्रत्यगाशिषामपि वाचनं न भवति, नैव च हावनम् । ताद.

**'परिषेचनान्तं कृत्वाऽपरेणाग्निमुदगग्रं कूर्चं निधाय तस्मिन्नुत्तरेण यजुषोपनेतोपविशति ॥**

(१) उत्तरेण यजुषा 'राष्ट्रभृदसि' इत्येतेन । परिषेचनान्तवचनमानन्तर्यार्थम् । केचित् सावित्रं नाम व्रतमस्मिन् काल उपाकुर्वन्ति, केचित् त्रिरात्रान्ते सावित्रीमनुब्रुवते, तदुभयमप्यनिष्टमाचार्यस्य । निधायेतिवचनादाचार्य एव निधाने कर्ता, न माणवकः । अधिकारादेव सिद्धे उपनेतेति वचनमुत्तरार्थम् 'पुरस्तात्प्रत्यङ्ङासीनः' इत्यत्र उपनेतुः पुरस्तात् यथा स्यात्, अग्नेः पुरस्तात् मा भूदिति । तथा 'दक्षिणेन पाणिना दक्षिणं पादम्' इत्यत्रोपनेतुः पादः, न माणवकस्य । अनाकुला.

(२) कूर्चं दर्भमयमासनम् । § ताद.

**'पुरस्तात्प्रत्यङ्ङासीनः कुमारो दक्षिणेन पाणिना दक्षिणं पादमन्वारभ्याऽऽह 'सावित्रीं भो अनुब्रूहि' इति ॥**

'दर्भेष्वासीनः' इति गृह्यान्तरे । दक्षिणेनेति वचनम् 'उभाभ्यामेवोभौ' (आध. १।५।२२) इत्ययं पक्षोऽत्र मा भूदिति । तेन 'सकुष्ठिकमुपसंगृह्णीयात्' (आध. १।५।२१) इत्ययं विशेषः प्रवर्तते । ¶ अनाकुला.

**'तस्मा अन्वाह– 'तत्सवितुः' इति ॥**

**'पच्छोऽर्धर्चशस्ततः सर्वाम् ॥**

(१) तस्मै इति वचनात् कुमारस्य ग्रहणार्थमनुवचनम् । तेन त्रिष्वपि वचनेषु कुमारस्यानुग्रहणं भवति । अनुशब्दोऽनुग्रहद्योतनार्थः । अनुग्रहेणाऽऽह अन्वाहेति । तेन यद्यसमर्थः कुमारस्तावत् वक्तुम्, ततो यथाशक्ति वाचयति स्वयं विधिवत् पूर्वमुक्त्वा– प्रथमं पच्छः पादे पादेऽवसानम्, द्वितीयमर्धर्चशः, ततः सर्वामन्वाहेति । उत्तरमिति वक्तव्ये 'तत्सवितुः' इति निर्देशः सावित्रीप्रदेशेषु 'सावित्र्या समित्सहस्रमादध्यात्' (आध. १।२७।१) इत्यादिषु अस्या एव ग्रहणं यथा स्यात्, यस्याः कस्याश्चित् सवितृदेवत्याया मा भूदित्येवमर्थम् । तत इति वचनादेतावदेवास्मिन्नहन्यनुवचनम्, एतैर्वचनैरग्रहणे कालान्तरेऽध्यापनम् । अनाकुला.

(२) तस्मै कुमाराय ग्रहणार्थं 'तत्सवितुर्वरेण्यम्' इत्येतामृचमाचार्योऽन्वाह । तत्र च 'सवितृदेवत्यामृचमनुब्रूहि' इत्यविशेषेण प्रार्थनायां कृतायामपि योऽयं 'तत्सवितुरित्यन्वाह' इति नियमः स ज्ञापयति– धेनुपङ्कजादिशब्दवत् सावित्रीशब्दस्य यौगिकस्यापि 'तत्सवितुर्वरेण्यम्' इत्यस्यामेव प्रयोगो नियतः, न तु 'आ सत्येन रजसा' इत्यादिष्वपीति । ततश्च धर्मशास्त्रे 'सावित्रीं प्राणायामशः' (आध. १।२६।१५) 'सावित्र्या समित्सहस्रमादध्यात्' (आध. १।२७।१) इत्यादिष्वस्या एवर्चः संप्रत्ययः, नान्यस्या अपीति । कथमन्वाह ? इत्यत्राऽऽह– पच्छः पादे पादे अवसाय । अर्धर्चशः अर्धर्चे अवसाय । ततः सर्वां समस्ताम् अनवसानामित्यर्थः । अत्र च सर्वानुवचनस्यादृष्टार्थत्वात् ग्रहीतुमसमर्थस्यापि कुमारस्य सर्वा निगद्यते । ताद.

(३) अयं च गायत्र्युपदेश आपस्तम्बानाम् अग्नेः पश्चाद्दक्षिणत उत्तरतो वा भवति । ननु 'अपरेणाग्निमुदगग्रं कूर्चं निधाय तस्मिन्नुत्तरेण यजुषोपनेतोपविशति । पुरस्तात्प्रत्यङ्ङासीनः कुमारो दक्षिणेन पाणिना दक्षिणं पादमन्वारभ्य सावित्रीं भो अनु-

---

§ शेषम् अनाकुलागतम् ।

¶ ताद. अनाकुलागतम् ।

(१) आपगृ. ११।७; बाल. १।१४ पृ. ४९ (परिषेचनान्तं कृत्वा॰).

(२) आपगृ. ११।८; बाल. १।१४ पृ. ४९ : १।२९ पृ. १५६ (पुरस्तात्...रभ्याऽऽह॰).

(३) आपगृ. ११।९; बाल. १।१४ पृ. ४९, १।२९ पृ. १५६.

(१) आपगृ. ११।१०; बाल. १।२९ पृ. १५६.

ब्रूहीति । तस्मा अन्वाह तत्सवितुरिति' ( आपगृ. ११।७–९ ) अस्मात्सूत्रादग्नेः पश्चिमदेशे एव प्राप्त इति चेन्न, तस्य $वाक्येन प्रैषाङ्गत्वात्, 'तस्मै' इति सर्वनाम्ना देशादि( ? य )विशिष्टस्य परामर्शात्, उपदेशाङ्गत्वे कल्प्यमानेऽपि सूत्रान्तरोक्तदेशग्रहणेन तयोरपि प्राप्तेः । न च ' यन्नाऽऽम्नातं स्वशाखायां पारक्यमविरोधि यत् । विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥ ' इतिवाक्यविरोध इति वाच्यम्, तस्य स्वसूत्रोक्त( स्य )विस्रम्भणीयत्वेन तदनुष्ठानमेवोचितमित्येतत्प्रतिपादनेन स्तुतिमात्रपरत्वात् । अन्यथा आश्वलायनादिभिः स्वस्वसूत्रोक्तमनुद्धरणप्रायश्चित्तम्, चातुर्मास्यविवाहोपनयनादौ संवत्सरदिवसनक्षत्रादिकं त्यक्त्वा सूत्रान्तरोक्तग्रहणं विरुध्येत । तस्मात् स्वसूत्रोक्तविरुद्धस्यापि सूत्रान्तरोक्तस्य ग्रहणं भवत्येव । प्रतिपादितं चैतत् ' नित्यो धार्यः ' ( आपगृ. ५।१५ ) इत्येतत्सूत्रव्याख्याने सुदर्शनभाष्यकारेण । तच्चान्यत्र प्रपञ्चितम् । युक्तं चैतत्, एकस्य कर्मणः शाखाभेदेनानेकेषां विरुद्धानामङ्गानामाम्नातानां व्यवस्थायां प्रमाणाभावात् । ननु सूत्रकारेण कृतोपसंग्रह एव प्रमाणमिति चेन्न, अशोकवनिकान्यायेन कस्यचिदेवोपसंग्रहात् । तस्मात् सूत्रान्तरोक्तस्यापि ग्रहणं युक्तमेवेति दिक् ।

१।१४ पृ. ४९–५०

यज्ञोपवीतमत्र यद्यपि नोक्तं तथापि ' यज्ञोपवीतिना, प्रदक्षिणम् ' ( आपगृ. १।३,४ ) इति प्रारम्भे उक्तम् । श्रुतौ च स्पष्टमुक्तम् । अत एव ' यज्ञोपवीतकालः स्याद्वचने कृत आशिषाम् । पुरस्तात्समिदाधानाच्छिववस्वामिमतेन तु ॥ ' इति कारिका । विद्यारण्यादयोऽप्येवम् । बाल. १।२९ पृ. १५६

**[1]व्याहृतीर्विहृताः पादादिष्वन्तेषु वा तथाऽर्धर्चयोरुत्तमां कृत्स्नायाम् ॥**

$ वाक्यप्रमाणेनेत्यर्थः ।

(१) आपगृ. ११।११ ; बाल. १।२९ पृ. १५६ रुत्तमां ( रुत्तमायां ).

( १ ) तत्रैवानुवचने विशेषः– प्रथमे वचने पादानां त्रयाणाम् आदिष्वन्तेषु वा तिस्रो व्याहृतयः क्रमेण वक्तव्याः । द्वितीये वचने अर्धर्चयोरादितः अन्ततो वा द्वे व्याहृती क्रमेण वक्तव्ये । तत उत्तमा शिष्यते सुवरिति । तामुत्तमां कृत्स्नायां ( कृत्स्नायाः ) वचनेऽनुब्रूयादिति । तत्र प्रयोगः– प्रणवोऽग्रे वक्तव्यः, 'ॐकारः स्वर्गद्वारम्, तस्माद्ब्रह्माध्येष्यमाणः ' ( आध. १।१३।६ ) इति वचनात् । ' ॐ भूः तत्सवितुर्वरेण्यम् । ॐ भुवः भर्गो देवस्य धीमहि । ॐ सुवः धियो यो नः प्रचोदयात् । ॐ भूः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । ॐ भुवः धियो यो नः प्रचोदयात् । ॐ सुवः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॥ ' ।

अनाकुला.

( २ ) अथ तस्मिन्नेवानुवचने विशेषमाह– व्याहृतीरिति । कृत्स्नायामिति षष्ठ्यर्थपाठः । ' अन्तेषु वा ' इति पक्षे प्रयोगः– ' ॐ तत्सवितुर्वरेण्यं भूः । ॐ भर्गो देवस्य धीमहि भुवः । ॐ धियो यो नः प्रचोदयात् सुवः । ॐ तत्सवितुर्...... धीमहि भूः । ॐ धियो यो नः प्रचोदयात् भुवः । ॐ तत्सवितुर्...... प्रचोदयात् सुवः । ' इति । ¶ताद.

**[1]कुमार उत्तरेण मन्त्रेणोत्तरमोष्ठमुपस्पृशते ॥**

( १ ) अथ तत्रैवाऽऽसीनः कुमार उत्तरेण मन्त्रेण ' अवृषमसौ सोम्य ' इत्यनेन स्वयमुत्तरमोष्ठमुपस्पृशते । अप उपस्पृशति । ओष्ठयोर्द्वित्वात् उत्तरमिति विशेषणम् । मन्त्रग्रहणमुत्तरशब्दस्य दिग्वाचिताशङ्का मा भूदित्येवमर्थम् । मन्त्रे ' असौ ' इत्यनेन प्राणोऽभिधीयते, नाऽऽचार्यो नापि माणवकः । तेन नामनिर्देशो न कर्तव्यः । अनाकुला.

( २ ) आचार्यवाचितेन ' अवृषमसौ सोम्य ' इत्यनेन मन्त्रेण कुमारः स्वमुत्तरमोष्ठमुपस्पृशति । छान्दसमात्मनेपदम् । असावित्यत्र च नास्ति नामग्रहणम्,

¶ शेषम् अनाकुलावत् ।

(१) आपगृ. ११।१२–१४, १७–१८.

प्राणाभिधानत्वात् । 'इयावान्तपर्यन्तावोष्ठावुपस्पृश्याऽऽचामेत्' ( आध. १।१६।१० ) इति वचनादाचमनं तु कर्तव्यम् । ताद.

**कर्णावुत्तरेण ॥**

( १ ) उत्तरेण मन्त्रेण 'ब्रह्मण आणी स्थः' इत्यनेन । सकृन्मन्त्रः । कर्णाविति द्विवचनयोगात् क्रमेणोपस्पर्शनम् । अनाकुला.

( २ ) स एव युगपद्धस्तद्वयेन स्वीयौ कर्णौ स्पृशति उत्तरेण 'ब्रह्मण आणी स्थः' इति द्विवचनलिङ्गेन । ताद.

**दण्डमुत्तरेणाऽऽदत्ते ॥**

उत्तरेण मन्त्रेण 'सुश्रवसः सुश्रवसम्' इत्यनेन । $ अनाकुला.

**'स्मृतं च मे' इत्येतद्वाचयित्वा गुरवे वरं दत्त्वा 'उदायुषा' इत्युत्थाप्योत्तरैरादित्यमुपतिष्ठते ॥**

( १ ) अथ दण्डमादाय तत्रैवाऽऽसीनः कुमारः 'स्मृतं च मे' इत्येतत् व्रतसंकीर्तनमाह । ततो गुरवे वरं ददाति । ततः 'उदायुषा' इति मन्त्रेणोत्तिष्ठेत् । उत्तरैर्मन्त्रैरादित्यमुपतिष्ठते 'तच्चक्षुः' इत्यादिभिः 'सूर्ये दृशे' इत्येवमन्तैः । व्रतसंकीर्तनादिपदार्थचतुष्टयस्य कुमार एव कर्ता । हेत्वभिधानं तूभयत्राविवक्षितम्— वाचयित्वोत्थाप्येति च । विवक्षिते तु तस्मिन् वरदाने उपस्थाने चाऽऽचार्य एव कर्ता स्यात् । तस्मादर्थप्राप्तस्य हेतुव्यापारस्यानुवादः । अनाकुला.

( २ ) अथाऽऽचार्यः 'स्मृतं च मे' इत्येतन्मन्त्रजातं कुमारं वाचयति । तत्राष्टौ मन्त्राः समानोदर्काः, शेषो नवमः । तेषां प्रत्यगाशिष्ट्वादेव वाचने प्राप्ते वाचयित्वेति पुनर्वचनं वाचनवरदानयोर्नैरन्तर्यार्थम् । अथ गुरवे आचार्याय कुमारो वरं गां 'गुरो वरं ते ददामि' इति ददाति, अग्न्याधाने 'गौर्वै वरः' ( आपश्रौ. ५।११।४ ) इत्युक्तत्वात् । आचार्यस्तु सप्तदशकृत्वोऽपान्य होतॄणां दशमानुवाकस्य 'देवस्य त्वा' इत्यादित आरभ्य 'देवि दक्षिणे' इत्येवमन्तमुक्त्वा 'रुद्राय गां तेनामृतत्वमश्याम्' इत्यादि संधाय 'उत्तानस्त्वाऽऽङ्गीरसः प्रतिगृह्णातु' ( तैआ. ३।१०।१, २ ) इत्येवमन्तेन श्रौतवत् प्रतिगृह्णाति, 'उपनयनं विद्यार्थस्य श्रुतितः संस्कारः' ( आध. १।१।९ ) इति धर्मशास्त्रवचनात् । ततः कुमारम् 'उदायुषा' इत्युत्थाप्य इदं च वाचयति । अथ कुमारः 'तच्चक्षुर्देवहितम्' इत्यादिभिराचार्यवाचितैर्दशभिर्मन्त्रैरादित्यमुपतिष्ठते । अत्र वाचयित्वेत्यादेः क्त्वाप्रत्ययस्य क्रियाविधानमात्रे तात्पर्यम्, न तु समानकर्तृकत्वेऽपि । ज्ञापितं चैतत् 'योक्त्रं विमुच्य तां ततः प्र वा वाहयेत्' ( आपगृ. ५।१३) इत्यत्र । अथवा व्यवधानेन संबन्धः, आचार्यः स्मृतादि वाचयित्वा 'उदायुषा' इत्युत्थाप्य 'यं कामयेत' इत्यादि कुर्यात् । कुमारस्तु गुरवे वरं दत्त्वोत्तरैरादित्यमुपतिष्ठते । केचित्— स्मृतसंकीर्तनादि पदार्थचतुष्टयमपि कुमारकर्तृकम् । वाचयित्वोत्थाप्येति तु णिजर्थो हेतुरविवक्षितः । अन्यथा त्वसमानकर्तृकत्वात् वरदानमुपस्थानं चाऽऽचार्यकर्तृकं स्यात् । तथा गुरुग्रहणं चौलादौ ब्रह्मणे वरदानार्थमिति । ताद.

**यं कामयेत नायं मच्छिद्येतेति तमुत्तरया दक्षिणे हस्ते गृह्णीयात् ॥**

(१) यं कुमारम् उपनेता कामयेत गुरुः । किमिति ? अयं मत्तो न छिद्येत न वियुज्येत, मदधीन एव स्यादा समावर्तनादिति, तमेतस्मिन् काले दक्षिणे हस्ते गृह्णीयात् उत्तरयर्चा 'यस्मिन् भूतम्' इत्येतया । नामनिर्देशः संबुद्ध्या । काम्योऽयं विधिः, न नित्यः । एतदेव ज्ञापकम्— आ समावर्तनात् नोपनेतुरेव समीपे वर्तितव्यमिति । अनाकुला.

( २ ) अथ काम्यमाह— यमिति । यं कुमारम् अयमा समावर्तनान्मत्तो न च्छिद्येत न वियुज्येतेति कामयेत तमुत्तरया 'यस्मिन्भूतम्' इत्यनयर्चा संबुद्ध्या च नाम गृहीत्वा दक्षिणे हस्ते गृह्णीयात् यद्ययमाचार्य-

$ ताद. अनाकुलावत् ।

श्चतुर्वेदी सर्वशास्त्रवित् अध्यापयितुं व्याख्यातुं च शक्नोति । ताद.

'त्र्यहमेतमग्निं धारयन्ति ॥

एतम् उपनयनाग्निं त्र्यहं धारयन्ति अविनाशिनं कुर्वन्ति पित्रादयः । अनाकुला.

'क्षारलवणवर्जनं च ॥

क्षारलवणयोर्वर्जनं भवति भोजने त्र्यहम् । अस्य ब्रह्मचारिणः सामयाचारिकः प्रतिषेधः सार्वकालिकः । अयं तु त्र्यहसंबन्धः । तयोर्विकल्पः । मध्वादिप्रतिषेधस्तु सामयाचारिको नित्यमेव भवति । † अनाकुला.

'परि त्वा' इति परिमृज्य तस्मिन्नुत्तरैर्मन्त्रैः समिध आदध्यात् ॥

( १ ) तमुपनयनाग्निं 'परि त्वा' इत्यनेन मन्त्रेण परिमृज्य सर्वतो मार्जनमुदकेन कृत्वा उत्तरैर्मन्त्रैः 'अग्नये समिधम्' इत्यादिभिर्द्वादशभिः प्रतिमन्त्रं समिधो नित्यमादध्यात् ब्रह्मचारी । 'सायं प्रातः' ( आध. १।४। १६ ) इति विशेषः सामयाचारिकः प्रत्येतव्यः । 'सायमेवाग्निपूजेत्येके' ( आध. १।४।१७ ) इति च । अयं तूपदेशोऽस्मिन् काले प्रारम्भार्थः । तेन प्रातरुपक्रमं समिदाधानं सायमपवर्गम् । पक्षान्तरे सायमेवोपक्रमः, नान्यस्मिन् काले । तत्र यथाकामी प्रक्रमे । अधिकारादेव सिद्धे तस्मिन्निति वचनं त्र्यहादूर्ध्वमपि तस्मिन्नुपनयनाग्नावेव समिदाधानं यथा स्यादिति । तेन नित्यधारणमप्यस्य विकल्पेन साधितं भवति । व्याहृतिभिरप्यन्ते चतस्रः समिध आदधाति । तत्प्रायश्चित्तत्वेन द्रष्टव्यम्, कल्पान्तरदर्शनाच्च । 'यत्ते अग्ने तेजः' इत्यादिभिरुपस्थानम्, समाचाराद्भसितधारणम् । अनाकुला.

( २ ) 'परि त्वाऽग्ने' इत्यग्निं परिमृज्य परिसमू(?मु)ह्य तस्मिन् उपनयनाग्नौ यावद्धारणमुत्तरैर्मन्त्रैर्द्वादशभिः 'अग्नये समिधमाहार्षम्' इत्यादिभिः प्रतिमन्त्रमेकैकां समिधमादध्यात् । पुनश्चान्ते तूष्णीं परिसमूहनम् । अनन्तरमुभयतस्तूष्णीं समन्तं परिषेचनम्, स्मृत्यन्तरादाचाराच्च । एतच्च समिदाधानं पूर्वं काष्ठैरग्निमिद्ध्वा कार्यम्, धर्मशास्त्रे 'अग्निमिद्ध्वा परिसमू(?मु)ह्य समिध आदध्यात्' ( आध. १।४।१६ ) इति वचनात् । परिसमूहनस्य 'परि त्वेति परिमृज्य' इति विधिः, तथा धर्मशास्त्रे तु 'समिद्धमग्निं पाणिना परिसमूहेन्न समूहन्या' ( आध. १।४।१८ ) इति गुणार्थोऽनुवादः । ताद.

एवमन्यस्मिन्नपि सदाऽरण्यादेधानाहृत्य ॥

( १ ) यथाऽस्योपनयनाग्नेर्नित्यधारणपक्षे समिदाधानं नित्यत्वेन चोदितम् एवं त्र्यहं धारणपक्षे त्र्यहादूर्ध्वम् अन्यस्मिन्नप्यग्नाविदं कर्म कर्तव्यमित्यर्थः । अरण्यग्रहणात् ग्राम्याणां फलवतां वृक्षाणां प्रतिषेधः । आहृत्येति वचनात् अन्यैराहृतानां प्रतिषेधः । एधाः काष्ठानि । एधग्रहणमग्नेराहरणशङ्कानिवृत्त्यर्थम् । सामयाचारिकेषु विधिर्गुर्वर्थे ब्रह्मचारिणः समिदाहरणं विधत्ते, इदं त्वात्मार्थम् । अनाकुला.

( २ ) एवमग्निपूजापरशब्दं समिदाधानं सविधिक्रमभिधाय इदानीं तस्यैवाधिकारसंबन्धं गुणान्तरं चाऽऽह– एवमिति । एवम् उक्तेन विधिना सदा उपनयनप्रभृत्या समावर्तनात् अहरहः सायंप्रातः सायमेव वा समिदाधानं कर्तव्यम् । एतच्च त्र्यहादूर्ध्वमन्यस्मिन्नपि लौकिकेऽग्नौ भवति, न तूपनयनाग्निर्नष्ट इति नित्यस्य समिदाधानस्य लोपः । समिधश्चारण्यादेवाऽऽहृत्याऽऽधेयाः । यच्च धर्मशास्त्रे 'सायं प्रातर्यथोपदेशम्' इति 'सायमेवाग्निपूजेत्येके' (आध. १।४।१६–१७) इति स विकल्पविध्यर्थोऽनुवादः । $ ताद.

उत्तरया संशास्ति ॥

( १ ) अथ तम् उत्तरयर्चा 'ब्रह्मचार्यसि' इत्येतया संशास्ति गुरुः संशिक्षयतीत्यर्थः । यथापाठमृचा संशास-

---

† ताद. अनाकुलावत् ।

(१) आपगृ. ११।१९ ; गभा. २३३ यन्ति (यति) ; सिन्धु. ९४९.

(२) आपगृ. ११।२०–२३.

$ शेषम् अनाकुलानुवादः ।

नम्, अर्थं च कथयति । ब्रह्मचार्यसि ब्रह्मचर्याश्रमं प्राप्तोऽसि । तस्मात् कामचारवादभक्षो मा भूः । 'बाढम्' इति प्रतिवचनम् । अपोऽशान मयाऽननुज्ञातः अप एवाशान, नान्यत् । पूर्ववत् प्रतिवचनं सर्वत्र । कर्म कुरु गुरुशुश्रूषणादि । मा सुषुप्थाः । दिवा स्वापप्रतिषेधः । 'दिवा मा स्वाप्सीः' (आगृ. १।२२।२) इत्येवाऽऽश्वलायनः । अपर आह– 'अथ यः पूर्वोत्थायी जघन्यसंवेशी तमाहुर्न स्वपितीति' (आध. १।४।२८) एवंविधोऽत्र स्वापाभाव इति । 'भिक्षाचर्यं चर' इति नियमेन भैक्षविधिः । आचार्याधीनो भव मातापित्रोरपि वशं त्यक्त्वा आचार्यवशे वर्तस्वेत्यर्थः । संशासनानन्तरं भिक्षाचरणम् । अत्र बोधायनः– 'अथास्मा अरिक्तं पात्रं प्रयच्छन्नाह मातरमेवाग्रे भिक्षस्वेति' (बौगृ. २।५।४७) । आश्वलायनस्तु– 'अप्रत्याख्यायिनमग्रे भिक्षेताप्रत्याख्यायिनीं वा' (आगृ. १।२२।७) इति । अनाकुला.

(२) अपोऽशान मयाऽ(न)नुज्ञातोऽप एव पिब, बुभुक्षां तु धारय । कर्म कुरु असमदर्थं कर्म मयाऽनुक्तोऽपि कुरु । भिक्षाचर्यं चर निमन्त्रणादिना भुञ्जानोऽप्यस्मदर्थं भैक्षमाचर । आचार्याधीनो भव मयाऽननुज्ञातो याजनादिकर्म मा कार्षीरिति । अत्र चासीतिच्छान्दसो लकारः, सुषुप्था इति रूपं च । ¶ ताद.

'वासश्चतुर्थीमुत्तरयाऽऽदत्तेऽन्यत् परिधाप्य ॥

(१) अथ त्रिरात्रे निवृत्ते चतुर्थीं रात्रिम्, सप्तम्यर्थे द्वितीया, चतुर्थ्यामित्यर्थः । तत्र किम्? यद्वासः कुमारस्य धार्यं सद्यःकृत्तोतं परिधापितं तदाचार्य आदत्ते उत्तरयर्चा 'यस्य ते प्रथमवास्यम्' इत्येतया, अन्यद्वासः परिधाप्य । त्र्यहे तु तस्मिन्नियमेन सद्यःकृत्तोतमेव । चतुर्थीमित्यत्र न रात्रिर्विवक्षिता । किं तर्हि? अहोरात्रसमुदायः । तत्राहन्येवाऽऽदानं वाससः, 'उदगयनपूर्वपक्षाहः' इति नियमात् । 'मेखलामजिनं दण्डमुपवीतं कमण्डलुम् । अप्सु प्राश्य विनष्टानि धार्याण्यन्यानि मन्त्रवत् ॥' । अनाकुला.

(२) वासः उपनयनकाले यत्परिधापितं तदाचार्यः सप्तदशकृत्वोऽपान्य 'यस्य ते प्रथमवास्यम्' इत्यनयैव स्वीकरोति, न तु सावित्रेण, अत्र विशेषविधेर्बलीयस्त्वात् । उपदेशमतं तु 'देवा वै वरुणमयाजयन्' (तैब्रा. २।२।५) इति लिङ्गादयशेषु न प्रतिग्रहविधिरिति । एतच्चान्यद्वासः कुमारं परिधाप्यैव कर्तव्यम् । स तु 'गुरो वासस्ते ददामि' इति दद्यात् । एतच्च त्र्यहं मन्त्रवत्परिहितमेव वासः परिधेयम् । आपस्तम्बमत्या एतदन्तमुपनयनम् ।

अथ पालाशकर्मभाष्यं लिख्यते– केचित् स्मृत्यन्तरोपसंहारेण पलाशवृक्षसमीपे पालाशं कर्म कुर्वते समानम् । अन्येषां च श्रद्दधानानां हितार्थं पालाशकर्मणो विधिरुच्यते–त्रीण्यहानि प्रत्यहमामभैक्षमाचरेत् । चतुर्थेऽहन्यन्नसंस्कारेण संस्कृत्याऽऽचार्येण सह प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य पूर्वेणोत्तरेण वा पलाशवृक्षं त्रीण्युदगपवर्गाणि स्थण्डिलानि कल्पयित्वा तेषु यथाक्रमं प्रत्यङ्मुखः प्रणवश्रद्धामेधाभ्योऽर्घ्यपाद्याचमनस्नानवस्त्रगन्धमाल्यधूपदीपबलींश्च दत्त्वाऽथोपतिष्ठते– 'यश्छन्दसाम्' इत्यनेन 'श्रुतं मे गोपाय' (तैउ. १।४) इत्यन्तेन प्रणवम्, 'श्रद्धयाऽग्निः समिध्यते' (तैब्रा. २।८।८) इति सूक्तेन श्रद्धाम्, 'मेधा देवी' (तैउ. ४।४१) इत्यनुवाकेन मेधाम् । ततः पलाशमूले दण्डं विसृज्य अन्यदण्डमादाय सहाचार्यो गृहमागच्छतीति । ¶ ताद.

---

¶ शेषम् अनाकुलागतम् ।

(१) आपगृ. ११।२४; मुक्ता. ९४ (=).

¶ शेषम् अनाकुलागतम् ।

## हिरण्यकेशिगृह्यसूत्रम्

ब्राह्मणभोजनम्, पुण्याहवाचनम्, कुमारभोजनम्, वपनम्, होमः, अश्मारोपणम्, वस्त्रमेखलाजिन-धारणम्, परिदानम्, हुतशेषप्राशनम्, मन्त्रवाचन-प्रश्नप्रतिवचन-मार्जनानि, उपनयनम्, हस्तग्रहणम्, संशासनम्, हृदयाद्यभिमर्शः, पुनर्हस्तग्रहणम्, जपः, परिदानम्, सावित्रीवाचनम्, समिदाधानम्, देवतोपस्थानम्, वरदानम्, आदित्योपस्थानम्, दण्डदानम्, भिक्षाचरणम्, वस्त्रादानम्, होमः, बलिदानम्, ब्राह्मणभोजनम्, पुण्याहवाचनम्, व्रताचरणम्, समिदाधानम्, अग्न्युपस्थानम्, चतुर्थदिवसे ब्राह्मणभोजनपुण्याहवाचनव्रतविसर्जनानि

*** [1]युग्मान्ब्राह्मणानन्नेन परिविष्य 'पुण्याहं स्वस्त्ययनमृद्धिम्' इति वाचयित्वा ॥**

**[2]अशितस्य कुमारस्य केशान्वापयित्वा स्नातमलंकृतमहतं वासः परिधाप्य... ॥ $**

अलंकृतं माल्यादिना मण्डितम्। अहतम् अनुपयुक्तं वासः परिधाप्य। मातृद्द.

**[3]उत्तरेणाग्निं दर्भान्संस्तीर्य यथार्थं द्रव्याणि प्रयुनक्ति ॥**

अग्नेरुत्तरतो दर्भान्परिस्तीर्य यथाप्रयोजनं द्रव्याणि प्रयुनक्ति। कानि तानि? यानि अश्मादीनि दश येनान्येन प्रयोजनं तच्च। ‡ मातृद्द.

**[1]अश्मानमहतं वासोऽजिनं मौञ्जीं मेखलां त्रिवृतां ब्राह्मणस्य, ज्यां राजन्यस्य, आवीसूत्रं वैश्यस्य। बैल्वं पालाशं वा दण्डं ब्राह्मणस्य, नैयग्रोधं राजन्यस्य, औदुम्बरं वैश्यस्य ॥ †**

अश्माऽऽक्रमणाय। वासः परिधानार्थम्। अजिनमुत्तरीयार्थम्। ¶ मातृद्द.

**[2]दर्वीं कूर्चमाज्यस्थालीं प्रणीताप्रणयनं प्रोक्षणीपात्रं येन चार्थः ॥§**

कूर्चः सावित्रीवाचनार्थमासनं पुनरुपनयने पौष्करसादिपक्षे च प्रयोक्तव्यः, नेतरत्र। $ मातृद्द.

***[3]अपरेणाग्निं प्राङ्मुख उपविशति ॥**

'अपरेणाग्निं प्राङ्मुख उपविशति' इत्येतत्सूत्रं 'दक्षिणतो यज्ञोपवीत्याचान्तः कुमारः' इत्येतस्मिन्नुत्तरसूत्रेऽन्वेति। तेन कुमारस्य प्राङ्मुखता 'अपरेणाग्निं प्राङ्मुख उपविशति' इत्येतस्य सूत्रस्य वैयर्थ्यापत्तिपरिहारश्च सिध्यति। एतच्च संस्कार्यमात्रोपलक्षणम्। तेन यत्र संस्कार्या पत्नी तत्र तस्या अपि पत्युर्दक्षिणत

---

* अस्य मातृद्दव्याख्यानं पुण्याहवाचनप्रकरणे (सं. का. पृ. १६७६) द्रष्टव्यम्। किंचास्मिन्नुपनयनप्रकरणेऽन्तरान्तरास्थितानि यानि सूत्राण्यत्र न संगृहीतानि तानि सर्वाण्यग्निमुखविषयकाणि सव्याख्यानान्यग्निमुखप्रकरणे संगृहीतानि तत्रैव (सं. का. पृ. १४०४–१४१८) द्रष्टव्यानि।

$ अतः परमग्न्युपसमाधानादि।

(१) हिगृ. १९।१।६.

(२) हिगृ. १९।१।७; संबौ. ६४ (भागः २) (आशितस्य कुमारस्य केशान् वापयित्वा) एतावदेव.

(३) हिगृ. १९।१।१३.

‡ शेषं व्याख्यानमग्निमुखप्रकरणे (सं. का. पृ. १४०५–१४०६) द्रष्टव्यम्।

† अतः परमिध्मपरिधिसंनहनम्।

¶ शेषं व्याख्यानं मेखलाप्रकरणे दण्डप्रकरणे च (सं. का. पृ. ३१०४, ३११४) द्रष्टव्यम्।

§ अतः परं ब्रह्मोपवेशनादि साधारणतन्त्रम्।

$ शेषं व्याख्यानमग्निमुखप्रकरणे (सं. का. पृ. १४०७) द्रष्टव्यम्।

* अस्य मातृद्दव्याख्यानमग्निमुखप्रकरणे (सं. का. पृ. १४१०) द्रष्टव्यम्।

(१) हिगृ. १९।१।१४. शेषस्थलादिनिर्देशः मेखलाप्रकरणे दण्डप्रकरणे च (सं. का. पृ. ३१०४, ३११४) द्रष्टव्यः.

(२) हिगृ. १९।१।१७; संर. ६६ (प्रोक्षणीपात्रं०).

(३) हिगृ. १९।१।२८; संर. ७१.

उपवेशने प्राङ्मुखत्वं भवति । अग्रे 'उपविश्य' इति वचनमुपवेशनान्वारम्भयोः कालाव्यवधानार्थम् । अथवा 'अपरेणाग्निं प्राङ्मुख उपविशति' इति भिन्नं सूत्रम्, 'दक्षिणतो यज्ञोपवीत्याचान्तः कुमार उपविश्यान्वारभते' इति भिन्नम् । तत्र पूर्वमर्थादाचार्यपरम्, उत्तरत्र कुमारग्रहणादन्यस्य चासंभवात् । अस्मिन्पक्षे पूर्वसूत्रं कर्मवशेनायं नियम इति ख्यापनार्थं ज्ञेयम् । संर. ७१

**'दक्षिणतो यज्ञोपवीत्याचान्तः कुमार उपविश्यान्वारभते ॥ $**

अथ कुमारो यज्ञोपवीती भूत्वा शास्त्रोक्तेन विधिनाऽऽचान्त उत्तरेणाग्निं गत्वोत्तरेणाऽऽचार्यमनूचानमनुज्ञाप्य दक्षिणाऽतिक्रम्य दक्षिणत आचार्यस्य प्राङ्मुख उपविश्य अन्वारभते संस्पृशत्याचार्यम् । आचमनयज्ञोपवीते कुमारस्यातः प्रभृति स्याताम्, नार्वागितः (इत्येतदर्थं) सिद्धयोरपीह वचनम् । केषांचिदिह मन्त्रेण यज्ञोपवीतस्य क्रियोक्ता– 'यज्ञोपवीतेनोपव्ययामि दीर्घायुत्वाय सुप्रजास्त्वाय सुवीर्याय सर्वेषां वेदानामाधिपत्याय यशसे ब्रह्मवर्चसाय त्वाम्' इति । कौषीतकिनामयं मन्त्रः । बौधायनीयानां त्वेके 'यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥' इति त्वेष मन्त्रः । मातृद.

**²'आयुर्दा अग्ने' इत्येषा ॥**

एषा प्रधानाहुतिः । 'अभिरक्षतादिमम्' 'जरसे नयेमम्' इति लिङ्गतः पुरुषसंबन्धात् । केचिदेषेति पूर्वस्यां वचनं प्रधानाहुतित्वख्यापनार्थम्, तदेवोत्तरस्यामनुवर्तते, तेन तस्या अपि प्रधानाहुतित्वमिति चेत् (? ति, तत्) न । एकस्या एकवद्भावप्रतिग्रहमेवे(? हार्थमेषे)त्याचार्यशैली (इति) 'ब्रह्म प्रतिष्ठा' इत्यत्रोक्तं हि । बहूनि चास्मिन्सूत्र एवे(? षे)ति वचनानि । यदि सर्वेषां शक्यते प्रयोजनं वक्तुं ततोऽत्रापि वक्तव्यम् । मातृद.

**'आयुर्दा देव जरसं गृणानो घृतप्रतीको घृतपृष्ठो अग्ने । घृतं पिबन्नमृतं चारु गव्यं पितेव पुत्रं जरसे नयेमं स्वाहा ॥' ॥ ***

**अग्रेणोत्तरं परिधिसंधिमश्मानं निधाय ॥**

उत्तरतोऽग्नेरुत्तरपरिधिमग्रेणाश्मानं निधाय । मातृद.

**दक्षिणेन पादेन कुमारमास्थापयति– 'आतिष्ठेममश्मानमश्मेव त्वं स्थिरो भव । प्रमृणीहि दुरस्यून्त्सहस्व पृतनायतः ॥' इति ॥**

(१) तमश्मानं कुमारमास्थापयति आक्रमयति 'आतिष्ठेमम्' इत्यनेन । गत्यर्थत्वादाङ्पूर्वस्य तिष्ठतेः प्रयोज्यस्य कर्तुः कर्मत्वम् । दक्षिणेनेति नियमार्थम् उभयनिवृत्त्यर्थं वा । प्रकरणात्सिद्धेऽपि कुमारग्रहणमस्य विधेरन्यत्रापि प्रसङ्गोऽस्तीति । तेन विवाहेऽप्यग्रेणोत्तरं परिधिसंधिं निधाय दक्षिणेन पादेनायं विधिः सिद्धो भवति । स्पष्टत्वमेव वा । तथैवमश्मादीत्येवमादीनि द्रष्टव्यानि । मातृद.

(२) $ सूत्रे दक्षिणेनेतिवचनं सव्यनिवृत्त्यर्थं क्रमार्थं वा । प्रथमे पक्षे दक्षिणपादस्यैवाश्मोपरि स्थापनम्, न सव्यस्य । द्वितीयपक्षे तु कुमारस्य प्रथमं दक्षिणपादमेव संस्थाप्य सव्यः संस्थापनीयः । संर. २०३

**अथैनमहतं वासः परिधापयति पूर्वं निधाय– 'या अकृन्तन्नवयन्या अतन्वत याश्च देवीरन्तानभितो ददन्त । तास्त्वा देवीर्जरसा संव्ययन्त्वायुष्मानिदं परिधत्स्व वासः ॥ परिधत्त धत्त वाससैनं शतायुषं कृणुत दीर्घमायुः । बृहस्पतिः प्रायच्छद्वास एतत्सोमाय राज्ञे परिदातवा उ ॥ जरां गच्छासि परिधत्स्व वासो**

---

$ अतः परं परिषेचनादि साधारणतन्त्रम् ।

(१) हिगृ. १९।१।२९ ; संर. ७१, १८६.

(२) हिगृ. १९।१।४७–४८, ५६–६२, ६४–६९.

* अतःपरं साधारणहोमाः ।

$ रत्नमालायां सूत्रं धृतम्, प्रयोगकथनप्रसङ्गेन सूत्रपदं व्याख्यातम् । एवमग्रेऽपि ज्ञेयम् ।

**भवाकृष्टीनामभिशस्तिपावा । शतं च जीव शरदः सुवर्चा रायश्च पोषमुपसंव्ययस्व ॥' इति ॥**

अथ अनन्तरम् एनं कुमारमहतं वासः परिधापयति तत्पूर्वं परिधापितं वासः प्रज्ञातं निधाय । 'या अकृन्तन्' इति परिधापनमन्त्रः । इदं वासः पुष्ये कर्तव्यमिति शास्त्रान्तरे दृष्टं तदस्माकमप्यविरुद्धम् । उक्तक्रमादेव सिद्धे आनन्तर्येऽथेति वचनं नित्यः क्रमः, द्रव्यमन्त्रावनित्याविति ख्यापनार्थम् । तेनाजिनस्य वा परिधापनं स्यात् तत्र च मन्त्राम्नानमपि । वक्ष्यति च धर्मेषु– 'ब्रह्मवृद्धिमिच्छन्नजिनान्येव वसीत' (हिध. २६।१।८१) इति । अन्यस्या-( ? अन्ये त्व )नित्यत्वख्यापनार्थोऽथशब्द इत्याहुः । तेषां पुनरुपनयने नास्ति परिधानम् । एनमिति कुमारस्य मन्त्रप्रतिषेधार्थमुत्तरार्थं च । पूर्वं निधायेति उत्तरत्र प्रयोजनभावख्यापनार्थम् । उत्तरीयप्रतिषेधार्थमित्येके । तन्न । वक्ष्यति– 'अजिनमुत्तरीयं कुर्यात् (? करोति )' । निर्देशोऽपरिसमाप्त एव परिधाने निधानार्थम्, न निधानाश्रयप्रतिषेधार्थं परिधाप्यप्रतिषेधः( ? ) ।
मातृवृ.

**परिधाप्याभिमन्त्रयते– 'परीदं वासोऽधिधा स्वस्तये भूरापीणामभिशस्तिपावा । शतं च जीव शरदः पुरूचीर्वसूनि चार्यो विभजा स जीवन् ॥' इति ॥**

( १ ) अभिमन्त्रयते कुमारम् । परिधाप्येति परिधानं कृत्वा, न परिधानाभावे । अतश्चाजिनपक्षे न स्यात् । मातृवृ.

( २ ) '* वसूनि चार्यो विभजा स जीवन्' इति प्रमादपाठः । संर. २०३

* 'वसूनि चार्यो विभजासि जीवन्' इति रत्नमालासंमतः पाठः । ब्लूमफील्डमहोदयेन तु स्वीये मन्त्रकोशे स आपस्तम्बमन्त्रब्राह्मणीयत्वेन निर्दिष्टः, वैदिकसंप्रदायप्रसिद्धोऽस्मद्गृहीत एव पाठश्च हिरण्यकेशिगृह्यसूत्रीयत्वेन निर्दिष्टः ।

**अथैनं मेखलया नाभिदेशे त्रिः प्रदक्षिणं परिव्ययति, द्विरित्येके– 'या दुरिता परिबाधमाना शर्म वरूथे पुनती न आगात् । प्राणापानाभ्यां बलमावहन्ती स्वसा देवानां सुभगा मेखलेयम् ॥' इति ॥**

अथैनं कुमारं मेखलया त्रिः प्रदक्षिणं परिव्ययति परिवेष्टयति नाभिदेशम् ( ? देशे ) अन्तरतो नाभिमिति ( ? ) । द्विः परिव्ययतीत्येकेषाम् । 'या दुरिता' इत्यनेन मन्त्रेण सकृदुक्त्वा । अथेत्यभावार्थः पुनरुपनयने । एनमिति कुमारर्त्विङ्( ? रस्यर्ङ् )निवृत्तये ।
मातृवृ.

**उत्तरतो नाभेस्त्रिवृतं ग्रन्थिं कृत्वा दक्षिणतो नाभेः परिकर्षति ॥**

उत्तरतो नाभेर्मेखलया त्रिवृतं ग्रन्थिं कृत्वा दक्षिणतो नाभेः परिकर्षति । मातृवृ.

**अथास्मा अजिनमुत्तरीयं करोति– 'मित्रस्य चक्षुर्धरुणं धरीयस्तेजो यशस्वि स्थविरं समिद्धम् । अनाहनस्यं वसनं जरिष्णु परीदं वाज्यजिनं धत्स्वासौ ॥ अदितिस्ते कक्षां बध्नातु वेदस्यानुवक्तवै मेधायै श्रद्धाया अनूक्तस्यानिराकरणाय ब्रह्मणे ब्रह्मवर्चसाय' इति ॥**

( १ ) अथास्मै कुमारायाजिनमुत्तरीयं करोति 'मित्रस्य' इत्यनेन मन्त्रेण । असाविति संबुद्ध्या कुमारस्य नामग्रहणम् । अत्राप्यथशब्दः पूर्ववद्द्रव्य( ? व्या )-नित्यत्वाय । तेन वास उत्तरीयं स्यात् । वक्ष्यति च धर्मेषु– 'क्षत्त्रवृद्धिमिच्छन् वस्त्राण्येव वसीत' इति । अभावायास्य पुनरुपनयन इत्येकेषाम् । पूर्वोपात्तमेव स्यात् । मातृवृ.

( २ ) यदा वास एवोत्तरीयं तदा मन्त्रनिवृत्तिरजिनपदलोपो वा । यत्र यत्र मन्त्रेऽसौशब्दस्तत्र संबुद्ध्यन्तं संस्कार्यस्य शर्मान्तं व्यावहारिकं नाम ग्राह्यम् ।
संर. २०४

**अथैनं परिददाति– 'परीममिन्द्र ब्रह्मणे महे श्रोत्राय दध्मस्यथैनं जरिमाणये ज्योक्श्रोत्रे**

**अधिजागरत्' इति ब्राह्मणम् । 'परीममिन्द्र ब्रह्मणे महे राष्ट्राय दध्मस्यथैनं जरिमाणये ज्योग्राष्ट्रे अधिजागरत्' इति राजन्यम् । 'परीममिन्द्र ब्रह्मणे महे पोषाय दध्मस्यथैनं जरिमाणये ज्योक्पोषेऽधिजागरत्' इति वैश्यम् ॥**

(१) अथैनं कुमारमिन्द्राय परिददाति । कथम् ? 'परीमम्' इत्येतैर्मन्त्रैरथा(?यथा)म्नातैर्ब्राह्मणादीन् । उक्त्वाऽऽरभ्य(? लभ्य) ब्रवीतीत्यर्थः । अत्रानियतत्वाय पुनरुपनयने अथशब्दः । बह्वृचानामप्युक्तम् '(अनिरुक्तं) परिदानम्' इति । एनमिति वैश्याधिकारनिवृत्त्यर्थम् । मातृद.

(२) ततः 'ॐ इन्द्राय त्वां परिददे' इति कुमारं ब्रूयात् । परिदेहीति कुमारः । अथाऽऽचार्यः 'ॐ परीममिन्द्र ब्रह्मणे महे श्रोत्राय दध्मसि । अथैनं जरिमाणये ज्योक्छ्रोत्रे अधिजागरत्' इति ब्राह्मणकुमारमिन्द्राय परिददाति । कुमारमालभ्य मन्त्रं ब्रवीतीत्यर्थः । उत्थाप्य संस्पृश्य मन्त्रवचनं परिदानमिति गृह्यकारिकाकृत् । श्रोत्रशब्दस्थाने राष्ट्रशब्दः क्षत्रियकुमारपरिदाने, पोषशब्दो वैश्यकुमारपरिदाने । सं. २०४

**तमपरेणाग्निमुदङ्मुखमुपवेश्य हुतोच्छेषणं प्राशयति– 'त्वयि मेधां त्वयि प्रजाम्' इत्येतैः संनतैः ॥**

(१) तं कुमारमपरेणाग्निमुदङ्मुखमुपवेश्य हुतशेषमाज्यं प्राशयति । 'त्वयि मेधाम्' इत्येतैर्मन्त्रैः संनतैः ऊहितैः । 'मयि मेधाम्' इत्येतेषां मयिशब्दानां स्थाने त्वयिशब्दान् कृत्वेत्यर्थः । त्रयाणामन्ते प्राशनम् । इति वाचनम् (?प्राशयतीतिवचनम्) आचार्यस्य मन्त्रप्रयोगार्थं वैश्याधिकारनिवृत्त्यर्थं च । मातृद.

(२) अथाग्रेणाग्निं कुमारं दक्षिणतो नीत्वाऽपरेणाग्निमुदङ्मुखमुपवेश्य 'ॐत्वयि मेधां त्वयि प्रजां त्वय्यग्निस्तेजो दधातु ॥ त्वयि मेधां त्वयि प्रजां त्वयीन्द्र इन्द्रियं दधातु ॥ त्वयि मेधां त्वयि प्रजां त्वयि सूर्यो भ्राजो दधातु ॥' इति त्रिभिर्हुतोच्छेषमाज्यं सर्वमर्धं वा सकृत्कुमारं प्राशयति । त्रयाणामन्ते प्राशनम् । यदा सर्वस्य प्राशनं तदा समपलाशसमिधामभ्याधानार्थं लौकिकाज्येनाभ्यञ्जनम् । परिष्यञ्जनप्रायश्चित्तहोमयोः कर्तव्यतायामन्यदाज्यं पूर्ववत्संस्कृत्य तेनोभयं कार्यम् । यदा त्वर्धस्य प्राशनं तदाऽवशिष्टेन तेनैवाभ्यञ्जनं परिष्यञ्जनप्रायश्चित्तहोमौ च । सं. २०४

**पृषदाज्यमेके प्राशयन्ति ॥**

(१) एतैर्मन्त्रैः । न हुतोच्छेषणम्, हुतोच्छेषणमेव वा दध्ना मिश्रयित्वा । मातृद.

(२) अथवा हुतोच्छेषमाज्यमल्पीयसि लौकिके दध्नि सर्वमर्धं वाऽऽनीयाऽऽलोड्नेन पृषद्गुणकं कृत्वा तत्प्राशयेदेतैरेव मन्त्रैः । हुतोच्छेषाज्येऽल्पं दध्यानीय पृषदाज्यं कर्तव्यमित्येवं तु न भवति, 'तृतीयमाज्यस्य दधन्यानीय' इति पृषद्गुणत्वार्थे पशुसूत्रे दृष्टस्य दध्यधिकरणकाज्यानयनविधेरेवात्र ग्रहीतुमुचितत्वात् । सं. २०४

**'योगे योगे तवस्तरम्, इममग्न आयुषे वर्चसे कृधि' इति द्वाभ्यां प्राश्नन्तं समीक्षते ॥**

'योगे योगे' 'इममग्ने' इत्येताभ्यां प्राश्नन्तं कुमारं समीक्षते । उभयत्र । मातृद.

**प्राशयन्त्येके ॥**

(१) एतेनाऽऽभ्यां मन्त्राभ्यां (प्राशनम्), न पूर्वैः । तत्र समीक्षणं न विद्यते । मातृद.

(२) अथवा हुतोच्छेषमाज्यं पृषदाज्यं वाऽऽभ्यां मन्त्राभ्यां प्राशयति । अस्मिन्पक्षे 'त्वयि मेधाम्' इति मन्त्रत्रयस्य समीक्षणस्य च लोपः । ततः कुमारः प्राशनाङ्गमाचमनं कुर्यात् । हुतोच्छेषाज्यनाशे प्राशनाभावः, प्राशनाभावादाचमनस्याप्यभावः । आज्यान्तरं तत्स्थान उपादाय तत् प्राशनीयमिति केचित् । सं. २०५

**आचान्तमुपस्पर्शयित्वाऽभिमन्त्रयते– 'शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् । पुत्रासो यत्र पितरो भवन्ति मा नो मध्यारीरिषताऽऽयुर्गन्तोः ॥' इति ॥**

आचान्तं कुमारमात्मानमुपस्पर्शयित्वा । उपस्पृश्यान्वारब्धवन्तं कृत्वेत्यर्थः । अभिमन्त्रयते 'शतम्'

इत्यनया । आचान्तमिति प्रागाचमनं मा भूदिति, प्राशनाङ्ग( त्व )ख्यापनार्थं वा शेषव्यापत्तौ प्राशनाभावेऽभावाय । मातृद्.

[1] '**आगन्ता समगन्महि प्रसमृत्युं युयोतन । अरिष्टाः संचरेमहि स्वस्ति चरतादिह स्वस्त्यागृहेभ्यः' इति प्रदक्षिणमग्निं परिक्रामन्तमभिमन्त्रयते ॥**

प्रदक्षिणमग्निं परिक्रामन्तं स्वयमासीनः 'आगन्ता' इत्यनेनाभिमन्त्रयते । प्रदक्षिणवचनं पुनरावृत्तिप्रतिषेधार्थम् । मातृद्.

**अथैनमभिव्याहारयति– 'ब्रह्मचर्यमागामुप मा नयस्व ब्रह्मचारी भवानि देवेन सवित्रा प्रसूतः' इति ॥**

अथैनं कुमारमाचार्यः अभिव्याहारयति वाचयति 'ब्रह्मचर्यम्' इत्येवम् । यत्र यत्राथशब्दस्य प्रयोजनं नोच्यते तत्र शास्त्रान्तरे क्रमान्तरदर्शनात् क्रमनियमार्थमित्यवगन्तव्यम् । एनमिति कुमारस्य प्रयोज्यकर्तृत्वाय । इतरथा व्याहारं करोति व्याहारयतीति कुमार एव मन्त्रं ब्रूयात् आचार्यसंबोधनार्थत्वात् । आचार्यो वाचयेत् । ऐकश्रुत्यं स्यात्, § अस्य संबोधनार्थत्वात् । मातृद्.

**तं पृच्छति– 'को नामासि' इति, 'असौ' इत्याचष्टे यथानामा भवति ॥**

तं पृच्छति तं कुमारमाचार्यः पृच्छति । किं नामधेयमित्यर्थः । नामेति निपातः प्रश्नप्रतिवचनयोर्वर्तते यथा 'का नामेयं नदी' इति ( प्रश्नः ) 'गङ्गा नाम' इति प्रतिवचनं च । ज्ञातेऽपि प्रश्नार्थः । स कुमारोऽसावित्यात्मानमाचष्टे । यादृशं नामास्येति यथानामा । यथानामाऽऽत्मेति भवति, यथोत्तरत्र 'नामनी गृह्णाति' इति वचनम्, द्वयोरपि नाम्नोराख्यानार्थम् । यथा 'देवदत्तः कार्तिकोऽस्मि' इति । मातृद्.

§ 'एकश्रुति दूरात्संबुद्धौ' (पा. सू. १।२।३३ ) इति पाणिनिस्मरणादित्यर्थः ।

(१) हिगृ. १९।२।१–८.

**'स्वस्ति देव सवितरहमनेनामुनोदृचमशीय' इति नामनी गृह्णाति ॥**

अथाऽऽचार्य आदित्यं 'स्वस्ति देव सवितरहम्' इत्यनेनाऽऽत्मशिष्यविषयमाशीरर्थं संबोधयन् 'अमुना' इत्यत्र तृतीयया कुमारस्य नामनी गृह्णाति व्यावहारिकं नाक्षत्रं च । वक्ष्यति हि 'नक्षत्रनाम द्वितीयं स्यात्' इति । यथा 'अनेन देवदत्तेन कार्तिकेनोदृचमशीय' इति । मातृद्.

**'शं नो देवीरभिष्टय आपो भवन्तु पीतये । शंयोरभिस्रवन्तु नः ॥' इत्युभौ मार्जयेते ॥**

'शं नः' इत्युभौ कुमाराचार्यौ मार्जयेते । उभयोर्मन्त्रः । पूर्वमेव शिक्षणमेवंजातीयकानां मन्त्राणाम्, वचनसामर्थ्यात् । यथा पत्न्या आस्थीयते स्वयाजमानमन्त्राणाम्, * शूद्रस्य च उदमन्थश्रपणादीनां दर्शनात् । मातृद्.

**अथास्य दक्षिणेन हस्तेन दक्षिणमंसमन्वारभ्य सव्येन सव्यं व्याहृतिभिः सावित्र्येति दक्षिणं बाहुमभ्यात्मन्नु( ? मु )पनयते– 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामुपनयेऽसौ' इति च ॥**

अथास्य कुमारस्य दक्षिणमंसं स्वेन दक्षिणेन हस्तेन तूष्णीमन्वारभ्य तथैव सव्येन हस्तेन सव्यमंसम्, व्याहृतिभिः 'तत्सवितुर्वरेण्यम्' इति सावित्र्या 'देवस्य त्वा' इत्यनेन च दक्षिणं कुमारस्य बाहुमभ्यात्मन्( ? त्मम् ) आत्मन आभिमुख्येनाऽऽनीय दक्षिणतः समासीन उपनयते समीपं नयति । नीत्वा संस्पर्शयतीत्यर्थः । अथवा स्वं दक्षिणं बाहुमभ्यात्मन्( ? त्मम् ) आभिमुख्येन कुमारमुपनयते समीपं नयति । अत्रासाविति संबुद्ध्या व्यावहारिकस्यैव ग्रहणम् । एवमुत्तरत्रापि । अथशब्द इदं प्रधानकर्म, अस्य विस्मरणे सर्वं कर्माऽऽवर्तेत इति ख्यापनार्थः । सावित्र्ये-

* सश्रौ. २३।४।१७,१८ इत्यत्र शूद्रकर्तृकं समन्त्रकमुदमन्थस्य कल्पनं श्रपणं प्रदानं च विहितम् ।

( ती )तिशब्दो मन्त्रपठितस्य ग्रहणार्थः, न यथोत्तरपाठस्तथेति । समुच्चयार्थ इत्यनेन चकारेण सिध्यति ( अन्तर्विषेरतन्त्रम् ? ) । केचिदाहुः— व्याहृतिभिः सावित्र्या चान्वारम्भणम्, सावित्रेणोपनयनमिति । प्रागुक्त एवाऽऽगमः । अपि च चकारस्यैवमनर्थकत्वं स्यात् ( अनेन दक्षिणं बाहुम् ? ) सावित्रस्य मन्त्रैक(देश ? )त्वात्तेन समुच्चयवचनानुपपत्तेः । मातृद.

**अथास्य दक्षिणेन हस्तेन दक्षिणं हस्तं साङ्गुष्ठं गृह्णाति— 'अग्निष्टे हस्तमग्रभीत्सोमस्ते हस्तमग्रभीत्सविता ते हस्तमग्रभीत्सरस्वती ते हस्तमग्रभीत्पूषा ते हस्तमग्रभीद्बृहस्पतिस्ते हस्तमग्रभीन्मित्रस्ते हस्तमग्रभीद्वरुणस्ते हस्तमग्रभीत्त्वष्टा ते हस्तमग्रभीद्धाता ते हस्तमग्रभीद्विष्णुस्ते हस्तमग्रभीत्प्रजापतिस्ते हस्तमग्रभीत्' इति ॥**

अथ अनन्तरं स्वेन दक्षिणेन हस्तेन कुमारस्य दक्षिणं हस्तं साङ्गुष्ठं गृह्णाति 'अग्निः' इत्येतैर्मन्त्रैः । मातृद.

**'सविता त्वाऽभिरक्षतु मित्रस्त्वमसि धर्मणाऽग्निराचार्यस्तव देवेन सवित्रा प्रसूतो बृहस्पतेर्ब्रह्मचारी भवासावपोऽशान समिध आधेहि कर्म कुरु मा दिवा स्वाप्सीः' इत्येनं संशास्ति ॥**

( १ ) 'सविता त्वा' इत्यनेन एनं कुमारं संशास्ति । 'अपोऽशान' इत्याचमनाद्युपलक्षणार्थम् । अश्नोत्यर्थे वा । अभिव्याप्तावश्नोतिः । 'समिध आधेहि' इति सायंप्रातरग्न्याधानाभिप्रायम् । कर्म कुरु । गुरुशुश्रूषाभिप्रायम् । मातृद.

( २ ) संशासनं शिक्षणम् । 'अपोऽशान' इत्याचमनाद्युपलक्षणम् । मूत्रोत्सर्गादौ निमित्ते शौचान्ते विधिनाऽऽचमनं कुरु । समिध आधेहि यावद्ब्रह्मचर्यं सायंप्रातः सायमेव वाऽग्निकार्यं कुरु । कर्म कुरु संध्योपासनादिकं गुरुशुश्रूषावेदाध्ययनादिकं च कर्म कुरु । मा दिवा स्वाप्सीः । दिवा निद्रां मा कुर्वित्यर्थः । बाढमिति कुमारोऽङ्गीकुर्यात् । संर. २०६

**[१]'अथास्य दक्षिणेन हस्तेन दक्षिणमंसमुपर्युपर्यन्ववमृश्य हृदयदेशमभिमृशति— 'मम हृदये हृदयं ते अस्तु मम चित्तं चित्तेनान्वेहि । मम वाचमेकमना जुषस्व बृहस्पतिस्त्वा नियुनक्तु मह्यम् ॥ मामेवानुसंरभस्व मयि चित्तानि सन्तु ते । मयि सामीच्यमस्तु ते मह्यं वाचं नियच्छतात् ॥' इति ॥**

स्वेन दक्षिणेन हस्तेनास्य कुमारस्य दक्षिणमंसमुपर्युपरि दक्षिणस्यांसस्योपरि सामीप्येन पृष्ठतः प्रवेश्य अन्ववमृश्य क्रमेणावाचीनमभिमृश्य हृदयदेशमभिमृशति 'मम हृदये' इत्यनेन । 'उपर्यादिषु त्रिषु' इति द्वितीया । सामीप्यादुपरिशब्दस्य द्विर्वचनम् । मातृद.

**[२]'प्राणानां ग्रन्थिरसि स मा विस्रसः' इति नाभिदेशम् ॥**

'प्राणानाम्' इति तथैव नाभिदेशमभिमृशति । मातृद.

**'भूर्भुवः सुवः सुप्रजाः प्रजया भूयासं सुवीरो वीरैः सुवर्चा वर्चसा सुपोषः पोषैः सुमेधा मेधया सुब्रह्मा ब्रह्मचारिभिः' इत्येनमभिमन्त्र्य 'भूरृक्षु त्वाऽग्नौ पृथिव्यां वाचि ब्रह्मणि ददेऽसौ भुवो यजुःषु त्वा वायावन्तरिक्षे प्राणे ब्रह्मणि ददेऽसौ सुवः सामसु त्वा सूर्ये दिवि चक्षुषि ब्रह्मणि ददेऽसाविष्टतस्ते प्रियोऽसान्यसावनलस्य ते प्रियोऽसान्यसाविदं वत्स्यावः प्राण आयुषि वत्स्यावः प्राण आयुषि वसासौ' इति च ॥**

'भूर्भुवः सुवः' इत्येनं कुमारमभिमन्त्र्य पुनः 'भूः' इत्यभिमन्त्रयते । चकारोऽभिमन्त्रणानुकर्षार्थः । मातृद.

---

(१) हिगृ. १९।२।९ ; संप्र. ४३० संरभस्व ( संधत्स्व ).

(२) हिगृ. १९।२।१०–१७.

**अथास्य दक्षिणेन हस्तेन दक्षिणं हस्तं साङ्गुष्ठं गृह्णाति 'अग्निरायुष्मान्' इति पञ्चभिः पर्यायैः ॥**

अथास्य कुमारस्य दक्षिणं हस्तं साङ्गुष्ठं गृह्णाति स्वेन हस्तेन 'अग्निः, सोमः, यज्ञः, ब्रह्म, देवाः' इति पञ्चभिः पर्यायैः। तत्र द्वितीयतृतीययोः 'आयुष्मान् तेन त्वा' इत्यादि। चतुर्थे 'आयुष्मत्तेन त्वा' इत्यादि। पञ्चमे 'आयुष्मन्तस्ते' इत्यादि। मातृद्त.

**'आयुष्टे विश्वतो दधत्' इति दक्षिणे कर्णे जपति ॥**

'आयुष्टे' इति कुमारस्य दक्षिणे कर्णे जपति। मातृद्त.

**'आयुर्दा अग्ने' इत्युत्तरे ॥**

'आयुर्दा अग्ने' इति तस्यैवोत्तरे कर्णे जपति। मातृद्त.

**'अग्नौ पृथिव्यां प्रतितिष्ठ वायावन्तरिक्षे सूर्ये दिवि यां स्वस्तिमग्निर्वायुरादित्यश्चन्द्रमा आपोऽनुसंचरन्ति तां स्वस्तिमनुसंचरासौ प्राणस्य ब्रह्मचार्यभूरसौ' इत्युभयत्रानुषजति ॥**

'अग्नौ' इत्युभयोः कर्णयोरनुषजति 'आयुष्टे' 'अग्नौ पृथिव्याम्' इति। मातृद्त.

**'मेधां त इन्द्रो ददातु मेधां देवी सरस्वती। मेधां ते अश्विनावुभावाधत्तां पुष्करस्रजौ॥' इति तस्य मुखेन मुखं संनिधाय जपति ॥**

तस्य कुमारस्य मुखेन मुखं संनिधाय जपति। मातृद्त.

**अथैनं परिददाति– 'कषकाय त्वा परिददाम्यन्तकाय त्वा परिददाम्यघोराय त्वा परिददामि गदाय त्वा परिददामि यमाय त्वा परिददामि मखाय त्वा परिददामि वशिन्यै त्वा परिददामि पृथिव्यै त्वा सवैश्वानरायै परिददाम्यद्भ्यस्त्वा परिददाम्योषधीभ्यस्त्वा परिददामि वनस्पतिभ्यस्त्वा परिददामि द्यावापृथिवीभ्यां त्वा परिददामि सुभूताय त्वा परिददामि ब्रह्मवर्चसाय त्वा परिददामि विश्वेभ्यस्त्वा देवेभ्यः परिददामि सर्वेभ्यस्त्वा भूतेभ्यः परिददामि सर्वाभ्यस्त्वा देवताभ्यः परिददामि' इति ॥**

अथ अनन्तरम् एनं कुमारं देवताभ्यः पूर्ववत्परिददाति। कथम्? 'कषकाय त्वा परिददामि' इत्येतैर्मन्त्रैः। तत्प्रोक्तमेवाथशब्दस्य प्रयोजनम्। मातृद्त.

**[1]अत्र सावित्रीं वाचयति यदि पुरस्तादुपेतो भवति ॥**

(१) अत्र अस्मिन्काले परिदानानन्तरं सावित्रीं वाचयति। उपनेयः पुरस्तात् उपेतः आचार्यमुपगतः उपनीतः यदि भवति। प्रायश्चित्तार्थे पुनरुपनयनमि-(? न इ)त्यर्थः। कस्मात्? चरितव्रतत्वात्। अत्रेति वचनं त्र्यहे पर्यवेतेऽस्मिन्नेव काले सावित्रीवाचनार्थम्। मातृद्त.

(२) यदि पुनरुपनयनं तदा अत्र सावित्रीवाचनं कृत्वा सप्तपलाशसमिद्धोमादिकं कर्म कार्यम्, नात्राक्षारलवणाशनादिव्रतम्, चरितत्वात्। संर. २०८

**[2]यद्यनुपेतस्त्र्यहे पर्यवेते ॥**

यदि पुरस्तादनुपनीतः स्यात् त्र्यहे पर्यवेते अतिक्रान्ते सावित्रीं वाचयति। मातृद्त.

**[3]सद्यः पौष्करसादिः ॥**

(१) कुतः? व्रतचरणार्थम्। वक्ष्यति हि व्रतचर्यम् 'त्र्यहव्रतं चरति' इत्यादि। पुष्करे अन्तरिक्षे सीदतीति पुष्करसत् आकाशगमनः। अनवकाशे निश्छाये सीदतीति वा। पद्मस्य वा समीपे पुष्करिणीतीरे सीदतीति पुष्करसदृषिः। तस्यापत्यं पौष्करसादिः। पुष्करसादिरित्यपपाठः। वक्ष्यति धर्मेषु 'तथा काष्ठपौष्कर-

---

(१) हिगृ. १९।२।१८; संको. १५६; बाल. १।१४ पृ. ५७.

(२) हिगृ. १९।२।१९; संको. १५६ अशुद्धिबहुलो ग्रन्थः; बाल. १।१४ पृ. ५७.

(३) हिगृ. १९।२।२०; संर. २०८.

सादिः ' ( हिध. २६।७।१७ ) इति । स आचार्यो नवीनस्यापि सद्यः सावित्रीवाचनमिच्छति । कस्मात् ? सद्य एवाऽऽरम्य प्राग्व्रतचर्यापरिसमाप्तेः शुक्रियाणामध्ययनदर्शनात् । ' तत्रा( ? अत्रा )ऽऽह ' इति वक्तव्ये सद्य इति वचनं नास्मिन्काले तत्पक्षे वाचनमिति । किं तर्हि ? ' त्र्यहव्रतं चरति ' इत्यत्र व्रतमुपेत्य, तथा शुक्रियेषु दृष्टत्वादनारम्य व्रतमध्ययनस्यानुपपन्नत्वात् । मातृद्व.

( २ ) प्रथमोपनयने तु परिदानानन्तरं सप्तपलाशसमिद्धोमादित्रिवृदन्नहोमान्तं वक्ष्यमाणरीत्या कृत्वा त्र्यहव्रतमक्षारलवणाशनादिकं वक्ष्यमाणरीत्या देवतोपस्थानपूर्वकं कुमारेण कारयित्वा चतुर्थदिवसे प्रातः सावित्रीवाचनं चतुर्थदिवसीयत्रिवृदन्नहोमादिकं सर्वं क्रमेण समापयेदित्येकं मतम् । सद्यः सावित्रीवाचनमिति पौष्करसादिमतम् , एतन्मतेऽपि त्र्यहव्रतं भवत्येव, ' सद्यः पौष्करसादिः ' इत्यस्मिन्सूत्रे ' प्राग्व्रतचर्यापरिसमाप्तेः शुक्रियाणामध्ययनदर्शनात् , व्रतमनारम्याध्ययनस्यानुपपन्नत्वात् ' इति मातृदत्तोक्तेः । संर. २०८

**'अपरेणाग्निमुदगग्रं कूर्चं निधाय तस्मिन्प्राङ्मुख उपविशति– ' राष्ट्रभृदस्याचार्यासन्दी मा त्वद्योषम् ' इति ॥**

कथं वाचयतीत्युच्यते– अपरेणेति । अपरेणाग्निं पूर्वप्रयुक्तं कूर्चमुदगग्रं निधाय तस्मिन्नाचार्यः प्राङ्मुख उपविशति ' राष्ट्रभृदसि ' इत्यनेन । मातृद्व.

**आदित्यायाञ्जलिं कृत्वाऽऽचार्यायोपसंगृह्य दक्षिणतः कुमार उपविश्य ' अधीहि भोः ' इत्युक्त्वाऽथाऽऽह– ' सावित्रीं भो अनुब्रूहि ' इति ॥**

अथ कुमार आदित्याय तूष्णीं नमस्काराञ्जलिं कृत्वा आचार्यायोपसंगृह्य । तादर्थ्ये चतुर्थी । यथाशास्त्रमुपसंगृह्येत्यर्थः । दक्षिणत आचार्यस्योपविश्य ' अधीहि भोः ' इत्याचार्यमुक्त्वाऽनन्तरमेवाऽऽह ' सावित्रीं ( भो ) अनुब्रूहि ' इति । उभयमेकश्रुत्या । तत्राधीहि इत्यध्यापय वेदमित्यर्थः । भोः वत्सल अनुकम्पक । ' सावित्रीं भो अनुब्रूहि ' इति सावित्रीमनन्तरमेव ब्रूहीत्यर्थः । उभयोरध्येषणमन्त्रयोः पृथग्वचनं संधानप्रतिषेधार्थम् । अथेति नानार्थत्वख्यापनार्थम् । आद्यः सर्ववेदार्थः , द्वितीयः सावित्र्यर्थ इति । अत एव च परं गुरुकुले ( ? अगुरुकुले ) वासं प्रतिषेत्स्यति ' न ब्रह्मचारिणो विद्यार्थस्य परोपवासोऽस्ति ' ( हिध. २६।१।५० ) इति । मातृद्व.

**' गणानां त्वा गणपतिं हवामहे ' इत्येनमभिमन्त्र्याथास्मै पच्छोऽग्रेऽन्वाहाथार्धर्चशोऽथ संततामु– ' भूस्तत्सवितुर्वरेण्यम् । भुवो भर्गो देवस्य धीमहि । सुवर्धियो यो नः प्रचोदयात् ॥ भूर्भुवस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । सुवर्धियो यो नः प्रचोदयात् ॥ भूर्भुवः सुवस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॥ ' इति ॥**

' गणानां त्वा ' इत्यनया एनं कुमारमभिमन्त्र्यास्मै कुमाराय अग्रे प्रथमं पच्छः पादं पादं कृत्वा सावित्रीमन्वाह । ततोऽनन्तरम् अर्धर्चशः अर्धर्चं कृत्वा । ततः संततां कृत्स्नां संधाय । संधानं कथम् ? ' भूस्तत् ' इत्येवं प्रथमम् , 'भूर्भुवस्तत् ' इत्येवं द्वितीयम् , 'भूर्भुवः सुवस्तत्' इत्येवं तृतीयम् । एनमिति कुमाराभिमन्त्रणार्थम् , लिङ्गाद्ब्रह्मणस्पतेर्मा भूदिति । अत्र ब्रह्मणः वेदस्य पात्र(? तृ)त्वात्पालयितृत्वात् कुमार एव ब्रह्मणस्पतिरभिमतः । इतराणि प्रथमं भुव इत्येनं( ? त्येवमादीनि ) पदानि यथासंभवेन योज्यानि । अथेति वचनमनन्तरं क्रियमाणेन सावित्रीवाचनेन च पारगः सावित्रीवाचनं चोभयकृतमिति ख्यापनार्थम् ( ? ) । तथा च वक्ष्यति– ' सर्वेभ्यो वेदेभ्यः सावित्र्यनूच्यत इति हि ब्राह्मणम् ' ( हिध. २६।१।१० ) इति । अस्मै इति सावित्री कुमाराय प्रदीयत इति ख्यापनार्थम् । अतस्तेनापि सा वाच्या, न श्रवणमात्रम् । अत एवोक्तं ' सावित्रीं वाचयति ' इति । अग्रे पच्छ इति वचनमेवं संततमुक्त्वा तदशक्तौ यथाशक्ति वाचयेदिति । बह्वृचानामप्युक्तं

(१) हिगृ. १९।२।२१–२४.

'यथाशक्ति वाचयित्वा' इति। अथ पाठः किमर्थः? ऋक्पादादार्धादिषु व्याहृतिविहरणार्थः। एवमपि तृतीये नार्थः, विहरणाभावात्। अर्थवत्त्वेव, उभयानां क्रमार्थत्वात्प्राधान्यख्यापनार्थत्वाच्च। तेन संध्योपासनादिषु तृतीय एव पाठो ग्राह्यः। इह 'सावित्रीं वाचयति' इत्युक्त्वा व्याहृतीरपि पठन् ज्ञापयति– क्वचित्सावित्रीग्रहणे व्याहृतयोऽपि गृह्यन्ते। तेन 'सावित्र्या समित्सहस्रमादध्यात्' इति सव्याहृतिः सावित्री गृह्यते। मातृद्त.

**अथ सप्त पालाशीः समिध आर्द्रा अप्रच्छिन्नाग्राः प्रादेशमात्रीर्घृतान्वक्ता अभ्याधापयति॥**

अथेति कुमारकर्मान्तराधिकारार्थः। तेन समिदाधानादि प्रधानाङ्गमेव, न सावित्रीवाचनाङ्गम्। तस्मादनुपेतस्य परिदानानन्तरमेव कार्यम्। आर्द्राः अशुष्काः। अप्रच्छिन्नाग्राः $। प्रादेशमात्रीः प्रादेशायताः। प्रमाणनियमार्थमेतत्। घृतान्वक्ताः आज्येनाभ्यक्ताः। लौकिकमेव घृतम्, हुतोच्छेषणस्य उपयुक्तत्वात्। अवशेष्यं किंचिद्धुतोच्छेषणं वा। अभ्याधापयत्यग्नौ कुमारेण। कुमारो मन्त्रं ब्रूते, लिङ्गात्। आचार्यस्तं वाचयति, प्रयोजकत्वात्। एतदर्थोऽथशब्द इत्येके। मातृद्त.

[1] **'अग्नये समिधमाहार्षं बृहते जातवेदसे। यथा त्वमग्ने समिधा समिध्यस एवं मां मेधया प्रज्ञया प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा॥' इत्येकाम्॥**

कथम्? 'अग्नये' इति। 'अग्नये समिधम्' इत्येतेनैकां समिधमभ्याधापयति। मातृद्त.

[2] **'अग्नये समिधौ' इति द्वे॥**

'अग्नये समिधौ' इत्येतेन द्वे समिधावभ्याधापयति। मातृद्त.

**'अग्नये समिधः' इति चतस्रः॥ †**

(१) 'अग्नये समिधः' इति चतस्रः समिधोऽभ्याधापयति। मातृद्त.

(२) परिदानानन्तरं कुमारेणाऽऽसादितसप्तपलाशसमिधां घृतेनाभ्यञ्जनं कारयित्वोपनयनाग्नावभ्याधापयति मन्त्रान् वाचयति च। कुमारः– 'ॐ अग्नये समिधमाहार्षं बृहते जातवेदसे। यथा त्वमग्ने समिधा समिध्यस एवं मां मेधया प्रज्ञया प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा॥' (इति) एकां समिधं घृतेनाभ्यक्तामभ्यादधाति। 'अग्नय इदम्' इति त्यागं कुर्यात्। तथैव द्वे द्वितीये। तथैवावशिष्टाश्चतस्रस्तृतीये। 'अग्नये समिधावाहार्षम्' इति द्वितीये मन्त्रसंनामः। 'अग्नये समिध आहार्षम्' इति तृतीये। त्यागस्तु पूर्ववदेवोभयत्रापि। मन्त्रान्तर्गतद्वितीयसमिच्छब्दे तु नोहः, तस्येन्धनमात्राभिधायित्वात्संनमनावचनाच्च। केचिदभ्याधानात्पूर्वं संकल्पमपि कुर्वन्ति। तन्न, सर्वेष्वङ्गभूतेषु कर्मस्वतिप्रसङ्गापत्तेः, 'समस्ते क्रतावर्थं श्रूयमाणं यजमानः कामयते, ‡ यानि तु कामयतिः श्रावयति' (सश्रौ. ६।१।२,३) इति सूत्रेण साक्षात्कमिधातुसमभिव्याहारे एव संकल्पकर्तव्यतोक्तेश्च। न ह्यत्र कमिधातुः श्रूयते। एवमन्यत्रापि। संर. २०८

**अथ देवता उपतिष्ठते॥**

अथेत्यनन्तरेण ($ अ)तुल्यत्वाय। तेनोपनयनाङ्गम्, न सर्वदर्विहोमार्थम्। मातृद्त.

---

$ अत्र व्याख्यानग्रन्थस्त्रुटित इति भाति।

(१) हिगृ. १९।२।२५ (नान्नाद्ये०); संर. २०८.

(२) हिगृ. १९।२।२६–२७, ३०–३९.

† अतः परं परिषेचनम्।

‡ अस्य 'तथा नित्येषु यज्ञाङ्गेषु' इत्यादिः। अत्र इच्छापरपर्यायस्य कामस्य विधेयत्वानुपपत्तेः संकल्पवाक्यैकदेशस्य वाचिककामाभिनयस्य विधेयत्वमिति, तथा कामयतिः शब्दवृत्त्याऽर्थापत्त्या चेच्छां बोधयतां शब्दानामुपलक्षणमिति च महादेवभट्टेन वैजयन्त्यामुक्तम्।

$ अत्रोपपन्नत्वात् 'अतुल्यत्वाय' इति शुद्धिः कल्प्यते। तथाहि–अस्मादुपस्थानादनन्तरपूर्वम् 'अथ परिषिञ्चति'

**'अग्ने व्रतपते व्रतं चरिष्यामि' इत्यग्निम्, 'वायो व्रतपते' इति वायुम्, 'आदित्य व्रतपते' इत्यादित्यम् 'व्रतानां व्रतपते' इति व्रतपतिम्॥**

का देवता उपस्थेयाः कैश्च मन्त्रैरित्युच्यते– अग्न इति। औपनायनिकोऽग्निः प्रकृताहानेरर्थाद्व्रतपतिः। केचित्पार्थिवमग्निं मन्यन्ते व्रतपतिमेनमग्निम्। 'उपतिष्ठते' इत्येवं सिद्धे देवताग्रहणं देवतोपस्थानमेवैतैर्मन्त्रैः कार्यम्, नान्यदिति ख्यापनार्थम्। तेनैवं विसर्गेऽप्येतैर्मन्त्रैरुपस्थेयम्, नोच्चारणमात्रम्, 'व्रतं चरिष्यामि' इति लिङ्गात् एतद्व्रतोपायनम्। ब्रह्मचर्यव्रतं चैतत्, समावर्तने विसर्गदर्शनात्। तस्मात्तदत्रैव। परिमाणं तु बुद्ध्या संकल्पनीयम्– 'अष्टाचत्वारिंशद्वर्षाणि, षट्त्रिंशतम्, चतुर्विंशतिम्, द्वादश, यावद्ग्रहणं वा चरिष्यामि' इति। मातृद्.

**अत्र गुरवे वरं ददाति॥**

अत्र गुरवे आचार्याय वरं ददाति कुमारः। गुरुग्रहणं ब्रह्मनिवृत्त्यर्थम्। पितुरपि स्याद्वरदानम्। उक्तो वरः। अत्रेति वचनमस्मिन्नेव व्रतग्रहणे वरदानम्, नान्यत्रेति ख्यापनार्थम्। एतेन ज्ञायते सर्वेषु व्रतग्रहणेषु देवतोपस्थानं भवतीति। अतः 'त्र्यहव्रतं चरति' इत्यत्र काण्डोपाकरणे भवत्येवोपस्थानम्, विसर्गे चैतत्संबन्धो भवत्येव। मातृद्.

**'उदायुषा' इत्युत्थाप्य 'सूर्यैष ते पुत्रस्तं ते परिददामि' इति§। 'तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्। पश्येम शरदः शतं जीवेम शरदः शतं नन्दाम शरदः शतं मोदाम शरदः शतं भवाम शरदः शतं शृणवाम शरदः शतं प्रब्रवाम शरदः शतमजीताः स्याम शरदः शतं ज्योक् च सूर्यं दृशे॥' इत्यादित्यमुपतिष्ठते॥**

'उदायुषा' इत्यनेनोत्थाप्य कुमारम्। कुमारो मन्त्रस्य वक्ता, लिङ्गात्। आचार्यो वाचयिता, हेतुत्वात्। अथाभ्युत्थाप्य तं 'सूर्यैष ते' इति सूर्याय परिदाय 'तच्चक्षुः' इत्यादित्यमुपतिष्ठते आचार्य एव, समानकर्तृकत्वात्परिदानोत्थापनाभ्याम्। केचित्प्रत्यक्ष(? गा)शीष्ट्वान्मन्त्रस्य कुमारमेवोपस्थातारं मन्यन्ते। उपतिष्ठते च। हेतुः कर्तरि(? उपतिष्ठतेश्च हेतुकर्तरि) कर्तृव्यपदेशः, यथा 'पञ्चभिर्हलैः कृषति' इति। तेषामाचार्यो वाचयिता, कुमार उपस्थाता। आचार्यकर्तृत्वेऽपि 'यां कांचिदृत्विगाशिषमाशास्ते यजमानस्य सा' इति आशीर्वचनमुपपद्यत एव। इदमपि परिदानमनित्यं पुनरुपनयने बह्वृचानाम्। मातृद्.

**'अग्निष्ट आयुः प्रतरां कृणोत्वग्निष्टे पुष्टिं दधात्विन्द्रो मरुद्भिरिह ते दधात्वादित्यस्ते वसुभिरादधातु' इति दण्डं प्रदायामत्रं प्रयच्छति॥**

'अग्निष्टे' इत्यनेन कुमाराय दण्डं प्रदाय अमत्रं मृन्मयं भाजनं तूष्णीं प्रयच्छति। मातृद्.

**अथाऽऽह– 'भिक्षाचर्यं चर' इति॥**

अथैनं कुमारमाह– 'भिक्षाचर्यं चर' इति। इहाथशब्दः(? ब्दात्) पुनरुपनयने भिक्षाचर्याभावात् तदर्थत्वाच्च दण्डामत्रदानं निवर्तते। अथशब्दो भिक्षाचर्यस्य दण्डामत्रदानसंबन्धार्थः। तेन भिक्षाचर्यधर्मे(? धर्मिणि) निवर्तमाने तयोरपि निवृत्तिः। मातृद्.

**स मातरमेवाग्रे भिक्षेत॥**

स कुमारो मातरमेवाग्रे प्रथमं भिक्षेत। एवकारकरणमन्यप्रसङ्गास्तित्वख्यापनार्थम्। तेन मातुरभावे मातृस्थानीयामप्रत्याख्यायिनीं भिक्षेत। नास्ति प्रायश्चित्तम्। बह्वृचानां विशेषेणोक्तम्– 'अप्रत्याख्यायिनमग्रे भिक्षेताप्रत्याख्यायिनीं वा' इति। अग्रवचनग्रहणं किमर्थम्?

---

इति परिषेचनमुक्तम्। तत्तु सर्वदार्विहोमाणामङ्गम्। व्याख्यातं तथा तत्र मातृदत्तेन– 'अथशब्दः पूर्वैस्तुल्यत्वख्यापनार्थः। तेन सर्वदार्विहोमाणामिदमङ्गम्, नोपनयनस्यैव' इति। तेनोपनयनमात्राङ्गस्योपस्थानस्य नानन्तरपूर्वेण तुल्यत्वम्, अपि त्वतुल्यत्वमेव।

§ वाक्यस्य सापेक्षत्वात् 'समानकर्तृकत्वात्परिदानोत्थापनाभ्याम्' इति मातृदत्तोक्तेश्चात्रत्यं 'परिदाय' इति पदमुच्छिन्नमिति भाति।

सायंप्रातरपि सति संभवे मातुरेवाग्रे भिक्षणार्थम् । वक्ष्यति च धर्मेषु भिक्षणविधानम्– 'भवत्पूर्वया ब्राह्मणः' ( हिध. २६।१।१०३ ) इत्यादि । तस्मात् 'तथेति( ? भवति ) भिक्षां देहि' इति ब्राह्मणो भिक्षेत, यथोक्तमितरावपीति । मातृद.

**अतोऽन्येषु रातिकुलेषु ॥**

अनन्तरं मातुर्भिक्षणात् अन्येषु ज्ञातिप्रभृतिषु भिक्षेत । मातृद.

**आहृत्य 'भैक्षम्' इति गुरवे प्राह । तत् 'सुभैक्षम्' इत्युक्त्वा ॥**

भिक्षितं द्रव्यमाहृत्य आचार्याय 'भैक्षम्' इति प्राह । 'भैक्षमिदं भोः' इत्यस्य प्रतीकग्रहणमित्येके । यावदुक्तमित्यपरे, वचनसामर्थ्यात् । इह तदाचार्यः प्रतिगृह्णाति, दृष्टार्थत्वात् । बौधायनीयेऽप्युक्तम्– 'तत्सुभैक्षमित्युक्त्वा प्रतिगृह्णाति' इति । मातृद.

**'यस्य ते प्रथमवास्यं हरामस्तं त्वा विश्वे अवन्तु देवाः । तं त्वा भ्रातरः सुहृदो वर्धमानमनुजायन्तां बहवः सुजातम् ॥' इति प्रथमवास्यमस्याऽऽदत्ते ॥**

'यस्य ते' इत्यनेनास्य कुमारस्य प्रथममाच्छाद्यत इति प्रथमवास्यं पूर्वं निहितं वास इत्यर्थः । तदाचार्य आदायाऽऽत्मसात्करोतीत्यर्थः । केचित्– प्रथमं वासः निहितं वासः, तत्र भवं तेनोपहितं प्रथमवास्यम्, भिक्षामात्रवर्णकस्यानुकर्षणात् । 'भवे छन्दसि' ( पा. सू. ४।४।११० ) इति यत् । तदाचार्य आदाय शिष्यायैव वासः प्रयच्छतीत्यत एव गम्यते ततो( ? तदु )पनिधाय भिक्षा चरितव्येति । अन्ये– प्रथमं वास्यते निधीयतेऽत्र इति प्रथमवास्यं मातुर्लब्धं भैक्षद्रव्यम्, तदादत्ते । अथ भैक्षस्य भैक्षं कुमाराय प्रयच्छति स पित्रे तद्ददातीति । किमत्रार्थवत्त्वं पूर्वनिहितं वास इति ? दृष्टं हि बौधायनीये ऽप्यहे पर्यवेते तेन मन्त्रेण तस्याऽऽदानम् । मातृद.

**'उपस्थितेऽन्न ओदनस्यापूपानां सक्तूनामिति समवदाय सर्पिर्मिश्रस्य जुहोति– 'अग्नये स्वाहा, सोमाय स्वाहा, अग्नयेऽन्नादाय स्वाहा, अग्नयेऽन्नपतये स्वाहा, प्रजापतये स्वाहा, विश्वेभ्यो देवेभ्यः स्वाहा, सर्वाभ्यो देवताभ्यः स्वाहा, अग्नये स्विष्टकृते स्वाहा' इति ॥**

( १ ) उपस्थिते आगते आनीतेऽन्ने ब्राह्मणपरिवेषणार्थम् ओदनस्यापूपानां सक्तूनामक्षारलवणानां त्रयाणां समवदाय यावदर्थमवरं मिश्रयित्वेत्यर्थः । सर्पिर्मिश्रस्य सर्वमाचार्यस्य पुनर्मिश्रीकृतस्य दर्व्योपघातं जुहोति 'अग्नये स्वाहा' इत्येतैर्मन्त्रैः । नात्रावदानधर्मः, अस्याऽऽपूर्विकत्वात् । उपस्थितवचनं किमर्थम् ? ओदनस्यापूपानां सक्तूनामितीत्युच्यमानेऽत्रैव संस्कारः प्राप्नोति । बहिःसंस्कृतस्याऽऽनयनार्थमिदम् । एवमपि उपस्थितानामोदनापूपसक्तूनां समवदायेत्येतावता सिध्यति, किमन्नग्रहणेन ? एवं तर्हि सव्यञ्जनार्थमन्नग्रहणम् । तेन ज्ञायते भोजनार्थमप्येतदुपस्थितम्, न होमार्थमेवेति । अनेन ज्ञायते भोजनं हुतशेषस्यैव, नान्यस्येति । आपूर्विकोऽयं दर्विहोमः । अस्य प्रयोगः– परिस्तीर्य पात्रप्रयोजनादिब्रह्मप्रणीतावर्जमाज्यसंस्कारान्तं कृत्वा बहिरेव संस्कृतमन्नमानीय तस्य परोक्षसंस्कृतत्वेनाग्नावन्नत्रयमधिश्रित्याद्भिः प्रोक्ष्याभिघार्योद्वास्य होमार्थमवखण्ड्यावखण्ड्यैकस्मिन्पात्रे प्रक्षिप्याऽऽज्यमासिच्य मिश्रयित्वाऽथ परिषेकं कृत्वाऽष्टौ समिध आधाय दर्व्योपहत्यैता अष्टावाहुतीर्जुहोति । अन्त्यां पूर्वाभिरसंसक्तामुत्तरार्धपूर्वार्धे जुहुयात्स्विष्टकृतम् । तस्योपरि परिषेकं करोति । सर्पिःशब्दादाज्ये संस्कारो नास्ति । केचित्पूर्वैकदेशमिमं मन्यन्ते । तेषां पूर्वकृतानामेव द्रव्याणां संस्काराः परिषेकास्ते च पुनः कार्याश्चापवृत्तत्वात् । मातृद.

( २ ) ओदनादीनां द्वंद्वसमासेन निर्देशे ओदनादीनां कदाचित्सहितानामपि पात्रान्तरे ग्रहणं स्यात्,

(१) हिगृ. १९।२।४०, ४३–४४ ; संर. १९४–१९५.

तन्मा भूदित्येतदर्थमसमासेन निर्देशः। अपूपानामिति बहुवचनात्त्रिप्रभृतयोऽपूपा ग्राह्याः। सक्तुशब्दस्तु बहुवचनान्त एव पिष्टशब्दवत्, यथा 'सक्तुभिर्जुहोति' इत्यादौ। ओदनादीन्यक्षारलवणानि ग्राह्याणि, 'न क्षारलवणहोमो विद्यते' (हिध. २७।३।४८) इति धर्मसूत्रे निषेधात्। इतिशब्दोऽवधारणार्थः— ओदनस्यापूपानां सक्तूनामेव समवदायेति। तेन ¶हविष्यभूतव्यञ्जनव्यावृत्तिः। ओदनादीनामेकदेशं समवदाय तेन सर्पिर्मिश्रितेन जुहोति। न त्रयाणां सर्वेषामेव मिश्रणम्।

$ संर. १९५

**एतेषामेवान्नानां समवदाय प्रागग्रेषु दर्भेषु बलिं करोति— 'वास्तुपतये स्वाहा' इति ॥**

(१) एतेषामेवौदनादीनामन्नानां समवदाय मिश्रीकृत्य प्रागग्रेषु दर्भेषु 'वास्तुपतये स्वाहा' इति बलिं करोति। एतेषामिति वचनं व्यञ्जननिवृत्त्यर्थम्। एवकारकरणं त्रिवृतोऽन्यत्र महाराबदर्व्यादौ मा भूदिति। बलिं करोतीति वचनात्प्रथममवोक्ष्य न्युप्य बलिं ततः परिषिञ्चति। मातृद.

(२) एतेषामिति वचनं बलिकरणे तान्येव द्रव्याणीति। एवकारो हविष्यव्यञ्जनस्यापि व्यावृत्त्यर्थः। समवदायेतिवचनात् पुनः पृथक्पृथग्गृहीत्वाऽवखण्डय मिश्रयित्वा तेन प्रागग्रेषु दर्भेषु बलिं करोति। प्रागग्रवचनमुदगग्रताव्यावृत्त्यर्थम्। नात्र सर्पिर्मिश्रणम्, अवचनात्। बलिं करोतीतिवचनात् प्रथममवोक्ष्य बलिं तत्र न्युप्य तं परिषिञ्चति। संर. १९६

**त्रिवृताऽन्नेन ब्राह्मणान्परिविष्य 'पुण्याहं स्वस्त्ययनमृद्धिम्' इति वाचयित्वा ॥**

¶ पूर्वम् 'अन्नग्रहणं सव्यञ्जनार्थम्' इति यदुक्तं तद्भोजनविषयम्, इयं व्यञ्जनव्यावृत्युक्तिर्होमविषयेति न विरोधः।

$ शेषं मातृदत्तगतम्।

**[२]त्र्यहव्रतं चरति ॥**

अनेनैव त्रिवृता त्रिप्रकारेणौदनादिना तेन सव्यञ्जनेन ब्राह्मणान् परिविष्य पुण्याहादीनि वाचयित्वा। त्रिप्रकारत्वात्तस्य प्रकृतत्वादन्नेनेत्येव सिद्धे त्रिवृतेति वचनमन्यत्र त्रिवृद्ग्रहणे एषां संप्रत्ययार्थम्, यथा 'तथैव त्रिवृताऽन्नेन' (हिगृ. १९।२।४९) इति। इहापि देवतोपस्थानं कर्तव्यमित्येकेषाम्। मातृद.

**[२]अक्षारमलवणमशमीधान्यं भुञ्जानोऽधःशाय्यमृन्मयपाय्यशूद्रोच्छिष्ट्यमधुमांसाश्यदिवास्वाप्युभौ कालौ भिक्षाचर्यमुदकुम्भमित्याहरन्नहरहः काष्ठकलापमुभौ कालौ सायंसायं वा समिधोऽभ्यादधाति ॥**

(१) कानि पुनर्व्रतानीत्युच्यते— अक्षारमिति। गुडादिरिक्षुविकारः क्षारः, ततोऽन्यत् अक्षारम्। समुद्रसैन्धवादीनि लवणानि, ततोऽन्यत् अलवणम्। शम्याः कोशे यत्पच्यते तत् शमीधान्यं मुद्गमाषादि, ततोऽन्यत् अशमीधान्यम्। एवंप्रकारमन्नं भुञ्जानः। अधः भूमौ शयानः। मृन्मयेन पिबतीति मृन्मयपायी। न मृन्मयपायी अमृन्मयपायी। पानं भोजनोपलक्षणार्थम्। शरावादावभुञ्जान इत्यर्थः। उच्छिष्टं भुक्तशेषः। तदस्यास्तीति उच्छिष्टी। तादृशो न भवति शूद्रे उच्छिष्टी। अदाता शूद्रायोच्छिष्टमित्यर्थः। मधु च मांसं च मधुमांसम्, तदश्नातीति मधुमांसाशी। न मधुमांसाशी अमधुमांसाशी। दिवा स्वपितीति दिवास्वापी। न दिवास्वापी अदिवास्वापी। उभौ कालौ सायं प्रातः। भिक्षया याचनेन चरितव्यं भिक्षाचरणद्रव्यमित्यर्थः। उदकुम्भः- (१म्भम्)। इतिशब्दः प्रकारार्थः। अन्यदपि उपकारकमाहरन्नाचार्याय अहरहः अहन्यहनि। काष्ठकलापः काष्ठ-

(१) हिगृ. १९।२।४५; संप्र. ४४३ हृत्र (हं त्र); संर. १९५.

(२) हिगृ. १९।२।४६; संप्र. ४४३ पाय्यशूद्रोच्छिष्टय (कांस्यशूद्रोच्छिष्ट); संर. २५८ (अक्षार... मित्याहरन्०).

समूहः। तमाहरन्। उभौ कालौ सायं प्रातः सायमेव वा समिधो वक्ष्यमाणा अभ्यादधाति। (सायं)साय-मितिवीप्सावचनमादिविकल्पार्थम्। आदित आरभ्य आ समावर्तनादेक एव पक्षो भवति। मातृद.

(२) अस्यार्थः– उभौ कालौ सायंप्रातः सायमेव वा समिधोऽभ्यादधाति, आसमावर्तनम्। 'अहरहः काष्ठकलापम्' इत्यतोऽहरहरित्यनुवर्तनीयम्। अन्यथा सायंसमिदाधानपक्ष एव वीप्साश्रवणादावृत्तिः स्यात्, उभौ कालावित्यस्मिन्पक्षे न स्यात्, वीप्साया अश्रवणात्। न चैवं सायमित्यत्र वीप्सावचनं व्यर्थमिति वाच्यम्, सर्वत्र यः प्रथमं प्रक्रान्तः पक्षः स एवाऽऽन्तं कार्य इति-परिभाषाज्ञापनार्थत्वात्। न च 'प्रक्रमात्तु नियम्यते' (सभौ. २।६।४५) इति वचनादेव सिद्धिः, तस्यानु-निर्वाप्यविषयत्वात्। अथवाऽहरहरिति नानुवर्तते। न चैवं सायमित्यत्रैव वीप्साश्रवणादावृत्तिः स्यात्, उभौ कालावित्यस्मिन्कल्पे न स्यात्, तस्या अश्रवणादिति वाच्यम्, अनुकल्पपक्षे वीप्सयाऽऽवृत्तौ सिद्धायां कैमुतिक-न्यायेन मुख्यकल्पेऽपि तत्सिद्धेः। अस्मिन्व्याख्याने परि-गृहीतपक्षः 'प्रक्रमात्तु नियम्यते' इत्येतेनैव सिध्यति। संर. २०८

**'पुरस्तात्परिषेचनात् 'यथा ह तद्वसवो गौर्यम्' इति प्रदक्षिणमग्निं परिमृज्य परिषिञ्चति यथा पुरस्तात्। व्याहृतिभिः समिधोऽभ्यादधा-त्येकैकशः समस्ताभिश्च 'एषा ते अग्ने समित्तया वर्धस्व चाऽऽ च प्यायस्व। वर्धिषीमहि च वयमा च प्यासिषीमहि स्वाहा॥ मेधां म इन्द्रो ददातु मेधां देवी सरस्वती। मेधां मे अश्विना-वुभावाधत्तां पुष्करस्रजौ स्वाहा॥ अप्सरासु च या मेधा गन्धर्वेषु च यन्मनः। दैवी मेधा मनुष्यजा सा मां मेधा सुरभिर्जुषतां स्वाहा॥ आ मां मेधा सुरभिर्विश्वरूपा हिरण्यवर्णा जगतीजगम्या। ऊर्जस्वती पयसा पिन्वमाना सा मां मेधा सुप्रतीका जुषन्तां स्वाहा॥' इति। तथैव परिमृज्य परिषिञ्चति यथा पुरस्तात्॥**

(१) हिगृ. १९।२।४७; संप्र. ४४३–४४४ 'एषा ते अग्ने ... सुप्रतीका जुषन्तां स्वाहा' इति (एषा त इति मेधां म इति अप्सरास्विति आ मां मेधेति मन्त्रैः स्वाहान्तैः); संर. २५८.

(१) कथमभ्यादधातीत्युच्यते– पुरस्तादिति। अनया प्रदक्षिणमग्न्यायतनं परिमृज्य सोदकेन पाणिना संमृज्य परिषिञ्चति यथा पुरस्तात्तथा। आद्योऽयं परिषेकः। उक्तक्रमादेव सिद्धे पुरस्तात्परिषेचनादिति वचनं प्राप्त-स्यैवात्र परिषेकस्य विधानम्, नाप्राप्तस्येति ख्यापनार्थम्। तेनाभ्यन्तरदीक्षायामप्याधानादौ परिषेकः सिद्धो भवति। यथा पुरस्तादिति प्रतिवचनं परिसंख्यानार्थम्। तेना-त्राग्न्यायतनसंस्कारपरिस्तरणवचनं विद्यते(? परिस्तर-णानि न विद्यन्ते)। व्याहृतिभिः एकैकया समस्ताभिश्च। 'एषा ते' इति चतुर्भिरष्टौ समिधोऽभ्यादधाति। तथैव 'यथा ह तत्' इति परिमृज्य परिषिञ्चति यथा पुर-स्तात्। अन्त्योऽयं परिषेकः। परिसंख्यानादेवे(? ख्याना-र्थमेवे)दमपि। अथवोभयोरिह वचनमवान्तरदीक्षायां तूष्णीं परिषेकार्थम्। श्रौतत्वात्तत्र स्मार्तविधयो न भवन्ति हि। मातृद.

(२) पुरस्तात्परिषेचनादिति वचनं सर्वेष्वपि श्रौतेषु दर्विहोमेष्वभ्यन्तरदीक्षायामाधानादौ च परिषेकार्थम्। अग्ने परिषिञ्चन्तीति वचनं परिमार्जनपरिषेकयोः संबन्ध-प्रदर्शनार्थम्। तेनानन्तरोक्तेषु कर्मस्वपि परिमार्जनमपि सिध्यति। पुरस्तात्परिषेचनादिति सिद्धवदनुवादादेव परि-षेकस्य समन्त्रत्वसिद्धौ यथा पुरस्तादिति वचनमत्रैव समन्त्रं परिषेकः, इतरत्र तु तूष्णीमित्येतदर्थं परिसंख्या-नार्थं च। तेनाग्न्यायतनसंस्कारपरिस्तरणानि न विद्यन्ते। पूर्वपरिषेकसंबन्धादेवोत्तरपरिषेके सिद्धे पुनर्वचनं समन्त्र-पूर्वपरिषेके एवायमुत्तरपरिषेकः, न त्वमन्त्रपूर्वपरिषेकेऽपि। तेनैतत्समिदाधानातिरिक्तेषु कर्मसु नोत्तरपरिषेकः। अथवा पुरस्तात्परिषेचनादिति सिद्धवदनुवाद उद्धननादितन्त्र-प्राप्त्यर्थः। अग्ने पुनः परिषिञ्चन्तीति वचनं पूर्वपरिषेक-स्यैव पूर्वतन्त्रावधित्वप्रदर्शनार्थम्। उत्तरत्र 'तथैव परि-मृज्य परिषिञ्चति यथा पुरस्तात्' इति वचनं परि-

संख्यानार्थम् । तेनेतरस्योत्तरतन्त्रस्य निवृत्तिः । अथवा पुरस्तात्परिषेचनादिति वचनं परिषेकसदृशान्यधिकरणसंस्कारकाणि कर्माण्यग्न्यायतनसंस्कारपरिस्तरणात्मकान्येवात्र भवन्ति, नान्यानीत्येतदर्थम् । अग्नें परिषिञ्चन्तीति वचनं परिषेकान्तान्येवाधिकरणसंस्कारकाणि कर्माणि स्युः, नोत्तराणीध्माधानादीनि तादृशानीत्येतदर्थम् । यथा पुरस्तादितिवचनस्य प्रयोजनं तु पूर्ववदेव । परिमार्जने प्रदक्षिणवचनमेकप्रयत्नेनैव परिमार्जनम्, न तु व्यवच्छेदेन तत्तद्दिक्षु परिमार्जनमिति ज्ञापनार्थम् । एकैकशः समस्ताभिश्चेत्युभयवचनादेवं ज्ञायते—केवलव्याहृतिग्रहणे व्यस्ताः समस्ता वा व्याहृतयः प्रत्येतव्याः, न तु व्यस्ताः समस्ताश्चेति । 'परिसमुह्य समिध आदध्यात्सायं प्रातर्यथोपदेशम्, सायमेवाग्निपूजेत्येके' (हिध. २६।१।१३५, १३६) इति धर्मसूत्रे वचनं परिषेकनिवृत्त्यर्थम् । तेन विहितप्रतिषिद्धत्वाद्विकल्पः ।

एतच्च प्रातःकालस्यातीतत्वात् अर्थात्सायमुपक्रम्याऽऽसमावर्तनात् अहरहरुभययोः कालयोः सायं सायमेव वा कार्यम् । न चोभयत्र क्रियापक्षे द्वितीयदिने प्रातरेवोपक्रमः कर्तव्यो वैश्वदेववदिति वाच्यम्, उपस्थितसायंकालपरित्यागे प्रमाणाभावात् वैश्वदेववत्प्रातरुपक्रमसाधकप्रमाणाभावाच्च । वैश्वदेवे तु 'ये भूताः प्रचरन्ति दिवानक्तम्' इति मन्त्रे प्रातःसायंकालवाचकयोर्दिवानक्तपदयोर्मध्ये दिवापदप्रथमोपादानमेव प्रातरुपक्रमे प्रमाणम् । न ह्यत्र तथा प्रमाणं लभ्यते । संर. २५९–२६०

[१]'**यत्ते अग्ने तेजः' इत्येतैर्मन्त्रैरुपतिष्ठते 'मयि मेधां मयि प्रजाम्' इति च ॥**

एवं समिध आधाय एतमग्निं 'यत्ते' इत्येतैर्मन्त्रैरुपतिष्ठते 'मयि मेधाम्' इत्येतैस्तिसृभिश्च । मातृद.

[२]**श्वोभूते पर्यवेते तथैव त्रिवृताऽन्नेन ब्राह्मणान् परिविष्य 'पुण्याहं स्वस्त्ययनमृद्धिम्' इति वाचयित्वा व्रतं विसृजते 'अग्ने व्रतपते व्रतमचारिषम्' इत्येतैः संनतैः ॥**

व्याख्यातानि व्रतानि । धर्मेऽप्युक्तप्रायाण्येतानि । तत्र क्षारलवणप्रतिषेधोऽयं त्र्यहाद्युक्त्वाऽऽचार्यकुलवासिनो निवृत्तिं वक्तुकामेनोक्तः । शूद्रोच्छिष्टप्रतिषेधः 'अन्तर्धिने वा शूद्राय' इत्येतत् त्र्यहे मा भूदिति । मधुप्रतिषेधो धर्मान्तरे विकल्पितत्वादत्र नित्यत्वाय । मांसाशनप्रतिषेधः कृच्छ्रद्वादशरात्रविनिवृत्त्यर्थः, अशने पुनरुपनयनमेव भवेदिति । भिक्षाचर्यावचनं च नियतभोजनत्वाय(? जनाय) स्यादित्याशङ्का निवृत्ता(? त्यै) । आचार्यार्थस्य द्रव्यस्य भिक्षणमेव । उदकाहरणमसत्यप्यर्थित्वे कर्तव्यमिति । समिधोऽग्न्याधानमपि कर्तव्यमिति कर्तव्यतोपदेशार्थः-(? र्थम्) । अधःशयनमदिवास्वापं च प्रयत्नेनेह कर्तव्यम्, अशक्तावन्यत्र दिवा स्वपनमुपरिशय्या च न दोषायेति । अथवैतेषां वचनानामुत्तरत्र प्रयोजनं वक्ष्यामः । त्र्यहमेव तमग्निं धारयंस्तस्मिन्नेव समिधः सायंप्रातरादधानः सावित्र्या अवचने तूष्णीं संध्यामुपासीत । एतान्यन्यानि च धर्मोक्तानि व्रतानि चरन्नास्ते । त्र्यहादूर्ध्वं लौकिक एवाग्नौ समिदाधानमन्यानि च विवाहान्तानि कर्माणि । ततः परं प्रजासंस्कारैः सहोपासन एव । त्र्यहे पर्यवेते अतिक्रान्ते सावित्रीव्रते तथैव तेनैव प्रकारेण 'उपस्थितेऽन्न ओदनस्य' इत्येवमादिना हुत्वा त्रिवृताऽन्नेन ब्राह्मणान्परिविष्य वाचयित्वा व्रतं विसृजते 'अग्ने व्रतपते व्रतमचारिषम्' इत्येतैर्मन्त्रैः व्रतोपायनमन्त्रैः एवंभूतविभक्त्या संनतैः ऊहितैः यजमानपठितैरित्यर्थः । देवतोपस्थानं विसर्गे इत्युक्तम् । तत्र परिवेषणवचनादेव सिद्धे होमे तथेति वचनमाघारातिदेशार्थम् । तेनोपनयनाग्नावेवान्नहोमः । व्यक्तं बौधायनीये त्र्यहं धारणमुक्तम् । अस्मिंश्च क्रियमाणे अन्नमात्रेण धर्मातिदेशा इत्येवमादि विज्ञायेतेति त्रिवृतेति वचनम् । अथवा(ऽ)-क्रियमाणेऽस्मिन् 'त्र्यहे पर्यवेते तथैव' इति योगविभागः स्यात् । तथा सति सर्वमेवोपनयनकर्मात्रापि स्यात् । तच्च नेष्टम् । तस्मात् त्रिवृतेति वचनम् । अग्ने चेत्सावित्रीवाचनं वाचयित्वा तु होमः ।

(१) हिगृ. १९।२।४८; संप्र. ४४४; संर. २५८ इत्येतैर्मन्त्रैरुप (इत्येतैरुप).

(२) हिगृ. १९।२।४९; संप्र. ४४४.

अपरा व्याख्या 'त्र्यहे पर्यवेते तथैव' इत्येतावदेव सूत्रम्। अनेन सर्वमुपनयनकर्मातिदिश्यते। तत्र क्रत्वर्थाः पुरुषार्थाश्च सन्ति। तेषां क्रत्वर्था अतिदिश्यन्ते, न पुरुषार्थाः, सकृत्कृतैरेव पुरुषार्थस्य तैः कृतत्वात्। तत्र क्रत्वर्थानसंदेहार्थमनुक्रमिष्यामः— व्याहृतिपर्यन्तं कृत्वा जुहोति 'इमं मे वरुण, तत्त्वा यामि, त्वं नो अग्ने, स त्वं नो, त्वमग्ने अयासि, प्रजापते, यदस्य कर्मणोऽत्यरीरिचम्' इति च। अत्रैके जयाभ्यातानान् राष्ट्रभृत इत्युपजुह्वति यथापुरस्तादेते। व्याहृतिपर्यन्तं कृत्वा प्रधानाहुतयः, इतराण्यङ्गानि। अस्मिन्पक्षे परिषेकविसर्गान्तं कृत्वा सावित्रीवाचनं त्र्यहे पर्यवेते। केचित् प्राक्परिषेकविसर्गादिच्छन्ति उपनीतस्य तस्मिन्कालेऽपि पूर्वत्र दृष्टमिति। तन्न, उत्तरत्र समिदभ्याधानसद्भावाद्विसर्गस्तत्र कृतः। इह तदभावाद्विसृष्ट एव न्याय्यं वाचनम्। 'त्रिवृताऽन्नेन... संनतैः' इत्युत्तरत्र सूत्रम्। तस्य स एवार्थः। त्रिवृद्ग्रहणं परिभाषासिद्धस्यैव प्रदर्शनार्थं 'ब्राह्मणानन्नेन' इत्येवमादिष्वेवमिति। अस्मिन् व्याख्यानेऽप्यपरिसमाप्तत्वादुपनयनस्य त्र्यहं धारणं भवत्येव। पूर्वस्मिन्नपि व्याख्याने 'तथैव त्रिवृता' इति वचनं परिभाषासिद्धस्यैव होमादेः प्रयोगशास्त्रादर्शनार्थमसंदेहाय कृतम्, एवंजातीयकेषु सर्वत्रैवमितीयं परिभाषेति। अस्यां प्रयोगविप्रतिपत्तौ यदुक्तं तज्ज्ञात्वा प्रतिगृह्यतां सर्वत्र। केचिद्व्रतोपायनविसर्गेषु व्रतस्य नामोपदिशन्ति, यथा 'सावित्र्या व्रतं चरिष्यामि' इति, 'व्रतमचारिषम्' इति, तद्व्रतस्य ज्ञानं भवतीति। तन्न, वचनाभावाद्धोमादिना विशेषेण प्रकृतस्य व्रतस्य विज्ञानार्थोऽस्त्यादिषु पौर्णमास्यमावास्यतत्कृतमिति निर्दिश्यते, तथेहापि द्रष्टव्यम्(१)। मातृदृ.

## मानवगृह्यसूत्रम्

वपनस्नानाञ्जनालंकरणयज्ञोपवीतानि, आचार्यस्य जपः, वस्त्रदानम्, होमः, दधिप्राशनम्, परिदानम्, हृदयाद्यालम्भनम्, मेखलाबन्धनम्, दण्डदानम्, अजिनदानम्, आदित्योपस्थापनम्, अश्मारोपणम्, सावित्र्यनुवाचनम्, वरदानम्, मेधाजननम्, भिक्षाचरणम्

**[१] 'आगन्त्रा समगन्महि प्रथममर्तिं युयोतु नः। अरिष्टाः संचरेमहि स्वस्ति चरता दिशः। स्वस्त्यागृहेभ्यः॥' इत्युप्तकेशेन स्नातेनाक्तेनाभ्यक्तेनालंकृतेन यज्ञोपवीतिना समेत्य जपति॥**

'आगन्त्रा सम्' इति जपित्वा माणवकेन संगत्योप्तकेशेनेत्यादि। केशवपनं स्नानम्। ततोऽञ्जनमक्ष्णोः। अभ्यञ्जनं नवनीतेन मुखाद्यङ्गानाम्। अलंकरणमङ्गुलीयकादि। यज्ञोपवीतमिह सूत्रकं वाससः प्रतिनिधिभूतं यज्ञोपवीतस्य। अष्टाभा.

**अथास्मै वासः प्रयच्छति— 'या अकृन्तन्या अतन्वन्या आवन्या अवाहरन्। याश्चाग्न्या देव्योऽन्तानभितोऽततनन्त तास्त्वा देव्यो जरसे संव्ययन्त्वायुष्मन्निदं परिधत्स्व वासः॥' इत्यहतं वासः परिधाप्यान्वारभ्याऽऽघाराबाज्यभागौ हुत्वाऽऽज्यशेषे दध्यानीय 'दधिक्राव्णो अकारिषम्' इति दधि त्रिः प्राश्नाति॥**

**'को नामासि' इत्याह॥**

**नामधेये प्रोक्ते 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णाम्यसौ' इति हस्तं गृह्णाम गृह्णाति प्राङ्मुखस्य प्रत्यङ्मुख ऊर्ध्वस्तिष्ठन्नासीनस्य दक्षिणमुत्तानं दक्षिणेन नीचारिक्तमरिक्तेन। 'सविता ते हस्तमग्रहीदसावग्निराचार्यस्तव। देवसवितरेष ते ब्रह्मचारी त्वं गोपाय समावृतत्। कस्य ब्रह्मचार्यसि। प्राणस्य ब्रह्मचार्यसि। कस्त्वा कमुपनयते। काय**

(१) माग. १।२२।२–२१.

त्वा परिददामि । कस्मै त्वा परिददामि । तस्मै त्वा परिददामि । भगाय त्वा परिददामि । अर्यम्णे त्वा परिददामि । सवित्रे त्वा परिददामि । सरस्वत्यै त्वा परिददामि । इन्द्राग्निभ्यां त्वा परिददामि । विश्वेभ्यस्त्वा देवेभ्यः परिददामि । सर्वेभ्यस्त्वा देवेभ्यः परिददामि ' इति परिददाति ॥

वासो विन्यासविशेषत्वात्तद्यत् ' द्विवस्त्रोऽत ऊर्ध्वम् ' ( माग्र. १।२।१७ )इति निषेधात् । ' यत्प्रयतेत ( ?या अकृन्तन् ) ' इति वासोऽहतं परिधापयति । परिधापनं परिधत्स्वेति प्रेषणमाचार्यकर्तृकम् । परिधापनं( ? धानं ) च शिक्षयितव्यम् । अन्वारम्याऽऽघाराज्यभागौ हुत्वा । अन्वारम्यग्रहणात्पूर्वं संस्कारेण चूडाकरणान्तेषु प्रयोग्यत्वादन्वारम्भो नास्तीति गम्यते । विवाहेऽन्वारम्भस्य तत्त्वधर्मतोक्ता । आज्यशेषे अन्वारम्याऽऽघाराज्यभागौ हुत्वाऽनन्तरं तदध्यापनं प्राप्नोति, आनन्तर्यात् । नैष दोषः, आघाराज्यभागहोमस्य तन्त्रसूचकत्वात् । तेन प्रागुदञ्चमित्यादि द्रष्टव्यम् । प्रधानस्थानेऽग्निं ' येन च कर्मणेच्छेत् ' इति जपश्चोपवित्राभिहोमान्ते च शेषे ' दधिक्राव्णः ' इति दधि प्राशयति । आचार्यो हि कर्ता प्राशयेदित्यर्थः । अन्यस्तु ' सविता ते हस्तमग्रहीत् ' इत्यनेन मां ' देवस्य त्वा ' इति हस्तं गृह्णंस्तमसौस्थाने नाम गृह्णाति संबुद्ध्यन्तम् । प्राङ्मुख ऊर्ध्वस्तिष्ठन्नासीनस्य दक्षिणेन दक्षिणमरिक्तेनारिक्तम् । ' सविता ते हस्तम् ' इत्यादि परिदानान्तम् । ' सविता ते हस्तम् ' इत्यादिना परिददाति सर्वेभ्यो भूतेभ्यो ब्रह्मचारिणम् । अन्यस्तु ' सविता ते हस्तमग्रहीत् ' इत्यनेन मन्त्रेण ब्रह्मण्यन्यायेन सवितारं ध्यायेत्, तदात्मनि ' असावग्निः ' इति चाग्निम्, ' देवसवितः ' इत्यादिना सवित्रे परिददाति, ' ब्रह्मचार्यसि ' इत्यादिना ब्रह्मचर्येण प्रजापतिं ध्यायेत्, ' काय त्वा परिददामि ' इत्यादिना प्राजापत्यादिना देवानां परिददाति । अष्टाभा.

' ब्रह्मणो ग्रन्थिरसि स ते मा विस्रसत् ' इति हृदयदेशमारभ्य जपति । ' प्राणानां ग्रन्थिरसि ' इति प्राणदेशम् ॥

' ऋतस्य गोप्त्री तपसस्तरुत्री घ्नती रक्षः सहमाना अरातीः । सा नः समन्तमभिपर्येहि भद्रे धर्तारस्ते सुभगे मेखले मा रिषाम ॥ ' इति मौञ्जीं पृथ्वीं त्रिगुणां मेखलामादत्ते ॥

' ब्रह्मणः ' हृदयदेशमारभ्यानेन ब्रह्मचारिणो जपति मन्त्रवर्णादाचार्यः । ' प्राणानां ग्रन्थिः ' प्राणादिदेशे तस्यैव । ऋतस्यैव । ' ऋतस्य ' अनेन मेखलां मौञ्जीं पृथ्वीमादत्ते । मौञ्जीग्रहणमनुवादः, ' सतमुञ्जाम् ' ( माग्र. १।१।२ ) इति सिद्धेः । पृथिवे( ? वी )तिकालात्रिगुणां त्र्यवयवाम् । ब्रह्मचारी आदत्ते । अष्टाभा.

' युवा सुवासाः ' इति मेखलां प्रदक्षिणं त्रिः परिव्ययति ॥

पुंसकान्ग्रन्थीन्बध्नाति ॥

' युवा ' अनेन परिव्ययति कटिदेशं परिवेष्ट्य परिवेष्ट्य ग्रन्थिं करोति । पुंस इति नपुंसकनिवृत्त्यर्थः । नपुंसकस्य न भवति । अन्ये तु ग्रन्थिविशेषणं शब्दमाचक्षते । वेष्टितान् ग्रन्थीन् वत्सपाशान्करोति ब्रह्मचारी, आदानसंबन्धात् । अष्टाभा.

' इयं दुरुक्तात्परिबाधमाना वर्णं पुराणं पुनती म आगात् । प्राणापानाभ्यां बलमाभजन्ती शिवा देवी सुभगे मेखले मा रिषाम ॥ ' इति तस्यां परिवीतायां जपति ' मम व्रते ते हृदयं दधातु मम चित्तमनुचित्तं ते अस्तु । मम वाचमेकव्रतो जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यम् ॥ ' इति ॥

यज्ञियस्य वृक्षस्य दण्डं प्रदाय कृष्णाजिनं चाऽऽदित्यमुपस्थापयति— ' अध्वनामध्वपते श्रेष्ठस्य स्वस्त्यस्याध्वनः पारमशीय ॥ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतम् ॥ शृणुयाम शरदः शतं प्रब्रवाम शरदः शतम् । अदीनाः स्याम

**शरदः शतं भूयश्च शरदः शतात् ॥ या मेधाऽप्सरःसु गन्धर्वेषु च यन्मनः । दैवी या मानुषी मेधा सा मामाविशतामिहैव ॥ ' इति ॥**

'इयं दुरुक्तात्' इति परिवीतायां जपति ब्रह्मचारी, मन्त्रलिङ्गात् । 'मम व्रते इति( ? ते ) हृदयम्' इत्याचार्यो जपति । एतस्मादेव मन्त्रलिङ्गादाचार्यकाम उपनयते, दर्विहोमे चेदुपनेता मन्त्रलोपः स्यात् । पिता वा जपेत् । यज्ञियकस्याप्रावृचारी( ? ) । 'ब्राह्मणो बैल्वपालाशौ' ( मस्मृ. २।४५ ) इति स्मृतौ विशेषपरिग्रहः । 'केशान्तिकः' ( मस्मृ. २।४६ ) इत्यादि चाविरोधात् । उपस्थानाभिवादनमाचार्यस्याभिधत्ते 'अध्वनाम्' इत्यादिना । अष्टाभा.

**अभिदक्षिणमानीयाग्नेः पश्चात्– ' एह्यश्मानमातिष्ठाश्मेव त्वं स्थिरो भव । कृण्वन्तु विश्वे देवा आयुष्टे शरदः शतम् ॥ ' इति दक्षिणेन पादेनाश्मानमास्थापयति ॥**

अभिदक्षि(णम्) आत्मदक्षिणे, सामर्थ्यात् । 'एह्यश्मानमातिष्ठ' इति दक्षिणेन पादेनाश्मानमास्थापयति ब्रह्मचारिणम् । पादेनेति इत्थंभूतलक्षणे तृतीया । अन्यत्( ? न्ये ) तु ब्रह्मचारिणोऽवयवेन द्वितीया वा स्यात्तृतीया वा । 'गतिबुद्धिप्रत्यवसानार्थशब्द०' ( पा. सू. १।४। ५२ ) इत्यादिना कर्मसंज्ञा, अवस्थानस्य अश्मन उपरि चलनात्मकत्वाद्गत्यर्थत्वात् । नो चेत्तृतीया ब्रह्मचारिणेति । पादे तु इत्थंभूतलक्षणे तृतीया । नह्याचार्यस्य स्वकीयः पादः अवस्थाप्यते, येन करणे तृतीया स्यात् । केचित् अभिदक्षिणमानयनमश्मन इच्छन्ति । एवं च द्विकर्मकत्वे सति कर्मण्येव द्वितीया । अष्टाभा.

**पश्चादग्नेर्महदुपस्तीर्य सूपस्थलं कृत्वा प्राङासीनः प्रत्यङ्ङासीनायानुवाचयति गायत्रीं सावित्रीमपि ह्येके त्रिष्टुभमपि ह्येके जगतीमोमित्युक्त्वा व्याहृतिभिश्च ॥**

निगदसिद्धं महदुपस्तरणमाचार्यब्रह्मचारिणोः । सूपस्थलमाचार्यस्य ब्रह्मचारिणः सकाशादुच्चतरं कृत्वा गायत्री 'तत्' इत्यादिकारक( ? इत्याकारतः ), सावित्री देवतात्मैव । अपि चैके( ? ह्येके )इति वचनात् गायत्री राजन्यवैश्ययोः स्यात् पक्षे अस्तु 'गायत्रीं सावित्रीमपि ( हि )' इत्यत्रापिहीतिनिपातसमुदायोऽवधारणार्थः । गायत्री(? त्रिष्टुभ)मेवैकेन राजन्यो( ? न्ये ) जगतीमेवैके वैश्य इति । अत एव प्रागुक्तम्– "आ देवो याति' इति त्रिष्टुभं राजन्यः( ? न्यस्य ) 'युञ्जत' इति जगतीं वैश्यः-( ? श्यस्य )" ( माग. १।२।३ ) इति । अष्टाभा.

**तां त्रिरवगृह्णीयात्तां द्विरवकृत्य तां सकृत्समस्येत् पादशोऽर्धर्चशः सर्वामन्तेन ॥**

पच्छोऽर्धर्चश इत्यस्य व्याख्यानं 'तां त्रिः' इत्यादिः-( ? दि ) । अवग्रहः अवच्छेदः । एवं च त्रिष्टुब्जगतीश्च( ? गत्यौ च )दुरवगृह्णीयात्, पच्छ इत्यपि सिद्धम् । अष्टाभा.

**'यत्तिसृणां प्रातरन्वाह यद्द्वयोर्यदेकस्याः संवत्सरे द्वादशाहे षडहे त्र्यहे वा तस्मात्सद्योऽनूच्या ' इति श्रुतिः ॥**

सावित्रीग्रहणं त्रिष्टुब्जगत्योरपि विशेषणम् । संवत्सरे यदित्यनुवादार्थं विशेषणार्थं च गायत्र्याद्यः संख्या या गण उक्ता तिसृणां प्रातरन्वाह यद्द्वयोर्यदेकस्याः संवत्सरे यदित्यनुवादार्थं विध्यभावात्तिसृणां रात्रीणां द्वयो रात्र्योरेकस्याश्च प्रातरन्वाह वत्सरे च गते यदनुवचनमुपनयनानन्तराश्चतुर्षु कालेषु ततोऽनुगम्यते तस्मात्सद्योऽनूच्येति श्रुतिः सद्यः काले एवानूच्येति श्रुतिराहेत्यर्थः । अन्यस्त्वाह यत्तिसृणां प्रातरन्वाह यद्द्वयोर्यदेकस्याः संवत्सरे द्वादशाहे यदन्वाह तिसृणामित्यादि द्वादशरात्रिपर्यन्ताः पञ्चकल्पाः । एषु पञ्चकल्पेषु यदन्वाह तत्प्रातरेवान्वाह नान्यस्मिन्वा काले इत्यर्थः । तस्मात्सद्यस्तस्मिन्नेव काले ब्रूयादिति श्रुतिवाद आहेत्यर्थः । अनेनैव तदाह पूर्वे कल्पा न वेदमूलास्तस्मात्ते नाऽऽदर्तव्याः । अष्टाभा.

**वरं कर्त्रे ददाति कांस्यं वसनं च ॥**

वरं कर्त्रे कर्तारमादि होमी तस्मै दद्याद्वरादि । यदा त्वाचार्यः कुर्यात्तदा वरादि दातव्यम् । यदा पिता कुर्यात् तदा दातव्यमुत नेति ? दातव्यमदृष्टार्थं वेति

केचित् । कर्तृग्रहणे तु दातव्यमित्याह अष्टावक्रः । यथा सत्रेषु होत्रादीनां दक्षिणादानं न भवति तथाऽऽचार्यकर्तृके उपनयने यस्मात्प्रधानमिह संबन्धः सत्रेष्विवात्रापि तथा पितृकर्तृके दूरापेताम् । एवं च सामर्थ्यात् पितुराचार्ये चा( ? यत्वा )संभवादन्यः कारयितव्यः । अष्टाभा.

**यस्य तु मेधाकामः स्यात्पलाशं नवनीतेनाभ्यज्य तस्य च्छायायां वाचयेत्– 'सुश्रवः सुश्रवा असि । यथा त्वं सुश्रवः सुश्रवा अस्येवं मां सुश्रवः सौश्रवसं कुरु ॥ यथा त्वं देवानां वेदानां निधिपोऽसि । एवमहं मनुष्याणां वेदानां निधिपो भूयासम् ॥' इति ॥**

यस्य तु मेधाकामः पलाशं वृक्षसंज्ञातं नवनीतेनाभ्यज्य तस्य छायायां यस्य वै ब्रह्मचारिणो मेधां कामयेत तमाचार्यो वादयन् 'सुश्रवः' एतन्मन्त्रं वाचयेदित्यर्थः । अमेधाकामस्य नैतद्भवति । अन्यस्तु सर्ववाचनमिच्छति । यतो ब्रह्मवर्चसं वा श्रेयं स्वर्गं च यथा सर्वः कामयते तथा ब्रह्मवर्चसमपि । अथ वा पालाशदण्डसंबन्धाद्ब्राह्मणस्यैव वाचनं सावित्र्यनुवाचनानन्तरं केचिदिच्छन्ति । तदयुक्तम्, दक्षिणादानोत्तरकाले विधानात् । अष्टाभा.

**'अधीते ह वा अयमेषां वेदानामेकं द्वौ त्रीन् सर्वान्वेति यमेवं विद्वांसमुपनयति' इति श्रुतिः ॥**

अधीते वाऽयमेषां वेदानामेकं द्वौ त्रीन् सर्वान् वा । वाशब्दः प्रत्येकमभिसंबध्यते त्रेति । अयं ब्रह्मचारी । अधीते अयं ब्रह्मचारी एवं विद्वानाचार्य उपनयति । माश्रात इत्यादि मन्त्रणं परामृश्यते श्रुतिगर्भार्थः । अनुपनीतो नाधीते, व्रात्यत्वात् । अन्यस्तु मन्त्रान्ते 'वेदानां निधिपो भूयासम्' अस्मिन् यद्वेदस्यैव वचनम् । तत्रायमूहः कुर्यात्– 'एकस्य वेदस्य, द्वयोर्वा वेदयोः, त्रयाणां वा वेदानाम्, सर्वशब्दात्सकलवेदानाम्' इति । अष्टाभा.

**व्याख्यातं ब्रह्मचर्यम् ॥**

व्याख्यातं ब्रह्मचर्यम् । 'एतेन धर्मेण द्वादश' (मागृ. १।२।६ ) इत्यादिना । अष्टाभा.

**अथ भैक्षं चरते मातरमेवाग्रे याश्चान्याः सुहृदो यावत्यो वा संनिहिताः स्युः ॥**

अथ भैक्षचर्यां चरति । अथशब्द उपनयनादनन्तरं भैक्षार्थं चरतीति ब्रूते । तदुक्तम्– 'उपनयनप्रभृति व्रतचारी स्यात्' ( मागृ. १।१।१) इति, 'भैक्षाचार्यवृत्तिः' ( मागृ. १।१।२ ) इति । अन्यस्तु वेदवचनानन्तरं भैक्षचरणेन तु यथाऽन्येषामुपनयनात् पूर्वमित्यथशब्दः । मातरमेवाग्रे मातरमग्रे याचेदित्यर्थः । याश्चान्याः सुहृदो यावत्यो वा संनिधाः स्युः । यावत्यो वा सुहृदः स्युर्भगिन्याद्याः संनिधाने कृता अग्रे याचेत । एतच्च मातुरभावे ज्ञेयम् । यदा स्वाचार्यं उपनयनं स्वगृहे कुरुते तदा मातृतुल्यामाचार्यानीम् । अष्टाभा.

**'आचार्याय भैक्षमुकल्पयते, तेनानुज्ञातो भुञ्जीत' इति श्रुतिः ॥**

आचार्याय भैक्षमुपकल्पयते आचार्याय निवेदयते भैक्षम् । तेनानुज्ञातो भुञ्जीत, नानुज्ञाप्याऽऽचार्यं भुञ्जीत । त्रैविद्यमुक्तम् । अष्टाभा.

## भारद्वाजगृह्यसूत्रम्

कुमारभोजनम्, वपनस्नानालंकरणवस्त्रधारणानि, अग्निस्थापनादि, यज्ञोपवीतधारणम्, होमः, वासःपरिधापनम्, प्रथमवस्त्रस्याऽऽचार्येण ग्रहणम्, मेखलाबन्धनम्, अजिनधारणम्, अञ्जल्यवक्षारणम्, परिदानम्, नाभिदेशाभिमर्शनम्, कर्णे जपः, अश्मारोपणम्, समिदाधानम्, सावित्र्यनुवाचनम्, प्रथमपौरोडाशीयोपकरणम्, दण्डदानम्, व्रतोपदेशः, आदित्यदर्शनम्, भिक्षाचरणम्, त्र्यहव्रतम्, मेधाजननम्

**'उपनयनं व्याख्यास्यामः । स पुरस्तादेव संभारानुपकल्पयते– पालाशमिध्मं खादिरमौदुम्बरं वैकङ्कतं वा । एतद्वृक्षीयामेव दर्वीं करोति त्वग्बिलां मूलदण्डारत्नीम् । चतुरङ्गुलं बिलं करोति । सादयाचारिकं कर्मेति विज्ञायते ।**

(१) मागृ. १।१-३, ५-१०.

आशितस्य कुमारस्य केशान्वापयित्वा स्नातमलंकृतमहतं वासः परिधाप्य* ॥

यथार्थं द्रव्याणि प्रयुनक्ति– अश्मानमहतं वासोऽजिनं मौञ्जीं मेखलां त्रिवृतं ब्राह्मणस्य मौर्वीं राजन्यस्य सौत्रीं वैश्यस्य बैल्वं पालाशं वा दण्डं ब्राह्मणस्य नैयग्रोधं राजन्यस्यौदुम्बरं वैश्यस्य ॥

अपरेणाग्निमुदगग्रं कूर्चं निधाय तस्मिन्प्राङ्मुख उपविशति । यज्ञोपवीतं कृत्वाऽप आचम्य दक्षिणतः कुमार उपविश्यान्वारभते ॥

तत एता आहुतीर्जुहोति– ....... 'आयुर्दा देव जरसं गृणानो घृतप्रतीको घृतपृष्ठो अग्ने । घृतं पिबन्नमृतं चारु गव्यं पितेव पुत्रं जरसे नयेमं स्वाहा ॥' इति । अथ वाससोऽन्तान्संमार्ष्टि– 'या अकृन्तन्नवयन्या अतन्वत याश्च देवीरन्तानभितोऽददन्त । तास्त्वा देवीर्जरसे संव्ययन्त्वायुष्मानिदं परिधत्स्व वासः ॥' इति । अथैनं परिधापयति– 'परिधत्त धत्त वाससैनं शतायुषं कृणुत दीर्घमायुः । बृहस्पतिः प्रायच्छद्वास एतत्सोमाय राज्ञे परिधातवा उ ॥ जरां गच्छासि परिधत्स्व वासो भवा कृष्टीनामभिशस्तिपावा । शतं च जीव शरदः सुवर्चा रायश्च पोषमुपसंव्ययस्व ॥' इति ॥

परिहितमभिमन्त्रयते– 'परीदं वासो अधिधाः स्वस्तयेऽभूरापीनामभिशस्तिपावा । शतं च जीव शरदः पुरूचीर्वसूनि चार्यो विभजासि जीवन् ॥' इति । अथास्य प्रथमवास्यमादत्ते– 'यस्य ते प्रथमवास्यं हरामस्तं त्वा विश्वे अवन्तु देवाः । तं त्वा भ्रातरः सुहृदो वर्धमानमनुजायन्तां बहवः सुजातम् ॥' इति । अथैनं मौञ्ज्या मेखलया त्रिवृता मध्यतः संनह्यति– 'या बृहती दुरिता रराणा शर्म वरूथं पुनती न आगात् । प्राणापानाभ्यां बलमाभरन्ती स्वसा देवानां सुभगा मेखलेयम् ॥' इति । ग्रन्थिं ग्रथ्नाति– 'प्राणानां ग्रन्थिरसि स मा विस्रसः' इति । अथाजिनमुत्तरं परिधत्ते– 'मित्रस्य चक्षुर्धरुणं बलीयस्तेजो यशस्वि स्थविरं समिद्धम् । अनाहनस्यं वसनं जरिष्णु परीदं वाज्यजिनं दधेऽहम् ॥' इति ॥

अपरेणाग्निं द्वयान्दर्भान्पूर्वापरानुदगग्रान्स्तृणाति । तेषु पूर्वापरावुपतिष्ठेते । प्राङ्मुखः प्रत्यङ्मुखस्य हस्तं गृह्णीयादित्येकम् । प्रत्यङ्मुखः प्राङ्मुखस्येत्यपरम् । अथैनयोः प्रैषकृदञ्जली उदकेन पूरयति । अथास्याञ्जलिनाऽञ्जलावुदकमानयति– 'शं नो देवीरभिष्टय आपो भवन्तु पीतये । शंयोरभिस्रवन्तु नः ॥' इति । अथास्य दक्षिणेन हस्तेन दक्षिणं हस्तमभीवाङ्गुष्ठमभीव लोमानि गृह्णाति– 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तेन ते हस्तं गृह्णामि सवित्रा प्रसूतः को नामासि' इति । 'असौ' इतीतरः प्रत्याह । तस्य नामाभिपद्य जपत्यसौ– 'सविता ते हस्तमग्रभीदग्निष्ट आचार्यः कस्य ब्रह्मचार्यसि कस्मै त्वा काय त्वा कमुपनयाम्यागन्ता मा रिषेण्यतः प्रस्थावानो माऽवस्थातु समन्यवो दृढाश्चिदमरिष्णवः कृशाश्चिदमरिष्णव आगन्त संरभावहै प्रेतो मृत्युं नुदावहै न मृत्युश्चरतीह' ॥

'प्राणाय त्वाऽऽचार्याय परिददामि कुबेराय त्वा महाराजाय परिददामि तक्षकाय त्वा वैशालेयाय परिददाम्यग्नये त्वा परिददामि वायवे त्वा परिददामि सूर्याय त्वा परिददामि प्रजापतये त्वा परिददामि प्रजापत इमं गोपायामुम्' इति परिदायाथास्य दक्षिणमंसं प्रति बाहुमन्ववहृत्य नाभिदेशमभिमृशति– 'युवा सुवासाः परिवीत

* अतः परमन्तराऽन्तरा ये सूत्रांशास्त्यक्तास्ते सर्वहोमसाधारणा इति कृत्वाऽग्निमुखप्रकरणे ( सं. का. पृ. १४२४–१४२६ ) संगृहीतास्तत्रैव द्रष्टव्याः ।

आगात्स उ श्रेयान्भवति जायमानः । तं धीरासः कवय उन्नयन्ति स्वाधियो मनसा देवयन्तः ॥' इति । अथास्य दक्षिणं कर्णमाजपति– 'भूस्त्वयि दधामि' । 'भुवस्त्वयि दधामि' इत्युत्तरम् । 'सुवस्त्वयि दधामि' इति दक्षिणम् । अपि वोत्तरमेव द्विः, सकृदेव दक्षिणम् । अथैनमश्मानमास्थापयति– 'आतिष्ठेममश्मानमश्मेव त्वं स्थिरो भव । प्रमृणीहि दुरस्यून्सहस्व पृतन्यतः ॥' इति । ततः समिधमाधापयति– 'अग्नये समिधमाहारिषं बृहते जातवेदसे । यथा त्वमग्ने समिधा समिध्यस एवं मामायुषा वर्चसा सन्या मेधया प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा ॥' इति । एकामादधाति । तिस्र एके । सप्तैके । प्रदक्षिणमग्निं परिक्रम्य दक्षिणत उदगावृत्योपविश्योपसंगृह्य पृच्छति ॥

'सावित्रीं भो अनुब्रूहि' इति । तस्मै सावित्रीं पच्छोऽन्वाह– 'भूस्तत्सवितुर्वरेण्यम् । भुवो भर्गो देवस्य धीमहि । सुवर्धियो यो नः प्रचोदयात्' इति । अथ द्वितीयं द्वे च व्याहृती सावित्रीं चार्धर्चशः । अथ तृतीयं सर्वाश्च व्याहृतीः सावित्रीं चानवानम् । पुरस्तात्प्रत्यङ्मुखायैक आहुः । तां खल्विमां सावित्रीं संवत्सरादेक आहुः, द्वादशरात्रादेके, त्रिरात्रादेके, सद्य एके । अथैनं पौरोडाशीयानां प्रथममुपकारयति । अथास्मै दण्डं प्रयच्छन्नाह– 'ब्रह्मचार्यसि समिध आधेह्यपोऽशान कर्म कुरु मा दिवा सुषुप्था भिक्षाचर्यं चराऽऽचार्याधीनो वेदमधीष्व' इति । अप एवाऽऽचार्यकुलेऽश्नीयादित्येकमपरं काममश्नीय्वेति हार्थो भवतीति शाल्मलीमूलो भारद्वाजो वा । अथास्याष्टाचत्वारिंशद्वर्षाणि पुराणं वेदब्रह्मचर्यं संप्रदिशन्ति । आ वेदाध्ययनादित्येक आहुः । आ गोदानकर्मण इत्येके । अथैनं दक्षिणे पाणावभिपद्योत्थापयति– 'उदायुषा स्वायुषा' इति । आदित्यमुदीक्षयति– 'तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतं नन्दाम शरदः शतं मोदाम शरदः शतं भवाम शरदः शतं शृणवाम शरदः शतं प्रब्रवाम शरदः शतमजीताः स्याम शरदः शतं ज्योक्च सूर्यं दृशे ॥' इति ॥

ततो भिक्षते यां मन्यत इयं मा न प्रत्याख्यास्यतीति । तामाहृत्योपनिधायाऽऽचार्याय प्राह । तिस्रो भिक्षतेऽपरिमिता वा । त्रिरात्रमक्षारलवणाश्यधःशायी भवति । अथास्य चतुर्थ्यां मेधाजननं कुर्वन्ति । यत्रैकमूलः पलाशः प्राचीं वोदीचीं वा दिशं तं परिसमू(? मु)ह्य प्रक्षाल्य प्रदक्षिणमाज्येनाभ्यज्य जपति– 'सुश्रवः सुश्रवसं मा कुरु यथा त्वं सुश्रवः सुश्रवा अस्येवं मां सुश्रवः सुश्रवसं कुरु यथा त्वं सुश्रवो देवानां वेदेषु निधिगोपोऽस्येवमहं ब्राह्मणानां वेदेषु निधिगोपो भूयासम्' इति ॥

## काठकगृह्यसूत्रम्

वपनम्, स्नानम्, होमः, वासःपरिधापनम्, नाभ्युपरिदेशोन्मार्जनम्, दधिभक्षणम्, मेखलाबन्धनम्, अजिनदानम्, आदित्योपस्थानम्, अभिवादनम्, उपनयनम्, परिदानम्, व्रतोपदेशः, मेधाजननमन्त्रवाचनम्, अनुप्रवचनीयहोमाः, सावित्र्यनुवाचनम्, दण्डदानम्, व्रतग्रहणमन्त्रवाचनम्, समिदाधानम्, वरदानम्

'स्नातोप्तकेशो यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा 'रेवतीस्त्वा व्यक्ष्णन्कृत्तिकाश्चकृतुस्त्वाऽपसस्त्वा व्यतन्वत । धियोऽवयन्नव ग्ना अमृजन् सहस्रमन्ताँ अभितोऽददन्ताशीतीर्मध्यमवयन्नु नारीः ॥' इत्यहतं वासोऽभिमन्त्रयते ॥

(१) काग्. ४१।५–११.

( १ ) स्नातश्चासौ उप्तकेशः मुण्डितशिराः, तस्मिन् माणवके उपस्थिते सति यथाविधि उपसमाधानम् अग्नि-संस्कारम् उद्धतसिक्तोपलिप्ते भूविशेषे स्थापनं परिसंवहनं पर्युक्षणं परिस्तरणं च कृत्वाऽऽज्यं चोपनिधाय विलाप्य संवीक्ष्य दण्डमेखलादिकं यथोपयोगमानीयोपनेता जय-प्रभृतिभिर्ऋतुनक्षत्राद्यन्तैर्हुत्वा 'रेवतीस्त्वा' इत्यादिकया शक्वर्या अहतम् अभुक्तं नवं वासो हस्ते निधायाभि-मन्त्रयते। किल वाससोऽयमुत्पत्तिक्रमः– आदौ ताव-द्रेवतीभिः कर्पासो लोष्ठनिकाभिरभिहन्यते विधूयते च। ततः कृत्यते वेष्ट्यते सूत्रतामापाद्यते इत्यर्थः। ततस्तन्तु-वायेन आता(ना ?)यते। ततः कूर्चेन परामृज्यते। ततो वस्त्रं वयति तन्तुवायः। संपन्ने च वस्त्रे पल्लवद्वये दशाः संयोजयति। एवंक्रमोऽत्र मन्त्रे कर्पासादीनां हननादौ देव-ताविशेषाणां कर्तृतारोपणेन स्तूयते। हे वस्त्र, त्वां रेवतीः देवताः व्यक्ष्णन् विशेषेणाक्षिण्वन् कर्पासावस्थायां लोष्ठनि-कादिभिर्हतवत्यः। कृत्तिकाः 'कृती वेष्टने' कर्तर्यो वेष्टि-काश्चऋतुः चक्रुः सूत्रं कृतवत्यः तद्द्वारेण संपादित-वत्यः। अपसः अपापा मरुतः त्वां व्यतन्वत विशे-षेणातन्वत आतानरूपतां कृतवन्त इत्यर्थः। धियोऽवयन्। बुद्धिविशेषेण हि वस्त्रविशेषस्य वानं संपद्यते। अव ग्नाः अमृजन्। 'व्यवहिताश्च' (पा. सू. १।४।८२) इत्यव-शब्दो मृजिना संबध्यते। ग्नाः देवताः अवामृजन्। 'मृजू शुद्धौ'। कूर्चेन आततस्य सूत्रस्य मार्जनं कृत-वत्य इत्यर्थः। सहस्रमन्तानभितोदयच्छन्। अभितः उभयतः पल्लवद्वये। उदिति निपातस्तथाशब्दस्यार्थे। सहस्रशब्दो बाहुल्यार्थः। सहस्रम् अन्तानां दशानाम् अयच्छन् बबन्धुः। काः ? ग्नाः इति योजनीयम्। अशीतिर्मध्यमवयन्नु नारीः। नुशब्दः क्षिप्रवचनः। मध्यं वस्त्रस्याशीतिः नार्यः नागदेवताः अवयन् उतवत्यः। देव.

( २ ) शुद्धपक्षस्य पुण्याहे कुमारं कृतकेशवपनमाप्ला-वितमलङ्कृतमाचार्य आत्मनो दक्षिणत उदङ्मुखं प्राङ्-मुखं वोपवेश्य 'रेवतीस्त्वा' इत्यहतमधोवासोऽभिमन्त्र-यते। ‡ ब्राह्म.

‡ शेषं देवगतम्।

( ३ ) एवं कालं विधाय शुद्धपक्षादौ स्नातोप्तकेशे माणवके। अत्र क्रमस्याविवक्षा। तेन पूर्वमुप्तकेशः पश्चात्स्नातः। स्नातोप्तकेशे आचार्यस्य दक्षिणमूरुं प्रत्युपविष्टे। $ आवि.

**† 'देवीर्देवाय परिधे सवित्रे परिधत्त वर्चस इमं शतायुषं कृणुत जीवसे कम्' इति परि-धापयति ॥**

( १ ) अनेन यजुषा वासः परिधापयति। हे देव्यः रेवत्याद्याः, इदं वासः परिधत्त परिधापयत। कस्मै ? देवाय द्योतमानाय माणवकाय। त्वमपि हे माणवक, परिधत्त परिधत्स्व। सविता, व्यत्ययेन हे सवितः, इदं वासः परिधापय सवित्रे देवतार्थाभिज्ञानस्य जनयित्रे माणवकाय। त्वमपि हे माणवक, परिधत्त परिधत्स्व सविता भूत्वा। हे वासः, नय प्रापय इमं माणवकं कं ब्रह्माणं ब्राह्मणत्वं प्रापय, वेदसमृद्धियुक्तं कुर्वित्यर्थः। शतायुषं कृणुहि कुरु।

एष मन्त्रस्त्रयाणां वर्णानां परिधापने साधारणोऽधो-वाससः। उत्तरीयं वक्ष्यतेऽजिनम्। 'जरां गच्छ' इत्या-दिभिः परिहितवाससमनुमन्त्रयते इत्यादित्यदर्शनः। न त्वेवमाचार आचार्याणाम्, नापि मन्त्रलिङ्गमेवमिति योजनाऽन्यथा कार्या। एकैकस्यासाधारण इत्येकैकस्य वाससः परिधापने मन्त्रत्रयम्। तत्र 'देवीर्देवाय' इत्येको वर्णत्रयसाधारणः, 'जरां गच्छ' इति द्वितीयः साधारणः परिधापने, 'परीमम्' इत्यादीनां त्रयाणामेकैको यथाक्रममेकैकस्यासाधारण इत्येकैकस्य त्रयः परिधापने मन्त्राः। देव.

( २ ) 'देवीर्देवाय' इति प्राङ्मुखं परिधापयति। मन्त्रमाहाध्वर्युः, परिधत्ते माणवकः। ब्राह्म.

$ शेषं देवगतम्।

† 'देवीर्देवाय सविता सवित्रे परिधत्त वर्चसा नयेमं शतायुषं कृणुहि जीवसे कम्' इति देवपालभाष्यपुस्तके मन्त्रपाठः। तत्र 'वर्चसा, जीवसे' इति पदे देवपालेन न व्याख्याते।

(३) 'देवीर्देवाय' इत्यनेन यजुषा 'कम्' इत्यन्तेन परिधापयत्याचार्यः । परिधत्ते माणवकः । कृष्णाजिनमुत्तरीयं भविष्यति । तेनैतद्वस्त्रपरिधानम् । अर्थे वासो न प्रतिषिध्यते (?) । आ(? अ)शिष्टाप्रतिषिद्धं तत् । आवि.

**'जरां गच्छ परिधत्स्व वासोऽभूरापीवाऽनभिशस्तिपावा । शतं च जीव शरदः पुरूची रायश्च पोषमुपसंव्ययस्व ॥' । 'परीमं सोमं तेजसे महे श्रोत्राय दध्मसि । यथैनं जरसं नयज्ज्योक्छ्रोत्राय जागरज्ज्योक्छ्रोत्रेऽधि जागरत् ॥' इति ब्राह्मणस्य । 'परीममिन्द्रमोजसे महे क्षत्राय दध्मसि । यथैनं जरसं नयज्ज्योक् क्षत्राय जागरज्ज्योक् क्षत्रेऽधि जागरत् ॥' इति राजन्यस्य । 'परीमं मनुमायुषे महे पोषाय दध्मसि । यथैनं जरसं नयज्ज्योक् पोषाय जागरज्ज्योक् पोषेऽधि जागरत् ॥' इति वैश्यस्य । 'परीदं वासोऽधिथाः स्वस्तये भवाऽऽपीवाऽनभिशस्तिपावा । शतं च जीव शरदः सुवीरो वसूनि चोग्रो विभजस्व जीवन् ॥' इति परिहितवाससमनुमन्त्रयते, 'योगे योगे, युवा सुवासाः' इति चैताभ्याम् ॥**

**अग्निमभि दक्षिणमानीय 'एह्यश्मानमातिष्ठाश्मेव त्वं स्थिरो भव । कृण्वन्तु विश्वे देवा आयुष्टे शरदः शतम् ॥' इति दक्षिणेन पदाऽश्मानमास्थापयति ॥**

(१) जरां गच्छेति । मन्त्रलिङ्गादयमपि परिधापने । उपनेता ब्रवीति– हे माणवक, वासः परिधत्स्व । आशिषमाह– जरामिति । जरां गच्छ जराजर्जरिततनुर्भव । आपीवाऽभूः । 'स्फायी ओप्यायी वृद्धौ' आङ्पूर्वः । 'आतो मनिन्क्वनिब्वनिपश्च' (पा. सू. ३।२।७४) इति क्वनिप् । प्रवृद्धो भवेत्यर्थः । अनभिशस्तिपावा । अभूरित्यनुषज्यते । अभिशसोऽभिशस्तिः पापयोगः, तत्प्रतिषेधः अनभिशस्तिः पापाभावः । प्रसज्यप्रतिषेधं कृत्वा पर्युदासेन च धर्मसंबन्धः । अनभिशस्तिं पातीति अनभिशस्तिपावा । शतं जीव शरदः शतं शरदां च त्वं प्राणान् धारय । पुरूचीरिति शरदो विशेषणम् । पुरुशब्दो भूरिवचनः । बहून् पुरुषान् अञ्चन्ति साधयन्ति इति पुरूच्यः । पुरूचीनां रायः धनस्य च पोषं पुष्टिं परिधत्स्व समन्ताद्धारय ।

परीमं सोममिति । एष ब्राह्मणस्य परिधापने मन्त्रः, सोमपदाल्लिङ्गात्, इतरयोः सोमसंबन्धाभावात्, 'यदि राजन्यं वैश्यं वा याजयेन्न्यग्रोधततीराहृत्य ताः संपिष्य दध्न्युत्सृज्य तदस्मै भक्षं प्रयच्छेन्न सोमम्' इति श्रुतेः । हे माणवक, एतद्वासः परिदध्मसि । 'इदन्तो मसि' (पा. सू. ७।१।४६) इतीदन्तः । परिदध्मः परिधापयामः सोममेव चेमं परिधापयामः, त्वया अनेनोपनयनद्वारेण सोम एव हि परिहितः धृतो वेदस्तदर्थाभ्यासद्वारेण भविष्यति । किमर्थं परिधापयामः ? तेजसे महे महते । पूजार्थं वा । 'मह पूजायाम्' इत्यस्य रूपम् । श्रोत्राय, श्रूयते इति श्रोत्रं वेदः, तदर्थं वेदवेदार्थाधिगमाय । अथवा श्रोत्राय श्रोत्रयुक्ताय शिष्याय । वेदपारंगमस्त्वमुपाध्यायः श्रोत्रियेभ्यो हितः संपद्यस्वेति तात्पर्यम् । यथैनं वासोविशेषं जरसं नयत् जरां नयति माणवकः तथा च परिधापनेन परिधापयामः । यथा बहूनि वस्त्राणि भोगेन जरयिष्यति तथाऽहं परिधापयामीति यावत् । ज्योक् चिरकालं श्रोत्राय वेदाय जागरत् जागृहि । बहुकालं वेदतदर्थजागरणं पठनबोधानुष्ठानात्मकं तवास्त्वित्यर्थः । ज्योक् श्रोत्रेऽधिजागरत् बहुकालं शिष्येभ्यो जागृहि उपदिश अतिशयेन परोपकारप्रकृष्टधर्मकत्वात् ।

परीममिन्द्रमिति । हे ब्रह्मचारिन्, वासः परिदध्मसि वासः परिधापयामः इन्द्रम् इन्द्रेण सह बाहुभ्यां जातत्वादिन्द्रो राजन्यः, तं परमेश्वरम्, स्वयमेव प्रजापालनसामर्थ्यात् । किमर्थम् ? ओजसे बलाय, महे महते पूजिताय वा, क्षत्राय साधूनां प्राणाय उत्साहाय च । गतार्थमन्यत् ।

परीमं मनुमिति । मनुमिति मानुषत्वान्मनुम् । पोषः धनपुष्टिः, तदर्थम् । शिष्टं समानम् ।

परीदं वास इति । त्रयाणामपि वर्णानां परिहितवाससा-मनेनानुमन्त्रणं करोत्युपनेता । परिशब्दः पूर्ववदिहापि व्यवहितान्वयः । हे माणवक, त्वमिदं वासः परि अधिधाः पर्यध्यधाः आधिक्येनोत्कर्षेण परिहितवानसि स्वस्तये अविनाशाय यत्, तत्त्वम् आपीवा आपीनः प्रवृद्धः भव अनभिशस्ति अनभिशस्तं पाति रक्षतीत्यनभिशस्तिपावा, शतं च शरदां जीव, सुवीरश्च शोभनपुत्रयुक्तो भव, तथा वसूनि धनानि उदारः सन् विभज विशेषेण भजस्व देहि वा परिजनर्त्विक्प्रभृतिभ्यः सुष्ठु जीवन् सुजीवन् सुखादिना जीवन् ।

योगे योग इति । 'योगे योगे' इत्यनेन 'युवा सुवासाः' इत्यनेन च मन्त्रेणाग्निं लक्षणीकृत्य प्रदक्षिणं यथा भवति तथा माणवकमानीय 'एह्यश्मानमातिष्ठ' इति मन्त्रेणाश्मानं दक्षिणेन पदा आस्थापयति अधिष्ठापयति आचार्यः ।

'योगे योगे तवस्तरं वाजे वाजे हवामहे । सखाय-मिन्द्रमूतये ॥' — व्याख्यातेयम् । अत्र वह्निप्रदक्षिणे तु योगः संबन्धः विशे(?शि)ष्यते । योगे योगे सर्वत्र ब्रह्मचारिक्रियासंबन्धे कर्तव्ये वाजे वाजे हविषि हविषि इन्द्रं हवामहे आह्वयामः ऊतये अवनाय, तवस्तरं बलवत्तरं सखायं सहायम् ।

'युवा सुवासाः परिवीत आगात्स उ श्रेयान्भवति जायमानः । तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः ॥'— एष यूपोच्छ्रायने विनियुक्तोऽन्यत्र मन्त्रः । तत्रैष मन्त्रार्थः— यूप एव युवा नवः सद्यश्छिन्नः शोभनेन वाससा रशनया च परितो वेष्टितः आगात् आगतः । तं धीरासः धीराः पण्डिताः ऋत्विजः उन्नयन्ति उच्छ्रयन्ति मनसा देवयन्तः देवान् यष्टुकामाः पशुयागं चिकीर्षन्तः । प्रकृतोऽत्रायमर्थः— ब्रह्मचारी युवा सुवासाः परिहितशोभनवस्त्रः परिवीतः संवृतः ब्रह्मचार्यात्मा, स हि युवा नित्यतरुणः संवीतश्च शाणवाससा आगात् आगतः इदं शरीरं कर्मवशात्प्राप्तः प्राणो व्याख्यातव्यो ब्रह्मचारिसंबन्धी । सोऽपि हि शरीरेण वाससेव संवृत आगतो ब्रह्मचारिशरीरं नित्यतरुणश्च युवा । स ब्रह्मचारी उच्छ्रितः उन्नतः जायमानः वर्धमानः भवति । आत्मा वायुर्गगन इव क्षुधादिभिः प्रवृद्धो भवति । तं धीरासः धीराः पण्डिताः कवयः क्रान्तदर्शनाः उन्नयन्ति ऊर्ध्वं नयन्ति आत्मानं मोक्षं प्रापयन्ति, प्राणमुत्क्रामयन्ति ऊर्ध्वं ब्रह्मद्वारं प्रापयन्ति, ब्रह्मचारिशरीरमभ्युन्नयन्ति क्रियाज्ञानकाण्डानुष्ठानेनोत्कृष्टं संपादयन्ति । स्वाध्यः शोभनधियः सुकर्माणः एकाग्रेण मनसोन्नयन्ति ।

एह्यश्मानमिति । हे माणवक, एहि आगच्छ । अश्मानं पाषाणम् आतिष्ठ अधितिष्ठ । अश्मेव स्थिरो भव । विश्वे सर्वे देवा आयुष्टे कृण्वन्तु शरदः शतं समाः शतम् । देव.

(२) 'जरां गच्छ, परीमं सोमम्, परीदं वासः, योगे योगे, युवा सुवासाः' इति पञ्चभिः परिहितवाससं ब्रह्मचारिणमनुमन्त्रयते । 'परीमं सोमम्' इत्यस्याः स्थाने 'परीममिन्द्रम्' इति राजन्यस्य, 'परीमं मनुम्' इति वैश्यस्य ।

ततो वाससः परिधाननिमित्तमाचमनं ब्रह्मचारिणं कारयित्वा 'यज्ञोपवीतं परमं पवित्रम्' इति ब्रह्मसूत्रं परिधापयति । 'यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥' । आचार्य एवैतं मन्त्रमाह । 'यज्ञस्योपवीतमसि यज्ञस्य त्वोपवीतेनोपनह्यामि' इति यदा स्वयं परिदध्यात् । ततः कृताचमनं पवित्रपाणिमग्निमभिदक्षिणमानीय 'एह्यश्मानम्' इति प्राङ्मुखं दक्षिणेन पदाऽश्मानमास्थापयति । § ब्राह्म.

**'मम व्रते हृदयं ते दधामि मम चित्तमनु चित्तं ते अस्तु । मम वाचमेकव्रतो जुषस्व बृहस्पतिस्त्वा नियुनक्तु मह्यम् ॥' इति नाभिदेशादूर्ध्वं पाणिनोन्मार्ष्टि ॥**

(१) 'मम व्रते' इत्यादिना मन्त्रेण नाभिमारभ्य शिखान्तं यावद्ब्रह्मचारिणः आचार्य उन्मार्ष्टि । व्रतमिति कर्मनाम । हे ब्रह्मचारिन्, मम व्रते कर्मणि ते तव

§ आवि. ब्राह्मवत् ।

हृदयं ददामि त्वदीयं हृदयं मच्चिकीर्षितकर्मसहायमस्त्वित्यर्थः । मम संबन्धि चित्तं ते तव अनुचित्तमस्तु मदीयचित्तानुगतं तव चित्तमस्त्वित्यर्थः । मम संबन्धिनीं वाचं त्वमेकव्रतो भूत्वा जुषस्व यदहमध्यापयामि तदेकचित्तो भूत्वा अधीष्वेत्यर्थः । वाग्वै बृहती, तस्याः पतिः बृहस्पतिः आत्मा । स त्वां नियुनक्तु सम्यक्संकल्पद्वारेण मत्सेवादौ प्रवर्तयतु मह्यं मदर्थम् । ममापि तथा सति आचार्यकसंपत्तिरुपकारो भविष्यतीत्यर्थः ।

देव.

( २ ) मम व्रत इति पाणिना ऊर्ध्वाङ्गुलिना नाभिदेशादारभ्य ऊर्ध्वम् आ शिरस उन्मार्ष्टि । ¶ ब्राह्म.

**'दधिक्राव्णः' इति त्रिर्दधि भक्षयित्वा 'ब्रह्मचर्यमागामुप मा नयस्वों भूर्भुवः स्वः' इति वाचयति ॥**

( १ ) ब्रह्मचारी वक्ति, तमाचार्यो वाचयति 'ब्रह्मचर्यम्' इत्यादि 'स्वः' इत्यन्तम् । किं कृत्वा ? 'दधिक्राव्णः' इत्यादिना त्रिर्दधि भक्षयित्वा भक्षणे ब्रह्मचारिणं प्रयुज्य । खादित्वा आचान्तः 'ब्रह्मचर्यम्' इत्यादि ब्रह्मचारी पठति गुरुपाठितः सन्निति तात्पर्यम् ।

'दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखा करत्प्र ण आयूंषि तारिषत् ॥' * एषा

¶ आवि. ब्राह्मवत् ।

* "अनुष्टुप् । अस्याश्च ऋचः सुरभिमतीति नाम । तथा च श्रुतिः— 'ऋत्विजो यजमानाश्च सुरभिमतीमृचमन्वाहुर्वाचमेव पुनते' इति । अन्यत्राश्वसंस्कारोत्तरकालमृत्विग्यजमानयोर्दधिभक्षणसमयादावियमभ्यर्थना इहापि यथायोग्यत्वं योजयितव्या । क्रामतीति क्रावा । जयनशीलः जिष्णुः । व्याप्त्यर्थस्याश्नोतेरश्वः । वेजनवान् वाजी अन्यत्राश्वः, इह तु प्रजापतिः । यत् क्राव्णो जिष्णोरश्वस्य वाजिनः अश्वस्य संस्कारकाले अश्लीलाभिभाषणेन मुखान्यपवित्रीभूतानि दधि दध्ना पवित्राणि अकारिषम् । व्यत्ययेनैकवचनम्, उत्तरत्र च बहुवचनदर्शनात् । वयम् अकारिष्म । प्रजापतेर्वा सर्वात्मकस्य वेदात्मनो वा अज्ञानेनापभाषणेन बाल्यादितया अपवित्राणि मुखा मुखानि । 'शेश्छन्दसि बहुलम्' ( पासू. ६।१।७० ) इति लुक् । नः

व्याख्याता । 'ब्रह्मचर्यम्' इत्यादि ब्रह्मचारी ब्रवीति । हे गुरो, अहं ब्रह्मचर्यमागां ब्रह्मणः वेदस्य चरणम् आगाम् आगतः प्राप्तः ब्रह्मचर्यं मया अवश्यकर्तव्यतया संकल्पितम् । अत उपनयस्व मां संस्कुर्वित्यर्थः । अध्येषणे लोट् । हे उपनेतः, तवाप्याचार्यकसिद्धिः फलं भविष्यति मां संस्कुर्वत इत्यात्मनेपदेन बोधयति । आदित्यदर्शनस्तु व्याख्यातवान्— 'गुरुरिदमाह— ब्रह्मा प्रजापतिः, तस्य चरणं ब्रह्मभावम् अहम् आगाम् आगतः, अतो मामुपनयस्व ब्रह्मसमीपं प्रापय हे ब्रह्मचारिन्' इत्यादि । एतत् विचिन्त्यम् । ओमिति ब्रह्मणोऽभिधानम्, 'ओमिति ब्रह्म खं ब्रह्म' इति श्रुतेः । भूरिति भूलोकस्था देवता अग्निरूपोच्यते । भुवरित्यन्तरिक्षदेवता पूर्ववत्तात्स्थ्यात्, स च वायुः । स्वरिति स्वर्लोकस्था देवता आदित्यात्मिकोक्ता । ¶ देव.

( २ ) 'दधिक्राव्णः' इति त्रिर्दधि प्राशयित्वा ततः कृताचमनं 'ब्रह्मचर्यमागामुप मा नयस्व' इति वाचयित्वाऽऽर्षादिकं स्मृत्वा कृतपादोपसंग्रहणं प्रत्यङ्मुखं पश्चादग्नेर्दर्भेष्वासीनं प्रणवं व्याहृतीश्चाध्यापयति ।

ब्राह्म.

**'इयं दुरुक्तात्परिबाधमाना वर्णं पवित्रं पुनती म आगात् । प्राणापानाभ्यां बलमाभजन्ती सुखा देवी सुभगा मेखलेयम् ॥ ऋतस्य गोप्त्री तपस्तरुत्री घ्नती रक्षः सहमाना अरातिम् । सा नः**

अस्माकं सुरभि सुरभीणि पवित्राणि करत् । लोडर्थे लेट् । 'इतश्च लोपः परस्मैपदेषु' (पासू. ३।४।९७) इति तेरिकारलोपः । 'लेटोऽडाटौ' (पासू. ३।४।९४) इत्यडागमः । करोतु । किंच, अश्वः प्रजापतिर्वा अस्माकमायूंषि प्रतारिषत प्रतरतु करोतु । 'तॄ प्लवनतरणयोः' । पूर्ववत् पञ्चमलकारादि । 'सिब्बहुलं लेटि' (पासू. ३।१।३४) । इट्, गुणः, वर्णव्यत्ययेनाऽऽकारः । " इत्युपाकरणप्रकरणे व्याख्याता । तत्रान्ते 'गुणः, वर्णव्यत्ययेनाऽऽकारः' इति रभसोक्तिः । 'सिब्बहुलं णिद्वक्तव्यः' इति वार्तिकेन णित्वाद्वृद्धिरिति वक्तव्यम् ।

¶ आवि. देवगतम् ।

**समन्तमनुपरेहि भद्रे भर्तारस्ते मेखले मा रिषाम ॥ श्रद्धाया दुहिता तपसोऽधि जाता स्वसर्षीणां मन्त्रकृतां बभूव । सा मा मेखले परिरेरिहस्व मयि धेहि तप इन्द्रियं च ॥' इति वाचयन्मेखलामाबध्नीते ॥**

( १ ) इयं दुरुक्तादित्यादिकात्रिष्टुभो वाचयन्नाचार्यो मेखलामाबध्नीते । ब्रह्मचारी वक्ति, गुरुर्वाचयति । इयं मेखला दुरुक्तात् दुष्टात् असत्यभाषणादिकादुक्ताद्वचनात् परिबाधमाना वारयन्ती, तस्यां बद्धायां वाक्पणिपादचापलवारणान्नियमचोदनाद्वर्णं ब्राह्मणादिजातित्रयं पुनती पावयन्ती अध्ययनादियोग्यतापादनद्वारेण, रूपादिकं वा वर्णं पुनती, स्वभावपवित्रं पावनयोग्यं वा । सा मे मम आगात् आगता प्राणापानाभ्यां बलमाभजन्ती ददती स्वाध्यायादिद्वारेण । 'भञ्जो आमर्दने' इत्यस्य । वर्णात्मकं रूपमाभजन्ती विनाशयन्ती । तस्यां हि सत्यामध्ययनं क्रियते, तच्च क्रियमाणं प्राणापानौ निरुद्धय क्रियते इति प्राणापानबलमपहृतं तया भवति । सखा समानख्याना । देवी द्योतनादिगुणयुक्ता । सुभगा हृद्या नवकोमलमुञ्जसंगता । ऋतस्य सत्यस्य गोप्त्री पालयित्री, तस्यां सत्यां यथेष्टवाचित्वनिवारणात् । ऋतस्य यज्ञस्य वा रक्षिका, बद्धमेखलेन वेदतीर्थादिगमनात् । तपसः व्रतनियमसहितस्य वेदाध्ययनस्य तरुत्री तारयित्री पारं नयत्री( ? नयन्ती ) । घ्नती रक्षः यातुधानान्नाशयन्ती, 'वज्रो वै मेखला' इति श्रुतेः । सहमाना अरातिं शत्रुम् अदानं वा प्रसहमाना अभिभवन्ती । कार्पण्यं शत्रूंश्च निवारयन्तीत्यर्थः । सा नः अस्माकं समन्तं समन्तात् अनुपरेहि आगच्छ भद्रया वृत्त्या । हे मेखले, तव भर्तारः धारयितारः सन्तो वयं मा रिषाम, रिषिर्हिंसाकर्मा, त्वां धारयतामस्माकं हिंसा मा भूत् । श्रद्धाया आस्तिक्यस्य दुहिता श्रद्धाऽस्या माता, तपसोऽधिजाता, तपोऽस्याः पिता, मन्त्रकृतां सम्यग्ज्ञानविदामृषीणां स्वसा भगिनी बभूव भूता । हे मेखले, सैवंभूता त्वं मां परिरेरिहस्व । 'लिह आस्वादने' । छान्दसो वर्णव्यत्ययः । मां समाश्लिष्य । मयि तपः नियमयुक्ताध्ययनं धेहि निधेहि, इन्द्रियं च मे इन्द्रियषट्कपाटवं च देहि ।

¶ देव.

( २ ) ततः 'इयं दुरुक्तात्परिबाधमाना' इति वाचयन्मेखलां त्रिः प्रदक्षिणमाबध्य । ब्राह्म.

**[१] 'चित्तस्य समोऽसि दैव्यो ग्रन्थिरसि मा विस्रसः' इति ग्रन्थिं कृत्वा 'मित्रस्य चक्षुर्धरुणं बलाय तेजो यशस्वि स्थविरं समृद्धम् । अनाहनस्यं वसनं चरिष्णु परीदं वाज्यजिनं दधेऽहम् (? धेयम्, ? धेऽहम्) ॥' इति वाचयन्नैणेयं चर्म ब्राह्मणाय प्रयच्छति, वैयाघ्रं राजन्याय, रौरवं वैश्याय ॥**

( १ ) 'चित्तस्य समोऽसि' इत्यनेन मन्त्रेण मेखलाग्रन्थिं कृत्वा शिखावत् यथाकुलप्रसिद्धि, 'त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा' ( मस्मृ. २।४३ ) इत्यादिस्मरणात्, 'मित्रस्य' इत्यादि वाचयन् ऐणेयं कृष्णमृगस्य संबन्धि चर्म ब्राह्मणाय प्रयच्छत्युपनेता, राजन्याय व्याघ्रचर्म, रुरुचर्म वैश्याय । मेखलाग्रन्थौ चर्मदाने च त्रयाणां साधारणौ मन्त्रौ ।

चित्तस्येति । हे ग्रन्थे, त्वं चित्तस्य समः चित्तेन तुल्यः । यथा ब्रह्मचारिणश्चित्तं न चलति, व्रताध्ययनादिशुद्धं तिष्ठति, तथा त्वमपि न चलसि, यावद्ब्रह्मचर्यमवस्थानात् । दैव्यः देवानां संबन्धी त्वं ग्रन्थिरिति स्तुतिः । ततश्च मा विस्रसः मुक्तो मा भूः ।

मित्रस्येति त्रिष्टुप् । ब्रह्मचारी ब्रूते– इदमजिनमहं परिदधेयं परिदधे । कीदृशम् ? मित्रस्य अहिंसस्य हरिणस्य रुरोः चक्षुः दर्शनं प्रसिद्धम् । वैयाघ्रपक्षेऽपि व्याघ्रो मित्रमेव, राज्ञोऽभिमतचर्मदानाच्छौर्यसरणाच्च । धरुणं ब्रह्मचर्यादिकस्य धारणम् । बलाय ब्रह्मचर्यसामर्थ्यार्थं परिदधे । तेजः, ब्रह्मवर्चसस्य तेजसो निमित्तत्वात् ।

¶ आवि. देवगतम् ।

(१) काग्. ४१।१३ ; गोरा. २।४३ 'मित्रस्य चक्षु... वैश्याय० ) ; मवि. २।४३ अशुद्धिबहुलो ग्रन्थः, शेषं गोरावत् ·

यशस्वि यशस्करम् । स्थविरं वृद्धमिव गौरवपात्रं स्थिरतरं वा । समृद्धं समृद्धिकारि । अनाहनस्यम्– आहन्तीति आहनाः, 'सर्वधातुभ्योऽसुन्' (उ. सू. ६३८) इत्यसुन्, आहनसि साधु आहनस्यम्, तत्प्रतिषेधः अनाहनस्यम् । वसनम् आच्छादनम् । चरिष्णु गमनशीलं मृगावस्थायामभूत् । वाजि वाजम् अन्नम्, तद्दियतेऽस्येति वाजि । तस्मिन्परिहिते ब्रह्मचर्यावस्थाय भक्त्याऽन्नं प्रयच्छन्तीति तस्यान्नत्व( ? न्नवत्त्व )मुपचर्यते । देव.

(२) 'चित्तस्य समोऽसि' इति त्रिगुणं प्रवरसंख्यया वा ग्रन्थिं करोति । द्विप्रवरादीनां मन्त्रावृत्तिः । 'मित्रस्य चक्षुः' इति वाचयन्नजिनं परिधाप्य । $ ब्राह्म.

[1] 'तच्चक्षुः' इत्यादित्यमुपस्थापयति ॥

(१) तच्चक्षुरित्यादिना आदित्योपस्थानं कारयति । 'तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शतम् ॥' – तदेव चक्षुस्त्रैलोक्यस्य पुरस्तात् पूर्वस्यां दिशि उच्चरति( ? रत् ) उदेति । देवहितं देवैर्विहितं प्रेरितं निर्मितं वा, देवेभ्यः इन्द्रियेभ्यः वा हितम् । तत् शरदां शतं पश्येम पश्यन्तश्च वर्षशतं जीवेमेति ब्रह्मचारी शंसत्युपतिष्ठमान आदित्यम् । ¶ देव.

(२) 'तच्चक्षुः' इति वाचयित्वाऽऽदित्यमुपस्थापयति । ब्राह्म.

**'को नामासि' इत्युक्तेऽभिवादने प्रोक्ते 'असा अहं भोः' इति प्रत्याह ॥**

(१) गुरुराह 'को नामासि' इति । क इति प्रजापतिनाम । तथा च ब्राह्मणम्– 'को नामासीति प्रजापतिर्वै को नाम' इति । वेदग्रहणाभिमुखत्वात्प्रजापतिरिवासीति स्तुतिच्छलेन साक्षात् प्रश्नोऽयम्, प्रतिवचनविधानात् । गुरुणा पृष्टः शिष्योऽभिवादयते स्वनामोच्चारणेन । 'असौ' इत्युक्ते नाम प्रतीयात् । 'विष्णुमित्रोऽहमभिवादये भोः' इति ब्रह्मचारिणाऽभिवादितो गुरुः प्रत्यभिवादनमाह प्लुतान्तम्, 'प्रत्यभिवादेऽशूद्रे' (पासू. ८।२।८३) इति स्मृतेः, 'आयुष्मानेधि सोम्य विष्णुमित्र ३' इति, स्मृतेरपि 'आयुष्मान्भव सौम्येति वक्तव्योऽन्त्याक्षरे प्लुतः ।' इति । देव.

(२) ततः 'को नामासि' इत्याचार्येणोक्तः पादावुपसंगृह्य 'अभिवादये देवशर्माऽहं भोः' इत्येवं प्रत्याह । 'आयुष्मान्भव सोम्य देवशर्मा३न्' इत्येवं प्रत्यभिवादनम् । † ब्राह्म.

**'देवस्य ते सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णाम्यसा उपनयेऽसौ । सविता ते हस्तमग्रहीदग्निराचार्यस्तव । कस्त्वा कमुपनयेऽसौ काय त्वा परिददामि । कस्य ब्रह्मचार्यसि । प्राणस्य ब्रह्मचार्यसि' इति प्रत्याह ॥**

(१) आचार्यो ब्रह्मचारिणो दक्षिणं हस्तं दक्षिणेन हस्तेन विवाहोक्तविधिना गृह्णाति 'देवस्य ते' इत्यादिना । हे ब्रह्मचारिन् विष्णुमित्र, अहमाचार्यो हरिशर्माभिधानस्त्वामुपनये इति शिष्यं स्वनाम्ना संबोध्य स्वनामोच्चार्य गृहीतहस्तो गुरुर्ब्रवीति । एकोऽसाविति शब्दः शिष्यबोधने, द्वितीय आचार्यनामोपलक्षणार्थः । ते तव हस्तं गृह्णामि । कीदृशस्य ? देवस्य द्योतनादिधर्मकस्य, सवितुः पदार्थादिज्ञानस्य जनयितुः । किमर्थम् ? प्रसवे प्रकृष्टज्ञानादिजननाय । स्तुत्यर्थमाह–नैवं भ्रमणीयम्– यदुत चर्ममयाभ्यामात्मीयाभ्यां बाहुभ्यां हस्ताभ्यां वा हस्तं गृह्णाम्यहमिति । किं तर्हि ? अश्विनोः देवभिषजोः बाहुभ्यां पूष्णश्च हस्ताभ्याम् ।

सवितेति । गृहीतहस्त एवाऽऽचार्य आह– सविता अभिमतस्य जनयिता आदित्यः ते तव हस्तमग्रहीत् । आत्मानमेव सवितृत्वेनोपचरति गुरुः । अग्निराचार्यस्तव, नाहम् । अहमेवाग्निस्तवाऽऽचार्यः, वेदार्थज्ञानतदनुष्ठान-

$ आवि. ब्राह्मवत् ।

¶ आवि. देवगतम् ।

(१) काग्. ४१।१४–१९.

† आवि. ब्राह्मवत् ।

तपःप्रभृतिभिर्ज्वल्यमानत्वात् । कः प्रजापतिः सन्नहं गुरुरात्मरूपेण कं प्रजापतिमेव सन्तं त्वाम् अहमुपनये असौ $विष्णुमित्रनामा । सर्वेषामेवान्तरमेकः, स एव च संस्कारैरौपाधिकदोषनिवृत्त्या संस्क्रियते । काय प्रजापतये त्वामहं परिददामि परिरक्षार्थं ब्रह्मणे त्वां समर्पयामीत्यर्थः ।

कस्येति । कस्य प्रजापतेः ब्रह्मचार्यसीति भङ्ग्या प्रश्ने आचार्येण कृते सति शिष्यः प्रत्याह– प्राणस्य ब्रह्मचारी असि भवामीत्यभ्युपगमभङ्ग्यैव प्रत्युत्तरम् । प्राणो हि प्रजापतिरेव जगत्सूत्रभूतः । तथा च श्रुतिः– 'हिरण्यगर्भः पुरुषो महांस्त्वं प्राणो जगत्सूत्रमनादिरिन्द्रः । बोधः शुचिर्धर्मतरान्तरात्मा तथा विधाता जगतोऽस्य देव ॥' इति । † देव.

( २ ) ततः प्रत्यभिवादनादनन्तरं 'देवस्य ते' इति दक्षिणेन नीचा हस्तेनोत्तानं दक्षिणं साङ्गुष्ठं ब्रह्मचारिहस्तं गृह्णाति । अत्रासौशब्दस्थाने संबुद्ध्यन्तं नाम सर्वत्र ब्रह्मचारिणो ग्राह्यम्, यथा 'देवस्य ते सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णामि देवस्वामिन् उपनये देवस्वामिन्' । अत्रासौशब्दे स्वं नामाऽऽचार्यो गृह्णातीति केचिद्वदन्ति । मीमांसकास्तु नैतन्मन्यन्ते । ततः 'सविता ते हस्तमग्रहीत्' इत्यादि गृहीतहस्त एवाऽऽचार्यो वक्ति । 'कस्त्वा कमुपनये देवदत्त' इत्येव प्रयोगः । ब्राह्म.

$ अत्र पूर्वमन्त्रव्याख्यानोपक्रान्तस्योपनेतृनाम्नः 'हरिशर्मा' इत्यस्योदाहार्यत्वे 'विष्णुमित्रनामा' इति पूर्वोपक्रान्तमुपनेयनाम रभसादुदाहृतम् । यद्यत्रासौशब्दस्थाने उपनेयनामग्रहणमिष्यते तदाऽस्योपनेतृवाक्यत्वात् 'विष्णुमित्रनामन्' इति संबुद्ध्यन्तमुदाहर्तव्यम् । न च मन्त्रभेदादत्र विष्णुमित्रेति नामोपनेतुरेवाभिप्रेतमिति वाच्यम्, मन्त्रभेदेऽप्युभयत्रोपनेत्रुपनेययोरभेदात् बोद्धृबुद्धिसंमोहकरस्य नामान्तरोदाहरणस्यान्याय्यत्वात् । अत एव ब्राह्मव्याख्यानेऽपि 'देवस्वामिन्' इति 'देवदत्त' इति च उपनेयनामद्वयोदाहरणं न्यायोपेतमिति भाति ।

† आवि. देवगतम् ।

**'प्रजापतये त्वा परिददामि । देवाय त्वा सवित्रे परिददामि । बृहस्पतये त्वा परिददाम्यसौ । देव सवितरेष ते ब्रह्मचारी तं गोपायस्व दीर्घायुः स मा मृत । अग्निपुत्रैष ते, वायुपुत्रैष ते, सूर्यपुत्रैष ते, विष्णुपुत्रैष ते, ब्रह्मपुत्रैष ते ब्रह्मचारी तं गोपायस्व दीर्घायुः स मा मृत । ब्रह्मचार्यसि । अपोऽशान । कर्म कुरु । दिवा मा सुषुप्सीः । वाचं यच्छ' ॥**

**‡ बाढमित्यभ्युपगमः ॥**

( १ ) हे ब्रह्मचारिन्, प्रजापतये परिरक्षार्थमहं त्वां ददामि । देवाय सवित्रे अन्तरात्मने । बृहस्पतये– वाग्वै बृहती, तस्याः पतिरात्मा, तस्मै ददामीति समानम् । असाविति आचार्यनामप्रदर्शनार्थम् । हे देव स्वप्रकाशतया द्योतमान, हे सवितः अभिमतव्रतादिजनयितः, एष ब्रह्मचारी ते तव संबन्धी, तं गोपायस्व पालय । दीर्घायुः सोऽस्तु, मा मृत मरणं मा भूदस्य । प्रत्यक्षेऽपि परोक्षनिर्देशो वैदिको व्यत्ययः ।

अग्नेः पुत्रः ऋग्वेदः । वायोः पुत्रो यजुर्वेदः । सूर्यस्य पुत्रः सामवेदः । हे ऋग्वेद, यजुर्वेद, सामवेद, एष ब्रह्मचारी तुभ्यं परिरक्षार्थं दत्त इति ते तव प्रत्येकं संबन्धी, अतस्तं गोपायस्व । तथा च ब्राह्मणमग्न्यादिपुत्रत्वमृग्वेदादीनां दर्शयति– 'प्रजापतिर्वा एक आसीत् । स तपोऽतप्यत । ततस्तपस्तेपानेन त्रयो देवा असृज्यन्त– अग्निर्वायुरादित्यः । ते तपोऽतप्यन्त । तेभ्यस्तपस्तेपानेभ्यस्त्रयो वेदा असृज्यन्ताग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेदः' इति । विष्णुपुत्रो ब्रह्मपुत्रश्चेति संभूतग्रामः । अथवा अग्नेः पुत्रो भूलोकः, अस्याधिष्ठात्री देवता अग्निः । एवं वायुपुत्रोऽन्तरिक्षलोकः, सूर्यपुत्रो द्युलोकः । यद्वा पुरु बहु त्रायते इति पुत्रः, अग्निश्चासौ पुत्रोऽग्निपुत्रः । एवमन्यत्रापि योजना ।

‡ कॅलण्डसंपादितपुस्तके सूत्रमिदं नास्ति । देवपालभाष्यशेषोऽयं स्यादित्यस्ति संभवः ।

इदानीं गृहीतहस्तमेनमनुशास्ति– ब्रह्मचारीति । गुरुराह– हे ब्रह्मचारिन्, त्वं संप्रति यतो ब्रह्मचारी संपन्नोऽत एतानि पञ्च कर्तव्यानि बुध्यस्व । अपोऽशान निमित्तोपनताचमनादिकं कुरु । तथा गुरुपरिचर्यावेदाध्ययनादिकं कर्म कुरु । दिवास्वप्नं च वर्जय । मत्प्रसादेन शरीराद्यपाटवदशायामभ्युपगच्छ दिवास्वापम्, इच्छायाः स्वतन्त्राया निषेधात् । वाक्संयमनं च कुरु, अनृतपरुषभाषणादिकं मा कुर्वित्यर्थः । देव.

(२) 'प्रजापतये त्वा परिददामि' इति नवभिः सानुषङ्गैर्गृहीतहस्त एव देवताभ्यः परिददाति । 'प्रजापतये त्वा, देवाय त्वा, बृहस्पतये त्वा' इति त्रयः । 'बृहस्पतये त्वा परिददामि विष्णुदत्त' इत्येवं प्रयोगः । 'देव सवितरेष ते, अग्निपुत्र, वायुपुत्र, सूर्यपुत्र, विष्णुपुत्र, ब्रह्मपुत्र' इति षट् । ततः 'ब्रह्मचार्यसि' इति पञ्चभिरनुशास्ति । बाढमिति प्रत्याह । ब्राह्म.

(३) ततः 'प्रजापतये त्वा परिदधा(?दा)मि' इति नवभिः सानुषङ्गैः परिददाति देवताभ्यः गृहीतहस्त एव । यतो हस्ते गृहीत्वा लोके रक्षार्थं परिधी(?दी)यते । असौशब्दस्थाने सर्वत्र माणवकस्य नाम संबुद्ध्यन्तम् । 'अग्निपुत्र वायुपुत्र सूर्यपुत्र विष्णुपुत्र ब्रह्मपुत्र' इतेःयेषङ्गानुषङ्गाः आद्यास्त्रयः(?) । ततः पञ्चभिरनुशास्ति । ब्रह्मचार्यसि इदानीं ब्रह्मचारी भवसि देवदत्त । प्रागुपनयनात्कामाचारवादभक्ष आसीः, अद्यप्रभृति नियमवान्भवसीत्यर्थः । तदुक्तम्– 'उपनयनप्रभृति व्रतचारी स्यात्' (काग. १।१) इति । अपोऽशान अद्यप्रभृति उपस्पर्शनं कुरु, नित्यं शुचिर्भव । कर्म कुरु नैत्यकं शुश्रूषामध्ययनमग्नीन्धनभैक्षचरणादि च । दिवा मा सुषुप्सीरिति दिवास्वप्ननिषेधः । वाचं यच्छेति अनृतामपि प्रियां चारुषर्तीं (? चाऽऽरुशर्तीं) वाचं मा वोचः । अत्र प्रत्येकं बाढमित्युपगमः । आवि.

**'मेधां मह्यम्' इति वाचयति । 'मेधां मह्यमङ्गिरसो मेधां सप्तर्षयो ददुः । मेधामग्निश्च वायुश्च मेधां धाता ददातु मे ॥ मेधां मे वरुणो राजा मेधामग्निर्ददातु मे । मेधामिन्द्रश्च सूर्यश्च मेधां देवी सरस्वती ॥ या मेधा अप्सरःसु गन्धर्वेषु च यन्मनः । दैवी मनुष्ये या मेधा सा मामाविशतादिह ॥ शरीरं मे विचक्षणं वाङ्मे मधुमद्दुहे । निशामितं निशामये मयि श्रुतम् ॥ यन्मेऽनूक्तं तद्रमतां शकेयं यदनुब्रुवे । प्रियाः श्रुतस्य भूयास्म मेधया संविधीमहि ॥ अवृधमहमवृधस्त्वमसौ सोम्य प्राणस्त्वं मे गोपाय ब्रह्मण आणी स्थ श्रुतं मे मा प्रहासीत्' इति ॥**

'मेधां मह्यम्' इत्यादिकाः पञ्च ऋचः षष्ठं यजुः शिष्यो वक्ति, गुरुर्वाचयति । कुशाग्रीया बुद्धिर्मेधा । ताम् अङ्गिरसः वायवः प्राणापानसमानव्यानोदानाः ददुः ददतु मह्यम् । अङ्गानि रसयन्तीत्यङ्गिरसः आन्तरा वायवः । तथा सप्तर्षयः वसिष्ठाद्याः मह्यं मेधां ददतु । एतत्समानमृग्द्वये । अप्सरःसु या मेधा, यच्च गन्धर्वेषु मनः अन्तःकरणम्, या च दैवी वेदार्थादिसाक्षात्कारिणी मनुष्येषु मेधा स्थिता इहलोके, सा सर्वा माम् आविशतु प्रविशतु । मम शरीरं विचक्षणं पण्डितम् अस्तु अधिष्ठातृद्वारेण । वाक् च वेदादिरूपा मधुमत् मधुरफलं दुहे दुग्धाम् । यच्च मयि श्रुतं स्थितं निशामितं तन्निशामये चिन्तयेयं सम्यक् । यच्च मम अनूक्तं गुरुणोक्तं तद्रमताम् । यच्चानुब्रुवे गुरूक्तमनुवदामि तच्छकेयं शक्नुयाम् । वयं च श्रुतस्य प्रिया भूयास्म श्रुतमस्माकं पर्यवसितमस्तु । मेधया संविधीमहि संवध्येमहि । आत्मानमुद्दिश्य यजुषा शिष्य इदमाह– हे अन्तरात्मन् प्राणादिक, असौ विष्णुमित्रोऽहम् अवृधं वर्धिष्ये । त्वमपि चावृधः असौ प्राणादिकः(? क) । तस्यापि हि वेदाध्ययनादिनाऽतिशयो भविष्यति । हे सौम्य, प्राणस्त्वं जगत्सूत्रम्, अतो मे मां गोपाय । त्वं ब्रह्मण आणी सारं स्थ भवसि । श्रुतं मे मा प्रहासीत् श्रुतं मे मा त्याक्षीत् । मम संबन्धि यच्छ्रुतं तन्मां मा त्याक्षीदित्यर्थः । अत्र चतुर्थी उष्णिक्, शिष्टा अनुष्टुभः । 'अवृधमहम्' इत्यादि षष्ठं यजुः । $ देव.

$ ब्राह्म., आवि. देवगतम् ।

**एताभिरेव चतसृभिरनुप्रवचनीयाञ्जुहुया-द्यजुषोत्तमाम्, 'छन्दोभ्यः स्वाहा' इति, क्रतु-नामधेयेन यथोपाचरितः क्रतुर्भवति । एवं सर्वाणि वेदोक्तानि ॥**

(१) अनुप्रवचनं प्रयोजनं येषां ते अनुप्रवचनीया होमा इत्यन्वर्था संज्ञा । अनु उत्तरकालं हि सावित्र्याः प्रवचनं कारयिष्यते गुरुणा । अथवा अनुप्रवचनमर्हन्तीत्यनुप्रवचनीयाः । अत्र हि मन्त्रानुपाध्यायो वक्ति, शिष्योऽनुप्रवक्ति । अनुप्रवचनीयसंज्ञकान् होमानेताभिरेव प्रकृताभिश्चतसृभिर्ऋग्भिः कपिञ्जलाधिकरणन्यायेन 'मेधां मह्मम्' इत्याद्याभिर्जुहुयात् । तेन चत्वारो होमाः । पञ्चममाह– यजुषोत्तमाम् । 'अनृधम्' इत्यादिना यजुषोत्तमामाहुतिं पञ्चमीं जुहुयादिति केचित् । अन्ये त्वाहुः– अत्र पक्षे पञ्चम्या ऋचो विनियोगाभावः प्राप्नोति । उत्तमामिति स्त्रीलिङ्गनिर्देशो न युज्यते, प्रकृतस्यानुप्रवचनीयस्य पुंस्त्वात्, तदपेक्षयोत्तममिति प्रसङ्गात् । न चाऽऽहुतिशब्दः प्रकृतोऽस्ति । तस्मादुत्तमामृचं यजुषा सह संयोज्य पञ्चममनुप्रवचनीयं जुहुयादित्यर्थः । षष्ठमनुप्रवचनीयहोममाह– छन्दोभ्य इति । क्रतुरिह कर्म । कर्मनामधेयेन च जुहुयात् । एष सप्तमोऽनुप्रवचनीयहोमः । कथं क्रतुनामधेयेन होतव्यम्? यथोपाचरितः क्रतुर्भवति येन प्रकारेण प्रकृतं कर्मोपाचरितमिष्टं भवति तथा होतव्यम् । चतुर्थीयोगेन स्वाहाकारेण चाभिधानशक्तियोगिना च कर्मनामधेयेन 'उपायनाय स्वाहा' इति 'उपनयनाय स्वाहा' इति वा । एवं सर्वाणि वेदोक्तानि अनेनैव प्रकारेण सर्वाणि वेदोक्तानि कर्माणि स्वनामधेयेन 'छन्दोभ्यः स्वाहा' इति हुत्वा होतव्यानि 'त्रैविद्यकाय स्वाहा' इत्यादिप्रकारेण । देव.

(२) 'ये के च ज्मा' इत्यष्टमी । † ब्राह्म.

(३) अत्र देवताऽप्रज्ञायमाना, द्रव्यदेवतानभिधानात् । तस्माद्वैश्वदेव्याऽष्टमो होमः । ...... एवं सर्वाणि वेदोक्तानि । होमद्वयमेवातिदिश्यते 'छन्दोभ्यः स्वाहा' इत्येकः क्रतुनामधेयेन च । वेदोक्तानि, यथा 'चातुर्होतृकाय, प्रवर्ग्यव्रताय' चेत्यादि । सर्वातिदेशे सर्वं प्राप्नोति दधिभक्षसंस्थापनमार्जनपरिदानवाचनादीनि केन वार्यन्ते? भवन्तु चेत्, इति व्रतं पुनरुपनयनप्रसङ्गादिति प्रसक्ताः (?) । 'ब्रह्मचर्यमागामुप मा नयस्व' इति च केन वार्यते? तस्माद्धोमद्वयमेवातिदिश्यत इति माधवरातपादा मन्यन्ते । मेखलादीनि यथा व्रतेषु प्र(? भ)वन्ति तथा तत्रैव दर्शयिष्यामः । $ आवि.

† शेषं देवगतम् ।

**'पश्चादग्नेर्दर्भेषु प्राङासीनः प्रत्यङ्ङासीनाय 'तत्सवितुः' इति सावित्रीं त्रिरन्वाह पच्छोऽर्धर्चशः सर्वामन्ततः । यश्च मेधाकामः स्यात् ॥**

(१) पश्चादग्नेर्दर्भेषूपविष्टः प्राङ्मुखो गुरुः प्रत्यङ्मुखासीनायाऽऽचार्यसंमुखोपविष्टाय शिष्याय सावित्रीं सवितृदेवतां 'तत्सवितुः' इत्यादिकां गायत्रीं त्रीन्वारानन्वाह । ब्राह्मणायेति ज्ञेयम् । उपलक्षणमेतत् । राजन्यवैश्ययोर्हि सावित्र्यावन्ये स्मृतिसदाचाराभ्यां बोद्धव्ये– 'अदब्धेभिः सवितः' इति राजन्याय, 'विश्वा रूपाणि' इति वैश्याय । कथमन्वाह? पच्छः । पादं पादं पच्छः, प्रथमोच्चारणे पादशोऽनुब्रूयात् । द्वितीयोच्चारणे अर्धर्चशः । ऋचोऽर्धमर्धर्चम् । अर्धर्चमर्धर्चमर्धर्चशः । अन्ते अन्ततः सर्वां तृतीयोच्चारणे यथाशक्त्यनुसारं वा सर्वामृचमनुब्रूयात् । यश्च मेधां शिष्यस्य कामयते सोऽपि पच्छो-

$ शेषं देवगतम् ।

(१) काग्र. ४१।२० ; अप. १।१५ पृ. ३३ (ओं भूर्भुवः स्वरित्युक्त्वा तत्सवितुर्वरेण्यमिति सावित्रीं त्रिराह पच्छोऽर्धर्चशः सर्वामन्ततः) एतावदेव ; मपा. २३ (ओं भूर्भुवः स्वरित्युक्त्वा तत्सवितुरिति सावित्रीं त्रिरन्वाह पच्छोऽर्धर्चशः सर्वामन्ततः) एतावदेव ; गमा. २०९ मपावत् ; संप्र. ४२९ (ओं भूर्भुवः स्वरित्युक्त्वा सावित्रीमन्वाह पच्छोऽर्धर्चशः सर्वामन्ततः) एतावदेव ; संग. ६७५–६७६ (भूर्भुवः स्वरित्युक्त्वा तत्सवितुरिति सावित्रीं त्रिरन्वाह पच्छोऽर्धर्चशः सर्वामन्ततः) एतावदेव.

ऽर्धर्चशः सर्वामन्ततोऽनुब्रूयात् । 'तत्सवितुः' इति व्याख्यातेयम् § ।

'अदब्धेभिः सविता पायुभिष्ट्वं शिवेभिरद्य परिपाहि नो गयम् । हिरण्यजिह्वः सुविताय नव्यसे रक्ष मा किर्नो अघशंस ईशत ॥ विश्वा रूपाणि प्रतिमुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे । वि नाकमख्यत्सविता वरेण्योऽनुप्रयाणमुषसो विराजति ॥' – एते यथासंख्यं राजन्यवैश्ययोरनुब्रूयात् । हे सवितः आदित्य, अद्य अस्मिन्नहनि नः अस्माकं गयं गृहं पाहि रक्ष पायुभिः पालकैः रश्मिभिः अदब्धेभिः अनुपहिंसितैः, शिवेभिः सुखकारिभिः । यतस्त्वं हिरण्यजिह्वः दीप्तकिरणः सुविताय हविरादिदात्रे नव्यसे स्तोत्रादिकर्त्रे, नौरिवाऽऽचरसि तारयिष्यसि आपत्समुद्रादिति वा । अतोऽस्मान् रक्ष । मा किः कश्चित् नः अस्मान् अघं पापं शंसति यः स चौरादिः ईशत प्रभूत् ।

सविता विश्वा रूपाणि सर्वान्भावान् प्रतिमुञ्चते प्रकाशयति कविः मेधावी क्रान्तदर्शनः । प्रासावीत् प्रसूते

---

§ प्रथमकण्डिकान्ते इयमेवं व्याख्याता– "अयं च पदार्थः– यत्तदिति सामान्यशब्दः । सामान्यं च सर्वभेदानुगतं ब्रह्मरूपं यथार्थम् । यथोक्तम्– 'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' ( भगी. १७।२३ ) इति । एतदपि हि सामान्यवचनमेव, अविचारितसिद्धयर्थत्वेन प्रयुज्यमानत्वात् । यत्किलाविचारितमेव गृह्यते तत्र ओमिति प्रयुज्यते । अविचारितसिद्धता चासंदेहवस्तुनि उपपद्यते, संदेहस्य भेदनिष्ठानेककोट्यवलेहितत्वात् । तस्मात् ब्रह्मण्येवाद्वैतेऽविचारितसिद्धत्वमुपपद्यते । अतो यत्तदिति ब्रह्मविधेयौ शब्दौ । य इत्यपि लिङ्गव्यत्ययः । धीशब्दश्च कर्मनामसु पठ्यते । तेन धीशब्देन ज्ञानवत्कर्माण्यप्युच्यन्ते । ते च सर्वलोका वयं चेति वयम् । त्यदादिषु परशेषः । तेषां नः अस्माकम्, अस्मद्युक्तानामित्यर्थः । धीमहीति 'ध्यै चिन्तायाम्', छान्दसं सप्रसारणम्, व्यत्ययेन लडर्थे लिङ्, ध्यायामः चिन्तयामः भावयामः उपास्महे इत्यर्थः । एवं प्रचोदयादित्यत्रापि । अथवा प्रचोदयादिति संभावनायां लिङ् । भर्ग इति दीप्तिरुच्यते भासनप्रकाशादिपर्यायः । 'भा दीप्तौ' इत्यस्य । औणादिको गप्रत्ययः, छान्दसौ च वर्णागमविकारौ । भाति दीप्यते प्रकाशते नित्यानन्दचैतन्यात्मकतयेति भर्गः । 'भ्राजृ दीप्तौ' इत्यस्य वा । भ्राजते इति भर्गः । 'भ्रस्ज पाके' इत्यस्य वा । भ्रस्जति (? भृज्जति) पचति औषधादिकमिति भर्गः । सर्वं हि सस्यादिकं ब्रह्म आदित्यरूपेण पचति संपादयति । जलपवनावपि हि रविरूपौ । तथा च निरुक्तकारः– 'पर्जन्यो वायुरादित्यः शीतोष्णवर्षैरोषधीः पचन्ति' ( नि. २।२२ ) इति । तथाऽऽरण्यके पर्वणि युधिष्ठिरस्य धौम्येन दिवाकराराधनसमयेऽभिहितम्– 'यथोत्तरायणे सूर्यः पृथिव्या रश्मिभी रसान् । उद्धृत्यान्नमोषधीः षड्रसांश्च सृजति... ॥' । दक्षिणायने चन्द्रतेजोभिरन्वितो दिवस्तेज उद्धृत्य वारिणाऽन्नादिकं जनयतीत्युक्त्वोक्तम्– 'एवं भानुमयं ह्यन्नं लोकानां प्राणधारणम्' ( भा. ३।३।९ ) इति । 'डुभृञ् धारणपोषणयोः' इत्यस्य वा । बिभर्ति धारयति पुष्णाति वा लोकानिति भर्गः । 'गल्भ धार्ष्ट्ये' इत्यस्य वा वर्णविकारविपर्ययाभ्याम् । प्रगल्भते शक्नोति धार्ष्ट्यं भजते जगदुदयस्थितिविलयतत्प्रकाशनादाविति भर्गः सामर्थ्यम् । 'वृजी वर्जने' इत्यस्य वा । वर्जयति अविद्यानिबन्धनभेदप्रपञ्चदुःखमिति भर्गः । तदनेनाध्यात्ममधिदैवतं वा सवितुर्भर्गो रूपमुक्तम् । तथा च श्रुतिः– 'स एष वै सविता य एष तपति' इति । 'वृञ् वरणे' । छान्दसः केन्यप्रत्ययः । वरणार्हं वरेण्यं ध्येयतया ध्यानफल( क ? )मुक्तिरूपप्राप्यतया चाभिलषणीयमित्यर्थः । दीव्यति क्रीडति जगन्निर्माणावस्थापनविलापनैः, विजिगीषते, व्यवहरति, स्तौति चार्थवादादिभिः, विवर्तात्मना गच्छति च विवर्तसंवर्तरूपमिति देवः, तस्य । सूते सस्यादीनि इति सविता, तस्य । एष पदार्थ उक्तः ।

अथ वाक्यार्थः– सवितुर्देवस्य संबन्धि वरेण्यं भर्गो धीमहि । तद्धि यत्तद्रूपं सामान्यस्वभावब्रह्मात्मकं यथायोग्यतां कर्माणि ज्ञानानि च लोकस्य प्रकर्षेण चोदयति प्रवर्तयति प्रचोदयात् प्रवर्तयेदिति वा संभाव्यते । एषा तावदेका पदघटना । यद्वा तदिति षष्ठ्याः 'सुपां सुलुक्' ( पासू. ७।१।३९ ) इति लुक् । य इति यथाश्रुतमेव । तस्य देवस्य सवितुर्वरेण्यं भर्गो धीमहि । कस्य सवितुः? यः सविता अस्माकं कर्माणि ज्ञानानि च प्रकर्षेण चोदयति ।" इति ।

अत्र जलपवनयो रविरूपत्वं साधयितुं प्रमाणीकृते निरुक्तवचने न सोऽर्थः प्रतीयते, पचन्तीति बहुवचनप्रयोगात्, 'त्रयस्तपन्ति पृथिवीमनूपाः' इति व्याख्येयमन्त्रे त्रित्वोक्तेश्च ।

जनयति भद्रं सुखं द्विपदे चतुष्पदे च । नाकं स्वर्गं व्याख्यातं व्यख्यत् प्रकाशयति । वरेण्यः वरणीयः प्रार्थनीयः । उषसः रात्रीणां प्रयाणमनु लक्षणीकृत्य हीनीकृत्य वा विराजति रात्रितमसोऽपहतत्वात् प्रकाशते । § देव.

( २ ) पश्चादग्नेर्दर्भेष्वन्वाह । एतत्प्रवचनं यदर्थमनुप्रवचनीया होमा उच्यन्ते । पश्चादग्नेर्दर्भेषु प्राङासीनः प्राङ्मुख उपविष्टः प्रत्यङ्मुखायाऽऽसीनायाऽऽचार्याभिमुखाय ब्रह्मचारिणे सावित्रीं ' तत्सवितुः ' इति प्राक्प्रदर्शितां त्रीन्वारानन्वाह निगदतीत्यर्थः । प्रणवव्याहृतयः पूर्वा एवानूक्ताः । कथं त्रिरन्वाह ? पच्छः पादशः पूर्वं पादं पादं विभज्य, ततोऽर्धर्चशः, सर्वां संहिताम् अन्ततः तृतीये रूपे । यश्चान्तोऽपि मेधाकामः प्रज्ञामिच्छन् स्यात्सोऽप्येव(?वं) स्वाध्यायकाले । निष्कामस्तु प्रकृत्या । आश्व.

**[1]पालाशमेकसरं दण्डं नवनीतेनाभ्यज्य तस्य च्छायायां वाचयति– 'सुश्रवः सुश्रवा असि यथा त्वं सुश्रवा अस्येवं मा सुश्रवः सौश्रवसं कुरु । यथा त्वं सुश्रवो देवानां वेदस्य निधिगोपोऽस्येवमहं ब्राह्मणानां ब्रह्मणो वेदस्य निधिगोपो भूयासम् ' इति ॥**

( १ ) पलाशस्यायं पालाशो दण्डः । तमेकसरम् अवान्तरशाखारहितम् ऋजुं सत्वचमव्रणं नवनीतेनाभ्यज्य स्वहस्तेन गृहीत्वा गुरुस्तस्य दण्डस्य संबन्धिन्यां छायायां शिष्यं व्यवस्थाप्य ' सुश्रवः ' इत्यादि पाठयति ।

पालाश उच्यते– हे सुश्रवः सुश्रवा असि । शोभनं श्रवणं यस्य स सुश्रवाः । तस्मिन्हि कर्माङ्गत्वेनोपादीयमाने दुष्टस्याकीर्त्यात्मकस्य शब्दस्य श्रवणं न भवति । अनुवादमाह– 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति ' । ब्राह्मणमपि– ' देवा वै ब्रह्मन्समवदन्त तत-स्तद्ब्रह्म पर्ण उपाशृणोत् सुश्रवा वै नाम एषः ' (काठसं. ३०।१०) इति । ब्रह्मणि वेदे देवा अवदन्त, ततस्तद्ब्रह्म पर्णे पलाशे समाश्रितं पलाशमाश्रितमित्यर्थः । अत एव पलाशः सुश्रवा इति नाम्ना प्रसिद्ध इति ब्राह्मणतात्पर्यम् । हे सुश्रवः, सौश्रवसं कुरु । सुश्रवा एव सौश्रवसः तं सौश्रवसम् । यथा त्वं सुश्रवः, देवानां विवदमानानां वेदस्य निधिगोपः वेदानां निधेः समूहस्य रक्षकः असि भवसि, एवमहं ब्राह्मणानां संबन्धिनो ब्रह्मणः वेदस्य निधिगोपो भूयासम् । ‡ देव.

(२) पालाशं पर्णं दण्डमेकसरं विशाखं सत्वकमृजुमव्रणं नवनीतेनाञ्जयित्वा सूक्ष्मयित्वा यूपवदर्वाचीनमाचार्योऽभ्यज्य तस्य दण्डस्य छायायां स्थितं ब्रह्मचारिणं वाचयति ' सुश्रवः सुश्रवा असि ' इत्यादि ' निधिगोपो भूयासम् ' इत्यन्तम् । आश्व.

**पालाशं दण्डं ब्राह्मणाय प्रयच्छत्याश्वत्थं राजन्याय नैयग्रोधं वैश्याय ॥**

( १ ) एवं प्रकृतं दण्डं पालाशं ब्राह्मणाय ब्रह्मचारिणेऽनुवचनान्ते प्रयच्छत्याचार्यः । अश्वत्थः वटः । वैश्याय न्यग्रोधसंबन्धिनं प्रयच्छति दण्डम् । देव.

( २ ) ततः पालाशं दण्डं ब्राह्मणाय प्रयच्छति तमेवं संस्कृतम् । पुनः पालाशग्रहणात् क्षत्रियवैश्ययोः पालाशच्छायायामेव स्थितयोः, न तु प्रातिस्विकदण्डच्छायागतयोः । क्षत्रियवैश्ययोः पालाशच्छायागतयोर्वाचने मन्त्रगतो ब्राह्मणशब्दो न विरुध्यते, ब्रह्मरूपत्वाद्ब्रह्मचारिणः । यथा ' अथ यत्कृष्णाजिनी दण्डी मेखल्युपवीती च भवति तद्ब्रह्मणो रूपम् ' इति । क्षत्रियवैश्याभ्यामाश्वत्थनैयग्रोधावेव दीयेते, वाचनमात्रं तयोः पलाशे । तदेतदुक्तम् – ' पालाशं दण्डं ब्राह्मणाय प्रयच्छत्याश्वत्थं राजन्याय नैयग्रोधं वैश्याय ' इति । आश्व.

**' स्मृतं च मे ' इति वाचयति । ' स्मृतं च मेऽस्मृतं( ? मे अस्मृतं ) च मे तन्म उभयव्रतम् । निन्दा च मे अनिन्दा च मे तन्म उभयव्रतम् । विद्या च मे अविद्या च मे तन्म उभयव्रतम् । श्रद्धा च मे अश्रद्धा च मे तन्म उभयव्रतम् । सत्यं च मे अनृतं च मे तन्म उभय-**

§ ब्राह्म देवगतम् ।

(१) काग्र. ४१।२१–२६.

‡ ब्राह्म. देवगतम् ।

**व्रतम् । मृतं च मे अमृतं च मे तन्म उभयव्रतम् । श्रुतं च मे अश्रुतं च मे तन्म उभयव्रतम् । व्रतं च मे अव्रतं च मे तन्म उभयव्रतम् । यद्ब्राह्मणस्य ब्रह्मणि व्रतं यदग्नेः सेन्द्रस्य सप्रजापतिकस्य सर्षिकस्य सपितृकस्य समनुष्यस्य समनुष्यराजन्यस्य सगन्धर्वाप्सरोजनस्कस्य ससर्पेतरजनस्कस्य सौषधिवनस्पतिकस्य सह ग्राम्यैः पशुभिरारण्यैश्च साकाशस्य सप्रकाशस्य सातीकाशस्य सानूकाशस्य सह यन्म आत्मन आत्मनि व्रतं तन्मे सर्वव्रतम् ॥ इदमहमग्नौ समिधमभ्यादधाम्यग्ने सर्वव्रतो भवामि ' ॥**

**' अधीते हैतेषां वेदानामेकं द्वौ त्रीन्सर्वान्वा यमेवं विद्वानुपनयते ' इति श्रुतिः ॥**

( १ ) तच्छायायां पूर्वत( ? म )न्त्रस्यानुवचनं कारयित्वा दण्डं दत्त्वा किं कारयत्याचार्य इत्याह— स्मृतमिति । यन्मन्वादिभिः स्मृतं यच्चास्मृतम् अनुष्ठेयत्वेन वर्जनीयत्वेन च यथासंख्यम्, व्रतमवश्यं पालनीयम् । एवं 'निन्दा च मेऽनिन्दा च मे ' इति निन्दितं वर्जनीयम् अनिन्दितमुपादेयम् । अथवा परनिन्दा वर्जनीया, अनिन्दा च प्रशंसावसरे कर्तव्या परोपकारपर्यवसायिनी । एवं विद्याविद्ये ज्ञातव्ये हानोपादानार्थम् । श्रद्धा आस्तिक्यम्, नास्तिक्यमश्रद्धा । तथा सत्यानृते । अमृतम् अमरणकारि ज्ञानकर्मसमुच्चयानुष्ठानात् ज्ञेयं मम व्रतम् । मृतं मरणकारि काम्यं संसारकारणम् । तदपि हानाय परपुरुषार्थार्थिना ज्ञेयम्, स्वर्गाद्यर्थिना तूपादानाय । श्रुतं मीमांसादिश्रवणम्, अश्रुतं कुत्सितश्रुतं लोकायतादिशास्त्राभासविषयम् । व्रतं सद्व्रतम्, अव्रतं व्रताभासः कर्तव्याभास इत्यर्थः । यत् ब्राह्मणस्य ब्रह्मणि वेदे व्रतमध्ययनाद्यर्थे तत् ममावश्यकर्तव्यं ज्ञानपूर्वम् । अग्नेः प्रजापत्यादिसहितस्य यत् व्रतं कर्म तत् मया ज्ञेयमनुष्ठेयं च क्रमेण । सर्वत्र ' गुरो अनुग्रहं कुरु ' इति प्रतीयमानम् । जनस्कस्येति सकारागमश्छान्दसः ।

इदमिति । मन्त्रलिङ्गात् ' इदमहम् ' इत्यनेन समिधमग्नौ प्रक्षिपति । इदमिति लिङ्गव्यत्ययः । इमां समिधमहमभ्यादधामि । अभिराभिमुख्यार्थः । हे अग्ने, त्वत्प्रसादात् सर्वव्रतो भवामि भूयासम् । ' अधीते ह ' इत्यादिकमुपनेतृस्तुत्यर्थम् । य एवं विद्वान् मन्त्रब्राह्मणज्ञः सन् उपनयते स एवोपनेतृत्वेऽधिकृतः, नान्यः । स हि यमुपनयते स एतेषां प्रसिद्धानां वेदानामनन्तशाखायुक्तानां मध्ये यथेच्छमेकं द्वौ वा त्रीन्वाऽधीते सर्वान् सर्वशाखाखचितान् । हशब्द इतिहासे । अतोऽनेन संस्तुतत्वाच्छ्रौतमुपनयनम्, न संस्कारान्तरवत् स्मार्तम्, अत एवोपनयनासमर्था अप्यवश्यं कुर्वन्तीति केचित् । तदसत्, स्मार्तस्याप्यनुमितश्रुतिमूलत्वात् । अप्रत्यक्षं तत्र विधिरिति चेत्, अर्थवादेऽपि समानता । यदपि भणति— मन्त्रगतो न विधायक आख्यातशब्द इतिकृत्वा न ' इदमहम् ' इत्यनेन समित्प्रक्षेपः कर्तव्य इति, तदप्यमीमांसकभणितम्, आख्यातस्याविधायकत्वेऽपि लिङ्गात्प्रक्षेपसिद्धेः । देव.

( २ ) ततो गृहीतदण्डं ' स्मृतं च मे ' इत्यादि ' सर्वव्रतो भवामि ' इत्यन्तं प्रत्यङ्मुखमेव वाचयति । अस्मिन्नवसरे भैक्षं चरतीत्युपाध्यायाः । स्वस्ति वाच्य भिक्षादानसंपूर्वम् ' अप्रत्याख्यायिनमग्रे भिक्षेताप्रत्याख्यायिनीं वा ' । तत ऋतुतिथियागादि संस्थापयेत् । ब्राह्म.

( ३ ) ततो गृहीतदण्डं ' स्मृतं च मे ' इति वाचयति ' अग्ने सर्वव्रतो भवामि ' इत्यन्तम् । अत्र समिद्दानं मन्त्रवर्णाद्ये कुर्वन्ति ते न्यायानभिज्ञाः । यस्मान्मन्त्रगतो भावशब्दो न विनियोजक इति युक्तमेतत् । ' अधीते हैतेषाम् ' इत्यर्थवादोपन्यासः विद्वत्कर्तृस्तुत्यर्थः । एतद्ब्राह्मणार्थं विदुषोपनयनं कर्तव्यम्, न तु कर्मपद्धतिपरिज्ञानमात्रेण । यमेवं विद्वानुपनयते सोऽवश्यं वेदाध्यायी भवतीति श्रुतेः । श्रुतिग्रहणादुपनयनस्य प्राधान्यं दर्शयति । तेनान्येषां संस्काराणामभावे एतदवश्यं कर्तव्यम् । तथा च गौतमः— ' यस्य खलु संस्काराणामेकदेशोऽप्यस्ति स ब्रह्मणः सायुज्यं गच्छति ' इति । आवि.

**कर्त्रे वरं ददाति ॥**

( १ ) उपनेत्रे दक्षिणां ददाति ब्रह्मचारिणः स्वामी पिता, तदभावे ज्येष्ठभ्रात्रादिः । देव.

( २ ) स्विष्टकृति हुते वास आचार्याय वरं ददाति । ब्राह्म.

( ३ ) ब्रह्मचारिपिता तावति स्वामी कर्तव्यः । आवि.

**अहःशेषं स्थापयेत् ॥**

( १ ) नोपवेशयेत्, नापि संचारयेत् । देव.

( २ ) अहःशेषं ब्रह्मचारी नोपविशेत् अन्यत्र भोजनाचमनावश्यकेभ्यः । † ब्राह्म.

## वाराहगृह्यसूत्रम्

बहिरुपनयनम्, अग्निसंस्कारः, वपनस्नानाभ्यञ्जनोपस्पर्शनानि, दधिप्राशनम्, मेखलाबन्धनम्, यज्ञोपवीतवस्त्राजिनधारणम्, होमः, अञ्जल्यवक्षारणम्, आदित्योपस्थानम्, उपनयनम्, हृदयाद्यालम्भनम्, परिणयनम्, सावित्र्यनुवाचनम्, दण्डकमण्डलुग्रहणम्, भिक्षाचरणम्, संध्योपासनम्, अग्निपरिचरणम्, गुरवे वरदानम्, व्रताचरणम्, सावित्रस्थालीपाकः

**'अभ्यन्तरं जटाकरणं बहिरुपनयनम् । उक्तोऽग्निसंस्कारः । ब्राह्मणस्य कुमारं पर्युप्तिनं स्नातमभ्यक्तशिरसमुपस्पर्शनकल्पेनोपस्पृष्टमग्नेर्दक्षिणतोऽवस्थाप्य 'दधिक्राव्णो अकारिषम्' इति कुमारं दधि त्रिः प्राशयेत् । 'इयं दुरुक्ता परिबाधमाना वरुणं पवित्रं पुनती न आगात् । प्राणापानाभ्यां बलमाभजन्ती शिवा देवी सुभगा मेखलेयम् ॥ ऋतस्य गोप्त्री तपसश्चरित्री घ्नती रक्षः सहमाना अरातीः । सा मा समन्तमनुपर्येहि भद्रे धर्तारस्ते सुभगे मेखले मा रिषाम ॥' इति मौञ्जीं त्रिगुणां त्रिःपरिवीतां मेखलामाबध्नीत । मौर्वी धनुर्ज्या क्षत्रियस्य, शार्णी वैश्यस्य । 'उपवीतमसि यज्ञस्य त्वोपवीतेनोपव्ययामि' इति यज्ञोपवीतम् । 'या अकृन्तन्या अतन्वन्यावन्या वाहरन् । याश्चाग्न्या देव्योऽन्तानभितो ततन्था । तास्त्वा देव्यो जरसे संव्ययन्त्वायुष्मन्निदं परिधत्स्व वासः ॥ परिधत्त वर्चः शतायुषं दीर्घमायुः । शतं च जीव शरदः पुरूचीः सूनिवाप्यो विभजा यजीयान् ॥' इत्यहतं वास आच्छाद्य 'मित्रस्य चक्षुर्धरुणं बलीयस्तेजो यशःश्रीस्थविरं समिद्धम् । आनाहनस्यं वसनं जरिष्णुं परीदं वाज्यजिनं दधेऽहम् ॥' इति कृष्णाजिनं च । आज्यं संस्कृत्य ब्राह्मणमामन्त्र्य समिधमाधायाऽऽघाराबाघार्याऽऽज्यभागौ हुत्वाऽष्टौ जटाकरणीयाञ्जुहुयाद् व्याहृतिभिश्च । उक्तः कर्मान्तः पूर्वेण । 'कालाय वां गोत्राय वां जैत्राय वां मैत्राय वामन्नाद्याय वामवनेनिजेमि' इत्युदकेनाञ्जलिं पूरयित्वा 'सुकृताय वाम्' इति पाणी प्रक्षाल्य 'इदमहं दुर्यमन्यानि प्लावयामि' इत्याचम्य निष्ठीवति । 'भ्रातृव्याणां सपत्नानामहं भूयासम्' इति द्वितीयम् । 'प्रातर्जितं भगमुग्रं हुवेम वयं पुत्रमदितेर्यो विधर्ता । आर्द्रश्चिद्यन्मन्यमानस्तिरश्चिद्राजा चिद्यन्भगं भक्षीमहीत्याह ॥' इत्यादित्यमुपतिष्ठेत । 'ब्रह्मचर्यमुपागामुपमाह्वयस्व' इति ब्रूयात् । 'एहि ब्रह्मोपेहि ब्रह्म ब्रह्म त्वा संब्रह्म सन्तमुपनयाम्यहमसौ'**

---

† आवि. ब्राह्मवत् ।

(१) वाग्. ५.

इति । अथास्याभिवादनीयं नाम गृह्णाति । 'देवस्य त्वा' इति 'हस्तं गृह्णाम्यहमसौ' इत्यस्य हस्तं दक्षिणेन दक्षिणमुत्तानमभि वाऽङ्गुष्ठमभि वा लोमानि गृह्णीयात् । 'ममेवान्वेतु ते मनो मामेवाऽपि त्वमन्विहि । अग्नौ घृतमिव दीप्यतां हृदयं तव यन्मयि ॥' इत्येनं संप्रेक्षमाणं समीक्षते । पृष्ठतोऽस्य पाणिमन्वाहृत्य हृदयदेशमन्वारभ्य जपति– 'प्राणानां ग्रन्थिरसि स ते मा विस्रंसत्' इति । 'ब्रह्मणो ग्रन्थिरसि' इति नाभिदेशम् । 'गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥' इति प्रदक्षिणमग्निं परिणयेत् । पश्चादग्नेर्दर्भेषूपविशति । दक्षिणतश्च ब्रह्मचारी 'अधीहि भोः' इत्युपविश्य जपति । प्रभुज्य दक्षिणं जानुं पाणी संधाय दर्भहस्तावोमित्युक्त्वा व्याहृतिभिः सावित्रीं चानुब्रूयात् । एवं काण्डानुवचनेषु । 'तत्सवितुर्वरेण्यम्' इति गायत्रीं ब्राह्मणाय, 'देवो याति सविता सुरत्नः' इति त्रिष्टुभं क्षत्रियाय, 'युञ्जते मनः' इति जगतीं वैश्याय पच्छोऽर्धर्चशः सर्वामन्ततः । पालाशं दण्डं ब्राह्मणाय प्रयच्छति, नैयग्रोधं क्षत्रियाय, आश्वत्थं वैश्याय । 'सुश्रवः सुश्रवसं मां कुरु यथा त्वं सुश्रवः सुश्रवा अस्येवमहं सुश्रवः सुश्रवा भूयासम् । यथा त्वं देवानां वेदस्य निधिगोपोऽस्येवमहं मनुष्याणां ब्रह्मणो निधिगोपो भूयासम्' इति दण्डं प्रतिगृह्णाति । ऊर्ध्वकपालो ब्राह्मणस्य कमण्डलुः, परिमण्डलः क्षत्रियस्य, निचलकलो वैश्यस्य । 'इमा आपः प्रभराम्ययक्ष्माय यक्ष्मचातनीः । ऋतेनापः प्रभराम्यमृतेन सहाऽऽयुषा ॥' इति । 'प्रतिगृह्णामि' इति प्रतिगृह्य भैक्ष्यचर्यं चरेत् । 'ॐ भवति भिक्षां देहि' इति ब्राह्मणः । भवतिमध्यां क्षत्रियः । भवत्यन्तां वैश्यः । चतस्रः षड्ष्टौ वाऽविधवा अप्रत्याख्यायिन्यः । मातरं प्रथममेके । गुरवे निवेद्य वाग्यतः प्राग्ग्रामात् संध्यामुपास्ते । तिष्ठन् पूर्वां सावित्रीं त्रिरधीत्य 'अध्वनामध्वपते श्रेष्ठः स्वस्त्यस्याध्वनः पारमशीय । तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतं शृणुयाम शरदः शतम् । प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतम् । भूयश्च शरदः शतात् ॥ या मेधा अप्सरःसु गन्धर्वेषु च यन्मनः । दैवी या मानुषी मेधा सा मामाविशतामिहैव ॥' इति प्रत्येत्याग्निं परिचरेत् । 'इमं स्तोममर्हते' इति परिसमूहेत् । 'एधोऽस्येधिषीमहि' इति समिधमादधाति । 'समिदसि समेधिषीमहि' इति द्वितीयम् । 'आपो अद्यान्वचारिषम्' इत्युपतिष्ठते । 'मा संसृज वर्चसा' इति मुखं परिमृजीत । 'यदग्ने तपसा तपो ब्रह्मचर्यमुपेयमसि । प्रिया श्रुतस्य भूयासमायुष्मन्तः सुमेधसः ॥ अग्ने समिधमहारिषं बृहते जातवेदसे । स मे श्रद्धां च मेधां च जातवेदाः प्रयच्छतु स्वाहा ॥' इति समिधमादधाति । 'तेजसा मा समङ्ग्धि वर्चसा मा समङ्ग्धि ब्रह्मवर्चसेन मा समङ्ग्धि' इति मुखं परिमृजीत । 'आयुर्दा अग्नेऽसि' इति च यथारूपं गात्राणि संमृशति । 'इह धृतिः' इति पर्यायैरंसग्रीवाश्च त्रिरालभ्य 'ऋचं नो धेहि' इति ललाटमभिमृशेत् । आद्यन्तयोः पर्युक्षणम् । गुरवे ब्रह्मणे च वरमुत्तरासङ्गं च ददाति । द्वादशरात्रमक्षारलवणमाशोदक्षारमेके । व्युष्टे द्वादशरात्रे षड्रात्रे वा ग्रामात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य पश्चात्पालाशस्य यज्ञियस्य वा वृक्षस्य सावित्रेण स्थालीपाकेनेष्ट्वा जयप्रभृतिभ्यश्चाऽऽज्यस्य पुरस्तात्स्विष्टकृतो मेखलां दण्डं चाप्सु प्रास्येत् । तत्रैव हविःशेषं भुञ्जीतेति श्रुतिः ॥

## आग्निवेश्यगृह्यसूत्रम्

ब्राह्मणभोजनम्, स्वस्तिवाचनम्, कुमारभोजनकेशवपनस्नानालंकरणवस्त्रपरिधानानि, द्रव्यासादनम्, होमः, अश्मारोपणम्, वासःपरिधापनम्, मेखलाबन्धनम्, अजिनधारणम्, परिदानम्, हुतशेषप्राशनम्, अग्निपरिक्रमणादि, उपनयनम्, हस्तग्रहणम्, संशासनम्, हृदयाद्यभिमर्शनम्, पुनर्हस्तग्रहणम्, कर्णजपः, मुखसंनिधिजपः, पुनः परिदानम्, सावित्र्यनुवाचनम्, समिदाधानम्, गुरवे वरदानम्, आदित्योपस्थानम्, दण्डामत्रप्रदानम्, भिक्षाचरणम्, वस्त्रादानम्, होमः, बलिदानम्, ब्राह्मणभोजनपुण्याहवाचने, व्रताचरणम्, व्रतविसर्गः

$ 'युग्मान्ब्राह्मणानन्नेन परिविष्य 'पुण्याहं स्वस्त्ययनमृद्धिम्' इति वाचयित्वाऽशितस्य कुमारस्य केशान्वापयित्वा स्नातमलंकृतमहतं वासः परिधाप्य ... * । अथास्य द्रव्याणि प्रयुनक्ति– अश्मानमहतं वासोऽजिनं मौञ्जीमेखलां त्रिवृतां ब्राह्मणस्य, ज्यां राजन्यस्य, आविकं वैश्यस्य, बैल्वं पालाशं वा दण्डं ब्राह्मणस्य, नैयग्रोधं राजन्यस्य, औदुम्बरं वैश्यस्य । ... अपरेणाग्निं प्राङ्मुख उपविशति । दक्षिणतो यज्ञोपवीत्याचान्तः कुमार उपविश्यान्वारभते .... ॥

... 'आयुर्दा अग्ने' इत्येषः। 'आयुर्दा देव जरसं गृणानो घृतप्रतीको घृतपृष्ठो अग्ने । घृतं पिबन्नमृतं चारु गव्यं पितेव पुत्रं जरसे नयेमं स्वाहा ॥' इति । .. अग्रेणोत्तरं परिधिसंधिमश्मानं निधाय दक्षिणेन पादेन कुमारमास्थापयति– 'आतिष्ठेममश्मानमश्मेव त्वं स्थिरो भव । प्रमृणीहि दुरस्यून् सहस्व पृतनायतः ॥' इत्येतेन । अहतं वासः परिधापयति पूर्वं निधाय– 'या अकृन्तन्नवयन्या अतन्वत याश्च देवीरन्तानभितोऽददन्त । तास्त्वा देवीर्जरसे संव्ययन्त्वायुष्मानिदं परिधत्स्व वासः ॥ परिधत्त धत्त वाससैनं शतायुषं कृणुत दीर्घमायुः । बृहस्पतिः प्रायच्छद्वास एतत्सोमाय राज्ञे परिधातवा उ ॥ जरां गच्छासि परिधत्स्व वासो भवाकृष्टीनामभिशस्तिपावा । शतं च जीव शरदः सुवर्चा रायश्च पोषमुपसंव्ययस्व ॥' इति । परिधाप्याभिमन्त्रयते– 'परीदं वासो अधिता( ? धाः) स्वस्तयेऽभूरापीनामभिशस्तिपावा ॥ शतं च जीव शरदः पुरूचीर्वसूनि चार्यो विभजासि जीवन् ॥' इति । एवं मेखलया त्रिः प्रदक्षिणं परिदधाति, द्विरित्येके– 'या दुरितात्परिबाधमाना शर्म वरूथं पुनती न आगात् । प्राणापानाभ्यां बलमावहन्ती स्वसा देवानां सुभगा मेखलेयम् ॥' इति । उत्तरतो नाभेस्त्रिवृतं ग्रन्थिं कृत्वा दक्षिणतो नाभेः परिकर्षति । अथास्मा अजिनमुत्तरीयं करोति– 'मित्रस्य चक्षुर्धरुणं बलीयस्तेजो यशस्वि स्थविरं समिद्धम् । अनाहनस्यं वसनं जरिष्णु परीदं वाज्यजिनं दधत्स्वासौ ॥ अदितिस्ते कक्ष्यां बध्नातु वेदस्यानुवक्तवै मेधायै श्रद्धाया अनूक्तस्यानिराकरणाय ब्रह्मणे ब्रह्मवर्चसाय' इति । कृष्णाजिनं ब्राह्मणस्य रौरवं राजन्यस्य बस्ताजिनं वैश्यस्य । अथैनं परिददाति– 'परीममिन्द्रं ब्रह्मणे महे श्रोत्राय दध्मसि । यथैनं जरिमाणे यो ज्योक् श्रोत्रे अधिजागरत् ॥' इति ब्राह्मणम् । 'परीममिन्द्रं ब्रह्मणे महे राष्ट्राय दध्मसि । यथैनं जरिमाणे यो ज्योग्राष्ट्रे अधिजागरत् ॥' इति राजन्यम् । 'परीममिन्द्रं ब्रह्मणे महे पोषाय दध्मसि । यथैनं जरिमाणे यो ज्योक् पोषे अधि-

$ सूत्रमिदं हिरण्यकेशिसूत्रानुवादकल्पत्वात्तत्सूत्रानुसारेणात्र काश्चिच्छुद्धयः कल्पिताः सूचिताश्च ।

* अतः परमन्तराऽन्तरा ये सूत्रांशास्त्यक्तास्ते होमपूर्वोत्तरतन्त्रविषयकाः सन्तोऽग्निमुखप्रकरणे संगृहीतास्तत्रैव (सं. का. पृ. १४२८–१४३०) द्रष्टव्याः ।

(१) आग्निगृ. १।१।१–४.

जागरत् ॥ ' इति वैश्यम् । अपरेणाग्निमुदञ्च-मुपवेश्य हुतोच्छेषं प्राशयति– ' त्वयि मेधां त्वयि प्रजां त्वय्यग्निस्तेजो दधातु ' इत्येतैः सन्नद्धैः( ? संनतैः ) । पृषदाज्यमेके प्राशयन्ति । ' योगे योगे तवस्तरम् , इममग्न आयुषे वर्चसे कृधि ' इति प्राश्नन्तं समीक्षते । प्राशयन्त्येके । आचान्तमुपस्पर्शयित्वाऽभिमन्त्रयते– ' शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् । पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषताऽऽयुर्गन्तोः ॥ ' इति ॥

' आगन्त्रा समगन्महि प्रसुमृत्युं युयोतन । अरिष्टाः संचरेमहि स्वस्ति चरतादिह स्वस्त्या गृहेभ्यः ॥ ' इति प्रदक्षिणमग्निं परिक्रामन्तमभि-मन्त्रयते । अथैनमभिव्याहारयति– ' ब्रह्मचर्य-मागामुप मा नयस्व । ब्रह्मचारी भवानि देवेन सवित्रा प्रसूतः ' इति । तं पृच्छति– ' को नामासि ' इति । ' असौ ' इत्याचष्टे यथानामा भवति । ' स्वस्ति देव सवितरहं येनामुना द्र्चम-चीथे( ? रहमनेनामुनोद्दचमशीय ) ' इति नामनी गृह्णाति । ' शं नो देवीरभिष्टय आपो भवन्तु पीतये । शंयोरभिस्रवन्तु नः ॥ ' ( इत्युभौ मार्जयेते) । अथास्य दक्षिणेन हस्तेन दक्षिणमंस-मन्वारभ्य सव्येन सव्यं व्याहृतिभिः सावि-त्र्येति दक्षिणं बाहुमभ्यास्यन्तु( ? मभ्यात्ममु )प-नयते– ' देवस्य त्वा सवितुः प्रसवेऽश्विनो-र्बाहुभ्यां पूष्णो हस्ताभ्यामुपनयेऽसौ ' इति च । अथास्य दक्षिणेन हस्तेन दक्षिणं हस्तं साङ्गुष्ठं गृह्णाति । ' अग्निस्ते हस्तमग्रहीत् । सोमस्ते हस्तमग्रहीत् । सविता ते हस्तमग्रहीत् । सरस्वती ते हस्तमग्रहीत् । पूषा ते हस्तमग्रहीत् । बृह-स्पतिस्ते हस्तमग्रहीत् । मित्रस्ते हस्तमग्रहीत् । वरुणस्ते हस्तमग्रहीत् । त्वष्टा ते हस्तमग्रहीत् । धाता ते हस्तमग्रहीत् । विष्णुस्ते हस्तमग्रहीत् । प्रजापतिस्ते हस्तमग्रहीत् । ' इति मन्त्रैर्दक्षिणेन हस्तेन कुमारस्य दक्षिणं हस्तं साङ्गुष्ठं प्रतिमन्त्रं गृह्णाति । ' सविता त्वाऽभिरक्षतु । मित्रस्त्वमसि शर्मणा । अग्निराचार्यस्तव । देवेन सवित्रा प्रसूतो बृहस्पतेर्ब्रह्मचारी भवासौ । अपोऽ-शान, समिध आधेहि, कर्म कुरु, मा दिवा स्वाप्सीः ' इत्येनं संशास्ति । अथास्य दक्षिणेन हस्तेन दक्षिणमंसमुपर्युपर्यन्ववमृश्य हृदयदेश-मभिमृशति– ' मम हृदयं हृदयं ते अस्तु । मम चित्तं चित्तेनान्वेहि । मम वाचमेकमना जुषस्व । बृहस्पतिस्त्वा नियुनक्तु मह्यम् ॥ मामेवानुसं-गृह( ? संरभ )स्व । मयि चित्तानि सन्तु ते । मयि सामीच्यमस्तु ते । मह्यं वाचं नियच्छतात् ॥ ' इति । ' प्राणानां ग्रन्थिरसि । स मा विस्रसः ' इति नाभिदेशम् । ' भूर्भुवः स्वः सुप्रजाः प्रजया भूयासम् । सुवीरो वीरैः सुवर्चा वर्चसा सुपोषा पोषैः सुमेधा मेधया सुब्रह्मा ब्रह्मचारिभिः' इत्ये-नमभिमन्त्र्य ' भूर्ऋक्षु त्वा अग्नौ पृथिव्यां वाचि ब्रह्मणि ददेऽसौ । भुवो यजुःषु त्वा वायावन्त-रिक्षे प्राणे ब्रह्मणि ददेऽसौ । स्वः सामसु त्वा सूर्ये दिवि चक्षुषि ब्रह्मणि ददेऽसौ । विष्णु-( ? इष्ट )तस्ते प्रियोऽसान्यसौ । अनलस्य ते प्रियोऽसान्यसौ । इदं वत्स्यावः । प्राण आयुषि वत्स्यावः । प्राण आयुषि वसासौ ' इति च । अथास्य दक्षिणेन हस्तेन दक्षिणं हस्तं साङ्गुष्ठं गृह्णाति ' अग्निरायुष्मान् ' इति पञ्चभिः पर्यायैः । ' आयुष्टे विश्वतो दधद् ' इति दक्षिणे कर्णे जपित्वा ' आयुर्दा अग्ने ' इत्युत्तरे । ' अग्नौ पृथिव्यां प्रतितिष्ठ वायावन्तरिक्षे सूर्ये दिवि यां स्वस्तिमग्निर्वायुरादित्यश्चन्द्रमा आपोऽनुसंचरन्ति तां स्वस्तिमनुसंचरासौ प्राणस्य ब्रह्मचार्यभूरसौ ' इत्युभयत्रानुषजति । 'मेधां म इन्द्रो दधातु मेधां देवी सरस्वती । मेधां मे अश्विनावुभावाधत्तां पुष्करस्रजौ ॥ ' इति तस्य मुखेन मुखं संनिधाय जपति । अथैनं परिददाति– ' कशकाय त्वा

परिददामि। अन्तकाय त्वा परिददामि। अघोराय त्वा परिददामि। यमाय त्वा परिददामि। गदाय त्वा परिददामि। मखाय त्वा परिददामि। वशिन्यै त्वा परिददामि। पृथिव्यै त्वा सवैश्वानरायै परिददामि। अद्भ्यस्त्वा परिददामि। ओषधीभ्यस्त्वा परिददामि। वनस्पतिभ्यस्त्वा परिददामि। विश्वेभ्यस्त्वा भूतेभ्यः परिददामि। सर्वेभ्यस्त्वा देवेभ्यः परिददामि। सर्वाभ्यस्त्वा देवताभ्यः परिददामि' (इति)। अत्र सावित्रीं वाचयति यदि पुरस्तादुपेतो भवति। यद्यनुपेतस्त्र्यहे पर्यपेते। सद्यः पुष्करसादिः। अपरेणाग्निमुदगग्रं कूर्चं निधाय तस्मिन् प्राङ्मुख उपविशति– 'राष्ट्रभृदस्याचार्यासन्दी मा त्वद्योषम्' इति। आदित्यायाञ्जलिं कृत्वा आचार्यमुपसंगृह्य दक्षिणतः कुमार उपविश्य 'अधीहि भोः' इत्युक्त्वा अथासौ(? थाऽऽह) 'सावित्रीं भो अनुब्रूहि' इति। 'गणानां त्वा गणपतिं हवामहे' इत्येनमभिमन्त्र्याथास्मै पच्छोऽग्रेऽन्वाहाथार्धर्चशोऽथ संतताम्। 'भूः तत्सवितुर्वरेण्यम्। भुवः भर्गो देवस्य धीमहि। स्वः धियो यो नः प्रचोदयात्। भूर्भुवः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। स्वः धियो यो नः प्रचोदयात्। भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्॥' इति॥

अथ सप्त पालाशीः समिध आर्द्रा अप्रच्छिन्नाग्राः प्रादेशमात्रा घृताक्ता अभ्याधापयति– 'अग्नये समिधमाहार्षं बृहते जातवेदसे। यथा त्वमग्ने समिधा समिध्यस एवं मां मेधया प्रज्ञया प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा॥' इत्येकाम्। 'अग्नये समिधौ' इति द्वे। 'अग्नये समिधः' इति चतस्रः। अथ परिषिञ्चति यथा पुरस्तात्। 'अन्वमंस्थाः, प्रासावीः' इति मन्त्रान्तान् संनमयति। अथ देवता उपतिष्ठते– 'अग्ने व्रतपते व्रतं चरिष्यामि' इत्यग्निम्, 'वायो व्रतपते' इति वायुम्, 'आदित्य व्रतपते' इत्यादित्यम्, 'व्रतानां व्रतपते' इति व्रतपतिम्। अत्र गुरवे वरं ददाति। 'उदायुषा' इत्युत्थाप्य 'सूर्यैष ते पुत्रस्तं ते परिददामि' इति परिदाय 'तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्। पश्येम शरदः शतम्। जीवेम शरदः शतम्। नन्दाम शरदः शतम्। मोदाम शरदः शतम्। भवाम शरदः शतम्। शृणवाम शरदः शतम्। प्रब्रवाम शरदः शतम्। अजीताः स्याम शरदः शतम्। ज्योक्च सूर्यं दृशे॥' इत्यादित्यमुपतिष्ठते। 'अग्निष्ट आयुः प्रतरां कृणोतु। अग्निष्टे पुष्टिं प्रतरां दधातु। इन्द्रो मरुद्भिरिह ते ददातु। आदित्यस्ते वसुभिरादधातु॥' इति दण्डं प्रदायामत्रं प्रयच्छति। अथाऽऽह– 'भिक्षाचर्यं चर' इति। स मातरमेवाग्रे भिक्षेत। अतोऽन्येषु रातिकुलेषु। आहृत्य 'भैक्षम्' इति प्राह। 'यस्य ते प्रथमवास्यं हरामस्तं त्वा विश्वे अवन्तु देवाः। तं त्वा भ्रातरः सुवृधो(? सुहृदो) वर्धमानमनुजायन्तां बहवः सुजातम्॥' इति प्रथमवास्यमस्याऽऽदत्ते। उपस्थितेऽन्न ओदनस्यापूपानां सक्तूनां समवदाय सर्पिर्मिश्रस्य जुहोति– 'अग्नये स्वाहा। सोमाय स्वाहा। अग्नयेऽन्नादाय स्वाहा। अग्नयेऽन्नपतये स्वाहा। प्रजापतये स्वाहा। विश्वेभ्यो देवेभ्यः स्वाहा। सर्वाभ्यो देवताभ्यः स्वाहा। अग्नये स्विष्टकृते स्वाहा' इति। एतेषामेवाऽऽसां(? वान्नानां) समवदाय प्रागग्रेषु दर्भेषु बलिं करोति– 'वास्तुपतये स्वाहा' इति। त्रिवृताऽन्नेन ब्राह्मणान्परिविष्य 'पुण्याहं स्वस्त्ययनमृद्धिम्(इति)' वाचयित्वा त्र्यहव्रतं चरति। अक्षारलवणमशमीधान्यं भुञ्जानोऽधःशाय्यमृण्मयपाय्यशूद्रोच्छिष्टमधुमांसाश्यदिवास्वाप्युभौ कालौ भिक्षाचर्यमुदकुम्भमित्याहरन्नहरहः काष्ठकला(प)-

मुभौ कालौ सायं सायं वा समिधोऽभ्यादधाति । 'यथा ह तद्वसवो गौर्यम्' इति प्रदक्षिणमग्निं परिमृज्य परिषिञ्चति यथा पुरस्तात् । व्याहृतीभिः समिधोऽभ्यादधाति ('यथा ह तद्वसवो गौर्यम्' इति ?) एकैकशः समस्ताभिश्च । 'एषा ते अग्ने समित्तया वर्धस्व चाऽऽप्यायस्व वर्धिषीमहि च वयमा च प्यासिषीमहि स्वाहा । मेधां म इन्द्रो ददातु मेधां देवी सरस्वती । मेधां मे अश्विनावुभावाधत्तां पुष्करस्रजौ स्वाहा ॥ अप्सरासु च या मेधा गन्धर्वेषु च यन्मनः । दैवी मेधा मनुष्यजा सा मां मेधा सुरभिर्जुषतां स्वाहा ॥ आ मां मेधा सुरभिर्विश्वरूपा हिरण्यवर्णा जगती जगम्या । ऊर्जस्वती पयसा पिन्वमाना सा मां मेधा सुप्रतीका जुषन्तां स्वाहा ॥' इति । तथैव परिमृज्य परिषिञ्चति यथा पुरस्तात् । 'यत्ते अग्ने तेजः' इत्येतैर्मन्त्रैरुपतिष्ठते 'मयि मेधां मयि प्रजाम्' इति च । त्र्यहे पर्यपेते तथैव त्रिवृताऽन्नेन ब्राह्मणान् परिविष्य 'पुण्याहं स्वस्त्ययनमृद्धिम्' इति वाचयित्वा व्रतं विसृजते 'अग्ने व्रतपते व्रतमचारिषम्' इत्येतैर्मन्त्रैः ॥

## पारस्करगृह्यसूत्रम्

ब्राह्मणभोजनम्, कुमारभोजनम्, वपनालंकरणे, अग्निस्थापनम्, वासःपरिधापनम्, मेखलाबन्धनम्, यज्ञोपवीताजिनधारणे, अञ्जलिपूरणम्, सूर्यदर्शनम्, हृदयालम्भनादि, परिदानम्, होमः, हविःशेषप्राशनम्, संशासनम्, सावित्र्यनुवाचनम्, समिदाधानम्, भिक्षाचरणम्, वाग्यमनस्थानवाग्विसर्जनानि, ब्रह्मचारिधर्माः

**[1]ब्राह्मणान्भोजयेत् तं च । पर्युप्तशिरसमलंकृतमानयन्ति ॥**

(१) पागृ. २।२।५-१३.

(१) श्राद्धव्यतिरिक्तान् ब्राह्मणान् भोजयेत् । तं चेति कुमारोऽभिधीयते । पर्युप्तेति । परिपूर्वस्य वपतेः कृतसंप्रसारणस्यैतद्रूपम् । पर्युप्तं शिरोऽस्येति पर्युप्तशिराः, तं पर्युप्तशिरसम् । अलंकृतं स्रङ्मालादिना । आनयन्ति ये तदाचार्येणोपनीताः । शिरसश्च परिवपनं भोजनात्पूर्वमेव कर्तव्यम्, नेदानीं तदुपदेशः, भूतकालनिर्देशात् । कभा.

(२) ब्राह्मणान् त्रिप्रभृतीन् । कुभा.

(३) परि सर्वतः उप्तं मुण्डितं शिरो यस्य स पर्युप्तशिराः, तम् अलंकृतं यथासंभवं रत्नसुवर्णनिर्मितैः कुण्डलाद्यलंकारैः, आनयन्ति आचार्यपुरुषाः आचार्यसमीपम् । आचार्यलक्षणं यमेनोक्तम्– 'सत्यवाग् धृतिमान्दक्षः सर्वभूतदयापरः । आस्तिको वेदनिरतः शुचिराचार्य उच्यते ॥ वेदाध्ययनसंपन्नो वृत्तिमान्विजितेन्द्रियः । न याजयेद्वृत्तिहीनं वृणुयाच्च न तं गुरुम् ॥' इति । § हभा.

(४) इदमानयनं चाध्ययनार्थम् । अतस्तदभावाच्छूद्रस्यानधिकारः । शूद्रस्य प्रतिषेधो भवत्यध्ययनं प्रति– 'श्रवणे त्रपुजतुभ्यां श्रोत्रपूरणमुच्चारणे जिह्वाच्छेदो धारणे शरीरभेदः' इति । § गभा.

(५) मातृपूजाभ्युदयिके विधाय त्रीन् ब्राह्मणान् भोजयेत् तं च संस्कार्यं कुमारम् । पर्युप्तेति । बहिःशालायामुपलिप्त उद्धतावोक्षितेऽग्निमुपसमाधाय भोजनात्प्राक् शिरसो मुण्डनं शिखावर्जं कारयित्वा भोजनोत्तरमलंकृत्याऽऽचार्यसमीपमानयन्ति । केचित्तु तेनैवाऽऽचार्येण ये उपनीतास्ते आनयन्तीत्याहुः । विभा.

**पश्चादग्नेरवस्थाप्य 'ब्रह्मचर्यमागाम्' इति वाचयति 'ब्रह्मचार्यसानि' इति च ॥**

(१) अग्नेः पश्चात्कुमारमवस्थाप्य 'ब्रह्मचर्यमागामिति ब्रूहि' इत्येवं वाचयत्याचार्यः, 'ब्रह्मचार्यसानि' इति च । चशब्दाद्वाचयति । कभा.

$ शेषं कभावत् ।

§ शेषं कभागतम् ।

( २ ) आचार्यश्च तमग्नेः पश्चात्स्वस्य च दक्षिणतोऽवस्थाप्य वाचयति। चशब्दात् माणवकश्च प्राङ्मुखस्तिष्ठंस्तथैव ब्रूयात्। ¶ कभा.

( ३ ) मन्त्रार्थः– ब्रह्मचर्यं प्रति अहम् आगाम् आगतोऽस्मि। ब्रह्म वेदः, तच्चरणम्। मन्त्रार्थः– ब्रह्म कर्म चरतीति एवंशीलो ब्रह्मचारी अहम् असानि भवामि। § गभा.

( ४ ) पश्चादिति। अग्ने आज्याहुतिमात्रोक्तेर्ब्रह्मासनादिर्बर्हिःस्तरणान्ते। † विभा.

**अथैनं वासः परिधापयति– ‘ येनेन्द्राय बृहस्पतिर्वासः पर्यदधादमृतं तेन त्वा परिदधाम्यायुषे दीर्घायुत्वाय बलाय वर्चसे ’ इति ॥**

( १ ) अथाऽऽचार्यः एनं कुमारं वासः अहतं परिधापयति ‘ येनेन्द्राय ’ इति मन्त्रेण स्वयं पठितेन। जभा.

( २ ) अथ वाचनानन्तरम् एनं कुमारम् आचार्यो वक्ष्यमाणलक्षणं शाणादिवासः परिधापयति परिहितं कारयति ‘ येनेन्द्राय ’ इत्यादिमन्त्रं पठित्वा। हभा.

( ३ ) मन्त्रार्थः– हे कुमार, येन विधिना इन्द्राय संस्कर्तुं बृहस्पतिः सुराचार्यः वासः पर्यदधात् परिधापितवान्। किंभूतम्? अमृतम् अहतम्। तेन विधिना त्वा त्वां माणवकं परिदधामि परिधापयामि। उभयत्रान्तर्भूतो णिच् ज्ञेयः, ‘ परिधापयति ’ इति सूत्रितत्वात्। यद्वा इन्द्राय पर्यदधात् इन्द्रे अव्यवच्छिन्नं स्थापितवान्, तथा त्वा त्वां लक्ष्यीकृत्य परिदधामि त्वयि अव्यवच्छेदेन धारयामीति। किमर्थम्? दीर्घायुत्वाय तव चिरजीवनाय। आयुशब्द उकारान्तोऽप्यस्ति। बलाय देहशक्तये। वर्चसे इन्द्रियशक्तये ऐश्वर्याय वेति। $ गभा.

( ४ ) परिधापनं च कटिवेष्टनं बहिर्वासवत् (?)। † विभा.

**मेखलां बध्नीते– ‘ इयं दुरुक्तं परिबाधमाना वर्णं पवित्रं पुनती म आगात्। प्राणापानाभ्यां बलमादधाना स्वसा देवी सुभगा मेखलेयम्॥’ इति ॥**

**‘ युवा सुवासाः परिवीत आगात्स उ श्रेयान्भवति जायमानः। तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः॥’ इति वा ॥**

**तूष्णीं वा ॥**

**¶ अत्र यज्ञोपवीतपरिधानम्– ‘ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात्। आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः॥ यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि ’ इति। अथाजिनं प्रयच्छति– ‘ मित्रस्य चक्षुर्धरुणं बलीयस्तेजो यशस्वि स्थविरं समिद्धम्। अनाहनस्यं वसनं जरिष्णुः परीदं वाज्यजिनं दधेऽहम्॥ ’ इति ॥**

( १ ) ‘ युवा सुवासाः ’ इत्यनेन मन्त्रेण वा तूष्णीं वा मेखलां बध्नीते। अस्मिन्नवसरे प्रसिद्धया यज्ञोपवीतमेवेच्छन्ति। $ अथ तूष्णीमैणेयमुत्तरीयमजिनं करोति। कभा.

( २ ) अथाऽऽचार्यो माणवककट्यां मेखलां बध्नीते ‘ इयं दुरुक्तम् ’ इति मन्त्रेण माणवकपठितेन, मन्त्रलिङ्गात्। ‘ युवा सुवासाः ’ इत्यनेन वा। तूष्णीं वा मेखलाबन्धनम्। अत्रावसरे यज्ञोपवीताजिने भवत

---

¶ शेषं कभागतम्। हभा. जभावत्।

§ शेषं जभावत्।

† शेषं जभागतम्।

$ शेषं हभावत्।

† शेषं जभावत्।

¶ यज्ञोपवीताजिनविषयकं सूत्रमिदं चौखम्बापुस्तकेऽस्ति। भाष्यपञ्चकपुस्तके ‘ अत्र...... परिधानम् ’ इत्यंशं विहाय कंसमध्ये मुद्रितम्, न सूत्रगणनायां परिगणितं च। कस्यापि भाष्यस्यास्य सूत्रत्वं नाभिमतम्।

$ हरिहरभाष्यात् गदाधरभाष्याच्च ग्रन्थोऽयं प्रक्षिप्त इति भाति।

आचारात् । तत्र चाविरोधित्वादुपशाखान्तरीयोऽपि मन्त्रो गृह्यते । ततश्चाऽऽचार्यो माणवकायोपवीतं ददाति, स च तत्प्रतिगृह्य परिधत्ते ' यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ ' इति मन्त्रेण । अस्यात्रानुक्तिः कात्यायनपरिभाषितत्वात् । परिभाषा च– ' वचनादन्यत्, शेषमितरे यथाख्यम्, उपवीतिनः ' ( काश्रौ. १।७।२१–२३ ) इति । अजिनं तु एण्या एवाखण्डं तूष्णीम् । जभा.

( ३ ) ततो मेखलां मौञ्ज्यादिकां वक्ष्यमाणलक्षणां बध्नीते कटिप्रदेशे त्रिवृतां प्रवरसंख्याग्रन्थियुतां प्रादक्षिण्येन परिवेष्टयति ' इयं दुरुक्तम् ' इत्यादिना ' मेखलेयम् ' इत्यन्तेन मन्त्रेण माणवकपठितेन । ' युवा सुवासाः ' इत्यादि ' देवयन्तः ' इत्यन्तेन वा मन्त्रेण मन्त्ररहितं तूष्णीं वा मेखलां बध्नीते । अत्र यद्यपि सूत्रकारेण यज्ञोपवीतधारणं न सूत्रितम्, तथापि ' एकवस्त्राः प्राचीनावीतिनः ' इति प्रेतोदकदाने प्राचीनावीतित्वविधानात्, ' दण्डाजिनोपवीतानि मेखलां चैव धारयेत् । '( यास्मृ. १।२९ ) इति याज्ञवल्क्येन ब्रह्मचारिण उपवीतधारणस्मरणात्, तथा ' सदोपवीतिना भाव्यं सदा बद्धशिखेन च । विशिखो ब्युपवीतश्च यत्करोति न तत्कृतम् ॥ ' इति छन्दोगपरिशिष्टे कात्यायनेन सामान्यतः सर्वाश्रमिणां सदा यज्ञोपवीतधारणस्मरणाच्च यज्ञोपवीतधारणं तावदुपनयनप्रभृति प्राप्तम् । तच्च कुत्र कर्तव्यमित्यवसरापेक्षायामौचित्यान्मेखलाबन्धनानन्तरं युज्यते । एतदेव कर्कोपाध्यायवासुदेवदीक्षितरेणुदीक्षितप्रभृतयः स्वस्वग्रन्थे यज्ञोपवीतधारणमत्रावसरे लिखितवन्तः । तच्च सर्वकर्माङ्गत्वान्मन्त्रवद्युज्यत इति मन्त्रमपि शाखान्तरीयं लिखितवन्तः । ' यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ ' इति माणवकपठितेन मन्त्रेण उपवीतं परिधापयति आचामयति च । अथ तूष्णीमैणेयमजिनमुत्तरीयं करोति । ' मित्रस्य चक्षुः ' इति मन्त्रेणेत्यन्ये । कर्काचार्यैरजिनधारणमेव नोक्तम् । $ हभा.

( ४ ) तत आचार्यो माणवककट्यां मेखलां रशनां बध्नीते ' इयं दुरुक्तम् ' इति मन्त्रेण । अथवा ' युवा सुवासाः ' इति मन्त्रेण । अथवा तूष्णीं बध्नीते । आचार्यस्यैव मन्त्रपाठः । अत्रैवं बन्धनम्– आचार्यस्त्रिगुणां मेखलामादाय बटोः कटिप्रदेशे प्रादक्षिण्येन त्रिर्वेष्टयति । तृतीये वेष्टने ग्रन्थयस्त्रयः पञ्च वा सप्त वा कार्याः । तदुक्तम्– ' त्रिवृता मेखला कार्या त्रिवारं स्यात्समावृता । तद्ग्रन्थयस्त्रयः कार्याः पञ्च वा सप्त वा पुनः ॥ ' । ' अत्र प्रवरसंख्यया नियमः– त्र्यार्षेयस्य ग्रन्थित्रयम्, पञ्चार्षेयस्य पञ्च, सप्तार्षेयस्य सप्त ' इति गर्गपद्धतौ । वृद्धाचारोऽप्येवमेव । आचार्यकर्तृकं मेखलाबन्धनम्, कुमारस्य मन्त्रपाठ इति वासुदेवमुरारिमिश्रजयरामहरिहराः । अत्र मुरारिमिश्रैरबुद्ध्यैव ' पुरुषयोगिमन्त्रसंस्कारयोस्त्यागे सामर्थ्यात् ' ( काश्रौ. १।१६८ ) इति हेतूपन्यासार्थे प्रदर्शितम् । नहि करणमन्त्रेऽयं न्यायः प्रवर्तते । आचार्यकर्तृको ह्ययं पदार्थः । मन्त्रपाठस्तु लिङ्गवशेन माणवककर्तृकः स्यादिति चेत्, तन्न । प्रधानभूतश्च पदार्थः, गुणभूतश्च मन्त्रः । अतः पदार्थाङ्गत्वेन मन्त्रोऽपि पदार्थकर्त्रा पठनीयः । मन्त्रेऽपि च लक्षणया माणवकाभिधानमित्यदोषः । तथा च श्रुतिः– ' यां वै कां च यज्ञ ऋत्विज आशिषमाशासते यजमानस्यैव सा ' इति । कारिकायाम्– ' बध्नीयात् त्रिगुणां श्लक्ष्णामियं दुरुक्तमुच्चरन् । आचार्यस्यैव मन्त्रोऽयं न बटोरात्मनेपदात् ॥ ' । अस्मिन्नवसरे समाचाराद्यज्ञोपवीताजिने भवत इति भर्तृयज्ञव्यतिरिक्तवासुदेवादिसर्वग्रन्थेषु । कर्काचार्यैस्तूपवीतमेव लिखितम् । तत्र चाविरोधादुपवीते शाखान्तरीयो मन्त्रो ग्राह्यः– ' यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ ' इति । अजिनस्योत्तरीयकरणं तूष्णीं मन्त्रपाठेन वेति वासुदेवः । ' मित्रस्य... दधेऽहम् ' इति मन्त्रेणाजिन-

$ विभा. हभागतम् ।

धारणमिति कारिकायां गर्गपद्धतौ च । रशनाश्च मौञ्ज्यादिकाः, 'मौञ्जी रशना ब्राह्मणस्य धनुर्ज्या राजन्यस्य मौर्वी वैश्यस्य' इति वक्ष्यमाणत्वात् । अजिनान्यैणेयादीनि । 'इयं दुरुक्तम्' इत्यस्यार्थः– इयमितीदंशब्द आद्यन्तयोर्वाक्यालंकारार्थः । इयं मेखला मामागात् आगता । किं कुर्वती ? दुरुक्तं दुष्टं भाषितम् असत्याप्रियादिकं परितः सर्वतः भूतं भविष्यच्च बाधमाना निराकुर्वाणा, वर्णं वर्णस्वं पवित्रं शुद्धं पुनती सत्कुर्वती, मे मम प्राणापानाभ्यां मरुद्भ्यां तयोर्बलं सामर्थ्यम् आदधाना स्थापयन्ती, स्वसा स्वसृवत् हिता, देवी दीप्तिमती, सुभगा सौभाग्यदा । 'युवा सुवासाः' इत्यस्यायमर्थः– यौति गुणानेकीकरोतीति युवा, सुवासाः शोभनवस्त्रः, अहतं शोभनमुच्यते, परिवीतः वस्त्रपुष्पमालादिभिः समन्ततो वेष्टितः आगात् आगतः । उ वितर्के । श्रेयान् स यदि जायमानः उत्पाद्यमानः श्रेयान् शुद्धः स्यात्, धीरासः स्थिरप्रज्ञाः कवयः वेदवेदार्थप्रवक्तारः क्रान्तदर्शनाः स्वाध्यः शोभनचित्तवृत्तयः तं च उन्नयन्ति उत्कर्षं गमयन्ति । किं कुर्वन्तः ? मनसा मनोवृत्त्या देवयन्तः वेदार्थं शपयन्तः । यज्ञोपवीतमन्त्रार्थः– हे आचार्य, इदं ब्रह्मसूत्रमहं प्रतिमुञ्च प्रतिमुञ्चामि । प्रतिपूर्वो मुञ्चतिर्बन्धनार्थः । पुरुषव्यत्ययश्छान्दसः । किंभूतम् ? यज्ञोपवीतं यज्ञेन प्रजापतिना यज्ञाय वेदोक्तकर्माधिकारायेति वा उपरि स्कन्धदेशे वीतं परिहितम्, परमं परः आत्मा मीयते ज्ञायते तेन( ? येन ) वाक्योपदेशाधिकार( ? रि )त्वात्, पवित्रं शोधकम्, प्रजापतेः ब्रह्मणः सहजं सहोत्पन्नं स्वभावसिद्धं वा, पुरस्तात् प्राग्भवम्, अत इदमायुषे हितम् आयुष्यमस्तु, अग्र्यं मुख्यम् अनुपहतम्, शुभ्रं निर्मलम्, बलं धर्मसामर्थ्यदम्, तेजः प्रभावप्रदम् । यद्यपि सूत्रकृता यज्ञोपवीतं नोक्तं तथापि 'उपवीतिनः' (काश्रौ. १।१७१) इति परिभाषणात् 'सदा यज्ञोपवीतिना भाव्यम्' इति परिशिष्टाच्च ग्राह्यम् । कालश्चानुक्तोऽपि स्मृत्यन्तरादयमेव । 'उपवीतिनः' इत्यस्यायमर्थः– सर्वे उपवीतिनः सव्यस्कन्धस्थितयज्ञोपवीतधारिणः, कर्म कुर्वन्तीति शेषः, 'उद्धृते दक्षिणे पाणावुपवीत्युच्यते बुधैः' इति स्मरणात् । यज्ञोपवीती देवकर्माणि करोति । गभा.

**दण्डं प्रयच्छति ॥**

**तं प्रतिगृह्णाति– 'यो मे दण्डः परापतद्वैहायसोऽधिभूम्यां तमहं पुनरादद आयुषे ब्रह्मणे ब्रह्मवर्चसाय' इति ॥**

**दीक्षावदेके, 'दीर्घसत्रमुपैति' इति वचनात् ॥**

( १ ) प्रयच्छत्याचार्यः । कुमारः प्रतिगृह्णाति । दीक्षावदेके आचार्याः दण्डं प्रतिग्रहीतुमिच्छन्ति । कुत एतत् ? 'दीर्घसत्रमुपैति' इति वचनात् । 'दीर्घसत्रं वा एष उपैति यो ब्रह्मचर्यमुपैति' इति वचनात् । दण्डप्रतिग्रहसामान्याद्दीर्घसत्रताऽस्योक्ता । यद्येवं न दीक्षावत्प्रतिग्रहणम्, स्मरणाभावात् । या अत्र दीर्घसत्रसंस्तुतिः सा दीर्घकालसामान्यात् । कभा.

( २ ) दीक्षावत् सोमदीक्षायां यथा तूष्णीं दण्डग्रहणं विहितं तद्वदत्रापीत्येके आचार्याः । ‡ जभा.

( ३ ) आचार्यो माणवकाय वक्ष्यमाणलक्षणं दण्डं प्रयच्छति तूष्णीम्, माणवकश्च तं दण्डं 'यो मे दण्डः' इत्यादिना 'ब्रह्मवर्चसे( ? साय )' इत्यन्तेन मन्त्रेण प्रतिगृह्णाति । एके आचार्या दीक्षावत् दीक्षायां यथा दण्डप्रदानं सोमे तथेच्छन्ति । तत्र 'उच्छ्रयस्व वनस्पते' इत्यादिना 'यज्ञस्योद्दचः' इत्यन्तेन मन्त्रेण यजमानो दण्डमुच्छ्रयति तद्वदत्र ब्रह्मचारी । केन हेतुना ? 'दीर्घसत्रं वा एष उपैति यो ब्रह्मचर्यमुपैति' इत्यारभ्य ब्रह्मचर्यस्य दीर्घसत्रसंपत्प्रतिपादनात् । हभा.

( ४ ) तत आचार्यो माणवकाय तूष्णीं दण्डं प्रयच्छति समर्पयति । माणवकश्च दक्षिणहस्तेन दण्डं प्रतिगृह्णाति 'यो मे दण्डः' इति मन्त्रेण । दण्डाश्च पालाशबैल्वौदुम्बरा ब्राह्मणक्षत्रियविशां यथासंख्यं ज्ञेयाः । अथवा पालाशादयः सर्वेषां वर्णानाम्, 'पालाशो ब्राह्मणस्य दण्डो बैल्वो राजन्यस्यौदुम्बरो वैश्यस्य सर्वे वा

‡ शेषं कभावत् ।

सर्वेषाम्' इति वक्ष्यमाणत्वात् । मानं च शाखान्तरीयं ग्राह्यम्— 'केशसंमितो ब्राह्मणस्य दण्डो ललाटसंमितः क्षत्रियस्य घ्राणसंमितो वैश्यस्य' इति । मन्त्रार्थः— हे आचार्य, यो दण्डः मे मह्यं परापतत् अभिमुखमागतः वैहायसः आकाशे प्रसृतः अधिभूम्यां भूमेरुपरि वर्तमानः तं दण्डमहम् आददे गृह्णामि । पुनर्ग्रहणात्सोमदीक्षायां यो दण्डो ग्राह्यस्तमप्याददे इत्याशंसनम् । किमर्थम्? आयुषे जीवनाय ब्रह्मणे वेदग्रहणाय ब्रह्मवर्चसाय याजनाध्यापनोत्कर्षतेजसे । एके आचार्याः दीक्षावत् सोमयागदीक्षायां यथा तूष्णीं प्रतिगृह्य 'उच्छ्रयस्व' इत्युच्छ्रयणं विहितं तद्वदत्रापीच्छन्ति । कुतः? 'दीर्घसत्रं वा एष उपैति यो ब्रह्मचर्यमुपैति' इति वचनात् । 'दण्डप्रतिग्रहणसामान्यात् दीर्घसत्रताऽस्योक्ता । यथैवं न दीक्षावत्प्रतिग्रहणम्, स्मरणाभावात् । या चात्र दीर्घसत्रसंस्तुतिः सा दीर्घकालसामान्यात्' इति भर्तृयशकर्कजयरामाः । 'दीक्षावद्वा दण्डग्रहणम्' इति वासुदेवकारिकाकारहरिहराः । गभा.

(५) दीक्षावदेके 'मुखसंमितमौदुम्बरं दण्डं प्रयच्छति' इति कात्यायनोक्तप्रकारेण दण्डदानं प्रतिग्रहणं च माणवकस्य । $ विभा.

[1]अथास्याद्भिरञ्जलिमाऽञ्जलिं पूरयति— 'आपो हि ष्ठा' इति तिसृभिः ॥

अथास्य कुमारस्याञ्जलिं पूरयत्यद्भिराचार्यः स्वेनाञ्जलिना आदाय 'आपो हि ष्ठा' इति तिसृभिर्ऋग्भिः । ¶ कभा.

अथैनं सूर्यमुदीक्षयति— 'तच्चक्षुः' इति ॥

(१) 'तच्चक्षुः' इत्यनेन मन्त्रेणावेक्षते । 'सूर्यमुदीक्षस्व' इत्याचार्यप्रैषः । ‡ कभा.

$ शेषं कभागतम् ।

¶ जभा., हभा., गभा., विभा. कभावत् ।

‡ जभा., गभा., विभा. कभावत् ।

(१) पागृ. २।२।१४–१६ ; संप्र. ४२६.

(२) अथ अञ्जलिपूरणानन्तरम् एनं माणवकं 'सूर्यमुदीक्षस्व' इत्येवं प्रेष्य सूर्यम् आदित्यम् उदीक्षयति अवलोकनं कारयति । स च प्रेषितः 'तच्चक्षुः' इत्यादिना 'भूयश्च शरदः शतात्' इत्यन्तेन मन्त्रेण सूर्यमुदीक्षते । हभा.

अथास्य दक्षिणांसमधि हृदयमालभते— 'मम व्रते ते हृदयं दधामि मम चित्तमनुचित्तं ते अस्तु । मम वाचमेकमना जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यम् ॥' इति ॥

(१) आचार्यः । कभा.

(२) अथ अस्य बटोः दक्षिणांसस्योपरि स्वदक्षिणहस्तं नीत्वाऽऽह्राऽऽचार्यः (?) 'मम व्रते ते हृदयं दधामि' इति मन्त्रेण । जभा.

(३) अथ सूर्यदर्शनानन्तरम् आचार्यः अस्य माणवकस्य दक्षिणांसमधि दक्षिणस्कन्धस्योपरि स्वं दक्षिणहस्तं नीत्वा हृदयं वक्षः 'मम व्रते ते' इत्यादिना 'बृहस्पतिष्ट्वा नियुनक्तु मह्यम्' इत्यन्तेन मन्त्रेण आलभते स्पृशति । ¶ हभा.

[1]अथास्य दक्षिणं हस्तं गृहीत्वाऽऽह— 'को नामासि' इति ॥

[2]'असावहं भो ३ः' इति प्रत्याह ॥

[3]अथैनमाह— 'कस्य ब्रह्मचार्यसि' इति ॥

[4]'भवतः' इत्युच्यमाने 'इन्द्रस्य ब्रह्मचार्यस्यग्निराचार्यस्तवाहमाचार्यस्तवासौ' इति ॥

(१) अथास्य दक्षिणं हस्तं गृहीत्वाऽऽह 'को नामासि' इत्याचार्यः । 'असावहं भोः' इति प्रत्याह कुमारः । अथैनमाह 'कस्य ब्रह्मचार्यसि' इत्याचार्य

¶ गभा., विभा. हभागतम् ।

(१) पागृ. २।२।१७ ; संप्र. ४२६–४२७ (ऽऽह०).

(२) पागृ. २।२।१८ ; संप्र. ४२७.

(३) पागृ. २।२।१९ ; संप्र. ४२७ माह + (को नामासि).

(४) पागृ. २।२।२० ; संप्र. ४२७.

एव । ' भवतः ' इत्युच्यमाने कुमारेण ' इन्द्रस्य ब्रह्मचार्यसि ' इत्यमुं मन्त्रमाहाऽऽचार्यः । असाविति नामादेशः । कभा.

( २ ) अथास्य दक्षिणहस्तग्रहणेनाभिमुखीकरणं कृत्वाऽऽहाऽऽचार्यः ' को नामासि ' इति । ततो बटुः प्रत्याह ' असौ अमुकशर्माऽहमस्मि भो३ः ' इति । अथेनमाचार्य आह ' कस्य० ' इति । ' भवतः ' इति बटुनोक्ते तुष्ट आहाऽऽचार्यः ' इन्द्रस्य० ' इति । ¶ जभा.

( ३ ) असावित्यस्य स्थाने आमन्त्रणविभक्तियुक्तं कुमारनामग्रहणं कार्यम् । स्वनाम प्रथमान्तमित्यपरे । उभयथा मन्त्रार्थोपपत्तेः स्मृत्यन्तरान्निर्णय इति भर्तृयज्ञभाष्ये । मन्त्रार्थस्तु– ' इदि परमैश्वर्ये ' । इन्द्रस्य प्रजापतेः ब्रह्मचारी त्वमसि, तव चाग्निराचार्यः प्रथमः, द्वितीयश्चाहं तव हे असौ अमुकशर्मन् ब्रह्मचारिन् । $ गभा.

( ४ ) असौ अमुकगोत्रामुकप्रवरामुकशर्मन्निति 'अहमाचार्यस्तव ' इत्यन्तं पठित्वा पठेदित्यर्थः । $ विभा.

[1]**अथैनं भूतेभ्यः परिददाति– ' प्रजापतये त्वा परिददामि देवाय त्वा सवित्रे परिददाम्यद्भ्यस्त्वौषधीभ्यः परिददामि द्यावापृथिवीभ्यां त्वा परिददामि विश्वेभ्यस्त्वा देवेभ्यः परिददामि सर्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्यै ' इति ॥**

( १ ) इति अनेन मन्त्रेण । कभा.

( २ ) अथैनं बटुं भूतेभ्यः परितः अरिष्ट्यै रक्षायै ददाति गुरुः ' प्रजापतये त्वा ' इति मन्त्रेण । * जभा.

( ३ ) अथाऽऽचार्य एनं कुमारं भूतेभ्यः प्रजापतिप्रभृतिभ्यः परितः अरिष्ट्यै रक्षायै प्रयच्छति ' प्रजापतये परिददामि' इत्यनेन मन्त्रेण, "अथैनं भूतेभ्यः परिददाति– 'प्रजापतये त्वा परिददामि देवाय त्वा सवित्रे परिददामि" इति श्रुतत्वात् । मन्त्रार्थः सुगमः । हे ब्रह्मचारिन्, प्रजापतये स्रष्टे त्वा त्वां परिददामि समर्पयामि । विश्वेभ्यो भूतेभ्यः, विश्वानि भूतानि पृथिव्यादीनि पञ्च, तेभ्यः । सर्वेभ्यः भूतेभ्यः देवविशेषेभ्यः इत्यपौनरुक्त्यम् । किमर्थम् ? अरिष्ट्यै अहिंसायै । गभा.

[1]**प्रदक्षिणमग्निं परीत्योपविशति ॥**

( १ ) प्रदक्षिणमग्निं परीत्योपविशति कुमारः । कभा.

( २ ) एवं वस्त्रादिना संस्कृतः अग्निं प्रदक्षिणं कृत्वा पश्चादग्नेराचार्यस्योत्तरत उपविशति कुमारः । ¶ जभा.

( ३ ) परिदानानन्तरं कुमारोऽग्निं प्रदक्षिणं यथा स्यात्तथा परीत्य परिक्रमणं कृत्वाऽग्नेरुत्तरत उपविशति । पश्चादग्नेराचार्यस्योत्तरत उपविशतीति जयरामहरिहरौ । पश्चादग्नेरुपवेशनमिति भर्तृयज्ञकारिकाकारौ । आचार्यस्य दक्षिणत इति गर्गपद्धतौ । आचार्यस्योत्तरत इति वासुदेवः । गभा.

( ४ ) आचार्यस्य दक्षिणतो बटुरिति शेषः । तत उपयमनकुशादानादि पर्युक्षणान्तमाचार्यस्य कृत्यम् । विभा.

**अन्वारब्ध आज्याहुतीर्हुत्वा प्राशनान्तेऽथैनं संशास्ति– ' ब्रह्मचार्यसि, अपोऽशान, कर्म कुरु, मा दिवा सुषुप्थाः, वाचं यच्छ, समिधमाधेहि, अपोऽशान ' इति ॥**

( १ ) संशास्ति आचार्यः कुमारं ' ब्रह्मचार्यसि ' इत्येवमादिभिः प्रैषवाक्यैः । ' ब्रह्मचार्यसि ' इत्युक्ते ' भवामि( ? नि ) ' इति प्रत्याह कुमारः । 'अपोऽशान' इत्युक्ते ' अश्नानि ' इति प्रत्याह कुमारः । ' कर्म कुरु ' इत्युक्ते ' करवाणि ' इति प्रत्याह कुमारः । ' मा दिवा

---

¶ हभा. जभावत् ।

$ शेषं जभावत् ।

* हभा., विभा. जभावत् ।

(१) पागृ. २।२।२१ ; गभा. देवेभ्यः ( भूतेभ्यः ) ; संप्र. ४२७ गभावत्.

¶ हभा. जभावत् ।

(१) पागृ. २।३।१–२.

सुषुप्थाः ' इत्युक्ते ' न स्वपानि ' इति । ' वाचं यच्छ ' इत्युक्ते ' यच्छानि ' इति । ' समिधमाधेहि ' इत्युक्ते ' आदधामि(? नि ) ' इति । ' अपोऽशान ' इत्युक्ते ' अश्नानि ' इति कुमारः । एतदनुशासनम् । कभा.

( २ ) अन्वारब्धे ब्रह्मणा आचार्य आधारादिस्विष्टकृदन्ताश्चतुर्दशाहुतीर्हुत्वा संस्रवप्राशनान्ते ' ब्रह्मचार्यसि ' इत्येवमादिभिः प्रैषवाक्यैरेनं कुमारमनुशास्ति शिक्षयति । * जभा.

( ३ ) अत्र पुनरन्वारम्भानुवादश्चतुर्दशाहुतिहोमव्यतिरिक्तहोमप्रतिषेधार्थः । $ इभा.

( ४ ) अत्र ब्रह्मोपवेशनादि दक्षिणादानान्तं कर्म कृत्वाऽनुशासनं कार्यम् । ' ब्रह्मचार्यसि ' इत्यादिप्रैषाणामयमर्थः– ब्रह्म कर्म चरतीत्येवंशीलो ब्रह्मचारी असि भवसि । अपः अशान पिब । कर्म स्नानादिकं स्ववर्णाश्रमविहितं कुरु विधेहि । दिवसे मा स्वाप्सीः । स्मृत्युक्तकाले वाचं गिरं यच्छ नियमय । समिधं वक्ष्यमाणप्रकारेण आधेहि अग्नौ सर्वदा प्रक्षिप । प्रथममाचमनमशिष्यन् द्वितीयं चाशित्वा, ' अशिष्यन्नाचामेदशित्वाऽऽचामेत् ' इति श्रुतेः । कर्मकरणमविशेषोपदिष्टमप्याचार्याय ' आचार्याय कर्म करोति ' इति श्रुतत्वादिति भर्तृयज्ञः । $ गभा.

( ५ ) प्रणवेन वा प्रत्युत्तरयति । ततो बर्हिर्होमः प्रणीताविमोकः कर्मापवर्गसमित्प्रक्षेप उत्सर्जनं ब्रह्मण उपयमनकुशानामग्नौ प्रक्षेपः । ततो दश ब्राह्मणान्संकल्प्य भोजयेत् । एवं बर्हिर्होमादिब्राह्मणभोजनान्तां कर्मसमाप्तिं विदध्यात् । इत्युपनयनम् । $ विभा.

**[१]अथास्मै सावित्रीमन्वाहोत्तरतोऽग्नेः प्रत्यङ्मुखायोपविष्टायोपसन्नाय समीक्षमाणाय समीक्षिताय ॥**

( १ ) गुरुं समीक्षमाणाय कुमाराय । उपसदनं च पादोपसंग्रहणपूर्वकम् । सवितृदेवत्यां गायत्रीछन्दस्कां सावित्रीम्, ' तस्मादेतां गायत्रीमेव सावित्रीमनुब्रूयात् ' इति वचनात् । कभा.

( २ ) समीक्षमाणाय गुरुम्, समीक्षितश्च तेनैव । $ जभा.

( ३ ) अथ शासनानन्तरम् अस्मै ब्रह्मचारिणे सावित्रीं सवितृदेवत्यां गायत्रीच्छन्दस्कां विश्वामित्रदृष्टां ऋचम् अन्वाह उपदिशति । कथंभूताय ? प्रत्यङ्मुखाय पश्चिमाभिमुखाय । पुनः कथंभूताय ? उपविष्टाय च अग्नेरुत्तरस्यां दिशि, तथा उपसन्नाय पादोपसंग्रहणादिना भजमानाय, तथा समीक्षमाणाय सम्यक् आचार्यमवलोकयते, तथा आचार्येण सम्यगवलोकिताय । † इभा.

( ४ ) इदानीं सावित्रीव्रतादेशमाह– अथास्मा इति । दक्षिणोत्तराभ्यां कराभ्यां गुरोर्दक्षिणोत्तरयोश्चरणयोः कृतग्रह उपसन्नः, तस्मै । ¶ विभा.

**[१]दक्षिणतस्तिष्ठत आसीनाय वैके ॥**

( १ ) एके आचार्याः । सावित्रीमन्वाहुः । एकीयशब्दाद्विकल्पः । कभा.

( २ ) तिष्ठते स्थिताय । $ जभा.

( ३ ) पक्षान्तरमाह– दक्षिणतः अग्नेर्दक्षिणस्यां दिशि तिष्ठते ऊर्ध्वाय ऊर्ध्वीभूताय वा आसीनाय उपविष्टाय इत्येके आचार्याः सावित्रीप्रदानं मन्यन्ते । § इभा.

---

* शेषं कभावत् ।

$ शेषं जभावत् ।

(१) पागृ. २।३।३ ; ब्रक. ११४ ; स्मृसा. ६ अथास्मै ( अथास्य ) ; संप्र. ४२९ ; संको. १२५ ( समीक्ष ... क्षिताय० ) पारस्करः कातीयसूत्रं च.

$ शेषं कभावत् ।

† गभा. इभावत् ।

¶ शेषं इभागतम् ।

§ गभा., विभा. इभावत् ।

(१) पागृ. २।३।४ ; ब्रक. ११४ ; स्मृसा. ६ य वैके ( येत्येके ) ; संप्र. ४२९ स्मृसावत् ; संको. १२५–१२६ स्मृसावत्, पारस्करः कातीयसूत्रं च.

¹पच्छोऽर्धर्चशः सर्वां च तृतीयेन सहानुवर्तयन् ॥

(१) पच्छ इति पादं पादम्, पुनरर्धमर्धम्, तृतीयेन सर्वां सहानुवर्तयन्। कभा.

(२) कथमन्वाहुः? पच्छः प्रथमं पादं पादम्, ततः अर्धर्चशः अर्धर्चमर्धर्चम्, ततस्तृतीयेन सर्वां सह बहुना समम् अनुवर्तयन् पठन्। $जभा.

(३) कथमत आह– पच्छ इति। पच्छः पाद(श):। ऋषिदैवतच्छन्दांसि स्मृत्वा 'त्रिकेणैव जपः कार्यः' इत्यादिश्रुतत्वात्प्रणवव्याहृतिपूर्वकसावित्र्युपदेशः। तद्यथा। 'ॐभूर्भुवः स्वः तत्सवितुर्वरेण्यम्' इत्याचार्याच्छ्रुत्वा ब्रह्मचारी वदेत्। पुनः 'भर्गो देवस्य धीमहि' इत्याचार्यादाकर्ण्य ब्रह्मचारी वदेत्। ततो 'धियो यो नः प्रचोदयात्' इत्याचार्यानन्तरं ब्रह्मचारी। अयं पच्छः प्रयोगः। एवमर्धर्चप्रयोगः। ततः सर्वां सावित्रीमाचार्यमनु ब्रह्मचारी ब्रूयात्। अस्यां च तृतीयायामावृत्तावाचार्यहस्ताधानाद्ब्रह्मचारिणि गर्भीभूतं ब्रह्मवर्चसं प्रादुरभूत्। तेन 'स्वर्गी उत्पन्नः' इतिवत् 'सविशेषणे हि' इतिन्यायेन द्वितीयं माणवकस्य जन्मेत्युच्यते। विभा.

¹संवत्सरे षण्मास्ये चतुर्विंशत्यहे द्वादशाहे षडहे त्र्यहे वा ॥

(१) सावित्र्युच्यते, एवमेव हि भूयत इति। कभा.

(२) सावित्रीप्रदानस्यैते कालविकल्पाः। जभा.

(३) सावित्रीप्रदानस्य कालं विकल्पेनाऽऽह– संवत्सरे उपनयनमारभ्य पूर्णे वर्षे। षण्मास्ये– षडेव मासाः षण्मास्यम्, स्वार्थे तद्धितः, छान्दसो वृद्धिलोपः, 'छन्दोवत्सूत्राणि भवन्ति' इति वचनात्, तस्मिन् षण्मास्ये। चतुर्विंशत्यहे चतुर्विंशत्या अहोभिरुपलक्षितः कालः चतुर्विंशत्यहः, तस्मिन्। द्वादशाहे द्वादशभिरहोभिरुपलक्षितः कालो द्वादशाहः, तस्मिन्। षडहे षड्भिरहोभिरुपलक्षितः कालः षडहः, तस्मिन्। त्र्यहे त्रिभिरहोभिरुपलक्षितः कालस्त्र्यहः, तस्मिन्। वाशब्दः सर्वेषु संवत्सरादिषु संबध्यते। एते कालविकल्पाः आचार्यस्य शुश्रूषादिशिष्यगुणतारतम्यापेक्षाः। $ हभा.

(४) गर्भीभूतस्य च तात्कालिकं जन्मानुचितमित्याशङ्क्याऽऽह– संवत्सर इति। सावित्रीमन्वाहेति शेषः। वाशब्दो विकल्पार्थः। विभा.

¹सद्यस्त्वेव गायत्रीं ब्राह्मणायानुब्रूयात्, 'आग्नेयो वै ब्राह्मणः' इति श्रुतेः ॥

(१) 'आग्नेयो वै ब्राह्मणः सद्यो वा अग्निर्जायते तस्मात्सद्य एव ब्राह्मणायानुब्रूयात्' इति। इतरेषां त्विच्छया कालः। ¶ कभा.

(२) एवं सामान्येन सावित्रीप्रदानस्य कालविकल्पानभिधायाधुना ब्राह्मणस्य विशेषमाह। तुशब्दः पक्षव्यावृत्तौ। ब्राह्मणस्य नैते कालविकल्पाः, किंतु क्षत्रियवैश्ययोः। सद्य एव गायत्रीं ब्राह्मणाय अनुब्रूयात् कथयेत्। कुतः? 'आग्नेयो वै ब्राह्मणः' इति श्रुतेः। आग्नेयः अग्निदैवत्यः ब्राह्मणः इति वेदवचनात्। $ हभा.

(३) इदानीं ब्राह्मणस्य गर्भजन्मनोः समानकालीनत्वं समर्थयति– सद्य इति। † विभा.

¹अत्र समिदाधानम् ॥

---

$ हभा., गभा. जभावत्।

(१) पागृ. २।३।५; ब्रक. ११४; संप्र. ४२९ सर्वां च + (स हि).

(२) पागृ. २।३।६; ब्रक. ११४; संप्र. ४२९.

$ गभा. हभावत्।

¶ जभा. कभावत्।

† शेषं हभागतम्।

(१) पागृ. २।३।७; ब्रक. ११४; संप्र. ४२९ (आग्नेयो ... श्रुतेः०).

(२) पागृ. २।४।१–२; संप्र. ४२७–४२८.

(१) अत्रावसर इति केचित्, तन्न, पाठादेव तत्प्राप्तेः। तेनात्रशब्दोऽग्निपरो द्रष्टव्यः। ‡ कभा.

(२) अत्र सावित्रीप्रदानोत्तरकाले समिधामाधानं प्रक्षेपः ब्रह्मचारिणो भवति। अत्र अग्नौ इति भाष्यकारः, अत्रावसरस्य पाठादेव सिद्धेः। हभा.

(३) उपनयनाङ्गभूतं समिदाधानमाह– 'अत्र समिदाधानम्'। अत्र अस्मिन् प्रकृतेऽग्नौ समिदाधानं समिधां तिसृणां प्रक्षेपो ब्रह्मचारिकर्तृको भवति। अत्रावसरे इति केचित्, तन्न, पाठादेव तत्सिद्धेः। अत्रशब्दोऽग्निपरो द्रष्टव्यः। गभा.

(४) अस्मिन्नवसरे मध्याह्नसंध्योत्तरमित्यर्थः। ये त्वधिकरणार्थत्वमाहुस्तन्न, अग्नौ समिद्धोमस्य विशेषविध्यन्तराबाधात्। वक्ष्यमाणसमिदाधानं बटुना कर्तव्यमिति शेषः। विभा.

**पाणिनाऽग्निं परिसमूहति– 'अग्ने सुश्रवः सुश्रवसं मा कुरु। यथा त्वमग्ने सुश्रवः सुश्रवा असि। एवं मां सुश्रवःसौश्रवसं कुरु। यथा त्वमग्ने देवानां यज्ञस्य निधिपा असि। एवमहं मनुष्याणां वेदस्य निधिपो भूयासम्' इति॥**

(१) एवमादिभिर्मन्त्रैः प्रतिमन्त्रं परिसमूहनं च संधुक्षणम्। पाणिनेत्येकवचनमेकत्वनियमार्थम्। उभाभ्यामपि संधुक्षणप्रसिद्धिरस्ति। कभा.

(२) तत्केन मन्त्रेण भवतीति मन्त्रो वक्ष्यते। 'अग्ने सुश्रवः' इत्यादिभिः पञ्चमन्त्रैः। § जभा.

(३) पाणिना दक्षिणहस्तेन अग्निं प्रकृतहोमाधिकरणं परिसमूहति संधुक्षयति इन्धनप्रक्षेपेण वक्ष्यमाणैः पञ्चभिर्मन्त्रैः। यथा– 'अग्ने... भूयासम्'। केचित्परिसमूहने त्रीन्मन्त्रान्मन्यन्ते। तद्यथा– 'अग्ने सुश्रवः' इत्यारभ्य 'सुश्रवसं मा कुरु' इत्येकम्, 'यथा त्वमग्ने' इत्यारभ्य 'सौश्रवसं कुरु' इत्येवं द्वितीयम्, 'यथा त्वमग्ने देवानाम्' इत्यादि 'भूयासम्' इत्यन्तं तृतीयमिति। हभा.

‡ जभा. कभावत्।

§ शेषं कभावत्।

(४) समिदाधानस्येतिकर्तव्यतामाह– पाणिनेति। ब्रह्मचारी पाणिना दक्षिणहस्तेन अग्निं प्रकृतमुपनयनाङ्गहोमाधिकरणं परिसमूहति शुष्कगोमयखण्डादीन्धनप्रक्षेपेण संधुक्षयति 'अग्ने सुश्रवः सुश्रवसं मा कुरु' इत्यादिभिः पञ्चमन्त्रैः। मन्त्रार्थः– हे अग्ने, हे सुश्रवः शोभनकीर्ते, मा मां सुश्रवसं शोभनकीर्तिं कुरु। किंच, हे अग्ने, $ सुश्रवःसौश्रवसं सुश्रवाश्च सौश्रवसश्च तम्। तत्र सुश्रवाः स्वयम्, सुश्रवा गुरुस्तस्यायं सौश्रवसः। ममाऽऽचार्यमपि सुश्रवसं कृत्वा तदीयत्वेन मां सौश्रवसं कुर्वित्यर्थः। किंच, हे अग्ने, यथा त्वं देवानाम् इन्द्रादीनां मध्ये यज्ञस्य क्रतोः निधिं हविर्द्रव्यं पासि रक्षसि, एवमहं मनुष्याणां मध्ये वेदस्य श्रुतेः निधिः अधिकरणं § भूयासं भवेयम्। ‡ गभा.

(५) इतस्ततः पतितानङ्गारान् हस्तेन स्थण्डिलमध्यस्थान्करोतीत्यर्थः। अपरे तु इन्धनप्रक्षेपस्यान्यत्र महाभारतादौ प्रतीयमानत्वाद्दक्षिणेन पाणिना संधुक्षणप्रक्षेपमाहुः। कथमित्यत आह– 'अग्ने...... यासम्' इति। 'अग्ने सुश्रवः' इत्यादिपञ्चमन्त्रैः प्रतिमन्त्रं संधुक्षणप्रक्षेपः। अपरे तु पञ्चमन्त्रान्ते सकृदेव संधुक्षणप्रक्षेपमिच्छन्ति। विभा.

**[1]प्रदक्षिणमग्निं पर्युक्ष्योत्तिष्ठन् * समिधमादधाति– 'अग्नये समिधमहार्षं बृहते जातवेदसे।**

$ अत्रत्यं द्वितीयमन्त्रस्य तृतीयमन्त्राद्यस्यैवंशब्दस्य च व्याख्यानं त्रुटितमिति भाति। जयरामकृतं तद्व्याख्यानं यथा– 'किंच हे अग्ने सुश्रवः, यथा येन गुणेन त्वं सुश्रवा असि एवं गुणाधानेन मा माम्' इति। अत्र 'मा माम्' इति व्याचक्षाणो जयरामस्तृतीयमन्त्रे 'मा' इति पदमभिप्रैति प्रमादो वा।

§ अत्र पः इत्यस्य व्याख्यानं नास्ति।

‡ शेषं कभागतं हभागतं च।

* 'उत्तिष्ठन्' इत्यत्र 'उत्थाय' इति पाठो हरिहरगदाधरविश्वनाथानामभिमत इति तद्भाष्येभ्यः प्रतीयते। तत्र 'उत्थायेति ग्रहणं व्यर्थम्' इति गदाधरभाष्यात्

(१) पागृ. २।४।३ ; संप्र. ४२८ महार्षं (माहार्षं).

**यथा त्वमग्ने समिधा समिध्यस एवमहमायुषा मेधया वर्चसा प्रजया पशुभिर्ब्रह्मवर्चसेन समिन्धे जीवपुत्रो ममाऽऽचार्यो मेधाव्यह-मसान्यनिराकरिष्णुर्यशस्वी तेजस्वी ब्रह्मवर्चस्य-न्नादो भूयासं स्वाहा ॥ ' इति ॥**

(१) अग्निं पर्युक्ष्य तिष्ठन् समिधमादधाति 'अग्नये ... भूयासम्' इति स्वाहाकारान्तेन। कभा.

(२) आदधाति अग्नौ प्रक्षिपति। $ जभा.

(३) ततः प्रदक्षिणं यथा भवति तथाऽग्निं पर्युक्ष्य दक्षिणहस्तगृहीतेनोदकेन परिषिच्य उत्थाय ऊर्ध्वीभूय प्राङ्मुखस्तिष्ठन् समिधम्– समिध्यते दीप्यते अग्निरनयेति समित्, तां समिधम् आदधाति प्रक्षिपति। हभा.

(४) ननु 'तिष्ठन्समिधः सर्वत्र' (काश्रौ. १८। ४९) इति श्रौतसूत्रे उक्तत्वादुत्थायेति ग्रहणं व्यर्थम्। सत्यम्। नायं होमः समिदाधानमित्येतत्सूचनार्थमुत्था-येति ग्रहणमित्यदोषः। अतोऽत्र त्यागाभावः। यद्वा इहोत्थायेति ग्रहणमन्यत्र स्मार्ते परिसंख्यार्थमिति कारि-कायाम्। प्रयोगरत्ने तु त्यागो लिखितः। मन्त्रार्थः– हे देवाः, इमां समिधम् अग्नये अग्न्यर्थम् आहार्षम् आहृतवानस्मि। किंभूताय? बृहते महते, जातान् जातान् वेत्ति इति जातवेदाः, तस्मै। यथा येन प्रका-रेण समिधा अनया दीप्यमानया त्वं हे अग्ने, समिध्यसे दीप्यसे एवमहम् आयुषा जीवनेन मेधया अतीतादि-धारणवत्या बुद्ध्या वर्चसा तेजसा प्रजया पुत्रादिभिः पशुभिः गवादिभिः ब्रह्मवर्चसेन तेजसा कृताध्ययनसंपत्त्या एतैरहं समिन्धे समृद्धो भवामि। आचार्यविषयं फल-मप्याशंसते– जीवपुत्रः दीर्घायुरपत्यः ममाऽऽचार्यो भवतु। जीवन्तः पुत्रा यस्य। मेधावी अहम् असानि भवामि। अनिराकरिष्णुः गुरूपदिष्टधर्मार्थविस्मरणशीलः।

उत्थायेतिपाठप्रतीतिः स्पष्टैव। तदुपोद्बलनेन हरिहरविश्व-नाथभाष्ययोरपि स एव पाठः प्रतीयते।

$ शेषं कभावत्। विभा. जभावत्।

यशस्वी तेजस्वी ब्रह्मवर्चसी अन्नादः अन्नमत्तीत्यन्नादः भूयासं भवेयम्। स्वाहा सुहुतमस्तु। ¶ गभा.

**[१]एवं द्वितीयां तथा तृतीयाम् ॥**

(१) समिधमादधाति। ‡ कभा.

(२) एवम् अनेनैव मन्त्रेण द्वितीयां समिधमा-दधाति, तथा तेनैव मन्त्रेण तृतीयाम्। हभा.

(३) 'तिस्रः समिध आदधात्यग्नये समिधमाहा-र्षम्' इत्युच्यमाने मन्त्रान्ते युगपत्तिसृणामाधानं प्राप्नोति, तन्निवृत्त्यर्थम् 'एवं द्वितीयां तथा तृतीयाम्' इति सूत्रणा। ¶ गभा.

**'एषा ते' इति वा समुच्चयो वा ॥**

(१) 'एषा ते' इति वा मन्त्रेण समिदाधानम्। समुच्चयो वा द्वयोरपि मन्त्रयोः। ‡ कभा.

(२) मन्त्रविकल्पमाह– 'एषा ते अग्ने समित्' इत्यादि 'आ च प्यासिषीमहि' इत्यन्तेन वा मन्त्रेण। अथवा 'अग्नये समिधम्' इति 'एषा ते' इति द्वयो-र्मन्त्रयोः समिदाधाने समुच्चयः ऐक्यम्। ततश्च मन्त्र-द्वयान्ते समित्प्रक्षेपः। इति त्रयो मन्त्रविकल्पाः। हभा.

(३) 'एषा ते' इति वा। अत्रापि मन्त्रावृत्तिः। 'समुच्चयो वा'। अत्रापि प्रतिसमिदाधानं मन्त्रयोरा-वृत्तिः। † गभा.

**पूर्ववत्परिसमूहनपर्युक्षणे ॥**

(१) अग्नेः कर्तव्ये। $ कभा.

(२) पूर्ववत् 'अग्ने सुश्रवः' इत्यादिभिः पञ्चभि-र्मन्त्रैः परिसमूहनम्। पर्युक्षणमपि पूर्ववत्कुर्यात्। हभा.

¶ शेषं हभावत्।

‡ जभा., विभा. कभावत्।

† शेषं हभागतम्।

$ जभा. कभावत्।

(१) पागृ. २।४।४–८.

(३) पर्युक्षणम् अग्नेः सर्वतो जलासेकः । ‡ गभा.

(४) उपविश्य परिसमूहनं पर्युक्षणं च प्राग्वत् । विभा.

**पाणी प्रतप्य मुखं विमृष्टे— 'तनूपा अग्नेऽसि तन्वं मे पाहि । आयुर्दा अग्नेऽस्यायुर्मे देहि । वर्चोदा अग्नेऽसि वर्चो मे देहि । अग्ने यन्मे तन्वा ऊनं तन्म आपृण ' ॥**

**'मेधां मे देवः सविता (¶ आदधातु)। मेधां मे देवी सरस्वती (¶आदधातु)। मेधामश्विनौ देवावाधत्तां पुष्करस्रजौ ' इति ॥**

**§ अङ्गान्यालभ्य जपति— 'अङ्गानि च म आप्यायन्तां वाक्प्राणश्चक्षुः श्रोत्रं यशो बलम्' इति । त्र्यायुषाणि करोति भस्मना ललाटे ग्रीवायां दक्षिणेऽसे हृदि च— 'त्र्यायुषम्' इति प्रतिमन्त्रम् ॥**

(१) वाक्यभेदाच्च प्रतिवाक्यं पाणी प्रतप्य मुखविमार्जनम् । 'मेधां मे देवः सविता, मेधां मे देवी सरस्वती' इत्यनयोः 'आदधातु' इत्यध्याहारः, साकाङ्क्षत्वात् । अत्र प्रसिद्ध्या त्र्यायुषकरणानन्तरं गोत्रनामपूर्वकं वैश्वानरादीनामभिवादनम्, त्र्यायुषकरणमनुक्तमपि सूत्रकारेण । कभा.

(२) पाणी अग्नौ प्रतप्य ताभ्यां स्वं मुखं विमृष्टे मार्जयति तनूपाःप्रभृतिभिः सप्तभिर्मन्त्रवाक्यैः । वाक्यभेदात् प्रतिवाक्यं पाण्योः प्रतपनं मुखविमार्जनं च । 'तनूपाः' इत्येतस्य स्वशाखीयत्वात्प्रतीकग्रहणे प्राप्ते मन्त्रवाक्यचतुष्टयस्योपयोगात्सर्वपाठः । अत्राङ्गालम्भनत्र्यायुषकरणाभिवादनानि ग्रन्थकारानुक्तान्यप्याचारतोऽनुष्ठेयानि, अविरोधात् । तत्राभिवादनं गोत्रनामोच्चारपूर्वकं पादोपसंग्रहः अग्न्यादीनाम् । अङ्गालम्भत्र्यायुषयोर्मन्त्रौ सूत्रकारान्तरप्रदर्शितौ ग्राह्यौ । तद्यथा— " अङ्गान्यालभ्य जपति— 'अङ्गानि च म आप्यायन्तां वाक् प्राणश्चक्षुः श्रोत्रं यशो बलम्' इति । त्र्यायुषाणि करोति भस्मना ललाटे ग्रीवायां दक्षिणेऽसे हृदि च— 'त्र्यायुषम्' इति प्रतिमन्त्रम् " । तत्र 'वाक् च म आप्यायताम्' इति क्रियाविपरिणामं कुर्यात् । जभा.

(३) पाणी हस्तौ प्रतप्य तूष्णीमग्नौ तापयित्वा 'तनूपा अग्नेऽसि' इत्यादिभिः सप्तभिर्मन्त्रैः प्रतिमन्त्रं पाणिभ्यां मुखं विमृष्टे ललाटादिचिबुकान्तं प्रोञ्छति । 'अङ्गानि च मे' इत्यनेन मन्त्रेण शिरःप्रभृतीनि पादान्तानि अङ्गान्यालभते । एवं 'वाक्' इत्यनेन मुखम्, 'प्राणः' इत्यनेन नासिके युगपत्, 'चक्षुः' इत्यनेन चक्षुषी युगपत्, 'श्रोत्रम्' इत्यनेन श्रवणे मन्त्रावृत्त्या, 'यशो बलम्' इत्यस्य पाठमात्रम् । तिलकानि करोति 'त्र्यायुषम्' इत्येतैश्चतुर्भिर्मन्त्रपादैः । अनामिकागृहीतेन भस्मना ललाटे ग्रीवायां दक्षिणेऽसे हृदये प्रतिपादं त्र्यायुषाणि कुरुते । अत्र त्र्यायुषकरणं सूत्रकारानुक्तमपि प्रसिद्धत्वात् शिष्टपरंपराचरितत्वात्क्रियते । ततो ब्रह्मचारी संध्यामुपास्याग्निकार्यं कृत्वा गुरूपसंग्रहणं वृद्धतरेष्वभिवादनं वृद्धेषु नमस्कारं कुर्यात्पर्यायेण । § हभा.

(४) मेधामित्यस्यार्थः— देवः द्युतिमान् सविता सूर्यः मे मह्यं मेधां धारणावतीं बुद्धिं तथा देवी दीप्यमाना सरस्वती आदधातु । तथा अश्विनौ देवौ मे मह्यं मेधाम् आधत्तां संपादयेतां पुष्करस्रजौ पद्ममालाधारिणौ । ¶ गभा.

(५) सवितृदेवताके सरस्वतीदेवताके च 'आदधातु' इत्यध्याहारः साकाङ्क्षत्वात् । केचित् त्वध्याहारं

---

‡ शेषं हभागतम् ।

¶ इमे पदे सर्वभाष्यकाराणां मन्त्रस्थत्वेनासंमते अपि आदर्शपुस्तके मुद्रिते स्तः ।

§ एतदादिः 'प्रतिमन्त्रम्' इत्यन्तो ग्रन्थो भाष्यपञ्चकपुस्तके कंसमध्ये मुद्रितः । चौखम्बामुद्रितपुस्तके तु कंसं विनैव मुद्रितः । तं च कर्कहरिहरातिरिक्तभाष्यकाराः पारस्करीयं न मन्यन्ते । कर्कहरिहरौ तु त्र्यायुषकरणमात्रं सूत्रकारानुक्तमिति ब्रूतः ।

§ शेषं कभागतम् ।

¶ शेषं जभा—हभागतम् ।

विनैव तादृशं मन्त्रमाहुः । ‘ तनूपाः ’ इति प्रतपनं पाण्योः । ‘ तन्वं मे ’ इति मुखविमार्जनम् । एवं व्यत्यासेन पुनर्द्वाभ्याम् । ‘ अग्ने यन्मे ’ इत्यग्निमीक्षमाणो जपति ‘ देवावाधत्ताम् ’ इत्यन्तेन । ‘ पुष्करस्रजौ ’ इति ललाटं स्पृशेत् । शिष्टाचारप्राप्ताः केचन पदार्था लिख्यन्ते– ‘ अङ्गानि च म आप्यायन्ताम् ’ इति सर्वाङ्गान्यालभ्य जपति । ‘ वाक् प्राणश्चक्षुः श्रोत्रं यशो बलम् ’ इति यथालिङ्गं वागादिस्पर्शनम् । त्र्यायुषाणि करोति भस्मना ललाटे ग्रीवायां दक्षिणेंऽसे हृदि च ‘ त्र्यायुषम् ’ इति प्रतिमन्त्रम् । त्रिपुण्ड्रं सव्येंऽसे तूष्णीम् । ‘ शिवो नामासि ’ इति जपः । ‘ सदसस्पतिम् ’ इति चतुर्भिर्मेधाप्रार्थनम् । प्रदक्षिणं मेखलाग्रन्थिस्पर्शनम् । ‘ ततोऽभिवादयेद्वृद्धानसावहम् ’ इति याज्ञवल्क्योक्तप्रकारेण अग्निवरुणाचार्यपित्रादिसकलवृद्धाभिवादनम् । विभा.

[१]**अत्र भिक्षाचर्यचरणम् ॥**

( १ ) कर्तव्यमिति शेषः । अत्रेतिशब्दोऽवसरार्थः । कभा.

( २ ) अत्रेति अवसरे । भिक्षाचर्यं भिक्षावृत्तिः, तस्य चरणम् अनुष्ठानम् । कर्तव्यमिति शेषः । ¶ जभा.

( ३ ) अत्र अवसरे अभिवादनानन्तरं भिक्षा प्रार्थना, तस्याः चरणम् अनुष्ठानम् । कर्तव्यमिति शेषः । विभा.

**भवत्पूर्वां ब्राह्मणो भिक्षेत ॥**

**भवन्मध्यां राजन्यः ॥**

**भवदन्त्यां वैश्यः ॥**

( १ ) कथम् ? भवत्पूर्वामिति । भवच्छब्दः संबुद्ध्यर्थः हे भवन् हे भवति वेत्येवमुक्तः पूर्वो यस्याः तां ब्राह्मणो भिक्षेत ‘ भिक्षां देहि ’ इति याचेत । जभा.

( २ ) भवत्पूर्वां भवच्छब्दः पूर्वो यस्याः सा भवत्पूर्वा तां भिक्षां ब्राह्मणः द्विजोत्तमः भिक्षेत याचेत । तथैव भवच्छब्दो मध्ये यस्याः सा भवन्मध्या, तां राजन्यः क्षत्रियः । भिक्षेतेत्यनुषङ्गः । तथा अन्ते भवः अन्त्यः भवच्छब्दो यस्याः सा भवदन्त्या, तां वैश्यः तृतीयो वर्णः भिक्षाम् । भिक्षेतेत्यनुवर्तते । हभा.

( ३ ) अयमर्थः– सगौरवसंबोधनार्थे भवत्पदमादिमध्यावसानेषु ब्राह्मणादिभिः क्रमेण कार्यम् , तच्च संबुद्ध्यन्तम् । ‘ तिस्रः ’ इति सूत्रसामर्थ्यात्स्त्रीप्रत्ययवच्च तत्पदं भवति । तत्रायं प्रयोगः– ‘ भवति, भिक्षां देहि ’ इति ब्राह्मणः । ‘भिक्षां भवति, देहि ’ इति क्षत्रियः । ‘ भिक्षां देहि भवति ’ इति वैश्यः । * गभा.

( ४ ) भिक्षेतेति द्वयोरनुषङ्गः । भवच्छब्दः संबुद्ध्यर्थः पूज्यताद्योतकः । ब्राह्मणक्षत्रियवैश्यैर्यथाक्रममादिमध्यावसानेषु भवच्छब्दोपलक्षिता वृत्त्यर्थं सिद्धान्नादिप्रार्थना कर्तव्या । विभा.

[१]**तिस्रोऽप्रत्याख्यायिन्यः ॥**

[२]**षड्द्वादशापरिमिता वा ॥**

[३]**मातरं प्रथमामेके ॥**

( १ ) भिक्षेत । यत्र प्रत्याख्यानं न क्रियते । षडिति । विकल्पः । मातरमिति । भिक्षन्ते । अयं च प्रथमाहर्धर्मः । कभा.

( २ ) काः ? या अप्रत्याख्यायिन्यस्ताः । तिस्र इत्यादौ पूर्वत्रापूर्तावुत्तरः पक्षः । एके प्रथमां भिक्षां मातरमेव भिक्षेतेति इच्छन्ति । अयं च प्रथमाहर्धर्मः । जभा.

( ३ ) भिक्षेर्धातोर्द्विकर्मत्वात् द्वितीयं कर्माऽऽह– तिस्रः स्त्रियो भिक्षां भिक्षेत । कथंभूताः ? अप्रत्याख्यायिन्यः । प्रत्याख्यातुं निराकर्तुं शीलं यासां ताः प्रत्याख्यायिन्यः , न प्रत्याख्यायिन्यः अप्रत्याख्यायिन्यः , ताः अप्रत्याख्यायिनीः । अत्र द्वितीयार्थे प्रथमा,

¶ हभा. , गभा. जभावत् ।

(१) पागृ. २।५।१–४.

* शेषं हभावत् ।

(१) पागृ. २।५।५ ; ब्रक. ११६ ; स्मृसा. ६.

(२) पागृ. २।५।६ ; ब्रक. ११६ ( षड्वा द्वादशपरिमिता वा ) ; स्मृसा. ६.

(३) पागृ. २।५।७ ; ब्रक. ११६.

भिक्षेतेति कर्तृप्रत्ययान्तस्याऽऽख्यातस्य कर्मकारकापेक्षत्वात् । षड्द्वादशापरिमिता वा । षट् वा स्त्रियो द्वादश वा अपरिमिता वा असंख्याता वा । भिक्षेतेति सर्वत्रानुषङ्गः । एते भिक्षाविकल्पा आहारपर्याप्त्यपेक्षया । एके आचार्याः मातरं जननीं प्रथमां भिक्षेतेत्याहुः । अयं च प्रथमाहर्धर्मः, इति भाष्यकारोक्तेः । § हभा.

(४) याच्ञायां दातुः स्नेहस्याभ्यर्हितत्वद्योतनार्थं मातरमित्युक्तम् । ¶ विभा.

**'आचार्याय भैक्षं निवेदयित्वा वाग्यतोऽहःशेषं तिष्ठेदित्येके ॥**

(१) आचार्याय भिक्षानिवेदनं कृत्वा वाग्यतोऽहःशेषम् आसीत न वेति विकल्पः । ‡ कभा.

(२) आचार्याय भिक्षानिवेदनं नित्यम् । अहःशेषं वाग्यतः मौनी तिष्ठेत (न) आसीत फलातिशयार्थम् । एकीयशब्दाद्विकल्पः । जभा.

(३) आचार्याय गुरवे भैक्षं लब्धां भिक्षां निवेदयित्वा निवेद्य 'इयं भिक्षा मया लब्धा' इति, वाग्यतः मौनी अहःशेषं भिक्षानिवेदनोत्तरतो यावदस्तमयं तिष्ठेत् नोपविशेन्न च शयीत रागत इत्येके सूत्रकारा वर्णयन्ति । वयं तु अनियमं मन्यामहे । ततश्च विकल्पः । § हभा.

(४) आचार्याभावे स्वजनन्यै भिक्षानिवेदनम् । भिक्षां निवेद्य आचार्याज्ञया भुक्त्वा वा कर्मणः प्रतिपत्तिं कुर्यादिति शेषः । इदानीमाग्नेयव्रतस्य संवत्सरसाध्यत्वेन ब्रह्मचारिकर्तव्यान्नियमान्सूत्रकृत्सूत्रयति— 'वाग्यतो... त्येके' । आत्मनोऽहःसाध्यां ब्रह्मचर्याश्रमकर्तव्यतामवसायोपसंध्यं वाग्यतो भवेदित्यर्थः । विभा.

**अहिंसन्नरण्यात्समिध आहृत्य तस्मिन्नग्नौ पूर्ववदाधाय वाचं विसृजते ॥**

(१) अहिंसन्निति स्वयंभग्नाः समिधः । तस्मिन्नग्नौ पूर्ववदाधानं कृत्वा वाग्विसर्गं करोति यदि वाग्यमो गृहीतः । ‡ कभा.

(२) अहिंसन् अच्छिन्दन् स्वयंभग्ना इत्यर्थः । अरण्यात्, न ग्रामात्, समिधः पूर्वोक्तलक्षणाः आहृत्य आनीय तस्मिन्नग्नौ यत्र उपनयनाङ्गहोमः कृतस्तस्मिन् पूर्ववत्परिसमूहनादि त्र्यायुषकरणान्तं यावत् आधाय हुत्वा वाचं विसृजते मौनं त्यजति वाग्यमपक्षे । $ हभा.

(३) तस्मिन्निति तच्छब्दस्य पूर्वप्रक्रान्तपरामर्शित्वाद्व्रतं यावत्कालं तावत्कालं व्रतादेशाग्निरक्षा कर्तव्या । पूर्ववदित्यनेन पूर्वकण्डिकाप्रतिपादिता 'पाणिनाऽग्निं परिसमूहति' इत्याद्यभिवादनान्ता समस्तेतिकर्तव्यताऽतिदिश्यते । तां कृत्वा पूर्वनियमितां वाचं विसृजते । समिदाधानस्य प्राधान्यं द्योतयितुं वृक्षादिकमपीडयन्समिधमाहृत्याऽऽधायेत्युक्तम् । जातावेकवचनम् । विभा.

## कातीयसूत्रम्

सावित्र्यनुवचनम्

**'अथास्मै सावित्रीमन्वाहोत्तरतोऽग्नेः प्रत्यङ्मुखायोपविष्टायोपसन्नाय, दक्षिणतस्तिष्ठत आसीनाये(? य वे)त्येके ॥**

## गोभिलगृह्यसूत्रम्

कुमारभोजनम्, वपनस्नानालंकरणवस्त्रधारणानि, होमः, अञ्जलिपूरणोत्सर्जने, हस्तग्रहणम्, अंसनाभिहृदयाभिमर्शनानि, परिदानम्, संप्रेषः, मेखलाबन्धनम्, सावित्र्यनुवाचनम्, दण्डदानम्, भिक्षाचरणम्, समिदाधानम्, त्रिरात्रव्रतम्, सावित्रचरुः, दक्षिणादानम्

**'यदहरुपैष्यन्माणवको भवति प्रग एवैनं तदहर्भोजयन्ति कुशलीकारयन्त्याप्लावयन्त्यलंकुर्वन्त्यहतेन वाससाऽऽच्छादयन्ति ॥**

---

§ गभा. हभावत् ।

¶ शेषं जभावत् ।

(१) पागृ. २।५।८–९.

‡ जभा. कभावत् ।

$ गभा. हभावत् ।

(१) संकौ. १२५–१२६ पारस्करः कातीयसूत्रं च.

(२) गोगृ. २।१०।७; अप. १।१४ रुपैष्य

( १ ) प्रगे प्रातरित्यर्थः । † अप. १।१४ पृ. ३२

( २ ) प्रगे प्रातः पूर्वमित्यर्थः । पूर्वता च स्वस्वगृह्योक्ता विज्ञेया । मपा. १९

( ३ ) यदहः यस्मिन्नहनि उपैष्यन् उपनयनं कारयिष्यन् माणवक उद्यतो भवति । माणवकः अनधीतवेदः । 'अनूचो माणवको ज्ञेय एनः कृष्णमृगः स्मृतः । रुरुर्गौरमृगः प्रोक्तः सुमरः शल उच्यते ॥' । प्राक् प्रातः । तच्च 'चतस्रो घटिकाः प्रातररुणोदय उच्यते' इति ब्रह्मवैवर्तोक्तम् । अत्र घटिका दण्डः, 'त्रियामां रजनीं प्राहुस्त्यक्त्वाऽऽद्यन्तचतुष्टयम् । नाडीनां तदुभे संध्ये दिवसाद्यन्तसंज्ञिते ॥' इति तत्रैवोक्तेः । भोजयन्ति, क्षीरादिकमिति शेषः । तथा च ब्रह्मचारिकाण्डे कल्पतरुधृतशङ्खलिखितौ– 'पयो यवाग्वामिक्षाहाराः क्रमशो द्विजातीनाम्' । कुशलीकारयन्ति मुण्डयन्ति आप्लावयन्ति स्नपयन्ति आहतेनासूदितेन वाससा वक्ष्यमाणेन आच्छादयन्ति परिधापयन्ति । अत्रैकवचनादधरीयमेतत् । उत्तरीयं तु उपरिष्टादजिनं वक्ष्यते । संत. ९२९–९३०

( ४ ) यदहः यस्मिन्नहनि । अत्यन्तसंयोगे द्वितीया । उपैष्यन् उपनयनं कारयिष्यन् । माणवकः माणवः अनधीतवेदः । स्वार्थे कन् । तथा च कात्यायनः– 'अनूचो माणवो ज्ञेय एणः कृष्णमृगः स्मृतः । रुरुर्गौरमृगः प्रोक्तस्तमुनिः शण उच्यते ॥' इति । अनूचः वेदशून्यः । प्रग एव प्रातरेव । 'सायं साये प्रगे प्रातः' इत्यमरः । एनं माणवकं भोजयन्ति इत्युक्त्याऽत्र शङ्का न कार्येत्युपदिशति । भोजनं चात्र गोदुग्धादेरेव । तथा च श्रुतिः– 'पयोव्रतो ब्राह्मणो भवति यवागूव्रतो राजन्य आमिक्षाव्रतो वैश्यः' इति । व्रतम् आहारः । तथा च गृह्यान्तरम्– 'पयोयवाग्वामिक्षाहाराः क्रमशो द्विजातीनाम्' इति । यवागू(रु)क्ता¶ । आमिक्षा शृतोष्णे क्षीरे दधियोगेन कठिनं द्रव्यम् । तथा च श्रुतिः– 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा भवति वाजिभ्यो वाजिनम्' इति । अभिधानं च 'आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः' इति । वाजिनम् अतिरिच्यमानं तत्पय उच्यते । कुशलीकारयन्ति मुण्डयन्ति । 'क्षौरं तु भद्राकरणं मुण्डनं वपनं त्रिषु' इत्यमरः । भद्राकरणं कुशलीकरणमित्यनर्थान्तरम् । अत्र शिखा न धार्या, 'एते लूनशिखास्तस्य कोमलैर्दन्तकुड्मलैः । कुशकाशा विराजन्ते बटवः सामगा इव ॥' इति विष्णुपुराणपर्यालोचनात्, समावर्तने 'शिखावर्जम्' इति विशेषोपदेशाच्च । आप्लावयन्ति स्नापयन्ति । आप्लावनं चेदं घटत्रयाम्बुना । तथा च गृह्यसंग्रहः– 'स्नानं चतुर्भिः कलशैः प्लावनं तु त्रिभिर्घटैः' इति । अलंकुर्वन्ति केयूरकटककुण्डलादिभिर्यथालाभम् । अहतेनेति । अत्र गृह्यासंग्रहः– 'सकृद्धौतं नवं श्वेतं सदशं यन्न धारितम् । अहतं तद्विजानीयाद्दैवे पैत्रे च पावनम् ॥' इति । वाससेत्येकवचनादिदमधरीयमिति द्रष्टव्यम् । उत्तरीयं तु उपरिष्टाद्यदजिनं सूत्रयिष्यति तदेव स्यात् । सर्वत्र बहुवचननिर्देशात्कर्तुरनियमः । अत्र भाष्यकृतः– "अग्निहोत्रं जुहोति यवागूं पचति' इतिवत् अत्राप्यार्थक्रमेण शाब्दक्रमोल्लङ्घनमिति प्रथमं वपनमनन्तरं स्नानमथ भोजनमिति क्रमः, ज्योतिषे भोजनानन्तरं वपननिषेधात् । तथाहि– 'न स्नानमात्रगमनोन्मुखभूषितानाम्म्यक्तभुक्तरणकालविवासनानाम् । संध्यानिशाकुजदिने च तिथौ च रिक्ते क्षौरं हितं न नवमेऽह्नि न चापि षष्ठ्याम् ॥", इत्याहुः, तन्न, अदृष्टार्थक्रमस्य ज्योतिःशास्त्रविरोधेनानपवादात्, दृष्टान्ते त्वन्यथानुपपत्त्या तथा कल्प्यते, प्रकृते निषेधस्यान्यक्षौरविषयत्वेनाप्युप-

( रुपोष्य ); ब्रक. १०६ ( कुशली...च्छादयन्ति० ); स्मृसा. ५ ब्रकवत्, शेषग्रन्थोऽशुद्धिबहुलः; मपा. १९ ( प्रग एवैनं तदहर्भोजयन्ति ) एतावदेव; संत. ९२९ प्रग ए ( प्रागे ) कुर्वन्त्य ( कुर्वन्त्या ) साऽऽच्छा ( सा समाच्छा ); सिन्धु. ९४५ ( प्रागेवैनं तदहर्भोजयन्ति ) एतावदेव.

† ब्रक., स्मृसा. अपवत् ।

¶ 'भृष्टयवचूर्णं षड्गुणजले सिद्धं द्रवद्रव्यम्' इति पूर्वमुक्ता ।

पत्तेः । अन्यथा रोहिण्यादौ नववस्त्रधारणनिषेधात्तत्र विवाहविधेरानर्थक्यं स्यात्, न स्याच्च रविवारादौ उपनयनम्, तत्र क्षौरनिषेधात् । अत एव 'ब्राह्मणान् भोजयेत्तं च पर्युप्तशिरसमलंकृतमानयन्ति' इति पारस्करेऽपि भोजनानन्तरमेव मुण्डनं दर्शितमिति धीरपद्धतिस्वरसोऽप्येवमेवेति महामहोपाध्याया मुरारिमिश्राः प्राहुः । मृदुला.

**[1]'पुरस्ताच्छालाया उपलिप्तेऽग्निरुपसमाहितो भवति ॥**

**[2]'अग्ने व्रतपते' इति हुत्वा पश्चादग्नेरुदगग्रेषु दर्भेषु प्राङाचार्योऽवतिष्ठते ॥**

(१) व्याहृतिभिराहुतिचतुष्टये हुते 'अग्ने व्रतपते' इति पञ्चाऽऽहुतीर्हुत्वा आचार्यः पश्चादुदगग्रेषु कुशेषु प्राङ्मुख ऊर्ध्वस्तिष्ठेत् । अत्र हुत्वाऽऽचार्य इत्येककर्तृकत्वादेष एव हुत्वा तिष्ठेत् । "होमकरणत्वान्मन्त्राणां होमकर्तुराचार्यस्य मन्त्रपाठः, न माणवकस्य । यत्र च ब्रह्मचारिणामुच्चारणं तत्र ( तत् ) 'ब्रह्मचर्यमागामिति वाचयति' इति वचनात् । 'अग्ने व्रतपते व्रतं चरिष्यामि' इति मन्त्रलिङ्गेषु ऋत्विक्स्थानीयत्वान्माणवकस्य( ? त्वादाचार्यस्य ) मन्त्रैरग्न्यादिप्रार्थना, ब्रह्मचर्यं नाऽऽचार्यस्य । तथा च— 'यां वै कांचन ऋत्विज आशिषमाशासते सा यजमानस्यैव" इति सरला । तन्न, ऋत्विग्यजमानपदयोराचार्यमाणवकपरत्वे प्रमाणाभावात् । अत एव भट्टभाष्यम्— "होमेन साहचर्यसंबन्धः । कुतः ? 'हुत्वाऽऽचार्योऽवतिष्ठते' इति क्त्वाप्रत्यययोगात् । मन्त्रं तु माणवको जपेत् । कुतः ? मन्त्रलिङ्गात् । 'व्रतं चरिष्यामि' इत्याद्युत्तमपुरुषप्रयोगोऽन्यथानुप( ? था नोप )पद्यते" । संत. ९३१

( २ ) पुरस्तादिति । निगदव्याख्यातमेतत् । 'यथा पाणिग्रहणे तथा चूडाकरणे चोपनयने' (गोगृ. १।९।२८) इत्यतिदेशादुपनयनकर्मणः पुरस्ताच्चोपरिष्टाच्च महाव्याहृतिभिश्चतस्र आहुतयो भवन्ति, तदाहुतिचतुष्टयं कृत्वा 'अग्ने व्रतपते' इत्येवमादिभिः पञ्चभिर्मन्त्रैः पञ्चाऽऽहुतीश्च हुत्वा आचार्यः पश्चादग्नेरुदगग्रेषु दर्भेषु प्राङ्मुखः अवतिष्ठते ऊर्ध्वस्थितो भवेत् । 'हुत्वाऽऽचार्योऽवतिष्ठते' इति क्त्वाश्रवणात् कर्त्रन्तरानुपदेशाच्च होमोऽयमाचार्यकर्तृक एव । मन्त्रास्तु माणवकपठनीयाः, 'व्रतं चरिष्यामि' इति मन्त्रलिङ्गात् । नचेदानीं वेदपाठे तस्यानधिकारः, उपनयनकर्मणः पूर्वमेव तथा स्यात्, न तूपनयनकर्मण्यपि, मेखलामन्त्रे तत्कर्तृकपाठस्य सर्वसंमतत्वात्, अन्यपठितमन्त्रेणान्यकर्तृकक्रियायाश्चाश्मारोहादौ बहुत्र दर्शनाच्च किंचिदेतत् । कौमुदी—नारायण—शूलपाणि-हरिलप्रभृतयोऽप्येवम् । मन्त्रो यथा— 'अग्ने व्रतपते व्रतं चरिष्यामि तत्ते प्रब्रवीमि तच्छकेयम् । तेनर्ध्यासमिदमहमनृतात्सत्यमुपैमि स्वाहा ॥' । अस्यार्थः— हे अग्ने व्रतपते शास्त्रीयनियमपालक, यदिदं व्रतम् । उपनयनाख्यं चरिष्यामि अहमनुष्ठास्यामि तत् व्रतं ते तुभ्यं प्रब्रवीमि निवेदयामि । येन तत् व्रतम् अहं त्वत्प्रसादात् सुखेन चरितुं शकेयं शक्नुयाम् । 'लिङ्याशिष्यङ्' ( पा. ३।१।८६ ) इत्यङ् । व्रतचरणस्य फलमाह— तेन उपनयनव्रतेन करणभूतेन अहम् ऋद्धया ऋद्धिम् अध्ययनलक्षणां समृद्धिम् । अमो डा । प्राप्नुयामिति शेषः । तथा अहम् अनृतात् अलीकवचनात् अस्माज्जगतो वा मिथ्याभूतात् पृथग्भूत्वा इदम् एतद्व्रतं सत्यं सत्यवचनस्वरूपम्, यद्वा इदम् अनिर्देश्यं सत्यं ब्रह्म समुपैमि सम्यक् प्राप्नोमि । उपसर्गस्य व्यवहितप्रयोगश्छान्दसः । अयमर्थः— योऽहं प्रागुपनयनाद्यथेष्टाचार आसं सोऽहमधुना परित्यक्तानृतवादः सत्यभूतमिदं व्रतं चरिष्यामीति, यद्वा उपनयनव्रतजनितया ऋद्धया ब्रह्मवर्चसलक्षणयाऽनृतादस्मादिदमनिर्देश्यं सत्यं ब्रह्म समुपैमि निष्कामयथोक्तकर्मानुष्ठानेनेति । तस्मै तेऽग्नये स्वाहा सुहुतमस्तु ।

एवं 'वायो व्रतपते...... स्वाहा । सूर्य व्रतपते....... स्वाहा । चन्द्र व्रतपते ...... स्वाहा । व्रतानां व्रतपते ...... स्वाहा' इति । शेषोऽर्थः स्पष्टः ।

---

(१) गोगृ. २।१०।१५; संत. ९३१.

(२) गोगृ. २।१०।१६; संत. ९३१ प्राङा (प्रागा).

व्रतानां कर्मणां व्रतपते नियमपालक इन्द्र । शेषोऽर्थः स्पष्टः । मृदुला.

**[१]अन्तरेणाग्न्याचार्यौ माणवकोऽञ्जलिकृतोऽभिमुख आचार्यमुदगग्रेषु दर्भेषु ॥**

( १ ) अग्न्याचार्ययोर्मध्ये आचार्याभिमुखः सन्नवतिष्ठते इति योज्यम् । संत. ९३१

( २ ) अत्रावतिष्ठत इत्यनुषञ्जनीयम् । अन्तरेणेति मध्यार्थेऽव्ययम् । तथा चामरः–'अन्तरेण च मध्ये स्युः' इति । तद्योगेऽग्न्याचार्यौ इति षष्ठ्यर्थे द्वितीया । एवं चाग्न्याचार्ययोर्मध्ये माणवकः अञ्जलिकृतः कृताञ्जलिः आचार्याभिमुख उत्तराग्रेषु कुशेषूर्ध्वस्थितो भवेदित्यर्थः । अञ्जलिश्चात्र प्रसारितः, न तु मुकुलितः, उपरिष्टात्तस्यापां पूरणोपदेशादिति द्रष्टव्यम् । मृदुला.

**[२]तस्य दक्षिणतोऽवस्थाय मन्त्रवान्ब्राह्मणोऽपामञ्जलिं पूरयति ॥**

**[३]उपरिष्टाच्चाऽऽचार्यस्य ॥**

( १ ) तस्य माणवकस्य । दक्षिणस्यां दिश्यवस्थितो ब्राह्मणोऽधीतवेदः सलिलाञ्जलिं माणवकस्य पूरयित्वा उपरिष्टात् पश्चादाचार्यस्याञ्जलिम् । संत. ९३१

( २ ) तस्य अनन्तरोक्तस्य माणवकस्य । दक्षिणतः दक्षिणदिशि । आद्यादित्वात् सार्वविभक्तिकस्तसिः । न तु दक्षिणपार्श्वे, मङ्गल्ये दक्षिणाभिमुखेन क्रियापत्तेरिति भाष्यकृतः । अवस्थाय ऊर्ध्वः स्थित्वा । मन्त्रवान् अध्ययनयुक्तः । अधीतवेद इति यावत् । अपामिति तृतीयार्थे शेषे षष्ठी । अत्र मन्त्रानुपदेशाद्याहृतिभिरिति चन्द्रकान्तः । पद्धतौ तन्नास्ति । उपरिष्टात् पश्चात् । अञ्जलिं पूरयतीत्यनुषञ्जनार्थश्चकारः । मृदुला.

**[४]प्रेक्षमाणो जपति– 'आगन्त्रा समगन्महि' इति ॥**

( १ ) कं प्रेक्षमाणः को जपति ? माणवकं प्रेक्षमाण आचार्यः 'आगन्त्रा समगन्महि' इति मन्त्रं जपति, 'स्वस्ति संचरतादयम्' इति मन्त्रलिङ्गात् । संत. ९३१–९३२

( २ ) माणवकमाचार्य इति शेषः, 'स्वस्ति चरतादयम्' इति मन्त्रलिङ्गात् । अत्रापीतिशब्द आद्यर्थः, तेन मन्त्रद्वयम् । तथा च मन्त्रः– 'आगन्त्रा समगन्महि प्र सुमर्त्यं युञो( ? युयो )तन । अरिष्टाः संचरेमहि स्वस्ति चरतादयम् ॥' इति । अस्यार्थः– हे अग्न्यादयः, यूयमेतमुपनीयमानं सुमर्त्यं शोभनमनुष्यं ( तथा ) प्रयुञो( ? युयो )तन अस्माभिः सह प्रकर्षेण मिश्रयत, यथाऽनेन आगन्त्रा आगमनशीलेन ब्रह्मचारिणा वयं समगन्महि संगच्छेमहि । ‡तथाऽस्माभिः सह अयं ब्रह्मचारी स्वस्ति कल्याणेन चरतात् गच्छतु इति । *अत्र 'अग्निष्टे' इत्यादिमन्त्रो ब्राह्मणे सहपठितोऽपि 'देवस्य ते' इतिवक्ष्यमाणमन्त्रान्ते द्रष्टव्यः, 'शब्दक्रमादर्थक्रमो बलीयान्' इति न्यायात्, इदानीं ह्युदकपूर्णाञ्जल्योर्माणवकाचार्ययोः साङ्गुष्ठहस्तग्रहणस्या-

---

(१) गोगृ. २।१०।१७ ; संत. ९३१.

(२) गोगृ. २।१०।१८ ; संत. ९३१.

(३) गोगृ. २।१०।१९ ; संत. ९३१ ष्टाच्चाऽऽचा ( ष्टादाचा ).

(४) गोगृ. २।१०।२० ; संत. ९३१.

‡ तृतीयचरणव्याख्यानं प्रभ्रष्टम् । "न रिष्टं हिंसात्मकमसुखं ( येषां ) युष्मत्प्रसादेनेति वयमरिष्टाः अनेन ब्रह्मचारिणा सह संचरेमहि संगता गच्छेम सम्यक् ब्रह्म वा भक्षयेम । चर गत्यर्थे भक्षणे च" इति गुणविष्णुः ।

* ग्रन्थोऽयमनेकविसंगतिबहुलः । तथाहि– 'अग्निष्टे' इति मन्त्रस्य हस्तग्रहणे गृहीतहस्तकाचार्यकर्तृकजपे वा विनियुक्तत्वेन 'देवस्य ते' इति मन्त्रोत्तरं यद्यर्थक्रमस्तदा 'अत्रापीतिशब्द आद्यर्थः, तेन मन्त्रद्वयम्' इति पूर्वो ग्रन्थो न संगच्छते, 'आगन्त्रा' इति मन्त्रेण सह प्रकृतसूत्रोक्तजपे विनियोगाभावात्, अर्थक्रमानुरोधेन 'देवस्य ते' इतिमन्त्रोत्तरपठितेनैवेतिशब्देन संग्रहीतुमुचितत्वाच्च । अत एवात्र तद्व्याख्यानमपि न संगच्छते । आचार्येणाग्रे प्रकृतमन्त्रविनियोगस्यासूत्रणात् 'आचार्येणापि तथैवाग्रे सूत्रणात्' इति ग्रन्थोऽपि न संगच्छते । इदं तु चित्रम्– प्रकृतमन्त्रं यथापाठक्रममेव व्याचक्षाणो गुणविष्णुरर्थक्रमम् 'आचार्यो ब्रह्मचारिहस्तं गृह्णन्नाह' इति मन्त्रावतारणादर्थापत्त्या बोधयति, न स्वशब्देन वक्तव्यमपि ब्रवीतीति ।

सुकरत्वात्, आचार्येणापि तथैवाग्रे सूत्रणात्। संस्कारतत्त्वे रघुनन्दनेनापि तत्रैवायं मन्त्रो धृतः। अयमेवार्थो भवदेवभट्टगुणविष्णवाद्यनुमतः। पद्धतिकृद्भिर्वीरेश्वरादिभिरपि समादृतः। मन्त्रो यथा– 'अग्निष्टे हस्तमग्रहीत् सविता हस्तमग्रहीत्। अर्यमा हस्तमग्रहीन्मित्रस्त्वमसि कर्मणाऽग्निराचार्यस्तव॥' इति। अस्यार्थः– हे ब्रह्मचारिन्, योऽयं ते हस्तोऽद्य मया गृहीतोऽतः पूर्वमग्न्यादयः क्रमेण (तं) ते हस्तमग्रहीत्(? हीषुः)। क्रियाकारकावृत्तिरादरार्था। अतः कर्मणा गुरुशुश्रूषादिना त्वं मम मित्रः मित्रभूतः असि भवसि। अग्निश्च भगवान् तव आचार्यः गुरुः। अतस्तत्परिचरणेनाहमेव परिचरितः स्यामिति भावः। मृदुला.

[1]'ब्रह्मचर्यमागाम्' इति वाचयति॥

(१) आचार्यो माणवकं पाठयतीत्यर्थः। संत. ९३२

(२) जपित्वा चाऽऽचार्यः 'ब्रह्मचर्यमागामुप मा नयस्व' इति मन्त्रं वाचयति माणवकं पाठयति। मन्त्रार्थस्तु– हे गुरो, अहम् ब्रह्मचर्यं तद्व्रतम् आगां स्वीकृतवानस्मि यतोऽतो मा माम् उपनयस्व। छान्दसो व्यवहितोपसर्गप्रयोगः। मृदुला.

[2]'को नामासि' इति नामधेयं पृच्छति तस्याऽऽचार्यः॥

'को नामासि' इति एवं तस्य माणवकस्य नामधेयं नाम आचार्यः पृच्छति। अत्र क इति नामविषयकः प्रश्नः। नामेति प्रसिद्धार्थकमव्ययम्। तथा च प्रसिद्धं नाम पृच्छति कोऽसीति सूत्रार्थः। मृदुला.

अभिवादनीयं नामधेयं कल्पयित्वा॥

(१) अभिवादनीयम् अभिवादननिमित्तं नाम कल्पयित्वा तदानीमेवाऽऽचार्यः को नामासीति पृच्छेत्। संत. ९३२

(२) किं कृत्वा? अभिवादनीयं नामधेयं कल्पयित्वा। अभिवादनं पादोपसंग्रहणं संभाषणं वेति चन्द्रकान्तः। 'समे तु पादग्रहणमभिवादनमित्युभे' इत्यमरः। तदर्थम् अभिवादनीयम्। नामधेयत्वेन वृद्धत्वाच्छः। § तस्या-(? यद्वाऽ)नीयर्। कल्पयित्वेति वचनात्तदानीमेवाऽऽचार्येण तत्कल्पनमायाति। अभिवादनीयमितिकरणात्सर्वत्रैवाभिवादने ब्रह्मचारिणाऽऽचार्यकल्पितेनैव नाम्ना व्यवहरणीयमिति बोधयति। मृदुला.

[1]देवताश्रयं वा नक्षत्राश्रयं वा॥

(१) तच्च देवताश्रयं कृष्णादि, नक्षत्राश्रयं शतपदचक्रोक्तजन्मकालीननक्षत्रपादात् ज्ञेयम्। संत. ९३२

(२) आद्यं यथा– 'विष्णुशर्मनामासि' इति। द्वितीयं यथा– 'फाल्गुनशर्मनामासि' इति। मृदुला.

[2]गोत्राश्रयमप्येके॥

(१) गोत्राश्रयं शाण्डिल्यादि। संत. ९३२

(२) तद्यथा– 'कौशिकशर्मनामासि' इति। मृदुला.

[3]उत्सृज्यापामञ्जलिमाचार्यो दक्षिणेन पाणिना दक्षिणं पाणिं साङ्गुष्ठं गृह्णाति– 'देवस्य ते सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं † गृभ्णाम्यसौ' इति॥

(१) जलाञ्जलिं त्यक्त्वा गुरुर्दक्षिणेन ब्रह्मचारिदक्षिणपाणिमङ्गुष्ठेन सह गृह्णाति 'देवस्य ते' इति

---

(१) गोगृ. २।१०।२१; संत. ९३२ ब्रह्म (आचार्यो ब्रह्म).

(२) गोगृ. २।१०।२२–२३; संत. ९३२.

§ तस्येति षष्ठ्या अनन्वयात् तत्र 'यद्वा' इति शुद्धिः कल्प्यते। अभिवादनेति नाम्नश्छः अभिवादयतेरनीयर्वेत्यर्थः।

† मन्त्रब्राह्मणे तु 'गृह्णामि' इत्येव पाठः।

(१) गोगृ. २।१०।२४; संत. ९३२ (देवताश्रयं नक्षत्राश्रयम्).

(२) गोगृ. २।१०।२५; संत. ९३२ (गोत्राश्रयं वा इत्येके).

(३) गोगृ. २।१०।२६; संत. ९३२ (पाणिं०) गृभ्णा (गृह्णा).

मन्त्रेण । असाविति संबोधनविभक्त्या माणवकस्य नाम गृह्णीयात् । इदानीं गृहीतमाणवकहस्तस्याऽऽचार्यस्य 'अग्निस्ते हस्तमग्रहीत्' इति मन्त्रपाठे प्रमाणं गोभिले नास्ति, अन्यत्र बोध्यम् । संत. ९३२

(२) ततो माणवकेन 'ॐ अमुकनामाऽस्मि' इत्याचार्यकल्पिते नाम्नि कथिते– उत्सृज्येति । पाणिम्, माणवकस्येति शेषः । ग्रहणमन्त्रमाह– 'देवस्य ते' इति । अत्रासाविति स्थाने माणवकस्य स्वकल्पितं नाम संबोधनान्तं प्रयोज्यम् । एवमग्रेऽपि । नारायणवीरेश्वरादयोऽप्येवम् । अत्र माणवकस्यापि जलाञ्जल्युत्सर्ग आचार्यस्येवावगन्तव्यः, अविशेषेणोपदेशात् । मन्त्रार्थस्तु– हे असौ विष्णुशर्मन्, तव हस्तं सवितुर्देवस्य प्रसवे अभ्यनुज्ञाने सति अश्विनोः देवभिषजोः बाहुभ्यां पूष्णः 'पूषा पिष्टादः' इत्येवंख्यातस्य देवविशेषस्य हस्ताभ्याम् अहम् आचार्यः तव हस्तं करं प्रतिगृह्णामि । अत्र सर्वत्र स्वत्वं षष्ठ्यर्थः । तत्प्रसाम्यामित्यर्थः । इति । अत्र मन्त्रपाठानन्तरं हस्तग्रहणं बोद्धव्यमिति भाष्यकारः । मृदुला.

**'अथैनं प्रदक्षिणमावर्तयति– 'सूर्यस्याऽऽवृतमन्वावर्तस्वासौ' इति ॥**

(१) तद्देशस्थमेवैनं प्रत्यङ्मुखं सन्तं प्रादक्षिण्येन प्राङ्मुखं करोति– 'सूर्यस्य' इति मन्त्रेण । अत्राप्यसावित्यत्र संबोधनान्तनामग्रहः । संत. ९३२

(२) अथेति तद्देशनियमार्थम् । अथ तस्मिन्नेव देशे प्रत्यङ्मुखमवस्थितम् एनं माणवकम् । असाविति संबोधनान्तं क्लृप्तनामग्रहणमिति प्रागुक्तं न विस्मर्तव्यम् । मन्त्रार्थस्तु– हे असौ विष्णुशर्मन्, सूर्यस्य आवृतम् आवर्तनम् अनु लक्षी(क्ष्यी)कृत्य आवर्तस्व तिष्ठ । अयमर्थः– यावद्भानोरावर्तनं त्वमत्र तिष्ठ । यद्वा, यावत्सूर्य आवर्तते परिभ्रमति तावत्त्वमपि यतस्ततः संचर, पुनस्तस्मिन्नस्तं जिगमिषौ गते वा त्वमप्यस्तं गृहं प्रत्यावर्तस्वेति । मृदुला.

**'दक्षिणेन पाणिना दक्षिणमंसमन्ववमृश्यानन्तर्हितां नाभिमभिमृशेत्– 'प्राणानां ग्रन्थिरसि' इति ॥**

(१) प्रदक्षिणावर्ते माणवके प्राङ्मुखावस्थिते आचार्योऽस्य दक्षिणमंसं स्पृष्ट्वा अव्यवहितां नाभिं 'प्राणानाम्' इति मन्त्रेण स्पृशेत् । अत्राप्यमुमिति पदस्थाने द्वितीयान्तं नाम प्रयोज्यम् । संत. ९३२

(२) आचार्यो दक्षिणहस्तेन माणवकस्य दक्षिणमंसं तूष्णीम् अमन्त्रकम् अन्ववमृश्य अनुस्पृश्य अनन्तर्हिताम् अन्तर्धानरहितां व्यक्तां नाभिमभिमृशेत् स्पृशेदित्यर्थः । तत्र मन्त्रमाह– 'प्राणानाम्' इति । अत्रामुमित्येतस्मिन् सर्वनाम्नि द्वितीयान्तं माणवकस्य नाम गृह्णीयात् । एवमग्रेऽपि । असावित्यत्र प्रथमान्तमिति विशेषः । मन्त्रो यथा–'प्राणानां ग्रन्थिरसि मा विस्रसोऽन्तक इदं ते परिददाम्यमुम्' इति । अस्यार्थः– हे नाभे, अस्य ब्रह्मचारिणः त्वं मा विस्रसः मा विस्रंसिष्यसि स्वस्थानान्न चलिष्यसि । यस्त्वं प्राणानां देहधारकवायूनां ग्रन्थिः प्रतिबन्धः असि भवसि । तथा हे अन्तक यम, इदम् अस्य ब्रह्मचारिणः शरीरम् अमुं ब्रह्मचारिणं च ते तुभ्यं परिददामि समर्पयामि । त्वयि समर्पित एष रोगजरामरणादिकं नानुप्राप्नुयादिति । मृदुला.

**'उत्सृज्य नाभिदेशम्– 'अहुर' इति ॥**

(१) जपेदिति वाक्यशेषः । उत्सृज्य करं सर्पतेर्गत्यर्थत्वात् ऊर्ध्वं करमुत्सृप्य ऊर्ध्वं नीत्वा नाभिदेशम्, समीपार्थां द्वितीया, नाभिदेशसमीप एव उदरे करमवस्थाप्य 'अभुव' इति जपेत् । कुतः ? मन्त्रलिङ्गात् । अभुवशब्देन ज( ? जा )ठरोऽग्निरुच्यते । "तस्मान्नाभेरुत्सृप्य करं नाभिदेशसमीप एव उदरं जठराग्निस्थान-

(१) गोगृ. २।१०।२७; संत. ९३२ मन्वावर्तस्वा ( मस्वावृतं वा ),

(१) गोगृ. २।१०।२८; संत. ९३२ न्ववमृश्यानन्तर्हितां नाभिमभिमृ ( वस्पृश्यानन्तर्हितं नाभिदेशमभिस्पृ ).

(२) गोगृ. २।१०।२९; संत. ९३२ अहुरे (अभुव).

मालभ्य ' अमुव ' इति जपेत् " इति भट्टभाष्यदर्शनात् वायुदेवता इति भवदेवगुणविष्णूक्तं निरस्तम् । अश्व-विभक्तिव्युत्पत्त्या( ? ) अमुव इति समाख्या । अत्राप्यमु-मिति पदस्थाने द्वितीयान्तं नाम प्रयोज्यम् ।

संत. ९३२–९३३

( २ ) उत्सृप्य नाभेरूर्ध्वं करं नीत्वा नाभिदेशं तत्समीपदेशं जठरमिति तदर्थः, मन्त्रलिङ्गात्, अहुर-शब्दस्य जठराग्निवाचकत्वाम्नानात् तमभिमृशेदित्यनु-वर्तते । एवमग्रेऽपि । मन्त्रस्तु– 'अहुर इदं ते परिददा-म्यमुम्' इति । अस्यार्थः– हे अहुर जठराग्ने । इद-मित्यादि पूर्ववत् । गुणविष्णुस्तु– ' अहुरिर्नाम वायुः, तस्याऽऽमन्त्रणे हे अहुरे ' इत्येवं व्याख्यात् । मृदुला.

'उत्सृप्य हृदयदेशम्– ' कृशन ' इति ॥

( १ ) जठरादुत्सृप्य ऊर्ध्वं नीत्वा करं हृदयमालभ्य कृशन इति जपेत् । कृशनशब्देन हृदय एव पुरुषो यत उच्यते अतो हृदयदेशमालभ्य जपतीति तदधिष्ठातृत्वात् पुरुषस्य । तथा च श्रुतिः– ' स एवैष आस्वादय-तीति ' । अत्राप्यमुमिति पदस्थाने द्वितीयान्तं नाम प्रयोज्यम् ।

संत. ९३३

( २ ) कृशनः हृच्छयः पुरुषः । तथा च श्रुतिः– ' स चापर आत्मा हृदि ' इति । मन्त्रस्तु– ' कृशन इदं ते परिददाम्यमुम् ' इति । अर्थः पूर्ववत् ।

मृदुला.

'दक्षिणेन पाणिना दक्षिणमंसमन्वालभ्य– ' प्रजापतये त्वा परिददाम्यसौ ' इति ॥

अंसम्, माणवकस्येति शेषः । आलभ्य स्पृष्ट्वा ' प्रजापतये त्वा ' इति जपेत् । असावितिस्थाने संबोधनान्तनामग्रहणम् । § संत. ९३३

'सव्येन सव्यम्– ' देवाय त्वा सवित्रे परि-ददाम्यसौ ' इति ॥

वामेन पाणिना ब्रह्मचारिणः सव्यमंसं स्पृष्ट्वा ' देवाय त्वा ' इति जपेत् । अत्रासाविति स्थाने संबोधनान्तं नाम प्रयोज्यम् ।

संत. ९३३

'अथैनं संप्रेष्यति– ' ब्रह्मचार्यस्यसौ ' इति ॥

अथेति पूर्वप्रकृतार्थम् । अथ पूर्वकृतमंसयोर्गृहीतमेवैनं माणवकं संप्रेष्यति समादिशति आचार्यः । किम् ? 'ब्रह्म-चार्यस्यसौ ' इति । अस्यार्थः– हे असौ माणवक, इतः-प्रभृति त्वं ब्रह्मचारी तन्नामानुरूपकर्मा असि भवसि । अतो ब्रह्मचर्यनियमं( ? मः ) मधुमांसवर्जनादिकं त्वया आ ब्रह्मचर्यपरिसमाप्तेः पालनीयमिति( ? य इति ) ।

मृदुला.

'' समिधमाधेह्यपोऽशान कर्म कुरु मा दिवा स्वाप्सीः ' इति ॥

( १ ) यदुद्यति( ? यद्वक्ष्यति–) ' अस्तमिते समिध-मादधाति ' ( इति, ) तदिदमादिश्यते, यच ' सायं प्रातः समिधमाधेहि ' इति । श्रुतावुक्तम् ' तस्माद्वा एतदन्नम-शिष्यन्नात्र तदवशिष्यते पुरस्ताच्चोपरिष्टाच्चाद्भिः परिद-धाति ' इति तदिदमादिश्यते– सायंप्रातर्भोजनयोरपि पुर-स्ताच्चोपरिष्टाच्च पृथङ्मन्त्राभ्यामपोऽशान हे ब्रह्मचारि-न्निति । मन्त्रौ तु शाख्य( ? खा )न्तरादुपादेयौ ' अमृ-तोपस्तरणमसि स्वाहा ' इति पुरस्तात्, ' अमृतापिधान-मसि स्वाहा ' इत्युपरिष्टात् इति । यद्यद्विहितं कर्म तत्त-त्कुरु । मा दिवा स्वाप्सीः दिवा स्वप्नं मा कार्षीरित्यर्थः । माणवकः सर्वेष्वेव प्रैष्येषु ' बाढम्, ओम् ' इति वा प्रतिवचनं दद्यात् । तथा च छन्दोगपरिशिष्टम्– ' ब्रह्म-चारिसमादिष्टे गुरुणा व्रतकर्मणि । बाढमोमिति वा ब्रूया-त्तत्तथैवानुपालयन् ॥ ' । संत. ९३३–९३४

§ मृदुला. संतगतम् ।

(१) गोगृ. २।१०।३० ; संत. ९३३.

(२) गोगृ. २।१०।३१ ; संत. ९३३ मन्वालभ्य ( मालभ्य ).

(१) गोगृ. २।१०।३२ ; संत. ९३३.

(२) गोगृ. २।१०।३३ ; संत. ९३३ ( अथैनं संप्रेषयति ब्रह्मचार्यसाविति ).

(३) गोगृ. २।१०।३४ ; संत. ९३३.

(२) अथापरमतिदिशति— समिधमिति । यत्तु वक्ष्यति 'अस्तमिते समिधमादधाति' इति, तां समिधं सायंप्रातः आधेहि अग्नयेऽर्पय । यच्च श्रुतावभिहितम्— 'तस्माद्वा एतदन्नमशिष्यन्पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधाति' इति, तदिदमादिशति— 'अपोऽशान' इति । अपः उदकम् अशान भक्षय । भोजनात्पुरस्तादुपरिष्टाच्चेत्यर्थः । मन्त्रौ तु शाखान्तरादुपादेयौ— 'अमृतोपस्तरणमसि स्वाहा' इति पुरस्तात्, 'अमृतापिधानमसि स्वाहा' इत्युपरिष्टात् । अन्यच्च यत्किंचिद्विदितं गुरुशुश्रूषादि कर्म तत्कुरु इत्यपर आदेशः । दिवा दिवसे मा स्वाप्सीः शयनं मा कार्षीरिति । गुरुणा चैवमादिष्टो ब्रह्मचारी सर्वत्रैव 'बाढम्' इति 'ओम्' इति वा ब्रूयात् । एवं चाऽऽदेशमनुपालयेदाब्रह्मचर्यम् । तदाह कर्मप्रदीपः— 'ब्रह्मचारी समादिष्टो गुरुणा व्रतकर्मणि । बाढमोमिति वा ब्रूयात्तत्तथैवानुपालयेत् ॥' इति ।

मृदुला.

**[1]उदगग्नेरुत्सृप्य प्राङाचार्य उपविशत्युदगग्रेषु दर्भेषु ॥**

उदक् उत्तरस्यां दिशि । प्राङ् प्राङ्मुखः । एवमग्रेऽपि ।

मृदुला.

**[2]प्रत्यङ्माणवको दक्षिणजान्वक्तोऽभिमुख आचार्यमुदगग्रेष्वेव दर्भेषु ॥**

(१) प्रत्यङ्मुखो माणवकः दक्षिणजानु अक्तं गतं भूमौ यस्य स आचार्याभिमुखं यथा स्यात्तथा उपविशति इति पूर्वेणान्वयः । उत्तरत एवाग्नेः ।

संत. ९३४

(२) माणवकस्तु दक्षिणजान्वक्तः दक्षिणं जानु अक्तं भूमिगतं यस्य स तथाभूतः । 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु' । गत्यर्थत्वात्कर्तरि क्तः । भूगतदक्षिणजानुः । आचार्याभिमुखः प्रत्यङ्मुखः उदगग्रेषु दर्भेषूपविशति उदङ् अग्नेरुत्तरत एव ।

मृदुला.

(१) गोगृ. २।१०।३५ ; संत. ९३४ प्राङा (प्रागा).

(२) गोगृ. २।१०।३६ ; संत. ९३४ मुख आ (मुखमा) ग्रेष्वेव (ग्रेषु).

**[1]अथैनं त्रिः प्रदक्षिणं मुञ्जमेखलां परिहरन् वाचयति— 'इयं दुरुक्तात्परिबाधमाना' इति, 'ऋतस्य गोप्त्री' इति च ॥**

(१) अथ तथैवोपविष्टं माणवकम् 'इयं दुरुक्तं परिबाधमाना' इति 'ऋतस्य गोप्त्री' इति च मन्त्रद्वयं कटिदेशस्य मौञ्जमेखलां वारत्रयं परिधापयन् वाचयति । अत्र परिधानस्याऽऽवृत्तावपि सत्यां सकृदेव मन्त्रपाठः, 'एकद्रव्ये कर्मावृत्तौ सकृदेव मन्त्रवाचनं कृत्वा (? वचनं कृतत्वात्)' (काश्रौ. १।१५६) इति वचनात् । मुञ्जालाभे कुशेनेति प्रागुक्तम् ।

गृह्यानुक्तमपि यज्ञोपवीतमस्मिन्नेव समये परिधापयेत्, मेखलानन्तरं 'कार्पासमुत्तरीयं( ? मुपवीतं ) स्याद्विप्रस्योर्ध्ववृतं त्रिवृत्' (मस्मृ. २।४४) इति मनूक्तेः, 'पवित्रं चास्मै प्रयच्छति' इति जातूकर्णात्, 'यज्ञोपवीतिनं कुर्यात्' इति सांख्यायनाच्च । 'मेखलामजिनं दण्डमुपवीतं कमण्डलुम् । अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत् ॥' (मस्मृ. २।६४) इति मनुवचनेन उपवीताजिनयोरपि धारणे समन्त्रत्वावधारणात् गृह्ये तदनुपदेशात् शाखान्तरादुपादद्यात् । 'यज्ञोपवीतमसि यज्ञस्य त्वोपवीतेनोपनेष्यामि' इति भट्टभाष्यम् । अस्मिन्नेवावसरे 'अजिनमुत्तरीयम्' इत्यापस्तम्बः । अजिनं च कृष्णसारचर्म, प्रागुक्तत्वात् । अजिनग्रहणमन्त्रस्तु 'ओं मित्रस्य चक्षुर्धरुणं बलीयस्तेजो यशस्वि स्थविरं समिद्धम् । अनाहनस्यं वसनं जरिष्णु परीदं वाज्यजिनं दधेऽहम् ॥' इति तैत्तिरीयशाखापठितो द्रष्टव्य इति भट्टभाष्यम् । एवं च 'दण्डाजिनोपवीतानि मेखलां चैव धारयेत्' इति याज्ञवल्क्यवचनं द्रव्यधारणविधायकम्¶ । एतदनन्तरमाचमनं कुर्यात्, 'यज्ञोपवीतिना आचान्तोदकेन कृत्यम्' इति गोभिलसूत्रात्, 'आचामेत्'

¶ न क्रमविधायकमित्यर्थः ।

(१) गोगृ. २।१०।३७ ; संत. ९३४ दुरुक्तात् (दुरुक्तं) माना' इति (माना').

इत्यनुवृत्तौ ‘ शिखां बद्ध्वा वसित्वा द्वे निर्णिक्ते वाससी शुभे । तूष्णींभूत्वा समादाय नो गच्छन् विलोकयन् ॥ ’ इति देवलवचनाच्च । हरिशर्माऽप्येवम् ।

सं.त. ९३४–९३५

( २ ) अथ अनन्तरमेव उपविष्टमेव । एनं माणवकम् । परिहरन् परिवेष्टयन् कटिप्रदेशे प्रादक्षिण्येन त्रिर्वेष्टयन् । परिवेष्टनावृत्तावपि मन्त्रवाचनं सकृदेव, ‘ एकद्रव्ये कर्मावृत्तौ सकृन्मन्त्रवाचनम् ’ इत्युपनिषद्दर्शनात् । मन्त्रो यथा– ‘इयं दुरुक्तात्परिबाधमाना वर्णं पवित्रं पुनती न आगात् । प्राणापानाभ्यां बलमाहरन्ती स्वसा देवी सुभगा मेखलेयम् ॥ ऋतस्य गोप्त्री तपसः परस्वी घ्नती रक्षः सहमाना अरातीः । सा मा समन्तमभिपर्येहि भद्रे धर्तारस्ते मेखले मा रिषाम ॥ ’ इति । अनयोरर्थः–ब्रह्मचारी ब्रूते– इयं प्रत्यक्षा मेखला मौञ्जी नः अस्मान् आगात् आगता । किं कुर्वती ? दुरुक्तात् असंबद्धप्रलापादितः बाल्यकृतात् परि सर्वतः बाधमाना निवारयन्ती, पवित्रम् अपि वर्णं ब्राह्मणादिकं पुनती द्विजत्वसंपादनेन पावयन्ती । तथा च स्मृतिः– ‘ मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात् ’ इति । पुनश्च प्राणापानाभ्यां प्राणापानयोः बलं वीर्यम् आहरन्ती आनयन्ती । स्वसा स्वसृवद्धिता । देवी दीप्तिमती । अत एव सुभगा सौभाग्यप्रदा । सर्वलोककाम्येति गुणविष्णुः । हे भद्रे शोभने मेखले, या त्वं ब्रह्मचारिसंबन्धिनः ऋतस्य सत्यस्य यज्ञस्य वा गोप्त्री पालयित्री, तपसः ब्रह्मचर्यस्य परस्वी सर्वस्वभूता, रक्षः रक्षांसि जातावेकवचनम् , घ्नती विनाशयन्ती, अरातीः शत्रून् सहमाना अभिभवन्ती । सा एवंभूता त्वं मा मां समन्तं समन्तात् अभिपर्येहि आभिमुख्येनाऽऽगच्छ । वेष्टयेत्यर्थः । यथा ते तव धर्तारः कटौ धारयितारः वयं केनचित् मा रिषाम मा हिंसिष्महि इति ।

अथ कौपीनपरिधानं यज्ञोपवीतधारणं च । तत्र प्रथममाचम्य ब्राह्मणेभ्यः सपूगयज्ञोपवीतभाण्डाष्टतयदानमाजानिकाचारात् । अत्र मानमुपनिषत्सु ‘ अष्टौ ब्राह्मणान्प्राहयित्वा विद्यासिद्धिर्भवति ’ इत्यसकृदाम्नायते । तदेतदत्रापि ब्राह्मणेभ्यः पूर्वं प्रदाय विद्यासिद्ध्यै यज्ञोपवीतधारणमिति मम प्रतिभाति । एतच्च यज्ञोपवीतधारणं सूत्रानुक्तकालमपि इदानीमेव, अन्यत्र तथादर्शनात् । तथा च मेखलाबन्धनानन्तरं जातूकर्णः– “ पवित्रं चास्मै प्रयच्छति– ‘यज्ञोपवीतं परमं पवित्रम्’ ” इति । अपि च– ‘ सदा मन्त्रवदाधार्यमुपवीतं द्विजातिभिः ’ इति देवलवाक्यात् द्विजत्वसंपत्त्यनन्तरमेवोपवीतधारणमायाति । अत्राऽऽङ् मर्यादार्थः । मर्यादयेति तदर्थः । मर्यादा तूक्ता प्राक् । द्विजत्वं च मेखलाबन्धनादनन्तरमेव । तथा च याज्ञवल्क्यः– ‘ मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात् । ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजातयः ॥ ’ ( यास्मृ. १।३९ ) इति । अत्रोक्तदेवलवचने, मनौ च– ‘ मेखलामजिनं दण्डमुपवीतं कमण्डलुम् । अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत् ॥ ’ इत्येवं समन्त्रकत्वं तद्ग्रहणे स्मर्यते । तदत्रानुपदेशाच्छाखान्तरोक्तमन्त्रमुपादद्यात् । यथा– ‘ यज्ञोपवीतमसि यज्ञस्य त्वोपवीतेनोपनह्यामि ’ इति । अस्यार्थः– हे उपवीत, त्वं यज्ञोपवीतं तन्नाम असि भवसि । अतः त्वा त्वां यज्ञस्य यज्ञसंबन्धिना । तृतीयार्थे षष्ठी । उपवीतेन ब्रह्मसूत्रेण उपनह्यामि परिदधामि । यज्ञोपवीतलक्षणमुक्तमधस्तात् । अथोक्तमजिनमपीदानीमेव ‘मित्रस्य चक्षुः ’ इति तैत्तिरीयशाखीयमन्त्रेण परिधापयेत् । तदेतत्सर्वं ‘ यन्नाऽऽम्नातं स्वशाखायाम् ’ इति कातीयपरिभाषणात् बोध्यम् । तथा चाऽऽश्वलायनः– ‘ यज्ञोपवीतमजिनं च ’ इति । एवं च द्रव्यकथनसूत्रक्रमेण नैतद्धारणम् , तत्र क्रमेऽपि तात्पर्यकल्पने दण्डेऽपि तदापत्तेरित्याश्वलायनोक्तक्रम एव ग्राह्यः । पद्धतिरप्येवम् । अजिनधारणे मन्त्रस्तैत्तिरीयशाखायामुक्त उपादीयते पद्धतिकृद्भिर्महामहत्तकवीरेश्वरैर्यथा– ‘ ॐ मित्रस्य चक्षुर्धरुणं बलीयस्तेजो यशस्वि स्थविरं समिद्धम् । अनाहनस्यं वसनं जरिष्णु परीदं वाज्यजिनं दधेऽहम् ॥ ’ । अस्यार्थः– अहमिदम् अजिनं मृगचर्म परिदधे सर्वतो धारयामि । कथंभूतम् ? मित्रस्य मित्राख्यदेवस्य चक्षुः नेत्ररूपम् । पुनः कथंभूतम् ? धरुणं धारणार्हम् । पुनः कथंभूतम् ?

बलीयः अतिशयेन बलवत् शीतनिवृत्तिकारणम्। पुनः कथंभूतम्? तेजः पापतनूकरणसमर्थम्। 'तिज निशाने' औणादिकोऽसुन्। पुनः कथंभूतम्? यशस्वि धारणेन यशोदानयोग्यम्। पुनः कथंभूतम्? स्थविरं जीर्णं बहुदिनधारणयोग्यम्। पुनः कथंभूतम्? समिद्धम् अत्यन्तदीप्तिकारकम्। पुनः कथंभूतम्? अनाहनस्यं छेदान्यभोगस्खालनरहितम्। पुनः कथंभूतम्? वसनम् आच्छादनयोग्यम्। जरिष्णु कालान्तरेण वार्धक्यधर्मविशिष्टम्। वाजि उद्वेजनम्। भयदातृ परेषामित्यर्थः। वाजिशब्दः पृषोदरादित्वात्सिद्धः। अत्र 'ओविजी भयचलनयोः' इति धातुः। मृदुला.

**[1]अथोपसीदति– 'अधीहि भोः सावित्रीं मां भवाननुब्रवीतु' इति ॥**

(१) अनन्तरं तथैवोपदिष्टो माणवक उपसीदति कृताञ्जलिपुट आचार्यगतचक्षुरुपसन्नो भवति 'अधीहि भोः' इत्यादिमन्त्रेण। अधीहि अध्यापय। सावित्रीं सवितृदेवताकां गायत्रीम्। भोरित्याचार्यसंबोधनम्। भट्टभाष्येऽप्येवम्। संत. ९३५

(२) अथेति पूर्वोक्तविशिष्टानन्तर्यद्योतनार्थः। अथ यज्ञोपवीतधारणानन्तरं माणवक आचार्यम् उपसीदति कृताञ्जलिपुट आचार्यगतचक्षुरुपसन्नो भवति 'अधीहि' इत्यनेन। अधीहि अध्यापय। अन्तर्भावितण्यर्थः। भोः इत्याचार्यस्य संबोधनम्। अध्यापनस्यानेकविषयत्वाद्विशेषप्रतिपत्तये पुनः स्पष्टमुच्यते– सावित्रीं सवितृदेवताकां गायत्रीम्। मृदुला.

**[2]तस्मा अन्वाह पच्छोऽर्धर्चशः ऋक्श इति ॥**

(१) तस्मै माणवकाय अन्वाह अनुब्रूयात् पूर्वं तावत् पच्छः §पादशः ततोऽर्धर्चशः ततः ऋक्शः। ऋक्श इत्यत्र सर्वामिति पाठः सरलायाम्। संत. ९३५

(२) माणवकेनैवमभिहित आचार्यः तस्मै माणवकाय अन्वाह अनुक्रमेण ब्रूयात्। प्रकारमाह– पच्छ इति। अत्र द्वितीयैकवचनान्तात्पादशब्दाद्वीप्सायां शस्प्रत्ययः। 'ऋचः शे' (पासू. ६।३।५५) इति पादशब्दस्य पद्भावः। प्रथमं पादम् (पादम्), ततोऽर्धर्चशः ऋचोऽर्धमर्धं कृत्वा, तत ऋक्छः समस्तामृचं गायत्रीमित्यर्थः। अर्धर्चश इति कृतसमासाच्छः। अत्र पारस्करः– 'अथास्मै सावित्रीमन्वाहोत्तरतोऽग्नेः प्रत्यङ्मुखायोपविष्टायोपसन्नाय समीक्षमाणाय समीक्षिताय, दक्षिणतस्तिष्ठत आसीनायेत्येके, पच्छोऽर्धर्चशः कृत्स्नां च तृतीयेन सहानुवर्तयन्' इति। सावित्रीं 'तत्सवितुः' इत्यृचम्। उपसन्नाय कृतपादोपसंग्रहणाय। सहानुवर्तयन् तृतीयवारे माणवकेन सह पठन्। एतच्च शक्त्यपेक्षयाऽभिधानम्। यदि माणवको मन्दमेधत्वाद्यथावदध्येतुं न शक्नुयात्तदा यथाशक्त्यस्याध्यापयेत्। तथा चाऽऽश्वलायनगृह्यम्– 'सावित्रीमन्वाह पच्छोऽर्धर्चशः सर्वां यथाशक्ति वाचयीत' इति। अत्रेतिशब्दः क्रमप्रकारज्ञापनार्थः। मृदुला.

**[1]महाव्याहृतीश्च विहृता ओंकारान्ताः ॥**

(१) विकृताः पृथक्कृताः। ओंकारान्ता इत्यत्र 'भूरोम्' इति भट्टभाष्यम्। 'ओं भूः' इति भवदेवभट्टः। उभयमतग्राही वीरेश्वरस्तु 'ओं भूरोम्' इति। अन्ताः अवसानभूताः। संत. ९३५

(२) विहृताः विकृष्य हृताः पृथक्कृताः। विहिता इतिपाठे प्रयुक्ता इत्यर्थः। विहता इति पाठे पृथग्भूताः, न संहता इति यावत्। केचिद्विकृता इति पठन्ति। तत्रापि पृथग्भाव एव विकार इति तुल्योऽर्थः। "ओंकारान्ताः ओंकारः अन्ते यासां ताः। तेन विहृतानामेवोङ्कारान्तत्वम्। एवं च 'भूरोम्, भुवरोम्, स्वरोम्' इति प्रयोगः सिध्यति" इति नारायणमुरारिमिश्रादयः। भवदेवभट्टस्तु 'ओं भूः' इत्येवं प्रायुङ्क्त। तस्य मतेऽन्तशब्द आद्यर्थः। 'पर्युक्षणान्तान् व्यतिहरन्'

§ ऋग्विषयकपादशब्दस्थाने पदादेशस्य नित्यत्वादपाणिनीयोऽयं प्रयोगः।

(१) गोगृ. २।१०।३८; संत. ९३५ मां (मे).

(२) गोगृ. २।१०।३९; संत. ९३५.

(१) गोगृ. २।१०।४०; संत. ९३५ विहृता (विकृता).

(गोगृ. १।३।५) इत्यत्र यथा। वीरेश्वरस्तु तदुभयमनुसरन् 'ओं भूरोम्, ओं भुवरोम्, ओं स्वरोम्' इत्येवं स्वपद्धतौ प्रायुङ्क्त। तत्र मन्त्रादौ प्रणवदानं संप्रदायसिद्धमन्ते च सूत्रविहितमिति बोध्यम्। मृदुला.

'वार्क्षं चास्मै दण्डं प्रयच्छन्वाचयति– 'सुश्रवः सुश्रवसं मा कुरु' इति ॥

(१) वार्क्षं पलाशादिभवं दण्डं माणवकाय ददत् 'सुश्रवः' इति पाठयति। संत. ९३५

(२) वृक्षस्येदं वार्क्षम्। प्राप्तदण्डानुवादेन प्रदानमात्रविधानात्पार्णादिरूपमित्यर्थः। अत्र चन्द्रकान्तः 'वार्क्षं चेति चशब्दादजिनमपीदानीमेव प्रयच्छति' इति व्याचक्षाणः दण्डधारणोत्तरमजिनधारणमभिप्रैति तदाचारविरुद्धम्। मनुनाऽपि 'मेखलामजिनं दण्डम्' इति §क्रम एवाभ्यधायि। एवमाश्वलायनेनापि मेखलामुपक्रम्य 'यज्ञोपवीतमजिनं च' इत्युक्तमित्युक्तमनुपदम्। तमिमं दण्डमस्मै ब्रह्मचारिणे प्रयच्छन् ददत् 'सुश्रवः' इत्यादिमन्त्रं वाचयति ब्रह्मचारिणमेव। मन्त्रो यथा– 'सुश्रवः सुश्रवसं मा कुरु। यथा त्वमग्ने सुश्रवः सुश्रवा देवेष्वेवमहं सुश्रवः सुश्रवा ब्राह्मणेषु भूयासम्॥' इति। अस्यार्थः– दण्डं गृह्णन्ब्रह्मचारी तमग्निं च प्रार्थयते– हे सुश्रवः, शोभनं श्रवः यशःप्रशंसा यस्य स सुश्रवाः, तत्संबोधने। हे शोभनकीर्ते दण्ड, यथा त्वं वेदधारणार्थज्ञानादिना लोके प्रख्यातयशाः, एवं मा माम् अपि सुश्रवसं सुयशसं कुरु। एवं दण्डं प्रार्थ्याग्निमपि प्रार्थयते– हे अग्ने सुश्रवः शोभनकीर्ते, यथा त्वं देवेषु देवमध्ये सुश्रवाः शोभनयशाः असि, एवमहमपि हे सुश्रवः शोभनकीर्ते, ब्राह्मणेषु मनुष्येषु सुश्रवाः सुयशाः भूयासं भवेम। मृदुला.

§ वस्तुतस्तु दण्डात्पूर्वमुपवीतक्रमं मन्यमानेन मृदुलाकारेण दण्डोत्तरमुपवीतमाचक्षाणे मनुवचने क्रमविवक्षा नाऽऽस्थेया।

(१) गोगृ. २।१०।४१ ; संत. ९३५ वार्क्षं चा (वार्क्षम).

'अथ भैक्षं चरति ॥

(१) अथशब्दः तूष्णीमादित्योपस्थानमग्निप्रदक्षिणं च शंसति, 'प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम्। प्रदक्षिणं परीत्याग्निं चरेद्भैक्ष्यं यथाविधि ॥' (मस्मृ. २।४८) इति मनुवचनात्। भिक्षासमूहं भैक्ष्यम्, तच्चरति आवहति इत्यर्थः। संत. ९३५

(२) अथशब्दोऽयं विशिष्टमानन्तर्यं द्योतयति। यद्दण्डमजिनं च प्रतिगृह्याऽऽदेशं च गुरोरङ्गीकृत्य भास्करमुपस्थायाग्निं प्रदक्षिणीकृत्य अथ अनन्तरं भैक्षं भिक्षासमूहम्। 'भिक्षादिभ्योऽण्' (पासू. ४।२।३८) इति सामूहिकोऽण्, आदिवृद्धिः। 'भैक्षं भिक्षाकदम्बकम्' इत्यमरः। चरति चरेत् आहरेदित्यर्थः। तथा च मनुः– 'प्रतिगृह्ये... यथाविधि ॥' इति। उपस्थाय अभिमुखमवस्थाय। मृदुला.

'मातरमेवाग्रे, द्वे चान्ये सुहृदौ, यावत्यो वा संनिहिताः स्युः ॥

(१) सुहृदौ स्निग्धहृदये स्वस्राद्ये। तथा च मनुः– 'मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम्। भिक्षेत भिक्षां प्रथमां या चैनं नावमानयेत् ॥' (मस्मृ. २।५०)। संनिहिताः तद्देशस्थाः, न तु प्रतिगृहं गत्वा। 'भवति भिक्षां देहि' इति ब्राह्मणभिक्षाप्रयोगः। तथा च मनुः– 'भवत्पूर्वं चरेद्भैक्ष्यमुपवीतो द्विजोत्तमः। भवन्मध्यं तु राजन्यो वैश्यस्तु भवदुत्तरम् ॥' (मस्मृ. २।४९)। 'आदिमध्यावसानेषु भवच्छब्दोपलक्षिता। ब्राह्मणक्षत्रियविशां भैक्ष्यचर्या यथाक्रमम् ॥' (यास्मृ. १।३०) इति याज्ञवल्क्यवचनाच्च। संत. ९३६

(२) मातरं स्वजननीमेव अग्रे प्रथमम्। प्रार्थयेदिति शेषः। सुहृदौ स्निग्धहृदये। यावत्यो वा योषितः संनिहिताः संनिधौ स्थिताः स्युः भवेयुः। न चैनं विमान-

(१) गोगृ. २।१०।४२ ; संत. ९३५ भैक्षं (भैक्ष्यं).

(२) गोगृ. २।१०।४३ ; संत. ९३५–९३६ द्वे (ये) हृदौ (हृदो).

वेयुस्तावतीर्वा प्रार्थयेत् । तथा च मनुः– 'मातरं ...... नयेत् ॥ ' इति । भविष्यपुराणे चोक्तमनुवचनान्ते– 'सुवर्णं रजतं रत्नं सा पात्रेऽस्य विनिःक्षिपेत्' इति पठ्यते । सा भिक्षादात्री मात्रादिः । निजां सोदर्याम् । प्रथमम् उपनयनकालिकभिक्षायाम् । संनिहिता इत्युक्त्या तत्रस्था एव भिक्षेत्, न पुनः स्थानान्तरं गत्वेति बोद्धव्यम् । तत्प्रकारमाह मनुः– 'भवत्पूर्वं ... दुत्तरम् ॥ ' इति । एवं च 'भवति भिक्षां देहि' इति वाक्येन ब्राह्मणेन, 'भिक्षां भवति देहि' इति क्षत्रियेण, 'भिक्षां देहि भवति' इति वैश्येन भिक्षाचरणं कर्तव्यमित्यायाति । हारीतः– 'सप्ताक्षरां चरेद्भिक्षां क्षां च हिं च न वर्जयेत्' इति । क्षां च हिं चेत्यनेन भिक्षां देहीति पदयोः प्रयोगोऽप्यावश्यक एवेति कल्पतरुः । गौतमः– 'आदिमध्यान्तेषु भवच्छब्दः प्रयोज्यो वर्णानुपूर्व्येण' इति । यमः– 'हस्तदत्ता च या भिक्षा सलिलं व्यञ्जनानि च । भोक्ता त्वशुचितां याति दाता स्वर्गं न गच्छति ॥ ' इति । मृदुला.

'आचार्याय भैक्षं निवेदयति ॥

(१) वेदयति समर्पयति । 'भोरित्याचार्याय निवेद्य प्रतिगृह्णीयात्' इति गृह्यान्तरवचनात् 'भैक्ष्यं भोः' इति निवेदनमन्त्रः । भैक्ष्यस्य संस्कारार्थत्वात् आचार्याय निवेद्य स्वयं तदेव भुञ्जीत । तथा च मनुः– 'समाहृत्याय तद्भैक्ष्यं यावदन्नममायया । निवेद्य गुरवेऽश्नीयादाचार्यः प्राङ्मुखः शुचिः ॥ ' (मस्मृ. २।५१) । आचार्यश्च माणवकाय भैक्ष्यं प्रदाय कर्मशेषं समापयेत् इति । तच्च सावित्र्या चरुहोमादि वक्ष्यमाणं तत्तद्ग्रन्थात् । संत. ९३६

(२) आचार्याय उपनेत्रे । भैक्षं लब्धभिक्षानिचयम् । 'भिक्षादिभ्योऽण्' (पासू. ४।२।३८) इति सामूहिकेऽणि आदिवृद्धिः । 'भैक्षं भिक्षाकदम्बकम्' इत्यमरः । निवेदयति निवेदयेत् अर्पयेत् । निवेदनप्रकारश्च 'भैक्षं भोः' इत्याचार्याय निवेद्य तद्दत्तं प्रतिगृह्णीयादिति । आचार्येण तद्दानं च 'भुङ्क्ष्व' इत्यनुज्ञानरूपम् । अत्राऽऽचार्यः प्रथमां भिक्षां गृहीत्वा द्वितीयादिकां 'भुङ्क्ष्व' इत्यभिधाय ब्रह्मचारिण एव दद्यात् । स च तामादाय धारयेत् । मृदुला.

'तिष्ठत्यहःशेषं वाग्यतः ॥

(१) माणवकोऽहःशेषं संयतवागास्ते । संत. ९३६

(२) स्वयं च तद्दिने– तिष्ठतीति । अहःशेषम् आसायं मौनी तिष्ठेदित्यर्थः । वक्ष्यमाणकर्मार्थमेतत् । तेनान्यदिने मनुः– 'समाहृत्य तु तद्भैक्षं यावदर्थममायया । निवेद्य गुरवेऽश्नीयादाचम्य प्राङ्मुखः शुचिः ॥' (मस्मृ. २।५१) इति । यावदिति । यावदर्थंजातमुपात्तं तदनपह्नवेन । एवं चाऽऽचार्यायादृष्टार्थमिदं निवेदनमात्रम्, न तु दानमेवेति द्रष्टव्यम् । मृदुला.

अस्तमिते समिधमादधाति– 'अग्नये समिधमाहार्षम्' इति ॥

(१) अस्तं गते सूर्ये समिधं प्रादेशमात्राम् 'अग्नये समिधमाहार्षम्' इत्यनेनाऽऽदधाति । इयमेवातः (? वात्र) प्रधानाहुतिः । ततश्चास्याः पुरस्तादुपरिष्टाच्च समिन्द्धवतीति । उक्तं च– 'समिदादिषु होमेषु मन्त्रदैवतवर्जिता । पुरस्ताच्चोपरिष्टाच्च इन्धनार्थं समिन्द्धवेत् ॥ ' । समिद्धोमश्च सायं प्रातः कर्तव्यः । तथा च मनुः– 'दूरादाहृत्य समिधः संनिदध्याद्विहायसि । सायं प्रातश्च जुहुयादाहिताग्निरतन्द्रितः ॥ ' (मस्मृ. २।१८६) । समिदाधानानन्तरं चाग्निमभिवादयेत् । तथा च गृह्यान्तरम्– 'उभयत्राग्निं समिध्य गोत्रनामनी प्रोच्याभिवाद्याऽऽचार्यमभिवादयेत्' । उभयत्र सायं प्रातः । अभिवाद्याग्निमित्यन्वयः । संत. ९३६–९३७

(२) अस्तमिते अस्तंगते सवितरि 'अग्नये समिधम्' इति मन्त्रेण समिधमुक्तलक्षणाम् आदधाति आदध्यात् अग्नौ प्रक्षिपेत् । मन्त्रो यथा– 'अग्नये समिधमाहार्षं बृहते जातवेदसे । यथा त्वमग्ने समिधा समिध्यस्येवमहमायुषा मेधया वर्चसा प्रजया पशुभिर्ब्रह्मवर्चसेन

---

(१) गोगृ. २।१०।४४; संत. ९३६ भैक्षं नि (भैक्ष्यं प्रणि).

(१) गोगृ. २।१०।४५–४६; संत. ९३६.

धनेनान्नाद्येन समेधिषीय स्वाहा' इति । अस्यार्थः— ब्रह्मचारी ब्रूते— अहम् अग्नये समिधम् उक्तलक्षणाम् आहार्षम् आहृतवान् । किंभूताय ? बृहते महते जातवेदसे जातप्रज्ञानाय जातधनाय वा । इति परोक्षमुक्त्वा प्रत्यक्षमाह— हे अग्ने, यथा त्वम् अनया मदाहृतया समिधा समिध्यसि दीप्यसे, एवमहम् आयुषा जीवितकालेन, मेधया धारणावत्या बुद्ध्या, वर्चसा तेजसा, प्रजया पुत्रपौत्रादिरूपया संतत्या, पशुभिः गवादिभिः, ब्रह्मवर्चसेन ब्राह्मणतेजसा, धनेन (वित्तेन, अन्नाद्येन) व्रीहियवादिना समेधिषीय वृद्धिमाप्नुयामिति ।

अत्र मनुः— 'अग्न्याधानं भैक्षचर्यामधःशय्यां गुरोर्हितम् । आ समावर्तनात्कुर्यात्कृतोपनयनो द्विजः ॥' (मस्मृ. २।१०८) इति । तथा चात्रास्तमिते अस्तमिते इति वीप्सया विरोधः परिहर्तव्यः । हारीतोऽपि — 'पुरा जग्राह वै मृत्युर्हिंसन्वै ब्रह्मचारिणम् । अग्निस्तं मोचयामास तस्मात्परिचरेत्सदा ॥ ब्रह्मचारि यदा त्वग्नावादध्यात्समिधं नहि । गृह्णीयात्तं तदा मृत्युरादध्यात्समिधं ततः ॥' इति । अयमपि चोपरिष्टाद्वक्ष्यति— 'मेखलाधारणं भैक्षचर्या दण्डसमिदाधानोपस्पर्शनप्रातरभिवादा इत्येते नित्यवदर्थाः' (गोगृ. ३।१।२७) इति । यत्तु 'अस्तमिते' इत्यभिधानात् प्रातः समिदाधानं न कर्तव्यमिति केचित्, तन्न, 'सायमादि प्रातरन्तमेकं कर्म प्रचक्षते' इति कर्मप्रदीपात् सायमारब्धस्य प्रातरेवापवर्ग इत्यर्थादुक्तमिति लाघवार्थं कण्ठरवेण नोक्तं सूत्रकृता, न तु कर्तव्यताविरहादेवेति बोध्यम् । तथा च मनुः— 'दूरादाहृत्य... तन्द्रितः ॥' इति । अत्र दूरादपीत्यप्यर्थोऽनुप्रवेश्यः । श्रुतिश्च— 'ततः सायंप्रातः समिधमादध्यात्' इति । अत्रेयमेवैषां प्रधानाहुतिरित्यस्याः पुरस्तादुपरिष्टाच्चेन्धनार्थे समिद्भवतीति कात्यायनः स्मरति— 'समिदादि... द्भवेत्' इति । क्षिप्रहोमोऽयमिति न न्यञ्चकरणादीति भाष्यकृतो नारायणभट्टाः प्राहुः । इदं च समिदाधानं संध्ययोः संध्योपासनानन्तरमेव । तथा च कात्यायनः— 'ततः परं प्रवक्ष्यामि संध्योपासनिकं विधिम् । अनर्हः कर्मणां विप्रः संध्याहीनो यतः स्मृतः ॥' इति । विप्र इति कर्तृमात्रोपलक्षणम् । दक्षः— 'संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु । यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत् ॥' इति । तदनन्तरं संध्ययोरग्निमभिवाद्य गुरुमप्यभिवादयेत् । तथा च गृह्यान्तरम्— 'उभयत्राग्निं समिध्य गोत्रनामनी प्रोच्याभिवाद्याऽऽचार्यमभिवादयेत्' इति । अथेदानीं ब्रह्मचारिणो भोजनकालः, 'कृताग्निकार्यो भुञ्जीत वाग्यतो गुर्वनुज्ञया' इति स्मरणात् ।

मृदुला.

**[1]त्रिरात्रमक्षारलवणाशी भवति ॥**

स खल्वयं ब्रह्मचारी उपनयनकर्मण ऊर्ध्वम् उपनीतश्चाहोरात्रत्रयमक्षारलवणं भुञ्जीतेत्यर्थः । अक्षारलवणं यथापरिभाषितमुक्तमधस्तात् । मृदुला.

**[2]तस्यान्ते सावित्रश्चरुः ॥**

(१) तस्य उपनयनरूपव्रतस्य, न तु संनिधानात्त्रिरात्रस्य, अव्यक्तशब्दस्य प्रधानेन सह संबन्धदर्शनात् । अन्यथा तस्यान्त इत्यवचनीयं स्यात्, अस्यान्त इति वक्तुं युक्तम् । भट्टभाष्येऽप्येवम् । ततः 'चतुर्थेऽहनि सावित्रचरुः' इति भवदेवभट्टोक्तम् 'चतुर्थेऽह्नि सावित्रचरुः कार्यः' इति सरलोक्तं च हेयम् । सविताऽस्य देवता इति सावित्रः । संत. ९३७

(२) तस्य व्रतस्य, न पुनरुपनयनकर्मणः न वा संनिधानात् त्रिरात्रस्य, 'अव्यक्तं प्रधानगामि' इति न्यायात् । अन्यथा अस्यान्त इति ब्रूयात् । तथा च गृह्यान्तरम्— 'व्रतान्ते सावित्रश्चरुर्गोदानादीन्यनुप्रवचनीयानि व्रतान्यैन्द्रस्थालीपाकान्तानि भवन्ति' इति । सविता देवताऽस्येति सावित्रः । तेन 'सवित्रे त्वा जुष्टं निर्वपामि' इति निर्वापः, 'सवित्रे स्वाहा' इति प्रधानहोमः । मृदुला.

---

(१) गोगृ. २।१०।४७; संत. ९३७.

(२) गोगृ. २।१०।४८; संत. ९३७ त्रश्चरुः (त्रचरुः).

'यथार्थम् ॥

(१) यथार्थम् उदीच्यं महाव्याहृत्यादि कर्म ।
संत. ९३७

(२) अवसिता प्रासङ्गिकी कथा, प्रकृतमिदानीमुच्यते– यथार्थमिति । उपनयनकर्मणः परिसमाप्तिरनेनोच्यते । मृदुला.

गौर्दक्षिणा ॥

(१) इयं दक्षिणा उपनयनकर्मणः, न तु सावित्रचरोः, प्रधानस्य उपनयनकर्मणो दक्षिणान्तरानभिधानात् । अत एव उपनयनानन्तरम् 'आचार्याय वरो दक्षिणा' इति गृह्यान्तरमिति सरला । वरः गौः । तथा चोक्तम्– 'गौर्विशिष्टतमा लोके वेदेष्वपि निगम्यते । न ततोऽन्यद्वरो यस्मात्तस्माद्गौर्वर उच्यते ॥' ।
संत. ९३७

(२) उपनयनकर्मण एव, नोपनयनव्रतस्य, उपनयनकर्मणोऽनन्तरम् 'आचार्याय वरो दक्षिणा' इति गृह्यान्तरसूत्रणात् । 'गौर्वरो ब्राह्मणस्य' इति च वक्ष्यति । मुरारिमिश्रास्तु– 'यथार्थे गौर्दक्षिणा' इत्येकमेव सूत्रं लिखन्ति स्म । § व्याचक्षत च– "इयं चोपनयनकर्मदक्षिणा, न तु व्रतान्तदक्षिणा, यथार्थशब्दस्यानन्तरोक्तकर्मशेषसमापनार्थत्वात्, 'कर्मशेषसमाप्तौ गौराचार्याय देया ब्रह्मणे पूर्णपात्रादीनि' इति गृह्यान्तरवचनाच्च । नारायणशूलपाणिप्रभृतयोऽप्येवम्" इति । अत्रान्ते यथार्थमित्यादेरभ्यासः प्रपाठकसमाप्तिद्योतकः पठ्यतेऽन्यत्र । मृदुला.

§ वस्तुतस्तु अस्मात् व्याख्यानात् न सूत्रैक्यं प्रतीयते प्रत्युत सूत्रभेद एव गम्यते, यथार्थपदार्थस्य गौर्दक्षिणेत्यत्रान्वयस्यानुक्तेरनुपपत्तेश्च । यत्तु एकसूत्रलेखनमुक्तम्, तल्लेखकप्रमादादित्येव कल्पयितुं युक्तम् ।

(१) गोगृ. २।१०।४९–५० ; संत. ९३७.

## खादिरगृह्यसूत्रम्

वपनालंकरणवस्त्रधारणानि, होमः, अञ्जलिजलोत्सर्जनम्, अञ्जलिग्रहणांसावमर्शननाभ्यालम्भनानि, परिदानम्, संप्रेषः, मेखलाबन्धनम्, सावित्र्यनुवचनम्, दण्डदानम्, समिदाधानम्, भिक्षाचरणम्, त्रिरात्रव्रतम्

'कुशलीकृतमलंकृतमहतेनाऽऽच्छाद्य हुत्वा– 'अग्ने व्रतपते' इति ॥

कुशलीकृतं रूपम् । अलंकृतं चाङ्गम् । वपनालंकारौ । अतस्तौ चावश्यमुपनयनमुहूर्ते कर्तव्यौ । एष क्रमः– वपनं कृत्वा अलंकृत्य नान्दीमुखं कृत्वा कौतुकबन्धनं कृत्वा पुण्याहं वाचयित्वा कुमारं भोजयित्वोपलेपनाद्यभ्युक्षणान्तं कृत्वा तत्रैकदेशे प्रणीय प्रज्वाल्य 'इमं स्तोमम्' इत्यादि ब्रह्मोपवेशनान्तं कृत्वा नवेनाधरवाससाऽऽच्छाद्य यज्ञोपवीतमजिनं चामन्त्रकं प्रतिमुच्याऽऽचमयित्वाऽऽत्मनो दक्षिणत उदगग्रेषु दर्भेषूपवेश्य परिस्तरणादि प्रपदान्तं कृत्वाऽन्वारब्धे माणवके व्याहृतिभिस्तिसृभिर्हुत्वा पुनश्च समस्ताभिश्च चतसृभिर्हुत्वा 'अग्ने व्रतपते' इत्यादिभिः पञ्चभिर्माणवकं हावयेत्, मन्त्रलिङ्गात् । मन्त्रलिङ्गनिरीक्षणार्थमेव हि पञ्चभिरिति नोक्तम् । रुद्रभा.

उत्तरतोऽग्नेः प्रत्यङ्मुखमवस्थाप्याञ्जलिं कारयेत् ॥

अग्न्यात्मनोरन्तरेण माणवकं गमयित्वा प्रदक्षिणमावृतं दर्भेषु प्रत्यङ्मुखमवस्थाप्य आकाशाञ्जलिं कारयेत् माणवकमाचार्यः । रुद्रभा.

स्वयं चोपरि कुर्यात् ॥

प्राङ्मुखो दर्भेषु स्थितः । रुद्रभा.

दक्षिणतस्तिष्ठन्मन्त्रवान्ब्राह्मण आचार्यायोदकाञ्जलिं पूरयेत् ॥

आचार्यस्य दक्षिणत उदगग्रेषु दर्भेषूदङ्मुखस्तिष्ठन् ब्राह्मणः 'ब्रह्मचर्यमागामुप मा नयस्व' इत्येतन्मन्त्रवित् ।

(१) खागृ. २।४।७–११.

ऋत्विक्त्वात्सिद्धे ब्राह्मण इत्यन्यत्राप्यञ्जलिपूरणे ब्राह्मणनियमार्थम्, यथा चन्द्रोपस्थाने । रुद्रभा.

**'आगन्त्रा' इति जपेत्प्रेक्षमाणे ॥**

अञ्जलिस्थमुदकं प्रेक्षमाणे माणवके जपेदाचार्यः । 'ब्रह्मचर्यमागामुप मा नयस्व' इति ब्राह्मणो ब्रह्मचारिणं वाचयेत्, मन्त्रलिङ्गात् । रुद्रभा.

**[1] 'को नामासि' इत्युक्तो देवताश्रयं नक्षत्राश्रयं स्वाऽभिवादनीयं नाम ब्रूयात् 'असावस्मि' इति ॥**

आचार्येणोक्तः सन् देवताश्रयं स्वजन्मनक्षत्रं यद्देवत्यं तद्देवताश्रयम् 'आग्नेयः' इतिवत्, नक्षत्राश्रयं स्वजन्मनक्षत्राश्रयम् 'अश्वयुग्विष्णुशर्मा नामास्मि' इतिवत् प्रतिब्रूयात् माणवकः । अभिवादनीयं गुह्यम् । अश्वयुक् अपभरणी कृत्तिकाः रोहिणी मृगशीर्षम् आर्द्रा पुनर्वसू पुष्यः आश्रेषा मघाः फल्गुनी उत्तरफल्गुनी हस्तः चित्रा स्वाती विशाखे अनूराधाः ज्येष्ठा मूलं अषाढाः उत्तराषाढाः श्रवणं श्रविष्ठा शतभिषक् प्रोष्ठपदाः उत्तरप्रोष्ठपदाः रेवती एतानि नक्षत्राणि । अश्विनौ यमः अग्निः प्रजापतिः सोमः रुद्रः अदितिः बृहस्पतिः सर्पाः पितरः अर्यमा भगः सविता इन्द्रः वायुः इन्द्राग्नी मित्रः इन्द्रः प्रजापतिः पितरो वा आपः विश्वेदेवाः विष्णुः वसवः इन्द्रः अजएकपात् अहिर्बुध्न्यः पूषा एतानि दैवतानि । आश्वयुजः आपभरणः कार्तिकेयः रौहिणेयः मार्गशीर्षः आर्द्रकः पौनर्वसुः पौषः आश्रेषः माघः फाल्गुनः औत्तरफाल्गुनः हस्तः चैत्रः स्वातिः वैशाखः अनूराधः ज्यैष्ठः मौलः आषाढः औत्तराषाढः श्रावणः श्रविष्ठः शातभिषजः प्रौष्ठपदः औत्तरप्रोष्ठपदः रैवतः इति नक्षत्राश्रयनिर्देशः । आश्विनः याम्यः आग्नेयः प्राजापत्यः सौम्यः रौद्रः आदित्यः बार्हस्पत्यः सार्पः पित्र्यः आर्यमणः भागः सावित्रः ऐन्द्रः वायव्यः ऐन्द्राग्नः मैत्रः ऐन्द्रः पित्र्यः आप्यः वैश्वदेवः वैष्णवः वासवः ऐन्द्रः अजएकपादः अहिर्बुध्न्यः पौष्णः इति देवताश्रयनिर्देशः । रुद्रभा.

**[1] 'उत्सृज्यापो 'देवस्य ते' इति दक्षिणोत्तराभ्यां हस्ताभ्यामञ्जलिं गृह्णीयादाचार्यः ॥**

माणवकाञ्जलावुत्सृज्यासौशब्दे 'विष्णुशर्मन्' इतिवत् ब्रूयात् । रुद्रभा.

**'सूर्यस्य' इति प्रदक्षिणमावर्तयेत् ॥**

अञ्जलिं गृह्णन्नेव यावत्प्राङ्मुखः स्यात् तावदावर्तयेत् । असाविति पूर्ववत् । रुद्रभा.

**दक्षिणमंसमन्ववमृश्यानन्तर्हितां नाभिमालभेत्– 'प्राणानाम्' इति ॥**

अनन्तर्हितामेव पाणिभ्यां परितो गृह्णीयात् । रुद्रभा.

**अथैनं $परिदद्यादन्तकप्रभृतिभिः ॥**

अनन्तर्हितमेव पाणिभ्यां परितो गृह्णीयात् । 'अन्तक इदं ते परिददाम्युदरम्' इत्युदरम्, 'अहुर इदं ते परिददाम्युरः' इत्युरः, 'कृशन इदं ते परिददामि कण्ठम्' इति कण्ठम् । रुद्रभा.

**दक्षिणमंसम्– 'प्रजापतये त्वा' इति ॥**

दक्षिणेन पाणिना गृह्णीयादिति शेषः । इतः प्रभृत्यसौशब्दे 'विष्णुशर्मन्' इतिवन्माणवकनाम ब्रूयादाचार्यः । रुद्रभा.

---

(१) खागृ. २।४।१२; संप्र. २३९ (देवताश्रयं नक्षत्राश्रयं वा अभिवादनीयं नाम) एतावदेव.

$ द्वयोरपि मुद्रितादर्शपुस्तकयोरयमेव पाठो मुद्रितः । मन्त्रब्राह्मणसायणभाष्ये तु 'परिदध्यात्' इति पाठो मुद्रितः । सायणेन रुद्रस्कन्देन च गृह्णातिना व्याख्यानात् तयोर्दधातेः पाठ एवाभिप्रेत इति प्रतीयते । अन्तकादिमन्त्रेषु ददातेः पाठः सर्वसंमतः । तेन मन्त्राणां तत्तदवयवदानेषु विनियोगो लिङ्गप्रमाणेन सिद्धः । स्पर्शरूपग्रहणस्याप्यत्र दानाभिनयरूपत्वेन तत्तदवयवग्रहणे विनियोगोऽपि दानविनियोग एवेति ग्रहणे विनियोगेऽपि न लिङ्गविरोधः । तथा च ददातिपाठापेक्षया दधातिपाठेऽवयवस्पर्शस्याधिकस्य लाभात् तदकरणे कर्मवैगुण्यसंभवाच्च दधातेः पाठ एव सूत्रकाराभिमतः स्यादिति भाति ।

(१) खागृ. २।४।१३–३३.

**सव्येन सव्यम्– 'देवाय त्वा' इति ॥**

सव्येन पाणिना सव्यं गृह्णीयादित्यर्थः । रुद्रभा.

**'ब्रह्मचार्यसि' इति ॥**

'विष्णुशर्मन्' इतिवन्माणवकमुक्त्वा । रुद्रभा.

**संप्रेष्योपविश्य दक्षिणजान्वक्तमञ्जलिकृतं प्रदक्षिणं मुञ्जमेखलामाबध्नन्वाचयेत्– 'इयं दुरुक्तात्' इति ॥**

'समिधमाधेहि' इत्यादिभिश्चतुर्भिः संप्रेष्योदगग्रेषु दर्भेषूपविश्य नमस्काराञ्जलिकृतं त्रिवृत्कृतां मुञ्जमेखलां प्रदक्षिणं त्रिः परिवारयन्नाचार्यो माणवकं मन्त्रं वाचयेत् । रुद्रभा.

**'अधीहि भोः' इत्युपसीदेत् ॥**

अग्नेः पश्चात् स्वस्थान आचार्ये उपविष्टे पूर्ववत् प्रत्यागम्य दक्षिणेन पाणिना सव्यं पाणिमनङ्गुष्ठमुपसंगृह्य 'अधीहि भोः' इति दक्षिणत उदगग्रेषु प्राङ्मुख उपविशेत्, आचार्याभिमुखे चक्षुर्मनसी कृत्वा प्रागग्रेषु वोदङ्मुखः । अयं विशेषः स्मृत्यन्तराद्गम्यते । आचार्यश्च तथा कारयेत् । तदेतदाचार्यस्य समीपनयनम् उपनयनम् उपनयनशब्दस्य प्रवृत्तिनिमित्तम् । अथोपरिष्टाद्धोमादि समापयेत् । नन्वेवं सति सावित्र्यध्यापनादेर्होमप्रयोगान्तर्भावो न स्यात् । नायं दोषः, 'उपनयीत तमध्यापयेत्' इति उपनयनोत्तरकालभावित्वश्रवणादध्यापनस्य । ननु वेदाध्यापनं तत्रोक्तम्, इह तु सावित्र्यध्यापनम् । नायं दोषः, सर्ववेदाध्यापनोपक्रमरूपत्वात्सावित्र्यध्यापनस्य । तथाहि– 'सर्वेभ्यो वै वेदेभ्यः सावित्र्यनूच्यत इति हि ब्राह्मणम्' । अपि च सर्ववेदात्मकत्वं सर्वसारत्वं च सावित्र्यादीनां श्रुतिस्मृतिषु श्रूयत एव । तथाहि– 'त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत्' इत्यादिभिः । अत उपरिष्टाद्धोमादि समाप्यैव सावित्र्यध्यापनम् । रुद्रभा.

**तस्मा अन्वाह सावित्रीं पच्छोऽर्धर्चशः सर्वामिति ॥**

अत ऊर्ध्वं सावित्र्यादेरध्यापनप्रकारमाह– तस्मा इति । पादे पादेऽवसायाध्यापयीत, ततः पादद्वयेऽवसाय, ततः सर्वां संहृत्य । रुद्रभा.

**महाव्याहृतीश्चैकैकशः ॥**

भूर्भुवः स्वरिति प्रत्येकमवसाय । रुद्रभा.

**ओंकारं च ॥**

ओमिति चाध्यापयीत । रुद्रभा.

**प्रयच्छत्यस्मै वार्क्षं दण्डम् ॥**

स्मृत्युक्तं दण्डं प्रयच्छेदाचार्यः । रुद्रभा.

**'सुश्रवः सुश्रवसं मा' इति ॥**

प्रतिगृह्णीयादिति शेषः । रुद्रभा.

**समिधमादध्यात्– 'अग्नये समिधम्' इति ॥**

यज्ञियां समिधं तस्मिन्नेवाग्नावादध्यान्माणवकः । औपासनवदुभयतः परिषेचनम् । रुद्रभा.

**भैक्षं चरेत् ॥**

'भवति भिक्षां देहि' इति ब्राह्मणः । 'भिक्षां भवति देहि' इति क्षत्रियः । 'भिक्षां देहि भवति' इति वैश्यः । दण्डहस्त आदित्यमुपस्थायाग्निं प्रदक्षिणीकृत्य भैक्षं याचेत । रुद्रभा.

**मातरमग्रे ॥**

प्रथमं मातरं याचेत । रुद्रभा.

**अथान्याः सुहृदः ॥**

सुहृद इति स्त्रीपुंसयोः साधारण्यात् स्त्रीनियमार्थमन्या इति विशिनष्टि । रुद्रभा.

**आचार्याय भैक्षं निवेदयेत् ॥**

'भैक्षमिदमुपयुज्यताम्' इति ब्रूयात् । आचार्योऽपि गृह्णीयात् प्रतिप्रयच्छेद्वा यथारुचि । उपनयनं वेदाध्ययनाङ्गं पुरुषसंस्कारद्वारेण तदर्थमेव क्रियमाणमपेक्षते– (१ क्यते), 'अध्ययनमध्यापनं यजनं याजनं दानं प्रतिग्रहश्च द्विजातीनाम्' इत्यधिकृत्य विधानादुपनयनाच्च द्विजातित्वसिद्धेः । अत उपनयनरहितानां तेष्वधिकारे न केवलमवैधत्वम्, किंतु निषेधात्प्रत्यवायश्च । रुद्रभा.

**तिष्ठेदाऽस्तमयात्तूष्णीम् ॥**

**त्रिरात्रं क्षारलवणदुग्धमिति वर्जयेत् ॥**

अष्टौ व्रतानि सर्वन्ते छन्दोगानाम्– उपनयनं गोदानं व्रातिकमादित्यव्रतं महानाम्निकमौपनिषदं मौतिकं

ब्रह्मसामव्रतमिति । तेषामुपाकरणविसर्गौ च स्मर्येते । तत्रोपनयनं कृत्स्नाध्ययनार्थमपि सत् व्रतान्तरनिरपेक्षं सावित्र्यध्ययने तत्सामाध्ययने च उपकरोतीति व्रतान्तरत्वेन व्यपदिश्यते । निरपेक्षाकारस्य च विसर्गः क्रियते । उपनीतं वक्ष्यमाणान्यधःशय्यादीनि स्मृत्युक्तानि च नियमादीनि समाचरन्तं सावित्रीं तत्साम चाध्याप्य यथाश्रद्धे काले गते हविष्यमेकभुक्तं भोजयित्वा प्रागुदयात्प्रागुदग्वा ग्रामान्निष्क्रम्य कमण्डलुनोदकं गृहीत्वा प्रागुदक्प्रवणे देशे गोमयेनोपलिप्य कुशैः प्रदक्षिणं मण्डलं कृत्वोदिते तेनोदकेनाऽऽचम्य दर्भमुष्टिं गृहीत्वा प्रह्वीभूतो वामदेव्येन मण्डलं प्रविशेदाचार्यः । शिष्यश्च तमन्वारभ्य तथा प्रविशेत् । पुनराचम्य प्रपदान्तं कृत्वाऽन्वारब्धे व्याहृतिभिर्हुत्वा 'इन्द्राय बृहद्भानवे स्वाहा, प्रजापतये मनवे स्वाहा' इत्याघारावाघार्याऽऽज्यभागौ हुत्वा 'अग्नये स्वाहा, सोमाय स्वाहा, रुद्राय स्वाहा, इन्द्राय स्वाहा, ब्रह्मणे स्वाहा, प्रजापतये स्वाहा, विश्वेभ्यो देवेभ्यः स्वाहा, ऋषिभ्यः स्वाहा, ऋग्भ्यः स्वाहा, यजुर्भ्यः स्वाहा, सामभ्यः स्वाहा, श्रद्धायै स्वाहा, प्रज्ञायै स्वाहा, मेधायै स्वाहा, सावित्र्यै स्वाहा, सदसस्पतये स्वाहा, अनुमतये स्वाहा' इति च हुत्वा होमं समाप्य कुशेष्वासीनो दक्षिणेन पाणिना कुशमुष्टिं धारयन् यथाविधं वक्ष्यमाणं तथाविधं श्रावयेत् ओंपूर्वा व्याहृतीः सावित्रीं चतुरनुद्रुत्य मनसा साम सावित्रीं च 'सोमं राजानं ब्रह्मजज्ञानम्' इति द्वे पञ्चनिधनं वामदेव्यं वैरूपं वाचोव्रते द्वे भद्रश्रेयसी च पूर्वे गीत्वा माणवकं गायत्रं श्रावयेत् । अथोपरिष्टात्सप्त महासामकल्माषवामदेव्यानि गीत्वा पुनरेकदेशं प्रणीयानुप्रवचनीयहोमः—प्रपदान्तं कृत्वाऽन्वारब्धे व्याहृतिभिर्हुत्वा पुनश्च समस्तान्ताभिश्चतसृभिर्हुत्वा 'अग्ने व्रतपते' इत्यादिभिः पञ्चभिर्ब्रह्मचारिणं हावयेत् । 'उपनयनव्रतमचारिषं तत्ते प्रावोचं तदग्नकं तेनाऽऽरात्समिदमहमनृतात्सत्यमुपागाम्' इति मन्त्रविकारः । ऋचं साम, 'सदसस्पतिम्' इति चाऽऽज्यं जुहुयात् । उपरिष्टाद्धोमादि दक्षिणान्तं कृत्वा ततो वामदेव्येन क्रमशो निष्क्रमणम्, ततो ब्राह्मणभोजनम् ।

रुद्रभा.

## जैमिनिगृह्यसूत्रम्

स्नानालंकरणाञ्जनवपनवस्त्रपरिधानानि, यज्ञोपवीतधारणम्, अश्मारोपणम्, होमः, संपातप्राशनम्, अग्निपरिणयनम्, अञ्जलिस्रावणम्, संशासनम्, हस्तग्रहणम्, नाभ्यादिस्पर्शनम्, परिदानम्, पुनः संशासनम्, समिदाधानम्, मेखलाबन्धनम्, वस्त्राजिनपरिधानम्, दण्डदानम्, भिक्षाचरणम्, सावित्र्यनुवचनम्, समिदाधानम्, पुनः संशासनम्, त्रिरात्रव्रतम्, व्रतविसर्गः, दक्षिणादानम्

**(1)तत एनं स्नातमलंकृतमक्ताक्षं कृतनापितकृत्यमानयन्ति । तमहतेन वाससा परिदधीत 'परीमं सोम' इति यथावर्णम् । 'परीमं सोम ब्रह्मणा महे श्रोत्राय दध्मसि । यथेमं जरिमा ण याज्ज्योक् श्रोत्रे अधि जागराज्जीवाहि शरदः शतं पश्याहि शरदः शतम् ॥' इति, 'परीममिन्द्र ब्रह्मणा महे राष्ट्राय दध्मसि । यथेमं जरिमा ण याज्ज्योग्राष्ट्रे अधि जागराज्जीवाहि शरदः शतं पश्याहि शरदः शतम् ॥' इति, 'परीमं पोष ब्रह्मणा महे पोषाय दध्मसि । यथेमं जरिमा ण याज्ज्योक् पोषे अधि जागराज्जीवाहि शरदः शतं पश्याहि शरदः शतम् ॥' इति ॥**

हे सोम, ब्रह्मणा मन्त्रेण महे महते श्रोत्राय श्रोत्रियत्वाय परिदध्मसि परिधानवन्तं करोमि । इमं यथा जरिमा जरा अशक्तिः न यात् न प्राप्नुयात्, यथा च ज्योक् सदा श्रोत्रे श्रोत्रियत्वे अधि जागरात् अधिकं जागरूको भवेत्, तथा त्वमनुगृह्णीष्वेति शेषः । 'ण यात्' इति सांहितं णत्वम् । अथ कुमारं प्रति जीवाहीत्यादि व्याख्यातम् । राष्ट्राय राज्यरक्षायै । हे पोषेति पोष्याधिष्ठात्रीं देवतां प्रति । पोषाय पुष्ट्यै समृद्ध्यै ।

श्रीव्या.

(१) जैगृ. १।१२.

**अथैनं पश्चादग्नेः प्राङ्मुखमुपवेश्य यज्ञोपवीतिनमाचार्य आचामयति । आचान्तमुत्थाप्योत्तरतोऽग्नेः प्राचो दर्भानास्तीर्य तेष्वक्षतमश्मानमत्याधाय तत्रैनं दक्षिणेन पादेनाश्मानमधिष्ठापयेत्– 'इममश्मानमारोहाश्मेव त्वं स्थिरो भव। द्विषन्तमपबाधस्व मा च त्वा ‡द्विषतो वधीत् ॥' इति ॥**

द्विषन्त इत्यकारान्तं प्रथमैकवचनं द्विषन्नित्यर्थः । श्रीव्या.

**अथैनं पश्चादग्नेः प्राङ्मुखमुपवेश्योत्तरत आचार्योऽन्वारब्धे जुहुयात् । महाव्याहृतिभिर्हुत्वा वेदाहुतिभिश्च । संपातमास्ये 'भूर्ऋचः स्वाहा' इति प्रतिमन्त्रम् । 'भूर्ऋचः स्वाहा, भुवो यजूंषि स्वाहा, स्वः सामानि स्वाहा' इति । प्राशितमाचान्तमुत्थाप्य 'नमो वाताय' इत्येनं प्रदक्षिणमग्निं परिणयेत् । 'नमो वाताय नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यो नमो वोऽदृष्टाय बृहते करोमि' इति ॥**

वः तुभ्यम् अदृष्टाय बृहते परमात्मने नमः करोमीत्यन्वयः । लिङ्गात्कुमारेण वक्तव्यो मन्त्रः । श्रीव्या.

**'अधिगन्तरधिगच्छ । प्रदातः प्रयच्छासावमुष्मै वेदम्' इति ॥**

( अधिगन्तरधिगच्छ ) अधिगन्तव्यमिति शेषः । एवमाचार्यः कुमारं ब्रूयात् । ( प्रदातः प्रयच्छ) इत्यमाचार्यं कुमारो ब्रूयात् । असावित्यत्राऽऽचार्यनाम संबुद्ध्या अमुष्मै इत्यत्राऽऽत्मानं चतुर्थ्या च निर्दिशेत् । श्रीव्या.

**अथैनं पश्चादग्नेः प्राङ्मुखमवस्थाप्य पुरस्तादाचार्यः प्रत्यङ्मुखः । तावञ्जली कुरुतः । उत्तरत आचार्यः । तमन्योऽद्भिः पूरयेत् । निस्रावेणेतरस्य पूरणम् । अथैनं संशास्ति– 'ब्रह्मचर्यमगामुप मा नयस्व' इति । 'को नामासि' इति 'असौ' इति नामधेयं दद्यात् ॥**

आचार्याञ्जलिगतानामपां नीचैःस्रावेण इतरस्य शिष्याञ्जलेः पूरणं स्यात् । इदमुदकप्रदानरूपेण गुरोर्वेदप्रदानप्रतिज्ञानम् । एनम् आचार्यं कुमारः संशास्ति प्रार्थयति । श्रीव्या.

**तत्राऽऽचार्यो जपति– 'हिं भूर्भुवः स्वरागन्त्रा समगन्महि प्र सु मर्त्यं युयोतन । अरिष्टाः संचेरमहि स्वस्ति चरतादयम् ॥' इति ॥**

सु मर्त्यं प्रयुयोतन प्रमिश्रय भगवन्, वयं तु आगन्त्रा अस्मानागच्छता सह समगन्महि संगच्छेमहि । श्रीव्या.

**अथास्य दक्षिणेन हस्तेन दक्षिणं हस्तं गृह्णाति– 'इन्द्रस्ते हस्तमग्रभीद्धाता हस्तमग्रभीत्पूषा हस्तमग्रभीत्सविता हस्तमग्रभीदर्यमा हस्तमग्रभीन्मित्रस्त्वमसि धर्मणाऽग्निराचार्यस्तव' इति । 'प्राणानां ग्रन्थिरसि' इति नाभिदेशमारभ्य जपति । 'प्राणानां ग्रन्थिरसि मा विस्रसामृत मृत्योरन्तरं कुरु' इति ॥**

स त्वं मा विस्रसः मा विश्लथितो भव । हे अमृत । रुलोपः सवर्णदीर्घश्च छान्दसः । मृत्योः अन्तरं प्रवेशरन्ध्रं च मा कुरु । श्रीव्या.

**दक्षिणमंसमन्ववमृश्य 'मयि व्रते' इति हृदयदेशमारभ्य जपति । 'मयि व्रते हृदयं ते अस्तु मम चित्तमनु चित्तं ते अस्तु । मम वाचमेकव्रतो जुषस्व बृहस्पतिस्त्वा नियुनक्तु मयि ॥' इति ॥**

हृदयदेशमालभ्य जपति नाभेरविच्छेदेन दक्षिणमंसमन्ववमृश्य ततो हृदयदेशमालभ्य कुमारस्य इमं मन्त्रं जपति । आचार्यत्वेन व्रते मयि । मम वाचं वेदमयीम् । एकव्रतः अचञ्चलब्रह्मचर्ये(र्यः) । त्वां मयि नियुनक्तु नियोजयतु मद्वश्यं करोत्वित्यर्थः । श्रीव्या.

**अथैनं परिददाति– 'अग्नये त्वा परिददामि वायवे त्वा परिददामि देवाय त्वा सवित्रे परि-**

‡ अत्र मूले मुद्रणप्रमादो व्याख्याने वेत्यनिर्णयात् 'द्विषतः' इति शुद्धः पाठः 'द्विषन्तः' इति वेति न निर्णीयते ।

ददाम्यद्भयस्त्वौषधीभ्यः परिददामि सर्वेभ्यस्त्वा देवेभ्यः परिददामि सर्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्यै ' इति । अथैनं संशास्ति– 'ब्रह्मचार्यसि समिध आधेह्यपोऽशान कर्म कुरु मा दिवा स्वाप्सीः ' इति । ' अग्नये समिधमाहार्षम्' इति घृतेनाक्ताः समिध आदधाति । 'अग्नये समिधमाहार्षं बृहते जातवेदसे । यथा त्वमग्ने समिधा समिध्यस एवमहमायुषा वर्चसा तेजसा सन्या मेधया प्रज्ञया प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन धनेन समेधिषीय स्वाहा ॥ अप्सरासु या मेधा गन्धर्वेषु च यन्मनः । दैवी मेधा मनुष्यजा सा मां मेधा सुरभिर्जुषतां स्वाहा ॥ भूः स्वाहा, भुवः स्वाहा, स्वः स्वाहा, भूर्भुवः स्वः स्वाहा ' इति । ' इयं दुरुक्तात् ' इति मेखलामाबध्नीत । ' इयं दुरुक्तात्परिबाधमाना वर्णं पवित्रं पुनती म आगात् । प्राणापानाभ्यां बलमाभरन्ती स्वसा देवी सुभगा मेखलेयम् ॥ ऋतस्य गोप्त्री तपसः परस्पी घ्नती रक्षः सहमाना अरातीः । सा मा समन्तादभिपर्येहि भद्रे भर्तारस्ते मेखले मा रिषाम ॥ ' इति ॥

ऋतस्य आश्रमधर्मस्य गोप्त्री तपसश्च परस्पी पालयित्री अरातीश्च शत्रून् सहमाना प्रसह्य वर्तमाना । मा रिषाम मा नश्येम । भर्तारः धर्तारः । शिष्टं स्पष्टम् ।
श्रीव्या.

अथ परिधानानि ॥

' स्वस्त्ययनोऽसि ' इति दण्डं प्रयच्छेत् ॥

'मातरं प्रथमं भिक्षेताथान्याः सुहृदः । भवत्पूर्वया ब्राह्मणो भिक्षेत– ' भवति भिक्षां देहि ' इति । भवन्मध्यमया राजन्यः– ' भिक्षां भवति देहि ' इति । भवदन्त्यया वैश्यः– 'देहि भिक्षां भवति ' इति । क्षां च हिं च न वर्धयेत् । भवत्पूर्वया वा सर्वे ॥

भिक्षावाक्ये क्षा इति च हि इति चाक्षरे न वर्धयेत् नोच्चैर्ब्रूयात् । नीचैस्तरामितरवर्णेभ्यो ब्रूयादित्यर्थः ।
श्रीव्या.

'प्रायश्चित्तं चेदुत्पद्येत ' जीवा स्थ जीवयत मा' इत्येनमप आचामयेत् । ' जीवा स्थ जीवयत माऽऽपो नाम स्थामृता नाम स्थ स्वधा नाम स्थ तासां वो भुक्षिषीय सुमतौ मा धत्त शिवा मे भवत नमो वोऽस्तु मा मा हिंसिष्ट ' इति । भैक्षमुपन्याहृतम् ॥

ऊर्ध्वं त्रिरात्रात्सावित्रीं प्रब्रूयात्तदहर्वा । पश्चादग्नेः पच्छोऽर्धर्चशः सर्वामित्यनूच्य वेदमारभ्य ' अग्ने व्रतपते ' इति घृतेनाक्ताः समिध आदधाति ' अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा ॥ वायो व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा ॥ आदित्य व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा ॥ व्रतानां व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा ॥ ' इति । तदेतद्व्रतादेशनं सर्वत्र । व्रतसमाप्तौ 'अग्ने व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि स्वाहा' इति मन्त्रान्संनमयेत् ॥

एवमुक्तां बटुः सावित्रीमनूच्य वेदमादितः किंचिदेकसामावरमृक्पूर्वमाचार्यादधीत्य पठिष्यमाणैश्चतुर्भिर्मन्त्रैश्चतस्रो घृतेनाक्ताः समिधोऽग्नावादध्यात् । उपनयनप्रभृत्यासमावर्तनपर्यन्तं यद्ब्रह्मचर्यं तद्व्रतमात्र( ? मत्र ) एभिर्मन्त्रैरादिश्यते । तदिदं षोडशे गोदानकरणे विसृज्य पुनरपि तत्र ' अपोद्धृत्य स्रजमादेशयेत ' इति विधास्यति । समावर्तने त्वस्यात्यन्तविसर्गः । इदं विसृज्यैव गौदानिकाद्यन्तरालव्रतादेशः ।
श्रीव्या.

---

(१) जैगृ. १।१२; मभा. २।४३ ( मातरं...भवत्पूर्वया० ) 'देहि भिक्षां भवति' इति ('भिक्षां देहि भवति ') ( भवत्पूर्वया वा सर्वे० ) गृह्यस्मृतिः .

(१) जैगृ. १।१२.

अथैनं संशास्ति– 'ब्रह्मचार्याचार्याधीनः प्रशान्तोऽधःशायी दण्डमेखलाजिनजटाधारी स्त्र्यनृतमधुमांसगन्धमाल्यवर्जी भव' इति। त्रिरात्रमक्षारालवणाश्यूर्ध्वं त्रिरात्रात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य पलाशं गत्वा व्याहृतिभिरभ्यज्य स्थालीपाकेनेष्ट्वा यज्ञोपवीतं दण्डमित्युदस्य प्रत्येयाद्गौर्दक्षिणा ॥

## वैखानसगृह्यसूत्रम्

वर्णभेदेन व्याहृतिसंख्याभेदः प्राणायाममन्त्रभेदः समिदाधानमन्त्रभेदश्च, संभारसंभरणम्, वपनम्, पुण्याहवाचनम्, कुमारभोजनम्, होमः, अश्मस्पर्शनम्, वस्त्रमेखलोत्तरीययज्ञोपवीतकृष्णाजिनदानम्, उपनयनम्, व्रतोपदेशः, कर्णजपः, पुनर्होमः, हुतशेषभोजनम्, सावित्र्यध्यापनम्, पुनर्होमः, समिदाधानम्, दण्डभिक्षापात्रदानम्, भिक्षाचरणम्, होमशेषः, आसन्ध्यं मौनावस्थानम्, आश्रमधर्मोपदेशः, व्रतविसर्गः

[१] 'ओं भूर्भुवः सुवस्तत्सवितुः' इति सावित्री। 'ओं भूर्भुवः सुवस्तत्सवितुरापो ज्योती रसः' इति प्राणायामः। 'ओं भूर्भुवः सुवः स्वाहा' इति व्याहृतिः। 'अग्नये समिधम्' इति, द्वे 'अग्नये समिधौ' इति, चत्वारि 'अग्नये समिधः' इति समिदाधानम्। एतानि ब्राह्मणस्य। 'ओं भूर्भुवस्तत्सवितुः' इति सावित्री। 'ओं भूर्भुवस्तत्सवितुस्तेजो ज्योती रसः' इति प्राणायामः। 'ओं भूर्भुवः स्वाहा' इति व्याहृतिः। 'अग्नये समिधम्' इति, द्वे 'अग्नये समिधौ' इति समिदाधानम्। एतानि क्षत्रियस्य। 'ओं भूस्तत्सवितुः' इति सावित्री। 'ओं भूस्तत्सवितुरग्निर्ज्योती रसः' इति प्राणायामः। 'ओं भूः स्वाहा' इति व्याहृतिः। 'अग्नये समिधम्' इति समिदाधानम्। एतानि वैश्यस्य भवन्ति ॥

(१) वैगृ. २।४–९.

अग्नेर्वायव्यामुपवीताजिनमेखलाहतवस्त्रदण्डशरावाश्मसमिद्दर्भादिसंभारान्दर्भेषु संभृत्य 'सं च त्वे जग्मुः' इति प्रोक्षयति। अथाऽऽज्येनाऽऽघारं हुत्वाऽऽचान्तं मङ्गलयुक्तं कुमारमासयित्वाऽग्नेर्नैर्ऋत्यां मस्तके दर्भौ प्रागुत्तराग्रौ विन्यस्य सरोमाणं दर्भम् 'इन्द्र शस्त्रम्' इति चतुर्भिः प्रदक्षिणं चतुर्दिशं छित्त्वा 'येनावपत्, यत्क्षुरेण' इति सर्वतो वपति नाधो जत्रोः। गोशकृद्युक्ते शरावे केशान्गृह्णीयात्। यत्र मौण्ड्यं शिखाभ्रूवर्जमानखं वपति। स्नात्वाऽऽचान्तं पुण्याहं वाचयित्वा भुक्तवन्तमानयति दक्षिणे कुमारम्। अथ परिस्तीर्य 'आयुर्दा अग्ने, आयुर्दा देव' इति प्रधानं पञ्च वारुणं व्याहृतिपर्यन्तं जुहोति। 'आतिष्ठ' इति वायव्यामश्म पादाङ्गुष्ठेन दक्षिणेन स्पर्शयति। 'या अकृन्तन्' इति वस्त्रम्, 'इयं दुरुक्तात्' इति मेखलाम्, 'परीदम्' इत्युत्तरीयम्, 'यज्ञोपवीतम्' इत्युपवीतम्, 'मित्रस्य चक्षुः' इति कृष्णाजिनं तस्मै ददाति ॥

ततो विधिवदाचमनं कारयित्वा सदस्यानुज्ञाप्य 'देवस्य त्वा' इति बाहू आलभ्योत्तरे प्राङ्मुखः प्राङ्मुखमुपनयीत। 'आयुष्टे विश्वतः' इति दक्षिणपाणिं गृहीत्वोद्धरति। 'अग्निष्टे हस्तमग्रभीत्' इति विसर्जति। 'असावपोऽशान' इत्याचारम्। 'मम हृदये' इति तस्य हृदयस्पर्शनं कृत्वा 'भूर्भुवः सुवः सुप्रजाः' इति प्रशंसति। 'भूरृक्षु त्वा' इति 'भुवो यजुःषु त्वा' इति 'सुवः सामसु त्वा' इति 'इष्टतस्ते' इति 'अनलस्य ते' इति 'इदं वत्स्यावः' इति षड्भिः कर्णे जपित्वा नाम शर्मान्तं कुर्यात्। 'अग्निरायुष्मान्' इत्यादिकैः पञ्चभिर्दक्षिणहस्ते कनिष्ठाद्यङ्गुल्यग्राणि पर्यायेण विसृजेत्। 'आयुर्दाः' इति दक्षिणे कर्णे 'प्रतितिष्ठ वायौ' इति वामे च जपति। 'स्वस्ति देव' इत्यग्निं प्रदक्षिणं कारयित्वा

दक्षिणे निवेश्य 'राष्ट्रभृदसि' इति कूर्चं दत्त्वा 'शं नो देवीः' इति प्रोक्ष्य मूलहोमं व्याहृतिपर्यन्तं जुहोति। 'अदितिस्ते कक्ष्याम्' इति हुतशेषं भोजयित्वा 'योगे योगे तवस्तरम्' इत्याचमनं ददाति। 'शतमिन्नु' इत्यादित्यं नमस्कृत्य 'आगन्त्रा समगन्महि' इति प्रदक्षिणं कारयित्वा 'शकाय त्वा' इत्युत्तमाङ्गमभिमृश्य 'अधीहि भोः' इति तेन प्रार्थितो गुरुरथाऽऽह 'सावित्रीं भोः' इति शिष्यमनुशास्ति। 'गणानां त्वा' इति गणमुख्यम् 'ओजोऽसि' इति सावित्रीम् 'पावका नः सरस्वती' इति सरस्वतीं च प्रणम्य यथोक्तं सावित्रीं पच्छोऽर्धर्चशो व्यस्तां समस्तामध्यापयेत् ॥

धातादिपूर्वं सवित्रे काण्डर्षये 'सदसस्पतिम्, आ देवो यातु, अभीवृतम्, स घा नः, वि जनाञ्छ्यावाः, वि सुपर्णः, भगं धियम्' इति सावित्रव्रतसूक्तम् 'अग्ने वायविन्द्राऽऽदित्य व्रतानाम्' इति सावित्रव्रतबन्धं पञ्चभिर्व्याहृत्यन्तं जुहोति। 'अग्नये समिधम्' इति, द्वे 'अग्नये समिधौ' इति, चत्वारि 'अग्नये समिधः' इति सप्त पालाशाङ्कुराणि घृताक्तानि जुहोति। 'सूर्य एष ते पुत्रः' इत्यादित्यं दर्शयति। अष्टाभिः समिद्भिर्होमकर्मणि शिष्यं योजयेत्। 'यथा ह' इति दक्षिणादिप्रदक्षिणं वेदिं परिमृज्य पूर्ववत्परिस्तृणाति। व्याहृतीः 'एषा ते, मेधां म इन्द्रो ददातु, अप्सरासु, आ मां मेधा' इत्यष्टौ जुहोति। 'यथा ह' इति तथा परिमृज्य 'प्रासावीः' इत्यन्तैश्चतुर्भिः प्रवाहणं कृत्वा 'भूतिः स्म' इति भस्माऽऽलिप्य 'आपो हि ष्ठा' इति प्रोक्ष्य 'यत्ते अग्ने तेजस्तेन' इत्यग्निम् 'उद्वयम्' इत्यादित्यं चोपतिष्ठेत। नित्यं सायंप्रातरेवं जुहुयाद्यतो ब्रह्मवत्तमिदमिज्यमग्निहोत्रमेतन्मूलास्तद्व्रय इति ब्रह्मवादिनो वदन्ति ॥

'अग्निष्ट आयुः' इति दण्डम्, 'इन्द्रो मरुद्भिः' इति शरावं कठिनं वा भैक्षपात्रं दद्यात्। 'भवति भिक्षां देहि' इति ब्राह्मणो ब्रूयात्, क्षत्रियः 'भिक्षां भवति देहि' इति, वैश्यः 'भिक्षां देहि भवति' इति। मौनव्रतेन ब्राह्मणेभ्यो भैक्षमाममितरेभ्यो गृह्णीयात्। 'यस्य ते' इति गुरुर्भैक्षमादाय 'सुश्रवः' इति प्रोक्षयति। हविषाऽपूपलाजसमायुतेन मिन्दाहुती हुत्वाऽन्तहोमो हूयते। मौनव्रतेनाऽऽसंध्यागमात्तिष्ठति। तस्मा आश्रमधर्माण्याचक्षीत ॥

चतुर्थे पञ्चमे सप्तमे वा पुण्ये पुंनाम्नि नक्षत्रे शिष्यमाचान्तं पुण्याहं वाचयित्वाऽग्निं परिस्तीर्य प्राङ्मुखमुपवेशयति। तस्योत्तरे माता ब्रह्मचारी वाऽऽसीत। धातादिपूर्वं सावित्रव्रतसूक्तम् 'अग्ने, वायो, इन्द्र, आदित्य, व्रतानाम्' इत्यूहित्वा 'अचारिषम्, विसर्जयामि' इति सावित्रव्रतविसर्गं हुत्वा पूर्वाणि सूत्रदण्डादीन्यप्सु विसृज्य स्नाताय नवान्युपवीतादीनि पूर्ववद्दत्वा§ .... ॥

## गौतमः

वर्णभेदेन भिक्षावाक्यभेदः, प्रथमभिक्षणीयाः, अभिक्षणीयाः स्त्रियः

'आदिमध्यान्तेषु भवच्छब्दः प्रयोज्यो वर्णानुपूर्व्येण ॥

द्विपदस्य भिक्षां देहीतिशब्दस्य प्रार्थनायां देहीत्यस्यापि च सामर्थ्यात् प्राप्तस्य आदौ ब्राह्मणेन भवच्छब्दः प्रयोक्तव्यः, मध्ये क्षत्रियेण, अन्ते वैश्येन। भवच्छब्दस्य प्रातिपदिकत्वात्केवलस्य च प्रयोगाभावात् स्त्रीणां सकाशे तदामन्त्रितविभक्त्यन्तः प्रयोक्तव्यः— 'भवति भिक्षां

---

§ प्राजापत्यव्रतस्य सावित्रव्रतविसर्गसमनन्तरमेवानुष्ठेयत्वेन विहितत्वाद्वाक्यमसमाप्तम्।

(१) गौध. २।४३; मभा.; गौमि. २।४२ पूर्व्येण (क्रमेण); स्मृच. ४० गौमिवत्; संप्र. ४८१ न्तेषु (वसानेषु); मुक्ता. ९५.

देहि ' इति, पुरुषसकाशे ' भवन् भिक्षां देहि ' इति । प्रेत्युपसर्गात् स्मृत्यन्तरोक्तमपि द्रष्टव्यम् । तदपि क्षकार-हिकारौ नोच्चैर्वक्तव्याविति । यथाऽऽह गृह्यस्मृतिः– " ब्राह्मणो भिक्षेत ' भवति भिक्षां देहि ' इति, भवन्मध्यया राजन्यः ' भिक्षां भवति देहि ' इति, भवदन्त्यया वैश्यः ' भिक्षां देहि भवति ' इति । क्षां च हिं च न वर्धयेत्" इति । वर्णग्रहणं शूद्रस्य मन्त्रप्रापणार्थम् । ततश्च त्रयाणामेव वर्णानामन्यतमो मन्त्रो द्रष्टव्यः । अन्यो वा रचनाविशेषः कर्तव्यः, ' वैश्यवच्छूद्रवृत्तिः ' इति स्मृत्यन्तरदर्शनात् वैश्योक्तो वा द्रष्टव्यः । अनियतवृत्तिज्ञापनार्थं साक्षान्मन्त्रो नोक्तः । तथा च वसिष्ठः– ' अनियता च वृत्तिरनियतकेशवेषाः ' इत्यादि । एकस्यैव विकल्पो मा भूदिति अनुपूर्वग्रहणम् । ¶मभा.

[1]अग्रे भिक्षेत जननीमप्रत्याख्यायिनी च या ।
ब्राह्मणं तादृशं वाऽपि स्त्रियमग्रे तु याचयेत् ।
गर्भिणीं नैव याचेत विधवामन्तिमां न च ॥

## हारीतः

सावित्र्युपदेशे उपसत्त्यादिधर्माः, भिक्षावाक्यस्य सप्ताक्षरत्वमुच्चारणे विशेषश्च

[2]तस्मादुपेतायोपसन्नाय समीक्षिताय समीक्षमाणाय ब्रह्मानुब्रुवन्ति नेतरेभ्यः, तान् ब्रह्मचारिण इत्याचक्षते ॥

ब्रह्मशब्दोऽत्र सावित्रीपरः । $ब्रक. ११४

[3]सप्ताक्षरां चरेद्भिक्षां क्षां च हिं च न वर्जयेत् ॥

क्षां च हिं च इत्यनेन भिक्षां देहीति पदयोरपि प्रयोगो मत इत्युक्तमिति कल्पतरुः । अतः सप्ताक्षरत्वं स्त्रियामेव संबोध्यायामित्यवधेयम् । वीमि. १।३०

¶ गौमि., स्मृच. मभागतम् ।
$ संप्र. ब्रकवत् ।
(१) मुक्ता. ९६.
(२) ब्रक. ११४; संप्र. ४२९.
(३) वीमि. १।३०.

## वृद्धहारीतः

तप्तचक्रमुद्राधारणपूर्वकं सावित्र्यध्यापनम्, गुरुपूजनम्, शिष्यानुशासनम्

[1]जातकर्मणि वा चौले तथा मौञ्जीनिबन्धने ।
चक्रस्य धारणं यत्र भवेत्तस्य तु तत्र वै ॥
उपनीय गुरुः शिष्यं स्वगृह्योक्तविधानतः ।
अध्यापयेच्च सावित्रीं तथा मन्त्रद्वयं शुभम् ॥
प्रातमन्त्रस्ततः शिष्यः पूजयेच्छ्रद्धया गुरुम् ।
गोभूहिरण्यरत्नाद्यैर्वासोभिर्भूषणैरपि ॥
सद्वृत्तौ शासयेच्छिष्यमाचार्यः शंसितव्रतः ॥

## बौधायनः

वर्णभेदेन भिक्षावाक्ये विशेषः, वाक्योच्चारणनियमः, पादोपसंग्रहणविधिः

[2]भवत्पूर्वां भिक्षामध्यां याच्ञान्तां चरेत् सप्ताक्षराम् । क्षां च हिं च न वर्धयेत् ॥

भिक्षाचरणे कर्तव्ये ब्राह्मणस्य तावन्मन्त्रोद्धारमाह– भवदिति । भिक्षामन्त्रं व्यक्तमेवोच्चरेत् । भवच्छब्दपूर्वां भिक्षाशब्दमध्यां याच्ञाप्रतिपादकशब्दान्तां सप्ताक्षरां चरेत् । एवं हि ' भवति भिक्षां देहि ' इति संपन्नो भवति । तत्र च क्षाहिशब्दौ न वर्धयेत् नोच्चैराचक्षीतेत्यर्थः । ‡वचने अवचने कण्वनिपातः(१) । $उच्चैराचक्षीतेति विधिर्गम्यते । यद्वा– ओदनादिदेयद्रव्यभेदे दातृभेदे च न वर्धयेत् द्विवचनबहुवचनप्रयोगो न कर्तव्य इत्यर्थः । एवमुच्चारणमदृष्टार्थं भवति । बौवि.

[3]भवत्पूर्वां ब्राह्मणो भिक्षेत, भवन्मध्यां राजन्यः, भवदन्त्यां वैश्यः, सर्वेषु वर्णेषु ॥

‡ ' वचने अवचनकण्वनिपातः ' इति शुद्धिकल्पने ' वचने उच्चैर्वचने अवचने यत् कण्वं पापं प्रत्यवायः तस्य निपातः प्राप्तिः उच्चैर्वचनमवचनतुल्यमित्यर्थः ' इत्यर्थसंभवः ।
$ क्षाहिभिन्नान्यक्षराणीत्यध्याहार्यम्, अन्यथा विरोधः ।
(१) वृहास्मृ. ४।३१–३४. (२) बौध. १।३।१७.
(३) बौध. १।३।१८; कृम. ९४७ (=) (सर्वेषु वर्णेषु० ).

अथ वर्णानुपूर्व्येण भिक्षामन्त्रोच्चारणवेलायां भवच्छब्द-प्रयोगदेशमाह– भवदिति। ब्राह्मणग्रहणं वर्णान्तरार्थ-मनुवादः। वर्णग्रहणेनैव सार्ववर्णिकभैक्षाचरणे सिद्धे सर्वग्रहणात् प्रकृतविषयमिति गम्यते। प्रकृताश्च त्रै-वर्णिकाः, ततश्च पर्युदस्तः शूद्रः। ननु प्रतिलोमपर्यु-दासार्थः स किमिति न भवति? भवतु यदि शूद्रान्न-भोजनप्रतिषेधपराणि वाक्यानि न स्युः। सन्ति हि तानि। बौवि.

[1]दक्षिणं दक्षिणेन सव्यं सव्येन चोपसंगृह्णी-याद्दीर्घमायुः स्वर्गं चेच्छन् ॥

(१) दक्षिणं गुरोर्दक्षिणं पादं दक्षिणेन स्वदक्षिण-पाणिना। एवं सव्यं सव्येनेत्यत्रापि बोध्यम्। संप्र. ४५५

(२) दक्षिणं पादं दक्षिणेन पाणिना स्पृशेत् इतरं चेतरेण तदभिमुख एव। आह च– 'व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः' (मस्मृ. २।७२) इति। दीर्घ-मायुर्ध्यायन् स्वर्गं च। बौवि.

[2]'असावहं भोः' इति श्रोत्रे संस्पृश्य मनः-समाधानार्थम् ॥

(१) श्रोत्रसंस्पर्शश्च समाचारात् देशनियत इति केचित्। विश्व. १।२६

(२) मनःसमाधानार्थम् अभिवाद्यस्यावधानार्थ-मित्यर्थः। ¶ ब्रक. १८८

(३) उपसंग्रहणमिति शेषः। $ स्मृच. ३९

¶ संप्र. ब्रकवत्।

$ पमा. स्मृचवत्।

(१) बौध. १।३।२६; ब्रक. १८८ गृह्णीयाद् (ग्रहणं) चेच्छन् (चेप्समानः); संप्र. ४५५ गृह्णीयाद् (ग्रहणं) चेच्छन् (चेप्सतः).

(२) बौध. १।३।२७; विश्व. १।२६ मनःस (मनसः स); अप. १।२६ (=) ('असावहं भोः' इति०); ब्रक. १८८; स्मृच. ३९ (श्रोत्रे संस्पृश्य) एतावदेव; पमा. ३०० (श्रोत्रे संस्पृश्य मनः समाधाय) एतावदेव; गप. १४४; निप्र. ४०३; संप्र. ४५५; मुक्ता.

(४) उपसंग्रहणवेलायां च स्वश्रोत्रसंस्पर्शः कर्तव्यः चित्तसमाधानार्थम्। तत्र मन्त्रः– 'असावहं भोः' इति। अस्मीति वाक्यसमाप्तिः। असावित्यात्मीयनाम-ग्रहणम्। 'गोविन्दशर्मा नामास्मि' इति प्रयोगः। बौवि.

[1]अधस्ताज्जान्वोरा पद्भ्याम् ॥

(१) आ पद्भ्याम् इति जानुनी आरभ्य पाद-पर्यन्तं स्पृशेदित्यर्थः। ब्रक. १८८

(२) अधस्तादित्यादिकं दक्षिणं दक्षिणेन सव्यं सव्येनेत्यनेनान्वयि। संप्र. ४५५

(३) पादयोः कियान् देश उपसंग्राह्य इत्यत आह– अधस्तादिति। उपसंगृह्णीयादिति शेषः। बौवि.

## आपस्तम्बः हिरण्यकेशिधर्मसूत्रं च

अभिवादनप्रकारः, आचार्योपसंग्रहणविधिः तत्प्रकारश्च

[1]दक्षिणं बाहुं श्रोत्रसमं प्रसार्य ब्राह्मणोऽभि-वादयीतोरःसमं राजन्यो मध्यसमं वैश्यो नीचैः शूद्रः प्राञ्जलिः ॥

१११ पमावत्; संको. १२६ पमावत्; कृम. ९६४ (श्रोत्रे संस्पृशेत्) एतावदेव.

(१) बौध. १।३।२८; विश्व. १।२६; अप. १।२६ (=); ब्रक. १८८; गप. १४४ न्वोरा प (न्वोः प); निप्र. ४०३ गपवत्; संप्र. ४५२.

(२) आध. १।५।१६ प्राञ्जलिः (प्राञ्जलि); हिध. २६।२।१६–१७; विश्व. १।२६ (दक्षिणं बाहुं श्रोत्रसमं प्रसार्य ब्राह्मणोऽभिवादयेद्) एतावदेव; अप. १।२६ पृ. ५४; ब्रक. १८६; मभा. ६।५; गौमि. ६।५; स्मृच. ३६; पमा. २९७ वादयीतो (वादयेदु); मपा. २५–२६ दक्षिणं बा (स्वदक्षिणबा) प्राञ्जलिः + (सर्वत्र) शेषं पमावत्; गभा. २१८ दक्षिणं (स्वदक्षिणं) वाद-यीतो (वादयेदु); गप. १४३ पमावत्; निप्र. ४०२–४०३ पमावत्; संप्र. ४५४; मुक्ता. १०८ प्राञ्जलिः (प्राञ्जलिम्); संग. ६८६ गभावत्.

( १ ) यदापस्तम्बेनोक्तम्– 'दक्षिणं बाहुं श्रोत्रसमं प्रसार्य ब्राह्मणोऽभिवादयेत्' इत्यादि, तत् दृष्टार्थत्वात् दूरस्थविषयं द्रष्टव्यम् । विश्व. १।२६

( २ ) नीचैः शूद्रः । मध्यापेक्षया नीचत्वम् । ब्रक. १८६

( ३ ) अभिवादनप्रकारं वर्णानुपूर्व्येणाऽऽह– दक्षिणमिति । ब्राह्मणोऽभिवादयमानः आत्मनो दक्षिणं बाहुं श्रोत्रसमं प्रसार्याभिवादयीत । उरःसमं राजन्यः । दक्षिणं प्रसार्याभिवादयीतेत्यत्रानुवर्तते । एवमुत्तरयोरपि । मध्यसमम् उदरसमम् । ऊरुसममित्यन्ये । नीचैः पादसमं शूद्रोऽभिवादयीत । प्राञ्जलि यथा भवति तथा अभिवादयति । अञ्जलिं कृत्वेत्यर्थः । प्राञ्जलिरिति युक्तः पाठः । उ.

( ४ ) अत्र बाहुपदं पाणिपरम् । तत्प्रसारणं च शिरःसंयोगार्थम् । तेन ब्राह्मणस्य कर्णपर्यन्तं शिरसो नमनम्, क्षत्रियस्य हृदयपर्यन्तम्, वैश्यस्य नाभिपर्यन्तम्, शूद्रस्य ऊर्वादिपादपर्यन्तमिति गम्यते । उरः वक्षः । मध्यं नाभ्युपलक्षितो देशः । नीचैरिति नीचैस्त्वं मध्यापेक्षया । प्राञ्जलिरिति सर्वान्वयि । संप्र. ४५४

**'प्लावनं च नाम्नोऽभिवादनप्रत्यभिवादने च पूर्वेषां वर्णानाम् ॥**

( १ ) प्लावनं प्लुतकरणम् । नाम्नः नामधेयान्त्यस्वरस्येत्यर्थः । पूर्वेषां ब्रह्मक्षत्रविशाम् । $अभिवाद्य इति वाक्यशेषः । ब्रक. १८६

( २ ) अभिवादनस्य यत्प्रत्यभिवादनं तत्राभिवादयितुर्नाम्नः प्लावनं कर्तव्यं प्लुतः कर्तव्य इत्यर्थः । पूर्वेषां वर्णानां शूद्रवर्जितानामभिवादयमानानाम् । 'प्रत्यभिवादेऽशूद्रे' ( पासू. ८।२।८३ ) इति पाणिनीयस्मृतिः । तत्र 'वाक्यस्य टेः' इत्यनुवृत्तेः प्रत्यभिवादवाक्यस्यान्ते नामप्रयोगः, तस्य टेः प्लुतः 'आयुष्मान् भव सौम्या३' इति प्रयोक्तव्यः । स्मृत्यन्तरवशान्नाम्नश्च पश्चादकारः । तथा च मनुः– 'आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने । अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः ॥' ( मस्मृ. २।१२५ ) इति । 'आयुष्मान् भव सौम्य देवदत्ता ३ अ' इति प्रयोगः । शंभुर्विष्णुः पिनाकपाणिश्चक्रपाणिरित्यादीनां नाम्नां संबुद्धौ गुणे कृते 'एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ' (पासू. ८।२।१०७) इत्ययं विधिर्भवति । अन्ते अकारः । 'तयोर्य्वावचि संहितायाम्' (पासू. ८।२।१०८) इति यकारवकारौ च भवतः– 'शम्भा३ व, विष्णा३ व, पिनाकपाणा३ य, चक्रपाणा३ य' इति । अत्र सूत्रे 'प्रत्यभिवादने च' इति चकारस्यार्थं न पश्यामः । अपर आह– 'अभिवादने प्रत्यभिवादने च प्लावनम्' इति । अस्मिन्नपि पक्षे द्वन्द्वेनाभिहितत्वाच्चशब्दोऽनर्थक एव । अभिवादने च शास्त्रान्तरे न क्वापि प्लुतो विहितः । तस्मादनर्थक एव चकारः । अनर्थकाश्च निपाता बहुलं प्रयुज्यन्ते । § उ.

**'उदिते त्वादित्य आचार्येण समेत्योपसंग्रहणम् ॥**

( १ ) गुरुरत्राऽऽचार्यः पिता वा । अप. १।२६

$ इदमत्र चिन्त्यम्– आदर्शपुस्तके 'अभिवाद्य' इति निर्विसर्गपदस्यावतरणचिह्नमध्ये मुद्रितत्वात् ल्यबन्तमिदं पदमिति संपादकाभिप्रायो गम्यते । ल्यबन्तं तु वाक्ये नान्वेति । संपादकभ्रमकल्पने तु प्रथमान्तत्वं सप्तम्यन्तत्वं वाऽऽश्रयणीयम् । तत्रापि प्रथमान्तमनन्वयि । परिशेषात् सप्तम्यन्तत्वमाश्रित्य सप्तम्या उपलक्षणार्थत्वं वर्णानामिति षष्ठ्या निर्धारणार्थत्वं चाभ्युपेत्य 'वर्णानां मध्ये योऽभिवाद्यस्तस्मिन् सति' इत्यर्थापने नानन्वयदोषः, किंतु ब्राह्मणादावभिवाद्ये प्लावनं व्याचक्षाणस्य . कल्पतरुकारस्य ब्राह्मणादावभिवादके प्लावनं व्याचक्षाणैर्हरदत्तादिभिर्विरोधो मनुविरोधश्चेति ।

§ संप्र. उगतम् ।

(१) आध. १।५।१७; हिध. २६।२।१८ ( प्लावनं च नाम्नोऽभिवादने पूर्वेषां वर्णानाम् ); ब्रक. १८६; संप्र. ४५४; मुक्ता. ११२.

(१) आध. १।५।१८; हिध. २६।२।१९ त्वादित्य ( आदित्य ); अप. १।२६; ब्रक. १८८, संप्र. ४५५ हिधवत्; मुक्ता. १११ आचा ( त्वाचा ); संर. ३१५ र्येण ( र्येणाध्ययनाय ) हिध.

(२) उदिते त्वादित्ये आचार्येण अध्ययनार्थं समेत्य वक्ष्यमाणेन विधिनोपसंग्रहणं कुर्यात् । उ.

³सदैवाभिवादनम् ॥

अन्यदा सर्वदा पूर्वोक्तप्रकारेणाभिवादनमेव । अयमनुवाद उत्तरविवक्षया । ¶ उ.

³उपसंग्राह्य आचार्य इत्येके ॥

अभिवादनप्रसङ्गे सदैव उपसंग्राह्य आचार्य इत्येके मन्यन्ते । उ.

³दक्षिणेन पाणिना दक्षिणं पादमधस्तादभ्यधिमृश्य सकुष्ठिकमुपसंगृह्णीयात् ॥

(१) मनुः– 'व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः। सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ॥' (मस्मृ. २।७२) इति । यत्त्वापस्तम्बोक्तम्– 'दक्षिणं पादं पाणिभ्यां परिमृज्य हस्तं गृह्णीयात्' इति तत् प्रसादविशेषार्थत्वान्नैमित्तिकम् । विश्व. १।२६

(२) ननु किमिदमुपसंग्रहणम्? तदाह– दक्षिणेनेति । आत्मनो दक्षिणेन पाणिना आचार्यस्य दक्षिणं पादम् अधस्तादभ्यधिमृश्य, अधिशब्द उपरिभावे, अधस्तादुपरिष्टाच्चाभिमृश्य सकुष्ठिकं सगुल्फम्, साङ्गुष्ठमित्यन्ये, उपसंगृह्णीयात् इदमुपसंग्रहणम्, एतत्कुर्यात् । § उ.

⁴उभाभ्यामेवोभावभिपीडयत उपसंग्राह्यावित्येके ॥

(१) उभाभ्यां पाणिभ्याम् उभौ पादौ अभिपीडयता सम्यक् पीडयता । ब्रक. १८८

(२) उभाभ्यां पाणिभ्याम् उभावेवाऽऽचार्यस्य पादौ अभिपीडयतो माणवकस्य उपसंग्राह्यावित्येके मन्यन्ते । अभिपीडयत इति 'कृत्यानां कर्तरि' (पासू. २।३।७१) इति कर्तरि षष्ठी । अत्र मनुः– 'व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः । सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन च दक्षिणः ॥' इति । ‡ उ.

## वसिष्ठः

भिक्षावाक्यप्रकारा वर्णभेदेन, प्रथमभिक्षणीयाः, उपनयने आमान्नभिक्षा, प्रत्यभिवादनवाक्ये प्लावनविधिः

¹भवत्पूर्वां ब्राह्मणो भिक्षां याचेत, भवन्मध्यां राजन्यः, भवदन्त्यां वैश्यः ॥

²अप्रत्याख्यायिनं पूर्वं स्त्रियं वा तादृशीं पुनः । भिक्षेत भिक्षां प्रथमं भवान् भिक्षां ददात्विति । भवति भिक्षां देहीति स्त्रियं वाऽग्रेऽपि मातरम् ॥

³मौञ्जीकर्मावसानान्तमामभैक्षं समाहरेत् ॥

* ⁴यो विद्यादभिवदितुम् 'अहमयं भोः' इति ब्रूयाद्यश्च न विद्यात्प्रत्यभिवादमामन्त्रिते स्वरोऽन्त्यः प्लवते संध्यक्षरमप्रगृह्यमायावुभावं चाऽऽपद्यते यथा भो भाविति ॥

---

¶ संप्र. उगतम् ।

§ संप्र. उज्ज्वलानुवादः । मुक्ता. उवत् ।

(१) आध. १।५।१९ ; हिध. २६।२।२०; अप. १।२६ ; ब्रक. १८८; संप्र. ४५५ ; मुक्ता. १११.

(२) आध. १।५।२० ; हिध. २६।२।२१ ; अप. १।२६ ह्य आचा (ह्याऽऽचा) ; ब्रक. १८८ ; संप्र. ४५५.

(३) आध. १।५।२१ ; हिध. २६।२।२२ दभ्यधि (दभि) ; विश्व. १।२६ (दक्षिणं पादं पाणिभ्यां परिमृज्य हस्तं गृह्णीयात्) ; ब्रक. १८८ भ्यधि (ध्यभि) ; संप्र. ४५५ ब्रकवत् ; मुक्ता. १११.

(४) आध. १।५।२२ ; हिध. २६।२।२३ ; ब्रक. १८८ त उप (तोप) ; संप्र. ४५५–४५६ भिपीड (पि पीड) ; मुक्ता. १११.

‡ संप्र., मुक्ता. उवत् ।

* गौमिव्याख्यानम् 'आयुष्मान्' इति मनुवचनव्याख्याने द्रष्टव्यम् । चम., बाल. तत्रैव गतार्थम् ।

(१) वस्मृ. ११।५० ; प्रपा. २२९ आश्वलायनः.

(२) मुक्ता. ९६ ; आन. १५७ (=) द्वितीयार्धमात्रम्.

(३) मुक्ता. ९६.

(४) वस्मृ. १३।१४ ; अप. १।२६ (आमन्त्रिते स्वरोऽन्त्यस्य प्लवते संध्यक्षरमप्रगृह्यमायाउभावं च) एतावदेव ; ब्रक. १८७ अहमयं (अयमहं) वाद (वादन) ऽन्त्यः (ऽन्त्योऽस्य) यावुभावं चाऽऽपद्यते (याउभावं च); मभा. ६।५ (यो विद्या... प्रत्यभिवादम्०) यथा (तथा) ; गौमि. ६।५ (आमन्त्रिते योऽन्त्यः स्वरः स प्लवते संध्य-

(१) आमन्त्रितविभक्त्यन्तस्य नाम्नोऽन्ते यः स्वरः स प्लवते त्रिमात्रो भवति। तथा प्रगृह्यसंज्ञावर्जितं यत्संध्यक्षरमेकारैकाररूपम् आइभावस्तस्य कार्यः, ओकारौकाररूपं चेत्तदा तस्य आउभावः कार्यः। अत्रोदाहरणानि– 'आयुष्मान्भव सौम्य यज्ञदत्ता ३, भद्रशर्मा३ न्, यज्ञभूता३ इ, चित्रगा३ उ।

$ अप. १।२६

(२) चकारात् प्लुतः। 'प्लुतप्रगृह्या अचि' (पासू. ६।१।१२५) इति प्रगृह्यसंज्ञा प्लुतानामच्येव परे, नान्यत्र(?)। तेनाप्रगृह्यसंध्यक्षरस्य नामान्ते आय् आव् इति स्यात्। एकारैकारयोराय् इति ओकारौकारयोराव् इति। आयुष्मान् भव सौम्य हरा३य्, आयुष्मान् भव सौम्य विष्णा३व्। प्लुतत्वम् उदात्तत्वं च। अस्य मते शर्मपदं विहाय नामान्त्यस्वरप्लुतत्वम्।

* गप. १४५

(३) उदाहरणमाह– यथा भो भाविताति। आमन्त्रितभोःशब्दस्यौकारस्याप्रगृह्यस्याऽऽउभावे कृते भाउपदं निष्पन्नं भवति। इतिशब्दः प्रकारे। यथा आमन्त्रितस्य गङ्गे इत्यस्य गङ्गाइ, तथा आमन्त्रितस्य पटो इत्यस्य पटाउ। प्रगृह्ये तु न भवति। यथोभयामन्त्रणे 'गङ्गायमुने' इत्यत्र। संप्र. ४५४

## विष्णुः

वर्णभेदेन भिक्षावाक्यानि, पादोपसंग्रहणप्रकारः, अभिवादनवाक्यम्, एकहस्ताभिवादननिषेधः

(१)**भवदाद्यं भवन्मध्यं भवदन्तं च भैक्षचरणम्॥**

आदिमध्यावसानेषु भवच्छब्दो भैक्षचरणे क्रमेण योज्यः। वै.

(२)**तस्य च व्यत्यस्तकरः पादावुपस्पृशेत्॥**

(३)**दक्षिणं दक्षिणेनेतरमितरेण॥**

**स्वं च नामास्याभिवादनान्ते भोःशब्दान्तं निवेदयेत्॥**

'अभिवादये' इति शब्दान्ते 'भोः' इति शब्दोऽन्ते यस्य तादृशं स्वं च नाम निवेदयेत्। वै.

(४)**जन्मप्रभृति यत्किंचिच्चेतसा धर्ममाचरेत्।**
**सर्वं तन्निष्फलं याति एकहस्ताभिवादनात्॥**

एतच्च हस्तद्वयेन कार्यम्। अन्यथा दोषश्रवणात्। तथा च विष्णुः 'जन्मप्रभृति...'। * स्मृच. ३६

## शङ्खः

वर्णभेदेन भिक्षावाक्यानि

(५)**आदिमध्यावसानेषु भवच्छब्दोपलक्षितम्।**
**भैक्षस्य चरणं प्रोक्तं वर्णानामनुपूर्वशः॥**

---

$ स्मृच., मपा., गभा. अपगतम्।

* निप्र. गपवत्।

क्षरमप्रगृह्यमाइआउभावं चाऽऽपद्यते) एतावदेव; स्मृच. ३७ (आमन्त्रिते स्वरोऽन्त्यस्य प्लुतः) एतावदेव; मपा. २७ (आमन्त्रिते स्वरोऽन्त्योऽस्य प्लुतः) एतावदेव; गभा. २१८ (आमन्त्रिते स्वरोऽन्त्योऽस्य प्लवते) एतावदेव; गप. १४५ (संध्यक्षरमप्रगृह्यमायावुभावं च) एतावदेव; निप्र. ४०५ (संध्यक्षरमप्रगृह्यमायावुभावं च प्रतिपद्यते) एतावदेव; मच. २।१२५ अशुद्धिबहुलो ग्रन्थः; वीमि. १।२५ (आमन्त्रिते स्वरोऽन्त्यः प्लवते) एतावदेव; संप्र. ४५३ ब्रकवत्; चम. २८ (यो विद्या.. प्रत्यभिवादं॰) (यथा भो भाविति॰); मुक्ता. ११२ (आमन्त्रितो योऽन्त्यः स्वरः स प्लवते) एतावदेव; संको. १२७ (आमन्त्रिते योऽन्त्यस्वरः प्लुतः संध्यक्षरमप्रगृह्यमाइआउभावं चाऽऽपद्यते) एतावदेव; बाल. १।२६ पृ. १४८ चमवत्.

* गभा. स्मृचवत्।

(१) विस्मृ. २७।२५.

(२) विस्मृ. २८।१५; संको. १२६.

(३) विस्मृ. २८।१६–१७.

(४) स्मृच. ३६; पमा. २९७ एक (ह्येक); मपा. २७; मर. ७; गभा. २१८; गप. १४४ धर्ममाचरेत्। सर्वं तन्नि (पुण्यमर्जितम्। तत्सर्वं नि); संप्र. ४६७ पमावत्; मुक्ता. १०८ पमावत्; संम. ३१ सर्वं (धर्मं) वादनात् (वादने); संग. ६८६.

(५) शंस्मृ. २।१२.

## वैखानसधर्मसूत्रम्

अभिवादनोपसंग्रहणप्रत्यभिवादनानि

**'ब्रह्मचारी स्वनाम संकीर्त्याभिवादयेत्— 'अहं भोः' इति। श्रोत्रे च संस्पृश्य गुरोः पादं दक्षिणं दक्षिणेन पाणिना वामं वामेन व्यत्यस्य जान्वोरापादमुपसंगृह्यानतशीर्षोऽभिवादयति। 'आयुष्मान् भव सौम्य ' इत्येनं शंसेत् ॥**

## मनुः

वर्णभेदेन भिक्षावाक्यानि, प्रथमभिक्षणीयाः, उपसंग्रहणम्, अभिवादनप्रत्यभिवादनवाक्ये

**'भवत्पूर्वं चरेद्भैक्ष्यमुपनीतो द्विजोत्तमः।
भवन्मध्यं तु राजन्यो वैश्यस्तु भवदुत्तरम् ॥**

(१) भिक्षाप्रार्थनावाक्यमत्र भैक्षशब्देनोच्यते। तस्य हि भवच्छब्दपूर्वता संभवति, न भक्तादेरर्थस्य। स्त्रीणां च प्रथमं भिक्षमाणतयोपदेशात्प्रार्थनायां च प्रार्थ्यमानस्य संबोध्यत्वात्संबुद्धिविभक्त्यन्तः स्त्रीलिङ्गो भवच्छब्दः प्रयोक्तव्यः। क्रम एव चात्रादृष्टार्थो नियम्यते। यथार्थं तु शब्दप्रयोगः 'भवति भिक्षां देहि' इति। कुतः पुनः संस्कृतशब्दार्थलाभः? यावता स्त्रियः संबोध्यन्ते। ताश्च संस्कृतं नावबुध्यन्ते। नित्यमुपनयनम्, तस्य च शब्दोच्चारणमङ्गत्वेनोक्तमिति। अनित्याश्चापभ्रंशाः, न तैर्नित्यस्य संयोग उपपद्यते। यथैव च शिष्टा असाधूनुपश्रुत्यैकदेशसादृश्येन साधून्संस्मृत्यार्थं प्रतियन्ति, 'असाधुरनुमानेन वाचकः' इति दर्शनेन गाशब्दो हि सादृश्याद्गोशब्दमनुमापयति, ततोऽर्थप्रतिपत्तेः(? त्तिः), एवं स्त्रियः सादृश्यात्साधुभ्यः असाधूनुत्पन्नसंबन्धान् स्मृत्वा तेभ्योऽर्थं प्रत्येष्यन्ति। स्वल्पाक्षरं चैतत्पदत्रयं सर्वत्र प्रसिद्धं स्त्रीभिरपि मुञ्जानम्। एवं भवन्मध्यं क्षत्रियः 'भिक्षां भवति देहि' इति। तथा वैश्यो भवच्छब्द उत्तरमस्येति भवदुत्तरम्। वाक्यं समार्थम्। उपनीत इति भूतप्रत्ययनिर्देशादान्वहिकेऽपि वृत्त्यर्थे भैक्ष्यचरणेऽयमेव विधिरिति दर्शयति। 'एष प्रोक्तो द्विजातीनामौपनायनिकः' इत्यत्रोपनयनप्रकरणमुपसंहरन्नुपनयनाङ्गस्यापि भैक्ष्यस्यायमेव विधिरित्याह। अन्यथा(प्र)करणादुपनयनाङ्गमेवैतत्स्यात्, यदि वा भूतप्रत्ययसामर्थ्यात्प्रकरणं बाधित्वा वृत्त्यर्थ एव भैक्ष्ये। उपनीयमानस्य तदङ्गं यद्भैक्षं यच्चाहरहर्वृत्त्यर्थं तत्र सर्वत्रायं धर्मः। † मेधा.

(२) चरेदिति याच्ञां लक्षयति। अतः कर्मभिर्भैक्षमिति (?)। तेन 'भिक्षां देहि' इति वाक्यरचनाऽर्थसिद्धा। तस्य वाक्यस्याऽऽदिमध्यान्तेषु वर्णक्रमेण सगौरवसंबोधनार्थी(? र्थं) भवत्पदं कार्यमिति विधीयते। तच्च संबुध्यन्तम्, सामर्थ्यात् स्त्रीप्रत्ययवच्च, तासामेव भिक्षाप्रार्थनविषयतया विधानात्। तेन 'भवति भिक्षां देहि' इत्यादि प्रार्थनावाक्यम्। मवि.

(३) चरेदित्यनेन याच्ञा लक्ष्यते। अमुमेवार्थं द्योतयति भैक्षमिति कर्मविभक्त्या। प्रायशो गृहमेधिनां गृहे स्त्रिय एव भिक्षां ददतीति सामर्थ्यात्स्त्रीप्रत्ययवच्च तत्पदं भवति। $ मपा. ३२, ३३

(४) प्राथमिकभिक्षाङ्गभूतसंबोधनपदस्य स्थानं नियमयन् तद्दात्रीराह द्वाभ्याम्। § मच.

(५) उपवीतो द्विजोत्तमः कृतयज्ञोपवीतः भवत्पूर्वं भैक्ष्यं चरेत्। § भाच.

(१) वैध. ९।१०.

(२) मस्मृ. २।४९; ब्रक. ११६; स्मृच. ४०; पमा. ४५३ भैक्ष (भैक्ष्य); मपा. ३२; प्रपा. २२९; मर. ९ पमावत्; संत. ९३६ क्षमुपनी (क्ष्यमुपवी); संप्र. ४८१; मुक्ता. ९५; संम. ४० दुत्तरम् (दन्तिमः); बाल. १।३० पू.

† गोरा., ममु., संप्र., मुक्ता., संम., नन्द. मेधागतम्।

$ शेषं मविगतम्।

§ शेषं मेधागतम्।

**'मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम् ।**
**भिक्षेत भिक्षां प्रथमं या चैनं नावमानयेत् ॥**

( १ ) मात्रादयः शब्दाः प्रसिद्धार्थाः । निजा सोदर्या । या चैनं न विमानयेत् । विमानना अवज्ञानम्, 'न दीयते' इति प्रत्याख्यानम् । तथा च गृह्यम्– 'अप्रत्याख्यायिनमग्रे भिक्षेताप्रत्याख्यायिनीं वा' इति । तदेव हि मुख्यं प्राथम्यं यदुपनीयमानस्य । अहरहस्तु न विमाननाभयमाश्रयणीयम् । ¶मेधा.

( २ ) यत्तु 'मातरं...' इति, तदुपनयनाङ्गभिक्षाविषयमिति 'गुरोः कुले न भिक्षेत' इत्यनेनाविरुद्धम्, नित्यभिक्षाविषयत्वादस्य । §अप.

( ३ ) एवं च 'गुरोः कुले न भिक्षेत' इत्यादेर्वक्ष्यमाणनिषेधस्यापवादः । अतस्तत्रापि गुरुपदमाचार्यपरमेव । तेन पितुराचार्य(पर ?)त्वेऽपि तद्गृहभिक्षणं न निषिद्धम् । निजां सोदरीम् । भिक्षेत याचेत । प्रथमतो भिक्षारम्भे नित्यं या चैनमित्यवशिष्टेऽपि स्त्रीलिङ्गनिर्देशात् स्त्रीष्वेव भैक्षचरणम् । मवि.

¶ गोरा., मुक्ता. मेधागतम् । नन्द., माच. मेधागतं मविगतं च ।

§ स्मृच., पमा., मपा., मर. अपवत् । वीमि., संप्र., चम., संम. अपगतम् ।

(१) मस्मृ. २।५० ; मेधा. नात्र ( न वि ) ; अप. १।२९ (=) मेधावत् ; स्मृच. ४१ ; पमा. ४५४ (=) मेधावत् ; मपा. ३४ चतुर्थपादो नास्ति ; मर. ९ ; संत. ९३६ (=) प्रथमं ( प्रथमां ) ; मच. मेधावत् ; वीमि. १।२९ ; संप्र. ४८३ संतवत्, मनुभविष्यपुराणयोः ; चम. ४५ (=) भिक्षेत ( याचेत ) नाव ( न वि ) ; मुक्ता. ९६ मेधावत् ; संम. ४० (=) नावमान ( न निवार ) ; सिन्धु. ९४७ मेधावत्, पराशरमाधवीये ; विपा. ४८३ मेधावत्, पराशरः ; आन. १५७ मेधावत् ; बाल. १।३० मेधावत् ; संग. ६९० संतवत्, मनुभविष्यत्पुराणयोः, नन्द. मेधावत् ; माच. मेधावत् ; संर. २८८.

( ४ ) पूर्वासंभवे उत्तरापरिग्रहः । ¶ मभु.

( ५ ) या चैनं न विमानयेत् न तिरस्कुर्यात् । विमानितो बालो ब्रह्मचर्यव्रते क्षुब्धः स्यादिति भावः । ¶ मच.

( ६ ) प्रथमवाशब्दोऽवधारणार्थः । $ संर. २८८

**'व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः ।**
**सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन च दक्षिणः ॥**

( १ ) यदुपसंग्रहणं पूर्वश्लोके गुरोरुक्तं तत् व्यत्यस्तपाणिना कार्यम् । कीदृशः पुनः पाण्योर्व्यत्यासः कर्तव्य इत्यत आह– सव्येन हस्तेन सव्यः पादः स्प्रष्टव्यः स्पर्शः कर्तव्यः, न तु चिरं निपीड्याऽऽसितव्यम् । एष च व्यत्यासो युगपदितरेतरदिक्संचारेण हस्तयोर्भवति । अग्रतः स्थितेन संमुखेन गुरोरुपसंग्रहणं कर्तव्यम् । तत्र वामो दक्षिणमार्गे नीयते, दक्षिणो वाममित्येवं सव्येन सव्यः स्पृष्टो भवति, दक्षिणेन च दक्षिण इत्येष पाणिव्यत्यासः ।

अन्ये तु विन्यस्तपाणिनेति पठन्ति । 'स्पर्शादेव च विन्यासे सिद्धे नाग्नितप्तायःपिण्डस्पर्शनवद्दाहभयादङ्गुल्यग्रमात्रेण स्पर्शनं कर्तव्यम्, अपि तु हस्तौ विन्यसितव्यौ निधातव्यौ । पीडनं तु पीडाकरं निषिद्धम्' इति वर्णयन्ति । ‡मेधा.

¶ शेषं मेधागतम् ।

$ शेषं मेधागतम् अपगतं च ।

‡ गोरा., अप., स्मृच., पमा., संप्र., नन्द. मेधागतम् ।

(१) मस्मृ. २।७२ ; विश्व. १।२६ ; मेधा. व्यत्यस्त ( विन्यस्त ) इत्यपि पाठः ; अप. १।२६ ; ब्रक. १८७–१८८, २४४ ; मभा. १।५८ ; गौमि. १।५३ ; उ. १।५।२२ ; स्मृच. ३९ ; पमा. ३०० ; मपा. ९९ ; मर. १० ; दीक. १।२६–२७ उत्त. ; गभा. २३७ ; गप. १४३ (=) ; निप्र. ४०२, १५ ( भागः २ ) ; वीमि. १।२६ (=) स्प्रष्टव्यो ( संग्राह्यो ) ; संप्र. ४५५ ; चम. २५ ; मुक्ता. १११ ; संम. ३१ ; विपा. ५२१ ; बाल. १।२६ पृ. १४७ ; संग. ७२७ ; बौवि. १।३।२६ (=) पृ. ; कृम. ९६४. मस्मृ–मेधा–उ–पमा–विपा–भिन्नेषु 'च ( तु )' इति पाठः .

( २ ) उपसंग्रहणप्रकारमाह– व्यत्यस्तेति । व्यत्यस्तौ दक्षिणोत्तरौ स्वस्तिकाकारेण संहतौ पाणी यस्य । एवं चार्थादाभिमुख्येनाभिवादने सव्येन हस्तेन सव्यस्य पादस्य स्पर्शः प्राप्तः तथापि यत्र पर्यङ्कबन्धादिवशात् व्यत्यस्तपाद एवाऽऽस्ते गुरुः तत्र पाणिव्यत्यासो न कार्यः, तथा †संध्यायामात्माभिवादने सव्येन हस्तेन सव्यस्य पादस्य स्पर्शः, स्पर्शार्थत्वात् व्यत्यासस्य इत्येतदर्थे सव्येन सव्य इत्युक्तम् । मवि.

( ३ ) उत्तानहस्ताभ्यां चेदं पादयोः स्पर्शनं कार्यम् । यदाह पैठीनसिः– 'उत्तानाभ्यां हस्ताभ्यां दक्षिणेन दक्षिणं सव्यं सव्येन पादावभिवादयेत्' । दक्षिणोपरिभावेन व्यत्यासो वाऽयम्, शिष्टसमाचारात् । ¶ ममु.

**'अभिवादात्परं विप्रो ज्यायांसमभिवादयन् ।**
**असौ नामाहमस्मीति स्वं नाम परिकीर्तयेत् ॥**

( १ ) येन शब्देन परः संबोध्यते, आशिषं प्रति प्रयोज्यते, कुशलप्रश्नं वा कार्यते, सोऽभिवादः । अस्मात् अभिवादात् अभिवादनप्रतिपादकाच्छब्दात् परम् अव्यवहितपूर्वम् ( ? तोत्तरम् ) इमं शब्दमुच्चारयेत्– 'असौ नामाहमस्मि' इति । असाविति सर्वनाम सर्वविशेषप्रतिपादकम् । अभिमुखीकरणार्थोऽयमीदृशः शब्दप्रयोगः 'मया त्वमभिवाद्यसे आशीर्वादार्थमभिमुखीक्रियसे' । ततोऽध्येषणामवगम्य प्रत्यभिवादमाशीर्दानादि कर्तुमारभते । न च सामान्यवाचिना सर्वनाम्ना प्रयुज्यमानेनैतदुक्तं भवति– 'इदंनामधेयेन मयाऽभिवाद्यसे' इति, अतोऽध्येषणामनवबुध्य कस्याऽऽशिषं प्रयुङ्क्ताम् । अपि च 'स्वं नाम परिकीर्तयेत्' इति श्रुतम् । तत्रासौ 'देवदत्तनामाऽहम्' इत्युक्तेनाभिवादनं प्रतिपद्येत । असाविस्येतस्य पदस्याऽऽनर्थक्यादर्थानवसायः । स्मृत्यन्तरतन्त्रेणापि व्यवहरन्ति सूत्रकाराः । यथा पाणिनिः– 'कर्मणि द्वितीया' ( पासू. २।३।२ ) इति द्वितीयादिशब्दैः । इहापि 'असाविति स्वं नामातिदिशेत्' इति यज्ञसूत्रेऽपि परिभाषितम् । यद्येवं स्वं नामेत्यनेनैव सिद्धेऽसौनामेत्यर्थकम् । नामशब्दप्रयोगार्थम् । कथम् ? स्वं नाम कीर्तयेदिदंनामाहमित्यनेन स्वरूपेण । अहमस्मीति समानार्थत्वाद्विकल्पं मन्यन्ते । अत्र श्लोके एतावदभिवादनवाक्यस्य रूपं सिद्धम्– 'अभिवादये देवदत्तनामाऽहं भोः' । उत्तरेण श्लोकेन भोरित्येतद्विधास्यते । ज्यायांसमिति वचनात्समहीनानामप्यभिवादनमस्ति, न त्वयं प्रकारः, ज्यायोविषयत्वादस्य । * मेधा.

( २ ) कथं पुनरभिवादनं कार्यमित्यत आह– अभिवादात्परमिति । ज्येष्ठाभिवादनं कुर्वन् 'अभिवादये' इत्येतच्छब्दात्परं 'भद्रनामाऽहस्मि' इत्येवं स्वं नामोच्चारयेत् । विप्रग्रहणमिह प्रत्यभिवादवाक्ये च द्विजोपदर्शनार्थम्, त्रयाणां प्रकृतत्वात् । ‡ गोरा.

( ३ ) अभिवादनम् आशीः । अभिवादनं करिष्यन्तं ( ? ष्यन् ) पादोपसंग्रहतदर्थवाक्योच्चारणाभ्यां प्रयोजनत्वा(त्) अभिवादात् अभिवादनव्यापारप्रकाशकात् 'अभिवादये' इति शब्दात् परम् अनन्तरं स्वं नाम कीर्तयेत् 'अमुकशर्मनामाऽहमस्मि' इति । असाविति सविभक्तिकनामनिर्देशादमुकशर्मेत्यपि सविभक्तिकं कार्यम् । ज्यायांसमिति वदन् ज्यायानेवाभिवाद्य इति कथयति ।

† 'आत्मपादौ तथा भूमिं संध्याकालेऽभिवादयेत्' इत्यात्मपादाभिवादनविषयकं पुराणवचनं स्मृतिचन्द्रिकायाम् । इदं त्वत्र विचार्यम्– गुरूपसंग्रहणविषयकस्य 'सव्येन सव्यः' इत्यस्याऽऽत्मपादाभिवादने कथं सार्थक्यमिति ।

¶ मच. ममुवत् मेधागतं च ।

(१) मस्मृ. २।१२२; अप. १।२६ स्वं नाम ( स्वनाम ); स्मृच. ३६; पमा. २९६; मपा. २५ वादयन् ( वादयेत् ) : २९ ( ज्यायांसमभिवादयेत् ) एतावदेव; दीक. १।२६–२७ वादयन् ( वादयेत् ) स्वं नाम ( स्वनाम ); गभा. २१८ मपा.२५वत्; संत. ९०२; बीमि. १।२६ मपा.२५वत्; संप्र. ४५०; चम. २६ अपवत्; मुक्ता. १०७; संम. ३१; बाल. १।२६ पृ. १४७ दीकवत् .

* स्मृच., पमा., मच., चम., मुक्ता., संम., बाल., नन्द., भाच. मेधागतम् । मपा., संप्र. मेधागतं गोरागतं च ।

‡ गभा. गोरागतम् ।

इह प्रत्यभिवादनश्लोके च विप्रपदं द्विजोपलक्षणम् ।
मवि.

( ४ ) संप्रत्यभिवादनविधिमाह– अभिवादात्परमिति । वृद्धमभिवादयन् विप्रादिः अभिवादात्परम् ' अभिवादये ' इति शब्दोच्चारणानन्तरम् ' अमुकनामाऽहमस्मि ' इति स्वं नाम परिकीर्तयेत् । अतो नामशब्दस्य विशेषपरत्वात्स्वनामविशेषोच्चारणानन्तरमभिवादनवाक्ये नामशब्दोऽपि प्रयोज्य इति मेधातिथिगोविन्दराजयोरभिधानमप्रमाणम् । अत एव गोतमः– ' स्वनाम प्रोच्याहमभिवादय इत्यभिवदेत् ', साङ्ख्यायनोऽपि ' असावहं भो इत्यात्मनो नामाऽऽदिशेत् ' इत्युक्तवान् । यदि च नामशब्दश्रवणात्तस्य प्रयोगस्तदा ' अकारश्चास्य नाम्नोऽन्ते ' इत्यभिधानात्प्रत्यभिवादनवाक्ये नामशब्दोच्चारणं स्यात् । न च तत्कस्यचित्संमतम् ।
ममु.

( ५ ) अभिवादात्परम् ' भो अभिवादये ' इत्युच्चारणानन्तरम् ' अमुकोऽहमस्मि ' इत्यत्र स्वकीयं नाम परि सर्वतोभावेन देवशर्मादियुक्तेन( ? क्तत्वेन ) कीर्तयेत् । अत्र ' अभिवादये ' इति विशेषलाभो गोतमवचनात् । यथा ' स्वं नाम प्रयोज्याहमयमभिवादये ' ( गोध. ६।५ ) इति । अत्रायमित्यभिधानात् मनुवचनेऽयमित्यर्थेऽस्मीत्यव्ययम् । तेनाहम् असीति(अव्ययं ?) पुरोवर्तीत्यर्थः । एवं च ' अभिवादात्परम् ' इत्यनेन ' अभिवादये ' इत्यनन्तरप्राप्तस्य नामकीर्तनस्य मनूक्तस्य विरोधाद्गोतमोक्ताभिवादय इत्यन्तपाठो न ग्राह्यः , ' वेदार्थोपनिबन्धृत्वात्प्राधान्यं हि मनोः स्मृतम् । मन्वर्थविपरीता या सा स्मृतिर्न प्रशस्यते ॥ ' इति बृहस्पतिवचनात् । ततश्च कुल्लूकभट्टशूलपाण्युपाध्यायप्रभृतिभिः स्वनामादौ ' अभिवादये ' इति लिखितं युक्तम् , सरलाभवदेवभट्टप्रभृतिभिरन्ते लिखितं हेयम् ।
संत. ९०२–९०३

**'भोःशब्दं कीर्तयेदन्ते स्वस्य नाम्नोऽभिवादने ।**
**नाम्नां स्वरूपभावो हि भोभाव ऋषिभिः स्मृतः ॥**

( १ ) स्वस्य नाम्नोऽन्ते भोःशब्दं कीर्तयेत् । स्वग्रहणमभिवाद्यमानप्रतिषेधार्थम् । परिशिष्टोऽर्थवादः । न च नामाक्षराणामेवान्ते, अपि तु ततः परेषाम् अहमस्मीति एष हि( ? मस्मीत्येषाम् ) । तत्रेतिकरणं प्रयोगावधारणार्थम् । एवमेव प्रयोक्तव्यः । अपि च ' देवदत्तो भो अहम् ' इति दुःश्लिष्टे प्रयोगे विलम्बितायां प्रतिपत्तौ संमुखीभावश्चिरेण स्यात् , तत्र कार्यविरोधः । व्यवहितसंबन्धे कश्चिन्नैवावधानवान्स्यात् ।

स्वरूपभावः स्वरूपस्य सत्ता । अथवाऽभिवाद्यनाम्नां स्वरूपे भवति तत्स्थाने भवति, अतस्तन्नामनिवृत्तिः । भावसाधनः कर्तृसाधनो वा भावशब्दः । स्वरूपभावे इति सप्तम्यन्तो वा पठितव्यः । भावः भो इत्येतस्य यद्भवनं यत्स्वरूपं तन्नाम्नां स्वरूपम् । यथैव नाम गृहीत्वा कस्यचित्संबोधनं क्रियते ' देवदत्त श्रूयताम् ' इति, एवं भोःशब्दोऽप्यामन्त्रितविभक्त्यन्तः संबोधनायैव ऋषिभिः स्मर्यते । $ मेधा.

( २ ) अभिवादने यत्स्वं नाम तदन्ते भोःशब्दं कीर्तयेत् । स चाभिवाद्यसंबोधनार्थः , यत आह नाम्नामिति । यस्मान्नाम्नां या स्वरूपसत्ता सैव भोभावः भो

$ ब्रक , ममु. , गप. , मच. , भाच. मेधागतम् ।

(१) मस्मृ. २।१२४ ; अप. १।२६ कीर्त ( कार ) पू. ; ब्रक. १८५ नाम्नां ( नाम्ना ) ; मवि. भोभाव ( भोःशब्द ) इत्यपि पाठः ; स्मृच. ३६ पू. ; पमा. २९६ द्वितीयपादे ( स्वस्वनाम्नाऽभिवादनम् ) पू. ; मपा. २६ भोभाव ( भोःशब्द ) ; दीक. १।२६–२७ दने ( दयन् ) पू. ; गभा. २१८ भोःश ( भोश ) भाव ( शब्द ) ; गप. १४३ भोःश (भोश) ; निप्र ४०२ गपवत् ; संत. ९०२ ; वीमि. १।२६ पू. ; संप्र. ४५० ; चम. २६ पू. ; मुक्ता. १०७ नाम्नां ( नाम्नः ) ; संभ. ३१ भोःश ( भोश ) स्वस्य ना ( स्वस्वना ) पू. ; सिन्धु. ९६३ पू. ; बाल. १।२६ पृ. १४७ ; संग. ६८५ ; कुम. ९६४ पू.

इत्यस्य सत्तेति मन्वादिभिः स्मृतः । अतश्चाभिवाद्यनामस्थानापन्नं तत्संबोधनार्थं भोःशब्दं कीर्तयेत् । तेन 'अभिवादये भद्रनामाऽहमस्मि भोः' इत्यभिवादनरूपम् । गोरा.

(३) भोःशब्दो नाम्नां स्वीयानां स्वरूपभावः स्वरूपस्य संबोध्यं प्रति प्राप्तिहेतुः । भोःशब्देन हि बोधितोऽसावस्य नाम बुध्यत इत्यर्थः । भूधातुः प्राप्त्यर्थः । भोभाव इति पाठे भोःशब्दस्य भावः सत्तेत्यर्थः । ¶ मवि.

(४) संबोध्यनाम्नां स्वरूपभावः प्रवृत्तिनिमित्तम् आत्ममात्रनिष्ठो यो धर्मः स एव भोभावः भोःशब्दस्य प्रवृत्तिनिमित्तधर्मः मुनिभिरुक्तः । तेन संबोध्यनामस्थानीयं भोरिति । संत. ९०३

(५) एवं च 'अभिवादयेऽमुकनामाऽहमस्मि भोः' इत्येवाभिवादनवाक्यम् । कुल्लूकभट्टस्तु 'स्वनाम प्रोच्याहमयमस्मीति अभिवादः' इति गौतमवाक्ये नामपदोच्चारणस्य कर्तव्यतयाऽप्रतीतेर्नामपदोच्चारणं नेच्छति । मेधातिथिस्तु अहमस्मीत्यनयोः समानार्थतया एकतरप्रयोगमेव मन्यते । अत एव गौतमवाक्येऽहमित्येव श्रूयते । तदुभयमपि 'असौ नामाहमस्मीति स्वं नाम परिकीर्तयेत्' इति मनूक्ताभिवादनवाक्यविरोधादुपेक्षितम् । भवामीत्यर्थेऽपि अस्मीत्यस्य क्रियापदरूपस्य साधुतया न वैयर्थ्यम् । § संप्र. ४५१–४५२

(६) अभिवाद्यस्य नाम्ना संबोधयितुमयुक्तत्वात् भोशब्देन संबोधयेत् । भोभावः भोशब्दसत्ता । नाम्नः स्वरूपभावः नाम्नः स्वरूपसत्ता । समस्तनामधेयकार्यकरणसमर्थो भोशब्द इत्यर्थः । मुक्ता. १०७

(७) अभिवाद्यस्य नाम्ना संबोधयितुमयुक्तत्वात् भोःशब्देन संबोधयेत् । पूज्यं हि भोःशब्दो नामधेयवत् संबोधयतीत्युक्तम् । ‡ नन्द.

¶ शेषं मेधागतम्, मपा. मविवत् ।

§ शेषं मेधागतम् ।

‡ शेषं मेधागतं मुक्तागतं च ।

**'आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने ।**
**अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः ॥**

(१) अभिवादने कृते प्रत्यभिवादयित्राऽभिवादयिता एवं वाच्यः– 'आयुष्मान्भव सौम्य' इति । इतिशब्दः प्रकारे । 'आयुष्मानेधि' 'दीर्घायुर्भूयाः' 'चिरं जीव' इत्येवमादिशब्दपरिग्रहः शिष्टाचारप्रसिद्धो भवति । अकारश्चास्य प्रत्यभिवाद्यस्य यन्नाम तदन्ते योऽकारः स प्लुतः कर्तव्यः । प्लुत इति त्रिमात्रस्य संज्ञा । अकारग्रहणमिकारादीनामपि प्रदर्शनार्थम् । अत्रपेक्षमेव चान्तत्वं द्रष्टव्यम् । व्यञ्जनान्तस्यापि योऽन्त्यः स्वरस्तस्य भवति । पूर्वाक्षर इति प्लुतभाविनोऽकारस्य विशेषणमेतत् । अक्षरमत्र व्यञ्जनम् । तत्र पूर्वस्मिन् यस्मिन् श्लिष्टः स एवमुच्यते (?) । एतदुक्तं भवति– पूर्व एव, नाऽऽगन्तुरकारः प्लुतः कर्तव्यः, किं तर्हि ? य एव नाम्नि विद्यते स एव प्लावयितव्यः । सर्वं चैतदेवं व्याख्यानं भगवतः पाणिनेः स्मृतिसामर्थ्येन । शब्दार्थप्रयोगे च मन्वादिभ्योऽधिकतरः प्रामाण्ये भगवान्पाणिनिः । स च 'प्रत्यभिवादेऽशूद्रे' (पासू. ८।२।८३) (इति) टेः प्लुतिं स्मरति । टिशब्देन योऽन्त्योऽच्

(१) मस्मृ. २।१२५; अप. १।२६ न्ते वाच्यः (न्तर्वाच्यः); अक. १८५; मभा. ६।५; गौमि. ६।५; उ. १।५।१७; मवि. रः प्लुतः (रप्लुतः) इत्यपि पाठः; स्मृच. ३७; पमा. २९७; मपा. २६; मर. ७ वाच्यो विप्रो (विप्रो वाच्यो); दीक. १।२६–२७ रः प्लुतः (रप्लुतः); गभा. २१८; गप. १४४; निप्र. ४०५; संत. ९०२; वीमि. १।२६ मरवत् दीकवत् च; संप्र. ४५० मरवत्; चम. २८; मुक्ता. १११; संम. २१ रश्चास्य (रश्चैव); सिन्धु. ९६३; विपा. २३३ (भागः २); संको. १२७; आन. ७५ सौम्येति वाच्यो विप्रो (सौम्येति विप्रो वाच्यो); बाल. १।२६ पृ. १४७; संग. ६८६ दीकवत्; संव. १२१ (=); कुम. ९६४ पूर्वा (सर्वा).

तदादिशब्दरूपमुच्यते । विप्रग्रहणमविवक्षितम् । क्षत्रियादीनामप्येष एव विधिः । स्मृत्यन्तरसमाचारो ह्येवमेव स्थितः । न चैषां विध्यन्तरमस्ति । अत्रोदाहरणम् 'आयुष्मान् भव देवदत्ता ३' । व्यञ्जनान्तस्य 'आयुष्मानेधि सोमशर्मा३ न्' । $ मेधा.

(२) इदानीं प्रत्यभिवादनविधिमाह– आयुष्मानिति । अभिवादने कृते 'आयुष्मान्भव सौम्य' इत्येवमभिवादयिता वाच्यः । अभिवादयितुश्च नाम्नोऽन्ते यः अकारादिवर्णः, नाम्नामकारान्तत्वनियमाभावात्, स प्लुतः कार्यः । पूर्वाण्यक्षराणि यस्मात्स पूर्वाक्षरः, नाऽऽगन्तुकस्ततोऽपकृष्य वा । तेन 'आयुष्मान्भव सौम्येति भद्रम् (? सौम्य भद्रा३)' इति प्रत्यभिवादरूपम् । गोरा.

(३) तत्र प्रत्यभिवादनविधिर्मनुना दर्शितः– 'आयुष्मान् ...... प्लुतः ॥' । अस्यार्थः– विप्रशब्देन ब्राह्मणविषयमिदम् । अभिवादयिता विप्रः 'आयुष्मान्भव सौम्य' इति वाच्यः । अस्य नाम्नोऽन्ते पूर्वाक्षरप्लुतोऽकारश्च वाच्यः । पूर्वाक्षरप्लुत इत्यकारस्य विशेषणम् । यस्मात्पूर्वमक्षरं प्लुतरूपं स तथोक्तः । अक्षरमित्यचोऽभिधानम् । अकारात्पूर्वो योऽन्त्यः स प्लुतो वाच्यः । तेन व्यञ्जनव्यवधानेऽपि भवति । 'आयुष्मान्भव सौम्य हरदत्ता३ अ', व्यञ्जनव्यवधानेन यथा– 'आयुष्मान्भव सौम्याग्निचि३द' इति प्रयोगः । वसिष्ठस्तु संध्यक्षरे विशेषमाह– 'आमन्त्रिते योऽन्त्यः स्वरः स प्लवते संध्यक्षरमप्रगृह्यमाइआउभावं चाऽऽपद्यते' इति । 'एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ' इति वैयाकरणाः । तत्रान्तेऽकारे प्रयुक्ते 'तयोर्य्वावचि संहितायाम्' इति यकारवकारौ । 'आयुष्मान्भव सौम्य पिनाकपाणा३य' इति, 'विष्णा३व' इति च प्रयोगः । ¶ गौमि. ६।५

(४) अभिवादने कृते अभिवादयिता वाच्य इत्यर्थः । अकार इति । 'आयुष्मान्भव सौम्य' इति वाक्यान्तेऽस्याभिवादकस्य नाम वाच्यम् 'अमुकशर्मन्' इति, तस्य चान्ते अकारो वाच्यः । तस्य च पूर्वाक्षरः पूर्वमक्षरम् । लिङ्गव्यत्ययश्छान्दसः । स प्लुतो वाच्यः । नकारस्याव्यवहितपूर्वत्वेऽपि व्यञ्जनस्य प्लुतत्वायोगात् शर्मेत्यत्रान्त्योऽकार एव पूर्वपदेनोक्त इति तस्यैव प्लुतता । एवं क्षत्रियादेः शर्मस्थाने वर्मादिपदम् । पूर्वाक्षरप्लुत इति क्वचित्पाठः । तत्र पूर्वमक्षरं प्लुतमस्येति सुस्थमेव । ¶ मवि.

(५) तस्मादीदृशं प्रत्यभिवादनवाक्यम्– 'आयुष्मान्भव सौम्य शुभशर्मा३न्' । एवं क्षत्रियस्य 'बलवर्मा३न्', एवं वैश्यस्य 'वसुभूते३' । 'प्लुतो राजन्यविशां वा' इति कात्यायनवचनात्क्षत्रियवैश्ययोः पक्षे प्लुतो न भवति । शूद्रस्य प्लुतो न कार्यः, 'अशूद्रे' इति पाणिनिवचनात् । 'स्त्रियामपि निषेधः' इति कात्यायनवचनात्स्त्रियामपि प्रत्यभिवादनवाक्ये न प्लुतः । गोविन्दराजस्तु ब्राह्मणस्य नाम्नि शर्मोपपदं नित्यं प्रागभिधाय प्रत्यभिवादनवाक्ये 'आयुष्मान्भव सौम्य भद्र' इति निरुपपदोदाहरणस्योपपदोदाहरणानभिज्ञत्वमेव निजं ज्ञापयति । धरणीधरोऽपि 'आयुष्मान् भव सौम्य' इति संबुद्धिविभक्त्यन्तं मनुवचनं पश्यन्नप्यसंबुद्धिप्रथमैकवचनान्तममुकशर्मेत्युदाहरन्विचक्षणैरुपेक्षणीय एव । * ममु.

(६) पूर्वमक्षरं यस्यासौ पूर्वाक्षरः । पूर्वमक्षरं च नामस्थव्यञ्जनम्, स्वराणां स्वरपूर्वकत्वासंभवात् । * पमा. २९७

(७) पूर्वाक्षरश्चानकारस्य पूर्वपूर्वमप्लुत इत्यक्षरः, 'अक्षरं ब्रह्मवर्णयोः' इत्यभिधानविरोधोऽन्यथा(?) । अकारादेर्देवभृत्योः(? त्ययोः) पूर्वत्वाभावेऽपि राहोः-

---

$ अप., स्मृच., दीक., गभा., गप., निप्र., संत., संग., भाच. मेधागतम् । चम., बाल. मेधागतं गौमिगतं च । मपा., मर. मेधागतं मविवच्च ।

¶ संम., नन्द. गौमिगतम् ।

¶ सिन्धु. मविगतम् ।

* शेषं मेधागतम् ।

शिरोवदुपचारात् । अन्तत्वं स्वरापेक्षमिति (न १) व्यञ्जनान्तेऽपि स्यात् । * मच.

(८) पूर्वाक्षरप्लुतः । पूर्वम् अक्षरं व्यञ्जनरूपं यस्य सः । पूर्वाक्षरश्चासौ प्लुतश्चेति कर्मधारयः । $ वीमि. १।२५

(९) अत्र सौम्यपदं देवदत्तादिपदवदभिवादकतत्तन्नामपरम् । अत एव द्वितीयार्धे प्रक्रान्तवाचिना अस्येत्यनेनाभिवादकनामानुवादेन तदन्तिमस्वरे प्लुतत्वं विधीयते । अन्यथा नामोच्चारणप्रापकविध्यन्तरकल्पनं प्रसज्येत । एतेन 'आयुष्मान्भव सौम्यामुक' इति प्रत्यभिवादनवाक्यरचनं यत् केषांचित्तत्परास्तम् । ¶ संप्र. ४५२

(१०) अत्रातिरिक्ताकारपक्ष एव शिष्टाचारानुगुणः । † मुक्ता. ११२

(११) शर्मादिप्रयोगोऽपि कार्य इति केचित् । एवं च 'आयुष्मान्भव देवदत्ता३शर्मन्' इति प्रयोगः । केचित्तु शर्मशब्दान्तर्गताकारं प्लुतं पठन्ति । तच्चिन्त्यम्, शर्मशब्दस्य नामान्तर्गत्यभावात् । तदन्तर्गतौ केवलशर्मप्रयोगाभावादवश्यवक्तव्ये उपपदे 'द्व्यक्षरं चतुरक्षरं वा' इति द्व्यक्षरनामानुपपत्तिः । $ संम. ३२

(१२) अथ प्रत्यभिवादनम् । मनुः— 'आयुष्मान्भव...... प्लुतः ॥' इति । तथा च 'आयुष्मान्भव सौम्य देवदत्तशर्मान् अ' इति वाक्यं संपद्यते इति केचित् । 'प्रत्यभिवादेऽशूद्रे' 'एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ' इति पाणिनीयसूत्रयोरनुसरणे तु अकारान्तदेवदत्तादिनाम्नोऽन्ते विद्यमानस्याकारस्य प्लुतत्वम्, 'हरे, शंभो' इत्यादौ 'हरा ३ इ, शंभा ३ उ' इत्येवं संध्यक्षरविश्लेषेणाक्षरपूर्वभागाकारस्य प्लुतत्वं विधीयते इति मनुवाक्यार्थः संभवति । पूर्वकाय इतिवच्च पूर्वाक्षर इत्यप्यक्षरपूर्वार्धे इत्यर्थे संभवति । लभ्यते चैवं मनुवाक्यस्य 'आमन्त्रिते योऽन्त्यस्वरः प्लुतः संध्यक्षरमप्रगृह्यमाइआउभावं चाऽऽपद्यते' इति वसिष्ठवाक्यसंवादोऽपि । तस्मात् 'आयुष्मान्भव सौम्य देवदत्ता ३' इत्येव प्रत्यभिवाद उचितः । संगच्छते चैवं सति 'देवदत्ता ३, अग्निभूता ३ इ, पटा ३ उ' ईदृशप्रत्यभिवादवाक्योदाहरणं वैयाकरणानाम्, पारिजातादिप्रयोगकाराणां च 'देवदत्ता ३' इति प्लुतान्तप्रत्यभिवादकथनम् । संगच्छते चोक्तमनुवाक्यव्याख्यावसरे व्याख्यातॄणामीदृशग्रन्थः— 'अभिवादकस्य यन्नाम तस्यान्तो योऽकारादिस्वरः, नाम्नामकारान्तत्वनियमाभावात्, स प्लुतः कार्यः' इत्युपक्रम्य पठितः— "एतच्च 'प्रत्यभिवादेऽशूद्रे' इति प्लुतं स्मरन् पाणिनिः स्फुटमुक्तवान्" इति । यदि 'शर्मा३न्' इत्येव प्लुतो विवक्षितस्तदाकारान्तत्वनियमाभावोक्तिः पाणिनीयवाक्योदाहरणे च न संभवतः (१ वन्ति) । अतश्च स्मृत्यर्थसारे प्रत्यभिवादपक्षेषु बहुषु सत्स्वपि 'देवदत्ता ३' इति प्लुत्यङ्गीकारपक्ष एव श्रेयानिति मन्तव्यम् । संको. १२७

(१३) अत्र नामान्ते अकारो न विधीयते, किंतु नामान्ते योऽकारः तस्य प्लुत(त्व)मात्रम् । ततः शर्मशब्दः, 'शर्मान्तं ब्राह्मणस्योक्तम्' इति वचनात् । तेन 'आयुष्मान् भव रामा३ शर्मन्' इत्येव प्रयोगः, न तु 'राम शर्मा३न्' इति, शर्मशब्दस्य नामानन्तर्गतत्वात् । कृभ. ९६४

* शेषं ममुगतम् ।

$ शेषं मेधागतम् ।

¶ शेषं गौमि.अनुवादः मेधागतं च ।

† शेषम् उभयमतानुवादः ।

## याज्ञवल्क्यः

वर्णभेदेन भिक्षावाक्ये विशेषः

'आदिमध्यावसानेषु भवच्छब्दोपलक्षिता ।
ब्राह्मणक्षत्रियविशां भैक्षचर्या यथाक्रमम् ॥

(१) यास्मृ. १।३०; विश्व.; मिता.; अप. लक्षिता (लक्षिताः); पमा. ४५२ भैक्ष (भैक्ष्य); मपा. ३२; मर. ९; प्रर. ८६ पमावत्, मनुः; संत. ९३६ पमावत्; वीमि.; संप्र. ४८१; चम. ४४; मुक्ता. ९६; संको. १२७ पू. स्मृतिः, १५९; कृभ. ९४७ भैक्ष (भिक्षा); संवी. ३०४ (भागः २).

(१) ब्राह्मणविषयैवेयं भैक्षवृत्तिः, इतरयोः प्रतिग्रहानधिकारादित्याशङ्कां निराकरिष्णुर्गुणोपदेशद्वारेण प्राप्तिमाह– आदिमध्येति। विश्व.

(२) कथं भैक्षचर्या कार्या? आदिमध्यावसानेषु भवच्छब्दोपलक्षिता 'भवति भिक्षां देहि' 'भिक्षां भवति देहि' 'भिक्षां देहि भवति' इत्येवं वर्णक्रमेण भैक्षचर्या कार्या। मिता.

(३) भैक्षप्राक्तनवाक्यं भैक्षचर्याशब्देन लक्ष्यते। तत् आदौ मध्येऽवसाने च स्त्रीलिङ्गसंबुद्ध्यन्तभवच्छब्दयुक्तं ब्राह्मणस्य क्षत्रियस्य वैश्यस्य यथाक्रमं प्रयोक्तव्यं भवति। 'भवति भिक्षां देहि' इति ब्राह्मणस्य, 'भिक्षां भवति देहि' इति क्षत्रियस्य, 'भिक्षां देहि भवति' इति वैश्यस्येति सिद्धम्। $ अप.

(४) भैक्षं भिक्षाकदम्बकम्। 'भिक्षादिभ्यो णः- (? भ्योऽण्)' (पासू. ४।२।३८)। मपा. ३२

(५) ब्राह्मणादीनां ब्रह्मचारिणां भिक्षावाक्ये यथाक्रममादौ मध्ये अन्ते च स्थितेन भवच्छब्देन संबोध्यलिङ्गवता उपलक्षिता भैक्षचर्या कार्येत्यर्थः। तेन 'भवति, भवन् वा, भिक्षां देहि' इति ब्राह्मणस्य, 'भिक्षां भवति, भवन् वा, देहि' इति क्षत्रियस्य, 'भिक्षां देहि भवति, भवन् वा' इति वैश्यस्य ब्रह्मचारिणो भिक्षावाक्यं सिध्यति। अत एव हारीतः– 'सप्ताक्षरां चरेद्भिक्षां क्षां च हिं च न वर्जयेत्'। 'क्षां च हिं च' इत्यनेन 'भिक्षां देहि' इति पदयोरपि प्रयोगो मत इत्युक्तमिति कल्पतरुः। अतः सप्ताक्षरत्वं स्त्रियामेव संबोध्यायामित्यवधेयम्। वीमि.

## भरद्वाजः

उपसंग्रहणप्रकारः, चतुर्थदिवसे पूर्वेषां मेखलादीनां त्यागो नवानां धारणं च

**'कर्णयुग्मं स्वहस्ताभ्यां स्पृष्ट्वा जानुद्वयादिकम्।**
**चरणाङ्गुष्ठयुग्मान्तं संमृज्य तु शनैः शनैः॥**
**दक्षश्रोत्रसमं बाहुं दक्षिणं तु प्रसार्य च।**
**बाहूपरि शिरो नम्रमुक्तं तदभिवादनम्॥**

यद्यपि स्मृत्यर्थसारे 'गुरुषूपसंग्रहणं वृद्धतरेष्वभिवादनं वृद्धेषु नमस्कारं कुर्यात्' इत्युक्त्वा 'अभिवादने पादग्रहणं नास्ति, पादस्पर्शनं कार्यं न वा' इत्युक्तम्, तथापि अभिवादनविशेषात्मकोपसंग्रहणविषया भरद्वाजोक्तिरिति न विरोधः। गोत्रपरिचयार्थं प्रवरकीर्तनमपि कार्यमिति वृद्धाः। संको. १२७

**'सगोत्रनामशर्माऽहं भो इत्यन्तेऽभिवादये।**
**इत्येतद्भाषणं यत्तन्मन्त्रः स्यादभिवादनम्**
**(? ने)॥**

अभिवादनवाक्ये च 'अभिवादये' इत्यस्यान्ते प्रयोगो गायत्र्यभिवादनमात्रविषयकः। तथा च तदेवाधिकृत्याऽऽह भरद्वाजः– 'सगोत्र... वादनम्॥' इति। अन्यत्र 'अभिवादये देवदत्तनामाऽहमस्मि भोः' इति प्रयोक्तव्यम्। ¶ चम. २६

**'परेऽह्नि मेखलां दण्डमजिनं चोपवीतकम्।**
**धारयेत्तु पुराणानि त्यजेद्वस्त्राणि वा नव-**
**(? न वा)॥**

परेऽह्नि चतुर्थदिवसे इत्यर्थः। मुक्ता. ९४

## शातातपः

ब्रह्मवृक्षसंबन्धि चतुर्थदिनकृत्यम्

**'चतुर्थेऽहनि संप्राप्ते सुस्नातः कृतमङ्गलः।**
**त्रिभिर्विप्रैः समायुक्तो गुरुर्गच्छेत्सशिष्यकः॥**
**ग्रामात्प्राचीमुदीचीं वा दिशं नान्यदिशं व्रजेत्॥**
**उक्ताशासु ब्रह्मवृक्षो नास्ति चेद्धर्मयोग्यकः।**
**यत्र यत्र ब्रह्मवृक्षस्तां दिशं वा व्रजेद्गुरुः॥**

---

$ मर., दीक. अपगतम्।

(१) संको. १२७.

¶ बाल. चमवत्।

(१) चम. २६ मो इ (भवि) न्मन्त्रः (न्मन्त्रे); बाल. १।२६ पृ. १४७ चमवत्; संग. ६८७ सगोत्र (स्वगोत्र).

(२) मुक्ता. ९४.

(३) मुक्ता. ९४.

ब्रह्मवृक्षमथाऽऽसाद्य द्विजैः पुण्याहवाचनम् ।
वाचयेदुक्षयेन्मूलं मार्जयेद्व्रोमथोदकैः ॥

वृक्षे चतुर्मुखं यष्ट्वा नमस्कुर्यात्प्रदक्षिणम् ॥

[1]कौपीनं दण्डमजिनमुपवीतं च मेखलाम् ।
नवानि धारयित्वाऽथ पुराणानि परित्यजेत् ॥

वृक्षाग्रे स्थापयेद्यत्नात्कौपीनाजिनमेखलाः ।
वासः प्रदद्याद्गुरवे ब्राह्मणेभ्यस्तु दक्षिणाम् ॥

## बृहत्पराशरः

प्रथमभिक्षणीयाः स्त्रियः, वर्णभेदेन भिक्षावाक्यविशेषः

[2]स्वसारं मातरं चापि मातृष्वसारमेव च ।
भिक्षेत प्रथमां भिक्षां या चान्या न विमानयेत् ॥

भवति भिक्षां मे देहि भिक्षां भवति देहि मे ।
भिक्षां मे देहि भवति क्रमेणैवमुदाहरेत् ॥

## अत्रिः

अभिवादनप्रकारः उपसंग्रहणविधिश्च

[3]दक्षिणं पाणिमुद्धृत्य प्रकाममभिवादयेत् ।
श्रोत्रिये त्वञ्जलिः कार्यः पादोपग्रहणं गुरोः ॥

## पैठीनसिः

उपसंग्रहणप्रकारः

[4]उत्तानाभ्यां हस्ताभ्यां दक्षिणेन दक्षिणं सव्यं सव्येन पादावभिवादयेत् ॥

(१) मुक्ता. ९४; आन. १५६ (=).

(२) बृपसं. ६।१६२–१६३.

(३) अप. १।२६ कार्यः पादोपग्रहणं गुरोः ( कार्यो गुरोः पादोपसंग्रहम् ); स्मृच. ३६ पाणि ( बाहु ); प्रपा. २४३ ये त्व ( येष्व ) ग्रहणं ( ग्रहणे ); संम. ३१; विपा. ५०१; कुभ. ९६४.

(४) व्रक. १८९; स्मृच. ३९ सव्यं सव्येन पादाव ( सव्येन सव्यं पादम ); ममु. २।७२; मच. २।७२ (हस्ताभ्यां० ) दक्षिणेन दक्षिणं (दक्षिणं दक्षिणेन); संप्र. ४५५ : ४५७ उत्ताना ( उभा ).

## प्रचेताः

उपनयनदिने आसायं साविश्र्यभ्यासस्ततः संध्यावन्दनम्

[1]मौञ्जीबन्धदिने तिष्ठेत्सावित्रीमभ्यसन् गुरोः ।
सूर्येऽस्तशिखरं प्राप्ते सायंसंध्यां समभ्यसेत् ॥

## आश्वलायनः

अग्निमुखम्, यज्ञोपवीतमेखलाजिनदण्डधारणम्, कौपीनवस्त्रधारणम्, होमः, आदित्यतर्पणम्, अवक्षारणम्, परिदानम्, सावित्र्युपदेशः, व्रतोपदेशः, भिक्षाचरणम्, आचारोपदेशः, सायमनुप्रवचनीयहोमः, संवत्सरं द्वादशाहं त्रिरात्रं वा व्रताचरणम्, मेधाजननम्, अभिवादनप्रकारः

[2]कालादि पूर्वमुदितं मयोपनयने द्विजाः ।
विशेषं त्वत्र वक्ष्यामि विकल्पस्य च निर्णयम् ॥

[3]संस्कृत्याऽऽज्यं यथान्यायं बर्हिषि स्थाप्य पश्चिमे ।
स्रुवसंमार्जनं कृत्वा कुर्याद्यज्ञोपवीतिनम् ॥

[4]ऋष्यादि सर्वं विज्ञाय तन्त्रविन्मन्त्रसूत्रयोः ।
यज्ञोपवीतमन्त्रेण कुर्याद्यज्ञोपवीतिनम् ॥

[5]ब्रह्मा स्याद्यज्ञसूत्रस्य मुनिर्गायत्रमीरितम् ।
छन्दः प्रजापतिर्देव ओङ्कारोऽप्यथवा त्रिवृत् ॥

[6]यज्ञोपवीतं परमं पवित्रं
प्रजापतेर्यत्सहजं पुरस्तात् ।
आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं
यज्ञोपवीतं बलमस्तु तेजः ॥

(१) मुक्ता. ९८.

(२) आश्वस्मृ. ११।१२१; प्रपा. २२६ मयो ( यथो ) त्वत्र ( तत्र ) यम् ( ये ).

(३) आश्वस्मृ. ११।१२२; प्रपा. २२६ त्याऽऽज्यं ( ताज्यं ); संको. १२५ उत्त.

(४) आश्वस्मृ. ११।१२३; प्रपा. २२६.

(५) आश्वस्मृ. ११।१२४ ब्रह्मा स्याद्य ( ब्राह्मणाद्य ) व ओङ्कारोऽप्य ( वमोङ्कारम ); प्रपा. २२६.

(६) आश्वस्मृ. ११।१२५; प्रपा. २२६.

¹एतेन बहुवृचोऽप्यग्नेरुदक्तिष्ठन्तमर्भकम् ।
प्राङ्मुखं प्राङ्मुखस्तिष्ठन्कुर्याद्यज्ञोपवीतिनम् ॥

²§तस्मात्तावद्द्विजातीनां चिह्नान्येतानि भागशः ।
आचार्येणाजिनादीनि दातव्यानि स्थितस्य वै ॥

³ब्रह्मसूत्रप्रदानान्ते प्राङ्मुखस्य स्थितस्य तु ।
आबध्य मेखलां दद्यादजिनं दण्डमेव च ॥

⁴सम्यगाचमयित्वा तमन्तरेणाव्यवायतः ।
आगत्य प्राङ्मुखासीनं स्पृशन्होमं समाचरेत् ॥

⁵तल्लक्ष्मलक्षितेनैव व्रतिना हूयतेऽनलः ।
गृह्यते चापि सावित्री तथाऽर्काय च दीयते ॥

⁶संधार्यते चाऽऽ समाप्तेर्दण्डादि ब्रह्मचारिणा ।
आदेशकाले भरणमुक्तं गृह्ये मयैव तत् ॥

⁷तावत्प्रभृति न त्याज्यान्येतानीत्यासमाप्तितः ।
व्रती स्याद्व्रतिनो नित्यमित्याकाङ्क्षितशेषतः ॥

⁸तस्मात्सूत्रप्रदानेन ग्राह्याण्येतानि धीमता ।
क्रमशश्चाजिनादीनि भिक्षापात्रं जलस्य च ॥

§ पूर्वोक्तधारणहेतुभ्य इत्यर्थः ।

(१) आश्वस्मृ. ११।१३६ ; प्रपा. २२६ ; संको. १२५.

(२) आश्वस्मृ. ११।१३७; प्रपा. २२६ उत्त. : २२७ तीनां ( नां तु ) पू. ; संको. १२५ उत्त.

(३) आश्वस्मृ. ११।१३८ ; प्रपा. २२६.

(४) आश्वस्मृ. ११।१३९ व्यवा ( व्यपा ) ; प्रपा. २२६ ; संको. १२५ प्रथमपादमात्रम् .

(५) आश्वस्मृ. ११।१४० थाऽर्काय (था कस्मै) ; प्रपा. २२६.

(६) आश्वस्मृ. ११।१४१ धार्यते चाऽऽ ( हार्यत्वादा ) रिणा (रिणे) ; प्रपा. २२६ काले भ (कालक्ष).

(७) आश्वस्मृ. ११।१४२ अशुद्धिबहुलो ग्रन्थः ; प्रपा. २२६.

(८) आश्वस्मृ. ११।१४३ शश्चा ( शस्त्व ) ; प्रपा. २२० उत्त. : २२६ पू. ; संप्र. ४१० उत्त.

¹कौपीनाच्छादनार्थाय मौञ्जीं कार्पासिकीं द्विजः ।
बिभृयात् त्रिवृतां तावद्वाससी चाहृते पुरा ॥

अत एव हि बन्धसूत्रोपदेशाद्ब्रह्मचारिणः कौपीनधारणमपि प्रतीयते । प्रपा. २२०

²वाससी ते स्वगुरवे मेधाजननकर्मणि ।
दद्यात् तावत्प्रभृत्येव कौपीनेन प्रवर्तयेत् ॥

³हुत्वोत्थायोत्तरे तिष्ठन्नाचार्यश्च गुरु( ? बटु )स्तथा ।
कर्मसाक्षिणमादित्यं तर्पयेतां यथोक्तवत् ॥

⁴सर्वव्रतानां भगवान् सूर्योऽधिपतिरीश्वरः ।
कालकर्मगुणानां च तस्मात्तं तर्पयेत्तदा ॥

⁵शुचित्वसिद्धये तस्य सावित्रीग्रहणे गुरुः ।
अभिमन्त्र्य यथा वारि सिञ्चत्येव तदञ्जलौ ॥

⁶प्रत्ययानि त्रिवारेण कर्तव्यानीति वै स्थितिः ।
तस्मात् त्रिवारं शिष्यस्य हस्तं गृह्णाति देशिकः ॥

(१) आश्वस्मृ. ११।१४४ ; प्रपा. २२० बिभृयात् ( संभवे ) चाहृते ( चाऽऽहरेत् ) ; संप्र. ४१० उत्तरार्धे ( संभरेत् त्रिवृतां तावद्वाससी वाऽहृते पुनः ॥ ).

(२) आश्वस्मृ. ११।१४५ ; प्रपा. २२० प्रवर्त ( स वर्त ), २३७–२३८ ; धप्र. ४२ वर्तयेत् ( वर्तते ) कारिका ; संप्र. ४१० : ४४५ दद्यात् ( वेद्यां ) ; संको. १५१ धप्रवत् ; संग. ६६१.

(३) आश्वस्मृ. ११।१४८ येतां ( येत्तं ) ; प्रपा. २२६ उत्त. ; संप्र. ४२६ येतां ( येत्तं ) उत्त. ; संको. १२५ सर्वं संप्रवत् .

(४) आश्वस्मृ. ११।१४९ ( गुणानां० ) ; प्रपा. २२६ ; संप्र. ४२६.

(५) आश्वस्मृ. ११।१५० मन्त्र्य यथा ( मन्त्र्यान्यया ) ; प्रपा. २२६ ; संप्र. ४२६ ; संको. १२५.

(६) आश्वस्मृ. ११।१५१ ; प्रपा. २२६ तस्मात् ( एवं ) उत्त. ; संप्र. ४२६ सर्वं प्रपावत् .

[1]संबुद्धया पावकं तावत्साक्षीकृत्य गुरुस्तदा ।
हस्तं गृह्णाति शिष्यस्य मन्त्रैः शिष्यत्वसिद्धये ॥
[2]सूर्यात्मा देशिको भूत्वा पावकात्मा च संयतः ।
शिष्योऽसीति च संबुद्धया शृण्वन्तमिति निर्दिशेत् ॥
[3]ततो व्रतानां पतये ददाति रवये बटुम् ।
रवेः संमाननार्थाय रक्षार्थं तद्बटोरपि ॥
[4]असामर्थ्यात्समाहर्तुमात्मनस्तं गुरुः पुनः ।
ददाति मन्त्रवद्गृह्य प्रजानां पतये पुनः ॥
[5]प्रजापतये सूर्याय ताभ्यां दत्त इति स्मरन् ।
गृहीत्वैवांसयोः शिष्यं समालभ्याऽऽत्मसात्करोत् ॥

यो मयोभाभ्यां दत्तः स ताभ्यां मह्यं पुनर्दत्त इति स्मरन्नित्यर्थः । करोत् करोतु । संकौ. १२५

[6]कुर्वन्त्येवाऽऽत्मसात्सन्तः सर्वान् पूर्वमुखस्थितान् ।
तस्मात्पूर्वमुखं कृत्वा गृह्णीयाच्छिष्यमेव तम् ॥

[1]गुरोरग्नेः प्रधानत्वात्प्रागग्नौ जुहुयाद्गुरुः ।
ततो गुरुं नमस्कुर्यादधीष्वेत्यभिवाञ्छितम् ॥

अग्नौ गुरुत्वोक्त्या गुरोरिवाग्नेरप्यभिवादनं कार्यमिति सूच्यते । संकौ. १२५

[2]नापृष्टः कस्यचिद्ब्रूयादिति शास्त्रविदां मतम् ।
तस्माद्विचार्य ब्रूहीति पृच्छेदाचार्यमादरात् ॥
आदौ वेदान्विनिष्पन्नान्स्वमुखेभ्यश्चतुर्मुखः ।
गृहीतवान्स्वपाणिभ्यां यथोपस्थे निधाय तौ ॥
तथा भृग्वादयः सर्वे येऽन्ये विप्राश्च सत्तमाः ।
तावत्प्रभृति कुर्वन्ति वेदस्वाध्यायकर्मणि ॥
[3]उत्तानं वामपाणिं तु न्यङ्मुखं दक्षिणं तथा ।
पाण्योः पृष्ठं दृढं कुर्यादङ्गुलीभिः परस्परम् ॥
[4]अङ्गुष्ठौ च दृढीकृत्य क्रियते या तथाऽञ्जलिः ।
सा ब्रह्मणा कृतत्वात्प्राग्ब्रह्माञ्जलिरिति स्मृता ॥
[5]वेदारम्भे विशेषेण समाप्तौ च प्रशस्यते ।
ब्रह्मयज्ञे च कार्या स्यात्सावित्रीग्रहणे भृशम् ॥
[6]सावित्र्यास्तु प्रदानान्ते दद्यात्तस्मै व्रतान्गुरुः ।
तद्वदूर्ध्वाङ्गुलं हस्तं कृत्वा दक्षिणमात्मनः ॥

---

(१) आश्वस्मृ. ११।१५२ कृत्य ( कृत्वा ) ; प्रपा. २२६ बुद्धया ( बोध्य ) साक्षीकृत्य (साक्षात्कृत्य) ; संप्र. ४२६ ताव ( याव ) गृह्णाति ( गृहीत ) मन्त्रैः शि ( मन्त्रशि ) ; संकौ. १२५ गृह्णाति ( गृहीत्वा ) मन्त्रैः ( मन्त्रं ) उत्त.

(२) आश्वस्मृ. ११।१५३ न्तमिति ( न्न इति ) ; प्रपा. २२६ बुद्धया ( बोध्य ) ; संप्र. ४२६.

(३) आश्वस्मृ. ११।१५४ ; प्रपा. २२६ ; संप्र. ४२६ संमानना ( समानता ) ; संकौ. १२५.

(४) आश्वस्मृ. ११।१५५ र्थ्यात्स ( र्थ्याच्च ) नस्तं गुरुः ( नः सद्गुरुः ) ये पुनः ( ये बटुम् ); प्रपा. २२६ र्थ्यात्स ( र्थ्यात्त ) ; संप्र. ४२६ ; संकौ. १२५.

(५) आश्वस्मृ. ११।१५६ पतये ( पतेश्च ) दत्त इ ( दत्तमि ) ; प्रपा. २२६–२२७ ताभ्यां ( द्वाभ्यां ) ; संप्र. ४२६ वांसयोः ( वानयोः ) ; संकौ. १२५ प्रजाप ( प्रजानां प ) शेषं संप्रवत् .

(६) आश्वस्मृ. ११।१५७ मुखस्थि ( मुखं स्थि ) ; प्रपा. २२७ ; संप्र. ४२६ याच्छिष्य ( यादित्य ) ; संकौ. १२५.

(१) आश्वस्मृ. ११।१५८ रग्नेः प्रधान ( स्त्वग्नेस्तथैक्य ) वाञ्छितम् ( वाद्यतः ) ; प्रपा. २२७ ; संप्र. ४२६ पू. ; संकौ. १२५ 'स्त्वग्नेस्तथैक्य' इति स्मृतिवत्पाठो व्याख्यानात्प्रतिभाति, पू.

(२) आश्वस्मृ. ११।१५९–१६१ ; प्रपा. २२७.

(३) आश्वस्मृ. ११।१६२ नं वामपाणिं ( नवामपाणौ ) तथा ( यथा ) लीभिः (लीभ्यः) ; प्रपा. २२७ न्यङ्मुखं ( प्राङ्मुखं ) ; संप्र. ५२४ तु न्यङ् (चावाङ्).

(४) आश्वस्मृ. ११।१६३ ; प्रपा. २२७ ; संप्र. ५२४.

(५) आश्वस्मृ. ११।१६४ ; प्रपा. २२७ त्रीग्रह ( त्र्या ग्रह ) ; संप्र. ५२४ प्रशस्य ( विशिष्य ) भृशम् ( तथा ).

(६) आश्वस्मृ. ११।१६५ ; प्रपा. २२७ ङ्गुलं ( ङ्गुलिं ) .

[1]सावित्रीग्रहणे कल्पो व्रतसंधारणाद्गुरोः।
भवेत्तु नान्यथा कल्पः शिष्यः प्रागकृतव्रतः॥
[2]वेदमाता द्विजैः शक्या यथावच्चरितव्रतैः।
धर्तुं तस्माद्गुरुस्तस्मै ददाति व्रतमात्मनः॥
[3]अप्रत्याख्यायिनीं नारीमप्रत्याख्यायिनं नरम्।
ब्रह्मौदनार्थं विप्रार्थं सुशुद्धान्याचयेत्तदा॥
[4]पात्रं गृहीत्वा संयाच्य भिक्षामाहृत्य तत्स्वयम्।
निवेद्य गुरवे नत्वा प्रैषं श्रुत्वा समापयेत्॥
[5]आचारान्संविनिर्दिश्य भवेदाचार्यता गुरोः।
प्रैषेण प्रेषयेत्तस्माच्छिष्यं गृह्योक्तवर्त्मना॥
[6]दिनशेषं नयेत्तिष्ठन् प्रैषप्रभृति तु व्रती।
सावित्र्यां संप्रवृत्त्यर्थं विण्मूत्रोत्सर्जनादृते॥
[7]भैक्षं लब्धं दिवा यत्तत्स्थालीपाकं निरुप्य च।
हुत्वा द्विजान्भोजयित्वा भुञ्जीयाच्च द्विजः स्वयम्॥
[8]उपास्य विधिवत्संध्यां हुत्वा हुत्वा व्रती निशि।
अधः शयीत स्वपंश्च व्रती स्याद्वत्सरावधि॥

हुत्वा हुत्वेति वीप्सावचनं नित्यभूतमिदं हुत्वा अनुप्रवचनीयं जुहुयादित्यर्थम्। * प्रपा. २३१
[1]द्वादशाहं त्रिरात्रं वा तदन्ते गुरुणाऽऽत्मनः।
कारयेद्विधिना कर्म मेधाजननसंज्ञितम्॥
[2]कुर्यात् त्रिमेखलां वेदिं सर्वतो द्वादशाङ्गुलाम्।
गुर्वी प्रागुत्तरे भागे तस्यां मेधां समर्चयेत्॥
[3]पलाशशाखां तन्मध्ये पत्राङ्कुरसमन्विताम्।
आर्द्रां वाऽथ कुशस्तम्बं समूलं स्थापयेद्गुरुः॥
[4]मेधामावाह्य मतिमान्मेधायै नम इत्यथ।
वेद्यास्तु पश्चिमे भागे स्वस्तिकस्थां समर्चयेत्॥
[5]गन्धपुष्पाक्षतैः सम्यग्धूपदीपादिभिः पुरा।
इष्ट्वा निवेदयेदन्नं सक्तुमिश्रं सयावकम्॥
[6]समोदकं निवेद्यान्नं पुनश्चाभ्यर्च्य पूर्ववत्।
प्रणम्य तस्यै मेधायै व्रती निःसारयेज्जलम्॥
[7]उच्चरन्सुश्रवोमन्त्रं जलं गृह्य प्रदक्षिणम्।
संक्राम्य तां नमस्कृत्य तथा कुर्यात्पुनः पुनः॥

---

(१) आश्वस्मृ. ११।१६६ ग्रह (मर); प्रपा. २२७.

(२) आश्वस्मृ. ११।१६७; प्रपा. २२७ शक्या (शक्त्या) धर्तुं (सर्वं).

(३) आश्वस्मृ. ११।१६८ शुद्धान्या (शुद्धाद्या); प्रपा. २२९; संप्र. ४३८.

(४) आश्वस्मृ. ११।१६९; प्रपा. २२९ पात्रं (पात्रे) संयाच्य (संपाद्य) नत्वा (दत्वा); संप्र. ४३८ नत्वा (दत्वा).

(५) आश्वस्मृ. ११।१७० चारान्सं (चार्यात्सं) चार्यता (चार्यतो); प्रपा. २२९ चार्यता (चार्यतो); संप्र. ४३८.

(६) आश्वस्मृ. ११।१७१ तु व्रती (तद्व्रती) त्र्यां सं (त्र्या सं); प्रपा. २२९; संप्र. ४३८ नयेत्तिष्ठन् (नयंस्तिष्ठेत्) त्र्यां सं (त्र्या सं).

(७) आश्वस्मृ. ११।१७२ लब्धं दि (लब्धादि); प्रपा. २३१; संप्र. ४४१.

(८) आश्वस्मृ. ११।१७३ हुत्वा हुत्वा (हुत्वा भुक्त्वा); प्रपा. २३१ हुत्वा व्रती (हुत्वाऽऽहुती); संप्र. ४४१ पू.; ४४३ स्वपंश्च (स्वयं च) उत्त.

* संप्र. प्रपावत्।

(१) आश्वस्मृ. ११।१७४ त्मनः (त्मना); प्रपा. २३१; संप्र. ४४३.

(२) आश्वस्मृ. ११।१७५ कुर्यात् (कृत्वा) तस्यां (तस्या); प्रपा. २३७; संप्र. ४४४; संको. १५१.

(३) आश्वस्मृ. ११।१७६ पलाशशाखां (शाखां पलाशीं) स्तम्बं (स्तम्भं); प्रपा. २३७; संप्र. ४४४; संको. १५१.

(४) आश्वस्मृ. ११।१७७; प्रपा. २३७ पू.; संप्र. ४४४ पू.; संको. १५१ पू.

(५) आश्वस्मृ. ११।१७८ इष्ट्वा (यष्ट्वा) याव (लाज); प्रपा. २३७; संप्र. ४४४; संको. १५१ दन्नं (देनां).

(६) आश्वस्मृ. ११।१७९ निःसार (निस्राव); प्रपा. २३७; संप्र. ४४४; संको. १५१ व्रती निःसा (व्रतिभिः सा).

(७) आश्वस्मृ. ११।१८० प्रथमपादे (सुश्रवायुच्चरन्

[1]एवं त्रिवारमावर्त्य दण्डाजिनकमण्डलून् ॥
वेद्यां निक्षिप्य च स्नात्वा वाससी च विनिक्षिपेत् ॥
[2]मेखलां चोपवीतं च धृत्वाऽन्ये ते विनिक्षिपेत् ।
पुण्याहवाचनं कृत्वा ब्राह्मणांश्चापि भोजयेत् ॥
[3]तमावहति सा मेधा मेधाजननकर्मणः ।
तत्कर्तव्यं प्रयत्नेन व्रतस्य च समाप्तये ॥
[4]या सावित्री जगद्धात्री सैव मेधास्वरूपिणी ।
मेधाप्रसिद्धये पूज्या विद्यासिद्धिमभीप्सता ॥
[5]वामं वामेन संस्पृश्य दक्षिणेन तु दक्षिणम् ।
हस्तेन कर्णहस्ताभ्यां गुरूणामभिवादनम् ॥
[6]वामोपरि करं कृत्वा दक्षिणं नाम चोच्चरन् ।
जानुप्रभृतिपादान्तमारभ्य पदयोर्नमेत् ॥

मन्त्रं ) नः पुनः ( नर्दिशः ) ; प्रपा. २३७ स्नाव्य ( श्राव्य ) ; संप्र. ४४४ ; संको. १५१.

(१) आश्वस्मृ. ११।१८१ ; प्रपा. २३७ ; संप्र. ४४४ ; संको. १५१.

(२) आश्वस्मृ. ११।१८२ न्ये ते विनि ( न्यां तत्र नि ) ; प्रपा. २३७–२३८ न्ये ते ( न्यानि ) ; संप्र. ४४४–४४५ प्रपावत् ; संको. १५१. अनयोः श्लोकार्धयोर्मध्ये 'वाससी ते स्वगुरवे...' इत्ययं श्लोकः त्रिष्वपि निबन्धेषु वर्तते । स च श्लोकः स्मार्तक्रममनुसृत्यास्माभिः पूर्वमेव संगृहीतः .

(३) आश्वस्मृ. ११।१८३ ; प्रपा. २३८ ; संप्र. ४४५ ; संको. १५१.

(४) आश्वस्मृ. ११।१८४ ; प्रपा. २३७.

(५) आश्वस्मृ. २।५६ कर्णह ( कृत्स्नं ह ) दनम् ( दयेत् ) ; प्रपा. २४२ कर्णह (कर्ण ह) ; संप्र. ४५४ ; मुक्ता. १०८ कर्णहस्ता (हस्तौ कर्णा) दनम् ( दयेत् ) ; विपा. ५०० ; संग. ६८५.

(६) आश्वस्मृ. २।५७ ; प्रपा. २४२ च्चरन् ( च्चरेत् ) भ्य पदयोर्नमे ( भ्यापदयोर्नये ) ; संप्र. ४५५ च्चरन् ( च्चरेत् ) ; मुक्ता. १०८ च्चरन् ( च्चरेत् ) रभ्य ( लभ्य ) ; विपा. ५०० रन् । जानु ( रेत् । तनु ) ; संग. ६८६ संप्रवत् .

## लघ्वाश्वलायनः

पूर्वेद्युर्वृद्धिश्राद्धदेवकस्थापनद्विजभोजनानि, अपरेद्युः कुमाराभ्यङ्गभोजनवपनानि, मुहूर्ते कुमारपित्रोर्निरीक्षणम्, येयज्ञेनसूक्तपाठः, होमपूर्वाङ्गम्, कटिसूत्रकौपीनवस्त्राजिनोपवीतधारणम्, होमः, अञ्जल्यवक्षारणम्, करग्रहणम्, हृदयस्पर्शनम्, समिदाधानम्, सावित्र्यनुवाचनम्, मेखलाबन्धनम्, दण्डधारणम्, व्रतादेशनम्, होमशेषसमापनम्, भिक्षाचरणम्, दक्षिणादानम्, आशीर्ग्रहणम्, सायंसंध्यावन्दनाग्निकार्ये, अनुप्रवचनीयहोमः, ब्राह्मणभोजनम्, वेदसमाप्तिवाचनम्, त्रिरात्रव्रतम्, मेधाजननम्, देवकोत्थापनम्

[1]कृत्वाऽऽभ्युदयिकं श्राद्धमावाह्य कुलदेवताः ।
मण्डपाद्यर्चनं कृत्वा भोजयेच्च द्विजान्स्वयम् ॥
अथापरेद्युरभ्यञ्ज्य( ? ज्य ) कुमारं भोजयेत्ततः ।
वपेद्भुक्तवतः केशान्मात्रा सहैकभाजने ॥
चौलाङ्कस्थापिते ये च शिखे द्वे तेऽपि वापयेत् ।
सकेशेऽपि कुमारस्य हित्वैकां मध्यमस्थिताम् ॥
आसीनस्यान्तिके स्नातं कुमारमुपवेशयेत् ।
पितुश्च प्राङ्मुखस्येह प्रत्यङ्मुखमलंकृतम् ॥
धृत्वाऽञ्जलिं कुमारस्य सुवर्णफलसंयुतम् ।
मुहूर्तकालपर्यन्तमसमीक्ष्य परस्परम् ॥
ध्यायन्देवान्सुमुहूर्ते मुहूर्ते पितुरञ्जलौ ।
दत्त्वा फलमसौ तस्य निदध्यात्पादयोः शिरः ॥
शिरः स्पृशेत्पिता तस्य स्वाङ्के तमुपवेशयेत् ।
ये यज्ञेन पठेत्सूक्तमाचार्यो ब्राह्मणैः सह ॥
आज्यसंस्कारपर्यन्तं प्राणायामादिपूर्वकम् ।
कृत्वा नवं ततो दद्यात्कौपीनं कटिसूत्रकम् ॥
धारयित्वा ततो दद्याद्वाससी युवमित्यृचा ।
एकं स्यात्परिधानार्थमेकं प्रावरणाय हि ॥
इच्छन्ति केचिदैणेयमृक्सामाभ्यां तथाऽजिनम् ।
उपवीतं ततो दद्याद्यज्ञोपवीतमन्त्रतः ॥

(१) लघ्वाश्वस्मृ. १०।२–६१.

आचम्याथ बटुर्गच्छेत्पुरतश्चोत्तरे गुरोः ।
दृष्ट्वा पात्रं तथाऽऽगत्य दक्षिणे तूपवेशयेत् ॥
कृत्वाऽऽज्याहुतिपर्यन्तं बर्हिरास्तरणादिकम् ।
कुमारः पूर्ववद्गच्छेदुदगग्रे गु( ? ग्नेर्गु)रोश्च हि ॥
आचार्यः प्राङ्मुखस्तिष्ठेद्बटुः प्रत्यङ्मुखस्तथा ।
आचार्यः पूरयेत्तत्र कुमारस्याञ्जलौ जलम् ॥
सजले चाञ्जलौ तस्य गन्धपुष्पाणि चाऽऽवपेत् ।
सुवर्णं च यथाशक्ति फलैः क्रमुकजैः सह ॥
आचार्यस्याञ्जलौ ब्रह्मा पूरयेत्सलिलं च तत् ।
आचार्यो मन्त्रमुच्चार्य तत्सवितुर्वृणीमहे ॥
कुमारस्याञ्जलौ चैव निनयेत्स्वस्य चाञ्जलिम् ।
ध्यायन्कुमार आदित्यमर्घ्यपात्रे निवेदयेत् ॥
देवस्य त्वेति गृह्णीयात्साङ्गुष्ठं करमस्य च ।
असौशर्मेति दीर्घायुर्भवत्विति वदेत्पिता ॥
अथवाऽसौपदे नाम संबुद्ध्या वाऽस्य नामकम् ।
उच्चार्य शर्म दीर्घायुर्भवेत्येके वदन्ति हि ॥
एवं त्रिः पूर्ववच्चैव मन्त्रोऽन्यः स्यात्करग्रहे ।
सविता तेऽयमेकः स्यादग्निराचार्य एव च ॥
ईक्षयेद्बटुरा( ? मा )दित्यं देवं सवितृमन्त्रतः-
( ? देव सवितर्मन्त्रतः ) ।
आवर्तयेत्कुमारं तं पूर्वार्धर्चेन चैव हि ॥
पाणिभ्यामुत्तरेणांसौ पाणी वाऽस्य हृदि स्पृशेत् ।
एवं कृत्वा पुनश्चामुं दक्षिणे बटुमानयेत् ॥
तूष्णीं समिधमादाय निदध्यादनले च ताम् ।
मन्त्रेणाग्नय इत्यत्र वदन्त्येके महर्षयः ॥
ओष्ठौ विलोमकौ कृत्वा पाणिद्वयतलेन च ।
त्रिवारं प्रतिमन्त्रेण तेजसा मेति चैव हि ॥
सूत्रोदितान्मयीत्यादीन्मन्त्रांस्तिष्ठञ्जपेदथ ।
मानस्तोकेऽनया भाले त्रिपुण्ड्रं धारयेत्क्रमात् ॥
हृदि नाभौ तथा बाह्वोर्मस्तके चापि केचन ।
त्र्यायुषं ताञ्जपेन्मन्त्रानुपस्थार्यो च मे स्वरः ॥

पुरतः पितुरासीनो ब्रह्मचारी कुशासने ।
गायत्रीमनुगृह्णीयादुपांशु प्रत्यगाननः ॥
पूर्ववदुपविश्यासावन्वाच्य जानु दक्षिणम् ।
फलाक्षतसुवर्णं च गुरवे तन्निवेदयेत् ॥
अधीहीत्यादिकं मन्त्रं समुच्चार्य यथाविधि ।
नमस्कुर्याद्गुरोः पादौ धृत्वा हस्तद्वयेन च ॥
ब्राह्मणोऽहं भवानीह गुरोऽहं ते प्रसादतः ।
गायत्रीं मामनुब्रूहि शुद्धात्मा सर्वदाऽस्मि हि ॥
संगृह्य पाणी पाणिभ्यां स्वस्य च ब्रह्मचारिणः ।
वाससाऽऽच्छादनं कृत्वा गायत्रीमनुवाचयेत् ॥
उच्चार्य प्रणवं चाऽऽदौ भूर्भुवः स्वस्ततः परम् ।
पच्छ( ? पाद )मर्धमृचं चैव तं यथाशक्ति वाचयेत् ॥
पाणिना हृदयं तस्य स्पृष्ट्वा मम व्रतं जपेत् ।
प्राणायामं ततः कृत्वा ब्रह्मचार्येव नेतरः ॥
आबध्य मेखलां तस्य प्रावेपामेत्यृचं जपेत् ।
एषक्षेत्यनया दण्डं धारयित्वा दिशेद्व्रतम् ॥
ब्रह्मचर्यादिकं भिक्षां ददात्वित्यन्त एव च ।
ततः स्विष्टकृतं हुत्वा होमशेषं समाप्य च ॥
याचयेत्प्रथमां भिक्षां पितरं मातरं च वा ।
पितरं यदि याचेत भवान्भिक्षां ददात्विति ॥
भवतीति पदं चोक्त्वा भिक्षां देहीति याचयेत् ।
मातरं चाग्र एवेति गत्वा पात्रं करान्तिके ॥
तण्डुलान्सफलान्दद्याद्भिक्षार्थे जननी तु च ।
होमार्थे तण्डुलान्मात्रे दत्त्वा शेषं गुरोरथ ॥
याचिता तत्र या भिक्षा गुरवे तां निवेदयेत् ।
पितैव गुरुराचार्यो भवेत्सद्भिरुदाहृतः ॥
यस्मात्पुरोहितो ब्रह्मा होता च सह याज्ञिकम् ।
उक्त्वा वेदमधीष्वात्र यस्माद्दिशति वै पिता ॥
तदाचार्यपदं तत्र जायते ब्राह्मणेऽपि हि ।
पिता माता तथाऽऽचार्यास्त्रयो मान्याः सदैव हि ॥
अन्येऽपि श्रोत्रिया वृद्धा वेदविद्याप्रदास्तथा ।
दद्याद्विभवसारेण कर्माङ्गत्वेन दक्षिणाम् ॥

सुवर्णाम्बरधान्यानि सद्योऽनन्तफलं लभेत् ।
न ददाति द्विजो होत्रे लोभाद्यज्ञाङ्गदक्षिणाम् ॥
वित्ते सति कृतं कर्म निष्फलं स्याद्धनक्षयः ।
धनिनोऽयं निषेधः स्याद्व्रतहीनस्य चैव हि ॥
असमर्थो नमेत्सद्यो दत्त्वाऽक्षतफलादिकम् ।
विप्रेभ्यो दक्षिणां दत्त्वा गृह्णीयादाशिषः स्वयम् ॥
यथाविभवसारेण हेतवे यज्ञसाक्षिणः ।
आसायं नहि किंचित्स्यान्नैत्यकं कर्म चैव हि ॥
ब्रह्मचारिण एवात्र सायंसंध्या विधीयते ।
ब्रह्मचारी ततः कुर्यात्सायंसंध्यां यथाविधि ॥
अग्निकार्यं तथा होमं त( ? होमस्त )स्मिन्नग्नौ विधीयते ।
नो चेत्स्यात्पूर्ववत्कुर्यादाचार्यः स्थण्डिलादिकम् ॥
पूर्णपात्रनिधानान्तमनलस्थापनादिकम् ।
निर्वपेन्मातृतः प्राप्तांस्तण्डुलान्सदसस्पते ।
सवितुश्च ततस्तूष्णीमृषीणां मन्त्रतः क्रमात् ॥
श्रपयित्वौदनं कुर्यादाधारान्तं हुनेदथ ।
सदसस्पतिमन्त्रेण गायत्र्यर्षिभ्य एव च ॥
चर्वाहुतित्रयं दत्त्वा कुर्यात्स्विष्टकृदादिकम् ।
भोजयित्वा द्विजान्वेदसमाप्तिरस्य चोत्तरे- ( ? तिमथ वाचयेत् ) ॥
निर्विघ्नेन त्रिवारं तु पिताऽस्य ब्रह्मचारिणः ।
वसेदसौ त्रिरात्रं तु ( ? स्व )क्षारादिव्रतमाचरेत् ॥
प्रातःसंध्यामुपास्याग्निकार्यं कृत्वा परेऽहनि ।
मध्याह्ने चाऽऽचरेत्संध्यां ब्रह्मयज्ञादनन्तरम् ॥
उपाकरणपर्यन्तं सावित्र्या ब्रह्मयज्ञकम् ।
ततोऽग्निमीळ इत्यादि जपेद्वेदान्स्वशक्तितः ॥
चतुर्थदिवसे कुर्यान्मेधाजननकं च हि ।
संध्यादिकं विधायाथ गच्छेत्पालाशसंनिधौ ॥
कलशान्स्थापयेत्तत्र चतुष्कोणेषु चैव हि ।
पलाशं पूजयेत्तत्र वसन्तं च यथाविधि ॥
श्रद्धां मेधां च वै प्रज्ञां पूजयेच्छ्रद्धयेत्यृचा ।
गन्धपुष्पाक्षतैश्चैव धूपदीपादिभिस्तथा ॥
प्रदक्षिणात्रयं कुर्यादाचार्यः सुश्रवं पठन् ।
निनयेज्जलधाराश्च सहैव ब्रह्मचारिणा ॥
मेखलामजिनं दण्डं वस्त्रं यज्ञोपवीतकम् ।
एकैकं धारयेत्तत्र क्रमेणैवं त्यजेदथ ॥
आचार्याय च ते दद्याद्वाससी ब्रह्मचार्यथ ।
नवं चैवात्र कौपीनं धारयेत्पुनरेव हि ॥
विप्रेभ्यः कलशान्दद्यादृगृह्णीयादाशिषः शुभाः ।
यथाचारं तथा कुर्याद्देवकोत्थापनं च हि ॥

## जातूकर्ण्यः

यज्ञोपवीतधारणम्

[1]पवित्रं चास्मै प्रयच्छति ॥

## स्मृत्यन्तरम्

मात्रा सह भोजनम्, वपनस्नानालंकरणानि, परस्परनिरीक्षणम्, अनुप्रवचनीयहोमः

[2]समाप्य मात्रा सह भोजनं च
बहिर्निदध्याद्वपनाभिषेकः ।
अलंकृतिर्लग्नपरिग्रहः स्या-
न्मुखे समीक्षेत परस्परं च ॥
[3]मौञ्जीबन्धनके कुर्यादनुप्रवचनीयकम् ।
केचिदेतद्वदन्त्यग्नौ लौकिके चापरे विदुः ॥

## भविष्यपुराणम्

प्रथमभिक्षणीयाः स्त्रियः देयभिक्षा च

[4]मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम् ।
भिक्षेत भिक्षां प्रथमां या चैनं नावमानयेत् ॥

(१) संत. ९३४.
(२) धप्र. ४१.
(३) धप्र. ४२.
(४) अप. १।३० भिक्षां प्रथमां ( प्रथमं भिक्षां ) नाव ( न वि ) ; व्रक. ११६ प्रथमां ( प्रथमं ) ; स्मुसा. ६ नावमान ( न निवार ) शेषं व्रकवत् ; संप्र. ४८३ मनुभविष्यपुराणयोः ; संग. ६९० मनुभविष्यपुराणयोः .

[1]सुवर्णं रजतं रत्नं सा पात्रेऽस्य विनिक्षिपेत् ॥

(१) या चैनं नावमानयेत् इत्यन्याऽपीत्यर्थः। एतच्च प्रथममित्युपक्रम्याभिधानात् ज्ञातिकुलादिप्रात्यहिकभिक्षानिषेधाच्चोपनयनप्रयोगान्तर्गतभिक्षाविषयम्।

§ ब्रक. ११६

(२) निजां सोदर्याम्। प्रथमम् उपनयनकालीनभिक्षायाम्। स्मृसा. ६

## आनिर्दिष्टकर्तृकवचनम्

अभिवादनप्रकारः

[2]पुरस्तिष्ठन् दक्षिणं बाहुं श्रोत्रसमं प्रसार्याञ्जलिं बद्ध्वा प्लुताक्षरं स्वनामोच्चार्य 'अहं भो अभिवादयामि' इति वदन् ब्राह्मणोऽभिवादयेत् ॥

## संग्रहे

मेधाजननपदार्थः, कौपीनधारणम्

[3]वेदग्रहणसामर्थ्ययुक्ता मेधाऽनुजायते।
येन तन्मेधाजननं कर्मोपदिशति स्वयम् ॥

[4]कौपीनाच्छन्नं कृतशौचं कुमारं दक्षिणत उपवेश्य ॥

## स्मृत्यर्थसारः

उपसंग्रहणाभिवादनयोः प्रकारः, उपनयनव्रतम्, व्रतान्ते नूतनयज्ञोपवीतधारणम्, नूतनवस्त्रधारणमनियतम्

[5]उपसंग्रहणं नाम 'अमुकगोत्रो देवदत्तशर्माऽहं भो अभिवादये' इत्युक्त्वा कर्णौ स्पृष्ट्वा

§ संप्र. ब्रकगतम्।

(१) अप. १।३० ; ब्रक. १६ ; स्मृसा. ६ ; वीमि. १।२९ रत्नं ( राळं ) मनुः.

(२) गप. १४३ ; निप्र. ४०२ श्रोत्रसमं ( श्रोत्रं ) प्लुता ( प्लुतान्त्या ).

(३) प्रपा. २३७ क्ता मेधाऽनुजा (क्तमेधा तु जा) ; संप्र. ४४६.

(४) मुका. ९४ सरण्याख्ये स्मृतिसंग्रहे ; आन. १५४ सरण्याख्ये स्मृतिसंग्रहे.

(५) स्मृसार. ७ ; मुका.१११ शर्माऽहं ( शर्मा नामाहं ) त्तर ... पादं ( त्तानपाणिना गुरोर्दक्षिणं पादं ).

दक्षिणोत्तरपाणिभ्यां दक्षिणेन पाणिना गुरोर्दक्षिणपादं सव्येन सव्यं गृहीत्वा शिरोवनमनम् ॥

[1]अभिवादने पादसंग्रहणं नास्ति। पादस्पर्शनं कार्यं न वा। 'आयुष्मान् भव सौम्य देवदत्ता३' इति प्लुतान्तमुक्त्वा 'अमुकशर्मन्' इति प्रत्यभिवादः कार्यः। 'आयुष्मान् भव सौम्य' इति वा प्रत्यभिवादः कार्यः ॥

[2]उपनयनानन्तरं त्रिरात्रं द्वादशरात्रं वर्षं वाऽक्षारलवणाश्यधःशायी ब्रह्मचार्युपनयनव्रतं चरेत्। सर्वत्र व्रतान्ते नवानि यज्ञोपवीतानि धृत्वा पूर्वाणि त्यजेत्। वस्त्राणां त्यागानियमः ॥

## शाकलकारिकाः

वपनस्नानालंकरणानि, अन्योन्यनिरीक्षणम्, अक्षतप्रक्षेपः, अग्निमुखम्, कटिसूत्रकौपीनवस्त्राजिनोपवीतधारणम्, होमपूर्वाङ्गम्, अवक्षारणम्, अग्निकार्यम्, गायत्रीवाचनम्, मेखलाबन्धनम्, दण्डधारणम्, भिक्षाचरणम्, होमोत्तराङ्गम्, अनुप्रवचनीयहोमः, मेधाजननम्, व्रताचरणम्, देवकोत्थापनम्

[3]चौले स्युः स्थापिता याश्च शिखाः प्रवरसंख्यकाः।
वपेदन्याश्च मध्यस्थां शिखां हित्वोपनायने ॥

[4]मात्रा सहैव भुक्तस्य वपेत्केशान् शिखां विना।
शिखास्थानं भवेत्तस्य शिरोमध्येऽङ्गुलित्रयम् ॥

स्नाप्यालंकृत्य वाऽन्योन्यमाननं च निरीक्षयेत्।
प्राङ्मुखस्तूपविष्टः स्यात्पिता प्रत्यङ्मुखो बटुः ॥

ज्योतिःशास्त्रविदुक्ते तु मुहूर्ते शोभने यतः।
अञ्जलौ वा पितुर्धृत्वा सुवर्णसहितं फलम् ॥

नत्वोप( ? नत्वा चोप ) विशेत्पादौ दक्षिणाङ्के पितुर्बटुः।
ये यज्ञेनेति मन्त्रैश्च शिरसोरक्षतान्क्षिपेत् ॥

( १ ) स्मृसार. ७. (२) स्मृसार. ६.

(३) शाका. २६ पृ. ३.

(४) शाका. ३१–६५ पृ. ४–७.

द्विराचम्य ततः कर्ता प्राणायामादिकं चरेत् ।
आरभेदथ संकल्प्य( ? ल्पं ) यथाकर्मोपयोगिनम् ॥

स्थण्डिलादिकमग्रेऽहं वक्ष्ये सूत्रकृतो मतम् ।
आज्यसंस्कारपर्यन्तमुपलेपादिकं च यत् ॥
कौपीनं कटिसूत्रं च तूष्णीं दत्त्वाऽथ वै बटोः ।
वाससी चाजिनं दद्यादुपवीतं समन्त्रकम् ॥
अजिनं संचितं चैव चतुर्विंशाङ्गुलायतम् ।
त्र्यङ्गुलं च बहिर्लोमं धारयेदुपवीतवत् ॥
युवमित्यनया वस्त्रमृक्सामाभ्यामथाजिनम् ।
यज्ञोपवीतमन्त्रेण प्रदद्याद्ब्रह्मसूत्रकम् ॥
धृत्वोपवीतमाचम्य बटुर्दक्षिण एव हि ।
अग्नेरुत्तरतो गत्वा पुनर्दक्षिणमाविशेत् ॥
आचम्योदग्बटुर्गच्छेन्मध्यतश्चानलात्मनोः ।
दृष्ट्वा तीर्थं प्रणीताख्यं दक्षिणे तूपवेशयेत् ॥
बर्हिरास्तीर्य कुर्वीत स्रुवसंमार्जनादिकम् ।
नैव स्तब्धचक्षुषी तावद्यावद्दैवाहिकं भवेत् ॥
समन्वारब्ध एव स्याद्बटुर्दक्षिणतः सदा ।
आचार्यस्योत्तरे कुर्यादवक्षारणमेव हि ॥
अग्निकार्यं ततः कुर्यादुपविष्टस्तु दक्षिणे ।
पर्यूहनं विनाऽत्रैव केचिदाहुः समन्त्रकम् ॥
त्रिस्तेजसेत्यपः स्पृष्ट्वा तदा हस्तौ मुखे क्षिपेत् ।
उपस्थाय मयीत्यादिषड्भिर्मन्त्रैरतः परम् ॥
भस्माभिधारणं कुर्यान्मानस्तोके च मन्त्रतः ।
ललाटे हृदये नाभौ बाह्वोश्चैवाथ मस्तके ॥
ओं च म इत्युपस्थाय गोत्रमुच्चार्य तं नमेत् ।
जान्वाच्य दक्षिणं तत्र भवेत्प्रत्यङ्मुखो बटुः ॥
सुवर्णफलसंयुक्तं गृहाण त्वं ददामि ते ।
ब्राह्मणं कुरु मे तात गायत्रीमुपदिश्य माम् ॥
ओंकारं पूर्वमुच्चार्य भूर्भुवः स्वरतः परम् ।
तत्सवितुरिति मन्त्रं वाचयेत्त्रिर्बटुं पिता ॥

पच्छोऽर्धर्चश ऋक्शोति( ? शश्च ) गायत्रीं वाचयेदथ ।
एवं वक्तुमशक्तश्चेत्तं यथाशक्ति वाचयेत् ॥
त्रिः प्रदक्षिणमावेष्ट्य प्रावेपामेत्यृचा कटिम् ।
आबध्य मेखलां दण्डमेष क्षेतीत्यृचैव हि ॥
याचयेत्तु ततो भिक्षां होमशेषं समाप्य च ।
सायंकाले ततः संध्यां कृत्वा होमं समाचरेत् ॥
अनुप्रवचनीयः स्यादौपनायनिकानले ।
इत्याहुः केचिदेवाग्नावन्यस्मिन्नपरेऽब्रुवन् ॥
अथ चैव चतुर्थेऽह्नि मेधाजननमाचरेत् ।
ग्रामाद्बहिर्गृहे वाऽपि शिष्टाचारानुसारतः ॥
स्थापयेत्कलशांस्तत्र चतुरः खाद्यसंयुतान् ।
तन्मध्ये कलशं चैकं वसन्ताख्यं सुरेखितम् ॥
वसन्तं चैव पालाशं पूजयेच्छ्रद्धयेत्यृचा ।
जलधारा निषिञ्चेत सुश्रवः सुश्रवा इति ॥
मेखलामजिनं दण्डं वस्त्रे यज्ञोपवीतकम् ।
पालाशसंनिधौ त्याज्यं नवान्यानि च धारयेत् ॥
वस्त्रप्रावरणीयं च परिधानीयमेव च ।
कौपीनं च धृतं पूर्वमाचार्याय निवेदयेत् ॥
ततो दद्याद्द्विजातिभ्यः कलशान् दीपसंयुतान् ।
वाससी गुरवे दत्त्वा ब्रह्मचारी व्रतं चरेत् ॥
देवकोत्थापनं कुर्यात्कर्ता संपूज्य देवताः ।
उत्तिष्ठेति च मन्त्रेण समादाय सभार्यकम् ॥
आगत्य मण्डपे तत्र तिष्ठन्नेव जपेदिमम् ।
प्रेतिचेतीति वै गाथां पूर्वतश्च दिशं प्रति ॥
मयाऽर्चिताः समाहूता यज्ञार्थं कुलदेवताः ।
यूयं गच्छत संतुष्टाः पुनरागच्छतेति च ॥
निनयेदिति संप्रार्थ्य वसन्तमण्डपोपरि ।
सत्रमन्त्र( ? )दिमं मन्त्रं पठञ्छिरसि सिञ्चयेत् ॥
अभ्यारमिति मन्त्रेण मण्डपं च विसर्जयेत् ।
ईशानकोणतः सर्वमिति यज्ञविदां मतम् ॥

## शौनककारिकाः

संभारसंभरणम्, वृद्धिश्राद्धादि, कुमारभोजनम्, वपनम्, स्नानम्, मुहूर्ते संनिधापनम्, होमपूर्वतन्त्रम्, वस्त्राजिनोपवीतधारणम्, होमः, अञ्जल्यवधारणम्, आदित्यदर्शनम्, परिदानम्, हृदयस्पर्शनम्, समिदाधानम्, अभिवादनम्, सावित्र्युपदेशः, मेखलाबन्धनम्, दण्डदानम्, धर्मोपदेशः, होमोत्तरतन्त्रम्, भिक्षाचरणम्, अनुप्रवचनीयहोमः, होमशेषेण ब्राह्मणभोजनम्, वेदसमाप्तिवाचनम्, त्रिरात्रादिव्रतम्, मेधाजननम्, पुण्याहवाचनम्

**[1]पूर्वेद्युरेव सकलान्संभारांश्च यथोचितान् ।**
**संभृत्याभ्युदयश्राद्धमपि कुर्याद्यथाविधि ॥**

(१) अत्रापिशब्देन स्वस्तिवाचनग्रहयज्ञौ समुच्चीयेते । अनयोः शुभकर्मादौ करणीयत्वं तत्प्रकरण एव प्रत्यपादि । प्रपा. २२०

(२) अत्रापिशब्दात्स्वस्तिवाचनग्रहमखमण्डपदेवतास्थापनादि गृह्यते । संप्र. ४०९

**[2]तत्राऽऽदौ परिधानार्थं कल्पयेन्नववस्त्रकम् ।**
**शिरोवगुण्ठनं चैव नवमन्यत्प्रकल्पयेत् ॥**

(१) शिरोवगुण्ठनमत्र प्रावरणस्थानीयम् । ¶ प्रपा. २२०

(२) अत्र वस्त्रशब्देन कौपीनं ग्राह्यम् । तथा चाऽऽश्वलायनः– ‘ वाससी ते स्वगुरवे मेधाजननकर्मणि । दद्यात्तावत्प्रभृत्येव कौपीनेन प्रवर्तयेत् ॥ ’ । तावत्प्रभृति कौपीनेनेत्यन्वयः । $ संग. ६६१

¶ संप्र. प्रपावत् ।

$ शेषं प्रपावत् ।

(१) शौका. ६–७ पृ. ४२; प्रपा. २२०; संप्र. ४०९.

(२) शौका. ७–८ पृ. ४२ चैव नव ( प्रावरण ); प्रपा. २२० तत्रा ( अत्रा ); संप्र. ४१०; संग. ६६०–६६१ वीरमित्रोदये.

**[1]यथोक्तमजिनं वाऽपि कल्पयेद्ववगुण्ठनम् ।**
**उपवीतं च संपाद्य तथा कृष्णमृगाजिनम् ।**
**यथोक्तमेखलां दण्डं यथोक्तं च प्रकल्पयेत् ॥**

**[2]एवं संभृत्य संभारान्पूर्वेद्युश्च यथोचितान् ।**
**अपरेद्युः कृतस्नानभूषणस्वस्तिवाचनम् ॥**

**[3]कृतकौतुकबन्धं च कुमारं कृतभोजनम् ।**
**उप्तोत्तमाङ्गं भूयोऽपि स्नातमात्मसमीपतः ॥**

**[4]संनिधाप्य गुरुः पुण्ये मुहूर्ते पुरतस्ततम् ।**
**तन्त्रं कृत्वाऽऽज्यसंस्कारपर्यन्तमवधानतः ॥**

**[5]अथोत्थाय गुरुर्वह्नेः पश्चात्स्थित्वा तु माणवम् ।**
**प्राङ्मुखं समवस्थाप्य परिधाप्यैकमम्बरम् ॥**

**[6]अथास्य दक्षिणकरं किंचिदूर्ध्वं प्रसारितम् ।**
**स्थापयित्वा द्वितीयेन वाससा वाऽजिनेन वा ॥**

**[7]अवगुण्ठ्य ततस्तस्य करस्याग्रेऽवगुण्ठिते ।**
**निक्षिप्य ब्रह्मसूत्रं तु वितत्याधः प्रसार्य च ॥**

**[8]वामांसे स्थापयित्वैतत्तथा कृष्णमृगाजिनम् ।**
**शिरोवगुण्ठमुपरि निक्षिप्योपनिधाय च ॥**

(१) शौका. ८–९ पृ. ४२; प्रपा. २२० क्तमेख ( क्तां मेख ); संप्र. ४१०.

(२) शौका. १० पृ. ४२ चितान् (दितान्); प्रपा. २२० पू. : २२७ उत्त.; संप्र. ४१० पू.; संवी. ७० षणस्व ( षणः स्व ) उत्त.

(३) शौका. ११ पृ. ४२ उप्तो ( उप्त्वो ) स्नात ( स्नान ); प्रपा. २२७.

(४) शौका. १२ पृ. ४२ धाप्य (धाय); प्रपा. २२७.

(५) शौका. १३ पृ. ४२ धाप्यै (धायै); प्रपा. २२७.

(६) शौका. १४ पृ. ४२ वाऽजि ( चाजि ); प्रपा. २२७.

(७) शौका. १५ पृ. ४२; प्रपा. २२७ वितत्या ( वितत्त्याऽ ); संप्र. ४१४ उत्त.; संग. ६७० उत्त.

(८) शौका. १६ पृ. ४२; प्रपा. २२७ तत्तथा ( व तथा ); संप्र. ४१४ यित्वैत ( येच्चैत ); संग. ६७० संप्रवत् .

अस्माच्च वासोवैकल्पिकात्प्रावरणाजिनादतिरिक्तमन्त-र्वासःस्थानीयमजिनान्तरं धारणीयमित्याह शौनकः—
'निक्षिप्य... जिनम् ॥' इति । संप्र. ४१४

[1]ततः शास्त्रोक्तविधिना यत्नेनाऽऽचमयेदपः ।
आचान्तवन्तमाज्यादियज्ञाङ्गादुत्तरेण तम् ॥
[2]नीत्वा माणवमाचार्यो वह्निं चाऽऽत्मानमन्तरा ।
गमयित्वाऽऽत्मनः पार्श्वे दक्षिणे चोपवेश्य तम् ॥
[3]परिध्याधानमारभ्यानूयाजस्थापनावधि ।
तन्त्रं कृत्वा ततस्तेन संस्पृष्टः पाणिना गुरुः ॥
[4]इध्माधानादिकं शेषमाज्यभागाहुती विना ।
पुरस्तात्तन्त्रमाचार्यः प्रधानाहुतिमाचरेत् ॥
[5]अग्न आयूंषि चेत्याद्यैश्चौलहोमः कृतः पुरा ।
तैरेव मन्त्रैरत्रापि जुहुयात्ताननुस्मरन् ॥
[6]हुत्वैवमुत्थायाऽऽचार्यो वह्नेरुत्तरतोऽन्तिके ।
प्रदेशे प्राङ्मुखस्तिष्ठेच्छिष्योऽप्युत्थाय
वह्निना ॥
[7]व्यवधानं परिहरन् गत्वाऽऽचार्यस्य पूर्वतः ।
आचार्याभिमुखः स्थित्वा घटयेत्स्वयमञ्जलिम् ॥
[8]निदधाति तमप्यन्यो वारिणा पूरयेत्ततः ।
तत्सवितुर्वृणीमहे वयमित्यादृचाऽनया ॥

(१) शौका. १७ पृ. ४२ ; प्रपा. २२७.

(२) शौका. १८ पृ. ४२ वेश्य ( विश्य ) ; प्रपा. २२७.

(३) शौका. १९ पृ. ४२–४३ ; प्रपा. २२७.

(४) शौका. २० पृ. ४३ हुती वि ( हुतीर्वि ) ; प्रपा. २२७–२२८.

(५) शौका. २१ पृ. ४३ षि चेत्या (षीत्या) तैरेव ( तत्रैव ) ; प्रपा. २२८.

(६) शौका. २२ पृ. ४३ ; प्रपा. २२८ ; संप्र. ४२४.

(७) शौका. २३ पृ. ४२ ( व्यवधानं ) एतावदेव ; प्रपा. २२८ ; संप्र. ४२४ येत्स्वय ( येत्वन्य ).

(८) शौका. २४ पृ. ४३ प्रथमचरणो नास्ति ; प्रपा. २२८ ; संप्र. ४२४.

[1]शिष्याञ्जलौ स्वाञ्जलिस्थमवक्षार्योदकं गुरुः ।
शिष्याञ्जलिगताश्चापोऽवक्षार्य स्वेन पाणिना ॥
[2]देवस्य त्वेति गृह्णामीत्यन्तं यजुरुदीर्य तु ।
शर्मान्तं नाम संबुद्ध्या निर्दिश्य च बटोः पुनः ॥
[3]साङ्गुष्ठं दक्षिणं पाणिं गृह्णीयात्स्वेन पाणिना ।
एवमेव पुनः कुर्यादञ्जल्योः पूरणादिकम् ॥
[4]हस्तग्रहणपर्यन्तं कर्म हस्तपरिग्रहे ।
तत्र मन्त्रस्तु सवितेत्यादिः स्यादितरत्समम् ॥
[5]पुनश्च पूर्ववत्कुर्यादञ्जल्योः पूरणादिकम् ।
मन्त्रस्तत्राग्निराचार्यस्तवेत्यादिः परिग्रहे ॥
[6]वियतेऽतोऽन्यदखिलं तन्त्रं पूर्ववदाचरेत् ।
मन्त्रेण देव सवितरेष तेत्यादिना गुरुः ॥
[7]आदित्यमीक्षयेच्छिष्यमथोभावपि पूर्ववत् ।
तिष्ठेतामुत्तरेणाग्निमन्योन्याभिमुखौ ततः ॥
धात्रे परिददाम्येनमिति संकल्पपूर्वकम् ।
कस्य ब्रह्मादिकं मन्त्रं ददाम्यन्तं गुरुर्जपेत् ॥
[8]युवा सुवासा इत्याद्यमथार्धर्चमुदीर्य तम् ।
प्रदक्षिणमुपावर्त्य प्रापयेत्प्राङ्मुखं बटुम् ॥

(१) शौका. २५ पृ. ४३ ; प्रपा. २२८ ; संप्र. ४२५ ; संकौ. १२५.

(२) शौका. २६ पृ. ४३ गृह्णामी ( गृह्णीया ) ; प्रपा. २२८ ; संप्र. ४२५.

(३) शौका. २७ पृ. ४३ ; प्रपा. २२८ ; संप्र. ४२५ दञ्जल्योः ( दञ्जल्याः ).

(४) शौका. २८ पृ. ४३ ; प्रपा. २२८ तत्र मन्त्र ( तत्तन्मन्त्रे ) त्यादिः ( त्यादि ) ; संप्र. ४२५.

(५) शौका. २९ पृ. ४३ ; प्रपा. २२८ ; संप्र. ४२५ दिः परिग्रहे ( दिपरिग्रहम् ).

(६) शौका. ३० पृ. ४३ ; प्रपा. २२८ ; संप्र. ४२५.

(७) शौका. ३१–३२ पृ. ४३ ; प्रपा. २२८ ; संप्र. ४२५ ; संकौ. १२५ कारिका.

(८) शौका. ३३ पृ. ४३ ; प्रपा. २२८ द्यमथा ( द्यं मन्त्रा ) ; संप्र. ४२५ मथा ( मप्य ).

[1]अस्योपरि तदंसाभ्यां पाणी कृत्वाऽऽत्मनो गुरुः ।
तं धीरासः कवय उन्नयन्तीत्याद्यमुत्तरम् ॥
[2]अर्धर्चमुक्त्वोरोदेशं हस्ताभ्यां युगपत्स्पृशेत् ।
ततः पूर्ववदासीत गुरुः शिष्योऽपि चा-ऽऽत्मना ॥
[3]व्यवधानं परिहरन्नग्नेर्गत्वाऽन्तिकं गुरोः ।
आसित्वा दक्षिणे तस्य वह्निं परिसमुह्य च ॥
[4]तूष्णीं समिधमादध्यात्प्राङ्मुखो यदि वाऽग्नये ।
इत्यादिकं खिलं मन्त्रं स्वाहेत्यन्तमुदीर्य तु ॥
[5]आदध्यादेवमाधाय समिधं पाणिना ततः ।
अपः स्पृष्ट्वाऽग्निना वक्त्रं संवृतोष्ठपुटद्वयम् ॥
[6]तेजसा मा समित्यादिमन्त्रेण परिमृज्य तत् ।
पाणिं प्रक्षाल्य भूयोऽपि स्पृष्ट्वा स्पृष्ट्वाऽनलं मुखम् ॥
[7]त्रिर्निमृज्य तथा पाणिं क्षालयेच्च पुनः पुनः ।
अथोत्थायाञ्जलिं कृत्वा हृदये प्रणिधाय च ॥
[8]मयि मेधां मयीत्याद्यैः षड्भिर्मन्त्रैर्विभावसुम् ।
उपतिष्ठेद्गुरुरपि अग्नेः पश्चिमभूतले ॥

(१) शौका. ३४ पृ. ४३ कृत्वा ( हृत्वा ) यन्तीत्याद्य ( यन्त्याद्य ); प्रपा. २२८; संप्र. ४२५ कृत्वा ( दत्वा ).

(२) शौका. ३५ पृ. ४३ रोदेशं ह ( त्तरे हृद्ध ); प्रपा. २२८; संप्र. ४२५ ष्योऽपि ( ष्येण ); कृम. ९४६ उत्त.

(३) शौका. ३६ पृ. ४३ ; प्रपा. २२८ ; संप्र. ४२५ न्तिकं ( न्तिके ) पू. : ४२७ उत्त. ; कृम. ९४६.

(४) शौका. ३७ पृ. ४३–४४ खिलं ( फलं ); प्रपा. २२८ ; संप्र. ४२७.

(५) शौका. ३८ पृ. ४४ ; प्रपा. २२८ ; संप्र. ४२७ माधाय ( मादाय ).

(६) शौका. ३९ पृ. ४४ ; प्रपा. २२८ ; संप्र. ४२७.

(७) शौका. ४० पृ. ४४; प्रपा. २२८; संप्र. ४२७ मृज्य ( मृंज्य ) प्रणि ( परि ).

(८) शौका. ४१ पृ. ४४ रपि अग्नेः ( रप्यग्नेः ); प्रपा. २२८ रुरपि अ ( रोः पूर्वम ) ; संप्र. ४२७ पू. ; कृम. ९४६.

[1]आसीत प्राङ्मुखः शिष्योऽप्याचार्याभिमुखो भवेत् ।
भूतले दक्षिणं जानु पातयित्वाऽभिवादये ॥
[2]इत्युक्त्वा प्रथमं पश्चादात्मीयं गुह्यनाम च ।
शर्मशब्दान्तमुच्चार्य ततो नामाहमस्मि भोः ॥
[3]इति चोक्त्वा गुरोः पादौ पाणिभ्याममिसं-स्पृशेत् ।
सव्यं सव्येन चरणं दक्षिणेन तु दक्षिणम् ॥
[4]पाणिं कुर्यात्प्रसव्यस्य तूपर्यथाभिवादयेत् ।
स शंभुशर्मनामाऽहमस्मि भोरभिवादये ॥
[5]इत्येवमभिवाद्यैतं विनयावनताकृतिः ।
भूत्वोपदेशं सावित्र्याः शिष्यो वाञ्छन्नधीहि भोः ॥
[6]सावित्रीं भो अनुब्रूहीत्युक्त्वा चाऽऽसीत पार्श्वतः ।
अथाऽऽचार्योऽपि शिष्यस्य पाणी तद्धृत-वाससा ॥
[7]पाणिप्रदेशमाच्छाद्य पाणिभ्यां परिगृह्य च ।
सावित्रीं स्वयमाचार्यः पूर्वं पच्छस्तथैव तम् ॥

(१) शौका. ४२ पृ. ४४ भवेत् ( भवन् ) वादये ( वादयेत् ); प्रपा. २२८ आसीत ( आसीनः ) जानु (जानुं) ; कृम. ९४६ जानु (जानुं) वादये ( वादयेत् ).

(२) शौका. ४३ पृ. ४४ ; प्रपा. २२८.

(३) शौका. ४४ पृ. ४४ ; प्रपा. २२८ मभिसं ( मपि सं ).

(४) शौका. ४५ पृ. ४४ शर्मना (शर्मा ना) वादये ( वादयेत् ) ; प्रपा. २२८ पर्य ( पर्या ).

(५) शौका. ४६ पृ. ४४ द्यैतं (द्यैव) ; प्रपा. २२८ ; संप्र. ४२८. द्यैतं ( द्यैनं ).

(६) शौका. ४७ पृ. ४४ पाणी ( पाणिं ) ; प्रपा. २२८ क्त्वा चा ( क्त्वाऽथा ) पाणी तद्धृत ( पाणिना धृत); संप्र. ४२८ चाऽऽसीत (आसीत) तद्धृत (तु धृत).

(७) शौका. ४८ पृ. ४४ पच्छस्त ( पच्छं त ) ; प्रपा. २२८ तम् ( च ); संप्र. ४२८ शमाच्छा ( शेनाऽऽच्छा ).

[1]शिष्यं च वाचयेत्पश्चादुच्चार्यार्धर्चशः स्वयम्।
तथैव वाचयेच्छिष्यमथोक्त्वा सकलां स्वयम् ॥
[2]पूर्वं तथैव शिष्यं च वाचयेदित्ययं क्रमः।
त्रिष्वशक्तौ प्रयोगेषु यथा शिष्यस्तु शक्नुयात् ॥
[3]वक्तुं तथैवमाचार्यो वाचयेदवधानतः।
ततः शिष्योरसि मम व्रत इत्यादिमन्त्रतः ॥
[4]निधायोर्ध्वाङ्गुलिं पाणिमाबध्नीयात्तु मेखलाम्।
दण्डं चास्मै प्रदायोक्तं ब्रह्मचर्यं च निर्दिशेत् ॥
[5]ब्रह्मचार्यस्यपोऽशानेत्यादिप्रैषमुदीरयेत्।
प्रैषस्य चार्थं निर्दिश्य द्वादशाब्दादिकं ततः ॥
[6]कालं च ब्रह्मचर्यस्य शिष्यायोपदिशेदथ।
सौविष्टकृतहोमादि ऊर्ध्वं तन्त्रं समापयेत् ॥
[7]आ मेधाजननाद्रक्षेदौपनायनिकानलम्।
तत्रैव सायं प्रातश्च समिधं जुहुयादसौ ॥

अयं चोपनयनाग्निरामेधाजननं रक्षणीयः। तथा च शौनकः— 'आमेधा... दसौ ॥' इति। अत एवानुप्रवचनीये औपनायनिकाग्नावेव 'ततोऽन्वाधानपूर्वकम्' इत्यन्वाधानमुक्तवान्। कारिकाकारमते तूपनयनाग्नेरामेधाजननं रक्षणं नास्तीति गम्यते, अनुप्रवचनीये 'उपलेपादि पूर्ववत्' इति स्थण्डिलान्तरसंस्काराभिधानात्। संप्र. ४४२

[1]ब्रह्मचारी निशारम्भे पक्तुं ब्रह्मौदनं चरुम्।
द्विजान्भोजयितुं पश्चाद्द्रव्यं भिक्षेत बान्धवान् ॥
[2]अप्रत्याख्यायिनः पुंसः स्त्रियो वा तादृशीः पुनः।
भिक्षेत पात्रहस्तः सन् प्राप्य प्राप्य तदन्तिकम् ॥
[3]अग्रे भिक्षेत जननीमप्रत्याख्यायिनी च या।
पश्चात्पितरमन्येऽपि ये वा स्युर्बान्धवास्ततः ॥
[4]अत्र प्रकारो भिक्षामित्युक्त्वा पूर्वं ततः परम्।
भवान्ददात्विति ब्रूयात्पुरुषं प्रति भिक्षणे ॥
[5]स्त्रियं तु भिक्षां भवती ददात्वित्यभिवाचयेत्।
लब्धं विज्ञाप्य गुरवे तत्पार्श्वे तन्निधाय च ॥
[6]तत्संनिधावचपलस्तिष्ठेदा दिवसक्षयात् ॥
[7]सायंसंध्याविधिं कृत्वा अथोपनयनानले।
आधाय समिधं पूर्वं ततोऽन्वाधानपूर्वकम् ॥
[8]पूर्णपात्रनिधानान्तं तन्त्रं कृत्वा पुरस्तनम्।
ततो लब्धं च तद्भैक्षं द्विजान्भोजयितुं तथा ॥

---

(१) शौका. ४९ पृ. ४४ ; प्रपा. २२८ शः स्वयम् ( शः समम् ) ; संप्र. ४२८.

(२) शौका. ५० पृ. ४४ ; प्रपा. २२८ ; संप्र. ४२८ शक्तौ प्रयो ( प्येतेषु यो ).

(३) शौका. ५१ पृ. ४४ ; प्रपा. २२८ ; संप्र. ४२८ वमा ( व आ ) पू. : ४३० उत्त.

(४) शौका. ५२ पृ. ४४ ; प्रपा. २२८ माबध्नीयात्तु (मथाऽऽबध्नीत ) ; संप्र. ४३० प्रपावत्.

(५) शौका. ५३ पृ. ४४ प्रैषस्य ( प्रेषस्य ) ; प्रपा. २२८.

(६) शौका. ५४ पृ. ४५ पयेत् ( चरेत् ) ; प्रपा. २२८ ऊर्ध्वं त ( ऊर्ध्वंत ).

(७) शौका. ५५ पृ. ४५ ; प्रपा. २२८ दौपनायनिका ( त्तमोपनयना ) ; संप्र. ४४२ प्रपावत्.

(१) शौका. १ पृ. ४५ पश्चाद्द्र ( पश्चाद्ध ) ; प्रपा. २२९ पक्तुं ( पृच्छन् ) ; संप्र. ४३८.

(२) शौका. २ पृ. ४५ ; प्रपा. २२९ ; संप्र. ४३८.

(३) शौका. ३ पृ. ४५ ; प्रपा. २२९ ये वा (ये च) ; संप्र. ४३८ ; मुका. ९६ उत्तरार्धे ( पश्चात्पितरमन्यांश्च आचार्यं बान्धवांस्तथा ॥ ) कारिकाकारः.

(४) शौका. ४ पृ. ४५ ; प्रपा. २२९ ; संप्र. ४३८–४३९.

(५) शौका. ५ पृ. ४५ याचयेत् ( याचितम् ) ; प्रपा. २२९ ; संप्र. ४३९ शौकावत्.

(६) शौका. ६ पृ. ४५ ; प्रपा. २२९ ; संप्र. ४३९ दा दिवस ( दाऽऽदित्यसं ).

(७) शौका. १ पृ. ४५ ; प्रपा. २३१ ; कुम. ९५०.

(८) शौका. २ पृ. ४५ द्भैक्षं ( द्भैक्ष्यं ) ; प्रपा. २३१ तद्भै ( यद्भै ) ; संप्र. ४४१.

[1]होमं च कर्तुं पर्याप्तं पृथक्कृत्य निरुप्य च।
चरुं पचेत्सर्वथैव पक्तुं स्थाल्यां न शक्नुयात्॥
[2]तदा तदर्थं तद्बन्धुः कश्चित्तत्कृत्यमाचरेत्।
अथ विज्ञापयेच्छिष्यः शृतो ब्रह्मौदनश्चरुः॥
[3]अनुप्रवचनीयो वेत्याचार्यस्तदनन्तरम्।
आज्यसंस्कारमारभ्यानूयाजस्थापनावधि॥
[4]तन्त्रं कृत्वाऽथ शिष्येण स्पृष्टः शेषं पुरस्तनम्।
इध्माधानादिकं तन्त्रमाज्यभागद्वयं विना॥
[5]ततोऽवदानधर्मेण त्ववदाय हविः स्रुचि।
सदसस्पतिमद्भुतं प्रियमित्याद्यृचाऽऽहुतिम्॥
[6]आद्यां कृत्वाऽथ सावित्र्या द्वितीयाहुति-
मावरेत्।
पश्चादृषिभ्यः स्वाहेति तृतीयाहुतिमाचरेत्॥
[7]चतुर्थं स्विष्टकृद्धोमं कृत्वोर्ध्वं तन्त्रमाचरेत्।
होमावशिष्टमन्नं च ब्राह्मणान्भोजयेदथ॥
[8]भुक्तवद्भिश्च तैर्वेदसमाप्तिं वाचयेदपि।
ब्रूयाद्द्विजान्गुरुर्वेदसमाप्तिं वदतेति तान्॥

(१) शौका. ३ पृ. ४५ निरुप्य ( निरूप्य ); प्रपा. २३१; संप्र. ४४१ शौकावत्.

(२) शौका. ४ पृ. ४५; प्रपा. २३१ तदर्थं ( तदर्धे ); संप्र. ४४१.

(३) शौका. ५ पृ. ४५; प्रपा. २३१; संप्र. ४४१ भ्यानूयाज ( भ्य शृताव ).

(४) शौका. ६ पृ. ४५; प्रपा. २३१; संप्र. ४४१.

(५) शौका. ७ पृ. ४५ स्रुचि (शुचिः); प्रपा. २३१ ण त्ववदाय हविः स्रुचि ( णावदाय च हविः शुचि ); संप्र. ४४१ ण त्व ( णाव ).

(६) शौका. ८ पृ. ४५; प्रपा. २३१ आद्यां कृत्वाऽथ ( अनन्तरं तु ); संप्र. ४४१.

(७) शौका. ९ पृ. ४६; प्रपा. २३१; संप्र. ४४२.

(८) शौका. १० पृ. ४६; प्रपा. २३१ वद्भिश्च तै ( वद्भिर्द्विजै ); संप्र. ४४२.

[1]समाप्तिरस्त्विति ब्रूयुस्तेऽपि वेदपदात्परम्।
अत ऊर्ध्वं हविष्याशी त्रिरात्रं ब्रह्मचर्यवान्॥
[2]अधःशायी च वर्तेत गुरोश्चित्तं प्रसादयेत्।
एवं द्वादशरात्रं वा वर्तेताब्दमथापि वा॥
[3]शक्त्यपेक्षया कल्पः स्याद्व्रते तु ब्रह्मचारिणः।
एवं कृतव्रतस्यास्य चतुर्थे दिवसे गुरुः॥
[4]त्रयोदशे वाऽब्दान्ते वा मेधाजननमाचरेत्॥
[5]स्ववासापेक्षयाऽऽग्नेयीं दिशं याम्यां च
नैर्ऋतीम्।
वर्जयित्वा दिशो निन्द्यास्तिस्रोऽन्यस्यां दिशि
स्थितम्॥
[6]पलाशं प्राप्य तत्रास्य मेधाजननमाचरेत्।
अत्रैकमूलमित्येव पलाशस्य विशेषणात्॥
[7]मूलप्रभृत्येवोद्भूतशाखाभेदसमन्वितम्।
सर्वथा यस्य कस्यापि पलाशस्य त्वसंभवे॥
[8]कुशस्तम्बमुपागम्य तं कुम्भानीतवारिणा।
प्रदक्षिणं त्रिः परितः सिञ्चन्तं ब्रह्मचारिणम्॥
[9]वाचयेन्मन्त्रमाचार्यः सुश्रवः सुश्रवा असि।
इत्येवमादिकं भूयासमन्तमवधानतः॥

(१) शौका. ११ पृ. ४६ रात्रं ( रात्रिं ); प्रपा. २३१; संप्र. ४४२ पू.: ४४३ उत्त.

(२) शौका. १२ पृ. ४६ वर्तेत ( वर्त्तेति ); प्रपा. २३१; संप्र. ४४३.

(३) शौका. १३ पृ. ४६; प्रपा. २३१ शक्त्यपे ( शक्त्या चापे ) तु ब्रह्म ( ब्रह्म ); संप्र. ४४३.

(४) शौका. १४ पृ. ४६; प्रपा. २३१; संप्र. ४४३.

(५) शौका. १ पृ. ४६; प्रपा. २३८ र्ऋतीम् ( र्ऋतिम् ); संप्र. ४४५.

(६) शौका. २ पृ. ४६; प्रपा. २३८; संप्र. ४४५.

(७) शौका. ३ पृ. ४६ त्वसं ( च सं ); प्रपा. २३८; संप्र. ४४५.

(८) शौका. ४ पृ. ४६; प्रपा. २३८ कुम्भानीत-वारिणा ( कुम्भमितराणि च ); संप्र. ४४५.

(९) शौका. ५ पृ. ४६ भूयास ( भूयात्स ); प्रपा. २३८; संप्र. ४४५ भूयास ( भूयः स ).

[१]प्रतिप्रदक्षिणं मन्त्रमप्यभ्यावर्त्य वाचयेत् ।
ततः पूर्वधृतं वस्त्रमेखलाद्यखिलं बटुः ॥

[२]पलाशमूले संन्यस्य नवान्यन्यानि धारयेत् ।
गृहान् प्रतीयादुगुर्वाद्यैः समस्तैर्बन्धुभिः सह ॥

[३]पथि स्वस्त्ययनान्मन्त्रान्वदेयुर्बान्धवाः सह ।
अग्रतोऽस्य नयेयुस्ते वारिधारां च संतताम् ॥

[४]ततः सुमङ्गलैर्दीपैः पूर्णकुम्भादिभिर्युतः ।
प्रापयेद्गृहमाचार्यः पुण्याहं वाचयेद्द्विजैः ॥

[५]उपनीतो हि कुर्वीत सायंसंध्यामुपक्रमात् ।
अग्निकार्यं ततः कुर्यादौपनायनिकानले ॥

अनुप्रवचनीयं च तस्मिन्नेव हुताशने ।
समन्वारब्ध आचार्ये आहुती च( ? आहुतीनां )
त्रयं हुनेत् ॥

## जयन्तकारिकाः

हस्तग्रहणमन्त्रे आभिवादनिकनामोच्चारणम्

[६]असाविति पदस्थाने संबुद्ध्या चास्य निर्दिशेत् ।
आभिवादनिकं नाम न तु सांव्यावहारिकम् ॥

(१) शौका. ६ पृ. ४६ वस्त्रमे ( वस्त्रं मे ) ; प्रपा. २३८ ; संप्र. ४४५ शौकावत् .

(२) शौका. ७ पृ. ४६ नवान्य ( सर्वाण्य ) र्वाद्यैः (र्वेश्वैः) ; प्रपा. २३८ ; संप्र. ४४५ नवान्य (सर्वाण्य) ; संकौ. १५१ उत्त.

(३) शौका. ८ पृ. ४६ वाः सह ( वैः सह ) ; प्रपा. २३८ ; संप्र. ४४५ नये ( नमे ) ; संकौ. १५१ वदेयुर्बान्धवाः ( पठेयुर्ब्राह्मणैः ) पू .

(४) शौका. ९ पृ. ४६ र्युतः (र्युतैः); प्रपा. २३८ सुम ( सन्म ) ; संप्र. ४४५ प्रपावत् ; संकौ. १५१ सुम ( सन्म ) येद्द्विजैः ( येत्ततः ).

(५) धप्र. ४०–४१.

(६) प्रपा. २२३.

## कुमारिलकारिकाः

वृद्धिश्राद्धम् , स्नानालंकरणाशीर्वाचनभोजनवपनस्नानानि, मुहूर्ते समीपानयनम्, होमपूर्वाङ्गम्, वस्त्राजिनोपवीतधारणम् , होमः , अञ्जल्यवक्षारणम् , आदित्यदर्शनम् , परिदानम् , हृदयस्पर्शनम् , ऊह्नोक्षणे , समिदाधानम् , अभिवादनम् , सावित्रीवाचनम् , मेखलाबन्धनम् , दण्डदानम् , धर्मोपदेशः , होमशेषसमापनम् , भिक्षाचरणम् , अनुप्रवचनीयहोमः , ब्राह्मणभोजनम् , वेदसमाप्तिवाचनम् , त्रिरात्रादिव्रतम् , मेधाजननम्

[१]ब्राह्मणस्योपनयनमुक्ते काले भवेदथ ।
कृत्वाऽऽभ्युदयिकं श्राद्धं पूर्वेद्युरपरेऽहनि ॥

अस्यार्थः– चौलानन्तरं ब्राह्मणस्य गृह्यकारेणोक्ते काले जन्माद्यष्टमाब्दादावुपनयनं भवेत् ।

प्रपा. २११

[२]कृतस्नानमलंकुर्यादाशिषो वाचयेदथ ।
भुक्तभोज्यस्य शिरसो वपनं स्नानमेव च ॥
एवंभूतं कुमारं तमवस्थाप्यान्तिके ततः ।
ज्योतिःशास्त्रविदुक्ते तु मुहूर्ते शोभने ततः ॥

[३]आज्यसंस्कारपर्यन्तमुपलेपादि पूर्ववत् ।
परिधानं भवेदस्य वाससैवाहतेन तु ॥

[४]भवेत्प्रावरणं वासः कृष्णाजिनमथापि वा ।
एवभूतं कुमारं तं कुर्याद्यज्ञोपवीतिनम् ॥

[५]आचान्तमुत्तरेणाऽऽज्यं यज्ञपात्राणि
चाऽऽनयेत् ।
अन्तरेणाग्निमात्मानं दक्षिणे तूपवेशयेत् ॥

(१) कुका. १।१३।१ ; प्रपा. २११ पूर्वे ( परे ) ; धप्र. ४१ दथ ( दिह ).

(२) कुका. १।१३।२–३ ; प्रपा. २२३ ; धप्र. ४१.

(३) कुका. १।१३।४ ; प्रपा. २२३.

(४) कुका. १।१३।५ ; प्रपा. २२३ ; बाल. १।२९ पृ. १५६ कृष्णाजि ( कृच्छ्रही ).

(५) कुका. १।१३।६ ; प्रपा. २२३ ; संकौ. १२४

आचमने देशश्च कारिकायाम्– आचान्तमिति । आचमनोत्तरं दक्षिणे उपवेशनं कार्यमित्यर्थः ।

क्रम. ९५८

[1]बर्हिरास्तरणादि स्यात्स्रुवसंमार्जनान्तकम् ।
समन्वारब्ध एतस्मिन्ब्रह्मचारिण्यथेतरः ॥
[2]कुर्यादाघारपर्यन्तं चौलोक्ताज्याहुतीरपि ।
अत्राऽऽज्यभागौ नैवेष्टावित्युक्तं पूर्वमेव तु ॥
अग्नेरुत्तरतस्तिष्ठेदाचार्यः प्राङ्मुखस्ततः ।
अकुर्वन्नात्मनोऽग्नेश्च व्यवायं गच्छतीतरः ॥
[3]आचार्यस्य पुरस्तात्तु तिष्ठेत्प्रत्यङ्मुखस्ततः ।
अव्यवायस्तु संस्कारकर्मस्वग्निकुमारयोः ॥
[4]ब्रह्मचारिण आचार्यः पूरयेदद्भिरञ्जलिम् ।
आचार्यस्याञ्जलिं त्वन्यः पूरयेद्वै ततो गुरुः ॥
[5]तत्सवितुर्वृणीत्यस्य निनीयाञ्जलिमञ्जलौ ।
अवक्षारयतीत्यर्थः स्वेन पूर्णं तमञ्जलिम् ॥
[6]देवस्य त्वेति गृह्णीयात्पाणिं साङ्गुष्ठमस्य च ।
असौस्थानेऽस्य नाम स्यादेवमुत्तरयोरपि ॥
[7]अप्पूरणादि तद्वत्स्यादन्यो मन्त्रः करग्रहे ।
सविता ते हस्तमित्यप्पूरणादि तथा भवेत् ॥
हस्तग्रहे तु मन्त्रोऽयमग्निराचार्य इत्यथ ।
आचार्यो देव सवितरित्युक्त्वा रविमीक्षयेत् ॥
[8]कस्येति परिदायैनं प्रजाधिपतये ततः ।
युवा स्वर्धर्चतः कुर्यात्प्राङ्मुखं दक्षिणावृतम् ॥

'कस्येति परिदायैनं प्रजाधिपतये ततः' इति यद्यपि मन्त्रस्य परिदाने करणत्वं प्रतीयते तथापि जपोऽयं परिदानसंकल्पोत्तरं कार्यः, 'आदित्यमीक्षयेच्छिष्यमयोभावपि पूर्ववत् । तिष्ठेतामुत्तरेणाग्निमन्योन्याभिमुखौ ततः । धात्रे परिददाम्येनमिति संकल्पपूर्वकम् । कस्य ब्रह्मादिकं मन्त्रं ददाम्यन्तं गुरुर्जपेत् ॥' इति कारिकोक्तेः, तथैव जयन्तोक्तेश्च, जपत्वस्य वृत्तिकृदुक्तत्वाच्च ।

संको. १२५

[1]अस्योपर्यंसयोः स्वस्य पाणी कृत्वा हृदि स्पृशेत् ।
तं धीरासोऽर्धतः कुर्याद्ब्रह्मचार्यूहनोक्षणे ॥
[2]पर्यूहनवचश्चैतदुत्तरार्घ( ? र्थ )मिति ब्रुवन् ।
अत्र पर्यूहनं नास्तीत्याह हेतुं च वृत्तिकृत् ॥
तूष्णीं समिधमादध्यादग्नौ प्रादेशसंमिताम् ।
एतयर्चाऽथवाऽऽदध्यादग्नये समिधं त्विति ॥
स्पृष्ट्वाऽग्निं तेजसा मेति त्ववमार्ष्टि ततो मुखम् ।
प्रक्षाल्य हस्तमनलमुपस्पृश्यावमार्ष्ट्यथ ॥
[3]प्रक्षाल्य पूर्ववत्स्पृष्ट्वा तृतीयमवमार्ष्ट्यथ ।
ओष्ठौ विलोमकौ कृत्वा संवृतौ तन्निमार्जनम् ॥
[4]उपस्थाय मयीत्यादिषड्भिर्मन्त्रैर्हविर्भुजम् ॥
[5]आन्वाच्य दक्षिणं पादावाचार्यस्योपगृह्य च ।
नाम्नाऽभिवादनीयेन शिरः स्वस्यावनम्य च ॥

---

प्रथमचरणमात्रम्, १२५; क्रम. ९५८ णाऽऽज्यं (णेति) तूप ( चोप ).

(१) कुका. १।१३।७; प्रपा. २२३; संको. १२५ प्रथमचरणमात्रम् .

(२) कुका. १।१३।८–९; प्रपा. २२३.

(३) कुका. १।१३।१० रकर्म (रः कर्म); प्रपा. २२३.

(४) कुका. १।३।११; प्रपा. २२३.

(५) कुका. १।३१२; प्रपा. २२३ याञ्जलि (याजल).

(६) कुका. १।१३।१३; प्रपा. २२३ च ( तु ).

(७) कुका. १।१३।१४–१५; प्रपा. २२३.

(८) कुका. १।१३।१६; प्रपा. २२३ र्चतः (र्चशः); संको. १२५ (=) पू.

(१) कुका. १।१३।१७ सोऽर्धतः कुर्याद्ब्र ( र्धर्चतः कृत्वा ब्र ); प्रपा. २२३.

(२) कुका. १।१३।१८–२०; प्रपा. २२३.

(३) कुका. १।१३।२१ ओष्ठौ वि ( ओष्ठाव ) वृतौ ( वृत्तौ ); प्रपा. २२३.

(४) कुका. १।१३।२२ 'एवं त्रिरवमृज्याग्निमुपस्थाय मयीत्यथ ।' इत्येतदर्धं पूर्वार्धत्वेन विद्यते; प्रपा. २२३ र्हविर्भुजम् ( रतः परम् ).

(५) कुका. १।१३।२३; प्रपा. २२३; संको. १२६ पादावा ( पादमा ) पू.

[1]अधीहीत्यादिकं प्रैषं ब्रह्मचारी ब्रवीत्यथ ।
ब्रह्मचारिण आचार्यः परिधानीयवाससा ॥
[2]पाणिभ्यां चाऽऽत्मनस्तस्य पाणी गृह्णात्यतः परम् ।
ओं भूर्भुवःस्वःपूर्वां तु सावित्रीं वाचयेदथ ॥
[3]पादं पादं च सावित्र्याः स्वयमुक्त्वैव वाचयेत् ।
ततस्त्वर्धर्चमर्धर्चं सर्वां तामथ वाचयेत् ॥
[4]एवं वक्तुमशक्तश्चेत्तं यथाशक्ति वाचयेत् ।
स्थापयेद्धृत्समीपेऽस्य ममेत्यूर्ध्वाङ्गुलिं करम् ॥
[5]आबध्य मेखलां मौञ्जीं दण्डं दत्त्वोक्तमानतः ।
आदिशेद्ब्रह्मचर्यं च सांप्रतं ब्रह्मचार्यसि ॥
[6]अपोऽशानेति सूत्रादावुक्तमाचमनं कुरु ।
कर्म कुर्विति संध्यादि विहितोपासनादिकम् ॥
[7]दिवा मा स्वाप्सीरित्यस्य दिवा निद्रां न कुर्विति ।
आचार्याधीन इत्यस्य मयाऽनुज्ञात एव सन् ॥

(१) कुका. १।१३।२४ रिण आ ( रिणमा ) ; प्रपा. २२३–२२४.

(२) कुका. १।१३।२५ ; प्रपा. २२४ भ्यां चाऽऽ ( भ्यामा ) ; प्रर. ८६ (=) ( ओं० ) पूर्वां ( पूर्वं ) उत्त. ; बाल. १।२९ पृ. १५६ उत्त.

(३) कुका. १।१३।२६ ; प्रपा. २२४ मुक्त्वैव ( मुक्त्वाऽथ ) ; प्रर. ८६ (=) ; बाल. १।२९ पृ. १५६ प्रपावत् .

(४) कुका. १।१३।२७ ; प्रपा. २२४ पेऽस्य ( पे तु ) ; प्रर. ८६ (=) पू. ; बाल. १।२९ पृ. १५६ शक्तश्चेत्तं ( शक्तं तु तं ) पू.

(५) कुका. १।१३।२८ ; प्रपा. २२४ मौञ्जीं दण्डं दत्त्वोक्तमा ( दद्याद्दण्डं चाऽऽलोच्य मा ).

(६) कुका. १।१३।२९ ; प्रपा. २२४ तोपा (तौपा) : २२९ तोपासनादिकम् ( तौपासनं कुरु ) उत्त.

(७) कुका. १।१३।३० : प्रपा. २२४ : २२९–२३० पू.

अत्र संध्याशब्देन कालत्रयकर्तव्यसंध्योच्यते । अतः कालप्राप्तं माध्यंदिनसंध्यादिकं कुरु, दिवा निद्रां न कुर्विति प्रैषार्थः । प्रपा. २३०

[1]अशान यद्वा कर्मान्यत्तत्सर्वं मदनुज्ञया ।
मन्त्रराशिमधीष्व त्वं ब्राह्मणानि समाहितः ॥
[2]प्रैषार्थमेवमुक्त्वाऽथ कालमेकं च निर्दिशेत् ।
परिषेचनपर्यन्तं कुर्यात्स्विष्टकृदादिकम् ॥
[3]अप्रत्याख्यायिनं पूर्वं याचेद्भिक्षां भवानिति ।
भवतीति ब्रुवन्याचेदप्रत्याख्यायिनीं यदि ॥
[4]व्रीह्याद्यन्यतमं लब्धं गुरवे वेदयीत तम् ।
अहःशेषं ततस्तिष्ठेत्सायंसंध्यामुपास्य च ॥
[5]पूर्णपात्रनिधानान्तमुपलेपादि पूर्ववत् ।
विप्राणां भोजनायालं तूष्णीं निर्वाप्य याचितम् ॥
[6]तूष्णीं प्रोक्ष्यावघातादि श्रपणान्तं करोत्यथ ।
आचार्याय शृतः स्थालीपाकस्त्विति निवेदयेत् ॥
[7]अन्वारब्धो गुरुः कुर्यादाघारान्तमतः परम् ।
अत्राऽऽज्यभागौ नैवेष्टौ चतुर्थमिति यत्नतः ॥
[8]चर्वाहुतित्रयं हुत्वा सदसस्पतिमित्यृचा ।
ऋचा तत्सवितुस्तद्वदृषिभ्य इति मन्त्रतः ॥
[9]कुर्यात्स्विष्टकृदाद्यन्ते चान्नेन द्विजभोजनम् ।
अस्याशक्तौ करोत्यन्यः श्रपणान्तमिति स्थितिः ॥

(१) कुका. १।१३।३१ ; प्रपा. २२४ न्यत्तत्सर्वं ( न्यत्सर्वं च ).

(२) कुका. १।१३।३२ ; प्रपा. २२४.

(३) कुका. १।१३।३३ ; प्रपा. २२९.

(४) कुका. १।१३।३४ ; प्रपा. २२९ पूर्वार्धे (व्रीह्याद्यत्र समालब्धं गुरवे तन्निवेदयेत् । ) ; धप्र. ४१ उत्त.

(५) कुका. १।१३।३५ ; प्रपा. २३० ; धप्र. ४१ पू.

(६) कुका. १।१३।३६ ; प्रपा. २३०.

(७) कुका. १।१३।३७ रब्धो (रब्धे) ; प्रपा. २३० ष्टौ चतुर्थमिति यत्नतः ( ष्टावित्युक्तं पूर्वमेव तु ).

(८) कुका. १।१३।३८ ; प्रपा. २३०.

(९) कुका. १।१३।३९ ; प्रपा. २३० द्यन्ते चान्ने ( द्यन्नेनान्ये ).

¹द्विआग्भुक्तवतो वेदसमाप्तिं वाचयेदथ ।
क्षारादिवर्जमश्नीयाद्ब्रह्मचारी दिनत्रयम् ॥
²शयीताधश्चतुर्थेऽह्नि मेधाजननमाचरेत् ।
यद्वा द्वादशरात्रं स्याद्व्रतमब्दमथापि वा ॥
³तदा तदन्त एव स्यान्मेधाजननकर्म च ।
आग्नेयी दक्षिणा प्रत्यग्दक्षिणा निन्दिता दिशः ॥
⁴अनिन्दितायामन्यस्यां पलाशं शाखवर्जितम् ।
तस्याभावे सशाखं वा कुशस्तम्बमथापि वा ॥
⁵त्रिः प्रदक्षिणमुक्षन्तमम्भःकुम्भेन तं बटुम् ।
आचार्यो वाचयेन्मन्त्रं सुश्रवः सुश्रवा इति ॥
⁶तत्रैव मेखलादीनि व्युदस्यान्यानि धारयेत् ॥

## कपर्दिकारिकाः

कुमारभोजनम्, आशीर्वाचनम्, वपनम्, यज्ञोपवीतधारणम्, पात्रप्रयोगे विशेषः, समिदाधाने स्वाहाकारनिषेधः, अश्मारोपणम्, वस्त्रादिधारणम्, हस्तग्रहणम्, परिदानम्, होमः, सावित्रीवाचनम्, गुरवे वरदानम्, पूर्ववाससो गुरुणा ग्रहणमन्यस्य परिधापनं च

⁷साग्निः कुमारः सहितेन चाऽऽगूः
कृत्वाऽथ भुञ्ज्यादथ वाचनं च ।
भुक्ते कुमारे द्व्यवारि सृज्य
उनत्ति पूर्वं प्रतिवापनं च ॥

(१) कुका. १।१३।४० ; प्रपा. २३० ; धप्र. ४२ (=) वर्जम (वर्ज्यमा) ; संकौ. १५१ उत्त.

(२) कुका. १।१३।४१ ; प्रपा. २३० ; धप्र. ४२ (=) पू. ; संकौ. १५१ स्याद्व्रतमब्द (स्यादब्दव्रत).

(३) कुका. १।१३।४२ ; प्रपा. २३० पूर्वार्धे (तदा तदन्त एवेदं मेधाजननमाचरेत् ।) पू. : २३७ उत्त. ; धप्र. ४२ उत्त. ; संकौ. १५१ कर्म च (संज्ञकम्) पू.

(४) कुका. १।१३।४३ ; प्रपा. २३७ तस्या (तद) ; धप्र. ४२ पला (पाला) स्तम्ब (स्तम्भ).

(५) कुका. १।१३।४४ ; प्रपा. २३७ ; धप्र. ४२.

(६) कुका. १।१३।४५ ; प्रपा. २३७ ; धप्र. ४२ व्युदस्या (विसृस्या).

(७) कका. ४।१.

¹यज्ञोपवीतकालः स्याद्वाचने कृत आशिषाम् ।
पुरस्तात्समिदाधानाच्छिवस्वामिमतेन तु ॥

²पात्रप्रयोगे तु कुशाम्बुकूर्चा
वस्त्राश्मदण्डाजिनमेखलाश्च ।
दैवानि पात्राणि नियुज्य पश्चा-
द्युञ्जीत चामूनि सहोपनेता ॥

मौञ्ज्यजिनावस्थापनप्रोक्षणोत्थापनानि तु ।
समन्त्रमेतान्याचार्यः पूर्वं कृत्वाऽथ वाचयेत् ॥

आयुर्दा समिदाधाने न स्वाहाकार इष्यते ।
आधेहीत्येव मन्त्रान्ते बटुमाधापयेद्गुरुः ॥

आतिष्ठेति बटुं स्थाप्य दृषदं चरणेन तु ।
वस्त्राद्यजिनपर्यन्तं तस्यामेव तु कारयेत् ॥

कुमारमुत्तरेणाग्नेरुदगग्रं कुशं चरेत् ।
प्रत्यङ्मुखमवस्थाप्य संतिष्ठेत्प्राङ्मुखो गुरुः ॥

अन्ते तु सर्वमन्त्राणां हस्तग्रहणमिष्यते ।
देवताभ्यः परीदानं रक्षणाय पृथक्पृथक् ॥

अनुदात्तं भवेन्मन्त्रं संबुद्ध्यन्तमसौ पदम् ।
उदात्तः प्रथमान्तस्तु नयेऽसाविति वर्जयेत् ॥

योगादीन्वाचयन्नेव कुमारं ह्रावयेत्खलु ।
द्वितीयचतुर्थौ ब्रूयादाचार्यो जुहुयाद्बटुः ॥

³पच्छो भूस्तद्भुवो भर्गः सुवर्धिय इतीष्यते ।
अर्धर्चशो भूस्तद्भुवो धियः सुवस्तदन्यथा ॥

⁴ओष्ठद्वयावान्तपर्यन्तं स्पृश्यतेऽवृधमित्यथ ।
आचामेनेह नामास्ति कराभ्यां युगपच्छ्रुती ॥

कर्णोष्ठावित्यदण्डानां समन्त्रं बटुरेव तु ।
प्रत्यगाशिषमन्येषां भवेद्वाचनमेव तु ॥

(१) कका. ४।२ ; बाल. १।२९ पृ. १५६ स्याद्वा (स्याद्व).

(२) कका. ४।३–१०.

(३) कका. ४।११ ; बाल. १।२९ पृ. १५६.

(४) कका. ४।१२–१४, १८.

गुरो वरं ते ददामीत्युक्त्वाऽपाम्य यथो-
दितम् ।
गृह्यते सावित्री(? त्र)मुक्त्वा वरो ग्रुद्राय
गामिति ॥

सप्तदशकृत्वोऽपान्य चतुर्थेऽहनि गृह्यते ।
यस्येति गुरुणा पूर्वं वासोऽन्यत्परिधाप्य च ॥

## रेणुकारिकाः

मातृकापूजनम्, वृद्धिश्राद्धम्, ब्राह्मणभोजनम्, वपनम्, उपनयनविनियुक्तमन्त्राणामृष्याद्यनुक्रमः, स्नानम्, अलंकरणम्, निगदवाचनम्, वासःपरिधापनम्, मेखलाबन्धनम्, मन्त्रपठनकर्तृविवेकः, यज्ञोपवीताजिनधारणम्, दण्डदानग्रहणे, अञ्जलिपूरणम्, सूर्यदर्शनम्, हृदयालम्भः, प्रश्नप्रतिवचनानि, होमः, अनुशासनम्, गायत्र्यनुवचनम्, अग्निकार्यम्, अभिवादनम्, प्रत्यभिवादनम्, भिक्षाचरणम्, वाग्यमः, व्रतादेशनम्, वाग्विसर्गः, भैक्षान्नभोजनम्

[1]बहिःशालादिकं तत्र व्रतबन्धनिमित्तकम् ।
कुर्यादाभ्युदयं श्राद्धं मातृपूजनपूर्वकम् ॥

ब्राह्मणान्भोजयेत्तं च पर्युप्तशिरसं बटुम् ।
शालायां लौकिकं वह्निं स्थापयित्वोद्धृते
स्थले ॥

उपविश्यानलं पश्चात्ततः संकल्पमुच्चरेत् ।
उपनेष्ये बटुमिमं ततो वैकल्पिकान्स्मरेत् ॥

मेखलाबन्धनं तूष्णीं दण्डः पर्णमयस्तथा ।
मूर्धादिसंमितो ब्रह्मगमनाद्यावरान्तिकाः ॥

आसीनायाऽऽह गायत्रीं षडहे क्षत्रवैश्ययोः ।
दानं तयोश्च गायत्र्या एषा ते समिदाहुतिः ॥

मातुः सकाशाद्भिक्षाद्यास्ताः षडेवं विचिन्त्य च ।
येनेन्द्रायेति बृहती छन्दोऽस्य ऋषिरङ्गिराः ॥

नियोगः परिधाने स्याद्देवता च बृहस्पतिः ।
वामदेव ऋषिश्छन्दस्त्रैष्टुभं मेखला मरुत् ॥

रशनाबन्धने योग इयं दुरुक्तमित्यतः ।
विश्वामित्र ऋषिश्छन्दस्त्रैष्टुभं स्यायुवा सुवा ॥

साः परीत्यमरो यूपो विनियोगः परिव्यये ।
परमेष्ठी ऋषिर्लिङ्गदेवता त्रिष्टुभो मनुः ॥

नियोग इह मन्त्रे स्यादुत्तरीयोपवीतयोः ।
ऋषिः प्रजापतिर्यो मे दण्डः सैवेह देवता ॥

यजुः प्रतिग्रहे तस्य विनियोग उदाहृतः ।
उच्छ्रयस्वेति गायत्र्या छन्दो योगस्तदुच्छ्रये ॥

ऋषिर्दैवश्च पूर्वोक्तावापो हि ष्ठेति पूर्ववत् ।
तच्चक्षुरिति पूर्वोक्तं प्रजापतिर्ऋषिर्मम ॥

व्रतेति त्रैष्टुभं छन्दो देवता स्याद्बृहस्पतिः ।
विनियोगो हृदालम्भे भूरादीनां पुरोहिताः ॥

विश्वामित्र ऋषिश्छन्दो गायत्रं सविताऽमरः ।
गायत्र्या विनियोगः स्यादारम्भे व्रतकर्मणः ॥

अग्निर्देवो यजुर्ब्रह्मा ऋषिर्मन्त्रगणस्य तु ।
अग्ने सुश्रव इत्यादि विनियोगः समिन्धने ॥

ऋषिः प्रजापतिः प्रोक्तः समिदाधानमन्त्रयोः ।
आकृतिश्छन्द आद्यस्य च्छन्दोऽनुष्टुबथोत्तरे ॥

समिन्मरुत्समाख्यातो नियोगः समिदाहितौ ।
तनूपा अग्न इत्यादि यजुषामृषयो मताः ॥

बृहद्देवा देवताऽग्निर्विनियोग उपस्थितौ ।
स्नानं(? तं) सुमङ्गलद्रव्यैः स्रङ्मालाद्यै-
रलंकृतम् ॥

आनयन्ति तदाऽऽचार्योपनीतास्ते तदन्तिकम् ।
पश्चादग्नेरवस्थाप्य स्वाग्रतः प्रत्यगाननम् ॥

आचार्यो वाचयत्येनं सूत्रोक्तौ निगदाविति ।
ब्रूयान्ति(? न्त)कौ ततो वास अहतं
परिधापयेत् ॥

[1]येनेन्द्रायेति मन्त्रेण कुमारं मेखलामतः ।
बध्नीयात्त्रिगुणां श्लक्ष्णामियं दुरुक्तमुच्चरन् ॥

---

(१) रेका. २०–३९ पृ. २१–२२.

(१) रेका. ४० पृ. २२ ; गभा. २०३ उत्त ; संग. ६६३ उत्त.

[1]आचार्यस्यैव मन्त्रोऽयं न बटोरात्मनेपदात् ।
युवा सुवासा इति वा तूष्णीं वा बन्धनं भवेत् ॥
[2]वस्त्रे च मेखलादाने तथैवाञ्जलिपूरणे ।
हृदयालम्भने प्रश्ने तथा भूतप्रदानके ॥
[3]मन्त्रानेतानाचार्यः शेषान्माणवकः पठेत् ।
अस्मिन्नवसरे यज्ञोपवीतं प्रतिमुञ्चति ॥
[4]यज्ञोपवीतं परममित्युक्त्वा बटुरेव सः ।
मित्रस्य चक्षुरित्युक्त्वा तद्वत्कृष्णाजिनं ततः ॥
[5]दण्डं प्रयच्छेदाचार्यः प्रतिगृह्णाति तं बटुः ।
यो मे दण्डः परापतदितिमन्त्रेण शोभनम् ॥
तिर्यञ्चं वा प्रयच्छेत्स तं गृहीत्वोच्छ्रयेद्बटुः ।
उच्छ्रयस्वेति मन्त्रेण दीक्षावदिति सूत्रितम् ॥
दीक्षावदिति सूक्तोक्तं कैश्चिन्नाङ्गीकृतं ततः ।
वाक्यस्यान्यपरत्वात्तद्दण्डस्य ग्रहणं प्रति ॥
आदायाञ्जलिनाऽऽचार्यः अपस्तस्याञ्जलिं बटोः ।
पूरयेत्तिष्ठतस्ताभिरापो हि ष्ठादिभिस्त्रिभिः ॥
ब्रूयात्सूर्यमुदीक्षस्व पुरः प्रैषं बटुं प्रति ।
तच्चक्षुरिति मन्त्रेण बटुः सूर्यमुदीक्षते ॥
नीत्वा करं दक्षिणांसमधि तेनाऽऽलमेद्धृदम् ।
मम व्रते ते हृदयमिति मन्त्रेण तिष्ठतः ॥
गृहीत्वा दक्षिणं हस्तं कुमारस्याऽऽह तं गुरुः ।
को नामासीति तं विष्णुशर्माऽहं भो बटुर्वदेत् ॥
आचार्योऽभिवदेत्कस्य ब्रह्मचार्यसि तं बटुम् ।
स बटुर्भवतो ब्रूयादिन्द्रस्येत्याह तं गुरुः ।
नामाऽऽदिशत्यसौस्थाने तद्यथाऽमुक-
शर्मणः( ? ) ।
एवं कुमारं भूतेभ्यो गुरुः प्रतिददात्यथ ॥

(१) रेका. ४१ पृ. २२ ; गभा. २३० पू. ; संग. ६६३ पू.

(२) रेका. ४२ पृ. २२ लम्भ (लम्ब) ; संग. ६६३ गङ्गाधरः.

(३) रेका. ४३ पृ. २२.

(४) रेका. ४४ पृ. २२–२३ ; संग. ६७१ उत्त.

(५) रेका. ४५–६० पृ. २३–२४.

प्राजापत्य इत्याद्यैर्वाक्यैः षड्भिरयं जपः ।
प्रदक्षिणं परीत्याग्निं पश्चादुपविशेद्बटुः ॥
चूडाकरणवद्ब्रह्मवरणाद्याविमोकतः ।
स्यात्कर्माऽऽचार्यकर्तृत्वं( ? कं ) सोऽनुशास्ति
बटुं ततः ।
अपोऽशानाग्निकैर्ब्रह्मचार्यस्याद्यैश्च सप्तभिः ।
प्रैषवाक्यैरिमान्याह प्रतिप्रैषं बटुः क्रमात् ॥
भवान्यश्नानि करवाणि न स्वपानीति तं प्रति ।
यच्छानि वाऽऽदधानीति ततोऽश्नामीति
सप्त वै ॥
अग्नेरुत्तरतः प्रत्यङ्मुखायाऽऽसनमीक्षते ।
आसीनाय समीक्षन् स पादोपग्रहपूर्वकम् ॥
गुरुः प्रयच्छेत्सावित्रीं गायत्रीं ब्रह्मचारिणे ।
प्रणवव्याहृतियुक्तामाश्वलायनसंमतिः ॥
अग्नेर्दक्षिणतो वोपविष्टायासौ स तिष्ठते ।
पादं पादं प्रथमतो द्वितीयेऽर्धर्चशः पठेत् ॥
गुरुः सर्वां तृतीयेन बटुः सहानुवर्तयेत् ।
अनुच्छ्वसन्पठेदेतां तृतीयेनेति तैत्तिरिः ॥
[1]सावित्रीं त्रिष्टुभं राज्ञे वैश्याय जगतीं तथा ।
संवत्सरे वा षण्मासे चतुर्विंशत्यहे तथा ॥
[2]द्वादशाहेऽथ षडहे ब्रूयात्तां च त्र्यहेऽथवा ।
एते वैकल्पिकाः काला ज्ञेयाः क्षत्रियवैश्ययोः ॥
[3]विप्राय सद्य एवानुब्रूयादग्न्युपमश्रुतेः ।
सर्वेषां वाऽपि गायत्रीमग्निकार्यमथोच्यते ॥
[4]अस्मिन्नग्नौ भवेदेतत्संधुक्षत्येकपाणिना ।
प्रतिमन्त्रं त्रिभिः काष्ठैरग्ने सुश्रव आदिभिः ॥

(१) रेका. ६१ पृ. २४ ; संग. ६७६ उत्त.

(२) रेका. ६२ पृ. २४ ; संग. ६७६ तां च त्र्यहेऽथ वा ( चं तु त्र्यहे तथा ).

(३) रेका. ६३ पृ. २४.

(४) रेका. ६४ पृ. २४ ; गभा. २१७ उत्त. ; संग. ६७८ पू., ६७९ ; संवी. ७१ ( भागः २ ) उत्त.

[1]अग्ने सुश्रव इत्येकं यथा त्वं स्याद्द्वितीयकम्।
यथा त्वमग्ने देवानां मन्त्रेणापि तृतीयकम् ॥

[2]कृत्वा पर्युक्षणं वह्नेरुत्थाय समिदाहुतिः।
समिदाधानमित्येतत्सूचनात्तिष्ठतिक्रिया ॥

उत्तिष्ठन्परिसंख्यानादिह प्राप्ता निवर्तते।
कर्णे निधाय समिधमेकैकामादधाति सः ॥

अग्नये समिधं मन्त्रमुच्चार्यैषा त एव वा।
द्वाभ्यां वा समिधस्तिस्रः स्युस्ताः प्राग्लक्षणान्विताः ॥

कर्णे निधानं समिधां न चेद्वैश्योऽस्ति भूमिपः (?)।
न तु कर्णे निधानस्य विधानं क्वापि दृश्यते ॥

पुनः संधुक्षणादि स्यादुक्षणान्तं च पूर्ववत्।
मुखं विमृष्टे पाणिभ्यां तौ प्रतप्य प्रतप्य सः ॥

तनूपा अग्न इत्याद्यैश्चतुर्भिः प्रतिवाक्यतः।
मेधां मे देव इत्याद्यैः प्रतिमन्त्रं त्रिभिस्ततः ॥

पूर्वयोरादधात्वेष अध्याहारस्तु मन्त्रयोः।
अङ्गानि च म इत्याद्यैः पाद्यै(?)राप्यायनं ततः ॥

साध्याहारं यथालिङ्गं वाङ्म आप्यायतां यथा।
यशो मुखं बलं बाह्वोर्युगपन्नसि चक्षुषोः ॥

भेदेनाऽऽप्यायनं बाह्वोरशक्यत्वाच्च कर्णयोः।
नात्र प्रतपनं पाण्योस्तपनादु(?नु)पदेशतः ॥

ललाटे तिलकं कुर्याद्ग्रीवायामथ भस्मना।
दक्षिणांसे च हृदये प्रतिमन्त्रं त्रियायुषम् ॥

आचार्यो मन्त्रलिङ्गात्स्व नामानि कृतवानिह।
समाचारपरिप्राप्तेरथाग्न्याद्यभिवादनम् ॥

अग्न्यम्बुपगुरूणां स्यान्मातुस्तत्तुल्ययोषिताम्।
वत्सगोत्रस्त्रिप्रवरः पदं ततोऽभिवादये ॥

विष्णुशर्माऽहमस्मि भो इति प्रयोगमुच्चरेत्।
प्रसार्य दक्षिणं बाहुं विप्रः श्रोत्रसमं त्विह ॥

उरःसमं तु राजन्यो वैश्यो नाभिसमन्वितः।
तच्च हस्तद्वयेनैव विदुषे विष्णुशासनात् ॥

[1]यत्सर्वधर्मनाशः स्यादेकहस्ताभिवादनात्।
पद्माकारौ करौ कृत्वा पादोपग्रहणं गुरोः ॥

[2]उत्तानाभ्यां तु पाणिभ्यामिति पैठीनसेर्वचः।
अज्ञाकर्णेन विदुषः प्रत्युत्थायाभिवादयेत् ॥

[3]आशिषं ते प्रयच्छेयुरसौ दोषोऽन्यथा भवेत्।
आयुष्मान्भव सौम्याथ यज्ञदत्ता३ इति प्लुतिः ॥

नामधेयस्य ये केचिदभिवादं न जानते।
अभिवादयेऽहं भोस्तान्ब्रूयात्सर्वाः स्त्रियस्तथा ॥

अस्मिन्नवसरे भिक्षाचरणं स्यात्तदङ्गतः।
प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम् ॥

प्रदक्षिणं परीत्याग्निं चरेद्भैक्षं यथा विधिः।
अमत्रादि यथालाभं पात्रमादाय यत्नतः ॥

मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम्।
तिस्रोऽनुभिक्षा प्रथमं या चैनं न विमानयेत् ॥

षड् द्वादश वा भिक्षाः स्युरमिता वा प्रयोगतः।
प्लुतं प्रणवमुच्चार्य भवति त्र्यक्षरं पदम् ॥

भिक्षां देहीत्यथ ब्रूयाद्ब्राह्मणश्चेद्भवेद्व्रती।
क्षत्रश्चेत्प्रणवं तद्वद्भिक्षां भवत्यनन्तरम् ॥

देहीत्यन्तेऽथ वैश्यश्चेद्भिक्षां देहि भवत्यपि।
निवेदयेत्तां गुरवे भैक्षं भुङ्क्ष्वेति तेन सः ॥

गुरुणा प्रत्यनुज्ञातो वाग्यतो वा भवेत्ततः।
स तु तिष्ठेदहःशेषं ब्रूयात्तं नियमानथ ॥

अक्षारलवणाशी स्यादधःशायी भवेदसौ।
प्रचारं भोजनं त्यक्त्वा धार्ये दण्डाजिने सदा ॥

सायं प्रातस्त्वग्निकार्यं तत्संध्योपासनादपि।
कर्तव्या गुरुशुश्रूषा स्वाध्यायस्याविरोधतः ॥

---

(१) रेका. ६५ पृ. २४ ; गभा. २१७ ; संग. ६७९ ; संवी. ७१ ( भागः २ ).

(२) रेका. ६६–७९ पृ. २४–२५.

(१) रेका. ८० पृ. २५ ; गभा. २३३ उत्त.

(२) रेका. ८१ पृ. २५ ; गभा. २३३ पू.

(३) रेका. ८२–११५ पृ. २५–२८.

सायंप्रातश्च भिक्षेत स्थित्यर्थं न गुरोर्गृहे ।
पुरा जग्राह वै मृत्युर्हिंसयन्ब्रह्मचारिणम् ॥
अग्निस्तं मोक्ष( ? च )यामास तस्मात्परिचरे-
ग्नितम् ।
ब्रह्मचारी यदा त्वग्नावादध्यात्समिधो न हि ॥
गृह्णीयात्तं तदा मृत्युरादध्यात्समिधस्ततः ।
ब्राह्मणक्षत्रियविशश्चरेयुर्भैक्ष्यमन्वहम् ॥
सजातीयगृहेष्वेव त्रैवर्णिकमथापि वा ।
वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्मसु ॥
ब्रह्मचार्याहरेद्भैक्षं गृहेभ्यः प्रयतोऽन्वहम् ।
सर्वं वा विचरेद्ग्रामं पूर्वोक्तानामसंभवे ॥
नियम्य प्रयतो वाचमभिशस्तां च वर्जयेत् ।
अन्यत्र भिक्षालाभे तु गुर्वादीनां गृहे चरेत् ॥
पूर्वं पूर्वं परिहरेद्भिक्षा स्यादुत्तरोत्तरम् ।
हस्तदत्ता तु या भिक्षा लवणं व्यञ्जनादि च ॥
भुक्त्वा ह्यशुचितां याति दाता स्वर्गं न
गच्छति ।
आहारमात्रादधिकं न क्वचिद्भैक्ष्यमाहरेत् ॥
युज्यते स्तेयदोषेण कामतोऽधिक-
माहरेत्( ? रन् ) ।
माधुकरीं य आदाय ब्राह्मणेभ्यः प्रयच्छति ॥
स याति नरकं घोरं भोक्ता भुङ्क्ते च
किल्बिषम् ।
अकृत्वा भैक्षचरणमसमिध्य च पावकम् ॥
अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत् ।
गौतमादिभिरुक्तं तन्मधुमांसादिवर्जितम् ॥
देवतीर्थे ह्रदे वाऽपि मज्जनं न समाचरेत् ।
दण्डवन्मज्जनं वा स्यात्कार्यं चोद्धृतवारिणा ॥
मसूरादौ नोपविशेत्स्त्रीणां मध्ये न दीव्यते ।
अनृतं वर्जयेन्नित्यमदत्तादानमेव च ॥
चतुर्णामपि वेदानां ब्रह्मचर्यव्रतं चरेत् ।
चत्वारिंशत्तथाऽष्टौ च वर्षाण्येतद्व्रतादिषु ॥

एक एव व्रतादेशस्तस्मिन् पक्षे पृथक् न तु ।
प्रतिवेदं द्वादश वा तस्मिन् पक्षे पृथक् पृथक् ॥
तदर्धे पादिकं वेदग्रहणान्तिकमेव च ।
दीर्घकालं ब्रह्मचर्यं न कलौ स्यात्पुराणतः ॥
दत्त्वैतान्नियमांस्तस्मै शौचाचारांश्च शिक्षयेत् ।
स्वयंप्रशीर्णा आहृत्य समिधः समि-
दाहितम् (१) ॥
कुर्यात्तां पूर्ववत्तस्मिन्नग्नावस्तं गते रवौ ।
इन्धनं वारि समिध उपकल्प्य यमेद्सून् ॥
करिष्ये समिदाधानमिति संकल्पमुच्चरेत् ।
विसृजेच्च ततो वाचं गृहीतो वाग्यमो यदि ॥
भैक्ष्य( ? क्ष )मन्नं ततोऽश्नीयाद्वाग्यतः
प्राङ्मुखः शुचिः ।
अपोशानक्रियापूर्वमनिन्दन्नभिपूजितम् ॥
भिक्षापात्रे न भुञ्जीत निषेधश्रवणात्कलौ ।
भिक्षापात्रममत्रादि प्रोक्तं तित्तिरिणाऽत्र वै ॥
लोहे वा मृन्मये पात्रे भुक्त्वा प्रक्षालये-
त्स्वयम् ।
पर्णादावनिषिद्धे वा हारीतोऽत्राब्रवीत्स्फुटम् ॥
एवमेवान्वहं कुर्यात् ....... ॥

## कारिकाः

पूर्वेषां मेखलादीनां पलाशसंनिधौ त्यागो नवानां धारणं च, आब्दिकब्रह्मचर्यनियमः , व्रतोत्सर्गकालः

'मेखलामजिनं दण्डं वस्त्रं यज्ञोपवीतकम् ।
पालाशसंनिधौ त्याज्यं नवान्यन्यानि धारयेत् ॥
नियमेन ब्रह्मचर्यमब्दं चापि समाचरेत् ।
अन्यथा कर्महानिः स्यादिति यज्ञविदां मतम् ॥
'सावित्रीग्रहणादूर्ध्वं तद्दिने वा चतुर्थके ।
तृतीये द्वादशे वाऽपि वत्सरे व्रतमुत्सृजेत् ॥

(१) धप्र. ४२.
(२) संबी. ३०५ ( भागः २ ).

अनाश्रमस्थितिप्रयुक्तप्रत्यवायपरिहारप्रायश्चित्ता-पेक्षया ब्रह्मचर्यव्रतलोपप्रयुक्तप्रत्यवायपरिहारप्रायश्चित्तस्य गुरुत्वात् यथाविधिभिक्षाचरणादिनियमानामद्यत्वे एक-स्मिन्नपि दिने दुःशकत्वं मन्यमानैरभियुक्तैः 'सावित्री... जेत्' इति संस्कारभास्करोक्तकारिकावचनाश्रयणेन प्रथि-तस्य 'उपनयनदिने एव वेदारम्भपूर्वकं समावर्तनम्' इति पक्षस्याऽऽश्रयेण समावर्तनस्यानुष्ठास्यमानत्वात्काला-पकर्षं कृत्वा ब्रह्मचारी सायंसंध्यामुपास्य उपनयनाग्नावेव पूर्ववत्समिदाधानं कृत्वा अभिवादनं कुर्यात् ।

संदी. ३०५ ( भागः २ )

## उपनयनोत्तरं ब्रह्मौदनपाकात्पूर्वं मेघगर्जनादौ दोषः शान्तिश्च

### अनिर्दिष्टकर्तृकवचनम्

'औत्पातिकमनध्यायं प्रागब्रह्मौदनपाकतः ।
व्रतादूर्ध्वं नेष्टमाहुः शान्त्याऽऽहेष्टं पराशरः ॥

### संग्रहः

'न संध्यागर्जिते काले न वृष्ट्युत्पातदूषिते ।
ब्रह्मौदनं पचेदग्नौ पक्वं चेन्न निवर्तते ॥
'ब्रह्मौदनं पचेदह्नि पक्वमन्नं न दुष्यति ॥

( १ ) यदा गर्जनाद्यनध्यायशङ्का तदा दिवैव चरुं श्रपयेत् , होमस्तु सायंसंध्योत्तरमेव, तदा नानध्यायदोषः । तदुक्तं संग्रहे– ' न संध्यागर्जिते ...... दुष्यति ॥ ' । तथा चोपनयनानुप्रवचनीयचरुश्रपणयोरन्तराऽनध्याये पुनरुपनयनम् । § प्र. ८७

( २ ) अनुप्रवचनीयारम्भात्पूर्वं गर्जितवृष्ट्यादिसंभावनायां दिवैव चरुश्रपणान्तं कृत्वाऽस्तमिते होमं कुर्यात् , 'न संध्या....... निवर्तते । ' इति संग्रहोक्तेः । पाकाभावे गर्जितादिनिमित्ते तु शान्तिं कृत्वा पाकः कार्यः । ¶ संको. १४९

( ३ ) चरुश्रपणात्पूर्वमेव संध्यागर्जादौ पुनरुपनयनमेवेति केचित् । अन्ये तु–' औत्पत्तिकमनध्यायं प्राग्ब्रह्मौदनपाकतः । व्रतादूर्ध्वं नेष्टमाहुः शान्त्याऽऽहेष्टं पराशरः ॥ ' इति ज्योतिःशास्त्रोक्तेः , ' ब्रह्मौदनविधेः पूर्वं प्रदोषे गर्जितं यदि । तदा विघ्नकरं ज्ञेयं बटोरध्ययनस्य तत् । तत्र शान्तिविधानं तु वक्ष्ये शास्त्रानुसारतः ॥ ' इत्यादिना शान्तिमुक्त्वा ' ततो ब्रह्मौदनं पचेत् ' इति विधानमालोक्तेश्च शान्तिं कृत्वा पाकः कार्यः , शान्तिमकृत्वा तत्करणे तु पुनरुपनयनम् । वस्तुतः शान्तिरध्ययनविघ्नादिदृष्टदोषनिवारणाय, पुनरुपनयनं तु ब्राह्मण्यानुत्पादाद्भवत्येवेत्याहुः । ¶ बाल. १।१४ पृ. ५३

### बौधायनीयशान्तिसर्वस्वे

'ब्रह्मौदनविधेः पूर्वं प्रदोषे गर्जितं भवेत् ।
तदा विघ्नकरं ज्ञेयं बटोरध्ययनस्य तत् ॥
'तस्य शान्तिविधानं तु वक्ष्ये शास्त्रानुसारतः ।
स्वस्तिवाचनपूर्वं तु हवनं कारयेद्बुधः ॥
'प्रधानं पायसं तत्र साज्यं साष्टशतं यजिः ।
सूक्तं बृहस्पतेर्विद्वान्पठेत् प्रज्ञाविवृद्धये ॥

---

§ चम. प्रवत् ।

¶ संव. संकोवत् ।

(१) बाल. १।१४ पृ. ५३ ज्योतिःशास्त्रम् .

(२) प्र. ८७ ; चम. १७ ; सिन्धु. ९४२ ; विपा. ४७९ (=) ; संको. १४९ ; बाल. १।१४ पृ. ४८ : १।१४ पृ. ५३ चतुर्थचरणे (पक्वमन्नं न दुष्यति) इत्यपि पाठः ; संव. १२२.

(३) प्र. ८७ क्रमेण संग्रहे ; चम. १७ क्रमेण संग्रहे ; सिन्धु. ९४२ दह्नि ( दग्नौ ) ; बाल. १।१४ पृ. ४८ क्रमेण संग्रहे.

¶ शेषं प्रवत् ।

(१) संप्र. ४४२ ; सिन्धु. ९४२ भवेत् ( यदि ) नृसिंहप्रसादे ; विपा. ४७९ सर्वं सिन्धुवत् ; संको. १४९ विधानमालायाम् ; बाल. १।१४ पृ. ५३ सिन्धुवत्, विधानमालोक्तिः ; संव. १०३ नृसिंहप्रसादे : १२२–१२३ विधानमालायाम् .

(२) संप्र. ४४२ विधानं ( प्रकारं ) ; सिन्धु. ९४२ संप्रवत् , पू. , नृसिंहप्रसादे ; विपा. ४७९ संप्रवत् , पू. , नृसिंहप्रसादे ; संको. १४९ विधानमालायाम् ; बाल. १।१४ पृ. ५३ तस्य ( तत्र ) पू., विधानमालोक्तिः ; संव. १०३ विधानं ( प्रकारं ) नृसिंहप्रसादे : १२३ तस्य ( ततः ) विधानमालायाम् .

(३) संप्र. ४४२ पूर्वार्धे ( प्रधानं पायसं साज्यं द्रव्यं शान्तियज्ञौ भवेत् । ) पठेत् ( पठन् ) ; सिन्धु. ९४२ ( प्रधानं पायसं साज्यं द्रव्यं शान्तियज्ञौ भवेत् । ) नृसिंहप्रसादे ; विपा. ४७९ सर्वं सिन्धुवत् ; संको. १४९

[1]गायत्री चैव मन्त्रः स्यात् प्रायश्चित्तं तु सर्पिषा।
धेनुं सवत्सकां दद्यादाचार्याय पयस्विनीम् ॥

[2]शिलां होमविधेः पश्चात्स्थापयेत्तत्र संसदि।
ब्राह्मणान्भोजयेत्पश्चात्ततो ब्रह्मौदनं पचेत् ॥

[3]संभावनायां गर्जस्य दिवैव श्रपयेच्चरुम्।
सायं च जुहुयाद्धोममेवं दोषो न कश्चन ॥

---

विधानमालाय म्; संव. १०३ प्रज्ञावत् (विद्यासम्) षं सर्वं सिन्धुवत् : १२३ विधानमालायाम्.

(१) संप्र. ४४२ चैव मन्त्रः स्यात् (युज्यते मन्त्रः); सिन्धु. ९४२ नृसिंहप्रसादे; विपा. ४७९ नृसिंहप्रसादे; संको. १४९ चैव मन्त्रः स्यात् ( यजने मन्त्रः ) विधानमालायाम्; संव. १०३ संप्रवत्, नृसिंहप्रसादे : १२३ सर्वं संकोवत् .

(२) संप्र. ४४२–४४३ पचेत् ( चरेत् ); सिन्धु. ९४२ संप्रवत्, उत्त. नृसिंहप्रसादे; विपा. ४७९ सर्वं सिन्धुवत्; संको. १४९ ( शीलान् होमविधेः पश्चाद्ब्राह्मणान्भोजयेत्ततः। शतमष्टोत्तरं धीमांस्ततो ब्रह्मौदनं पचेत्।। ) विधानमालायाम्; बाल. १।१४ पृ. ५३ चतुर्थचरणमात्रम्, विधानमालोक्तिः; संव. १०३ संप्रवत्, नृसिंहप्रसादे : १२३ सर्वं संकोवत् .

(३) संप्र. ४४३.

## मुहूर्तचिन्तामणिः

[1]प्राग्ब्रह्मौदनपाकाद्व्रतबन्धानन्तरं यदि चेत्।
उत्पातानध्ययनोत्पत्तावपि शान्तिपूर्वकं
तत्स्यात् ॥

अथ व्रतबन्धानन्तरं सायंकाले बह्वृचानां ब्रह्मौदनाख्यः संस्कारोऽभिहितः। तत्र विशेषमार्ययाऽऽह– प्रागिति। यदि व्रतबन्धात्प्राक् अकालिकाद्यनध्याय उत्पातो वा भवेत्तदा न कार्य एव व्रतबन्धः। दैवान्निर्दुष्टकाले व्रतबन्धो निर्वृत्तः, तदुत्तरं सायंकालीनब्रह्मौदनविधेः पूर्वमुत्पातप्रयुक्ता कालाशुद्धिरथवाऽनध्यायो वा स्यात्तदाऽनिष्टमुक्तम्। उक्तं च नृसिंहप्रसादे– 'ब्रह्मौदनविधेः पूर्वं प्रदोषे गर्जितं भवेत्। तदा विघ्नकरं ज्ञेयं बटोरध्ययनस्य तत् ॥'। अतः तत् ब्रह्मौदनं शान्तिपूर्वकम् आदौ शान्तिं विधाय पश्चात्स्यात्। अत्रैतस्य विचारस्य मुहूर्तविचारेऽनुपयोगान्मूलपद्यनिबन्धो यद्यपि स्वयमवक्तव्यस्तथापि सकलजनप्रसिद्ध्यर्थमभिहितः।

§ पीटी.

---

§ संव. पीटीगतम्।

(१) मुचि. ५।५६; संव. १०२–१०३.

---

**बौधायनगृह्यशेषसूत्रं हिरण्यकेशिगृह्यशेषसूत्रं च**

षण्ढादिसंस्कारे ब्राह्मणभोजनम्, आशीर्वाचनम्, वपनम्, स्नानम्, यज्ञोपवीतधारणम्, अग्निमुखम्, समिदाधानम्, अश्मस्थापनम्, वस्त्रमेखलाजिनधारणम्, दण्डदानम्, नामप्रश्नः, हस्तग्रहणम्, परिदानम्, उपनयनम्, होमः, हुतशेषस्य निधानं प्राशनं च, अन्धजडाद्युपनयने उक्तप्रयोगातिदेशः, मधुपर्कदानम्, अग्नेरुत्सर्ग आत्मनि समारोपो वा

§ [1]अथ षण्ढबधिरमूकानां संस्कारं व्याख्यास्यामः ॥

[2]पुण्ये नक्षत्रे ब्राह्मणान्भोजयित्वाऽऽशिषो वाचयित्वा केशानोप्य स्नातं शुचिवाससं बद्धशिखं यज्ञोपवीतिनमप आचमय्य देवयजनमुदानयति ॥

[3]अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात्कृत्वा याज्ञिकीं समिधमाज्येनाक्त्वा तूष्णीमभ्याधापयति । तूष्णीमश्मानं स्थापयति । यथालाभं तूष्णीं वासः परिधापयति । तूष्णीं मेखलां परिव्ययति । मन्त्रवद्ग्रन्थिं करोति । तूष्णीमजिनं प्रतिमुञ्चति । तूष्णीं दण्डं प्रयच्छति याज्ञिकस्य वृक्षस्य । नाम पृच्छति ॥

[1]अथैनं दक्षिणे हस्ते गृह्णाति– 'यस्मिन् भूतं च भव्यं च' इति ॥

[2]अथैनं देवताभ्यः परिददाति– 'देवेभ्यस्त्वा' इति ॥

[3]अथैनमुपनयति– 'देवस्य त्वा' इति, सर्वं नामग्रहणवर्जम् ॥

उपनयति गायत्रीसंबद्धं करोति उपदेशेन, तं स्पृष्ट्वा जपेद्वा । † संप्र. ४०२

[4]आचार्य एव पक्वाज्जुहोति– 'तत्सवितुर्वरेण्यम्' इति ॥

---

§ अस्मिन् सूत्रे 'षण्ढजडक्लीबान्ध०' इत्यग्रिमसूत्रे च संप्रपाठ एव श्रेयान्, सूत्रपुस्तकपाठे उपदेशविषययोर्जडबधिरयोरतिदेशविषयत्वस्यानुपपन्नत्वात् । अतः संप्रपाठ एवास्माभिरादृतः ।

(१) बौगृशे. २।९।१ षण्ढ (जड); हिगृशे. ३।१९ षण्ढ (जड); संप्र. १९५, ४०१; बाल. १।१४ पृ. ६०; संग. ६४१.

(२) बौगृशे. २।९।३; हिगृशे. ३।१९; संप्र. ४०१ चमय्य (चाम्य); बाल. १।१४ पृ. ६०; संग. ६४२ चमय्य (चम्य).

(३) बौगृशे. २।९।४ पृच्छ (प्रयच्छ); हिगृशे. ३।१९ अथ...भ्याधापयति (अग्निमुखात्कृत्वा याज्ञिकीं समिधमाधायाऽऽज्येन तूष्णीमभिघारयति) पृच्छ (प्रयच्छ); संप्र. ४०१–४०२ नाक्त्वा (नाह्क्त्वा) श्मानं स्था (श्मानमास्था) (परिव्ययति०); संको. १५३ (तूष्णीं वासः परिधापयति । तूष्णीं मेखलाम् । तूष्णीमजिनं प्रतिमुञ्चति । तूष्णीं दण्डं प्रयच्छति ।) एतावदेव; बाल. १।१४ पृ. ६० (करोति०) शेषं संप्रवत्; संग. ६४१–६४२ त्याऽग्नि (त्यग्नि) शेषं संप्रवत्; संब. १२७–१२८ अशुद्धिबहुलो ग्रन्थः; संर. २७७ (नाम पृच्छति) एतावदेव.

† संग. संप्रवत् ।

(१) बौगृशे. २।९।५; हिगृशे. ३।१९; संप्र.४०२; णे हस्ते (णं हस्तं); बाल. १।१४ पृ. ६० संप्रवत्; संग. ६४२ संप्रवत्.

(२) बौगृशे. २।९।६; हिगृशे. ३।१९; संप्र. ४०२ बाल. १।१४ पृ. ६० ददाति (दधाति); संग. ६४२.

(३) बौगृशे. २।९।७; हिगृशे. ३।१९ सर्वं (सर्वत्र); संप्र. ४०२; बाल. १।१४ पृ. ६०; संग. ६४२.

(४) बौगृशे. २।९।८; हिगृशे. ३।१९ (आचार्य एव प्रधानहोमं जुहोति । हुतशेषं गायत्र्याऽभिमन्त्र्य प्राशयेदित्येके ।); संप्र. ४०२ पक्वाज्जु (पक्वाज्जु); बाल. १।१४ पृ. ६० संप्रवत्; संग. ६४२ संप्रवत्.

[1]अथाऽऽज्याहुतीरुपजुहोति– 'क्षेत्रियै त्वा' इति षड्भिर्व्याहृतिभिश्च ॥

[2]अथ स्विष्टकृत्प्रभृति सिद्धमा धेनुवरप्रदानात् ॥

[3]अथाग्रेणाग्निं याज्ञिकवृक्षस्य पर्णेषु हुतशेषं निदधाति तत्पुरस्ताद्व्याख्यातम् ॥

[4]अथ पक्वादुपादाय प्राश्नाति तूष्णीम् ॥

[5]सर्वान्मन्त्रानाचार्य एव जपेदित्येके ॥

[6]अन्धजडक्लीबव्यसनिव्याधितोन्मत्तहीनाधिकाङ्गा*नामामयाव्यपस्मारिश्वित्रिकुष्ठिजङ्घरोगिणश्चैतेन व्याख्याता इत्येके ॥

[7]सद्यो मधुपर्कं ददाति ॥

[8]तिसृषु व्युष्टासु मधुपर्कवदा व्रतात्तूष्णीम् ॥

[1]अथाग्निमुत्सृजति– 'आयुर्दा अग्ने हविषो जुषाणः' इति ॥

[2]पिता वा भ्राता वाऽऽत्मनि समारोपयेदित्येके ॥

## स्मृत्यन्तरम्

सर्वत्राऽऽचार्यस्य कर्तृत्वम्, मुहूर्ते निरीक्षणं स्पृष्ट्वा गायत्रीजपश्च

[3]मूकोन्मत्तादिसंस्कारे त्वाचार्यः सर्वमाचरेत् ।
सुमुहूर्ते निरीक्षेत गायत्रीं स्पृश्य वा जपेत् ॥

## ब्रह्मपुराणम्

[4]संस्कारमन्त्रहोमादीन्करोत्याचार्य एव तु ।
उपनेयांश्च विधिवदाचार्यः स्वसमीपतः ।
आनीयाग्निसमीपं वा सावित्रीं स्पृश्य वा
जपेत् ॥

(१) बटुपठनीयानां दण्डाजिनोपवीतादिग्रहणसंस्कारमन्त्राणामाचार्ये प्रत्येव पाठो विधीयते, तथा होमः समिदाधानं तन्मन्त्रपाठश्च, नाऽऽचार्यपठनीयानाम्, न वा तत्कर्तृकस्य प्रधानहोमस्य, विधिप्राप्तत्वात् । बटूपगमनपरिहारेणाऽऽचार्यस्य स्वसमीपेऽग्निसमीपे वा पङ्ग्वादिमाणवकानयनं विधीयते । प्राकृतात् गायत्र्युपदेशात् बटुं स्पृष्ट्वा गायत्रीजपो वैकल्पिको विधीयते । तस्य श्रवणोच्चारणसमर्थान् प्रत्युपदेशः, मूकबधिरादीन् प्रति स्पृष्ट्वा जप इति व्यवस्था । * संप्र. ४०१

---

* अनाम अर्शः, तदेव आमयः, सोऽस्यास्तीत्यनामामयावी ।

(१) बौगृशे. २।९।९ ; संप्र. ४०२ त्वा + (निर्ऋत्यै त्वा) हृतिमिश्च (हृतीभिः) ; बाल. १।१४ पृ. ६० त्वा + (निर्ऋत्यै त्वा) हृतिमिश्च (हृतिमिः) ; संग. ६४२ अथाऽऽज्या (अन्या) शेषं संप्रवत्.

(२) बौगृशे. २।९।१० ; हिगृशे. ३।१९ (अथ०).

(३) बौगृशे. २।९।११ ; संप्र. ४०२ कवृक्ष (कस्य वृक्ष) दधाति (दधातीति) ; बाल. १।१४ पृ. ६० संप्रवत् ; संग. ६४२ संप्रवत्.

(४) बौगृशे. २।९।१२ ; संप्र. ४०२ ; बाल. १।१४ पृ. ६० ; संग. ६४२.

(५) बौगृशे. २।९।१३ ; हिगृशे. ३।१९ सर्वान् (तूष्णीं सर्वान्) ; संप्र. ४०२ ; संकौ. १५३ ; बाल. १।१४ पृ. ६० ; संग. ६४२ ; संव. १२८.

(६) बौगृशे. २।९।१४ अन्धजडक्लीब (षण्ढजडक्लीबान्ध) धिकाङ्गानामा (ङ्गबधिराधिकाङ्गा) जङ्घ (दीर्घ) ; हिगृशे. ३।१९ (इत्येके०) शेषं बौगृशेवत् ; संप्र. ४०२ ; बाल. १।१४ पृ. ६० अन्धज (अथ ज) ; संग. ६४२.

(७) बौगृशे. २।९।१५ ; हिगृशे. ३।१९ ददाति + (सद्योऽर्के विवहेदित्येके) ; संप्र. ४०२ ; संग. ६४२.

(८) बौगृशे. २।९।१६ ; हिगृशे. ३।१९ ; संप्र. ४०२ दा व्रतात्तू (दापृता तू) ; संग. ६४२ दा व्रतात्तू (दावृता तू).

---

* संग. संप्रवत्, संकौ., संव. संप्रगतम् ।

(१) बौगृशे. २।९।१७ ; हिगृशे. ३।१९ ; संप्र. ४०२ (अथाग्निमुत्सृजति०) ; संग. ६४२ संप्रवत्.

(२) बौगृशे. २।९।१८ ; हिगृशे. ३।१९ ; संप्र. ४०२ त्मनि समा (त्मजमा) ; संग. ६४२ संप्रवत्.

(३) मुक्ता. १०० ; आन. १६०.

(४) प्रपा. २२० ; गमा. २३१ मन्त्रहो (मत्र हो) प्रयोगपारिजाते ; संप्र. ४०० ; चम. १६ स्पृश्य वा (संस्पृशन्) ; संम. २५ चार्यः स्व (चार्यस्व) ब्रह्माण्डपुराणे ; सिन्धु. ९४४ चार्यः स्वस (चार्यस्य स) ; विपा. ४८२ सिन्धुवत्, प्रयोगपारिजाते ; संकौ. १५२–१५३

( २ ) ' सावित्रीं स्पृश्य वा जपेत् ' इत्यत्रत्यो वाशब्दः प्रसिद्धेन सावित्रीवाचनेन सह विकल्पार्थः । स च योग्यतानुसारेण व्यवस्थितो ज्ञेयः । कुमारस्य मूकत्वे स्पर्शपूर्वकः सावित्रीजपः, उन्मत्तत्वे यदि पठति तदा वाचनम्, नो चेत्स्पृष्ट्वा जप इति, षण्ढत्वान्धत्वादौ तु वाचनमिति व्यवस्था । ' सावित्रीं स्पृश्य वा जपेत् ' इत्यत्र स्पृश्य वा सावित्रीं जपेदित्यन्वयः । स्पृश्येत्यत्र कुमारमिति शेषः । स्पृश्येत्यत्र समासाभावेऽपि क्त्वो ल्यबादेशश्छान्दसः । एवं कुमारकर्तृकसंस्कारमन्त्रपठनविधितदीयहोमादिकरणविधी व्यवस्थितौ ज्ञेयौ । पूर्वविधिः कुमारस्य मूकत्वे ज्ञेयः । उत्तरविधिस्तु कुमारस्याङ्गवैकल्ये । उन्मत्तत्वे पूर्ववत् । ' उपनेयांस्तु विधिवत् ' इत्यादि ' अग्निसमीपं वा ' इत्यन्तं सर्वेषु समानम् । मूकबधिरादौ ' को नामासि ' इति नामप्रश्नोऽपि नास्ति, अयोग्यत्वात्, 'न नाम पृच्छति' इति बोधायनोक्तेश्च । अन्यदङ्गजातं यथासंभवं कार्यम् । मूकोन्मत्तयोरुपनयने ' अस्य द्विजत्वसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमाचार्यपे- ( १ पि )तृकसावित्रीमातृकमुपनयनाख्यसंस्कारं करिष्ये ' इति संकल्पवाक्यम् । § संर. २७६–२७७

समीपं वा ( समीपे तु ) ; बाल. १।१४ पृ. ४७ रमन्त्र ( रे मन्त्र ) नेयांश्च ( नेयं च ) ; संग. ६४० नेयांश्च ( नेयश्च ) समीपं ( समीपे ) ; संव. १२७ पारिजाते ; संर. २७५.

## स्मृत्यर्थसारः

होमे आचार्यस्य कर्तृत्वम्, उपनयनपदार्थे विकल्पाः, अङ्गानुष्ठानं यथाशक्ति

**'होमं तावदाचार्यः करोति । उपनयनं च विधिनाऽऽचार्यसमीपनयनं वाऽग्निसमीपनयनं वा सावित्रीवाचनं वा । अन्यदङ्गं यथाशक्ति कार्यम् ॥**

अन्यदङ्गं यथासंभवं कार्यमिति त्रयाणां पक्षाणां अन्यतमेन प्रधानसिद्धिरित्याशयः । संकौ. १५२

* शेषं संप्रगतम् ।

(१) स्मृसार. ४ ; हृभा. २२५ पनयनं वाऽग्निसमीप ( पानयनमग्निसमीपा ) स्मृत्यन्तरे ; चम. १६ ; मुक्ता. १०१ करोति ( कुर्यात् ) वाऽग्निसमीपनयनं वा ( सावित्रीसमीपनयनं ) ; संकौ. १५२ ( होममाचार्यः करोति । उपनयनं चाऽऽचार्यसमीपे नयनमग्निसमीपे वा सावित्रीवाचनं वा । अन्यदङ्गं यथासंभवं कार्यम् । ) ; संव. १२७ (होममाचार्यः करोति । उपनयनमाचार्यसमीपे नयनमग्निसमीपे वा । सावित्रीवाचनं च । अन्यदङ्गं यथासंभवं कार्यम् । ).

# पुनरुपनयनप्रयोगः

## बौधायनगृह्यपरिभाषासूत्रं हिरण्यकेशिगृह्यशेषसूत्रं च

अग्निमुखम्, समिदाधानम्, अव्रत्यप्रायश्चित्तम्, होमः, अन्ये त्रयः प्रयोगविकल्पाः, वर्जनीयान्यङ्गानि

[1]अथ पुनःसंस्कारान् व्याख्यास्यामः ॥

[2]अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात् कृत्वा पालाशीं समिधमाज्येनाक्त्वाऽभ्याधापयन् वाचयति– 'पुनस्त्वाऽऽदित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः। घृतेन त्वं तनुवो वर्धयस्व सत्याः सन्तु यजमानस्य कामाः स्वाहा ॥' इति ॥

[3]अथाव्रत्यप्रायश्चित्ते जुहोति– 'यन्म आत्मनो मिन्दाऽभूत्, पुनरग्निश्चक्षुरदात्' इति द्वाभ्याम् ॥

[4]अथ पक्वाज्जुहोति– 'सप्त ते अग्ने समिधः सप्त जिह्वाः' इति ॥

अथाऽऽज्याहुतीरुपजुहोति– 'येन देवाः पवित्रेण' इति तिसृभिरनुच्छन्दसम् ॥

स्विष्टकृत्प्रभृति सिद्धमा धेनुवरप्रदानात् ॥

(१) बौगृप. १।१२।७ ; हिगृशे. ३।१८ ; सिन्धु. ९६८ स्कारान् (स्कारं) ; बाल. १।१४ पृ. ६० सिन्धुवत्.

(२) बौगृप. १।१२।८ ; हिगृशे. ३।१८ अथ... मुखात् ( अग्निमुख ) नाक्त्वा ( नाङ्क्त्वा ) ; सिन्धु. ९६८–९६९ अथ देवयजनोल्लेखन ( देवयजन ) क्त्वाऽभ्याधापयन् ( ङ्क्त्वाऽभ्याधाय ) ; बाल. १।१४ पृ. ६० ( अथ० ) धापयन् ( धाय ).

(३) बौगृप. १।१२।९ ; हिगृशे. ३।१८ अथाव्रत्य (अथ व्रात्य) ; सिन्धु. ९६९ हिगृशेवत् ; बाल. १।१४ पृ. ६०.

(४) बौगृप. १।१२।१०–१२ ; हिगृशे. ३।१८ ; सिन्धु. ९६९ ; बाल. १।१४ पृ. ६०.

[1]अथापरः– आ परिधानात्कृत्वा पालाशीं समिधमाधायाव्रत्यप्रायश्चित्ते जुहोति ॥

[2]अथ व्याहृतिभिर्जुहोति ॥

[3]अथापरः– ब्राह्मणवचनादेव सावित्र्या शतकृत्वो घृतमभिमन्त्र्य प्राश्य कृतप्रायश्चित्तो भवति ॥

[4]गुरोर्वोच्छिष्टं भुञ्जीत ॥

[5]अथाप्युदाहरन्ति– वपनं दक्षिणादानं मेखलादण्डमजिनं भैक्षाचर्या व्रतानि चैतानि निवर्तन्ते पुनःसंस्कारकर्मणीति ॥

[6]एते पुनःसंस्कारा व्याख्याताः ॥

अत्र शक्ताशक्तभेदेन गुरुलघुकल्पव्यवस्था बोध्या ।

बाल. १।१४ पृ. ६०

(१) बौगृप. १।१२।१३ ; हिगृशे. ३।१८ आ परिधानात् ( अग्निमुखात् ) माधायाव्र ( मग्नावाधाय व्रा ) ; सिन्धु. ९६९ रः– आ परिधा ( रमा परिदा ) याव्रत्य ( याथ व्रात्य ) ; बाल. १।१४ पृ. ६० याव्रत्य ( याथोऽव्रत्य ).

(२) बौगृप. १।१२।१४ ; हिगृशे. ३।१८ ( अथ स्विष्टकृदादि वरदानान्तम् ) ; सिन्धु. ९६९ तिभिर्जु ( तीर्जु ) ; बाल. १।१४ पृ. ६० सिन्धुवत् .

(३) बौगृप. १।१२।१५ ; हिगृशे. ३।१८ ; सिन्धु. ९६९ ; बाल. १।१४ पृ. ६०.

(४) बौगृप. १।१२।१६ ; हिगृशे. ३।१८ ; सिन्धु. ९६९ गुरोर्वो ( गुरोर्वाऽप्यु ) ; बाल. १।१४ पृ. ६० सिन्धुवत् .

(५) बौगृप. १।१२।१७ ; हिगृशे. ३।१८ ; सिन्धु. ९६९ नं भैक्षाचर्या व्रतानि चैतानि ( नमैक्ष्यचर्याव्रतानि च) ; बाल. १।१४ पृ. ६० भैक्षा (भैक्ष) चैतानि (चेत्येतानि).

(६) बौगृप. १।१२।१८ ; हिगृशे. ३।१८ ; बाल. १।१४ पृ. ६० एते ( एतेन ).

## आश्वलायनगृह्यसूत्रम्

वपनमेधाजननयोर्विकल्पः, परिदाननिषेधः,
सावित्रीविशेषः

[1]**अथोपेतपूर्वस्य ॥**

( १ ) यं विशेषं वक्ष्यामः स उपेतपूर्वस्य भवति । देभा.

( २ ) अनन्तरम् उपेतपूर्वस्य विशेषं वक्ष्यामः । * गानावृ.

( ३ ) अथ अनन्तरे वेदान्तरे उपेतपूर्वो य इमं वेदमध्येतुमिच्छति तस्योपनयने विशेषो वक्ष्यते । एवं ब्रुवन्नेतत् ज्ञापयति– तेन तेन प्रकारेण प्रतिवेदमुपनयनं कर्तव्यमिति । अन्ये तु सकृदुपनयनं सर्ववेदार्थं मन्यन्ते । यथाऽऽहाऽऽपस्तम्बः– 'सर्वेभ्यो वेदेभ्यः सावित्र्यनूच्यत इति ब्राह्मणम्' इति । अना.

[2]**कृताकृतं केशवपनं मेधाजननं च ॥**

कृताकृतं केशवपनं भवति । मेधाजननं च कृताकृतं भवति । † देभा.

[3]**अनिरुक्तं परिदानम् ॥**

( १ ) न निरुच्यते अनिरुक्तम् । नाभिधीयत इत्यर्थः । तत्रैके परिदानशब्दमेवानिरुक्तमिच्छन्ति । वयं तु नैवम् । परिदीयते येन स परिदानो मन्त्रः । तत् परिदानमनिरुक्तं भवति । एवं तूच्यमाने 'परिदानं च' इत्येतावता सिद्धम् । तत्र को दोषः ? कृताकृतं परिदानं प्राप्नोति । 'न परिदानम्' इत्येवमस्तु । एवमुच्यमाने दोषः । को दोषः ? 'कालश्च' इत्ययं वक्ष्यति । तत्र कृताकृतत्वं कालस्य न शक्यते कर्तुम् । कस्मात् ? नित्यत्वात् । कालस्याभावोऽपि तथैव । तेनावश्यं शब्दान्तरेण कालार्थमुपदेशः कर्तव्यः । तस्मादनिरुक्तमित्युच्यते । तेन परिदानमनिरुक्तं भवति कालश्च । परिदानशब्दस्त्वयं कर्मवाची । कर्मणि च प्रतिषिद्धे प्राङ्मन्त्रप्रतिषेधः कृतो भवति, तद्गुणत्वात् । देभा.

( २ ) परिदानमनिरुक्तमिति न भवतीत्यर्थः । ‡ गानावृ.

( ३ ) निरुक्तम् अभिहितम् । परिदीयते यस्मिन् कर्मणि तत् परिदानम् । यदभिहितं परिदानं तदत्र न भवतीत्यर्थः । 'न परिदानम्' इत्येव सिद्धे अनिरुक्तमिति वचनमुत्तरार्थम् । अना.

[1]**'तत्सवितुर्वृणीमहे' इति सावित्रीम् ॥**

( १ ) उपेतपूर्वस्येयं सावित्री भवति । अनुपेतपूर्वस्यान्या प्रसिद्धा । देभा.

( २ ) पूर्वस्याः सावित्र्याः स्थाने एतां सावित्रीं प्रयुञ्जीत । प्रायश्चित्तत्वेन पुनरुपनयनप्राप्तौ एवं कुर्यात् । § गानावृ.

( ३ ) 'सावित्रीं भो अनुब्रूहि' इत्युक्ते इमामनुब्रूयात् सदा चेमां जपेत् । अना.

( ४ ) पुनरुपनयने विशेषमाहाऽऽश्वलायनः– 'अथोपेतपूर्वस्य...... सावित्रीम्' इति । अनिरुक्तम्, न भवतीति । इदं सूत्रं वृत्तिकारिकाद्ययन्तपर्यालोचने प्रायश्चित्तभूतपुनरुपनयनपरमेव प्रतीयते, 'प्रायश्चित्तत्वेन पुनरुपनयनप्राप्तावेवं कुर्यात्' इति वृत्तिकृतैव व्याख्याने-

---

* प्रपा., संप्र. गानावृवत् अनाविलानुवादश्च । सिन्धु., विपा. अनाविलानुवादः ।

† गानावृ., अना., प्रपा., संप्र., संम. देभावत् ।

(१) आगृ. १।२२।२२ ; प्रपा. २३९ ; संप्र. ५४३ ; संम. २७ ; सिन्धु. ९३८, ९६९ ; विपा. ४८७ ; संकौ. १५६ ; बाल. १।१४ पृ. ५१, ५७.

(२) आगृ. १।२२।२३ ; प्रपा. २३९ ; संप्र. ५४३ ; संम. २७ ; विपा. ४८७ च ( वा ) ; संकौ. १५६ ; बाल. १।१४ पृ. ५७ ; कृम. ९७२ (कृताकृतं केशवपनं०).

(३) आगृ. १।२२।२४ ; प्रपा. २३९ ; संप्र. ५४३ ; संम. २७ ; सिन्धु. ९३८ ; विपा. ४८७ अनिरुक्तं ( निरुक्तं ) ; संकौ. १५६ ; बाल. १।१४ पृ. ५७ ; कृम. ९७२.

‡ प्रपा., संप्र., संम. गानावृवत् ।

§ प्रपा., संप्र. गानावृवत् ।

(१) आगृ. १।२२।२६ ; प्रपा. २३९ ; संप्र. ५४३ ; वम. १८ गृह्यम् ; संप्र. २७ ; विपा. ४८७ ; संकौ. १५६ ; बाल. १।१४ पृ. ४८, ५७.

ऽभिधानात्, जयन्तेन च 'प्रायश्चित्तनिमित्तं यस्य पुनरुपनयनं क्रियते तस्यायं विधिरुच्यते' इत्युपक्रम्यैतत्सूत्रव्याख्यानात्, 'यदैतदुपनीतस्य प्रायश्चित्तं तदा भवेत्। कृताकृतं च वपनं मेधाजननमेव च॥ मेधाजननसद्भावे व्रतचर्या भवेदिह। अनुप्रवचनीयश्च तदभावे द्वयं न हि॥ परिदानं न कार्यं स्यान्निमित्तानन्तरं त्विदम्। पूर्वस्या वाचयेत्स्थाने तत्सवितुर्वृणीमहे। भणितोऽत्र विशेषोऽयं समानमितरद्भवेत्॥' इति कारिकोक्तेश्च। 'निमित्तानन्तरम्' इत्युक्त्या च नैमित्तिके निमित्तानन्तर्यस्योचितत्वान्न्यायमूलकं 'कालश्च' इति सूत्रम्, निमित्तानन्तर्यासंभवे तु जातेष्टिवदुदगयनादिकालोऽपेक्षणीय एवेति सूचितम्। परिदानं 'कस्य ब्रह्मचार्यसि' इत्यादेः 'परिददामि' इत्यन्तस्य मन्त्रस्योच्चारणम्। 'भणितोऽत्र' इति प्रायश्चित्तार्थे पुनरुपनयने एव गायत्र्याः स्थाने एषा ऋक् भवति, न तु तदनन्तरभाविषु ब्रह्मयज्ञादिष्वपि, तत्र पूर्वविहितगायत्रीबाधे मानाभावादिति दर्शयति। मातृदत्तोऽपि 'अत्र सावित्रीं वाचयति यदि पुरस्तादुपेतो भवति, यद्यनुपेतस्त्वाद्वे पर्यवेते' इति सूत्रे प्रायश्चित्तार्थपुनरुपनयनान्तर्गतसावित्रीवाचनाङ्गत्वेन परिदानानन्तरकालावधिं वदन् तस्मिन्नेव प्रकरणे परिदानसूत्रे पुनरुपनयने परिदानाभावसूचकमाश्वलायनसूत्रसंवादं वदन् आश्वलायनसूत्रस्य प्रायश्चित्तभूतपुनरुपनयनविषयत्वमेव दर्शितवान् तस्मिन्नेव प्रकरणे तत्तत्सूत्रव्याख्याकाले अहतवासोमेखलाजिनभैक्षचर्यादण्डमन्त्रनिवृत्तिः पुनरुपनयने इत्याह।

हरदत्तेन 'अथोपतेपूर्वस्य' इतिसूत्रव्याख्यावसरे उक्तम्—'अथ अनन्तरं वेदान्तरे उपेतपूर्वो य इमं वेदमध्येतुमिच्छति तस्योपनयने विशेषो वक्ष्यते' इति। अस्ति च तदनुसारिणी स्मृतिः पारिजाते—'अध्वर्यूणां सामगानामृचमध्येतुमिच्छताम्। क्रिया स्यात्परिदानान्ता दीक्षादिर्न विधीयते॥ ब्रह्मौदनं च मेधार्चा दीक्षा च न विधीयते। ऋचमध्येतुकामानां दीक्षामिच्छन्ति केचन॥' इति। अत्राध्वर्युसामगग्रहणस्यायमाशयः—ऋग्वेदाध्ययनाङ्गभूतमेवोपनयनमाश्वलायनोक्तेतिकर्तव्यताकं भवति, सत्यप्युपनयनैक्ये तत्तदाम्नायाध्ययनाङ्गभूते एव तस्मिन् तत्तद्गृह्योक्तेतिकर्तव्यता भवतीति स्मृतिपादे न्यायसुधायामुक्तेः। न ऋग्वेदिनां तदध्ययनार्थं पुनरुपनयनं भवति, तेषां प्रथमोपनयनानन्तरमेव तदध्ययनस्योचितत्वात्। अतोऽन्यवेदिनामेव ऋग्वेदार्थे पुनरुपनयनेऽयं विधिरिति। अत एव पूर्वोदाहृतजयन्तकारिकयोर्ऋग्वेदग्रहणं कृतम्। यच्च तत्र हरदत्तीये च वेदान्तराध्ययनपूर्वके एव ऋग्वेदाध्ययने पुनरुपनयनकथनम्, तेन युगपदनेकवेदारम्भे नोपनयनावृत्त्यपेक्षेति सूचितम्। अस्ति ह्यन्यवेदिनां क्रमिकवेदारम्भपक्षो युगपत्तदारम्भपक्षश्च। तथा च हरिहरेण उपनयनानन्तरं 'वेदारम्भसमये' इत्युक्त्वा वेदारम्भाङ्गभूताः कात्यायनोक्ताहुतीर्दर्शयतोक्तम्— "यदि ऋग्वेद आरभ्यते 'पृथिव्यै स्वाहा, अग्नये स्वाहा' इति, यदि यजुर्वेदः 'अन्तरिक्षाय स्वाहा, वायवे स्वाहा' इति, यदि सामवेदः 'दिवे स्वाहा, सूर्याय स्वाहा' इति, यदि अथर्ववेदः 'दिग्भ्यः स्वाहा, चन्द्रमसे स्वाहा' इति, यद्येकदा § सर्ववेदारम्भः प्रतिवेदं वेदाहुतिद्वयं हुत्वा प्रायश्चित्ताहुतीर्जुहुयात्" इति। अतश्च युगपदनेकवेदारम्भे सकृदुपनयनेनैव सकलवेदाध्ययनसिद्धिः। इत्थमभिप्रेत्योक्तमापस्तम्बेन पारिजाते— 'सर्वेभ्यो वै वेदेभ्यः सावित्र्यनूच्यते' (आप. १।१।१०) इति।

तदयं संक्षेपः— वेदान्तराध्ययनपूर्वकमृग्वेदाध्ययने चिकीर्षिते आश्वलायनोक्तेतिकर्तव्यताकं पुनरुपनयनं कार्यम्। तत्रैव जयन्तकारिकामतेऽलंकरणमात्रं वर्ज्यमिति विशेषः। हरदत्तमते तु सूत्रोक्तसकलपुनरुपनयनगतविशेषविशिष्टं भवति। स्मृतिमते तु दीक्षाऽपि वैकल्पिकीति। द्वितीयपुनरुपनयननिमित्ते त्वविकृतमुपनयनं कार्यम्, गार्हपत्याधानात्प्राक् सूर्योदयेऽविकृताधानवत्,

§ अत्र सर्ववेदशब्देन ऋग्यजुःसामान्येव ग्राह्याणि। तथा च तदीयान्येवाऽऽहुतिद्वन्द्वानि होतव्यानि। अथर्ववेदार्थे तु पृथगेवोपनयनम्, 'नान्यत्र संस्कृतो भृग्वङ्गिरसोऽधीयीत' (गोब्रा. १।२९) इति गोपथब्राह्मणवचनात्। अत एव हरदत्तेनाप्युक्तम्— 'आथर्वणस्य वेदस्य पृथगुपनयनं कर्तव्यम्' (उ. १।१।१०) इति।

तत्र पुनरुपनयने क्वचिदपि ग्रन्थे विशेषानुक्तेः, 'अयोपेतपूर्वस्य' इति सूत्रस्य तत्राप्रवृत्तेश्च ।

प्रायश्चित्तभूतपुनरुपनयने तूक्तवचनेभ्योऽनेकविशेषावगतेस्तत्प्रयोगो लिख्यते । तत्र यत्र प्रायश्चित्तान्तरसहितं विहितं तत्र पर्षदुपदिष्टविधिना तत्प्रायश्चित्तं कृत्वा कार्यम्, यथोष्ट्रीक्षीरपानादौ । यत्र जातकर्मादिसंस्कारान्तरसहितं विहितं निमित्तानन्तरकरणपक्षे पुण्यनक्षत्राद्यनालोच्य पर्षदुपदेशेन चौलान्तसंस्कारान् कृत्वा कार्यम्, अन्यथोचितनक्षत्राद्यावश्यकम् । कर्ता च पितृसत्त्वे स एव । तदभावे पितृव्यादिः सपिण्डः । तदभावे यः कश्चिद् ब्राह्मणः । पुनरुपनयनं यत्र चिकीर्षितं तत्रैव देशे जातकर्मादयः कार्याः । 'अस्य ‡ कृतौर्ध्वदेहिकस्य पुनःसंस्कारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं जातकर्मादीन्युपनयनान्तानि कर्माणि करिष्ये' इति सकृत्संकल्प्य सर्वोद्देशेन सकृत्स्वस्तिवाचनादि । श्मश्रुवपनानन्तरं चौले केशवपनमिति विशेषो महावयसः । विवाहसंकल्पं तदर्थं स्वस्तिवाचनादिकं तु स्वयमेव पृथक् कुर्यात् । एवं निमित्तान्तरेऽपि संकल्प ऊह्यः । यत्र तु पुनरुपनयनमात्रं प्रायश्चित्तत्वेन विहितं तत्र पर्षदुपदिष्टविधिना तदेव कार्यम् । तत्राऽऽचार्यः कृच्छ्रत्रयं द्वादशसहस्रं 'तत्सवितुर्वृणीमहे' इत्यस्या जपं च कुर्वीत । संस्कार्यो निमित्तानन्तरोपनयने न प्रायश्चित्तं कृच्छ्रत्रयात्मकं कुर्यात्, कालान्तरोपनयने त्ववश्यं कुर्यात् । ततो ग्रामात् प्राच्यामुदीच्यां वा दिशि गत्वा यत्र ग्रामपशूनां शब्दो न श्रूयते तादृशदेशं मार्जनोपलेपनाभ्यां शोधयित्वा तत्र कृतनित्य(क्रिय) आचार्यः स्वदक्षिणतः संस्कार्यमुपवेश्य 'अस्य प्रत्यन्तदेशे गमनजनितदोषनिरासेन पुनःसंस्कारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं पुनरुपनयनं करिष्ये' इत्येवं तत्तन्निमित्तानुसारिसंकल्पं कृत्वा तदङ्गभूतेत्यादिसंकल्पपूर्वकमण्डपदेवताप्रतिष्ठापनान्तं कृत्वा स्वस्तिवाचने 'अग्निः प्रीयताम्' इति विशेषमुक्त्वा कुलमङ्गलस्नानं संस्कार्यं भोजयित्वा, वपनपक्षे संकल्पपूर्वकं वपनस्नाने कारयित्वा अन्यथा अकारयित्वा, नित्योपनयनवदन्वाधानात् प्राक्तन्त्रं कृत्वा 'अस्य प्रायश्चित्तार्थं पुनरुपनयनहोमे देवतापरिग्रहार्थमन्वाधानं करिष्ये । अस्मिन्नन्वाहितेऽग्नौ' इत्यादिपात्रप्रोक्षणादीनि(? णान्तं) नित्यवत् कुर्यात् । ततो ब्राह्मणमुपवेश्य प्रणीताप्रणयनाद्याज्यसंस्कारान्तं कृत्वा वासोजिनधारणपक्षे नित्यवत्समन्त्रं धारणं तयोः कुर्यात् । तदभावपक्षे पूर्वमेव कुमारेण परिहितवस्त्रेण भवितव्यम् । (ततो ?) ब्रह्मचारिणः पुनरुपनयने तु वस्त्रादि नित्यम् । ततो यज्ञोपवीतधारणादि आदित्येक्षणान्तं नित्यवत् कुर्यात् । ततः 'युवा सुवासाः' इत्येतन्मन्त्रकप्रदक्षिणावर्तनादि वाससा पाणिभ्यां तदञ्जलिग्रहणान्तं कुर्यात् । तच्चेत्थम्– 'युवा' इत्यर्धेन संस्कार्यं प्रदक्षिणमावर्त्य उत्तरेण तस्यांसयोः पाणी गमयित्वा एवं दक्षिणभागं निनयेत् । ततः संस्कार्योऽग्निकार्यमुपनयनवत् कुर्यात् । ततोऽग्नेः पश्चिमतः प्रत्यङ्मुख आचार्यपादावुपसंगृह्य 'अधीहि भोः सावित्रीम्' इत्युक्त्वा 'भो अनुब्रूहि' इति वदेत् । तत आचार्यः प्रणवव्याहृतीनामृष्यादिस्मरणान्ते 'तत्सवितुरित्यस्य श्यावाश्वः सविताऽनुष्टुप्, पुनरुपनयने विनियोगः', प्रथमं पादशः स्वयमुक्त्वा वाचयेत्, ततोऽर्धर्चशः, ततः सर्वाम् । ततः 'मम व्रते' इत्यनेन संस्कार्यहृदि ऊर्ध्वाङ्गुलिपाणिं निधाय ततो मेखलादण्डदानपक्षे समन्त्रकं तद्दानं कृत्वा, अन्यथा त्वकृत्वा, ब्रह्मचर्यमादिशेत् । यदि ब्रह्मचारिणोऽसमापितवेदस्य पुनरुपनयनं तदा नित्यवत् । अन्यस्य तादृशस्य पुनरुपनयने तु 'अपोऽशान, कर्म कुरु, दिवा मा स्वाप्सीः, वेदमधीष्व' इति । समापितवेदस्य तु 'स्वाप्सीः' इत्यन्तमेव । ततः स्विष्टकृदादिहोमशेषं समापयेत् । मेधाजननकरणपक्षे तत्पर्यन्तमग्निं रक्षेत्, व्रतचर्यां च कुर्यात्, उपनयनदिने भिक्षायाचनपूर्वकमनुप्रवचनीयं च । तत्र गायत्र्याः स्थाने 'तत्सवितुर्वृणीमहे' इत्येतां पठित्वा द्वितीयामाहुतिं जुहुयात् । उक्तमृष्यादि । नित्यस्त्यागः । यद्यसमापितवेदस्य पुनरुपनयनं

‡ मातृपितृगुर्वाचार्योपाध्यायेभ्योऽन्येषामौर्ध्वदेहिकं ब्रह्मचारिकृतं पुनःसंस्कारनिमित्तम्, तत् कृतं येन ब्रह्मचारिणा तस्येत्यर्थः ।

तदा वेदसमाप्तिवाचनं कुर्यात् , नान्यथा । ततस्त्रिरात्रं द्वादशरात्रमब्दं वा व्रतचर्यायां कृतायां मेधाजननम् । तत्र यदि पुनरुपनीतो ब्रह्मचारी तदा यस्य पलाशस्य कुशस्तम्बस्य वा प्रोक्षणं कृतं तत्रैव मेखलादीनि व्युदस्यान्यानि धारयेत्। अन्यस्तु पुनरुपनीतो योऽपि धृतमेखलादिः स व्युदस्य नान्यानि धारयेत् , यस्मिन्नाश्रमे पुनरुपनयनं प्राप्तं तदाश्रमधर्मान् कुर्यात् । यत्र तु पुनरुपनयनानन्तरमाश्रमान्तरस्वीकारः श्रूयते, यथा 'स्नात्वोद्वहेत्ततो भार्याम्' इत्यादौ, तत्र मेखलादीनि व्युदस्य पुनस्तानि धारयित्वा ब्रह्मचारिव्रतचर्यामुचितकालेन समाप्य विधिनाऽऽश्रमान्तरं स्वीकुर्यात् । अयं बह्वृचानां पुनःसंस्कारोऽभिहितः ।

बाल. १।१४ पृ. ५७–५९

## हिरण्यकेशिगृह्यसूत्रम्

सावित्रीवाचनक्रमः

‡[1]अत्र सावित्रीं वाचयति यदि पुरस्तादुपेतो भवति ॥

## आग्निवेश्यगृह्यसूत्रम्

सावित्रीवाचनक्रमः , प्रायश्चित्तानुष्ठानम् , स्थण्डिलकरणादिदण्डदानान्तातिदेशः , वर्ज्यानि भिक्षाचरणादीन्यङ्गानि, पुनरुपनयनदिने एव सावित्रीव्रताचरणविसर्गौ

§[2]अत्र सावित्रीं वाचयति यदि पुरस्तादुपेतो भवति ॥

[3]गोमयेन गोचर्ममात्रं स्थण्डिलमुपलिप्य यमनियमयन्त्रैर्व्रतोपवासैश्च प्रायश्चित्तं कृत्वाऽग्निमुपसमाधाय संपरिस्तीर्याऽऽदण्डप्रदानात्पूर्ववदुपनयनं कृत्वा सावित्रीं वाचयति ॥

‡ अस्य व्याख्यानमुपनयनप्रयोगप्रकरणे ( सं. का. पृ. ३२५१) द्रष्टव्यम् ।

§ परिदानानन्तरकाले इत्यर्थः ।

(१) हिगृ. १९।२।१८ ; संकौ. १५६ ; बाल. १।१४ पृ. ५७.

(२) आग्निगृ. १।१।३.

(३) आग्निगृ. २।७।१.

(भिक्षां) न कुर्वन्नश्नाति न च श्मश्रूणि वापनम् ।
शिरोमुण्डं न कुर्वन्न वाससः परिधापनम् ॥
नालंकारं ततः कुर्वन् ब्रह्मसूत्रस्य धारणम् ।
मेखलाधारणं चैव न चैवाम्बरधारणम् ॥
न चाभिमन्त्रणं कुर्वन् नाजिनस्य च धारणम् ।
न प्रदानं च दण्डस्य न भैक्षाचरणं तथा ॥
वाससो ग्रहणं नास्ति व्रतोपनयनं तथा ।
एवं हि विधिवत् कृत्वा पूतो भवति मानवः ॥

पुनःसंस्कारं कृत्वा पूतो भवति । तदहरेव सावित्रीव्रतं कृत्वा तदहरेव विसृजेदित्याह ॥

## वैखानसगृह्यसूत्रम्

प्रायश्चित्तम् , होमः , नित्योपनयनातिदेशः , वपनादयो वर्ज्यपदार्थाः , पुनरुपनयनानुकल्पः

[1]अथातः पुनरुपनयनम् । पादकृच्छ्रमुपवासं वा कृत्वाऽग्निमाधायाऽऽघारान्ते व्याहृत्या पलाशसमिधो हुत्वाऽऽज्येन विष्णुसूक्तं मिन्दाहुत्याश्रावितादीन् पूर्णाहुती(? तिं) व्याहृतीश्च हुत्वा पूर्ववदुपनयनं करोति । वपनमेखलाजिनदण्डधारणव्रतभैक्षाचरणानि पुनःसंस्कारे वर्ज्यन्ते । अथवा सावित्रीमष्टशतमावर्त्याभिमृश्य तथैव घृतं प्राश्नीयाद्गुरोरुच्छिष्टं वा भुञ्जीत । ततः पूतो भवति ॥

## बौधायनः

वपनसावित्रीव्रतभिक्षाचरणादीनि वर्ज्यानि

[2]वपनव्रतनियमलोपश्च, पूर्वानुष्ठितत्वात् ॥

अथ पुनरुपनयने विशेषमाह– वपनेति । व्रतं सावित्रव्रतम् । नियमः भिक्षाचरणम् । चशब्दात् मेखलादण्डधारणमपि गृह्यते । तत्र हेतुः– पूर्वानुष्ठितत्वात् कृतस्य करणासंभवादित्यर्थः । बोवि.

(१) वैगृ. ६।१०.

(२) बौध. २।१।१९.

### वसिष्ठः

वपनमेखलादण्डभैक्षचर्याव्रतानि वर्ज्यानि

**'वपनादीनां तु निवृत्तिः ॥**

**मानवं चात्र श्लोकमुदाहरन्ति ॥**

**' वपनं मेखला दण्डो भैक्षचर्या व्रतानि च ।**
**एतानि तु निवर्तन्ते पुनःसंस्कारकर्मणि ॥ '**

**इति ॥**

### विष्णुः

वपनमेखलादण्डभैक्षचर्याव्रतानि वर्ज्यानि

**'वपनमेखलादण्डभैक्षचर्याव्रतानि पुनःसंस्कारकर्मणि वर्जनीयानि ॥**

पुनःसंस्कारेषूपनयने क्रियमाणे वपनादीनि, व्रतानि ब्रह्मचर्यादिधर्मा गन्धमाल्यादिवर्जनादयः । वर्जनाभिधानात् विकल्पनिरासः । वै.

### मनुः

वपनमेखलादण्डभैक्षचर्याव्रतानि वर्ज्यानि

**'वपनं मेखला दण्डो भैक्षचर्या व्रतानि च ।**
**निवर्तन्ते द्विजातीनां पुनःसंस्कारकर्मणि ॥**

( १ ) व्रतानि वेदव्रतानि । तदयुक्तम् । ग्रहणार्थत्वात्तेषां कुतः प्राप्तिः । तस्माद्यान्युपनयनकाले ' मा दिवा स्वाप्सीः सायंप्रातः समिधमादध्या आचार्याधीनो भव ' इत्येवमादीनि च व्रतानि । तानि निवर्तन्ते । मेधा.

( २ ) शिरोमुण्डनमेखलादण्डभैक्ष्यचरणानि व्रतानि चाग्निकार्यमधुमांसवर्जनादीनि प्रायश्चित्तार्थमुपनयने द्विजातीनां न भवन्ति । ‡ गोरा.

( ३ ) प्रसङ्गात्पुनःसंस्कारविधिमाह— वपनमिति । व्रतानि वेदव्रतानि मधुमांसवर्जनादीनि च । तेन होममात्रं कार्यमित्यर्थः । मवि.

( ४ ) संस्कारान्तर्गततया वपनादेस्तस्यापि प्राप्तौ प्रतिषेधति— वपनमिति । $ मच.

( ५ ) इदं गृहस्थविषयं पुनरुपनयनविषयम्, ब्रह्मचारिणां तु पुनरजिनादीनां धार्यत्वात् । आन. १६५

### पराशरः

अजिनमेखलादण्डभैक्षचर्याव्रतानि वर्ज्यानि

**'अजिनं मेखला दण्डो भैक्षचर्या व्रतानि च ।**
**निवर्तन्ते द्विजातीनां पुनःसंस्कारकर्मणि ॥**

( १ ) आद्यसंस्कारवत् पुनःसंस्कारेऽप्यजिनादिप्राप्तावपवदति— अजिनमिति । अजिनादिवत् वपनमपि निवर्तते । तदाह विष्णुः— ' सर्वेष्वेतेषु द्विजानां प्रायश्चित्तान्ते भूयः संस्कारं कुर्यात् । वपनमेखलादण्डभैक्षचर्याव्रतानि पुनःसंस्कारकर्मणि वर्जनीयानि ' ( विस्मृ. ५१।४-५ ) इति । व्रतानि सौम्यप्राजापत्यादीनि मधुमांसाञ्जनादिवर्जनानि च । पमा.

( २ ) व्रतानि सौम्यप्राजापत्यादीनि महानाम्न्यादीनि वा । † प्रपा. २४०

---

‡ ममु. गोरागतम् ।

(१) वस्मृ. २०।१९-२१.

(२) विस्मृ. ५१।५ ; पमा. ५-६ (खण्डः २ भागः २) ; प्रपा. २४० मेखलादण्डभैक्षचर्या ( दण्डमेखलाभैक्षचर्य ) ; संप्र. ५४८ ; विपा. ४९१ मेखलादण्ड ( दण्डमेखला ) ; संग. ७१७.

(३) मस्मृ. ११।१५१ ; मुक्ता ११८ भैक्ष (भैक्षा) ; संकौ. १५३ वपनं ( वापनं ) ; आन. १६५ वपनं ( अजिनं ) दण्डो ( दण्डं ) ; बाल. १।१४ पृ. ५४.

$ शेषं मविगतम् ।

† शेषं पमागतम् । संप्र., विपा., संग. प्रपावत् ।

(१) पस्मृ. १२।३ ; प्रपा. २३९ : २४० ला दण्डो ( लां दण्डो ) चर्या व्र ( चर्यव्र ) ; गमा. २३४-२३५ भैक्ष ( भैक्ष्य ) ; संप्र. ५४८ कर्मणि (कर्मणः) ; मुक्ता. ११७ ( अजिनं मेखलादण्डं भैक्षाचर्यव्रतानि च । यदि मध्ये निवर्तेरन् पुनःसंस्कारमर्हति ॥ ) ; संम. २७ भैक्ष ( भैक्ष्य ) कर्मणि ( कर्मणा ) ; सिन्धु. ९६९ गमावत् ; विपा. ४९१ ; ज्योनि. १२२ भैक्षचर्या व्र (भैक्ष्यचर्याव्र) संग्रहकारः ; संकौ. १५४ ; बाल. १।१४ पृ. ५५ ; संग. ७१७ कर्मणि ( मर्हति ).

## अत्रिः

वपनमेखलादण्डभैक्षचर्याव्रतानि वर्ज्यानि

[1]वपनं मेखलादण्डं भैक्षचर्यव्रतानि च ।
निवर्तन्ते द्विजातीनां पुनःसंस्कारकर्मणि ॥

## आश्वलायनः

ब्रह्मौदनादीनि वर्ज्यानि, अन्यवेदिचिकीर्षित-ऋगध्ययननिमित्तके निष्कृत्यर्थे च विशेषः

[2]ब्रह्मौदनं च मेधा च दीक्षा च न विधीयते ।
पुनःसंस्कारकर्तॄणां द्विजातीनामिति स्थितिः ॥
*[3]अध्वर्यूणां सामगानामृचमध्येतुमिच्छताम् ।
क्रिया स्यात्परिदानान्ता दीक्षादि न विधीयते ॥

इदं च पुनरुपनयनं वेदान्तराध्ययनं चिकीर्षुः कुर्यादिति हरदत्तः । आहाऽऽश्वलायनः— 'अध्वर्यूणां ... यते ॥' ऋचम् ऋग्वेदम् । परिदानम् 'आदित्याय व्रतपतये बटुं ते ददामि' इति विहितम् । अन्ये तु— यत्र पुनःसंस्कारो विधीयते तत्रापीयमेवेतिकर्तव्यतेति ।
संम. २७

[4]ऋचमध्येतुकामानां दीक्षामिच्छन्ति केचन ।
कृत्वा क्रियास्तु दानान्ता द्विजानामन्यवेदिनाम् ॥

[1]ब्रह्मौदने व्रतानां तु सावित्र्याः स्थान इष्यते ।
हुते मार्जनसावित्री ऋषिस्थाने व्रतामिधा ॥
[2]उत्तरायणकालादिनियतिर्न विधीयते ।
निष्कृत्यर्थोपनयने चालंकारश्च सुव्रताः ॥

## स्मृत्यन्तरम्

मेखलाजिनवासोदण्डभिक्षाव्रतानि वर्ज्यानि

[3]मेखलाम( ? ला चा )जिनं वासो दण्डो भिक्षा व्रतानि च ॥
निवर्तन्ते द्विजातीनां पुनःसंस्कारकर्मणि ॥

## शाकलकारिकाः

त्र्यब्दं प्रायश्चित्तम्, वपनम्, नित्योपनयनातिदेशः, सावित्रीविशेषः, होमान्ते ब्राह्मणपूजनमाचार्याय दक्षिणादानं च, वस्त्राजिनादीनामाचार्याय दानम्

[4]आदौ तु विधिना त्र्यब्दं प्रायश्चित्तं समाचरेत् ।
कर्णौ तु धारयेत्केशान्गोपुच्छस्य तु दक्षिणे ॥
[5]ग्रन्थियोग्या शिखा यावद्यद्वा स्याच्चतुरङ्गुलम् ।
तावत्स धारयेत्केशान् तदभावेऽथवा कुशान् ॥
कृताकृतं केशवापं त्वत्र केचिद्वदन्ति हि ।
अथोपनयनं कुर्याद्गृह्योक्तविधिना ततः ॥
सावित्र्याः स्थान एव स्यात्तत्सवितुर्वृणीमहे ।
होमशेषं समाप्याथ पूजयेद्ब्राह्मणानपि ॥
नत्वा तं पुनराचार्यं तोषयेद्दक्षिणादिभिः ।
वस्त्रदण्डाजिनं मौञ्जीमाचार्याय निवेदयेत् ॥

---

* अस्य बालव्याख्यानमेतत्प्रकरणगताश्वलायनसूत्रव्याख्याने द्रष्टव्यम् ।

(१) अत्रिसं. ७६.

(२) आश्वस्मृ. ११।१८५ ; प्रपा. २३९ मेधा च (माधवी) पू. ; संप्र. ५४४ पू. ; संकौ. १५७ मेधा च (मेधार्चा) पू. ; बाल. १।१४ पृ. ५८ संकौवत्, पू.

(३) आश्वस्मृ. ११।१८६ दानान्ता (दानान्तं) ; प्रपा. २३९ ; संप्र. ५४४ क्षादि न (क्षादिर्न) ; संम. २७ संप्रवत् ; संकौ. १५७ मृच (मेव) क्षादि न (क्षादिर्न) ; बाल. १।१४ पृ. ५८ संप्रवत्.

(४) आश्वस्मृ. ११।१८८ दीक्षामि (दीक्षाऽपी) ; प्रपा. २३९ ; संप्र. ५४४ ; संकौ. १५७ पू. ; बाल. १।१४ पृ. ५८ पू.

(१) आश्वस्मृ. ११।१८९ ; प्रपा. २३९ व्रतानां तु (व्रतं न स्यात्) हुते मा (पुनर्मा) ; संप्र. ५४४.

(२) आश्वस्मृ. ११।१९० ; प्रपा. २३९ व्रताः (व्रत) ; संप्र. ५४४ रश्च (राश्च).

(३) संर. २८२.

(४) शाका. ६७ पृ. ७ विधिना (विविधा) ; संर. २८० पू.

(५) शाका. ६८–७१ पृ. ७–८.

## शौनककारिकाः

वपनस्य ब्रह्मौदनत्रिरात्रव्रतविशिष्टमेधाजननस्य च विकल्पः, परिदानालंकरणवर्जितनित्योपनयनप्रयोगातिदेशः, सावित्रीविशेषः

**[1]केशानां वपनं तस्य न क्रियेत क्रियेत वा ।**
**मेधाजननकर्मापि विज्ञेयं च कृताकृतम् ॥**
**[2]कर्तव्यपक्षाश्रयणे मेधाजननकर्मणः ।**
**ब्रह्मौदनस्य होमः स्यात् त्रिरात्रादिव्रतं तथा ॥**
**[3]कस्य ब्रह्मादिमन्त्रेण परिदानं च नेष्यते ॥**

**[4]तत्सवितुर्वृणीमहे वयमित्येवमादिका ।**
**ऋक् सावित्री परिग्राह्या यद्यदन्यत्समीरितम् ॥**
**[5]अस्योपनयने तत्तदलंकारविवर्जितम् ।**
**इहापि सर्वं कुर्वीतेत्युपनीतः पुनर्भवेत् ॥**

## कुमारिलकारिकाः

वेदान्तराध्ययनार्थे पुनरुपनयने अलंकरणमात्रनिषेधः, प्रायश्चित्तार्थे तस्मिन् वपनम् अनुप्रवचनीयत्रिरात्रव्रतविशिष्टमेधाजननं च वैकल्पिकम्, परिदाननिषेधः, सावित्रीविशेषः

**[6]वेदान्तरमधीत्यैव ऋग्वेदं ये त्वधीयते ।**
**उपनीतिरियं तेषामलंकरणवर्जिता ॥**

**[1]यदैतदुपनीतस्य प्रायश्चित्तं तदा भवेत् ।**
**कृताकृतं तु वपनं मेधाजननमेव च ।**
**मेधाजननसद्भावे व्रतचर्या भवेदिह ॥**

**[2]अनुप्रवचनीयश्च तदभावे द्वयं न च ।**
**परिदानं न कार्यं स्यान्निमित्तानन्तरं त्विदम् ॥**
**[3]पूर्वस्या वाचयेत्स्थाने तत्सवितुर्वृणीमहे ।**
**§भणितोऽत्र विशेषोऽयं समानमितरद्भवेत् ॥**

(१) शाखारण्डोऽपि स्वशाखाग्रहणकाले पुनरुपनेयः । इममर्थं पुनरुपनयने विधिविशेषं च कारिकाकार

---

§अस्माच्छ्लोकार्धात् पूर्वम् 'भिक्षेतान्नं दिवारात्रावाचार्यायाऽऽत्मतुष्टये' इत्यर्धमानन्दाश्रममुद्रितकारिकापुस्तके, प्रयोगपारिजाते, विधानपारिजाते च विद्यते । निर्णयसागरमुद्रितकारिकापुस्तके त्वेतस्मादुत्तरम् । अस्य ब्रह्मचारिधर्मविषयकत्वात् अग्रेतनग्रन्थस्य च तन्मात्रविषयकत्वात् निर्णयसागरमुद्रितक्रम एव युक्त इति भाति । अत एव चतुर्विंशतिमतसंग्रहनिर्णयसिन्धुसंस्कारकौस्तुभबालम्भट्टीष्वेतदर्धमत्र न धृतम् । अतोऽस्माभिर्न संगृहीतमिदमर्धमस्मिन् प्रकरणे ।

---

(१) प्रपा. २३९ ; संप्र. ५४४–५४५ ; विपा. ४८८ ; कृम. ९७० तस्य ( तत्र ).

(२) प्रपा. २३९ होमः स्यात् ( होमस्य ) ; संप्र. ५४५ व्रतं ( व्रते ) शेषं प्रपावत् ; विपा. ४८८ ; कृम. ९७० प्रपावत् .

(३) प्रपा. २३९ ; संप्र. ५४५ कस्य ( क्रमस्य ) ; विपा. ४८८ च ने ( न चे ) ; कृम. ९७०.

(४) प्रपा. २३९ ; संप्र. ५४५ ; विपा. ४८८ ; कृम. ९७१.

(५) प्रपा. २३९ अस्यो ( अन्यो ) ; संप्र. ५४५ अस्यो ( अथो ) सर्वं कुर्वीतेत्यु ( सर्वे कुर्वन्त्यु ) ; विपा. ४८८ ; कृम. ९७१ अस्यो ( अन्यो ) तेत्युपनीतः ( त उपनीतं ).

(६) कुका. १।१३।४५–४६ त्यैव ऋ ( त्यैनमृ ) ये त्व ( यत्व ) ; प्रपा. २३८ ; चम. १८ ; सिन्धु. ९७० ; विपा. ४८६ ; संकौ. १५६ त्यैव ऋ ( त्यैवमृ ) ; बाल. १।१४ पृ. ४८ : पृ. ५७, पृ. ७१ त्यैव ऋ ( त्येमम्ृ ).

(१) कुका. १।१३।४६–४७ ; प्रपा. २३८ यदै ( तदै ) त्तं तदा ( त्तमिदं ) तु ( च ) ; चम. १८ यदै ( यद्वै ) तदा भवेत् ( यदा पतेत् ) तु ( च ) ; सिन्धु. ९७१–९७२ यदै ( यद्वै ) तदा ( यदा ) तु ( च ) ; विपा. ४८६–४८७ सिन्धुवत् ; संकौ. १५६ तु ( च ) ; बाल. १।१५ पृ. ४८ चमवत् , पृ. ५७ तु ( च ).

(२) कुका. १।१३।४८ ; प्रपा. २३८ ; चम. १८ ; सिन्धु. ९७२ न च ( न हि ) ; विपा. ४८७ ; संकौ. १५६ ; बाल. १।१४ पृ. ४८ दानं न ( धानं च ) : पृ. ५७ सिन्धुवत् .

(३) कुका. १।१३।४९ ; प्रपा. २३८ वृणीमहे + ( भिक्षेतान्नं दिवारात्रावाचार्यायाऽऽत्मतुष्टये । ) ; चम. १८ पू. ; सिन्धु. ९७२ पू. ; विपा. ४८७ प्रपावत् ; संकौ. १५६ पूर्वस्या ( पूर्वस्य ) ; बाल. १।१४ पृ. ४८ पू. : पृ. ५७.

आह– वेदान्तरमिति । पूर्वस्याः गायत्र्याः ।

‡चम. १८

(२) एतत् पुनरुपनयनम् । विपा. ४८६

(३) 'निमित्तानन्तरं त्विदम्' इत्युक्त्या च नैमित्तिके निमित्तानन्तर्यस्योचितत्वशान्यायमूलकं 'कालश्च' इति सूत्रम्, निमित्तानन्तर्यासंभवे तु जातेष्टिवदुदगयनादिकालोऽपेक्षणीय एवेति सूचितम् । परिदानं 'कस्य ब्रह्मचार्यसि' इत्यादेः 'परिददामि' इत्यन्तस्य मन्त्रस्योच्चारणम् । 'भणितोऽत्र' इति प्रायश्चित्तार्थे पुनरुपनयन एव गायत्र्या स्थाने एषा ऋग्भवति, न तु तदनन्तरभाविषु ब्रह्मयज्ञादिष्वपि, तत्र पूर्वविहितगायत्रीबाधे मानाभावादिति दर्शयति । † संको. १५६

‡ बाल. चमवत् ।

## कपर्दिकारिकाः

वपनमेखलादण्डभैक्षचर्याव्रतानि वर्ज्यानि

'वपनं मेखलादण्डभैक्षचर्याव्रतानि च ।
निवर्तन्ते द्विजातीनां पुनःसंस्कारकर्मणि ॥

† बाल., कृम. संकोवत् ।

(१) कका. ४।१६.

# वेदव्रतानि

## वेदव्रतविधिः

### आश्वलायनश्रौतसूत्रम्

महाव्रतातिरिक्तानि सर्वाण्यहानि वेदितुरेव ब्रह्मचारिणो मुख्यो व्रताधिकारः, असमर्थस्यातद्विदोऽप्यधिकारः, संवत्सरावमं व्रतचर्या, महानाम्नीव्रतस्य प्राथम्यम्

**[1]एतद्विदं ब्रह्मचारिणमनिराकृतिनं संवत्सरावमं चारयित्वा व्रतमनुयुज्यानुक्रोशिने प्रब्रूयादुत्तरमहः ॥**

(१) यान्येतानि महाव्रतवर्ज्यान्यनुक्रान्तान्यहानि तानि मन्त्रब्राह्मणसूत्राध्ययनेन तदर्थज्ञानेन च विदित्वा तेषामह्नामेकाहाहीनसत्रभावं च यो वेद स एवैतद्विदुच्यते । ब्रह्मचारिग्रहणं यो ब्रह्मचारी विद्यां समाप्य स्नानं कर्तुं न शक्नोति, द्वादश वर्षाण्यध्ययनं कुर्वन्नपि न किंचित् ग्रहीतुं शक्नोति, तमपि ब्रह्मचारिणमनेतद्विदमप्येतानि व्रतानि ग्राहयित्वैतान् वेदभागानध्याप्याऽऽश्रमं स्वसामर्थ्यानुगुणं प्रवेष्टुं शिक्षेतेत्येवमर्थम् । अनिराकृतिनम् अनुत्सृष्टाध्ययनम् । एवंविधं ब्रह्मचारिणं व्रतं ग्राहयित्वा संवत्सरावमं कालं चारयित्वा ततस्तस्मै ब्रह्मचारिणे अनुक्रोशिने आत्मगुणयुक्ताय उत्तरमहः महाव्रतं प्रब्रूयात् प्रथमं ब्रूयादित्यर्थः । अहरधिकारे पुनरहर्ग्रहणस्येदं प्रयोजनम्— तदहर्विधायकं वेदभागमर्थावगमनपर्यन्तमनुष्ठानयोग्यं ग्राहयितव्यमिति ।

गानावृ.

(२) उत्तरमहः महानाम्नीः । ‡प्रपा. २७२

**महानाम्नीरग्रे ॥**

(१) महाव्रतानुवचनात्पूर्वं महानाम्नीभ्यो व्रतादेशनादिश्रवणान्तं कृत्वाऽनन्तरे संवत्सरे महाव्रतं ग्राहयित्वा ततोऽनन्तरे संवत्सरे उपनिषद इति क्रमः । गानावृ.

(२) उत्तरमहरिति वचनात् पूर्वमहरधिकं दर्शितम्, उत्तरशब्दस्य पूर्वापेक्षत्वात् । एवं प्राप्ते इदमाह— महानाम्नीरग्र इति । महानाम्न्यो नाम ऋचः ।

‡प्रपा. २७२

### बौधायनगृह्यसूत्रम्

वेदोपाकरणोत्सर्जनविध्यन्तस्य व्रतोपाकरणोत्सर्जनयोरतिदेशो विशेषविधिश्च, काण्डानुक्रमणम्, प्रतिकाण्डं संवत्सरं व्रतानुष्ठानम्, व्रतगणना, गोदानकालः

**[1]एवमेव काण्डोपाकरणकाण्डसमापनाभ्याम् ॥**

**स एकः काण्डऋषिः ॥**

**तस्य चैवैकस्य काण्डस्याऽऽद्योऽनुवाकः ॥**

**तस्य चैवैकस्य काण्डस्यैतदहरनध्यायः ॥**

**एवं काण्डविसर्गे । एतावदेव नाना नात्रानुवाकः । पौरोडाशिकं याजमानं होतारो हौत्रं पैतृमेध इति सब्राह्मणानि सानुब्राह्मणानि प्राजापत्यानि ॥**

**आध्वर्यवं ग्रहा दाक्षिणानि समिष्टयजूंष्यवभृथयजूंषि वाजपेयः शुक्रियाणि सवा इति सब्राह्मणानि सानुब्राह्मणानि सौम्यानि ॥**

**अग्न्याधेयमग्निहोत्रमग्न्युपस्थानमग्निचयनं सावित्रं नाचिकेतं चातुर्होत्रीयं वैश्वसृजारुणा इति सब्राह्मणानि सानुब्राह्मणान्याग्नेयानि ॥**

**राजसूयः पशुबन्धः इष्टयो नक्षत्रेष्टयो दिवश्येनयोऽपाघाः सात्रायणमुपहोमाः कौकिलीसूक्तान्यौपानुवाक्यं याज्याऽश्वमेधः पुरुषमेधः सौत्रामण्यच्छिद्राणि पशुहौत्रमुपनिषद इति सब्राह्मणानि सानुब्राह्मणानि वैश्वदेवानि ॥**

---

‡ शेषं गानावृवत् ।

(१) आश्वौ. २।२।१४ ; प्रपा. २७१.

‡ शेषं गानावृवत् ।

(१) बौगृ. ३।१।१७–२६.

स्वायंभुवं काण्डं काठके पठितो विधिः स्वयंभूश्चात्र दैवतं सर्वभूतपतिः शुचिरिति ॥

[1]आचार्यप्रसूतः कर्माणि करोतीति विज्ञायते ॥

आचार्यो वै ब्रह्मेति ॥

काण्डेकाण्डे च व्रतचर्या ॥

[2]अथेमानि ब्राह्मणानि सांवत्सरिकैर्व्रतैरध्येयानि भवन्ति– होतारः शुक्रियाण्युपनिषदो गोदानं संमितमिति ॥

[3]षोडशे वर्षे गोदानम् ॥

## आश्वलायनगृह्यसूत्रम्

गोदानकालः

[4]षोडशे वर्षे ॥

तृतीयस्यापवादः । ¶ गानावृ.

## कौषीतकिगृह्यसूत्रम्

गोदानकालः, शाक्वरव्रातिकौपनिषदानि संवत्सरं संवत्सरमनुष्ठेयानि

[5]षोडशे वर्षेऽष्टादशे वा ॥

[6]शाक्वरं तु संवत्सरम् ॥

व्रातिकमौपनिषदं च ॥

## आपस्तम्बगृह्यसूत्रम्

गोदानकालः

[7]एवं गोदानमन्यस्मिन्नपि नक्षत्रे षोडशे वर्षे ॥

तत्र तृतीयवर्षस्यापवादः षोडशे वर्षे इति ।

$ अनाकुला.

## हिरण्यकेशिगृह्यसूत्रम्

गोदानकालः

[1]एवं विहितं षोडशे वर्षे गोदानकर्म ॥

अथाऽऽचक्षते– एवमिति । यथा चूडाकर्मैवं विहितमुपनीतस्य षोडशे वर्षे गोदानकर्म स्यात् ।

¶ मातृद.

## मानवगृह्यसूत्रम्

गोदानकालः

[2]एतेन तु कल्पेन षोडशे वर्षे गोदानमग्निं वाऽध्येष्यमाणस्य 'अग्निर्गोदानिको मैत्रायणिः' इति श्रुतिः ॥

एतेनैव तु कल्पेन । तुशब्दो वाक्यपरिपूरणः । एतेन चूडाकरणकल्पेन विधानेन षोडशे वर्षे जन्मप्रभृति गोदानाख्यः संस्कारः । अत्रायं जन्मप्रभृति पवित्राग्निहोमान्ते । 'उष्णेन वायो' इत्यादि तिलपिशलदानं च । अग्निं वा अग्निं युञ्जानकस्थानं यदा अध्येष्यमाणस्याऽऽगच्छेत् तदा वा । अग्निप्रवर्तनात्प्रागूर्ध्वमेव वेत्यनियमः । अत्र प्रमाणमाह– 'अग्निगोदानिको मैत्रायणिः' इति श्रुतिः । गोदाने भवो गोदानिकः । गोदानप्रयोजनो वा । अष्टाभा.

## भारद्वाजगृह्यसूत्रम्

गोदानकालः

[3]अथास्य षोडशवर्षस्य गोदानं कुर्वन्ति ॥

## काठकगृह्यसूत्रम्

गोदानकालः

[4]षोडशे वर्षे गोदानमग्नौ वा समाते ॥

(१) अथ गोदानसंज्ञकं व्रतमुच्यते, यस्य केशान्तसमावर्तनशब्दावन्यौ पर्यायौ । जन्मनः प्रभृति षोडशे

---

¶ अना., प्रपा., संप्र. गानावृवत् ।

$ ताद. अनाकुलागतम् ।

(१) बौगृ. ३।२।१–३.

(२) बौगृ. ३।२।४; मुक्ता. ११७ (चत्वारि वेदव्रतानि होतारः शुक्रियाण्युपनिषद आरण्यानि); आन. १६३ मुक्तावत्.

(३) बौगृ. ३।२।५२; बाल. १।१२ पृ. ३६.

(४) आगृ. १।१८।२; प्रपा. २८३; ध्रप्र. ४४; संप्र. ५५९. (५) कौगृ. १।२८।२०.

(६) कौगृ. २।११।११–१२.

(७) आपगृ. १६।१२; मुक्ता. ११९.

¶ संर. मातृदवत् ।

(१) हिगृ. २०।१।५३; संर. ३५२.

(२) मागृ. १।२१।१३.

(३) मागृ. १।१०; मुक्ता. ११९ (षोडशे वर्षेऽस्य गोदानं कुर्वन्ति).  (४) कागृ. ४४।१.

वर्षे वर्तमाने ब्रह्मचारिणा गोदानसंज्ञकं व्रतं कर्तव्यम्, यस्त्वरितं दारस्वीकारार्थी। अस्मादूर्ध्वं स्नात्वा दारकर्मोच्यते। यस्तु सर्वकालं वेदमधीत्य विवाहं चिकीर्षति तस्योपनयनादारभ्य षोडशे वर्षे गोदानम्। 'त्रिवेदां ब्रष्टाचत्वारिंशद्वर्षाणि ब्रह्मचर्यं चरणीयम्' इति पक्षः। तदेकवेदग्रहणे षोडश संवत्सरा भवन्ति त्रिभागेन। यस्य स्वापरकालेन षोडशे वर्षे भवत्युपनयनं तस्याग्नौ समाप्ते गोदानव्रतम्। अग्न्यध्ययने समाप्त इत्यर्थः। योऽपि वेदैकदेशमधीत्य सिस्नासति तस्याप्येष पक्षोऽग्नौ समाप्त इति। देव.

(२) षोडशे वर्षे गोदानं नाम संस्कारः। अग्नौ वा समाप्ते। बर्हिष्टके हिरण्यगर्भान्ते पठित इत्यर्थः। नैतद्वेदव्रतम्, केशवापनमेवास्मिन्काले विधीयते। गोदानशब्देन च शिरसश्चत्वारो भागा उच्यन्ते गृह्यान्तरेषु। तथा च दक्षिणे गोदान एतत्कर्मेति। गवि भूमौ दीयत इति गोदानं स्वपतः शिरोभागम्। आवि.

## वाराहगृह्यसूत्रम्

गोदानकालः

[1]षोडशवर्षस्य गोदानम्। अग्निं वाऽध्येष्यमाणस्य। अग्निगोदानिको मैत्रायणीयः॥

## आग्निवेश्यगृह्यसूत्रम्

काण्डानुक्रमणम्, गोदानकालः

[2]अथातः काण्डान्युच्यन्ते—पौरोडाशिकं याजमानं होतारं हौत्रं पितृमेधमिति सब्राह्मणानि सानुब्राह्मणानि प्राजापत्यानि। आध्वर्यवं ग्रहदाक्षिणानि समिष्टयजूंष्यवभृथयजूंषि वाजपेयः शुक्रियाणि सवा इति सब्राह्मणानि सानुब्राह्मणानि सौम्यानि। अग्न्याधेयं पुनराधेयमग्निहोत्रमग्न्युपस्थानं सावित्रं नाचिकेतं चातुर्होत्रीयं वैश्वसृजमारुणकेतुकमाग्निकमिति सब्राह्मणानि सानुब्राह्मणान्याग्नेयानि। राजसूयं पशुबन्धा इष्टयो नक्षत्रेष्टयो वा दिवः श्ये(? दिवश्ये)-नयोऽपाघाः साम्रायण उपहोमाः (कौकिली)-सूक्तान्यौपानुवाक्यायाज्याश्वमेधपुरुषमेधसौत्रामण्यच्छिद्राणि पशुहौत्रमुपनिषद इति सब्राह्मणानि सानुब्राह्मणानि वैश्वदेवानि। स्वायंभुवं स्वाकूकाकूके(? काण्डं काठके) पठितो विधिरिति स्वयंभूश्चात्र दैवतं सर्वभूतपतिरिति॥ [2]षोडशे वर्षे गोदानकर्म॥

## पारस्करगृह्यसूत्रम्

गोदानकालः, व्रतगणना, प्रतिव्रतं संवत्सरं व्रतानुष्ठानम्

[1]षोडशवर्षस्य केशान्तः॥

(१) कर्तव्य इति शेषः। ¶ कभा.

(२) तुल्यत्वात्तत्कर्मणः केशान्तोऽप्यत्रोच्यते। स च नियतकाल एव विवाहिताविवाहितयोः, 'संवत्सरं ब्रह्मचर्यम्' इत्यादि वक्ष्यमाणत्वात्। जभा.

(३) षोडश वर्षाण्यतीतानि यस्यासौ षोडशवर्षः, तस्य सप्तदशे वर्षे केशान्तः केशान्ताख्यः संस्कारो भवति। § हभा.

[3]ब्राह्मणक्षत्रियविशां पञ्च सांवत्सरिकाणि वेदव्रतानि भवन्ति— आग्नेयं शुक्रियमौपनिषदं शौलभं गोदानमिति॥

## गोभिलगृह्यसूत्रम्

गोदानकालः, आदित्यव्रतस्य व्यवस्थितविकल्पः, महानाम्नीव्रतानुष्ठानकालविकल्पः, महानाम्नीव्रतप्रशंसा

[4]अथातः षोडशे वर्षे गोदानम्॥

---

(१) वागृ. ९.

(२) आग्निगृ. १।२।२.

¶ विभा. कभावत्।

§ गभा. हभावत् जभानुवादश्च।

(१) आग्निगृ. २।२।५.

(२) पागृ. २।१।३.

(३) पागृ. २।७ (चौखम्बामुद्रितम्).

(४) गोगृ. ३।१।१.

[1]आदित्यव्रतं तु न चरन्त्येके ॥

[2]द्वादश महानाम्निकाः संवत्सराः ॥

नव षट् त्रय इति विकल्पः ॥

संवत्सरमप्येके ॥

†व्रतं तु भूयः ॥

पूर्वैश्चेच्छ्रुता महानाम्न्यः ॥

अथापि रौरुकिब्राह्मणं भवति ॥

'कुमारान् ह स्म वै मातरः पाययमाना आहुः— ॥

शाक्वरीणां पुत्रका व्रतं पारयिष्णवो भवत ' इति ॥

## खादिरगृह्यसूत्रम्

आदित्यव्रते व्यवस्थितविकल्पः मतभेदो वा, महानाम्नीव्रतानुष्ठानकालविकल्पाः

[3]नाऽऽदित्यव्रतमेकेषाम् ॥

एकेषां शाखिनाम् आदित्यव्रतं नास्ति येषां शुक्रियपाठो न विद्यते इत्यर्थः। अपरा व्याख्या— एकेषामाचार्याणां मतेन सर्वेषामेव शाखिनामादित्यव्रतं नास्ति । रुद्रभा.

संवत्सरमेकेषां पूर्वैः श्रुताश्चेत् ॥

यस्य पित्रादिभिस्त्र्यवरैः शक्र्योऽधीताः स संवत्सरं चरेदित्येके मन्यन्ते । रुद्रभा.

शाक्वरीणां द्वादश नव षट् त्रय इति विकल्पाः ॥

संवत्सरा इति वर्तते । विकल्पा इति विविधा एते कल्पा न तुल्या इत्यर्थः । अनेन कालभूयस्तया फलभूयस्त्वं द्योत्यते । रुद्रभा.

† 'तु अपि व्रतम् एकवार्षिकमेवेदं भूयः बहु मन्येत, यदि चेत् पूर्वैः व्रतप्राक्कालैः महानाम्न्यः श्रुताः अनुशीलिताः स्युः ' इति सत्यव्रतसामश्रमिव्याख्यानम् ।

(१) गोगृ. ३।१।३.

(२) गोगृ. ३।२।१–८.

(३) खागृ. २।५।१८, २२, २८.

## जैमिनिगृह्यसूत्रम्

आदित्यव्रतानुष्ठानकालः, महानाम्नीव्रतानुष्ठानकालविकल्पाः, गोदानकालः

[1]आदित्यव्रातिकः संवत्सरः ॥

आदित्यव्रतानि शुक्रियसामानि । उक्तकालमध्ये तदध्ययनार्थः संवत्सरो भवति । इदं तद्व्रतविधानार्थम् । श्रीव्या.

द्वादश महानाम्निकाः संवत्सराः । नव षट् त्रय इति विकल्पाः ॥

महानाम्न्य इति ' विदा मघवन् ' इति शक्करीत्रयं सप्ताम । तदध्ययनार्था द्वादश संवत्सरा नव षड् वा त्रयो वा संवत्सरा इति विविधास्तत्र कल्पा भवन्ति । श्रीव्या.

संवत्सरमित्येके पित्रा चेच्छ्रुता महानाम्न्यः ॥

श्रुताः अध्यापिताः भविष्यन्ति चेदित्यर्थः । श्रीव्या.

षोडशे गोदानकरणम् । तत्केशान्तकरणमित्याचक्षते ॥

गोदानमिति । केशान्तकरणं तत्संस्कारः । तदस्मिन्पाकयज्ञे इति । तद्गोदानकरणमिदमपि वृणोति अत एवोपनयनाद्येतावत्कालं केशा धार्या इति ज्ञायते । ब्रह्मचर्यान्ते एतत्कर्म । पञ्चमे चोपनयने तदादि द्वादश वर्षाणि ब्रह्मचर्ये तन्मध्ये चानुकल्पाश्रयेण महानाम्नी समाप्ता, मेधाविना च अध्येतव्यजातस्य सर्वस्याप्यध्ययने चार्थादिदं षोडशे भविष्यतीति मुख्याभिप्रायेणेदं षोडश इत्युक्तम् । पक्षान्तरेण तदा ग्वा( ? तदर्वाग्वा )ऽपरं वा यथाकथंचित् ब्रह्मचर्यावसान एवेदं कुर्यात् । श्रीव्या.

## वैखानसगृह्यसूत्रम्

व्रतविशिष्टवेदाध्ययनस्य नित्यत्वम्

[2]प्राजापत्यादिवेदव्रतान्याचरन् वेदानधीयीत । अनधीयानः सर्वकर्मबहिष्कार्यो भवति । अशक्तोऽपि यत्किंचिच्छाखामधीयीत ॥

(१) जैगृ. १।१६, १७, १८. (२) वैगृ. ६।११.

## आपस्तम्बः

व्रतविधिः , व्रतगणना, व्रतक्रमः

[1]छन्दसां साधनार्थं हि व्रतानीह चरेद्बुधः ॥
प्राजापत्यं सौम्यमाग्नेयं वैश्वदेवं च ॥
[2]सौम्यव्रतं प्रकुर्वीत यथावच्छुक्रियव्रतम् ।
प्राजापत्यादि चत्वारि भवेयुस्तद्दिनेऽपि वा ॥
[3]प्राजापत्यव्रतं कृत्वा तदधीत्य विसृज्य च ॥
सौम्यव्रतमुपाकृत्य विसृज्याऽऽग्नेयमाचरेत् ।
उत्सृज्य वैश्वदेवाख्यमुपक्रम्य समुत्सृजेत् ॥

## विष्णुः

उपनयनोक्ताजिनादीनां व्रतेष्वतिदेशः

[4]यद्यस्य विहितं चर्म यत्सूत्रं या च मेखला ।
यो दण्डो यच्च वसनं तत्तदस्य व्रतेष्वपि ॥

(१) व्रतेषु औपनिषदादिषु । ब्रक. २३६

(२) उपनयनधर्मातिदेशमाह— यानि ब्राह्मणादीनां चर्मयज्ञोपवीतमेखलादण्डवस्त्राण्युपनयनेऽभिहितानि तान्येव तेषां व्रतेषु महानाम्न्यादिषु भवन्ति, तेषामपि वेदाध्ययनाङ्गोपनयनवत् महानाम्न्य( ? म्न्याद्य )ध्ययनाङ्गोपनयनत्वात् । वै.

## मनुः

गोदानकालः , उपनयनोक्ताजिनादीनां व्रतेष्वतिदेशः

[5]केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते ।
राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः ॥

(१) केशान्तो नाम संस्कारः । स गर्भषोडशे वर्षे ब्राह्मणस्य कर्तव्यः । तस्य च स्वरूपपरिज्ञाने गृह्यमेव शरणम् । द्वे वर्षेऽधिके यस्य द्वाविंशस्य तस्मिन् द्व्यधिके द्वाविंशे । अथवा कालमात्रमन्यपदार्थः । ततः द्वाविंशाद्वर्षात् द्व्यधिके काले वैश्यस्येति । द्विशब्दस्य च वर्षाण्येव संख्येयानि । प्रकृतानि हि तानि । $ मेधा.

(२) 'सर्वान्केशान्वापयन्ते' इति क्वचित् गृह्ये विकल्पेन गोदानकर्मणि सर्वकेशवपनविधेस्तेनोपलक्षणेन गोदानकर्म केशान्त उच्यते केशानामन्तोऽत्रेति व्युत्पत्त्या । मवि.

(३) केशान्ताख्यो गृह्योक्तसंस्कारः 'गर्भादिः संख्या वर्षाणाम्' इति बौधायनवचनाद्गर्भषोडशे वर्षे ब्राह्मणस्य, क्षत्रियस्य गर्भद्वाविंशे, वैश्यस्य ततो द्व्यधिके गर्भचतुर्विंशे कर्तव्यः । ¶ ममु.

(४) षोडशे जन्मन आरभ्य । ततो द्व्यधिके चतुर्विंशे । नन्द.

[6]यद्यस्य विहितं चर्म यत्सूत्रं या च मेखला ।
यो दण्डो यच्च वसनं तत्तदस्य व्रतेष्वपि ॥

(१) गृह्यकारैर्व्रतनामधेयकानि कर्माण्युपदिष्टानि— 'संवत्सरं वेदं भागं वा किंचिन्निगृह्णत इयं व्रतचर्या यो यमनियमसमूहः' । तत्र पूर्वव्रतसमाप्तौ व्रतान्तरारम्भे उपनयने ये विधयस्तादृश एव व्रतादेशेषु । अथ प्रागुपात्तानां का प्रतिपत्तिः ? अप्सु प्रासनम् । ननु च तदुक्तं प्रागुपात्तानाम् । विनष्टानां का प्रतिपत्तिः ? विनाशे शास्त्रनोदितं चैषां कार्यमन्योपादानाच्च तेषां निवृत्तिः । यच्चर्म यस्य ब्रह्मचारिणो विहितम् , यथा 'कार्ष्णं ब्राह्मणस्य रौरवं क्षत्रियस्य' इति गृह्ये । एवं दण्डादिष्वपि द्रष्टव्यम् । तस्य व्रतेष्वपि । प्रकृतत्वात् व्रतशब्दो व्रतादेशे वर्तते । मेधा.

---

(१) मुक्ता. ११७ ; आन. १६३.

(२) मुक्ता. ११७ ; आन. १६३ सौम्यव्र ( सौम्यं व्र ) क्रियव्र ( क्रियं व्र ).

(३) मुक्ता. ११७ ; आन. १६३ पाकृत्य (पक्रम्य).

(४) विस्मृ. २७।२८ ; ब्रक. २३६ चर्म ( कर्म ) वसनं तत्तद ( सवनं तत्तत्त ) मनुविष्णू .

(५) मस्मृ. २।६५ ; अप. १।३६ ; ब्रक. २६४ ; स्मृच. ६२ ; चका. ७७८ ; पमा. ४५७ ; संसौ. १५१ ; वीमि. १।३६ ; संम. ४२ ; बाल. १।३६ ; संग. ७३१ ; पुम. ४४४ ; कृम. ९८६ ; संर. ३५३.

$ गोरा., संम., संर., भाच. मेधागतम्।

¶ मच. ममुगतम्।

(१) मस्मृ. २।१७४ ; मेधा. तत्तद ( तत्तत्त) ; अप. १।२९ ; ब्रक. २३६ चर्म ( कर्म ) वसनं तत्तद ( सवनं तत्तत्त ) मनुविष्णू ; प्रपा. २२७ चर्म (कर्म) पराशरः ; संम. ४२ सर्वं प्रपावत् .

(२) यस्य ब्रह्मचारिणो यज्जातीयानि चर्मोपवीतमेखलादण्डवस्त्राण्युपनयने उक्तानि तज्जातीयान्येव, नान्यानि, प्रतिव्रतमुपादेयानि। पूर्वोपात्तानां धारणोपदेशात् पुनस्तद्विधानमनर्थकमिति तज्जातीयान्यन्यानीति प्रतीयते। पूर्वेषां च कार्यानुपयोगाद्विनष्टतुल्यत्वे सति 'अप्सु प्रास्य' इति प्रतिपत्तिः। § गोरा.

(३) व्रतानि सावित्र्यादीनि। अप. १।२८

## याज्ञवल्क्यः

गोदानकालः

[१]...केशान्तश्चैव षोडशे ॥

(१) केशान्तस्तु ‡सर्वपक्षेषु षोडश एवाब्दे कर्तव्यः। चशब्दस्तुशब्दस्यार्थे। एवकारस्योत्कर्षः। केशान्ताख्यश्च संस्कारश्चूडाकरणादीषद्भिन्नः। स गृह्यादवगन्तव्यः। यदा पुनः प्राक् षोडशाब्दात् कथंचिन्नोपनीतस्तदा कालप्राप्ताव(प्य)नुपनीतस्य तदभावः, तदा चासमावृत्तस्यापि केशान्तप्रवृत्तिः। तस्मिंस्तु काल उपनयनं कार्यम्, प्राधान्यात्। केशान्तस्य गुणत्वात् कालबाधः। किं पुनर्गर्भाष्टमादिकालादूर्ध्वमप्युपनयनं प्रवर्तेत? बाढं प्रवर्तते। गुणत्वात् कालस्य यथोक्ताभावेऽपि प्रधानस्य प्रवृत्तिरविरुद्धा। विश्व.

(२) केशान्तः पुनर्गोदानाख्यं कर्म गर्भादारभ्य षोडशे वर्षे ब्राह्मणस्य कार्यम्। एतच्च द्वादशवार्षिके वेदव्रते बोद्धव्यम्, इतरस्मिन्पक्षे यथासंभवं द्रष्टव्यम्। राजन्यवैश्ययोस्तूपनयनकालवद्द्वाविंशे चतुर्विंशे वा द्रष्टव्यम्। ¶ मिता.

(३) षोडशे वर्षे ब्राह्मणस्य केशान्तो नाम संस्कारः कर्तव्यः। क्षत्रियवैश्ययोस्तु मनूक्तः– 'केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते। राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः ॥' (मस्मृ. २।६५) इति। जन्मादिरेषा वर्षसंख्या। गर्भादिश्चेद्विवक्षिता स्यादूर्मषोडश इत्यवक्ष्यत्, यथा 'गर्भाष्टमे' इति। केवलसंख्योपादाने तु जन्मैवावधिः, यथा 'अष्टमे चाब्दे' इति। अप.

## व्यासः

व्रतान्यकृत्वा वेदाध्ययने प्रायश्चित्तपूर्वकं व्रतानुष्ठानम्

[१]वेदव्रतानि कृत्वैव तथैवाऽऽरण्यकव्रतम्।
स्वशाखाविहितं सर्वं कृत्वा वेदमुपक्रमेत् ॥
[२]अकृत्वेमानि सर्वाणि वेदो ह्यभ्यस्यते यदि।
प्रायश्चित्तानि कृत्वैव व्रतान्यपि तथा क्रमात् ॥

## प्रचेताः

गोदानकालः

[३]गोदानं षोडशे वर्षे अर्वाग्वा क(? के)श्चि-
दिष्यते।
यस्मिन् कस्मिन् वासरे(? वत्सरे) वा गोदानं
स्नानतः पुरा ॥

## गर्गः

व्रतविधिः, गोदानकालः

[४]व्रतं कुर्यात्तु सावित्रं विधिनाऽऽरण्यकव्रतम्।
वेदव्रतानि कुर्वीत ततो वेदान् समभ्यसेत् ॥

---

§ ममु., नन्द., भाच. गोरागतम्।

‡ प्रतिवेदं द्वादशाब्दानि ब्रह्मचर्यम्, पञ्चाब्दानि वा, ग्रहणान्तिकं वेति त्रिष्वपि पक्षेष्वित्यर्थः।

(१) यास्मृ. १।३६; विश्व.; मिता.; अप.; ब्रक. २६३; स्मृच. ६२; चका. ७७८; पमा. ४५७ न्तश्चैव (न्तं चैव); प्रपा. २४३ पमावत्; संसौ. १५१ पमावत्; वीमि.; संप्र. ५५८; मुक्ता. ११९; विपा. ५०३; पुम. ४४४; संर. ३५३.

¶ स्मृच., चका., पमा., दीक., प्रपा., मुक्ता., विपा. मितागतम्। वीमि. मितावत् केचिदित्युक्त्वा अपरार्कानुवादश्च। संर. मितानुवादः।

(१) प्रपा. २८९; संप्र. ५६१ त्वैव (त्वैवं).

(२) प्रपा. २८९ क्रमात् (क्रमेत्); संप्र. ५६१–५६२.

(३) मुक्ता. ११९.

(४) मुक्ता. ११७; आन. १६३, १६४ कव्रतम्। वेद (कं व्रतम्। दश) वेदान् (वेदं).

अत्र व्रतप्रकरणे 'व्रतं कुर्या...... सेत् ॥' इति गर्गवचने दश व्रतान्युक्तानि, तदुपक्रमोत्सर्जनानामपि व्रतत्वमङ्गीकृत्योक्तम् । आन. १६४

[1]'जन्मनः षोडशे वर्षे पूर्णमास्यामुदग्रवौ ।
चौलोक्तविधि( ? तिथि )वारेषु गोदानाख्यव्रतं चरेत् ॥

[2]'यदि चेत्षोडशादर्वाक् वेदपारंगतो भवेत् ।
गौदानिकव्रतं कृत्वा समावर्तनमाचरेत् ॥

## आश्वलायनः

शाखाभेदेन व्रतानां क्रमभेदः कालभेदश्च,
प्रतिव्रतं संवत्सरं व्रतानुष्ठानम्

[3]'प्रथमं स्यान्महानाम्नी द्वितीयं स्यान्महाव्रतम् ।
तृतीयं स्यादुपनिषद्गोदानाख्यमतः परम् ॥

[4]'क्रिया व्रतानां कार्याः स्युर्यथा प्रोक्तं भविष्यति ।
वृत्तिकारादिभिः पश्चाद्गृह्यस्य तु मम द्विजैः ॥

[5]'गोदानं षोडशे वर्षे कार्यत्वात्प्रागुदीरितम् ।
व्रयं त्रयोदशाब्दादि प्रतिवर्षं चरेद्द्विजः ॥
हंसाः कौषीतकाः कण्वाः शाट्या धूम्रायणा वृषाः ।
षण्णां गौदानिकी पूर्वमेतेषामुदिता क्रिया ॥
ते तु गौदानिकीं कृत्वा श्रावयित्वा स्वयं हि ताः( ? स्वसंहिताः ) ।
समापयति( ? न्ति ) हुत्वा च ब्रह्मौदनचरुं द्विजाः ॥
ततः सप्तदशाब्दादि चरन्त्येव व्रतत्रयान्-( ? यम् ) ।
महानाम्न्यादिकान्( ? कं ) सम्यग्विंशे स्नानं चरन्ति ते ॥

## लघ्वाश्वलायनः

गोदानकालः

[1]'गोदानं षोडशे वर्षे कुर्याच्चतुदगायने ।
केचिद्विवाहकाले च शुभे मासि वदन्ति हि ॥

## दत्तात्रेयः

व्रतविधिः

[2]'वेदव्रतानि चत्वारि कुर्यात्कालस्तु चौलवत् ॥

## स्मृत्यन्तरम्

गोदानकालः

[3]'गोदानं चौलवत्कार्यं षोडशेऽब्दे तदुच्यते ॥

## अनिर्दिष्टकर्तृकवचने

गोदानकालः

[4]'केशान्तं षोडशे वर्षे कुर्याच्चौलोक्तभादिके ॥
[5]'चौलोक्तसमये कार्यं केशान्तं षोडशाब्दके ॥

## स्मृतिसंग्रहे

गोदानस्य कालः क्रमश्च

[6]'जाताधिकाराद्गोदानं जन्माद्यब्दे तु षोडशे ।
चौलेन च समाख्यातं विधान्ते तच्च वै भवेत् ॥
[7]'गौदानं नाम यत्प्रोक्तं चतुर्थं व्रतमस्य तु ॥
महानाम्न्यादिभिः सार्धं पौर्वापर्यं तु विद्यते ॥

---

(१) मुक्ता. ११९.

(२) मुक्ता. ११९ : १२० गौदा ( गोदा ) उत्त. ; आन. १६४ उत्त.

(३) आश्वस्मृ. ११।१९५ ; प्रपा. २७० ख्यमतः ( ख्यं ततः ) ; संसौ. १५१ स्यान्म ( च म ) यं स्यादु ( यमस्यो ) शेषं प्रपावत् ; संप्र. ५५८ प्रपावत् ; संम. ४२ प्रपावत् ; क्रम. ९८६ प्रपावत् , स्मृतिः .

(४) आश्वस्मृ. ११।१९६ ; प्रपा. २७० द्वितीयचरणे ( यथाप्रोक्तं महाद्विजैः ) पू. ; संप्र. ५५८ द्वितीयचरणे ( यथाप्रोक्तं मया द्विजैः ) पू.

(५) आश्वस्मृ. ११।२५८, २८१–२८३.

---

(१) लघ्वाश्वस्मृ. १४।१.

(२) मुक्ता. ११७.

(३) संग. ७३२.

(४) ज्योनि. १२८.

(५) संव. १०५.

(६) प्रपा. २८३–२८४ ; संग. ७३१ पू. , मुहूर्तरत्ने.

(७) प्रपा. २८४.

## शाकलकारिकाः

व्रतविधिः

[1]नियमेन ब्रह्मचर्यमब्दं वाऽपि समाचरेत् ।
महानाम्न्यादिकं कुर्याद्यथाचारानुसारतः ॥
[2]गोदानं स्नातकं चैव समावर्तनकं तथा ।
तत्तत्कुर्याद्यथाकाले शिष्टाचारानुसारतः ॥

## शौनककारिकाः

व्रतक्रमः, व्रतानां वैकल्पिकः कालः, व्रताभावे वेदाध्ययनानधिकारः

[3]तेषामाद्यं महानाम्नीश्रवणं तदनन्तरम् ।
महाव्रतं ततः पश्चाद्भवेदुपनिषद्व्रतम् ।
ततो गोदानमित्येवं कार्याण्येतान्यनुक्रमात् ॥
[4]गोदानं नाम यत्प्रोक्तं चतुर्थं व्रतमस्य तु ।
महानाम्न्यादिभिः सार्धं पौर्वापर्यं तु विद्यते ॥

(१) शाका. ६५ पृ. ७.
(२) शाका. ७९ पृ. ९.
(३) शौका. २-३ पृ. ४८; प्रपा. २७५; संप्र. ५५९.
(४) शौका. १ पृ. ५१; प्रपा. २८३ गोदा ( गौदा ); संप्र. ५६०.

[1]व्रतानि विधिवत् कृत्वा स्वशाखाध्ययनं चरेत् ।
अकृत्वाऽभ्यस्यते येन स पापी विधिघातकः ॥
[2]गोदानादीनि कर्माणि विवाहात्पूर्ववासरे ।
एकतन्त्रेण वा कुर्यादिति यज्ञविदो विदुः ॥

## कुमारिलकारिकाः

व्रतविधिः, गोदानकालः

[3]महानाम्न्यादि कर्तव्यं तत्तत्काले व्रतत्रयम् ॥
[4]गोदानं चौलवत्कार्यं षोडशेऽब्दे तदुच्यते ॥

## रेणुकारिकाः

गोदानकालः

[5]केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते ।
राजन्यबन्धोर्द्वाविंशे वैश्यस्य ह्यधिके ततः ॥

(१) शौका. ३५ पृ. ५४; प्रपा. २८९; संप्र. ५६१; बम. ६५; सिन्धु. ९८६ विधिवत् (विधिना); संग. ७३३.
(२) ब्रप्र. ४४.
(३) कुका. १।१४।१; प्रपा. २७०.
(४) कुका. १।१६।१; प्रपा. २८३.
(५) रेका. १ पृ. ४२; गभा. १८९ ह्यधिके ( ह्यधिके ); संग. ६०८ ह्यधिके ( त्वधिके ).

# वेदव्रतमुहूर्तः

## बौधायनश्रौतसूत्रम्

व्रतेष्वयनपक्षनक्षत्राणि

*[1]उदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रे... ॥

## आश्वलायनश्रौतसूत्रम्

व्रतोपाकरणे अयनपक्षौ, महानाम्न्याद्यध्ययने मासाः

[2]उदगयने पूर्वपक्षे.... ॥

[3]फाल्गुनाद्या श्रवणाया अनधीतपूर्वाणा-मध्यायः ॥

एष महानाम्न्यादीनामध्ययनकाल उच्यते । श्रवण-मात्रमेव कृत्वा पूर्वमनधीतवन्तो ये तेषामयं कालः । फाल्गुनमासमारभ्य (आ) श्रावण्याः पौर्णमास्या यः कालः स तेषामध्ययनकालः । ‡ गानावृ.

[4]तैष्याद्यधीतपूर्वाणाम् ॥

येऽधीतपूर्वास्तेऽस्मिन्कालेऽधीयीरन् । श्रावणी पौर्ण-मासी परावधिस्तैषी पौर्णमासी पूर्वावधिर्यस्य कालस्य स काल इति । ‡ गानावृ.

## आपस्तम्बश्रौतसूत्रम्

व्रतेषु अयनपक्षतिथिनक्षत्राणि

[5]पर्वण्युदगयन आपूर्यमाणपक्षस्य वा पुण्ये नक्षत्रे... ॥

उदगयने यत्पर्व पुण्यं नक्षत्रं वा अस्यापराह्णे क्रियते । रुद्रवृ.

## सत्याषाढश्रौतसूत्रम्

अवान्तरदीक्षायामयनपक्षनक्षत्रदिनभागाः

[1]उदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रे-ऽपराह्णे... ॥

## मानवश्रौतसूत्रम्

व्रतेषु अयनपक्षतिथिनक्षत्राणि

[2]उदगयने ज्यौत्स्ने पुण्ये नक्षत्रेऽन्यत्र नवम्याः ...॥

## भारद्वाजश्रौतसूत्रम्

शुक्रियव्रते अयनपक्षनक्षत्राण्यपराह्णश्च

[3]पर्वण्युदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रे-ऽपराह्णे ॥

## आश्वलायनगृह्यसूत्रम्

गोदाने अयनपक्षनक्षत्राणि

[4]§ उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः ॥

## कौषीतकिगृह्यसूत्रम्

शुक्रियव्रते अयनपक्षतिथिनक्षत्राणि

[5]उदगयने शुक्लपक्षे ॥

चतुर्दशीं परिहाप्याष्टमीं च ॥

आद्योत्तमे चैके ॥

---

* यद्यप्ययं मुहूर्तः शुक्रियव्रतारम्भे उक्तस्तथापि व्रता-न्तरेषु मुहूर्तानुक्तेः प्रथमे होतृव्रते 'प्रधानकालेषु' इत्य-स्योक्तानुकीर्तनत्वप्रतीतेश्च सर्वव्रतसाधारणोऽयं मुहूर्त इत्युपगन्तुं युज्यते ।

‡ प्रपा. गानावृवत् ।

(१) बौश्रौ. ९।१९.

(२) आश्रौ. २।२।१४ ; प्रपा. २७१.

(३) आश्रौ. २।२।१४ ; प्रपा. २७१ द्या श्रवणाया (द्याः श्रावणान्ता).

(४) आश्रौ. २।२।१४ ; प्रपा. २७२.

(५) आपश्रौ. १५।६.

§ अस्य व्याख्यानं विवाहज्यौतिषप्रकरणे (सं. का. पृ. ८७६, ८८७, ८९६–८९७) द्रष्टव्यम् ।

(१) सश्रौ. २४।८।२.

(२) माश्रौ. ४।७.

(३) भाश्रौ. ११।२१।२.

(४) आगृ. १।४।१.

(५) कौगृ. २।११।४, ७–९.

यां वाऽन्यां अप्रशस्तां मन्येत तस्यां शुक्रिये ब्रह्मचर्यमादिशेत् ॥

## आपस्तम्बगृह्यसूत्रम्

गोदाने नक्षत्रम्

[1]एवं गोदानमन्यस्मिन्नपि नक्षत्रे... ॥

( १ ) अन्यस्मिन्नपि नक्षत्रे पुण्याह एव । पुनर्वसुनियमस्यापवादः । अनाकुला.

( २ ) तत्रान्यस्मिन्नपि नक्षत्रे रोहिण्यादौ । ताद.

## भारद्वाजगृह्यसूत्रम्

व्रतेषु अयनपक्षतिथिनक्षत्राणि शुक्रियेऽपराह्णश्च

[2]पर्वण्युदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रे...॥

[3]पर्वण्युदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रेऽपराह्णे.... ॥

## काठकगृह्यसूत्रम्

व्रतेषु पक्षतिथिनक्षत्राणि

[4]शुद्धपक्षस्य पुण्याहे पर्वणि वा... ॥

शुद्धापेक्षो(? शुद्धपक्षो )ऽत्रोपक्रमकालः । आवि.

## आग्निवेश्यगृह्यसूत्रम्

व्रतेषु अयनपक्षनक्षत्राणि

[5]उदगयनापूर्यमाणपक्षे पुण्ये नक्षत्रे... ॥

## वैखानसगृह्यसूत्रम्

व्रतेषु नक्षत्राणि

[6]चतुर्थे पञ्चमे सप्तमे वा पुण्ये पुंनाम्नि नक्षत्रे ॥

(१) आपगृ. १६।१२ ; मुक्ता. ११९.

(२) भागृ. ३।४ ; मुक्ता. ११७ पुण्ये न (पुण्यन).

(३) भागृ. ३।६.

(४) कागृ. ४३।४.

(५) आग्निगृ. १।२।३.

(६) वैगृ. २।९.

## मनुः

गोदाने दक्षिणायननिषेधः

[1]गोदानं स्नातकं चैव समावर्तनकं तथा ।
चौलोपनयने चैव न कुर्याद्दक्षिणायने ॥

## मरीचिः

गोदाने आपदि दक्षिणायनानुमतिः

[2]गोदानासंस्कृतस्येह विवाहश्चेदुपस्थितः ।
याम्यायनेऽपि कुर्वीत गोदानं स्नानकं च वै ॥

आवश्यके अपवादमाह मरीचिः— गोदानेति । चकारात्समावर्तनम् । षोडशवर्षे नियतकाल एव । अतो विवाहिताविवाहितयोर्भवतीति जयरामः । व्रतविसर्गात्पूर्वे कालापकर्षं कृत्वेति प्रयोगरत्नकारः । संग. ७३१

## भरद्वाजः

व्रतेषु अयनमासपक्षतिथयः पूर्वाह्णश्च

[3]उत्तरायण आपूर्यमाणपक्षे च पर्वणि ।
वेदव्रतानि चत्वारि कुर्यात्पूर्वाह्ण एव च ॥

[4]दक्षिणे त्वयने वाऽपि श्रावणस्य तु पर्वणि ।
सौम्यं वेदव्रतं कुर्यात्प्राजापत्यादि चात्र हि ॥

एवं गर्गेण एकस्मिन्नेव दिने व्रतानि कृत्वाऽनन्तरमध्येतव्यमित्युक्तम् । तथा च स एव— ' व्रतं कुर्यात्तु सावित्रं विधिनाऽऽरण्यकव्रतम् । दश व्रतानि कुर्वीत ततो वेदं समभ्यसेत् ॥ ' इति । आन. १६३

## गर्गः

गोदाने अयनपक्षतिथिवारनक्षत्राणि स्वाध्यायदिवसश्च

[5]उत्तरायणगे सूर्ये शुक्ले पक्षे शुभे दिने ।
स्वाध्यायदिवसे कुर्यान्नक्षत्राण्यत्र चौलवत् ॥

(१) धप्र. ४४ (=) ; संग. ७३१ स्नातकं (स्नानकं).

(२) धप्र. ४४ नासंकृतस्येह ( नमकृते चैव ) स्थितः ( स्थिते ) ; संग. ७३१.

(३) मुक्ता. ११७ ; आन. १६३ गर्गः .

(४) मुक्ता. ११७ ; आन. १६३ तु (च) पू. , गर्गः .

(५) मुक्ता. ११७.

[१] ... पूर्णमास्यामुदग्रवौ ।
चौलोक्तविधि( ? तिथि )वारेषु गोदानाख्य-
व्रतं चरेत् ॥

## गार्ग्यः

गुरुशुक्रास्तादौ मलमासे च व्रतारम्भनिषेधः

[२]अस्तं गते गुरौ शुक्रे बाले वृद्धे मलिम्लुचे ।
उपायनमुपारम्भं व्रतानां नैव कारयेत् ॥

## आश्वलायनः

व्रतेषु अयनपक्षतिथयः सौरकालमानं च

[३]चौलोपनयगोदानसमावर्तविवाहकाः ।
व्यवहाराश्च सौरेण कार्या यात्रादयोऽपि च ॥
[४]उपनीतौ व्रते चौले समावर्तनकर्मणि ।
कृष्णपक्षः प्रवर्ज्यः स्याद्दक्षिणायनमेव च ॥
ऊर्ध्वं यत्नेन पञ्चम्याः कृष्णपक्षं प्रवर्जयेत् ।
श्रौते स्मार्ते च मतिमान्सप्तमी स्यान्महापदि ॥

## लघ्वाश्वलायनः

महानाम्न्यामयनपक्षौ शुभदिनं च, गोदाने अयन-
शुभमासौ मतान्तरे विवाहकालश्च

[५]महानाम्नीव्रतं कुर्यात्पूर्णाब्दे चोत्तरायणे ।
शुक्लपक्षे शुभेऽह्नि स्यादुपनायनवच्च हि ॥
[६]गोदानं षोडशे वर्षे कुर्यात्तदुदगायने ।
केचिद्विवाहकाले च शुभे मासि वदन्ति हि ॥

## कश्यपः

गोदाने मासाः

[७]चैत्रमासविवर्जेषु माघादिषु च पञ्चसु ॥

(१) मुक्ता. ११९.
(२) संत. ८८५.
(३) आश्वस्मृ. ३।६३ पृ. ८.
(४) आश्वस्मृ. ११।३२०-३२१ पृ. ८०.
(५) लघ्वाश्वस्मृ. ११।३.
(६) लघ्वाश्वस्मृ. १४।१.
(७) संग. ७३१.

## दत्तात्रेयः

व्रतेषु चौलकालातिदेशः

[१]वेदव्रतानि चत्वारि कुर्यात्कालस्तु चौलवत् ।
उपाकर्मवदिच्छन्ति व्रतेष्वन्येषु चैव हि ॥

## अनिर्दिष्टकर्तृकवचनानि

गोदाने चौलकालातिदेशः , गुरुशुद्धिभिन्न-
व्रतोपाकरणकाले व्रतमोक्षणम्

[२]केशान्तं षोडशे वर्षे कुर्याच्चौलोक्तमादिके ।
गुरुशुद्धिं विना काले व्रतोक्ते व्रतमोक्षणम् ॥
[३]चौलोक्तसमये कार्यं केशान्तं षोडशो-
( ? शा )ब्दके ॥
[४]यान्युक्तानि क्षौरेषु भानि तान्येव चूडाकरणे ।
उपनयने गोदाने केशान्ते( ? समावर्तने )
च शस्तानि ॥

## गार्ग्यः

व्रतेषु अयनपक्षतिथयः

[५]वेदव्रतानामुदगयनादिककालः ॥
आदिशब्दादापूर्यमाणपक्षाद्युपसंग्रहः ।
मपा. ९६

पर्वण्युदगयन आपूर्यमाणपक्षस्य( चोदगयने ?) ॥

## दुर्गादित्यः

गोदाने गुरुशुक्रचन्द्रास्तनिषेधः

[६]दिनकरविप्लुतमूर्तिषु सुरगुरुदितिपुत्रमन्त्रि-
चन्द्रेषु ।
कुर्यान्न व्रतबन्धं तथैव गोदानमपि न कार्यम् ॥

(१) मुक्ता. ११७.
(२) ज्योनि. १२८.
(३) संब. १०५.
(४) बका. ७७८ ज्योतिःशास्त्रे; पुम. ४४४ शस्तानि + ( तानि ) ज्योतिःशास्त्रे.
(५) मपा. ९६.
(६) संसौ. १५४ ; संप्र. ५७०.

## नृसिंहः

व्रतेषु चौलकालातिदेशः, रिक्ताविष्टयोर्निषेधः

¹तिथिनक्षत्रवारांशवर्गोदयनिरीक्षणम् ।
चौलवत्सर्वमाख्यातं सगोदानव्रतेषु च ॥

सगोदानेति गोदानेन सहितेषु महानाम्न्यादिव्रतेष्वित्यर्थः । संकौ. १६२

²द्विजानां व्रतबन्धस्तु स्वाध्यायेषु प्रशस्यते ॥
³रिक्ताविष्टिविवर्ज्येषु महानाम्निकमेव च ।
चूडाकर्मवदेतत्स्याद्व्रतबन्धस्य कालकम् ॥

(१) महानाम्निकमित्यनेन महाव्रतोपनिषद्व्रतगोदानव्रतानि गृह्यन्ते । प्रपा. २७०

(२) अत्र महानाम्नीमहाव्रतोपनिषद्व्रतगोदानाख्यं चतुष्टयं महानाम्निकशब्देन विवक्षितं 'प्राणभृदुपदधाति' इतिवदिति तद्व्याख्यातारः । तत्र जन्मप्रभृति त्रयोदशे वर्षे महानाम्नीव्रतम्, चतुर्दशे महाव्रतम्, पञ्चदशे उपनिषद्व्रतम्, षोडशे गोदानम् । चम. ६४

(१) प्रपा. २७० ; संप्र. ५५८ ; चम. ६४; संम. ४२ श्रीधरीये ; सिन्धु. ९८५ श्रीधरः ; संकौ. १६२ श्रीधरीये ; संव. १२८ श्रीधरीये ; पुम. ४४० (=) ; संर. ३५२ तिथि ( ग्रह ) वत्सर्व ( वत्तु स ) श्रीधरः .

(२) प्रपा. २७० ; संप्र. ५५८ ; चम. ६४.

(३) प्रपा. २७० वर्ज्ये (वर्जे) देतत्स्याद्व्र ( दन्यस्य व्र ) लकम् ( लिकम् ) ; संप्र. ५५८ म्निकमेव ( म्यः क्रमेण ) ; चम. ६४ पू.

## महेश्वरः

गोदाने चौलकालस्य व्रतोत्सर्जने व्रतोपाकरणकालस्य चातिदेशः

¹कर्म केशान्तसंज्ञं हि वर्षे स्मृतं
षोडशे चौलकर्मोक्तधिष्ण्यादिके ।
खेचरैर्व्रतानां विसर्गोदितं
कर्म तत्तद्व्रतोक्ते च धिष्ण्यादिके ॥

## मुहूर्तचिन्तामणिः

गोदाने चौलकालातिदेशः

²केशान्तं षोडशे वर्षे चौलोक्तदिवसे शुभम् ॥

षोडशे वर्षे चौलोक्तदिवसे 'चूडा वर्षात्तृतीयात्प्रभवति' इत्यादिना कथितशुभदिवसे गोदानापरपर्यायं केशान्तसंज्ञं हि कर्म शुभं स्यात् । पीटी.

## शौनककारिका:

व्रतेषु अयनपक्षनक्षत्राणि

³अथोदगयने पक्षे शुक्ले शोभनतारके ।
वेदव्रतानि चत्वारि विदधीत यथाविधि ॥

## रेणुकारिका:

गोदाने अयनपक्षवारनक्षत्रलग्नानि

...... सिते पक्षे स्यादुत्तरायणे ।
⁴चौलर्क्षेषु भृगुज्ञेन्दुगुरुवारे शुभोदये ॥

(१) संसौ. १५२.

(२) मुचि. ५।६०.

(३) शौका. १ पृ. ४८ ; प्रपा. २७५ पक्षे शुक्ले ( शुक्लपक्षे ) ; संप्र. ५५९ प्रपावत् .

(४) रेका. ५ पृ. ४२.

## बौधायनगृह्यपरिभाषासूत्रम्

उपनयनाग्नौ व्रतचर्या

'यस्मिन्नग्नावुपनयति तस्मिन् व्रतचर्यम्... ॥

## आश्वलायनगृह्यसूत्रम्

उपनयनोक्तवापनादिपरिदानान्तस्य व्रतेष्वतिदेशः

'एतेन वापनादिपरिदानान्तं व्रतादेशनं व्याख्यातम् ॥

(१) वापनादिपरिदानान्तं यत्कर्म तद्व्रतादेशनं कर्तव्यमित्यर्थः । वापनादिग्रहणमलंकारनिवृत्त्यर्थम् । 'काय त्वा परिददामि' इति परिदानम् । परिदानग्रहणम् उत्तरकर्मनिवृत्त्यर्थम् । देभा.

(२) व्रतादेशनं यदस्माभिर्व्याख्यातं 'संवत्सरावमं चारयित्वा व्रतमनुयुज्य' इति, 'संवत्सरमादिशेत्' इति च, तत्राप्येतेन प्रकारेण वापनादि परिदानान्तं कार्यमित्यर्थः । वापनादिग्रहणमलंकारनिवृत्त्यर्थम् । 'काय त्वा परिददामि' इत्येतत्परिदानम् । परिदानान्तवचनमुपरितनतन्त्रनिवृत्त्यर्थम् । ‡ गानावृ.

## कौषीतकिगृह्यसूत्रम्

व्रतेषु उपनयनकल्पातिदेशो विशेषविधिश्च, उद्दीक्षणिकाकर्म, दण्डादिनियमाः, स्वाध्यायारण्यकनियमाः, शान्तिकर्म

'अथ व्रतादेशनम् ॥

तस्योपनयनेन कल्पो व्याख्यातः ॥

न सावित्रीमन्वाह ॥

दण्डप्रदानान्तमित्येके ॥

'कृतप्रातराशस्यापराह्णेऽपराजितायां दिशि ॥

हुत्वाऽऽचार्योऽथैनं यास्वेव देवतासु परीत्तो भवति तास्वेवैनं पृच्छति– 'अग्नाविन्द्र आदित्ये विश्वेषु च देवेषु चरितं ते ब्रह्मचर्यम्' ॥

'चरितं भो ३' इति प्रत्युक्ते ॥

पश्चादग्नेः पुरस्तादाचार्यस्य प्राङ्मुखे स्थितेऽहतेन वाससाऽऽचार्यः प्रदक्षिणं मुखं त्रिः परिवेष्टय ॥

उपरिष्टाद्दशाः कृत्वा यथा न संभ्रश्येत ॥

'त्रिरात्रं समिदाधानं भिक्षाचरणमधःशय्यां गुरुशुश्रूषां चाकुर्वन्वाग्यतोऽप्रमत्तोऽरण्ये देवकुलेऽग्निहोत्रे वोपवसस्व' इति ॥

अत्र हैके तानेव नियमाँस्तिष्ठतो रात्र्यामेवोपदिशन्ति ॥

आचार्योऽमांसाशी ब्रह्मचारी ॥

त्रिरात्रे निर्वृत्ते रात्र्यां वा ग्रामान्निष्क्रामन्नेतानीक्षेतानध्यायान् ॥

पिशितामं चण्डालं सूतिकां रजस्वलां तेदनिमपहस्तकां श्मशानं सर्वाणि च शवरूपाणि यान्यास्ये न प्रविशेयुः स्वस्य वासाभिरसन् ॥

प्रागुदीचीं दिशमुपनिष्क्रम्य शुचौ देशे प्राङ्मुख आचार्य उपविशति ॥

उदित आदित्येऽनुवाचनधर्मेण वाग्यतायोष्णीषिणेऽन्वाह ॥

महानाम्नीष्वेवैष नियमः ॥

अथोत्तरेषु प्रकरणेषु स्वाध्यायमेव कुर्वीत आचार्यस्येतरः शृणोति ॥

उष्णीषं भाजनं दक्षिणां गां ददाति ॥

'त्वं तम्' इति 'उद्धा दिवि' इति च प्रणवेन वा सर्वम् ॥

---

‡ अना., प्रपा., संप्र. गानावृवत् ।

(१) बौगृप. १।१६।४.

(२) आगृ. १।२२।२० ; प्रपा. २७१ ; संप्र. ५५८.

(३) कौगृ. २।११।१–४.

(१) कौगृ. २।१२।१–१८.

अत्र हैके वैश्वदेवं चरुं कुर्वते सर्वेषु प्रकरणेषु ॥

यथापरीत्तमिति माण्डूकेयः ॥

¹अथातो दण्डनियमाः ॥

नान्तरा गमनं कुर्यादात्मनो दण्डस्य ॥

अथ चेद्दण्डमेखलोपवीतानामन्यतमद्विशीर्येत च्छिद्येत वा तस्य तत्प्रायश्चित्तं यदुद्वाहे रथस्य ॥

मेखला चेदसंधेया भवत्यन्यां कृत्वाऽनुमन्त्रयते ॥

'मेध्यामेध्यविभागज्ञे देवि गोप्त्रि सरस्वति ।
मेखले स्कन्नमच्छिन्नं संतनुष्व व्रतं मम ॥
त्वमग्ने व्रतभृच्छुचिरग्ने देवाँ इहाऽऽवह ।
उप यज्ञं हविश्च नः ॥
व्रतानि बिभ्रद् व्रतपा अदाभ्यो
भवा नो दूतो अजरः सुवीरः ।
दधद्रत्नानि सुमृडीको अग्ने
गोपाय नो जीवसे जातवेदः ॥' इति ॥

उपवीतं च दण्डे बध्नाति ॥

तदप्येतत् ॥

यज्ञोपवीतं दण्डं च मेखलामजिनं तथा ।
जुहुयादप्सु व्रते पूर्णे वारुण्यर्चा रसेन वा ॥

²अथातो ब्रह्माणं ब्रह्मर्षिं ब्रह्मयोनिमिन्द्रं प्रजापतिं वशिष्ठं वामदेवं कहोलं कौषीतकिं महाकौषीतकिं सुयज्ञं शाङ्खायनमाश्वलायनमैतरेयं महैतरेयं कात्यायनं शाट्यायनं शाकल्यं बभ्रुं बाभ्रव्यं मण्डुं माण्डव्यं सर्वानेव पूर्वाचार्यान्नमस्य स्वाध्यायारण्यकस्य नियमानुदाहरिष्यामः ॥

अहोरात्रं ब्रह्मचर्यमुपेत्याऽऽचार्योऽमांसाशी ॥

आमपिशितं चण्डालं सूतिकां रजस्वलां तेदन्यपहस्तकदर्शनान्यनध्यायकानि ॥

शवरूपाणां च ॥

याम्यास्येन प्रविशेयुः ॥

वान्तकृतश्मश्रुकर्म ॥

मांसाशनश्राद्धसूतकभोजनेषु ॥

ग्रामाध्ययनानन्तर्हितान्यहानि ॥

त्रिरात्रोऽनवक्लृप्तः ॥

पराभिमृष्टः ॥

उपपर्वणामह उत्तरार्धानि च ॥

अग्निविद्युत्स्तनयित्नुवर्षमहाभ्रप्रादुर्भावाश्च ॥

वाते च शर्कराकर्षिणि यावत्कालम् ॥

¹ऊर्ध्वमाषाढ्याश्चतुरो मासान्नाधीयीत ॥

अत्यन्तं शक्यं इति नियमाः ॥

प्राग्ज्योतिषमपराजितायां दिशि पुण्यमुपगम्य देशम् ॥

अनुदित उदकग्रहणम् ॥

मण्डलप्रवेशश्च 'आञ्जनगन्धिम्' इत्येतयर्चा ॥

मण्डलं तु प्राग्द्वारमुदग्द्वारं वा जनाग्रीवमसंप्रमाणमसंबाधम् ॥

आवामदेव्यमुत्तरशान्तिः ॥

पुनः प्राध्येषणं च ॥

बहिर्मण्डलस्थाभिराचम्य ॥

प्राधीयीरन् कृतशान्तयः ॥

शान्तिपात्रोपघाते प्रोक्षणं प्रायश्चित्तिः ॥

प्रोक्षणं तु हिरण्यवता पाणिना दर्भपिञ्जूलवता वा ॥

इति भाषिकम् ॥

²अथ प्रविश्य मण्डलम् ॥

प्राङ्मुख आचार्य उपविशत्युदङ्मुखा दक्षिणत इतरे यथाप्रधानम् ॥

असंभवे सर्वतोमुखाः ॥

प्रतीक्षेरन्नुदयमादित्यस्य ॥

---

(१) कौगृ. २।१३।१–८.
(२) कौगृ. ६।१।१–१३.

(१) कौगृ. ६।२।१–१३.
(२) कौगृ. ६।३।१–१४.

विज्ञाय चैनं दीधितिमन्तम् ॥

‘अधीहि भो ३’ इति दक्षिणैर्दक्षिणं सव्यैः सव्यं दक्षिणोत्तरैः पाणिभिरुपसंगृह्य पादावाचार्यस्य निर्णिक्तौ ॥

अथाऽऽधाय शान्तिपात्रे दूर्वाकाण्डवतीष्वप्स्वपिन्वमानैः पाणिभिः प्राधीयीरन् ॥

एष विधिर्यदि तु ग्लायेरन्नेक एषामशून्यं शान्तिभाजनं कुर्यात् ॥

अध्यायाद्यन्तयोश्च सर्वे ॥

तत्संततमव्यवच्छिन्नं भवति ॥

अथ शान्तिः ॥

ओङ्कारो महाव्याहृतयः सावित्री रथंतरं बृहद्वामदेव्यं पुनरादायं ककुप्कारमिति बृहद्रथंतरे ॥

दशैताः संपादिता भवन्ति ॥

‘दशदशिनी विराळिति’ एतद्ब्राह्मणम् ॥

[१]‘अदब्धं मन इषिरं चक्षुः सूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मा हिंसीः’ इति सवितारमीक्षन्ते ॥

अथोत्थानकालेऽपकृष्य पापम् ॥

नित्यां शान्तिं कृत्वा ॥

‘उदितः शुक्रियं दधे’ इत्यादित्यमीक्षन्ते ॥

[२]‘तमहमात्मनि’ इत्यात्मानमभिनिहितं त्रिर्हितम् ॥

‘उप मा श्रीर्जुषतामुप यशोऽनु मा श्रीर्जुषतामनु यशः’ ॥

‘सेन्द्रः सगणः सबलः सयशाः सवीर्य उत्तिष्ठामि’ इत्युत्तिष्ठति ॥

‘श्रीर्मा उत्तिष्ठतु यशो मा उत्तिष्ठतु’ इत्युत्थाय ॥

‘इदमहं द्विषन्तं भ्रातृव्यं पाप्मानमलक्ष्मीं चाप धुनोमि’ इति वस्त्रान्तमवधूय ॥

(१) कौगृ. ६।४।१, ११–१३.
(२) कौगृ. ६।५।१–६.

‘अप प्राचः’ इति सूक्तम्, ‘इन्द्रश्च मृळयाति नः’ इति द्वे, ‘यत इन्द्र भयामहे’ इत्येका, ‘शास इत्था महाँ असि’ इति प्राचीम्, ‘स्वस्तिदाः’ इति दक्षिणां दक्षिणावृतः, ‘वि रक्षः’ इति प्रतीचीम्, ‘वि न इन्द्र’ इत्युदीचीं सव्यावृतः, ‘अपेन्द्र’ इति दक्षिणावृतो दिवमुदीक्षन्ते ॥

[१]‘सविता पश्चात्तात्, तच्चक्षुः’ इत्यादित्यमुपस्थाय ॥

व्यावर्तमानाश्च प्रत्यायन्त्युपविशन्ति ॥

‘यथाऽऽपः शान्ताः’ इति शान्तिपात्रादप आदाय ॥

पृथिव्यामवनिनीय ॥

‘यथा पृथिवी’ इत्यस्याभिकर्षन्ति ॥

‘एवं मयि शाम्यतु’ इति दक्षिणेंऽशे निलिम्पति ॥

एवं द्वितीयम् ॥

एवं तृतीयम् ॥

‘काण्डात्काण्डात्संभवसि, काण्डात्काण्डात्प्ररोहसि, शिवा नः शाले भव’ इति दूर्वाकाण्डमादाय मूर्धनि कृत्वा ॥

‘अग्निस्तृप्यतु, वायुस्तृप्यतु, सूर्यस्तृप्यतु, विष्णुस्तृप्यतु, प्रजापतिस्तृप्यतु, विरूपाक्षस्तृप्यतु, सहस्राक्षस्तृप्यतु, सर्वभूतानि तृप्यन्तु’ इति ॥

सुमन्तुजैमिनिवैशम्पायनपैलाद्याचार्याः ॥

पितृन्प्रत्यात्मिकान् ॥

‘समुद्रं वः’ इत्यपो निनीय ॥

वामदेव्यं जपित्वा ॥

यथाकामं विप्रतिष्ठन्ते ॥

‘यथाऽऽगमप्रज्ञाश्रुतिस्मृतिविभवादनुक्रान्तमानादविवादप्रतिष्ठादभयं शं भवे नो अस्तु नमोऽस्तु देवऋषिपितृमनुष्येभ्यः शिवमायुर्वपु-

(१) कौगृ. ६।६।१–१६.

**रनामयं शान्तिमरिष्टिमक्षितिमोजस्तेजो यशो बलं ब्रह्मवर्चसं कीर्तिमायुः प्रजां पशून्नमो नमस्कृता वर्धयन्तु ॥ दुष्टुताद्दुरुपयुक्तान्यूनाधिकाच्च सर्वस्मात्स्वस्ति देवऋषिभ्यश्च ब्रह्म सत्यं च पातु माम्' इति ॥**

## आपस्तम्बगृह्यसूत्रम्

व्रतोपाकरणोत्सर्जनयोर्देवताविधानम्

**'¶उपाकरणे समापने च ऋषिर्यः प्रज्ञायते ॥**

**सदसस्पतिर्द्वितीयः ॥**

(१) द्विविधमुपाकरणम्– काण्डोपाकरणम् अध्यायोपाकरणं चेति । तथा समापनम् । तथा चान्यपरे वाक्ये दर्शनम्– 'काण्डोपाकरणे चामातृकस्य काण्डसमापने चापितृकस्य' (आध. १।११।१–२) इति । अध्यायोपाकरणं तु प्रसिद्धम्– 'श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य' (आध. १।९।१) इति । तथा समापनम्– 'तैष्यां पौर्णमास्यां रोहिण्यां वा विरमेत्' (आध. १।९।२) इति । तत्र द्विविधेऽप्युपाकरणे समापने चर्षिर्यः प्रज्ञायते काण्डानुक्रमण्यां काण्डऋषित्वेन स तत्र देवता । तत्र सदसस्पतिर्द्वितीयः । काण्डऋषये हुत्वा सदसस्पतये होतव्यमित्यर्थः । तत्र प्राजापत्यं सौम्यम् आग्नेयं वैश्वदेवमिति काण्डानि । प्रजापतिः सोमोऽग्निर्विश्वेदेवा इति काण्डर्षयः । सारस्वतं नाम संकीर्णानि काण्डानि । यथाऽऽह बौधायनः– 'पौरोडाशिकं याजमानं होतारो हौत्रं पितृमेध इति सब्राह्मणानि सानुब्राह्मणानि प्राजापत्यानि । आध्वर्यवं ग्रहा दाक्षिणानि समिष्टयजूंष्यवभृतयजूंषि वाजपेयः शुक्रियाणि सवा इति सब्राह्मणानि सानुब्राह्मणानि सौम्यानि । अग्न्याधेयं पुनराधेयमग्निहोत्रमग्न्युपस्थानमग्निचयनं सावित्रनाचिकेतचातुर्होत्रियवैश्वसृजारुणा इति सब्राह्मणानि सानुब्राह्मणान्याग्नेयानि । राजसूयः पशुबन्ध इष्टयो नक्षत्रेष्टयो दिवश्श्येनयोऽपाघाः सत्रायणमुपहोमाः (कौकिली)सूक्तान्युपानुवाक्यं याज्या अश्वमेधः पुरुषमेधः सौत्रामण्यच्छिद्राणि पशुहौत्रमुपनिषद इति सब्राह्मणानि सानुब्राह्मणानि वैश्वदेवानि' (बौगृ. ३।१।२१–२४) इति । अस्माकं च गृह्यमन्त्रप्रश्नद्वयमप्येकाग्निकाण्डं नाम वैश्वदेवकाण्डे द्रष्टव्यम् । तत्र काण्डोपाकरणे तस्य काण्डस्य ऋषिर्यः तस्मै होमः– 'प्रजापतये काण्डऋषये स्वाहा' इति । ततः 'सदसस्पतिमद्भुतम्' इति मन्त्रेण क्रमप्राप्तेन । स हि मन्त्रः स्वाध्यायार्थं विवाहप्रकरणे पठितः । तस्यैव विनियोगप्रदर्शनार्थमिदं सूत्रमस्मिन् प्रदेशे पठितम्, अन्यथोपनयनानन्तरमेव वक्तव्यं स्यात् । एवं तस्य तस्य समापने तस्मै तस्मै काण्डर्षये होमः । सदसस्पतये द्वितीयः । न जयादयः, प्रापकाभावात् । सूत्रान्तराश्रयणेन केचिज्जुह्वति । तानीमानि चत्वारि वेदव्रतानि यानि प्रतिकाण्डमुपाकरणानि । यानि समापनानि तानि व्रतविसर्जनानि । अध्यायोपाकरणे तु सर्वेषां काण्डर्षीणां होमः, ततः सदसस्पतेः । जयादयश्च भवन्ति वा न वा । तत्र काण्डोपाकरणसमापनयोरुदगयनादिप्राप्तेरुपनयनानन्तरं तदानीमेव प्राजापत्यं काण्डमुपाकृत्य श्रावण्यां पौर्णमास्यामुपाकृत्य‡ प्राजापत्यस्य काण्डस्याध्ययनम्, तैष्यामुत्सर्गः । तत्रैतावता कालेन प्राजापत्यकाण्डस्य समाप्तौ तेनोत्सर्गः । अथ सौम्यस्योपाकरणम् । अथ यावदध्यायोपाकरणं तावत् प्राजापत्यस्य काण्डस्य धारणाध्ययनं शुक्लपक्षेषु, कृष्णपक्षेष्वङ्गाध्ययनम् । श्रावण्यामुपाकर्म । अथ सौम्यकाण्डस्याध्ययनम् । तैष्यामुत्सर्गः । काण्डसमापनम् । एवमितरयोः । सर्वत्र उत्सर्जनादूर्ध्वं पूर्वगृहीतस्यांशस्य धारणाध्ययनमङ्गाध्ययनं च । होमः प्रथमः कल्पः । अथ ये सारस्वतं पाठमधीयते तेषामुपनयनानन्तरं तदानीमेव चत्वारि वेदव्रतानि क्रमेण कृत्वा कालेऽध्यायमुपाकृत्य यथापाठमध्ययनम्, तैष्यामुत्सर्गः

(१) आपगृ. ८।१–२.

¶ अध्यायोपाकरणोत्सर्जनयोर्व्रतोपाकरणोत्सर्जनयोः च सामान्यः प्रयोगः आदर्शपुस्तके आपस्तम्बगृह्यसूत्रैकादशद्वादशखण्डयोर्मध्ये मुद्रिते अनाकुलासहिते उपाकर्मोत्सर्जनपटले विहितः । असौ पटलः वर्णाश्रमधर्मकाण्डे उपाकर्मोत्सर्जनप्रकरणे संग्रहीष्यते, स तत्रैव द्रष्टव्यः ।

‡ अध्यायोपाकरणं कृत्वेत्यर्थः । एवं तैष्यामुत्सर्गोऽप्यध्यायस्यैव । एवमग्रेऽपि श्रावणीतैष्योरुपाकरणोत्सर्जने अध्यायस्यैव, न काण्डस्य ।

पूर्ववद्वारणाध्ययनमङ्गाध्ययनं च, पुनरुपाकरणमित्यादि । आद्यकल्पे तु केचिदुत्सर्जनं न कुर्वते, ओपाकरणादधीत्य पुनरुपाकुर्वते । अन्ये तूत्सृज्य पुनरधीयते, वेदव्रतानि च यदा कदाचित् कुर्वते । तेषां मूलं मृग्यम् । सर्वेष्वपि पक्षेषु शुक्रियाणां पृथगुपाकरणमुत्सर्जनं च ।

तत्र प्रयोगः– पर्वण्युदगयन इत्यारभ्याऽऽज्यभागान्ते सोमाय काण्डर्षये स्वाहेति सदसस्पतिमिति च हुत्वा जयादिपरिषेचनान्ते मदन्तीरुपस्पृश्येत्येवमादि प्रतिपद्यते । एवमेव पूर्ववत् विसृज्येत्यत्रापि प्रयोगः । अनाकुला.

( २ ) अत्र विषयशुद्ध्यर्थमध्यायस्य च प्राजापत्य-सौम्याग्नेयवैश्वदेवाख्यानां काण्डानां च तत्तत्काण्डाख्य-व्रतानां चोपाकरणसमापनयोश्च स्वरूपमुच्यते– तत्राध्याय-स्योपाकरणं श्रावण्यां पौर्णमास्यां विहितहोमपूर्वकमध्या-यानामारम्भः । समापनं च तस्य 'तैष्यां पौर्णमास्याम्' इत्यादिषु होमपूर्वकमेवाध्ययनोत्सर्गः । काण्डानामुपा-करणं तु क्रमप्राप्ते काले होमपूर्वकमेव तत्तत्काण्डाना-मध्ययनोपक्रमः । समापनं चैषां तत्तत्काण्डा-ध्ययने समाप्ते होमपूर्वकमेवोत्सर्गः । ये एते काण्डाना-मुपाकरणसमापने ते एव व्रतानामिति, न भेदेन, अध्ययनाङ्गत्वात् सर्वेषां ब्रह्मचारिव्रतानाम् । सारस्वत-पाठाध्ययने तु काण्डानां संकीर्णत्वेन यथाकाण्डमध्ययना-संभवात् व्रतान्येवोदगयने काण्डवदेकैकश उपाकृत्य सं-वत्सरं चरित्वा विधिवदुत्सृजेत् । चत्वार्येव च वेदव्रतानि, न तु गृह्यान्तरोक्ते सावित्रसंमिताख्ये वेदव्रते, सावित्रसंमि-ताख्यकाण्डयोरभावत् , '... चौलोपनयनम् , चत्वारि वेदव्रतानि ' ( गौध. ८।१३,१४ ) इति गौतम-वचनाच्च ।

तथा विषयशुद्ध्यर्थमेव प्रयोगभाष्यमल्पमेदमेव लिख्यते– "आपस्तम्बदर्शनानुगतोपदेशेनाध्यायोपाकरणा-दीनां कर्मोच्यते । तत्र तावदध्यायोपाकरणस्य श्रावण्यां पौर्णमास्यामाचार्यः शिष्यैः सह कृतप्राणायामः 'अध्याय-मुपाकरिष्ये ' इति संकल्प्य महानद्यां विधिवत्स्नात्वा पवित्रपाणिर्नव ऋषीन् तर्पयेत्– 'प्रजापतिं काण्डऋषिं तर्पयामि । सोमं काण्डऋषिं तर्पयामि । अग्निं काण्ड-ऋषिं तर्पयामि । विश्वान्देवान् काण्डऋषींस्तर्पयामि । सांहितीर्देवता उपनिषदस्तर्पयामि । याज्ञिकीर्देवता उप-निषदस्तर्पयामि । वारुणीर्देवता उपनिषदस्तर्पयामि । ब्रह्माणं स्वयंभुवं तर्पयामि । सदसस्पतिं तर्पयामि ' इति । ततोऽग्न्युपसमाधानाद्यग्निमुखान्ते अन्वारब्धेष्वन्तेवासिषु नवाऽऽज्याहुतीर्जुहोति– 'प्रजापतये काण्डऋषये स्वाहा । सोमाय काण्डऋषये स्वाहा । अग्नये काण्डऋषये स्वाहा । विश्वेभ्यो देवेभ्यः काण्डऋषिभ्यः स्वाहा । सांहितीभ्यो देवताभ्य उपनिषद्भ्यः स्वाहा । याज्ञिकीभ्यो देवताभ्य उपनिषद्भ्यः स्वाहा । वारुणीभ्यो देवताभ्य उपनिषद्भ्यः स्वाहा । ब्रह्मणे स्वयंभुवे स्वाहा' । 'सदसस्पतिम्' इत्येतयर्चा नवमीमाहुतिं जुहोति । तत आचार्यप्रमुखाः दर्भेष्वासीना दर्भान् धारयमाणा वेदस्याऽऽदितश्चतुरोऽवराध्यानिनु-वाकानधीयीरन् । अथ जयादिपरिषेचनान्ते ब्राह्मणतर्प-णम् । एवमेवोत्सर्गे, न ततोऽधिकं स्मृत्यन्तरोपसंहारे-णापि, किंतु यथाऽऽपस्तम्बीयं सूत्रम् । तथा नाऽऽदितो वेदस्यानुवाकानामध्ययनम् । जयादयस्तु भवन्ति । सौम्या-दते काण्डोपाकरणसमापनयोश्च न सूक्तोपहोमदेवतोप-स्थानजयादयः । सौम्यस्यैव सूक्तजयादयः । एवमापस्तम्ब-मत एवावस्थिताः केचित् कुर्वते यथोक्तम् ।

अथ प्राजापत्ये व्रते पूर्ववत्स्नात्वा सोमाग्निविश्वेदेव-वर्ज्यानां तर्पणम् । अग्निमुखान्ते चान्वारब्धे व्रतिनि जुहोति– 'प्रजापतये काण्डऋषये स्वाहा ', 'प्रजापते न त्वदेतान्यन्यः' ( तैब्रा. २।८।१।२) इति सूक्तेन प्रत्यृचं पञ्चाहुतीः, चतस्र उपहोमाहुतीः 'सांहितीभ्यः' इत्या-दिभिरेव, 'सदसस्पतिम्' इत्येतयैव सदसस्पतिं च । अथ व्रती उपस्थेयदेवता अभिवीक्ष्यायाग्निपुरोगाश्चतस्रो देवता उपतिष्ठते– 'अग्ने व्रतपते काण्डऋषिभ्यः प्राजा-पत्यं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् । वायो व्रतपते०, आदित्य व्रतपते०, व्रतानां व्रतपते काण्ड-ऋषिभ्यः प्राजापत्यं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् ' ( तैआ. ४।४१।३ ) इत्येतैश्चतुर्भिर्यथादेव-तम् । ततो जयादि ब्राह्मणतर्पणं च । एवमेव समापने

प्रयोगः संवत्सरे ( संवत्सरे ? ) पर्यवेते । तत्रोपस्थानमन्त्रेषु 'अचारिषम्, अशकम्, अराधि' इति विशेषः । केचित् सौम्ये केशश्मश्रुवापनस्य दृष्टत्वात् प्राजापत्यादिष्वपीच्छन्ति ।

एवमेवाऽऽग्नेये वैश्वदेवे च । 'अग्नये काण्डर्षये स्वाहा', 'अग्ने नय' ( तैब्रा. २।८।२।३ ) इति षड्टचं सूक्तम्, 'अग्ने व्रतपते काण्डर्षिभ्य आग्नेयं व्रतं चरिष्यामि' इत्याग्नेये विशेषः । 'विश्वेभ्यो देवेभ्यः काण्डर्षिभ्यः स्वाहा', 'आ नो विश्वे अस्क्रागमन्तु' ( तैब्रा. २।८।६।३ ) इति षड्टचं सूक्तम्, 'वैश्वदेवं व्रतं चरिष्यामि' इति वैश्वदेवव्रते विशेषः ।

सौम्यस्य काण्डोपाकरणसमापने शुक्रियकल्पोक्ते । अत्राप्युक्तं यत्तदुच्यते—पूर्ववदुपाकृत्याग्नेरुपसमाधानाद्यग्निमुखान्ते 'सोमाय काण्डर्षये स्वाहा', 'सोमो धेनुम्' ( तैब्रा. २।८।३।१ ) इति षड्टचं सूक्तम्, उपहोमान् सदसस्पतिं च हुत्वा, एवं पूर्ववदुपाकृत्य मदन्तीरुपस्पृश्य प्रथमेनानुवाकेन शान्तिं कृत्वा चतस्र औदुम्बरीः समिधो घृतान्वक्ता अभ्यादधाति— 'पृथिवी समित्' ( तैआ. ४।४१।१० ) इत्यादिभिः । अथ देवतोपस्थानम्— 'अग्ने व्रतपते काण्डर्षिभ्यः सौम्यं व्रतं चरिष्यामि' इत्यादिभिः । ततः प्रभृति शुक्रियमन्त्रब्राह्मणानुवाकानां प्रथमपदानि 'युञ्जते' ( तैआ. ४।२ ) 'सविता' ( तैआ. ५।१२ ) इति वाऽभिव्याहार्य वाचयित्वा जयादि प्रतिपद्यते । परिषेचनान्तं कृत्वा मदन्तीरुपस्पृश्य उत्तमेनानुवाकेन शान्तिं कृत्वा ततः संमीलनादि यथासूत्रम् । श्वोभूते 'वयः सुपर्णाः' ( तैआ. ४।४२।३ ) इत्यादित्योपस्थानान्ते ब्राह्मणभोजनम् । अथास्य स्वाध्यायविधिः शुक्रियकल्प एवोक्तः । एवं समापने । विशेषस्तु 'द्यौः समित्' 'आदित्य व्रतपते' इत्याद्यावृत्ताः समिदाधानोपस्थानमन्त्राः । उत्तमेनानुवाकेन शान्तिं कृत्वा गुरवे वरं दत्वा केशश्मश्रु वापयित्वा ब्राह्मणभोजनम् " ।

अथ सूत्रमाक्षिप्यते— ननु— 'उपाकरणे समापने च ऋषिर्यः प्रज्ञायते' इति यः प्रजापत्यादीनामन्यतमः काण्डानुक्रमण्यां काण्डर्षित्वेन समाम्नायते स ऋषिर्देवतेति व्यर्थमेवेदं सूत्रम्, 'काण्डोपाकरणेष्वेतान्पुरस्तात्सदसस्पतेः। जुहुयात्काण्डसमाप्तौ च श्रुतिरेषा सनातनी ॥' ( काण्डा. २।१ ) इति काण्डानुक्रमण्यां काण्डर्षिदेवतात्वस्य सिद्धत्वात् । सत्यम्, अत एव प्रजापत्यादयश्चत्वारः प्रधानहोमदेवताः, सांहित्यादयः स्वयंभु † पर्यन्ताश्चत्वार उपहोमदेवताः । तेनैते चत्वारः सर्वकाण्डानामुपाकरणसमापनयोरनुवर्तन्ते, प्रधानानुवर्तित्वादङ्गानामित्येवंपरं सूत्रम्, न देवतात्वविधिपरम् ।

ननु— सदसस्पतिरध्यायोपाकरणसमापनयोर्नवमः । काण्डोपाकरणसमापनयोः षष्ठः । एवमयमद्वितीयोऽपि किमर्थं द्वितीय इत्युच्यते ? द्वितीयस्य स्विष्टकृतः स्थानेऽयं सदसस्पतिर्भवेदित्येवमर्थम् । इदमर्थमेव च पूर्वत्र 'अग्निः स्विष्टकृद्द्वितीयः' ( आपगृ. ७।७ ) इत्युक्तम् । उपाकरणसमापनयोराज्यहविष्कयोः स्विष्टकृदेव नास्ति, कथं तत्स्थाने सदसस्पतिविधिः ? इति चेत्— अनेनैव वचनेनास्य प्रसङ्गो विधीयते, यथा अग्निहोत्रे द्वितीयस्या आहुतेः शातपथेन ब्राह्मणेन । तेनाग्नेरुत्तरार्धपूर्वार्धेऽस्मै होमः, एतद्विस्मरणे स्विष्टकृल्लोपप्रायश्चित्तं च । अयं च होमो लिङ्गक्रमाभ्यां 'सदसस्पतिमद्भुतम्' इत्येतया होतव्य इति स्पष्टत्वात् सूत्रकारस्यानादरः ।

केचित्— उपाकरणे समापने च यः काण्डर्षिः प्रज्ञायते तस्य द्वितीयः सदसस्पतिः काण्डर्षेरुपरिष्टादयं मन्त्रः सदसस्पतिर्विनियुज्यते, न तु विवाहे 'उद्दीप्यस्व' इति ऋग्द्वयमिव । विवाहमध्ये पाठस्त्वध्ययनविध्यर्थः । इत्येवं सदसस्पतिमन्त्रस्य विषयज्ञापनव्याजेन एतयोः कर्मणोः प्रयोगकल्पस्यान्यत्र प्रसिद्धस्यात्राप्रसिद्धत्वात् अवश्याश्रयणीयस्य इह शास्त्रेऽभ्यन्तरीभावोऽस्य सूत्रस्य प्रयोजनम्, ततश्च क्रियाप्रवृत्तिरिति । तन्न, सूत्रस्थस्य सदसस्पतिशब्दस्य मुख्यार्थदेवतापरत्वसंभवेऽपि मन्त्रप्रतीकं लक्षयित्वा

† डुप्रत्ययान्तस्य स्वयंभुशब्दस्य साधुत्वेऽपि पूर्वं 'स्वयंभुवम्, स्वयंभुवे' इति देवतोद्देशात् क्विबन्तः स्वयंभूशब्द एवात्र ग्रहीतुमुचितः ।

तेन लक्षितेन मन्त्रलक्षणाया अयुक्तत्वात्, उक्तविषयाऽनयोरिहैव प्रयोगस्य प्रसिद्धत्वादन्यत्र प्रसिद्धस्याम्यन्तरीभाववैयर्थ्याच्च। ताद.

## हिरण्यकेशिगृह्यसूत्रम्

व्रतेषु होमदेवता-तन्मन्त्रविधानम्

**'काण्डोपाकरणे काण्डविसर्गे च 'सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम्। सनिं मेधामयासिषं स्वाहा॥' इति, काण्डऋषिर्द्वितीयः, 'इमं मे वरुण, तत्त्वा यामि, त्वं नो अग्ने, स त्वं नो अग्ने, त्वमग्ने अयाऽसि, प्रजापते, यदस्य कर्मणोऽत्यरीरिचम्' इति च। अत्रैके जयाभ्यातानान्राष्ट्रभृत इत्युपजुह्वति यथापुरस्तात्॥**

(१) चत्वारि काण्डानि प्राजापत्यसौम्याग्नेयवैश्वदेवानीति। पञ्चमं स्वायंभुवमित्येके। तेषामनुक्रमणं काण्डानुक्रमणे द्रष्टव्यम्। तेषां काण्डानामुपाकरणं काण्डोपाकरणम्। तस्मिन् काण्डोपाकरणे काण्डव्रतारम्भे इत्यर्थः। काण्डानां विसर्गः काण्डव्रतविसर्गः इत्यर्थः। तस्मिंश्च व्याहृतिपर्यन्तं कृत्वा सदसस्पतिं जुहोति, काण्डर्षीन्(१ र्षिं)जुहोति। 'अमन्त्रास्त्वमुष्मै स्वाहेति यथादेवतम्' (हिगृ. १९।१।४५) इति वचनात् 'प्रजापतये काण्डर्षये स्वाहा, सोमाय काण्डर्षये स्वाहा, अग्नये काण्डर्षये स्वाहा, विश्वेभ्यो देवेभ्यः काण्डर्षिभ्यः स्वाहा, स्वयंभुवे काण्डर्षये स्वाहा' इति यथाकाण्डं जुहुयात्। वारुण्यादि स्विष्टकृदन्तं यथोक्तमुपहोमांश्च। यथापुरस्तादिति स्विष्टकृतः पूर्वत्वं होमविधिश्चोच्यते। केचित् 'सदसस्पतिम्' इति काण्डर्षिर्द्वितीय इति वर्णयन्ति। तेषामादौ काण्डर्षिं हुत्वा सदसस्पतेरिहैव होमः। अत्र द्वितीयवचनं प्रसिद्धस्य काण्डर्षेः प्राथम्यार्थम्। पूर्वस्मिन्नपि व्याख्याने द्वितीयवचनं सदसस्पतिरेव काण्डर्षिर्मा भूदिति। वारुण्याद्यनुक्रमणमाघारवन्नियमार्थम्। तस्माद्व्याहृतिपर्यन्तमपि भवति। केचिद्वारुण्याद्यनुक्रमण एवैतदाहुतिद्वयमिच्छन्ति, तत्र तत्र 'व्याहृतिपर्यन्तं कृत्वा' इति वचनात्। अन्ये 'व्याहृतिपर्यन्तं कृत्वा' इत्यत्रापि पालाशीमिति वर्णयन्ति। अथ व्याहृतिपर्यन्तादिक्रमणं वारुण्यादिष्वस्ति विशेष इति ख्यापनार्थम्। कः पुनरसौ? यो जयादीनामुपाकरण आश्रितः पक्षः स एव विसर्गेऽपि स्यादिति। परिषेकान्तं कृत्वा 'व्रतं चरिष्यामि' इति देवतोपस्थानं स्यात्, 'व्रतमचारिषम्' इति काण्डविसर्गे। मातृद.

(२) अस्यार्थः— नव षट् पञ्च चत्वारि वा काण्डानि। तत्र प्राजापत्यं सौम्यमाग्नेयं वैश्वदेवं स्वायंभुवमारुणं सांहितीर्देवता उपनिषदो वारुणीर्देवता उपनिषदो याज्ञिकीर्देवता उपनिषद इति नवपक्षे काण्डानि। षट्पक्ष आरुणान्तानि षट्, पञ्चपक्षे स्वायंभुवान्तानि पञ्च, चतुष्पक्षे वैश्वदेवान्तानि चत्वारीति। तेषामनुक्रमणं काण्डानुक्रमणिकायां द्रष्टव्यम्। तेषां काण्डानामुपाकरणं काण्डोपाकरणम्। तस्मिन् काण्डोपाकरणे व्रतारम्भे इत्यर्थः। काण्डानां विसर्गः काण्डव्रतविसर्ग इत्यर्थः। तस्मिन् प्रसाधनीदेवीहोमान्तं कृत्वा सदसस्पतये हुत्वा काण्डर्षिभ्यो(१ र्षये) जुहोति। 'अमन्त्रास्त्वमुष्मै स्वाहेति यथादेवतम्' इतिवचनात् 'प्रजापतये काण्डर्षये स्वाहा, सोमाय काण्डर्षये स्वाहा, अग्नये काण्डर्षये स्वाहा, विश्वेभ्यो देवेभ्यः काण्डर्षिभ्यः स्वाहा, स्वयंभुवे काण्डर्षये स्वाहा' इति यथाकाण्डं जुहुयात्। ततो वारुण्यादिस्विष्टकृदन्तं यथोक्तमुपहोमाश्च। यथापुरस्तादित्यनेन स्विष्टकृतः पूर्वत्वं होमविधिश्च प्राप्यते। अथवा सदसस्पतिर्द्वितीयः काण्डर्षिर्भवतीत्यर्थः। अस्मिन् कल्पे काण्डर्षिहोमानन्तरं सदसस्पतिहोमः। अत्र द्वितीयवचनं प्रसिद्धस्य काण्डर्षेः प्राथम्यार्थम्। पूर्वस्मिन्कल्पे द्वितीयवचनं सदसस्पतिरेव काण्डर्षिर्मा भूदित्येतदर्थम्। वारुण्याद्यनुक्रमणमाघारवन्नियमार्थम्। कुत्रचिद्व्याहृतिहोमविधानमेव तथा। यथापुरस्तादिति वचनं जयहोमे राष्ट्रभृद्धोमे च मन्त्रविषये पक्षान्तरस्यापि सत्त्वादुपनयने यः परिगृहीतः पक्षः स एवात्रेति ज्ञापनार्थं स्विष्टकृतः प्राक्कर्तव्यतार्थं च। ननु समावर्तनादावन्यतरानुवादेनैवाऽऽघारवन्नियमे सिद्धे उभ-

(१) हिगृ. १९।२।५७; संर. ३३९.

मानुवादो व्यर्थ इति चेन्न, तस्य नियमार्थत्वात् । तथाहि– यत्रोभयानुवादः समावर्तनादौ तत्रोभयसहितमेवाऽऽघारवत्तन्त्रं नियतमिति । तेनोभयानुवादातिरिक्तस्थले यद्यदननूदितं भवति तस्यानियमः सिध्यति । काण्डव्रतोपाकरणोत्सर्गयोर्व्याहृतिहोमानुवादाभावान्न व्याहृतिहोमनियमः । चतुर्थीहोमे संवादामिश्रयने शूलगवे मासिश्राद्धाष्टकाश्राद्धादावाग्रहायणीकर्मणि च वारुण्याद्यनुवादाभावान्न वारुण्यादिनियमः । त्रिवृदन्नहोमे शाखान्तरोक्तेषु कर्मसु चाऽऽघारवत्तन्त्रत्वपक्षेऽपि व्याहृतिहोमवारुण्याद्यनियमः, उभयानुवादाभावात् । अथवा यत्र व्याहृतिहोमवारुण्यादिहोमानुवादो नास्ति तत्रैतयोर्निवृत्तिरेव । तेन पूर्वं तन्त्रं प्रसाधनीदेवीहोमान्तमुत्तरं तन्त्रं स्विष्टकृदादीति द्रष्टव्यम् । संर. ३३९–३४०

## आग्निवेश्यगृह्यसूत्रम्

व्रतेषु होमदेवता-तन्मन्त्रविधानम्

**'काण्डोपाकरणे काण्डविसर्गे च 'सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषं स्वाहा ॥' इति, काण्डर्षिर्द्वितीयम् (? काण्डर्षिर्द्वितीयः), 'इमं मे वरुण, तत्त्वा यामि, त्वं नो अग्ने, स त्वं नो अग्ने, त्वमग्ने अयाऽसि, प्रजापते, यदस्य कर्मणोऽत्यरीरिचम्' इति च । अथैके जयाभ्यातानान् राष्ट्रभृत इत्युपजुह्वति यथा पुरस्तात् ॥**

## पारस्करगृह्यसूत्रम्

सावित्रव्रतान्ते दण्डादिनिधानम्, त्रिमधुरदानम्, आग्नेयादिव्रतादेशनम्, अवगुण्ठनम्, अरण्यादिषु शयनम्, अवगुण्ठनीविसर्जनम्, अर्कोदये जपः, वर्षणे शान्तिकरणम्, शान्तिभाजनावगुण्ठन्योः गुरवे दानम्, अध्यायोपाकरणविसर्गातिदेशः

**'अथोपनीतो ब्राह्मणस्त्रिशिखः शिखी जटिलो मुण्डो वाऽक्षारलवणाशी स्यात् । सावित्रं षड्रात्रं त्रिरात्रं सद्यःकालं वा चरेत् । तदेव व्रतमुद्दीश्य दण्डमपो निधाय मेखलां यज्ञोपवीतं च 'अप्स्वन्तः' इति, प्रत्यृचं 'नमो वरुणाय' इति त्रिमधुरं दत्त्वा ततोऽस्याऽऽग्नेयं प्रथमं वेदव्रतमादिशेत् । ... पञ्च सांवत्सरिकाणि वेदव्रतानि चरित्वा स्नात्वोपव्रतं चरेत् । त्रिष्ववगुण्ठनं शुक्रियादिषु शुक्रियं शुक्राभिः श्रावयेदौपनिषदमौपनिषद्भिः शौलभं शौलभिनीभिः । अथवा विद्यमाने 'आ ब्रह्मन्, उदीरताम्, आ नो भद्राः, आशुः शिशानः, इमानु कम्' इति च । वेदशिरसाऽवगुण्ठयेत् । अवगुण्ठनीं त्रिवलिं पञ्चवलिं वा नाभिदेशात्प्रच्छाद्य वाग्यतोऽरण्येऽधः शयीत ग्रामे गोष्ठे देवतायतने वा । व्युष्टायामवगुण्ठनीमरण्ये विसृजेत् । 'अदृश्रमस्य, उदु त्यम्, चित्रं देवानाम्' इत्युदितेऽर्के जपति । वर्षति 'द्यौः शान्तिः' इति शान्तिं करोति । शान्तिभाजनं गुरवे दद्यात् । एवमेवावगुण्ठनीं च ॥**

**'एतदेव व्रतादेशनविसर्गेषु ॥**

( १ ) एतदेव व्रतादेशे विसर्गे चाऽऽज्याहुतिकर्म भवति । ¶ कभा.

( २ ) एतत् उपाकर्मणि विहितं 'पृथिव्यै' इत्यादि 'अनुमतये' इत्यन्तं होमकर्म, व्रतादेशनं वेदारम्भः, विसर्गः समावर्तनम्, व्रतादेशनानि च विसर्गाश्च व्रतादेशनविसर्गाः, तेषु भवति । हभा.

( ३ ) एतदेव आज्याहुतिनवकमेव कर्म । * गभा.

( ४ ) एतदेव आज्यभागादि 'अनुमतये स्वाहा' इत्यन्तं कर्म, व्रतादेशाः सावित्राग्नेयशुक्रियादयः विसर्गाश्च तेषामेव, तेषु भवतीत्यन्वयः । अन्यदपि नित्यं महाव्याहृत्यादि स्विष्टकृदन्तमाहुतिदशकम् । एवं सर्वत्र व्रतादेशविसर्गादौ सप्तत्रिंशदाहुतयो भवन्ति । विभा.

---

(१) आग्निगृ. १।१।४.

(२) पागृ. २।७ ( चौखम्बामुद्रितपुस्तकम् ).

¶ जभा. कभावत् ।

* शेषं हभावत् ।

(१) पागृ. २।१०।१०.

## गोभिलगृह्यसूत्रम्

संवत्सरं व्रतानुष्ठानम्, उपाकरणविसर्गयोरुदकोपस्पर्शनं स्थालीपाकहोमश्च, विसर्गे विशेषः, पर्वदक्षिणाः, आचार्यादिभोजनम्

**[1]गोदानिकव्रातिकादित्यव्रतौपनिषदज्यैष्ठसामिकाः संवत्सराः ॥**

**तेषु सायं प्रातरुदकोपस्पर्शनम् ॥**

**[2]ऐन्द्रस्थालीपाकस्तस्य जुहुयात् 'ऋचं साम यजामहे' इत्येतयर्चा 'सदसस्पतिमद्भुतम्' इति चो( ? वो )भाभ्यां वा ॥**

**अनुप्रवचनीयेष्वेवम् ॥**

**सर्वत्र 'अवार्षम्, तदशकम्, तेनारात्सम्, उपागाम्' इति मन्त्रविशेषः ॥**

**आग्नेयेऽज ऐन्द्रे मेषो गौः पावमाने पर्वदक्षिणाः ॥**

**प्रत्येत्याऽऽचार्यं सपर्षत्कं भोजयेत् ॥**

**सब्रह्मचारिणश्चोपसमेतान् ॥**

## खादिरगृह्यसूत्रम्

वस्त्रालंकारावनियतौ, व्रतिनो नियमाः, संवत्सरं व्रतचर्या, विसर्गेऽनुप्रवचनीयहोमः

**[3]अनियुक्तं त्वहतम् ॥**

अनियुक्तम् अनियतम्। तुशब्दोऽवधारणार्थः। अहतमेवानियतम्, सूत्रचर्ममेखलादण्डा नियता एव। असत्यवधारणे कृतकार्यतया तेषामपि निवृत्तिराशङ्क्येत। अतः पुराणानि त्यक्त्वा नवानि गृह्णीयात्। रुद्रभा.

**तथाऽलंकारः ॥**

अनियत इत्यर्थः। रुद्रभा.

**अधःसंवेशी ॥**

अथ व्रतिनो नियमा उच्यन्ते– अध इति। खट्वादिनिषेधकः। रुद्रभा.

**अमधुमांसाशी स्यात् ॥**

स्पष्टम्। रुद्रभा.

**मैथुनक्षुरकृत्यस्नानावलेखनदन्तधावनपादधावनानि वर्जयेत् ॥**

क्षुरकृत्यनिषेधो नोपरिच्छेदनस्य। दृष्टार्थस्य स्नानस्य निषेधः, न विहितस्य। अवलेखनं स्पृश्यमलापकर्षणम्। पादधावनं नखकृन्तनादि। रुद्रभा.

**नास्य कामे रेतः स्कन्देत् ॥**

कामे निमित्ते रेतःस्कन्दनं न कुर्यात्। अनेनैव सिद्धे मैथुननिषेधो दोषभूयस्त्वसूचनार्थः। रुद्रभा.

**न गोयुक्तमारोहेत् ॥**

गवा युक्तं रथादि। रुद्रभा.

**न ग्राम उपानहौ ॥**

उपानहौ ग्रामे वर्जयेत्, न बहिर्निषेधः। एषु सूत्रेष्वधिकवचनानि सजातीयस्मृत्युक्तोपसंग्रहणार्थानि। रुद्रभा.

**मेखलाधारणभैक्षचर्यदण्डसमिदाधानोपस्पर्शनप्रातरभिवादा नित्यम् ॥**

धारणग्रहणं वस्त्रसूत्रचर्मणामुपसंग्रहणार्थम्। भैक्षचर्यमुक्तेन प्रकारेण। चर्यग्रहणं सायंप्रातर्भैक्षभोजनार्थम्। दण्डेत्यस्यानन्तरं धारणशब्दोऽध्याहर्तव्यः। विनष्टानप्सु प्रास्यान्यान्मन्त्रेण गृह्णीयात्। 'मेखलामजिनं दण्डमुपवीतं कमण्डलुम्। अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत् ॥' ( मस्मृ. २।६४ ) इति मनुवचनाच्च। समिदाधानं 'देव सवितः प्रसुव' इति लौकिकेऽग्नौ परिचरणतन्त्रेण सायं प्रातश्च। आधानग्रहणं व्याहृतिभिश्च समस्ताभिः समिदाधानार्थम्। याज्ञिया एव समिधः। उपस्पर्शनं स्नानम्। प्रातरभिवादो गुरूणां कर्णसमौ बाहू उद्धृत्य व्यत्यस्तेन पाणिना दक्षिणेन दक्षिणं पादं गृह्णीयात् सव्येन च सव्यम् 'अभिवादये विष्णुशर्मनामाऽहमस्मि भोः' इतिवद्यथानाम। नित्यमिति समाप्तेष्वपि व्रतेष्वा स्नानादनुवृत्त्यर्थम्। एते सर्वव्रतसाधारणाः 'अनियुक्तम्' इत्यारभ्योक्ताः। रुद्रभा.

---

(१) गोगृ. ३।१।२८–२९.
(२) गोगृ. ३।२।४८–५३.
(३) खागृ. २।५।८–१७, ३४.

**गोदानव्रातिकादित्यव्रतौपनिषदज्येष्ठसामिकाः संवत्सराः ॥**

संवत्सरं च कर्तव्या इत्यर्थः । रुद्रभा.

**अनुप्रवचनीयेषु 'ऋचं साम, सदसस्पतिम्' इति चाऽऽज्यं जुहुयात् ॥**

प्रवचनात् पश्चात् क्रियते इत्यनुप्रवचनीयहोमः। चकारः समुच्चयार्थः उपनयनविसर्गेऽस्माभिरुक्तानाम्। आज्यमिति प्रतिनिधिवर्जनार्थम् अलाभेऽपि कालोत्कर्ष एवेति । संहिताश्रवणरहस्यविधयो गृह्यविशेषाद्द्रष्टव्याः । सर्वानुसारेणास्माभिरुपनयनमुक्तम् । अथोक्तेन प्रकारेण गोदानव्रतमुपाकृत्य तस्मिन् संवत्सरे 'अग्न आ याहि' इत्यादि 'वर्मीव धृष्णवा रुज' इत्यन्तमृचमध्याप्य 'ओग्नायी' इत्यादीनि चाऽऽग्नेयैन्द्रपावमानानि पर्वाण्यध्यापयीत । पूर्वे संवत्सरे उपनयनविसर्गवद्विसर्गं कुर्यात् । नात्र प्रागुदयात् गमननियमः । वामदेव्येन प्रवेशनिष्क्रमणे । वामदेव्यादीनि श्रेयोऽन्तानि *सत्तहादीनि कल्माषान्तानि च निवर्तन्ते । गायत्रस्य स्थाने आग्नेयैन्द्रपावमानानि पर्वाणि श्रावयेत् । अशक्तश्चेत् पर्वाद्यन्तानि सामानि, 'सोमं राजानम्', 'इत एत उदारुहन्', 'स पूर्व्यो महोनाम्', 'अभि त्रिपृष्ठम्' इति च श्रावयेत् । अनुप्रवचनीये 'गोदानव्रतमचारिषम्' इति मन्त्रविकारः । $अथ व्रातिकमुपनयनवत्सर्वं कुर्यात् । व्रातिकमिति मन्त्रविकारः । तस्मिन् संवत्सरे, 'इन्द्र ज्येष्ठं न आ भर' इत्यादि, 'सुप्रपाणा इह स्त' इत्यन्तमृचमध्याप्यार्कद्वन्द्वव्रतानि छान्दसानि त्रीणि पर्वाण्यध्यापयीत। आदित्यव्रताभावपक्षे शुक्रियमपि। पूर्वे संवत्सरे उपनयनविसर्गवद्विसर्गं कुर्यात् । गायत्रस्य स्थाने छान्दसानि पर्वाणि श्रावयेत् । अशक्तौ गोदानव्रतवत् । व्रातिकादित्यव्रतमहानाम्निकौपनिषदेषु नास्ति संहिताहोम इति केचित्। श्रावणवत्पूर्वो होमः संहिताध्ययनार्थत्वात् संहिताहोम इत्युच्यते । इमं होमं हुत्वाऽऽग्नेयादीनां पर्वणां चाध्ययनं संहिताध्ययनमित्युच्यते। व्रातिकव्रतानन्तरमादित्यव्रतम्, तस्य व्रातिकवदुपाकरणम्। तस्मिन् संवत्सरे शुक्रियाध्ययनं तदृग्भिः सह । उपनयनविसर्गवद्विसर्गं कुर्यात् । गायत्रस्य स्थाने शुक्रियाणि । अशक्तौ पूर्ववत् । 'आदित्यव्रतम्' इति मन्त्रविकारः । अथ महानाम्निकस्योपनयनवदुपाकरणविसर्गौ । 'महानाम्निकव्रतम्' इति मन्त्रविकारः। गायत्रस्य स्थाने शक्वर्यः। शेषमुक्तम् । अथोपनयनवदौपनिषदव्रतम् । 'उपनिषद्व्रतम्' इति मन्त्रविकारः। गायत्रस्य स्थाने 'देव सवितः' इत्यादि 'न च पुनरावर्तते' इत्येवमन्तं स्यात्। कृत्स्नश्रवणाशक्तौ यजुरोङ्कारादित्यप्राणानामाद्यन्तानि वाक्यानि सोमं राजादीनि च श्रावयेत्। अथ ज्येष्ठसामव्रतमुपनयनवत्सर्वम्। 'ज्येष्ठसामव्रतम्' इति मन्त्रविकारः 'मौतिकव्रतम्' इति वा। गायत्रस्य स्थाने आज्यदोहादित्रयम्। अथ ब्रह्मसामव्रतमेवम्। रुच्या चरणकालनियमः। 'ब्रह्मसामव्रतम्' इति मन्त्रविकारः। गायत्रस्य स्थाने तवश्यावीयम् 'ऊर्क' इत्यादिः 'हिंवम्' इत्यन्तं तवश्यावीयमिति केचित् । इलान्दं पञ्चानुगानमिति केचित्। शाखान्तरस्थमित्यन्ये। गोदानादीनि चत्वार्येव व्रतानि, 'चत्वारि वेदव्रतानि' इति गौतमवचनात्। आदित्यव्रताभावपक्षे औपनिषदसहितानि चत्वारि स्युः। व्रतचतुष्टयपक्षे तूपनयनं सर्वार्थत्वान्न गण्यते व्रतत्वेन । व्रतापेक्षाणां वेदभागानां व्रतकालेऽध्ययनाशक्तौ व्रतकालोत्कर्षः कार्यः। समाप्य वा व्रतनियमकालमधीयीत। इत-

---

* सत्तहशब्द एव साधुः, न त्वानन्दाश्रमपण्डितैः सूचितः सत्ताहशब्दः । तथा चाऽऽर्षेयं ब्राह्मणम्— 'जमदग्नेश्च सप्तहम्' (आर्षेयब्रा. ३।१३) इति ।

$ एतद्वाक्यम् अग्रिमाणि च 'व्रातिकव्रतानन्तरमादित्यव्रतम्, अथ महानाम्निकम्, अथोपनयनवदौपनिषदम्, अथ ज्येष्ठसामव्रतम्, मौतिकव्रतमिति वा, अथ ब्रह्मसामव्रतमेवं कुर्यात्' इति रुद्रस्कन्दवाक्यानि आनन्दाश्रमेण द्राह्यायणगृह्यसूत्रवृत्तित्वेन मुद्रिते खादिरगृह्यसूत्रसहितरुद्रस्कन्दवृत्तिपुस्तके सूत्रत्वेन संगृहीतानि, पञ्चत्रिंशत्वादिना संख्यातानि च, तत्तदुत्तरग्रन्थश्च तत्तद्वृत्तित्वेन संगृहीतः । नेदं मनोरमम् । नेमानि सूत्राणि, अपि तु रुद्रस्कन्दवाक्यान्येवेति निर्णीयते, अन्यथा गोदानव्रतानुक्तेः सूत्रे न्यूनतापत्तेः, अन्त्यसूत्रे 'एवं कुर्यात्' इतीतिकर्तव्यतोक्तिप्रतिज्ञानेऽपि तदनुक्तेः साकाङ्क्षतापत्तेः, उत्तरसूत्रव्याख्यानादौ 'अथ प्रकृतमनुसरामः' इतिरुद्रस्कन्दवचनासंगत्यापत्तेश्च ।

रस्य तु वेदभागस्य न कालनियमः, तथा वेदाङ्गानाम्। रुद्रभा.

## जैमिनिगृह्यसूत्रम्

संवत्सरं व्रतचर्या, सायंप्रातः स्नानम्, समिदाधानम्, अध्यापनीयवेदभागाः

[1]**गौदानिकव्रातिकौपनिषदाः संवत्सराः ॥**

गोदानसमाप्तिकं पवमानपर्यन्ताध्ययनमत्र गोदानशब्देनोच्यते। व्रतानीति आरण्यपर्वादौ (? दि)। दशाध्यायी उपनिषदिति। तवशाव्य (? श्यावीय) व्याहृतिसामगायत्राणि (?) यदुपनयनादि षट् द्वादश वा वर्षान् यावदध्ययनकालं वा ब्रह्मचर्यमिति वक्ष्यमाणकालमध्ये गोदानसमावृत (? नसामव्रत) सामोपनिषत्साम्नामध्ययनार्थास्त्रयः संवत्सरा भवन्ति। औपनिषदस्तु समानव्रतत्वादत्रोपात्तः वक्ष्यमाणादादित्यव्रातिकात् परो विज्ञातव्यः। इदं च सूत्रं तत्तत्संवत्सरानुष्ठेयव्रतविधानार्थम्। श्रीव्या.

**तेषु सायंप्रातरुदकोपस्पर्शनम् ॥**

तेषु त्रिषु संवत्सरेषु उदकोपस्पर्शनं स्नानम्। श्रीव्या.

**नानुपस्पृश्य भोजनं प्रातः ॥**

अनुपस्पृश्य अस्नात्वा प्रातर्भोजनं न कुर्यात्। भैक्षचरणादि त्वस्नातेनापि कार्यमिति भावः। दिनचतुर्भागेऽत्र प्रातःशब्दः। श्रीव्या.

**सायमुपस्पृश्याऽऽ समिदाधानात् ॥**

न भुञ्ज्यादिति शेषः। भैक्षचरणं तु स्नानात्प्राक् समिदाधानादनन्तरमन्तरा वा स्नानसमिदाधानयोर्भवति। प्रदोषान्ते दिवसचतुर्भागेऽत्र सायंशब्दः। श्रीव्या.

**अरण्यात्समिधमाहृत्याऽऽदध्यात् ॥**

'सदा सायं समिदाधानम्' इति वक्ष्यमाणस्यायमेतद्व्रतविषयो गुणविधिः। इदं व्रतं गौदानिकनिमित्तत्वेन त्रित्वं गौदानिकं व्रातिकमौपनिषदमिति तत्तत्संज्ञां च लभते। तथा च संवत्सरत्रयस्याऽऽदौ त्रिरादेशनमन्ते त्रिः समाप्तिश्च, 'तदेतद्व्रतादेशनं सर्वत्र' इत्यादिविधेः।

(१) जैगृ. १।१६.

तत्र व्रतादौ 'अग्ने व्रतपते' इत्यादिमन्त्रेषु 'गौदानिकं व्रतं चरिष्यामि' अन्ते 'अचारिषम्' इत्यादि तत्तन्नामनिर्देशः। उपनयनादिष्टं सामान्यव्रतं तु सर्वेष्वेष्वनुसरति। एवमुत्तरत्र प्राह्यम्। अत्र औपासनवत्पूर्वोत्तरमन्त्र(? तन्त्र)मध्ये व्रतसमिदाधानं व्रतादौ तु पूर्वपरिषेकात्प्रागुपनयनवत् यज्ञोपवीतमेखलाजिनदण्डधारणं च प्रायः कुर्वन्ति। उपाकृतेः प्रागेव गौदानिकादेशः। श्रीव्या.

**व्रातिके व्रतपर्वाऽऽदित्यव्रातिके शुक्रियाण्यौपनिषद उपनिषदं श्रावयेत् ॥**

तस्मिंस्तस्मिन्संवत्सरे व्रते समाप्ते सति श्रावयेत् अध्यापयेदित्यर्थः। इति गौदानिकादीनि चत्वारि समाप्तानि। श्रीव्या.

## वैखानसगृह्यसूत्रम्

पुण्याहवाचनम्, प्रतिव्रतमादौ सावित्रव्रतोपाकरणविसर्गौ, पूर्वोपवीतादित्यागो नवोपवीतादिधारणं च, पूर्वव्रतविसर्गानन्तरमुत्तरव्रतबन्धः, व्रतकाले स्वाध्यायसूक्तकाण्डाध्ययनम्

[1]**अथ पारायणव्रतानि।.... शिष्यमाचान्तं पुण्याहं वाचयित्वाऽग्निं परिस्तीर्य प्राङ्मुखमुपवेशयति। तस्योत्तरे माता ब्रह्मचारी वाऽऽसीत। धातादिपूर्वं सावित्रव्रतसूक्तम् 'अग्ने, वायो, इन्द्र, आदित्य, व्रतानाम्' इत्यूहित्वा 'अचारिषम्, विसर्जयामि' इति सावित्रव्रतविसर्गं हुत्वा पूर्वाणि सूत्रदण्डादीन्यप्सु विसृज्य स्नाताय नवान्युपवीतादीनि पूर्ववद्दत्वा तमग्निरभ्युक्ष्य §...शिष्येण व्रतं बन्धयति वर्षे वर्षे। तथैव व्रतविसर्गं हुत्वा तत्तद्व्रतं विसृज्यान्यद्व्रतं बध्नाति ॥**

**‡... तत्तद्व्रतदैवत्यं स्वाध्यायसूक्तं तत्तत्काण्डं चाधीयीत ॥**

§ अतः परमनुष्ठेयं तत्तद्व्रतविशेषहोमादि तत्तद्व्रतप्रकरणे द्रष्टव्यम्।

‡ तत्तद्व्रतस्वाध्यायसूक्तविशेषास्तत्तद्व्रतप्रकरणे द्रष्टव्याः।

(१) वैगृ. २।९.

## देवलः

कालातिक्रमणे प्रायश्चित्तविधानं कालमतिक्रम्याधीतस्य पुनरध्ययनं च

[1]कालातिक्रमणे कुर्यात्प्रायश्चित्तं विधानतः ।
कृच्छ्रं द्वादशरात्रं तु हुत्वा चाऽऽज्याहुतीः शतम् ॥
[2]अष्टाविंशतिमष्टौ वा क्रमात्कुर्याद्व्रतानि हि ।
व्यत्यये यावदभ्यस्तं वेदं तावत्पुनः पठेत् ॥

अयं च होमो गायत्र्या, 'प्रत्येकं कृच्छ्रमेकैकं चरित्वाऽऽज्याहुतीः शतम् । हुत्वा चैव तु गायत्र्या स्नायादित्याह शौनकः ॥' इत्याश्वलायनोक्तेः ।

संर. ३५६–३५७

## अत्रिः

अशक्तौ प्रायश्चित्ते प्रतिनिधिः, प्रक्रान्तव्रतलोपे प्रायश्चित्तविधानम्

[3]पिता भ्राता परो वाऽपि प्राजापत्यत्रयं चरेत् ॥
[4]महापगाप्सु संस्नाप्य पाहि नो अग्न आहुतीः ।
पञ्चभिरिदमज्ञातव्रतलोपे कृते सति ॥

( १ ) अत्र संवत्सरमध्ये व्रतलोपे प्रायश्चित्तमाहात्रिः– पितेति । प्रपा. २७७

( २ ) बटोरशक्तौ पित्रादीनामनुष्ठानम्, शक्तौ तु तेनैव कार्यम् । यथाऽऽह शौनकः– 'प्रत्येकं कृच्छ्रमेकैकं चरित्वाऽऽज्याहुतीः शतम् । हुत्वा चैव तु गायत्र्या स्नायादित्याह शौनकः ॥' इति । अत्र प्रायश्चित्ते स्नानसमानकर्तृकत्वश्रवणाद्बटोरेव कर्तृत्वम् । प्रायश्चित्तोत्तरकालमेतानि समावर्तनेन सह कर्तव्यानीति प्रयोगपारिजाते । तत्र मूलं मृग्यम् । संम. ४२

(१) प्रपा. २८९ ; संप्र. ५६२ ; कृम. ९८६ तु हुत्वा चा ( चरित्वा ) उत्त. ; संर. ३५६.

(२) प्रपा. २८९ ; संप्र. ५६२ ; कृम. ९८६ मष्टौ ( ष्टौ ) हि ( च ) पू. ; संर. ३५६ मष्टौ ( ष्टौ ).

(३) प्रपा. २७७ ; संम. ४२ ; संर. ६५२ भ्राता प ( भ्राताऽप ).

(४) प्रपा. २७७.

## आश्वलायनः

व्रतेषूपनयनेतिकर्तव्यतातिदेशः, व्रतारम्भावसानयोर्वपनम्, बहिर्ग्रामं व्रतादेशनम्, व्रतकालाः

[1]व्रतेषु परिदानान्ता क्रिया ब्रह्मौदनं दिवा ।
कुर्यादेव यथान्यायं दीक्षादि न विधीयते ॥
[2]सर्वत्र वपनं शस्तं तद्व्रतेषूपनीतिवत् ।
ग्रामान्निष्क्रम्य कार्याणि व्रतानां श्रावणं द्विजैः ॥
[3]वापनादिप्रदानान्तं कृत्वा कर्म व्रतेषु तु ।
तद्व्रतं वर्षमात्रं च चरस्वेति विनिर्दिशेत् ॥
[4]चरिष्यामीति शिष्यस्तु व्रतनाम्ना वदेद्गुरुम् ।
दिवा ब्रह्मौदनं कृत्वा चरेत्संवत्सरं व्रतम् ॥
[5]देवतायतनं गत्वा नदीतीरमथापि वा ।
क्षेत्रं वनं वा तद्ग्राह्यं प्रथमं श्रावयेद्व्रतम् ॥
[6]त्रयं त्रयोदशाब्दादि प्रतिवर्षं चरेद्द्विजः ॥
प्रतिवर्षमशक्यं चेन्मासं पक्षमथापि वा ।
चरेत्तद्द्वादशाहं वा गोदानं चाब्दमात्रकम् ॥
दोषनिर्हरणार्थाय मङ्गलस्य च वृद्धये ।
क्रियते वपनं मर्त्यैर्दोषा लोमस्ववस्थिताः ॥
कायक्लेशात्तपोवृद्धिर्भवत्येव तदिच्छताम् ।
अथाप्युपवसेन्मर्त्यः फलमानन्त्यमृच्छति ॥
केशानां धारणं कृच्छ्रं स्नानादिषु नृणामिह ।
केशान्धारयतां तस्मान्नयत्येव महत्फलम् ॥

(१) आश्वस्मृ. ११।१८७.

(२) आश्वस्मृ. ११।१९१ वपनं ( वचनं ) नीतिवत् ( नीतिषु ) ; प्रपा. २७४ पू. ; संप्र. ५५९ पू.

(३) आश्वस्मृ. ११।१९२ वापना ( वपना ) तृतीयचरणे ( एतद्व्रतं वर्षमात्रं ) ; प्रपा. २७४ तु ( च ) ; संप्र. ५५९.

(४) आश्वस्मृ. ११।१९३ द्वितीयचरणे ( व्रतानामावदेद्गुरुः ) ; प्रपा. २७४ द्वितीयचरणे ( व्रतं नाम्नीव्रते गुरुः ) ; संप्र. ५५९ पू.

(५) आश्वस्मृ. ११।१९४ तद्ग्राह्यं ( तद्ग्राम्यं ) ; प्रपा. २७४.

(६) आश्वस्मृ. ११।२५८–२५९, २६२–२६८.

व्रतबद्धे न छिन्दन्ति केशलोमनखाम्बराः ।
ते विन्दन्ति महत्पुण्यं मांसादीनां च वर्जनात् ॥

व्रतार्थमपि केशान्ये धारयन्ति मनीषिणः ।
न्यूनातिरिक्ततो दोषं यस्तेषां कलौ भवेत् ॥

तत्तद्व्रतस्यावसाने लोम्नां वपनमिष्यते ।
आयुः प्रवर्धते तेषां ये नियत्या भ्रियन्ति हि ॥

श्रौते स्मार्ते च वपनं तस्माच्छस्तं हि केषुचित् ।
केषुचिद्धारणं शस्तं तत्र तत्रोदितं यथा ॥

## लघ्वाश्वलायनः

उपनयनेतिकर्तव्यतातिदेशः, अनुप्रवचनीयहोमे देवताजापः, दण्डादिधारणम्, आदित्यदर्शनम्, ब्राह्मणभोजनम्

[1]महानाम्नीव्रतं कुर्यात्पूर्णाब्दे चोत्तरायणे ।
शुक्लपक्षे शुभेऽह्नि स्यादुपनायनवच्च हि ॥
महाव्रतं द्वितीये तु भवेत्तत्पूर्ववच्च हि ।
संपूर्णे च तृतीयेऽब्दे तथा चोपनिषद्व्रतम् ॥
मासे पूर्णे तथा कुर्यात्क्रमाच्चैतद्व्रतत्रयम् ।
कुर्यात्परिददाम्यात( ? म्यन्त )मुपनायन-
होमवत् ॥
चर्वाहुतित्रयं हुत्वा जुहुयात्तिलमिश्रितम् ।
अनुप्रवचनीयोक्ता देवताश्च ततः स्मृताः ॥
महानाम्नीभ्यः स्वाहेति साविव्या स्नान-
मिष्यते ।
महाव्रताय चाथोपनिषदे तत्र तत्र तु ॥
वस्त्रादीनि तथाऽन्यत्र दत्त्वा चाऽऽज्याहुतीरथ ।
चर्वाहुतित्रयं हुत्वा मौञ्जीं दण्डं च धारयेत् ॥
ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत् ।
विद्मा मघवनाथान्त(?) इत्यारम्भे जपेदथ ॥
नत्वा गुरुमथाऽऽदित्यमीक्षयेद्ब्रह्मचारिथ ।
उक्त्वाऽऽचार्यमधीहीति भोजयेच्छक्तितो
द्विजान् ॥

## दत्तात्रेयः

व्रतेषु उपाकर्मेतिकर्तव्यतातिदेशः

[2]वेदव्रतानि चत्वारि कुर्यात्कालस्तु चौलवत् ।
उपाकर्मवदिच्छन्ति व्रतेष्वन्येषु चैव हि ॥

## स्मृत्यन्तरम्

मेखलादीनां पूर्वेषां त्यागो नवानां धारणं च

[3]मेखलामजिनं दण्डं वस्त्रं यज्ञोपवीतकम् ।
पूर्वोपयुक्तमुत्सृज्य धारयेयुर्नवं व्रते ॥

## स्मृत्यर्थसारः

नवयज्ञोपवीतधारणं पूर्वत्यागश्च, वस्त्रत्यागानियमः, सावित्रीव्रतान्ते ब्राह्मणादिभोजनम्, आरण्यकव्रतेषु वपनं व्रतान्ते भैक्ष्यपूर्वकभोजनम्, व्रतलोपप्रायश्चित्तम्

[3]सर्वत्र व्रतान्ते नवानि यज्ञोपवीतानि धृत्वा पूर्वाणि त्यजेत् । वस्त्राणां त्यागानियमः ॥

उपनयनव्रतानन्तरं सावित्रीव्रतमुपाकर्मान्तमारण्यकव्रतानि च तथैव ॥

[4]उपनयनादुपाकर्मान्तं सावित्रीव्रतम् । तत्संपूर्त्यर्थं विप्रसंबन्धिबान्धवभोजनं शक्त्या कार्यम् । ततो वेदाब्दव्रतं ततश्चाऽऽरण्यकव्रतानि प्रतिव्रतं वपनं च । व्रतान्ते भोजने भैक्ष्यमाहार्यम् ॥

[5]एतेषु व्रतेषु लोपे तारतम्येन त्रीन् षड्वा द्वादश वा प्राजापत्यांश्चरित्वा पुनश्च व्रतं प्रारभेत ॥

(१) लघ्वाश्वस्मृ. ११।१–८.

(१) मुक्ता. ११७.
(२) मुक्ता. ३५.
(३) स्मृसार. ६.
(४) स्मृसार. ६; मुक्ता. ११७ ( उपनयनादुपाकर्मान्तं सावित्रीव्रतं ततो वेदव्रतारण्यकव्रतानि प्रतिव्रतमुपनयनम् ); आन. १५४ ( उपनयनादि उपाकर्मान्तः सावित्रीव्रतं ततो वेदव्रतारण्यकव्रतानि प्रतिव्रतं वपनम् ).
(५) स्मृसार. ६; गभा. २३४ (महानाम्न्यादिव्रतेषु लुप्तेषु तारतम्येन त्रीन् षट् द्वादश वा कृच्छ्रान् कृत्वा पुनर्व्रतं प्रारभेत); प्रर. ९४ गभावत्; वम. ६४ गभावत्; मुक्ता. ११७ ( एतेषां लोपे त्रीन् वा षड् वा द्वादश वा

## शौनककारिकाः

व्रतेषु केशधारणम्, व्रतलोपप्रायश्चित्तम्

[1]सर्वासु व्रतचर्यासु प्रसिद्धं केशधारणम् ॥

[2]व्रतानि विधिवत्कृत्वा स्वशाखाध्ययनं चरेत् ।
अकृत्वाऽभ्यस्यते येन स पापी विधिघातकः ॥

[3]प्रत्येकं कृच्छ्रमेकैकं चरित्वाऽऽज्याहुतीः शतम् ।
हुत्वा चैव तु गायत्र्या स्नायादित्याह शौनकः ॥

(१) एतत्समावर्तनं पूर्वोक्तमहानाम्न्यादिव्रतचतुष्टयस्य लोपपक्षे शुभे दिने तानि प्रायश्चित्तपूर्वकं तस्मिन्नेव दिवसे कृत्वा कर्तव्यम्, अधिकारिणा कर्तव्यत्वाद्वचनाच्च । तत्र भगवान् शौनकः– व्रतानीति ।

प्रपा. २८८–२८९

(२) अत्र प्रायश्चित्ते स्नानसमानकर्तृकत्वश्रवणाद्बटोरेव कर्तृत्वम् । प्रायश्चित्तोत्तरकालमेतानि समावर्तनेन सह कर्तव्यानीति प्रयोगपारिजाते । तत्र मूलं मृग्यम् ।

† संम. ४२

---

कृच्छ्रान् चरित्वा पुनर्व्रतं कुर्यात् ) ; संको. १६६ (महानाम्न्यादिव्रतेषु लुप्तेषु तारतम्येन त्रीन् षट् द्वादश वा कृच्छ्रान् कृत्वा पुनर्व्रतमारभेत) ; आन. १६४ मुक्तावत् ; संग. ७०४ गमावत् .

(१) शौका. १० पृ. ५२ ; प्रपा. २८३ ; संप्र. ५६१ ; संग. ७३३.

(२) शौका. ३५ पृ. ५४ ; प्रपा. २८९ ; संप्र. ५६१ ; चम. ६५ ; सिन्धु. ९८६ विधिवत् (विधिना) ; संग. ७३३.

(३) शौका. ३६ पृ. ५४ ; प्रपा. २८९ ; संप्र. ५६१ ; चम. ६६ ; संम. ४२ ; सिन्धु. ९८७ ; संग. ७३३ ; संर. ३५७ आश्वलायनः .

## कुमारिलकारिकाः

व्रतेषु केशधारणम्

[1]व्रतेष्वेतेषु सर्वेषु प्रसिद्धं केशधारणम् ॥

## कपर्दिकारिकाः

होमविधानम्, शुक्रियभिन्नेषु देवतोपस्थाननिषेधः, ब्राह्मणतर्पणम्

[2]ऋषीन्मुखान्ते जुहुयाद्व्रतेषु
सूक्तोपहोमान् सदसस्पतिं च ।
उपस्थितिश्चापि च देवतानां
जयादयो ब्राह्मणतर्पणं च ॥

व्रतेषु चापरो विधिर्न सूक्तचित्तमादिकम् ।
उपस्थितिर्न देवतागणस्य शुक्रियादृते ॥

---

† संर. संमवत् ।

(१) कुका. १।१६।६ ; प्रपा. २८३.

(२) कका. ३।७, १२.

# महानाम्नी ( शाक्वर ) व्रतप्रयोगः

## आश्वलायनश्रौतसूत्रम्

**बहिर्ग्रामं स्थालीपाकश्रपणम्, व्रतलोपप्रायश्चित्तम्, स्थालीपाकाशनम्, आदित्योपस्थानम्, संकल्पितकालं वाग्यमनमस्वपनं च, महानाम्न्यनुवचनम्, आदित्येक्षणभूम्युपस्पर्शने**

**[1]उदगयने पूर्वपक्षे श्रोष्यन्बहिर्ग्रामात्स्थालीपाकं तिलमिश्रं श्रपयित्वाऽऽचार्याय वेदयीत ॥**

आचार्येणानूक्तं श्रोष्यन्ब्रह्मचार्युदगयन आपूर्यमाणपक्षे ग्रामाद्बहिर्निष्क्रम्य शुचौ देशे होष्यद्धर्मेण पार्वणवत्तिलमिश्रं स्थालीपाकं नवभ्यो देवताभ्यस्तूष्णीं निर्वापप्रोक्षणे कृत्वा श्रपयेत्, तत आचार्याय वेदयीत विज्ञापयीतेत्यर्थः । $ गानाद्व.

**[2]विदिते व्रतसंशयान्पृष्ट्वा लघुमात्राश्चेदापत्कारिताः स्युरन्वारब्धे जुहुयात्– 'अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः । तस्मै जुहोमि हविषा घृतेन मा देवानां मोमुहद्भागधेयं मो अस्माकं मोमुहद्भागधेयं स्वाहा ॥ या तिरश्ची निपद्यतेऽहं विधरणी इति । तां त्वा घृतस्य धारया यजे संराधनीमहं स्वाहा ॥ यस्मै त्वा काम कामाय वयं सम्राड्यजामहे । तमस्मभ्यं कामं दत्त्वाऽथेदं त्वं घृतं पिब स्वाहा ॥ अयं नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन् । अयं शत्रूञ्जयतु जर्हृषाणोऽयं वाजं जयतु वाजसातौ स्वाहा ॥ असूयन्त्यै चानुमत्यै च स्वाहा । प्रदात्रे स्वाहा' । व्याहृतिभिश्च पृथक् ॥**

विदिते शृतः स्थालीपाक इत्यवगते व्रतसंशयान् व्रतापराधान् पृच्छेत् । ते यदि पृष्टा लघुमात्रात् कारणात् प्रवृत्तिनिमित्तात् आपत्कारिताश्चेत् 'अग्नावग्निः' इत्यादिभिर्जुहुयात्, न प्रायश्चित्तान्तरं कर्तव्यम् । लघुमात्राश्चेदितिपाठे लघुमात्राश्चेद्भवन्ति व्रतापराधा इत्यर्थः । अथ चेत्कामकृतां महान्तश्च व्रतापराधाः, गुरुप्रमाणकं प्रवृत्तिकारणम्, बुद्धिपूर्वं वा करोत्यपराधान्, तत्तदनुरूपं प्रायश्चित्तं कारयित्वा पुनर्व्रतमादिश्य ततः संवत्सरे पूर्ण एवं श्रावयेत् । विदित इति वचनं शृतः स्थालीपाक इति विदित एव व्रतसंशयप्रश्नप्रवृत्त्यर्थम् । अन्वारब्धे ब्रह्मचारिण्याचार्यो जुहुयात् 'अग्नावग्निः' इत्येवमादिभिरत्रैव पठितैर्मन्त्रैर्व्याहृतिभिश्च । पृथगिति समस्तव्याहृतिनिवृत्त्यर्थम् । ‡ गानाद्व.

**[1]हुत्वाऽऽह– 'एतं स्थालीपाकं सर्वमशान' इति ॥**

हुत्वेतिवचनमेतैर्मन्त्रैर्हुत्वा स्विष्टकृतेऽवदाय तमहुत्वैव निधाय ब्रूयात्संप्रेषितव्यमित्येवमर्थम् । 'एतं स्थालीपाकं सर्वमशान' इत्यत्र संप्रैषः । ततश्चरुशेषं ब्रह्मचारी सर्वमश्नीयात् । ‡ गानाद्व.

**भुक्तवन्तमपामञ्जलिपूर्णमादित्यमुपस्थापयेत्– 'त्वं व्रतानां व्रतपतिरसि व्रतं चरिष्यामि तच्छकेयं तेन शकेयं तेन राध्यासम्' इति ॥**

भुक्तवन्तमिति वचनं न केवलमशने संप्रैष एव, अशनमपि कर्तव्यमेवेत्येवमर्थम् । उपस्थापयेदिति 'उपतिष्ठस्वाऽऽदित्यम्' इति ब्रूयादित्येवमर्थम् । ततो ब्रह्मचार्यद्भिः पूर्णाञ्जलिनाऽऽदित्यं मन्त्रेणोपतिष्ठेत । ‡ गानाद्व.

**समाप्य संमील्य वाचं यच्छेत्कालमभिसमीक्षमाणो यदा समयिष्यादाचार्येण ॥**

समाप्यवचनमुपस्थानमन्त्रं समाप्यानन्तरं संमील्य वाचं यच्छेत्, न कालविक्षेपं कुर्यादित्येवमर्थम् ।

---

$ प्रपा. गानाद्ववत् ।

(१) आश्रौ. २।२।१४; प्रपा. २७१.

(२) आश्रौ. २।२।१४; प्रपा. २७१.

‡ प्रपा. गानावृवत् ।

(१) आश्रौ. २।२।१४; प्रपा. २७१.

वाग्यमनं कुर्वन्यस्मिन्काल आचार्येण सह समवायो भवेत्तं कालं मनसा ध्यायन्वाग्यमनं कुर्यात् । § गानावृ.

**एकरात्रमध्यायोपपादनात् ॥**

अयं स काल इत्याह– एकरात्रमिति । ' एकरात्रं कालमेवाऽऽसित्वाऽनन्तरे दिवस आचार्येण सह समवायं गमिष्यामि ' इति ध्यायेत् । कुतः ? अध्यायोपपादनात् । अध्यायः स्वाध्यायः महानाम्नीमन्त्र इत्यर्थः । तस्योपपादनात् । उपपादनम् अन्यमुपेत्य तस्याध्ययनस्य पादनं शिष्यमुपादायाध्यापनमित्यर्थः । एतदुक्तं भवति–य एकरात्राध्ययनेन महानाम्नीरध्येतुं शक्नोति स एकरात्रं ध्यायन्वाग्यमनं कुर्यादिति । § गानावृ.

**त्रिरात्रं वा नित्याध्यायेन ॥**

( १ ) त्रिरात्रं चैवमासीत । यो नित्याध्यायेनाध्येतुं शक्नोति स त्रिरात्रमेवाऽऽसित्वा चतुर्थेऽहन्याचार्येण समवायं गच्छेदित्यर्थः । गानावृ.

( २ ) त्रिरात्रं चैवमासीत यो नित्याध्यायेनाध्येतुं शक्नोति । अध्यायः अध्ययनं नित्यं सततं वा । एतदुक्तं भवति– यो बहुभिरेवाहोभिरध्येतुं शक्नोति स त्रिरात्रमेवाऽऽसित्वा चतुर्थेऽहन्याचार्येण समवायं गच्छेदित्यर्थः । प्रपा. २७२

**तमेव कालमभिसमीक्षमाण आचार्योऽहतेन वाससा त्रिः प्रदक्षिणं शिरः समुखं वेष्टयित्वाऽऽह– ' एतं कालमेवंभूतोऽस्वपन्भव ' इति ॥**

तमेव कालं प्रतिपद्यमान आचार्यो यः कालो ब्रह्मचारिणा संकल्पित इत्यर्थः । अहतेन अनिवसितेन धौतेन वाससा ब्रह्मचारिणः शिरो मुखेन सहितं त्रिः प्रदक्षिणं वेष्टयित्वा यथा न तद्वासः पतेत्तथोपायं कृत्वा ब्रूयादाचार्यः । एतं कालमिति संकल्पितप्रदर्शनार्थत्वात् ' एकरात्रं कालमेवंभूतोऽस्वपन्भव ' इति, ' त्रिरात्रं कालम् ' इति वा । § गानावृ.

**तं कालमस्वपन्नासीत ॥**

§ प्रपा. गानावृवत् ।

यः संकल्पितः कालस्तस्मिन्काले सर्वदाऽस्वपन्भवेद् ब्रह्मचारी । ततो गुरुः स्विष्टकृदादिहोमशेषं समापयेत् । § गानावृ.

**'अनुवक्ष्यमाणेऽपराजितायां दिश्यग्निं प्रतिष्ठाप्यासिमुदकमण्डलुमश्मानमित्युत्तरतोऽग्नेः कृत्वा वत्सतरीं प्रत्यगुदगसंश्रवणे बद्ध्वा ॥**

आचार्याय वेदयीतेति शेषः । द्वितीये चतुर्थे वा दिवसे प्राप्ते आचार्योऽनुवक्ष्यति । तस्मिन्ननुवक्ष्यमाणे सत्यपराजितायां दिशि बहिर्ग्रामाच्छुचौ देशे उल्लेखनादि कृत्वाऽग्निं प्रतिष्ठाप्य तस्योत्तरतोऽस्यादीन्निधाय तस्यैव च प्रत्यगुदग्यो देशस्तस्मिन्वत्सतरीं बध्नाति । यथाऽग्निसमीप उच्यमानः शब्दो वत्सतर्या न सम्यक्श्रूयते तथा बध्नीयात् । एतावत्कर्म ब्रह्मचारिणः स्वभूतः कश्चित्करोति । एतावति कृते आचार्याय वेदयीत । § गानावृ.

**'पश्चादग्नेराचार्यस्तृणेषूपविशेदपराजितां दिशमभिसमीक्षमाणः ॥**

एवं प्रागग्रेषु तृणेषूपविशेत् । § गानावृ.

**ब्रह्मचारी लेपान्परिमृज्य प्रदक्षिणमग्निमाचार्यं च कृत्वोपसंगृह्य पश्चादाचार्यस्योपविशेत्तृणेष्वेव प्रत्यग्दक्षिणामभिसमीक्षमाणः ॥**

मुखगताँल्लेपाञ्शरीरगतांश्च शोधयित्वाऽग्निमाचार्यं च प्रदक्षिणं कृत्वाऽऽचार्यं विधिवदुपसंगृह्य पश्चादाचार्यस्योपविशेत्तृणेष्वेव प्रागग्रेषु प्रत्यग्दक्षिणां दिशमभिसमीक्षमाणः । § गानावृ.

**'पृष्ठेन पृष्ठं संधाय ब्रूयान्मनसा– ' महानाम्नीर्भो ३ अनुब्रूहि ' इति ॥**

पृष्ठं नाम शरीरस्य बहिःप्रदेशः । ब्रह्मचारी स्वपृष्ठदेशेनाऽऽचार्यस्य पृष्ठदेशं संनिधायाऽऽसित्वा मनसैवं ब्रूयात् ' महानाम्नीर्भो अनुब्रूहि ' इति । § गानावृ.

§ प्रपा. गानावृवत् ।

(१) आश्रौ. २।२।१४ ; प्रपा. २७१.

(२) आश्रौ. २।२।१४ ; प्रपा. २७१.

(३) आश्रौ. २।२।१४ ; प्रपा. २७१.

¹'पुनः पृष्ट्वाऽनुक्रोशिने संमील्यैवानुब्रूयात्स-पुरीषपदाभिः ॥

( १ ) अस्मिन्नपि काले व्रतसंशयान्पृष्ट्वा पूर्ववच्चेद् ब्रूयात्स्वयमपि संमील्यैव ताः पुनर्नवर्चः नव च पुरीष-पदानि ताः सर्वाभिरनुब्रूयात् । गानावृ.

( २ ) तस्मिन्नपि काल आचार्यः पुनर्व्रतसंशयान्पृष्ट्वा-ऽनुक्रोशिने अनुतापिने श्रद्दधानाय संमील्यैवाक्षिणी अनु-ब्रूयात् सपुरीषपदाः पुरीषपदैः 'एवा ह्येवैवा ह्यग्ने' इत्यादि-भिर्नवपदैः सहिता महानाम्नीः 'विदा मघवन्विदा गातुम्' इत्येवमाद्याः *तृतीयारण्यकस्यान्ते समाम्नाताः पुनर्नवर्चः नवपुरीषपदान्विताः सर्वाभिः । प्रपा. २७३

²अनूच्योन्मुच्योष्णीषमादित्यमीक्षयेत्– 'मित्रस्य त्वा चक्षुषा प्रतीक्षे मित्रस्य त्वा चक्षुषा समीक्षे'॥

( १ ) इतिकाराध्याहारेण सूत्रच्छेदः । सर्वत्र णिच्प्र-त्यययोगे 'आदित्यमुपतिष्ठस्व' 'आदित्यमीक्षस्व' '¶पिण्डमशान' इत्येवमादिसंप्रैषं ब्रूयात् । गानावृ.

( २ ) अनूच्य अथ शिष्यस्योष्णीषं विमुञ्चेदित्यर्थः । व्रतलोपे पूर्ववत्प्रायश्चित्तं कारयितव्यम् । † प्रपा. २७३

* इदमत्रावधेयम्– आरण्यकीयमहानाम्नीपुरीषपद-ग्रन्थस्य चतुर्थारण्यकरूपत्वस्य वैदिकसंप्रदायप्रसिद्धत्वात् सायणाचार्यादिसंमतत्वाच्च तद्विरुद्धा 'तृतीयारण्यकस्यान्ते समाम्नातास्तु या ऋचः' इति शौनकोक्तिस्तन्मूलेयं पारि-जातोक्तिश्च चिन्तनीया । यद्यप्यार्षत्वाच्छौनकवचनं 'तृतीया-रण्यकस्य अन्ते अवसाने सति, चतुर्थारण्यके इत्यर्थः' इति कथंचित्संगतिमापाद्येत, तथापि उपाकरणप्रयोगे पूर्वो-त्तरारण्यकारम्भसंदष्टस्य 'विदा मघवन् विदा' इत्यारण्य-कांशस्याऽऽरण्यकारम्भरूपत्वे निर्णीततात्पर्यकः 'इति पञ्चा-रण्यकम्' इति तत्रैवोक्तवांश्च पारिजातकारो नैवं संमुग्धं वक्तुमर्हतीति ।

¶ पिण्डपितृयज्ञे 'पत्नीं प्राशयेत्' इत्यत्रेत्यर्थः ।

† शेषं गानावृवत् ।

(१) आश्वौ. २।२।१४ ; प्रपा. २७१.

(२) आश्वौ. २।२।१४ ; प्रपा. २७१.

¹'मित्रस्य चक्षुषाऽनुवीक्षे' इति दिशः ससंभाराः । पुनरादित्यं 'मित्रस्य त्वा चक्षुषा प्रतिपश्यामि योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तं चक्षुषोर्हेतुर्ऋच्छतु' इति । भूमिमुपस्पृशेत्– 'अग्न इळा नम इळा नम ऋषिभ्यो मन्त्रकृ-द्भ्यो मन्त्रपतिभ्यो नमो वो अस्तु देवेभ्यः, शिवा नः शंतमा भव सुमृळीका सरस्वति । मा ते व्योम संदृशि ॥ भद्रं कर्णेभिः शृणुयाम देवाः, शं न इन्द्राग्नी भवतामवोभिः, स्तुषे जनं सुव्रतं नव्यसीभिः, कया नश्चित्र आभुवत्' इति तिस्रः 'स्योना पृथिवि भव' इति ॥

अग्निप्रभृतिसंभारैः सहिता दिशः ससंभाराः । 'मित्रस्य' इत्यनेन मन्त्रेण ब्रह्मचारी ईक्षेत । गुरुणा पुनः 'आदित्य-मीक्षस्व' इत्युक्ते 'मित्रस्य त्वा चक्षुषा' इत्यनेन मन्त्रेण पुनरादित्यमीक्षेत ब्रह्मचारीत्यर्थः । प्रपा. २७३

## कौषीतकिगृह्यसूत्रम्

महानाम्नीरुभयतः पाठनीया मन्त्राः,
टीकायां सविस्तरः प्रयोगः

²शाक्वरीणां तु पूर्वम् ॥

'प्रत्यस्मै पिपीषते, यो रयिवो रयिन्तमः, त्यमु वो अप्रहणम्' इति त्र्यस्तृचाः 'अस्मा अस्मा इदन्धसः' इति, 'एवा ह्यसि वीरयुः' इत्यभितः शाक्वरीणाम् ॥

शाक्वरव्रतं वक्ष्यामः । उदीक्षणिकां कृत्वा ततस्त्रि-रात्रेऽहोरात्रे वाऽतीते उपनयनकर्म पूर्ववत्कर्तव्यम् । 'मम व्रते हृदयं ते' इत्यस्य मन्त्रस्यान्ते 'बृहस्पति-ष्ट्वा नियुनक्तु मह्यं सांवत्सरिकस्य शाक्वरस्य ब्रह्मचर्यस्य देवदत्त' इति विशेषः । शेषं शुक्रियवत्कर्तव्यम् । ततः संवत्सरे पूर्णे उदीक्षणिकां कृत्वाऽहोरात्रत्रिरात्रयोरन्यतरे निवृत्ते प्रभातवेलायां प्रागुदीचीं दिशं गच्छतः । आम-

(१) आश्वौ. २।२।१४ ; प्रपा. २७१ हेतुर्ऋ (हेंती ऋ).

(२) कौगृ. ६।४।३–४.

मांसं चण्डालं प्रसूतिकामृतुमतीं रुधिरच्छन्नहस्तकं श्मशानं सर्वाणि श्वापदानि सर्वाणि च मृतकरूपाणि एतेषामन्यतमं दृष्ट्वा निवर्तते। ततो निष्क्रम्य प्राग्ज्योतिषं पुण्यदेशमुपागम्यानुदित आदित्ये 'आञ्जनगन्धिं सुरभिम्' इत्यनेन मन्त्रेणोदकधारया प्रदक्षिणं पूर्वद्वारं मण्डलं कृत्वा तेनैव मन्त्रेणोदकपात्रं मध्ये स्थापयित्वा ततस्तूष्णीं कुशान् दूर्वां च क्षिपति। ततः 'आञ्जनगन्धिम्' इत्यनेन मन्त्रेण शिष्याचार्यौ प्रविशतः। ततः प्राङ्मुख आचार्यः प्रत्यङ्मुखः शिष्यो द्वावप्युपविश्य तस्मिन्नुदपात्रे द्वावपि दक्षिणहस्तौ निक्षिप्य ततो व्याहृतीश्चतस्रो गायत्रीं च पच्छोऽर्धर्चशो जपित्वा ततः 'अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः। ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः॥ ईशानमिन्द्र तस्थुषो न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते। न जातो न जनिष्यतेऽश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे॥ त्वामिद्धि हवामहे साता वाजस्य कारवः। त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः॥ त्वां काष्ठास्वर्वतः स त्वं नश्चित्र वज्रहस्त धृष्णुया महः स्तवानो अद्रिवः। महः स्तवानो अद्रिवो गामश्वं रथ्यमिन्द्र सं किर सत्रा वाजं न जिग्युषे॥' इत्यनेन प्रकारेण चतस्र ऋचः षट् कुर्यात्। 'कया नश्चित्र' इति ऋचो जपित्वा ततः 'अदब्धं मनः' इत्याद्यारण्यकपठितेन मन्त्रेणाऽऽदित्यमीक्षते। ततः 'युवं सुराममश्विना' इति ऋक् 'स्वस्ति नः पथ्यासु धन्व' इति तिस्रः 'प्रत्यस्मै पिपीषते' इति तिस्रः 'यो रयिवो रयिन्तमः' इति षट् 'अस्मा अस्मा इदन्धसः' इत्येका एता जपित्वा 'एवा ह्यसि वीरयुरेवा' इति जपेत्। ततो दक्षिणेन जानुनाऽऽक्रम्य 'मूले कुशतरुणान्' इत्येवमादिनाऽनुवाचनधर्मेण 'विद्मा मघवन्' इत्येवमाद्या आरण्यकपठिता एव पुरीषपदसंज्ञिताः-(? संहिताः) पाठयेत्। ततः 'प्रत्यस्मै पिपीषते' इति पूर्वोक्ता ऋचः पाठयेत्। तत ॐकारो महाव्याहृतयश्चतस्रस्ततः सावित्री पूर्ववत्। ततः 'अभि त्वा शूर नोनुमः, त्वामिद्धि हवामहे, कया नश्चित्र आ भुवत्' इति पूर्ववत्। ततो द्वावपि 'उदितः शुक्रियं दधे' इत्यारण्यकपठितेन मन्त्रेणाऽऽदित्यादिमीक्ष्यतः(? त्यमीक्षेते), 'तमहमात्मनि दधे' इत्यनेनाऽऽत्मानमीक्षतः(? क्षेते)। तत आभ्यामेव मन्त्राभ्यामादित्यमात्मानं च पुनर्निरीक्षतः(? क्षेते)। ततः 'उप मा श्रीः' इत्येवमादिकमारण्यकपठितं मन्त्रं जपतः। 'सेन्द्रः' इत्येवमादिना आरण्यकपठितेन मन्त्रेणोत्तिष्ठतः। 'इदमहम्' इत्यादिना आरण्यकपठितेन उत्तरीये वस्त्रे धत्तः। उदकं स्पृष्ट्वा प्राङ्मुखौ स्थितौ 'अप प्राच इन्द्र विश्वाँ अमित्रान्' इति सप्त 'इन्द्रश्च मृळयाति नः' इति द्वे 'यत इन्द्र भयामहे' इत्येका एता दशर्चो जपित्वा 'शास इत्था महाँ असि' इति पुरस्तादारभ्य तृचेन प्रतिदिशमुपस्थानं कृत्वा ततः 'सविता पश्चात्तात्सविता पुरस्तात्' इति ऋक् 'तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्' इति ऋक् इत्याभ्यां सूर्योपस्थानं कृत्वोपविशतः। ततः तस्मिन्नेवोदपात्रे 'यथाऽऽपः शान्ताः' इत्यनेन मन्त्रेणाऽऽरण्यकपठितेन हस्तौ क्षिपतः। ततः 'यथा पृथिवी' इत्यनेन मन्त्रेणाऽऽरण्यकपठितेन भूमिं स्पृशतः। 'एवं मयि शाम्यतु' इत्यनेन मन्त्रेणाऽऽरण्यकपठितेनाऽऽत्मानं स्पृशतः। एवमुदकभूम्यात्मनः पुनर्द्विः। तत उदपात्रस्थां दूर्वां गृहीत्वा 'काण्डात्काण्डात्' इत्यादिनाऽऽरण्यकपठितेन मन्त्रेण स्वे स्वे शिरसि कुर्वतः। ततः 'अग्निस्तृप्यतु, वायुस्तृप्यतु, विष्णुस्तृप्यतु, प्रजापतिस्तृप्यतु, विरूपाक्षस्तृप्यतु, सहस्राक्षस्तृप्यतु' इति षड्भ्यो देवताभ्यस्तस्मिन्नेवोदपात्रे तर्पणं कृत्वा ततः प्राचीनावीतिनौ भूत्वा 'सुमन्तुजैमिनिवैशंपायनपैलाद्याचार्यास्तृप्यन्तु' इत्येकाञ्जलिम्, एवं ततः पितृपितामहानां दत्वा ततः 'पितृवंशस्तृप्यतु, मातृवंशस्तृप्यतु' इति द्वौ द्वावञ्जली दत्वा ततः 'समुद्रं वः प्रहिणोमि' इत्यनेन मन्त्रेण तमुदपात्रं प्राञ्चमुदञ्चं वा निनयतः। 'कया नश्चित्र आभुवत्' इति तिस्रः 'यथागम' इत्यारण्यकपठित एको मन्त्रः एतैश्चतुर्भिर्मन्त्रैरनुमन्त्रयते। तत उष्णीषं भोजनं दक्षिणां गां वाऽऽचार्याय माणवको ददाति। 'त्वं तं ब्रह्मणस्पते (उत्ता दिवि)' इत्याभ्यां

मन्त्राभ्यां प्रणवेन वा सर्वमाचार्यः प्रतिगृह्णाति । अत्र एके वैश्वदेवं चरुं कुर्वते । अपरे तु अग्नीन्द्रादित्यवैश्वदेवेभ्यश्चरुं कुर्वते । कौगसं.

## गोभिलगृह्यसूत्रम्

व्रतनियमाः, स्तोत्रीयानुगापनम्, परिणहनम्, वाग्यमनानशने, होमः, अग्न्याद्यवेक्षणम्, गुर्वभिवादनम्, दक्षिणाः

[1]तास्वनुसवनमुदकोपस्पर्शनम् ॥

नानुपस्पृश्य भोजनं प्रातः ॥

सायमुपस्पृश्याभोजनमा समिदाधानात् ॥

कृष्णवस्त्रः ॥

कृष्णभक्षः ॥

आचार्याधीनः ॥

अपन्थदायी ॥

तपस्वी ॥

तिष्ठेद् दिवा ॥

आसीत नक्तम् ॥

वर्षति च नोपसर्पेच्छन्नम् ॥

वर्षन्तं ब्रूयात्– 'आपः शक्वर्यः' इति ॥

विद्योतमानं ब्रूयात्– 'एवंरूपाः खलु शक्वर्यो भवन्ति' इति ॥

स्तनयन्तं ब्रूयात्– 'महा महान्घोषः' इति ॥

न स्रवन्तीमतिक्रामेदनुपस्पृशन् ॥

न नावमारोहेत् ॥

प्राणसंशये तूपस्पृश्याऽऽरोहेत् ॥

तथा प्रत्यवरुह्य ॥

उदकसाधवो हि महानाम्न्य इति ॥

एवं खलु चरतः कामवर्षी पर्जन्यो भवति ॥

अनियमो वा कृष्णस्थानासनपन्थभक्षेषु ॥

तृतीये चरिते स्तोत्रीयामनुगापयेत् ॥

एवमितरे स्तोत्रीये ॥

सर्वा वाऽन्ते सर्वस्य ॥

(१) गोगृ. २।२।१०–४७.

उपोषिताय संमीलितायानुगापयेत् ॥

कंसमपां पूरयित्वा सर्वौषधीः कृत्वा हस्ताववधाय प्रदक्षिणमाचार्योऽहतेन वसनेन परिणह्येत् ॥

परिणहनान्ते वाऽनुगापयेत् ॥

परिणद्धो वाग्यतो न भुञ्जीत त्रिरात्रमहोरात्रौ वा ॥

अपिवाऽरण्ये तिष्ठेदाऽस्तमयात् ॥

श्वोभूतेऽरण्येऽग्निमुपसमाधाय व्याहृतिभिर्हुत्वाऽथैनमवेक्षयेदग्निमाज्यमादित्यं ब्रह्माणमनड्वाहमन्नमपो दधीति ॥

'स्वरभिव्यख्यं ज्योतिरभिव्यख्यम्' इति ॥

एवं त्रिः सर्वाणि ॥

शान्तिं कृत्वा गुरुमभिवादयते ॥

सोऽस्य वाग्विसर्गः ॥

अनड्वान् कंसो वासो वर इति दक्षिणाः ॥

प्रथमे विकल्पः ॥

आच्छादयेद्गुरुमित्येके ॥

## खादिरगृह्यसूत्रम्

व्रतनियमाः, उपोषणपरिणहनानुगापनानि, अबादिवीक्षणम्, दक्षिणादानम्

[1]कृष्णवस्त्रः ॥

अथ महानाम्नीव्रतिनो नियममाह कृष्णेति । कृष्णस्तु वर्णविशेषः आर्द्रवस्त्रता वा । रुद्रभा.

कृष्णभक्षः ॥

नीरसाहारः अपक्वाहारो वा । रुद्रभा.

आचार्याधीनः ॥

असत्यप्यध्ययने तत्प्रियकारी स्यात् । रुद्रभा.

तिष्ठेद्दिवा ॥

आसीत नक्तम् ॥

स्पष्टे । रुद्रभा.

उपोषिताय परिणद्धाक्षायानुगापयेत् ॥

(१) खागृ. २।५।२३–२७, २९–३३.

'व्यत्ययो बहुलम्' इति द्वितीयास्थाने तादर्थ्यवाचिचतुर्थी कृता तदर्थानां धर्माणां बाहुल्यं सूचयितुम्। ते च धर्मा निदानकारेणोक्ता आचारसिद्धाश्च वेदितव्याः। तान् वक्ष्यामः। महानाम्न्यध्ययनकाले आचार्यशिष्ययोर्हस्तेनोदकधारणम्। एको वा द्वौ वा गायेताम्, न बहवः। सकृदृचमुक्त्वा साम च सकृदेव पुरीषपदमुक्त्वा पुनः पादशः सकृद्ब्रूयात्, नाऽऽवर्तयेदेकस्मिन् दिने। व्रतचरणकाले सायंप्रातः स्नानम्, वर्षति चरणं नातीयात्। नात्रोपेक्षा कर्तव्या, कृत्स्नवेदतुल्यत्वादस्य साम्नः। व्रतचरणकाले पूर्णेऽहोरात्रे वाग्यत उपवसेत्। प्रागस्तमयादहतेन वाससा चक्षुषी पिधाय रात्रावासीत। अथ परेद्युरुपोषितं परिणद्धाक्षं वाग्यतमुपनयनवच्छ्रेयः-पर्यन्तं नीत्वा शक्वरीर्गापयेत् श्रावयेद्वा, श्रावणविधिवचनात्। अनु सादृश्यार्थः। अध्ययनकालवदुदकधारणमृग्जपश्चेत्यर्थः। प्रतिस्तोत्रीयं पुरीषपदाभ्यासो विशेषः। रुद्रभा.

**यथा मा न प्रधक्ष्यतीति तं प्रातरभिवीक्षयन्ति यान्यप्रधक्ष्यन्तं मन्यन्तेऽपोऽग्निं वत्समादित्यम्॥**

शक्वरीगानानन्तरं यथा वीक्षणे कृते मां दग्धुं न शक्ष्यति माणवक इत्याचार्यो मन्यते तथा तं वीक्षयेत् प्रातःकाले। अभीत्यनन्यत्रीक्षणार्थम्। बहुवचनं गुरुत्वास्पूत्यर्थम्। यानि दग्धुमशक्तं मन्यन्ते तानि वीक्षयेत्। कानि पुनस्तानि? अबादीनि। रुद्रभा.

**'अपोऽभिव्यख्यम्' इत्यपः 'ज्योतिरभिव्यख्यम्' इत्यग्निं 'पशूनभिव्यख्यम्' इति वत्सं 'सुरभिव्यख्यम्' इत्यादित्यम्। विसृजेद्वाचम्॥**

तेषां वीक्षणमन्त्रान् क्रमश आह— अप इति। वाग्यमननियमं त्यजेत्, नावश्यं भाषेत। रुद्रभा.

**गौर्दक्षिणा॥**

वीक्षिता गौराचार्याय देया माणवकेन। रुद्रभा.

**कंसो वासो रुक्मश्च॥**

कंसपूर्णा आपः(? अपः) तत्र रुक्मं निधाय वीक्षेत। तं कंसं रुक्मं च पिधानार्थं च वस्त्रमाचार्याय दद्यात्। रुद्रभा.

## जैमिनिगृह्यसूत्रम्

व्रतनियमाः, स्तोत्रियाध्यापनम्, मुखपरिणहनम्, वाग्यमनम्, वासउद्वेष्टनम्, अबादिवीक्षणम्, स्थालीपाकहोमः, आचार्यादिभोजनम्, दक्षिणादानम्

**'संवत्सरं ब्रह्मचर्यं चरेच्छुक्लैकवासाः॥**

शुक्लत्वमत्र शुचित्वम्। विहिते काले संवत्सरमात्रमेव चरेत्। श्रीव्या.

**व्रतं तु भूयस्तिष्ठेद्दिवा॥**

व्रतं समग्रं चरन्दिवा भूयः बहुशः तिष्ठेत्। श्रीव्या.

**अथाऽऽसीत नक्तम्॥**

भूय इति शेषः। श्रीव्या.

**तस्य कृष्णे भोजनाच्छादने भवत इत्येके। शुक्लं चैव परिदध्यात्॥**

अन्नं तु तदुक्तवद्वा भवत्विति भावः। श्रीव्या.

**रागदोषाच्च कृष्णम्॥**

रागदोषाद्धेतोः कृष्णं न परिदध्यात्। श्रीव्या.

**सर्वास्वप्सूपस्पृशेदबुक्ताः शक्वर्य इति॥**

उपस्पृशेत् स्नायात्। प्रत्यहमनेन या स्नानयोग्या यदृ(? द)च्छया संगम्यन्ते तासु सर्वास्वित्यर्थः। अप इत्युक्ता अबुक्ताः इति हेतोः। अस्ति हि श्रुतिः— 'आपो वै शक्वर्यः' इति। श्रीव्या.

**नावा न प्रस्नायात्॥**

नावा अपो न प्रविशेत्। अवतीर्यैव नद्यादिकं लङ्घयेदित्यर्थः। श्रीव्या.

**प्राणसंशये तूपस्पृशेदुभयतः॥**

---

(१) जैगृ. १।१७.

प्राणसंशये तु नावैव लङ्घयन्नुभयतस्तीरयोः उपस्पृशेत् स्नायात् । श्रीव्या.

**अपि वा गाः पाययेत्पशूक्ताः शाक्वर्य इति ॥**

उभयत इति शेषः । पशूक्ता इति । अस्ति हि श्रुतिः— 'पशवो वै महानाम्न्यः' इति । श्रीव्या.

**वर्षे नान्तर्दधीत च्छत्रेण । प्रतिवर्षे निष्कामेत् ॥**

प्रतिवृष्टि गृहान्निर्गतः किंचित्क्लिन्नो गृहं प्रविशेदित्यर्थः । श्रीव्या.

**एवमस्य चरतः कामवर्षी पर्जन्यो भवति । ब्रह्मचर्यान्ते एकरात्रमुपोषितः ॥**

ब्रह्मचर्यान्ते महानाम्नीब्रह्मचर्यान्त इत्यर्थः । एकरात्रम् एकमहोरात्रम् उपोषितः, स्यादिति शेषः । श्रीव्या.

**अरण्यं गत्वा शैवलमिश्राणामपां कांसं पूरयित्वा तमुपवेश्य समनुपरिगृह्य निमीलितं तिस्रः स्तोत्रिया उपगायेत्सपुरीषाः ॥**

तस्मिन्नुपोषणदिने । आचार्यकृत्यमेतत् । अपाम् अद्भिरित्यर्थः । तं ब्रह्मचारिणमुपवसन्तम् । समनुपरिगृह्य आलिङ्गय । निमीलितं मीलिताक्षं कृत्वा । स्तोत्रियाः स्तोत्रियसामसहिता महानाम्नीः । उपगायेत् अध्यापयेत् । 'एवा ह्येव' इत्यादि पञ्च पुरीषपदानि । श्रीव्या.

**उपोत्थायाऽऽचार्योऽहतेन वाससा मुखमस्य परिणह्येत्प्रदक्षिणम् । उदपात्रं धारयंस्तिष्ठेदहःशेषम् ॥**

शिष्यो ग्रामं प्रत्येत्येति शेषः । श्रीव्या.

**रात्रिमासीत वाग्यतः ॥**

उदपात्रं धारयन्निति शेषः । श्रीव्या.

**श्वोभूतेऽरण्यं गत्वाऽग्निमुपसमाधाय वत्समुपाम्वानीय वास उद्वेष्टयेत् ॥**

आचार्यकृत्यम् । श्वोभूते प्रभाते । वासः मुखवेष्टनवस्त्रम् । श्रीव्या.

**उदकस्य कांसम् 'अपोऽभिवीक्षे' इति वीक्षेत् ॥**

ता एवापः । ब्रह्मचारिकृत्यम् । श्रीव्या.

**'स्वरभिवीक्षे' इत्यादित्यम्, 'ज्योतिरभिवीक्षे' इत्यग्निम्, 'पशुमभिवीक्षे' इति वत्सम् । 'समन्या यन्ति' इत्यपः प्रसिच्य वासः कांसं वत्समित्याचार्यायोपहरेत् ॥**

अपः कांस्यगताः । प्रकृतमेव वासःप्रभृति । उपहरेत् दद्यात् आचार्याय गृहं गताय । श्रीव्या.

**स्थालीपाकाद्धिश्वामित्रेन्द्रौ महानाम्नीश्च यजत इति । आचार्यं सपरिषट्कं भोजयेत् ॥**

स्थालीपाकात् हविषेत्यर्थः । पुरस्तन्त्रान्ते इदमिति व्रतसमाप्तिद्योतकः । तस्मादत्रैव व्रतान्तसमिध आधाय स्विष्टकृदाद्युत्तरतन्त्रम् । श्रीव्या.

**गौर्दक्षिणा ॥**

दत्तस्य वत्सस्य माता गौरेव दीयते । महानाम्नीकव्रतं समाप्तम् । श्रीव्या.

## आश्वलायनः

महानाम्नीव्रताङ्गभूतकृसरान्नकरणादिक्रियाणां हेतवः, व्रतकर्तुर्हेतुज्ञानमावश्यकम्

**[1]उक्ता श्रौते महानाम्न्याः क्रिया सम्यक्मयाऽपि च ।**

**तैश्च विप्रैस्तथाऽप्यत्र किंचित्कारणमुच्यते ॥**

**[2]प्रोक्षणान्ते तिलान् क्षिप्त्वा तण्डुलैः श्रपयेच्चरुम् ।**

**तृप्यन्ति कृसरान्नेन महानाम्न्युक्तदेवताः ॥**

कृसरान्नकरणे कारणमाह स एव— प्रोक्षणान्त इति । प्रपा. २७४

**[3]हविरेकार्थपर्याप्तं विहितं त्वत्र कर्मणि ।**

**ब्रह्मौदने तु विहितं हविः सम्यग्द्विपूरुषम् ॥**

(१) आश्वस्मृ. ११।१९७; प्रपा. २७४ उक्ता श्रौते ( उक्ताश्रौता ) क्रिया ( क्रियाः ) पू.

(२) आश्वस्मृ. ११।१९८; प्रपा. २७४.

(३) आश्वस्मृ. ११।१९९ कार्थ ( कार्ध ) त्वत्र कर्मणि ( गृह्यकर्मसु ); प्रपा. २७५.

अत्र हविःश्रपणे विशेषमाह स एव— हविरिति ।

प्रपा. २७५

[1]आत्मनो यत्तु पर्याप्तं हविः संश्रपयेद्द्विजः ।
तावदेव महानाम्न्यां भुक्त्वा तत्र न शेषयेत् ॥

[2]व्रतिनो भुक्तशिष्टान्नं भोक्तुं नार्हति कश्चन ।
मुमुक्षुत्वाद्यतस्तस्मात्सर्वमश्नाति हि स्वयम् ॥

सर्वहविःशेषभोजने कारणमाह स एव— आत्मन इति ।

प्रपा. २७४

[3]रवेर्व्रतपतेस्तृप्त्यै व्रतस्य परिपूर्तये ।
भुक्त्वाऽपामञ्जलिं पूर्णं शिष्यः सिञ्चति मन्त्रवत् ॥
गुरुश्च तत्सह ब्रूयान्मन्त्रं भानोः कृताञ्जलिः ।
संमीलनं वाग्यमनं शिष्यः कुर्यात्ततः परम् ॥

अञ्जलिसेचने कारणमाह स एव— रवेरिति ।

प्रपा. २७४

[4]अलोक्यालोकनेनाऽऽसीदभाष्याणां च भाषणात् ।
तद्दोषस्यापनुत्त्यर्थं मौनं संमीलनं भवेत् ॥

[5]कर्तव्यत्वान्महानाम्न्यां मौनस्याब्दं द्विजातिना ।
दुष्टदर्शनवर्ज्यत्वादशक्यत्वाच्च वत्सरम् ॥

[6]एकरात्रं त्रिरात्रं वा यथोक्तत्वप्रसिद्धये ।
तस्मात्संमीलनं कार्यं तथा वाग्यमनं तदा ॥

संमीलनादौ कारणमाह स एव— अलोक्येति ।

प्रपा. २७४

[1]व्रतादेशाहःप्रभृति श्रवणान्तं सदा शुचिः ।
कण्ठादूर्ध्वं समाश्रित्य वसन्ति व्रतिनं सुराः ॥

[2]केशान्वसन्ति वसवो रुद्राः श्रोत्रे च चक्षुषी ।
आदित्या नासिकाद्वारे वषट्कारश्च वाक्कथा ॥

[3]व्रतिनो गात्रजं तोयं पातुकामा इमे सुराः ।
त्रयस्त्रिंशद्वसन्त्येव महानाम्न्याः प्रभावतः ॥

[4]तेषां संतोषणार्थाय वेदत्रयमनुस्मरन् ।
अहतेनाम्बरेण त्रिर्वेष्टयेत्समुखं शिरः ॥

[5]दर्शनात्स्पर्शनाद्भीता दुष्टानामिह ते नृणाम् ।
वस्वादयः सुरास्तस्माच्छिरसो वेष्टनं भवेत् ॥

[6]शुश्रूषासिद्धये तस्य गुरोरादौ महर्षयः ।
आत्मनो यापनार्थं च चक्रिरेऽनुग्रहं महत् ॥

समुखशिरोवेष्टने कारणमाह स एव— व्रतादेशेति ।

प्रपा. २७४

[7]संमीलनं वाग्यमनमुष्णीषेण च वेष्टनम् ।
एकरात्रं त्रिरात्रं वा तद्व्रतान्ते चरेदिति ॥

[8]नराणामायुर्वृद्ध्यर्थं तथा कुर्वन्ति हि द्विजाः ।
व्रतस्य धारणेनैव देवानां स प्रियो भवेत् ॥

---

(१) आश्वस्मृ. ११।२०० यत्तु प (युक्तप) ; प्रपा. २७४.

(२) आश्वस्मृ. ११।२०१ व्रतिनो (व्रतिना) ; प्रपा. २७४.

(३) आश्वस्मृ. ११।२०२–२०३ ; प्रपा. २७४.

(४) आश्वस्मृ. ११।२०४ पूर्वार्धे ( अनालोक्यालोकनेन सद्भाष्याणां च भाषणात् । ) ; प्रपा. २७४.

(५) आश्वस्मृ. ११।२०५ नाम्न्यां ( नाम्न्या ) ; प्रपा. २७४ तिना (तिनः) वर्ज्य (वर्ज) शक्य (शक्त).

(६) आश्वस्मृ. ११।२०६ त्रिरात्रं (द्विरात्रं) ; प्रपा. २७४.

(१) आश्वस्मृ. ११।२०७ देशाहः (देशादा) व्रतिनं (व्रतिनां) ; प्रपा. २७४ सदा ( यदा ).

(२) आश्वस्मृ. ११।२०८ द्वारे ( द्वारौ ) ; प्रपा. २७४ वाक्कथा ( तत्तथा ).

(३) आश्वस्मृ. ११।२०९ ; प्रपा. २७४.

(४) आश्वस्मृ. ११।२१० ; प्रपा. २७४ तोषणा ( त्राणना ).

(५) आश्वस्मृ. ११।२११ ; प्रपा. २७४ पूर्वार्धे ( दर्शनादहितानां च दुष्टानामिह बिभ्यति । ).

(६) आश्वस्मृ. ११।२१२ तस्य (तस्या) नो यापनार्थं च ( ना यजमानार्थं ) ; प्रपा. २७४.

(७) आश्वस्मृ. ११।२१३ त्रिरात्रं (द्विरात्रं) ; प्रपा. २७४.

(८) आश्वस्मृ. ११।२१४ ; प्रपा. २७४ नराणामायुर्वृ ( सुराणां मानवृ ) धार ( श्रव ).

[1]तथा संवत्सरं सर्वमशक्यत्वात्प्रवर्तितुम् ।
त्रिरात्रं वैकरात्रं वा यत्नात् कार्यमिति स्थितिः ॥
[2]एवंभूतोऽस्वपन्कालं भवेति गुरुणोदितः ।
संध्यात्रयं यथाभूतः कुर्यान्नान्यत्तु किंचन ॥
[3]एकरात्रं त्रिरात्रं वा नयेदुपविशन् द्विजः ।
न शयीत न चोत्तिष्ठेद्व्रते संध्यार्थमाहृतः ॥
[4]अथ रात्र्यां व्यतीतायां संध्यामात्रमुपास्य च ।
तथाभूतस्तदा नैव कुर्यात् स्नानादिकाः क्रियाः ॥

संमीलनादौ फलविशेषमाह– संमीलनमिति । अथा-नन्तरकर्तव्यमाह– संध्यात्रयमिति । प्रपा. २७४

[5]रक्तां वत्सतरीं तावत्सुस्वरूपां द्विहायनीम् ।
वायव्यां दिशि बध्नीत महानाम्न्या असंश्रवे ॥
[6]श्रेष्ठत्वात्तु पशूनां सा रक्ता वत्सतरी मता ।
देवानां सुप्रियत्वात्तु सुरूपत्वं निगद्यते ॥
[7]योगिनो मुनयः शान्ताः पिशङ्गा ऊर्ध्वरेतसः ।
शुद्धामाश्रित्य तां वस्तुमिच्छन्त्येवाऽऽ-समातितः ॥
[8]पश्चिमोदक्समुद्रे तु गिरिर्नाम्ना प्रभञ्जनः ।
प्रभञ्जनाश्रयः श्रीमान्वसत्यमरसंश्रयः ॥

(१) आश्वस्मृ. ११।२१५ ; प्रपा. २७४ वैक ( चैक ) यत्नात् ( यत्तत् ).

(२) आश्वस्मृ. ११।२१६ त्रयं यथाभूतः ( मात्रं तयाभूतं ) ; प्रपा. २७४.

(३) आश्वस्मृ. ११।२१७ विशन् ( वसन् ) शयीत न ( शयेन्नैव ) ; प्रपा. २७४.

(४) आश्वस्मृ. ११।२१८ कुर्यात् (कार्याः) ; प्रपा. २७४ अथ रा ( अर्धरा ).

(५) आश्वस्मृ. ११।२१९ उत्तरार्धे ( वायव्यां दिशि बध्नाति महानाम्न्यामसंश्रये ॥ ) ; प्रपा. २७४ द्विहा ( त्रिहा ).

(६) आश्वस्मृ. ११।२२० ; प्रपा. २७४ त्वं निग ( त्वान्निग ).

(७) आश्वस्मृ. ११।१२१ ; प्रपा. २७४.

(८) आश्वस्मृ. ११।१२२ नाश्रयः ( नाजयः ) ; प्रपा. २७४ मुद्रे तु ( मुद्रेषु ).

[1]नानाश्चर्यमये तस्मिन्वायुः पुरवरोत्तमे ।
जगत्प्राणो वसत्येव भुवनाह्लादकारकः ॥
[2]तस्मिन्वसन्ति मुनयो योगसिद्धा महौजसः ।
योगशास्त्रप्रणेतारः पिशङ्गा नाम योगिनः ॥
तेषां कथितवानादौ वायुर्वायव्यमुत्तमम् ।
पुराणं शिवदं साक्षाच्छिवमाहात्म्यसूचकम् ॥
[3]तेऽपि श्रोतुं महानाम्नीव्र(?व्रं)तिनं द्रष्टुमेव च ।
आयास्यन्ति महात्मानस्तद्गिरेरूर्ध्वरेतसः ॥
[4]विश्रामार्थं प्रबध्नाति तेषां वत्सतरीं द्विजः ।
तस्यां दिशि व्रते तस्मिन्तस्या अश्रवणं तदा ॥
[5]अश्राव्यत्वान्महानाम्न्याः स्त्रीभिश्चापि तथा तदा ।
असंश्रवे तां बध्नाति शुभां वत्सतरीं द्विजः ॥
[6]नेच्छन्ति तामृते वस्तुं किंचिदन्यदिहाऽऽ-सनम् ।
क्षुशुद्धत्वाद्वायुभूतास्ते शुद्धा ब्रह्मचारिणः ॥
[7]तामन्ते गुरवे द्याद्रक्ताभावे सिताऽपि वा ।
दूरे स्थित्वाऽपि तां श्रुत्वा तस्य दास्यन्ति वाञ्छितम् ॥

(१) आश्वस्मृ. ११।२२३ पुरव ( परपु ) ; प्रपा. २७४–२७५ र्यमये ( र्याश्रमे ).

(२) आश्वस्मृ. ११।२२४–२२५ ; प्रपा. २७५.

(३) आश्वस्मृ. ११।२२६ ; प्रपा. २७५ द्गिरेरू ( द्गीताव् ).

(४) आश्वस्मृ. ११।२२७ ; प्रपा. २७५ तस्या अश्रवणं ( तस्यामश्रवणे ).

(५) आश्वस्मृ. ११।२२८ तथा ( तया ) ; प्रपा. २७५ शुभां ( शुभ्रां ).

(६) आश्वस्मृ. ११।२२९ दन्यदि ( दन्यमि ) ; प्रपा. २७५.

(७) आश्वस्मृ. ११।२३० ; प्रपा. २७५ वा ( च ) रे स्थित्वाऽपि तां ( रस्थिता अपि ).

वत्सतरीबन्धने कारणमाह स एव– रक्षामिति ।

प्रपा. २७४

[1]ततोऽपराजिताशायां निधायाग्निं यथाविधि ।
पर्युक्षणान्तं तत्प्रत्यक्तृणेषूपविशेद्गुरुः ॥

[2]मुखवासः समुद्धूय मुखं प्रक्षाल्य वारिणा ।
अग्निं प्रदक्षिणं कृत्वा गुरुं चैवाभिवादयेत् ॥

[3]पृष्ठेन पृष्ठं संधाय गुरोरात्मन एव च ।
ईक्षन्नुपविशेदाशां राक्षसीं संयतः स्थिरः ॥

[4]सुप्रिया च प्रतिष्ठा च देवानामपराजिता ।
आशां तामसुरा घोरा यतन्ते हर्तुमोजसा ॥

सुप्रिया च प्रतिष्ठा च दैत्यानां नैर्ऋती च दिक् ।
तामीक्षमाण आसीत संशृण्वानो गुरूदितम् ॥

[5]देवाश्च ऋषयश्चास्यामागत्य निवसन्ति हि ।
श्रोतुकामा महानाम्नीं भीताः संचकितास्तदा ॥

[6]तेषां संत्राणनार्थाय रक्षोनिरसनाय च ।
नेत्राग्निना दहन्नीक्षन्नासीताऽऽशां च
नैर्ऋतीम् ॥

[7]मृतकल्पा भविष्यन्ति निश्चेष्टा व्रतिनेक्षिताः ।
निर्वीर्या बाधितुं देवानशक्ताः स्युः सुरेतराः ॥

(१) आश्वस्मृ. ११।२३१ ; प्रपा. २७५ निधा ( विधा ).

(२) आश्वस्मृ. ११।२३२ ; प्रपा. २७५ द्धूय ( स्त्रार्य ) णं कृत्वा ( णीकृत्य ).

(३) आश्वस्मृ. ११।२३३ ; प्रपा. २७५ स्थिरः ( स्थितः ).

(४) आश्वस्मृ. ११।२३४–२३५ ; प्रपा. २७५.

(५) आश्वस्मृ. ११।२३६ ; प्रपा. २७५ स्यामागत्य ( स्यां दिदृक्षते ) नाम्नीं भी (नाम्नीर्भी) स्तदा (स्तथा).

(६) आश्वस्मृ. ११।२३७ ; प्रपा. २७५ रक्षोनिरसनाय ( असुराणां तथैव ) नेत्रा ( तेना ).

(७) आश्वस्मृ. ११।२३८ ; प्रपा. २७५ भविष्य ( न कुप्य ) निर्वी ( निर्वा ) वानश ( वा न श ).

[1]देवान्प्रागुत्तराशास्थानीक्षन्संभावयेद्गुरुः ।
मानयन्निव तान्भक्त्या तत्तृप्त्यै प्रयतस्तथा ॥

[2]अन्तरेण समायातुं केचिदिच्छन्ति राक्षसाः ।
तावत्तद्व्रतलुप्त्यर्थं मायया गुरुशिष्ययोः ॥

[3]तेषां निरसनार्थाय संधीयेतेऽत्र पश्चिमे ॥

महानाम्नीपठनकाले गुरुशिष्ययोरन्योन्यपृष्ठसंधाने कारणमाह स एव– तत इति । प्रपा. २७५

[4]वसित्वा व्रतपूर्तिः स्याद्व्रतिनो नान्यथा कृता ॥

[5]ख्यापनादनुतापेन दोषः संक्षीयते कृतः ।
यस्मात्तस्मात्स्वगुरुणा पृष्टो लोपेऽनुतप्यति ॥

व्रतलोपप्रश्नादौ कारणमाह स एव– वसित्वेति ।

प्रपा. २७५

[6]नापृष्टाय तु दातव्यमिति तस्माद्गुरुं तदा ।
पृष्टे प्रश्नकृते ब्रूयान्महानाम्नीरघापहाः ॥

उष्णीषान्मोचनं कृत्वा कुर्यादुन्मीलनं तदा ।
मन्त्रेणेक्षेद्रविं शिष्यस्तद्दीक्षापरिपूर्तये ॥

दिशामु( ? उ )त्तरतस्तीर्थे स्यात्सुशुद्धा( ? द्धं )-
सुराश्रयम् ।

निर्हन्त्ये( ? निर्हन्त्यै )रक्षसां तस्यां संभारा-
न्प्राग्विनिक्षिपेत् ॥

असिं दृष्ट्वा त्रसिष्यन्ति दृषदो विद्रवन्ति च ।
त( ? य )स्माद्दैत्या निधीयेते ते उभे
तद्व्रते द्विजैः ॥

(१) आश्वस्मृ. ११।२३९ ; प्रपा. २७५ प्रयतस्तथा ( प्रियतस्तदा ).

(२) आश्वस्मृ. ११।२४० ; प्रपा. २७५ लुप्त्यर्थं मायया ( लब्ध्यर्थमन्तरा ).

(३) आश्वस्मृ. ११।२४१ ; प्रपा. २७५ येतेऽत्र पश्चिमे ( यीतात्र पश्चिमात् ).

(४) आश्वस्मृ. ११।२४१ वसित्वा ( त्रिशुत्वा ) ; प्रपा. २७५ पूर्तिः स्याद्व्र ( पूर्वस्य व्र ) कृता ( कृतम् ).

(५) आश्वस्मृ. ११।२४२ ख्यापनाद (स्थापनेना) ; प्रपा. २७५ चतुर्थचरणे ( पृष्टे लोपेन तप्यते ).

(६) आश्वस्मृ. ११।२४३–२५१, २५५–२५७.

उदपात्रं तु देवानां तृषितानामुदग्दिशि ।
निधीयते समायातुमेतानीक्षेद्व्रती ततः ॥

तां दिशं तांश्च संभारान्रक्षार्थं सुप्रदर्शितान् ।
ईक्षेद्व्रती सुशुद्ध्यर्थमादित्यावेक्षणान्तरे ॥

चक्षुष्मतां वरो मित्रः पूषा हस्तवतां वरः ।
तथाऽश्विनौ बाहुमतां सविता प्रसवे वरः ॥

मित्रस्य त्वा चक्षुषेति तस्मादीक्षेद्व्रती तदा ।
तद्भूमिं चासुराक्रान्तां स्पृशेन्मन्त्रेण शुद्धये ॥

पुनः प्रतिष्ठासिद्ध्यै च पीडायाश्चापनुत्तये ।
भूम्युपस्पर्शनं कार्यं ततो ब्रह्मौदनं चरेत् ॥

प्रशस्तत्वान्महानाम्न्याः श्रोतुमिच्छन्ति हर्षिताः ।
बहुवारं सुराः सर्वे तस्मात्त्रिः श्रावयेच्च ताम् ॥

सर्वे चोत्कृष्टमिच्छन्ति प्राप्तुं देवाश्च राक्षसाः ।
उत्कृष्टत्वात्तद्व्रतस्य तदिच्छन्ति सुरासुराः ॥

तस्माद्यत्नान्महानाम्न्यां रक्षाऽतीव प्रशस्यते ।
असुरेभ्यः सुराणां च यथा संपरितोषणम् ॥

[2]रवेः सर्वात्मकत्वात्तु ते च पश्चिमतः स्थिताः ।
असुरा दिवि भूमौ च विचरन्ति स्वमायया ।
एवं ज्ञात्वा चरेत्कर्म कारणानीह विस्तरः ॥

## शौनककारिकाः

व्रतादेशनम्, चरुपाकनिवेदनम्, व्रतलोपे प्रायश्चित्तम्, होमः, हुतशेषभोजनम्, सूर्योपस्थानम्, समुखशिरोवेष्टनम्, बहिर्ग्रामं देवालयेऽग्निस्थापनम्, अस्यादिसंभारस्थापनम्, वत्सतरीबन्धनम्, महानाम्न्यनुवचनम्, आदित्यवीक्षणम्, ससंभारदिगीक्षणम्, पुनरादित्येक्षणम्, भूतलस्पर्शः, भिक्षाचरणम्, अनुप्रवचनीयहोमः

[1]तत्राऽऽदितो महानाम्नीश्रवणे विधिरुच्यते ॥

(१) प्रपा. २७५.

(२) शौका. ३ पृ. ४८ ; प्रपा. २७५ ; संप्र. ५५९.

[1]तत्र प्रथममाचार्यः शिष्याय व्रतमादिशेत् ।
कर्मोपनयने प्रोक्तं यत्पूर्वं वापनादिकम् ॥

[2]परिदानान्तमेतत्तु व्रतादेशनमीरितम् ।
तस्य व्रतस्यानुष्ठानं पूर्णवत्सरमादिशेत् ॥

[3]ततः संवत्सरे पूर्णे संप्राप्ते चोत्तरायणे ।
पूर्वपक्षे प्रशस्ते च नक्षत्रेऽसौ गुरोर्मुखात् ॥

[4]ऋचः श्रोष्यन्महानाम्नीर्ग्रामान्निष्क्रम्य शोभने ।
शुद्धदेशे चरुं पक्त्वा आचार्याय निवेदयेत् ॥

[5]व्रतलोपात्तथाऽऽचार्यः शिष्यं पृच्छेत्स चेद्वदेत् ।
शिष्यो मया महाँल्लोपो व्रते तु कृत इत्यथ ॥

[6]आचार्यस्तदुपक्रान्तं तन्त्रावस्थासमन्वितम् ।
कर्ममध्ये तु तस्यैव व्रतलोपनिमित्तकम् ॥

[7]प्रायश्चित्तं विधायैनं कारयित्वोचितं तथा ।
ततोऽस्य परिशुद्धस्य पुनरारभ्य पूर्ववत् ॥

[8]वत्सरं व्रतमादिश्य तथैवानुष्ठितं व्रतम् ।
बुद्ध्वा चास्मै महानाम्नीरनुब्रूयाद्यथाविधि ॥

[9]यद्यसौ गुरुणा पृष्टो व्रतलोपं वदेन्मृषा ।
व्रतलोपः कृतोऽल्पस्तु स चाऽऽपत्कारणादिति ॥

[10]तदा तमनुगृह्यैनमाचार्यः कल्पितं च तम् ।
व्रतलोपमनादृत्य शेषं प्रक्रान्तकर्मणः ॥

(१) शौका. ४ पृ. ४८ ; प्रपा. २७५ वाप (वप) ; संप्र. ५५९.

(२) शौका. ५ पृ. ४८ ; प्रपा. २७५ ; संप्र. ५५९ पूर्णव ( पूर्णे व ).

(३) शौका. ६ पृ. ४८–४९ ; प्रपा. २७५ ; संप्र. ५५९ त्रेऽसौ ( त्रेऽशे ).

(४) शौका. ६ पृ. ४९ ; प्रपा. २७५ ; संप्र. ५५९ पू.

(५) शौका. ७ पृ. ४९ ; प्रपा. २७५.

(६) शौका. ८ पृ. ४९ पूर्वार्धमशुद्धिबहुलम् ; प्रपा. २७५.

(७) शौका. ९ पृ. ४९ ; प्रपा. २७५ यैनं ( येवं ).

(८) शौका. १० पृ. ४९ ; प्रपा. २७५.

(९) शौका. ११ पृ. ४९ यद्यसौ ( यथाऽसौ ) ; प्रपा. २७५.

(१०) शौका. १२–१३ पृ. ४९ ; प्रपा. २७५–२७६.

अनुष्ठाय महानाम्नीरनुवक्तुं कृतोद्यमः ।
आज्यसंस्कारपर्यन्तानूयाजस्थापनावधि ॥
[1]कर्म कृत्वाऽथ संस्पृष्टस्तेनेध्माधानपूर्वकम् ।
शेषं कृत्वा पुरस्तन्त्रमवदाय पुरश्चरोः ॥
[2]अग्नावग्निश्चरत्याद्यैर्मन्त्रैर्हुत्वा षडाहुतीः ।
ततो व्याहृतिभिर्व्यस्तरूपामिस्तिस्र आहुतीः ॥
[3]कृत्वा ततोऽवदायान्नं किंचित्स्विष्टकृते स्रुचि ।
तां निधायानलात्प्रत्यक् समास्तीर्णे तु बर्हिषि ॥
[4]ततः शिष्यं गुरुर्ब्रूयाद्धुतशिष्टमिमं चरुम् ।
सर्वं भुङ्क्ष्वेति भुञ्जीत सोऽप्यशेषं चरुं शनैः ॥
भुक्तवन्तमपां पूर्णमञ्जलिं दधतं स्थितम् ।
तमुपस्थापयेच्छिष्यं त्वं व्रतानां व्रतादिना ॥
[5]मन्त्रेण तेन राध्यासमित्यन्तेन दिवाकरम् ।
ब्रूयात्स्वयं च तन्मन्त्रं गुरुः शिष्यं च वाचयेत् ॥
[6]उपस्थाप्यैवमादित्यं सादयेद्ब्रह्मचार्यथ ।
नेत्रे निमील्य वाचं च नियच्छेदवधानतः ॥
आचार्योऽप्यथ शिष्यस्य वामशङ्खप्रदेशतः ।
आरभ्य नववस्त्रेण मुखयुक्तं च तच्छिरः ॥

वामशङ्खप्रदेशः ललाटवामभागः, 'शङ्खो निधौ ललाटास्थ्नि कम्बौ' इत्यभिधानात् । प्रपा. २७६

[7]प्रदक्षिणं त्रिरावेष्ट्य वदेच्चैनमिदं वचः ।
एकरात्रं त्रिरात्रं वा त्वमेवंभूतवेषधृक् ॥

(१) शौका. १४ पृ. ४९ ; प्रपा. २७६ पुरश्च ( पुनश्च ).

(२) शौका. १५ पृ. ४९ स्तिस्र ( स्तत्र ) ; प्रपा. २७६.

(३) शौका. १६ पृ. ४९ ; प्रपा. २७६ तां नि ( तन्नि ).

(४) शौका. १७–१८ पृ. ४९ ; प्रपा. २७६.

(५) शौका. १९ पृ. ४९ ण तेन ( णानेन ) ; प्रपा. २७६.

(६) शौका. २०–२१ पृ. ४९ ; प्रपा. २७६.

(७) शौका. २२ पृ. ४९–५० च्चैन ( च्चैव ) ; प्रपा. २७६ धृक् ( युक् ).

[1]आसीनः स्वापहीनश्च ममाभ्याशे वसेरिति ।
शक्त्यपेक्षो विकल्पः स्यात्कालयोर्ब्रह्मचारिणः ॥
[2]गुरुस्तमनुशिष्यैवं ततः स्विष्टकृदादिकम् ।
उपरिष्टात्तनं तन्त्रमाचरेच्च यथाविधि ॥
[3]ततः शिष्योऽपि कर्तव्यमि( ? व्यादि )तर-
द्भोजनादिकम् ।
अकुर्वाणो गुरोः पार्श्वे ( इत्युक्त्वाऽऽसीत ? )
वाग्यतः ॥
[4]अपरेद्युश्चतुर्थे वा दिवसे प्रयतो गुरुः ।
अनुवक्ष्यन् महानाम्नीः स्वागारापेक्षया दिशम् ॥
पूर्वोत्तरामनुप्राप्ते देशे ग्रामाद्बहिर्भवेत् ।
शुद्धे देवालये तत्र कृत्वा स्थण्डिलमादितः ॥
असिमश्मानमापूर्णसलिलं च कमण्डलुम् ।
न्यस्य वत्सतरीं बद्ध्वा तस्याग्नेः प्रत्यगुत्तरे ॥
ततोऽग्नेः प्रत्यगास्तीर्य दर्भान् प्रागुत्तराग्रकान् ।
तेष्वासीत गुरुः पश्यन् प्रागुदीचीं दिशं ततः ॥
[5]शिष्योऽपि मुखलेपादीन् प्रमृज्याऽऽचम्य चोदकम् ।
कृत्वा गुरोश्च वह्नेश्च प्रदक्षिणमथो गुरुम् ॥
[6]अभिवाद्य गुरोः प्रत्यग्दक्षिणे तस्य पृष्ठतः ।
तस्यैवाऽऽसनदर्भाणां मूलेष्वेव च नैर्ऋतिम् ॥
विलोक्य दिशमासित्वा ततः पृष्ठेन चा-
ऽऽत्मनः ।
आचार्यस्य च संयोज्य वचनं मनसा ततः ॥

(१) शौका. २३ पृ. ५० भ्याशे ( भ्यासे ) योर्ब्रह्म ( तो ब्रह्म ) ; प्रपा. २७६.

(२) शौका. २४ पृ. ५० ष्यैवं ( ष्यैनं ) कृदा ( कृता ) ; प्रपा. २७६.

(३) शौका. २५ पृ. ५० पि क ( पक ) तर ( तस्त ) ; प्रपा. २७६.

(४) शौका. २६–२९ पृ. ५० ; प्रपा. २७६.

(५) शौका. ३० पृ. ५० ; प्रपा. २७६ मुख (उप).

(६) शौका. ३१–३२ पृ. ५० ; प्रपा. २७६.

[1]उदीरयेन्महानाम्नीर्भो अन्वित्येवमादिकम् ।
गृहीत्यन्तमथाऽऽचार्यो ज्ञात्वा कालप्रमाणतः ॥
[2]वचनं तेन शिष्येण प्रोक्तमभ्युक्षणादिकम् ।
पृष्ट्वा च व्रतलोपानामेनं गौरवलाघवम् ॥
[3]अल्पेन व्रतलोपेन संततं चानुकम्प्य च ।
$तृतीयारण्यकस्यान्ते समाम्नातास्तु या ऋचः ॥
[4]विदामघवन्विदागातुमित्युपक्रमसंयुताः ।
ता महानाम्न्य इत्युक्ताः पुरीषपदसंज्ञकैः ॥
[5]एवाह्येवादिभिः सार्धं संमीलितविलोचनः ।
त्रिरनूच्याथ शिष्यस्य मूर्ध्नि वासो विवेष्टितम् ॥
[6]उन्मुच्य स्वयमाचार्यो मित्रस्यत्वादिना ततः ।
मन्त्रद्वयेन शिष्यं तमादित्यमभिवीक्षयेत् ॥
[7]अथास्या( ? स्य )श्मप्रभृतिभिः संभारैः सहिता दिशः ।
मित्रस्यचक्षुषादिमन्त्रस्य( ? तः ) सम्यगीक्षयेत् ॥
[8]मित्रस्यत्वादिकं मन्त्रमृच्छत्वित्येवमन्तकम् ।
वाचयित्वा पुनश्चार्कमीक्षयेदथ तावुभौ ॥

[1]जपित्वा मन्त्रसंघातं क्रमेणाग्न इळादिकम् ।
भव इत्येवमन्तं तं संस्पृशेतां च भूतलम् ॥
[2]अथ शिष्यस्तमाचार्यमनुज्ञाप्य यथापुरम् ।
अनुप्रवचनीयार्थं भिक्षित्वा गुरवे च तत् ॥
[3]भिक्षालब्धं निवेद्यास्मै चरुं पक्त्वा यथाविधि ।
आवेदयेच्च तत्पक्वं चरुं तस्मै यथापुरम् ॥
[4]गुरुरप्याज्यसंस्कारमुपक्रम्य यथोदितम् ।
अनूयाजनिधानान्तं तन्त्रं कृत्वा ततः परम् ॥
[5]इध्माधानादि शिष्येण स्पृष्टः कृत्वा पुरस्तनम् ।
तन्त्रशेषं यथान्यायमवदाय चरुं ततः ॥
[6]चतस्रोऽत्राऽऽहुतीः कुर्याद्यथा ब्रह्मौदनं पुरा ।
ब्रह्मौदनवदत्रापि होममन्त्राः स्युरत्र तु ॥
महानाम्नीभ्य इत्येष द्वितीयो मन्त्र इष्यते ।
अथोपरिष्टात्तन्त्रं च यथाविधि समापयेत् ॥

## कुमारिलकारिकाः

कतिपयोपनयनाङ्गातिदेशः, नवमेखलादिधारणम्, व्रतचर्या, बहिर्ग्रामे होमादिकृत्यम्, व्रतलोपश्चेत्प्रायश्चित्तम्, हुतशेषभोजनम्, आदित्योपस्थानम्, समुखशिरोवेष्टनम्, एकरात्रव्रतनियमाः, अग्निस्थापनम्, महानाम्न्यनुवाचनम्, आदित्यस्य दिशां चेक्षणम्, भूम्युपस्पर्शनम्, अनुप्रवचनीयहोमः

[7]उक्ते काले ददाम्यन्तं वापनाद्युपनीतिवत् ॥

---

$ आश्वलायनश्रौतसूत्रीयप्रपाठ्याख्यानगता (सं. का. पृ. ३३९३) टिप्पणी द्रष्टव्या ।

(१) शौका. ३३ पृ. ५० अन्वित्ये ( अधीष्वे ); प्रपा. २७६.

(२) शौका. ३४ पृ. ५० मभ्यु ( मप्ये ); प्रपा. २७६.

(३) शौका. ३५ पृ. ५०; प्रपा. २७६.

(४) शौका. ३६ पृ. ५० क्रमसं (क्रम्य सं); प्रपा. २७६.

(५) शौका. ३७ पृ. ५०; प्रपा. २७६.

(६) शौका. ३८ पृ. ५०; प्रपा. २७६ ना ततः ( मन्त्रतः ) वीक्ष ( वाद ).

(७) शौका. ३९ पृ. ५०–५१; प्रपा. २७६ पृ.

(८) शौका. ४० पृ. ५१; प्रपा. २७६.

(१) शौका. ४१ पृ. ५१; प्रपा. २७६ मन्तं तं ( मन्त्रान्तं ) तलम् ( तले ).

(२) शौका. ४२ पृ. ५१; प्रपा. २७६.

(३) शौका. ४३ पृ. ५१; प्रपा. २७६ पुरम् ( पुरा ).

(४) शौका. ४४ पृ. ५१ निधा ( विधा ); प्रपा. २७६ रप्याज्य ( श्चाथाऽऽज्य ).

(५) शौका. ४५ पृ. ५१ स्पृष्टः ( पृष्टः ); प्रपा. २७६.

(६) शौका. ४६–४७ पृ. ५१; प्रपा. २७६.

(७) कुका. १।१४।१; प्रपा. २७० उक्ते का ( उक्तका ); श्वप्र. ४२ नीति ( नीत ) शेषं प्रपावत्.

[1]नवां मौञ्जीं नवं दण्डं दत्त्वा स्विष्टकृदाद्यथ ।
संवत्सरं चरेदेवं पूर्णेऽब्दे तूत्तरायणे ॥

[2]शुक्लपक्षे बहिर्ग्रामाद्विविक्तं देशमेत्य च ।
पूर्णपात्रनिधानान्तमुपलेपादि पूर्ववत् ॥

[3]स्वस्यालं भुक्तये तूष्णीं निरुप्य प्रोक्ष्य तत्र च ।
तिलानोप्य पचेत्पक्वमाचार्याय निवेदयेत् ॥

[4]पृच्छति व्रतलोपांस्तु दत्ते प्रतिवचस्यथ ।
बहवो व्रतलोपाश्चेत्पुनरावर्तयेद्व्रतम् ॥

[5]लोपेष्वापत्प्रयुक्तेषु पुनर्नाऽऽवर्तयेद्व्रतम् ।
तेनान्वारब्ध आचार्य इध्माधानादि पूर्ववत् ॥

लोपगौरवे प्रायश्चित्तं कारयित्वा पुनः संवत्सरव्रतं कारयेत् । आपत्प्रयुक्ततया लोपलाघवे दानजपादिप्रायश्चित्तेन सद्यः शुद्धिं संपाद्य न व्रतमावर्तयेदिति पारिजातादयः, 'बहवो व्रतलोपाश्चेत्पुनरावर्तयेद्व्रतम् । लोपेष्वापत्प्रयुक्तेषु पुनर्नाऽऽवृत्तिरिष्यते ॥' इति कारिकोक्तेः । लोपलाघवे व्रतानावृत्तिवत्प्रायश्चित्ताभावोऽप्युचितः, "आपदा कारिताश्चेत् 'अग्नावग्निः' इत्यादिभिर्जुहुयात्, न प्रायश्चित्तान्तरं कर्तव्यम्" इति वृत्तिकृता अष्टमाध्यायगतमहानाम्नीव्रतसूत्रव्याख्यायामभिधानात् । संको. १६२

[6]हुत्वाऽग्नावग्निरित्यादिमन्त्रैश्चर्वाहुतीरथ ।
ततः स्विष्टकृतोऽवद्येच्छेषं भूमौ निधाय च ॥

पतमित्याद्यशानान्तमाह प्रैषमतः परम् ।
भुक्तवन्तं तमाचान्तं जलपूर्णाञ्जलिं ततः ॥

[1]त्वं व्रतानां व्रतेत्यादिभु( ? मु )क्तवन्तं दिवाकरम् ।
उपस्थाप्याथ कुर्वीत मीलिताक्षं च वाग्यतम् ॥

[2]त्रिः प्रदक्षिणमावेष्ट्य वाससा समुखं शिरः ।
उक्त्वैकरात्रमित्यादि प्रैषं स्विष्टकृदाद्यथ ॥

[3]आवश्यकेभ्य इतरच्छयनं स्नानभोजनम् ।
अकुर्वन्नेकरात्रं च ब्रह्मचारी नयेदथ ॥

[4]श्व ईशान्यां निधायास्याद्यर्वागग्नेस्तृणेषु तु ।
ईशान्यग्रेषूपविशेदीक्षमाणस्तु तां दिशम् ॥

परः अन्यः ब्रह्मचारी । अस्यादीत्यत्राऽऽदिशब्देनोदकपूर्णकमण्डल्वश्मवत्सतर्यो गृह्यन्ते । प्रपा. २७०

[5]शिष्योऽपि स्वमुखं प्रक्षाल्याग्न्याचार्यौ प्रदक्षिणम् ।
कृत्वाऽऽचार्यस्य संगृह्य पादौ तेषु तृणेषु तु ॥

ईक्षमाणो दिशं प्रत्यग्दक्षिणामुपविश्य च ।
स्वेन पृष्ठेन तत्पृष्ठं संदधाति ततः परम् ॥

[6]मनसाऽऽह महानाम्नीर्भो अनुब्रूहि तं गुरुम् ।
पृच्छेत्तदहरुत्पन्नान् व्रतलोपाँस्ततो गुरुः ॥

---

(१) कुका. १।१४।२ ; प्रपा. २७० ; धप्र. ४२ नवां मौञ्जीं ( नवा मौञ्जी ) दाद्यथ ( तादिकम् ) वं पूर्णेऽ ( तत्पूर्णा ).

(२) कुका. १।१४।३ ; प्रपा. २७०.

(३) कुका. १।१४।४ निरु ( निरू ) ; प्रपा. २७०.

(४) कुका. १।१४।५ पांस्तु ( पान् स्वं ) स्यथ ( स्तथा ) ; प्रपा. २७० ; संको. १६२ उत्त.

(५) कुका. १।१४।६ ; प्रपा. २७० पुनर्नाऽऽ ( पुनरा ) ; संको. १६२ वर्तयेद्व्रतम् ( वृत्तिरिष्यते ) पू.

(६) कुका. १।१४।७–८ ; प्रपा. २७०.

(१) कुका. १।१४।९ ; प्रपा. २७० क्षं च वाग्यतम् ( क्षश्च वाग्यतः ) .

(२) कुका. १।१४।१० ; प्रपा. २७०.

(३) कुका. १।१४।११ ; प्रपा. २७० नं स्ना ( नाश ) च ( तु ).

(४) कुका. १।१४।१२ यास्या ( याग्न्या ) ; प्रपा. २७० श्व ई ( परै ) द्यर्वा ( द्युद ) न्यग्रे ( नाग्रे ) शेदी ( शेद्वी ) ; संको. १६३ द्वितीयपादे ( पश्चादग्नेस्तृणेषु तु ) प्रथमपादो नास्ति.

(५) कुका. १।१४।१३–१४ ; प्रपा. २७०.

(६) कुका. १।१४।१५ ; प्रपा. २७० साऽऽह ( सा च ) अनुब्रूहि ( ऽनुब्रूहीति ).

[1]स्वयं संमीलनं कुर्वन् महानाम्नीर्ऋचो गुरुः ।
त्रिः पुरीषपदैरुक्त्वा तस्योष्णीषं विमोचयेत् ॥

[2]ईक्षयेदर्कमीक्षेत मित्रस्येति द्वयेन तु ।
ससंभारा दिशो वीक्ष्य मित्रस्य च( ? व )
इति त्वथ ॥

[3]मित्रस्येति चतुर्थेन पुनरादित्यमीक्षयेत् ।
ईक्षणेऽर्कदिशां मन्त्रा ब्रह्मचारिण एव तु ॥

(१) कुका. १।१४।१६ ; प्रपा. २७०–२७१ पदैरु ( पदान्यु ).

(२) कुका. १।१४।१७ ; प्रपा. २७१ मीक्षेत ( मीक्षन्तं ) च ( त्व ).

(३) कुका. १।१४।१८ ; प्रपा. २७१ चतुर्थेन ( तृतीयेन ) पू. , २७३ उत्त.

किमिमे मन्त्रा आचार्यस्य, उत शिष्यस्य, उतोभयोः ?
इत्याशङ्क्याऽऽह– ईक्षणेऽर्क इति । प्रपा. २७३

[1]मन्त्रान्ते कर्म कर्तव्यं सर्वत्र करणत्वतः ।
उक्त्वा चाग्न इळेत्यादीन् मन्त्रान् भूमिमुप-
स्पृशेत् ॥

[2]अनुप्रवचनीयश्च कार्योऽयं मेद उच्यते ।
महानाम्नीभ्यः स्वाहेति सावित्र्याः स्थान
इष्यते ॥

(१) कुका. १।१४।१९ ; प्रपा. २७१ दीन् म ( दिम ) उत्त.

(२) कुका. १।१४।२० ; प्रपा. २७१.

# महाव्रत (व्रातिक) व्रतप्रयोगः

## †ऐतरेयारण्यकम्

महाव्रताध्ययनाध्यापननियमास्तत्फलं च

**[1]'तदिदमहर्नान्तेवासिने प्रब्रूयान्नासंवत्सरवासिने नो एवासंवत्सरवासिने नाब्रह्मचारिणे नासब्रह्मचारिणे नो एवासब्रह्मचारिणे नानभिप्राप्तायैतं देशम् ॥**

इदानीमध्यापननियमान् दर्शयति— तदिदमिति । अध्यापकस्य गुरोः अन्ते समीपे वस्तुं शीलमस्येत्यन्तेवासी । तन्नियमाश्च स्मृतिषु दर्शिताः— 'गुरुरनुगन्तव्योऽभिवाद्यश्च ' इति गौतमस्मृतिः , ' आहूतश्चाप्यधीयीत लब्धं चास्मै निवेदयेत् ' ( यास्मृ. १।२७ ) इति याज्ञवल्क्यः , ' अक्रोधनोऽनसूयः सर्वे लाभं चाऽऽहरन् गुरवे सायं प्रातरमत्रेण भिक्षाचर्यं चरेद्भिक्षमाणोऽन्यत्रापपात्रेभ्योऽभिशस्ताच्च ' ( आध. १।३।२३–२५ ) इत्यापस्तम्बः । एतैर्नियमैरुपेतोऽन्तेवासी, तद्विरहितोऽनन्तेवासी, तादृशाय नियमरहिताय तदिदं महाव्रतप्रतिपादकं वाक्यं न ब्रूयात् । नियमवानपि य आचार्यसमीपे संवत्सरं शुश्रूषां कृत्वा न तिष्ठेत् तादृशायापि न ब्रूयात् । नियतिमवलोक्य दाक्षिण्येन संवत्सरवासाभावेऽपि कदाचित्स ग्रन्थः प्रोच्यत इत्याशङ्क्य ' नो एव ' इति पुनर्निषेधति । अष्टविधस्त्रीसङ्गरहितो ब्रह्मचारी । तथा च स्मर्यते— ' श्रवणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् । संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥ एतन्मैथुनमष्टाङ्गं वदन्ति ब्रह्मवादिनः । विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम् ॥ ' इति । तथाविधब्रह्मचर्यरहिताय न ब्रूयात् । उक्तविधैर्ब्रह्मचारिभिः सह वसतीति

---

† अत्रैतच्छीर्षकं रूढिमनुसृत्य स्वीकृतम् । वैदिकाः पूर्वारण्यकचतुष्टयमिव पञ्चमारण्यकमप्यैतरेयारण्यकरूपा श्रुतिरेवेति प्रतिपद्यन्ते, न सा श्रौतसूत्ररूपा स्मृतिरिति प्रतियन्ति । सायणाचार्यास्तु पञ्चमारण्यकभाष्यारम्भे नैकैर्हेतुभिः पञ्चमारण्यकस्य श्रौतसूत्ररूपत्वं प्रसाध्य ' अरण्य एवैतदध्येयमित्यभिप्रेत्याध्येतारोऽरण्यकाण्डेऽन्तर्भाव्याधीयते ' इत्याहुः । श्रौतसूत्ररूपत्वेऽपि तस्याऽऽश्वलायनीयत्वं वाऽन्यदीयत्वं वेति संशोध्यमाने प्रथमारण्यकभाष्ये सर्वत्र पञ्चमारण्यकवाक्यानां शौनकीयत्वेनोल्लेखात् , ऋक्संहिताभाष्येऽपि क्वचित् द्वादशाध्यायीवाक्यस्याऽऽश्वलायनीयत्वेन पञ्चमारण्यकवाक्यस्य च शौनकीयत्वेनोल्लेखस्योपलम्भाच्च पञ्चमारण्यकस्य शौनकीयत्वं सायणाचार्याभिमतमिति प्रतीयते । वस्तुतस्तु आश्वलायनाचार्येण ' सत्राणाम् ' (आश्रौ. ७।१) इति सत्रसंबन्धिनां सर्वेषामह्नां व्युत्पादनमुपक्रम्य चतुर्विंशादीन्यविवाक्यपर्यन्तानि त्रयोविंशतिमहानि साङ्गोपाङ्गानि व्युत्पाद्य ' एतावत्सात्रं होतृकर्मान्यत्र महाव्रतात् ' (आश्रौ. ८।१३) इत्युपसंहारेऽत्रानुक्तस्यापि महाव्रतहोतृकर्मणः सात्रत्वसिद्ध्यर्थम् ' अन्यत्र महाव्रतात् ' इत्युक्त्वा एकादशद्वादशाध्याययोः सत्रेषु तत्र तत्र महाव्रतरूपस्याह्नः क्लृप्तिं विदधता यदि महाव्रतं व्युत्पादितं न स्यात् तर्हि सूत्रवैकल्यमापतेत् । यदि ऋष्यन्तरेण व्युत्पादितमनुमन्यते तर्हि सूत्रवैकल्यशङ्कापरिहारार्थम् 'ऋष्यन्तरेणोक्तत्वान्मया नोच्यते' इत्यवश्यं वक्तव्यमपि नोक्तम् । वृत्तिकारोऽपि ' चतुर्विंशादीनि च तदीयान्यहानि व्युत्पाद्यन्ते महाव्रतपर्यन्तानि ' इति, ' महाव्रतं चान्यत्र वक्ष्यते ' इति च प्रसक्तामपि ऋष्यन्तरकर्तृकत्वोक्तिमकृत्वैव व्याचष्टे । देवस्वाम्यपि ' येन रहस्ये ब्रूते ' इति निर्विशेषमेव पञ्चमारण्यकवाक्यार्थमवतारयति । तस्मात् पञ्चमारण्यकमाश्वलायनीयमेव स्यादिति प्रतिभाति । यद्यप्येते महाव्रतग्रन्थाध्ययनाध्यापननियमा महाव्रतविषयकप्रथमब्राह्मणारण्यकाध्ययनादिसंबन्धिनो वा, सूत्ररूपपञ्चमारण्यकाध्ययनादिसंबन्धिनो वा, उभयसंबन्धिनो वेति न कुत्रापि स्वशब्दैरुक्तम् , यद्यपि च महाव्रतव्रतपूर्वकाध्येयप्रथमारण्यकाध्ययनादिसंबन्धिन एव नियमाश्चात्र संग्राह्याः , तथापि सूत्रत्वेऽप्यारण्यकत्वात् पञ्चमारण्यकाध्ययनादिसंबधित्वे नियमानामभ्युपगतेऽपि जातूकर्ण्यादिमतोपन्यासस्वारस्यात् , ' ग्रहणान्तं वा ' इति गृह्यसूत्रे देवस्वामिना व्रतस्नातकत्वोपपादनार्थमध्ययनविषयकपञ्चमारण्यकवाक्यस्यार्थतोऽनुवादाच्च प्रथमारण्यकाध्ययनादिसंबन्धित्वमेतेषां नियमानामस्त्येवेति प्रतीतेस्तेऽत्र संगृहीताः ।

(१) ऐआ. ५।३।३।३–१८.

सब्रह्मचारी । यद्वा एकस्मादाचार्यात्सहाध्येतारः सब्रह्मचारिणः । तद्विपरीतैः सह वसतीत्यसब्रह्मचारी, तादृशाय न ब्रूयात् । सहवासिनां ब्रह्मचर्याभावेऽपि तस्य ब्रह्मचर्यसद्भावमात्रेण योग्यतामाशङ्क्य 'संसर्गजा दोषगुणा भवन्ति ' इति न्यायेन स्वकीयब्रह्मचर्यस्यापि कथंचित् शैथिल्यं संभवेदित्यभिप्रेत्य 'नो एव ' इति पुनर्निषेधति । आचार्यो यस्मिन् देशे निवसति एतं देशमनभिप्राप्ताय न ब्रूयात् । धनदाक्षिण्यादिनिमित्तेन स्वयं तद्गृहे गत्वा न कथयेदित्यर्थः । ऐआसा.

**न भूयः सकृद्वदनाद्द्विर्गदनाद्वा द्व्यृचेव ॥**

बहुकृत्वोऽध्यापनं निषेधति— न भूय इति । एकस्मिन्पर्याये शिष्याणामध्यापनं सकृद्वदनम् । पर्यायद्वयेऽध्यापनं द्विर्गदनम् । ततो भूयो न प्रब्रूयात् तृतीयचतुर्थादिपर्यायप्राप्तान् शिष्यान् नाध्यापयेत् । किंतु द्व्यृचेव द्विरेव अध्यापनप्रवृत्तिः कार्या, न तु ततोऽधिका, अत्यन्तरहस्यत्वेन गोपनीयत्वात् । ऐआसा.

**एक एकस्मै प्रब्रूयादिति ह स्माऽऽह जातूकर्ण्यः ॥**

तस्मिन्नेव गोपने मतान्तरमाह— एक इति । जातूकर्ण्यनामकस्तु मुनिर्द्विरध्यापनं न सहते । एकस्मिन्नध्यापने शिष्यबाहुल्यं न सहते, किंतु संप्रदायविच्छेदनिवारणार्थम् एकः आचार्यः एकस्मै शिष्याय ब्रूयादित्येतावदेवाभ्युपगच्छति । ऐआसा.

**न वत्से च न तृतीय इति ॥**

शिष्याणां चाल्पवार्धकयोर्वयसोस्तदध्यापनं निषेधति— न वत्स इति । इतिशब्दः शिष्यप्रयुक्तनिषेधसमाप्त्यर्थः । ऐआसा.

**न तिष्ठंस्तिष्ठते न व्रजन्व्रजते न शयानः शयानाय नोपर्यासीन उपर्यासीनायाध एवाऽऽसीनोऽध आसीनाय ॥**

शिष्याचार्योभयप्रयुक्तान्निषेधान्दर्शयति— न तिष्ठन्निति । तिष्ठन् आचार्यः तिष्ठते शिष्याय न ब्रूयात् । एवमुत्तरत्रापि द्रष्टव्यम् । उपरि मञ्चकादौ । आचार्यः स्वयम् अध एव भूमावेव आसीनो भूमिष्ठायैव ब्रूयात् । ऐआसा.

**नावष्टब्धो न प्रतिस्तब्धो नातिवीतो नाङ्कं कृत्वोर्ध्वज्ञुरनपश्रितोऽधीयीत न मांसं भुक्त्वा न लोहितं दृष्ट्वा न गतासुं नाव्रत्यमाक्रम्य नाक्त्वा नाभ्यज्य नोन्मर्दनं कारयित्वा न नापितेन कारयित्वा न स्नात्वा न वर्णकेनानुलिप्य न स्रजमपिनह्य न स्त्रियमुपगम्य नोल्लिख्य नावलिख्य ॥**

पुनरपि शिष्यनियमान् दर्शयति— नावष्टब्ध इति । पृष्ठभागे कुड्याद्याश्रयणम् अवष्टम्भः । पुरोभागे हस्तयोर्दण्डाद्याधाराश्रयणं प्रतिस्तम्भनम् । वस्त्रेण सर्वाङ्गापिधानम् अतिवीति( ? त )त्वम् । पद्मासनादिकम् अङ्ककरणम् । एतत्सर्वं परित्यज्य जानुद्वयमूर्ध्वं कृत्वा योगपट्टवस्त्राद्याश्रयरहितो ग्रन्थमधीयीत । मांसभोजनलोहितदर्शनमृतप्राणिदर्शनोच्छिष्टाद्याक्रमणनेत्राञ्जनदेहाभ्यङ्गशरीरमर्दननखनिकृन्तनाद्युष्णोदकस्नानचन्दनकुङ्कुमाद्यनुलेपनपुष्पमालाधारणस्त्रीसंगमलिप्यक्षराद्युल्लेखनावलेखनानि कृत्वा नाधीयीत । ऐआसा.

**नेदमेकस्मिन्नहनि समापयेदिति ह स्माऽऽह जातूकर्ण्यः । समापयेदिति गालवः । यदन्यत्प्राक्तृचाशीतिभ्यः समापयेदेवेत्याग्निवेश्यायनोऽन्यमन्यस्मिन्देशे शमयमान इति ॥**

समाप्तौ मतभेदं दर्शयति— नेदमिति । इदं महाव्रताध्ययनं यस्मिन् दिने प्रक्रान्तं तस्मिन्नेव समाप्तं न कुर्यादिति जातूकर्ण्यस्य मतम् । गालवस्य तु कुर्यादिति मतम् । आग्निवेश्यायनस्य तु कियदेव समापयेदिति मतम् । गायत्र्यादिभ्यस्तृचाशीतिभ्यः प्राचीनमाज्यप्रउगादिकं यदस्ति तदेवैकस्मिन् दिने समापयेत्, इतरभागं तु दिनान्तरे समापयेत् । यथैवोत्तरभागस्यान्यस्मिन् दिने समापनं तथैव अन्यम् उत्तरभागम् अन्यस्मिन् देशे शमयमानः समापयन् अवतिष्ठेत । इतिशब्दो मतद्वय( ? त्रय )समाप्त्यर्थः । ऐआसा.

**यत्रेदमधीयीत न तत्रान्यदधीयीत । यत्र त्वन्यदधीयीत काममिदं तत्राधीयीत ॥**

देशविषये पुनरन्यं विशेषं दर्शयति— यत्रेदमिति । इदं महाव्रतप्रतिपादकं मन्त्रजातं यस्मिन् देशेऽधीतं तस्मिन् देशे स्थित्वा ग्रन्थान्तराध्ययनं न कुर्यात् । यस्मिंस्तु देशे ग्रन्थान्तरमधीतं तस्मिन् देशे स्वेच्छयेदमध्येतुं शक्यम् । ऐआसा.

**नेदमनधीयन्स्नातको भवति । यद्यप्यन्यद्बह्वधीयात्रैवेदमनधीयन्स्नातको भवति ॥**

शाखान्तरे ' वेदमधीत्य स्नायात् ' इति स्नानाख्यं यत्कर्म विहितं तस्मात् प्रागेव महाव्रताध्ययनं विधत्ते—नेदमिति । कृत्स्नमपि वेदमधीत्य स्नायादिति मुख्यः कल्पः । यदा तु वेदैकदेशमधीयीतेत्यनुकल्प आश्रीयेत तदानीं यद्यपि महाव्रतादन्यद्दर्शपूर्णमासादिकं बहुग्रन्थजातमधीतं तथापि महाव्रताध्ययनमकृत्वा तत् स्नानं न कुर्यात् । ऐआसा.

**नास्मादधीतात्प्रमाद्येत् । यद्यप्यन्यस्मात्प्रमाद्येन्नैवास्मात्प्रमाद्येत् ॥**

अधीतस्य महाव्रतग्रन्थस्य विस्मृतिं निषेधति— नास्मादिति । प्रज्ञामान्द्यादिदोषेण यद्यपि अन्यस्मात् दर्शपूर्णमासादिग्रन्थात् प्रमाद्येत् ग्रन्थविस्मृतिं प्राप्नुयात् तथापि प्रयत्नेन पुनः पुनरावृत्त्या अस्मात् महाव्रतग्रन्थात् नैव प्रमाद्येत् । ऐआसा.

**नो एवास्मात्प्रमाद्येत् ॥**

अत्र केचिदिदं वाक्यान्तरमपि पठन्ति— नो एवेति । आदरातिशयार्थं तद्वाक्यं द्रष्टव्यम् । ऐआसा.

**अस्माच्चेत्र प्रमाद्येदलमात्मन इति विद्यात् ॥**

मन्दप्रज्ञस्य वेदभागविस्मृतिदोषोऽप्येतद्विस्मृत्यभावेन परिह्रियत इति दर्शयति— अस्माच्चेदिति । आत्मनः पुरुषार्थाय महाव्रतविस्मृत्यभाव एवालमिति निश्चिनुयात् । ऐआसा.

**अलं सत्यं विद्यात् ॥**

तत्रान्यद्वाक्यं केचित्पठन्ति— अलमिति । महाव्रतमेव पुरुषार्थायालमिति यदुक्तं तत् सत्यं प्रामाणिकम्, न तत्र शङ्कितव्यमिति निश्चिनुयात् । इदमपि वाक्यान्तरमादरार्थम् । ऐआसा.

**नेदंविदनिदंविदा समुद्दिशेत् । न सह भुञ्जीत । न सधमादी स्यात् ॥**

अविस्मृतग्रन्थस्य पुनरन्यं नियमं विधत्ते— नेदंविदिति । इदं महाव्रतग्रन्थजातं वेत्तीति इदंवित् । तादृशः पुमान् । अनिदंविदा तद्ग्रन्थज्ञानरहितेन पुरुषेण सह न समुद्दिशेत् तस्य पुरतो ग्रन्थमेतं न पठेदित्यर्थः । तादृशेन महाव्रतानभिज्ञेन पुरुषेण सहैकस्यां पङ्क्तौ न भुञ्जीत । सधमादी तेन सार्धं हर्षादिविनोदवानपि न स्यात् । ऐआसा.

**... नास्मिन् कथां वदेत । नास्य रात्रौ च । न च कीर्तयिषेत् ॥**

... अस्मिन् प्रकृते महाव्रताध्ययनकाले लौकिकवार्तां परित्यजेत् । किंचास्य महाव्रतस्य पाठं रात्रौ न कुर्यात् । किंच, ' महाव्रताभिज्ञोऽहम् ' इत्येवं जनमध्ये कीर्तिमपि नेच्छेत् । महाव्रतस्य गोप्यत्वात्तद्विषयाभिज्ञानमपि न प्रकटयेत् । ऐआसा.

**तदिति वा एतस्य महतो भूतस्य नाम भवति । योऽस्यैतदेवं नाम वेद ब्रह्म भवति ब्रह्म भवति ॥**

उक्तनियमेनाध्ययने फलमाह— तदितीति । इति वै पूर्वोक्तेनैव नियमेन अधीतं तत् कृत्स्नस्वाध्यायवाक्यं महाव्रतवाक्यं वा एतस्य प्रकृतस्य कृत्स्नवेदप्रतिपाद्यस्य महतः सर्वगतस्य भूतस्य नित्यसिद्धस्य परमात्मनः नाम भवति । कृत्स्नस्य वेदस्य परमात्मप्रतिपादकत्वात् तन्नामत्वं युक्तम् । तत्प्रतिपादकत्वं च कठैराम्नायते— ' सर्वे वेदा यत्पदमामनन्ति ' इति । ' विदन्त्यनेन परमात्मानम् ' इति व्युत्पत्त्या वेदशब्दोऽपि तत्प्रतिपादकमेव ग्रन्थमाचष्टे । अतः कृत्स्नवेदस्य परमात्मनामत्वेनात्यन्तरहस्यमन्त्ररूपत्वात् बहुविधनियमपुरःसरमध्ययनं युक्तम् । यः पुमान् एतत् स्वाध्यायवाक्यं सर्वम् एवम् उक्तेन अस्य परमात्मनः नामेति वेद, विदित्वा च नियमेनैवाधीते, स पुमान् अधीतवेदमुखेन परमात्मानं विदित्वा स्वस्य ब्रह्मस्वाधार( ? वार )काज्ञाननिवृत्त्या ( सः ? ) ब्रह्म भवति ।

वाक्याभ्यासस्तृतीयाध्यायसमाप्त्यर्थः पञ्चमारण्यकसमाप्त्यर्थः कृत्स्नारण्यककाण्डसमाप्त्यर्थश्च । ऐआसा.

## आश्वलायनश्रौतसूत्रम्

महाव्रते महानाम्नीव्रतधर्मातिदेशः सविशेषः

[1]**समाप्य समानं संभारवर्जम् ॥**

यदिदं महानाम्न्यध्ययनमुक्तं तत्समाप्योत्तरयोरपि महाव्रतोपनिषदाख्ययोर्व्रतमनुयुज्य श्रवणान्तं महानाम्नीव्रतेन समानरूपं कर्तव्यम् । अयमेव तयोर्विशेषः पूर्वस्मात्– संभारवर्जमिति । संभारो नाम 'ओष्यन्बहिर्ग्रामात्' इत्यारभ्य 'पुनरादित्यं मित्रस्य त्वा चक्षुषा' इत्येवमन्तं वर्जयित्वेत्यर्थः । एतदुक्तं भवति– महाव्रतोपनिषदाख्ययोर्व्रतमनुयुज्य श्रवणान्तं संवत्सरादूर्ध्वमुदगयने पूर्वपक्षे ग्रामाद्बहिर्गत्वा श्रवणमेव कर्तव्यम्, नान्यद्धोमादीति । ¶ गानावृ.

**एष द्वयोः स्वाध्यायधर्मः ॥**

एष एव महाव्रतोपनिषदोर्वेदभागयोरध्ययनविधिः यो महानाम्नीनामध्ययनविधिरुक्तः– व्रतमनुयुज्य संवत्सरावमं चारयित्वोदगयने पूर्वपक्षे ग्रामाद्बहिर्गत्वाऽऽचार्यसकाशात्त्रिः श्रुत्वाऽनुप्रवचनीयं कृत्वा ततोऽध्ययनं कर्तव्यमिति । एतदनयोरप्यध्ययने संपादनीयमित्यर्थः । ¶गानावृ.

**आचार्यवदेकः ॥**

अयमपि विशेषो महाव्रतोपनिषदोरध्ययने भवति यदेकोऽधीयीत । यथाऽऽचार्योऽपराजितां दिशमभिसमीक्षमाणो ब्रूयादेवमेकश्चेच्छिष्यस्तामेव दिशमभिमुखोऽधीयीत । यदि द्वौ बहवो वा तदा नायं नियम आदरणीयः । अत एव ज्ञायते– एको द्वौ बहवो वाऽधीयीरन्निति । अध्ययन एवायं नियमः, श्रावणे त्वेक एव, व्रतादेशनादेरनुप्रवचनीयान्तसंस्कारस्य तन्त्रसिद्धौ प्रमाणाभावात् । ¶गानावृ.

¶ प्रपा. गानावृवत् ।

(१) आश्रौ. २।२।१४ ; प्रपा. २७१.

## कौषीतकिगृह्यसूत्रम्

महाव्रतश्रावणात्पूर्वं श्रावयितव्या ऋचः

[1] '**युवं सुरामम्' इत्येका 'स्वस्ति नः पथ्यासु' इति च तिस्र इति महाव्रतस्य ॥**

व्रातिकव्रतस्य कर्म वक्ष्यामः । शाक्वरे समाप्ते गृहं गत्वा तत उपलेपनोल्लेखनाद्युपनयनकर्म करोति । अयं तु विशेषः– 'मम व्रते हृदयं ते दधामि' इत्यस्य मन्त्रस्यान्ते 'बृहस्पतिष्ट्वा नियुनक्तु मह्यं सांवत्सरिकस्य व्रातिकस्य ब्रह्मचर्यस्य देवदत्त' इति । ततः शाक्वरवत्कर्तव्यम् । अयं तु विशेषः– यस्मिन्नवसरे माणवक आचार्येण महानाम्नीः पाठितः तस्मिन् 'प्रजापतिर्वै संवत्सरः' इति आरण्यकस्य द्वावध्यायौ श्रावयितव्याविति । कौगृसं.

## आश्वलायनः

पूर्वोक्तातिदेशः, श्रावणकाले मुखदिङ्नियमः

[2]**पूर्ववत्परिदानान्तं विनिर्दिष्टं महाव्रतम् ।**
**प्रति संवत्सरं सम्यक् श्रावयेदुत्तरायणे ॥**

**भूम्युपस्पर्शनान्ता तु क्रिया पूर्ववदीरिता ।**
**महाव्रते चोपनिषद्यनुप्रवचनीयकम् ॥**

**प्राङ्मुखं (?खः) श्रावयेच्छिष्यं शृणुयात्प्राङ्मुखः स्वयम् ।**
**महाव्रतं तदूर्ध्वं च सकृदेव समाहितः ॥**

## शौनककारिकाः

व्रतादेशनम्, बहिर्ग्रामं महाव्रतानुवचनम्, अर्केक्षणम्, मन्त्रजपः, भूमिस्पर्शनम्, अनुप्रवचनीयहोमः

[3]**महाव्रतेऽपि प्रथमं व्रतादेशनमाचरेत् ।**
**पूर्णेऽब्दे विजने देशे शुद्धे ग्रामाद्बहिर्व्रजेत् ॥**

(१) कौगृ. ६।४।२.

(२) आश्वस्मृ. ११।२५२–२५४.

(३) शौका. १ पृ. ५१ चरेत् ( रभेत् ) ; प्रपा. २७६–२७७ देशे शुद्धे ( शुद्धे देशे ).

[1]प्राक्कूलदर्भेष्वासीनं प्राङ्मुखं संयतं गुरुम् ।
शिष्योऽभिवाद्य प्रथमं श्रोतुकामो महाव्रतम् ॥

[2]भो इत्युक्त्वा प्रथमत आचार्यं तदनन्तरम् ।
अनुब्रूहीति च वदन् याचित्वा तत्समीपतः ॥

[3]आसीत प्राङ्मुखः शान्तः प्राक्कूले दर्भसंस्तरे ।
प्रार्थितस्त्रिरनुब्रूयादाचार्योऽथ महाव्रतम् ॥

[4]इन्द्रोपक्रमसंयुक्तां प्रथमारण्यकश्रुतिम् ।
मित्रस्यत्वादिभिर्मन्त्रैः पूर्ववच्चार्कमीक्षयेत् ॥

---

(१) शौका. २ पृ. ५१ ; प्रपा. २७७.

(२) शौका. ४ पृ. ५१ मत ( मं च ) तत्समीपतः ( ऽथ महाव्रतम् ) अत्र क्रमप्राप्तस्य ३ इत्यङ्कस्य स्थाने ४ इत्यङ्कस्य सत्त्वात् 'तत्समीपतः' इत्यारभ्याग्रिमश्लोकस्थात् 'ऽथ' इत्यतः प्राचीनो ग्रन्थस्त्रुटित इति प्रयोगपारिजातपाठमालोच्य प्रतीयते ; प्रपा. २७७ च वदन् ( वचनं ).

(३) प्रपा. २७७.

(४) शौका. ५ पृ. ५१ दिभिर्मन्त्रैः ( दिमन्त्रैः ) ; प्रपा. २७७.

[1]जपित्वा मन्त्रसंघातमुभावप्य इत्यादिकम् ।
गुरुशिष्यौ स्पृशेतां वै यथापूर्वं महीतलम् ॥
अनुप्रवचनीयं च पूर्ववज्जुहुयादथ ।
महाव्रताय स्वाहेति द्वितीयो मन्त्र इष्यते ॥

## कुमारिलकारिकाः

व्रतादेशनम्, महाव्रतश्रावणम्, अर्केक्षणाद्यतिदेशः

[2]महानाम्नीव्रतं प्रोक्तं महाव्रतमथोच्यते ।
पूर्ववद्व्रत आदिष्टे चरेदब्दमिदं व्रतम् ॥
[3]पूर्णे संवत्सरे देशे विविक्त उपविश्य च ।
प्राङ्मुखं श्रावयत्येनं महाव्रतमतः परम् ॥
[4]अनुप्रवचनीयान्तं कुर्यादर्केक्षणादिकम् ।
महाव्रताय स्वाहेति सावित्र्याः स्थान इष्यते ॥

---

(१) शौका. ६–७ पृ. ५१ ; प्रपा. २७७.

(२) कुका. १।१५।१ ; प्रपा. २७१ चतुर्थचरणे ( संवत्सरमिदं चरेत् ).

(३) कुका. १।१५।२ ; प्रपा. २७१ खं श्रावयत्येनं म ( खः श्रावयेदेतन्म ).

(४) कुका. १।१५।३ यान्तं (यादि) ; प्रपा. २७१.

# होतृ (प्राजापत्य) व्रतप्रयोगः

## बौधायनगृह्यसूत्रम्

व्रतोपाकरणे होमः, व्रतपतिमन्त्रवाचनम्, व्रतचर्या, प्राजापत्यकाण्डाध्ययनम्, व्रतलोपप्रायश्चित्तम्, व्रतोत्सर्जने होमः, व्रतपतिमन्त्रवाचनम्

'होतृषु प्रधानकालेष्वथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात्कृत्वा यथोपदेशं प्रधानाहुतीर्जुहोति– 'याज्ञिकीभ्यो देवताभ्यो होतृभ्यः स्वाहा, सांहितीभ्यो देवताभ्यो होतृभ्यः स्वाहा, वारुणीभ्यो देवताभ्यो होतृभ्यः स्वाहा, सर्वाभ्यो देवताभ्यो होतृभ्यः स्वाहा' इति ॥

अथ काण्डऋषिं जुहोति– 'प्रजापतये काण्डऋषये स्वाहा' इति ॥

अथ सदसस्पतिं जुहोति– 'सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम्। सनिं मेधामयासिषं स्वाहा ॥' इति ॥

अथ सावित्रीं जुहोति– 'तत्सवितुर्वरेण्यम्' इत्येताम् ॥

अथ वेदाहुतीर्जुहोति– 'ऋग्वेदाय स्वाहा, यजुर्वेदाय स्वाहा, सामवेदाय स्वाहा, अथर्ववेदाय स्वाहा, अथर्वाङ्गिरोभ्यः स्वाहा, इतिहासपुराणेभ्यः स्वाहा, सर्पदेवजनेभ्यः स्वाहा, सर्वभूतेभ्यः स्वाहा' इति ॥

अथ पालाशीश्चतस्रः समिध आर्द्राः सपलाशाः सप्ररोहाः प्रादेशमात्रा अपरिशुष्काग्रा घृतान्वक्ता अभ्याधापयन्वाचयति ॥

याज्ञिकानां वा वृक्षाणामन्यतमस्य ॥

'अग्ने व्रतपते होतारं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा, वायो व्रतपते होतारं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा, आदित्य व्रतपते होतारं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा, व्रतानां व्रतपते होतारं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा' इति ॥

अथप्रभृति सिद्धमा धेनुवरप्रदानात् ॥

संवत्सरमेतद्व्रतं चरेत् संवत्सरं हि व्रतं नातीत्यैतस्मिंस्त्वेवैतत्संवत्सरेऽधीयीत ॥

यद्यु वैतस्मिन् संवत्सरे नाधीयीत यावदध्ययनमेतद्व्रतं चरेत् ॥

अथ संवत्सरे पर्यवेतेऽध्यापयते श्रावयते वा ॥

अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात्कृत्वाऽथाव्रत्यप्रायश्चित्तं जुहोति– 'यन्म आत्मनो मिन्दाऽभूत्, पुनरग्निश्चक्षुरदात्' इति द्वाभ्याम् ॥

यथोपदेशं प्रधानाहुतीर्जुहोति– 'याज्ञिकीभ्यो देवताभ्यो होतृभ्यः स्वाहा' इति चतसृभिः ॥

अथ काण्डऋषिं जुहोति– 'प्रजापतये काण्डऋषये स्वाहा' इति ॥

अथ सदसस्पतिं जुहोति– 'सदसस्पतिम्' इति ॥

अथ सावित्रीं जुहोति– 'तत्सवितुः' इत्येताम् ॥

अथ वेदाहुतीर्जुहोति– 'ऋग्वेदाय स्वाहा, यजुर्वेदाय स्वाहा, सामवेदाय स्वाहा, अथर्ववेदाय स्वाहा, अथर्वाङ्गिरोभ्यः स्वाहा, इतिहासपुराणेभ्यः स्वाहा, सर्पदेवजनेभ्यः स्वाहा, सर्वभूतेभ्यः स्वाहा' इति ॥

अथ पालाशीश्चतस्रः समिध आर्द्राः सपलाशाः सप्ररोहाः प्रादेशमात्रा अपरिशुष्काग्रा घृतान्वक्ता अभ्याधापयन् वाचयति ॥

याज्ञिकानां वा वृक्षाणामन्यतमस्य ॥

(१) बौगृ. ३।२।५-२६.

'अग्ने व्रतपते होतारं व्रतमचारिषं तदशकं तन्मेऽराधि स्वाहा, वायो व्रतपते होतारं व्रतमचारिषं तदशकं तन्मेऽराधि स्वाहा, आदित्य व्रतपते होतारं व्रतमचारिषं तदशकं तन्मेऽराधि स्वाहा, व्रतानां व्रतपते होतारं व्रतमचारिषं तदशकं तन्मेऽराधि स्वाहा ' इति ॥

अथप्रभृति सिद्धमा धेनुवरप्रदानात् ॥

## भारद्वाजगृह्यसूत्रम्

व्रतोपाकरणे होमः, व्रतपतिभ्यः समिदाधानम्, नियमसंशासनम्, व्रतचर्या, प्रायश्चित्तहोमः, व्रतोत्सर्जने होमः, समिदाधानम्, काण्डाध्ययनम्

'अथातो व्रतादेशविसर्जने व्याख्यास्यामः । पर्वण्युदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रेऽग्नेरुपसमाधानाद्याज्यभागान्ते 'होतृभ्यः स्वाहा, प्रजापतये स्वाहा, विश्वेभ्यो देवेभ्यः स्वाहा, स्वयंभुवे स्वाहा ' इति होतृषु । ... चतस्रः पालाशीः समिधो घृतान्वक्ता आदधाति याज्ञिकानां वा वृक्षाणामन्यतमस्य 'अग्ने व्रतपते होतृभ्यो व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा, वायो व्रतपते, आदित्य व्रतपते, व्रतानां व्रतपते होतृभ्यो व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा ' इति । ... 'चित्तं च चित्तिश्च ' इति जयादि प्रतिपद्यते । परिषेचनान्तं कृत्वाऽथैनं संशास्ति– 'ब्रह्मचार्यसि, समिध आधेहि, अपोऽशान, कर्म कुरु, मा दिवा सुषुप्थाः, भिक्षाचर्यं चर, आचार्याधीनो वेदमधीष्व ' इति ॥

(१) भागृ. ३।४–५.

चत्वारिंशतमष्टौ चतुर्विंशतिरेव वा सर्वदैव ब्रह्मचर्यं ग्रहणान्तं वा । वर्षाणि द्वादशावरार्ध्यमित्यपरम् । संवत्सरमेतद्व्रतं चरेत् । संवत्सरे पर्यवेतेऽग्नेरुपसमाधानाद्याज्यभागान्ते 'यन्म आत्मनो मिन्दाऽभूत्, पुनरग्निश्चक्षुरदात् ' इति द्वे मिन्दाहुती जुहोति । पूर्ववत्प्रधानाहुतीर्हुत्वा व्रतपतिभ्य आधापयति– 'अग्ने व्रतपते होतृभ्यो व्रतमचारिषं तदशकं तन्मेऽराधि स्वाहा, वायो व्रतपते, आदित्य व्रतपते, व्रतानां व्रतपते होतृभ्यो व्रतमचारिषं तदशकं तन्मेऽराधि स्वाहा ' इति । ....'चित्तं च चित्तिश्च ' इति जयादि प्रतिपद्यते । परिषेचनान्तं कृत्वाऽथैनं व्रतान्तेऽध्यापयते श्रावयते वा महाहोतार ... इति । संतिष्ठते(? ष्ठेते) व्रतादेशविसर्जने ॥

## वैखानसगृह्यसूत्रम्

होतृव्रतप्रधानहोमः, व्रतबन्धहोमः, स्वाध्यायसूक्तानि

'तमद्भिरभ्युक्ष्य दक्षिणे निवेश्य धातादिपूर्वं 'प्रजापतये काण्डर्षये, सदसस्पतिम्, प्रजापते न त्वत्, ऋषीणां पतिम्, प्रजापते त्वं निधिपाः, तवेमे लोकाः, प्रजापतिं प्रथमम्, यो रायः ' इति । अग्न्यादिषु पञ्चसु 'प्राजापत्यम् ' इत्युभयत्रोहित्वा वार्षिकं प्राजापत्यव्रतबन्धं हुत्वा शिष्येण व्रतं बन्धयति ... ॥

'ऋतं च सत्यं च, देवकृतस्य, यन्मे गर्भे, तरत्स मन्दी ' इति प्राजापत्ये... ॥

(१) वैगृ. २।९, १०.

## बौधायनश्रौतसूत्रम्

केशश्मश्रुवापनम्, शुक्रियव्रतोपाकरणे बहिर्ग्राममग्निस्थापनम्, शान्तिकरणम्, देवतासनकल्पनम्, देवतातर्पणम्, समिदाधानम्, देवतोपस्थानम्, अनुवाकादिवाचनम्, नेत्रसंमीलनवाग्यमनशिरोवेष्टनानि, समिदाधानदेवतातर्पणशान्तिकरणानि, ग्रामागमनम्, परेद्युर्बहिर्ग्राममग्निस्थापनशान्तिकरणदेवतासनकल्पनानि, अग्न्यादिषट्कदर्शनम्, समिदाधानदेवतातर्पणशान्तिकरणानि, व्रतचर्योपदेशः, व्रतकाले शुक्रियाध्ययनम्, व्रतविसर्गः, अनध्यायोपदेशः, स्वाध्यायविधिः

**$[1]अथातोऽवान्तरदीक्षां व्याख्यास्यामः ॥**

**[2]उदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रे केशश्मश्रु वापयित्वा पूर्ववदुपाकृत्य ग्रामात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य खिलेऽ*च्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य मदन्तीरधिश्रित्य प्रथमेनानुवाकेन शान्तिं कृत्वा दर्भैः प्रवर्ग्यदेवताभ्य आसनानि कल्पयति ॥**

**[1]अग्रेणाग्निम् ‘प्रवर्ग्याय कल्पयामि, घर्माय कल्पयामि, महावीराय कल्पयामि, सम्राजे कल्पयामि’ इति ॥**

**[2]दक्षिणेनाग्निम् ‘ब्रह्मणे कल्पयामि, प्रजापतये कल्पयामि’ इति। उत्तरेणाग्निम् ‘ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यः कल्पयामि, देवेभ्यो घर्मपेभ्यः कल्पयामि’ इति। अथ दक्षिणतः प्राचीनावीती ‘पितृभ्यो घर्मपेभ्यः कल्पयामि, यमायाङ्गिरस्वते पितृमते कल्पयामि’ इति। अथाप उपस्पृश्योत्तरतो यज्ञोपवीती ‘रुद्राय रुद्रहोत्रे कल्पयामि’ इति ॥**

**[3]अथाप उपस्पृश्य ‘सर्वाभ्यः प्रवर्ग्यदेवताभ्यः कल्पयामि’ इति ॥**

**[4]प्रदक्षिणमग्निं परिषिच्य व्याहृतीभिर्वैकङ्कतीः समिधोऽभ्याधाय मदन्तीभिः प्रवर्ग्यदेवतास्तर्पयति ॥**

**[5]अग्रेणाग्निम् ‘प्रवर्ग्यं तर्पयामि, घर्मं तर्पयामि, महावीरं तर्पयामि, सम्राजं तर्पयामि’ इति ॥**

---

$ सर्वोऽप्ययमवान्तरदीक्षाग्रन्थो यद्यपि बौधायनगृह्यसूत्रपुस्तके तृतीयप्रश्ने चतुर्थाध्यायत्वेन मुद्रितः तथापि तत्र पूर्वाध्याययोर्यथाक्रमं व्रतप्रयोगेषूच्यमानेषु ‘अथ शुक्रियाणि। तेषामुक्ता व्रतचर्या’ इत्युक्तत्वात् गृह्यसूत्रादर्शपुस्तके पादटिप्पण्यामवान्तरदीक्षाग्रन्थस्यैकस्मिन्पुस्तकेऽदर्शनस्योक्तत्वाच्च श्रौतसूत्रीयोऽयं ग्रन्थोऽध्येतृभिर्गृह्यसूत्रे प्रक्षिप्त इति निर्णीयते। एवमपि गृह्यसूत्रीयपाठभेदानां संग्राह्यत्वात् गृह्यसूत्रीयस्थलान्यप्यस्माभिरत्रैव निर्दिष्टानि। विषयसाम्यवैषम्यबोधार्थं भारद्वाजश्रौतसूत्रगता टिप्पण्यप्यत्रानुसंधेया। इयमवान्तरदीक्षा सौम्यकाण्डावान्तरप्रवर्ग्यकाण्डाध्ययनाधिकारसंपादिका शुक्रियव्रताङ्गत्वेन शुक्रियव्रतमध्येऽनुष्ठीयते इति बोधायनीयगृह्यकर्मसमुच्चयग्रन्थतः प्रतीयते। प्रवर्ग्यकर्म च श्रौतम्। अत एवास्या अवान्तरदीक्षेति समाख्या श्रौतसूत्रे च विधानमुपपद्यते।

* अत्राऽऽदर्शपुस्तकानुसारेण तुगागमो रक्षितः। आपस्तम्बश्रौतसूत्रादिपुस्तकेषु क्वचित् तुगागमो मुद्रितः, क्वचिन्न। तैत्तिरीयब्राह्मणारण्यकगतेऽस्मिन् शब्दे वैदिकैस्तुगागमो न पठ्यते।

(१) **बौश्रौ.** ९।१९; **बौगृ.** ३।४।१.

(२) **बौश्रौ.** ९।१९; **बौगृ.** ३।४।२ दिश (दिशा) म्य खिले (म्याखले).

(१) **बौश्रौ.** ९।१९; **बौगृ.** ३।४।३ सम्राजे (संराजे).

(२) **बौश्रौ.** ९।१९; **बौगृ.** ३।४।४–७.

(३) **बौश्रौ.** ९।१९.

(४) **बौश्रौ.** ९।१९; **बौगृ.** ३।४।८ हृतीभि (हृतिभि) तास्तर्प (ताभ्यस्तर्प).

(५) **बौश्रौ.** ९।१९; **बौगृ.** ३।४।९ (घर्मं तर्पयामि०) सम्राजं (संराजं).

¹दक्षिणेनाग्निम् 'ब्रह्माणं तर्पयामि, प्रजापतिं तर्पयामि' इति। उत्तरेणाग्निम् 'ऋषीन्मन्त्रकृतो मन्त्रपतींस्तर्पयामि, देवान् घर्मपांस्तर्पयामि' इति। अथ दक्षिणतः प्राचीनावीती 'पितॄन्घर्मपांस्तर्पयामि, यममङ्गिरस्वन्तं पितृमन्तं तर्पयामि' इति। अथाप उपस्पृश्योत्तरतो यज्ञोपवीती 'रुद्रं रुद्रहोतारं तर्पयामि' इति। अथाप उपस्पृश्य 'सर्वाः प्रवर्ग्यदेवतास्तर्पयामि' इति॥

²चतस्र औदुम्बरीः समिधोऽप्रतिशुष्काग्रा घृतान्वक्ता अभ्याधापयन्वाचयति 'पृथिवी समित्' इत्येतैः प्रतिमन्त्रम्॥

³अथ देवता उपतिष्ठते– 'अग्ने व्रतपते शुक्रियं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम्, वायो व्रतपते, आदित्य व्रतपते, व्रतानां व्रतपते शुक्रियं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम्' इति॥

⁴अथैतेषामनुवाकानां प्रभृतीर्वाचयति प्रथमोत्तमयोर्वा॥

⁵अथैनं संशास्ति– 'संमील्य वाचं यच्छ' इति। अथास्याहतेन वाससा त्रिः प्रदक्षिणं समुखं शिरो वेष्टयति– 'चितः स्थ परिचितः स्वाहा मरुद्भिः परिश्रयस्व' इति॥

(१) बौश्रौ. ९।१९; बौगृ. ३।४।१०–१४.

(२) बौश्रौ. ९।१९; बौगृ. ३।४।१५ चतस्र (अथ चतस्र) प्रतिशुष्का (परिशुष्का) न्वक्ता (भ्यक्ता).

(३) बौश्रौ. ९।१९; बौगृ. ३।४।१६ वायो व्रतपते + (शुक्रियं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम्) आदित्य व्रतपते + (शुक्रियं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम्).

(४) बौश्रौ. ९।१९; बौगृ. ३।४।१७ प्रभृतीर्वा (प्रभृति वा).

(५) बौश्रौ. ९।१९; बौगृ. ३।४।१८–१९.

¹प्रदक्षिणमग्निं परिषिच्य व्याहृतीभिर्वैकङ्कतीः समिधोऽभ्याधाय मदन्तीभिः प्रवर्ग्यदेवतास्तर्पयित्वोत्तमेनानुवाकेन शान्तिं कृत्वाऽथास्तमित आदित्ये ग्राममायन्ति॥

²वाग्यतस्तिष्ठेदेतां रात्रिमुपविशेत्संविशेद्वा॥

³अथ प्रातरुदित आदित्ये ग्रामात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य मदन्तीरधिश्रित्य प्रथमेनानुवाकेन शान्तिं कृत्वा दर्भैः प्रवर्ग्यदेवताभ्य आसनानि कल्पयित्वा 'वयः सुपर्णाः' इति वासो विमुच्याथास्य षट्तयमभिविदर्शयत्यग्निमप आदित्यं गां ब्राह्मणं हिरण्यमिति॥

⁴अग्नीनादितोऽनुदर्शयित्वा यथोपपादमितराणि दर्शयित्वा प्रदक्षिणमग्निं परिषिच्य व्याहृतीभिर्वैकङ्कतीः समिधोऽभ्याधाय मदन्तीभिः प्रवर्ग्यदेवतास्तर्पयित्वोत्तमेनानुवाकेन शान्तिं कृत्वाऽथास्य व्रतचर्यामुपदिशेत्॥

⁵न यानमारोहेत्। न वृक्षमधिरोहेत्। न कूपमवरोहेत्। न छत्रं धारयीत। नोपानहौ धारयीत। नाऽऽसन्द्यां शयीत। न स्त्रिया न शूद्रेण संभाषेत। यदि संभाषेत ब्राह्मणेन संभाषेत। न सायं भुञ्जीत। यदि सायं भुञ्जीतावज्वलितं भुञ्जीत। न स्नायात्। अष्टम्यां पर्वणि चोपवसेत्तदहश्च स्नायात्। वाग्यतस्तिष्ठेदेतां रात्रिमुपविशेत्संविशेद्वा॥

(१) बौश्रौ. ९।१९; बौगृ. ३।४।२० हृतीभि (हृतिभि) तास्तर्प (ताभ्यस्तर्प) मायन्ति (मायान्ति).

(२) बौश्रौ. ९।१९; बौगृ. ३।४।२१.

(३) बौश्रौ. ९।१९; बौगृ. ३।४।२२ म्य खिले (म्याखले) मभिवि (मभिनि).

(४) बौश्रौ. ९।१९; बौगृ. ३।४।२३ तोऽनुद (तो द) हृतीभि (हृतिभि) तास्तर्प (ताभ्यस्तर्प).

(५) बौश्रौ. ९।१९; बौगृ. ३।४।२४ शूद्रेण + (सह) ब्राह्मणेन + (सह) वज्वलितं (पज्वलितं) विशे (वेशये).

[1]अमेध्यलोहितशवापपात्रदर्शने ज्योतिषां संदर्शनम् ॥

[2]अमेध्यं दृष्ट्वा जपति— 'अबद्धं मनो दरिद्रं चक्षुः सूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मा हासीः' इति ॥

[3]अथ यद्येनमभिवर्षति 'उन्दतीर्बलं धत्तौजो धत्त बलं धत्त मा मे दीक्षां मा तपो निर्वधिष्ट' इति जपति ॥

[4]संवत्सरमेतद्व्रतं चरेत् । संवत्सरं हि व्रतं नातीत्यैतस्मिंस्त्वेवैतत्संवत्सरेऽधीयीत ॥

[5]यद्यु वा एतस्मिन्संवत्सरे नाधीयीत यावदध्ययनमेतद्व्रतं चरेत् । अथ संवत्सरे पर्यवेतेऽध्यापयते श्रावयते वा ॥

[6]पूर्ववदुपाकृत्य ग्रामात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य मदन्तीरधिश्रित्य प्रथमेनानुवाकेन शान्तिं कृत्वा दर्भैः प्रवर्ग्यदेवताभ्य आसनानि कल्पयित्वाऽथाव्रत्यप्रायश्चित्ते जुहोति 'यन्म आत्मनो मिन्दाऽभूत्, पुनरग्निश्चक्षुरदात्' इति द्वाभ्याम् ॥

[7]प्रदक्षिणमग्निं परिषिच्य व्याहृतीभिर्वैकङ्कतीः समिधोऽभ्याधाय मदन्तीभिः प्रवर्ग्यदेवतास्तर्पयित्वा चतस्र औदुम्बरीः समिधोऽप्रतिशुष्काग्रा घृतान्वक्ता अभ्याधापयन्वाचयति 'द्यौः समित्' इत्येतैः प्रतिमन्त्रम् ॥

[1]अथ देवता उपतिष्ठते— 'आदित्य व्रतपते शुक्रियं व्रतमचारिषं तदशकं तन्मेऽराधि, वायो व्रतपते, अग्ने व्रतपते, व्रतानां व्रतपते शुक्रियं व्रतमचारिषं तदशकं तन्मेऽराधि' इति ॥

[2]प्रदक्षिणमग्निं परिषिच्य व्याहृतीभिर्वैकङ्कतीः समिधोऽभ्याधाय मदन्तीभिः प्रवर्ग्यदेवतास्तर्पयित्वोत्तमेनानुवाकेन शान्तिं कृत्वा तस्यानध्यायानुपदिशेत्— 'नाधीयीतास्तमित आदित्ये, नानुदिते, न विप्रोषितः, न पर्यावृत्ते, नाभ्रच्छायायाम्, न ग्राम्यस्य पशोरन्ते, नाऽऽरण्यस्य, नापामन्ते, न हरितयवान्प्रेक्षमाणः, न हर्म्याणि, न शरीराणि, न लोहितमुत्पतितं दृष्ट्वा, न मांसमशित्वा, न श्राद्धं भुक्त्वा, न केशश्मश्रु वापयित्वा, न केशान्प्रसार्य, न दतो धावते, नाङ्क्ते, नाभ्यङ्क्ते, नाऽऽर्द्रः, नाऽऽर्द्रेण वाससा, नाऽऽर्द्रे' इति ॥

[3]अथ स्वाध्यायमधीयीत । अपरेणाग्निं दर्भेष्वासीनो दर्भान्धारयमाणः पराचीनं स्वाध्यायमधीयीत । यत्र क्वचाशान्तिकृतं पश्येत्पुनरेव

(१) **बौश्रौ.** ९।१९ ; **बौगृ.** ३।४।२५ शवाप (शव).

(२) **बौश्रौ.** ९।१९ ; **बौगृ.** ३।४।२६.

(३) **बौश्रौ.** ९।१९ ; **बौगृ.** ३।४।२७ इति + (एव तत्र).

(४) **बौश्रौ.** ९।२० ; **बौगृ.** ३।४।२८.

(५) **बौश्रौ.** ९।२० ; **बौगृ.** ३।४।२९ वा एत (वैत) (अथ०).

(६) **बौश्रौ.** ९।२० ; **बौगृ.** ३।४।३० म्य खिले (म्याखले).

(७) **बौश्रौ.** ९।२० ; **बौगृ.** ३।४।३१ हृतीभि (हृतिभि) तास्तर्प (ताभ्यस्तर्प) प्रतिशुष्का (परिशुष्का) न्वक्ता (भ्यक्ता).

(१) **बौश्रौ.** ९।२० ; **बौगृ.** ३।४।३२ वायो व्रतपते + (शुक्रियं व्रतमचारिषं तदशकं तन्मेऽराधि) अग्ने व्रतपते + (शुक्रियं व्रतमचारिषं तदशकं तन्मेऽराधि).

(२) **बौश्रौ.** ९।२० ; **बौगृ.** ३।४।३३–३४ हृतीभि (हृतिभि) धोऽभ्या (धोऽथाभ्या) तास्तर्प (ताभ्यस्तर्प) कृत्वा तस्यान (कृत्वाऽथास्याध्यायेऽन) न विप्रोषितः (नानुविप्रोषिते) त्पतितं (त्पादितं) नार्द्रे' इति (नार्द्रायामिति).

(३) **बौश्रौ.** ९।२० ; **बौगृ.** ३।४।३५–३६ पराचीनं ...शान्तिकृतं (पराचीनं स्वाध्यायमधीयीत शान्तिं कृत्वाऽधीयीत ॥ अथ यदि लौकिकमनुव्याहरेद्यत्र क्वचिद्यद्यशान्तिकृतं) (अधीत्य०) ग्राम (काम).

**शान्तिं कृत्वाऽधीयीत । अधीत्य चोत्तमेन । प्रवर्ग्यायोपनिष्क्रम्य नाप्रविश्य ग्राममन्यदधीयीत ॥**

## आपस्तम्बश्रौतसूत्रम्

केशश्मश्रुवापनम्, बहिर्ग्राममग्निस्थापनम्, उपाकरणहोमः, शान्तिकरणम्, समिदाधानम्, देवतोपस्थानम्, अनुवाकादीनां व्याहारणम्, वाग्यमननेत्रसंमीलनशिरोवेष्टनानि, ग्रामागमनम्, अपरेद्युर्बहिर्ग्राममग्निस्थापनम्, अग्न्यादिषट्कदर्शनम्, गुरवे वासोदानम्, आदित्योपस्थानम्, व्रतनियमोपदेशः, शुक्रियाध्ययनम्, संवत्सरोत्तरं बहिर्ग्राममग्निस्थापनम्, व्रतविसर्गः, शान्तिकरणसमिदाधानदेवतोपस्थानानि, पुनः शान्तिकरणम्, गुरवे वरदानम्, केशश्मश्रुवापनम्, अध्ययननियमाः

**[1]अवान्तरदीक्षां व्याख्यास्यामः ॥**

शुक्रियकाण्डाम्नातः प्रवर्ग्यकल्पो व्याख्यातः । इदानीं तस्यैव काण्डस्योपाकरणं मन्त्राम्नानक्रमप्राप्तं व्याख्यायते । तयोपाकृतसौम्यकाण्डस्यैवान्तरकाण्डोप( ? पा )करणत्वादवान्तरदीक्षेत्याख्यायते । अवान्तरदीक्षासादृश्याद्वा तद्व्यपदेशः । सादृश्यं च व्रतमध्ये तीक्ष्णव्रतान्तरप्रवेश उष्णोदकादिसंबन्धश्च । रुद्रवृ.

**पर्वण्युदगयन आपूर्यमाणपक्षस्य वा पुण्ये नक्षत्रे केशश्मश्रु वापयित्वाऽपराह्णे प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य पूर्ववदुपाकृत्य मदन्तीरुपस्पृश्य प्रथमेनानुवाकेन शान्तिं कृत्वा चतस्र औदुम्बरीः समिधो घृतान्वक्ता अभ्यादधाति 'पृथिवी समित्' इत्येतैर्मन्त्रैः ॥**

उदगयने यत्पर्व पुण्यं नक्षत्रं वा अस्यापराह्णे क्रियते । खिले जनैरप्रसृते अरण्ये देशे अच्छदिर्दर्शे यत्र ग्रामस्य न दृश्यते छदिः । अग्निमुपसमाधाय 'यत्र क्वचाग्निम्' इति विधिना लौकिकाग्निमुपसमाधाय पूर्ववदुपाकृत्य यथा 'उपाकरणे समापने च' इत्यत्रोक्तं तथा सोमाय काण्डऋषये संहितीभ्यो देवताभ्यः सदसस्पतये च पाकयज्ञविधानेन हुत्वेत्यर्थः । रुद्रवृ.

**अथ देवता उपतिष्ठते— 'अग्ने व्रतपते व्रतं चरिष्यामि' इति ॥**

चतुर्भिर्यथालिङ्गं देवता उपतिष्ठते । रुद्रवृ.

**अथैनं सर्वेषामनुवाकानां प्रभृतीरभिव्याहारयति प्रथमोत्तमयोर्वा ॥**

आद्यानि यजूंषि प्रभृति । रुद्रवृ.

**वाचं च यच्छति । उत्तमेन मन्त्रप्रश्नस्य संमीलयति ॥**

निमीलयति नेत्रे । रुद्रवृ.

**अथास्याहतेन वाससा प्रदक्षिणं समुखं शिरो वेष्टयित्वाऽस्तमिते ग्रामं प्रपादयति ॥**

समुखं सहमुखम् । रुद्रवृ.

**वाग्यत एतां रात्रिं तिष्ठत्यास्ते वा ॥**

तिष्ठत्यास्ते वा, न तु संविशेत् । 'तिष्ठेदेतां रात्रिमुपविशेत्सं( विशे )द्वा' इति बौधायनः । रुद्रवृ.

**श्वोभूते खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्याथास्य षट्तयमभिविदर्शयति । सप्ततयमित्येके । अग्निमादित्यमुदकुम्भमश्मानं वत्सं महानग्नां हिरण्यं सप्तमम् ॥**

संपरिस्तीर्यानन्तरं वासोऽपहाय सप्ततयमेवाग्रे दर्शयति । यदा षट्तयं तदा सुवर्णं लुप्यते । महती नग्ना महानग्ना या स्वरसत एव विवसना चरति । बाला कन्येति यावत् । नैघण्टुकाश्चाऽऽहुः– 'अप्राप्तषोडशा नारी नग्ना' इति । रुद्रवृ.

**अपि वाऽऽदितस्त्रीणि विदर्शयित्वा यथोपपादमितराणि ॥**

आदितस्तावत् त्रीणि द्रव्याण्यवश्यं दर्शयितव्यानि । यथालाभं त्वितराणि । रुद्रवृ.

**अत्रैतद्वासो गुरवे दत्त्वा 'वयः सुपर्णाः' इत्यादित्यमुपतिष्ठते ॥**

गतम् । रुद्रवृ.

---

(१) आपश्री. १५।६.

**अथास्य ब्रह्मचर्यमधि ॥**

अधि ब्रह्मचर्ये ब्रह्मचर्ये योऽस्य व्रतविशेषः स वक्ष्यत इत्यर्थः। अथवा अधि ब्रह्मचर्ये परकृताद्ब्रह्मचर्यादधिकं यद्व्रतमित्यर्थः। रुद्रद्द.

**नित्ये ॥**

तच्च नित्ये ग्रहणार्थे प्रथमाध्ययने, न तु धपाद्यर्थे। रुद्रद्द.

**न नक्तं भुञ्जीत ॥**

गतम्। रुद्रद्द.

**यदि भुञ्जीतापज्वलितम् ॥**

अशक्तावपज्वलितं ज्वलतोल्मुकेनाभिद्योतितं भुञ्जीत। रुद्रद्द.

**न मृन्मयं प्रति धयीत ॥**

मृन्मयं प्रति मृन्मये न धयीत न पिबेदपः। रुद्रद्द.

**न स्त्रिया न शूद्रेण संभाषेत ॥**

गतम्। रुद्रद्द.

**नोपानहौ न छत्रम् ॥**

नास्योपानहौ भवतो न छत्रं च। रुद्रद्द.

**न चक्रीवदारोहेत् ॥**

चक्रीवद्यानं शकटादि। रुद्रद्द.

**न गतासुमीक्षेत। न स्नायात् ॥**

गतम्। रुद्रद्द.

**अष्टम्यः पर्वणि चोपवसेद्वाग्यतः ॥**

अष्टम्यः अष्टमीः। रुद्रद्द.

**न च संविशेत् ॥**

न तासु रात्रिषु संविशेत्, स्थानासनाभ्यामेव तु विहरेत्। रुद्रद्द.

**संवत्सरमेतद्व्रतं चरेत् ॥**

**एतस्मिन्नेव संवत्सरेऽधीयीत ॥**

संवत्सरादर्वागध्ययनसमाप्तावपि संवत्सरं व्रतं चरेत्। तथैनं समापयितुं तावदध्ययनम् (?)। रुद्रद्द.

**यद्येतस्मिन् संवत्सरेणा(? रे ना)धीयीत यावदध्ययनमेतद्व्रतं चरेत् ॥**

**संवत्सरे पर्यवेते खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य पूर्ववद्विसृज्य भदन्तीरुपस्पृश्य प्रथमेनानुवाकेन शान्तिं कृत्वाऽऽवृत्तैर्मन्त्रैः समिध आधायाऽऽवृत्तैर्देवता उपस्थायोत्तमेनानुवाकेन शान्तिं कृत्वा गुरवे वरं दत्त्वा केशश्मश्रु वापयते ॥**

पूर्ववद्विसृज्य 'यथोपाकरणे समापने च' इत्यादिना समापनेऽपि समानो विधिरुक्तः। आवृत्तैः अन्तिमादारभ्य प्रतिलोमक्रमैः। रुद्रद्द.

**अथास्य स्वाध्यायमधि नित्ये ॥**

स्वाध्यायोऽध्ययनम्। पूर्ववद्योजना। रुद्रद्द.

**नानुत्सृष्टाध्यायोऽधीयीत ॥**

अनुत्सृष्टेति †सवर्णदीर्घस्थाने परसवर्णश्छान्दसः। अध्यायोत्सर्जनविधिना तूत्सृष्टाध्यायः पश्चान्नाधीयीतेत्यर्थः। रुद्रद्द.

**न नक्तम् ॥**

अधीयीतेत्यन्वयः। रुद्रद्द.

**नाभिदोषमब्रह्मचर्यमापद्य न मांसं खादित्वा न केशश्मश्रुलोमनखानि वापयित्वा न केशान् प्रसार्य न दतः प्रक्षाल्य ॥**

अभिदोषं रात्रावृतुगमनादिना अब्रह्मचर्यमापद्योत्तरेद्युर्नाधीयीत। (अपपात्रं पतितादिः मानादयः क्रियाः संभवन्ति सत्यं न तं प्रत्येते निषेधाः क्रियन्ते किन्तु यथा?) एवं मांसं खादित्वा उत्तरेद्युर्नाधीयीत। ननु कथमेता ब्रह्मचारिणि ऋतुगमनादयः क्रियाः संभवन्ति? इति शङ्कनीयम्। न ब्रह्मचारिणं प्रति निषेधः

---

† 'अनु उत्सृष्ट' इति सवर्णदीर्घाश्रयीभूतयोरुकारयोरित्यर्थः सवर्णदीर्घप्रसक्तावित्यर्थो वा, न तु 'इकः स्थाने यण्' इतिवत् स्थानिनि सवर्णदीर्घे परसवर्णादेशः इत्यवैयाकरणैर्भ्रमितव्यम्, सवर्णदीर्घस्य स्थानित्वकल्पनायां गौरवात्। परसवर्ण इत्यस्य च परस्य ह्रस्वोकारस्य सवर्णः व्यक्त्यन्तरभूतो ह्रस्वोकार इत्यर्थः। पररूपमिति यावत्। वस्तुतस्तु पररूपमित्येव वक्तव्यम्, दीर्घोकारस्यापि परसवर्णरूपत्वेन परसवर्णशब्देन सवर्णदीर्घव्यावृत्त्ययोगात्।

क्रियते, किंतु 'यया विद्यया न विरोचेत' (आप. २।५।१४) 'मनसा ब्रह्मचारिकल्पेनाधीयीत' इत्यादि-विधिः शास्त्रे( ? विधिशास्त्रैः ) गृहस्थमेव पुनरपि( ? धी )-यानं प्रतीत्यदोषः । रुद्रवृ.

**नाक्तो नाभ्यक्तो नाऽऽर्द्रो नाऽऽर्द्रे नानवदृष्टे नाभ्रे न छायायां न पर्यावृत्त आदित्ये न हरितयवान् प्रेक्षमाणो न ग्राम्यस्य पशोरन्ते नाऽऽरण्यस्य नापामन्ते ॥**

( अक्तः ) अञ्जनालंकृतः । तदपि पूर्ववद्व्याख्येयम् । आर्द्रः स्नानार्द्रः । आर्द्रे देशे । नानवदृष्टे न हिमवृष्टितोवदृष्टतृणाद्यवदृष्टम्( ? ) । पर्यावृत्त आदित्ये अपराह्णे । हरितयवाः सस्यविशेषाः । सर्वत्राधीयीतेत्यन्वयः। रुद्रवृ.

**नाशुतमुत्पतितं न लोहितं दृष्ट्वा न हर्म्याणि न शरीराणि न शवं नापपात्रम् ॥**

सर्वत्र दृष्ट्वेत्यनुवर्तते । पूर्ववदन्वयः । अशृतं मांसं क्रव्यादमुखादेः उद्धृत्य पतितं दृष्ट्वा नाधीयीत । लोहितं रुधिरम् । हर्म्याणि गृहाणि । शरीराणि शिरःपाण्यादीनि प्राण्यङ्गानीति यावत् । पतितानि तेषामस्थीनि वा । शवं नेक्षेतेत्युक्तं प्राक् । प्रमादात् दृष्ट्वा नाधीयीत । अपपात्रं पतितादि । रुद्रवृ.

**अध्येष्यमाणः प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य मदन्तीरुपस्पृश्य प्रथमेनानुवाकेन शान्तिं कृत्वाऽपरेणाग्निं दर्भेष्वासीनो दर्भान् दूर्वा वा धारयमाणः पराचीनमधीयीत ॥**

एवमध्ययनार्था नियमा उक्ताः । इदानीमध्ययनस्यैव प्रकारः । अहरहरध्येष्यमाणो ग्रामान्निष्क्रम्य प्रथमेनानुवाकेन शान्तिं कृत्वा पराचीनमधीयीत 'युञ्जते मनः' इत्यादि 'सविता भूत्वा' इत्यन्ताननुवाकान् सकृत्सकृदेवाधीयीत, न त्वावर्तयेत् । रुद्रवृ.

**वरं वा दत्त्वोपवसेत् ॥**

अथवा गुरवे वरं दत्त्वा वा मनसोऽभीष्टं समापयेत् । रुद्रवृ.

**अध्येष्यमाणो नान्या वाचो वदेत् ॥**

अध्येष्यमाणो ग्रामान्निष्क्रान्तः सन् ( अध्ययनभूतं वर्जयन्नवेदाक्षरा वाचो वदेत् ? ) । रुद्रवृ.

**यत्र क्वचाशान्तिकृतं पश्येत्पुनरेव शान्तिं कृत्वाऽधीयीत । अधीत्य चोत्तमेन । न प्रवर्ग्योपनिष्क्रम्याप्रविश्यान्यदधीयीत ॥**

प्रवर्ग्यः शुक्रियकाण्डलक्षणः, प्रवर्ग्यप्रतिपादनात् । प्रवर्ग्यायोपनिष्क्रम्यानुप्रवर्त्य काण्डाध्ययनार्थे ग्रामादरण्यं प्रत्युपनिष्क्रान्तः तदेवाधीयीत, नान्यं वेदभागम् । यदाऽप्यन्याङ्गमधीते तदाऽप्यप्रविश्य ग्रामं न तमधीयीत, प्रविश्यैव त्वधीयीत । रुद्रवृ.

## सत्याषाढश्रौतसूत्रम्

वपनम्, बहिर्ग्राममग्निस्थापनम्, समिदाधानम्, उपस्थानम्, अनुवाकाभिव्याहारणम्, शान्तिकरणम्, नियमविशिष्टेन ग्रामे रात्रेर्यापनम्, परेद्युर्बहिर्ग्राममग्निस्थापनम्, आदित्योपस्थानम्, अग्न्यादिदर्शनम्, आदित्योपस्थानम्, व्रतनियमोपदेशः, शुक्रियाध्ययनम्, संवत्सरान्ते बहिर्ग्राममग्निस्थापनम्, व्रतविसर्गः, शान्तिकरणम्, समिदाधानम्, उपस्थानम्, शान्तिकरणम्, गुरवे वरदानम्, वपनम्, अध्ययननियमाः

**[1]अवान्तरदीक्षां व्याख्यास्यामः ॥**

**उदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रेऽपराह्णे केशश्मश्रूणि वापयित्वा प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य चतस्र औदुम्बरीः समिध आर्द्रा अप्रच्छिन्नाग्राः प्रादेशमात्रीर्घृतान्वक्ता अभ्याधापयति— 'पृथिवी समित्' इत्येतैः प्रतिमन्त्रम् ॥**

**'अग्ने व्रतपते व्रतं चरिष्यामि' इत्येतैर्यथारूपं देवता उपतिष्ठते ॥**

**अथैनं सर्वेषामनुवाकानां प्रभृतीरभिव्याहारयति । प्रथमोत्तमयोर्वा ॥**

(१) सश्रौ. २४।८।१–४२.

उत्तमेनानुवाकेन शान्तिं कृत्वा ततः संमील्य वाचं यच्छति ॥

अथास्याहतेन वाससा प्रदक्षिणं समुखं शिरो वेष्टयित्वाऽस्तमिते ग्रामं प्रपादयति ॥

वाग्यत एतां रात्रिं तिष्ठत्यास्ते वा ॥

श्वोभूते प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य 'वयः सुपर्णाः' इति मुखं विवेष्ट्य 'य उदगात्' 'तच्चक्षुः' इत्यादित्यमुपतिष्ठते। अथैनं षट्तयमभिविदर्शयति। सप्ततयमित्येके। अग्निमादित्यमुदकुम्भमश्मानं हिरण्यं वत्सं महानग्नीं सप्तमीम् ॥

त्रीण्यादितोऽभिविदर्श्योत्तराण्यभिविदर्शयति ॥

अथैतद्वासो गुरवे दत्त्वा 'वयः सुपर्णाः' इत्यादित्यमुपतिष्ठते ॥

अथास्य ब्रह्मचर्यमधि ॥

नित्ये ॥

न नक्तं भुञ्जीत ॥

यदि भुञ्जीतावज्वलितम् ॥

न मृन्मयं प्रति शयीत ॥

न स्त्रिया न शूद्रेण संभाषेत ॥

न च्छत्रं नोपानहौ धारयेत् ॥

न चक्रीवदारोहेत् ॥

न गतासुमीक्षेत। न स्नायात् ॥

न समाजमीक्षेत ॥

नापपात्रम् ॥

न हर्म्याणि ॥

न शवान्नं भुञ्जीत ॥

नाञ्जीत नाभ्यञ्जीत ॥

अष्टमीं पर्वणि चोपवसेद्वाग्यतः ॥

नैव संविशेत् ॥

संवत्सरमेतद्व्रतं चरेत् ॥

एतस्मिन्नेव संवत्सरेऽधीयीत ॥

पुनर्यावदध्ययनमेतद्व्रतं चरेत् ॥

संवत्सरे पर्यवेते प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य पूर्ववद्विसृज्य मदन्तीरुपस्पृश्य प्रथमेनानुवाकेन शान्तिं कृत्वा 'द्यौः समित्' इत्यावृत्तैर्मन्त्रैः समिधोऽभ्याधाय 'आदित्य व्रतपते' इत्यावृत्तैर्देवता उपतिष्ठते ॥

उत्तमेनानुवाकेन शान्तिं कृत्वा गुरवे वरं दत्त्वा केशश्मश्रूणि वापयते ॥

अथास्य स्वाध्यायमधि नित्ये ॥

नानुत्सृष्टाध्यायोऽधीयीत ॥

न नक्तम् ॥

नाभिदोषं( ? षम )ब्रह्मचर्यमापद्य न दतः प्रक्षाल्य न मांसं भक्षयित्वा न केशान्प्रविष्य न केशश्मश्रुलोमनखानि वापयित्वा न स्रग्वी ॥

नाक्तो नाभ्यक्तो नाऽऽर्द्रो नाऽऽर्द्रे नानपवृष्टे नाभ्रे न च्छायायां न पर्यावृत्त आदित्ये न हरितयवान्प्रेक्षमाणो न ग्राम्यस्य पशोरन्ते नाऽऽरण्यस्य नापामन्ते ॥

नाद्भुतमुत्पतितं न लोहितं दृष्ट्वा। न हर्म्याणि न शरीराणि न शवं नापपात्रम् ॥

अध्येष्यमाणः प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य मदन्तीरुपस्पृश्य प्रथमेनानुवाकेन शान्तिं कृत्वाऽपरेणाग्निं दर्भेष्वासीनो दर्भान्धारयमाणः पराचीनमधीयीत ॥

वरं वा दत्त्वौपासने ॥

अध्येष्यमाणो नान्या वाचो वदेत् ॥

अध्येष्यमाणो मदन्तीरुपस्पृश्य प्रथमेनानुवाकेन शान्तिं कृत्वाऽधीयीत। अधीत्य चोत्तमेन। एवं कर्मसु यत्र क्व चाशान्तिकृतं पश्येत्पुनरेव शान्तिं कृत्वाऽधीयीत ॥

न प्रवर्ग्यायोपनिष्क्रम्याप्रविश्यान्यदधीयीतान्यदधीयीत ॥

## मानवश्रौतसूत्रम्

बहिर्ग्राममेकरात्रं सनियमवासः, परेद्युरग्न्यादिसप्तक-दर्शनम्, अग्निस्थापनम्, समिदाधानम्, व्रत-प्रदानम्, अनुवाकानुवाचनम्, गुरवे गवादि-दानम्, व्रतनियमाः, व्रतोत्सर्गः, मार्जनम्, अध्ययननियमाः

[1]अवान्तरदीक्षामुपैष्यन्नुदगयने ज्यौत्स्ने पुण्ये नक्षत्रेऽन्यत्र नवम्याः प्रागस्तमयान्निष्क्रम्योत्तरतो ग्रामस्य पुरस्ताद्वा शुचौ देशेऽहतेन वाससा परिणद्धः सर्वरात्रं तिष्ठेत्स्त्रीशूद्रमनभिभाषमाणः ॥

श्वोभूतेऽग्निं सूर्यं गां हिरण्यं ब्राह्मणमुदकांस्यं च कन्यां पतिकामामिति निदर्शयेत् ॥

तत्रैवाग्निमुपसमाधाय चैत्यस्याश्वत्थस्याऽऽर्द्राग्रतस्नः समिधः स्तिभिगवतीः सहपलाशाः प्रादेशमात्रीः सर्पिषि पर्यस्ताः 'पृथिवी समित्' इति स्वाहाकारान्ताभिरादधाति ॥

'अग्ने व्रतपते' इति व्रतं प्रदायाऽऽदितः पञ्चविंशतिमनुवाकाननुवाचयेत् ॥

परिणहनं गां कांस्यं च गुरवे दद्यात् ॥

न नक्तं भुञ्जीत । यदि भुञ्जीतापज्वलितं भुञ्जीत ॥

अहस्तिष्ठेद्रात्रावासीनः । पर्वसु चैवं स्यात् ॥

एवंयुक्तः संवत्सरं चरेत्त्रीन्पञ्च सप्त वा । त्रैविद्यकं च चरेत् ॥

समाप्ते च तान्युत्सृज्य 'नमो वाचे' इत्योषधिपाणिर्मार्जयते ॥

[2]आरण्यं स्वाध्यायमध्येष्यमाण उदगयने ज्यौत्स्ने शुक्रियं पूर्वाह्णे, न नक्तम्, न भुक्त्वा, न यामे, न शोणितं दृष्ट्वा, आमं वा मांसमन्यद्वाऽमेध्यम्, पर्वसु च प्रतिषिद्धम् ॥

(१) माश्रौ. ४।७।१-९.
(२) माश्रौ. ४।८।१-४.

प्रागस्तमयादुद्विष्यमन्नमुपयुञ्जानः ॥

प्रागुदयान्निष्क्रम्योत्तरतो ग्रामस्य पुरस्ताद्वा शुचौ देशे विष्टरपाणयोऽभिमुखाः । तदनुचक्षुषो यथाकालं स्वाध्यायमधीत्य 'नमो वाचे' इत्योषधिपाणयो मार्जयन्ते ॥

सर्वत्र रहस्यमन्त्रप्रयोगे प्रतिपत्तिर्मार्जनं च ॥

## भारद्वाजश्रौतसूत्रम्

केशश्मश्रुवापनम्, बहिर्ग्राममग्निस्थापनम्, व्रतोपाकरणम्, शान्तिकरणम्, समिदाधानम्, देवतोपस्थानम्, अनुवाकाभिव्याहारणम्, शान्तिकरणनेत्रसंमीलनवाग्यमनानि, समुखशिरोवेष्टनम्, ग्रामागमनम्, परेद्युर्बहिर्ग्राममग्निस्थापनम्, अग्न्यादिषट्कदर्शनम्, आदित्योपस्थानम्, गुरवे वासोदानम्, ब्रह्मचर्यनियमाः, अध्ययनम्, व्रताध्ययनसमाप्तौ बहिर्ग्रामं व्रतविसर्गः, समिदाधानम्, देवतोपस्थानम्, गुरवे वरदानम्, केशश्मश्रुवापनम्, अध्ययननियमाः

*[1]अथातोऽवान्तरदीक्षां व्याख्यास्यामः ॥

* भारद्वाजगृह्यसूत्रेऽपि तृतीयप्रश्ने षष्ठसप्तमखण्डत्वेनावान्तरदीक्षाग्रन्थो मुद्रितोऽस्ति । एकेनैव सूत्रकारेणैकस्या एव व्रतचर्याया द्विरुक्तेरस्वाभाविकत्वात् बौधायनापस्तम्बाभ्यां श्रौतसूत्रे एवावान्तरदीक्षायाः सूत्रितत्वात् भारद्वाजगृह्यसूत्रपुस्तकीयटिप्पण्यां गृह्यसूत्रमूलभूतलिखितपुस्तकेष्वेकस्मिन्नवान्तरदीक्षाखण्डौ न स्त इत्युक्तत्वाच्च बौधायनगृह्यसूत्रवत् भारद्वाजगृह्यसूत्रेऽप्यवान्तरदीक्षाग्रन्थः श्रौतसूत्रीयोऽध्येतृभिः प्रक्षिप्त इत्यर्थस्यास्ति संभवस्तथापि निर्णायकप्रमाणानुपलब्धेः, यावता श्रौतसूत्रीयावान्तरदीक्षातः कर्मभेद इव प्रतीयेत तावतो भूयसः पदार्थन्यूनत्वाधिकत्वादिरूपपाठभेदस्य गृह्यसूत्रग्रन्थे दर्शनाच्च गृह्यसूत्रीयोऽवान्तरदीक्षाग्रन्थो यथास्थानं पृथगेव संगृहीतः । प्रकृतविषयसाम्यवैषम्यबोधार्थं बौधायनश्रौतसूत्रगता टिप्पण्यप्यत्रानुसंधेया ।

(१) भाश्रौ. ११।२१।१-२०.

पर्वण्युदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रेऽपराह्णे केशश्मश्रु वापयित्वा प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य खिलेऽछदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य पूर्ववदुपाकृत्य मदन्तीरुपस्पृश्य प्रथमेनानुवाकेन शान्तिं कृत्वा चतस्र औदुम्बरीः समिधो घृतान्वक्ता आदधाति– 'पृथिवी समित्' इत्येतैर्मन्त्रैः ॥

अथ देवता उपतिष्ठते– 'अग्ने व्रतपते व्रतं चरिष्यामि' इति ॥

अथैनं सर्वेषामनुवाकानां प्रभृतीरभिव्याहारयति । प्रथमोत्तमयोर्वा ॥

उत्तमेनानुवाकेन शान्तिं कृत्वा ततः संमीलति वाचं च यच्छति ॥

अथास्याहतेन वाससा शिरः सं( ? स )मुखं वेष्टयित्वाऽस्तमिते ग्रामं प्रपादयति ॥

वाग्यत एतां रात्रिं तिष्ठत्यास्ते वा ॥

श्वोभूते खिलेऽछदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्याथास्य षट्तयमभिविदर्शयति । सप्ततयमित्येके । अग्निमादित्यमुदकुम्भमश्मानं वत्सं महानग्नां हिरण्यं सप्तमम् ॥

अपि वाऽऽदितस्त्रीण्यभिविदर्शयति । यथोपपातमितराण्यभिविदर्शयति ॥

तत आदित्यमुपतिष्ठते– 'वयः सुपर्णाः' इत्येतया ॥

अत्रैतद्वासो गुरवे दत्त्वा ॥

अथास्य ब्रह्मचर्यमधि ॥

नित्ये ॥

न नक्तं भुञ्जीत ॥

यदि भुञ्जीतापज्वलितं भुञ्जीत ॥

न मृन्मयं प्रति धयीत ॥

न स्त्रिया न शूद्रेण वा संभाषेत ॥

न चक्रीवदारोहेत् ॥

नोपानहौ न छत्रं धारयीत ॥

न समाजमीक्षेत न हर्म्याणि न शरीराणि न शवं नान्तावसायिनम् ॥

[1]अष्टम्यां पर्वणि चोपवसति वाग्यतः ॥

न च संविशेत् ॥

संवत्सरमेतद्व्रतं चरेत् ॥

एतस्मिन्नेव संवत्सरेऽधीयीत ॥

यद्येतस्मिन्संवत्सरे नाधीयीत यावदध्ययनमेतद्व्रतं चरेत् ॥

संवत्सरस्य परस्तात् खिलेऽछदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य पूर्ववद्विसृज्याऽऽवृत्तैर्मन्त्रैः समिध आधायाऽऽवृत्तैर्देवता उपस्थायात्र गुरवे वरं दत्त्वा केशश्मश्रु वापयते ॥

अथास्य स्वाध्यायमधि ॥

नित्ये ॥

नानुत्सृष्टाध्यायोऽधीयीत न नक्तं नाभिदोषमब्रह्मचर्यमापद्य न मांसं खादित्वा न केशश्मश्रु वापयित्वा न लोमानि कारयित्वा न नखानि न दतः प्रक्षाल्य ॥

नाक्तो नाभ्यक्तो नाऽऽर्द्रो नाऽऽर्द्रे नानवकृष्टे न हरितयवान् प्रेक्षमाणः ॥

न ग्राम्यस्य पशोरन्ते नाऽऽरण्यस्य नापां नाभ्रे न च्छायायां न पर्यावृत्त आदित्ये ॥

नासृतमुत्पतितं न लोहितं दृष्ट्वा न हर्म्याणि न शरीराणि न शवं नान्तावसायिनम् ॥

खिलेऽछदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्यापरेणाग्निं दर्भेष्वासीनो दर्भान् दूर्वा वा धारयमाणः पराचीनमधीयीत ॥

वरं वा दत्त्वोपासने ॥

अध्येष्यमाणः प्रथमेनानुवाकेन शान्तिं कृत्वाऽधीयीत ॥

अधीत्य चोत्तमेन ॥

अधीयानो नाम्या वाचो वदेत् ॥

यत्र क्व चाशान्तिं कृतं पश्येत् पुनरेव शान्तिं कृत्वाऽधीयीत ॥

---

(१) भाश्रौ. ११।२२।१–१९.

प्रवर्ग्यायोपनिषत्कस्य नाप्रतिप्रविद्वान्यदधीयीत ॥

## बौधायनगृह्यसूत्रम्

शुक्रियव्रतप्रयोगस्य श्रौतसूत्रोक्तत्वकथनम्

[1]अथ शुक्रियाणि ॥

तेषामुक्ता व्रतचर्या ॥

## कौषीतकिगृह्यसूत्रम्

ब्रह्मचर्याचरणम्, टीकायां समग्रप्रयोगः

[2]अहोरात्रं ब्रह्मचर्यमुपेत्याऽऽचार्योऽमांसाशी ब्रह्मचारी ॥

...... शुक्रिये ब्रह्मचर्यमादिशेत् ॥

त्रिरात्रं ब्रह्मचर्यं चरेद्द्वादशरात्रं संवत्सरं वा यावद्वा गुरुर्मन्येत ॥

पूर्णे काले चरिते ब्रह्मचर्ये शंयोर्बार्हस्पत्यान्ते वेदेऽनूक्ते रहस्यं श्रावयिष्यन् कालनियमं चाऽऽदेशेन प्रतीयेत ॥

शुक्रियव्रतकर्म वक्ष्यामः । उदगयने यस्मिन्नेव काल इच्छत्याचार्यस्तस्मिन् ब्रह्मचारी भूत्वा चतुर्दशीं पञ्चदशीं प्रतिपदमष्टमीमेतास्तिथीर्मुक्त्वा शोभनदिवसे द्वावपि शिष्याचार्यौ अपराह्णे प्रागुदीचीं दिशं गत्वा उपलेपनोल्लेखनाद्याघाराज्यभागान्तं पूर्ववत्पाक्षिकं कृत्वा महाव्याहृतिचतुष्टयं हुत्वा ततः पश्चादग्नेः पूर्ववच्छिष्याचार्यौ स्थित्वा तत आचार्यः 'अग्नाविन्द्र आदित्ये विश्वेषु च देवेषु चरितं ते ब्रह्मचर्यम्' इत्यनेन मन्त्रेण माणवकं पृच्छति । ततो माणवकः 'चरितं भोः' कथयति । तत आचार्यो माणवकं प्राङ्मुखं कृत्वा अहतेन वाससा प्रदक्षिणं मुखं त्रिर्वेष्टयति यथा न पतति उपरिष्टात् दशाः कृत्वा । ततः 'त्रिरात्रं समिदाधानं भिक्षाचरणमधःशय्यां गुरुशुश्रूषां चाकुर्वन्वाग्यतोऽप्रमत्तोऽरण्ये देवकुलेऽग्निहोत्रे वोपास्व' इत्येवमनुशास्य तथा कथयति यथा माणवकस्य प्रतिपत्तिर्भवति । अथवा एतान् नियमान् अहोरात्रमुपदिश्य महाव्याहृतिचतुष्टयं हुत्वा ततः पाक्षिकः स्विष्टकृत्, ततो महाव्याहृतिसर्वप्रायश्चित्तादि तन्त्रशेषं समापनीयमिति । अस्य च कर्मण उदीक्षणिका इति संज्ञा । ततस्त्रिरात्रेऽहोरात्रे वा निवृत्ते †उपलेपनोल्लेखनादि कृत्वोर्ध्वाङ्गुलिं पाणिं हृदये निधाय जपति । इत्येवमुपनयनकर्म कृत्वा ततः 'मम व्रते हृदयं ते दधामि मम चित्तमनुचित्तं ते अस्तु मम वाचमेकमना जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यं सांवत्सरिकस्य शुक्रियव्रतस्य ब्रह्मचर्यस्य देवदत्त' इति माणवकं बोधयित्वा ततः 'आपो नाम स्थ' इति त्रिराचमय्य पूर्ववद्दण्डमर्पयति । ततो माणवक आचार्याय वरं ददाति । तत आचार्यो माणवकं पूर्ववत्प्रदक्षिणमग्निं पर्याणीय तं त्रिरात्रं समिदाधानं भिक्षाचरणमित्यादि यद्विधिसिद्धं तस्यानुज्ञां दत्वा ततो महाव्याहृतिचतुष्टयम्, ततः पाक्षिकः स्विष्टकृत्, ततो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समापनीयमिति । ततः कस्मिंश्चिच्छोभने दिवसे पूर्वोक्तमनुवाचनं कुर्यात् । वेदं च साङ्गं पाठयेत् । ¶सावित्रशुक्रिययोर्द्वादशरात्रं संवत्सरम् आचार्येच्छेत्यादि पक्षचतुष्टयं निर्दिष्टम् । शाक्वरव्रातिकायनि(? कौपनिषदि)कानि तु सांवत्सरिकाणीति । कौगृवृ.

शुक्रियव्रतोत्तरमनुष्ठेयमनुवाचनसंज्ञकं कर्म

[1]अथानुवाचनस्य ॥

अग्नेरुत्तरत उपविशतः ॥

प्राङ्मुख आचार्यः प्रत्यङ्मुख इतरः ॥

अभिवाद्य पादावाचार्यस्य पाणी प्रक्षाल्य ॥

(१) बौगृ. ३।२।२७–२८.

(२) कौगृ. २।११।६, ९–१०, १३.

† एतदादिः 'माणवकं बोधयित्वा' इत्यन्तो ग्रन्थो न संगच्छते । तत्रेयं शुद्धिः कल्प्यते– "उपलेपनोल्लेखनाद्युपनयनकर्म कृत्वा तत ऊर्ध्वाङ्गुलिं पाणिं हृदये निधाय जपति– 'मम व्रते ... देवदत्त' इति । माणवकं बोधयित्वा" इति ।

¶ अत्र सावित्रव्रते संवत्सरं त्रिरात्रम् अन्वक्षम् इति त्रयः पक्षाः, शुक्रियव्रते त्रिरात्रं द्वादशरात्रं संवत्सरम् आचार्येच्छा इति चत्वारः पक्षा इति सूत्रानुसारेण विवेको ज्ञेयः ।

(१) कौगृ. २।७।१–२९.

दक्षिणेन जानुनाऽऽक्रम्य मूले कुशतरुणान् ॥

दक्षिणोत्तराभ्यां पाणिभ्यां मध्ये परिगृह्य ॥

तान्सव्येनाऽऽचार्योऽग्रे संगृह्य दक्षिणेनाद्भिः परिषिञ्चन्नथेतरं वाचयति ॥

'सावित्रीं भो अनुब्रूहि' इतीतरः ॥

'सावित्रीं ते अनुब्रवीमि' इत्याचार्यः ॥

'गायत्रीं भो अनुब्रूहि' इतीतरः, 'गायत्रीं ते अनुब्रवीमि' इत्याचार्यः ॥

'वैश्वामित्रीं भो अनुब्रूहि' इतीतरः, 'वैश्वामित्रीं ते अनुब्रवीमि' इत्याचार्यः ॥

'ऋषीन् भो अनुब्रूहि' इतीतरः, 'ऋषींस्ते अनुब्रवीमि' इत्याचार्यः ॥

'देवता भो अनुब्रूहि' इतीतरः, 'देवतास्ते अनुब्रवीमि' इत्याचार्यः ॥

'छन्दांसि भो अनुब्रूहि' इतीतरः, 'छन्दांसि ते अनुब्रवीमि' इत्याचार्यः ॥

'श्रुतिं भो अनुब्रूहि' इतीतरः, 'श्रुतिं ते अनुब्रवीमि' इत्याचार्यः ॥

'स्मृतिं भो अनुब्रूहि' इतीतरः, 'स्मृतिं ते अनुब्रवीमि' इत्याचार्यः ॥

'श्रद्धामेधे भो अनुब्रूहि' इतीतरः, 'श्रद्धामेधे अनुब्रवीमि' इत्याचार्यः ॥

एवमेवमृषेर्यस्य यस्य यो यो मन्त्रो यद्देवत्यो यच्छन्दाश्च तथा तथा तं तं मन्त्रमनुब्रूयात् ॥

अपि वाऽविदन्नृषिदैवतच्छन्दांसि 'तत्सवितुर्वरेण्यम्' इत्येतां पच्छोऽर्धर्चशोऽनवानमित्येषेति समास आहाऽऽचार्यः ॥

एवमेकैकमृषिमनुवाकं वाऽनुब्रूयात् ॥

क्षुद्रसूक्तेष्वनुवाकम् ॥

यावद्वा गुरुर्मन्येत ॥

आद्योत्तमे कामं सूक्ते वाऽनुब्रूयादृषेः ॥

अनुवाकस्य वा ॥

एकैकां सूक्तादाविति ॥

एषा प्रभृतिरिति कामं सूक्तादावाचार्य इति ॥

एतदृषिस्वाध्याये व्याख्यातम् ॥

समाप्ते कुशतरुणानादायाऽऽनडुहेन मूले कुण्डं कृत्वा यथासूक्तं कुशेष्वपो निषिञ्चति ॥

अहःशेषं स्थानमुपवासश्च ॥

अनुवचनं वक्ष्यामः । अस्य च शुक्रियव्रतादेशोत्तरकालः स्थानम् । मया तु सूत्रक्रमेणैव ग्रथितम् । संस्काररहितस्य लौकिकस्याग्रेरुत्तरत आचार्यः प्राङ्मुख उपविशति, प्रत्यङ्मुखो माणवकः । ततो माणवक आचार्यस्य पादोपसर्पणं कृत्वाऽभिवादयति । ततो हस्तौ प्रक्षाल्य दक्षिणोत्तराभ्यां कुशमुष्टिं मध्ये गृहीत्वा दक्षिणेन जानुना तान्कुशान्मूले आक्रमते । ततस्तानेव कुशान् सव्येनाऽऽचार्योऽग्रे संगृह्य ततो दक्षिणेन पाणिना आनडुहगोमयकुण्डात् गृहीताभिरद्भिः परिषिञ्चन् माणवकं वाचयति— 'सावित्रीं भो अनुब्रूहि'। एवं माणवकेनोक्ते 'सावित्रीं ते अनुब्रवीमि' इत्याचार्यो ब्रूते । सर्वेष्वेवं द्रष्टव्यम् । ततः 'गायत्रीं भो अनुब्रूहि' इति माणवकेनोक्ते 'गायत्रीं ते अनुब्रवीमि' इत्याचार्यो ब्रूते । 'वैश्वामित्रीं भो अनुब्रूहि' इति माणवकेनोक्ते 'वैश्वामित्रीं ते अनुब्रवीमि' इत्याचार्यो ब्रूते । 'ऋषीन् भो अनुब्रूहि' इति माणवकेनोक्ते 'ऋषींस्ते अनुब्रवीमि' इत्याचार्यो ब्रूते । 'देवता भो अनुब्रूहि' इति माणवकेनोक्ते 'देवतास्ते अनुब्रवीमि' इत्याचार्यो ब्रूते । 'छन्दांसि भो अनुब्रूहि' इति माणवकेनोक्ते 'छन्दांसि ते अनुब्रवीमि' इत्याचार्यो ब्रूते । 'स्मृतिं भो अनुब्रूहि' इति माणवकेनोक्ते 'स्मृतिं ते अनुब्रवीमि' इत्याचार्यो ब्रूते । 'श्रद्धामेधे भो अनुब्रूहि' इति माणवकेनोक्ते 'श्रद्धामेधे अनुब्रवीमि' इत्याचार्यो ब्रूते । पूर्वमुक्तं कृत्वा तत आचार्यः 'अग्निमीळे पुरोहितमित्येतस्य सूक्तस्य मधुच्छन्दा ऋषिरग्निर्देवता गायत्रं छन्दः' एवं कथयित्वा ततो वाचयति । अनेन प्रकारेण सकलामेव संहितां पाठक्रमेण माणवकं वाचयेत् । एष तावत्प्रथमः कल्पः । अथवा यद्याचार्यः ऋषिदैवतच्छन्दांसि मन्त्रगतानि न जानाति ततः 'तत्सवितुर्वरेण्यम्' इत्येतामृचं पादं पादं वाचयित्वाऽर्धर्चमर्धर्चं ततः सकलामेव । अर्धर्चान्तेऽवसानं

न कुर्यात् । एवं वाचयित्वा स्वरूपतः कथयति । विश्वामित्रस्याऽऽर्षमित्येषा वैश्वामित्री, सविता देवता इति (सावित्री) एषा गायत्री त्रिपदा चतुर्विंशत्यक्षरा भवति । पञ्चः प्रयोगेऽष्टाभिरष्टाभिरक्षरैरवसानं कुर्यात् । अर्धर्चप्रयोगे द्वाभ्यां प्रथमद्वितीयाभ्याम् । एतत्पक्षान्तरमनुवाचनस्य । अथवा एकैकमृषिमनुवाकमनुवाकं वाऽनुब्रूयात् । दशमे मण्डलेऽनुवाकमेकमनुब्रूयात् । तृतीयमेतत्पक्षान्तरम् । अथवा प्रतिदिनं स्तोकं यावन्मात्रं शक्नोति गुरुस्तावन्मात्रं ब्रूयात् प्रतिदिनं यावत्संहिता समाप्ता इति । चतुर्थमेतत्पक्षान्तरम् । अस्य च पक्षस्याऽऽदरेणानुष्ठानमिच्छन्ति व्याख्यातारः । अथवा एकैकस्य ऋषेः प्रथममुत्तमं च सूक्तं प्रतिदिनं ब्रूयादा समाप्तेरिति । पञ्चममेतत्पक्षान्तरम् । अथवाऽनुवाकस्य प्रथममुत्तमं च सूक्तमनुब्रूयादा समाप्तेः । षष्ठमेतत्पक्षान्तरम् । अथवा सूक्तसूक्तस्याऽऽदिभूतामेकैकामृचं जपितव्यामाचार्यो माणवकस्य कथयति– एतत्सूक्तस्य एषा ऋगादिभूता, एवंप्रकारमेतत्सूक्तम् । सप्तममेतत्पक्षान्तरम् । एतेषां सप्तानामपि पक्षाणामृषिदैवतच्छन्दांसीत्याचार्यब्रह्मदत्तेन 'गर्हितोऽयं पक्षः' इति व्याख्यातम् । शेषाणां यदाचार्यस्य रोचते तदनुब्रूयात् । अन्यतरस्मिन्पक्षे समाप्ते 'अस्मिन्वै लोक उभये देवमनुष्या आसुः' इत्यारभ्य यावदाचार्येच्छा तावद्वाचयित्वा 'एषा शुचिः' इति कथयति । ततः 'मनुमेकाग्रमासीनमभिगम्य महर्षयः' इत्याद्याः शक्तितो वाचयित्वा 'पवमानाः सूनृतयः' इति कथयति । चोदितेष्वास्तिक्यं कर्तव्यमेषा श्रद्धा, ततो ग्रहणे शक्तिर्मेधा । ततः 'दक्षिणेन जानुनाऽऽक्रम्य मूले कुशतरुणान्' इत्येवमादिना यथोक्तेन कुशतरुणान्गृहीत्वा आनडुहेन गोमयेन मूले कुण्डमुदकाधारं कृत्वोदकमासिच्य तस्मादुदकं गृहीत्वाऽगृहीतेषु कुशेष्वासिञ्चति । ततस्तदहःशेषं ब्रह्मचारिणा सहोपविशेत् । न चाशनक्रियां कुर्यात् । अपरे त्वेवं व्याचक्षते– यथाऽऽचार्यस्यैष नियम इति । ततस्तस्मिन्नेवाहन्यपराह्णे 'भवति अक्षतधाना भिक्षां देहि' इत्यनेनाभिधानेन कण्डितादिवर्जिता धाना भिक्षित्वा जुहोति । अत्र स्तरणाघाराज्यभागाः पाक्षिकाः । उपलेपनोल्लेखनाद्याघाराज्यभागान्तं कृत्वा ततो हस्तेन 'सदसस्पतिमद्भुतम्' इति प्रत्यृचं चतस्र आहुतीरक्षतधानानां जुहोति । ततो माणवकः स्वरविशदैरम्यवहारैः सुगन्धिभिर्भिक्षै(?भिक्षितै)राचार्यं दक्षयित्वा 'स्वस्ति भवन्तो ब्रुवन्तु' इति ब्रूयात् । तत आचार्यः भिक्षां गृहीत्वा 'ओं स्वस्ति' इति ब्रूयात् । ततः पाक्षिकः स्विष्टकृत्, ततो महाव्याहृतिसर्वप्रायश्चित्तादि तन्त्रशेषं समापनीयमिति । **कौगुस.**

## मानवगृह्यसूत्रम्

पूर्वोक्तव्रतादेशनातिदेशः, अनुवाचनीयानुवाकसंख्या

**'रहस्यमभ्येष्यमाणः प्रवर्ग्यम् ॥**

**आदेशो यथा पुरस्ताद्व्याख्यातम् ॥**

**आदितः पञ्चविंशत्यनुवाकाननुवाचयेत् ॥**

पञ्चविंशत्येवाऽऽधार एवमेवेति प्राप्ते रहस्यं येन प्रकारेण पुरस्ताद्व्याख्यातम् । उदगयन इत्यादिना दीक्षामुपैष्यन्नित्यादि वा तत्रैव सिद्धम् । **अष्टाभा.**

## भारद्वाजगृह्यसूत्रम्

केशश्मश्रुवापनम्, बहिर्ग्राममग्निस्थापनम्, व्रतोपाकरणम्, शान्तिकरणम्, समिदाधानम्, देवतोपस्थानम्, अनुवाकाभिव्याहारणम्, जयादिहोमाः, शान्तिकरणनेत्रसंमीलनवाग्यमनानि, शिरोवेष्टनम्, ग्रामागमनम्, परेद्युर्बहिर्ग्राममग्निस्थापनम्, अग्न्यादिदर्शनम्, आदित्योपस्थानम्, गुरवे वासोदानम्, ब्रह्मचर्यनियमाः, व्रतसमाप्तौ बहिर्ग्राममग्निस्थापनादि, होमः, शान्तिकरणम्, समिदाधानम्, देवतोपस्थानम्, अनुवाकाभिव्याहारणम्, शान्तिकरणम्, जयादिहोमाः, नियमसंशासनम्

**'अथातोऽवान्तरदीक्षां व्याख्यास्यामः । पर्वण्युदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रेऽपराह्णे केशश्मश्रू वापयित्वा प्राचीमुदीचीं वा**

(१) मागृ. १।२३।२१–२३.

(२) भागृ. ३।६–७.

दिशामुपनिष्क्रम्य खिलेऽछदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य पूर्ववदुपाकृत्य मदन्तीरुपस्पृश्य प्रथमेनानुवाकेन शान्तिं कृत्वा चतस्र औदुम्बरीः समिधो घृताभ्यक्ता आदधाति 'पृथिवी समित्' इत्येतैर्मन्त्रैः। अथ देवता उपतिष्ठते– 'अग्ने व्रतपते शुक्रियं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम्, वायो व्रतपते, आदित्य व्रतपते, व्रतानां व्रतपते शुक्रियं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम्' इति। अथैनं सर्वेषामनुवाकानां प्रभृतीरभिव्याहारयति प्रथमोत्तमयोर्वा। जयादि प्रतिपद्यते। परिषेचनान्तं कृत्वा मदन्तीरुपस्पृश्योत्तमेनानुवाकेन शान्तिं कृत्वा ततः संमीलयति वाचं च यच्छति। अथास्याहतेन वाससा शिरः सं(? स)मुखं वेष्टयति। अस्तमित आदित्ये ग्रामं प्रपादयति। वाग्यत एतां रात्रिं तिष्ठत्यास्ते वा। श्वोभूते खिलेऽछदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्याथास्य षट्तयमभिविदर्शयति सप्ततयमित्येकेऽग्निमादित्यमुदकुम्भमश्मानं वत्सं महानग्नीं हिरण्यं सप्तमम्। अपि वाऽऽदितस्त्रीण्यभिविदर्शयति। तत आदित्यमुपतिष्ठते– 'वयः सुपर्णाः' इत्येतया। अत्रैतद्वासो गुरवे दत्त्वा। अथास्य ब्रह्मचर्यमधि। नित्ये। न नक्तं भुञ्जीत। यदि भुञ्जीताप्रज्वलितं भुञ्जीत। न मृन्मयं प्रति पिबीत। न स्त्रिया न शूद्रेण संभाषेत। न चक्रीवन्तमारोहेत्। न कूपमवरोहेत्। नोपानहौ न छत्रं धारयीत। न समाजमीक्षेत न हर्म्याणि न शरीराणि न शवं मान्तावसायिनम्॥

संवत्सरमेतद्व्रतं चरेत्। संवत्सरे पर्यवेते खिलेऽछदिर्दर्शेऽग्नेरुपसमाधानाद्याज्यभागान्ते द्वे मिन्दाहुती हुत्वा पूर्ववत्प्रधानाहुतीर्जुहुयात्। मदन्तीरुपस्पृश्य प्रथमेनानुवाकेन शान्तिं कृत्वा तत आवृत्तैः 'पृथिवी समित्' इत्येतैर्मन्त्रैश्चतस्र औदुम्बरीः समिध आधायाऽऽवृत्तैर्देवता उपतिष्ठते। अथैनं सर्वेषामनुवाकानां प्रभृतीरभिव्याहारयति प्रथमोत्तमयोर्वा। उत्तमेन शान्तिं कृत्वा जयादि प्रतिपद्यते। परिषेचनान्तं कृत्वाऽथैनं संशास्ति ब्रह्मचार्यसीत्याद्यन्तावसायिनमित्यन्तम्। पूर्ववदादेशः॥

## वाराहगृह्यसूत्रम्

व्रतनियमाः

'रहस्यमध्येष्यतः प्रवर्ग्यः(? र्ग्यम्)। तस्य व्रतोपायनं समिन्मन्त्रश्च। तिष्ठेदहनि रात्रावासीत वाग्यतः। पर्वसु चैवं स्यात्। सर्वेजटश्च स्यात्। संवत्सराद्धरः प्रवर्ग्यो भवति॥

## आग्निवेश्यगृह्यसूत्रम्

केशवापनस्नानाशनानि, बहिर्ग्राममग्निस्थापनादि, शान्तिकरणम्, समिदाधानम्, देवतोपस्थानम्, समुखशिरोवेष्टनम्, शान्तिकरणम्, ग्रामागमनम्, परेद्युर्बहिर्ग्राममग्निस्थापनादि, शान्तिकरणम्, वासोविसर्गः, आदित्योपस्थानम्, अग्न्यादिदर्शनम्, शान्तिकरणम्, व्रतनियमाः, शुक्रियाध्ययनम्, बहिर्ग्रामं व्रतविसर्गः, गुरवे गोदानम्

'अथातोऽवान्तरदीक्षां व्याख्यास्यामः। उदगयनापूर्यमाणपक्षे पुण्ये नक्षत्रे केशान् वापयित्वा स्नात्वाऽशित्वाऽग्निमौदुम्बरीश्चतस्रः समिधोऽहतं वासो दर्भानाज्यं चोदकुम्भमित्येतान् समादाय बहिर्ग्रामादुत्तरां दिशमुपनिष्क्रम्याछदिर्दर्शेऽग्निमुपसमाधाय परिस्तीर्य मदन्तीरधिश्रित्य पूर्वां शान्तिं कृत्वाऽथ परिषिच्याभ्यज्य समिधोऽभ्यादधाति– 'पृथिवी समित्' इत्येताभिश्चतसृभिः। अथ परिषिच्य 'अग्ने व्रतपते शुक्रियेभ्यो व्रतं चरिष्यामि' इति देवता उपस्थाप्याहतेन वाससा शिरः समुखमभिवेष्टयति–

(१) वागृ. ८.

(२) आग्निगृ. १।२।३.

'चितः स्थ परिचितः, परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः। वृद्धायुमनुवृद्धयो जुष्टा भवन्तु जुष्टयः॥' (इति)। 'इन्द्रस्य स्यूरसीन्द्रस्य ध्रुवमस्यैन्द्रमसीन्द्राय त्वा' इत्युत्तरां शान्तिं कृत्वा वाचो यम्य ग्रामं प्रविशति। तिष्ठन्नासीनो वा जागरणम्। अथ श्वोभूत एतामेव दिशमुपनिष्क्रम्याछदिर्दर्शेऽग्निमुपसमाधाय परिस्तीर्य मदन्तीरधिश्रित्य पूर्वां शान्तिं कृत्वा 'वयः सुपर्णाः' इति विसृज्य वास आदित्यमुपतिष्ठते— 'उद्वयं तमसस्परि, उदु त्यम्, चित्रम्, तच्चक्षुर्देवहितम्, य उदगाद्' इति। एतानानुवीक्षयन्त्यग्निमादित्यमश्मानमुदकुम्भं हिरण्यं गां भूमिमिति। उत्तरां शान्तिं कृत्वा संवत्सरं व्रतं चरति द्वादशरात्रमेकाहं वा। अष्टम्यां पर्वणि कालस्नानम्। अथ यद्यमेध्यं पश्येद् 'अबद्धं मनो दरिद्रम्' इति, अथ यद्यभिवर्षेयुः 'उन्दतीर्बलं धत्त' इति जपति। अधःशय्या गुरुशुश्रूषा। शुक्रियाण्यधीयीत। एतामेव दिशमुपनिष्क्रम्याछदिर्दर्शेऽग्निमुपसमाधाय परिस्तीर्य मदन्तीरधिश्रित्य पूर्वां शान्तिं कृत्वा 'द्यौः समिद्' इत्येताभिश्चतसृभिरौदुम्बरीः समिध आधायाथ परिषिच्य 'आदित्य व्रतपते शुक्रियेभ्यो व्रतमचारिषम्' इत्येताभिर्देवता उपस्थाय गुरवे गां ददाति। उत्तरां शान्तिं कृत्वा व्रतसमाप्तो भवति॥

## गोभिलगृह्यसूत्रम्

आदित्यव्रतं कुलभेदेन कृताकृतम्, व्रतनियमाः

$'आदित्यव्रतं तु न चरन्त्येके॥ ये चरन्त्येकवाससो भवन्ति॥ आदित्यं च नान्तर्दधतेऽन्यत्र वृक्षशरणाभ्याम्॥ नापोऽभ्यवयन्त्यूर्ध्वं जानुभ्यामगुरुप्रयुक्ताः॥

## खादिरगृह्यसूत्रम्

आदित्यव्रतं व्यवस्थितविकल्पितमव्यवस्थितविकल्पितं वा, व्रतनियमाः

'नाऽऽदित्यव्रतमेकेषाम्॥

एकेषां शाखिनामादित्यव्रतं नास्ति येषां शुक्रियपाठो न विद्यत इत्यर्थः। अपरा व्याख्या— एकेषामाचार्याणां मतेन सर्वेषामेव शाखिनामादित्यव्रतं नास्तीति। रुद्रभा.

ये चरन्त्येकवाससो भवन्ति॥

न वाससां परिवर्तनं कुर्युः। रुद्रभा.

आदित्यं च नान्तर्दधते॥

छायागमननिषेधोऽयम्। रुद्रभा.

न चापोऽभ्युपयन्ति॥

स्नानार्थमपि नावगाहनं कुर्युः। रुद्रभा.

## जैमिनिगृह्यसूत्रम्

संवत्सरमादित्यव्रताचरणम्, व्रतनियमाः

'आदित्यव्रातिकः संवत्सरः॥

---

$ सर्वेषु सामवेदसूत्रेषु यदादित्यव्रतमुक्तं तच्छुक्रियव्रतमेवेति निर्णयात् सर्वाणि तद्विषयकाणि सामवेदसूत्राण्यत्रैव संगृहीतानि। तस्य शुक्रियव्रतत्वं तु तत्र व्रातिकव्रतकल्पातिदेशं प्रतिपादयता रुद्रस्कन्देन (खागृ. २।५।३४) 'तस्मिन्संवत्सरे शुक्रियाध्ययनं तदग्निभिः सह' इति शुक्रियसामाध्ययनार्थत्वोक्तेः। शुक्रियसामानि च प्रवर्ग्यसंबन्धीनि सामानि, 'तानि शुक्रियाणि सामान्यभवन्' (तैआ. ५।१०।१) इति श्रुतेः, 'शुक्रियाणि प्रवर्ग्यसंबन्धीनि सामान्यभवन्' इति तदीयसायणभाष्याच्च। 'असौ खलु वा आदित्यः प्रवर्ग्यः' (तैआ. ५।९।२), 'आदित्यात्प्रवर्ग्यम् (निरमिमत)' (गोब्रा. १।४।७) इत्यादिवचनेभ्यः प्रवर्ग्यस्याऽऽदित्यसंबन्धात्, शाखान्तरेषु प्रवर्ग्यकाण्डस्य शुक्रियव्रताध्येयसौम्यकाण्डान्तर्गतत्वाच्च शुक्रियव्रतस्याऽऽदित्यव्रतमिति समाख्याऽप्युपपद्यते। इदं चात्र प्रसक्तोऽवधेयम्— आदित्यव्रतस्य कुलाचारतो व्यवस्थितविकल्पात् ये आदित्यव्रतं नानुतिष्ठन्ति तैर्गोदानव्रतेनैव शुक्रियसामान्यध्येयानि, ये त्वनुतिष्ठन्ति तैरादित्यव्रतेन तान्यध्येयानीति रुद्रस्कन्देन स्पष्टीकृतमिति।

(१) गोगृ. ३।१।३०–३३. (१) खागृ. २।५।१८–२१. (२) जैगृ. १।१६.

आदित्यव्रतानि शुक्रियसामानि । उक्तकालमध्ये तदध्ययनार्थः संवत्सरो भवति । इदं तद्व्रतविधानार्थम् । श्रीव्या.

एकवासाः ॥

एकसहायं वासो यावद्ध्वंसं वसीत । श्रीव्या.

न युक्तमारोहेत् । आदित्यं नान्तर्दधीत छत्रेण । महीमासनशयनाभ्यामुपानद्भ्यां च ॥

युक्तम् अनोरथप्रभृति । श्रीव्या.

नोर्ध्वं जान्वोरपः प्रस्नायादन्यत्राऽऽचार्यवचनात् ॥

अपः प्रस्नायात् प्रस्यन्दयेत् । अशुचित्वनिमित्तं तु स्नानं भवति । श्रीव्या.

## वैखानसगृह्यसूत्रम्

होममन्त्राः, अध्येयसूक्तानि, धातादिव्रतविसर्गहोमः, ब्राह्मव्रतविसर्गान्ते नवोपवीतादिधारणम्, होमः, व्रतबन्धनम्, शिरोवेष्टनम्, शुक्रियाद्यध्ययनम्, शुक्रियव्रतग्रहणविसर्गक्रमे मतान्तरम्

[१] 'सोमाय काण्डर्षये, सदसस्पतिम्, सोमो धेनुम्, अषाढम्, त्वं सोम क्रतुभिः, या ते धामानि हविषा, त्वमिमा ओषधीः, या ते धामानि दिवि' इति सूक्तं सौम्यव्रतस्य । ... 'वसोः पवित्रम्, पवस्व विश्वचर्षणे' इति सौम्ये ॥

तथैव धातादिव्रतविसर्गं हुत्वा ब्राह्मव्रतं विसृज्य नवान्युपवीतादीनि पूर्ववद्धृत्वा 'प्रवर्ग्यदेवताभ्यः कल्पयामि सांराज्यै कल्पयामि महावीराय कल्पयामि पृथिव्यै कल्पयामि स्वाहा' इत्युत्तरे 'सोमाय कल्पयामि पितृभ्यः कल्पयामि पितृभ्यो मन्त्रपतिभ्यः कल्पयामि रुद्राय कल्पयामि रुद्राय रुद्रहोत्रे कल्पयामि स्वाहा' इति दक्षिणे चाऽऽहुतीरेता हुत्वा 'अग्ने व्रतपते शुक्रियव्रतं बन्धयामि' इति शुक्रियव्रतं षाण्मासिकं त्रैमासिकं वा बध्नीयात् । 'चितः स्थ परिचितः स्थ' इत्यादिनाऽनुवाकेन शिरोऽहतेन वाससाऽऽवेष्टयेद्यथैनमहः सूर्यो नाभितपेन्मुखमस्य । तस्माद्रेफायति । स्त्रीशूद्राभ्यामनभिभाष्य शुक्रियब्राह्मणारुणनारायणाद्यारण्यकाण्डमधीयीत । इति व्रतपारायणं विज्ञायते ॥

[१]'पूर्वं तथा प्रधानान् हुत्वा पुरोदयादादित्यस्य ब्राह्मव्रतं विसृज्य शुक्रियव्रतस्य ग्रहणविसर्गावित्येके ॥

## कपर्दिकारिकाः

होममन्त्राः, समिदाधानमन्त्राः, शिरोवेष्टनान्ते गृहागमनम्, परेद्युर्बहिर्ग्राममग्न्यादिदर्शनम्, व्रतोत्सर्जने विशेषाः

[२]'सोमसूक्तनिषदत्सदसस्पतिं
तन्त्रवज्जुहुयात्सलिलं नमः ।
शुक्रिये समिधोऽग्न इति व्रती
युञ्जते सविता जयवारिशम् ॥
मीलने यतवाक् शिरसः कृते
वेष्टनेऽस्तमिते गृहमाविशेत् ।
स्थीयतेऽन्ध इव त्वथवाऽऽस्यते
वाग्यतेन ततोऽभ्युदितक्रिया ॥
ततः प्रभाते तु बहिर्गृहाणां
वह्निं च सूर्यं च ततोदकुम्भम् ।
आकाशमुद्वीक्ष्य गिरिं च वत्सं
पश्येद्धिरण्यं च वयः सुपर्णाः ॥
उत्सर्जने तु युञ्जादीन् मीलनादि च वर्जयेत् ।
समिदाधानमन्त्रे तु द्यौः समित् पूर्वं इष्यते ॥

(१) वैगृ. २।१०–११.

(१) वैगृ. २।११३.

(२) कका. ३।८–११.

# आग्नेयव्रत (आग्निकीदीक्षा) प्रयोगः

## मानवगृह्यसूत्रम्

द्वादशरात्रं व्रतम्, होमः, व्रतादेशनम्, अनुवाकवाचनम्, व्रतनियमाः, अपूपयागः, वात्सप्रवाचनम्, ब्राह्मणभोजनम्, उद्दीक्षाहोमः

[1]**अथ दीक्षाऽऽग्निकी द्वादशरात्रम् ॥**

अथ दीक्षाऽऽग्निकी– अथशब्दोऽधिकारार्थः । 'अग्निं वाऽध्येषमाणस्य' इति प्रसङ्गादाग्निकी दीक्षाऽभिधीयते । चातुर्होत्रि(?तृ)क्यनन्तरं वक्तव्या स्यात् । न तूपनयनं तावद्वक्तव्यम् । उपनीतस्य ह्यध्यायार्था दीक्षा अध्यापनपाठकालेषु स्युरिति गोदानप्रसङ्गेनोच्यते । दीक्षामौञ्ज्येनापि च रूपम् इज्योपनयननियमव्रतादेशेषु दीक्षोच्यते । द्वादशरात्रमिति कालनियमः । अष्टाभा.

**'युञ्जानः प्रथमं मनः' इत्यष्टौ हुत्वा 'आकूतमग्निं प्रयुजं स्वाहा' इति षड् जुहोति 'विश्वो देवस्य नेतुः' इति सप्तमीम् ॥**

'युञ्जानः प्रथमं मनः' इत्यादि पञ्चदशाऽऽहुतीर्जुहोति । अष्टाभा.

**व्रतं प्रदायाऽऽदितोऽष्टावनुवाकाननुवाचयेत् ॥**

**त्रिषवणमुदकमाहरेत् त्रींस्त्रीन्कुम्भान् ॥**

**एकेन वाससाऽन्तर्हितायां भूमौ शयीत भस्मनि करीषे सिकतासु वा ॥**

**नोदकमभ्यवेयात् ॥**

**समाप्ते घृतवताऽपूपेनेष्ट्वा वात्सप्रं वाचयेत् ॥**

**ततो घृतवद्भिरपूपैर्ब्राह्मणान् भोजयेत् ॥**

**एवमेवोद्दीक्षां जुहुयात् ॥**

व्रतं प्रदाय वक्ष्यमाणं त्रिषवणादिकम् । आहरणादि तद्व्रतमादिश्याष्टौ युञ्जानकादीननुवाकान्वाचयेत् । ततः केचित्प्रधानस्थाने युञ्जानादिहोममिच्छन्ति । समिच्छेषे वा वचनं व्रतं प्रदायेति व्रतपत इति दर्शपौर्णमासवत् । त्रिषवणमुदकाहरणं त्रिभिर्घटैः । एकवस्त्रं शयनकालार्थम् । अन्यदा 'द्विवस्त्रोऽत ऊर्ध्वम्' (१।२।१७) इति नियमास्सिद्धम् । अनन्तर्हितभूमिशयनं भस्मकरीषविकारमन्यतमस्मिन्वा । नोदकमभ्यवेयात् । उदकाहरणकाले प्राप्तौ पुनर्वचनं निषेधार्थम् । तेनान्यत्र निषिद्धे यद्विधेयानुष्ठानसामर्थ्यादनुष्ठीयमाने न तत्र दोषः । समाप्ते द्वादशाहे गते घृतवताऽपूपेनेष्ट्वा वात्सप्रं वाचयेत् । इष्ट्वेति स्थालीपाकधर्मेणेति दर्शयति । अत्रेमं च पुरोडाशं लोष्टवदङ्गारेषु श्रपयेत् । पात्र्यामुपस्तीर्योद्वास्यालंकृत्य तत इमं स्तोमादि पवित्राभिर्होमान्ते 'दिवस्परि' इति वाचयेत् । ततो घृतवद्भिरपूपैर्बहुवचनात्त्रीन् भोजयेत् । अपूपा वा घृतपूपा मण्डका वा । व्रतविमोके केचित् 'अग्ने व्रतपते व्रतमचार्ष(? रिष)म्' इति वात्सप्रमिच्छन्ति । अष्टाभा.

## वाराहगृह्यसूत्रम्

व्रताचरणकालः, होमः, व्रतनियमाः, अपूपयागः, वात्सप्रवाचनम्, परिदानम्

[1]**अथाग्निव्रताश्वमेधिकी दीक्षा संवत्सरं द्वादशरात्रं वा । 'आकूतमग्निम्' इति षड्ढुत्वा व्रतं प्रदायाऽऽदितोऽष्टावनुवाकाननुवाचयेत् । त्रिषवणमुदकमाहरेत् त्रींस्त्रीन् कुम्भांस्त्रींश्च समित्फलान् । भस्मनि शयीत । करीषे सिकतासु भूमौ वा । नोदकमभ्युपेयात् । संवत्सरे समाप्ते घृतवताऽपूपेनाग्निमिष्ट्वा वात्सप्रं वाचयेत् । स्नातेन यावदध्ययनं काण्डव्रतविशेषो होमार्थश्च । आद्यन्तयोर्जुहुयात् । अथैनं परिदत्ते– 'अग्नये त्वा परिददामि, वायवे त्वा परिददामि, सूर्याय त्वा परिददामि, प्रजापतये त्वा परिददामि' इति ॥**

---

(१) मागृ. १।२३।५-१३.

(१) वागृ. ८.

**वैखानसगृह्यसूत्रम्**

होममन्त्राः , अध्येयसूक्तम्

[1]"**अग्नये काण्डर्षये, सदसस्पतिम् , अग्ने नय, प्र वः शुक्राय, अच्छा गिरः , अग्ने त्वमस्मत् , अग्ने त्वं पारय, प्र कारवो मनसा ' इति सूक्तमाग्नेयव्रतस्य । ... ' जातवेदसे ' इत्याग्नेये ॥**

(१) वैगृ. २।१०.

# चातुर्होतृकीदीक्षाप्रयोगः

## मानवगृह्यसूत्रम्

होममन्त्राः, व्रतादेशः, अनुवाकानुवाचनम्, उद्दीक्षाहोमः

**[1]अथ दीक्षा चातुर्होतृकी संवत्सरम् ॥**

**चतुर्होतॄन्स्वकर्मणो जुहुयात् सह षड्ढोत्रा ( सप्तहोतारम् ? ) ॥**

**अन्ततो व्रतं प्रदायाऽऽदितो द्वावनुवाकावनुवाचयेत् ॥**

**एवमेवोद्दीक्षां जुहुयात् ॥**

संवत्सरमिति कालनियमः । चतुर्होतारः प्रयोजनं यस्याः सा चातुर्होतृकी । चतुर्होत्रा( ? होतॄन् ) स्वकर्मणो जुहोति ( सह ) षड्ढोत्रा । दशहोतारं निगद्य 'इन्द्रं गच्छ स्वाहा' इति होमः । चतुर्होतारं निगद्य 'वाचस्पते, सोमः सोमस्य' इति द्वौ होमौ । पञ्चहोतारं निगद्य 'वाचस्पते हिन्विधे, सोमः सोमस्य' इति होमः( ? मौ ) । सप्तहोतारं निगद्य 'त्रिधे नामन्' इति होमः । 'वाग्घोता' इति षड्ढोतारं निगद्य 'तपसि जुहोमि स्वाहा' इति होमः । एतत्सूत्रं पठितं स्या-( ? न्नपठितस्यो )परि पूर्वोक्तं जुहुयात् । ( सप्तहोता 'अग्निर्होता, महाहविर्होता' ? )यथाक्रमं दश-चतुः-पञ्च-सप्त-षड्ढोतृशब्दाः ( ताः ? ) चित्तिस्रुगादीनां संज्ञाः । समिच्छेषे व्रतं युक्तं द्वावनुवाकौ वाचयेत् । एवमेवोद्दीक्षाया होमो वा चरितव्रतान्युक्तानि द्वादशरात्रमित्यत्र संवत्सरं यावत् । एतच्च मन्त्रहोत्राध्ययनकाले कर्तव्यम् । अग्निहोत्राध्ययनकाले कर्तव्यम् । अग्निहोत्रब्राह्मणमधीत्य चातुर्होतृकं चत्वारि चत्वारि संवत्सरान्ते उद्दीक्षते तच्चतुर्होतारं स्यानमध्येतुमारमेत । एवमग्निमित्यादौ द्वादशरात्रादनन्तरमत्पारमुपस्तीर्णव्रतविकारात् । अष्टाभा.

(१) मागृ. १।२३।१–४.

## काठकगृह्यसूत्रम्

अग्निस्थापनम्, जयादिहोमः, दर्भस्तम्भनिहननम्, ब्राह्मणोपवेशनम्, समिदाधानम्, देवतोपस्थानम्, व्रतहोमाः कामसंयुक्ताः, व्रतादेशनम्, आचार्याय वासोदानं ब्राह्मणाय वरदानं च

**[1]अथातश्चातुर्होतृकम् ॥**

(१) 'चित्तिः स्रुक्' इत्यादयो मन्त्राश्चतुर्होतार उच्यन्ते । तेषु भवं चातुर्होतृकं व्रतम् । देव.

(२) चातुर्होतृकमन्यत्रोक्तमिह प्रयोगप्रस्तावाय श्रोत्रियाः पठन्ति । अथातश्चातुर्होतृकं व्रतमुपक्रम्यते । अथशब्देन चातुर्होतृकं व्रतमुपक्रम्यते । अङ्गफलाधिकारार्थश्चाथशब्दः । अतःशब्दो हेत्वर्थे । आवि.

**ब्रह्मचारिकल्पेन व्रतमुपैति ॥**

(१) तत् ब्रह्मचारिकल्पेन ब्रह्मचारिधर्मोपदेशिना वेदभागेन चोदितमुपेयात् । देव.

(२) ब्रह्मचारिकल्पेन 'मार्गवासाः संहतकेशः' इत्यादिना व्रतमुपैति । समिद्दानादिना व्रतोपायनं करोति । व्रतमध्यवस्यतीत्यर्थः । चातुर्होतृकस्य ग्राम्यत्वमेव नाऽऽरण्यत्वम् । अविशेषेण च वेदव्रतत्वं सर्वेषाम् । तथा च संस्कारपङ्क्तौ गौतमः प्राह– 'चत्वारि वेदव्रतानि' ( गौध. ८।१४ ) । चतुर्होतारः शुक्रियोपनिषदरुणानीति । आवि.

**संवत्सरमष्टौ मासांश्चतुरो मासान्वा ॥**

(१) संवत्सरमेतद्व्रतमुपेयादिति मुख्यः कल्पः । अष्टौ चतुरो मासान्वेत्यनुकल्पः । देव.

(२) भूयस्त्वाल्पत्वापेक्षः कालविकल्पः । आवि.

**शुक्लपक्षस्य पुण्याहे पर्वणि वा यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा पूर्वेणाग्निं दर्भस्तम्भं निहत्य ब्राह्मणं दक्षिणत उपवेश्य**

(१) कागृ. ४३।१–११.

**'हिरण्यवर्णाः' इति चतसृभिः समिधोऽभ्यादध्यात् ॥**

( १ ) अग्नेर्यः पूर्वदेशस्तत्र दर्भस्तम्बं निहत्याधीतवेदमन्यं ब्रह्मचारिणमग्नेर्दक्षिणभागे उपवेश्य अग्नेः पश्चार्धे अवस्थितः सन् 'हिरण्यवर्णाः' इत्यादिभिश्चतसृभिश्चतस्रः समिधोऽग्नौ पूर्ववदभ्यादध्यात् । 'हिरण्यवर्णाः' इत्याद्यश्चतस्रः समार्जने ¶व्याख्याताः । देव.

( २ ) 'चतुर्होतृभ्यश्छन्दोभ्यश्चातुर्होतृकाय जुष्टं निर्वपामि' इति यावकाज्यपयसानाम् एकतमस्य निर्वापः । आज्यभागान्ते पूर्वेणाग्निं सलोष्टगोमये षट्पञ्चाशद्दर्भाङ्कुरैर्ब्रह्मप्रकृतिं दर्भस्तम्बं निहत्य ब्रह्माणं दक्षिणत उपवेश्यान्यानन्यांश्च विप्रान्संनिधाय वसनमेखलाचर्मदण्डेषु मन्त्रानावर्त्य 'हिरण्यवर्णाः' इति चतसृभिः समिधोऽभ्यादध्यात् । 'हिरण्यवर्णाः शुचयः पावकाः, यासां देवाः, यासां राजा, शिवेन मा' । ब्राह्म.

( ३ ) शुद्धापेक्षो(?शुद्धपक्षो)ऽत्रोपक्रमकालः । अयप्रभृतिभिर्हुत्वेत्याज्यभागान्तं तन्त्रं दर्शयति सिद्धेऽपि व्रतहोमसंभवात्स्थालीपाकत्वात्तन्त्रवत्त्वे तेजोवीर्यकल्पे हविषोऽत्र तन्त्रत्वं मा भूदिति । एवमाज्यभागान्तं हुत्वाऽऽचार्यो वासोमेखलाजिनदण्डमन्त्रानावर्त्य पूर्वेणाग्निं दर्भस्तम्बं निहत्य दक्षिणतोऽग्नेरासनलम्बेन सहोपनिषदाग्न्याधानं कुर्यात् । कथम् ? ब्रह्मचारिणं 'हिरण्यवर्णाः' इति चतसृभिश्चतस्रः समिधो दापयित्वा । आश्वि.

**नित्ये व्रतोपायने 'ब्राह्मणा व्रतपतयः' इति चतुर्थम् ॥**

( १ ) यदेतत्प्रस्तुतं ब्रह्मचारिणो नित्यमवश्यकर्तव्यं व्रतग्रहणं तत्र 'ब्राह्मणा व्रतपतयो व्रतमालभे तद्वः प्रब्रवीमि तच्छकेयं तेनर्ध्यासम्' इति मन्त्रं चतुर्थं कुर्यात् । त्रयस्तु पूर्वे व्याख्याता अत्रापि स्थिताः 'अग्ने व्रतपते०, वायो व्रतपते०, सूर्य व्रतपते०' इति । देव.

( २ ) अत्र नित्ये प्राकृते व्रतोपायने स्थित आवापभूतं 'ब्राह्मणा व्रतपतय इति व्रतमालभेत (? पतयो व्रतमालभे) तद्वः प्रब्रवीमि तच्छकेयं तेनर्ध्यासम्' इति चतुर्थं मन्त्रमावपेत् । आश्वि.

**अथ व्रतहोमांश्चतुर्गृहीतैश्चतुर्होतृभिराज्येन तेजस्कामो यावकेन पशुकामोऽन्नाद्येन वीर्यकामः पयसि स्थालीपाकं श्रपयित्वा ब्रह्मवर्चसकामः ॥**

(१) अथ व्रतहोमान् । वक्ष्याम इति शेषः । * सप्त चतुर्होतारोऽत्र मन्त्राः । श्रपयित्वेत्येतदन्तं स्पष्टम् ।

---

¶ मन्त्रव्याख्यानं सं. का. पृ. २०२१ इत्यत्र द्रष्टव्यम् । इदमत्र संशोधनीयम्– काठकशाखीयेऽस्मिन्सूत्रे काठकसंहितायां सन्ति चेत् तत एव मन्त्राः संग्राह्याः, न सन्ति चेत् संनिकृष्टशाखीयाः संग्राह्या इति युक्तं प्रतिभाति । अत एव काठकसंहितायामश्रूयमाणानामेतेषां मन्त्राणां कृष्णयजुर्वेदत्वादिना काठकसंहितासंनिकृष्टाया मैत्रायणीसंहितायास्तैत्तिरीयसंहिताया वा सकाशात् संग्रहणमुचितम् । न तु ततः संगृहीता इति भूयसः पाठभेदात्स्पष्टमेव प्रतीयते । तथाहि– अत्रत्यप्रथममन्त्रत्रये उत्तरार्धान्येकरूपाणि, तत्र तु द्वितीयतृतीयमन्त्रोत्तरार्धे भिन्ने । यदत्र चतुर्थमन्त्रस्योत्तरार्धं तत्तत्र 'यासां राजा वरुणो०' इति मन्त्रस्य, चतुर्थमन्त्रस्य त्वन्यदेव । 'या अग्निं गर्भम्' इत्यत्र 'अग्निं या गर्भम्' इति तत्र पाठः । मन्त्रक्रमेऽपि भेदोऽस्ति । अत्र यौ द्वितीयतृतीयौ तौ तत्र तृतीयद्वितीयौ । अथर्ववेदसंहितामन्त्रेषु अत्रत्यमन्त्रेषु च मन्त्रत्रयोत्तरार्धैकरूप्ये, 'या अग्निं गर्भम्' इति पाठे, चतुर्थमन्त्रोत्तरार्धस्वरूपे च साम्यात् विप्रकृष्टत्वेनानौचित्येऽप्यथर्ववेदात्संगृहीता इत्यपि वक्तुं न शक्यते, तत्रापि पाठभेदात् । तथाहि– प्रथममन्त्रे 'कश्यपो यास्विन्द्रः' इत्यत्र 'सविता यास्वग्निः' इति तत्र पाठः । मन्त्रत्रयोत्तरार्धत्रये 'विरूपास्ताः' इत्यत्र 'सुवर्णास्ताः' इति तत्र पाठः । चतुर्थोत्तरार्धे 'मधुश्चुतः' इत्यत्र 'घृतश्चुतः' इति तत्र पाठः । पूर्वोक्तः क्रमभेदोऽपि तत्रास्ति । नापि सौत्रा इमे मन्त्राः, एकस्मिन्नादर्शपुस्तके तृतीयकण्डिकायां प्रथममन्त्रस्य कृत्स्नपाठसत्त्वेऽपि अन्येषां सूत्रे कृत्स्नपाठाभावात् । तस्मात् कुतोऽयं मन्त्रसंग्रहः कृतः ? इति ।

* व्याख्यानमिदं बहुशङ्काविषयः । तथाहि– 'चतुर्होता' इति संज्ञा द्विधा भवति– 'पृथिवी होता' इत्येकस्यैव मन्त्रस्य विशेषरूपा, तदादिदशहोत्रन्तानां पञ्चानां मन्त्राणां सामान्यरूपा चेति । एवं स्थिते 'सप्त चतुर्होतारः' इत्यत्र विशेषसंज्ञा विवक्षिता सामान्या वा ? नाऽऽद्यः, अत्र सप्तत्वोक्तेः, व्याख्याने त्रयाणां चतुर्होतृत्वोक्तेश्च । न द्वितीयः,

चतुर्होतृमन्त्रान् व्याख्यास्यामः । भक्त्या ब्रह्म विवर्तं वा परिणाममुपाश्रितान् । आध्यात्मिकैकरूपार्थांश्चतुर्होतृन्नमाम्यहम् ॥ ‘ चित्तिः स्रुक् चित्तमाज्यं वाग्वेदिराधीतं बर्हिः केतो अग्निर्विज्ञातमग्निर्वाचस्पतिर्होता मन उपवक्ता प्राणो हविः सामाध्वर्युरिन्द्रं गच्छ स्वाहा ॥ ’ ( काठ. ९।८ ) – चतुर्होतृणामार्षम् । इन्द्रो देवता । ‘ हु दानादनयोः ’ । जुह्वति ददतीति होतारः । चतुर्णां धर्मार्थकाममोक्षाणां दातारश्चतुर्होतारः प्रद्युम्नानिरुद्धवासुदेवसंकर्षणाः प्रथमब्रह्मविवर्ताः । तथा च ब्राह्मणम्— ‘ ब्रह्म वै चतुर्होतारः ’ इति, ‘ प्रजापतिरकामयत बहु स्याम् ’ इत्यादि च । एवं च परमात्मैव यज्ञरूपः स्तूयते । ‘ यज्ञो वै प्रजापतिः ’ इति, ‘ विष्णुर्यज्ञः ’ इत्यादिरपि श्रुतिः । अतोऽध्यात्मयज्ञस्वरूपं रूपकेणाऽऽह– चेतनं चित्तिः ज्ञानं स्रुक् । चित्तं मनः स्वान्तमन्तःकरणं चेतो मानसमिति पर्यायः( ? याः ) । चित्तम् आज्यम् । यथा हि स्रुचा आज्यं प्रक्षिप्यतेऽग्नौ, तथा विवेकज्ञानेन मनः परमानन्दध्यानवह्नौ प्रक्षिप्यते । यथा हि क्षिप्तमाज्यं दह्यते तद्वन्मनोऽप्यध्यात्मध्याने प्रक्षिप्तं सत् स्वयं विलीयते सर्वाविद्यामेदान्तराणि च विलापयति कतकफलरजोवत् । वाक् वेदिः, यज्ञाश्रयत्वात् । यथाहि वेदिमाश्रित्य यज्ञपात्राणि स्रुगादीनि निजकार्येषु व्याप्रियन्ते तद्वद्वैदिकीं वाचमुपनिषद्रूपामाश्रित्य मनःप्रभृति अध्यात्मयज्ञसाधनं निजकार्ये जनयति । आधीतं बर्हिः । आध्यानम् आधीतिः चित्त( ? चिन्तनं )ध्यातृणाम् । तत् बर्हिः, तदाश्रितत्वाच्चित्तिस्रुगादीनाम्, ‘प्रस्तरे जुहूं साध( ? द )यति सर्वाश्च स्रुचः ’ इति श्रुतेः । केतः अग्निः । ‘ चिती संज्ञाने ’, असुन् । छान्दसो वर्णव्यत्ययः । केतः प्रज्ञाविशेषः, स एवाग्निः, तेनैव योगयोगाङ्गादिसमिधां संदीपनात् । विज्ञातम् अग्नित् विशिष्टं ज्ञानं वेदार्थग्राहि अग्नित् । छान्दसो ह्रस्वः । यथाहि ऋत्विग्विशेषेणैधसाऽग्निः संदीप्यते, तथा वेदार्थज्ञानेनोत्तरोत्तरमध्यात्मचित्ता( ? त्मकेतो )ग्निः । वाचस्पतिर्होता । वाचस्पतिः अन्तरात्मा, स होता, चित्तिस्रुगादिप्रेरणात् । अथवा आह्वाता मनःप्रभृतीनामृत्विजां प्रेषयिताऽध्वर्युः । मनः उपवक्ता । मन्यते अनुमन्यते इति मनः अन्तर्यामी । स उपवक्ता ब्रह्मा । स हि यत् जीवात्मा जानाति करोति वा तत् सर्वमनुवदत्यनुपश्यतीत्यादिरूपेण अनुमन्यते । प्राणः हविः । स हि परमात्माग्नौ हूयते निरुध्योत्क्रान्तिकाले ब्रह्मद्वारेण परब्रह्मणि प्रक्षिप्यते । साम अध्वर्युः । सामशब्दो ध्यान-

---

सामान्यसंज्ञकानां पञ्चत्वेनात्रत्यसप्तत्वोक्तेर्व्याख्यानगतत्रित्वोक्तेश्च विरुद्धत्वात् । किंच, ‘सोमः सोमस्य पुरोगाः’ इत्यस्य ग्रहसंज्ञकस्य पञ्चहोत्रुत्तरभागस्य पृथङ्विनियोज्यत्वे पृथङ्मन्त्रत्वे चाभिमतेऽपि कथं तस्य चतुर्होतृत्वम् ? चतुर्होतृसंज्ञकानां मन्त्राणां प्रतिमन्त्रं प्रथमो भागो होतृसंज्ञकः द्वितीयश्च ग्रहसंज्ञकः, होतृभागे आरोपाणां पञ्चत्वादिकं पञ्चहोत्रादिसंज्ञानिमित्तमिति प्रसिद्धम् । तथा चास्य केवलोत्तरभागस्य आरोपाभावात् विशेषतः पञ्चहोतृत्वं सामान्यतश्चतुर्होतृत्वं च न युज्यते । अपि च, व्याख्यात्रा चतुर्होतृणां सप्तत्वमुपक्रान्तम्, व्याख्याने त्रयाणामेव चतुर्होतृत्वमुक्तम्, षडेव च मन्त्रा व्याख्याताः । रूपकविषयेऽपि बहु शङ्कनीयमस्ति । अङ्गिनोर्विषयारोप्ययोः प्रथममन्त्रे अशाब्दत्वात् एकदेशविवर्तिनि साङ्गोऽस्मिन् रूपके ‘ परमात्मैव यज्ञरूपः स्तूयते ’ इति व्याख्यानात् परमात्मा विषयरूपोऽङ्गी यज्ञश्चाऽऽरोप्यरूपोऽङ्गी व्याख्यातुरभिमत इति प्रतीयते । तत्र परमात्मनोऽशरीरत्वात् कथं तस्याङ्गित्वम् ? कथं वा चित्तादीनां तदङ्गत्वम् ? सांकल्पिकशरीरकल्पनायामपि परमात्मन एवान्तरात्मत्वान्तर्यामित्वोपपत्तेः कथं वाचस्पति–मनःशब्दबोध्ययोरन्तरात्मान्तर्यामिनोस्तदङ्गत्वम् ? किंच, पक्षे होतृशब्दस्योचितमुख्यार्थत्यागेनानुचितमध्वर्युपरत्वमाश्रित्याध्वर्युद्वित्वकल्पनमपि नोपपत्तिसहम् । अपि च, साङ्गे रूपके कस्मिंश्चिदारोपे आरोपान्तरस्य निमित्तत्वमभिमतं चेत् प्रकृतरूपकान्तर्गतेनैवाऽऽरोपान्तरेण निमित्तेन भवितव्यमिति सत्यां रूपकमर्यादायां प्राणे आहुतित्वारोपे प्रकृतः केतस्याग्नित्वारोप एव निमित्तीकर्तुमुचितः, नाप्रकृतः परमात्मन्यग्नित्वारोपः । आहुत्यग्न्योरिव प्राणकेतसोरुपजीव्योपजीवकभावात् केतस्यग्नित्वारोपस्य प्राणे आहुतित्वारोपे निमित्तत्वं संभवति । तस्मात् ‘ स हि परमात्माग्नौ हूयते ’ इत्युक्तिरपि न श्लिष्यते । विस्तरभियाऽत्रोपपत्तिप्रपञ्चो न कृतः ।

वचनः। यथा हि अध्वर्युः सर्वर्त्विजो निजनिजकर्मसु प्रैषैर्नियच्छति तथा व्यानाख्यो वायुर्नाभेरुपरि दशस्वङ्गुलेषु पुरुषस्थाने स्थितः प्राणापानौ स्वमर्यादायां स्थापयति परस्परविरुद्धगती। एतच्च योगसारे निर्णीतमस्माभिः। यदेव पुरुषस्य स्थानं तदेव व्यानस्य प्राणापानयोर्नियन्तुः। यदा होतृपदेन आह्वाता अध्वर्युरुच्यते तदा भूतयज्ञाद्ध्यात्मयज्ञस्य वैलक्षण्यप्रतीतिः प्रयोजनमध्वर्युद्वयप्रदर्शनस्य। इत्थं प्रजापतिना इन्द्रादिशब्दवाच्येन प्रद्युम्नाद्यवस्थाचतुष्टयविवर्तेन चतुर्होत्रा च दशविधमात्मानं कृत्वा परमात्मनि समर्पणं कृतम्। तदाह— 'इन्द्रं गच्छ स्वाहा'। हे प्राण, इन्द्रं परमात्मानं गच्छ, सुहुतमस्तु स्वाहूतं वा। आह्वानस्य च शोभनत्वमनुष्ठानपर्यवसानम्। एवमस्मदादयोऽपि ब्रह्मविवर्ता ब्रह्मपरिणामा वा संसारनिवृत्तिकामा अनुतिष्ठन्ति, कर्मकाण्डस्यापि च अद्वैतप्राप्तौ पर्यवसानमित्युक्तमस्माभिः सांख्यसारशारीरकयोः। एवं तावदेकश्चतुर्होता व्याख्यातः।

अथ द्वितीयः। 'पृथिवी होता द्यौरध्वर्युस्त्वष्टाऽग्निर्मित्र उपवक्ता वाचस्पते वाचो वीर्येण संभृततमेना¶ऽऽयक्ष्यसे यज्ञपतये वार्यमा स्वस्करो वाचस्पतिः सोमं पिबतु जजनदिन्द्रमिन्द्रियाय स्वाहा॥' (कासं. ९।८)— अनेन प्रजापतिरूपयज्ञस्याऽऽधिदैविकानि यज्ञसाधनान्युच्यन्ते। पृथिवी होता। सा हि आधिभौतिकयज्ञप्रजापतेरन्नादिहविर्दानेनाऽऽप्यायनं करोति। द्यौरध्वर्युः, वृष्ट्यादिप्रेषणात्। त्वष्टा आदित्यः अग्नित्, पक्तृत्वात्। मित्रो ह(?) उपवक्ता ब्रह्मा, त्रय्यर्थबोधेनैव निर्मलेनालंकृतत्वात्। हे वाचस्पते प्रजापते चतुर्होतृरूप, वाचः मन्त्रब्राह्मणात्मिकायाः वीर्येण अर्थतत्त्वावबोधबलेन अतिशयसंभृतेन मया त्वमायक्ष्यसे पूजयिष्यसे। स त्वमिष्टः सन् यज्ञपतये यजमानार्थे स्वः स्वर्गम् आ करः आभिमुख्येन कुरु। कीदृशं स्वर्गम्? वार्यं वरणार्हम्। वाचस्पतिः प्रजापतिः सोमं पिबतु। सोमशब्देन हविर्मात्रमत्र लक्ष्यते, पिबतिना च उपयोगः। जजनदिन्द्रम् अनेन चातुर्होतृकेण कर्मणा प्रजापतिर्जनितवान् इन्द्रम् इन्द्रविवर्तम्। तथाच श्रुतिः— 'ते चतुर्होत्रा सोमगृहपतयो न्यषी(? सी)दञ्जिन्द्रं जनयाम (इति)' (कासं. ९।११) इति। ते पृथिव्यादयः सोमं गृहपतिं कृत्वा चतुर्होत्रा मन्त्रेण निषण्णा वेद्यामिन्द्रं जनयामेति। इन्द्रियायेति व्रतवीर्यसंपत्त्यर्थमित्यर्थः। स्वाहेति व्याख्यातम्।

अथ तृतीयः (किमर्थम्?) चतुर्होता। 'सोमः सोमस्य पुरोगाः शुक्रः शुक्रस्य पुरोगाः श्रातास्त इन्द्र सोमा वातापे हवनश्रुतः स्वाहा॥' (कासं. ९।८)— सोमो लतारूपः सोमस्य चन्द्रस्य पुरोगाः अग्रेसरः। शुक्रः प्रदर्श्यः(? प्रवर्ग्यः) सोमो वा शुक्रः शुक्रस्य ग्रहस्याऽसुरगुरोर्वा पुरोगाः। सोमाः श्राताः पक्वा आश्रिता वा। सोमशब्दो हविर्मात्रे उपचारात्। उपचारनिमित्तं तु व्रतसंपत्तौ क्रमेण सोमयागयोग्यतापत्तिः। हे वातापे वाताहार, हवनश्रुतः आह्वानस्य श्रोतुः तव सुहुतं स्वाहूतं वा अस्तु। बहुकर्मविनियोगभाजोऽमी चतुर्होतारो यथायोग्यं बह्वर्थयुजो योज्याः।

'अग्निर्होताऽश्विनाऽध्वर्यू रुद्रोऽग्निद्बृहस्पतिरुपवक्ता वाचस्पते हृद्विधे नामन्वाचस्पतिः सोमममपादाऽस्मासु नृम्णं धाः स्वाहा॥' (कासं. ९।८)— अयं पञ्चहोता। 'ते पञ्चहोत्रा वरुणगृहपतयो न्यषीदञ्जिन्द्रं जनयाम (? न्यसीदन् स्वरयामेति)' (कासं. ९।११) इति ह्यस्य ब्राह्मणम्। अत्र चाधिदैविकेनाधियज्ञियानामेकत्वमुच्यते मन्त्रे। अग्निर्होता। तथाच श्रुतिः— 'अग्निर्वै देवानां होता' इति। मन्त्रलिङ्गमपि— 'अग्निमीळे पुरोहितम्' इति। अश्विनौ देवभिषजौ अध्वर्यू अध्वर्युप्रतिप्रस्थातारौ। रुद्रोऽग्नित् आग्नीध्रः रुद्रः। बृहस्पतिरुपवक्ता। हे वाचस्पते हृद्विधे नामन्। हृदि विधिः हृद्विधिः अन्तर्यामी, तस्य संबोधनं हे हृद्विधे, नामन् नाम्ना अन्तर्यामिन्, त्वं वाचस्पतिः सोमममपात् सोमपः, अतः पिब सोमम्, इह अस्मासु अस्मभ्यं नृम्णं बलं च (आ)धाः देहि।

'वाग्घोता वातोऽध्वर्युर्दीक्षा पत्न्यापोऽभिगरो मनो हविस्तपसि जुहोमि वाचस्पतेऽच्छिद्रया वाचाऽच्छिद्रया

¶ 'क्ष्य' इति यकारविशिष्टोऽयं पाठस्तैत्तिरीयारण्यकेऽस्ति, काठकसंहितायां तु 'क्ष' इति यकारहीनः पाठः।

जिह्वा दिवि देवावृधद्धोत्रा मैरयस्व स्वाहा ॥ ' – अयं षड्ढोता । अध्यात्मनि या वाक् सैव होता । वातः अध्वर्युः, प्राणोऽन्तरिक्षगतिर्वा । दीक्षा व्रतसिद्धिरूपा पत्नी । आपोऽभिगरः । शंसनमभिगरः, तत्राऽऽप एव कर्म्योऽन्नादिसंपादनद्वारेण । मनो हविः, आत्माग्नौ हूयमानत्वात् । तपसि ब्रह्मणि जुहोमि मनःप्रभृतिकं ब्रह्मणि प्रक्षिपामि । हे वाचस्पते, अच्छिद्रया अविनाशिन्या वाचा अन्तःप्रकाशरूपया अच्छिद्रया जिह्वया हे दिवि देव मे मम ईरयस्व प्रेरयस्व संपादय कर्म । कीदृश्या वाचा ? अवृधद्धोत्रा अदृष्टहोमादिसंपादनभूतयेत्यर्थः ।

' महाहविर्होता सत्यहविरध्वर्युरचित्तपाजा अग्निदचित्तमना उपवक्ताऽनाधृष्यश्चाप्रतिधृष्यश्चाभिगरा अयास्य उद्गाता वाचस्पते विधे नामन्विधेम ते नाम विधेस्त्वमस्माकं नाम मा देवानां तन्तुश्छेदि मा मनुष्याणां स्वाहा ॥ '( काठ. ९।९ )– अयं सप्तहोता मन्त्रः । ' ते सप्तहोत्राऽर्यमगृहपतयो न्यषीदन् संतरामि( ? न्यषीदन् संतनवामेति )' ( काठ. ९।१२ ) इति ह्यस्य ब्राह्मणम् । संतरणं ब्रह्मसंप्राप्तिः । महाहविः चन्द्रः, सर्वैरुपजीव्यमानत्वात् । अत एवास्य कलाक्षयः कृष्णपक्षे । स होता, देवानां हविर्दानेनाऽऽप्यायकत्वात् । सत्यहविः आदित्यः, सततप्रेरणात् । सोऽध्वर्युः । अचित्तपाजाः अग्नित् चित्तप्रज्ञाशून्यः अग्नीत् । वायुरग्नीध्र इत्यर्थः । एवमचित्तमनाः ज्ञानमनोविहीनः वन्यफलशाकादिः उपवक्ता । कीदृशः ? अनाधृष्यश्चाप्रतिधृष्यश्च अनभिभवनीयः । अतिशयाय भूयोवचनम् । अभिगराः । गृणातिः स्तुत्यर्थः । अयास्यः उद्गाता । ' यसु प्रयत्ने ' । अप्रयत्नसिद्धो वेदोपनिषद्रूप उद्गाता । स उद्गायति तत्त्वम् । हे वाचस्पते विधे नामन्, विधेम ते तव नाम त्वन्नामार्थे यज्ञं कुर्म इत्यर्थः । यतश्च त्वमेवास्माकं नाम स्वरूपम्, तेनास्माकं देवानां मनुष्याणां च मा तन्तुश्छेदि संततिं मा च्छैत्सीः । सुहुतमस्तु तव । देव.

( २ ) ततः ' चित्तिः स्रुक्, पृथिवी होता, अग्निर्होता, वाग्घोता, महाहविर्होता, छन्दोभ्यः स्वाहा, चातुर्होतृकाय स्वाहा ' इति सप्त प्रधानाहुतयः । ब्राह्म.

( ३ ) अथ चतुर्गृहीतैरावापस्थानत्वादेव चतुर्गृहीतसिद्धः क्वचित्स्नवा अपि भवन्ति व्रतहोमाः । युक्तं च तदुभयाम्नायसंस्कारत्वादस्य चातुर्होतृकव्रतस्य । तत्रामी गुणफलाधिकाराः– आज्येन तेजस्कामः, यावकेन यवमयेन पशुकामः, सिद्धवदन्नाद्यनिर्देशः, अन्नाद्येन तण्डुलेन वीर्यकामः, पयसि स्थालीपाकं श्रपयित्वा ब्रह्मवर्चसकामो जुहुयात् । पयोऽत्र श्रपणार्थीयम् । तस्मिन् शृतेन स्थालीपाकेन ब्रह्मवर्चसं वृत्तस्वाध्यायसंपत्तिं यः कामयते स जुहुयात् चतुर्गृहीतैश्चतुर्होतृभिः । पञ्चहोत्रनन्तरमत्र षड्ढोत्रा होमः । आवि.

**मनसैकैकं हुतमनुमन्त्रयते ॥**

( १ ) एकैकं चतुर्होतारं हुतं मन्त्रं मनसाऽनुमन्त्रयते मन्त्रागममनुसंदधीत मन्त्रद्वारेणेत्यर्थः । ‡देव.

( २ ) ' मनसै... मन्त्रयते ' इति याज्ञमानमुक्तम् । तथैतैरेव चतुर्होतृभिर्यथा हुतम् । ते च ब्रह्मचारिणा संस्कार्येण न तावदधीताः । तस्मादाचार्येण क्रियमाणेऽनुमन्त्रणे ब्रह्मचारिणा मनोनिवेशमात्रं कर्तव्यम् । तदर्थत्वात्संस्कारकरण इति भावः । ततः ' छन्दोभ्यः स्वाहा, चातुर्होतृकाय स्वाहा ' इत्याहुतीर्हुत्वा । आवि.

**यद्वेदव्रतं तदत्र व्रतम् ॥**

( १ ) ' यद्वेदविहितं व्रतं तत् परिपूर्णमस्त्वत्र मम व्रतम् ' इति वाचयेत् । देव.

( २ ) ततः प्रत्यङ्ङासीनम् ' ब्रह्मचार्यसि ' इति पञ्चभिरनुशास्य । ' ब्रह्मचार्यसि, अपोऽशान, कर्म कुरु, दिवा मा सुषुप्सीः, वाचं यच्छ ' । ब्राह्म.

( ३ ) यद्वेदव्रतं त्रैविद्यकव्रतादेशनं तदत्रापि कर्तव्यम् । ' मार्गवासा भव, संहतकेशो भव, भैक्षेणाऽऽचार्याधीनवृत्तिः ' इत्यग्नीन्धनान्तं व्रतादेशनं विधाय । आवि.

---

‡ ब्राह्म. देवगतम् ।

**विकाराननुक्रमिष्यामो न चतुर्भिः सहाऽऽसीत न चतुर्णां समक्षं भुञ्जीत न चतुर्भिः सह भुञ्जीतैकतमो वा ॥**

'न चतुर्भिः सह भोक्तव्यम्, नैकतमेनाप्यासितुं युक्तम्, न वा भोक्तव्यम्' इत्येवमनुशास्य चतुर्होतॄननूच्य ऋतुतिथ्याद्याभावितान्तं संस्थाप्य ततो यावद्व्रतं चतुर्होतृमन्त्रब्राह्मणसमाम्नायमुभयत्राधीतमध्यापयेत् । आवि.

**एवमपवर्गे ॥**

( १ ) अपवर्गः समाप्तिः व्रतस्य, तत्र । देव.

( २ ) तत्र तु प्रधानादनन्तरं समिदाधानं व्रतविमोकश्च । नात्र व्रतादेशो न चतुर्होतृमन्त्रवचनम् । 'अग्ने व्रतपते व्रतमचारिषं तदशकं तत्ते प्रब्रूमस्तन्नो गोपाय, वायो व्रतपते, सूर्य व्रतपते । ब्राह्मणा व्रतपतयो व्रतमचारिषं तदशकं तत्ते प्रब्रूमस्तन्नो गोपाय' एवमन्त्रोहः । ब्राह्म.

( ३ ) अध्ययनग्रहणान्ते एतद्धोमकर्म पूर्वोक्तमपि कुर्यात् । किंतु तत्रायं विशेषः— न व्रतालम्भः । वासोमेखलाजिनदण्डमन्त्रान्वाचयित्वा दर्भस्तम्भं पूर्वतो निधाय गोमये लोष्टे षट्पञ्चाशद्दर्भाङ्कुरैर्ब्रह्मप्रकृतिं कुर्यात् । ब्राह्मणं दक्षिणत उपवेश्य चतुर्गृहीतैश्चतुर्होतृहोमं कृत्वाऽनुमन्त्रणम् । 'छन्दोभ्यश्चातुर्होतृकाय' इति च हुत्वा न व्रतादेशनम्, न प्रवचनम् । अपवर्गे स्थितः पूर्ववत् 'हिरण्यवर्णाः' इति चतसृभिः समिधो दापयित्वा 'अग्ने व्रतपते व्रतमचारिषम्' इत्यादिना 'ब्राह्मणा व्रतपतयः' इति चतुर्थेन व्रतं विमुच्य । आवि.

**वास आचार्याय ददाति वरं दक्षिणत आसीनाय ॥**

( १ ) वस्त्रं दक्षिणामाचार्याय दक्षिणत उपविष्टाय दद्यात् । देव.

( २ ) स्विष्टकृति हुते वास आचार्याय ददाति, वरं दक्षिणतोऽग्नेरासीनाय । ब्राह्म.

( ३ ) तत ऋतुतिथ्यादि । स्विष्टकृदन्ते वास आचार्याय, वरं दक्षिणत आसीनाय दद्यात् । आभावितान्तं ततः संस्थापयेत् । आवि.

## वाराहगृह्यसूत्रम्

होमः, व्रतप्रदानम्, अनुवाकानुवाचनम्

**'अथ चातुर्होत्रिकी दीक्षा संवत्सरम् । आघारावाघार्याऽऽज्यभागौ हुत्वा चतुर्होतॄन् स्वकर्मणे जुहुयात् सह पञ्चहोत्रा षड्ढोत्रा सप्तहोतारमन्ततो हुत्वा व्रतं प्रदायाऽऽदितो द्वावनुवाकावनुवाचयेत् ॥**

---

(१) वागृ. ८.

# उपनिषद् ( वैश्वदेव ) व्रतप्रयोगः

## आश्वलायनश्रौतसूत्रम्

उपनिषद्व्रते महानाम्नीव्रतधर्मातिदेशः सविशेषः

¶[1]समाप्य समानं संभारवर्जम् ॥

एष द्वयोः स्वाध्यायधर्मः ॥

आचार्यवदेकः ॥

## बौधायनगृह्यसूत्रम्

व्रतोपाकरणहोमः, समिदाधानम्, जयाद्युत्तरतन्त्रम्, व्रतकालेऽध्ययनं व्रतकालातीताध्ययनकाले व्रतं च, अव्रत्यप्रायश्चित्तम्, व्रतविसर्गहोमः, समिदाधानम्, जयाद्युत्तरतन्त्रम्

[2]अथोपनिषत्सु ॥

अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात्कृत्वा यथोपदेशं प्रधानाहुतीर्जुहोति– 'याज्ञिकीभ्यो देवताभ्य उपनिषद्भ्यः स्वाहा' इति चतस्रः ॥

अथ काण्डऋषिं जुहोति- 'विश्वेभ्यो देवेभ्यः काण्डऋषिभ्यः स्वाहा' इति ॥

अथ सदसस्पतिं जुहोति– 'सदसस्पतिम्' इति ॥

अथ सावित्रीं जुहोति 'तत्सवितुर्वरेण्यम्' इत्येताम् ॥

अथ वेदाहुतीर्जुहोति– 'ऋग्वेदाय स्वाहा, यजुर्वेदाय स्वाहा, सामवेदाय स्वाहा, अथर्ववेदाय स्वाहा, अथर्वाङ्गिरोभ्यः स्वाहा, इतिहासपुराणेभ्यः स्वाहा, सर्पदेवजनेभ्यः स्वाहा, सर्वभूतेभ्यः स्वाहा' इति ॥

अथ पालाशीश्चतस्रः समिध आर्द्राः सपलाशाः सप्ररोहाः प्रादेशमात्रा अपरिशुष्काग्रा घृताभ्यक्ता अभ्याधापयन् वाचयति ॥

याज्ञिकानां वा वृक्षाणामन्यतमस्य ॥

'अग्ने व्रतपत उपनिषदं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा, वायो व्रतपत उपनिषदं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा, आदित्य व्रतपत उपनिषदं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा, व्रतानां व्रतपत उपनिषदं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा' इति ॥

जयप्रभृति सिद्धमा धेनुवरप्रदानात् ॥

संवत्सरमेतद्व्रतं चरेत् संवत्सरं हि व्रतं नातीत्यैतस्मिंस्त्वेवैतत् संवत्सरेऽधीयीत ॥

यद्यु वैतस्मिन् संवत्सरे नाधीयीत यावदध्ययनमेतद्व्रतं चरेत् ॥

अथ संवत्सरे पर्यवेतेऽध्यापयते श्रावयते वा ॥

अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात्कृत्वाऽथाव्रत्यप्रायश्चित्तं जुहोति– 'यन्म आत्मनः, पुनरग्निश्चक्षुरदात्' इति द्वाभ्याम् ॥

अथ यथोपदेशं प्रधानाहुतीर्जुहोति– 'याज्ञिकीभ्यो देवताभ्य उपनिषद्भ्यः स्वाहा' इति चतस्रः ॥

अथ काण्डऋषिं जुहोति–'विश्वेभ्यो देवेभ्यः काण्डऋषिभ्यः स्वाहा' इति ॥

अथ सदसस्पतिं जुहोति– 'सदसस्पतिम्' इति ॥

---

¶ एतेषां सूत्राणां व्याख्यानं महाव्रतप्रयोगप्रकरणे ( सं. का. पृ. ३४०९ ) द्रष्टव्यम् ।

(१) आश्रौ. २।२।१४ ; प्रपा. २७१.

(२) बौगृ. ३।२।२९–५१.

अथ सावित्रीं जुहोति– ‘ तत्सवितुर्वरेण्यम् ’ इत्येताम् ॥

अथ वेदाहुतीर्जुहोति– ‘ ऋग्वेदाय स्वाहा, यजुर्वेदाय स्वाहा, सामवेदाय स्वाहा, अथर्ववेदाय स्वाहा, अथर्वाङ्गिरोभ्यः स्वाहा, इतिहासपुराणेभ्यः स्वाहा, सर्पदेवजनेभ्यः स्वाहा, सर्वभूतेभ्यः स्वाहा ’ इति ॥

अथ पालाशीश्चतस्रः समिध आर्द्राः सपलाशाः सप्ररोहाः प्रादेशमात्रा अपरिशुष्काग्रा घृताभ्यक्ता अभ्याधापयन् वाचयति ॥

याज्ञिकानां वा वृक्षाणामन्यतमस्य ॥

‘ अग्ने व्रतपत उपनिषदं व्रतमचारिषं तदशकं तन्मेऽराधि स्वाहा, वायो व्रतपत उपनिषदं व्रतमचारिषं तदशकं तन्मेऽराधि स्वाहा, आदित्य व्रतपत उपनिषदं व्रतमचारिषं तदशकं तन्मेऽराधि स्वाहा, व्रतानां व्रतपत उपनिषदं व्रतमचारिषं तदशकं तन्मेऽराधि स्वाहा ’ इति ॥

अथप्रभृति सिद्धमा धेनुवरप्रदानात् ॥

## कौषीतकिगृह्यसूत्रम्

उपनिषद्व्रते महाव्रतप्रयोगातिदेशः सविशेषः

[1]अथोपनिषदाम् ॥

यैवं महाव्रतस्य ॥

संहितानां तु पूर्वम् ‘ ऋतं वदिष्यामि सत्यं वदिष्यामि ’ इति विशेषः ॥

अथ मन्थस्य ‘ तत्सवितुर्वृणीमहे, तत्सवितुर्वरेण्यम् ’ इति पूर्वे च ॥

‘ अदब्धं मनः ’ इत्याधिकारिकाः शान्तयस्ततः ॥

इत्याह्निकम् ॥

औपनिषदिकस्य कर्म वक्ष्यामः । व्रातिके समाप्ते गृहं गत्वा सर्वं शाक्वरवत्कर्तव्यम् । अयं तु विशेषः– ‘ मम व्रते हृदयं ते दधामि ’ इत्यस्य मन्त्रस्यान्ते ‘ बृहस्पतिष्ट्वा नियुनक्तु मह्यं सांवत्सरिकस्यौपनिषदस्य ब्रह्मचर्यस्य देवदत्त ’ इति । ततः शेषं शाक्वरवत्समापयति । ततः संवत्सरे पूर्णे उदीक्षणिकां कृत्वा शाक्वरवत्सर्वं करोति । अयं तु विशेषः– यस्मिन्नवसरे माणवको महानाम्नीः पाठितः तस्मिन्नवसरे ‘ चित्रो ह वै गार्ग्यायनिः ’ इत्यारभ्याऽऽरण्यकं तावच्छ्रावयेद्यावत्समाप्तम् । ततः शाक्वरवत्कृत्वा गृहं प्रविश्य समावर्तनं कुर्यादिति । कौगृसं.

## भारद्वाजगृह्यसूत्रम्

होतृव्रतवदनुष्ठेये उपनिषद्व्रते होममन्त्रेषु अध्येयवेदभागे च विशेषः

* [1] ‘ सांहितीभ्यो देवताभ्य उपनिषद्भ्यः स्वाहा, वारुणीभ्यो देवताभ्य उपनिषद्भ्यः स्वाहा, सर्वाभ्यो देवताभ्य उपनिषद्भ्यः स्वाहा’ इत्युपनिषत्सु । ... उपनिषत्सु ‘ उपनिषद्भ्यो व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा ’ इति ॥

उपनिषत्सु ‘ उपनिषद्भ्यो व्रतमचारिषं तदशकं तन्मेऽराधि स्वाहा ’ इति । ... अथैनं व्रतान्तेऽध्यापयते श्रावयते वा ... उपनिषद इति ॥

## वैखानसगृह्यसूत्रम्

उपनिषद्व्रते होममन्त्रा अध्येयसूक्तानि च

[2] ‘ विश्वेभ्यो देवेभ्यः काण्डर्षये, सदसस्पतिम्, आ नो विश्वे, शं नो देवाः, ये सवितुः, अग्ने याहि, द्यौः पितः, विश्वे देवाः शृणुत’ इति सूक्तं वैश्वदेवव्रतस्य । ... ‘विष्णोर्नु कम्, सहस्रशीर्षा, त्वमग्ने रुद्र, आ त्वाऽहार्षम्’ इति वैश्वदेवे ॥

(१) कौगृ. ६।४।५–१०.

* अस्य अन्यः क्रियाकलापः होतृव्रतवत् ज्ञेयः ।

(१) भागृ. ३।४–५.

(२) वैगृ. २।१०.

## आश्वलायनः

उपनिषद्व्रते महानाम्नीव्रतप्रयोगातिदेशः,
अध्ययने मुखदिङ्नियमः

[1]भूम्युपस्पर्शनान्ता तु क्रिया पूर्ववदीरिता ।
महाव्रते चोपनिषद्यनुप्रवचनीयकम् ॥

प्राङ्मुखं( ? खः ) श्रावयेच्छिष्यं शृणुया-
त्प्राङ्मुखः स्वयम् ।
महाव्रतं तदूर्ध्वं च सकृदेव समाहितः ॥

## शौनककारिकाः

उपनिषद्व्रते महाव्रतप्रयोगातिदेशः सविशेषः

[2]व्रतादेशनपूर्वं यत्कृतं कर्म महाव्रते ।
सकलं तदनुष्ठेयं तथैवोपनिषद्व्रते ॥

(१) आश्वस्मृ. ११।२५३-२५४.

(२) शौका. ८ पृ. ५१ ; प्रपा. २७७.

[1]अत्रोपनिषदं भोस्त्वमनुब्रूहीति याचितः ।
आचार्योऽथात इत्याद्यां तृतीयारण्यकश्रुतिम् ॥

त्रिरनूच्योपनिषदं पूर्ववच्चार्कमीक्षयेत् ।
अत्रोपनिषदे स्वाहेत्यनुप्रवचनीयके ॥

द्वितीयो होममन्त्रः स्यादन्यत्सर्वं यथा पुरा ॥

## कुमारिलकारिकाः

उपनिषद्व्रते महानाम्नीव्रतप्रयोगातिदेशः सविशेषः

[2]महाव्रतमिदं प्रोक्तं वक्ष्येऽथोपनिषद्व्रतम् ।
पूर्ववद्व्रत आदिष्टे चरेदब्दमिदं व्रतम् ॥

[3]श्रावयित्वोपनिषदमादित्यावेक्षणादि च ।
अत्रोपनिषदे स्वाहा सावित्र्याः स्थान इष्यते ॥

(१) शौका. १-३ पृ. ५१-५२ ; प्रपा. २७७.

(२) कुका. १।१५।१ ; प्रपा. २७१ उत्त.

(३) कुका. १।१५।२ ; प्रपा. २७१ दि च (दिकम्).

# कारीरीव्रतप्रयोगः

## बौधायनगृह्यसूत्रम्

कारीरीव्रतानुष्ठानकाले व्रतनियमाश्च

[1]अथ कारीरीव्रतं चतूरात्रमक्षारलवणं भूमौ भुञ्जीत पशुवत् ॥

(१) बौगृ. ३।१।२६.

## आग्निवेश्यगृह्यसूत्रम्

कारीरीव्रतानुष्ठानकाले व्रतनियमाश्च

[1]अथ कारीरीव्रतं चतूरात्रमक्षारलवणमशमीधान्यं भूमौ भुञ्जीत पशुवदिति ॥

(१) आग्निगृ. ११२।१.

# काराव्रतप्रयोगः

## बौधायनगृह्यसूत्रम्

काराव्रते अध्यायोपाकरणप्रयोगातिदेशः,

अध्येयानुवाकाः, भूमिभोजननिषेधः

[1]एवमेव काराव्रतम् ॥

सावित्रीभ्यः प्रभृत्यूर्ध्वमोषध्यनुवाकानधी-यीरन्नात्र भूमौ भुञ्जीत न पशुवदिति ॥

(१) बौगृ. ३।१।२७–२८.

## आग्निवेश्यगृह्यसूत्रम्

अध्येयानुवाकाः, भूमिभोजननिषेधः

* [1]'अथ कारीरिणाम्(?)। 'मारुतम्, देवा वसव्या अग्ने, मारुतमिति, देवाः शर्मण्याः' इत्याद्यौषध्यनुवाकमधीयानो नात्र भुञ्जीत पशुवदिति। अथ कारीराव्रतम् (उप)युञ्जानः प्रथममा(र)भ्या औषध्यनुवाकं प्रथममधीयानो नात्र भूमौ भुञ्जीत पशुवदिति यदि वा क्रममधीयानः(?) ॥

* बौधायनोक्तक्रमेणैवाध्यायोपाकरणकाण्डानुक्रमणकारीरीव्रतान्युक्त्वा बौधायनोक्तकाराव्रतस्थाने इदं व्रतमुक्तमोषध्यनुवाकाध्ययनभूमिभोजनाभावो च समानाविति काराव्रतमेवेदमित्यभ्युपगतम्। ग्रन्थोऽयमशुद्धः स्यादिति भाति।

(१) आग्निगृ. १।२।१.

## मानवगृह्यसूत्रम्

आश्वमेधिकीदीक्षायां होमः, उपस्थानम्, व्रतप्रदानम्, अनुवाकानुवाचनम्, व्रतनियमाः, मन्त्रस्नानम्, उद्दीक्षाहोमः, अनुवाकानुवाचनम्

**'अथ दीक्षाऽऽश्वमेधिकी द्वादशरात्रम् ॥**

**वैतसमिध्ममुपसमाधाय नवमेनानुवाकेन हुत्वा षष्ठेनोपस्थाप्य व्रतं प्रदायाऽऽदित एकविंशत्यनुवाकाननुवाचयेत् ॥**

अथ दीक्षाऽऽश्वमेधिकी— अश्वमेधावस्थापनं तदध्ययनं प्रयोजनं यस्याः साऽश्वमेधिकी । वैतसमिध्ममुपसमाधाय नवमेनानुवाकेन 'आयुषे स्वाहा' इति हुत्वा षष्ठेनोपस्थाप्य 'आ ब्रह्मन्' इत्यनेन व्रतं संप्रदाय । केचित्प्रधानस्थान इच्छन्ति समिच्छेषे व्रतं प्रदाय 'अग्ने व्रतपते' इतिवत् । अष्टाभा.

**त्रिषवणमश्वस्य घासमाहरेत् त्रींस्त्रीन्पूलान् ॥**

**एकेन वाससाऽनन्तर्हितायां भूमौ शयीत भस्मनि करीषे सिकतासु वा ॥**

**'या ओषधयः समन्या यन्ति, पुनन्तु मा पितरः, अग्नेर्मन्वे' इति चतुर्भिरनुवाकैरपोऽभिमन्त्र्य स्नानमाचरेत् ॥**

त्रिषवणमश्वस्यानुघासाहरणं त्रिभिस्त्रिभिर्भारैः । एवं च तावत्कृत्वो दिवसस्य घासाहरणं स्यात् । न हि त्रयो भारा देवैरपि सकृदानेतुं शक्यन्ते, यावद्देवाऽऽनीयते तावति भार इति । चतुर्भिरनुवाकैः स्नानं मन्त्रान्तेन सकृत्, 'यदि स्नायाद्दण्ड इव' (१।१।१४) इत्युक्तत्वात् । अश्वस्यैव स्नानं प्रकृतव्रतेनाश्वं स्नापयेदित्यर्थः (१) । अष्टाभा.

**एवमेवोद्दीक्षां जुहुयात् ॥**

केचिदुपस्थानं नेच्छन्ति, तदसत्, 'एवमेव' इत्यतिदेशस्याङ्गप्रधान( विषय )त्वात् । हुत्वा षष्ठेनोपतिष्ठते । अष्टाभा.

**'शादं दद्भिः' इति चतुर्दशानुवाकाननुवाचयेत् ॥**

'शादं दद्भिः' इति नव 'मा नो मित्रः' इति पञ्च एवं चतुर्दश, अनुवाकोपस्थानस्य होमसंबन्धत्वात् । केचित्समिच्छेषे 'अग्ने व्रतपते व्रतमचारिषम्' इति व्रतविमोकमिच्छन्ति । 'शादं दद्भिः' इति नव 'मा नो मित्रः' इति पञ्च चतुर्दशानुवाकान्वाचयेत् । अष्टाभा.

## वाराहगृह्यसूत्रम्

आग्नेयव्रतप्रयोगातिदेशः सविशेषः

**'एतेनैवाश्वमेधो व्याख्यातः । नवमेनानुवाकेन हुत्वा दशमेनोपतिष्ठेत । अश्वाय घासमुदकस्थानमुदकं चाभ्युपेयात् ॥**

(१) मागृ. १।२३।१४–२०.

(१) वागृ. ८.

## बौधायनगृह्यसूत्रम्

गोदाने चौलकल्पातिदेशः सविशेषः, गुरवे गोवरदानम्, आग्निगोदाने काण्डोपाकरणविसर्गकल्पातिदेशः

[१]**तस्य चौलवत्तूर्ष्णीं प्रतिपत्तिरवसानं च ॥**

**एतावदेव नाना ॥**

**प्रतिपत्तौ सर्वान् केशान्वापयति ॥**

**गामत्र गुरवे वरं ददाति ॥**

**अग्निगोदानो वा भवति ॥**

**तस्य काण्डोपाकरणकाण्डसमापनाभ्यां प्रतिपत्तिरवसानं च ॥**

## आश्वलायनगृह्यसूत्रम्

गोदाने चौलकल्पातिदेशः सविशेषः, स्नानम्, वाग्यमनम्, अहःशेषमाचार्यसहवासः, वाग्विसर्जनम्, दक्षिणादानम्, सांवत्सरिकव्रतादेशनम्

[२]**एतेन गोदानम् ॥**

( १ ) एतेनेति चौलकर्मोपदिश्यते । एतेन चौलकर्मणा गोदानं व्याख्यातम् । देभा.

( २ ) व्याख्यातमिति शेषः । एतेनेति कृत्स्नोपदेशः । $गानावृ.

( ३ ) गोदानं नाम वेदव्रतम्, तदेतेन चौलकर्मणा व्याख्यातम् । विशेषो वक्ष्यते । अना.

**केशशब्दे तु श्मश्रुशब्दान् कारयेत् ॥**

( १ ) तत्र ये तु केशशब्दाः तेषु श्मश्रुशब्दाः कर्तव्याः । तत्र केशशब्दः 'अदितिः केशान् वपतु' इति, 'वप्ता वपसि केशान्' इति च । अथ कस्मादयं विलक्षणो निर्देशः एकत्रैकवचनेनान्यत्र बहुवचनेन ? केशशब्दे इत्येकवचनं श्मश्रुशब्दानिति बहुवचनं ब्रवीति । अविवक्षितमेवेदं बहुवचनम्, जातिपरत्वान्निर्देशस्य । उभयत्रापि भवति जातिपरो निर्देशः । नेत्युच्यते । लोकप्रसिद्ध एवायं शब्दः– 'श्मश्रूणि वापयति, केशान्निकृन्तति' इति । द्वौ चेह केशशब्दौ । विलक्षणनिर्देशं कुर्वन्नेतत् ज्ञापयति– विधिगतस्यापि केशशब्दस्य स्थाने श्मश्रुशब्दः प्रतीयेतेति । कः पुनरसौ विधिगतः केशशब्दः ? 'दक्षिणे केशपक्षे' इति । तेनेहापि 'दक्षिणे श्मश्रुपक्षे' इत्येतत्साधितं भवति ।

देभा.

( २ ) केशशब्दे त्विति जातावेकवचनम् । श्मश्रुशब्दानिति व्यक्तिपरो निर्देशः । तेन त्रयः श्मश्रुशब्दाः । तत्र 'अदितिः केशान्वपतु' 'वप्ता वपसि केशान्' 'दक्षिणे केशपक्षे' इति त्रिषु ते कार्याः । मन्त्रगतस्य तृतीयस्य केशशब्दस्याभावाद्विधिगतस्य ग्रहणम् । तेन 'दक्षिणे श्मश्रुपक्षे' इति साधितं भवति । * गानावृ.

[१]**श्मश्रूणीहोन्दति ॥**

( १ ) इह तु श्मश्रूणामुन्दनं भवति । उन्दनं तु क्लेदनम् । तत् केशानां दृष्टम् । तदिह श्मश्रूणां विधीयते । तेन नात्र समुच्चयः । इहशब्देन श्मश्रूणामेवोन्दनं भवति, न केशानाम् । देभा.

( २ ) शिरउन्दनस्यापवादः । § गानावृ.

[२]**'शुन्धि शिरो मुखं माऽस्याऽऽयुः प्रमोषीः' इति ॥**

( १ ) क्षुरनिमार्जनेऽयं विकारो भवति । देभा.

---

$ प्रपा., संप्र. गानावृवत् ।

(१) **बौगृ.** ३।२।५३–५८.

(२) **आगृ.** १।१८।१, ३ ; **प्रपा.** २८३ ; **धप्र.** ४४ ; **संप्र.** ५५९.

* अना., प्रपा., संप्र. गानावृवत् ।

§ अना., प्रपा. गानावृवत् ।

(१) **आगृ.** १।१८।४ ; **प्रपा.** २८३ ; **संप्र.** ५५९.

(२) **आगृ.** १।१८।५ ; **प्रपा.** २८३ ; **संप्र.** ५५९–५६० माऽस्याऽऽयुः ( मा म आयुः ).

( २ ) क्षुरनिमार्जनेऽयं विशेषः । ¶ गानावृ.

[१] 'केशश्मश्रुलोमनखान्युदक्संस्थानि कुरु' इति संप्रेष्यति ॥

( १ ) अस्य संप्रेषस्य क्व निवेशो भवति ? किमादौ मध्ये अन्ते इति ? आदौ तावत्प्राप्नोति, यद्यत्पश्चादुपदिश्यते तत्तदादावेव निवेश्यत इति । यथाऽऽग्नीध्रस्य तृतीयत्वे प्राप्ते प्रतिप्रस्थाता तृतीयो भवति, एवमिहापि भवितव्यम् । तदेतन्नोपपद्यते । संख्याचोदितानामेतदेवं भवति । नियतस्थानानां वा । तेनोभयोरभावात् अन्त एव निवेशो भवति । 'केशश्मश्रुलोमनखान्युदक्संस्थानि कुरु' इत्यन्त उपदेशकः शब्दः । देभा.

( २ ) 'शीतोष्णाभिरद्भिरवर्थं कुर्वाणोऽक्षण्वन्कुशली केशश्मश्रुलोमनखान्युदक्संस्थानि कुरु' इति नापितशासनम् । ¶ गानावृ.

**आप्लुत्य वाग्यतः स्थित्वाऽहःशेषमाचार्यसकाशे वाचं विसृजेत 'वरं ददामि' इति ॥**

( १ ) आप्लुत्येति स्नात्वेत्यर्थः । वाग्यत इत्यमन्त्रयन् अहःशेषं तिष्ठतीति स्थानं चोद्यते । आचार्यसकाशे वाचं विसृजेत । किमिति वाग्विसर्गो भवति ? 'वरं ददामि' इति । देभा.

( २ ) तत आप्लुत्य, स्नात्वेत्यर्थः । वाग्यत इत्यमन्त्रयमाणः । स्थित्वेत्युपवेशनप्रतिषेधः । एवमहःशेषं स्थित्वाऽस्तमिते आचार्यसमीपे 'वरं ददामि' इति वाचं विसृजेत । ¶ गानावृ.

**गोमिथुनं दक्षिणा ॥**

( १ ) किं पुनर्वरं ददाति ? – गोमिथुनं दक्षिणा । तां ददाति । देभा.

( २ ) वरद्रव्यमाह– गोमिथुनमिति । ननु भिक्षुरयम्, कथमस्य गोमिथुनसंभवः ? उच्यते, यथास्य प्रावरणादिसंभवस्तथैतस्यापि । ¶ गानावृ.

**संवत्सरमादिशेत् ॥**

( १ ) एतत्कर्म कृत्वा संवत्सरं व्रतमादिशेत् । तत्र कस्मिन् काले व्रतादेशनं कर्तव्यम् ? कुतः संशयः ? रात्रिरधिकृता । रात्रौ च व्रतादेशनाभावः । कस्मात् ? अविहितत्वात् । तेन व्रतादेशनं पूर्वं कृत्वा संवत्सरान्त इदं कर्म कुर्वन्ति । एवमेके प्रवृत्ताः । तत्तु नैवम् । कस्मात् ? संवत्सरमादिशेदित्यन्तेऽस्य कर्मणो विधानात् । तेनेह गौदानिकं कर्म कृत्वा अन्यस्मिन्नहनि व्रतादेशनं कर्तव्यम् । देभा.

( २ ) एवं गोदानं कृत्वा संवत्सरं व्रतमादिशेत् वक्ष्यमाणेन विधिनाऽऽचरेत्( ? ऽऽचरेति ) । रात्रौ व्रतादेशनानुपपत्तेरपरेद्युः कार्यम् । ¶ गानावृ.

## कौषीतकिगृह्यसूत्रम्

गोदाने चूडाकर्मकल्पातिदेशः, द्वौ केशच्छेदावधिकाविति विशेषः

**[१]निकक्षयोः षष्ठसप्तमे गोदानकर्मणि ॥**

**एतदेव गोदानकर्म यच्चूडाकर्म ॥**

षोडशवर्षेऽष्टादशे वा गोदानकर्म भवति । तत्र द्वौ छेदावधिकौ कर्तव्यौ । शेषं चूडाकरणकर्मसमानम् । कौगसं.

## आपस्तम्बगृह्यसूत्रम्

गोदाने चौलकर्मकल्पातिदेशः सविशेषः, अग्निगोदानम्, संवत्सरं व्रताचरणमिति मतम्, व्रतनियमविशेषः

**[२]एवं गोदानम् ॥**

( १ ) यथा चौलम् एवमस्य गोदानाख्यमपि कर्म कर्तव्यम् । अनाकुला.

( २ ) गोदानमिति कर्मनामधेयम्, यस्मिन्कर्मण्यङ्गभूतं गोदानयोः शिरःप्रदेशविशेषयोर्वपनम् । यत्रापि पक्षे शिखावर्जितसर्वकेशवपनं यथर्षि च शिखाः, तत्रापि गोदानयोर्वपनं कर्मनामधेयप्रवृत्तिनिमित्तं विद्यत एव ।

---

¶ अना., प्रपा., संप्र. गानावृवत् ।

(१) आगृ. १।१८।६–९ ; प्रपा. २८३; संप्र. ५६०.

¶ अना., प्रपा., संप्र. गानावृवत् ।

(१) कौगृ. १।२८।१७–१८.

(२) आपगृ. १६।१२–१३ ; मुक्ता. ११९; बाल. १।१२ पृ. ३५.

तद्गोदानाख्यं कर्म एवं यथाचौलं ब्राह्मणभोजनादि वरदानान्तं कर्तव्यम् । † ताद.

**अग्निगोदानो वा स्यात् ॥**

( १ ) अत्र पक्षान्तरमाह— अग्नीति । अग्निर्देवता यत्र गोदाने तदग्निगोदानं गोदानं यस्य सोऽग्निगोदानः । अग्निशब्देन तद्दैवत्यं गोदानं लक्ष्यते । अग्निर्गोदानमस्येति विग्रहः । एकस्य गोदानशब्दस्य लोपः, उष्ट्रमुखवत् । तत्र बौधायनः— 'षोडशे वर्षे गोदानम् । तस्य चौलवत् तूष्णीं प्रतिपत्तिरवसानं च । ... अग्निगोदानो वा भवति । तस्य काण्डोपाकरणकाण्डसमापनाभ्यां प्रतिपत्तिरवसानं च' ( बौगृ. ३।२।५२–५८ ) इति । किमुक्तं भवति ? आग्नेयानां काण्डानामुपाकरणसमापनयोर्यः कल्पः तत्र चौलधर्माः प्रवर्तन्त इति । षोडशे वर्षे भवति । सकृत् पात्राणि, न शम्याः । अस्मिन्नस्मिन् गृह्येऽनुपदिष्टत्वात् यत् गोदानमुपदिष्टं तत्रैव शम्याविधिः । तत्र प्रयोगः— ब्राह्मणान् भोजयित्वाऽऽशिषो वाचयित्वा तूष्णीं केशश्मश्रु वापयित्वाऽग्नेरुपसमाधानादि परिषेचनान्तानि आग्नेयकाण्डोपाकरणवत् कृत्वा शुक्रियवद्देवतोपस्थानम् 'अग्ने व्रतपते व्रतं चरिष्यामि' इति । अन्ये संवत्सरे( ? रं ) व्रतचर्या । अन्ते विसर्गः । एवमेव 'अचारिषम्' इत्यादिविकारः । शुक्रियवत् दैवतम् । केशश्मश्रुवपनम् । अन्ते ब्राह्मणभोजनम् । उभयत्र नान्दीमुखश्राद्धं केचित् कुर्वन्ति । अपरे न । अनाकुला.

( २ ) अग्नये गोदानं यस्य सोऽग्निगोदानो ब्रह्मचारी । पुंलिङ्गनिर्देशाच्चैवं विग्रहः । अस्मिन् पक्षे आज्यभागान्ते कृते 'अग्नये काण्डर्षये स्वाहा' इत्याज्येनैवैका प्रधानाहुतिः । ततो जयादि क्षुरप्रक्षालनान्तम् । ताद.

[1]**संवत्सरं गोदानव्रतमेक उपदिशन्ति ॥**

( १ ) कृतगोदानस्यापि तच्छेषतया संवत्सरं व्रतचरणमेक आचार्या उपदिशन्ति । चौलगोदानेऽयं विकल्पः । अग्निगोदाने तु काण्डोपाकरणातिदेशात् नित्यमेव यदा व्रतचर्या तदा वरदानादूर्ध्वं देवतोपस्थानं पूर्ववत्, अन्ते विसर्गश्च पूर्ववदेव । अनाकुला.

( २ ) अधीतेऽपि वेदे अवश्यं संवत्सरं गोदानव्रतं ब्रह्मचर्यं चरितव्यमित्येक उपदिशन्ति । वैकल्पिकमित्यर्थः । ताद.

[1]**एतावन्नाना सर्वान् केशान् वापयते ॥**

(१) अस्मिन् चौलगोदाने तु एतावन्नाना पृथग्भावश्चौलात् । अत्र सर्वान् केशान् वापयते सशिखान् । चौले तु यथर्षि शिखा निदधाति । अन्ये श्मश्रवादीनां प्राप्त्यर्थं सर्वग्रहणं वर्णयन्ति । तेषां केशशब्द उपलक्षणार्थः । तथा चाऽऽश्वलायनः— 'केशश्मश्रुलोमनखान्युदकसंस्थानि संप्रेष्यति' ( आगृ. १।१८।६ ) । अनाकुला.

( २ ) उभयोरपि गोदानयोश्चौलाद्विशेषमाह— एतावदिति । एतावन्नाना एतावान् भेदः यदपिधानार्थयाऽपि शिखया सह सर्वान् केशान् वापयत इति । ततश्चेह विनयनाभावाच्छलल्यादीनां निवृत्तिः । अत्र च वापयत इति णिजन्तनिर्देशादाचार्य एव गोदानकर्मणः कर्ता । वरदानं चाऽऽचार्यायैव । तथाऽत्र शिखाया अपि वपनम् 'एतावन्नाना सर्वान् केशान्वापयते' इत्यस्मादेव वचनात् सत्रवत् । अन्य आहुः— 'रिक्तो वा एषोऽनपिहितो यन्मुण्डस्तस्यैतदपिधानं यच्छिखेति । सत्रेषु तु वचनात् वपनं शिखायाः' ( आध. १।१०।८,९ ) इति सत्रेभ्योऽन्यत्र शिखाया वपनप्रतिषेधात् इहापि नैव शिखाया वपनमिति । ¶ताद.

[2]**उदकोपस्पर्शनमिति छन्दोगाः ॥**

( १ ) अस्मिन् गोदानव्रते अहरहरुदकोपस्पर्शनं कर्तव्यमिति छन्दोगा उपदिशन्ति । त्रिषवणमिति केचित् । अनाकुला.

† बाल. तात्पर्यदर्शनानुवादः ।

(१) आपगृ. १६।१४.

¶ बाल. तात्पर्यदर्शनानुवादः ।

(१) आपगृ. १६।१५ ; बाल. १।१२ पृ. ३५.

(२) आपगृ. १६।१६.

(२) सांवत्सरिकगोदानव्रतपक्षे अहरहरुदकोपस्पर्शनं छन्दोगा उपदिशन्ति । विकल्प इत्यर्थः । ताद.

## हिरण्यकेशिगृह्यसूत्रम्

गोदाने चूडाकर्मकल्पातिदेशः सविशेषः, अग्निगोदानम्, गुरवे गोप्रदानम्

[1]**एवं विहितं षोडशे वर्षे गोदानकर्म ॥**

अथाऽऽचक्षते— एवमिति । यथा चूडाकर्म एवं विहितमुपनीतस्य षोडशे वर्षे गोदानकर्म स्यात् ।

¶ मातृद्.

**सशिखं वापयते । शिखामत्रावशिनष्टी-त्येकेषाम् । अग्निगोदानो वा भवति ॥**

तत्रैतावान्विशेषः— सशिखमिति । सशिखं सह शिखाभिः शिरो वापयते । मध्यमां शिखामेकामत्राव-शिनष्टीत्येकेषां स्मृतिः । अग्निकार्यमेव गोदानकर्म यस्य सोऽग्निगोदानकर्मा । अग्निगोदानो वा कुमारो भवति । उपसमाधानादिपुण्याहवाचनान्तमग्निकार्यमिव वा भव-तीत्यर्थः । ¶ मातृद्.

**गुरवे गां ददाति ॥**

(१) गुरवे आचार्याय गामस्य कर्मणोऽन्ते ददाति । अग्निगोदाने एव गोदानमित्येके । तन्न । उभयत्रैव स्यात् । अनेन हीदं कर्म गोदानमिति समाख्यायते । अस्माकमिदं संस्कारकर्म (प्राक् ?) ऊर्ध्वे चोपनयना-त्षोडशे वर्षे कार्यम् । बह्वृचानां तु सांवत्सरिकमिदं व्रतं चौलवदस्मिन्नेव काल उपाकृत्य चरितव्यम् ।

मातृद्.

(२) गुरवे आचार्याय गामुभयकल्पेऽप्यन्ते ददाति । न च 'अग्निगोदानो वा भवति' इत्येतत्समीपे विहि-तत्वात्तत्कल्प एवैतद्दानमिति वाच्यम्, गोदानस्योभय-कल्पेऽपि प्रवृत्तौ बाधकाभावेन समीपविधानरूपहेतुनैत-त्कल्पाङ्गत्वनियमसाधनस्याप्रयोजकत्वात् । न चैवम् 'अग्निगोदानो वा भवति' इत्येतस्मात्पूर्वमेव 'गुरवे गां ददाति' इति पठितव्यम् । उत्तरकल्पे त्वनुवृत्त्यैवैत-त्प्राप्नोतीति वाच्यम्, 'अग्निगोदानो वा भवति' इत्य-नेन वपनस्येव गोदानस्यापि पूर्वं बाध एव प्रापिते उत्तरकल्पेऽनुवृत्तेरेवासंभवात् । एतच्चोपनयनादूर्ध्वं षोडशे वर्षे कार्यम् । संर. ३५२

## मानवगृह्यसूत्रम्

गोदाने चूडाकर्मकल्पातिदेशः सविशेषः

¶[1]**एतेन तु कल्पेन... गोदानम् ॥**

**'अदितिः श्मश्रु वपतु' इत्यूहेन श्मश्रु प्रवपति 'शुन्धि मुखम्' इति च ॥**

चकार उपलक्षणार्थः । तेन 'वरुणस्य श्मश्रु वसा वपसि मा ते श्मश्रु उप्त्वाय श्मश्रु' इति सिद्धम् । लाघवार्थमिदमाह । गोदानमुक्तं (चेत्) दीक्षासु मध्ये 'चूडाकरणेन गोदानं व्याख्यातम्' इति वक्तव्यं स्यात् । इह तु प्रसङ्गादेकार्थमुक्तम् । अष्टाभा.

## भारद्वाजगृह्यसूत्रम्

गोदाने चूडाकर्मकल्पातिदेशः सविशेषः, प्राक् स्नानीय-गन्धाभिहरणनिषेधः, संवत्सरं ब्रह्मचर्यम्, अग्निगोदानम्

[2]**तस्य चौडेन कल्पो व्याख्यातः । एतावन्नाना सर्वान्केशान्वापयते । गुरवे गां वरं ददाति । न प्राग्गोदानकर्मणः स्नानीयमभिहरते न गन्धान् । संवत्सरं कृतगोदानो ब्रह्मचर्यं चरत्य-ग्निगोदानो वा भवति ॥**

## काठकगृह्यसूत्रम्

गोदाने चूडाकर्मकल्पातिदेशः, अभिषेकः, होमः, पुनरभिषेकः

[3]**तद्व्याख्यातं जटाकर्मणा ॥**

---

¶ संर. मातृद्वत् ।

(१) हिगृ. २।१।५३–५५ ; संर. ३५२.

¶ अस्य व्याख्यानं वेदव्रतविधिप्रकरणे (सं. का. पृ. ३३६६) द्रष्टव्यम् ।

(१) मागृ. १।२१।१३–१४.

(२) भागृ. १।१० ; मुक्ता. ११९ (तस्य...... गन्धान्०).

(३) कागृ. ४४।२–४.

(१) तच्चैतत्केशान्तिकापरपर्यायं गोदानव्रतं जटाकर्मणा व्याख्यातम्। शिखाकर्मणेत्यर्थः। अत्रापि उपसमाधानादिक्षुरकर्मान्तं समम्। देव.

(२) 'आयमगात्' इत्यारभ्य यावत् 'अरिक्ते पर्यशेषय(? पर्याश्लेषयते)' इत्यन्तम्। आवि.

**§ दर्भेष्वासीनं दर्भानध्यधिकृत्य हिरण्यं चाभिषिञ्चत्याग्निकीभिर्वा राजसूयिकीभिर्वा 'या आपो दिव्याः' इति द्वाभ्याम्॥**

(१) कृतशौचार्थस्नानमग्नेः पश्चात्प्राङ्मुखं दर्भेषूपविष्टं ब्रह्मचारिणम् 'या आपो दिव्याः' इति द्वाभ्यामभिषिञ्चति आग्निकीभिरद्भिर्यदि वा राजसूयिकीभिः। तत्र आग्नेय्यो वहन्त्याद्या नद्यादिप्रभवाः, मन्त्रलिङ्गात् सूर्यतेजःप्रबन्धाच्च। सरस्वत्या(? सरस्वदा)दिप्रभवास्तु राजसूयिक्यः, राजसूये राजाभिषेकार्थमाम्नानात्। किं कृत्वाऽभिषिञ्चति? दर्भान् हिरण्यं चाध्यधिकृत्य। ब्रह्मचारिणः शिरसि दर्भान् तदुपरि सुवर्णं निधायेत्यर्थः। † देव.

(२) ततः शौचार्थे स्नानं कृत्वा दर्भेषूपविष्टं दर्भांश्चाध्यधिकृत्य शिरसि दर्भेषूपरि हिरण्यं च कृत्वाऽभिषिञ्चत्याग्निकीभिरद्भिः या उपधाने, याभिः कुम्भेष्टका गृह्यन्ते वहन्तीभिः प्रस्नाभिः स्थावराभिः परिमन्थिनीभिः कूप्याभिर्वहत उच्छ्रिताभिरित्येवं षड्विधाभिः। न तु क्षीरोदकेन, तथाऽनभिधानात्। राजसूयिकीभिर्वा क्षत्रियम्। 'या आपो दिव्याः' इति द्वाभ्याम् अभिषिञ्चतीति मन्त्रविधानात्। यदि होमषष्ठेन(? शिष्टेन) क्षीरोदकेनाभिषेकः स्यादाग्निकेनेत्यवक्ष्यत्। न चाभिषेकमन्त्रेणाज्यहोमो वितत आक्षिप्यते। राजसूयिक्यः सारस्वत्यादयः। आवि.

एवं राजानम्, 'सावीर्हि देव' इति चानुवाकेन यथोक्तमक्रत्वज्यानिम्॥

(१) एवमेव राजानं क्षत्रियम् अभिषिञ्चेत् इति समस्तस्य मन्त्रद्वयस्य विनियोगात्तस्यातिदेशः। विशेषमाह— सावीरिति। 'सावीर्हि देव प्रथमाय पित्रे वर्ष्माणमस्मै' इत्यादिनाऽनुवाकेनान्यद्यथोक्तं कवचनहनादिकं कुर्यात्। किं सर्वम्? नेत्याह— अक्रत्वज्यानिम्। क्रतुः मृत्युसवः, ज्यानिः अर्थत्यागादिकृत आयासः, तद्वर्जम्। अनुवाकनिर्देशाद्धि तल्लिङ्गादेतावपि प्राप्नुत इति प्रतिषिध्येते।

'सावीर्हि देव प्रथमाय पित्रे वर्ष्माणमस्मै वरिमाणमस्मै। अथास्मभ्यं सवितर्वार्याणि दिवे दिव आसुवा भूरि पश्वः॥' — अत्र मृत्योः सांपरायण(? यिक)-स्याऽऽर्षमनुवाके। सावीर्हि त्रिष्टुप्। मृत्युसवे यजमानस्य कवचसंनहने विनियुक्ता। हे देव सवितः, अस्मै यजमानाय वर्ष्माणं वर्म कवचं सावीर्हि अभ्यनुजानीहि वरिमाणम् अतिशयेन वरम् उत्कृष्टम्। कीदृशाय यजमानाय? प्रथमाय प्रधानाय, पित्रे पालयित्रे। अथ अनन्तरं वार्याणि वरणीयानि धनानि अस्मभ्यं यजमानाय याजकेभ्यः आसुव जनय, दिवे दिवे दिने दिने तथा भूरि बहून् पश्वः पशून् आसुव।

'भूतो भूतेषु चरति प्रविष्टः स भूतानामधिपतिर्बभूव। तस्य मृत्योश्चरति राजसूयं स राजा राज्यमनुमन्यतामिदम्॥' — त्रिष्टुप्। मृत्युरूपः प्रजापतिर्देवता। भूतः सत्यः भूतेषु जीवात्मसु प्रविष्टः सन् चरति जानाति अन्तर्यामितया। अत एव स भूतानां जीवात्मनाम् अधिपतिः प्रभुः बभूव भवति। लडर्थे लिट्। यथोक्तम्— 'अज्ञो जन्तु...' इति। यतः तस्य मृत्योः जगत्स्वामिनः राजसूयं राजन्यानुज्ञातं राजशासनं चरति। स राजा प्रतिशरीरं स्वप्रकाशतया राजते। स इदं राज्यं यजमानस्य राजमानत्वं विशिष्टकर्मफलभोगितया शोभमानत्वम् अनुमन्यताम् अभ्यनुजानातु। चरतीति निर्मातृत्वम्, अधिपतिरिति पालयितृत्वम्, तस्य मृत्योश्चरति राजसूयमिति च संहर्तृत्वमुक्तम्।

---

§ एतत्सूत्रीयब्राह्मणवल्ल्याख्यानविषये 'सर्वान्नं हविष्यम्' इत्यग्रिमसूत्रगता टिप्पणी द्रष्टव्या।

† अतः परं देवपालभाष्ये 'या आपो' इत्याद्योर्द्वयोर्मन्त्रयोर्यद्व्याख्यानं मुद्रितमस्ति तत् अग्रे 'एवं राजानम्' इतिसूत्रव्याख्याने 'सावीर्हि' इत्याद्यनुवाकगतयोः पुनर्व्याख्यातत्वादत्र न संगृहीतम्।

'येभिः शिल्पैः पप्रथानामदृंहद्येभिर्द्यामभ्यपिंशत्प्रजापतिः। येभिर्वाचं विश्वरूपेभिरव्ययंस्तेनेममग्न इह वर्चसा समङ्ग्धि॥'– जगती। अग्निर्देवता येभिः शिल्पैः प्रथमानां(? पप्रथानां) प्रत्यक्षां पृथिवीं (अदृंहत्) दृढीकृतवान्, यैः कर्मभिः द्याम् अभ्यपिंशत् उत्तम्भितवान्। कः? प्रजापतिः। यैश्च कर्मभिः वाचं त्रिवेदीं विश्वरूपैः सर्वैः कर्मभिरुपलक्षिताम् अव्ययन् निर्मितवान्। अनेकार्थत्वाद्धातूनां व्ययतिरिह निर्माणे वर्तते। हे अग्ने, तेन कर्मगणेन पराक्रमकृतेन इमं यजमानं समङ्ग्धि, 'अञ्जू व्यक्तिम्ल(? म्र)क्षणगतिषु', सम्यक् अङ्ग्धि प्रत्यक्षं प्रापय वा समङ्ग्धि विशेषात् वर्चसा च दीप्त्या च यजमानं समङ्ग्धि संयोजय।

'येभिरादित्यस्तपति प्रकेतुभिर्येभिः सूर्यो ददृशे चित्रभानुः। येभिर्वाचं पुष्कलेभिरव्ययंस्तेनेममग्न इह वर्चसा समङ्ग्धि॥'–जगती। प्रकृष्टाः केतवः रश्मयः, यैः प्रकेतुभिरादित्यस्तपति, येभिः यैश्च प्रकेतुभिः चित्रभानुः आश्चर्यकारिकिरणः सूर्यः लोकान् ददृशे दृष्टवान्। गतार्थमन्यत्।

'आऽयं भातु शवसा पञ्च कृष्टीरिन्द्र इव ज्येष्ठो भवतु प्रजानाम्। अस्मिन्नस्तु पुष्कलं चित्रभान्वाऽयं पृणातु रजसो विमानम्॥'– जगती। अयम् आदित्यः आभातु प्रकाशयतु। किम्? पञ्च कृष्टीः पञ्च मनुष्यान्। शवसा बलेन। यथाऽयमादित्यः प्रजानां ज्येष्ठः अतिशयेन प्रशस्यः भवत्विन्द्रवत्। अस्मिन् आदित्ये पुष्कलं बहुलं चित्रभानु विचित्रप्रकाशः(अस्तु)। अयम् आपृणातु आपूरयतु रजसः लोकस्य विविधं मानं प्रमाणम्।

'यत्ते शिल्पं कश्यप रोचनावदिन्द्रियावत्पुष्कलं चित्रभानु। यस्मिन्सूर्या अर्पिताः सप्त साकं तस्मिन् राजानमधिविश्रयेमम्॥'– त्रिष्टुप्। मृत्युसवे चर्मास्तरणे विनियुक्ता। कशामर्हति कश्यं शरीरं पातीति कश्यपं चर्म, तस्याऽऽमन्त्रणं हे कश्यप व्याघ्रचर्मन्, यत्तव शिल्पं रूपं चरितं वा तस्मिन् राजानं राजमानं यजमानमिमम् अधिविश्रय उपर्याश्रितं कुरु। रोचनावत् रोचमानम्, इन्द्रियावत् इन्द्रिययुक्तम्, पुष्कलं प्रभूतम्, चित्रभानु विचित्रकान्तिमत्त्वादेव। यत्र सप्त सूर्यरश्मयः अर्पिताः प्रतिफलिताः सूर्यप्रतिबिम्बानि वा। सप्तग्रहणं बाहुल्योपलक्षणम्। साकं सह।

'व्याघ्रो वैयाघ्रे अधि विक्रमस्व दिशो महीः। विशस्त्वा सर्वा वाञ्छन्त्वापो दिव्याः पयस्वतीः॥'– अनुष्टुप्। यजमानं चर्म आरोहन्तमनुमन्त्रयते। हे यजमान, (वैयाघ्रे चर्मणि) अधि विक्रमस्व आक्रमस्व, यतस्त्वं व्याघ्रः उत्कृष्ट इत्यर्थः। व्याघ्र इवेति वाऽर्थः। सर्वा विशः सर्वे मनुष्याः त्वां वाञ्छन्तु अभिलषन्तु तथा दिव्या आपः पयस्वतीः पयसा क्षीरेण युक्ताः त्वां वाञ्छन्तु उपसर्पन्तु।

'या आपो दिव्याः पयसा संबभूवुर्या अन्तरिक्ष्या उत पार्थिवासः। तासां त्वा सर्वासां रुचाऽभिषिञ्चामि वर्चसा॥ अभि त्वा वर्चसाऽसृजं यज्ञेन पयसा सह। यथा सो मित्रवर्धनस्तथा त्वा सविता करत्॥'– आभ्यां प्रस्तारपङ्क्तिभ्यामासिञ्चति। या आपः दिवि भवाः दिव्याः, अन्तरिक्षे भवाः अन्तरिक्ष्याः, पृथिव्यां भवाः पार्थिवासः पार्थिव्याः पयसा संबभूवुः, पयोग्रहणमुपलक्षणार्थम्, हविषा संभूताः युक्ताः, आहुतित्वं प्राप्ता इति यावत्, तासां सर्वासां रुचा दीप्त्या वर्चसा ब्रह्मवर्चसस्वबुद्ध्या तत्त्वं जानानोऽहं यजमानं त्वामभिषिञ्चामि। अनेन चाभिषेकेण त्वामहं वर्चसा§ अभ्यसृजम् अभिसृजामि योजयामि, यज्ञेन यज्ञफलेन पयसा च सह संसृजामि। यथा स सविता मित्रवर्धनस्तथा त्वां मित्रवर्धनं करत् करोतु।

'इन्द्रं विश्वा अवीवृधन्समुद्रव्यचसं गिरः। रथीतमं रथीनां वाजानां सत्पतिं पतिम्॥'– 'इन्द्रं विश्वाः' इति चतसृभिः रथमारोहन्तमनुमन्त्रयते। विश्वाः सर्वाः गिरः वाचः इन्द्रं यजमानम् अवीवृधन् वर्धयन्तु। समुद्रव्यचसम् सम्यग्मुदं रातीति समुद्रो नित्यानन्दः, 'व्यच संभवे', नित्यानन्दसंभविनम्, रथीनां

§ 'वर्चसाऽसिचम्' इति काठकसंहितायां (३७।९) पाठः। तथाऽग्रे 'यथासः' इत्येकं पदम्।

रथवतां रथीतमं रथितमम् (इन्द्रं विश्वा ?) अतिशयरथयुक्तम्, वाजानाम् अन्नानां पतिम्, सत्पतिं साधूनां पालयितारम्।

'अभि प्रेहि वीरयस्वोग्रश्चेता सपत्नहा। आतिष्ठ मित्रवर्धनस्तुभ्यं देवा अधिब्रुवन्॥ आतिष्ठ वृत्रहन्रथं युक्ता ते ब्रह्मणा हरी। अर्वाचीनं सु ते मनो ग्रावा कृणोतु वग्नुना॥'— हे यजमान, अभिप्रेहि रथमारोह, वीरयस्व यज्ञानुष्ठाने विक्रमयुक्तो भव। उग्रः तीव्रः चेता चैतन्ययुक्तः सपत्नहा शत्रूणां हन्ता आतिष्ठ रथमधितिष्ठ, मित्रवर्धनश्च भव। तुभ्यं देवा अधिब्रुवन् देवा अपि एतत्तव वदन्ति, न त्वहमेव। वृणोति आवृणोति तत्त्वमिति वृत्रं पापं मिथ्याज्ञानं च। हे वृत्रहन् यजमान, रथमातिष्ठ। हरी हरयः अश्वाः तव युक्ताः संयुक्ताः रथेन यतः( ? ततः) ब्रह्मणा वेदेन सहाऽऽतिष्ठ। मन्त्रैर्वा योजिताः। कर्मज्ञानानुष्ठानेन तव सुमनः ग्रावा ग्रावाणं पाषाणप्रायं दुर्भेदमविद्यारूपम् अर्वाचीनम् अधोमुखं करोतु वग्नुना वाचा। वक्ति तच्छीलो वग्नुः शब्दः।

'आतिष्ठन्तं परि विश्वे अभूषञ्छ्रियो वसानश्चरति स्वरोचिः। महत्तदस्यासुरस्य नामाऽऽ विश्वरूपो अमृतानि तस्थौ॥'— आतिष्ठन्तं रथमारोहन्तं यजमानं विश्वे सर्वे देवाः पर्यभूषन् परिभूषयन्ति। आरूढो भूषितश्चायं यजमानः श्रियः शोभाः वसानः आच्छादयन् स्वरोचिः स्वदीप्तिः स्वर्गदीप्तिश्च सन् चरति आक्रामति शत्रून्। यतो महत्तदस्यासुरस्य नाम यजमान इति यत् नाम तदस्य महाप्रभावम्। असुरस्य प्राणवतः। असवः प्राणाः विद्यन्ते यस्य सोऽसुरः। मत्वर्थीयो रप्रत्ययः। यतोऽयं यजमानो विश्वरूपः सर्वरूपः प्राप्तब्रह्मलयः सन् अमृतानि अमृतत्वम् (आ)तस्थौ आतिष्ठति।

'अनु त्वेन्द्रो मदत्वनु बृहस्पतिरनु सोमो अन्वग्निरावीत्। अनु त्वा विश्वे अवन्तु देवाः सप्त राजानो य उदाभिषिक्ताः॥'—'अनु त्वेन्द्रः' इति तिसृभिर्गच्छन्तमनुमन्त्रयते। अनु त्वा त्वां गच्छन्तमिन्द्रोऽनुमदतु। तथा बृहस्पतिरन्ववतु, सोमश्चान्ववतु, अग्निश्च अन्वावीत् अन्ववतु। किं बहुना ? विश्वे सर्वे देवास्त्वाम् अन्ववन्तु अनुरक्षन्तु। ये सप्त राजानः सप्तर्षयः उत्कर्षेण आ समन्तात् अभिषिक्तास्तेऽपि त्वामन्ववन्तु।

'अनु त्वा मित्रावरुणा इहावतामनु द्यावापृथिवी ओषधीभिः। सूर्योऽहोभिरनु त्वाऽवतु चन्द्रमा नक्षत्रैरनु त्वाऽऽवीत्॥'— हे यजमान, त्वां मित्रावरुणावन्ववताम्, द्यावापृथिव्यौ च ओषधीभिः सह। सूर्यः अहोभिः दिवसैः सह चन्द्रमाश्च नक्षत्रैः सह त्वामन्वावीत् अन्ववतु।

'द्यौश्च त्वा पृथिवी च प्रचेतसा यज्ञो बृहद्दक्षिणा त्वा पिपर्तु। अनु स्वधा चिकिते सोमो अग्निरनु त्वाऽवतु सविता सवेन॥'— जगती। हे यजमान, त्वां द्यौश्च पृथिवी च प्रकृष्टेन चेतसा पिपर्तु काम्यमानैरर्थैः प्रपूरयतु। तथा यज्ञः बृहती परिपूर्णा दक्षिणा च त्वामन्वागच्छत्विति भविष्यता संबन्धः। स्वधा च पितृहविः त्वामन्वागच्छतु चिकिते चैतन्यविशेषे वर्तमानम्। तथा सोमः अग्निः सविता च सवेन आज्ञया संकल्पमात्रेण त्वामन्ववन्तु।

'एना व्याघ्रं परिषस्वजानं सिंहं हिन्वन्ति महते धनाय। मर्मृज्यन्ते द्वीपिनमप्स्वन्तररुषं न सुम्बस्तस्थिवांसम्॥'— जगती। सुगन्धिद्रव्यैर्यजमानस्य समालभने क्रियमाणेऽनुमन्त्रणमनया क्रियते। हे यजमान, एना अनेन इषुणा परिषस्वजानं संबध्यमानं व्याघ्रं (?प्र—)-सिंहप्रायमपि शत्रुं भवन्तो हिन्वन्ति स्वीकुर्वन्ति। किमर्थम् ? महते धनाय। अपि च अप्सु अन्तः मध्येऽपि वर्तमानं द्वीपिनं द्विधाविदारितस्थापितजलसंबन्धिगतं कृत्वा शत्रुं मर्मृज्यन्ते अतिशयेन शोधयन्ति अरुषं निष्क्रोधं कृत्वा। क इव कम् ? सुम्बः स्वर्णकारः इव अरुषं सुवर्णं तस्थिवांसं कषपट्टिकादौ स्थितम्। नेत्युपमार्थीयः। देव.

(२) अभिषेकादनन्तरमाग्नेय्या वैश्वदेव्या वा प्राशनम्। ऋतुतिथियागादितन्त्रसमाप्तिः। वरो दक्षिणा।

$ ब्राह्म.

$ शेषं देवगतम्।

( १ ) ताभिरेव राजानम् । अभिषिञ्चेदिति शेषः । 'सावीर्हि देव' इति चानुवाकं( ? केन ) यथोक्तं यथोक्तं कर्म कुर्यात् कचवर्जनहनादि अकल्पवज्वानिम् । क्रतुः मृत्युसवाख्यः यत्रैतत्कर्माभिहितम्, तत्संबद्धं यत्कर्म । ज्यानिश्च तत्रास्ति- 'भ्रातृव्यकुलीनायोपविहायैषुमसित्वा तस्माज्ज्यानिं द्रव्यापहारं हानिम्' इति । तद्वर्जम् । अन्यत्र( ? अन्यत् ) वसनमेखलादि न किंचिद्भवति, न वा पुनरपवर्गे करणम्, तथावचनाभावात् । अन्ये त्वाज्यभागान्तं हुत्वा 'आऽयमागात्' इत्यन्तम( ? इत्यादि ) 'अरिक्के पर्यभेषय( ? श्लेषयत )' इत्यन्तं कृत्वा स्नात्वा वसनादिदव्यान्तम् । ततो यथोक्तोऽभिषेक आग्निकीभिः । ततो वैश्वदेव्या चतुर्गृहीतं हुत्वा 'छन्दोभ्यः स्वाहा, गोदानाय स्वाहा' इति च हुत्वा ऋतुतिथ्याद्याभावितान्तं संस्थापयेत् । गोदानस्य ग्रन्थान्तरेषु व्रतत्वदर्शनत्वा( ? दर्शना)ज्ञात्रापवर्गोऽध्ययनाभावादिति । आवि.

† 'सर्वान्नं हविष्यं क्षीरोदकाभ्यां 'पितुं नु स्तोषम्' इत्यादिनाऽनुवाकेन संयूय तस्यौदुम्बरेण स्रुवेण जुहोति 'वाजस्य नु प्रसवः' इति च चतुर्दशभिः ॥

सर्वे यवादिकमन्नं हविष्यं माषादिवर्जं क्षीरोदकाभ्यां सह संयूय मिश्रीकृत्य 'पितुं नु स्तोषम्' इत्यनुवाकेन, ततस्तेनानुवाकेन जुहोति । यद्वा तस्येति व्यत्ययेन षष्ठी । वेदवद्वेदविदां वचांसि प्रवर्तन्ते । यत(? तत) औदुम्बरेण स्रुवेण 'वाजस्य नु प्रसवः' इति होमप्रकरणनिर्दिष्टैः §चतुर्दशभिर्मन्त्रैश्चतुर्दश आहुतयः ।

'पितुं नु स्तोषं महोधर्माणं तविषीम् । यस्य त्रितो व्योजसा वृत्रं विपर्वमर्दयत् ॥' – अत्रैकादशर्चेऽनुवाकेऽगस्त्यस्य गरलनिगिरण आर्षम् । उष्णिक् छन्दः । पितुशब्दोऽन्नवचनः । तं पितुं स्तोषं स्तौमि । मह

---

† सूत्रत्वेनात्र गृहीतोऽयं ग्रन्थः 'यस्य न जुहुयात्' इत्यग्रिमो ग्रन्थश्च एकस्मिन्नादर्शपुस्तके 'दर्भेष्वासीनम्' इत्यादिपूर्वसूत्रे ब्राह्मणवलीयव्याख्यानरूपत्वेन मुद्रितोऽस्ति । अपरस्मिन्नादर्शपुस्तके द्वावपि सूत्रत्वेन मुद्रितौ । देवपालस्तूभावपि व्याख्याय 'यस्य न जुहुयात्' इत्यादेरेवानार्षत्वं कैश्चिदत्र पठितत्वं च ब्रुवाणः 'सर्वान्नम्' इत्यादेरार्षत्वमभिप्रैतीति प्रतीयते ।

(१) कानु. ( निर्णयसागरमुद्रितम् ) ४४।५-६.

§ इदमत्र संशोध्य निर्णेयम् – अत्र सूत्रेण व्याख्यात्रा च मन्त्राणामाहुतीनां च चतुर्दशत्वं स्पष्टमुक्तम् । अग्रे तु व्याख्यात्रा 'वाजस्य नु' इत्याद्याः पञ्चदश मन्त्रा व्याख्याता इति विरोधः । ते च व्याख्याताः पञ्चदश मन्त्रा यथा– 'वाजस्य नु' इत्यादयः( कासं. १४।२ ) इत्यनुवाकगता अष्टौ, ततः 'विश्वे अद्य' इति १८।१३ इत्यनुवाकगत एकः, ततः 'आ मा वाजस्य' इति १४।१ इत्यत्र कृत्स्नपठितः १८।१३ इत्यत्र च प्रतीकनिर्दिष्ट एकः, ततः 'वाजो मा सप्त' इत्यादयः १८।१३ इत्यनुवाकगताः पञ्चेति । किंचात्र कैर्मन्त्रैश्चतुर्दशत्वसंख्या संपादनीयेत्ययमपि संदेहविषयः । तथाहि- चतुर्दशत्वसंख्यासंपादनमत्र द्विधा संभवति । तत्रायमेकः पक्षः– देवपालसंगृहीतेषु पञ्चदशसु मन्त्रेष्वन्यतमस्य प्रामादिकत्वं मत्वा तं वर्जयित्वाऽन्ये चतुर्दश ग्राह्या इति । परंतु तत्र कस्य वर्जनमिति निर्णेतुं न शक्यते । अथायमपरः पक्षः– १८।१३ इत्यनुवाकस्य केवलचतुर्दशमन्त्रात्मकत्वेन तदनुवाकरूपैकप्रघट्टकपठिता एव चतुर्दश मन्त्रा ग्राह्या इति । तदनुवाकस्वरूपमित्थम्– 'वाजस्य नु प्रसव इति षट्' इति पठित्वा 'विश्वे अद्य' इति मन्त्रः पठितः, ततः 'आ मा वाजस्य, वाजस्य नु' इति प्रतीकरूपेण पठित्वा 'वाजो मा सप्त' इत्यादयः पञ्च मन्त्राः पठिता इति । इदमत्रावधेयम्– 'वाजस्य नु' इतिप्रतीकारब्धाख्यो मन्त्राः काठकसंहितायां सन्ति । तत्र द्वयोरेतदनुवाकादौ प्रतीकसंगृहीतेषु षट्स्वन्तर्भावात् परिशेषन्यायेन 'वाजस्य नु प्रसवे मातरं महीम्' ( १३।१४ ) इत्ययमेव मन्त्रः 'आ मा वाजस्य, वाजस्य नु' इत्यत्र 'वाजस्य नु' इति प्रतीकेन ग्राह्य इति । देवपालव्याख्यातेषु पञ्चदशसु १४।२ इत्यनुवाकान्तिमौ 'इन्द्रवायू सुसंदृशा' इत्यादी द्वौ मन्त्रौ स्तः, द्वितीयपक्षे तौ न स्तः । 'वाजस्य नु प्रसवे मातरम्' इत्ययं देवपालव्याख्यातेषु नास्ति, अस्ति च द्वितीयपक्षे । सर्वथा द्वितीयपक्ष एव श्रेयानित्यस्माकं प्रतिपत्तिः ।

इति बलनाम । महो धारयते महोधर्मा तम्, अत एव तविषीं बलवन्तम् । कम्? यस्य पितोः त्रितः त्रिस्थानस्य लोकत्रयस्थस्य संबन्धिना ते(? ओ) जसा बलेन वृत्रं मेघदानवं व्यर्दयत् विशेषेणार्दितवान् । कः? अर्थादिन्द्रः । कथंकारम्? विपर्वं विघटितसंधिं कृत्वा ।

'स्वादो पितो मधो पितो वयं त्वा ववृमहे । अस्माकमविता भव ॥' — हे पितो स्वादो स्वादुरस, हे मधो मधुरपरिणाम, वयं त्वां ववृमहे वरं प्रार्थयामहे । किम्? अस्माकं त्वम् अविता रक्षिता भव ।

'उप नः पितवाचर शिवः शिवाभिरूतिभिः । मयोभुरद्विषेण्यः सखा सुशेवो अद्वयः ॥'— हे पितो पालयितः, नः अस्माकम् उपाचर उपागच्छ । शिवः क्षेमकारी शिवाभिरूतिभिः सुखकारिभिः रक्षणैः मयः सुखं भावयतीति मयोभूः, अद्विषेण्यः अद्वेषणीयः सखा समानख्यानः मित्रभूतः, सुशेवः सुखेन यः सेव्यते, अद्वयः अद्वितीयः प्रतिबन्धकशून्यः ।

'तव त्ये पितो रसा रजांस्यनुविष्ठिताः । दिवि वाता इव श्रिताः ॥' — तव त्ये पितो रसाः । रज इति लोकनाम । ये केचिदुत्कटा रसाः रजांस्यनुविष्ठिता लोकत्रयमाश्रिताः, हे पितो, त्ये सर्वे तव संबन्धिनः । दृष्टान्तमाह— यथा सर्वे वाता दिवमाश्रिताः ।

'तव त्ये पितो ददतस्तव स्वादिष्ठ ते पितो । प्र स्वाद्मानो रसानां तुविग्रीवा इवेरते ॥' — हे पितो स्वादिष्ठ स्वादुतम, तव ददतः तव यज्ञादौ दीयमानस्य संबन्धिनां रसानां स्वाद्मानः उत्कृष्टस्वादवन्तः रसास्त ईरते लोकत्रयं गच्छन्ति युगपत् । तुविग्रीवा इव बहुग्रीवा इव सहस्रशीर्षाः परमात्मरूपाः सर्वत्र प्रवृत्ता इत्यर्थः ।

'त्वे पितो महानां देवानां मनो हितम् । अकारि चारुकेतुना तवाहिमवसाऽवधीत् ॥' — हे पितो, त्वे त्वयि महानां महतां देवानां मनः हितं निहितम् । आसतामस्मदादयः, महतामपि देवानामिन्द्रप्रभृतीनां मनस्त्वय्येवाऽऽहितम् । त्वामेव ते ध्यायन्तीत्यर्थः । तथाहि— तव अवसा बलेन अहिं वृत्रमवधीत् । अर्थादिन्द्र इत्यर्थः । तथा स एव तव संबन्धिना चारुकेतुना उत्कृष्टप्रज्ञया अकारि । अर्थादहेर्वधम् ।

'यददः पितो अजगन्विवस्व पर्वतानाम् । अत्रा चिन्नो मधो पितोऽरं भक्षाय गम्याः ॥' — हे पितो, यत् अदः एतत् पर्वतानां संबन्धि ओषध्यादि रसत्वम् अजगन् गतम् उत्पन्नं(? आपन्नं) तत् हे पितो मधो, अरम् अलं पर्याप्तं कृत्वा भक्षाय गम्याः गतम् । विवस्वेत्यामन्त्रणपदम् । हे विवस्व विशेषेण वसितः ।

'यदपामोषधीनां परिंशमारिशामहे । वातापे पीव इद्भव ॥' — यदपामोषधीनां परिंशं स्पर्शम् आरिशामहे अनुभवामः, स सर्वस्तव महिमेति शेषः । हे वातापे वातानां प्राणापानादीनाम् आप्यायक, पीवः पीवरः निबिडः अस्मद्गृहे भव ।

'करम्भ ओषधे भव पीवो वृक्क उदारथिः । वातापे पीव इद्भव ॥' — हे ओषधे ओषधिरूप पितो, करम्भो भव दधिक्षीरादिमिश्रभक्तादिना रूपेणास्मद्गृहे तिष्ठेत्यर्थः । वृक्को व्याधीनां वर्जकः उदारथिः उत्कृष्टरथः ।

'यत्ते सोम गवाशिरो यवाशिरो भजामहे । वातापे पीव इद्भव ॥' — हे सोम, यत् ते तव गवाशिरः घनं दधि, यवाशिरः यवकरम्भादिकं भजामहे सेवामहे । तेन रूपेण हे वातापे पीवरो भवास्माकम् ।

'तं त्वा वयं पितो वचोभिर्गावो न हव्या सुषूदिम । देवेभ्यस्त्वा सधमादमस्मभ्यं त्वा सधमादम् ॥' — हे पितो, तं त्वा वयं स्तुतिवचोभिः सुषूदिम क्षरामः, गावो न हव्या यथा गावो हव्यं क्षीरं क्षरन्ति । देवेभ्यः सधमादं सहमदनं त्वां सुषूदिम । एवमस्मभ्यं त्वा सधमादमिति समानम् ।

'वाजस्य नु प्रसवः सुषुवेऽग्रे सोमो राजौषधीष्वप्सु । ता अस्मभ्यं मधुमतीर्भवन्तु वयं राष्ट्रे जागृयाम पुरोहिताः ॥' — वाजस्येत्यनुवाक इन्द्रस्य जयवत आर्षम् । 'सोमो वा ओषधीनां राजा' इति श्रुतेः सोम ओषधीनां व्रीह्यादिकानां राजा । स च प्रजापतेर्विवर्तत्वात् परिणतत्वाद्वा प्रजापतिरूपेण स्तूयते ।

वाजस्य अन्नस्य संबन्धी प्रसवः कार्यसारः ओषधीष्वप्सु च राजा, षष्ठ्यर्थे व्यत्ययेन सप्तमी, ओषधीनामपां च राजा अग्रे प्रथमसर्गादौ सुषुवे जनितवान् यज्ञद्वारेण जगत्त्रयम् । जगत्कारणभूतस्यापि सोमस्यैव वाजीकरणमित्यन्नस्तुतिपर्यवसाय्येतत् । अतोऽन्नहोमबलात् अस्मभ्यम् अस्मदर्थम् ओषध्यः मधुमत्यः मधुररसयुक्ताः सन्तु । ता इति सर्वासामोषधीनामनाख्येयातिशयप्रतिपादनार्थं 'ते लोचने' इतिवत् । जगत्कारणस्यापि सोमस्य या हेतुभूतास्ताः का अपीत्यर्थः । राष्ट्रे जगति वयं जागृयामा रागादिदोषनिवारणाय गृहीतोद्यमाः स्याम । पुरोहिताः पुरःसराः अग्रेसराः अग्रे परलोके हिता इत्यर्थः ।

'वाजस्येदं प्रसव आबभूवेमा विश्वा भुवनानि सर्वतः । अदित्सन्तं दापयति प्रजानन्त्सोमो रयिं सहवीरं नियंसत् ॥' – वाजस्येदम् इदं जगत् वाजस्य प्रसवो बभूव । किं तत् जगत् ? इमानि विश्वानि सर्वाणि भुवनानि सर्वतः सर्वत्र स्थितानि । सोमोऽन्नरूपः अदित्सन्तं न दानेच्छायुक्तम् अदानशीलमपि दापयति प्रजानां मध्ये स्थितम् । किं दापयति ? रयिं धनं सहवीरं सपुत्रं नियंसत् नियमयुक्तम् ।

'वाजस्य नु प्रसवः शिश्रिये देवीमा विश्वा भुवनानि सम्राट् । स विराजा परियाति प्रजानन् प्रजां पुष्टिं वर्धमानो अस्मे ॥' – वाजस्य प्रसवः सम्राट् प्रजापतिः विश्वा विश्वानि भुवनानि शिश्रिये आश्रितवान् । सः विराजा विशेषेण राजमानः परियाति देवान् प्राप्नोति अग्नौ सोमादिरूपः । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति विराजेति समासान्ताभावः । प्रजानन् प्रकृष्टज्ञानयुक्तः । किं कुर्वन् परियाति ? अस्मे अस्माकं §रयिं धनं वर्धमानः ।

'सोमं राजानमवस इन्द्रं दानाय चोदय । विष्णुं वाचं सरस्वतीं सवितारं च वाजिनम् ॥' – अनुष्टुप् । हे वाजप्रसव, सोमं राजानं विष्णुं सरस्वतीम् इन्द्रं (सवितारम्) वाजिनम् अन्नवन्तं चोदय प्रेरय तर्पयित्वाऽभिमुखं कुरु । किमर्थम् ? अवसे रक्षणाय दानाय चाभिमतफलानाम् ।

'प्र नो यच्छत्वर्यमा प्र पूषा प्र बृहस्पतिः । प्र वाग्देवी ददातु नः ॥' – गायत्री । अर्यमा पूषा बृहस्पतिस्त्वं च वाग्देवी प्रददातु नः अस्मभ्यम् अभिमतम् । प्रयच्छत्विति भूयोवचनमतिशयार्थम् ।

'अग्ने अच्छा वदेह नः प्रत्यङ् नः सुमना भव । प्र नो यच्छ विशस्पते धनदा असि नस्त्वम् ॥' – अनुष्टुप् । हे अग्ने, इह यज्ञे नः अस्माकं प्रत्यक् अभिमुखः सन् सुमना भव अच्छ वद च अभिमुखमनुकूलं वद । हे विशस्पते पुरुषप्रभो, नः अस्माकं धनदो भवसि, अतो नः अस्मभ्यं प्रयच्छ प्रदेहि धनम् ।

'इन्द्रवायू सुसंदृशा सुहवेह हवामहे । यथा नः सर्व इज्जनः संगमे सुमना असत् ॥' – इन्द्रवायू हवामहे आह्वयामः । इह यज्ञे सुष्ठु सम्यक् दृशौ ययोस्तौ सुसंदृशौ, सुहवा सुखाह्वानौ । यथा सर्वो जनोऽस्माकं संगमे सुमना असत् भवति तथा कुरुतम् । इदिति पादपूरणः ।

'सोमं राजानं वरुणमग्निमन्वारभामहे । आदित्यं विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम् ॥' – सोमादीन् अन्वारभामहे तदुद्देशेन कर्म कुर्मः ।

'विश्वे अद्य मरुतो विश्व ऊतीर्विश्वे भवन्त्वग्नयः समिद्धाः । विश्वे मा देवा अवसाऽगमन्निह विश्वमस्तु द्रविणं वाजो अस्मिन् ॥' – विश्वे अद्येति । त्रिष्टुप् । अद्य अस्मिन्नहनि विश्वे सर्वे मरुतः विश्व ऊतीः सर्वाण्यवनानि रक्षणानि भवन्तु । एवं सर्वे अग्नयः समिद्धा भवन्तु । विश्वे देवाः अवसा अवनेन मा माम् आगमन् आगच्छन्तु । इह यजमाने विश्वं द्रविणमस्तु । वाजो अस्मिन् अस्मिन् यजमाने वाजः अन्नम् अस्तु ।

'आ मा वाजस्य प्रसवो जगम्यादा मा द्यावापृथिवी विश्वरूपे । आ मा गन्तां पितरा मातरा चा मा सोमो अमृतत्वेन गम्यात् ॥' – आ मा वाजस्य । वाजस्य

§ ग्रन्थोऽयं व्याकुलः । 'रयिम्' इति पदमस्मिन् मन्त्रे नास्ति । 'प्रजाम्, पुष्टिम्' इति पदे अत्रान्विते । किंच 'देवीमा' इतिपदान्वयोऽपि नोक्तः ।

अन्नस्य प्रसवः सारः माम् आजगम्यात् अतिशयेनाऽऽगच्छतु । गतार्थमन्यत् ।

'वाजो मा सप्त प्रदिशश्चतस्रो वा परावतः । वाजो मा विश्वैर्देवैर्धनसाता इहावतु ॥' – इह यज्ञे धनसातौ धनविभागनिमित्तं वाजः अन्नं माम् अवतु आगच्छतु विश्वैः सर्वैः देवैः सह । वाजो मां सप्तप्रकारो व्रीह्यादिरूपेण, प्रदिशः चतस्रो दिशः इति संवरणीयम् । त्रिभिर्लोकैः सह सप्त प्रदिश इत्याहुः ।

'वाजो मे अद्य प्रसुवाति दानं वाजो देवान्हविषा वर्धयाति । वाजस्य हि प्रसवे नन्नमीति विश्वा आशा वाजपतिर्जयेयम् ॥' – वाजः यज्ञः वाजसाध्यत्वात्, दानं प्रसुवाति जनयति अवजानाति वा, हविषा च देवान्वर्धयति । यतश्च वाजस्य प्रसवे अनुज्ञायां वर्तमाना विश्वाः आशाः नन्नमीति अतिशयेन नमन्ति । तस्माद्वाजपतिर्भूत्वा विश्वाः आशाः दिशः अहं जयेयम् ।

'वाजः पुरस्तादुत मध्यतो नो वाजो देवानृतुभिः कल्पयाति । वाजस्य हि प्रसवे नन्नमीति सर्वा आशा वाजपतिर्भवेयम् ॥' – पुरस्तान्मध्ये च नो वाजोऽस्तु, तथा ऋतुभिः सर्वेषु ऋतुषु देवान् कल्पयतु । गतार्थमन्यत् ।

'सं मा सृजामि पयसा पृथिव्याः सं मा सृजाम्यद्भिरोषधीभिः । सोऽहं वाजं सनाम्यग्ने ॥ पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयोधाः । पयस्वतीः प्रदिशः सन्तु मह्यम् ॥' – 'सं मा सृजामि' इति ¶ व्याख्यातम्, 'पयः पृथिव्याम्' इति च । देव.

**यस्य न जुहुयात्सदाऽग्नीषोमीयस्यैष्मेऽपि प्रोक्षेच्छेष उदकमासिच्य तेनाभिषिञ्चति ॥**

प्रकृतस्य क्षीरोदसंमिश्रितस्य सर्वहविष्यान्नस्य यमंशं न जुहुयात् तस्यैकदेशमग्नीषोमीयस्यैष्मे प्रोक्षेत् । ततोऽपि यदवशिष्यते तत्रोदकमासिच्य तेन तं क्षत्रियं ब्रह्मचारिणमभिषिञ्चेत् । एतत् 'यस्य न जुहुयात्' इत्यादि इहानार्षं केचिदेव नराः पठन्ति । देव.

¶ गृह्यसूत्रे न कुत्रापि व्याख्यानमुपलभ्यते ।

## वाराहगृह्यसूत्रम्

गोदाने चूडाकर्मकल्पातिदेशः सविशेषः, गौर्दक्षिणा

**[1]जटाकरणेनोक्तमन्त्रविधिः । उपस्थ उपकक्षयोश्चाधिको मन्त्रप्रयोगः । 'यत्क्षुरेण मर्चयता' इति भूमौ केशान्निखनेत् । अन्ते गां दद्यात् ॥**

## आग्निवेश्यगृह्यसूत्रम्

गोदाने चूडाकर्मकल्पातिदेशः सविशेषः,
अग्निगोदानम्, गौर्दक्षिणा

**[2]इत्येवं विहितं षोडशे वर्षे गोदानकर्म । सशिखं वापयते । शिखामात्रमतिशिनष्टीत्येकेषाम् । अग्निगोदानो वा भवति । गुरवे गां ददाति ॥**

## पारस्करगृह्यसूत्रम्

गोदाने चूडाकर्मकल्पातिदेशोऽर्थसिद्धः सविशेषः

**[3]'केशश्मश्रु' इति च केशान्ते ॥**

(१) विशेषः । * कभा.

(२) केशान्ते पुनः 'उष्णेन वाय उदकेनेह्यदिते केशश्मश्रु वप' इति विशेषः । ‡ हभा.

**त्रिः क्षुरेण शिरः प्रदक्षिणं परिहरति, समुखं केशान्ते ॥**

(१) क्षुरेण भ्रामणेन शिरः प्रदक्षिणं त्रिः करोति सकृन्मन्त्रेण द्विस्तूष्णीम् । केशान्ते तु समुखमिति विशेषः । जभा.

(२) मुखसहितं शिरः परिहरति केशान्ते कर्मणि । † गभा.

**'मुखम्' इति च केशान्ते ॥**

(१) मन्त्र(? मन्त्रे) विशेषः । कभा.

* जभा. कभावत् ।

‡ गभा., विभा. हभावत् ।

† विभा. गभावत् ।

(१) वागृ. ९.

(२) आग्निगृ. २।२।५.

(३) पागृ. २।१।७, १७, १९, २४, २५.

(२) केशान्ते तु 'मुखम्' इति च मन्त्रान्ते वाच्यम्। § जभा.

(३) 'शिरो मुखं माऽस्याऽऽयुः प्रमोषीः' इत्येवं केशान्तेऽध्याहरणीयो मन्त्रः। विभा.

गां केशान्ते ॥

(१) तस्यैव आचार्यस्य, नेतरस्येति। ¶ कभा.

(२) स्वाचार्याय केशान्ते संस्कृतोऽपि गाम्।
जभा.

(३) केशान्ते कर्मणि $ संस्कार्यस्य आचार्याय गां ददाति। हभा.

(४) केशान्ते कर्मणि केशान्तसंस्कारकर्ता स्वाचार्याय गां ददाति। संस्कार्यस्याऽऽचार्यायेति हरिहरः।
गभा.

**संवत्सरं ब्रह्मचर्यमवपनं च केशान्ते द्वादशरात्रं षड्रात्रं त्रिरात्रमन्ततः ॥**

(१) संवत्सरं ब्रह्मचर्यमवपनं च केशान्ते व्रतं भवति। 'द्वादशरात्रं षड्रात्रं त्रिरात्रमन्ततः', स चायं विकल्पः। तुल्यं हि स्मरणमन्यत्रेति। कभा.

(२) संवत्सरमिति केशान्ते एव संवत्सरादिकालं ब्रह्मचर्यव्रतम्, न तु कुमारस्य, असंभवात्। अवपनं च विहितवपनव्यतिरिक्तवपनाभावोऽत्रैव। ब्रह्मचर्यकालविकल्पश्च शक्तिश्रद्धापेक्षः। जभा.

(३) केशान्तकर्मानन्तरं संवत्सरं यावत् ब्रह्मचर्यं भवेत्। अवपनं केशान्ते। द्वादशरात्रं षड्रात्रं त्रिरात्रमन्ततः। केशान्तकर्मानन्तरं यावज्जीवमवपनं च विहितवपनव्यतिरेकेण। हभा.

(४) केशान्तकर्मानन्तरं केशान्तकर्मणा यः संस्कृतः स संवत्सरं यावद्ब्रह्मचर्यं चरेत्। स्त्रीसंभोगं न कुर्यादित्यर्थः। अवपनं च केशान्तोत्तरकालं संस्कृतः संवत्सरं वपनं वर्जयेत्। चशब्दः संवत्सरानुवृत्त्यर्थः। केशान्तकर्मोत्तरमवपनं च यावज्जीवं शास्त्रीयवपनव्यतिरेकेणेति वासुदेवहरिहरगर्गाः। संवत्सरं ब्रह्मचर्यमवपनं च द्वादशरात्रं वा षड्रात्रं त्रिरात्रं वा। एते चत्वारो विकल्पाः पूर्वपूर्वाशक्त्या। गभा.

---

§ हभा., गभा. जभावत्।

¶ विभातात्पर्यं कभावत्।

$ अत्रेदं विचार्यम्–अत्र संस्कार्याचार्ययोर्ददातिवैयधिकरण्यात् दानकर्ता संस्कारकर्ता च संस्कार्यात् दानसंप्रदानाचार्याच्चान्यः कश्चित् पित्रादिरिति प्रतीयते। तथा चोक्तं स्वयमेवाग्रे– 'अत्र गर्भाधानादिषु विवाहपर्यन्तेषु संस्कारकर्मसु मुख्यत्वेन पितैव कर्ता, तदभावे संनिहितोऽन्यः' इति। इममेव हरिहराभिप्रायं गदाधरोऽपि प्रतिपद्यते, स्वयमपि तृतीयस्यैव संस्कारदानयोः कर्तृत्वमभिप्रैतीति च तद्भाष्यात्प्रतीयते। प्रयोगग्रन्थे तु हरिहरः 'यस्य केशान्तः स स्वाचार्याय गां ददाति' इति पूर्वग्रन्थविरुद्धं संस्कार्यस्य दानकर्तृत्वं ब्रवीति। जयरामोऽपि संस्कार्यस्यैव दानकर्तृत्वमाह। ततश्च संस्कार्यतदाचार्याभ्यामन्यस्य संस्कारकर्तृत्वे तस्यैव दानकर्तृत्वोपपत्तौ संस्कार्यस्य तदुक्तेराचार्यस्य संस्कारकर्तृत्वमर्थसिद्धम्। प्रयोगपारिजातादिबहृचप्रयोगग्रन्थेष्वप्याचार्यस्यैव संस्कारकर्तृत्वमुक्तम्। आचार्यस्य संस्कारकर्तृत्वेऽपि दानसंप्रदानत्वेन दानकर्तृत्वायोगात् दानमात्रकर्तृत्वं संस्कार्यस्य न विरुध्यते। तत्राऽऽचार्यस्त्रिविधः संभवति–वेदाध्यापकः, ब्रह्मयज्ञादाविव होमादि कर्म कर्तुं विशिष्यास्मिन् कर्मणि वृतः कर्माचार्यः, विशिष्यास्मिन् कर्मणि वरणाभावेऽपि सामान्यतो वृतः कुलाचार्यश्चेति। तत्रास्मिन् कर्मणि कर्माचार्यवरणस्य केनाप्यनुक्तत्वात् कुलाचार्यस्य कुलाचार्यत्वेन संस्कारकर्तृत्वायोगाच्च वेदाध्यापक एवाऽऽचार्यो ग्रहीतुं युक्तः। स च क्वचित् पिताऽपि स्यात्, क्वचित् कुलाचार्योऽपि स्यादित्यन्यदेतत्। गदाधरस्तु अन्यथा प्रतिष्ठते। तथाहि– गदाधरभाष्ये दानसंप्रदानमाचार्यो न कर्माचार्यः, उक्तहेतोः, 'स्वस्य' इति 'संस्कार्यस्य' इति चाऽऽचार्यव्यधिकरणविशेषणयोर्वैयर्थ्याच्च। नापि वेदाध्यापकः, संस्कार्यवेदाध्ययनसंबन्धिन्यस्मिन् व्रतकर्मणि तदध्ययनसंबन्धिनमाचार्यं हित्वा तदध्ययनासंबन्धिने संस्कारकर्तुराचार्याय दानस्यान्याय्यत्वात्। तस्मात् कुलाचार्य एव तत्राभिप्रेत इति मन्तव्यम्। विश्वनाथोऽपि 'कुलाचार्याय वरमभिलषितं ददातीत्यर्थः' इति पूर्वसूत्रव्याख्यानोक्तं कुलाचार्यमेवात्रापि दानसंप्रदानं मन्यत इत्यवगम्यते। कर्माचार्योऽप्येवमेवेति प्रतिभाति।

(५) यद्यपि चूडासंस्कार्यस्याप्राप्तिरर्थात्तथापि स्पष्टार्थं केशान्त इत्युक्तम्, अवपनस्य कर्माङ्गतानिर्देशार्थं वा । विभा.

[1]गोदाने गोमिथुनम् । तस्माद्गोदानमिति ॥

## गोभिलगृह्यसूत्रम्

गोदाने चूडाकर्मकल्पातिदेशः सविशेषः, वर्णभेदेन दक्षिणाभेदः, उपनयनं तत्रोपनयनकल्पातिदेशः सविशेषश्च, व्रतमनाचरिष्यत उपनयनाभावः, व्रतनियमाः

[2]चूडाकरणेन केशान्तकरणं व्याख्यातम् ॥

ब्रह्मचारी केशान्तान् कारयते ॥

सर्वाण्यङ्गलोमानि संहारयते ॥

गोमिथुनं दक्षिणा ब्राह्मणस्य ॥

अश्वमिथुनं क्षत्रियस्य ॥

अविमिथुनं वैश्यस्य ॥

गौर्वैव सर्वेषाम् ॥

अजः केशप्रतिग्राहाय ॥

उपनयनेनैवोपनयनं व्याख्यातम् ॥

न त्विहाहतं वासो नियुक्तम् ॥

नालंकारः ॥

नाचरिष्यन्तं संवत्सरमुपनयेत् ॥

वार्क्षं चास्मै दण्डं प्रयच्छन्नादिशति ॥

आचार्याधीनो भवान्यत्राधर्माचरणात् ॥

क्रोधानृते वर्जय ॥

मैथुनम् ॥

उपरि शय्याम् ॥

कौशीलवगन्धाञ्जनानि ॥

स्नानम् ॥

अवलेखनदन्तप्रक्षालनपादप्रक्षालनानि ॥

क्षुरकृत्यम् ॥

मधुमांसे ॥

गोयुक्तारोहणम् ॥

अन्तर्ग्राम उपानहोर्धारणम् ॥

स्वयमिन्द्रियमोचनमिति ॥

मेखलाधारणभैक्षचर्यदण्डधारणसमिदाधानोदकोपस्पर्शनप्रातरभिवादा इत्येते नित्यधर्माः ॥

(१) पागृ. २।७ (चौखम्बामुद्रितपुस्तकम्).
(२) गोगृ. ३।१।२–२७.

## खादिरगृह्यसूत्रम्

गोदाने समस्तव्याहृतिहोमः, गोदाने चौलकल्पातिदेशः सविशेषः, वर्णभेदेन दक्षिणाभेदः, उपनयनं तत्रोपनयनकल्पातिदेशश्च, व्रतनियमाचरणं नियतम्

[1]एवं चौलोपनयनगोदानेषु ॥

‡ चतुर्थीमात्रातिदेशः । ननु गोदानग्रहणमनर्थकम्, 'गोदाने चौलवत्कल्पः' इत्यनेनैव सिद्धत्वात् । न, तत्र केशक्लृप्तिमात्रस्यातिदेशात् । रुद्रभा.

[2]गोदाने चौलवत्कल्पः ॥

अथ गोदानोपाकरणम् । तत्र चौलवत् केशक्लृप्तिः वपनमित्यर्थः । वपनाङ्गत्वान्नापितादिरप्यतिदिश्यते । कृसरस्थालीपाकः, माता, 'त्र्यायुषम्' इति च त्रयं निवर्तते, अतदर्थत्वात् । होमस्त्वस्ति, 'एवं चौलोपनयनगोदानेषु' इति वचनात् । समस्ताभिर्व्याहृतिभिः होमः कर्तव्यः । रुद्रभा.

सलोमं वापयेत् ॥

स्पष्टम् । रुद्रभा.

गोअश्वाविमिथुनानि दक्षिणाः पृथग्वर्णानाम् ॥

गोमिथुनमश्वमिथुनमविमिथुनं च यथाक्रमं ब्राह्मणादीनां गोस्थाने स्यात् । रुद्रभा.

सर्वेषां वा गौः ॥

स्पष्टम् । रुद्रभा.

अजः केशप्रतिग्रहाय ॥

यः केशान् निखनेत् तस्मै देयः । रुद्रभा.

उक्तमुपनयनम् ॥

‡ पूर्वोक्ता समस्ताभिर्व्याहृतिभिश्चतुर्थी आहुतिश्चतुर्थीपदार्थः ।

(१) खागृ. १।३।१०.
(२) खागृ. २।५।१–७.

चौलवद्वपनान्तं कृत्वा पुनरेकदेशं प्रणीय उपनयनवत्कृत्स्नं कुर्यात् । 'गोदानव्रतं चरिष्यामि' इति मन्त्रविकारः । समीपनकनवाध्यापनार्थत्वात् सावित्र्यध्ययनमपि तद्वदेव कुर्यात् । यदुपनयनं गोदानेऽपि तदेवोक्तमिति सूत्रयोजना । रुद्रभा.

**नाचरिष्यन्तं संवत्सरम् ॥**

यस्य संवत्सरं चरिष्यामीति बुद्धिस्तमेवेदं व्रतं ग्राहयेत् । यस्य तु न चरिष्यामीति बुद्धिस्तं न ग्राहयेदित्यर्थः । तमपि केनाप्युपायेन तथाबुद्धिमुत्पाद्य ग्राहयेदेव । रुद्रभा.

## जैमिनिगृह्यसूत्रम्

गोदाने चूडाकर्मकल्पस्य उपनयनव्रतादेशनस्य चातिदेशः सविशेषः, स्नानोन्मर्दनानुलेपनानि, आदर्शवीक्षणम्, व्रतादेशनम्, व्रतनियमातिदेशः, दक्षिणादानम्

**[1]चौडकरणेन मन्त्रा व्याख्याताः ॥**

अविकृतं विरूपाक्षहोमान्तं कर्तव्यम् । स्नानीयादि(भि)श्च प्रोक्ष्य इति विशेषः । श्रीव्या.

**उपनयनेन व्रतादेशनम् ॥**

वक्ष्यमाणम् 'अपोद्धृत्य स्रजमादेशयेत' इत्यादेशनमुपनयनेन व्याख्यातमिति शेषः । 'तदेतद्व्रतादेशनं सर्वत्र' इति सिद्धे इदमुपनयनादिष्टस्य महतो व्रतस्येह निवृत्तिं ज्ञापयति । अतो विरूपाक्षाहुत्यनन्तरं व्रतान्तसमिध आधेयाः । पुनरादेशकालं तु वक्ष्यति— 'अपोद्धृत्य स्रजमादेशयेत' इति । श्रीव्या.

**न त्विह नियुक्तमहतं वासः ॥**

इह व्रतादेशेऽहतं वासः न नियुक्तं न नियतम् । अस्तु वा मा वेत्यर्थः । अत एव सर्वत्र व्रतादेशेषूपनयनवन्नूतनवस्त्राद्यस्तीति ज्ञायते । श्रीव्या.

**सर्वाणि लोमनखानि वापयेच्छिखावर्जमित्यौद्गाहमनिः ॥**

समिदाधानादनन्तरमुदकदानाद्याः । वपने त्वयं विशेषः । औद्गाहमनिराचार्यः । आचार्यग्रहणं पूजार्थम् । श्रीव्या.

---

(१) जैगृ. १।१८.

**उप्तकेशः स्नायात् ॥**

उप्तकेशः धान्यपल्वले गोष्ठे वा निखातकेशः । श्रीव्या.

**'वनस्पतेः' इति वनस्पतीनां स्नानीयेन त्वचमुन्मृद्नीते । 'वनस्पतेस्त्वगसि शोधनि शोधय मा तां त्वाऽभिहरे दीर्घायुष्ट्वाय वर्चसे' इति ॥**

वनस्पतीनां चर्मणा संपिष्टेन स्नानीयेन । वनस्पतेस्त्वगसि त्वं हे शोधनि, मा शोधय । तां त्वा अभिहरे धारयामि । श्रीव्या.

**'वनस्पतीनां गन्धोऽसि' इति स्नात्वाऽनुलेपनेन कुरुते । 'वनस्पतीनां गन्धोऽसि पुण्यगन्ध पुण्यं मे गन्धं कुरु देवमनुष्येषु तं त्वाऽभिहरे दीर्घायुष्ट्वाय वर्चसे' इति । 'वनस्पतीनां पुष्पमसि' इति स्रजमाबध्नीते । 'वनस्पतीनां पुष्पमसि पुण्यगन्ध पुण्यं मे गन्धं कुरु देवमनुष्येषु तं त्वाऽभिहरे दीर्घायुष्ट्वाय वर्चसे' इति ॥**

कुरुते आत्मानमलंकुरुते । देवेषु मनुष्येषु च मध्ये मे पुण्यं गन्धं कुरु । शिष्टं स्पष्टम् । श्रीव्या.

**'आदर्शोऽसि' इत्यादर्श आत्मानं वीक्षेत । 'आदर्शोऽस्या मा दृश्यासन् देवमनुष्या उभये शोभोऽसि शोभासमहं देवमनुष्येषु रोचोऽसि रोचासमहं देवमनुष्येषु' इति ॥**

आदर्शोऽसि त्वम् । देवमनुष्या उभये माम् आदृश्यासन् आदरेण दृश्यासुः । शोभोऽसि शोभयिताऽसि त्वम् । देवेषु मनुष्येषु च मध्ये अहं शोभासं शोभिषीय । रोचोऽसि रोचयिताऽसि त्वम् । देवमनुष्येषु अहं रोचासं रोचिषीय । श्रीव्या.

**अपोद्धृत्य स्रजमादेशयेत ॥**

अपोद्धृत्य अपनीय स्रजमस्याऽऽचार्य आदेशयेत व्रतसमिध आधापयेत् । एतत्कर्मादौ निवर्तितस्य व्रतस्य पुनरत्राऽऽधानम् । श्रीव्या.

**उक्ता धर्माः संवत्सरेषु । गौर्दक्षिणा ॥**

कुतः ? – उक्ता इति । प्राक्संवत्सरेषूक्ता एवात्रापि नियमा न नूतनमिति भावः । तत उत्तरतन्त्रं प्रायश्चित्तान्तं कृत्वा मूर्धारम्भजपः । भीव्या.

## कौशिकगृह्यसूत्रम्

संभारसंभरणम्, होमपूर्वाङ्गम्, शान्त्युदककरणम्, तेनाग्निपर्युक्षणमाणवकसंप्रोक्षणे, शकृत्पिण्डस्थालग्राहोपवेशनम्, होमः, संपातानयनम्, वपनविधिः, स्नानालंकरणवासःपरिधापनानि, परिणयनम्, वासोग्रहणमन्यवाससः परिधापनं च, स्थालीपाकप्राशनम्, होमः, मातापितृभ्यां परस्परस्मै कुमारदानम्, घृतपिण्डाशनम्

**[१] 'आयुर्दाः' इति गोदानं कारयिष्यन्संभारान्संभरति ॥**

**अमम्रिमोजोमानीं दूर्वामकर्णमश्ममण्डलमानडुहशकृत्पिण्डं षड् दर्भप्रान्तानि कंसमहते वसने शुद्धमाज्यं शान्ता ओषधीर्नवमुदकुम्भम् ॥**

**बाह्यतः शान्तवृक्षस्यैध्मं प्राञ्चमुपसमाधाय ॥**

**परिसमुह्य पर्युक्ष्य परिस्तीर्य बर्हिरुदपात्रमुपसाद्य परिचरणेनाऽऽज्यं परिचर्य ॥**

**नित्यान्पुरस्ताद्धोमान् हुत्वाऽऽज्यभागौ च ॥**

**पश्चादग्नेः प्राङ्मुख उपविश्यान्वारब्धाय शान्त्युदकं करोति ॥**

**तत्रैतत्सूक्तमनुयोजयति ॥**

**त्रिरेवाग्निं संप्रोक्षति त्रिः पर्युक्षति ॥**

मातल्यन्तेन शान्त्युदकेन त्रिरेवाग्निम् । दाकेटी.

**त्रिः कारयमाणमाचामयति च संप्रोक्षति च ॥**

माणवकम् । दाकेटी.

**शकृत्पिण्डस्य स्थालरूपं कृत्वा सुहृदे ब्राह्मणाय प्रयच्छति ॥**

**तत्सुहृद्दक्षिणतोऽग्नेरुदङ्मुख आसीनो धारयति ॥**

**अथास्मा अन्वारब्धाय करोति ॥**

(१) कौसू. ५३।१–२३.

**'आयुर्दाः' इत्यनेन सूक्तेनाऽऽज्यं जुह्वन्मूर्ध्नि संपातानानयति ॥**

उत्तरसंपातान्दक्षिणतः सुहृदो हस्ते शकृत्पिण्डे आनयति । दाकेटी.

**दक्षिणे पाणावश्ममण्डल उदपात्र उत्तरसंपातान् स्थालरूप आनयति ॥**

**अमम्रिमोजोमानीं चोदपात्रेऽवधाय ॥**

**स्थालरूपे दूर्वां शान्त्युदकमुष्णोदकं चैकधाऽभिसमासिच्य ॥**

उदपात्रे पोथिकां गुडूचीं च प्रक्षिप्य ततः संपातः । शकृत्पिण्डे दूर्वां कृत्वा ततः संपातः । शान्त्युदकमुष्णोदकं चैकधाराभिः समासिच्य । दाकेटी.

**'आऽयमगन्सविता क्षुरेण' उत्युदपात्रमनुमन्त्रयते ॥**

**'अदितिः श्मश्रु' इत्युन्दति ॥**

'अदितिः श्मश्रु' इति ओद( ? उन्द )नम् । दाकेटी.

**'यत्क्षुरेण' इत्युदकपत्रं क्षुरमद्भिः प्रक्षाल्य त्रिः प्रमार्ष्टि ॥**

**'येनावपत्' इति दक्षिणस्य केशपक्षस्य दर्भपिञ्जूल्या केशानभिनिधाय प्रच्छिद्य स्थालरूपे करोति ॥**

**एवमेव द्वितीयं करोति ॥**

**एवं तृतीयम् ॥**

**एवमेवोत्तरस्य केशपक्षस्य करोति ॥**

**[१] अथ नापितं समादिशति– 'अक्षण्वन्वप केशश्मश्रुरोम परिवप नखानि च कुरु' इति ॥**

अत्र ब्राह्मणवाचनं वृद्धस्त्रीभिर्गीतिं च कारयेत् । अथ नापिताय प्रैषं ददाति । दाकेटी.

**'पुनः प्राणः, पुनर्मैत्विन्द्रियम्' इति त्रिर्निमृज्य ॥**

**'त्वयि महिमानं सादयामि' इत्यन्ततो योजयेत् ॥**

(१) कौसू. ५४।१–१४.

क्षुरं मार्जयित्वा नापिताय प्रयच्छति पुनर्वपनार्थम् ।
दाकेटी.

**अथैनमुप्तकेशश्मश्रुं कृतनखमाप्लावयति ॥**

**'हिरण्यवर्णाः' इत्येतेन सूक्तेन गन्धप्रवादाभिरलंकृत्य ॥**

**'स्वक्तं मे' इत्यानक्ति ॥**

**अथैनमहतेन वसनेन परिधापयति– 'परिधत्त' इति द्वाभ्याम् ॥**

**'एह्यश्मानमातिष्ठ' इति दक्षिणेन पादेनाश्ममण्डलमास्थाप्य प्रदक्षिणमग्निमनुपरिणीय ॥**

वेद्युपरि प्रदक्षिणमग्निमनुपरिणीय । दाकेटी.

**अथास्य वासो निर्मुष्णाति– 'यस्य ते वासः' इत्येतया ॥**

उपरितनं वस्त्रं गृह्णाति कर्ता । दाकेटी.

**अथैनमपरेणाहतेन वसनेनाऽऽच्छादयति– 'अयं वस्ते गर्भं पृथिव्याः' इति पञ्चभिः ॥**

परिधानवस्त्रेण उपरि आच्छादयति माणवकम् ।
दाकेटी.

**'यथा द्यौः, मनसे चेतसे धिये' इति महाव्रीहीणां स्थालीपाकं श्रपयित्वा शान्त्युदकेनोपसिच्याभिमन्त्र्य प्राशयति ॥**

'यथा' इत्यादि प्रथमतो व्याख्यानं कृत्वा ततो गोदानं प्रारभम् । आयुष्यमन्त्रा आयुष्यकर्ममध्ये पठिताः । दाकेटी.

**'प्राणापानौ, ओजोऽसि' इत्युपदधीत ॥**

आज्यं जुहोति । समिध आदधाति । पालाशादयः । पुरोडाशं पयः ओदनं पायसं पशुं जुहोति आवपति ।
दाकेटी.

**'तुभ्यमेव जरिमन्' इति कुमारं मातापितरौ त्रिः संप्रयच्छेते ॥**

पितुर्मन्त्राः, न मातुः । दाकेटी.

**घृतपिण्डानाशयतः ॥**

परिदानानि । गोदानं समाप्तम् । दाकेटी.

## आश्वलायनस्मृतिः

गोदाने चौलकल्पातिदेशः सविशेषः, दक्षिणादानाद्यङ्गफलानि

**'दद्याद्गोमिथुनं भक्त्या गोदाने गुरवे द्विजः ।**
**तेन देवाश्च वेदाश्च तृप्यन्ति ऋषयस्तथा ॥**
**षोडशाब्दात्प्रभृत्यस्य स्वतन्त्रत्वात्तु तद्व्रते ।**
**मन्त्राण्यात्मनि योज्यानि क्रिया गृह्ये समीरिताः ॥**

**गोदाने परिदानान्ते तिष्ठेच्छेषं दिनस्य तु ।**
**वाग्यतस्तृप्तये विप्रो मुनीनां स्वगुरोरपि ॥**
**गुरुमस्तमिते भानौ वदेच्छिष्यः कृताञ्जलिः ।**
**भक्त्या वरं ददामीति दद्याद्गोमिथुनं तदा ॥**
**प्राप्ते षोडशवर्षे तु मातुरङ्को न शस्यते ।**
**न कुर्वन्तीति यत्तस्मादिन्द्रियाणि निरस्य वै ॥**
**भूमौ न चैवोपविशेदबालोऽध्ययनाद्दते ।**
**वरिष्ठानां च मानार्थे न कर्मसु कदाचन ॥**
**गोदाने चौलवत्प्रायः श्मश्रूणां छेदनं भवेत् ।**
**ललाटादि ललाटान्तं श्मश्रूणां मुण्डनं भवेत् ॥**
**छेदनं दक्षकर्णादि श्मश्रुमध्यान्तमिष्यते ।**
**त्रिवारं वामकर्णादि मध्यान्तं च त्रिवारकम् ॥**
**चतुर्थे श्मश्रुमध्ये स्यात्त्रिभिर्मन्त्रैः सकृत्तथा ।**
**अधोभागे शिखायाश्च चूडाकरणकर्मणि ॥**
**तत्र देवाश्रयत्वात्तु तत्र तत्र तथा तथा ।**
**सर्वदेवाश्रयं मध्यं सर्वाभिस्तत्र तद्भवेत् ॥**

## स्मृत्यन्तरम्

गोदाने चौलकल्पातिदेशः सविशेषः

**'गोदानं चौलवत् कार्यं षोडशेऽब्दे तदुच्यते ।**
**अङ्कोपवेशनं नास्ति श्मश्रूणामुन्दनं भवेत् ॥**

अत्र मातुरुपस्थ उपवेशनं न भवेत्, अबालत्वात् ।
संग. ७३२

(१) आश्वस्मृ. ११।२६०–२६१, २६९–२७०, २७४–२७९.
(२) संग. ७३२.

## स्मृतिसंग्रहे

गोदाने चौलकल्पातिदेशः सविशेषः

[1]जाताधिकाराद्गोदानं जन्माद्यब्दे तु षोडशे ।
चौलेन च समाख्यातं विधान्ते तच्च वै भवेत् ॥

[2]आसित्वा पश्चिमां संध्यामाचार्यस्य समीपतः ।
अहं वरं ददामीति वाचमेतामुदीरयेत् ॥

## शौनककारिकाः

गोदाने चौलकल्पातिदेशोऽर्थसिद्धः तत्र विशेषाश्च, आऽस्तमयाद्वाङ्नियमः , दक्षिणादानम् , व्रतादेशनम्

[3]अबालत्वाज्जनन्यङ्के निवेशोऽप्यस्य नेष्यते ।
केशशब्दोक्तिदेशेषु श्मश्रुशब्दमुदीरयेत् ॥

[4]श्मश्रूणामेव सेकोऽत्र न केशानामितीरितम् ।
केशान् वपत्वित्यत्रापि श्मश्रूणीति समीरयेत् ॥

[5]केशपक्षे तु कर्तव्यं श्मश्रुपक्षे तदाचरेत् ।
क्षुराभिमर्शने मन्त्रे यत्क्षुरेणादिकेष्वपि ॥

[6]श्मश्रूणि शुन्धीत्युक्त्वाऽथ शिरोमुखमुदीरयेत् ।
यः शीतोष्णाभिरित्यादिमन्त्रो नापितशासनः ॥

[7]तत्र केशश्मश्रुलोमनखानीति पदात् परम् ।
उदक्संस्थानि कुशलीकुर्वित्येवमुदीरयेत् ॥

‡ [1]ततः स्नाते समीपस्थे तस्मिन्निष्टकृदादिकम् ।
उपरिष्टात्तनं तन्त्रमाचार्यस्तु समापयेत् ॥

[2]शिष्यः स्नात्वा ततो वाचं नियम्याऽऽदिवसक्षयात् ।
तिष्ठेदस्तमिते सूर्ये गुरोरन्तिकमागतः ॥

[3]वरं ददामीत्युक्त्वा च गोवृषौ गुरवे दिशेत् ।
असंभवे गोवृषयोर्भिक्षित्वा वा गुरोर्दिशेत् ॥

[4]उत्तरेद्युर्गुरुस्तस्य वत्सरं व्रतमादिशेत् ॥

## कुमारिलकारिकाः

गोदाने चौलकल्पातिदेशः सविशेषः , आऽस्तमयाद्वाग्यमनम् , दक्षिणादानम् , व्रतादेशनम्

[5]गोदानं चौलवत् कार्यं षोडशेऽब्दे तदुच्यते ।
अङ्कोपवेशनं नास्ति श्मश्रूणां वापनं भवेत् ॥

[6]अदितिः श्मश्रूणि वपत्वाप उन्दन्तु वर्चसे ।
पिञ्जूलादिनिधानं च श्मश्रुपक्षे भवेदिह ॥

[7]निमार्जने विशेषोऽयं श्मश्रूणीति शिरोमुखम् ।
शासने नापितस्यायं विशेषः प्रैष उच्यते ॥

केशश्मश्रुलोमनखान्युदक्संस्थानि कुर्विति ।
स्नात्वा च वाग्यतस्तिष्ठेदहःशेषं नयेदथ ॥

---

(१) प्रपा. २८३–२८४ ; संग. ७३१ पृ., मुहूर्तरत्ने.

(२) प्रपा. २८४.

(३) शौका. २ पृ. ५२ ; प्रपा. २८३ ; संप्र. ५६० ; संग. ७३२–७३३ शशब्दोक्ति (शान्त्योक्तिप्र).

(४) शौका. ३ पृ. ५२ ; प्रपा. २८३ ; संप्र. ५६१ ; संग. ७३३ न केशा ( सकेशा ).

(५) शौका. ४ पृ. ५२ मन्त्रे (मन्त्रं) ; प्रपा. २८३ तु ( च ) तदा (समा ) ; संप्र. ५६१ कर्तव्यं (कर्तव्ये) तदाच ( तदा च ) ; संग. ७३३ ने मन्त्रे ( नं मन्त्रं ).

(६) शौका. ५ पृ. ५२ ; प्रपा. २८३ ; संप्र. ५६१ ; संग. ७३३ शुन्धी ( छिन्धी ).

(७) शौका. ७ पृ. ५२ ; प्रपा. २८३ ; संप्र. ५६१ ; संग. ७३३.

‡ शौनककारिकासु एतत्पूर्वश्लोकोत्तरं '७' इति क्रमाङ्कः प्रमादाल्लिखितः, अयं श्लोकश्च न विद्यते । ततोऽनुमीयते– अयं श्लोको लेखकप्रमादात् परिभ्रष्ट इति ।

(१) प्रपा. २८३ ; संप्र. ५६१ ; संग. ७३३.

(२) शौका. ८ पृ. ५२ ; प्रपा. २८३ ; संप्र. ५६१ ; संग. ७३३.

(३) शौका. ९ पृ. ५२ ; प्रपा. २८३ ; संप्र. ५६१ च ( ऽथ ) ; संग. ७३३ संप्रवत्.

(४) शौका. १० पृ. ५२ ; प्रपा. २८३ ; संप्र. ५६१ ; संग. ७३३.

(५) कुका. १।१६।१ ; प्रपा. २८३ वापनं (मुण्डनं) ; धप्र. ४४ प्रपावत् .

(६) कुका. १।१६।२ ; प्रपा. २८३ नं च (नान्तं).

(७) कुका. १।१६।३–४ ; प्रपा. २८३.

[1]आदित्येऽस्तमिते वाचं विसृजेतान्तिके गुरोः ।
उक्त्वा वरं ददामीति दद्याद्गोमिथुनं ततः ॥
[2]श्वः पूर्ववद्व्रतादेशः संवत्सरमिदं चरेत् ॥

### रेणुकारिकाः

गोदाने चौलकल्पातिदेशः सविशेषः , व्रतादौ नान्दीश्राद्धम्

[3]केशान्ताख्यमिदं कर्म व्याख्यातं चौलकर्मणा ॥

(१) कुका. १।१६।५ ; प्रपा. २८३ उक्त्वा (अहं).
(२) कुका. १।१६।६ ; प्रपा. २८३.
(३) रेका. २ पृ. ४२ ; संग. ७३२.

[1]विशेषोऽयं वरा गौः स्याच्चतुर्वर्षेति गोभिलः ।
संवत्सरं ब्रह्मचर्यं व्रतं स्याद्युक्तिवर्जितम् ॥

तत्राऽऽरम्भनिमित्ताङ्गं भवेन्नान्दीमुखं गुरोः ।
तत्रेयं च भवेदागुरिमं केशान्तकर्मसु ॥

संस्करिष्य इति...... ॥

(१) रेका. ३–५ पृ. ४२.

# संमितव्रतप्रयोगः

## बौधायनगृह्यसूत्रम्

सर्ववेदसंमितविधानम् , संमितव्रतस्य संवत्सरादिः कालसंक्षेपः, अब्रह्मचारिणो व्रते वपनादिर्विशेषः, व्रतोपाकरणे होमो वरप्रदानं च तदतिदेशो व्रतविसर्गे च, व्रतनियमाः, तर्पणम्, संमितप्रत्याम्नायः पराकव्रतम्, व्रतफलम्, दक्षिणादानम्, आपदि उग्रतः शूद्रतो वा आचार्यार्थ-द्रव्याहरणे न दोषः

* [1]सर्ववेदसंमितमित्याचक्षते ॥

तस्य द्वादश संवत्सरानेकादश नव सप्त पञ्च त्रीन् संवत्सरान् षण्मासान् चतुरो मासान् द्वौ मासौ मासं वा व्रतं चरेत् ॥

तस्योपदेशात् प्रतिपत्तिरवसानं च ॥

तस्य नित्येऽधिब्रह्मचर्ये त्रिषवणमभिषेक उत्सन्नशय्या आसनं च ॥

यन्मातुर्दुश्चरितं तस्मादेनं त्रायत इत्युपदिशति । मन्त्रब्राह्मणं वेद इत्याचक्षते ॥

[1]अष्टाचत्वारिंशत्संमितं संमितमित्याचक्षते ॥

[2]तस्य संक्षेपः संवत्सरः ॥

[3]तत् संवत्सरमनुव्याख्यास्यामः ॥

[4]स यदि ब्रह्मचारी स्यान्नियममेव प्रतिपद्येत ॥

[5]अथ यद्यब्रह्मचारी, स्यात् केशश्मश्रुलोमनखानि वापयित्वा तीर्थं गत्वा स्नात्वाऽप आचम्य सुरभिमत्याऽब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिर्व्याहृतिभिरिति मार्जयित्वाऽन्तर्जलगतोऽघमर्षणेन षोडश प्राणायामान् धारयि-

---

* एतदादिसूत्रपञ्चकं गोदानविषयकं वा संमितविषयकं वा अपूर्वव्रतान्तरविषयकं वेति न निर्णीयते । तथाहि– 'षोडशे वर्षे गोदानम्' ( ३।२।५२ ) इत्यादिपञ्चसूत्र्या चौलगोदानं विहितम्, ततो द्विसूत्र्या ( ३।२।५७, ५८ ) अग्निगोदानं विहितम्, तत एतदादिः पञ्चसूत्री पठिता ( ३।२।५९–६३ ), ततः 'अष्टाचत्वारिंशत्संमितं संमितमित्याचक्षते' ( ३।३।१ ) इत्यादिनाऽध्यायान्तरं कृत्वा विस्तरेण संमितव्रतं विहितमिति स्थितिः । तत्र 'सर्ववेदसंमितमित्याचक्षते' इति समाख्याविधानस्योद्देश्यसाकाङ्क्षस्य प्रकृतगोदानेनाऽऽकाङ्क्षापूरणसंभवात्, सूत्रपुस्तकसंपादकेन श्रीमता शामशास्त्रिणा विषयानुक्रमणिकायां ५२–६३ इति सूत्राणां 'गोदानम्' इति विषयस्यानुक्रान्तत्वाच्च विप्रतिपन्नपञ्चसूत्र्या गोदानविषयकत्वं प्राप्तम्, तत्तु पूर्वं चौलगोदानेऽग्निगोदाने च प्रतिपत्त्यवसानप्रकारस्योक्तत्वेऽपि पुनरत्र तदुक्तेः, बोधायनीयगृह्यकर्मसमुच्चयाख्यप्रयोगग्रन्थे गोदानव्रते एतत्पञ्चसूत्रीविहितविषयाणामसंग्रहाच्च संदिग्धम् । समाख्यातः सर्ववेदसाधारण्यप्रतीतेः संमितशब्दयोगाच्च संमितव्रतविषयकत्वं प्राप्तम्, तत्तु 'अष्टाचत्वारिंशत्संमितम्' इत्यादिना विहितस्य संमितव्रतस्य 'संमितम्' इति निर्विशेषणसमाख्यायाः पुनःकथनात्, अध्यायान्तरकरणात्, तत्र प्रतिपत्तेः कृत्स्नोपदेशस्य अवसाने तदतिदेशस्य च सत्त्वेन पञ्चसूत्रीगतस्य 'तस्योपदेशात्' इत्यादिसूत्रस्य वैयर्थ्यात्, तत्र विस्तरेणोक्तेषु व्रतनियमेष्वेव त्रिषवणाभिषेकादिनियमानां वक्तव्यत्वेऽपि पृथगुपदेशाच्च संदिग्धम् । उक्तैरेव गोदान-संमिताविषयकत्वहेतुभिः सर्ववेदशब्दविशिष्टसंमितशब्दस्य समाख्यान्तरत्वप्रतीतेश्चापूर्वव्रतान्तरविषयकत्वं प्राप्तम्, तत्तु बोधायनीयगृह्यकर्मसमुच्चये सूत्रान्तरेषु च कुत्राप्यस्य व्रतान्तरस्यादर्शनात् संदिग्धम् । एवं निर्णयाभावेनोदासीनैरप्यस्माभिः प्रकरणान्तरकरणापेक्षया समाख्याप्रतीतसर्ववेदसाधारणत्वरूपसाधर्म्यात् संमितशब्दयोगाच्च संमितव्रतप्रकरणान्तर्भावमुचितं पश्यद्भिरियं पञ्चसूत्री संमितव्रतप्रकरणे संगृहीता ।

(१) **बौगृ.** ३।२।५९–६३.

(१) **बौगृ.** ३।३।१ ; उ. २।१८।५ त्संमितं संमित ( त्संमित ).

(२) **बौगृ.** ३।३।२ ; उ. २।१८।५.

(३) **बौगृ.** ३।३।३ ; उ. २।१८।५ तत् ( तं ).

(४) **बौगृ.** ३।३।४ ; उ. २।१८।५ न्नियम (न्निय).

(५) **बौगृ.** ३।३।५ ; उ. २।१८।५ ( अथ ... स्नात्वा ) एतावदेव.

त्वोत्तीर्य वासः पीडयित्वाऽन्यत्प्रयतं वासः परिधायाप आचम्य देवयजनमुद्रानयति ॥

'अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात्कृत्वाऽथाव्रत्यप्रायश्चित्तं जुहोति– 'नाहं करोमि कामः करोति कामः कर्ता कामः कारयितैतत्ते काम कामाय स्वाहा, नाहं करोमि मन्युः करोति मन्युः कर्ता मन्युः कारयितैतत्ते मन्यो मन्यवे स्वाहा ' इति ॥

अथ यथोपदेशं प्रधानाहुतीर्जुहोति– ' याज्ञिकीभ्यो देवताभ्यः संमितीभ्यः स्वाहा ' इति चतस्रः ॥

अथ काण्डऋषिं जुहोति– ' स्वयंभुवे काण्डऋषये स्वाहा ' इति ॥

अथ सदसस्पतिं जुहोति– ' सदसस्पतिम् ' इति ॥

अथ सावित्रीं जुहोति– ' तत्सवितुः ' इत्येताम् ॥

अथ वेदाहुतीर्जुहोति– ' ऋग्वेदाय स्वाहा, यजुर्वेदाय स्वाहा, सामवेदाय स्वाहा, अथर्ववेदाय स्वाहा, अथर्वाङ्गिरोभ्यः स्वाहा, इतिहासपुराणेभ्यः स्वाहा, सर्वदेवजनेभ्यः स्वाहा, सर्वभूतेभ्यः स्वाहा ' इति ॥

अथ चतस्र औदुम्बरीः समिधोऽपरिशुष्काग्रा घृतान्वक्ता अभ्याधापयन् वाचयति ॥

याज्ञिकानां वा वृक्षाणामन्यतमस्य ॥

' अग्ने व्रतपतेऽष्टाचत्वारिंशत्संमितं संमितं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा, वायो व्रतपतेऽष्टाचत्वारिंशत्संमितं संमितं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा, आदित्य व्रतपतेऽष्टाचत्वारिंशत्संमितं संमितं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा, व्रतानां व्रतपतेऽष्टाचत्वारिंशत्संमितं संमितं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा ' इति ॥

अयप्रभृति सिद्धमा धेनुवरप्रदानात् ॥

एवमेव व्रतान्ते । अधोनाभ्युपरिजान्वाच्छाद्य त्रिषवणमुदकमुपस्पृशन्ननग्निपक्ववृत्तिरच्छायोपयोगो नागारं प्रविशेदन्यत्र गुरुनियोगात् ॥

भैक्षं वा तत्कालं भुञ्जीत ॥

कामं कन्दमूलफलम् ॥

अपराह्णे प्रसिद्धमुपस्पृश्य तदपि नोपयुञ्जीत ॥

स्त्रीशूद्रपतितरजस्वलाभिश्च न संभाषेत ॥

कामं मातरमुपाध्यायिनीं भगिनीं च ॥

याश्चान्या एवंयुक्ताः स्त्रियोऽशक्ताः पराक्रमे ॥

सप्रणवा व्याहृतयः प्राणायामाग्नीन्धनभैक्षाचरणस्थानासनशयनोपस्पर्शनद्युमनसो( ?मनो)- निवेदनानि च ॥

सर्वाः संमितदेवतास्तर्पयति– ' ब्रह्माणं तर्पयामि, प्रजापतिं तर्पयामि, परमेष्ठिनं तर्पयामि, स्थाणुं तर्पयामि, शिवं तर्पयामि, शर्वं तर्पयामि, बहुरूपं तर्पयामि, स्कन्दं तर्पयामि, इन्द्रं तर्पयामि, यमं तर्पयामि, ऋषींस्तर्पयामि, पितॄंस्तर्पयामि, सर्वाः संमितदेवतास्तर्पयामि ' इति प्रसंख्याय समाप्नुयात् ॥

गुरोः समानवृत्तिषु गुरुवृत्तिः स्यात् ॥

प्रेषितस्तदेव प्रतिपद्येतान्यत्र पातकात् ॥

एवं द्वादश संवत्सरानेकादश नव सप्त पञ्च त्रीन् संवत्सरान् षण्मासान् चतुरो मासान् द्वौ मासौ मासं वा व्रतं चरेत् ॥

अपि वा योऽनूचानः श्रोत्रियः स द्वादशरात्रं पराकं वा व्रतं चरेत् , न त्वेवासंमिती स्यात् ॥

स एष चरति दशपूर्वान् दशापरानात्मानं चैकविंशतिं पङ्क्तिं च पुनाति ॥

यस्मा उपदिशति यस्यामुपविशति यस्मै ददाति यस्माच्च प्रतिगृह्णाति तत्सर्वं पुनाति ॥

(१) बौगृ. ३।३।६–३३.

व्रतसमाप्तौ वेदसमाप्तौ वा गुरुदक्षिणामाहरे-द्धार्मिको यथाशक्ति ॥

विषमगते त्वाचार्य( ? चार्यार्थम् ) उग्रतः शूद्रतो वाऽऽहरेत् ॥

सर्वतो वोग्रतः शूद्रतोऽप्याचार्यार्थे स्यादाहरणं धार्म्य( ? धर्म्य )मित्येके ॥

## काठकगृह्यसूत्रम्

नियमेष्वाचार्यतन्त्रता, व्रतनियमाः , व्रतफलम् , व्रतान्ते होमः , दक्षिणा

'अथातोऽष्टाचत्वारिंशत्संमितम् ॥

( १ ) व्याख्यास्याम इत्यध्याहारः । व्रतमिति च प्रस्तावाद्गम्यते । चतुर्षु वेदेषु यदष्टाचत्वारिंशत्संवत्सरैः संमितं परिच्छिन्नं व्रतमुक्तं तस्य प्रतिनिधिभूतं संवत्सरनिर्वर्त्यं व्याख्यास्यामः । यस्य वेदमधीयानस्य यथाकालविहितं व्रतं न संपन्नं तेन चैतत्कर्तव्यमधीतवेदचतुष्टयेन च । ¶ अत एव त्रैविद्यकव्रतमिदमुच्यते । स्नानादनन्तरं चास्याभिधाने प्रयोजनम्– स्नातकभूतेनाप्येतत्कर्तव्यं प्राग्विवाहादिति । अन्ये तु– यथाकालविहितव्रतसंपत्तावपि एतद्वार्षिकं व्रतं तपोतिशयसिद्ध्यर्थं कर्तव्यतयाऽनेन विधीयत इति व्याचक्षते । अथशब्दो व्रतपूरणार्थः । यथोक्तम्– 'मङ्गले पूरणे हेतावानन्तर्याधिकारयोः । षट्स्वर्थेष्वथशब्दोऽयं स्मृतः प्राक्प्रस्तुतेऽपि च ॥' । अन्योऽपि चार्थो यथासंभवं योज्यः । अतःशब्दो हेत्वर्थः । यतोऽध्ययनकाले यथाविहितव्रतासंपत्तिः कस्यचित्संभाव्यते, अतो हेतोः प्रतिनिधिभूतं व्रतान्तरं वक्ष्याम इति । देव.

( २ ) गृहस्थाश्रमोत्सुकस्य, न नैष्ठिकस्य । अत्रापि यस्य द्वादश वर्षाणि ब्रह्मचर्यमभिप्रेतं तस्य मासत्रयमेष विधिः , यस्य चतुर्विंशतिं वर्षाणि तस्य मासषट्कम् , यस्य षट्त्रिंशतं वर्षाणि तस्य मासनवकम्... । कलौ तु दीर्घकालब्रह्मचर्यनिषेधादायुषश्च ह्रासादेष विधिरुपपन्नतरः प्रतिभाति । ब्राह्म.

( ३ ) असमावृत्तस्यैवेदम् ¶ आवि.

तत्र विधिविशेषः ॥

( १ ) उच्यत इति शेषः । देव.

( २ ) तत्र त्रैविद्यकविधेरयं विशेषः । आवि.

नियमेष्वाचार्यप्रधानः स्यात् ॥

( १ ) स्नानासनादिकान् वक्ष्यमाणान्नियमान् आचार्यमादाय कुर्यात् । आचार्यप्राधान्येन च वेदगुणनार्थाभ्यासावनुवर्तेते । देव.

( २ ) श्रान्त आचार्यानुशयोपविशेत् स्वपेद्वा । ¶ आवि.

निलयार्थी यूनबद्धं न प्रविशेत् ॥

( १ ) शीतातपभीतो निलयार्थी भूत्वा यूनबद्धं मिश्रवेणुवीरणकाण्डादिनिबद्धं कुटीशालापर्णादिकवासविशेषं न प्रविशेत् । देव.

( २ ) शरणार्थी यूनबद्धं शुल्वबद्धं न प्रविशेत् । आवि.

अनिलयः स्यात् ॥

अन्यत्र वृक्षाद्वल्मीकाद्वा ॥

¶ अत्र देवपालेनोक्तं संमितव्रतस्यैव त्रैविद्यकव्रतत्वं विरुद्धहेतुदर्शनात् संदिग्धम् । तथाहि– संमितव्रतस्याष्टाचत्वारिंशसंवत्सरसाध्यत्वेन मुख्यकल्पभूतेन प्रतिवेदं द्वादश संवत्सरा इति प्रसिद्ध्यनुसारात् चतुर्वेदसाधारण्यं प्रतीयते, त्रैविद्यकव्रतस्य तु समाख्यातो व्याख्यानतश्च वेदत्रयसाधारण्यं प्रतीयते । अग्रिमसूत्रस्य 'धेनुर्दक्षिणा' इत्यन्तिमसूत्रस्य चाऽऽदित्यदर्शनव्याख्यानादपि व्रतयोरनयोर्भेदः प्रतीयते, यद्यप्यन्तिमसूत्रव्याख्याने प्रक्रान्तत्रैविद्यकस्यैवात्राधिकारः प्रतीयते । यद्युभयनामकमेकमेवेदं व्रतं तर्हि चतुःसूत्र्यात्मकेन द्विचत्वारिंशेन सुदूरपठितेन खण्डेन त्रैविद्यके व्रते उच्यमाने सूत्रकारेण व्याख्यातृभिश्चानेन तस्यैककर्मत्वमवश्यं वक्तव्यमपि नोक्तमिति स्वभावविरुद्धम् । अपि च तत्र तृतीयसूत्रव्याख्याने आदित्यदर्शनेन प्रदर्शिते त्रैविद्यकव्रततन्त्रेऽत्रत्या विधयो न संगृहीताः । अतोऽस्माभिस्त्रैविद्यकव्रतस्य संग्रहः पृथक्प्रकरणं कृत्वैवोचित इति प्रतिपन्नम् ।

(१) कागृ. ४१।१–२५.

¶ शेषं देवगतम् ।

न केवलं परनिर्मितमाश्रयविशेषं न प्रविशेत्, यावता स्वयं निलयमात्रमपि न कुर्वीतेत्यर्थः। यद्येवम्, वात्याकरकावृष्ट्याद्युपप्लवादेहभङ्गः स्यादित्याशङ्क्याऽऽह– अन्यत्रेति। वृक्षादिकमाश्रयेदित्यर्थः। वल्मीकं वल्मीकभूम्यादि। † देव.

**निस्तान्तवमित्येके ॥**

तन्तुर्वेणुरिति केचित्। शीताद्युपहतो वंशनिर्मितव्यतिरेकेणाऽऽश्रयान्तरं विशेत्। रज्जुस्तन्तुरित्यन्ये। रज्ज्वादिबन्धैर्यन्निर्वृत्तं शालादि तत्तान्तवम्। † देव.

**यथोक्तमेकं तु वासः शाणी कुतपं वा ॥**

(१) यत्पूर्वमुक्तमेकं वासः तदेवात्रापि। इयांस्तु विशेषः– इह शाणी कुतपं वा। शाणी वरासी, न पुनः क्षौमी प्रसिद्धा। क्लिन्नकुट्टितदर्भनिर्मितेति त्वन्ये। अजलोमनिर्मितं कुतपम्। देव.

(२) यथोक्तमेकं तु वासः अजिनमेव। तुशब्दोऽवधारणार्थे। वासोऽवधार्यते। शाणी वरासी। कुतपं पर्वतीयच्छागरोमकृतं वासः। आवि.

**परिमितमुरःप्रमाणमुपरिजानु ॥**

(१) अस्य वाससः परिमाणमाह– परिमितमिति। उरस आरभ्य जानुनोरुपरिभागं यावद्व्याप्नोति तावत्परिमितमेतत्कर्तव्यमेकमेव त्रैविद्येन। अध्ययनकाले तु अधोभागे पटोलिका त्वासीदुपरि तु मार्गे चर्म, तच्च वास इति नोच्यते लोक इत्युक्तम्। देव.

(२) अल्पमित्यर्थः। आवि.

**चतुर्थकालपानभक्षः ॥**

(१) 'सायं प्रातर्मनुष्याणामशनं देवनिर्मितम्' इति भोजनकालः। तत्र प्रथमदिनस्य सायंप्रातर्लक्षणं कालद्वयम्, द्वितीयदिनस्य च प्रातःकालं वर्जयित्वा सायं चतुर्थे काले भोजनपाने कुर्यादित्येके। एकदिनव्यवधानेन एककालं भुञ्जीतेत्यर्थः। अन्ये त्वाहुः– पीयत इति पानं क्षीरतक्रादि, तदेव चतुर्थकाले पश्चिमप्रहरे भक्षोऽस्येति। क्षीरादिपानीये भक्षशब्दो दृष्टः– 'अब्भक्षो वायुभक्षः' इति। देव.

(२) चतुर्थे चतुर्थे पानकाले भोजनकाले भक्षो यस्य स तथोक्तः। भोजनपानशब्दे(? भोजने पानशब्दं) प्रतीच्या व्यवहरन्ति। आवि.

**असंचयवान् ॥**

(१) हिरण्यादिसंचयं न कुर्वीतेत्यर्थः। देव.

(२) भिक्षित्वा संचयं न कुर्यात्। आवि.

**अहरहर्वा भैक्षमश्नीयात् ॥**

भिक्षाणां समूहो भैक्षम्। पूर्वेण भिक्षाणामपि संचयस्य प्रतिषेधे प्राप्ते प्रतिप्रसवोऽनेन क्रियते। प्रतिदिनं भैक्षमश्नीयात्। शरीरापाटवे तु कदाचिदेकामपि भिक्षामश्नीयात्, अटितुमशक्तः सक्तुकणिकादिकं वा। तावन्मात्रं संचिनुयादित्यनेनाभिप्रायेण वाशब्दः। देव.

**अहस्तिष्ठेद्रात्रावासीत ॥**

कालाध्वनोरत्यन्तसंयोगे अहःशब्दाद्द्वितीया। अहनि तिष्ठेदेव ऊर्ध्व एवाऽऽसीतेत्यर्थः। रात्रौ आसीत उपविशेत्। अतिश्रान्तः स्वप्यादपि कदाचिदन्तरा मनाक्। अत्यन्तसंयोगाभावात् द्वितीयाविरहः। ¶ देव.

**उभयं मुनिव्रतः स्यात् ॥**

उभयम् अहोरात्रं वाक्संयमं कुर्यात्। मुनीनां व्रतमेतत्। § देव.

**स्त्रीशूद्रपतितरभसरजस्वलैर्वा न संभाषेतेति च्यवनो भृगुः ॥**

(१) भार्गवस्तु च्यवनो मन्यते–स्त्र्यादिभिरेव न संभाषेत, न तु सर्वैः। संभाषयेतेति स्वार्थे णिच् 'रामो राज्यमकारयत्' इतिवत्। पतितास्त्रैवर्णिका अपि। रभसाः अपृष्टवक्तारः भण्डवन्दिप्रभृतयः। रजस्वलास्तु ये रक्तेन शरीरमवलिप्य भोजनादिकं दापयन्ति। देव.

(२) पतिताभिः(? तैः) द्विजातिभिरपि। रभसाः भासकाः। † आवि.

**द्वादशरात्रं वोभयत्र ॥**

---

† आवि. देवगतम्।

¶ आवि. देवगतम्।

§ आवि देववत्।

† शेषं देवगतम्।

असमर्थापेक्षमेतत् । संवत्सरस्योभयोरारम्भसमाप्तिलक्षणयोः पार्श्वयोर्द्वादशरात्रमेतत्स्थानासनवाग्यमप्रभृतिकं कुर्यात् । § देव.

**अमावस्यां पौर्णमासीं च ॥**

(१) पौर्णमासीममावस्यां च । तेन संवत्सरमध्ये अष्टाचत्वारिंशद्दिनानि भवन्ति— उपक्रमोपसंहारयोर्द्वादशरात्रद्वयम्, द्वादश पौर्णमास्यः द्वादशामावस्याः । देव.

(२) एवमेतदष्टाचत्वारिंशत्संवत्सरिकेण ब्रह्मचर्येण संमितम् । अत्राष्टाचत्वारिंशद्दिनान्यतितीव्रं व्रतम् । आश्व.

**पालाश्यः समिधो नित्याः परिधिवृक्षाणां वा ॥**

या ब्रह्मचारिणो नित्याः समिधः ता इह पालाश्यः । पलाशालाभे प्रतिनिधिः, प्रतिनिधाने च परिधिवृक्षाणां वा परिधिवृक्षाणां संबन्धिन्यो ग्राह्याः । परिधिवृक्षाश्च यूप्याः बिल्वखदिरपलाशरोहीतकोदुम्बरबधिरप्रभृतयः । तथा च ब्राह्मणं श्रुतिश्च— 'बैल्वो वा खादिरो वा पालाशो वा रौहीतको वा सौम्यस्याध्वरस्य यूपः स्यात् ।' 'औदुम्बरो यूपो भवति', 'खादिरे बध्नाति, पालाशे बध्नाति, रौहीतके बध्नाति' इति । यज्ञिया वा सर्वे परिधिवृक्षाः । श्रूयते हि परिधिब्राह्मणम्— 'तस्येन्द्रः परिधीन्यज्ञियेभ्यो वृक्षेभ्य आजहार' इति । परिधिवृक्षत्वादेव पालाशीनां सिद्धेः पृथग्ग्रहणं तासां नित्यत्वार्थम् । तथा चेह नित्यग्रहणम् । ननु मूलप्रकृतावेव कस्मान्नोक्तम् ? साधूच्यते भवता, किंतु ज्ञापकार्थं भविष्यति । यथा सायक्र एवमुक्तम्— 'मध्यमायां संस्थितायां यूपकर्म' इति, प्रकृतौ चोक्तम्— 'उपसत्सु यूपकर्म' इति । तत्र कालाकाङ्क्षायां सत्यां 'विकृतिरपि प्रकृतिं गृह्णाति' इत्येतमर्थमवबोधयितुमेवं सूत्रितवानाचार्यः, विरोधाभावात् । एवमन्यत्रापि तुल्यन्यायत्वाद्योज्यम् । तेनांहोमुग्भिः समिद्दानेऽप्येवं जानीयादेव— 'तस्येन्द्रो यज्ञियेभ्यो वृक्षेभ्यः परिधीनाजहार' इति । § देव.

§ आश्व. देवगतम् ।

**'मेधां मह्यम्' इति पाणिमार्गं दत्त्वा त्रिषवणमहोरात्रमुदकोपस्पर्शनम् ॥**

कुर्यादिति शेषः । 'मेधां मह्यमङ्गिरसः' इत्यादिभिर्मन्त्रैः द्वाभ्यां नामेरारभ्योर्ध्वं ब्रह्मद्वारपर्यन्तं मार्जनं निघर्षणात्मकं कृत्वा, 'नाभेरूर्ध्वमेव पाणिना उन्मार्ष्टि' इति स्मृतेः, प्रातःसवने मध्यंदिनसवने तृतीयसवने इति सवनत्रयेऽपि रात्रिभागत्रयेऽप्येवमुदकोपस्पर्शनं कुर्यात् । उपस्पर्शनमिह स्नानम् । उपस्पर्शनशब्दो ह्याचमनस्पर्शनस्नानेषु दृष्टः । 'उपस्पृश्य स्वस्त्ययनं भवति' इत्यादावाचमने नकुल्याद्यन्तरागमननिमित्तप्रायश्चित्तभूते, सदाचारादिसिद्धेः । 'उपस्पृश्य सोममालभेरन्' इत्यत्र स्पर्शे । 'आलभ्य चोपस्पृशेयुः' इत्यत्राप्युदकाचमनमात्रे । 'रथ्यादावुपस्पृशेत्' इत्यादौ स्नाने । तत्र प्रकरणवशाद्विशेषव्यवस्था, यथा सैन्धवशब्दादेरश्वलवणमनुष्येषु । 'दिवा वातार्कसंयोगाद्रात्रौ नक्षत्रमारुतैः । संध्ययोरग्निवाताभ्यां पवित्रं सर्वदा जलम् ॥' । तत्र चाग्निं प्रतिष्ठाप्य सुवर्णं संनिधायेति वदन्ति । अस्तमिते वसतीवरीग्रहणवत् । 'अग्निर्वै वाक्' इत्यभेदात् अग्न्यभावेऽपि वागुच्चार्या । एवं रात्रावाचमनाद्यपि कुर्यात् ।

'मेधां मह्यमङ्गिरसे मेधां सप्तर्षयो दधुः । मेधामग्निश्च वायुश्च मेधां धाता दधातु मे ॥ मेधां मे वरुणो राजा मेधामग्निर्दधातु मे । मेधामिन्द्रश्च सूर्यश्च मेधां देवी सरस्वती ॥ या मेधा अप्सरःसु गन्धर्वेषु च यन्मनः । दैवी मनुष्ये या मेधा सा मामाविशतादिह ॥ शरीरं मे विचक्षणं वाङ्मे मधुमद्दुहे । निशामितं निशामये मयि श्रुतम् ॥ यन्मेऽनूक्तं तद्रमतां शकेयं यदनुब्रुवे । प्रियाः श्रुतस्य भूयास्म मेधया संविधीमहि ॥' — अङ्गिरसो देवा मह्यं मेधां बुद्धिं दधुः दधतु मदर्थं कुर्वन्तु ददतु वा मह्यम् । कश्यपादयश्च सप्तर्षयो मेधां दधतु । तथाऽग्निर्वायुर्धाता प्रजापतिर्मेधां मे दधातु । एवं राजा वरुणोऽग्निरिन्द्रश्च सूर्यश्च मह्यं मेधां दधातु देवी च सरस्वती । तथाऽप्सरःसु च या मेधा स्थिता, गन्धर्वेषु च यत् मनः स्थितम्, तदुभयमिहैव मानुषशरीरे सति माम् आ-

विशतात् प्रविशतु । या च मनुष्यविशेषे दैवी अमानुषी मेधा साऽपि मामाविशतात् । मम च शरीरं विचक्षणं विपश्चित् सकलकलाकोविदम् अस्तु । वाक् सरस्वती त्रयीरूपा मे मम मधुमत् मधुरविपाकं स्वर्गापवर्गादिकं फलं दुहे दोग्धु । यच्च मयि श्रुतं जातम्, निशामितं च अवबुद्धं मयाऽऽसीत्, तत् निशामये निशामयेय स्मरणशक्तिस्तत्र ममास्त्वित्यर्थः । यच्च मम अनूक्तं गुरुणा निगदितं तत् रमतां शतशाखं शिष्यप्रशिष्यादीन् प्रसरतु फलपर्यवसायि सत् । यच्च अनुब्रुवे निगदितुमिच्छामि तच्छकनुयाम् । तथा वयं श्रुतस्य प्रिया भूयास्म श्रुतमस्माकं फलदानप्रसादपरमस्तु । मेधया च संविधीमहि संबध्येमहि वयम् । † देव.

**'नमो हमाय मोहमाय' इति चानुसवनम् । 'नमो हमाय मोहमायाग्नये वैश्वानराय तपाय तापसाय तपंताय विन्दवे विन्दाय वसुविन्दाय सर्वविन्दाय, नमः पाराय सुपाराय पारयन्ताय, नम ऊर्म्याय सूर्म्याय, नमश्च्यवनाय भार्गवाय' इत्येता एव देवतास्तर्पयन्नुदकेन ॥**

(१) एवं स्नात्वा एता एव देवतास्तर्पयन् उदकेन तर्पयन् नमःशब्दावच्छिन्नैर्मन्त्रैश्चतुर्भिरुपस्पर्शनं कुर्यादिति संबन्धः । आदित्य एवोपाध्यवच्छिन्नोऽत्रानेकदेवतारूपोऽभिमतः । तथा च हमः( इति ) आदित्यो गन्तृत्वेन स्तूयते । 'ह्रम हम्म मीमृ गतौ' इति हम्मेः रूपं हम इति । 'मीञ् हिंसायाम्' इत्यस्य त्वप्रत्यये रूपं छान्दसं मोहमायेति । अन्धकारापसारकायेत्यर्थः । तपतीति तपः । तपश्चचारेति तापस आदित्य एव प्रजापतिरूपेण स्तुतः । तप्यत इति तपः ब्रह्माण्डादिसर्गः, तं तनोति उत्पादयतीति तपंतः । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति सुपो लुक्( ? ऽलुक् ) । विन्दते चेतयते इति विन्दुः, विन्द्यते चेत्यते इति विन्दः चेत्यचेतयितृरूपः प्रजापतिः, तस्मै नमः । वसु विन्दते वसुविन्दः । एवं सर्वविन्दः । तयोर्विशेषणसमासः(?) । 'पार तीर कर्मसमाप्तौ' । पारयतीति पा[illegible] । पारयन्तं तनोति पारयन्तः । ऊर्मीन् रश्मिकल्लोलान् अर्हतीति ऊर्म्यः । एवं सूर्म्यः । च्यावयतीति च्यवनः । भृज्जति पाचयति भूतानीति भृगुः, तस्यापत्यं भार्गवः भानुरेवात्र । देव.

(२) नमो हमाय इत्यनुसवनं ‡नमस्कारान्तैश्चतुर्भिरादित्योपस्थानम् । एता एव देवतास्तर्पयन्नुदकेन स्नायादित्यर्थः । आवि.

**एष संवत्सरं चरित्वा विमलो विपापो भवति ॥**

एषः ब्रह्मचारी स्नातको वा प्रकृतः संवत्सरमुक्तं व्रतं चरित्वा विमलः रागादिमलशून्यः विगतपापश्च भवति । § पापाभावप्रदर्शनेनाध्ययनाङ्गत्वविहिताध्ययनकालव्रताकरणनिमित्तप्रायश्चित्ततामस्य संवत्सरव्रतस्य दर्शयति । † देव.

**सर्वेषां वेदानां चरितब्रह्मचर्यो यदि नान्यत्कुरुते ॥**

यद्यन्यद्व्रतं वेदाध्ययनकाले न कुरुते, तदाऽस्मिंस्तत्प्रतिनिधिभूते संवत्सरव्रते कृते सति चतुर्णामपि वेदानामधीतानां चरितब्रह्मचर्यः संपद्यते । व्रतपरिपूर्णं वेदचतुष्टयाध्ययनमस्य संपद्यत इत्यर्थः । ये तु स्वतन्त्रमेवेदं संवत्सरव्रतं त्रैविद्यकस्य तपोतिशयार्थे वर्णयन्ति, त एवं व्याचक्षते–पूर्वेण सहास्यैकवाक्यता । एष संवत्सरव्रतं चरित्वा सर्वेषां वेदानां चरितव्रतः सन् विमलो विपापश्च भवति, यदि तन्मध्येऽन्यन्निषिद्धाचरणं न कुरुते । देव.

**स तु खलु चरितब्रह्मचर्यो दश दश पुरुषान् पुनाति पूर्वापरानात्मानं चैकविंशं पङ्क्तिं च यावदनुपश्यति यस्यामुपविशति ॥**

---

† आवि. देवगतम् ।

‡ सूत्रे नमस्कारादयो मन्त्राः पठिताः, 'नमो हमाय' इति स्वयमनुवादादादित्यदर्शनस्यापि नमस्कारादित्वमभिमतमिति प्रतीयते । अतो नमस्कारान्तत्वोक्तिश्चिन्त्या ।

§ ग्रन्थोऽयमादर्शपुस्तके उत्तरसूत्रावतरणिकात्वेन मुद्रितः । 'पापाभावप्रदर्शनेन' इति हेतुमनुरुध्यैतत्सूत्रव्याख्यानशेषतैवास्येति प्रतिपद्यमानैरस्माभिरत्रापकृष्टः ।

† आवि. देवगतम् ।

(१) तुशब्दः फलान्तरसमुच्चये । खलुर्निश्चये । वैदिकत्वप्रसिद्धिद्योतनाय च फलान्तरमाह– पङ्क्तिमिति । पुनातीत्यनुषङ्गः । यान्पश्यति तानपङ्क्तिपावनानपि पङ्क्तिपावनान् करोति तपोबलात्, यांश्चैकपङ्क्त्युपविष्टान्न पश्यत्यपि, तानपि पावयति । देव.

(२) दश दश पुरुषान् पुनाति, पूर्वान् पित्रादीन्, अपरान् पुत्रादीन् आत्मानं चैकविंशम् । पङ्क्तिं च पुनाति यावदनुपश्यति यावद्दृष्टिगोचरम् । कांचित् पङ्क्तिं यस्यामुपविशति भोजनार्थम् । आवि.

**समाप्त एतासामेव देवतानामन्नस्य जुहोति ॥**

(१) एतस्मिन् व्रते समाप्ते पूर्वोक्तदेवताभ्योऽन्नं जुहोति तण्डुललक्षणं स्थालीपाकं वा । 'छन्दोवत्सूत्राणि भवन्ति' इति सुब्व्यत्ययः । अन्नशब्दो हि कृतेऽकृते विपक्वे च दृष्टः– 'हेषिभिर्निधनं कुर्यादन्नकामाय' इत्यकृतवचनः, 'अन्नं प्रयौति घृतं मधु तण्डुलान्' इत्यादौ कृतवचनः, 'योऽन्नमश्नीयात्' इत्यादौ विपक्ववचनः । त्रिविधमपि व्रीहितण्डुलस्थालीपाकरूपं पर्यायेण यथास्वं निर्वाह्यम् । देव.

(२) समाप्ते संवत्सरे एतासामेव देवतानां प्रा- (१ प्र)कृतानामन्नस्य कृताकृतस्य वा स्थालीपाकश्रवणात्तुषप्राभावः(१) । न च सर्वदेवता(१ सर्वदेवताभ्य)श्चेति तन्त्रम्, अपि तु हस्तेनैव तण्डुलादेश्चतस्र आहुतीर्जुहोति । आवि.

**धेनुर्दक्षिणा ॥**

आचार्याय । प्रक्रान्तत्रैविद्यस्यैतद्भवति । तेनात्राऽऽरम्भे न व्रतोपायनं न होमः । आवि.

## आपस्तम्बः

व्रतनियमाः, व्रतफलम्

**[1]विलयनं मथितं पिण्याकं मधु मांसं च वर्जयेत् ॥**

विलयनं नवनीतमलम् । यस्य दध्नो हस्तादिना मन्थनमात्रम्, न जलेन मिश्रणम्, तत् मथितम् । तथा च नैघण्टुकाः– 'तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम्' इति । यन्त्रपीडितानां तिलानां कल्कः पिण्याकम् । मधुमांसे प्रसिद्धे । मांसमप्रतिषिद्धमपि । एतत् विलयनादिकं वर्जयेत् । उ.

**कृष्णधान्यं शूद्रान्नं ये चान्येऽनाश्यसंमताः ॥**

कृष्णधान्यं माषादि, न कृष्णा व्रीहयः । शूद्रान्नं पक्वमपक्वं च । ये चान्ये अनाश्यत्वेन अभोज्यत्वेन संमताः तांश्च वर्जयेत् । उ.

**अहविष्यमनृतं क्रोधं येन च क्रोधयेत् ॥**

अहविष्यं कोद्रवादि । अनृतं मिथ्यावचनम् । क्रोधः कोपः । येन च कृतेनोक्तेन वा परं क्रोधयेत् । तच्च वर्जयेत् । उ.

**स्मृतिमिच्छन् यशो मेधां स्वर्गं पुष्टिं द्वादशैतानि वर्जयेत् ॥**

स्मृतिः अधिगतस्य स्मरणम् । यशः ख्यातिः । मेधा प्रज्ञा । द्वादशैतानि विलयनादीनि वर्जयेत् स्मृत्यादिकमिच्छन् । पुनर्वर्जयेदिति गुणार्थोऽनुवादः स्मृत्यादिकं फलं विधातुम् । द्वादशैतानीति वचनं विलयनादेरपि परिग्रहार्थम्, अहविष्यादिकमेवानन्तरोक्तं मा ग्राहीदिति । उ.

**अधोनाभ्युपरिजान्वाच्छाद्य त्रिषवणमुदकमुपस्पृशन्ननग्निपक्ववृत्तिरच्छायोपगतः स्थानासनिकः संवत्सरमेतद्व्रतं चरेदेतदष्टाचत्वारिंशत्संमितमित्याचक्षते ॥**

अधोनाभ्युपरिजान्वाच्छाद्येति व्याख्यातम् § । त्रिषवणं त्रिषु सवनेषु प्रातर्मध्यंदिने सायमिति उदकमुपस्पृशन् स्नानं कुर्वन् । अनग्निपक्ववृत्तिः, वृत्तिः शरीरयात्रा, सा अग्निपक्वेन न कार्या । अग्निग्रहणात् कालपक्वस्याऽऽम्रादेरदोषः । अच्छायोपगतः छायामनुपगच्छन् । स्थानासनिकः स्थानासनवान् । दिवा स्थानं रात्रावासनम्, न कदाचित् शयनम् । एतत् 'विलयनं मथितम्' इत्यारभ्यानन्तरमुक्तं संवत्सरं व्रतं चरेत् ।

(१) आप. २।१८।१–५.

§ 'अधोनाभि उपरिजानु च यथा भवति तथा तावन्तं प्रदेशमाच्छाद्य' (१।२४।११) इति पूर्वं व्याख्यातम् ।

एतद्व्रतमष्टाचत्वारिंशद्वर्षसाध्येन ब्रह्मचारिव्रतेन संमितं सदृशं यावत्तस्य फलं तावदस्यापीत्याचक्षते धर्मज्ञाः, न केवलं स्मृत्यादिकमेव प्रयोजनमिति । अपर आहु— 'विलयनं मथितम्' इत्यादिकं व्रतान्तरं स्मृत्यादिकामस्य, 'अधोनाभि' इत्यादिकं तु संमितव्रतमिति । एतच्च ब्रह्मचारिणो गृहस्थस्य च भवति । तथा च बोधायनः— 'अष्टाचत्वारिंशत्संमितमित्याचक्षते । तस्य संक्षेपः संवत्सरः । तं संवत्सरमनुव्याख्यास्यामः । स यदि ब्रह्मचारी स्यान्नि-य(म)मेव प्रतिपद्येत । अथ यद्यपि ब्र( ? यद्यब्र)ह्मचारी स्यात् केशश्मश्रुलोमनखानि वापयित्वा तीर्थे गत्वा स्नात्वा' (बौगृ. ३।३।१–५) इत्यादि । उ.

# त्रैविद्यकव्रतप्रयोगः

## मानवगृह्यसूत्रम्

त्रैविद्यके उपनयनकल्पातिदेशः, अनुवाकवाचनम्, पूर्वोक्तव्रतातिदेशः, मेखलोन्मोचनम्

**[1]त्रैविद्यकमुपनयनेन व्याख्यातम् ॥**

**आदितस्त्रीननुवाकाननुवाचयेत् ॥**

**व्याख्यातानि व्रतानि ॥**

**'उदुत्तमं वरुणपाशम्' इति मेखलामुन्मुञ्चति ॥**

त्रैविद्यकं तत्र दीक्षाविशेषः। तिस्रो विद्याध्ययनं त्रैविद्यकं कर्म तदुपनयनेन व्याख्यातम्। 'आगन्त्रा समगन्महि' इत्यादिना समिच्छेषे व्रतमादिश्याऽऽदितस्त्रीननुवाकान्वाचयेत्। करिष्य स्थानि व्रतानि इत्याह— ख्यातानि व्रतानि। एवं वा अनन्तर्हितायां भूमौ शयनादीनि उदकघासाहरणं वर्तयित्वा। अन्ये तु मार्गवासस्त्वादीनि व्रतानि मन्यन्ते। तदसत्। तानि हि समावर्तनान्तानि 'एतेन धर्मेण साध्वधीते' (माग. १।२।७) इति उक्तत्वात्। तेषां त्रैविद्यकत्वे त्रैविद्यकं यावदेव चरणं स्यात्। कियन्तं परं कालं त्रैविद्यकं च, कदा न चरेत्? उच्यते— उपनयनानन्तरं त्रैविद्यकं चरेत्, त्रैविद्यकं च चरेदिति तत्काले श्रवणात् कालं स्वानन्तर्याद्रहस्यदीक्षोक्तं वा संवत्सरं त्रीन् पञ्च सप्त वेति द्वादशरात्रं वा आश्वमेधिकं संबध्यते। एवमेवोद्दीक्षाव्रतग्रहणाद्विमोकः स्यात्। उपनयने दीक्षा च व्याख्याता द्वावनुवाकानिसारीमेव (१)। अष्टाभा.

## काठकगृह्यसूत्रम्

व्रतनियमेष्वाचार्याधीनत्वम्, समिदाधानम्, पूर्वोक्तव्रतोपायनविमोचनातिदेशः

**[2]त्रैविद्यकम् ॥**

तिसृषु विद्यासु वेदत्रयात्मिकासु भवं ग्रहणं प्रयोजनं वा व्रतं त्रैविद्यकम्। वक्ष्याम इति शेषः। $देव.

**आचार्यस्य विधिः ॥**

(१) यं प्रति कथ्यते सोऽप्रबुद्धो ब्रह्मचारी, तेन व्यर्थं उपदेश इत्याशङ्क्याऽऽह— आचार्यस्येति। आचार्येणानुष्ठातव्य इत्यर्थः। देव.

(२) तस्याऽऽचार्यस्य विधिः आचार्येणानुष्ठापयितव्यम्। तथा चोक्तम्— 'उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः। आचारमग्निकार्यं च संध्योपासनमेव च ॥'। 'अष्टवर्षं ब्राह्मणमुपनयेत' इत्याचार्यकरणकामो ब्रह्मलोकावाप्तये आत्मनः शिष्यानुपनीयाध्यापयेत्। अत आचार्याधीनस्य त्रैविद्यकब्रह्मचर्यम्। आवि.

**यो वेदमधीते पुरस्ताच्चोपरिष्टाच्चांहोमुग्भिः समिधोऽभ्यादध्यात् ॥**

(१) अध्ययनस्याऽऽरम्भे समाप्तौ चांहोमुग्भिस्तिस्रः समिधोऽग्नावभ्यादध्यात् स्वाहाकारमात्रशून्यं प्रक्षेपमात्रं कुर्यादित्यर्थः, अन्यथा जुहुयादिति ब्रूयात्। अंहसः पापात् विमोचयन्तीत्यंहोमुचो मन्त्राः। ते पुनः— 'यद्देवा देवहेळनं देवासश्चकृमा वयम्। अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः ॥ यदि दिवा यदि नक्तमेनांसि चकृमा वयम्। वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः ॥ यदि जाग्रद्यदि स्वप्न एनांसि चकृमा वयम्। सूर्यो मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः ॥'— देवा एव देवासः। 'आज्जसेरसुक्' (पासू. ७।१।५०)। हे देवाः देवासः। अतिशयार्थं पुनः संबोधनम्। यत् वयं देवहेळनं चकृमा, 'हेडृ अनादरे', अनादरेण अवलेपेन यद्देवानां पापं कृतवन्तो वयम्, तस्मात् एनसः अंहसः पापात् विश्वात् समस्तात् अग्निर्मा विमुञ्चतु। अंहस एनस इति दुःखपीडितस्य पुनर्वचनम्। एनःशब्दो वा पापकृते दुःखाति-

---

(१) मागृ. १।२३।२४-२७.

(२) कागृ. ४२।१-४.

$ आवि. देववत्।

शये वर्तते । अनेनैव द्वितीयतृतीयौ गतार्थौ । दिवानक्तंशब्दाभ्यां मध्यवर्तिन्यौ सन्ध्ये अपि संगृहीते । देव.

(२) त्रैविद्यकम् । आज्यं हविः । यथोक्तमुपसमाधायाऽऽज्यभागान्तं हुत्वा दक्षिणत उपविष्टस्य ब्रह्मचारिणो वसनमेखलाचर्मदण्डानां मन्त्रानावर्तयेत् । 'यद्देवा देवहेडनम्, यदि दिवा, यदि जाग्रत्' इत्यंहोमुचो वाचयन् समिदाधानं कारयित्वा 'अग्ने व्रतपते, वायो व्रतपते, सूर्य व्रतपते' इत्युपस्थापयति । 'अग्ने व्रतपते व्रतमालभे तत्ते प्रब्रवीमि तच्छकेयं तेनर्ध्यासम्, वायो ..., सूर्य... तेनर्ध्यासम्' । ततो 'ये के च ज्मा' इति वैश्वदेव्या 'छन्दोभ्यः स्वाहा, त्रैविद्यकाय स्वाहा' इति प्रधानाहुतिमेवं हुत्वा पश्चादग्नेर्दर्भेषु प्राक्तूलेषु प्राक्शीनः प्रत्यक्कूलासीनाय 'ओं भूर्भुवः स्वः' सावित्रीमनूच्याऽऽर्षादिकं स्मृत्वा 'इषे त्वा' इति त्रीननुवाकानन्वाह, ऋक्संहितायां सूक्तम्, सामसंहितायां साम । ऋचं वाचयित्वा 'नमो ब्रह्मणे' इति परिधानीयां त्रिरन्वाह । तत ऋतुतिथियागादि समापयेत् । ब्राह्म.

(३) यो वेदमधीते ब्रह्मचारी स समिधोऽस्यादध्यात्, नाध्यापकः । आचार्यस्य विधिरिति वचनात्प्राप्तः । एते त्वाज्येन व्रतहोमाः । यस्मात् ‡प्रवर्ग्यव्रतादौ 'स्थालीपाकेन होमः' इति वक्तव्ये यत् 'स्थालीपाकेन व्रतहोमाः( ? मः )' इत्युच्यते, ततो ज्ञायते सर्वेषु वेदव्रतेषु व्रतहोमैर्भवितव्यमिति । तत्र 'स्थालीपाकेन' इति वचनादिहाऽऽज्येन ते भवन्ति । चातुर्होतृके जयप्रभृतिग्रहणात् तस्य चास्य च त्रैविद्यकस्यान्येषां चाऽऽरण्यानां शुक्रियादीनां वेदव्रतस्य( ? तत्वेन ) समानत्वादेकयोगक्षेमत्वात्सर्वाणि व्रतानि तन्त्रवन्त्येवेति । ना( ? त्र ? )तन्त्रवत्त्वाशङ्काऽत्र कार्या । सर्वव्रतानां साधर्म्यानुमापकेन व्रतहोमग्रहणेनैव तन्त्रवत्त्वे सिद्धे चातुर्होतृके जयप्रभृतिवचनं ¶ तेजोऽन्नाद्यवीर्यकल्प( ? काम )हविःष्वपि तन्त्रवत्त्वाय । एतेनैव न्यायेनानुक्तहोमेऽपि विहितसमिदाधानमात्रेतिकर्तव्यताके त्रैविद्यके तन्त्रवत्त्वं सिद्धम् । अन्ये तु— 'एवं सर्वाणि वेदोक्तानि (व्रतानि ?)' ( काग्. ४१।१९ ) इति वचनादविरुद्धोपनयनधर्मातिदेशात् मुख्यत्रैविद्यकाख्यवेदव्रतग्रहणोपक्रमहोमस्य तद्वत्तन्त्रं वा( ? तन्त्रवत्त्वं ) मेखलाजिनदण्डानां च मन्त्रावृत्तिः सिद्धा । समिद्दानं त्विह विशेषचोदितम्, व्रतोपायनादि चातिदेशात् 'उक्तं व्रतोपायनविमोचनम्' इत्येव( ? वं ) वर्णयन्ति । तथापि किं नः छिन्नम् ? सर्वथा तावत् त्रैविद्यकोपक्रमस्य ( ? स्या- ) तन्त्रवत्त्ववादिनो निरस्ताः । त्रैविद्यके तन्त्रं प्रदर्श्यते— आचार्यो यथोक्तमुपसमाधायाऽऽज्यभागान्तं कृत्वा दक्षिणमूरुं प्रत्युपविष्टस्य ब्रह्मचारिणो वासोमेखलाचर्मदण्डानां मन्त्रानावर्त्यांहोमुग्भिः 'यद्देवा देवहेडनम्' इति तिसृभिः समिध आधापयित्वा कुम्भोक्तं व्रतोपायनम् 'अग्ने व्रतपते... तेनर्ध्यासम्' इत्यनुषक्तान्तं कारयित्वा तत आज्येन त्रिकादिभिर्होमांश्चतुर्गृहीतैर्यथोक्तान् हुत्वा 'छन्दोभ्यः स्वाहा, त्रैविद्यकाय स्वाहा' इति चतुर्गृहीतं हुत्वा ततः पश्चादग्नेः प्राक्शीनः प्रत्यक्कूलासीनाय 'मार्गवासा भव' इत्याद्यग्नीन्धनान्तं ब्रह्मचर्यमादिश्याऽऽर्षस्मरणपूर्वम् 'इषे त्वा' इत्यादित्रीमन्त्रानाहाऽऽदितस्त्रीननुवाकान् यजुर्वेदात् 'कस्त्वा युनक्ति' इति चानुवाकार्धम् । तत ऋतुतिथ्याद्याभावितान्तं संस्थापयेत् । अनन्तरमुपाकृत्य प्रारभ्यमध्ययनं यावदुत्सर्गः । एतद्धोमकर्म समिद्दानयुक्तं वेदाध्ययनस्य पुरस्तादुपरिष्टाच्च समन्ते । तत्र व्रतविमोचनं(? ने ) विशेषो मन्त्रे । 'प्रवर्ग्यव्रतं चरिष्यन्मेखलाजिनदण्डेषु मन्त्रानावर्तयेत्' इति वचनात् विद्यमानानां वसनादीनां मन्त्रावृत्तिरेव सर्वव्रतेषु । तथा च मनुः— 'यद्यस्य विहितं चर्म यत्सूत्रं या च मेखला । यो दण्डो यच्च वसनं तत्तत्तस्य व्रतेष्वपि ॥' । इहापि

‡ मानवभारद्वाजादिश्रौतसूत्रेष्विव काठकश्रौतसूत्रे प्रवर्ग्यव्रतापरपर्यायं शुक्रियव्रतं सूत्रितं स्यात्, गृह्यसूत्रे तदभावात् । काठकश्रौतसूत्रमस्माभिर्नोपलब्धम् ।

¶ ग्रन्थोऽयं व्याकुलः । तेजोवीर्ये फले, अन्नाद्यमिति द्रव्यम्, पशुब्रह्मवर्चसे च फले स्वशब्दाभ्यामादिशब्देन वा न संगृहीते ।

पितृचरणवृद्धाः स्मरन्ति— ‘वसनं मेखलां चर्म दण्डं समिधमेव च। व्रतालम्भं प्रधानं च कुर्यात् सर्वत्र तेष्वपि ॥’। आवि.

उक्तं व्रतोपायनविमोचनम् ॥

व्रतस्योपायनं ग्रहणं विमोचनं च परित्यागः। तद्द्वयमपि दर्शपूर्णमासयोरुक्तम्। तथा च तत्रत्यं सूत्रम्— “पाणी प्रक्षाल्य दक्षिणतोऽग्नेस्तिष्ठन् ब्रूयात्— ‘अग्ने व्रतपते, वायो व्रतपते, सूर्य व्रतपते” इति। ‘अग्ने व्रतपते व्रतमालभे तच्चे प्रब्रवीमि तच्छकेयं तेनर्ध्यासम्। वायो व्रतपते०। सूर्य व्रतपते०। अग्ने व्रतपते व्रतमचारिषं तदशकं तच्चे प्रब्रूमस्तन्नो गोपाय। वायो व्रत०। सूर्य व्रत० ’।

अमी षट् कृच्छ्रविधौ व्याख्याताः। इह च व्रतग्रहणे मोचने च समानाः कर्तव्याः। इयांस्तु विशेषः— विमोचने दण्डमग्नौ प्रास्येदप्सु मेखलां वासश्च हुतसमाप्तिं यावत्। तत एव दण्डादयो मन्त्रावृत्तिभाजः। तथा च मनुः— ‘यद्यस्य विहितं चर्म यत्सूत्रं या च मेखला। यो दण्डो यच्च वसनं तत्तत्सर्वं व्रतेष्वपि ॥’। ¶ देव.

## वाराहगृह्यसूत्रम्

आश्वमेधिकीदीक्षोक्तमन्त्रयोस्त्रैविद्यकव्रतोपायनेऽतिदेशः

[१] ‘एताभ्यामेव मन्त्राभ्यां त्रैविद्यकव्रतमुपेयात् ॥

¶ आवि. देववत्।

(१) वागृ. ८.

## § धान्वन्तरादिव्रतप्रयोगः

### बौधायनगृह्यसूत्रम्

धान्वन्तरादिव्रतविषयका विषयः

[1]'एतेन धान्वन्तरशैवबहुरूपपार्षदस्कन्देन्द्राणां व्रतानां समापनं ब्रह्माभ्यसेदेकसाम यजुर्वा छन्दसामनुसवनं क्रमेत काममिति ह स्माऽऽह बोधायनः ॥

§ नेमानि धान्वन्तरादिव्रतान्यन्यत्र कुत्रापि दृश्यन्ते, न वा बोधायनीयगृह्यकर्मसमुच्चयग्रन्थे संगृहीतानि। अगस्त्यव्रतदेवतासु शिवबहुरूपस्कन्देन्द्रास्तर्पणीयदेवतात्वेन संमितव्रतेऽपि सन्तीत्यप्यनुसंधेयम्। श्रीमता शामशास्त्रिणेदं सूत्रं विषयानुक्रमणिकायां संमितव्रते समावेशितम्।

(१) बौगृ. ३।३।३४.

वैखानसगृह्यसूत्रम्

ब्राह्मव्रते होममन्त्रा अध्येयमन्त्राश्च

'[1]ब्रह्मणे काण्डर्षये, सदसस्पतिम्, ब्रह्म जज्ञानम्, पिता विराजाम्, ब्रह्म देवान्, अन्तरस्मिन्, ब्रह्मन् देवाः, यतत्रः' इति सूक्तं ब्राह्मव्रतस्य। ... 'एकाक्षरं त्वक्षरित' इति ब्राह्मे ॥

(१) वैगृ. २।१०.

## ज्येष्ठसामव्रतप्रयोगः

---

### गोभिलगृह्यसूत्रम्

ज्येष्ठसामव्रते महानाम्निकव्रतकल्पातिदेशः

'ज्येष्ठसाम्नो महानाम्निकेनैवानुगापनकल्पो व्याख्यातः ॥

---

(१) गोगृ. ३।२।५४.

# समावर्तनम्

## समावर्तनविधिः

### बौधायनश्रौतसूत्रम्

अधीतवेदस्य समावर्तनाधिकारः

[1]**वेदमधीत्य स्नास्यन्नुपकल्पयते...... ॥**

### बौधायनगृह्यसूत्रम्

अधीतवेदस्य चीर्णव्रतस्य वा समावर्तनाधिकारः, वेदपदार्थः

[2]**'वेदमधीत्य स्नास्यन्' इत्युक्तं समावर्तनम् ॥**

**मन्त्रब्राह्मणं वेद इत्याचक्षते ॥**

**मन्त्रब्राह्मणयोर्वेदनामधेयम् ॥**

**मन्त्रब्राह्मणे यज्ञस्य प्रमाणम् ॥**

**मन्त्रब्राह्मणे अधीत्य चीर्णेषु वा व्रतेषु ॥**

### बौधायनगृह्यपरिभाषासूत्रम्

वेदाध्ययनं व्रतचर्या उभयं च स्नानाधिकारि-
विशेषणानि

[3]**त्रयः स्नातका भवन्ति वेदस्नातको व्रतस्नातको वेदव्रतस्नातकश्चेति ॥**

### आश्वलायनगृह्यसूत्रम्

दत्तगुरुदक्षिणस्य गृहीतगुर्वनुज्ञस्य वा समावर्तनाधिकारः

[4]**विद्यान्ते गुरुमर्थेन निमन्त्र्य कृतानुज्ञातस्य वा स्नानम् ॥**

( १ ) स्नानं कर्तव्यम् । तत्र द्वादशानां वर्षाणामन्ते विद्याग्रहणान्ते वा गुर्वर्थं करोति, पश्चात् स्नानमिति । विद्याया अन्ते गुरुमर्थेन निमन्त्रयेत 'किमहं करवाणि' इति । तेनोक्तमर्थमाहृतं कृत्वा स्नानं करोति । अथवा अनुज्ञातः स्नानं करोति । ननु च प्रागुक्तास्त्रिविधाः स्नातका भवन्तीति तेषु द्वयोरेतत् स्नानमुपदिश्यते । कयोः ? विद्यास्नातकस्य विद्याव्रतस्नातकस्य । कस्मात् ? तौ विद्याया अन्तं गतवन्तौ भवतः । नेतरस्य । असमाप्तविद्यत्वान्न प्राप्नोति । नेत्युच्यते । नात्र विद्यापरिसमाप्तौ स्नानं चोद्यते । किं तर्हि ? अन्ते चोद्यते । तेनासावपि मध्यमुत्सृज्यान्तमध्येष्यते, तेनासावप्यन्तगतो भवति । तस्मात् त्रिविधस्यापि स्नानं वेदान्ते भविष्यति ।

३।९।४

'द्वादश वर्षाणि वेदब्रह्मचर्यम् । ग्रहणान्तं वा'— वेदग्रहणान्तं वा ब्रह्मचर्यं भवति । तस्मात् प्रागूर्ध्वं च द्वादशभ्यो वर्षेभ्यः स्नानं भवति । एवं ब्रुवताऽऽचार्येण त्रिविधं स्नानं प्रदर्श्यते— विद्याव्रतस्नानं विद्यास्नानं व्रतस्नानमिति । यो हि द्वादश वर्षाणि ब्रह्मचर्यव्रतं कृत्वाऽधीत्य विद्यां स्नानं करोति असौ विद्याव्रतस्नातकः । यः प्रागेव विद्यामधीत्य स्नाति स विद्यास्नातकः । यः पुनर्द्वादश वर्षाणि ब्रह्मचर्यं कृत्वाऽनधीत्य विद्यां स्नाति स व्रतस्नातकः । स तु कांचित् विद्यामुत्सृज्य स्नानं करोति । ग्राम्या आरण्येति उभयलक्षणा च विद्या भवति । तत्र महानाम्न्यादीनां नित्यमध्ययनम् । कस्मात् ? येन रहस्ये ब्रूते— '$यो हि नाधीते एतां विद्यामन्यां वाऽधीयानोऽपि बह्वीं विद्यां यः स्नानं करोति नैवायं स्नातको भवति' ( ऐआ. ५।३।३।११ ) इति । तस्मादवश्यमध्ययनं महानाम्न्यादीनां कर्तव्यम् । ग्राम्यां तूत्सृजति विद्यामशक्त्या । देभा. १।२२।४

( २ ) अस्य कालमाह— विद्येति । विद्यान्ते गुरुमर्थेन निमन्त्रयते— 'कमर्थमहं ते करवाणि' इति । गुरुर्यमर्थं-

---

(१) बौश्रौ. १७।३९.

(२) बौगृ. २।६।१–५.

(३) बौगृप. १।१५।१.

(४) आगृ. ३।९।४ ; प्रपा. २८४ ज्ञातस्य (ज्ञस्य) ; धप्र. ४४ ; संप्र. ५६७ ज्ञात (ज्ञान) ; चम. ६४–६५ प्रपावत् ; संको. १६६ संप्रवत् ; बाल. १।५१ प्रपावत्.

$ अर्थानुवादोऽयम् । मूलवाक्यं तु– 'नेदमनधीयन् स्नातको भवति यद्यप्यन्यद्बह्वधीयान्नैवेदमनधीयन् स्नातको भवति' इति ।

माह तं कृत्वा स्नानं करोति। अथवाऽनुज्ञातः स्नायात्। स्नानं समावर्तनमित्यर्थः। विद्यान्त इति व्याख्यातं प्राक्। ३।९।४

त्रिविधं स्नानं प्रदर्शितं भवति। विद्यास्नानम्, व्रतस्नानम्, विद्याव्रतस्नानमिति। प्राग्द्वादशाब्दयो वेदमधीत्य यः स्नाति स विद्यास्नातकः। यस्तु द्वादशवर्षाणि ब्रह्मचर्यं कृत्वाऽनधीतवेदः स्नाति स व्रतस्नातकः। यस्तु पुनर्द्वादशवर्षाणि ब्रह्मचर्यं कृत्वाऽधीतवेदः स्नाति स विद्याव्रतस्नातकः। ननु 'विद्यान्ते गुरुमर्थेन निमन्त्र्य कृतानुज्ञातस्य वा स्नानम्' इति वक्ष्यति। अतः कथं व्रतस्नानस्य संभवः? उच्यते। विद्यान्त इति न विद्यासमाप्तौ स्नानं चोद्यते किं तर्हि विद्याया अन्ते। न मध्ये। तेन व्रतस्नातकोऽपि मध्यमुत्सृज्य अन्तमारण्यकमधीत्य स्नायात्। रहस्ये चाऽऽरण्यकं प्राधान्येन स्नाननिमित्तं चोद्यते 'नेदमनधीयन्स्नातको भवति' (ऐआ. ५।३।३।११) इत्यादिना। * गानागृ. १।२२।४

(३) विद्यासमाप्तौ गुरुमर्थेन प्रयोजनेन निमन्त्र्य 'कमर्थं त आहरिष्यामि' इत्युक्त्वा तेनोक्तं च कृत्वा तत एतत् समावर्तनं कर्तव्यम्। अनुज्ञातस्य वा 'वत्स त्वद्गुणैरेवाहं तोषितः, अलमर्थेन, अनुजानामि त्वां गृहाश्रमाय' इत्येवमुक्तस्य वा कर्तव्यम्। अना.

(४) विद्यान्त इत्यनेन पूर्वं दक्षिणादाननिषेधं गमयति। तथा च मनुः– 'न पूर्वं गुरवे किंचिदुपकुर्वीत धर्मवित्। स्नास्यंस्तु गुरुणाऽऽज्ञप्तः शक्त्या गुर्वर्थमाहरेत्॥' (मस्मृ. २।२४५) इति। इदं च समावर्तनं विवाहार्थमेव, नाऽऽश्रमान्तरपरिग्रहार्थमपि, 'गुरुणाऽनुमतः स्नात्वा समावृत्तो यथाक्रमम्। उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम्॥' (मस्मृ. ३।४) इति मनुना समावर्तनस्य विवाहकर्तृद्विजविशेषणत्वेनाभिधानात्। न च तत् आश्रमान्तरकर्तृविशेषणत्वेन श्रूयते 'समावृत्तो वनं प्रविशेत्' 'समावृत्तः संन्यसेत्' इति वा। प्रत्युत 'ब्रह्मचर्यादेव प्रव्रजेत्' इत्यत्र ब्रह्मचर्यस्यैवापादानत्वं श्रूयते। न च तत् समावर्तने सति घटते, तस्मिन् सति तस्यैवाभावात्। अत एव 'ब्रह्मचर्यं परिसमाप्य गृही भवेत्' इति समावर्तनरूपब्रह्मचर्यपरिसमापनं गृहाश्रमायैव श्रूयते, नान्यत्र। यदपि 'गुरवे दक्षिणां दत्त्वा स यमिच्छेत्तमावसेत्' इति नरसिंहपुराणे संन्यासाद्यर्थमपि ब्रह्मचारिणो गुरवे दक्षिणाप्रदानं विहितम्, तन्न विरुद्धम्, दक्षिणादानस्य समावर्तनाङ्गत्वेन समावर्तनरूपत्वाभावात् एकस्योभयाङ्गत्वे बाधकाभावाच्चेत्यलं विस्तरेण। संप्र. ५६७

* प्रपा. गानागृवत्।

## आपस्तम्बगृह्यसूत्रम्

अधीतवेदस्य समावर्तनाधिकारः

§ [1]वेदमधीत्य स्नास्यन्॥

## हिरण्यकेशिगृह्यसूत्रम्

अधीतवेदस्य समावर्तनाधिकारः

[2]अधीत्य वेदं स्नानं तद्व्याख्यास्यामः॥

(१) यस्मिन् कर्मणि उष्णशीताभिरद्भिर्मन्त्रैः स्नाति। यद्वा कर्म ब्रह्मचारिव्रतान्निवापयति अवभृथस्नानमिव दीक्षितव्रतात् नियमतो ब्रह्मचर्यव्रताद्विमुच्यते। स्नानादि मलान्तं स्नानं गुरुकुलात्समावर्तनमित्यर्थः। तदधीत्य वेदं वेदौ वेदान् वा कर्तव्यम्, न प्रतिवेदमिति जातिनिर्देशः। तद्व्याख्यास्यामः। तत्स्नानं विस्तरेण (इत्यपूर्वं ?) वक्ष्यामः। स्नानं व्याख्यास्याम इत्येतावता सिद्धेऽधीत्य वेदमिति वचनमध्ययनप्रधानं स्नानं न कालप्रधानमिति ख्यापनार्थम्। तेनातिक्रान्तेऽप्युक्तकाले सति संभवेऽधीत्यैव स्नातव्यमिति। अत्यन्ताशक्तावेव व्रतमात्रेण स्नातव्यमिति। त्रिप्रकारं च स्नानं धर्मसूक्तं विद्यास्नानं व्रतस्नानं विद्याव्रतस्नानं च। तत्रोभयस्नानं प्रशस्तम्, विद्यास्नानमध्ययनम् (? स्नानं मध्यमम्)। व्रतस्नानं च व्रतमात्रस्नानं गर्हितमिति। ब्रह्मचर्यस्य विद्यार्थत्वात्तत्समाप्त्यवधिविशेषाच्छ्रुतिविशेषाच्च पूजायां फलविशेष(?) इति। मातृद.

§ व्याख्यानं प्रयोगप्रकरणे द्रष्टव्यम्।

(१) आपगृ. १२।१.

(२) हिगृ. १९।३।१; संर. ३६७ (तद्व्याख्यास्यामः ०); ३६८; ३७० (तद्व्याख्यास्यामः ०).

(२) वेदो मन्त्रब्राह्मणात्मकः, 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इति सूत्रात्। कर्मविधानं ब्राह्मणम्। अर्थवादादीनां तु ब्राह्मणशेषत्वम्, 'कर्मविधानं ब्राह्मणं तच्छेषोऽर्थवादो निन्दा प्रशंसा परकृतिः पुराकल्पश्च' इति सूत्रात्। भद्रादिदशप्रश्नानामरण्येऽध्येतव्यत्वादारण्यक इति संज्ञा, न तु पृथक्कश्चन वेदभागोऽयम्। स्नानशब्देन समावर्तनम्। धर्मसूत्रे विशेषः– 'विद्यया स्नातीत्येके, तथा व्रतेनाष्टाचत्वारिंशत्परिमाणेन, विद्या व्रतेन च' (हिध. २६।८।१–३) इति।...एवम् 'अधीत्य वेदम्...' इत्यत्र वेदमित्युपलक्षणं व्रतस्य। ...'विद्यास्नानं विद्याव्रतस्नानं च प्रशस्तम्...' इति मातृदत्तः। $ संर. ३६७–३७०

## मानवगृह्यसूत्रम्

अर्थग्रहणान्तमधीतवेदस्य समावर्तनाधिकारः

¶ [1]**छन्दस्यर्थान्बुद्ध्वा स्नास्यन् गां कारयेत्॥**

**अन्यो वेदपाठी न तस्य स्नानम्॥**

द्विविधो ब्रह्मचारी उपकुर्वाणको नैष्ठिकश्च। तत्रोपकुर्वाणस्य स्नानम्, अन्यस्य ब्रह्मचर्येणैव निष्ठेति। अन्य उपकुर्वाणकाद्वेदपाठी ब्रह्मचारीत्यर्थावबोधादनन्तरं न तस्य स्नानम्। एतच्च परिपक्वकषायस्य, यस्मात् स्नातकस्याग्निहोत्रादिष्वधिकारः कृतस्नानस्य (? कृताधानस्य), आधाने तु कृतविवाहस्य, उद्वाहे च रागतः प्रवृत्तिरिति। विरक्तस्तु नैव विवाहेऽधिक्रियते, रागप्रवृत्तिविधे( ? से विधे )रौदासीन्यादिति कृत्वा न तस्य स्नानमित्युक्तम्। अपिवेषत्यक्तकषायोऽप्यग्निहोत्रादिभिः श्रेय इच्छन् भार्यावेदनाद्यारभते तत्रावान्तरमपत्योत्पादनकुटुम्बभरणनियतधनार्जनोपायादिष्वधिक्रियते। तत्राधृत्तौ कुटुम्बभरणकृतोद्यम इतश्चेतश्च धावन्नग्निहोत्रादिदं स्वार्थमपि सेवित्वा तु कुटुम्बभरणत्वमेव स्यात् ततो धर्मादेः पुरुषार्थाभावाद् वृथाऽध्ययनविज्ञानप्रयासः स्यादिति यो मन्यते न तस्यापि स्नानमिति। अष्टाभा.

$ शेषं मातृदत्तगतम्।

¶ व्याख्यानं प्रयोगप्रकरणे द्रष्टव्यम्।

(१) मागृ. १।२।८, १०.

## भारद्वाजगृह्यसूत्रम्

अधीतवेदस्य समावर्तनाधिकारः

[1]**वेदमधीत्य स्नास्यन्नुपकल्पयते......॥**

## काठकगृह्यसूत्रम्

अधीतवेदस्योपकुर्वाणस्यैव समावर्तनाधिकारः, विवाहदिनपूर्वदिने स्नानं स्नातकव्रतं च

† [2]**छन्दस्यर्थान् बुद्ध्वा स्नास्यन् गां कारयेदाचार्यमर्हयेत्॥**

**श्रोत्रियोऽन्यो वेदाध्यायी॥**

(१) नैष्ठिकापेक्षया त्विदमुच्यते– श्रोत्रिय इति। अन्यः नैष्ठिकः ब्रह्मचारी। श्रोत्रियः वेदाध्यायी। 'श्रोत्रियंश्छन्दोऽधीते' (पा. ५।२।८४) इति श्रोत्रियशब्दो वेदाध्यायिनि निपातितः। वेदाध्यायीति पुनर्वचनमवधारणार्थम्– वेदाध्याय्येव, न स्नानाद्याचरति। निधनावधिकमस्य ब्रह्मचर्यव्रतमित्यर्थः। देव.

(२) श्रोत्रियः अधीयान एव नार्थज्ञः। स नैष्ठिकब्रह्मचारी। आवि.

**न तस्य स्नानम्॥**

अत एव स्पष्टार्थमाह– नेति। तस्य अनन्तरोक्तस्य नैष्ठिकस्य स्नानं नास्तीत्यर्थः। ‡ देव.

**अथास्य स्नानम्॥**

(१) यस्य तूपकुर्वाणस्य स्नानादिकमस्ति तस्य स्नानकर्तव्यतामाह– अथेति। देव.

(२) अधिगतार्थस्य गार्हस्थ्यं चिकीर्षोरुपकुर्वाणब्रह्मचारिणः स्नानमेतदुच्यते। आवि.

¶ [3]**विवाहदिवसात्पूर्वे तद्दिने स्नानमाचरेत्।**

**विवाहदिवसाधस्तात्कुर्यात्तु स्नातकव्रतम्॥**

† अस्य व्याख्यानं प्रयोगप्रकरणे द्रष्टव्यम्।

‡ आवि. देवगतम्।

¶ 'नामैकदेशे नामग्रहणम्' इति न्यायेन मुक्ताफलादिप्रयुक्तगृह्यशब्देन गृह्यसूत्रप्रतीतेः काठकगृह्यसूत्रेऽनुपलभ्य-

(१) भागृ. २।१८. (२) कागृ. ३।१–४.

(३) मुक्ता. १२३ काठकगृह्ये ; आन. १६७ कठगृह्ये.

## वाराहगृह्यसूत्रम्

अधीतवेदस्य गुर्वनुज्ञातस्य च समावर्तनाधिकारः

[1]हे हे(? वेदे) गुरुणाऽनुज्ञातः स्नायात् ।
कल्पस्यार्थान् बुद्ध्वा स्नास्यन् गां कारयेत् ॥

## आग्निवेश्यगृह्यसूत्रम्

अधीतवेदस्य समावर्तनाधिकारः

[2]वेदमधीत्य स्नास्यन्नुपकल्पयते ...... ॥

## पारस्करगृह्यसूत्रम्

स्नातकप्रकाराः स्नानाधिकारिणश्च, वेदशब्दार्थः

[3]त्रयः स्नातका भवन्ति विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातक इति ॥

(१) स्नातकस्य त्रैविध्यमाह– विद्यास्नातक इति । कभा.

(२) त्रयः त्रिप्रकाराः स्नातका भवन्ति । कथम् ? एको विद्यास्नातकः, अपरो व्रतस्नातकः, अन्यो विद्याव्रतस्नातकः । § हभा.

समाप्य वेदमसमाप्य व्रतं यः समावर्तते स विद्यास्नातकः ॥

समाप्य व्रतमसमाप्य वेदं यः समावर्तते स व्रतस्नातकः ॥

उभयं समाप्य यः समावर्तते स विद्याव्रतस्नातक इति ॥

(१) तदेव विवृणोति– समाप्य वेदमित्यादिना । उच्यते इति सर्वत्राध्याहारः । कभा.

(२) एतेषां लक्षणमाह– समाप्येति । समाप्य समाप्तिं पाठतोऽर्थतश्चावसानं नीत्वा वेदं वेदस्य मन्त्रब्राह्मणात्मिकामेकां शाखां यः समावर्तते स्नाति स ब्रह्मचारी विद्यास्नातको भवति । एवं समाप्य व्रतं द्वादशवर्षादिकं ब्रह्मचर्यम् असमाप्य असंपूर्णमधीत्य वेदम् एकां शाखां वो ब्रह्मचारी समावर्तते स्नानं करोति स व्रतस्नातको भवति । उभयं वेदं ब्रह्मचर्यं च समाप्य अन्तं नीत्वा यः स्नाति स विद्याव्रतस्नातको भवति । ‡ हभा.

(३) वेदाध्ययनपरित्यागेन व्रतकर्तव्यतामादाय व्रतस्नातकं लक्षयति– समाप्य व्रतमिति । एतेन स्वाध्यायाध्ययनगोचराप्रवृत्तेरेव व्रतादेशतां मन्यमाना कुच्छून्यतया निर्लज्ज(त)या च सूत्रकृतैवापहसिता इत्यवधेयम् । न च ब्रह्मचर्यमेव व्रतम्, समावर्तनप्राकालिकब्रह्मचर्यप्रतियोगिकविसर्गस्य गगनकमलकल्पत्वात् । न च मेखलादिधारणाधिकारकाले ब्रह्मचर्यपरित्यागः शास्त्रप्रसिद्धः । न च समावर्तनमेव व्रतविसर्ग इति वाच्यम्, 'गुरवे तु वरं दत्वा' इत्यादिधर्मशास्त्रे व्यस्तयोः समुच्चितयोर्वा वेदाध्ययनव्रतानुष्ठानयोः समाप्त्युत्तरकालं समावर्तनाधिकारात्, अतिस्पष्टं 'समाप्य व्रतम्' इत्यादिना तथैव सूत्रणात्पारस्कराभिधैः कात्यायनचरणैः, समावर्तनस्यैकत्वाच्च । न च व्रतादेशोऽप्येक एवेति वाच्यम्, 'एतदेव व्रतादेशनविसर्गेषु' (पागृ. २।१०।१०) इति वक्ष्यमाणसूत्रकारे(? सूत्रे)णैव व्रतादेशानां विसर्गाणां च बहुवचनेन बाहुल्यप्रतिपादनात् । न च बहुत्वमविवक्षितमिति वाच्यम्, 'स्थालीपाकानाम्' (पागृ. १।१।१) इत्यादावविवक्षापत्तेः, 'वेदव्रतानि वा' इत्यत्रापि बहुत्वश्रवणात् । न च तदप्यविवक्षितमेव, एवं च बहुवचनमात्रस्यैवाविवक्षितत्वे 'बहुषु बहु-

---

मानमपीदं काठकवचनमत्र संगृहीतम् । प्रयोगप्रकरणे संग्रहीष्यमाणमित उत्तरं वचनमपि काठकगृह्यसूत्रे नास्ति, तत्र निषिध्यमानौ स्नानसंबन्धिनौ तीर्थसेवनशाकलहोमावपि काठकगृह्यसूत्रे नोपलभ्येते । मुक्ता., आन. इत्येताभ्यां गृहीते वृद्धवसिष्ठवचने तावुपलभ्येते । श्रीमता विश्वबन्धुशास्त्रिणा वैदिकपदानुक्रमकोशे वेदाङ्गभागे संगृहीतेष्वाधारग्रन्थेषु काठकगृह्योद्धरणं नामैक आर्षो ग्रन्थोऽस्ति । सोऽत्र काठकगृह्यशब्दाभिधेयः स्यादिति संभवोऽपि न प्रतिभासते, 'विवाहदिवसादवस्तात्, शाकलहोमः' इत्याद्येतद्वचनस्थितविशेषशब्दानां तत्र संग्रहाभावात् ।

§ गभा. हभावत् ।

(१) वागृ. ९. (२) आग्निगृ. १।३।१.

(३) पागृ. २।५।३२–३५; बौमि. १।५१; आप्र. ६१.

‡ गभा. हभावत् ।

वचनम्’ ( पा. १।४।२१ ) इत्यस्य पाणिनीयप्रणयनस्या-
प्यानर्थक्यापत्तेरिति दिक्। विभा.

¹वेदं समाप्य स्नायात् ॥

( १ ) एवं हि श्रूयते– ‘वेदमधीत्य स्नायात्’
इति। ¶ कभा.

( २ ) वेदं मन्त्रब्राह्मणात्मकं समाप्य सम्यक् पाठतो-
ऽर्थतश्च अन्तं नीत्वा स्नायात् वक्ष्यमाणेन विधिना
स्नानं कुर्यात्। हभा.

( ३ ) स्नानशब्देन समावर्तनसंस्कार उच्यते।
† गभा.

²ब्रह्मचर्यं वाऽष्टाचत्वारिंशकम् ॥

( १ ) ब्रह्मचर्यं वेति वर्षे विकल्पः। ¶ कभा.

( २ ) अथवा ब्रह्मचर्यं व्रतमष्टाचत्वारिंशकम् अष्टा-
चत्वारिंशद्वर्षं निर्वर्त्य समाप्य अवसानं प्रापय्य गुरुणा-
ऽनुमतः स्नायादिति गतेन संबन्धः। हभा.

( ३ ) “मीमांसकास्तु अष्टाचत्वारिंशकं व्रतं समाप्य
अवसानं कुर्यादिति पक्षं नाङ्गीकुर्वन्ति, ‘जातपुत्रः कृष्ण-
केशोऽग्नीनादधीत’ इत्याधानश्रुतिविरोधात्। न च
विकल्पः, अतुल्यत्वात्। प्रत्यक्षमेकं श्रुतिवचनम्,
कल्प्यमपरम्। कल्प्यप्रत्यक्षयोः प्रत्यक्षं बलवदिति भर्तृ-
यज्ञभाष्ये”। † गभा.

( ४ ) पक्षान्तरमाह– ब्रह्मेति। ब्रह्मचर्यपदमाग्नेया-
दिव्रतपरम्, ‘वेदं व्रतानि वा’ इत्युक्तेः। कीदृशं तदत
आह– आऽष्टाचत्वारिंशकमिति। अष्टाचत्वारिंशद्वर्षा-
वच्छिन्नमित्यर्थः। अत्रापि स्नायादित्यनुषङ्गः। विभा.

द्वादशकेऽप्येके ॥

( १ ) द्वादशकेऽप्येके स्नानमिच्छन्ति। कभा.

( २ ) द्वादशके व्रते एके स्नानमिच्छन्ति। जभा.

( ३ ) एके सूत्रकाराः द्वादशकेऽपि द्वादशवर्षसमाप्ये
व्रते चरिते स्नायादिति मन्यन्ते, तत्रापि गुरुणाऽनु-
ज्ञातः। अत्रासूत्रितमपि उभयं वेदं व्रतं च समाप्य वा
स्नायादित्यनुषज्यते। हभा.

( ४ ) अन्ये तु वेदव्रतसमाप्त्युत्तरं स्नानमिच्छन्ति।
† गभा.

( ५ ) वेदव्रतयोः संकुचिताध्ययनाचरणपक्षमतमाह–
द्वादशकेऽप्येके इति। द्वादशवर्षावच्छिन्नं वेदाध्ययनं
व्रतानुष्ठानं चेत्यर्थः। एतन्मत एकमेव वेदमधीत्य
स्नायादित्यवधेयम्। विभा.

गुरुणाऽनुज्ञातः ॥

( १ ) स्नायादित्यनुवर्तते। गुर्वनुज्ञा च कर्माङ्गतया,
न स्नानस्य कालान्तरमेतत्। § कभा.

( २ ) कथं स्नायादत आह– गुरुणाऽनुज्ञातः।
आज्ञाप्रार्थनं च गुरवे वरदानानन्तरम्, ‘वरं दत्त्वा
स्नायीत’ इत्युक्तेः। एतच्च स्नानाधिकारिविशेषणं सति
गुरौ। विभा.

¹विधिर्विधेयस्तर्कश्च वेदः ॥

( १ ) वेदशब्देन किमभिधीयत इत्यत आह– विधि-
रिति। विधिः विधायकं ब्राह्मणम्, विधेयाः मन्त्राः,
तर्कशब्देनार्थवादोऽभिधीयते। तर्क्यते अनेन संदिग्धो-
ऽर्थः। यथा ‘अक्ताः शर्करा उपदधाति’ ‘तेजो वै
घृतम्’ इति। अञ्जनं च तैलवसादिनाऽपि संभवति। तत्र
‘तेजो वै घृतम्’ इति घृतसंस्तवात् तर्क्यते घृताक्ता इति।
तेन विध्यर्थवादमन्त्रा वेदशब्देनाभिधीयन्त इत्युक्तम्।
‡ कभा.

( २ ) तर्कः मीमांसा। ¶ ब्रक. २३

¶ जभा. कभावत्।

† शेषं हभावत्।

(१) पागृ. २।६।१ ; निप्र. १२ (भागः २) (वेद-
मधीत्य स्नायात्) ; कुस. २९८ (=).

(२) पागृ. २।६।२–४.

† शेषं हभावत्।

§ जभा., गभा. कभावत्।

‡ जभा. कभावत्।

¶ शेषं कभागतम्। कुर. ब्रकवत्।

(१) पागृ. २।६।५ ; ब्रक. २३ ; कुर. २८; निप्र.
१२ (भागः २).

( ३ ) [ ¶ विधिर्विधेयस्तर्कश्च वेदः । यदत्र 'एतस्मिन्दर्शने सति समस्तवैदिकसंहारात्मिका मीमांसाऽपि वेदशब्दवाच्या भवति ' इत्यादिना तर्कपदं मीमांसापरमङ्गीकृत्य वार्तिककारिताया मीमांसाया अपि वेदत्वमुक्तम्, तत् विध्यादित्रयस्य वेदत्वप्रतिपादनार्थेयं स्मृतिरिति षडङ्गवेदत्वस्मृतितुल्यन्यायतया पूर्वपक्षसंय( ?म )ताम्युपगमेनैव तद्दृष्टान्तेन कल्पसूत्राणां छन्दस्त्वाभावमुपपादयितुम् । न त्वेवमेव स्मृतिव्याख्यानं संमतम्, अध्येतॄणां मीमांसायां वेदशब्दाप्रसिद्धेः । न चाध्येतृप्रसिद्धिनिरपेक्षैवेयं स्मृतिर्विध्यादित्रयस्य वेदत्वं प्रतिपादयतीति वाच्यम्, तथा सति तन्नैरपेक्ष्येण स्मृतिमात्रपर्यालोचने तत्स्वारस्येन विध्युद्देशमात्रस्यैव वेदत्वापत्तावर्थवादादीनामवेदत्वापत्तेः, विधेयत्वम( ? यत्वाद )ग्निहोत्रन्यायविस्तरयोरपि वेदत्वापत्तेश्च । अथाध्येतृप्रसिद्ध्यनुरोधेन विधिविधेयशब्दयोर्ब्राह्मणमन्त्रपरत्वात् नाव्याप्त्यतिव्याप्ती, तर्हि स्मृतेरध्येतृप्रसिद्धिसापेक्षत्वापत्तौ कथं तर्क( पदस्य )तदप्रसिद्धवेदत्वप्रतिपादनपरता ? न च तदंशे स्वातन्त्र्यम्, अपेक्षानपेक्षाविध्यनुवादकृतवैरूप्यापत्तेः न्यायविस्तरातिप्रसङ्गानिवृत्तेश्च व्यवहारानुप्रविष्टपदार्थनिर्णये तद्विरोधेन शास्त्रस्यासामर्थ्याच्च । तस्मादध्येतृप्रसिद्धस्यैव मन्त्रब्राह्मणात्मकस्य वेदस्य कश्चिद्विधिनाऽङ्ग( ? धिः प्रधानाङ्ग )विधायकः, कश्चिन्मन्त्रात्मको विधेयः, कश्चित् 'स एष नेति नेति त्र्यैयम्बकाः पुरोडाशाः' इत्यादिवत्( ? इत्यादिस्तर्क इति ) त्रैविध्यमनया (एव ? ) उच्यत इति तात्त्विकोऽर्थः । अतः षडङ्गा एव वेद( ? षडङ्गानां वेदत्व )स्मृतिरपि परमतोपन्यासात् पूर्वपक्षस्मृतिरेवेत्यलम् । ] तर्को मीमांसेति कल्पतरुकारः । चकारान्नामधेयभागसंग्रहः । यतो वेदो विध्यर्थवादमन्त्रनामधेयभेदैश्चतुर्धा मीमांसकैर्विचार्यते । यथा अग्निहोत्राघारौ यागभेदौ उद्भिद्बलभिदिति नामधेयानि । ‡ हभा.

( ४ ) तर्कः कल्पसूत्रमिति भर्तृयशः । तर्को मीमांसेति कल्पतरुः । चशब्दान्नामधेयभागसंग्रह इति हरिहरः । ¶ गभा.

( ५ ) वेदं समाप्येति प्रागुक्तम्, स च वेदपदवाच्यः क इत्यत आह– विधिरिति । यजेतेत्यादिविधायको विधिः, विधेया विधिविनियोज्या मन्त्राः, तर्कः न्यायमीमांसे । अर्थवाद इति केचित् । चकारान्नामधेयांशसंग्रहः । लक्ष्यमाह– वेद इति । यद्वा गुर्वनुशाकारमाह– विधिर्विधेयस्तर्कश्च वेद इति । विधीयत इति विधिः, 'यागेन यजेत' इत्यादिविधायकवाक्यार्थ इति यावत् । स विधेयः कृतिसाध्यक्रियाविषयत्वं लम्भनीय इत्यर्थः । तर्कश्चेत्यत्र विधेय इत्यर्थानुकर्षणार्थश्चकारः । तर्कस्य च प्रमाणसाचिव्येनैव विधायकत्वाद्विध्यर्थविरोधे तर्कसहकृतविध्यर्थस्य विधेयत्वमित्यर्थः । यथा समित्समिध्यमानवह्निप्रैषे शब्दार्थाध्याहारसंदेहे वरणप्रागभावावच्छिन्नसमये 'यदि पदार्थगोचरपदसंकेतः स्यात्तदा पदाध्याहारः स्यात्, स च नास्तीत्यतो न पदाध्याहारः' इति तर्कस्याऽऽहार्या( ? स्य साहाय्या )दर्थाध्याहार इत्यर्थः । नन्वेवं बार्हस्पत्यसूत्रे क्षणभङ्गाद्यर्थसमर्पकतत्साहाय्यादप्यर्थनिर्णयः स्यादत आह– वेद इति । वेदपदसमभिव्याहाराद्वेदसंबन्धी तर्को लभ्यते । तथा च विध्यर्थविरोधे वैदिकतर्कसहकृतवेदादर्थनिर्णय इत्यर्थः । विभा.

[1]**षडङ्गमेके ॥**

शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति षड्भिरङ्गैरुपेतमेक आचार्या वेदमिच्छन्ति । एतस्मिन्हि अधिगते स्नानार्हो भवति । स्नानशब्देन द्वितीयाश्रमप्रतिपत्तिरुच्यते । तदनुष्ठानयोग्यता च षडङ्गेऽप्यधिगते वेदे भवति । † कभा.

[2]**न कल्पमात्रे ॥**

---

¶ आदर्शपुस्तके चतुरस्रकंसचिह्नमध्ये मुद्रितोऽयं ग्रन्थो यथाक्षरमेवात्र संगृहीतः । तत्रत्यमवतरणचिह्नादिकं शुद्धिसूचनं चास्मदीयम् ।

‡ शेषं कभावत् ।

¶ शेषं कभावत् ।

† जभा., हभा., गभा., विभा. कभावत् ।

(१) पागृ. २।६।६ ; ब्रक. २३ (षडङ्गात्मकः) ; गुर. २८ ब्रकवत् ; निप्र. १२ (भागः २).

(२) पागृ. २।६।७.

(१) अत एवोक्तम्— न कल्पमात्रे । कल्पशब्देन च ग्रन्थमात्रमभिधीयते । न ग्रन्थमात्रेऽधिगते स्नायीत । न ह्येतावता तदनुष्ठानयोग्यता भवति । तस्मादर्थतो ग्रन्थतश्चाधिगम्य स्नानमिति । $ कभा.

(२) कल्पमात्रे ग्रन्थमात्रे मन्त्रे वा ब्राह्मणे वा अधीते न स्नानमिच्छन्ति, कल्पमात्राध्ययनस्य अनुष्ठानायोग्यत्वात् । यतः 'अथातोऽधिकारः, अथातो धर्मजिज्ञासा, अथातो ब्रह्मजिज्ञासा' इत्यादिभिरधिकारसूत्रैः अधीतसकलवेदस्याग्निहोत्रादिकर्मस्वधिकार इत्याचार्यैर्वर्ण्यते । हभा.

(३) ननु श्रुतिस्मृत्यर्थानुष्ठानकामिकार्ये स्नानं कल्पसूत्राध्ययनात् सिध्यतीति अत्यनुष्ठानकामी कल्पमात्रमधीत्य स्नास्यतीत्याशङ्क्य निषेधति— न कल्पमात्र इति । विभा.

[१]कामं तु याज्ञिकस्य ॥

(१) यज्ञं वेदेति याज्ञिकः । तस्य कामं स्नानं भवति षडङ्गमर्थतोऽनधिगम्यापि । ‡ कभा.

(२) तुशब्दः पक्षव्यावृत्तौ । कामम् इच्छया याज्ञिकस्य आध्वर्यवादियज्ञविद्याकर्मकुशलस्य स्नानमिच्छन्ति । अयमर्थः— मन्त्रब्राह्मणात्मकं वेदमधीत्य अवबुध्य च स्नायादित्यपरः । ग्रन्थमात्रमप्यधीत्य यज्ञविद्यां चाभ्यस्य स्नायादिति तृतीयः । यज्ञविद्याविरहेण ग्रन्थमात्रे अधीते न स्नायादिति निषेधः । यतो वेदाध्ययनं वेदविहिताग्निहोत्रादिकर्माद्यनुष्ठानप्रयोजनम् । ¶ हभा.

(३) तु पुनः याज्ञिकस्य कामं तदाऽपि कल्पमात्रे अधीते (न ?) स्नानाधिकार इत्यर्थः । विभा.

$ जभा. कभावत् । गमा. कभावत् हभागतं च ।

‡ संको., संर. कभा—हभानुवादः । जभा. कभावत् ।

¶ गभा. हभावत् ।

(१) पागृ. २।६।८ ; मिप्र. १२ (भागः २) ; संको. १६६ ; संर. ३७०.

## गोभिलगृह्यसूत्रम्

अधीतवेदस्य दत्तगुरुदक्षिणस्य गृहीतगुर्वनुज्ञस्य समावर्तनाधिकारः

§ [१]ब्रह्मचारी वेदमधीत्य ॥

उपन्याहृत्य गुरवे ॥

अनुज्ञातो दारान् कुर्वीत ॥

## खादिरगृह्यसूत्रम्

अधीतवेदस्य दत्तगुरुदक्षिणस्य गृहीतगुर्वनुज्ञस्य समावर्तनाधिकारः

† [२]ब्रह्मचारी वेदमधीत्योपन्याहृत्य गुरवेऽनुज्ञातो दारान् कुर्वीत ॥

आप्लवनं च ॥

'उपन्याहृत्य गुरवेऽनुज्ञातः कुर्वीत' इत्यस्यानुकर्षणार्थश्चकारः । आप्लवनं स्नानं समावर्तनम् । दाराप्लवने इति वक्तव्ये पृथग्ग्रहणं पृथक्प्रयोगार्थम् । अत एव कालोऽपि भिद्यते । व्युत्क्रमस्तु दाराधिगन्तुरेवाऽऽप्लवनं न नैष्ठिकस्येत्येवमर्थम् । इतरथा अध्ययनपरिसमाप्तिनिमित्तमाप्लवनमित्युपशङ्क्येत । रुद्रभा.

तयोराप्लवनं पूर्वम् ॥

जायापत्योर्विवाहात्पूर्वमाप्लवनं कर्तव्यम्, तत् पुनश्च मन्त्रक्रमानुसारेण परस्ताद्वक्ष्यते 'आप्लवने पुरस्तात्' इत्यारभ्य । रुद्रभा.

## जैमिनिगृह्यसूत्रम्

अधिकारिभेदप्रयुक्तस्नातकप्रकाराः तेषां श्रेष्ठत्वाश्रेष्ठत्वे च

[३]वेदमधीत्य व्रतानि चरित्वा ब्राह्मणः स्नास्यन् ... ॥

§ एतेषां व्याख्यानं विवाहविधिप्रकरणे (सं. का. पृ. ९६) द्रष्टव्यम् ।

† अस्य व्याख्यानं विवाहविधिप्रकरणे (सं. का. पृ. ९७) द्रष्टव्यम् ।

(१) गोगृ. ३।४।१–३. (२) खागृ. १।३।१–३.

(३) जैगृ. १।१९ ; संर. ३७० (त्रयः स्नातका भवन्ति विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातक इति । तेषामुत्तमः श्रेष्ठः) एतावदेव, गोभिलगृह्ये.

त्रयः स्नातका भवन्तीति ह स्माऽऽहाऽऽ-
रुणिर्गौतमो विद्यास्नातको व्रतस्नातको विद्या-
व्रतस्नातक इति । तेषामुत्तमः श्रेष्ठस्तुल्यौ पूर्वौ ॥

अध्ययनेन अव्रतोऽधीतवेदस्नातो विद्यास्नातकः । अनुष्ठया अवेदोऽनुष्ठितव्रतस्नातो व्रतस्नातकः । अधीतवेदोऽनुष्ठितव्रतस्नातश्च विद्याव्रतस्नातकः । उत्तमस्तृतीयः विद्याव्रतस्नातकः । भीभ्मा.

## गौतमः

दत्तगुरुदक्षिणस्य गृहीतगुर्वनुज्ञस्य वा स्नानाधिकारः

[1]विद्यान्ते गुरुरर्थेन निमन्त्र्यः ॥

विद्यासमाप्तौ, न तु व्रतानाम्, गुरुः आचार्यः अर्थेन प्रयोजनेन निमन्त्र्यः प्रष्टव्यः 'किं गुर्वर्थे करवाणि ?' इति । ‡ मभा.

[2]कृत्वाऽनुज्ञातस्य वा स्नानम् ॥

(१) ततः कृत्वा दत्त्वेत्यर्थः, गुरूपदिष्टमर्थम् । तेन वा 'अलं गुरुदक्षिणया' इत्यनुज्ञातस्य स्नानं समावृत्तिः । § मभा.

(२) ततः 'आहर' इत्याचार्योक्तं कृत्वा स्नानं कर्तव्यम् । 'वत्स, त्वद्गुणैरेवाहमस्मि तोषितः, धनेनालम्' इति तेनानुज्ञातस्य वा स्नानं समावर्तनं कर्तव्यमिति । गौमि.

(३) अयमर्थस्त्वनुज्ञया वेत्यर्थः । $ स्मृच. ६६

‡ गौमि., स्मृच., चका. मभावत् । मपा. मभागतम् ।

§ चका. मभागतं स्मृचवच्च ।

$ शेषं मभागतम् । मुक्ता. स्मृचवत् ।

(१) गौध. २।५५ ; मेधा. २।२४६ (विद्यान्ते गुरुमर्थेन निमन्त्र्य) ; अप. १।५१ पृ. ७६ ; मभा. ; गौमि. २।५४ ; स्मृच. ६६ ; चका. ७८२ ; मपा. ११४ ; वीमि. १।५१ मेधावत् ; संप्र. ५६६ मेधावत् ; मुक्ता. १२०.

(२) गौध. २।५६ ; विश्व. १।५१ ; अप. १।५१ पृ. ७६ कृत्वाऽनु (कृतानु) ; मभा. ; गौमि. २।५५ ; स्मृच. ६६ ज्ञातस्य (ज्ञां तस्य) ; चका. ७८२ (वा०) शेषं अपवत् ; वीमि. १।५१ स्मृचवत् ; संप्र. ५६६ त्वाऽनुज्ञात (तानुज्ञान) ; मुक्ता. १२० कृत्वाऽनु (ततः कृतानु).

## हारीतः

अधिकारिभेदप्रयुक्तस्नातकप्रकाराः, ब्रह्मवादिनीनां
स्त्रीणां समावर्तनकालः

[1]त्रयः स्नातका भवन्ति—विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातकश्चेति ॥

[2]यः समाप्य वेदमसमाप्य व्रतानि समावर्तते स विद्यास्नातकः । यस्तु समाप्य व्रतान्यसमाप्य वेदं स व्रतस्नातकः । यः पुनरुभयं समाप्य स विद्याव्रतस्नातकः ॥

एवं च व्रतस्नातकस्य विवाहोत्तरकालमध्ययनसमापनं वेदार्थज्ञानं चेति मन्तव्यम् । अस्मिन् पक्षे वेदाध्ययनसमाप्तावेव गुरवे दक्षिणां दद्यात् । मपा. ११३

(१) व्रक. २७७ कश्चेति (क इति) ; स्मृच. ६६ ; मनु. ३।२ ; चका. ७८१ ; पमा. ४६१ व्रकवत् ; मपा. ११३ व्रकवत् ; मर. १३ (विद्याव्रतस्नातकश्च०) ; वीक. १।५१ ; संसौ. १५० त्रयः + (हि) (चेति०) ; संप्र. ५६५ व्रकवत् ; मुक्ता. ११९ व्रकवत् ; आग. १६३ व्रकवत्.

(२) गोरा. ४।३१ (समाप्य वेदमसमाप्य व्रतानि यः स्नाति स वेदस्नातकः । असमाप्य वेदं समाप्य व्रतानि यः स्नाति स व्रतस्नातकः । उभयं समाप्य यः स्नाति स विद्याव्रतस्नातकः) ; व्रक. २७७ यस्तु (यः) वेदं स (वेदं समावर्तते स) यः पुनरुभयं समाप्य (उभयं समाप्य समावर्तते) ; स्मृच. ६६ ; मनु. ३।२ स विद्याव्रत (यः स विद्याव्रत) शेषं व्रकवत् : ४।३१ (यः समाप्य वेदानसमाप्य व्रतानि समावर्तते स विद्यास्नातकः । यः समाप्य व्रतान्यसमाप्य वेदान्समावर्तते स व्रतस्नातकः । उभयं समाप्य यः समावर्तते स विद्याव्रतस्नातकः) ; चका. ७८१ ; मपा. ११३ (यो वेदमेव समाप्य समावर्तते स विद्यास्नातकः । यश्च व्रतान्येव समाप्य स व्रतस्नातकः । यश्चोभयं स विद्याव्रतस्नातकः) ; मर. १३ (यो वेदमेव समाप्य समावर्तते स विद्यास्नातकः । यो व्रतान्येव समाप्य समावर्तते स व्रतस्नातकः । यस्तूभयं समाप्य समावर्तते स विद्याव्रतस्नातकः) ; वीक. १।५१ यस्तु ... विद्याव्रत (यो व्रतं वेदमसमाप्य समावर्तते स व्रतस्नातकः । य उभयं समाप्य समावर्तते स विद्याव्रत) ; मुक्ता. ११९ समाप्य स (स) ; आग. १६३–१६४ वेदं + (समावर्तते) समाप्य स (समाप्य समावर्तते स).

¹प्राग्रजसः समावर्तनम् ॥

## आपस्तम्बः हिरण्यकेशिधर्मसूत्रं च

मतभेदेनाधिकारिभेदप्रयुक्तस्नातकप्रकाराः

²विद्यया स्नातीत्येके ॥

'न समावृत्ता वपेरन्' (आध. १।१०।७) 'स्नातस्तु काले'( आध. १।८।७ ) इत्यादिषु प्रसक्तस्य स्नानस्य कालमाह– विद्ययेति । वेदविद्या विद्या । तया संपन्नः स्नानं कुर्यादित्येके मन्यन्ते । मनुरप्याह– 'वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम् । अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत् ॥' (मस्मृ. ३।२) इति । $ उ.

³तथा व्रतेनाष्टाचत्वारिंशत्परीमाणेन ॥

परिमाणमेव परीमाणम् । छान्दसो दीर्घः । अष्टाचत्वारिंशद्ग्रहणं 'पादूनम्, अर्धेन' ( आध.१।२।१३, १४ ) इत्यादिपूर्वोक्तस्याप्युपलक्षणम् । अष्टाचत्वारिंशदादिपरिमाणेन व्रतेन वा संपन्नः स्नायात् असंपन्नोऽपि विद्यया । $ उ.

⁴विद्या व्रतेन चेत्येके ॥

विद्येति तृतीयैकवचनस्याऽऽकारस्य 'सुपां सुलुक्' ( पा. ७।१।३९ ) इत्यादिना लुक् । विद्यया व्रतेन चोभाभ्यां संपन्नः स्नायादित्येके मन्यन्ते । एवं च 'वेदमधीत्य स्नास्यन्' इत्यत्र वेदमधीत्येत्युपलक्षणम् । अत्र याज्ञवल्क्यः– 'वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा । अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ॥' (यास्मृ. १।५२ ) इति । अत्र व्रतशब्देनाग्नीन्धनभैक्षाचरणादयो ब्रह्मचारिधर्मा उच्यन्ते । तेषु हि कालपरिमाणस्य श्रुतत्वात् पारं नीत्वेति युज्यते । दृश्यते च तेषु व्रतशब्दः– 'यथा व्रतेषु समर्थः स्याद्यानि वक्ष्यामः' ( आध. १।१।२७ ) इति । न तु सावित्र्यादीनि वेदव्रतान्युच्यन्ते, तेषां तत्तत्प्रदेशाध्ययनशेषतया तदभावेऽभावात् 'वेदं व्रतानि वा' इति विकल्पानुपपत्तेः । अतः कालविशेषावच्छिन्नानि व्रतानि वेदमुभयं वा पारं नीत्वेत्यर्थः । † उ.

$ संर. उवत् ।

(१) संप्र. ४०४.

(२) आध. १।३०।१; हिध. २६।८।१; ब्रक. २७७; उ. १।२।१६ स्नातीत्येके (स्नाति); संर. ३६७ हिध.

(३) आध. १।३०।२; हिध. २६।८।२ परी (परि); ब्रक. २७७ हिधवत्; संर. ३६७ हिधवत्, हिध.

(४) आध. १।३०।३; हिध. २६।८।३ चेत्येके (च); ब्रक. २७७; संर. ३६७ हिधवत्, हिध.

## वसिष्ठः

समावर्तनेऽधिकारः कालश्च

¹अधीत्य वेदांश्च तदर्थशास्त्रा-
ण्यथ्यस्य लब्ध्वा स्वगुरोरनुज्ञाम् ।
कुर्वीत समावर्तनकर्म पश्चाद्
गोदानतः पाणिनिपीडनात्प्राक् ॥

गोदानं केशान्तकर्म । गवां केशानां दानं खण्डनं गोदानम् । पाणिनिपीडनं विवाहः । एतेन पूर्वं गोदानं ततः समावर्तनं ततो विवाह इति क्रमो दर्शितः । संसौ. १५१

## शङ्खः

गुरुदक्षिणादानगुर्वनुज्ञाग्रहणे अधिकारिविशेषणे

²गुरवे च धनं दत्त्वा स्नायीत तदनुज्ञया ॥

## विष्णुः

वेदाध्ययनगुर्वनुज्ञाग्रहणदक्षिणादानानि स्नानाधिकारिविशेषणानि

³वेदस्वीकरणादूर्ध्वं गुर्वनुज्ञातस्तस्मै वरं दत्त्वा स्नायात् ॥

† संर. उवत् ।

(१) वसं. ३०।१; संसौ. १५१ त्य वेदां (तवेद).

(२) शस्मृ. ३।१५.

(३) विस्मृ. २८।४२.

## मनुः

दत्तगुरुदक्षिणस्य समावर्तनेऽधिकारः, दक्षिणाद्रव्य-प्रदर्शनम्, समावृत्तस्य त्रिरात्रमाशौचम्

**'न पूर्वं गुरवे किंचिदुपकुर्वीत धर्मवित्।
स्नास्यंस्तु गुरुणाऽऽज्ञप्तः शक्त्या गुर्वर्थमाहरेत्॥**

(१) (न) नैष्ठिकस्यायं(? स्येदं) गुरवेऽर्थदानं प्रतिषिध्यते, स्नास्यतो गुर्वर्थविधानात्। न च नैष्ठिकस्य स्नानमस्ति। प्रकृतश्च नैष्ठिक एव। उपकुर्वाणस्य तु उपनयनात्प्रभृति यावत्स्नानमस्त्येव सति संभवे यथाशक्त्या दानम्। पूर्वं स्नानात्। गुरवे किंचित् उपकुर्वीत दद्यात्। ददात्यर्थे धातुः सोपसर्गः। अतश्च स्वशब्ध्या चतुर्थी। अथवा क्रियाग्रहणमपि कर्तव्यमिति, ततः संप्रदानत्वम्। धर्मवित्पदमनुवादः। स्नास्यंस्तु स्नानकाले प्राप्ते गुरुणा आदिष्टम् 'अमुमर्थमाहर' इति। ततः शक्त्या यावन्तं शक्नोति तावन्तं गुर्वर्थम्। ‡ गुरोरिदं गुर्वर्थम्। गुरोर्येन प्रयोजनं तम् आहरेत् उपनयेत्। नन्वयं(? न त्वयं) नैष्ठिकस्य गुर्वर्थकरणप्रतिषेधः। न ह्येते द्वे वाक्ये, एकेन प्रतिषेधः, अपरेण गुर्वर्थविधिः। स्नाने गुर्वर्थोऽवश्यं कर्तव्य इत्ययं विधिः। प्रतिषेधस्तच्छेषः। उपकारप्रतिषेधे च सर्वशुश्रूषाविधिरनर्थकः स्यात्। न च दानमेवोपकारः, येन धनोपकार एव निषिध्येत, नान्यः प्रियहितादिः। अर्थवादत्वे त्वयथार्थता न दोषः। गम्यते चात्रैकवाक्यता। मेधा.

(२) न पूर्वमिति। स्नानपूर्वमगृहीतवेदः शिष्यो धनमाहरन् यथा 'न अध्यापयामि' इत्येवं गुरुणाऽऽदिष्टो न किंचिदपि गुरवे दद्यात्, भृतकाध्यापकत्वप्रसङ्गात्। अत एवाऽऽह– धर्मविदिति। अपणपूर्वत्वे निषेधः 'धर्मार्थौ यत्र न स्याताम्' (मस्मृ. २।११२) इत्युक्तत्वात्। तथा चाऽऽपस्तम्बः– 'यदाचार्यं भोजयित्वा शेषमन्नमश्नाति हविरुत्कृष्टमेव तत्, यदन्यानि द्रव्याणि यथालाभमुपहरति दक्षिणा एव ताः, स एष ब्रह्मचारिणो यज्ञो नित्यं प्रततः' (आध. १।४।१–४) इति। स्नानं पुनः कर्तुमिच्छन् समावर्तनकाले 'इममर्थमाहर' इत्येवं गुरुणाऽऽदिष्टो यथाशक्त्यवश्यं गुर्वर्थमाहरेत्, तदानीं भृतकाध्यापितत्वासंभवात्। §गोरा.

(३) अध्ययनात् प्राक् गुरवे नोपकुर्वीत अध्ययनाभिसंबन्धि(? संधि)ना न किंचिद्दद्यात्। एतत् नैष्ठिकोपकुर्वाणकयोस्तुल्यम्, अन्यथा भृतकाध्ययनप्राप्तिप्रसङ्गात्। अत्र प्रसङ्गादुपकुर्वाणस्य दक्षिणादानकाल उक्तः स्नास्यंस्त्विति। गुरुणाऽऽज्ञप्तः स्नास्यन् शक्त्या गुरवेऽर्थमाहरेत्। मवि.

(४) उपकुर्वाणस्यायं विधिः, नैष्ठिकस्य स्नानासंभवात्। गुरुदक्षिणादानं धर्म(?दानधर्म)ज्ञो ब्रह्मचारी स्नानात्पूर्वं किंचिद्गोवस्त्रादि धनं गुरवे नावश्यं दद्यात्। यदि तु यदृच्छातो लभते तदा गुरवे दद्यादेव। अत एव स्नानात्

‡ पूर्ववाक्ये स्वयंप्रयुक्तस्य गुर्वर्थशब्दस्य पुंलिङ्गत्वात् नपुंसकलिङ्गपरोऽयं विग्रहो न तस्य संगच्छते। अतो मनुवचने सामान्यनपुंसकलिङ्गो गुर्वर्थशब्दो मेधाभिमत इति स्वीकृत्य तस्यायं विग्रह इति बोद्धव्यम्। यदि तु उत्तरवाक्येऽपि 'तम्' इति पुंलिङ्गतानिर्देशात्, अग्रे 'स्नाने गुर्वर्थः' इति पुंलिङ्गस्यैव प्रयोगाच्च मनुवाक्ये पुंलिङ्ग एव गुर्वर्थशब्दो मेधाभिमत इति कल्प्यते तदा विसंगतमेवेदं विग्रहवाक्यमित्यास्थेयम्, परिनिष्ठितविभक्त्या वा विग्रहमाश्रित्य 'गुरोरिमम्' इति शुद्धिः कल्पनीया। वस्तुतस्तु यथाश्रुतमिव उक्तशुद्धिकल्पनमप्यशुद्धमेव। तथाहि– गुर्वर्थशब्दः षष्ठीसमासो वा, 'चतुर्थी तदर्थार्थ०' (पा. २।१।३६) इतिसूत्रविहितश्चतुर्थीसमासो वा? आद्ये समासस्यानित्यत्वात् अस्वपदविग्रहो न संगच्छते। अन्त्ये गुरोरिति षष्ठी न संगच्छते। एवं च सर्वथेदं विग्रहवाक्यमसंगतमेव। शुद्धिश्चेत् कल्प्येत 'गुरवे इदम्' इति वा 'गुरोरर्थम्' इति वा कल्पनीया।

§ स्मृच. गोरागतम्।

(१) मस्मृ. २।२४५; ब्रक. २७५; स्मृच. ६६; पमा. ४६०; मपा. ११४ उत्त.; प्रपा. २८४ न पूर्वं (अपूर्वं); संप्र. ५६७; मुक्ता. १२०; संम. ४४ उत्त.; विपा. ६६५ प्रपावत्; संको. १६५ उत्त.; आन. १६६ स्मरणम्; बाल. १।५१; संब. १३३ उत्त.; संर. ३६८ उत्त.

पूर्वं गुरवे दानमाहाऽऽपस्तम्बः– 'यदन्यानि द्रव्याणि यथालाभमुपहरति दक्षिणा एव ताः, स एव ब्रह्मचारिणो यज्ञो नित्यव्रतम्' इति । स्नास्यन् पुनर्गुरुणा दत्ताज्ञो यथाशक्ति धनिनं याचित्वाऽपि प्रतिग्रहादिनाऽपि गुरवेऽर्थमाहृत्यावश्यं दद्यात् । † ममु.

[1]क्षेत्रं हिरण्यं गामश्वं छत्रोपानहमन्ततः ।
धान्यं वासांसि शाकं वा गुरवे प्रीतिमाहरन् ॥

(१) उक्तमुद्दि( ?मादि )ष्टं गुर्वर्थे कुर्यात्, तत्र न सर्वं कर्तव्यमित्येवमर्थोऽयं श्लोकः । यदि गुरुर्विरुद्धमादिशेत्– 'अमुष्य स्त्रियमाहर' इति 'सर्वस्वं वा देहि' इति, तन्न कर्तव्यम् । किं तर्हि ? क्षेत्रम् । धान्यानां भवनभूमिः क्षेत्रमुच्यते । हिरण्यं सुवर्णम् । वाशब्दो विकल्पार्थः । न समुदितानि देयानि । अन्ततः अन्याभावे छत्रोपानहमपि । द्वन्द्वनिर्देशात् साहित्यदानम् । वासांसीति । सर्वत्र संख्या न विवक्षिता । प्रीतिमाहरन्निति । एतदाहरेदिति पूर्वसंबन्धः । प्रीतिमाहरेदिति वा पाठे अत्रैव क्रियापरिसमाप्तिः । प्रीतिमावहेदिति वा । प्रीतिमुत्पादयितुं धान्याद्याहरेत् । स्वतन्त्रैव वा प्रीतिराहार्यतयोच्यते । ततश्च द्रव्योपदेशस्य प्रदर्शनार्थता सिद्धा भवति । अन्यदपि यदेवंविधं प्रीतिजनकं मणिमुक्ताप्रवालहस्त्यश्वतरीरथादि तदपि देयमिति गम्यते । तथा च गौतमः– 'विद्यान्ते गुरुमर्थेन निमन्त्र्य' (गौध. २।५५)। आहरेद्यदि स्यादात्मीयं शक्त्यागतं तदा, न चेद् याच्ञादिनाऽर्जयेत् । मेधा.

(२) अतश्च प्रीत्युत्पादनपरत्वात् प्रदर्शनार्थं भूम्यादिग्रहणम् । अन्ततो यद्युत्पन्नं( ? युक्तं ) किंचित् (न) स्यात्तदा छत्रोपानहम् । गोरा.

(३) तदेवाऽऽह– क्षेत्रमिति । अन्ततः पूर्वालाभे । प्रीतिं प्रीतिहेतुम् । धान्यादावप्यन्तत इति यथायोगमनुषञ्जनीयम् । मवि.

(४) अनेन सति संभवे प्रकृष्टमेव देयमित्युक्तं भवति । स्मृच. ६६

(५) किं तत् ? तदाह– क्षेत्रमिति । 'शक्त्या गुर्वर्थमाहरेत्' इत्युक्तत्वात्क्षेत्रहिरण्यादिकं यथासामर्थ्यं विकल्पितं समुदितं वा गुरवे दत्त्वा तत्प्रीतिमर्जयेत् । विकल्पपक्षे चान्ततः अन्यासंभवे छत्रोपानहमपि दद्यात् । द्वन्द्वनिर्देशात् समुदितदानम् । प्रदर्शनार्थं चैतत् । संभवेऽन्यदपि दद्यात् । अत एव लघुहारीतः– 'एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत् । पृथिव्यां नास्ति तद्द्रव्यं यद्दत्त्वा चानृणी भवेत् ॥' । असंभवे शाकमपि दद्यात् । ममु.

(६) अन्ततः पूर्वेषामशक्तौ धान्याद्युत्तराहरणमित्यर्थः । दक्षिणाया अदृष्टार्थत्वं मीमांसास्तबके स्थापितम् । अत आह– प्रीतिमिति । प्रीत्यर्थमित्यर्थः । मच.

(७) अनेन सत्यां शक्तौ गुर्वभिलषितमेव देयमित्युक्तं भवति, 'गुरवे तु वरं दत्त्वा' इति योगिस्मरणात् । वरम् अभिलषितम् । तदसंभवे गौर्वा, 'गौर्वा वरः' इति श्रुतेः । संप्र. ५६६

(८) प्रीतिमिति । एतेषु मध्ये यदेव गुरोः प्रियं तदेव दद्यादित्याशयः । दानमन्तरेणैव गुरोः प्रीतावनुज्ञयैव समावर्तनं कुर्यादित्यपि सूच्यते । अत एवोक्तं संग्रहे – 'तेनोक्तं च तथा कृत्वा स्नानं शिष्यः समाचरेत् । अलमर्थेन मे वत्स त्वद्गुणैरस्मि तोषितः । गृहान् गच्छानुजानामीत्यनुज्ञातोऽथवा चरेत् ॥' इति । छत्रोपानहोः सहितयोर्दानम्, द्वन्द्वोपादानात् । वासांसि त्रीणि । गुरुप्रीत्यर्थमेतद्दानम्, न विद्यानिष्क्रयः, 'एकमप्यक्षरं

---

† मच., नन्द., भाच. ममुगतम् ।

(१) मस्मृ. २।२४६ ; मेधा. 'हरन्' इत्यस्य स्थाने 'हरेत्' 'वहेत्' इत्यपि पाठौ ; अप. १।५१ पृ. ७६ वा (च) हरन् (हरेत्) उत्त. ; ब्रक. २७५ वासांसि शाकं वा (शाकं च वासांसि) ; स्मृच. ६६ त्रोपानहमन्त (त्रं चोपानहं त) हरन् (हरेत्) ; पमा. ४६०–४६१ मन्ततः (मासनम्) हरन् (हरेत्) ; प्रपा. २८४ हरन् (हरेत्) ; संप्र. ५६६ धान्यं वा (धान्यवा) शेषं प्रपावत् ; मुक्ता. १२० त्रोपानहमन्त (त्रं चोपानहं त) शेषं प्रपावत् ; संम. ४४ मन्ततः (मासनम्) धान्यं वा (धान्यवा) ; विपा. ६६५ नहमन्ततः (नद्द्वयं ततः) हरन् (वहन्) ; संको. १६५ हरन् (वहन्) ; बाल. १।५१ प्रपावत् ; संव. १३३ संकोवत् ; भाच. संकोवत् ; संर. ३६८ संकोवत् .

वस्तु गुरुः शिष्ये निवेदयेत् । पृथिव्यां नास्ति तद्द्रव्यं यद्दत्त्वा त्वनृणी भवेत् ॥ ' इति । संको. १६५

( ९ ) अन्ततः व्रतान्ततः गुरवे प्रीतिम् आवहन् छत्रादिकं दद्यात् । भाच.

( १० ) आज्ञप्तः समावर्तनायानुज्ञातः । वासांसि त्रीणि । § संर. ३६८

**'आदिष्टी नोदकं कुर्यादा व्रतस्य समापनात् ।**
**समाप्ते तूदकं कृत्वा त्रिरात्रमशुचिर्भवेत् ॥**

( १ ) व्रतचरणसमाप्तेः( १ णे समाप्ते ) समावृत्तः स सर्वेषामेकैकस्योदकं कृत्वैकस्मिन्नहनि, त्रिरात्रमाशौचं कुर्यात् । † मेधा.

( २ ) समाप्ते तु ब्रह्मचर्ये यद्यनतीतवत्सरं पितृमरणं शृणुयात्तदाऽऽशौचमुदकदानं च प्रेतोद्देशेन त्रिरात्रं ब्रह्मचारिणा कार्यम् । ततः प्राक्सपिण्डने कृते प्रेतत्वाभावान्नैतदुदकदानमित्यर्थसिद्धम् । एतेन व्रतिनो व्रतकाल आपादितत्वादाशौचस्य तदाऽऽशौचात्ययकालप्राप्तकालमाशौचं कालान्तरेऽपि नास्तीति प्राप्तमिति दर्शितम् । एतच्च युक्तिसिद्धमपि स्पष्टार्थमुक्तम् । उदककरणोत्तरकालीनत्वात्त्रिरात्रपूरणस्योदकं कृत्वेत्युक्तम् । मवि.

( ३ ) समावर्तनोत्तरं पूर्वमृतानां त्रिरात्रमाशौचं कार्यम्, ' आदिष्टी नोदकं कुर्यादा व्रतस्य समापनात् । समाप्ते तूदकं दत्त्वा त्रिरात्रमशुचिर्भवेत् ॥ ' इत्युक्तेः । आदिष्टी ब्रह्मचारीति विज्ञानेश्वरः । ब्रह्मचर्ये यदि कश्चिन्मृतस्तदा त्रिरात्रमध्ये विवाहः कार्योऽन्यथा नेति सिध्यति । जनने तु सत्यपि न त्रिरात्रम्, तत्रातिक्रान्ताशौचाभावात् उदकं दत्त्वेति वचनाच्चेति दिक् । ¶ गभा. २५२

( ४ ) कृतसमावर्तनस्याकृतविवाहस्यायं त्रिरात्रविधिः । नन्द.

( ५ ) एतद्वत्सराभ्यन्तरे अकृतसपिण्डे बोद्धव्यम् । ‡ भाच.

( ६ ) ब्रह्मचारिणा मृतसपिण्डानां समावर्तनोत्तरं मृतक्रमेणोदकदानं सर्वाशौचस्यानापन्नं त्रिरात्रमाशौचं च कार्यम् । न तु समावर्तनात्पूर्वमुदकदानाशौचे । तथा च मनुः– ' आदिष्टी नोदकं... भवेत् ॥ ' इति । संर. २९५

## याज्ञवल्क्यः

वरदानानुज्ञाग्रहणवेदाध्ययनादीन्यधिकारिविशेषणानि

**'गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया ।**
**वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥**

( १ ) उक्तो ब्रह्मचारी, अनन्तरं गृहस्थो वक्तव्यः । तदभिधानायाऽऽह– गुरव इति । अपीत्यस्यापकृष्य योजना, स्मृत्यन्तरैकवाक्यत्वात् अर्थवत्त्वाच्च । वेदमधीत्य नैष्ठिकाख्याश्रमे वसेत्, अपिवा गार्हस्थ्यं कर्तुं स्नायीत । स्नानमिति च संस्कारकर्मणो नामधेयम् । तच्च

---

§ शेषं मेधागतं संकोवच्च ।

† गोरा., ममु. मेधावत् ।

¶ चम., सिन्धु., विपा., संको. गभावत् ।

‡ शेषं मेधागतम् ।

(१) मस्मृ. ५।८८ त्रमशुचिर्भवेत् (त्रेणैव शुध्यति) ; मिता. ३।५ ; अप. ३।५ ; निप. २७१ (=) आदिष्टी (आदेष्टा) ; गभा. २५२ (=) ; चम. ६६ ; सिन्धु. ९८९ कृत्वा (दत्त्वा) ; विपा. ६६८ सिन्धुवत् ; संको. १७२ सिन्धुवत् ; संर. २९५ सिन्धुवत् .

(१) यास्मृ. १।५१ ; विश्व. नीत्वा ह्यु (नीत्वाऽप्यु) ; मिता.; अप. स्नायीत (स्नायाद्वा) ; व्यक. २७५ स्नायीत (स्नायाच्च) वेदं व्र (वेदव्र) शेषं विश्ववत् ; उ. १।३०।३ उत्त. ; स्मृच. ६६ वेदं व्र (वेदव्र) ; ममु. ३।२ उत्त. ; चवा. ६८० विश्ववत्, उत्त. ; चका. ७८१ ह्युभ (तूभ) ; पमा. ४६० ; मपा. ११२ ; मर. १३ स्मृचवत् ; निप. २७२ (=) पू. ; प्रर. ९७ (=) स्मृचवत् ; संसौ. १५० ; विसौ. १ (=) पू. ; वीमि. ; संप्र. ५६५ ; चम. ५४, ६० निर्देशमात्रम्, ६४ ; मुक्ता. ११९ वेदं व्र (वेदव्र) शेषं विश्ववत् ; संम. ४३ ; सम. ६२ उत्त. : १०९ (=) पू. ; विपा. ६६४ श्लोकार्धे व्यत्यासेन पठिते ; संको. १६५ मेव वा (मेव च) शेषं स्मृचवत् ; आग. १६३ स्मृचवत् ; बाल. १।१४२ पू. ४०३ निर्देशमात्रम् ; संव. १३३, १४२ ; पुम. ४४५ स्मृचवत् ; कुम. ४४० उत्त., योगीश्वरः, ९८७ ; संर. ३६८ ; संदी. ३१५ (भागः २) पू.

गृहादवगन्तव्यम् । गृहस्थतां च प्रतिपद्यमानस्यैव स्नानसंस्कारः , नाऽऽश्रमान्तरमपि, तत्परत्वविधानात् । यथाऽऽह गौतमः— 'स विधिपूर्वं स्नात्वा' ( गौध. ९।१ ) इति । † स इत्यनेन गृहस्थोऽभिधीयते । तथा वासिष्ठेऽपि— $ 'गृहस्थोऽविनीतक्रोधहर्षः ' इति प्रकृत्य स्नानविधानम्— 'गुरुणाऽनुज्ञातः स्नात्वा ' इति । यदा स्नायात् तदा गुरवे वरं दत्त्वा । वरदानं च गवादेः श्रेष्ठद्रव्यस्य दानम् । यथाऽऽह पारस्करः— 'गौर्ब्राह्मणस्य वरो ग्रामो राजन्यस्याश्वो वैश्यस्य ' ( पागृ. १।८।१५–१७ ) इति । अनुज्ञातश्च गुरुणा, न वरदानमात्रेण कृती स्यात् । यद्वा वरं वा दत्त्वा स्नायीत, तदनुज्ञया वा वरमदत्त्वा स्नायीत । तथा च गौतमः— 'कृत्वाऽनुज्ञातस्य वा स्नानम् ' ( गौध. २।५६ ) इति । तुशब्दोऽवधारणार्थः । गुरव एव वरं दद्यात् , नान्यस्मै । अनुज्ञानं चान्यतोऽपीति केचित् । एवं त्वदृष्टार्थत्वमसामञ्जस्यं च स्यात् । तस्मात् पितुर्वरदानाभावाशङ्कानिवृत्त्यर्थस्तुशब्दः । वेदं व्रतानि वा पारं नीत्वा । वेदस्य पारनयनमर्थतो ग्रन्थतश्च स्वीकरणम् , न ग्रन्थत एव । तथाच वक्तारो भवन्ति— 'वेदाध्याय्ययं न वेदपारगः ' इति । व्रतानां पारनयनं द्वादश वर्षाणि प्रयत्नतोऽनुष्ठानम् । उभयमेव वा पारं नीत्वा वेदं व्रतानि च । अयं प्रथमः कल्पः , उभयानुग्रहात् एवकाराच्च । वेदमिति चानुकल्पः , प्राधान्येऽपि वेदस्य व्रतानुपसंहारात् । व्रतान्येवेत्यापत्कल्पः , वेदार्थत्वात् ब्रह्मचर्यस्य, तस्य चानिर्वृत्तेरित्यादि प्रपञ्चनीयम् । वेदमिति चैकवचनं ( न ) शाखान्तराध्ययनव्यावृत्त्यर्थम् , ब्रह्मत्वे त्रिवेदसंयोगवचनात् । तथाचाऽऽह मनुः— 'वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम्' इति । पाठान्तरेऽप्ययमेवार्थः— 'वेदव्रतानि वा पारं नीत्वा ह्युभयमेव वा ' इति । वेदं व्रतानि च वेदव्रतानीत्येवं विग्रहः । हिशब्दश्च हेत्वर्थः । यदेति चाध्याहार्यं यदा स्नायात् तदेवमिति । समानमन्यत् ।

† विश्व.

( २ ) यः पुनर्विवाहस्तस्य विवाहार्थं स्नानमाह— गुरव इति । पूर्वोक्तेन न्यायेन वेदं मन्त्रब्राह्मणात्मकं व्रतानि ब्रह्मचारिधर्माननुक्रान्तान् उभयं वा पारं नीत्वा समाप्य गुरवे पूर्वोक्ताय वरमभिलषितं यथाशक्ति दत्त्वा स्नायात् । अशक्तौ तदनुज्ञया अदत्तवरोऽपि । एषां च पक्षाणां शक्तिकालाद्यपेक्षया व्यवस्था । ‡ मिता.

( ३ ) पूर्वोक्तेन न्यायेन वेदं व्रतान्युभयं वा पारं नीत्वा समाप्य स्नायात् । एतेषां च पक्षाणां शक्तिकालाद्यपेक्षया व्यवस्था । यदि भिक्षाटनाद्यशक्तो व्याधिततया राजदैविकाद्यभिभवासमर्थः , तदा वेदं केवलं व्रतान्येव वा केवलानि समाप्य स्नायात् । अत एव विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातक इति त्रैविध्यं स्मर्यते । अतस्तस्य स्नानपरिणयनोत्तरकालमध्ययनसमापनं तदर्थज्ञानं वा । अत एव वक्ष्यति— 'कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही ' इति प्रक्रम्य 'वेदार्थानधिगच्छेत्तु शास्त्राणि विविधानि च ' इति । वेदार्थज्ञानं चावश्यं कार्यम् । ... कथं स्नायादित्याह— गुरवे पूर्वोक्ताय वरमभिलषितं कात्यायनाद्युक्तं 'गौर्ब्राह्मणस्य वरो

---

† अत्र स इति पदस्य गृहस्थाभिधायकत्वे गृहस्थत्वविशिष्टस्य स्नानक्रियायामापाततोऽन्वयप्रतीतेर्विरोध आभासते । वस्तुतस्तु नैव विरोधः । तथाहि— 'भार्यामधिगम्य यथोक्तान्गृहस्थधर्मान्प्रयुञ्जान इमानि व्रतान्यनुकर्षेत्' इति गौतमसूत्रशेषः । तत्र प्रधानभूतायामनुकर्षणक्रियायां सपदार्थस्य शाब्दोऽन्वयो व्युत्पत्तिसिद्धः । तदन्वयात्प्रागेव भार्यामधिगम्येति ल्यप्प्रत्ययबलात् भार्याधिगमनरूपविशेषणसंबन्धसिद्धेः सपदार्थो गृहस्थ एव । स्नानक्रियायां तु कर्तुरन्वय आर्थिकः । स च क्त्वाप्रत्ययबलात् भार्याधिगमनसंबन्धादपि प्रागेव भवतीति सशब्दस्य गृहस्थाभिधायकत्वेऽपि गृहस्थत्वविशिष्टस्य स्नानक्रियायामनन्वयान्न विरोध इति । अग्रिमवासिष्ठवाक्ये तु 'भार्यां विन्देत' इति भार्यावेदनरूपमुख्यक्रियायामपि गृहस्थत्वविशिष्टस्यान्वयानुपपत्तेस्तत्र भाविनि भूतवदुपचार एवाऽऽस्थेयः ।

$ अत्राकारप्रश्लेषो विश्वरूपाभिमतः , न प्रामादिकः , " अविनीतक्रोधहर्षस्यैव गार्हस्थ्यम् , विनीतक्रोधहर्षस्तु 'यमिच्छेत्तमावसेत् ' इति अस्यार्थो यतः " इति पूर्वश्लोकेन व्याख्यानात् ।

† संसौ. विश्वगतम् ।

‡ स्मृच. मितागतम् ।

ग्रामो राजन्यस्याश्वो वैश्यस्य' इत्यादि गुर्वर्थाहरणशक्तादिविषयं तदन्यादिविषयं 'धान्यं वासांसि शाकं च गुरवे प्रीतिमाहरेत्' इत्यादि मन्वादिकथितं वा दत्त्वा, तदनुज्ञया वाऽदत्तवरोऽपि। अत एव गौतमः– 'विद्यान्ते गुरुरर्थेन निमन्त्र्यः कृतानुज्ञातस्य वा स्नानम्' इति। वेदपारनयनं समुच्चय एव वेदाध्ययनस्य तदर्थज्ञानेन सह। अत एव 'वेदमधीत्य च्छन्दोविषयानर्थानुद्बुध्वा स्नायात्' इति स्मर्यते। § अप.

(४) अत्र व्रतशब्देनाग्नीन्धनभैक्षाचरणादयो ब्रह्मचारिधर्मा उच्यन्ते। तेषु हि कालपरिमाणस्य श्रुतत्वात् पारं नीत्वेति युज्यते। दृश्यते च तेषु व्रतशब्दः– 'यथा व्रतेषु समर्थः स्याद्यानि वक्ष्यामः' (आध. १।१।२७) इति। न तु सावित्र्यादीनि वेदव्रतान्युच्यन्ते, तेषां तत्तत्प्रदेशाध्ययनशेषतया तदभावेऽभावात् 'वेदं व्रतानि वा' इति विकल्पानुपपत्तेः। अतः कालविशेषावच्छिन्नानि व्रतानि वेदमुभयं वा पारं नीत्वेत्यर्थः। ‡ उ. १।३०।३

(५) अयं च वरो गुरुप्रीत्यर्थः, न तु विद्यानिष्क्रयार्थः, वेदविद्यार्हस्य मूल्यस्यासंभवात्। तथा च च्छन्दोगश्रुतिः– 'यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यात्तदेव ततो भूयः' इति। तापनीयश्रुतिरपि– 'सप्तद्वीपवती भूमिर्दक्षिणार्थे न कल्पते' इति। हारीतस्मृतिरपि– 'एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत्। पृथिव्यां नास्ति तद्द्रव्यं यद्दत्त्वाऽस्यानृणी भवेत्॥' इति। व्रतशब्देनात्र गृह्यप्रसिद्धान्युपनयनव्रतसावित्रीव्रतवेदव्रतानि विवक्षितानि। ¶ पमा. ४६१

(६) 'गामश्वम्' (मस्मृ. २।२४६) इत्यादि मनूक्तं धनं दक्षिणां दत्त्वा गुर्वनुज्ञया सुतैलादिना स्नायात् ब्रह्मचारी उपकुर्वाणः। स त्रिविधः। यथा हारीतः– 'त्रयः स्नातका भवन्ति। विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातकश्चेति। यः समाप्य वेदमसमाप्य व्रतानि समावर्तते स विद्यास्नातकः। यो व्रतं (समाप्य) वेदमसमाप्य समावर्तते स व्रतस्नातकः। य उभयं समाप्य समावर्तते स विद्याव्रतस्नातकः। स चेच्छया गृहस्थो वानप्रस्थः परिव्राजको वा भवेत्'। विष्णुपुराणम्– 'गृहीतविद्यो गुरवे दत्त्वा तु गुरुदक्षिणाम्। गार्हस्थ्यमिच्छन् भूपाल कुर्याद्दारपरिग्रहम्॥ अथवा सकलं कालं नयेत् संकल्पपूर्वकम्। गुरोः शुश्रूषणं कुर्यात् तत्पुत्रादेरथापि वा। वैखानसो वाऽपि भवेत्परिव्राड् वाऽथवेच्छया॥'। दीक.

(७) तत्र वेदशब्देन सार्थवेदाधिगम उच्यते, 'वेदं वेदौ तथा वेदान्वेदान्वा चतुरो द्विजः। अधीत्य चाधिगम्यार्थं ततः स्नायाद्द्विजोत्तमः॥' इति माधवीये कौर्मोक्तेः। वेदानिति त्रित्वाभिप्रायम्। उक्तश्चार्थज्ञानं विनाऽध्ययनमात्रेण समावर्तनाधिकाराभावः प्रथमसूत्र एव जैमिन्यादिभिः। अतश्च विद्यास्नातकोभयस्नातकयोरुभयोरपि स्नानात्पूर्वं वेदार्थज्ञानमावश्यकमिति सिद्धम्। व्रतशब्देन च उपनयनव्रतसावित्रीव्रतवेदाब्दव्रतोपनिषद्व्रतान्युच्यन्त इति माधवादयः। तत्रोपनयनानन्तरं त्रिरात्रं द्वादशरात्रं संवत्सरं वा मेधाजननात्पूर्वं विहितमक्षारालवणाशित्वादिरूपं गृह्ये प्रसिद्धमुपनयनव्रतम्। तदुत्तरमुपाकर्मान्तमग्निकार्यादिब्रह्मचारिधर्मानुष्ठानं सावित्रीव्रतम्। तदुत्तरं वेदाध्ययनं कुर्वता यत्तदनुष्ठानं तद्वेदाब्दव्रतम्, वेदाध्ययनाङ्गभूतसंख्यापरिच्छिन्नवर्षसाध्यत्वात्। तत्संख्यागतविकल्पमाह मनुः– 'षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैविद्यकं व्रतम्। तदर्धं पादिकं वाऽपि ग्रहणान्तिकमेव वा॥' (मस्मृ. ३।१) इति। स्पष्टीकृतमेतद्दीपिकायाम्– 'प्रतिवेदं ब्रह्मचर्यं वर्षाणि द्वादशाथवा। षट् त्रीणि ग्रहणान्तं वा' इति। वेदाब्दव्रतान्ते आरण्यकव्रतानीति स्मृत्यर्थसारे। आश्वलायनसूत्रस्य वृत्तिभाष्यकाराभ्यां तु द्वादशवर्षादिपरिच्छिन्नं वेदाध्ययनाङ्गभूतं ब्रह्मचर्यमेव व्रतम्, तादृशब्रह्मचर्येण यो वेदं समापयति स विद्याव्रतस्नातकः, तादृशब्रह्मचर्ये समाप्तेऽपि यस्य वेदसमाप्तिर्न जाता स व्रतस्नातकः, तादृशब्रह्मचर्यसमाप्तेः प्रागेव यस्य वेदसमाप्ति-

§ वीमि., चम. अपगतम्।

‡ संर. उज्ज्वलानुवादः।

¶ विपा. पमागतम्।

चीता स विद्यास्नातक इत्युक्तम् । अस्मिन्मते च त्रिविधमपि स्नातकत्वं तादृशब्रह्मचर्यसमाप्त्युत्तरकालीनाभिमतमज्ञानाम्न्यादिव्रताधीनं न भवति, भवति तु माधवादिमते । मतद्वयेऽपि व्रतस्नातकेनाप्युपनिषद्विशेषाध्ययनं कृत्वैव समावर्तनं कर्तव्यम् , तेन विना तादृगधिकाराभावादित्युक्तं $ श्रुत्यैव– 'नेदमनधीयन्स्नातको भवति' (ऐआ. ५।३।३।११) इति । अत एव 'विद्यान्ते गुरुमामन्त्र्य' इति सूत्रं स्नातकत्रैविध्यानुरोधेन वेदान्त्यभागरूपोपनिषदध्ययने सत्येव समावर्तनाधिकार इत्याशयेनैव व्याख्यातं वृत्तिकृता । आश्वलायनशाखिविषयं चैतत् , क्लृप्तसंबन्धनियमे लाघवात् ।

संको. १६५–१६६

'व्रतपक्षेऽपि शब्दार्थमारण्याध्ययने कृते ।
विद्यान्ते गुरुमाहाहं कमर्थं करवाणि ते ॥
यमर्थमाह तं कृत्वा ततोऽनुज्ञामवाप्य च ।
आचार्यायाऽऽत्मना (? ने) चैव मण्यादीन्युपकल्पयेत् ॥

## व्यासः

वेदाध्ययनव्रताचरणगुर्वनुज्ञादक्षिणादानानि स्नानाधिकारसंपादकानि

'उपकुर्वाणको यस्तु द्विजः षड्विंशवार्षिकः ।
केशान्तकर्मणा तत्र यथोक्तचरितव्रतः ॥
समाप्य वेदान् वेदौ वा वेदं वा प्रसभं द्विजः ।
स्नायीत गुर्वनुज्ञातः प्रवृत्तो (? दत्तो) -वितदक्षिणः ॥
'गुरुशुश्रूषया विद्यां संप्राप्य विधिवद्द्विजः ।
स्नायीत गुर्वनुज्ञातो दत्त्वाऽस्मै दक्षिणां हि गाम् ॥

(१) यत्तु 'गुरु... गाम् ॥' इति व्यासेन गोदानमुक्तं तदपि प्रीतिसाधनद्रव्योपलक्षणार्थम् ।

§ स्मृच. ६६

(२) गोर्वरत्वं मात्राहीनत्वात् , 'गोस्तु मात्रा न विद्यते' इति श्रुतेः । अत एव लघुहारीतः– 'एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत् । पृथिव्यां नास्ति तद्द्रव्यं यद्दत्त्वा त्वनृणी भवेत् ॥' इति । छन्दोगश्रुतिरपि– 'यद्यप्यस्मा इलामद्भिः परिगृहीतां धनेन पूर्णां दद्यादेतदेव ततो भूयः' इति । तापनीयश्रुतिरपि– 'सप्तद्वीपवती भूमिर्दक्षिणार्थे न कल्पते' इति ।

संप्र. ५६६

'अधीत्य विधिवद्वेदं वेदार्थमधिगम्य च ।
व्रतानि क्रमशः कृत्वा समावर्तनमाचरेत् ॥
वेदमेकं समभ्यस्य कृत्वा वेदव्रतानि च ।
गुरवे दक्षिणां दत्त्वाऽप्यशक्तस्तदनुज्ञया ।
समावृत्योद्वहेत्कन्यां संन्यासमथवा व्रजेत् ॥

## लघुव्यासः

वेदाध्ययनव्रताचरणे स्नानाधिकारनिमित्ते

'ऋक्पादमप्यधीयानो न्यायतस्तु तदर्थवित् ।
सम्यग्व्रतानि संसेव्य समावर्तनमर्हति ॥

(१) ब्रह्मचर्यं समाप्य यन्मन्त्रवत् सुगन्धादिना स्नानं तत् समावर्तनम् । ब्रक. २७६

$ महाव्रतव्रतप्रयोगप्रकरणे (सं. का. पृ. ३४०६) 'ऐतरेयारण्यकम्' इतिशीर्षकगता टिप्पण्यत्रानुसंधेया ।

(१) विपा. ६६४–६६५.

(२) व्यास्मृ. १।४१–४२ (वेंकटेश्वरमुद्रणालयमुद्रितात्).

(३) ब्रक. २७५ हि (च) ; स्मृच. ६६ ; चका.

§ मुक्ता. स्मृचवत् ।

७८१ गुर्वनु (तदनु) ; संप्र. ५६६ संप्राप्य (समाप्य) ; मुक्ता. १२० चकावत् .

(१) मुक्ता. ११९ ; आन. १६४.

(२) ब्रक. २७६ प्रथमचरणे (शक्त्या समाप्य यो विद्यां) ; स्मृच. ६६ ; चका. ७८१ (=) यानो न्या (त्यान्तर्या) ; मपा. ११३ तस्तु (तश्च) व्यासः ; निप्र. ५८ (भागः २) प्रथमचरणे (सम्यग्वेदमधीत्याथ) सम्यग्व्र (सम्यग्भू) ; संप्र. ५६५ प्रथमचरणे (ऋचं पादमधीत्यातो) ; मुक्ता. ११९ प्रथमचरणे (ऋगादिकमधीत्यातो) ; पुम. ४४५ यानो (त्यातो) व्यासः .

(२) न्यायतः गुरुमुखावेक्षणायुक्तन्यायेनेत्यर्थः । एतच्च समुच्चयसंपादनसमर्थविषयम् । अन्यथा व्रतमात्रसमाप्तावपि स्नानं भवत्येव । ¶ स्मृच. ६६

## आश्वलायनः

वेदाध्ययनदक्षिणादाने स्नानाधिकारनिमित्ते, असमर्थेनान्यतो दक्षिणाद्रव्यस्याऽऽहरणम्

**[1]पठित्वा चतुरो वेदांस्त्रीन्द्वौ वैकमथापि वा ।**
**तोषयेद्दक्षिणाभिश्च गुरुं भक्त्या विचक्षणः ॥**
**[2]धनं पित्रादिबन्धुभ्यः समाहृत्याथवा परात् ।**
**राजभ्यो वा गुरुं सम्यक्तोषयेत् स्नातको व्रती ॥**

## बुधः

गुर्वनुज्ञानं स्नानाधिकारनिमित्तम्

**[3]गुरुणाऽनुज्ञातः स्नायात् ॥**

## स्मृत्यन्तरम्

वेदाध्ययनमर्थज्ञानपर्यन्तं स्नानाधिकारहेतुः

**[4]वेदमधीत्य छन्दोविषयानर्थान् बुद्ध्वा स्नायात् ॥**

**[5]अधीत्य स्नायात् ॥**

## कूर्मपुराणम्

अर्थज्ञानपर्यन्तवेदाध्ययनं स्नानाधिकारहेतुः

**[6]वेदं वेदौ तथा वेदान् वेदान्वा चतुरो द्विजः ।**
**अधीत्य चाधिगम्यार्थं ततः स्नायाद्द्विजोत्तम ॥**

(१) अर्थम् अधीतानां वेदानाम् । संप्र. ५६५

(२) प्रथमं वेदानितिवचनं चतुष्ट्वाभिप्रायम्, द्वितीयं त्रित्वाभिप्रायम् । अर्थमधिगम्य अर्थं ज्ञात्वेत्यर्थः । संर. ३६९

## नृसिंहपुराणम्

वेदाध्ययनशास्त्रार्थज्ञानवरदानानि स्नानाधिकारहेतवः

**[1]गृहीतवेदाध्ययनः श्रुतशास्त्रार्थतत्त्ववित् ।**
**गुरोर्दत्तवरः सम्यक्समावर्तनमारभेत् ॥**

## अनिर्दिष्टकर्तृकवचनानि

वेदाध्ययनं स्नानाधिकारहेतुः

**[2]विद्यान्ते स्नायात् ॥**

'विद्यान्ते स्नायात्' इति वचनं तु विद्यामध्ये स्नानं न कार्यमित्येतदर्थम् । विद्याया अन्तम् आरण्यकम् इति वाऽर्थः । कृभ. ९८७

**[3]वेदमधीत्य स्नायात् ॥**

## संग्रहकारः

गुरुदक्षिणादानं गुर्वनुज्ञाग्रहणं वा स्नानाधिकारहेतुः, आसन्नविवाहस्य स्नानं प्रशस्तम्

**[4]आहरिष्यामि कं तेऽर्थं भवतो वचनादिह ।**
**त्वयोक्तं हि करिष्यामि कृतार्थः स्यां गृहे त्विति ॥**
**[5]तेनोक्तं च तथा कृत्वा स्नानं शिष्यः समाचरेत् ।**
**अलमर्थेन मे वत्स त्वद्गुणैरस्मि तोषितः ॥**

---

¶ मुक्ता. स्मृचवत् । चका. , संप्र. स्मृचगतम् ।

(१) आश्वस्मृ. २।७४–७५ ; प्रपा. २८४ भिक्ष (भिस्तु) ; संप्र. ५६५ पठि (चरि) वैक (चैक) भिक्ष (भिस्तु) ; विपा. ४८४ गुरुं (गुरून्) शेषं संप्रवत् : ६६५ पठित्वा (अधीत्य) स्मृत्यन्तरम् .

(२) आश्वस्मृ. २।७५–७६ स्नातको (साधको) ; प्रपा. २८४ ; संप्र. ५६५ राजभ्यो (राजन्यो) ; विपा. ४९४ धनं (धनात्) बन्धुभ्यः (संभूतात्) भ्यो वा (न्याद्वा) स्नातको (साधको) : ६६५ आश्वस्मृवत्, स्मृत्यन्तरम् . (३) चका. ७८२.

(४) अप. १।५१ पृ. ७६ ; स्मृच.६६; चका.७८० ; संप्र. ६६५ यानर्थान् (यार्थान्). (५) सम. ६२.

(६) पमा. ४६१ ; स्मृकौ. २३ वेदान्वा (साङ्गांश्च) त्तम (त्तमाः) ; प्रपा. २८४ त्तम (त्तमः) ; शूशि. ४३ वेदान्वा (साङ्गांश्च) याद्द्विजोत्तम ( यी द्विजोत्तमः) ; संप्र. ५६४ प्रपावत् ; चम. ६५ द्द्विजोत्तम (द्यथाविधि) ; संम. ४३ ; संको. १६५ प्रपावत् ; बाल. १।५१ चमवत् ; संर. ३६९ पूर्वार्धे (वेदान् वेदांस्तथा वेदौ वेदं वाऽपि समाहितः) त्तम (त्तमः).

(१) नृसिंहपु. ५८।१. (२) कृभ. ९८७.

(३) पमा. ५२०, ५२१ ; चम. ६०.

(४) प्रपा. २८४ त्वयोक्तं (यथोक्तं) ; संम. ४३ कं तेऽर्थं (किं तीर्थं) ; विपा. ६६५.

(५) प्रपा. २८४ ; संम. ४३ ; विपा. ६६५ ; संको. १६५ ; संर. ३६९.

**'गृहाय त्वनुजानामीत्यनुज्ञातोऽपि वा चरेत् ॥**

तेनोक्तं गुरुणोक्तम् । एतद्दानं गुरुप्रीत्यर्थम्, न विद्यानिष्क्रयः, वेदविद्यायास्य मूल्यस्यासंभवात् । तथा च च्छन्दोगश्रुतिः– 'यद्यप्यस्मादिळामद्भिः परिगृहीतामन्नेन पूर्णो दद्यादेतदेव ततो भूयः' इति । इळा पृथिवी । एतत् विद्याग्रहणम् । तापनीयश्रुतिरपि– 'सप्तद्वीपवती भूमिर्दक्षिणार्थे न कल्पते' इति । संर. ३६९

**'स्नातस्तूपयमादर्वाङ्मृतो याति न सद्गतिम् । तस्मादासन्नवैवाह्यः स्नानकर्म समाचरेत् ॥**

## स्मृत्यर्थसारः

वेदाध्ययनं व्रतचर्या वोभयं वा ब्रह्मचर्यविप्लवे कृतप्रायश्चित्तत्वं च गुरुपूजनं गुर्वनुज्ञानं वा स्नानाधिकारहेतवः

**'एवं वेदव्रतानि चोभयं( ? वेदं व्रतानि वोभयं ) वा पारं नीत्वाऽविप्लुतब्रह्मचर्यो विप्लवे कृतप्रायश्चित्तो गुरुं संपूज्य तदनुज्ञया समावृत्तो विवहेत् ॥**

## नृसिंहः

व्रताचरणं स्नानाधिकारहेतुः

**'व्रतानां चरणं त्वेवं कृत्वा स्नानं समाचरेत् ॥**

कृत्वेति यद्यपि व्रताचरणस्य स्नानाधिकारहेतुत्वं प्रतीयते तथाऽपि नैतन्नित्यमित्यवसरे वक्ष्यामः । संको. १६२

(१) प्रपा. २८४; संम. ४३ प्रथमचरणमात्रम्; विपा. ६६५; संको. ६५ हाय त्व (हान्गच्छा) ऽपि (ऽथ); संर. ३६९ संकोवत्.

(२) मुक्ता. १२३ स्नान (स्नात); आन. १६७ वाह्यः (वाहः).

(३) स्मृसार. ११.

(४) प्रपा. २७०; संप्र. ५५८; संको. १६२ श्रीधरीये.

## शाकलकारिकाः

शिष्टाचारप्राप्तकाले समावर्तनम्

**'गोदानं स्नातकं चैव समावर्तनकं तथा । तत्तत्कुर्याद्यथाकाले शिष्टाचारानुसारतः ॥**

## शौनककारिकाः

वेदशास्त्राध्ययनव्रताचरणदक्षिणादानगुर्वनुज्ञानानि स्नानहेतवः, स्नाने स्वस्यैव कर्तृत्वम्, विवाहपूर्वदिने गोदानादिभिः सह तन्त्रेणानुष्ठानम्

**'अधीत्य वेदशास्त्राणि कृत्वा वेदव्रतानि च । चत्वारि गुरवे दत्त्वा यथाशक्ति च दक्षिणाम् । ततस्तेनाभ्यनुज्ञातः समावर्तनमाचरेत् ॥**

तत्र च वेदव्रतयोः समाप्तिरुत्तमः पक्षः । अन्यतरसमाप्तिर्मध्यमः । संप्र. ५६५

**'मन्त्रान्संनमयेदात्मनीत्युक्ते( स् ) तत्र कर्मणि । कुर्वीत स्वयमेवेदं कर्माऽऽचार्यानपेक्षकः ॥**

एवं च वृद्धिश्राद्धमपि स्वयमेव कुर्यात्, 'कुर्वीत स्वयमेवेदं ...... क्षकः' इति शौनकोक्तेः । हारावल्यां तु विवाहात्प्राचीनसुतसंस्कारस्थनान्दीश्राद्धं पितैव कुर्यात्, तदभावे भ्रात्रादिः, तदभावे स्वयं कुर्यादित्युक्तं तच्चिन्त्यम्, शौनकविरोधात् । कुम. ९८७–९८८

**'गोदानादीनि कर्माणि विवाहात्पूर्ववासरे । एकतन्त्रेण वा कुर्यादिति यज्ञविदो विदुः ॥**

## कुमारिलकारिकाः

वेदाध्ययनं व्रताचरणमुभयं वा गुरुदक्षिणादानमनुज्ञाग्रहणं च स्नानहेतवः, व्रतपक्षेऽप्यारण्यकाध्ययनमावश्यकम्, सामर्थ्ये आचार्याय स्वस्मै च असामर्थ्ये आचार्यायैव मण्याद्युपकल्पनम्, स्नानकर्मणि स्वस्यैव कर्तृत्वम्

**'गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया । वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥**

(१) शाका. ७९ पृ. ९.

(२) शौका. १–२ पृ. ५२; प्रपा. २८४; संप्र. ५६५.

(३) शौका. २–३ पृ. ५२ तत्र (सूत्र); प्रपा. २८७; संम. ४४ पेक्षकः (पेक्षतः) उत्त.; कुम. ९८७ उत्त. (४) संप्र. ४४.

(५) कुका. १।१७।१; प्रपा. २८४ वेदं व्र (वेदव्र)

[1]व्रतपक्षेऽपि शब्दार्थमारण्याध्ययने कृते ।
विद्यान्ते गुरुमाहाहं कमर्थं करवाणि ते ॥

शब्दार्थम् अक्षरग्रहणार्थम् , न त्वर्थज्ञानापेक्षाऽपि, अनुष्ठानानुपयोगात् , विरक्तस्युत्तरकालं साधनचतुष्टय-संपन्नं प्रत्युत्तरमीमांसाप्रवृत्तेः । पूर्वोक्तं कूर्मपुराणवचनं तु कर्मकाण्डार्थज्ञानपरमिति भावः । $ चम. ६५

[2]यमर्थमाह तं कृत्वा ततोऽनुज्ञामवाप्य च ।
आचार्यायाऽऽत्मने चैव मण्यादीन्युपकल्पयेत् ॥

[3]आचार्यायैव कल्प्यानि न लभेतोभयोर्यदि ।
कुर्वीत स्वयमेवेदं समावर्तनसंज्ञकम् ॥

---

$ बाल. चमवत् ।

उत्त. ; घप्र. ४४ सर्वे प्रपावत् ; चम. ६५ उत्त. ; बाल. १।५१ उत्त.

(१) कुका. १।१७।२ ; प्रपा. २८४ पक्षेऽपि ( पक्षे तु ) ; घप्र. ४४ अशुद्धिबहुलो ग्रन्थः ; चम. ६५ पू. ; बाल. १।५१ पू.

(२) कुका. १।१७।३ ; प्रपा. २८४ पू. : २८५ उत्त.; घप्र. ४४ पू.

(३) कुका. १।१७।४ ; प्रपा. २८५ वेदं स (वैतत्स) ; घप्र. ४४ प्रपावत् , उत्त.

## रेणुकारिकाः

साङ्गवेदाध्ययनादयः स्नानहेतवः, स्नानकर्मणि स्वस्यैव कर्तृत्वम् , स्नानशब्दार्थो द्वितीयाश्रमः

[1]समाप्याङ्गयुग्वेदमेकं व्रतं वा
समाप्योभयं वाऽऽगमब्रह्मचर्यम् ।
समग्रौ न चेद्द्वौ पठित्वाऽर्थमुक्त्वा
समूहानुमानोक्तिकान्यङ्गहीनात् (?) ॥
इदं कर्म कुर्याद्वटुर्ब्रह्मचारी
स एवाधिकारी न च ग्रन्थमात्रम् ।
स चेद्याज्ञिकः कामतः कर्मयोग्यो
विधेयो विधिः स्याद्द्वयोर्वेदशब्दः ॥
द्वितीयाश्रमं स्नानशब्देन विद्याद्
गुरोः प्रीतये दक्षिणां तस्य दत्त्वा ।
हिरण्यं धरित्र्यातपत्रं गृहं गौ-
र्यवव्रीहयुपानद्द्वयं चापि शाकम् ॥
अभावेऽखिलानां तदा गौतमोक्ते-
रनुज्ञात एवाऽऽश्रमं प्रत्युपेयात् ।
गुरोः पादयुग्मं नमस्कृत्य मूर्ध्ना
समावर्तनाज्ञामनुज्ञां स याचेत् ॥
समाप्य वेदं गुरवे स दत्त्वा
धनं गवाद्यन्यतमं च पूर्वम् ।
भृतिप्रदाने सति देयमस्मै
न किंचिदित्याह मनुः स्फुटं तत् ॥

---

(१) रेका. २-६ पृ. ४२.

## समावर्तनमुहूर्तः

### बौधायनश्रौतसूत्रं बौधायनपरिभाषासूत्रं च

स्नाने पक्षः सफलानि नक्षत्राणि दिनभागश्च

[1]स्नानस्य मीमांसा ॥

[2]रोहिण्यां स्नायादित्येकम् । प्राजापत्यं वा एतन्नक्षत्रम् । तदस्य प्राजापत्य एव नक्षत्रे स्नातं भवति । अथो सर्वान्रोहान्रोहाणीति ॥

[3]तिष्ये स्नायादित्येकम् । बार्हस्पत्यं वा एतन्नक्षत्रम् । तदस्य बार्हस्पत्य एव नक्षत्रे स्नातं भवति । अथो बृहस्पतिप्रसूतोऽसानीति ॥

[4]उत्तरयोः फल्गुन्योः स्नायादित्येकम् । भाग्यं वा एतन्नक्षत्रम् । तदस्य भाग्य एव नक्षत्रे स्नातं भवति । अथो भाग्योऽसानीति ॥

[5]हस्ते स्नायादित्येकम् । सावित्रं वा एतन्नक्षत्रम् । तदस्य सावित्र एव नक्षत्रे स्नातं भवति । अथो सवितृप्रसूतोऽसानीति ॥

चित्रायां स्नायादित्येकम् । ऐन्द्रं वा एतन्नक्षत्रम् । तदस्यैन्द्र एव नक्षत्रे स्नातं भवति । अथो चित्रोऽसानीति ॥

विशाखयोः स्नायादित्येकम् । ऐन्द्राग्नं वा एतन्नक्षत्रम् । तदस्यैन्द्राग्न एव नक्षत्रे स्नातं भवति । अथो विशाखोऽसानि प्रजया पशुभिरिति ॥

एतेषामेकस्मिन्नापूर्यमाणपक्षे पुराऽऽदित्यस्योदयात् ...... ॥

### हिरण्यकेशिगृह्यसूत्रम्

स्नाने अयनपक्षनक्षत्राणि

[1]उदगयन आपूर्यमाणपक्षे रोहिण्यां मृगशिरसि तिष्य उत्तरयोः फल्गुन्योर्हस्ते चित्रायां विशाखयोर्वैतेषु स्नायात् ॥

उदगयने मकरादिषट्सु राशिषु श्रविष्ठार्धादारभ्य सार्धचतुर्दशसु नक्षत्रेषु स्थित आदित्ये आपूर्यमाणपक्षे यानि रोहिण्यादीनि विशाखान्तानि अनुक्रान्तानि, नेतराणि, तेषु स्नायात् । वाशब्दः स्नानस्य विकल्पार्थः— स्नायात्र वा स्नायादिति । तेन यस्य कर्मण्यधिकारो नास्ति तस्य नैष्ठिकब्रह्मचर्यमेव स्यात् । अनुक्रमणादेव सिद्ध एतेष्विति वचनं रोहिण्यादिष्वसंभवे तादृशेष्वन्येषु पुण्येषु स्नायादिति । स्नानाधिकारे पुनः स्नायादिति वचनं द्वयोरध्ययनव्रतयोरिह स्नानम् , नाध्ययनस्यैवेति ख्यापनार्थम् । तेन साङ्गं वेदमधीत्य स्नायात् । भुत्वा स्नायादेव दृष्टार्थताऽध्ययनस्य भविष्यति कर्मावबोधार्थत्वात् (१) । ¶ मातृद.

### भारद्वाजगृह्यसूत्रम्

स्नाने नक्षत्राणि

[2]अथ नक्षत्राणि तिष्य उत्तरे फल्गुनी हस्तश्चित्रा स्वातिविशाखे इति । एतेषामेकस्मिन् ... ॥

### आग्निवेश्यगृह्यसूत्रम्

स्नाने सफलानि नक्षत्राणि

[3]स्नानस्य मीमांसा । रोहिण्यां स्नायादित्येकम् । प्राजापत्यं वा एतन्नक्षत्रम् । तदस्य प्राजा-

---

(१) बौश्रौ. १७।३९ ; बौगृप. १।१३।२ स्नानस्य (अथ स्नानस्य).

(२) बौश्रौ. १७।३९ ; बौगृप. १।१३।३ रोहाणीति (रोहतीति).

(३) बौश्रौ. १७।३९ ; बौगृप. १।१३।४.

(४) बौश्रौ. १७।३९ ; बौगृप. १।१३।५ भाग्यं (भग्यं) भाग्य (भग्य) भाग्यो (भग्यो).

(५) बौश्रौ. १७।३९ ; बौगृप. १।१३।६–९.

¶ संर. मातृदत्तवृत्त्येकदेशानुवादः ।

(१) हिगृ. १९।३।२ ; संर. ३७०.

(२) भागृ. २।१८.  (३) आग्निगृ. १।३।१.

पत्य एव नक्षत्रे स्नातं भवति। अथो सर्वान् रोहान् रोहतीति। तिष्ये स्नायादित्येकम्। बार्हस्पत्यं वा एतन्नक्षत्रम्। तदस्य बार्हस्पत्य एव नक्षत्रे स्नातं भवति। अथो बृहस्पतिप्रसूतोऽसानीति। उत्तरयोः फल्गुन्योः स्नायादित्येकम्। भगस्य वा एतन्नक्षत्रम्। तदस्य भग्य एव नक्षत्रे स्नातं भवति। अथो भग्योऽसानीति। हस्ते स्नायादित्येकम्। सावित्रं वा एतन्नक्षत्रम्। तदस्य सावित्र एव नक्षत्रे स्नातं भवति। अथो सवितृप्रसूतोऽसानीति। चित्रायां स्नायादित्येकम्। ऐन्द्रं वा एतन्नक्षत्रम्। तदस्यैन्द्र एव नक्षत्रे स्नातं भवति। अथो चित्रोऽसानीति। विशाखयोः स्नायादित्येकम्। ऐन्द्राग्नं वा एतन्नक्षत्रम्। तदस्यैन्द्राग्न एव नक्षत्रे स्नातं भवति। अथो विशाखोऽसानीति प्रजया पशुभिरिति। एतेषामेकतमस्मिन्नक्षत्रे॥

## जैमिनिगृह्यसूत्रम्

स्नाने सफलानि नक्षत्राणि

'रोहिण्यां स्नायात्। प्रजापतेर्वा एतन्नक्षत्रम्। प्रजावान् भूयासमिति। मृगशिरसि स्नायात्। सोमस्य वा एतन्नक्षत्रम्। सोमेज्या मोपनमेदिति। तिष्ये स्नायात्। बृहस्पतेर्वा एतन्नक्षत्रम्। ब्रह्म बृहस्पतिः। ब्रह्मवर्चसी भूयासमिति। हस्ते स्नायात्। सवितुर्वा एतन्नक्षत्रम्। सवितृप्रसूतो भूयासमिति। अनूराधासु स्नायात्। मित्रस्य वा एतन्नक्षत्रम्। मित्राणां प्रियो भूयासमिति। श्रवणे स्नायात्। विष्णोर्वा एतन्नक्षत्रम्। यज्ञो वै विष्णुः। यज्ञो मोपनमेदिति॥

## वैखानसगृह्यसूत्रम्

स्नाने अयनपक्षनक्षत्राणि

'उदगयन आपूर्यमाणपक्षे तिष्योत्तरेषु चित्राविशाखयोर्हस्तरोहिण्योर्मृगशिरसि वा नक्षत्रे॥

(१) जैगृ. १।१९. (२) वैगृ. २।१३.

## बौधायनसूत्रम्

स्नाने नक्षत्राणि

'रोहिण्यां तिष्य उत्तरयोः फल्गुन्योर्हस्ते चित्रायामैन्द्रे विशाखयोर्वा स्नायात्॥

ऐन्द्रं ज्येष्ठा। संर. १७१

## वसिष्ठः

स्नाने अयनपक्षतिथिवारनक्षत्राणि गुरुशुक्रोदयविधिश्च

'सौम्यायने निर्मलयोः सुरेज्य-
दैत्येज्ययोर्व्योम्नि वलक्षपक्षे।
संत्यज्य रिक्तामवमाष्टमीं च
वैनाशिकाद्याखिलऋक्षवृन्दम्॥

'करादिपञ्चस्वदितिद्वयाश्वि-
विष्णुत्रयत्र्युत्तरधातृमेषु।
सपौष्णचान्द्रेषु शुभग्रहस्य
वारे समावर्तनमिष्टमुक्तम्॥

## लघुवसिष्ठः

स्नाने नक्षत्राणि दिनभागश्च

'आदित्यसौम्यसावित्रमैत्रतिष्योत्तरात्रयम्।
पौष्णश्रवणरोहिण्यः श्रेष्ठाः स्युः स्नानकर्मणि॥

आदित्यः पुनर्वसुः। सौम्यं मृगशिरः। सावित्रं हस्तः। मैत्रम् अनुराधा। $ संप्र. ५६९

'स्नानं मध्याह्नकाले तु होरायां कारयेच्छुभम्।
पूर्वाह्णे तदभावे तु कुर्यात्स्नानं यथाविधि॥

$ संग. संप्रवत्।

(१) संर. ३७१.

(२) वसं. ३०१२ द्याखिल (ख्याखिल); संसौ. १५२ खिलऋ (खिलमृ); संप्र. ५६८; संग. ७३६ वृन्दम् (वृन्दतः).

(३) वसं. ३०१३ त्रयत्र्यु (त्रये त्र्यु) उत्तरार्धे (सपौष्णचान्द्रेषु शुभग्रहर्क्षवारेषु यस्स्नातककर्म शस्तम्॥); संसौ. १५२; संप्र. ५६९.

(४) प्रपा. २८५ वसिष्ठः; संसौ. १५३; संप्र. ५६९ सावित्रमै (सावित्रं मै) वसिष्ठः; संग. ७३७ त्यसौम्यसावित्रमै (त्यः सौम्यसावित्रे मै) वसिष्ठः.

(५) प्रपा. २८५ कारयेच्छुभम् (प्रारभेच्छुभे) देवरातः; संसौ. १५३ च्छुभम् (च्छुभे) कुर्यात्स्नानं (परा-

## वृद्धवसिष्ठः

स्नाने चौलमुहूर्तातिदेशः वारश्च

[1]चौलवत्सकलं ग्राह्यं स्नानकर्मणि भूपते ।
शुभे षष्ठे वासरे च चरेत्तु स्नातकव्रतम् ॥

## नारदः

स्नाने अयनतिथिवारनक्षत्रलग्नांशा गुरुशुक्रोदयविधिश्च

[2]अथोत्तरायणे जीवशुक्रयोर्दृश्यमानयोः ।
द्विजातीनां गुरोर्गेहान्निवृत्तानां यतात्मनाम् ॥
[3]मित्रोत्तरादितीज्यान्त्यहरीन्दुरविधातृषु ।
मेष्वर्केन्दुज्ञार्यशुक्रवारलग्नांशकेषु च ॥
¶[4]अथवा बीजनक्षत्रवारलग्नांशकेष्वपि ।
प्रतिपत्पर्वरिक्तामा अष्टमीं च दिनक्षयम् ॥
[5]हित्वाऽन्यदिवसे कार्यं समावर्तनमण्डनम् ॥

¶ आदर्शपुस्तकेऽत्र 'अथवावस्थानक्षत्र' इति पाठः । भाषाटीकापुस्तकेऽपि तथैव पाठः, स च 'अथवा यात्राके नक्षत्र' इति व्याख्यातः । सोऽयं भागुरिमतेन 'वस्था स्थितिः, तद्विरुद्धा अवस्था यात्रा' इति संगमनीयः ।

हेऽपि) ; सिन्धु. ९८८ वसिष्ठः ; संर. ३७२ होरायां (रोहिण्यां) भावे तु (भावे च) वसिष्ठः .

(१) मुक्ता. १२३.

(२) ज्योना. २६।१ जीवशुक्र (शुक्रजीव) ; संसौ. १५२ ; संप्र. ५६८ ; ज्योनि. १२८ ज्योनावत् ; संकौ. १६७ ; संग. ७३६ ; पुम. ४४५ ; संर. ३७२.

(३) ज्योना. २६।२ मित्रो (चित्रो) रीन्दुरविधातृ (रमैत्रेन्दुभात्रि) न्दुज्ञार्यशुक्र (न्द्वीज्यशुक्रज्ञ) ; संसौ. १५२ ; संप्र. ५६९ ; ज्योनि. १२८ मित्रो (चित्रो) हरीन्दुर (हरिमित्र) षु च (ष्वपि) ; संकौ. १६७ तृतीयचरणे (अर्केन्दुज्ञार्यशुक्राणां) ; संर. ३७२.

(४) ज्योना. २६।३ वा बीज (वावस्था) मीं च दिनक्ष (मी च दिनल) ; संसौ. १५२ बीज (वक्ष) मा अष्टमीं च (मामष्टमीं तु) ; संप्र. ५६९ मा अष्ट (मामष्ट) ; ज्योनि. १२८ बीज (वक्ष) ष्वपि (षु च) ; संकौ. १६७ मा अष्ट (स्यामष्ट) ; संग. ७३६ संप्रवत्, उत्त. ; संर. ३७२ रिक्तामा (रिक्ताख्या).

(५) ज्योना. २६।४ ; संसौ. १५२ मण्डनम् (मुत्तमम्) ; संप्र. ५६९ ; ज्योनि. १२८ ; संकौ. १६७ ; संग. ७३६ ; संर. ३७२.

बीजनक्षत्राणि बीजवापनक्षत्राणि । सुदर्शनस्तु—उदगयने कृतसमावर्तनस्य दक्षिणायने विवाहप्रसक्तौ 'अनाश्रमी न तिष्ठेत' इति निषेधातिक्रमापत्तेः, आश्वलायनेन चौलविकारे गोदाने प्राप्तोदगयनस्य पुनर्विधानेन तद्विकारे समावर्तने उदगयननियमाभावज्ञापनात्, बौधायनेनापि समावर्तने चौलविकारत्वेनैव शुक्लपक्षप्राप्तौ पुनस्तत्र तद्विधानेनोदगयनानियमज्ञापनात् न समावर्तने उदगयननियम इत्याह । हिरण्यकेशिनां तु 'चित्रायां विशाखयोर्वा' इति नक्षत्रद्वयमधिकमुक्तम् । § संकौ. १६७

## आश्वलायनः

स्नाने सौरमानविधिः अयनपक्षतिथयश्च

[1]चौलोपनयगोदानसमावर्तविवाहकाः ।
व्यवहाराश्च सौरेण कार्या यात्रादयोऽपि च ॥
[2]उपनीतौ व्रते चौले समावर्तनकर्मणि ।
कृष्णपक्षः प्रवर्ज्यः स्याद्दक्षिणायनमेव च ॥
ऊर्ध्वं यत्नेन पञ्चम्याः कृष्णपक्षं प्रवर्जयेत् ।
श्रौते स्मार्ते च मतिमान् सप्तमी स्यान्महापदि ॥

## देवरातः

स्नाने तिथिवारराश्यंशग्रहसंस्थानानि

[3]विच्छिद्रासु विरिक्तासु तिथिषु स्नानमाचरेत् ।
सौम्यानामंशवारेषु शुभाः शेषेषु वर्जिताः ॥
क्रिया इति शेषः । † संप्र. ५६९
[4]नक्रगोयमकन्याश्च तौलिमीनौ सुपूजिताः ।
शुभयुक्ता यदि स्युस्ते ‡ शेषेषु स्नानमाचरेत् ॥

§ संर. संकौगतम् ।

† संग. संप्रवत् ।

‡ अत्र बुद्धौ पूर्वप्रकृतानां शेषाणां तच्छब्देन परामर्शः ।

(१) आश्वस्मृ. ३।६३.

(२) आश्वस्मृ. ११।३२०–३२१.

(३) प्रपा. २८५ ; संप्र. ५६९ ; संग. ७३६.

(४) प्रपा. २८५ ; संप्र. ५७० युक्ता यदि स्युस्ते (युक्तं यदि स्यात्तु) ; संग. ७३७ तृतीयचरणे (अम्भोयुक्तं यदि स्यात्तु).

[1]आचारिज्ञातुगाः पापाः शुभाः केन्द्रत्रिकोणगाः ।
अशुभाश्च शुभाश्चैव अष्टमे वर्जिताः सदा ॥

## अनिर्दिष्टकर्तृकवचनानि

स्नाने व्रतबन्धतो वर्षमासदिवसनियमः, व्रतबन्धमुहूर्तातिदेशः, गुरुशुद्धेरनावश्यकता, वारनक्षत्रलग्नानि

[2]वर्षे मासे च दिवसे तृतीये वा चतुर्थके ।
पञ्चषष्ठे न कुर्वीत मेखलामोक्षणं बुधः ॥
[3]व्रतबन्धोक्तकाले तु समावर्तनमीरितम् ॥
[4]गुरुशुद्धिं विना काले व्रतोक्ते व्रतमोक्षणम् ॥
अथवा वक्ष्यनक्षत्रवारलग्नेषु शस्यते ।
गुरोर्गेहान्निवृत्तानां समावर्तनमण्डनम् ॥

## सुरेश्वरः

स्नाने वाराः, व्रतबन्धनक्षत्रातिदेशः, चन्द्रताराशुद्धिविधिः

[5]भौमभानुजयोर्वारे नक्षत्रे च व्रतोदिते ।
ताराचन्द्रविशुद्धौ च स्यात्समावर्तनक्रिया ॥

अत्र भौमभानुजवारे इत्ययुक्तमाभाति, व्रतवद्व्रतविसर्गातिदेशात्तत्र च शनिभौमयोरनिष्टफलतास्मरणात् । यत्रापि प्रतिपदं नक्षत्राद्युपादानं तत्राप्यनयोरग्रहणं स्पष्टमुपलभ्यते । तस्मात् ' विभौमभानुजे वारे ' इति पठितव्यम् । संसौ. १५४

( २ ) अत्र भौमभानुजयोर्ग्रहणं विवाहोपस्थित्यादिना वारान्तरासंभवे द्रष्टव्यम् । ‡ संप्र. ५७०

---

‡ संग. संप्रवत् ।

(१) प्रपा. २८५ ; संसौ. १५३ अष्टमे वर्जिताः ( वार्यता अष्टमे ) लघुवसिष्ठः ; संप्र. ५७० ; संग. ७३७ आया ( त्र्याया ).

(२) संग. ७३६. (३) संब. १०५.

(४) ज्योनि. १२८.

(५) मपा. ११४ च स्यात्समावर्तन (स्यात्समावर्तनक) ; प्रपा. २८५ (=) पू. ; गमा. २५१ ; संत. ९३८ चतुर्थचरणे (समावर्तनमिष्यते) ज्योतिषे ; संसौ. १५४ व्रतो ( जयो ) र्तनक्रिया ( र्तिनः क्रिया ) ; संप्र. ५७० व्रतो ( ययो ) ; सिन्धु. ९८७ ; विपा. ६६७ सर्वं संतवत् ; संग. ७३६.

## नृसिंहः

स्नाने नक्षत्राणि

[1]त्रीण्युत्तराणि मैत्रेन्दुरोहिण्यादित्यपुष्यभाः ।
हस्तश्रवणपौष्णाश्च स्नानकर्मणि पूजिताः ॥

## राजमार्तण्डः

स्नाने चौलमुहूर्तातिदेशः

[2]क्षुरकर्मणि प्रदिष्टं यदिष्टफलदायकं दिनाद्यं तु ।
तन्मेखलाविमोक्षे भवति हिताय द्विजातीनाम् ॥

## श्रीधरीये

स्नाने तिथिवारनक्षत्रलग्नवांशदिनवैमल्यानि

[3]वागीशादितिसौम्यपौष्णदिनकृन्मित्रोत्तरारोहिणी-
गोविन्देषु शशाङ्कभानुगुरुवित्शुक्रांशवारादिषु ।
रिक्तां पर्व तथाऽष्टमीं प्रतिपदं मेषं च कीटं हरिं
हित्वा शुद्धियुतेऽष्टमेऽह्नि विमले कुर्यात्समावर्तनम् ॥

( १ ) वागीशः पुष्यः । आदित्यः( ? अदितिः ) पुनर्वसुः । सौम्यं मृगशीर्षम् । पौष्णं रेवती । दिनकृत् हस्तः । मित्रः अनूराधा । उत्तराः त्र्युत्तराणि । रोहिणी प्रसिद्धा । गोविन्दः श्रवणः । एतान्येकादशर्क्षाणि विहितानि । अथ वारांशकादय उच्यन्ते– शशाङ्केति । शशाङ्कः चन्द्रः । भानुः आदित्यः । गुरुः बृहस्पतिः । वित् बुधः । शुक्रः प्रसिद्धः । एतेषां वारांशादिषु समावर्तनं कार्यम् । अथ तिथयो विधीयन्ते– रिक्ते( ? क्तामि)ति । रिक्तास्तिथयः चतुर्थीनवमीचतुर्दश्यः । पर्व अमा-

---

(१) प्रपा. २८५ ; संप्र. ५६९ ; संग. ७३६.

(२) संसौ. १५४ ; संप्र. ५७० ; संग. ७३७.

(३) प्रपा. २८५ ; संसौ. २५३ काश्यपकालविधाने ; विपा. ६६६ वारा ( होरा ) ; संकौ. १६६–१६७ कृन्मित्रो ( कृन्मैत्रो ) ; पुम. ४४५ दिन (दिति) रत्नसंग्रहे ; संर. ३७१ सौम्यपौष्णदिनकृन्मि ( पौष्णसौम्यदिनकृन्मै ) वारा ( होरा ).

वाब्वापौर्णमास्यौ । अष्टमी प्रतिपच्च प्रसिद्धे । एताश्च हित्वा शिष्टास्तिथयः स्नाने विहिताः । अथ राशिविधिमाह— मेषं च कीटं हरिं हित्वेति । मेषवृश्चिकसिंहांस्त्यक्त्वा शिष्टा राशयः स्नाने शुभदाः । अथ लग्नगोचरमाह— शुद्धियुतेऽष्टम इति । लग्नच्चाष्टमे राशौ सर्वग्रहरहिते सति । अह्नि विमले पूर्वाह्णे मध्याह्ने वेति । प्रपा. २८५

(२) अह्नि विमले गुरुशुक्रास्तादिदोषशून्य इत्यर्थः । § संको. १६७

## महेश्वरः

स्नाने व्रतबन्धमुहूर्तातिदेशः

[१]खेचरबैर्मतानां विसर्गोदितं
कर्म तद्वद्व्रतोक्ते च धिष्ण्यादिके ॥

## मुहूर्तचिन्तामणिः

स्नाने व्रतबन्धमुहूर्तातिदेशः

[२]व्रतोक्तदिवसादौ हि समावर्तनमिष्यते ॥

हि निश्चये । व्रतं यज्ञोपवीतम्, तत्र विहितदिवसे । आदिशब्देन वारनक्षत्रलग्नांशेषु सत्सु समावर्तनमिष्यते । पीटी.

§ शेषं प्रपागतम् । संर. प्रपागतं संकोवच्च ।

(१) संसौ. १५२.

(२) मुचि. ५।६०.

## दीपिकायाम्

स्नाने चौलमुहूर्तातिदेशः ग्रहसंस्थानं च

[१]तृतीयलाभारिगतैरसौम्यैः
केन्द्रत्रिकोणोपगतैश्च सौम्यैः ।
क्षौरोदितर्क्षादिविलग्नयोगे
मौञ्जीविमोक्षः शुभदो द्विजानाम् ॥

## शौनककारिकाः

स्नाने गोदानमुहूर्तातिदेशः

[२]गोदानेनातिदिष्टत्वात्कर्मणोऽस्योत्तरायणम् ।
पूर्वपक्षादियोगं च प्रतीक्ष्य ह्येतदाचरेत् ॥

पूर्वपक्षादि इत्यादिशब्देन तिथ्यादयो गृह्यन्ते । प्रपा. २८५

## रेणुकारिकाः

स्नाने व्रतबन्धमुहूर्तातिदेशः

[३]काले यथोक्ते व्रतबन्धनस्य
नक्षत्रशाखाधिपसंयुते च ॥

(१) संसौ. १५४ ; संप्र. ५७०.

(२) प्रपा. २८५ यणम् ( यणे ) ; संप्र. ५६८ ; संम. ४४.

(३) रेका. ७ पृ. ४२.

# समावर्तनप्रयोगः

## बौधायनश्रौतसूत्रं बौधायनगृह्य-परिभाषासूत्रं च

संभारोपकल्पनम्, व्रजगमनम्, समिदाधानम्, वपनम्, मेखलाविस्रंसनदन्तधावने, अभिषेकसुरभिपिष्टानुलेपन-परिधानानि, होमः, कुण्डलस्रगादिधारणम्, दिगाद्युपस्थानम्, तूष्णीमनुष्ठेयं प्रयोगान्त-रम्, आचार्यकर्तृकं मधुपर्कपूजनम्

[1]वेदमधीत्य स्नास्यन्नुपकल्पयत एरकां चोप-बर्हणं च नापितं च क्षुरं च दारूणि चोपस्तरणं च वृकलांश्च दन्तधावनमुष्णाश्चापः शीताश्च सर्व-सुरभिपिष्टं चाञ्जनं च स्रजं चाऽऽदर्शं चाहतं च वासः प्रावरणं च वसनान्तरं वादरं मणिं सुवर्णोपधानं सूत्रं च प्रवर्तौ च दण्डं चोपानहौ च छत्रमानडुहं चर्म सर्वरोहितमिति। एतेऽस्य संभारा उपक्लृप्ता भवन्ति ॥

[2]पुराऽऽदित्यस्योदयाद्व्रजमभि प्रपद्यते। नैन-मेतदहरादित्योऽभितपेत्तदहःस्नातानामु ह वा एष एतत्तेजसा यशसा तपति ॥

[3]अन्तर्लोम्ना चर्मणा व्रजमभिविघ्नन्ति ॥

[4]पूर्वार्धमध्ये व्रजस्याग्निमुपसमाधाय संपरि-स्तीर्याऽऽहरन्त्येतान्संभारान्सकृदेव सर्वान्। 'यत्सह सर्वाणि मानुषाणि' इत्येतस्माद्ब्राह्म-णात्। दक्षिणतो ब्राह्मण उपविशति। उत्तरत उदपात्रं पालाशीं च समिधं निदधाति ॥

(१) बौश्रौ. १७।३९; बौगृप. १।१३।१ प्रावरणं (प्रावारं) रं मणिं (रमणिं) रोहित (लोहित).

(२) बौश्रौ. १७।३९ हःस्नाता (ह स्नाता); बौगृप. १।१३।९ नामु ह वा (नां मुखं वा).

(३) बौश्रौ. १७।३९; बौगृप. १।१३।१० मभिवि (मभिनि).

(४) बौश्रौ. १७।३९; बौगृप. १।१३।११–१३.

[1]अपरेणाग्निमुदीचीनप्रतिषेवणामेरकां साधी-वासामास्तीर्य तस्यां प्राङ्मुख उपविशति ॥

[2]उत्तरतो नापितः। उत्तरत उपबर्हणम्। आमध्यंदिनं भिक्षां दद्यात्। अपीह गां पचेद्वशा चेदस्य स्यात्। अत्रैतां पालाशीं समिधमाज्ये-नाक्त्वा मध्यंदिनेऽभ्यादधाति ॥

'इमं स्तोममर्हते जातवेदसे रथमिव संम-हे मा मनीषया। भद्रा हि नः प्रमतिरस्य संस-द्यग्ने सख्ये मा रिषामा वयं तव स्वाहा' इति। अथैरकायामुदीचीनशिरा निपद्यते– 'त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषमगस्त्यस्य त्र्यायुष-मृषीणां त्र्यायुषं यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषम्' इति ॥

[3]उन्द्यमानमनुमन्त्रयते– 'शिवा मे भवथ संस्पृशे' इति ॥

[4]क्षुरमभिमन्त्रयते– 'क्षुरो नामाऽसि स्वधिति-स्ते पिता नमस्ते अस्तु मा मा हिंसीः' इति ॥

[5]उप्यमानमनुमन्त्रयते– 'यत्क्षुरेण वर्चयसि वप्त्रा वपसि केशश्मश्रु वर्चय मे मुखं मा म आयुः प्रमोषीः' इति ॥

[6]श्मश्रूण्येवाग्रे वपतेऽथोपपक्षावथ केशान् यथोपपादमितराण्यङ्गानि। एतस्माद्ध्येषा

(१) बौश्रौ. १७।३९; बौगृप. १।१३।१४ साधी (साधि).

(२) बौश्रौ. १७।३९–४०; बौगृप. १।१३।१५–२०.

(३) बौश्रौ. १७।४०; बौगृप. १।१३।२१ उन्द्य (क्लिद्य) स्पृशे (स्पर्शाः).

(४) बौश्रौ. १७।४०; बौगृप. १।१३।२२.

(५) बौश्रौ. १७।४०; बौगृप. १।१३।२३ वर्चय (वर्चया).

(६) बौश्रौ. १७।४०; बौगृप. १।१३।२४–२६.

जरसा पूर्व आयुषि प्रयान्ति पूर्व आयुष्यन्नादा भवन्ति य एवं विद्वांसो लोमानि वापयन्ते । स यदि लोमानि वापयिष्यमाणः स्यात्केशश्मश्रु वापयित्वा लोमानि संहृत्य नखानि निकृन्तयीत । अथैतानि समुच्चित्य ब्रह्मचारिणे प्रयच्छन्नाह– 'इमानि हृत्वा दर्भस्तम्बे वोदुम्बरमूले वा निधत्तात्' इति । तानि स तत्र निदधाति ॥

[1]अपरेणाग्निं प्राङ्मुख उपविश्य मेखलां विस्रंसयते– 'इमं विष्यामि वरुणस्य पाशम्' इति ॥

[2]योऽस्य तत्र रातेः पुत्रो वाऽन्तेवासी वा भवति तस्मै प्रयच्छन्नाह– 'इमां हृत्वा न्यग्रोधे वोदुम्बरमूले वा निधत्तात्' इति ॥

[3]तासु स तत्र निदधाति– 'इदमहममुष्यामुष्यायणस्य शुचा पाप्मानमवगूहाम्युत्तरस्य द्विषद्भ्यः' इति ॥

[4]वृकलैः प्रधाव्य दन्तान्विधावयते– 'अन्नाद्याय व्यपोहध्वं भगो राजाऽयमागमत् । स मे मुखं प्रसर्पतु वर्चसे च भगाय च ॥' इति ॥

[5]उभयीरपः संनिषिञ्चति । उष्णासु शीता आनयति दैवमानुषस्य व्यावृत्त्या इति ॥

[6]तासामञ्जलिनोपहत्याभिषिञ्चति– 'आपो हि ष्ठा मयोभुवः' इति तिसृभिः, 'हिरण्यवर्णाः शुचयः पावकाः' इति तिसृभिः । 'षोढा विहितो वै पुरुषः' इत्येतस्माद्ब्राह्मणात् । अथैतस्य सर्वैसुभिपिष्टं समुदायुत्य त्रिः प्रसिञ्चति ॥

'नमः शाकजञ्जभाभ्यां नमस्ताभ्यो देवताभ्यो या अभिग्राहिणीः' इति ॥

[1]अनुलिम्पते– 'अप्सरासु च यो गन्धो गन्धर्वेषु च यद्यशः । दिव्यो यो मानुषो गन्धः स मामाविशत्विह ॥' इति ॥

[2]अथाहतं परिधत्ते– 'स्वा मा तनूराविश शिवा मा तनूराविश' इति । एवमेवोत्तरासङ्ग्यम् । एवमेवात ऊर्ध्वम् ॥

[3]अथैतं बादरं मणिं सुवर्णोपधानं सूत्रे प्रोत्य दर्व्यामाधाय दर्विदण्डे सूत्रेण पर्यस्य जुहोति– 'इयमोषधे त्रायमाणा सहमाना सहस्वती । सा मा करोतु सोमवर्चसं सूर्यवर्चसं ब्रह्मवर्चस्विनमन्नादं करोतु स्वाहा ॥' इति ॥

[4]अथैनमुदपात्रेऽनुपरिप्लावयति– 'विश्वा उत त्वया वयं धारा उदन्या इव । अतिगाहेमहि द्विषः ॥' इति ॥

[5]'अपाशोऽसि' इत्युक्त्वा 'अक्ष्णया परिहरति वध्यं हि प्रत्यञ्चं प्रतिमुञ्चन्ति व्यावृत्त्यै' इत्येतस्माद्ब्राह्मणात् ॥

[6]अथैतौ प्रवर्तौ सूत्रे प्रोत्य दर्व्यामाधाय दर्विदण्डे सूत्रेण पर्यस्य जुहोति– 'आयुष्यं वर्चस्यं

(१) बौश्रौ. १७।४० इमं (इमां) णस्य पा (णपा) ; बौगृप. १।१३।२७.

(२) बौश्रौ. १७।४० ; बौगृप. १।१३।२८ वा भवति (भवति).

(३) बौश्रौ. १७।४० ; बौगृप. १।१३।२९.

(४) बौश्रौ. १७।४० ; बौगृप. १।१३।३० राजाऽय ( राजा य ).

(५) बौश्रौ. १७।४० ; बौगृप. १।१३।३१ देव (देव).

(६) बौश्रौ. १७।४०–४१ ; बौगृप. १।१३।३२–३३.

(१) बौश्रौ. १७।४१ ; बौगृप. १।१३।३४ लिम्पते ( लिम्पेत् ).

(२) बौश्रौ. १७।४१ ; बौगृप. १।१३।३५ अथाहतं (अहतं वासः) शिवा (शिवो) वोत्तरासङ्ग्यम् ( व सायम् ).

(३) बौश्रौ. १७।४१ ; बौगृप. १।१३।३६ रं मणिं सुव (रमणिं स्व) दर्वि (दर्वीं) स्विनमन्ना (सिनं माऽन्ना).

(४) बौश्रौ. १७।४१ ; बौगृप. १।१३।३७ पात्रेऽनुप (पात्रेण प).

(५) बौश्रौ. १७।४१ ; बौगृप. १।१३।३८.

(६) बौश्रौ. १७।४१ ; बौगृप. १।१३।३९ दर्वि (दर्वीं) (सुवीर्य०).

सुवीर्यं रायस्पोषमौद्भिद्यम् । इदं हिरण्यं वर्चसे जैत्रायाऽऽविशतादिमं रयिं स्वाहा ॥ ' इति ॥

[1]द्वितीयां जुहोति- ' शुनिमिवाहं हिरण्यस्य पितुरिव नामाग्रभैषम् । तन्मा करोतु सोमवर्चसं सूर्यवर्चसं ब्रह्मवर्चस्विनमन्नादं करोतु स्वाहा ॥ ' इति ॥

[2]तृतीयां जुहोति- ' उच्चैर्वाजि पृतनासाहं सभासाहं धनंजयम् । सर्वाः समृद्धीर्ऋद्धयो हिरण्ये याः समाहिताः स्वाहा ॥ ' इति ॥

[3]चतुर्थीं जुहोति- ' विराजं च स्वराजं चाभिष्टिर्या च नो गृहे । लक्ष्मी राष्ट्रस्य या मुखे तया मा सं सृजामसि स्वाहा ॥ ' इति ॥

[4]पञ्चमीं जुहोति- ' यशो मा कुरु ब्राह्मणेषु यशो राजसु मा कुरु । यशो विश्येषु शूद्रेष्वहमस्मि यशस्तव स्वाहा ॥ ' इति ॥

[5]अथैनावुदपात्रेऽनुपरिप्लावयति- ' विश्वा उत त्वया वयम् ' इत्येतया ॥

[6]तयोरन्यतरमादाय दक्षिणे कर्णे आबध्नीत- ' आयुष्यं वर्चस्यम् ' इत्येताभिः पञ्चभिः ॥

[7]अथैनमनुपरिवर्तयते- ' ऋतुभिस्त्वाऽऽर्तवैः संवत्सरस्य धायसा तैस्त्वा सहानुकरोमि ' इति ॥

[1]एवमेवोत्तरं प्रवर्तमाबध्नीते ॥

[2]अथ स्रजं प्रतिमुञ्चते ॥

' शुभिके शिर आरोह शोभयन्ती मुखं मम । मुखं हि मम शोभय भूयांसं च भगं कुरु ॥ यां त्वा जहार जमदग्निः श्रद्धायै कामायान्यै । तां त्वेमां प्रतिमुञ्चेऽहं वर्चसे च भगाय च ॥ ' इति ॥

[3]त्रैककुदेनाञ्जनेनाङ्क्ते- ' यदाञ्जनं त्रैककुदं जातं हिमवत उपरि । तेन वामाञ्जे मयि पर्वतवर्चसमस्तु ॥ ' इति ॥

[4]आदर्शे परिपश्यते- ' यन्मे मनः परागतमादर्शे परिपश्यतः । इदं तन्मयि पश्याम्यायुष्यं वर्चस्यं मे अस्तु ॥ ' इति ॥

[5]अथोपानहावुपमुञ्चते- ' द्यौरसि ' इति दक्षिणे पादे, ' पृथिव्यसि ' इत्युत्तरे । अथ दण्डमादत्ते- ' सखा मा गोपाय ' इति । छत्रमादत्ते- ' दिव्योऽसि सुपर्णोऽन्तरिक्षान्मा पाहि ' इति ॥

[6]सोऽत्रैवास्त आ नक्षत्राणामुदयात् ॥

[7]अथोदितेषु नक्षत्रेषूपनिष्क्रम्य दिश उपतिष्ठते- ' देवीः षडुर्वीरुरु नः कृणोत विश्वे देवास

---

(१) बौश्रौ. १७।४१ ; बौगृप. १।१३।४० शुनि (शुनी) नामाग्रभैषम् । तन्मा (नामग्राहम् । तं मा) स्विनमन्ना (स्विनं माऽन्ना).

(२) बौश्रौ. १७।४१ ; बौगृप. १।१३।४१ नासहं (नासाहं).

(३) बौश्रौ. १७।४१ ; बौगृप. १।१३।४२ भिष्टि (भिष्टी).

(४) बौश्रौ. १७।४१ ; बौगृप. १।१३।४३ मस्मि (मस्मै).

(५) बौश्रौ. १७।४१ ; बौगृप. १।१३।४४ अथैना (अथैता) ( परि० ).

(६) बौश्रौ. १७।४१ ; बौगृप. १।१३।४५ रन्यतर (रन्तर) बध्नीत (बध्नाति).

(७) बौश्रौ. १७।४१ ; बौगृप. १।१३।४६ वर्तयते (वर्तते).

(१) बौश्रौ. १७।४१ ; बौगृप. १।१३।४७ (एवमेवोत्तरे कर्णे प्रवर्तमाबध्नीत).

(२) बौश्रौ. १७।४१-४२ ; बौगृप. १।१३।४८ मुञ्चते (मुञ्चति) मुञ्चेऽहं (मुञ्चामि).

(३) बौश्रौ. १७।४२ ; बौगृप. १।१३।४९.

(४) बौश्रौ. १७।४२ ; बौगृप. १।१३।५० तन्मयि (तं मयि).

(५) बौश्रौ. १७।४२ ; बौगृप. १।१३।५१-५३.

(६) बौश्रौ. १७।४२.

(७) बौश्रौ. १७।४२ ; बौगृप. १।१३।५४-५५ (दितेषु नक्षत्रेषू०) श उप (शमुप) रुरु नः (रुरुणः) यध्वम् । '...समुपस्थाय (यध्वम् । मा हास्महि प्रजया

इह वीरयध्वम् ।' इति । 'मा हास्महि प्रजया मा तनूभिः' इति नक्षत्राणि । 'मा रधाम द्विषते सोम राजन्' इति चन्द्रमसम् । समुपस्थाय यत्र यत्र कामयते तदेतीति । एतत्समावर्तनम् ॥

[1]अथेतरत् । तूष्णीमेव तीर्थे स्नात्वोदेति । अथ यदि रथं लभते 'रथंतरमसि' इति दक्षिणं चक्रमभिमृशति, 'बृहदसि' इत्युत्तरम्, 'वामदेव्यमसि' इति मध्यम् । अथ रथं प्रवर्तमानमनुमन्त्रयते– 'अयं वामश्विना रथो मा दुःखे मा सुखे रिषत्' इति । अथ यदि शमरथं करिष्यन्भवत्यप उपस्पृश्येमामभिमृशति– 'इह धृतिरिह विधृतिरिह रन्तिरिह रमतिरिह रमताम्' इति ॥ †

## बौधायनगृह्यसूत्रम्

श्रौतसूत्रोक्तप्रयोगे पक्वहोमोपहोमस्विष्टकृदादिशेषतन्त्रहुतशेषनिधानहुतशेषप्राशनोरोभिमर्शनानामावापः ; उपनयनाग्नौ होमः

[2]वेदमधीत्य स्नास्यन्नित्युक्तं समावर्तनम् ॥

एतदेव नाना ॥

अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात् कृत्वा पालाशीं समिधमाज्येनाक्त्वा मध्यंदिनेऽभ्यादधाति ॥

तत्पुरस्ताद्व्याख्यातम् ॥

अथ केशश्मश्रुलोमनखावापनेनैव प्रतिपद्यते । सिद्धमा च्छत्रादानात् कृत्वा पक्वाज्जुहोति– 'आवहन्ती वितन्वाना । कुर्वाणा चीरमात्मनः । वासांसि मम गावश्च । अन्नपाने च सर्वदा । ततो मे श्रियमावह । लोमशां पशुभिः सह स्वाहा' इति ॥

अथाऽऽज्याहुतीरुपजुहोति– 'आ मा यन्तु ब्रह्मचारिणः स्वाहा । यशो जनेऽसानि स्वाहा । श्रेयान् वस्यसोऽसानि स्वाहा । तं त्वा भग प्रविशानि स्वाहा । स मा भग प्रविश स्वाहा' इति ॥

स्विष्टकृत्प्रभृति सिद्धमा धेनुवरप्रदानात् ॥

अथाग्रेणाग्निं बिल्वशाखायां हुतशेषं निदधाति– 'तस्मिन् सहस्रशाखे । नि भगाहं त्वयि मृजे स्वाहा' इति ॥

अथ पक्वादुपादाय प्राश्नाति– 'यथाऽऽपः प्रवता यन्ति । यथा मासा अहर्जरम् । एवं मां ब्रह्मचारिणः । धातरायन्तु सर्वतः स्वाहा' इति ॥

प्राश्याप आचम्योरः प्रत्यात्मानं प्रत्यभिमृशते– 'प्रतिवेशोऽसि प्र मा पाहि प्र मा पद्यस्व' इति ॥

सोऽत्रैवाऽऽस्ते आ नक्षत्राणामुदयात् ॥

अथोदितेषु नक्षत्रेषूपनिष्क्रम्य दिश उपतिष्ठत इति सिद्धमत ऊर्ध्वम् ॥

यस्मिन्नग्नावुपनयति.. ... तस्मिन् समावर्तनम् ॥

## बौधायनगृह्यपरिभाषासूत्रम्

व्रतस्नातकस्य जडबधिरादीनां च तूष्णीं समावर्तनप्रयोगः

[1]अथ व्रतस्नातकस्य वेदमनधीयानस्य तूष्णीं समावर्तनम् ॥

तीर्थे स्नात्वाऽग्निमुपसमाधाय संपरिस्तीर्य मध्याह्ने पालाशीं समिधमाज्येनाक्त्वाऽभ्यादधाति– 'इमं स्तोमम्' इत्येतया ॥

तूष्णीं वपनं तूष्णीं संभारग्रहणं च कृत्वा रथस्य दक्षिणं चक्रमभिमृशति– 'रथंतरमसि' इति । सव्यम्– 'बृहदसि' इति ॥

---

† इतः परमाचार्यकर्तृकस्नातककर्मकमधुपर्कपूजाविषयकाणि सूत्राणि विद्यन्ते, तानि मधुपर्कप्रकरणे (सं. का. पृ.१९१९) संगृहीतानि तत्रैव द्रष्टव्यानि ।

मा तनूभिर्मा रधाम द्विषते सोम राजन् ॥' इति । चन्द्रमसम्– 'सूपस्थाः' इति । ).

(१) बौश्रौ. १७।४३.

(२) बौगृ. २।६।१, ६–१७.

(१) बौगृप. १।१४।१–६, २३.

**रथस्य मध्यममभिमृशति– 'वामदेव्यमसि' इति ॥**

**रथं प्रवर्तमानमभिमन्त्रयते– 'रथं वामश्विना रथो मा दुःखे मा सुखे रिषत्' इति ॥**

**रथाभावेऽप उपस्पृश्य भूमिमभिमृशति– 'इह धृतिरिह विधृतिरिह रन्तिरिह रमतिः' इति ॥ §**

**एवमेव जडबधिरमूकान्धकुब्जादीनामशक्तस्तूष्णीं समिधमाधाय शेषं तूष्णीमाचरेत् ॥**

## आश्वलायनगृह्यसूत्रम्

संभारोपकल्पनम्, समिदाहरणम्, ब्राह्मणेभ्यो गोन्नदानम्, गौदानिककर्मातिदेशः, उन्मर्दनस्नानवस्त्रपरिधानाञ्जनानि, कुण्डलादिधारणम्, समिदाधानम्, पूजयिष्यतो गृहे रात्रिवासः, आश्रमान्तरानुज्ञाग्रहणम्, पक्षिमृगयोरप्रियशब्दश्रवणे कुतश्चिद्भयोत्पत्तौ च जपहोमादिशान्तिविधानम्

**'अथैतान्युपकल्पयीत समावर्तमानो मणिं कुण्डले वस्त्रयुगं छत्रमुपानद्युगं दण्डं स्रजमुन्मर्दनमनुलेपनमाञ्जनमुष्णीषमित्यात्मने चाऽऽचार्याय च ॥**

(१) अथशब्दोऽधिकारार्थः । एतानि द्रव्याण्युपकल्पयीत सः । एतानि कानि पुनस्तानि द्रव्याणि ? यानि वक्ष्यामः । उपकल्पयीत परिकल्पयेत् समावर्तमानोऽयम् । समावर्तिष्यमाण इति प्राप्नोति समावर्तिष्य( ? वर्त्स्य)न्निति वा । तत्र समावर्तमान इत्युक्ते यथोपपद्यते तथा लक्षणं योजयितव्यम् । तत्रोपकल्पयीतेत्येतच्छक्यमनारब्धुम् । द्रव्योपदेशश्च न कर्तव्यः । उपकल्पयीतेति यदि नोच्यते अपूर्वमप्येषा चोदना न स्यात् । भवतु, को दोषः ? ये उत्तरत्र विशेषास्ते तत्रैवावतिष्ठेरन् । न चायमिष्टः । तत्राहते वाससी आचार्यस्य (न) प्राप्नुतः । कस्मात् ? समावर्तमानस्य विशेषोपदेशात् । तेन कथं साऽपूर्वा चोदना स्यात्, इदं च वचनमानुमानिकं स्यादित्येतदर्थमेतानीत्युच्यते । उपकल्पयीतेति यदि नोच्येत एतेषां द्रव्याणामुपकल्पनं न स्यात् । नेत्युच्यते । उत्तरत्रोपदेशात् भविष्यति । तद्यथा– 'आचार्योऽहतेन वाससा त्रिः प्रदक्षिणं शिरः समुखं वेष्टयित्वा' ( आश्रौ. २।२। १४ ) इत्यत्रासत्यामपि चोदनायामुपकल्पयीतेत्यर्थादुपकल्पनं भवति । तद्वदिहापि भविष्यति । नात्रोपकल्पनं प्राधान्येन चोद्यते । 'आत्मने चाऽऽचार्याय च' इति वक्ष्यति । तत्र न ज्ञायते कानि द्रव्याण्यात्मने चाऽऽचार्याय च भवन्तीति । तत्र कथमेतेषां द्रव्याणां ग्रहणं स्यादित्यतो वचनमारभ्यते । मणिं कुण्डले इत्येवमाद्युष्णीषान्तानि आत्मने चाऽऽचार्याय चोपकल्पयते । तत्र 'मणी कुण्डले' इत्येवं केचित् पठन्ति, 'मणिकुण्डले' इत्येवमपरे । ये मणिकुण्डले इति पठन्ति तेषां मणिग्रहणं कुण्डलविशेषणार्थम् । तेन चाऽऽचार्यस्य मणिर्न प्राप्नोति । समावर्तमानस्य दर्शनात् भविष्यति । तस्मान्नायं पाठः । 'मणिं कुण्डले' इत्ययमेव पाठः । किमेवं भविष्यति ? उभयोरपि मणिः सिद्धो भवति । अविशिष्टयोः कुण्डलयोः प्राप्तिर्भविष्यति । दर्शनाद्विशिष्टयोः प्राप्तिर्भवति 'मणिकुण्डले आबध्नीत' इति । देभा.

(२) उक्तोऽर्थः । उपकल्पयीतेतिशब्दोऽयं छान्दसः । समावर्तनं नाम संस्कारः तेन $ संस्क्रियमाण इत्यर्थः ।

---

§ इतः परमाचार्यकर्तृकस्नातककर्मकमधुपर्कपूजाविषयकाणि सूत्राणि विद्यन्ते, तानि मधुपर्कप्रकरणे (सं. का. पृ. १९२५–१९२६ ) संगृहीतानि तत्रैव द्रष्टव्यानि ।

(१) आगृ. ३।८।१ गामावृ. वर्त (वर्त्य) ; आन. मणिं (मणी) छत्रमु (छत्रे उ) दण्डं (दण्डौ) स्रजमु (स्रगु) ष्णीषमि (ष्णीषावि) ; प्रपा. २८५ नमाञ्ज (नाञ्ज) ; धप्र. ४४ (अथैतान्युपकल्पयीत समावर्तमानः ) एतावदेव ; संप्र. ५६७ र्तमानो मणिं कु (र्त्यमानो मणिकु) स्रजमु (स्रगु) नमाञ्ज (नमञ्ज) ; संम. ४४ अथैता (अथैना) वर्त (वर्त्य) र्याय च (र्याय) ; संको. १६७ वर्त (वर्त्य) ; संब. १३३.

$ अत्र केनेति कर्त्राकाङ्क्षा 'स्वेन' इत्यध्याहारेण पूरणीया, अग्रे 'गौदानिकं कर्म कुर्वीत' इत्यत्र 'इदं कर्म स्वयमेव करोति' इति वृत्तिकारेण समावर्तनकर्मणि स्वस्यैव ब्रह्मचारिणः कर्तृत्वस्योक्तत्वात् । न च 'स्वः स्वेन संस्क्रिय-

अर्थादेवोपकल्पने सिद्धे उपकल्पनवचनमत्राऽऽत्मने चाऽऽचार्याय च एतान्येकादश द्रव्याण्युपकल्पयेदिति विधानार्थम् । $गानावृ.

( ३ ) अथ गुरुकुलात् समावर्तमान एतानि वक्ष्यमाणानि द्रव्याणि उपकल्पयेत संपादयेत् । तानि चाऽऽत्मने चाऽऽचार्याय च कल्पयितव्यानि । किमर्थमिदमुच्यते ? एतेषां द्रव्याणामुपकल्पनं यथा स्यादिति । नैतदस्ति प्रयोजनम् । उत्तरत्र विनियोगवशादेवोपकल्पनं भविष्यति, यथा 'आचार्योऽहतेन वाससा त्रिः प्रदक्षिणम्' इत्यत्र । सत्यम् । एवमेव तत् । इह त्वात्मने चाऽऽचार्याय चेत्युच्यते । तत्र न ज्ञायते कानि द्रव्याणि किं कुर्यादिति । तदर्थमिदमुच्यते । एवमप्येतानीति वक्तव्यम्, कथम् ? एतेषामेवोत्तरत्र विनियोगो यथा स्यादिति । तेन 'अहते वाससी आच्छाद्य' इति समावर्तमानस्यास्य वाससोरुपदिष्टमहतत्वमाचार्यवाससोरपि भवति । अन्यथोपकल्पनवेलायामनुपदिष्टत्वान्न स्यात् । तत्र मणी द्वौ । कुण्डले द्वे । सौवर्णे मणिबद्धे च ते भवतः, 'मणिकुण्डले आबध्नीत' इत्युत्तरत्र दर्शनात् । मणिकुण्डले इति ये समासं पठन्ति तेषां 'मणिं कण्ठे प्रमुच्य' इति दर्शनात् यद्यपि समावर्तमानस्य मणिः सिद्धः तथाप्याचार्यस्य न स्यात् । तस्मान्मणी इति द्विवचनान्तमेव पठितव्यम् । वस्त्रयुगमेकैकस्मै । छत्रे द्वे । उपानद्युगं वस्त्रयुगवत् । दण्डौ द्वौ । स्रगुन्मर्दनं समाहारद्वन्द्वः । येन शरीरमुन्मर्द्यते तदुन्मर्दनम् । उष्णीषौ द्वौ । अना.

( ४ ) करञ्जफलं पेषयित्वा तेन उद्वर्तनम् उन्मर्दनम् इति वृत्तौ । संम. ४४

**¹यद्युभयोर्न विन्देताऽऽचार्यायैव ॥**

( १ ) यत् द्रव्यमुभयोर्न विन्देत तदाचार्यायैव देयमशक्तौ सत्याम् । देभा.

( २ ) यद्युभयोर्न लभेत तदाऽऽचार्यायैव केवलायोपकल्पयेत् । † गानावृ.

**²समिधं त्वाहरेदपराजितायां दिशो¶ यज्ञियस्य वृक्षस्य ॥**

( १ ) समिधं त्वाहरेदेव नियमेन । यो यज्ञियो वृक्षः तस्यापराजिताया दिशः समिधमाहरेत् । आनयेदित्युक्तं भवति । देभा.

( २ ) यज्ञियस्य वृक्षस्य या अपराजिता दिक् ततो गृहीत्वा आहरेत् । यज्ञियस्येति वचनं होमार्थेयं समिदिति ज्ञापयितुम् । तेन 'तिष्ठन्समिधमादध्यात्' इत्यत्र इमामादध्यादिति सिद्धम् । § गानावृ.

( ३ ) अपराजिता पूर्वोत्तरा दिक्, तस्याः समिध आहरेत् यज्ञियस्य वृक्षस्य । अना.

**³आर्द्रामन्नाद्यकामः पुष्टिकामस्तेजस्कामो वा, ब्रह्मवर्चसकाम उपवाताम् ॥**

( १ ) अन्नाद्यं यः कामयते स आर्द्रामाहरेत् । 'पुष्टिकामस्तेजस्कामो वा' — आर्द्रामाहरेत् । 'ब्रह्मवर्चसकाम

---

माणः' इत्यत्रैकस्य कर्मत्वकर्तृत्वविरोधः, धात्वर्थव्यापारवतः कर्तृत्वात् धात्वर्थव्यापारव्यधिकरणफलाश्रयस्यैव कर्मत्वाच्चेति वाच्यम्, 'आत्मानं जानाति' इत्यादाविवौपाधिकभेदमादायाविरोधात् । न च समावर्तनकर्मैकदेशे गौदानिककर्मण्येव स्वस्य कर्तृत्वं वृत्तिकारेणोक्तम्, न समावर्तनकर्मणीति वाच्यम्, गौदानिककर्मतः पूर्वोत्तरासु क्रियासु स्वस्यैव कर्तृत्वेन गौदानिककर्तृत्वोक्तेरपि समावर्तनकर्तृत्वे पर्यवसानात् । अत्र 'संक्रियमाणः' इति कर्मसाधितपदेन व्याख्यानात्, अग्रे "समावर्त्यमानः' इत्यधिकारात्" इत्युक्तेश्च सूत्रे 'समावर्त्यमानः' इति पाठो वृत्त्यभिमत इति प्रतीयते । तथा पाठेऽप्याचार्यस्य हेतुकर्तृत्वेन स्वस्य समावर्तनकर्तृत्वोक्तिर्न विरुध्यते ।

$ प्रपा., संप्र. गानावृवत् ।

† अना., प्रपा., संप्र. गानावृवत् ।

¶ अयं पञ्चम्यन्तः पाठः सर्वव्याख्यानसंमतः साधीयांश्च । इदानींतनवैदिकसंप्रदायपाठस्तु '...जितायां दिशि' इति सप्तम्यन्तः ।

§ प्रपा. गानावृवत् ।

(१) आगृ. ३।८।२ ; प्रपा. २८५ ; संप्र. ५६७ ; संम. ४४ ; संको. १६७ ; संव. १३३.

(२) आगृ. ३।८।३ या दिशो (यां दिशि) ; प्रपा. २८६.

(३) आगृ. ३।८।४ ; प्रपा. २८६.

उपवाताम्'– आहरेत् । शुष्कामित्युक्तं भवति ।
देभा.

( २ ) शुष्कामित्यर्थः । ¶ गानावृ.

( ३ ) तत्र गुणकामः अन्नाद्यपुष्टितेजसामन्यतमं यः कामयते स आर्द्रां समिधमाहरेत् । उपवाता शुष्का ।
अना.

**'उभयीमुभयकामः ॥**

( १ ) उभयं यः कामयते स उभयीमाहरेत् समिधमार्द्रामर्धशुष्काम् । देभा.

( २ ) आर्द्रशुष्कामित्यर्थः । एको भाग आर्द्रः । अपरो भागः शुष्कः । ¶ गानावृ.

( ३ ) अन्नाद्यादीनामन्यतमं ब्रह्मवर्चसं च यः कामयते स उभयीम् आर्द्रामुपवातां च समिधमाहरेत् । अर्धशुष्कामित्युक्तं भवति । अना.

**'उपरि समिधं कृत्वा गामन्नं च ब्राह्मणेभ्यः प्रदाय गौदानिकं कर्म कुर्वीत ॥**

( १ ) आहृत्य समिधमुपरि निदधाति । भूमेः प्रतिषेधः । उपरि कृत्वा गामन्नं च ब्राह्मणेभ्यो ददाति । तत्र संशयः– किमियं गौर्व्यञ्जनत्वेन चोद्यते, आहोस्वित् दक्षिणार्थः? इति । उभयथा चोपपद्यते । अन्नसंनिधौ श्रूयमाणे व्यञ्जनत्वेनोपपद्यत इति । प्रतिग्रहीतृसंनिधौ श्रूयमाणे दक्षिणार्थत्वेनेत्युपपद्यते । एवमुभयथा संप्रतिपन्नाः । आगमस्तु दक्षिणार्थत्वेनेति । गां दत्त्वा ब्राह्मणांश्च भोजयित्वा गौदानिकं कर्म कुर्वीत । तत्र कर्मण इयमानुपूर्वीति । तत्र कर्मग्रहणं किमर्थम्? तदेव कर्म कथं स्यादिति । किं सिद्धं भवति? 'आप्लुत्य वाग्यतः' (आगृ. १।१८।७) इत्येवमादि मा भूदिति । इदं तु समावर्तनं कर्म स्वयंकर्तृकं भवति । देभा.

( २ ) आहृतां समिधमुपरि निदध्यात्, न भूमौ । ततो ब्राह्मणेभ्यो गां दक्षिणां दद्यात् । कर्माङ्गत्वेन भोजनं च देयम् । ततो गोदानोक्तं कर्मेहापि कुर्यात् । कर्मग्रहणं कर्मैव कुर्यात्, न 'आप्लुत्य वाग्यतः' इत्यादिनियमाः कार्या इत्येवमर्थम् । इदं कर्म स्वयमेव करोति, समावर्त्यमान इत्यधिकारादूहदर्शनाच्च । † गानावृ.

( ३ ) कर्मग्रहणस्य प्रयोजनं गोदान एव स्थित्वोक्तम् ।
¶ अना.

**आत्मनि मन्त्रान् संनमयेत् ॥**

( १ ) तत्र ये मन्त्रा अत्र ते आत्माभिवादिनो निवेशयितव्या इति ब्रवीति । यद्येवमर्थमारभ्यते, नैवाऽऽरब्धव्यम् । किं कारणम्? परिभाषासिद्धत्वादस्यार्थस्य । वैकृतत्वाच्चास्य कर्मण ऊहो भवति । तस्माच्छक्यमनारब्धुम् । आरभ्यते प्रयोजनार्थम् । किं प्रयोजनम्? ऋगूहप्राप्त्यर्थम् । ऋक्षु कथमूहः प्रसज्येतेति । तस्मादारब्धव्यम् । के पुनस्ते मन्त्राः ये आत्माभिवादिनः कर्तव्याः? तद्यथा– 'ओषधे त्रायस्व माम्', 'स्वधिते मा मा हिंसीः', 'वपतेदं म आयुष्मान्', 'तेन म आयुषे वपामि', 'मुखं मा म आयुः प्रमोषीः' इति । समावर्तनकर्मण्येते मन्त्रा अनेन प्रयोगेण प्रयोक्तव्याः । देभा.

( २ ) मन्त्रानात्मवाचकान्कुर्यादित्यर्थः । ऊह्यानि ब्रूमः – 'ओषधे त्रायस्व माम्', 'स्वधिते मा मा हिंसीः', 'वपतेदं ममाऽऽयुष्मान्', 'यथाऽऽसम्', 'तेन म आयुषे' इत्युभयत्र, 'शिरो मुखं मा म आयुः प्रमोषीः' इति । † गानावृ.

( ३ ) ऋचामप्यूहप्राप्त्यर्थं वचनम् । 'ओषधे त्रायस्व मा' ... 'वपतेदं म आयुष्मान्' ... इति ।
‡ अना.

**एकक्लीतकेन ॥**

( १ ) एकक्लीतकेन उन्मर्दयति । तदुन्मर्दनमेकक्लीतकं भवति । एक क्लीतकमिति किमुच्यते?

---

¶ प्रपा. गानावृवत् ।

(१) आगृ. ३।८।५ ; प्रपा. २८६ कामः + (वा).

(२) आगृ. ३।८।६–८ ; प्रपा. २८६.

† प्रपा. गानावृवत् ।

¶ शेषं गानावृवत् ।

‡ शेषं गानावृवत्, 'यथाऽऽसम्' इति नास्ति ।

करञ्जकयाः फलानां यत्रैकं क्लीतकं बीजं भवति । तदुन्मर्दनं भवति । देभा.

( २ ) उन्मर्दनं कुर्वीतेति शेषः । करञ्जबीजस्य यत्रैकं बीजं तदेकक्लीतकम् । तत्पेषयित्वा तेनोन्मर्दनं कारयेत् । § गानावृ.

**[1]शीतोष्णाभिरद्भिः स्नात्वा 'युवं वस्त्राणि पीवसा वसाथे' इत्यहते वाससी आच्छाद्य 'अश्मनस्तेजोऽसि चक्षुर्मे पाहि' इति चक्षुषी आञ्जयीत ॥**

( १ ) तेनोन्मर्द्य शीतोष्णाभिरद्भिः स्नाति । स्नात्वा 'युवं वस्त्राणि' इत्यनयर्चा अहते वाससी आच्छादयति । आच्छाद्य 'अश्मनस्तेजोऽसि' इत्यनेन मन्त्रेण चक्षुषी आञ्जयीत । सव्यं प्रथममित्युपदेशः । पश्चाद्दक्षिणम् । कुतः ? एवमेव शाखान्तरप्रसिद्धेः । 'सव्यं हि पूर्वे मनुष्या आञ्जते' ( तैसं. ६।१।१।६ ) इत्येवं श्रूयते । देभा.

( २ ) प्रतिवस्त्रं मन्त्रावृत्तिः, द्विवचनस्य देवतापरत्वात् । सव्यं पूर्वम् $आञ्जयित्वा ततो दक्षिणमाञ्जयीत, 'सव्यं मनुष्या अञ्जते प्रथमम्' इति श्रुतेः । प्रतिचक्षुर्मन्त्रावृत्तिः । † गानावृ.

( ३ ) शीतोष्णाभिरद्भिः स्नात्वा 'युवं वस्त्राणि' इति मन्त्रेणाहते वाससी आच्छादयति । एकमन्तर्वासः अपरं बहिर्वासः । ‡ अना.

**[2]'अश्मनस्तेजोऽसि श्रोत्रं मे पाहि' इति कुण्डले आबध्नीत ॥**

( १ ) 'अश्मनस्तेजोऽसि' इत्यनेन मन्त्रेण कुण्डले आबध्नीत । दक्षिणं प्रथमं सव्यं पश्चादिति, स्वशाखाप्रसिद्धेः । देभा.

( २ ) अनेन कुण्डले आबध्नीत । सुवर्णकुण्डले इत्यर्थः । अत्र दक्षिणं पूर्वे पश्चात्सव्यम् । मन्त्रावृत्तिरुक्ता । ‡ गानावृ.

**[1]अनुलेपनेन पाणी प्रलिप्य मुखमग्रे ब्राह्मणोऽनुलिम्पेद्बाहू राजन्य उदरं वैश्य उपस्थं स्त्र्यूरू सरणजीविनः ॥**

( १ ) यत्तदनुलेपनमुपपादितं तेन पाणी प्रलिम्पति । प्रलिप्य ब्राह्मणो मुखमग्रे लिम्पति, पश्चादितराणि गात्राणि । राजन्यो बाहू अग्रेऽनुलिम्पति । उदरमग्रे वैश्योऽनुलिम्पति । तत्र त्रयाणां वर्णानां यस्याग्रेऽनुलेपनं कर्तव्यं तदुपदिष्टम् । कथमयं विधिर्नित्यः स्यादित्येतदर्थं स्त्रियाश्चोपदेशं करोति— उपस्थं स्त्री अग्रेऽनुलिम्पति । ऊरू सरलजीविनः । सरलजीविन इति क उच्यन्ते? प्रेष्यमुपदिशन्ति । दीर्घाध्वनिका इति ये लोके गण्यन्ते ते सरलजीविनः ऊरू प्रथममनुलिम्पन्ति । किमर्थं तस्य ग्रहणम् ? नित्यत्वं विधेः प्रज्ञापयति । समावर्तने दृष्टं सर्वत्र कथं स्यात् । ब्राह्मणादीनां सर्वत्रेत्येवमर्थम् । देभा.

( २ ) पश्चाद्गात्राणि । कुतः ? अग्रेवचनात् । अनुलेपनं कुङ्कुमादि । बाहू राजन्यः अग्रेऽनुलिम्पेत् । उदरं वैश्यः अग्रेऽनुलिम्पेत् । उपस्थं स्त्री अग्रेऽनुलिम्पेत् । ऊरू सरणजीविनः अग्रेऽनुलिम्पेरन् । अयं विधिः सार्वत्रिकः । कुतः ? स्त्रीविधानात् । † गानावृ.

( ३ ) अनुलेपनं चन्दनादि । ये सरणेन गतागतेन जीवन्ति दूताः ते ऊरू अग्रेऽनुलिम्पेरन् । § अना.

---

§ अना., प्रपा. गानावृवत् ।

$ आञ्ज्येति ल्यपा भाव्यम् ।

† प्रपा. गानावृवत् ।

‡ शेषं गानावृवत् ।

(१) आगृ. ३।८।९ ; प्रपा. २८६ हते वाससी आच्छा (हतेन वाससाऽऽच्छा).

(२) आगृ. ३।८।१० ; प्रपा. २८६.

‡ अना., प्रपा. गानावृवत् ।

† प्रपा. गानावृवत् ।

§ शेषं गानावृवत् ।

(१) आगृ. ३।८।११ ; देभा. सरण (सरल) ; उ. १।८।२ (मुखमग्रे ब्राह्मणोऽनुलिम्पेत्) एतावदेव ; प्रपा. २८६ ; संप्र. ४०४ (मुखमग्रे ब्राह्मणोऽनुलिम्पेत) एतावदेव ; संर. ३८५ उवत् .

[1] '**अमार्तोऽस्यमार्तोऽहं भूयासम्' इति स्रज-मपि बध्नीत, न मालोकाम् ॥**

(१) मालेति चेद्ब्रूयुः, या तु स्रङ्मालेत्युच्यते तां नाऽऽबध्नीत । देभा.

(२) मालेत्युक्तां स्रजमपि न बध्नीत । † गानावृ.

**मालेति चेद्ब्रूयुः स्रगित्यभिधापयीत ॥**

(१) स्रगिति च तामभिधापयीत— 'स्रगिति ब्रूथम्' इति । पश्चादपि निबध्नीत स्रगित्यभिधापितां सतीम् । देभा.

(२) यद्यज्ञानान्मालेति ब्रूयुस्ततः स्रगित्यभिधाप्य बध्नीत । ¶ गानावृ.

(३) यद्यबद्यादज्ञानाद्वा मालेति ब्रूयुः परिकर्मिण-स्तदा तान् स्रगिति वाचयेत्, ततोऽपिनह्येत् । अना.

'**देवानां प्रतिष्ठे स्थः सर्वतो मा पातम्' इत्युपानहावास्थाय 'दिवश्छद्मासि' इति च्छत्र-मादत्ते ॥**

(१) 'देवानां प्रतिष्ठे स्थः' इत्यनेन मन्त्रेणोपान-हावातिष्ठति । 'दिवश्छद्मासि' इति छत्रम् आदत्ते गृह्णाति । देभा.

(२) उपानहौ चर्ममय्यौ, ते आतिष्ठेत । सकृ-न्मन्त्रः, द्विवचनात् । ततश्छत्रमादत्ते । ¶ गानावृ.

'**वेणुरसि वानस्पत्योऽसि सर्वतो मा पाहि' इति वैणवं दण्डम् ॥**

(१) 'वेणुरसि' इत्यनेन मन्त्रेण वैणवं दण्डं गृह्णाति । देभा.

(२) आदत्ते । † गानावृ.

[1] '**आयुष्यम्' इति सूक्तेन मणिं कण्ठे प्रति-मुच्योष्णीषं कृत्वा तिष्ठन्त्समिधमादध्यात् ॥**

(१) 'आयुष्यम्' इति सूक्तेन मणिं कण्ठे प्रमु-ञ्चति आबध्नाति । सूक्तग्रहणं कथम्? कृत्स्नेन सूक्तेन मणेराबन्धनं स्यादिति । प्रतिमुच्योष्णीषं करोति अहतेन वाससा शिरो वेष्टयति । कृत्वा तिष्ठन् समिधमादधाति । याऽसौ समिदाहृता तां तिष्ठन् समिधमादधाति । देभा.

(२) आयुष्यमिति सूक्तग्रहणम् 'आयुष्यम्' इत्ये-तावान्मन्त्र इति शङ्कानिवृत्त्यर्थम् । कुतः शङ्का? वाक्यस्य परिपूर्णत्वात् । आयुष्यमिति आयुष्करमित्यर्थः । तेन 'नेजमेषः' इत्यस्य खिलत्वेऽपि सूक्तग्रहणं सिद्धम् । मणिः सुवर्णमयः । उष्णीषं कृत्वा । अहतेन वाससा शिरो वेष्टयित्वेत्यर्थः । तिष्ठन्ग्रहणमन्यत्राऽऽसीनस्य कर्माणि भवन्तीति ज्ञापनार्थम् । ¶ गानावृ.

'**स्मृतं निन्दा च विद्या च श्रद्धा प्रज्ञा च पञ्चमी । इष्टं दत्तमधीतं च कृतं सत्यं श्रुतं व्रतम् ॥**

'**यदग्ने सेन्द्रस्य सप्रजापतिकस्य सऋषि-कस्य सऋषिराजन्यस्य सपितृकस्य सपितृराज-न्यस्य समनुष्यस्य समनुष्यराजन्यस्य साका-शस्य सातीकाशस्य सानूकाशस्य सप्रतीकाशस्य सदेवमनुष्यस्य सगन्धर्वाप्सरस्कस्य सहाऽऽ-रण्यैश्च पशुभिर्ग्राम्यैश्च यन्म आत्मन आत्मनि व्रतं तन्मे सर्वव्रतमिदमहमग्ने सर्वव्रतो भवामि स्वाहा' इति ॥**

(१) $ 'स्मृतं च मे' इत्यादिना 'सर्वव्रतो भवामि स्वाहा' इत्येवमन्तेन मन्त्रेण समिधमादधाति । देभा.

---

† अना., प्रपा. गानावृवत् ।

¶ प्रपा. गानावृवत् ।

(१) आगृ. ३।८।१२–१५ ; प्रपा. २८६.

(२) आगृ. ३।८।१६ ; प्रपा. २८६ मणिं (सुवर्ण-मणिं).

¶ प्रपा. गानावृवत् ।

$ एतत्प्रतीकबलात् 'स्मृतं च मे अस्मृतं च मे तन्म उभयव्रतम्' इति प्रदीर्घमन्त्रावयवरूपस्य संपूर्णवाक्यस्य पाठः 'स्मृतं निन्दा च' इत्यतः प्राक् सूत्रेऽस्तीति देवस्वा-मिनोऽभिप्रायमादर्शपुस्तकसंपादकाः कल्पयन्ति । नारायणः 'स्मृतं च मे' इति संपूर्णं वाक्यं पठित्वा 'द्वादशाप्येव-मेवोक्त्वा ... इत्येवमुपदिशन्ति' इति व्याचष्टे । तत्र यदि

(१) आगृ. ३।९।१–२ ; प्रपा. २८६.

( २ ) 'स्मृतं च मे अस्मृतं च मे तन्म उभयव्रतम्' इति द्वादशाप्येवमेवोक्त्वा ततः 'यदग्ने' इत्यादि यथासूत्रमित्येवमुपदिशन्ति । उपानहौ विसृज्य समिदाधानं कार्यम् । तथा च गौतमः—'सोपानत्क आसनाभिवादननमस्कारान्वर्जयेत्' (गौध. ९।४७) इति ।

‡ गानावृ.

( ३ ) समिधमादध्यात् 'स्मृतं निन्दा च' इति मन्त्रेण 'सर्वव्रतो भवामि स्वाहा' इत्यन्तेन । † अना.

**'ममाग्ने वर्चः' इति प्रत्यृचं समिधोऽभ्यादध्यात् ॥**

( १ ) 'ममाग्ने वर्चः' इति, 'अर्वाञ्चमिन्द्रम्' इत्येका । प्रत्यृचं समिधोऽभ्यादध्यात् । तत्रैतत्सूक्तं नवर्चमनुक्रमितम् । दशमीमपि केचित् पठन्ति । किं तया होमः कर्तव्यो न कर्तव्य इति तत्र संशयः । 'एतस्य समाम्नायस्य' (आश्रौ. १।१।१) इति वचनान्न प्राप्नोति । नेत्युच्यते । विताने एतस्य समाम्नायस्येति परिग्रहः । कथं गम्यते? तत्र खिलानां कृत्स्नशः पाठात् । इह तु सर्वपरिग्रहः । कथं ज्ञायते ? ¶ यस्मात् खैलिकानामुपदेशं करोति—'यमृत्विजो बहुधा कल्पयन्ते' (आगृ. १।२३।५) इत्यत्र । तस्मादिह दशभिर्होमः कर्तव्यः । अतश्च ज्ञायते यथेह दश भवन्तीति । येन 'आयुष्यमिति सूक्तेन' (आगृ. ३।८।१६) इत्युपदेशं करोति । देभा.

( २ ) अत्र खिलस्यापि ग्रहणं भवति । 'अथैतस्य समाम्नायस्य' (आश्रौ. १।१।१) इत्यत्र समाम्नायग्रहणस्य वितानविशेषणत्वात् 'समाम्नायस्य विताने' इति । कुतः एतत् ? सूत्रे खिलानां पाठादिह च प्रतीकग्रहणात् । तस्माद्दशभिर्होम इति सिद्धम् । प्रत्यृचमिति व्याख्यातम् । आदध्यादिति प्रकृते पुनरादध्यादिति वचनं पूर्वस्याधिकारनिवृत्त्यर्थम् । तेनोपविश्याऽऽदध्यात्, न तिष्ठन् । स्विष्टकृदादिहोमशेषं समापयेत् ।

¶ गानावृ.

**'यत्रैनं पूजयिष्यन्तो भवन्ति तत्रैतां रात्रिं वसेत् ॥**

( १ ) यत्र मन्यते पूजयिष्यन्ति मामेत इति, तत्रैतामुपस्थितां रात्रिं वसेत् वसतिं कुर्यात् । कथं पुनरसौ पूजयितव्यः? मधुपर्केण 'स्नातकायोपस्थिताय' (आगृ. १।२४।२) इति वचनात् पूजयितव्यो भवति । देभा.

---

वाक्यानां द्वादशत्वमात्रं शिष्टोपदेशविषयः, न वाक्याकार इति नारायणाभिप्रायः कल्प्यते, तदा तस्यापि देवस्वामिवदभिप्रायः संभवति । यदि तु सूत्रे संपूर्णवाक्यपाठसत्त्वे वृत्तौ संपूर्णवाक्यमपठित्वा 'स्मृतं च मे' इति प्रतीकमात्रमादाय व्याख्यातुमुचितत्वेऽपि संपूर्णवाक्यपठनात् वाक्याकारोऽपि शिष्टोपदेशविषय इति नारायणाभिप्रायः कल्प्यते, तदा सूत्रे संपूर्णवाक्यपाठं स नाभिमन्यते इति निष्पद्यते । हरदत्तस्तु न वाक्यानां द्वादशत्वं मन्यते, अपि तु 'स्मृतं निन्दा च' इति यथापठितं श्लोकमेव मन्त्रावयवं मन्यते, तेन सूत्रे 'स्मृतं च मे' इति संपूर्णवाक्यपाठस्य तन्मते संभव एव नास्तीति हरदत्ताभिप्रायोऽपि तद्व्याख्यानात् कल्पनीयो हेतुसाम्याद्देवस्वाम्यभिप्रायवत् । वैदिकाः सूत्रे 'स्मृतं च मे' इत्यादिवाक्यं न पठन्ति । याज्ञिकाः प्रयोगे तदादीनि द्वादश वाक्यानि विनियोजयन्ति ।

‡ प्रपा. गानावृवत् ।

† शेषं गानावृगतम् ।

¶ ग्रन्थोऽयं व्याकुलः । श्रौतसूत्रं खैलिकमन्त्राननभिसंधाय प्रवृत्तमित्यत्र श्रौतसूत्रे खिलमन्त्राणां कृत्स्नपाठो हेतूकृतः । गृह्यसूत्रं तु खिलमन्त्रानप्यभिसंधाय प्रवृत्तमित्यत्र हेतुत्वेनाभिमतस्य गृह्यसूत्रे खिलमन्त्राणामपि प्रतीकपाठस्य 'यमृत्विजो०' (ऋसं. ८।५८।१) इत्युदाहरणं विसंगतम्, तस्य मन्त्रस्य खैलिकत्वाभावात् । अत्रापेक्षितम् 'आयुष्यमिति सूक्तेन' इत्युदाहरणमन्ते पतितं तत्र न संगच्छते । किंच, 'दशभिर्होमः कर्तव्यः' इति साध्ये 'इह दश भवन्ति' इति ज्ञानस्य हेतुत्वे स्वभावसिद्धे तयोर्विपरीतो हेतुसाध्यभावोऽत्र प्रतीयते । अतोऽत्रैवं शुद्धिः कल्प्यते— "यस्मात् खैलिकानाम् 'आयुष्यमिति सूक्तेन' इत्युपदेशं करोति । अतश्च ज्ञायते यथेह दश भवन्तीति । तस्मादिह दशभिर्होमः कर्तव्यः" इति ।

¶ प्रपा. गानावृवत् ।

(१) आगृ. ३।९।३ रात्रिं (रात्रीं); प्रपा. २९७.

(२) यत्राऽऽत्मानं मधुपर्केण पूजयन्ति तत्रैतां रात्रिं वसेत् वसतिं कुर्यात् । कुत एतत् ? 'स्नातकायोपस्थिताय' (आगृ. १।२४।२) इति वचनान्मधुपर्केण पूजनमिति लभ्यम् । † गानावृ.

¹गुरवे प्रवक्ष्यमाणो नाम प्रब्रुवीत ॥

(१) गुरवे प्रब्रुवीत प्रवक्ष्यमाणः विप्रवक्ष्यमाणः । को विप्रवक्ष(? क्ष्य)न् भवति ? शिष्य आचार्येणातिसृज्यते—'गच्छ पुत्र गृहान्' इति । असौ विप्रवक्ष्यमाणः नाम प्रब्रवीति । कस्य नाम ब्रूते ? तत्रैके आत्मनो मामेति । आचार्यस्य नाम नोपपद्यते । कस्मात् ? आत्मनो नामासौ जानीते । ननु चाऽऽचार्यस्यापि जानीते । एतावन्तं कालमुषित्वा आचार्यस्य स्वं नाम (न) प्रख्यापयतीति तदेतन्नोपपद्यते । तस्मान्न वक्तव्यमात्मनो नाम । आचार्यस्य नाम वक्तव्यम् । कथं ज्ञायते ? उपांशुप्रयोगदर्शनादुत्तरेण वाक्येन संबन्धाच्च 'यज्ञदत्त, इदं वत्स्यावो भोः' इति । यदा आत्मनो नाम ब्रूयात् तदोत्तरेण वाक्येन संबन्धो नोपपद्यते । तस्मादाचार्यस्य नामोपदेष्टव्यम् । ननु चोक्तं नामासौ जानीत इति । तच्छिष्यस्यापि जानाति । तस्माद्हेतुद्वयम् (?) । देभा.

(२) समावृत्तः सन् विप्रवक्ष्यमाणः शिष्यः गुरोर्नाम प्रब्रूयात् देवदत्तेति । गुरवे इति चतुर्थी षष्ठ्यर्थे, यथा 'अस्मै' (आगृ. १।१४।४) इति । गानावृ.

(३) अथ समावृत्तं गुरुः प्रसृजति गृहान् प्रति विसृजति । स तेन प्रवक्ष्यमाणस्तस्मै गुरवे तस्यैव नाम संबुद्ध्या प्रब्रुवीत यज्ञशर्मन्निति । अना.

²इदं वत्स्यामो भो इति ॥

³उच्चैरूर्ध्वं नाम्नः ॥

† अना., प्रपा. गानावृवत् ।

(१) आगृ. ३।१०।१ ; प्रपा. २९६.

(२) आगृ. ३।१०।२ ; देभा. वत्स्यामो (वत्स्यावो) ; अना. देभावत् ; प्रपा. २९६.

(३) आगृ. ३।१०।३ ; प्रपा. २९६.

(१) इदमिति सर्वनामनिर्देशः । अस्य स्थाने आश्रमान्तरं निर्दिशति— 'गार्हस्थ्यं वत्स्यावः' इति । एवं नाम्न ऊर्ध्वमुच्चैराह । तत्र वत्स्याव इति एकस्य द्विवचनं नोपपद्यते । एवं कृत्वा पाठान्तरं कुर्वन्ति । इदं वत्स्याव इति आवामेतावन्तं कालमुषितवन्तौ सांप्रतं विवत्स्यावः । उच्चैरिति न वक्तव्यम् । कस्मात् ? अर्थप्राप्तत्वात् । जापादीनामुपांशुत्वं विहितम् । न चात्र जापादिलक्षण(? त्व ?)मुपांशुत्वं प्राप्नोति । तस्मादुच्चैरेव भविष्यति । एवं सिद्धे नाम्न ऊर्ध्वं यदुच्चैस्त्वं विदधाति तज्ज्ञापयति— नाम उपांशु भवतीति । ऊर्ध्वं नाम्न इति न वक्तव्यम् । कस्मात् ? क्रमादूर्ध्वमेव नाम्नो भवतीति । एवं सति यद्यूर्ध्वग्रहणं न क्रियते न स्यादूर्ध्वं नाम्नः, किंतु सह नाम्ना तदुच्चैः स्यात् । उच्चैर्ग्रहणं चैतदर्थमेव कल्प्यते । तस्मादूर्ध्वं नाम्न इति वक्तव्यम् । यस्माद्यत्नेनोपांशुत्वं विदधाति नाम्नः तज्ज्ञापयति गुरोर्नामाऽऽदेष्टव्यमिति । देभा.

(२) तत एवं प्रब्रुवीत । इदंशब्दस्य स्थान आश्रमं निर्दिशेत् 'देवदत्त गार्हस्थ्यं वत्स्यामो भोः' इति । वत्स्याव इति द्विवचनपाठेऽर्थोऽनुपपन्नः ।

नाम्न ऊर्ध्वमुच्चैर्ब्रूयात् । गुरुनाम तूपांश्वेव ब्रूयादित्यर्थः । गानावृ.

(३) अथ नाम्न ऊर्ध्वम् 'इदं वत्स्यावो भोः' इत्युच्चैः प्रब्रुवीत । नाम्न ऊर्ध्वमुच्चैरिति वचनान्नामोपांशु भवति । वत्स्याव इति केवलोऽपि वसिर्विपूर्वस्यार्थे द्रष्टव्यः । एतावन्तं कालं सहोषितौ स्वः, अथेदानीं विभिद्य वासं करिष्यावः भो यज्ञशर्मन्, इति मन्त्रार्थः । इदमिति च क्रियमाणक्रियानिर्देशः, यथा 'इदं गम्यते' इति । अना.

¹'प्राणापानयोः' उपांशु ॥

(१) प्राणापानयोरित्येतन्मन्त्रमुपांशु ब्रूते । देभा.

(२) ततः 'प्राणापानयोरुरुव्यचाः' इत्येतं मन्त्रमुपांशु ब्रूयाच्छिष्य इत्यर्थः । ननु उत्तरत्र वक्ष्यति— 'अतो वृद्धो जपति' इति, तस्मादाचार्यस्योपांशु दृष्ट्वा-

(१) आगृ. ३।१०।४ ; प्रपा. २९६ पांशु (पांश्विति).

दत्यप्युपांश्वेव भविष्यति, अत उपांश्विति न वाच्यम् । उच्यते । जपचोदनायामुपांशुत्वमनित्यमिति ज्ञापनार्थमिदम् । तेन वेदारम्भणे उच्चैः प्रयोगः सिद्धः । अथवा उच्चैरित्यधिकारनिवृत्त्यर्थमिदम् । वेदारम्भणे तूष्णींत्वे कारणमन्यदप्युक्तमेव । ¶ गानावृ.

¹ 'आ मन्द्रैरिन्द्र हरिभिः' इति च ॥

(१) 'आ मन्द्रैरिन्द्र हरिभिः' इत्येतामृचं चोपांशु ब्रूते । तत्रोपांशुग्रहणं न कर्तव्यम् । कस्मात् ? सिद्धत्वात् । कथं सिद्धमिति ? उत्तरत्र वक्ष्यति– 'अतो वृद्धो जपति' इति । एवमुपांशुत्वे सिद्धे यत् पुनरुपांशुत्वं विदधाति तज्ज्ञापयति– जापलक्षणमुपांशुत्वं गृह्यकर्मण्यनित्यं भवतीति । 'उदपात्रे दर्भान् कृत्वा ब्रह्माञ्जलिकृतो जपेत् । ओंपूर्वा व्याहृतीः' ( आगृ. ३।५।११–१२ ) इत्यस्य उच्चैः प्रयोगः सिद्धो भवति । देभा.

(२) एतं चोपांशु ब्रूयाच्छिष्यः । ¶ गानावृ.

अतो वृद्धो जपति– 'प्राणापानयोरुरुव्यचास्तया प्रपद्ये देवाय सवित्रे परिददामि' इत्यृचं च ॥

(१) एतौ मन्त्रौ वृद्धो जपति । वृद्धः कः ? आचार्य उच्यते । तत्र वृद्धो जपतीति न वक्तव्यम्, सिद्धत्वात् । कथम् ? उत्तरत्र एककर्तृकोपदेशात् । उच्यते । शिष्याधिकारादिह वृद्धग्रहणम् । अथवा नियमार्थमतो वृद्धो जपतीति । तेन नियमं कुर्वन्नुत्तरत्र दर्शयति द्वयोर्जपोऽयं यथा स्यादिति । प्राणापानयोरिति कृत्स्नो मन्त्रः पठ्यते । देभा.

(२) अतो वृद्ध आचार्यो जपत्येतौ मन्त्रौ । अतो वृद्धो जपतीति वचनात् पूर्वं शिष्योऽप्येतौ मन्त्रौ जपतीति ज्ञायते । ऋचं चेति 'आ मन्द्रैः' इत्येतामित्यर्थः । § गानावृ.

¶ अना. गानावृगतम् । प्रपा. गानावृवत् ।

§ प्रपा. गानावृवत् ।

(१) आगृ. ३।१०।५–६ ; प्रपा. २९६.

(३) 'प्राणापानयोः' इति मन्त्रस्य पूर्वत्रैव कृत्स्नः पाठः कर्तव्यो न कृतः इह वा पठ्यतां पूर्वत्र वा, कोऽन्यत्र विशेषः ? इति । ‡ अना.

¹समाप्य 'ओं प्राक्स्वस्ति' इति जपित्वा 'महि त्रीणाम्' इत्यनुमन्त्र्य ॥

(१) 'महि त्रीणामवोऽस्तु' इत्यनेनाभिमन्त्र्यातिसृजेत् । कथम् ? विवत्स्याव(?वः) विवत्स्याव इति वा । देभा.

(२) अतिसृजेदिति शेषः । समाप्येति वचनमाचार्य एव 'ओं प्राक्' इति मन्त्रं जपेदित्येवमर्थम् । जपित्वा 'महि त्रीणामवोऽस्तु' इति सूक्तेन शिष्यमनुमन्त्र्य 'वत्स्यथ' इत्यतिसृजेत् । ¶ गानावृ.

(३) महित्रीशब्दो यस्मिन् सूक्तेऽस्ति तन्माहित्रम् । विमुक्तादित्वादण् । 'विवत्स्यावः' इति लौकिक्या वाचाऽतिसर्गः । ‡ अना.

²'एवमतिसृष्टस्य न कुतश्चिद्भयं भवति' इति विज्ञायते ॥

(१) किमर्थं श्रुत्याकर्षणं क्रियते ? कथमन्यस्मिन्नपि काले अनेन विधिना विवसनं स्यादिति । देभा.

(२) प्रशंसेयं श्रुतिमूलत्वदर्शनार्था । ¶ गानावृ.

(३) एवं माहित्रेणानुमन्त्र्य योऽतिसृष्टः तस्य न कुतश्चिद् भयं भवतीति ब्राह्मणं भवति । माहित्रानुमन्त्रणस्य प्रशंसेयम् । इदं च कालान्तरेऽपि भवति, यो यस्य प्रियः स्यात् तथाविध(?तद्विषय)त्वात् ब्राह्मणस्य । एतदर्थमेव च ब्राह्मणमाकृष्टम् । आपस्तम्बोऽप्याह– 'यं कामयेत स्वस्ति पुनरागच्छेदिति तमेताभिरन्वीक्षेत स्वस्त्येव पुनरागच्छतीत्ययशःसंयुक्तः कल्पः' ( आपश्रौ. ६।१७।११ ) इति । अना.

‡ शेषं गानावृगतम् ।

¶ प्रपा. गानावृवत् ।

(१) आगृ. ३।१०।७ ; अना. इति + (च) 'महि त्रीणाम्' इत्य (माहित्रेणा) ; प्रपा. २९६ समाप्य 'ओं (समाप्यैतौ).

(२) आगृ. ३।१०।८ ; प्रपा. २९६.

**[1] 'वयसाममनोज्ञा वाचः श्रुत्वा 'कनिक्रदज्जनुषं प्रब्रुवाणः' इति सूक्ते जपेत् 'देवीं वाचमजनयन्त देवाः' इति च ॥**

(१) वयसः पक्षिण इत्युच्यन्ते । तेषां वाचः अमनोज्ञाः श्रुत्वा एते सूक्ते जपेत् एतां च ऋचम् ।
देभा.

(२) वयांसि पक्षिणः । अमनोज्ञाः अप्रियाः ।
¶ गानावृ.

(३) यदाऽयं स्नातको मार्गे वाऽन्यत्र वा पक्षिणां प्रतिकूलां वाचं शृणोति तदा नैमित्तिकोऽयं जपः ।
अना.

**[2] 'स्तुहि श्रुतं गर्तसदं युवानम्' इति मृगस्य ॥**

(१) अमनोज्ञा वाचः श्रुत्वा मृगस्य तामृचं जपेत् ।
देभा.

(२) मृगस्यामनोज्ञा वाचः श्रुत्वा एतां जपेत् ।
$ गानावृ.

**[3] 'यस्या दिशो बिभीयाद्यस्माद्वा तां दिशमुल्मुकमुभयतः प्रदीप्तं प्रत्यस्येन्मन्थं वा प्रसव्यमालोड्य 'अभयं मित्रावरुणा मह्यमस्त्वर्चिषा शत्रून्दहन्तं प्रतीत्य । मा ज्ञातारं मा प्रतिष्ठां विन्दन्तु मिथो भिन्दाना उपयन्तु मृत्युम् ॥' इति । 'संसृष्टं धनमुभयं समाकृतम्' इति मन्थं न्यञ्चं करोति ॥**

(१) यस्या दिशो भयमुत्पद्यते यस्माद्वा पुरुषात् तां दिशमुल्मुकमुभयतः प्रदीप्तं प्रत्यस्येत् क्षिपेदित्यर्थः । मन्थं च प्रसव्यमालोड्य उल्मुकेन प्रत्यस्येत् 'अभयं मित्रावरुणा' इत्यनेन मन्त्रेण । 'संसृष्टम्' इत्यनया ऋचा मन्थं न्यञ्चं करोति । अधः करोतीत्येतदुक्तं भवति ।
देभा.

(२) यस्या दिशो बिभीयाद्यस्माद्वा बिभीयात्पुरुषाद्व्याघ्रादन्यतो वा तां दिशं प्रत्युभयतः प्रदीप्तमुल्मुकं प्रत्यस्येत् 'अभयम्' इत्यनेन । मन्थं वा प्रसव्यमालोड्य तां दिशमभिमुखं न्यञ्चं कुर्यात् 'संसृष्टम्' इत्यनेन । मन्थं न्यञ्चमेव कुर्यात्, न प्रत्यस्येदित्येवमर्थं पुनर्मन्थग्रहणम् ।
† गानावृ.

(३) यस्या दिशो यस्माद्वा पुरुषाद्बिभीयात् तां दिशं प्रति पुरुषोऽपि स यस्यां दिशि वसति तां दिशं प्रति उभयतः प्रदीप्तं मूले चाग्रे च ज्वलन्तमुल्मुकम् अस्येत् क्षिपेत् 'अभयं मित्रावरुणा' इति मन्त्रेण । दधिमिश्राः सक्तवो मन्थः । तं वा प्रसव्यम् अप्रदक्षिणम् आलोड्य न्यञ्चं न्यग्भूतं करोति 'संसृष्टम्' इति मन्त्रेण ।
अना.

**[1] 'सर्वतो भयादनाज्ञातादष्टावाज्याहुतीर्जुहुयात्– 'पृथिवी वृता साऽग्निना वृता तया वृतया वर्त्र्या यस्माद्भयाद्बिभेमि तद्वारये स्वाहा । अन्तरिक्षं वृतं तद्वायुना वृतं तेन वृतेन वर्त्रेण यस्माद्भयाद्बिभेमि तद्वारये स्वाहा । द्यौर्वृता साऽऽदित्येन वृता तया वृतया वर्त्र्या यस्माद्भयाद्बिभेमि तद्वारये स्वाहा । दिशो वृतास्ताश्चन्द्रमसा वृतास्ताभिर्वृताभिर्वर्त्रीभिर्यस्माद्भयाद्बिभेमि तद्वारये स्वाहा । आपो वृतास्ता वरुणेन वृतास्ताभिर्वृताभिर्वर्त्रीभिर्यस्माद्भयाद्बिभेमि तद्वारये स्वाहा । प्रजा वृतास्ताः प्राणेन वृतास्ताभिर्वृताभिर्वर्त्रीभिर्यस्माद्भयाद्बिभेमि तद्वारये स्वाहा । वेदा वृतास्ते छन्दोभिर्वृतास्तैर्वृतैर्वर्त्रैर्यस्माद्भयाद्बिभेमि तद्वारये स्वाहा । सर्वं वृतं तद्ब्रह्मणा वृतं तेन वृतेन वर्त्रेण यस्माद्भयाद्बिभेमि तद्वारये स्वाहा ।' इति ॥**

---

¶ प्रपा. गानावृवत् ।

$ अना., प्रपा. गानावृवत् ।

(१) आगृ. ३।१०।९ ; प्रपा. २९६ सूक्ते (सूक्तं).

(२) आगृ. ३।१०।१० ; प्रपा. २९६.

(३) आगृ. ३।१०।११ ; अना. उपयन्तु (उभयंतु) ; प्रपा. २९६ भिन्दाना उपयन्तु (विन्दाना उभयं).

† प्रपा. गानावृवत् ।

(१) आगृ. ३।११।१ ; अना. स्तैर्वृतैर्वर्त्रैर्य (स्तेभिर्वृतेभिर्वर्त्रेभिर्य) ; प्रपा. २९६–२९७.

(१) सर्वतोऽनाज्ञातात् सर्वासु दिक्षु भद्भयमुत्पद्यते, न च ज्ञायते कस्मात्पुरुषादिति यतो वेति, तत् सर्वतो भयमनाज्ञातं भवति। तस्मात् यो बिभेति स एता अष्टावाज्याहुतीर्जुहुयात्— 'पृथिवी (ते?) वृता' इत्येवमादिभिर्मन्त्रैः। संख्यावचनमष्टाविति आज्यभाग-स्विष्टकृन्निवृत्त्यर्थम्। आज्यग्रहणमाज्यहोमधर्मप्राप्त्यर्थम्।
देभा.

(२) यदि सर्वतो दिग्भ्यो भयमुत्पद्यते, न च ज्ञायते अस्मात्पुरुषादिति, तत्सर्वतो भयमज्ञातम्। तस्माद्यदि बिभीयात्ततो लौकिकाग्नावष्टावाज्याहुतीर्जुहुयात्— 'पृथिवी वृता' इत्याद्यैः। अष्टौवचनमाज्यभागस्विष्टकृन्निवृत्त्यर्थम्। आज्याहुतिवचनं परिस्तरणविकल्पार्थम्।
‡ गानावृ.

(३) सर्वतो भयादनाज्ञातनिमित्ताद्वा भयाद्यो बिभीयात् सोऽष्टावाज्याहुतीर्जुहुयात्— 'पृथिवी वृता' इत्यादिभिर्मन्त्रैः। $ अना.

[1]अथापराजितायां दिश्यवस्थाय स्वस्त्यात्रेयं जपति 'यत इन्द्र भयामहे' इति च सूक्तशेषम्॥

(१) अपराजितायां दिशि स्थित्वा स्वस्त्यात्रेयमृषिं जपति प्राक् पूर्णपात्रनिनयनात्। 'यत इन्द्र ...... सूक्तशेषम्' — जपति। देभा.

(२) स्वस्त्यात्रेयमिति 'स्वस्ति नो मिमीताम्' इति सूक्तं सखिलम्। ततः सर्वप्रायश्चित्तादि समापयेत्। 'एवमतिसृष्टस्य न कुतश्चिद्भयं भवति' इत्युक्तम्। तत्र यथमनोज्ञा वाचः शृणुयात् भयं चोत्पद्येत तत एवं कुर्यादिति सर्वमिदमतिसृष्टविषयम्। ‡ गानावृ.

(३) अथाग्नेरपराजितायां दिशि स्थित्वा स्वस्त्यात्रेयेण दृष्टं 'स्वस्ति नो मिमीताम्' इति सूक्तं जपति प्राक्पूर्णपात्रनिनयनात्। 'यत इन्द्र भयामहे' इति सूक्तशेषं जपति। अना.

‡ प्रपा. गानावृवत्।

$ शेषं गानावृगतम्।

(१) आगृ. ३।११।२; प्रपा. २९७ (च०).

## कौषीतकिगृह्यसूत्रम्

वपनम्, उद्वर्तनपूर्वकोऽभिषेकः, वस्त्रालंकारादिधारणम्, टीकायां होमः, रथगमनम्, मधुपर्ककारिणो गृहे प्रथमोपस्थितिर्गोभ्यः फलवद्वृक्षाद्वा समावर्तनं वा, आचार्याय वस्त्रादिदानम्, ईप्सितान्नभोजनम्

[1]स्नानं समावर्त्स्यमानस्य॥

आनडुहमित्युक्तं तस्मिन्नुपवेश्य केशश्मश्रूणि वापयति लोमनखानि च॥

व्रीहियवैस्तिलसर्षपैरपामार्गैः सदापुष्पीभिरित्युद्वाप्य॥

आपोहिष्ठीयेनाभिषिच्य॥

अलंकृत्य॥

'युवं वस्त्राणि' इति वाससी परिधाय॥

अथास्मै निष्कं बध्नाति— 'आयुष्यं वर्चस्यम्'॥

'ममाग्ने वर्चः' इति वेष्टनम्॥

'गृहं गृहमहन' इति छत्रम्॥

'आ रोहत' इत्युपानहौ॥

'दीर्घास्ते अस्त्वङ्कुशः' इति वैष्ण(? ण)वं दण्डमादत्ते॥

प्रतिलीनस्तदहरासीत॥

'वनस्पते वीड्वङ्गः, शास इत्था' इति रथमारोहेत्॥

यत्रैनं गवा वा पशुना वा अर्हयेयुस्तत्पूर्वमुपतिष्ठेत॥

गोभ्यो वा समावर्तेत फलवतो वा वृक्षात्॥

'इन्द्र श्रेष्ठानि द्रविणानि धेहि, स्योना पृथिवि भव' इति अवरोहति॥

ईप्सितमन्नं तदहर्भुञ्जीत॥

आचार्याय वस्त्रयुगं दद्यादुष्णीषं मणिकुण्डलं दण्डोपानहं छत्रं च॥

समावर्तनकर्म वक्ष्यामः। अत्र स्तरणाघाराज्यभागाः पाक्षिकाः। उपलेपनोल्लेखनाद्याघाराज्यभागान्तं कृत्वा

(१) कौगृ. ३।१।१-१८.

महाव्याहृतिचतुष्टयं हुत्वा ततो लोहितचर्मण्यानडुहे ब्रह्मचारिणमुपवेश्य शिरो मुखं कक्षोपस्थाद्यारभ्य यावत्पादौ सर्वमेव मुण्डापयित्वा नखांश्छेदयित्वा व्रीहियवाद्यावेकीकृत्य पेषयित्वा ब्रह्मचारिणमुद्वर्तयेत् । ततोऽपामार्गबीजां-स्ततः शङ्खपुष्पीं पेषयित्वोद्वर्तयेत् । लौकिकं स्नानं कारयित्वा ततः 'आपो हि ष्ठा मयोभुवः' इति नवर्चेन सूक्तेन प्रत्यृचं नव उदकुम्भान् ब्रह्मचारिणो मूर्धनि निषिच्य यथाविभवमलंकृत्य 'युवं वस्त्राणि पीवसा वसाथे' इत्यनेन मन्त्रेण वस्त्रयुगं परिधापयेत् । वासोभेदान्मन्त्रावृत्तिः । तत उष्णीषेण शिरो वेष्टयित्वा मणिकुण्डले परिधाय वैष्ण(? ण )वं दण्डं गृहीत्वोपानहौ परिधाय छत्रं गृहीत्वा ततो महाव्याहृतिचतुष्टयं ततः पाक्षिकः स्विष्टकृत्ततो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समाप्य ततो 'वनस्पते वीड्वङ्गो हि भूयाः, शास इत्था महाँ असि' इत्याभ्यां मन्त्राभ्यां रथमारोहेत् । प्रथमं दक्षिणेन पादेन ततो वामेनेति रथमारुह्य तस्य गृहं प्रथमं गच्छेद्योऽस्य गवा पशुना वा मधुपर्कं करोति । अथवा गां फलं वनं-( ? फलवन्तं ) वृक्षं दृष्ट्वा निवर्तते । 'इन्द्र श्रेष्ठानि द्रविणानि धेहि, स्योना पृथिवि भव' इत्येताभ्यां रथादवतीर्य ततो वस्त्रयुगमुष्णीषं कुण्डले दण्डोपानहौ छत्रमेतत्सर्वमाचार्याय दद्यात् । ततस्तदहरव्यापारेण स्थातव्यम्, यद्रोचते तद्भोक्तव्यमिति । कौगृस.

## आपस्तम्बगृह्यसूत्रम्

व्रजगमनम्, अग्निस्थापनादिपूर्वहोमतन्त्रम्, समिदाधानम्, वपनम्, मेखलाविस्रंसनम्, स्नानं दन्तधावनं पुनःस्नानं च, वस्त्रधारणम्, मणिधारणम्, होमः, कुण्डलधारणम्, स्रगादिधारणम्, वाग्यमनम्, नक्षत्रोदये दिगाद्युपस्थानम्, मित्रेण सह विचार्याऽऽश्रमान्तरस्वीकारः

**[1]वेदमधीत्य स्नास्यन् प्रागुदयाद्व्रजं प्रविश्यान्तर्लोम्ना चर्मणा द्वारमपिधायाऽऽस्ते ॥**

( १ ) एवमुपनीतश्चरितब्रह्मचर्योऽधीतवेदषडङ्गो यदाचार्यकुलादन्यमाश्रमं प्रेप्सुर्भवति तस्य स्नानं नाम कर्मोपदिश्यते । यस्मिन् कर्मणि नियमेन विशिष्टं स्नानं विधिवत् भवति तदेतत् स्नानमित्युच्यते । स्नानं समावर्तनम्, तत् करिष्यन्नित्यर्थः । प्रागुदयादित्यादित्योदयो गृह्यते, 'नैनमेतदहरादित्यः' इति दर्शनात् । व्रजं गोष्ठम् । अन्तः अभ्यन्तरं लोमानि यस्य तेन चर्मणा यस्य कस्यचित् मृगस्य । आसनवचनं निष्क्रमणप्रतिषेधार्थम् । वेदमित्यविवक्षितमेकवचनम् । वेदं वेदौ वेदान् वा अधीत्य पाठतश्चार्थतश्चाधिगम्येत्यर्थः । स्नास्यन्निति वचनं नैष्ठिकस्य उत्तरं कर्म मा भूदिति । अनाकुला.

( २ ) अथेदानीम् 'वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा' ( यास्मृ. १।५१ ) इत्यादिवचनार्थानुष्ठानेन कृतकृत्यस्य गुरुकुलात् $ समावृत्तस्यानुष्ठेयं समावर्तनापरपर्यायं स्नानाख्यं कर्म व्याख्यायते । ... अधीत्य पाठतश्चार्थतश्चाधिगम्य, सषडङ्गं समीमांसं वेदमधीत्येत्यर्थः । अधीत्येति च विधिः( ? अवधिः ) 'वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा' इत्यस्य प्रदर्शनार्थः । § ताद.

**नैनमेतदहरादित्योऽभितपेत् ॥**

(१) एनम् एतत्कर्म कुर्वाणम् एतदहः एतस्मिन्नहनि कदाचिदपि नाभितपेदादित्यः । तेन मूत्रपुरीषादिकमपि तत्रैव व्रजे छायायामपि कर्तव्यम् । आदित्यग्रहणादग्नितापस्य न प्रतिषेधः । अनाकुला.

( २ ) अस्मिन्नहनि यावदस्तमयं मूत्रपुरीषोत्सर्जनार्थमप्यसौ मण्डपाद्बहिर्न निर्गच्छेदित्यर्थः । ताद.

**मध्यंदिनेऽग्नेरुपसमाधानाद्याज्यभागान्ते पालाशीं समिधमुत्तरयाऽऽधायापरेणाग्निं कट एरकायां वोपविश्योत्तरया क्षुरमभिमन्त्र्योत्तरेण यजुषा वप्त्रे प्रदायापां संसर्जनाद्या केशनिधानात् समानम् ॥**

---

(१) आपगृ. १२।१–१३.

$ इदं भूतकालावच्छिन्नं समावर्तनं लौकिकम् । तत् कृतवतः स्मार्तं समावर्तनकर्म पितृगृहेऽनुष्ठेयमिति तात्पर्यदर्शनाभिप्राय उत्तरत्र स्पष्टीभविष्यति । तेन समावर्तननिष्ठभूतत्वभविष्यत्त्वयोर्न विरोधः ।

§ शेषं अनाकुलागतम् ।

(१) अथ तस्मिन्नहनि मध्यंदिने कर्म प्रतिपद्यते । अग्नेरुपसमाधानादि । शम्याः । सकृत्पात्राणि क्षुरादिभिः सह । स्वयमेव कर्ता, नाऽऽचार्यः । आज्यभागान्तवचनं समिदाधानादेरुत्तरस्य कर्मणः कालोपदेशार्थम् । अनेनैव तन्त्रप्राप्तावपि सिद्धायामग्नेरुपसमाधानादिवचनं तन्त्रारम्भस्यैव मध्यंदिननियमः, न कृत्स्नस्य कर्मणः । उत्तरयर्चा 'इमं स्तोमम्' इत्येतया । न स्वाहाकारः, जुहोतिचोदनाभावात् । कटः प्रसिद्धः । एरका तत्प्रकृतिभूतं तृणम् । कशिपिवत्यन्ये । उत्तरयर्चा 'त्र्यायुषम्' इत्येतया क्षुरमभिमन्त्र्य । उत्तरेण यजुषा 'शिवो नामासि' इत्यनेन । वप्ता नापितः, नाऽऽचार्यः । तस्मै क्षुरं प्रदाय ततः 'उष्णाः शीतास्वानीय' इत्यादि यदपां संसर्जनादि कर्म केशनिधानान्तं तदुपनयनेन समानम् । किम्? कारयतीत्यध्याहारः । केन कारयति? आचार्येण । यद्यप्याचार्यकुलादयं निवृत्तस्तथापि स्नानकाले विवाहकाले च समवैत्याचार्यः, समानवचनसामर्थ्यात्, 'योऽस्यापचितस्तमितरया' (आपगृ. ३।९) इति च दर्शनात् । स्पष्टं चाऽऽश्वलायनके— 'अथैतान्युपकल्पयति समावर्तमानः' (आगृ. ३।८।१) इत्यादि । अन्ये त्वाचार्यकुल एव समावर्तनमिच्छन्ति । तत्राऽऽचार्यः संसर्जनोन्दने कृत्वा क्षुरं नापितादपादाय प्रतिदिशं प्रवाप्य पुनस्तस्मै प्रदाय तं च वपन्तमुत्तरयाऽनुमन्त्रयते । एवमन्तमाचार्यकर्म । अनाकुला.

(२) यथा मध्यंदिने प्रधानहोमा भवन्ति तथा कर्म कुर्यात् । अत्र तु तन्त्रोपदेशोऽस्याऽऽज्यप्रधानहविष्ट्वात् । आज्यभागान्ते इति च क्रमार्थम् । आज्यभागान्ते कृते समिदाधानमेव, न पुनरर्थकृत्यमपीति । अत्र च पात्रप्रयोगे दर्व्यादीनि द्वन्द्वम्, क्षुरकटादीनि सकृदेव, शम्याश्च परिध्यर्थे । केचित् दर्व्यादीन्यपि सकृदेवेति । पालाशीं पलाशवृक्षावयवभूताम् । उत्तरया 'इमं स्तोमम्' इत्येतया । कटः प्रसिद्धस्तृणमयः । एरका कटप्रकृतिभूतं पङ्क्तिकटाख्यं तृणम् । केचित् कशिपिवति । उत्तरया 'त्रियायुषम्' इत्येतया । उत्तरेण यजुषा 'शिवो नामासि' इत्यनेन । वप्त्रे वपनकर्त्रे कस्मैचिन्मन्त्रविदे ब्राह्मणाय तत् क्षुरं प्रयच्छति । केचित्— इहाप्याचार्यो वपनं प्रारभते, नापितस्तु वप्ता, अस्मै प्रयच्छतीति । तदयुक्तम्, इहाऽऽचार्यस्यैवाभावात् नापितस्यामन्त्रज्ञत्वाच्च । अथ 'अनुवाकस्य प्रथमेन यजुषा' इत्यारभ्य 'तस्मिन् केशानुपयम्योत्तरयोदुम्बरमूले दर्भस्तम्बे वा निदधाति' (आपगृ. १०।५–८) इत्येवमन्तमुपनयनेन समानम् । भवतीति शेषः । ताद.

**जघनार्धे व्रजस्योपविश्य विस्रस्य मेखलां ब्रह्मचारिणे प्रयच्छति ॥**

अथोमकेशश्मश्रुनखो व्रजस्य जघनार्धे पश्चार्धे उपविश्य मेखलां विस्रस्य विमुच्य कस्मैचित् ब्रह्मचारिणे प्रयच्छति । ¶ अनाकुला.

**तां स उत्तरेण यजुषोदुम्बरमूले दर्भस्तम्बे वोपगूहति ॥**

(१) प्रच्छादयति । उत्तरेण यजुषा 'इदमहममुष्यामुष्य' इत्यादिना । तत्रादःशब्देषु नामग्रहणम्— 'इदमहं यज्ञशर्मणो गार्ग्यस्य पाप्मानमपगूहाम्युत्तरो यज्ञशर्मा द्विषद्भ्यः' इति । अथ यदि वा स्यात् यज्ञशर्मणो गार्ग्यायणेति । दण्डाजिनयोरप्यस्मिन् काले त्यागः । अनाकुला.

(२) स तु ब्रह्मचारी तां मेखलां सूत्रोक्तदेश उपगूहति अप्रकाशां करोति 'इदमहं विष्णुशर्मणो गौतमस्य पाप्मानमुपगूहाम्युत्तरो विष्णुशर्मा द्विषद्भ्यः' इत्यनेन यजुषा । अत्र च स्नातुर्नामगोत्रे ग्राह्ये । ताद.

**एवंविहिताभिरेवाद्भिरुत्तराभिः षड्भिः स्नात्वोत्तरयोदुम्बरेण दतो धावते ॥**

(१) एवंविहिताभिः पूर्ववत्संसृष्टाभिः शीतोष्णाभिरित्यर्थः । तत्र संसर्जने मन्त्रस्य लोपः, वपनलिङ्गविरोधात् । एवकारः पौनर्वाचनिकः । उत्तराभिः षड्भिः ऋग्भिः आपोहिष्ठीयाभिः हिरण्यवर्णीयाभिश्च । तत्र 'यासु जातः' इत्यासां ग्रहणम् । प्रतिमन्त्रं चाभिषेकः । दतो धावते दन्तेभ्यो मलमपनयति उत्तरयर्चा 'अन्नाद्याय व्यूहध्वम्' इत्येतया । अनाकुला.

¶ ताद. अनाकुलागतम् ।

(२) एवंविहिताभिस्तूष्णीं मिश्रिताभिः शीतोष्णाभिरद्भिः। 'केशान् वपतु' इति मन्त्रलिङ्गविरोधात् एवकाराच्च न मिश्रणमन्त्रः। उत्तराभिः षड्भिः 'आपो हि ष्ठा' इति तिसृभिः 'हिरण्यवर्णाः' इति तिसृभिश्च स्नाति अभिषिञ्चति। एतच्च षण्णामन्ते सकृदेव। केचित् — प्रत्यृचमिति। तन्न, गुणार्थे प्रधानाभ्यासकल्पनमयुक्तमित्युक्तत्वात्। अथोदुम्बरेण काष्ठेन दन्तेभ्यो मलम् 'अन्नाद्याय व्यूहध्वम्' इत्यनया अपनयति। ताद.

**स्नानीयोच्छादितः स्नातः॥**

**उत्तरेण यजुषाऽहतमन्तरं वासः परिधाय सार्वसुरभिणा चन्दनेनोत्तरैर्देवताभ्यः प्रदायोत्तरयाऽनुलिप्य मणिं सौवर्णं सोपधानं सूत्रोतमुत्तरयोदपात्रे त्रिः प्रदक्षिणं परिप्लाव्योत्तरया ग्रीवास्वाबध्यैवमेव बादरं मणिं मन्त्रवर्जं सव्ये पाणावाबध्याहतमुत्तरं वासो 'रेवतीस्त्वा' इति समानम्॥**

(१) ततः स्नानीयैः स्नानार्हैः क्लीतकादिभिः उच्छादितः उद्वर्तितः अपकृष्टमलः पुनरपि ताभिरेवाद्भिः स्नात उत्तरेण यजुषा 'सोमस्य तनूरसि' इत्यनेन अहतमन्तरं वासः। येन कटिः प्रच्छाद्यते तदन्तरमित्युच्यते। येन बहिर्नीवि प्रच्छादनम् उपवीतं वा क्रियते तदुत्तरमिति। तयोरन्तरं वासः परिधाय चतुर्थ्याऽनुलेपनं करोति। केन? चन्दनेन। कीदृशेन? सर्वसुरभिणा। सर्वाणि सुरभिद्रव्याणि यत्र भवन्ति तत् सर्वसुरभि। सार्वसुरभिणेति पाठे रूपसिद्धिर्मृग्या। तत्र पूर्वमुत्तरैर्मन्त्रैस्त्रिभिर्देवताभ्यः प्रयच्छति 'नमो ग्रहाय च' इत्येवमादिभिः। तत उत्तरया 'अप्सरःसु यो गन्धः' इत्येतया आत्मनोऽनुलेपनम्। 'मुखमग्रे ब्राह्मणोऽनुलिम्पेद्बाहू राजन्य उदरं वैश्यः' (आगृ. ३।८।११) इत्याश्वलायनः। अथ मणिमाबध्नाति ग्रीवासु प्रतिमुञ्चति। स च मणिः सौवर्णो भवति, उपधानेन च वैडूर्यादिनोपहितः, सूत्रोतः सूत्रेणोतः सपाश इत्यर्थः। तं मणिम् उत्तरयर्चा 'इयमोषधे' इत्येतया उदपात्रे त्रिः परिप्लावयति। सकृदेव मन्त्रः। अथ तम् उत्तरयर्चा 'अपाशोऽस्युरः' इत्येतया ग्रीवास्वाबध्नाति। ग्रीवाशब्दोऽयं धमनिवचनो बहुवचनान्तस्तद्योगात् कण्ठे प्रयुज्यते। अस्यामृचि पृथिवी स्तूयते। तस्मात् 'इयमोषधित्रायमाणा' इति भवितव्यम्। सकारलोपश्छान्दसः। अथ बादरं बदरीबीजेन कल्पितम् एवमेव सूत्रोतमुदपात्रे त्रिः प्रदक्षिणं परिप्लाव्य सव्ये पाणावाबध्नाति तूष्णीमेव। परिप्लावने च बन्धने च मन्त्रप्रतिषेधः। पुनर्मणिग्रहणादुपधानमस्य न भवति। सूत्रोतस्तु भवति। आबध्य मणिं तत उत्तरं वासः करोति अहतमेव। तत्र 'रेवतीस्त्वा' इत्येवमादि कर्म समानमुपनयनेनैव प्रत्येतव्यम्। "रेवतीस्त्वा' इत्येताभिः" इति वा 'उत्तराभिः' इत्येव वा सिद्धे समानवचनमुपनयनवत् प्रयोगार्थम्। तेन 'उत्तराभ्यामभिमन्त्र्य' इत्यादि परिहितानुमन्त्रणान्तं गुरोः कर्म। अनाकुला.

(२) स्नानोपकरणैः क्लीतकमधूकचूर्णादिभिः उद्वर्तितदेह आमलकपिष्टादिभिः स्नानीयैः स्नातश्च भवति। 'सोमस्य तनूरसि' इत्यनेन यजुषा अहतमन्तरं वासः अन्तर्वासः अन्तरीयमित्यर्थः। तत् परिदधाति। अनेन सूत्रेणात ऊर्ध्वं स्नातकस्य नित्यमन्तर्वासो विधीयते। यजुः पुनः कर्मार्थमेव, प्रकरणाम्नानात्। ततः सार्वसुरभिणा सर्वैः कस्तूरिकादिभिर्गन्धद्रव्यैः वासितेन चन्दनेन अनुलिम्पतीति व्यवहितेन संबन्धः। कथमनुलिम्पतीत्यत्राऽऽह— उत्तरैरित्यादि। 'नमो ग्रहाय च' इत्यादिभिस्त्रिभिर्मन्त्रैः देवताभ्यश्चन्दनं पूर्वं प्रदाय पश्चात् 'अप्सरःसु यो गन्धः' इत्यनया आत्मानमनुलिम्पति। मुखस्य चाग्रेऽनुलेपः, 'मुखमग्रे ब्राह्मणो लिम्पेत' इत्याश्वलायनगृह्यात्। देवताभ्यः प्रदानं च नमःशब्देन, न तु मन्त्रान्तेन, नमस्कारस्यापि प्रदानार्थत्वात्। मणिं कीदृशम्? सौवर्णं सुवर्णविकारम्, सोपधानं वज्रवैडूर्यादिना उभयतः परिगृहीतम्, सूत्रोतं सूत्रप्रोतम्। 'इयमोषधे त्रायमाणा' इत्येतया सकृदुच्चरितया उदपात्रे प्रदक्षिणमविरतं त्रिः परिप्लाव्य उत्तरया 'अपाशोऽस्युरो मे' इत्यादिकया 'पुण्याय' इत्यन्तया त्र्यवसानया तं मणिं ग्रीवासु कण्ठे आबध्य, बदरीबीजमयं बादरं सूत्रोतमेव मणिम् एवमेव उदपात्रे त्रिः

प्रदक्षिणं तूष्णीं परिप्लाव्य तूष्णीमेव सव्ये पाणावाबध्नाति । अहतमुत्तरं वासः परिधानीयमेव, नान्तरीयम् । तदुपनयनेन समानम् । स्वयं परिदधाति, इहाऽऽचार्याभावात् । ततश्च 'रेवतीस्त्वा' इति द्वाभ्यां परिधानीयं वासोऽभिमन्त्र्य 'या अकृन्तन्' इति तिसृभिः परिधाय 'परीदं वासः' इत्यनुमन्त्रयते ।–'रेवतीस्त्वेति समानम्' इति वचनबलाच्च मन्त्रस्थयुष्मदर्थलिङ्गबाध एव । यद्वा अन्यो विद्वान् ब्राह्मणः 'रेवतीस्त्वा' इति समानं करोति । कुतः पुनः 'अहतमुत्तरं वासः' इत्यनेनापि परिधानमेवोच्यते, नोत्तरीयम् ? उच्यते–रेवतीस्त्वेति समानमुपनयनेनेति वचनात्, उपनयने च 'तिसृभिः परिधाप्य परिहितमुत्तरया' (आपगृ. १०।१०) इति परिधानार्थवासोवगमात्, पूर्वस्य 'अहतमन्तरं वासः' इति चोदितत्वाच्च । उत्तरीयं तु 'नित्यमुत्तरं कार्यम्' (आध. २।४।२२) इत्यादिधर्मशास्त्रवचनादत्रापि सिद्धमेव । केचित्– इहोत्तरीयं विधीयते, नैव परिधानीयम्, उत्तरमिति वचनात् । तथा आचार्य एव 'रेवतीस्त्वा' इत्याद्युपनयनेन समानं करोतीति । तन्न, 'परिधाप्य, परिहितम्' इत्यनुपपत्तेरेव । तथा आचार्यकुलान्निवृत्तेनेदं स्नानं क्रियते, तत्राऽऽचार्यकर्तृकत्वाप्रसक्तिरेव । ताद.

**तस्य दशायां प्रवर्तौ प्रबध्य दर्व्यामाधायाऽऽज्येनाभ्यानायन्नुत्तरा आहुतीर्हुत्वा जयादि प्रतिपद्यते ॥**

( १ ) तस्योत्तरस्य वाससो दशायां प्रवर्तौ कर्णालंकारौ सौवर्णौ प्रबध्य दर्व्यामाधायाऽऽज्येन उत्तरा अष्टौ प्रधानाहुतीर्जुहोति । अभ्यानायन् प्रवर्तयोरुपरि आज्येन(? अन्येन) आनयनं कारयन्नित्यर्थः । अभ्यानयन् इति वा पाठः । अस्मिन् पक्षे सव्येन पाणिनाऽभ्यानयनम् । अभ्यानायमिति णमुलन्तस्य युक्तः । अभ्यानीयाभ्यानीयेत्यर्थः । सर्वथा प्रवर्तयोरुपर्यासिक्तेनाऽऽज्येन प्रधानहोमः । जयादिवचनं प्रवर्तावपनीय यथासिद्धं प्रतिपद्येतेत्येवमर्थम् । अनाकुला.

( २ ) तस्य अनन्तरप्रकृतस्य वाससो दशायां प्रवर्तौ कुण्डले सौवर्णे प्रबध्य तावुपायेन दर्व्या अग्रे स्थापयित्वा । आज्येनेति परिभाषाप्राप्तानुवादोऽभ्यानयनविधानार्थः । अभ्यानायमिति णमुलन्तोऽर्थपाठः । ततश्च स्वयमेव सव्येन हस्तेन स्थापितयोः प्रवर्तयोरुपरि आज्यमानीय तेनैवाऽऽज्येन उत्तराः 'आयुष्यं वर्चस्यम्' इत्याद्याः अष्टौ प्रधानाहुतीर्हुत्वा ततो दर्व्या अग्रात्तावपनीय यथाप्रसिद्धं जयादि प्रतिपद्यते । सूचनात्सूत्रमिति निर्वचनाच्च सूत्रे सर्वत्रानेकार्थविधिनिबन्धनो वाक्यभेदोऽपि नैव दोष इत्युक्तम् 'अग्निमिद्ध्वा' (आपगृ. १।१२) इत्यत्र । केचित्– सव्येन हस्तेन अभ्याना(? न )यन्नन्येन वाऽभ्यानायमिति पाठेन भवितव्यमित्याचक्षते । ताद.

**परिषेचनान्तं कृत्वैताभिरेव दक्षिणे कर्ण आबध्नीतैताभिः सव्ये ॥**

( १ ) परिषेचनान्तवचनमानन्तर्यार्थम् । तेनास्याहनि भोजनं न भवति । एताभिरेवाऽऽहुतिभिः आहुत्यर्थैर्मन्त्रैरित्यर्थः । वचनादेकं कर्म बहुमन्त्रं स्वाहाकारवांश्च मन्त्रः प्रयोज्यः । सव्ये चेत्युच्यमाने मन्त्राणां विभज्य विनियोगः स्यात् । तस्मात् पुनरेताभिरित्युक्तम् । अनाकुला.

( २ ) परिषेचनानन्तरमेव एताभिरेव 'आयुष्यं वर्चस्यम्' इत्यष्टाभिरेव दक्षिणे कर्णे प्रवर्तयोरेकम् आबध्नीत प्रतिमुञ्चेत् । तथाऽन्यमेताभिरेव सव्ये कर्णे । अत्र च होममन्त्राणामेव आबन्धनकरणत्वेन सूत्रवाक्यसादृश्यानुमितया श्रुत्यैव चोदितत्वात्तैराबन्धनमपि गौण्या वृत्त्या प्रकाशयमैन्द्रीवत् । तथैताभिरिति स्त्रीलिङ्गनिर्देशो बहुत्वादृचां ब्राह्मणग्रामवत् । न चात्र होमार्थानामेव आबन्धनार्थत्वेनापि विनियोगे देवदत्तीयेयं गौर्यज्ञदत्तीयेतिवद्विरोधः, 'पुरोडाशकपालेन तुषानुपवपति' इत्यादिवदधिष्ठानलक्षणया विनियुक्ताकारमतिरोधायापि विनियोगोपपत्तेः, ऋङ्मन्त्रविषये त्वनेकार्थत्वमपि नायुक्तमित्याग्नेय्यधिकरणे उक्तत्वाच्च । केचित्– एताभिरित्यनेन प्राकृताहुतिपरामर्शादाहुत्यर्था मन्त्रा लक्ष्यन्ते 'पितॄणां याज्यानुवाक्याभिरुपतिष्ठते' इतिवदिति । नैवम्, यतः

पूर्वेण 'उत्तरा आहुतीः' इति लक्षणया प्रकृतानां मन्त्राणामपि परामर्शो वरम्, न त्विहापि वाक्ये लक्षणा । ताद.

**एवमुत्तरैर्यथालिङ्गं स्रजः शिरस्याञ्जनमादर्शावेक्षणमुपानहौ छत्रं दण्डमिति ॥**

(१) एवमुत्तरैरपि मन्त्रैर्यथालिङ्गं स्रगादीनि षट् द्रव्याण्युपयुञ्जीत यथार्हम् । तत्र 'शुभिके शिरः' इति द्वाभ्यां स्रजः शिरसि बन्धनम्, यथालिङ्गवचनात् (‡ द्वाभ्याम् 'इमां तामपिनह्य' इति ?) । स्रज इति षष्ठ्येकवचनम्, न प्रथमाया द्वितीयाया वा बहुवचनम्, 'इमां ताम्' इत्येकवचनात् । शिरसीति वचनात् अंसयोर्न भवति । 'न मालोक्ताम् । मालेति चेद्ब्रूयुः स्रगित्यभिधापयीत' (आगृ. ३।८।१२-१३) इत्याश्वलायनः । अथ 'यदाञ्जनं त्रैककुदम्' इति द्वाभ्यामञ्जनमक्ष्णोरुपयुञ्जीत । तत्र द्वाभ्यामपि मन्त्राभ्यां पूर्वं दक्षिणस्याऽऽञ्जनम्, अथ ताभ्यामेव सव्यस्य । यद्यपि 'तेन वामाञ्जे' इति मन्त्रे द्विवचनं भवति, तथापि एवमित्यतिदेशसामर्थ्यात् प्रवर्तयोराबन्धनवत् क्रियाभ्यावृत्तिर्मन्त्राभ्यावृत्तिश्च भवति । तत्र सांनाय्यकुम्भीवत् द्विवचनम्, यथा 'अप्रसंसाय यज्ञस्य । उखे उपदधाम्यहम्' इति । अथाऽऽदर्शस्यावेक्षणं 'यन्मे वर्चः' इत्येतया । अवेक्षणमित्यनुच्यमाने आदानमेव स्यात् अस्मिन् काले, 'इदं तत्पुनराददे' इति लिङ्गात् । तस्मादवेक्षणग्रहणम् । तत उपानहावुपमुञ्चते 'प्रतिष्ठे स्थः' इति यजुषा । आञ्जनवत् क्रियाभ्यावृत्तिर्मन्त्रस्याऽऽवृत्तिश्च भवति । ततश्छत्रमादायाऽऽत्मानमाच्छादयति 'प्रजापतेः शरणमसि' इति यजुषा । 'देवस्य त्वा' इति यजुषा दण्डमादत्ते । 'वैणवम्' (आगृ. ३।८।१५) इत्याश्वलायनः । अनाकुला.

(२) यथा कर्ममध्ये समन्त्रकं प्रवर्तौ हि बद्धौ, एवमुत्तरैर्मन्त्रैः यथालिङ्गं मन्त्रलिङ्गानुसारेण स्रगादिषट्कम् । आबध्नीत, कर्तव्यमित्यादि यथार्हं वाक्यशेषः । तत्र 'शुभिके शिरः' इत्यनयैकयैव शिरसि स्रजमाबध्नीत । 'यामाहरत्' इत्येषा विकल्पार्था, 'एकमन्त्राणि कर्माणि', 'अवशिष्टा विकल्पार्थाः' (आपप. १।४१,४।१२) इति परिभाषावचनात् । स्रज इति द्वितीयैकवचनार्थे, 'शुभिके शिर आरोह' 'यामाहरत्' इत्याद्येकवचनलिङ्गात् । षष्ठ्येकवचनं वा । तथा सति स्रजः, आबन्धनं कर्तव्यमिति शेषः । तथा 'यदाञ्जनं त्रैककुदम्' इत्येकयैव सकृदुच्चरितया त्रिककुत्पर्वतजाताञ्जनेन युगपदक्ष्णोरञ्जनं कर्तव्यम् । अत्रापि 'मयि पर्वत' इत्यादीनि चत्वारि यजूंषि विकल्पार्थान्येव । न चाक्ष्णोः पर्यायेणाञ्जनम्, 'तेन वाम्' इति द्विवचनलिङ्गविरोधात् । तथैव 'यन्मे वर्चः परागतम्' इत्येतया आदर्शावेक्षणं कर्तव्यम् । तथैव 'प्रतिष्ठे स्थः' इत्यनेन यजुषोपानहौ युगपदुपमुञ्चते, 'प्रतिष्ठे स्थः' इति द्विवचनलिङ्गात् । तथैव तूष्णीं छत्रमादाय 'प्रजापतेः शरणमसि' इति यजुषा आत्मानमभिच्छादयति । तथैव दण्डं वैणवं 'देवस्य त्वा' इत्यादियजुषा आदत्ते । इति एतानि षट् द्रव्याणीत्यर्थः । केचित्– 'शुभिके शिर आरोह' 'यामाहरत्' इति द्वाभ्यामपि स्रज आबन्धनम् । तथा 'यदाञ्जनम्' 'मयि पर्वत पूरुषम्' इति द्वाभ्यामभ्यावृत्ताभ्यां दक्षिणसव्ययोरक्ष्णोः क्रमेणाऽऽञ्जनम्, 'एवमुत्तरैर्यथालिङ्गम्' इति वचनबलात् । ततश्च 'तेन वाम्' इति लिङ्गमपि विधिबलाद्बाध्यमेव, यथैकस्यां सान्नाय्यकुम्भ्यां 'उखे उपदधाम्यहम्' इति द्विवचनलिङ्गम् । उपानहोरुपमोचनेऽप्यञ्जनवदेव व्याख्येति । तदसत्, 'एकमन्त्राणि' ((आपप. १।४१) इत्यादिपरिभाषाविरुद्धत्वात्, 'एवमुत्तरैर्यथालिङ्गम्' इत्यस्य च पूर्वव्याख्यानेऽप्युपपत्तेः, 'मयि पर्वत पूरुषम्' इत्यत्र पाठे प्रश्लिष्टेऽपि विभागे निराकाङ्क्षत्वात् वाक्यभेदावगतेश्च । ताद.

**वाचं यच्छत्या नक्षत्रेभ्यः ॥**

**उदितेषु नक्षत्रेषु प्राचीमुदीचीं वा दिशमुपनिष्क्रम्योत्तरेणार्धर्चेन दिश उपस्थायोत्तरेण नक्षत्राणि चन्द्रमसमिति ॥**

---

‡ 'इमां तामपिनह्य' इति प्रतीकमात्रं 'शुभिके शिरः' इत्यतः परं संगच्छते । 'द्वाभ्याम्, इति' इति पदद्वयं अन्यस्थानं च प्रामादिकम् ।

(१) तत उत्तरेणार्धर्चेन ' देवीः षडुर्वीः ' इत्यनेन प्राङ्मुखः प्राञ्जलिः सर्वा दिशो मनसि कृत्वा मन्त्रान्तेन प्रदक्षिणमावृत्य § समनुवीक्षते। षडेव दिशः, षडुर्वीरिति लिङ्गात्। प्राच्याद्याश्चतस्र ऊर्ध्वा अधरा चेति। तत उत्तरेणार्धर्चेन ' मा हास्महि ' इत्यनेन नक्षत्राणि चन्द्रमसं च सहोपतिष्ठते। अनाकुला.

(२) श्रुतिबलाच्च ' मा हास्महि ' इत्यत्र नक्षत्राणीत्यध्याहृत्य तानि प्रकाश्यान्येव। † ताद.

[1]रातिना संभाष्य यथार्थं गच्छति ॥

(१) रातिना बन्धुना संभाष्य ' किं मया कर्तव्यम्? क आश्रमः प्रतिपत्तव्यः?' इति संभाषणं कृत्वा तेन रातिना सह, गच्छति अवधृतमाश्रमं प्रतिपद्यते इत्यर्थः। ' बुद्ध्वा कर्माणि यत् कामयेत तदारभेत ' (आध. २।२१।५) इत्यनेनैव सिद्धे पुनर्वचनं प्रव्रजतोऽपि संभाषणान्तं स्नानकर्म यथा स्यादिति। अनाकुला.

(२) रातिः मित्रम्, रमयतीति व्युत्पत्त्या। तेन सह विस्रब्धः संभाष्य आत्मशक्त्याद्यनुरूपं धर्मादिकं विचार्य निश्चित्य यथार्थं गच्छति तेन रातिना सह योऽर्थो धर्मो मोक्षो वा साध्यत्वेनावधृतः तदनुरूपमाश्रमं गार्हस्थ्यं मौनं वा प्रतिपद्यते। एवं च ब्रह्मचर्यादेव प्रव्रजतोऽपि संभाषणान्तं स्नानं कृत्वैव प्रव्रज्या। ताद.

[2]अथैतदपरं तूष्णीमेव तीर्थे स्नात्वा तूष्णीं समिधमादधाति ॥

(१) व्याख्यातं स्नानकर्म गरीयश्च मुख्यं च। अथेदानीमेतदपरं स्नानविधानं लघीयश्च गौणं च व्याख्यायते। किं तत्? तूष्णीमेव तीर्थे भूमिष्ठे जले स्नाति, नोद्धृताभिः शीताभिः। तूष्णीं च समिधमादधाति, न मन्त्रेण। पालाशी समित्। एतावदेवास्मिन् विधौ कार्यम्, नान्यत् किंचित् ' प्रागुदयादुव्रजम् ' इत्यादिकम्। वपनादि तु लौकिकमधर्मकं भवति। तत्र प्रयोगः— केशश्मश्रुनखलोमानि वापयित्वा मेखलादण्डमजिनमित्यपनीय तूष्णीमेव तीर्थे स्नात्वा दन्तधावनमौदुम्बरेण काष्ठेन कृत्वा स्नानीयोच्छादितः पुनः स्नात्वा अहते वाससी परिधायाऽऽचम्याग्निमुपसमाधाय संपरिस्तीर्य पालाशीं समिधमग्निं मनसा ध्यायन्नाधाय मणिप्रभृतीन्यलंकरणानि यथोपपादमुपादत्ते। तूष्णीमेव सर्वम्। अनाकुला.

(२) एवं स्नानस्य मुख्यकल्पं विधायानुकल्पं विदधाति— अथेति। अथापरमेतद्विधानम्। उच्यते इति शेषः। तीर्थे पुण्यनद्यादौ। समिधं पालाशीम्, अविरोधात्। एवकाराद्यास्मिन् विधौ नान्यत्किंचिदनुष्ठेयम्। ननु पूर्वस्मिन्नेव विधौ स्नानसमिदाधानयोरन्यः प्रकारो वैकल्पिक इति किमिति नाऽऽस्थीयते? उच्यते— एवकारवैयर्थ्यप्रसङ्गात्, स्नानसमिदाधानयोरिह व्युत्क्रमेणाभिधानात्, अस्य सूत्रस्य बह्वक्षरत्वाच्च। यदि ह्ययं पूर्वस्मिन्नेव विधौ वैकल्पिकोऽभिप्रेतोऽभविष्यत्, तदा तत्रैव ' पालाशीं समिधमुत्तरयाऽऽधाय तूष्णीं वा ' ' एवंविहिताभिरेवाद्भिरुत्तराभिः षड्भिः स्नात्वा तीर्थे वा तूष्णीम् ' इत्यल्पैरेवाक्षरैरसूत्रयिष्यत्। किंच, सूत्रकाराणां नैवेयं शैली दृष्टचरा— यदुत साङ्गं प्रधानमुक्त्वा पश्चादथादिना सूत्रेण वैकल्पिकानां प्रकारभेदानामभिधानमिति। एवमेव ' अथैतदपरं दध्न एवाञ्जलिना जुहोति ' (आपगृ. २२।१०) इत्यस्यापि व्याख्यानम्। प्रयोगस्तु— ब्रह्मचारिलिङ्गानि मेखलादीनि त्यक्त्वा तीर्थे तूष्णीं स्नात्वा वासोन्तरपरिधानादि कृत्वा श्रोत्रियागारादग्निमाहृत्य ' यत्र क्व चाग्निम् ' इति विधिनोपसमाधाय तत्र प्रजापतिं मनसा ध्यायन् तूष्णीमेव समिधमादधाति। केचित्- केशश्मश्रुवपनादिकमन्यदप्यविरोधि तूष्णीमेव करोतीति। † ताद.

§ मन्त्रेणोपस्थाने क्रियमाणे दिगुद्देशस्य शारीराभिनयः समनुवीक्षणमित्यर्थः।

† शेषम् अनाकुलागतम्।

(१) आपगृ. १२।१४; आन. १६४.

(२) आपगृ. १३।१; संकौ. १७२; संर. ३८४.

† संकौ. आंशिकस्तात्पर्यदर्शनानुवादः।

## हिरण्यकेशिगृह्यसूत्रम्

जलसमीपे गोष्ठे वाऽग्निस्थापनादिपूर्वतन्त्रम्, समिदाधानम्, प्रधानहोमोपहोमौ, ब्राह्मणभोजनम्, पुण्याहवाचनम्, व्रतविसर्गः, वपनम्, मलोत्सादनदन्तप्रक्षालनस्नानानि, चन्दनानुलेपनम्, वस्त्रधारणम्, होमपूर्वककुण्डलमण्यादिधारणम्, आदर्शावेक्षणम्, दण्डादिधारणम्, रथादिना ग्रामप्रवेशः, दिगुपस्थानम्, पूजां करिष्यतः समीक्षणम्

**[1]'यत्राऽऽपस्तद्गत्वाऽग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा पालाशीं समिधमादधाति– 'इमं स्तोममर्हते जातवेदसे रथमिव संमहेमा मनीषया। भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव स्वाहा ॥' इति ॥**

यस्य भूतलस्य समीप आपो भवन्ति तद्गत्वा। सामर्थ्यात्तत्रेति गम्यते। (अथ तस्य देशस्य समीप आपः सामर्थ्यात्तं देशं गत्वा ?) तस्मिन्देशेऽग्निमुपसमाधाय व्याहृतिपरिसमाप्तिरन्तो यस्य कर्मणस्तद्व्याहृतिपर्यन्तं कृत्वेत्यर्थः। 'इमं स्तोमम्' इत्यनया पालाशीं समिधमादधाति। यत्र 'अग्निमुपसमाधाय' इत्युच्यते तत्रोद्धननादिसंस्कृते देशेऽग्निमाहृत्य स्थापयित्वाऽग्नौ होमः, यत्र नोच्यते तत्र स्वस्थानेऽवस्थिते परिस्तरणादिना कार्यम्, न नियोगत उपसमाधानमित्येक आहुः। अग्निप्रज्वलनमुपसमाधानं सिद्धानुवादं च मन्यन्ते। 'दक्षिणाग्निमुपसमाधायेत्यौपासनमनाहिताग्नेः' इति दर्शनात्तेषामौपासने कर्तव्यानां समिन्धनादि, इतरत्रोद्धननम्। इदमाधानं वैशेषिकी प्रधानाहुतिः। मातृद्.

**अथ व्याहृतिभिर्जुहोति यथा पुरस्तात् ॥**

अथशब्दो व्याहृतिभिः पूर्वसंबन्धार्थः। तेनाऽऽसामपि प्रधानाहुतित्वम्। यथा पुरस्तादिति विहृतसमस्तार्थम्। जुहोतीत्याज्यहोमार्थम्। मातृद्.

**'आयुषं जमदग्नेः कश्यपस्य त्र्यायुषं यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषं स्वाहा' ॥**

(१) हिगृ. १९।३।३–३७.

सं. का. ४४०

अस्यामप्यथेत्यनुवर्तनात्प्रधानाहुतित्वम्। मातृद्.

**$ 'इमं मे, तत्त्वा, त्वं नो, स त्वं नो, त्वमग्ने अयाऽसि, प्रजापते, यदस्य कर्मणोऽत्यरीरिचम्' इति च। अत्रैके जयाभ्यातानान्राष्ट्रभृत इत्युपजुहोति यथा पुरस्तात् ॥**

(१) उक्तार्थम्। सर्वत्र व्याहृतिपर्यन्तं कृत्वेति वचनमाघारवत्परिग्रहार्थं वैशेषिकोपदेशार्थं च। वारुण्याद्यनुक्रमणं परिसंख्यानिवृत्त्यर्थम्। स्विष्टकृदन्तं कृत्वा परिषेकविसर्गं करोति। मातृद्.

(२) अत्रात्रेतिवचनं विद्याव्रतस्नानविद्यास्नानयोर्जयादयो वैकल्पिका एव स्युः, व्रतमात्रस्नाने तु नित्या एवेत्येतदर्थम्। सं. ३७४

**ब्राह्मणानन्नेन परिविष्य 'पुण्याहं स्वस्त्ययनमृद्धिम्' इति वाचयित्वा व्रतं विसृजते 'अग्ने व्रतपते व्रतमचारिषम्' इत्येतैः ॥**

ब्राह्मणानन्नेन परिविष्य पुण्याहादीनि वाचयित्वा व्रतं विसृजते 'अग्ने व्रतपते व्रतमचारिषम्' इत्येतैः। पूर्ववत्संनतैरुपस्थाय त्रिवृताऽन्नेन हुत्वा वास्तुबलिं कृत्वा परिवेषयतीत्युक्तम्। अष्टाचत्वारिंशत्परिमाण(स्य) उपनयने उपेतस्य ब्रह्मचर्यव्रतस्यायं पूर्ववद्विसर्गः। मातृद्.

**व्रतं विसृज्य 'उदु त्यम्, चित्रम्' इति द्वाभ्यामादित्यमुपतिष्ठते ॥**

विसृज्यैव व्रतम् 'उदु त्यम्, चित्रम्' इति द्वाभ्यामृग्भ्यामादित्यमुपतिष्ठते। द्वाभ्यामित्येकमन्त्रनिवृत्तय इत्युक्तम्। व्रतं विसृज्येति वचनम् उक्तानां वक्ष्यमाणानां च पदार्थानामाम्नातैव कर्ता, नाध्याता( ? ध्यापयिता) इति ख्यापनार्थम्। अन्यथाऽऽचार्यो होमं कुर्यादित्याशङ्का स्यात् काण्डोपाकरणविसर्गादिष्वाचार्यकर्तृकत्वं तस्य दृष्टमिति। तस्मादनुज्ञाप्याऽऽचार्यं तस्मिन्नुपद्रष्टरि स्वयमेवेदं कर्म कुर्यात्। मातृद्.

$ 'इमं मे वरुण' इत्यादीनां चतुर्णां मन्त्राणां प्रतीकानि अस्मिन् गृह्यसूत्रे अन्येषु सर्वस्थानेषु 'इमं मे वरुण, तत्त्वा यामि, त्वं नो अग्ने, स त्वं नो अग्ने' इत्येवंरूपेण पठ्यन्ते। तथाऽस्मदीयहस्तलिखितपुस्तकत्रयेऽस्मिन् सूत्रेऽपि तथैव पाठोऽस्ति।

**'उदुत्तमं वरुण पाशमस्मत्' इत्युत्तरीयं ब्रह्मचारिवासो निधायान्यत्परिधाय ॥**

'उदुत्तमम्' इत्यनेन ब्रह्मचारिणो वासः उत्तरीयम्। किं तत्? अजिनम्। निधाय। ब्रह्मचारिवास इति किमर्थम्? ननु वक्ष्यमाणानि सर्वाणि ब्रह्मचारिण एव सन्ति। आनडुहवच्छन्दः(?)। यत्र ब्रह्मचारी वसति तत् ब्रह्मचारिवास इति ब्रह्मचारी तस्मिञ्छेत इति ख्यापनार्थम्। तस्मादाच्छादनमिति नोक्तं वासो नोत्तरीयं भवतीति (?)। ततोऽन्यद्वासः परिधाय। मातृद.

**'अवाधमम्' इत्यन्तरीयम्, 'वि मध्यमम्' इति मेखलाम् ॥**

**'अथा वयमादित्य व्रते' इति दण्डम्। मेखलां दण्डं कृष्णाजिनं चाप्सु प्रवेश्यापरेणाग्निं प्राङ्मुख उपविश्य क्षुरं संमृशति– 'क्षुरो नामासि स्वधितिस्ते पिता नमस्ते अस्तु मा मा हिंसीः' इति ॥**

'अवाधमम्' इत्यन्तरीयमधोवासो निदधाति। आचम्य ततः 'वि मध्यमम्' इति मेखलां निधाय। अत्राऽऽदिग्रहणम्, 'वि मध्यमं श्रथाय' इति मन्त्रः, पूर्वयोर्यावदुक्तमित्येके। अपरे 'अनुषङ्गो वाक्यपरिसमाप्तिः' (जैसू. २।१।४८) इत्यनेन न्यायेन 'वरुण पाशमस्मच्छ्रथाय' इति च सर्वमन्त्रानुषङ्ग इति। यथा– 'उदुत्तमं वरुण पाशमस्मच्छ्रथाय, अवाधमं वरुण पाशमस्मच्छ्रथाय, वि मध्यमं वरुण पाशमस्मच्छ्रथाय' इति। ततः 'अथा वयमादित्य' इत्यर्धर्चेन दण्डं निधाय मेखलां दण्डं कृष्णाजिनं च तूष्णीमप्सु प्रवेश्य प्रक्षिप्य उत्तरीयमर्थिने दद्यात्। ततोऽपरेणाग्निं प्राङ्मुख उपविशति। क्षुरं वपनार्थे संमृशति 'क्षुरो नामासि' इत्यनेन। मातृद.

**वप्त्रे प्रदायोन्दनीया अपोऽभिमृशति– 'शिवा नो भवथ संस्पृशे' इति ॥**

तं क्षुरं वप्त्रे नापिताय प्रदाय उन्दनीयाः छे(? क्ले)दनीयाः छे(? क्ले)दनार्हाः शीतोष्णा अपोऽभिमृशति 'शिवा नः' इत्यनेन। '$(आप)उन्दन्तु' इति वचनादेव सिद्धे उन्दनीया इति वचनं चौलवदिहोष्ण(शीत)स्वपरिग्रहाय। मातृद.

**'आप उन्दन्तु जीवसे' इति दक्षिणं गोदानमुनत्ति ॥**

**'ओषधे त्रायस्वैनम्' इत्यूर्ध्वाग्रामोषधिमन्तर्दधाति ॥**

**'स्वधिते मैनं हिंसीः' इति क्षुरेणाभिनिदधाति ॥**

**'देवश्रूरेतानि प्रवपे' इति प्रवपति ॥**

उक्तार्थानि। उन्दनादिवपनान्तं वप्तुः कर्म। मन्त्रास्तु आचार्यस्येत्येके। तत्र(? न,)वचनसामर्थ्यादस्मांनाय्यदोहनादिष्विव वप्तुर्मन्त्राध्ययनं भविष्यति। मातृद.

**'यत्क्षुरेण मर्चयता सुपेशसा वप्तर्वपसि केशश्मश्रु वर्चया मुखं मा न आयुः प्रमोषीः' इति वप्तारं समीक्षते ॥**

ततः 'यत्क्षुरेण' इति स्वयं वप्तारं समीक्षते। मातृद.

**श्मश्रूण्यग्रे वापयतेऽथोपपक्षावथ केशानथ लोमान्यथ नखानि ॥**

श्मश्रूण्यग्रे वप्त्रा वापयति। अथोपपक्षौ कक्षौ, अथ केशान्, अथ लोमानि इतरप्रदेशस्थानि, अथ नखानि। वापयतीति सर्वत्र शेषः। नखानां निकृन्तनम्। वपने-

---

$ उन्दनीयानामपां शीतोष्णत्वं सार्वत्रिकमिति 'अथोष्णशीता अपः संसृजति' इति चौलसूत्रवैयर्थ्यबलेन ज्ञापयिष्यते। तथा च तत्र मातृदत्तः– "शीतामुष्णा आनीय' (२०।१।४६) इत्येव सिद्धे 'उष्णशीता अपः संसृजति' (२०।१।४५) इति वचनमन्यत्रापि वचने शीतोष्णाभिरेवोन्दनमिति। तेन समावर्तने दीक्षायां चोन्दनीयाः शीतोष्णा एव स्युः" इति। तेन पुनस्तदर्थज्ञापनस्यासंभवात् शीतोष्णत्वज्ञापकत्वोक्तिरियं चित्रा। एवं चोन्दनीयपदवैयर्थ्यस्य तादवस्थ्यात् प्रयोजनान्तरं मृग्यम्।

ऽयं क्रमः सार्वत्रिकस्त्वादुक्त( ‡ ? त्रिक इत्येतदर्थ-मुक्ति)क्रमादेव सिद्धे ' अग्रे, अथ, अथ' इति वचनम् । मातृद्.

**आनडुहे शकृत्पिण्डे संयम्य केशश्मश्रुलोमनखानि 'इदमहममुष्याऽऽमुष्यायणस्य पाप्मानमवगूहामि' इति गोष्ठ उदुम्बरे दर्भस्तम्बे वा निखनति योऽस्य रातिर्भवति ॥**

अनडुहः अयमानडुहः । शकृत्पिण्डो गोमयपिण्डः । तस्मिन् केशश्मश्रुलोमनखानि संयम्य निधाय अन्तर्भूतानि कृत्वा तं पिण्डं योऽस्य रातिर्भवति सः ' इदमहम् ' इत्यनेन गोष्ठे उदुम्बरे दर्भस्तम्बे वा निखनति अवटं खात्वाऽग्रेण निधाय पुरीषेण प्रच्छादयतीत्यर्थः । ' अमुष्य ' इति स्नातुः षष्ठ्या नाम्नो ग्रहणम् । ( अमुष्य ? ) आमुष्यायण( स्य ) इति तथैव गोत्रनाम( ? तस्यैव गोत्रनाम्नः )। यथा– ' इदमहं देवदत्तस्य कौण्डिन्यस्य पाप्मानमवगूहामि ' । युवप्रत्ययनिवृत्त्यर्थं ' पितुर्नामधेयेन ' ( हिश्रौ. ७।१।५८ ) इति वचनान्न पितुर्नामधेयात्तद्धितोत्पत्तिरिति दीक्षावेदन एवोक्तम् । मातृद्.

**स्नानीयेनोत्साद्यौदुम्बरेण दन्तान्प्रक्षालयते ॥**

**' अन्नाद्याय व्यूहध्वं दीर्घायुत्वाय व्यूहध्वं ब्रह्मवर्चसाय व्यूहध्वं दीर्घायुरहमन्नादो ब्रह्मवर्चसी भूयासम् ' इति ॥**

स्नातीत्यनेनेति स्नानीयम् । तत् चूर्णकल्कादि । स्नायनीयमित्यपपाठः । अथवा स्नायः स्नानं स्नातिरित्यनर्थान्तरम् । स्नायं करोतीति णिच्युत्पन्ने तदन्तात्कृत्ये स्नायनीयमित्यपि स्यात् । तेनोत्साद्य मलं विनाश्य, प्रक्षाल्येत्यर्थः । उदुम्बरेण काष्ठेन दन्तान् प्रक्षालयते प्रकर्षेण शोधयति । ' अन्नाद्या ' इत्यनेन । मातृद्.

**अथोष्णशीताभिरद्भिः स्नापयति– ' आपो हि ष्ठा मयोभुवः ' इति तिसृभिः ' हिरण्यवर्णाः शुचयः पावकाः ' इति चतसृभिः ' पवमानः सुवर्जनः ' इति चैतेनानुवाकेन ॥**

अथ अनन्तरं दन्तप्रक्षालनात् । उष्णाश्च शीताश्च उष्णशीताः उष्णाभिः शीतमिश्राभिरित्यर्थः । अद्भिः स्नाति । अब्ग्रहणं काञ्जिकादेर्निवृत्त्यर्थम् । ' आपो० ' तिसृभिः । ' हिरण्य० ' चतसृभिः । ' पवमा० ' अनुवाकेन सर्वान्ते स्नानम् । वचनादेकस्य कर्मणो बहुमन्त्रत्वम् । केचित् प्रतिमन्त्रं स्नानमिच्छन्ति । तत्र नास्ति प्रमाणम् । अथेति प्राक् स्नानार्थम् । अन्यथाऽशुचित्वात्स्नात्वैव । केचित् स्वतो वाऽन्येन केनचित् ' शीतासु उष्णा आनीय ' इत्येतस्य ग्रहणार्थं मन्यन्ते । यथाचारः प्रमाणान्तरं चास्ति तथा नाम । मातृद्.

**गोष्ठे वाऽवच्छाद्य संपरिश्रित्य पुरोदयमादित्यस्य प्रविशति । अत्र सर्वं क्रियते । ' नैनमेतदहरादित्योऽभितपति ' इत्येकेषाम्, स्नातानां वा एष तेजसा तपति य एष तपति, तस्मात्स्नातकस्य मुखं रेफायतीव ॥**

गावो यत्र तिष्ठन्ति तद्गोष्ठम् । तस्मिन्वा अपररात्रे प्रच्छाद्य सर्वतः परिश्रित्य उपरिष्टाच्च निश्छिद्रं प्रच्छादयित्वा पुरोदयमादित्यस्य प्रविशति । तत्रोपसमाधानादि सर्वं क्रियते । कस्मात् ? एनं स्नातकमेतस्मिन्नहनि आदित्यो नाभितपतीत्येकेषां श्रुतिः, तस्मादेनमभितापो न स्यादित्येके । कस्मान्नाभितपतीति चेत्, स्नातानां ब्रह्मचारिणां वै तेजसा हतो नैष तपति । कः ? य एष इमं लोकं तपत्यादित्यः । तस्मात् स्नातकस्य मुखं रेफायतीव दीप्यतीव, अस्य तेज आदित्येन हरं( ? हृतं ) मा भूदिति । पूर्वेणैवापां समीपे स्नानेनेदं गोष्ठस्नानं न विकल्प्यते । पूर्वत्र परिश्रयणं नास्ति, अभितापपरिहाराभावात् । गुरुलघुनोश्च तुल्यविकल्पानुपपत्तेः । अस्याशक्तौ पूर्वविधानमाह । मातृद्.

**आहरन्त्यस्मै सर्वसुरभि चन्दनं वा पिष्टं तदभ्युक्ष्य ' नमो ग्रहाय चाभिग्रहाय च नमः शाकजञ्जभाभ्यां नमस्ताभ्यो देवताभ्यो या अभिग्राहिणीः ' इति देवेभ्यः प्राचीनमञ्जलिं**

‡ " उक्तिक्रमादेव पदार्थक्रमे सिद्धे ' अग्रे, अथ, अथ ' इति वचनं व्यर्थं सत् ' वपनेऽयं क्रमः सार्वत्रिकः ' इति ज्ञापयितुम्" इति वाक्यार्थसंभवमभिप्रेत्येयं शुद्धिः कल्पिता ।

**कृत्वा तेनानुलिम्पते– 'अप्सरासु च यो गन्धो गन्धर्वेषु च यद्यशः । दैव्यो यो मानुषो गन्धः स मामाविशतादिह ॥ ' इति ॥**

आहरन्त्यस्मै स्नातकाय ज्ञातयः सर्वसुरभि सर्वसुगन्धि गन्धद्रव्यं यथालाभम्, पिष्टं चन्दनमेवैकं ( पिष्टम् ? ) ( वा ) । तदद्भिरभ्युक्ष्य तेन पाणी प्रक्षाल्य 'नमो ग्रहाय' इत्यनेन देवेभ्यः प्राचीनमञ्जलिं कृत्वा तेनानुलेपनेन 'अप्सरासु च यः' इत्यनेनानुलोममात्मानं लिम्पति । अथवाऽभ्युक्ष्य नमस्कृत्य पाणी प्रलिप्यानुलिप्य( ? म्प )ते । 'मुखमग्रे ब्राह्मणोऽनुलिम्पते बाहू राजन्य उदरं वैश्य उपस्थं स्त्री ऊरू चरणजीविनः ' इति बह्वृचानामुक्तं तदस्माकमविरुद्धम् । सर्वत्राऽऽहरन्त्यस्मा इति वचनं स्वयमाहरणनिवृत्त्यर्थम् । बहुवचनमनियतकर्तृकत्वाय । मातृद्द.

**आहरन्त्यस्मा अहते वाससी । ते अभ्युक्ष्य 'सोमस्य तनूरसि तनुवं मे पाहि स्वा मा तनूराविश शिवा मा तनूराविश ' इत्यन्तरीयं वासः परिधायाप उपस्पृश्य तथैवोत्तरीयमपरेणाग्निं प्राङ्मुख उपविशति ॥**

आहरन्त्यस्मै द्वे अहते वाससी । ते अभ्युक्ष्योदकेन तयोरन्तरीयं 'सोमस्य' इत्यनेन परिधाय आच्छाद्य अप उपस्पृश्य आचम्येत्यर्थः । तथैव तेनैव मन्त्रेण उत्तरीयं परिधायापरेणाग्निं प्राङ्मुख उपविशति । अभ्युक्षणोपस्पर्शवचनं धर्मशास्त्रे सिद्धस्यैवानुवादः । श्रौतप्रायश्चित्तार्थमेके कल्पयन्ति कल्पकाराणां मूलवचनात्समावर्तनं श्रौतं मन्यमानाः । अपरेणाग्निमितिवचनादनुलेपनवस्त्रपरिधाने स्नानप्रदेश एव गम्येते । मातृद्द.

**आहरन्त्यस्मै कुण्डले चान्दनमणिं बादरं वा सुवर्णाभिच्छादनम् । तदुभयं दर्भेण प्रबध्योपर्यग्नौ धारयन्नभिजुहोति– 'आयुष्यं वर्चस्यं रायस्पोषमौद्भिदम् । इदं हिरण्यमायुषे वर्चसे जैत्रायाऽऽविशतां मां स्वाहा ॥ उच्चैर्वाजिपृतनासाहं सभासाहं धनंजयम् । सर्वाः समग्रा ऋद्धयो हिरण्येऽस्मिन्समाभृताः स्वाहा ॥ शुनमहं हिरण्यस्य पितुरिव नामाग्रभिषम् । तं मा हिरण्यवर्चसं करोतु पुरुषु प्रियं ब्रह्मवर्चसिनं मा करोतु स्वाहा ॥ प्रियं मा कुरु देवेषु प्रियं मा ब्रह्मणि कुरु । प्रियं विश्येषु शूद्रेषु प्रियं मा कुरु राजसु स्वाहा ॥ इममोषधे त्रायमाणा सहमाना सहस्वती । सा मा हिरण्यवर्चसं करोतु पुरुषु प्रियं ब्रह्मवर्चसिनं मा करोतु स्वाहा ॥ ' इति । एतैरेव पञ्चभिरस्वाहाकारैस्त्रिः प्रदक्षिणमुदपात्रेऽनुपरिप्लाव्य ॥**

आहरन्त्यस्मै कुण्डले । चन्दने भवश्चान्दनः काष्ठकृत इत्यर्थः । चान्दनश्चासौ मणिश्च चान्दनमणिः, तं बादरं वा । एतं मणिं सुवर्णमुपरिच्छादनं यस्य स सुवर्णाभिच्छादनः, तं चाऽऽहरन्ति । तस्य मणेरुपरिष्टात्कोष्ठप्रदेशे सुवर्णेन च्छादितं सुषिरं सूत्रेण प्रोतं च भवतीत्यर्थः । तदुभयं कुण्डलयुगुलं मणिं च दर्भेण प्रबध्याग्नौ धारयन्नभ्युपरि तस्य 'आयुष्यम्' इत्येतैः पञ्चभिस्तदुभयमभिजुहोति । अथवा उभयमुपरि धारयन् तदभि तस्योपरिष्टात् अग्नौ जुहोति । मणिकुण्डलसंस्कारत्वात् परिषेकाभावः । पूर्वसंस्कृतमाज्यमवशेष्य तेन जुहोति । ( एतैः ? ) एतैरेव पञ्चभिर्मन्त्रैः स्वाहाकारवर्जितैः सकृदुक्त्वा सर्वान्ते त्रिः प्रदक्षिणमुदपात्रेऽनुपरिप्राव्य आज्यं प्रक्षाल्येत्यर्थः । अस्वाहाकारवचनं मन्त्रेषु पाठात् । मातृद्द.

**'विराजं च स्वराजं चाभिष्टीर्या च नो गृहे । लक्ष्मी राष्ट्रस्य या मुखे तया मा संसृजामसि ॥ ' इति कुण्डले प्रतिहरते । दक्षिणे कर्णे दक्षिणं सव्ये सव्यम् ॥**

'विराजं च' इत्यनेन कुण्डले प्रतिहरते आबध्नाति । क ? दक्षिणे कर्णे दक्षिणं दक्षिणपार्श्वगतम् । सव्ये सव्यं सव्यपार्श्वगतम् । नियमार्थमेतद्विपर्यासेन वा मध्ये वाऽन्यथा मा भूदिति । प्रतिकुण्डलं मन्त्रावृत्तिः । केचिद्दक्षिणसव्य( त्वं )कुण्डयोर्लक्षणकरणाद्वा प्रयोगवृत्त्या वा पूर्वोत्तरप्रदानाद्वा मन्यन्ते । मातृद्द.

'ऋतुमिष्ट्वाऽऽर्तवैरायुषे वर्चसे संवत्सरस्य धायसा तेन सन्नुगृह्णासि' इति कुण्डले संगृह्णीते ॥

'ऋतुमिः' इत्यनेन कुण्डले संगृह्णीते अपिधानेनापिदधाति। प्रतिग्रह( ? हरण )संग्रहणयोः संयुक्तत्वादेकापवर्गत्वात्( ? त्वम् )। मातृद्ः.

'इयमोषधे त्रायमाणा सहमाना सहस्वती। सा मा हिरण्यवर्चसं करोतु पुरुषु प्रियं ब्रह्मवर्चसिनं मा करोत्वपाशोऽसि ॥' इति ग्रीवायां मणिं प्रतिमुञ्चते ॥

'इयमोषधे' इत्यनेन पूर्वोक्तं मणिं ग्रीवायां प्रतिमुञ्चते बध्नाति। मातृद्ः.

'शुभिके शुभमारोह शोभयन्ती मुखं मम। मुखं च मम शोभय भूयांसं च भगं कुरु ॥ यामाहरज्जमदग्निः श्रद्धायै कामायास्यै। इमां तां प्रतिमुञ्चेऽहं भगेन सह वर्चसा ॥' इति द्वाभ्यां स्रजं प्रतिमुञ्चते ॥

'शुभिके, यामाहरत्' इति द्वाभ्यां स्रजं प्रतिमुञ्चते शिरसि, प्रसिद्धेः। $ तस्यां मालाशब्दो येन केनचिदुपायेन प्रयोक्तव्यः। प्रयोगे तेनैव स्रगित्यभिधापयितव्यमिति। मातृद्ः.

'यदाञ्जनं त्रैककुदं जातं हिमवत उपरि। तेन वामाञ्जेऽहं भगेन सह वर्चसा मयि पर्वतपूरुषम् ॥' इति त्रैककुदेनाऽऽञ्जनेनाङ्क्ते। तस्मिन्नविद्यमाने येनैव केनचित् ॥

'यदाञ्जनम्' इत्यनेन त्रिककुदि पर्वते जातं तेनाऽऽञ्जनेनाङ्क्ते। तस्मिन्नविद्यमाने त्रैककुदे येनैव केनचिदाञ्जनेनानक्ति तेनैव मन्त्रेण। किमर्थमेतत्। प्रतिनिधावपि प्रायश्चित्ताभावार्थम्। सव्यं पूर्वमाचारादपरिमितकृत्वश्च, 'सव्यं हि पूर्वे मनुष्या आञ्जते' 'अपरिमितं हि मनुष्या आञ्जते' इत्यनुवादाच्च। तत्र सव्येऽपि वामिति द्वित्वम्। युगपदशक्यत्वात्प्रतिचक्षुर्मन्त्रावृत्तिः। पुनः पुनरप्यावृत्तौ चक्षुःसंस्कारकत्वात् 'यत्रैकस्मिन्' इति न्यायेन सकृदेव मन्त्रः, द्वाभ्यां हस्ताभ्यां द्वयोश्चक्षुषोर्युगपदाञ्जनस्य शक्यत्वात् ( च ) न मन्त्रावृत्तिरित्येके। मातृद्ः.

'यन्मे मनः परागतम्' इत्यादर्शेऽवेक्षते ॥

'यन्मे मनः' इत्यनया आदर्शे आत्मानमवेक्षते। मातृद्ः.

'देवस्य त्वा' इति वैणवं दण्डं प्रतिगृह्य 'इन्द्रस्य वज्रोऽस्यश्विनौ मा पातम्' इति त्रिरूर्ध्वमुन्मार्ष्टि ॥

( १ ) 'देवस्य त्वा' इति सावित्रेण प्रतिग्रहणलिङ्गेन वैणवं दण्डं प्रतिगृह्य। अर्थादन्यः प्रयच्छति। 'इन्द्राय' इत्यनेन सकृदुक्त्वा तमूर्ध्वं त्रिरुन्मार्ष्टि। मातृद्ः.

( २ ) तमूर्ध्वं दण्डं सोदकेन हस्तेन त्रिरुन्मार्ष्टि। उच्छब्देनैवोर्ध्वमार्जनसिद्धौ पुनरूर्ध्वग्रहणं दण्डविशेषणार्थम्। एवं चोर्ध्वं दण्डं धृत्वोर्ध्वं मार्ष्टीत्यर्थः सिद्धो भवति। सोदकेन हस्तेनोन्मार्जनं तु "ओं विष्णोर्मनसा पूते स्थ इत्यद्भिरुन्मार्ष्टि' ( सश्रौ. १।३।१२ ) इत्येतत्सूत्रेऽद्भिरिति विधानं सर्वत्रोन्मार्जनमेवोदकैः, अनुमार्जनादिकं तु केवलेन हस्तेन" इति वैजयन्तीकृतव्याख्यानात्। पवित्रयोरनुमार्जनं तु वचनादद्भिः।

सं. ३७८

'वेणवेजयास्मद्द्विषतस्तस्करान् सरीसृपाञ्छ्वापदान् रक्षांसि पिशाचान्पौरुषेयाद्भयात् दण्ड रक्ष विश्वस्माद्भयाद्रक्ष सर्वतो जहि तस्करानग्नः सर्ववृक्षेषु जायसे त्वं सपत्नहा। जहि शत्रुगणान्सर्वान्समन्तं मघवानिव ॥' इति त्रिः प्रदक्षिणमुपर्युपरि शिरः प्रतिहरते ॥

$ व्याख्यानेऽस्मिन् प्रमाणं मृग्यम्। मालास्रक्शब्दोच्चारणविषये केवलेनाऽऽश्वलायनेन विधिनिषेधौ कृतौ, न केनाप्यन्येन सूत्रकारेण। आश्वलायनेन तु प्रमादादज्ञानाद्वा मालाशब्दोच्चारणे पुनः स्रक्शब्दाभिधापनं विहितम्, न मालाशब्दोक्तिं बुद्ध्या कारयित्वा ततः स्रक्शब्दाभिधापनं कार्यमिति। अत एव गोपीनाथभट्टादिभिः प्रयोगग्रन्थेषु मालाशब्दोक्त्यादिविषयो न स्पृष्टः।

' वेगवेशय ' इत्यनेन तदुपरि शिरः प्रतिहरते प्रतिभ्रमयति । सकृदेव मन्त्रः । मातृद्त्त.

**' प्रतिष्ठे स्थो देवते मा मा संताप्तम् ' इत्युपानहावभ्यवरोहति ॥**

' प्रतिष्ठे स्थो देवते ' इत्यनेन उपानहौ अभ्यवरोहति उपमुञ्चते इत्यर्थः । युगपदशक्यत्वान्मन्त्रावृत्तिः । शक्यत्वे सकृदेव । मातृद्त्त.

**' प्रजापतेः शरणमसि ब्रह्मणश्छदिः ' इति छत्रं प्रतिगृह्णाति ॥**

' प्रजापतेः ' इत्यनेन छत्रं प्रतिगृह्णाति । अत्राप्यर्थादानम् । मातृद्त्त.

**' यो मे दण्डः परापतद्विहायसोऽधिभूम्याम् । इमं तं पुनरादद आयुषे च बलाय च ॥ ' इति दण्डं पुनरादत्ते यद्यस्य हस्तात्पतति ॥**

यद्यस्य हस्ताद्दण्डः प्रमादात्पतेत् 'यो मे दण्डः' इत्यनेन पुनरादत्ते । प्रायश्चित्तमेतदा मधुपर्कसमाप्तेः । सति निमित्ते यावज्जीवमित्यपरे, स्नातकस्य नित्यत्वाद्वैणुदण्डधारणस्य । एतावत्कृत्वा तदानीमेव गच्छति पूजार्थम् । गोष्ठपक्षे तत्रैव वसितत्वाद्रात्रौ गच्छति, अभितापप्रतिषेधात् । मातृद्त्त.

**'आनयन्त्यस्मै रथमश्वं हस्तिनं वा ॥**

आनयन्त्यस्मै स्नातकाय ज्ञातयो ग्रामप्रवेशार्थं रथं वा ( अश्वं वा ) हस्तिनं वा । मातृद्त्त.

**[1]' रथंतरमसि वामदेव्यमसि बृहदसि', ' अङ्कौ न्यङ्कावभितः ' इत्येषा, ' अयं वामश्विना रथो मा दुःखे मा सुखे रिषत् । अरिष्टः स्वस्ति गच्छतु विविघ्नन्नभिदासतः ॥ ', ' इह धृतिरिह विधृतिरिह रम इह रमताम् ' इति रथमातिष्ठते यदि रथेन प्रविशति ॥**

' रथंतरम् ' इति यजुरेकम् , ' अङ्कौ न्यङ्कावभितः ' इत्येषा ऋक् ( आ ) अन्तादनुवाकस्य, ' अयम् ' इति च ऋक्, ' इह धृतिः ' इति यजुः, एतैश्चतुर्भिर्मन्त्रैः रथम् आतिष्ठते आरोहति स्नातको यदि रथेन ग्रामं प्रविशति । मातृद्त्त.

**' अश्वोऽसि हयोऽसि मयोऽसि ' इत्येकादशभिरश्वनामभिरश्वं यद्यश्वेन ॥**

' अश्वोऽसि ' इत्येतैरेकादशभिरश्वमारोहति यद्यश्वेन ग्रामं प्रविशति । तैत्तिरीयाणां ' मयोऽसि ' इत्येतत्तृतीयं नाम पठितं नास्ति । वाजसनेयिनां चतुर्थमेतत्पठितम् । येषां तृतीयमस्त्याम्नातम् , यथा तेषां पाठस्तथा ग्राह्यः । केचित् ' अश्वोऽसि हयोऽस्यत्योऽसि नरोऽसि ' इत्येवं ' ययुर्नामासि '( तैसं. ७।१।१२।१ ) इत्येतदन्तानि यथा तैत्तिरीयाणां पाठस्तथा गृह्णन्ति । मातृद्त्त.

**' इन्द्रस्य त्वा वज्रेणाभ्युपविशामि वह कालं वह श्रियं माऽभिवह हस्त्यसि हस्तियशसमसि हस्तिवर्चसमसि हस्तियशसि( ? सी ) हस्तिवर्चसी भूयासम् ' इति हस्तिनं यदि तेन तद्गच्छति यत्रास्मा अपचितिं करिष्यन्तो भवन्ति ॥**

' इन्द्रस्य त्वा ' इत्यनेन हस्तिनमारोहति यदि तेन हस्तिना ग्रामं प्रविशति । तद्गच्छति तत्र गच्छति यस्मिन्देशेऽस्मा अपचितिं करिष्यन्तो भवन्ति । मातृद्त्त.

**'संस्रवन्तु दिशो मयि समागच्छन्तु सूनृताः । सर्वे कामा अभि यन्तु नः प्रिया अभिस्रवन्तु नः प्रियाः ॥ ' इति दिश उपतिष्ठते ॥**

' संस्रवन्तु ' इति सकृन्मन्त्रमुक्त्वा दिश उपतिष्ठते आरोहणानन्तरमेव । केचिद्गच्छतीत्युक्त्वा वचनाद्गच्छन्नेवोपतिष्ठत इत्याहुः । मातृद्त्त.

**' यशोऽसि यशोऽहं त्वयि भूयासम् ' इति योऽस्यापचितिं करिष्यन्भवति तमभ्यागच्छन्समीक्षते ॥**

योऽस्य स्नातकस्य अपचितिं पूजां करिष्यन्भवति तमाभिमुख्येन समीपं गच्छन् अभिगच्छन्तं वा स्वयमागच्छन् ' यशोऽसि ' इत्यनेन मन्त्रेण सम्यगीक्षते । अवरुद्धैतत्कार्यमित्येके । अनवरुद्धेत्यपरे । मातृद्त्त.

---

(१) हिगृ. १९।४।१; संप्र. ८२०; संग. २२४.
(२) मागृ. १९।४।२–६.

## मानवगृह्यसूत्रम्

मधुपर्केणाऽऽचार्यार्हणम्, स्नानम्, वासःपरिधानम्, अञ्जनम्, कुण्डलादिधारणम्, गृहगमनम्

**'छन्दस्यर्थान् बुद्ध्वा स्नास्यन् गां कारयेत् ॥**

'आम्नायस्त्रिवृच्छन्दः' इति प्रातिशाख्यसंज्ञासूत्रम्। आम्नाये वेदस्य गुणश्छन्द उच्यते। तस्मिन्नर्थास्तांस्तथा। वक्ष्यमाणधर्मेण स्नास्यन् गां प्रवरां कारयेत्। मधुपर्काद्वा भूतां(? काङ्गभूतां) गां 'कुरुत' इति प्रेष्यन् कारयतीत्युच्यते। ननु 'आचार्यमर्हयेत्' इति सिद्धे किं कारयेदिति ग्रहणेन? उत्सर्गनिवृत्त्यर्थं चेत्, न, अदृष्टार्थकल्पनाप्रसङ्गात्। तन्मा भूत् अन्येन वादिना(? अन्यगवादिना)ऽर्हणमिति मधुपर्कलक्षणार्थं गामित्युक्तम्। अर्थानिति बहुवचनमर्थविध्यर्थवादकल्पनाप्रसङ्गात्तन्मा भूत्। अन्ये वक्ष्यमाणेच्छानामधेयभेदात्। व्याकरणमीमांसादीनां सामर्थ्यगृहीतं परिज्ञानम्। तद्विना वेदार्थावबोधो न शक्यः। तदुक्तम्– 'अनधीत्य शब्दशास्त्रं शिष्यत्वे याऽपि योग्यता। निषिद्धा साऽपि यास्केन वक्तृत्वे तस्य का कथा॥' इति। न चामीमांसको विध्यादेः स्वरूपं जानाति। उक्तं च कल्पकारेण– 'न्याय्यं कर्मोपांशु', तथा 'ऊह्यमूहेत' (माश्रौ. ५।२।९, ३), 'ततो यथार्थं कर्मसंनिपातः' (मागृ. १।१।१।१) इत्यादि। न्यायादनपेतं न्याय्यम्। ऊहार्थं(? हं)मूह्यम्। यथार्थं यथाप्रयोजनम्। न चैवमादि अमीमांसकोऽवैयाकरणश्च शक्नोति ज्ञातुम्। अष्टाभा.

**आचार्यमर्हयेच्छ्रोत्रियः ॥**

आचार्यमर्हयेदिति। यः श्रोत्रियः। 'श्रोत्रियञ्छ(? यंश्छ)न्दोऽधीते' (पा. ५।२।८४) इति निपातनात् छन्दोऽध्यायी श्रोत्रियः, न मृद्वारिशुचिः। श्रोत्रियग्रहणमनधीतवेदस्यार्थावबोधनाधिकारनिरासार्थम्, स्वाध्यायाध्ययनविधेरर्थावबोधपर्यवसायित्वादर्थावबोधस्य चाऽध्ययनानन्तर्यादिति। अष्टाभा.

(१) मागृ. १।२।८–९, ११–१८.

**'आपो हि ष्ठा' इति तिसृभिः 'हिरण्यवर्णाः शुचयः' इति द्वाभ्यां स्नात्वाऽहते वाससी परिधत्ते ॥**

'आपो हि ष्ठा' इति तिस्रः, 'हिरण्यवर्णाः शुचयः' इति द्वे। स्नानार्थं चोपादानात् ऋग्भिरित्या-(? त्यध्या)ह्रियते। पञ्चभिर्ऋग्भिरेकं स्नानमिति। प्रथमतृतीयान्तत्वे स्नानावृत्तिराशङ्क्यते द्विश्चोदनाभेदात्। महासंख्यामुपाक्रियमाणावयवादित्वावृत्या केचिच्चार(? )मिच्छन्ति। अन्यस्त्वाह– स्नानस्य प्राधान्यान्मन्त्रस्य तदर्थकत्वादेकमेव स्नानं युक्तम्। द्विश्चोदना त्रिर्न पाठकास्नानात्(?)। अत एव मन्त्रप्रतीकार्थं प्रथमेव कृता इति शब्दश्च। न तु तृतीयासामर्थ्यात्तृतीयार्थो द्रष्टव्यः। 'स्नात्वाऽहते वाससी परिधत्ते'। स्नात्वोदककलशेन शुचौ देशेऽनुलिप्ते गुरुमतेन यवौषध्यादिव(? म)ति ततोऽहते वाससी परिधत्ते नवे अन्यत्रानुपयुक्ते। अष्टाभा.

**'वसुमसि वसुमन्तं मा कुरु सौवर्चसाय मा तेजसे ब्रह्मवर्चसाय परिदधामि' इति परिदधाति ॥**

केचिदेतं मन्त्रं परिदानार्थं मन्यन्ते आचार्यस्य, 'परिददामि' इति पठन्ति। अन्ये तु वस्त्रपरिधानार्थं स्नातकस्य 'परिदधामीति परिदधाति' इति पठन्ति। एतदेव युक्तम्। 'वसुमन्तं मा कुरु' इत्याशीःपदमात्मानं ब्रूते मन्त्रे। अष्टाभा.

**'यथा द्यौश्च पृथिवी च न बिभीतो न रिष्यतः। एवं मे प्राण मा बिभ एवं मे प्राण मा रिषः' इत्याङ्क्ते ॥**

'यथा द्यौश्च' इत्यादि 'आङ्क्ते' इत्यन्तमञ्जने मन्त्रः। प्रत्यहमञ्जनं स्नातकस्य मन्त्रेण, 'संधिं प्रति मनुष्यान् आङ्क्ते। शलल्या अपरम्' इति श्रुतेः। अन्यस्तु दक्षिणं पूर्वम्, '§ दक्षिणमक्षि पुराऽऽङ्क्ते तथाऽपरम्' (१।११।१८) इति विवाहे वचनात्। अष्टाभा.

§ अर्थतोऽनुवादोऽयम्।

**हिरण्यमाबध्नीते ॥**

'हिरण्यमाबध्नीते'। शुभकुण्डले, स्मृत्यन्तरात्। अन्यदपि कटकादि यथासंभवम्, अविशेषात्।

अष्टाभा.

**छत्रं धारयते दण्डं मालां गन्धम् ॥**

छत्रं धारयते गन्धं मालां दण्डम्। छत्रं दृष्टार्थे गन्धमाल्ये। अदृष्टार्थतयाऽपि, जगतः सिद्धौ विधानात्। दण्डमिति पालाशादिनिवृत्त्यर्थं वैणवोपलक्षणार्थे पुनर्वचनम्। दृष्टेरज्ञानार्थानियमार्थम्।

अष्टाभा.

**'प्रतिष्ठे स्थो दैवते द्यावापृथिवी मा मा संताप्तम्' इत्युपानहौ ॥**

'प्रतिष्ठे' इति उपानहौ। धारयती( ? त इ )ति प्रकृतेन संबन्धः। मन्त्रनियम उपानहोः। एतच्चानयोराद्ये धारणे, न प्रतिधारणे। अन्यधृते च न धारयेत्, स्मृत्यन्तरे निषेधात्।

अष्टाभा.

**द्विवस्रोऽत ऊर्ध्वं भवति। 'तस्माच्छोभनं वासो भर्तव्यम्' इति श्रुतिः ॥**

अयं क्रमोऽत्र—जटावपनं मुञ्जेन्मन्त्रस्नानात् प्रभृतयो मन्त्रावृत्त्या परिधानशब्दपक्षे। आचमनं परिवासधानाङ्गत्वम्( ? वासःपरिधानाङ्गम् ) गन्धानुलेपनादिति। 'तस्माच्छोभनं वासो भर्तव्यम्' इति श्रुतिः। स्नानमुत्तरतरं शोभनं श्रेष्ठं विमलादिनाऽहतं वृत्त्या धारयेत्पोषयेच, तथा प्रयत्नं कुर्याद्यथा शोभनं भवति। एतच्च सति विभवे, स्मृत्यन्तरवचनात्। संभवश्च द्रव्यशरीरकृतो विशेषः। श्रुतिग्रहणमासत्त्वख्यापनार्थम्। श्रुतिशब्दश्च क्वचित्प्रथमान्तः श्रूयते क्वचित् षष्ठ्यन्तः। यत्र प्रथमान्तस्तत्रावयवापेक्षया। यत्र षष्ठ्यन्तस्तत्रावयव्यपेक्षया।

अष्टाभा.

**आमन्त्र्य गुरून् गुरुबन्धूंश्च स्वान् गृहान्व्रजेत् ॥**

आमन्त्र्य गुरून् गुरुबन्धूंश्च स्वान् गृहान्। पाक्षिकोऽयम्। पिता हि मुख्ये( ? ख्यो )ऽभिहितः, तस्यैव पुत्रानुशासनेऽधिकारात्। तदभावेऽन्यो गुरुः। तन्मते वा गुरूनिति बहुवचनं पाक्षिकम्। 'बहूनां येन' ( १।१।३ ) इति संभवान्न पूर्वार्थः। केचिदेकवचनान्तं पठन्ति। गुर्ववरांश्च गुरुबत्पादम् आमन्त्र्य विशाध्य स्वान्गृहान् व्रजेत्। गुरुणाऽनुज्ञातस्तदधीनैः स्वगृहागमनं वेदार्थानुष्ठानार्थम्, तदर्थत्वाद्बुद्ध्याः स्नातस्य। स्वान्गृहानिति पितृगृहान् भावाभावात्( ? )।

अष्टाभा.

## भारद्वाजगृह्यसूत्रम्

संभारोपकल्पनम्, व्रजगमनम्, अग्निस्थापनम्, समिदाधानम्, वपनम्, मेखलाविस्रंसनम्, स्नानम्, दन्तप्रक्षालनम्, अनुलेपनम्, वस्त्र-यज्ञोपवीतधारणम्, होमः, मणिकुण्डलादिधारणम्, आदर्शावेक्षणम्, उपानद्दण्डच्छत्रधारणम्, दिगादिवीक्षणम्, आर्तैः संभाष्याऽऽश्रमान्तरस्वीकारः, समावर्तनानुकल्पः

**'वेदमधीत्य स्नास्यन्नुपकल्पयते पालाशीं समिधमुदपात्रं चैरकां चोपबर्हणं च स्नानीयपिण्डं च सार्वसुरभिपिष्टं चन्दनं च सूत्रं सोपधानं मणिं सपाशं बादरं मणिमुत्तरासङ्गं च सान्तरमहते च प्रवर्तौ च स्रजं चाञ्जनं चाऽऽदर्शोपानहौ दण्डं च छत्रं च।...... पुरोदयादादित्यस्य व्रजं प्रपद्यते। एतदहःस्नातानां ह वा एष एतत्तेजसा तपति। तस्मादेनमेतदहर्नाभितपेत्। अन्तर्लोम्ना चर्मणा द्वारमपिधाय पूर्वार्धे व्रजस्याग्निमुपसमाधाय मध्यंदिने पालाशीं समिधमादधाति– 'इमं स्तोममर्हते जातवेदसे रथमिव संमहेमा मनीषया। भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव स्वाहा॥' इति। तत एतान्संभारान् सकृदेव सर्वानाहृत्य तानुत्तरतोऽग्नेर्निधायापरेणाग्निमुत्तरतः परिषेचनामेरकामास्तीर्य तस्यामुदक्शिरा निपद्यते ॥**

**दक्षिणतो नापित उपविशति। तस्य क्षुरमभिमन्त्रयते– 'शिवो नामासि स्वधितिस्ते पिता। नमस्ते अस्तु मा मा हिंसीः॥' इति।**

(१) भागृ. २।१८–२२.

भद्भिरुन्यमानमभिमन्त्रयते– 'शिवा मे भवथ संस्पृशे' इति। क्षुरमभिनिधीयमानमभिमन्त्रयते– 'त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम्। यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषम्॥' इति। वपन्तम्– 'यत्क्षुरेण मर्चयता सुपेशसा वप्त्रा वपसि वर्चसा मुखं मा न आयुः प्रमोषीः' इति। इमश्रूणि वापयित्वोपपक्षौ निवापयतेऽथ केशान्यथोपपादमङ्गानि। एवमेवात ऊर्ध्वं वापयते। पश्चार्धे व्रजस्योपविश्य मेखलां विस्रस्य परिकर्मणे प्रयच्छति– 'इमां हुत्वा स्तम्ब उपगूह' इति। तां स हुत्वा स्तम्ब उपगूहति– 'इदमहममुष्यामुष्यायणस्य द्विषन्तं भ्रातृव्यमुपगूहाम्युत्तरोऽसौ द्विषद्भ्यः' इति। तत आप उपशेरत उष्णाश्च शीताश्च। 'शीतास्वुष्णा आनयति दैवमानुषस्य व्यावृत्त्यै' इति विज्ञायते। संसृष्टाभिरद्भिरभिषिञ्चति– 'आपो हि ष्ठा मयोभुवः' इति तिसृभिः 'हिरण्यवर्णाः शुचयः पावकाः' इति चतसृभिः 'पवमानः सुवर्जनः' इत्येतेनानुवाकेन। स्नानीयेन प्रताप्य॥

दन्तान्प्रक्षालयते– 'अन्नाद्याय व्यूहध्वं सोमो राजेदमागमत्। स मा प्रविशत्वन्नाद्येन भगेन च दीर्घायुरहमन्नादो भूयासम्॥' इति। सार्वसुरभिणा प्रलेप्स्यमानः प्रोक्षति– 'नमः शाकजञ्जभाभ्यां नमस्ताभ्यो देवताभ्यो या अभिग्राहिणीः' इति। अथानुलिम्पेत्– 'यद्वर्चो अप्सरासु च गन्धर्वेषु च यद्यशः। दिव्यो यो मानुषो गन्धश्च स माऽऽविशतादिह॥' इति। समुञ्जीय चन्दनेनानुलेप्स्यमान एवं प्रोक्षत्येवमनुलिम्पेत्। अथाहतमन्तरं परिधत्ते– 'आयुरसि' इति। 'जरामशीय' इत्युत्तरम्। यज्ञोपवीतं कृत्वाऽप आचम्य जयाभ्यातानान्राष्ट्रभृत इति हुत्वैता ¶आहुतीर्जुहोति– 'दीक्षा तपो मनसो मातरिश्वा बृहस्पतिर्वाचो अस्याः स योनिः। वेदांसि विद्या मयि सन्तु चारवोऽग्नि( ? ग्नी )-षोमा यशो अस्मासु धत्तम्॥ अग्निर्येन विराजति सोमो येन विराजति सूर्यो येन विराजति विराड्येन विराजति तेनाहं विश्वतः परिविराज्यासमिहैकवृत्स्वाहा' इति॥

अपरेणाग्निं प्राङ्मुख उपविश्य सोपधानं मणिं प्रवयति। सपाशं बादरं मणिम्। उदपात्रेऽवधाय प्रदक्षिणं पर्याप्लावयति– 'इयमोषधे त्रायमाणा सहमाना सहस्वती। सा मा हिरण्यवर्चसं ब्रह्मवर्चसिनं मा करोतु॥' इति। उद्धृत्याक्ष्णयैव पर्याहृत्य प्रतिमुञ्चते– 'अपाशोऽसि' इति। उरसि स्थापयति– 'उरो मे मा संशारीः शिवो मोपशेष्व मह्यं दीर्घायुत्वाय शतशारदाय' इति। हस्तेन बादरं मणिम्– 'ऊर्गसि' इति। अर्को मणिर्ब्राह्मणस्य पुलको वैश्यस्य राज्ञो गर्दभसुग्रीवः। 'अर्को मणिर्ब्राह्मणस्य वैश्यस्य पुलको मणिः। राज्ञो गर्दभसुग्रीवो यस्य कस्य कपित्थकः॥' इति मणिधारणे गाथा भवति। निधायाहतमन्तरं परिधत्ते– 'आयुषे त्वा' इति। 'जरामशीय' इत्युत्तरम्। अहतस्य

¶ अत्राऽऽहुतीनां बहुत्वमुक्तम्, मन्त्रौ तु द्वावेव पठिताविति विसंगतिः प्रतीयते। तन्निवारणं द्वेधा संभवति –'एता आहुतीः' इति पाठं प्रामादिकं मत्वा 'एते आहुती' इति शुद्धपाठकल्पनया वा मन्त्रबहुत्वकल्पनया वा। तत्र मन्त्रबहुत्वमेवं कल्पयितुं शक्यते– 'अग्निर्येन विराजति, सोमो येन०, सूर्यो येन०, विराड्येन०' इति चत्वारो मन्त्राः, 'तेनाहं विश्वतः' इत्यादिश्च सर्वेषां समानः शेष इति। 'धत्तम्' इतिप्रथममन्त्रान्तात्परं स्वाहाकारपाठाभावात् द्वयोर्मन्त्रयोर्व्यासज्यवृत्ति आहुतिकरणत्वमिति कल्पने 'एते आहुती' इति शुद्धिकल्पनेऽपि विसंगतिस्तदवस्थैवेति शुद्धिपक्षे प्रथममन्त्रस्य यथाकथंचित् पृथक् करणत्वमिति कल्पनीयम्। मन्त्रबहुत्वपक्षे तु प्रथममन्त्रे उत्तरेषु चतुर्षु मन्त्रेषु प्रत्येकं चेति द्वयोर्द्वयोर्व्यासज्यवृत्ति करणत्वं संभवति सर्वेषु पर्याप्तं वा। तदेतत्सर्वं प्रमाणानुपलब्धेः कल्पनमात्रम्, न सिद्धान्तः।

दशायां प्रवर्तौ प्रबध्य दर्व्यामाधायाऽऽज्यस्योपघातं जुहोति– 'आयुष्यं वर्चस्यं सुवीर्यं रायस्पोषमौद्भिद्यमिदं हिरण्यमायुषे वर्चसे जैत्रियायाऽऽविशतान्मां स्वाहा ॥ उच्चैर्वाजि पृतनाजित्सत्रासाहं धनंजयम् । सर्वाः समृद्धीर्ऋद्धयो हिरण्येऽस्मिन्समाहिताः स्वाहा ॥ शुनमहं हिरण्यस्य पितुरिव नामाग्रभैषम् । तं मा हिरण्यवर्चसं पुरुषु प्रियं कुरु स्वाहा ॥ प्रियं मा देवेषु कुरु प्रियं मा ब्राह्मणे कुरु । प्रियं विश्वेषु शूद्रेषु प्रियं राजसु मा कुरु स्वाहा ॥ संराजं च स्वराजं चाभिष्टीर्या च नो गृहे । लक्ष्मी राष्ट्रस्य या मुखे तया मा संसृजामसि स्वाहा ॥' इति ॥

उद्धृत्य प्रक्षाल्य दक्षिणमेवाग्रे प्रतिमुञ्चते– 'आयुष्यं वर्चस्यम्' इति । एतदेव मणिकुण्डलबन्धने विद्यात् । अथ स्रजं प्रतिमुञ्चते– 'शुभिके शिर आरोह शोभयन्ती मुखं मम । मुखं हि मम शोभय भूयांसं च भगं कुरु ॥ यामाहरज्जमदग्निः श्रद्धायै कामायान्यै । इमां तां प्रतिमुञ्चेऽहं भगेन सह वर्चसा ॥' इति । अथाऽऽङ्क्ते– 'यदाञ्जनं त्रैककुदं जातं हिमवत उपरि मयि पर्वतवर्चसम्' इति । आदर्शमवेक्षते– 'यन्मे वर्चः परापतितमात्मानं परिपश्यतः । इदं तत्पुनराददे भगेन सह वर्चसा ॥' इति । वाग्यत आस्त आ नक्षत्राणामुदयात् । उदितेषु नक्षत्रेषूपानहावुपमुञ्चते– 'द्यौरसि' इति दक्षिणां 'पृथिव्यसि' इत्युत्तराम् । उपमुच्याभिमन्त्रयते– 'प्रतिष्ठे स्थो देवते मा मा संताप्तम्' इति । दण्डमादत्ते– 'लोके वेदाथास्मि द्विषतो वधाय सपत्नाञ्छ्वापदान्सरीसृपान्हस्तिनश्च' इति । छत्रमादत्ते– 'प्रजापतेः शरणमसि ब्रह्मणश्छदिः' इति । उपनिष्क्रम्य दिशोऽनुवीक्षते– 'देवीः षडुर्वीरुरु नः कृणोत' इति । चन्द्रमसमुदीक्षते– 'मा रधाम द्विषते सोम राजन्' इति । यत्रास्य रातिर्भवति तेन संभाष्य यथार्थमेतीत्येकम् । अथैतदपरम् । तूष्णीमेव तीर्थे स्नात्वोदेत्य तूष्णीं पालाशीं समिधमादधाति ॥

## काठकगृह्यसूत्रम्

आचार्यस्नातकाभ्यां परस्परयोरर्हणम्, व्रजगमनम्, वपनम्, स्नानम्, वस्त्रादिधारणम्, समावर्तनकालविशेषप्रयुक्तस्तीर्थसेवननिषेधः शाकलहोमोत्कषश्च

**[1]छन्दस्यर्थान् बुद्ध्वा स्नास्यन् गां कारयेदाचार्यमर्हयेत् ॥**

(१) ब्रह्मचर्यव्रतस्याऽऽचार्यपूजाविधिद्वारेणावधिमाह– छन्दसीति । छन्दसि वेदे ऋग्यजुःसामलक्षणे मन्त्रब्राह्मणार्थवादनामधेयभेदयुक्ते ये व्यवस्थिता अर्था द्वादशाध्यायनिर्णेयास्तान् बुद्ध्वा तद्योग्यत्वात् स्नास्यन् दारपरिग्रहार्थे स्नातकधर्मान् ग्रहीतुमिच्छन् आचार्यमधीष्य गां मधुपर्कार्थे कारयेत्, स्वधनं च दत्त्वा अर्हयेत् । सा मधुपर्कोपयोगिनी सती गुरवे दास्यते, आचार्यो हि शिष्याय सिष्णासवे मधुपर्कं ददाति, शिष्यश्चाऽऽचार्याय दक्षिणामिति केचित् । अन्ये तु गोप्रभवो मधुपर्को गोशब्देन विवक्षित इति व्याचक्षते । तेनाऽऽचार्यमधीष्य 'मधुपर्को मे दीयताम्' इति मधुपर्कं कारयेदित्यर्थः । गृहीतमधुपर्कश्च ब्रह्मचारी आचार्यमर्हयेत् दक्षिणादिना यथाशक्त्या पूजयेत् । अपरे तु सूत्रभेदेन व्याचक्षते– 'छन्दस्यर्थान् बुद्ध्वा स्नास्यन् गां कारयेत्' इत्येकम्, 'आचार्यमर्हयेत्' इति द्वितीयम् । आचार्यमधीष्याऽऽदावात्मने गां मधुपर्कं च दापयेदित्याद्यस्यार्थः । आचार्येण च पूजितो गृहीतदक्षिणः सन् ब्रह्मचारी पश्चादाचार्यमर्हयेत् दक्षिणादानादिना । ब्रह्मचारिणं हि सम्यगधीतावबुद्धवेदमाचार्यः पूर्वं पूजयतीति । तथा च स्मृतिः– 'तं प्रतीतं स्वधर्मेण ब्रह्मदायहरं पितुः । स्रग्विणं तल्प आसीनमर्हयेत्प्रथमं गवा ॥' ( मस्मृ. ३।३ ) इति । तं ब्रह्मचारिणं स्वधर्मेण शिष्यधर्मेण प्रतीतम् अभिमुखमागतम् आचार्यस्य ब्रह्महरं पितुर्दायहरं स्रग्विणं मालाधारिणं

---

[1] कागृ. ३।१,५-११.

तस्मै खट्वायाम् आसीनम् उपविष्टं गवा पूजयेदाचार्यः। तस्माद्गृहीतविद्यो गुरुणाऽनुज्ञातः स्नायात्, स्नात्वा च भार्यामधिगच्छेत्। अनुत्सृष्टस्तु वीर्यं हित्वा उपावर्तते। तथा च श्रुतिः– 'इन्द्रो वै प्रजापतौ ब्रह्मचर्यमुवास स वा अनुत्सृष्टो वीर्यं हित्वोपावर्तत' इति, 'आचार्यो ब्रह्मचारिणः प्रजापतिः' इति च। द्विविधो ब्रह्मचारी– उपकुर्वाणो यो ब्रह्मचर्यं चरित्वा स्नानदारपरिग्रहादिकं संभयते, नैष्ठिको यो ब्रह्मचर्येण निष्ठां गमयति। तत्रोपकुर्वाणकस्य सावधिकं ब्रह्मचर्यमिति तदपेक्षयोक्तं 'छन्दस्यर्थान्' इत्यादि। देव.

(२) त्रैविद्यकापवर्गहोमान्तेऽप्सौ दण्डं प्रास्येत्, अप्सु मेखलामजिनं वासश्च। तत आचार्यं मधुपर्केणार्हयेत्। तं च दक्षिणया तोषयित्वा स्नायात्। ब्राह्म.

(३) आचार्यशब्दः काकाक्षिन्यायेनोभयत्र संबध्यते। ‡ आवि.

**व्रजपरिहितं प्रपाद्य जटाश्मश्रुलोमनखमभिसंहार्य 'आपो हि ष्ठा' इति तिसृभिः स्नायात्, 'हिरण्यवर्णाः' इति च द्वाभ्याम्। 'हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः। अग्निं या गर्भं दधिरे विरूपास्ता न आपः शं स्योना भवन्तु॥ हिरण्यवर्णाः शुचयः पावका विचक्रमुर्हित्वाऽवद्यमापः। शतं पवित्रा वितता ह्यासां ताभिर्मा देवः सविता पुनातु॥' इति। 'शं नः' इति च द्वाभ्याम्॥**

(१) गोसमूहो व्रजः, तेन परिहितम् अधिष्ठितं देशं प्रपाद्य प्रवेश्य। प्रयोजककर्तुराचार्यस्यायं निर्देशः। यथासंभवं जटिलपक्षे जटानां वापनम्, शिखिपक्षे केशानाम्। तेन जटादिकम् अभिसंहार्य अपसार्य वापयित्वा 'आपो हि ष्ठा' इत्यादिभिस्तिसृभिः संमार्जनं कुर्वन्तं स्नायात् स्नापयेत् मज्जयेत्। 'हिरण्यवर्णाः' इति द्वाभ्यां द्वितीयं मज्जनं कुर्यात्, 'शं न आपः' इति द्वाभ्यां तृतीयम्। अत्र च श्मश्रुग्रहणेनौष्ठोपरिगतकेशानामपि ग्रहणम्। लोमग्रहणेन गुप्तस्थानगतानां ग्रहणम्, न तु भ्रूवादिवृत्तीनाम्, आर्यप्रसिद्धिविरोधात्। ......'आपो हि ष्ठा' इत्यादयो ‡ व्याख्याताः।

---

‡ शेषं देवगतम्।

‡ प्रथमखण्डे संध्याप्रकरणे एवं व्याख्याताः– "आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन। महे रणाय चक्षसे॥' – गायत्रं छन्दः। अब्दैवतं सूक्तम्। त्वाष्ट्रस्त्रिशिरा अपश्यदम्बरीषो वा सिन्धुद्वीपः। मार्जनादौ विनियोगः। मय इति सुखनाम। ऊर्गित्यन्ननाम। तेनेह सकलं भोग्यं लक्ष्यम्। हे आपः, हिर्यस्मादर्थे, यस्मात् यूयं मयोभुवः सुखस्य भावयित्र्यः स्थ भवथ, तस्मात् ताः एवंविशिष्टा भवत्यः कर्मभूतान् नः अस्मान् दधातन धारयत। 'तप्तनप्तनथनाश्च' (पासू. ७।१।४५) इति तनादेशः। किमर्थं दधातन? ऊर्जे अन्नाद्युपभोगाय। एवं भोगार्थमभ्यर्थ्य अपवर्गार्थमभ्यर्थयते– महे रणाय चक्षसे। महे महते। परब्रह्मणोऽन्यस्य महत्त्वमापेक्षिकम्, ब्रह्मण एव तु तात्त्विकं परममहत्त्वमिति ब्रह्मैव महच्छब्देनोच्यते। दधातनेत्यनुषङ्गः। कीदृशाय महते? रणाय रमणीयाय नित्यानन्दचैतन्यरूपाय, तथा चक्षसे दर्शनीयाय योगिनां ध्यानजपप्रत्यक्षविषयायेत्यर्थः। तेन दर्शनयोग्याय नित्यानन्दचैतन्यस्वभावाय महते ब्रह्मणे ब्रह्मप्राप्तये अस्मान् धारयतेति वाक्यार्थः। 'यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः॥' – अपामाधारभेदेन शिव–शिवतर–शिवतमा रसाः सन्ति। अथवा अपां रसः परब्रह्मरूपः शिवतमः सुखतमः मतः। यथायोग्यं त्रैवर्णिकैरभ्यर्थ्यते– हे आपः, युष्माकं यः सुखतमो रसस्तमस्मान् भाजयत भोजयत प्रापयत वा। नः अस्माकम् (? तस्य रसस्य)। द्वितीयार्थे च व्यत्ययेन षष्ठी। अंशापेक्षिणी वा यथा(? अवयवा)वयविसंबन्धे। शिवतमरसांशभागिनोऽस्मान् विधत्तेत्यर्थः। भोगार्थिनां क्षीरादिरसप्राप्तयेऽभ्यर्थना, मुमुक्षूणां तु परब्रह्मस्वरूपलाभाय। किंवद्भाजयतेत्याह– उशतीरिव मातरः। 'वश कान्तौ'। यथा मातरो बालापत्यकानां वृद्धिं कामयमाना वात्सल्यातिशयात् स्तनपानादिदानेन स्वापत्यकान् शिवतमं क्षीरादिरसं भोजयन्ति तद्वत्। 'तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः॥' – यस्येति व्यत्ययेन कर्मणि षष्ठी। हे आपः, यं रसं प्राणिषु जिन्वथ। 'जि जये'। लट्। व्यत्ययेन श्नुः। ततः शप्। बाहुल्कात् क्वचित् द्वि-

विकरणादिता । 'हुश्नुवोः सार्वधातुके' (पासू. ६।४।८७) इति यणादेशः । अनेकार्था धातवः । तेनायमर्थः– जयथ उपचिनुथ वा । किमर्थम्? क्षयाय । 'क्षि निवासगत्योः' । भूतानां निवासाय स्थितये गमनाय च नानारूपकर्मोपभोगार्थचेष्टायै ज्ञानाय च । तस्मै अरं गमाम वः । 'गत्यर्थकर्मणि०' (पासू. २।३।१२) इति कर्मणि चतुर्थी । तं युष्माकं संबन्धिनं रसं तूर्णम् अलं पर्याप्तं वा कृत्वा गच्छेम जीवनार्थमासादयाम आशास्महे इति भोगासक्तैरदम्य आशास्यते । मुमुक्षभिप्रायेण त्वित्थं योजना– हे आपः, यस्य परमात्मनः क्षयाय नित्यानन्दद्वारेणानुज्ञानाय जिन्वथ यतध्वम् । तं युष्माकमेव संबन्धिनं परं स्वभावं वयं युष्मत्प्रसादात् पूर्णं पर्याप्तं वा कृत्वा गच्छेम जानीयाम प्राप्नुयाम च । मोक्षप्राप्तिरस्माकमस्त्वित्याशास्महे इत्यर्थः । आपो जनयथा च नः । यस्मात् युष्मत्प्रसादादेवमाशास्महे तस्मात् अस्मान् मोक्षप्राप्तियोग्यान् जनयध्वं कुरुध्वम् । महानुभावत्वादेकैव च सर्वत्र देवता ब्रह्मरूपा आदित्यरूपा वा श्रूयते । गमामेति यद्यप्याशीर्लिङः 'लिङाशिषि' (पासू. ३।४।११६) इत्यार्धधातुकत्वम्, तथापि 'छन्दस्युभयथा' (पासू. ३।४।११७) इति सार्वधातुकत्वमप्यस्तीति शपः संबन्धः । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति छत्वाभावः । एवमन्यत्राप्यनुसर्तव्यम्" । 'हिरण्यवर्णाः' इति प्रथममन्त्रस्य व्याख्यानं कन्यादानप्रकरणे (सं. का. पृ. २०२१) द्रष्टव्यम् । तथा चातुर्होतृकीदीक्षाप्रकरणे (सं. का. पृ. ३४३१) देवपालभाष्यगतं 'व्याख्याताः' इति शब्दमाश्रित्य विहिता टिप्पण्यप्यत्रानुसंधेया । "हिरण्यवर्णाः... सविता पुनातु ॥' – हिरण्यवर्णाः, शुद्धाः, शुचित्वात्पवित्रत्वापादिकाः आपः अवद्यम् अवदानार्हं खण्डनयोग्यं पापं त्यक्त्वा विचक्रमुः विविधं क्रान्ताः भूर्लोकमागताः । शतग्रहणमतिबहुत्वोपलक्षणम् । पवित्रा इति लिङ्गव्यत्ययः । अतिविततानि सुभूयांसि च पवित्रीकरणानि रूपाणि आसां यस्मात् तस्मात् आसामधिपतिः सविता ताभिः अद्भिः मां पुनातु । 'शं न आपो धन्वन्याः शं नः सन्त्वनूप्याः । शं नः समुद्रिया आपः शमु नः सन्तु कूप्याः ॥' – अब्दैवत्या । अनुष्टुप् । सोमपुत्रस्याध्वरस्याऽऽर्षम् । धन्वनि मरौ जङ्गले भवा धन्वन्याः । एवम् अनूपे जलस्राविणि देशे भवा अनूप्याः । तथा समुद्रे भवाः समुद्रियाः । कूपे भवाः कूप्याः । ताः सर्वाः नः अस्माकं सुखाय भवन्त्वित्यर्थः । शमु न इत्युकारो निपातः पादपूरणार्थः । 'आपो अस्मान्मातरः सूदयन्तु घृतेन मा घृतप्वः पुनन्तु । विश्वं हि रिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरापूत एमि ॥' – त्रिष्टुप् । ऋषिरनन्तरोक्तः । एषैव देवता च । आपः मातरः जगतां निर्मात्र्यः । अस्मान् इति षष्ठ्यर्थे द्वितीया । अस्माकं रिप्रं पापं घृतेन सारेण सूदयन्तु नाशयन्तु । रिप्रनाशनेन च मां घृतेन पुनन्तु पवित्रीकुर्वन्तु । अस्माकं पापं नाशयन्त्वित्येतत्कियद्वा चित्रम्? यतः विश्वं सर्वं जगत्त्रयगतमपि पापं प्रवहन्ति प्रवाहयन्ति अपसारि(? सारयि)तुं शक्नुवन्ति । ता हि देवीः देव्यः दानद्योतनादिगुणयुक्ताः । उदिदाभ्यः शुचिरापूत एमीति । इदिति पादपूरणार्थे निपातः । उदिति एमीत्यनेन संबध्यते । आभ्यः अद्भ्यः आपूतः पवित्रीभूत एव शुचिः उदेमि आगच्छामि स्वर्गापवर्गमाप्नुवानीत्यर्थः" इति ।

' हिरण्यवर्णाः ' इति शाखान्तरीयत्वात् $ समस्ताः

$ अत्र बहुवचनं प्रयुक्तम्, सूत्रे तु द्वावेव मन्त्रौ समस्तौ पठिताविति विसंगतिः । अस्मदादर्शे लवपुरीयमुद्रितपुस्तके पादटिप्पण्यामेकस्मिन् तदीयादर्शपुस्तके 'हिरण्यवर्णा इति चतसृभिः' इति प्रकृतसूत्रे पाठोऽस्तीत्युक्तम्, तथापि चतुर्णां समस्तपाठस्य क्वचिदुपलब्धिर्न निर्दिष्टा । विवाहे (कागृ. १६।५) चातुर्होतृकव्रते च (कागृ. ४३।४) 'हिरण्यवर्णा इति चतसृभिः' इति चत्वारो मन्त्राः प्रतीकगृहीता एव विनियुक्ताः, काठकसंहितायामसन्तोऽपि ते न समस्ताः पठिताः । तत्रासमस्तपाठे हेतुः समस्तपाठस्य पूर्वं कृतत्वमिति सूत्राभिप्रायो यदि कल्प्यते तर्हि प्रथमस्थलेऽत्र तेषां चतुर्णां मन्त्राणामत्रपठितस्य द्वितीयमन्त्रस्य चेति पञ्चानां मन्त्राणां समस्तपाठस्तत्प्रयोजको विनियोगश्चात्र कल्पनीयः । एवं च 'इति चतसृभिः' इति क्वाचित्कः पाठोऽपि न संगच्छते । यदि स पाठः प्रमाणीक्रियते तदा चतुर्णामेवात्र विनियोगः समस्तपाठश्च भवतः, पञ्चमस्य विनियोग एव नास्ति, नतरां समस्तपाठ इति कल्पना समापद्यते । उक्तपुस्तके पादटिप्पण्यामेकस्मिन् तदीयादर्शपुस्तकेऽत्रत्यद्वितीयमन्त्रस्यैव समस्तपाठः, आदर्शान्तरे न कस्यापि समस्तपाठः, पूर्वोक्ते 'इति चतसृभिः' इति सूत्रपाठं दधाने आदर्शे देवपालभाष्ये 'समस्त(? स्तः)सूत्रकृता पठितः' इति पाठोऽस्तीत्यपि पाठान्तराणि निर्दिष्टानि, तान्यपि न संगच्छन्ते । एवं चात्र सूत्रपाठनिर्णयो दुष्करः संजातः । प्रथमखण्डे देवपालेन संध्यावन्दनप्रसङ्गेनोत्सूत्रान् विवाहादिविनियुक्तान् चतुरोऽत्रत्यद्वितीयं चेति पञ्च मन्त्रान् व्याख्याय 'एता हिरण्यवर्णाः समाख्याता ऋचः' इत्यु-

सूत्रकृता पठिताः । ¶ देव.

(२) ब्रह्मपरिहितं प्रपाद्य केशवापात् । ब्रह्मो गोदानम्, तत्र परिहितं परिभितम् । तत्र (? तत्र) श्मश्रुलोमनखम् अभिसंहार्य वापयित्वा शुद्ध्यर्थं स्नानं कृत्वा ‘आपो हि ष्ठा’ इति तिसृभिः स्नायात् निमज्जेत् । ततो ‘हिरण्यवर्णाः’ इति द्वाभ्यां पुनः स्नायात् । ‘शं न आपो धन्वन्याः’ इति पुनरेव च । आश्व.

## ‘द्यौस्ते पृष्ठम्’ इति छत्रं धारयेत् ॥

ततस्त्रिः स्नातः पवित्रीभूत इदमिदं कुर्यादित्याह– द्यौस्त इति । अत्र सूत्रगणे पाठक्रमादर्थक्रमस्य बलीयस्त्वात् उक्तानुक्तपदार्थानामर्थवशेन क्रमविशेषयोजना कर्तव्या । तथाहि– त्रिः स्नातस्य जलाशयान्नद्यादेरुत्तीर्णस्य चरणप्रक्षालनादयोऽनुक्ताः, सूत्रिताश्च धौतवस्त्रपरिधानादयो यथाक्रमेण ज्ञेयाः । ‘द्यौस्ते पृष्ठम्’ इत्यादिमन्त्रेण छत्रं धारयेत् । ... ‘द्यौस्ते पृष्ठं पृथिवी सधस्थमात्माऽन्तरिक्षं समुद्रो योनिः । विख्याय चक्षुषा त्वमभितिष्ठ पृतन्यतः ॥’ – बृहती । अश्वस्तुतौ विनियुक्ता । इह छत्रस्तुतावपि तुल्या । तत्र द्यौः स्वर्गलोकः पृष्ठं पृष्ठे उपरि । पृथिवी सधस्थं समानस्थानम् । आत्मा अन्तरिक्षम्, छत्रावयविनो महत्त्वस्तुतिः । समुद्रः उदकं योनिः कारणम् । ‘अप्सुयोऽश्वः’ इति संस्तवात् अश्वयोनिः, सर्वस्योदकप्रभवत्वान्नेत्रवस्त्रादेश्छत्रमपि तथा । एवं चेन्महाप्रभावस्त्वमतश्चक्षुषा विख्याय निरीक्ष्य अभितिष्ठ आक्राम अभिभव । कान् ? पृतन्यतः, पृतना सेना, तामिच्छन्ति ये ते पृतन्यन्तः, तान् पृतन्यतः । ‡ देव.

---

क्तम् । निर्णयसागरमुद्रिते भाष्यानुसृतसूत्रपाठसहितदेवपालभाष्यपुस्तके ‘समस्ताः सूत्रकृता पठिताः’ इति भाष्यं पश्यताऽपि संपादकेन न बहूनाम्, नापि द्वयोरेकस्य वा मन्त्रस्य समस्ताक्षरपाठः सूत्रे विनिवेशित इत्याश्चर्यम् ।

¶ ब्राह्म. देवगतम् ।

‡ ब्राह्म., आश्व. देवगतम् ।

## ‘इममग्ने’ इति हिरण्यम् ॥

यथाविभवानुसारेण ‘इममग्ने’ इत्यादिना कटककुण्डलादि हिरण्यम् । ... ‘इममग्न आयुषे वर्चसे कृधि तिग्ममोजो वरुण संशिशाधि । मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथाऽसत् ॥’ – हे अग्ने, इमं सुवर्णालंकारम् आयुषे चिरजीवनाय वर्चसे च दीप्तये कृधि कुरु । हे वरुण, त्वमपि ओजः बलं तिग्मं तीव्रं सम्यक् संपादय । हे अदिते देवमातः, अस्मै स्नातकाय शर्म सुखं यच्छ प्रयच्छ मातेव जननीव । हे विश्वे देवाः सर्वदिवौकसः, जरदष्टिः जराव्याप्तिः यथा येन प्रकारेण असत् भवति तथा कुरुत जराजर्जरितशरीरा यथा संपद्यामहे तथा कुरुतेत्यर्थः । ¶ देव.

## ‘प्रतिष्ठे स्थो देवते मा मा हिंसिष्टम्’ इति वाराह्या उपानहौ प्रतिमुञ्चते ॥

‘प्रतिष्ठे स्थः’ इत्यादिना वाराह्योपानहौ प्रतिमुञ्चते परिधत्ते । वराहशब्दो वराहचर्मणि वर्तते । § वराह-

---

¶ ब्राह्म. देवगतम् ।

§ रभसोक्तिरियम् । तथाहि– ‘तेन निर्वृत्तम्’ (पासू. ४।२।६८, ५।१।७९) इत्याकारके द्वे सूत्रे । उभयत्रापि ‘निर्वृत्तम्’ इत्यत्रान्तर्भावितण्यर्थो वृतिः । प्रथमसूत्रे ‘तेन’ इति कर्तरि तृतीया, द्वितीये करणे । प्रथमसूत्रं देशाधिकारस्थम्, द्वितीयं कालाधिकारस्थम् । एवं स्थिते उपानहोर्देशकालरूपत्वाभावात् चर्मणः कर्तृत्वाभावाच्चोभयोरप्यत्राप्रवृत्तिः । अक्षद्यूतादिगणे वराहशब्दाभावात् ‘निर्वृत्तेऽक्षद्यूतादिभ्यः’ (पासू. ४।४।१९) इति सूत्रमप्यत्र न प्रवर्तते, प्रवृत्तौ वा ठगधिकारस्थत्वात् ठक् स्यात्, नाण् । किंच ‘अणिञोरनार्षयोः०’ इति सूत्रेण गोत्रापत्यार्थकयोरेवाणिञोः ष्यङादेशो विहितः, न निर्वृत्तार्थकाणः । नापि प्रतिज्ञाहान्याऽपत्यार्थाङ्गीकरणमपि युज्यते । न हि चर्मणोऽनन्तरापत्यमपि संभवति, नतरां गोत्रम् । किंच अर्थांश इव प्रत्ययांशेऽपि प्रतिज्ञाहानिरापद्यते, वराहशब्दादणं बाधित्वा ‘अत इञ्’ इत्यनेनेञः प्रवृत्तेः । तस्मात् “वराहस्याऽवयवो वाराहं चर्म । ‘अवयवे च प्राण्योषधिवृक्षेभ्यः’ इत्यनेनाण् । तत् अनयोरस्ति इति वाराह्यौ । ‘अन्येभ्योऽपि दृश्यते’ (वा. ५।२।१२०) इति वार्तिकेन यप् । ततः कर्मधारयः ।” इत्येवमन्यथा वा यथासंभवं व्युत्पादनं

चर्मणा निर्वृत्त इत्यण् । तस्य 'अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे' (पासू. ४।१।७८) इति ष्यङ् । 'यङश्चाप्' (पासू. ४।१।७४) । वाराह्ये च ते उपानहौ वाराह्योपानहौ । वराहः सूकरः । वराहोपानहौ च राजसूयादावर्थवादादिकादवगम्येते । अन्ये तु वाराह्यशब्दं संनिवेशविशिष्टोपानद्वाचकं व्याचक्षते चतुष्कच्छादितवत् । अपरे लक्षणया चर्ममात्रमयत्वं वर्णयन्ति, न हि कश्चिदाचार्यः( ? दार्यः ) सूकरचर्ममय्यावुपानहौ परिदधत् दृश्यते । केचित्तु पठन्ति– वाराह्युपानहाविति । तत्र वाराही उपानहौ इति द्वे पदे । 'छन्दोवत्सूत्राणि भवन्ति' इति प्रथमपदद्विवचनस्य लुक् पूर्वसवर्णादेशो वा 'सुपां सुलुक्पूर्वसवर्ण ०' ( पासू. ७।१।३९ ) इत्यादिना । ... 'प्रतिष्ठे स्थो देवते मा मा हिंसिष्टम्'– हे देवते उपानहौ, सुप्रतिष्ठे स्थः शोभनप्रस्थाने भवतम् । मा मा हिंसिष्टं मम हिंसां मा कार्ष्टम् । § देव.

†द्विवस्त्रोऽत ऊर्ध्वम् ॥

तस्माच्छोभनं वासो भर्तव्यमिति श्रुतिः ॥

वैणवदण्डधारी नित्यम्...... ॥

¶ [1]विवाहदिवसे कुर्वन् न कुर्यात्तीर्थसेवनम् ।
न च शाकलहोमोऽस्ति तदाऽऽनक्षत्रदर्शनात् ।
रात्रावेवोद्वहेत्कन्यां न स्नानदिवसे दिवा ॥

युक्तम् । अस्मद्गृहीतपाठे तु चर्मपरवराहशब्दाद्विकारार्थेऽणि ङीपि च 'वाराह्यौ' इति पृथक् पदम् ।

§ आवि. देवगतम् ।

† यद्यप्येतदादीनि सूत्राणि स्नातकधर्मविषयकाणि, अत एव काण्डातरे तानि संग्रहीष्यन्ते, तथापि 'मन्त्रिताश्च धौतवस्त्रपरिधानादयः' इति पूर्वदेवपालभाष्यात् वस्त्रपरिधानदण्डधारणयोः स्नानप्रयोगान्तर्भावात् तद्विषयकाणि सूत्राण्यत्र संगृहीतानि । तेषां व्याख्यानं काण्डान्तरे संग्रहीष्यमाणेषु स्नातकधर्मेषु संग्रहीष्यते ।

¶ समावर्तनविधिप्रकरणे ( सं. का. पृ. ३४७६ ) 'विवाहदिवसात्पूर्वम्' इति काठकगृह्यसूत्रवचनमाश्रिता टिप्पण्यत्रानुसंधेया ।

(१) मुक्ता. १२३ काठकगृह्ये ; आन. १६७ कठगृह्ये.

## वाराहगृह्यसूत्रम्

मधुपर्कः, आचार्यार्हणम्, स्नानम्, वस्त्रादिधारणम्

[1]छन्दस्यर्थान् बुद्ध्वा स्नास्यन् गां कारयेत् । आचार्यमर्हयेत् । 'आपो हि ष्ठा' इति तिसृभिः 'हिरण्यवर्णाः शुचयः' इति चतसृभिः स्नात्वा अहते वाससी परिदद्या( ? धा )ति– 'वस्त्य( ? स्व )सि वसुमन्तं मा कुरु । सौवर्चसाय मा तेजसे ब्रह्मवर्चसाय परिददामि' इति । 'विश्वजनस्य च्छायाऽसि' इति च्छत्रं धारयते । मालामाबध्नीते– 'यामश्विनौ धारयेतां बृहस्पतिः पुष्करस्रजम् । तां विश्वेदेवैरनुमतां मालामारोपयामि' इति । हिरण्यं बिभृयात् । 'प्रतिष्ठे स्थो देवते द्यावापृथिवी मा मा संताप्तम्' इत्युपानहौ । 'विष्टम्भोऽसि' इति धारयेद्वैणवीं यष्टिं सोदकं च कमण्डलुम् ॥

## आग्निवेश्यगृह्यसूत्रम्

संभारोपकल्पनम्, व्रजगमनम्, अग्निस्थापनम्, गोपचनम्, समिदाधानम्, वपनम्, मेखलाविस्रंसनम्, दन्तधावनम्, स्नानम्, वस्त्रपरिधानादि, होमपूर्वकमणिकुण्डलधारणम्, स्रग्धारणम्, आदर्शावेक्षणम्, अञ्जनदण्डच्छत्रोपानद्धारणम्, चन्द्र-दिगुपस्थानम्, स्नानानुकल्पः, मधुपर्कः, रथादिना गृहगमनम्

[2]वेदमधीत्य स्नास्यन्नुपकल्पयते– एरकां चोपबर्हणं च नापितं च क्षुरं च पालाशीं च समिधं दारूणि चोपस्तरणं वृकलांश्च दन्तधावनं च शीताश्चोष्णाश्चापः सर्वसुरभिपिष्टं चन्दनं चाहतं वासः सान्तरं च प्रावारं बादरमणिं स्वर्णोपहितं सूत्रं च प्रवर्तौ चाऽऽज्यं च दर्वीं च मालां चाऽऽदर्शं चाऽऽञ्जनं च दण्डं च छत्रं चोपानहौ चाऽऽनडुहं चर्म सर्वलोहितमिति । एतेऽस्य संभारा उपक्लृप्ता भवन्ति ॥

(१) वागृ. ९.
(२) आग्निगृ. १।३।१–५.

पुराऽऽदित्यस्योदयाद्व्रजं प्रपद्येत । नैनमेतदहरादित्योऽभितपेत् । तदहःस्नातानां मुखं वा (एष) एतत्तेजसा यशसा तपति । अन्तर्लोम्ना चर्मणा व्रजमभिनिघ्नते तम् । पूर्वार्धे व्रजस्याग्निमुपसमाधायाथाऽऽहरेदेतान् संभारान् सकृदेव सर्वान् 'यत् सह सर्वाणि मानुषाणि' इत्येतस्माद् ब्राह्मणात् । परिस्तीर्योत्तरतः पालाशीं समिधमुपसाद्य दक्षिणतो नापितस्तिष्ठति । आमध्यंदिनं भिक्षां दद्यात् । अपीह गां पचेत् वशा चेत् स्यादत्रैताम् । पालाशीं समिधमाज्येनाक्त्वा मध्यंदिनेऽभ्यादधाति– 'इमं स्तोममर्हते जातवेदसे रथमिव संमहेमा मनीषया । भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव स्वाहा ॥' इति । अथापरेणाग्निमुदीचीप्रतिषेवणामेरकामास्तृणाति । तस्यामुदीचीनशिरा निपद्यते– 'त्र्यायुषं कश्यपस्यागस्त्यस्य त्र्यायुषं जमदग्नेस्त्र्यायुषं यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषम्' इति । उन्द्यमानमनुमन्त्रयते 'शिवा मे भव शंकरा' इति । क्षुरमनुमन्त्रयते– 'क्षुरो नामासि स्वधितिस्ते पिता नमस्ते अस्तु मा मा हिंसीः' इति । उप्यमानमनुमन्त्रयते– 'यत्क्षुरेण वृश्चयसि वप्ता वपसि केशश्मश्रु वर्चया मे मुखं मा म आयुः प्रमोषीः' इति । श्मश्रूण्यग्रे वप्त्वाऽथोपपक्षावथ केशान् यथोपपादमङ्गानि । तद्ध्येषा जरसा पूर्वा आयुषे प्रयान्ति । पूर्वायुषेऽन्नादा भवन्ति । यस्मादेवं विद्वांसो लोमानि वपन्ते तस्मान्नु हेत्यु विद्वान् काममेव लोमानि वापयेत् । कामं नु नखानि निकृत्य लोमानि वापयेत् । स यदि लोमानि वापयिष्यमाणो भवति तानि ब्रह्मचारिणो प्रयच्छन्नाह– 'इमानि प्राचीं हृत्वा गोष्ठे वा दर्भस्तम्बे वा निधत्तात्' इति । तानि स तत्र निदधाति ॥

अथापरेणाग्निं प्रागुपविश्य मेखलां विस्रंसयति– 'इमं विष्यामि वरुणस्य पाशम्' इति । स यस्तत्र रातिः स्यात् तस्मै प्रयच्छन्नाह– 'इमां प्राचीं हृत्वा न्यग्रोधे वौदुम्बरे वा निधत्तात्' इति । तामु स तत्र निदधाति– 'इदमहममुष्यामुष्यायणस्य पाप्मानमपगूहाम्युत्तरस्य द्विषद्भ्यः' इति । वृकलैः प्रधाव्य दन्तान् प्रधावते– 'अन्नाद्याय व्यूहध्वं भगो राजा यमागमत् । स मे मुखं प्रसर्पतु आयुषे च भगाय च ॥' इति । अथोभयीरपः संनिषिञ्चति– 'उष्णासु शीता आनयति देवमानुषस्य व्यावृत्त्यै' इति । तासामञ्जलिना त्रिरभिषिञ्चति– 'आपो हि ष्ठा मयोभुवः' इति तिसृभिः 'हिरण्यवर्णाः शुचयः पावकाः' इति चतसृभिः, 'षोढा विहितो वै पुरुषः' इत्येतस्मात् ब्राह्मणात् । निधायैतद्वासः 'स्वा मा तनूराविश' इति सान्तरं वासः परिधत्ते । अथैतस्य सर्वसुरभिषः( ? भिपिष्टं ) समुदायुत्याञ्जलिना त्रिः परिषिञ्चति– 'नमः शाकञ्जभाभ्यां नमस्ताभ्यो देवताभ्यो या अभिग्राहिणीः' इति । एवं चन्दनस्य । एवमेवात ऊर्ध्वं निधायैतद्वासः 'स्वा मा तनूराविश' इत्यहतं वासः परिधत्ते । एवमासङ्गयमेवमुष्णीषमेवमेवात ऊर्ध्वम् । अथैनं बादरमणिं सुवर्णोपहितं सूत्रे प्रोत्य दर्व्यामादाय दर्वीदण्डसूत्रेण पर्यस्य जुहोति– ॥

'इयमोषधे त्रायमाणा सहमाना सहस्वती । सा मा पितुरिव नामाग्रहं सा मा करोतु सोमवर्चसं करोतु सूर्यवर्चसं ब्रह्मवर्चसिनमन्नादं करोतु स्वाहा ॥' इति । अथैनमुदपात्रे परिप्लावयति– 'विश्वा उत त्वया वयम्' इति । 'अपाशोऽसि' इत्युक्त्वाऽक्ष्णया परिहरति, 'वध्यं हि प्रत्यञ्चं प्रतिमुञ्चन्ति व्यावृत्त्यै' इत्येतस्माद्ब्राह्मणात् । अथैतौ प्रवर्तौ सूत्रे प्रोत्य दर्व्यामाधाय दर्वीदण्डे सूत्रेण पर्यस्य जुहोति– 'आयुष्यं वर्चस्यं

रायस्पोषमुद्भिदम्। इदं हिरण्यं वर्चसे जैत्र्यायाऽऽविशतादिमं रयिं स्वाहा॥' इति। द्वितीयां जुहोति– 'शुनमिवाहं हिरण्यस्य पितुरिव नामाग्रहम्। तं मा करोतु सोमवर्चसं करोतु सूर्यवर्चसं ब्रह्मवर्चसिनमन्नादं करोतु स्वाहा॥' इति। तृतीयां जुहोति– 'उच्चैर्वाजि पृतनासाहं सभासाहं धनंजयम्। सर्वाः समृद्धीर्ऋद्धय हिरण्ये याः समाहिताः स्वाहा॥' इति। चतुर्थीं जुहोति– 'विराजं च स्वराजं च अभिश्रीर्या च नो गृहे। श्री राष्ट्रस्य या मुखे तया मा संसृज स्वाहा॥' इति। पञ्चमीं जुहोति– 'यशो मा कुरु ब्राह्मणेषु यशो राजसु मा कुरु। यशो विश्येषु शूद्रेष्वहमस्मि यशस्तपाः स्वाहा॥' इति। अथैनावुदपात्रे परिप्लावयति– 'विश्वा उत त्वया वयम्' इति। 'अपाशोऽसि' इत्युक्त्वाऽन्यतरं प्रवर्तं प्रक्षाल्य दक्षिणे कर्णे आगूहति–॥

'आयुष्यं वर्चस्यम्' इत्येताभिः पञ्चभिः। सहानुकरोति– 'ऋतुभिस्त्वाऽऽर्तवैः संवत्सरस्य धायसा तैस्त्वा सहानुकरोमि' इति। एवमेवोत्तरम्। 'अपाशोऽसि' इत्युक्त्वाऽक्ष्णयैव स्रजं परिहरति– 'शुभिके शिर आरोह शोभयन्ती मुखं मम। मुखं हि मम शोभय भूयांसं च भगं कुरु॥ यां मे जहार जमदग्निः श्रद्धायै रागायान्यै। इमां तां प्रतिमुञ्चेऽहमायुषे च भगाय च॥' इति। आदर्शे समवेक्षते– 'यन्मे मनः परागतमात्मानमादर्शे परिपश्यति। इदं तत्पुनराददेऽहमायुषे च भगाय च॥' इति। अथाऽऽञ्जनेनाऽऽङ्क्ते– 'यदाञ्जनं त्रैककुदं जातं हिमवत उपरि। तेन मां चाऽऽयुष्यं वर्चस्यं मे अस्तु॥' इति। दण्डमादत्ते– 'सखा मे गोपाय' इति। छत्रमादत्ते– 'द्यौरसि सुपर्णोऽन्तरिक्षान्मा गोपाय' इति। अथोपानहावुपमुञ्चते– 'द्यौरसि' इति दक्षिणाम्, 'पृथिव्यसि' इत्युत्तराम्। दिशामुपनिष्क्रम्य दिशामुपतिष्ठते– 'देवीः षडुर्वीरुरु णः कृणोत विश्वे देवास इह वीरयध्वम्' (इति)। 'मा हास्महि प्रजया मा तनूभिर्मा रधाम द्विषते सोम राजन्' इति चन्द्रमसमुपस्थायैव दिशो यत्र कामयते तदेति॥

[१]इतरत् समावर्तनम्। अथेतरत् तूष्णीमेव तीर्थे स्नात्वोदेति।§ ...... अथास्मै तदहं पुत्रो वा भ्रातरो वाऽन्तेवासी वोपनयेतेयं वा सैव सहते(?)। यदि वा रथं लभते 'रथंतरमसि' इति दक्षिणं चक्रमभिमृशति, 'बृहदसि' इत्युत्तरम्, 'वामदेव्यमसि' इति मध्यमम्। आरुह्य प्रवर्तमानमनुमन्त्रयते– 'अयं वामश्विना रथो मा दुःखे मा सुखे रिषत्' इति। स यदि शब्दं कुर्यात् प्रतिबुध्य यज्ञोपवीतं कृत्वाऽप आचम्येमामभिमृशति– 'मयि धृतिं मयि विधृतिं मयि स्वधृतिं मयि रन्तिं मयि रमतिं मयि पुष्टिं पुष्टिपतिर्दधातु' इति॥

## पारस्करगृह्यसूत्रम्

गुरुपादोपसंग्रहणम्, समिदाधानम्, स्नानम्, मेखलादिविसर्जनम्, आदित्योपस्थानम्, दध्नस्तिलानां वा प्राशनम्, वपनम्, दन्तधावनम्, उद्वर्तनस्नानानुलेपनानि, वस्त्रधारणम्, पुष्पोष्णीषकुण्डलाञ्जनधारणम्, आदर्शावेक्षणम्, छत्रोपानद्दण्डधारणम्

[२]उपसंगृह्य गुरुं समिधोऽभ्याधाय परिश्रितस्योत्तरतः कुशेषु प्रागग्रेषु पुरस्तात् स्थित्वाऽष्टानामुदकुम्भानाम्॥

'ये अप्स्वन्तरग्नयः प्रविष्टा गोह्य उपगोह्यो मयूषो मनोहाऽस्खलो विरुजस्त नूदूषुरिन्द्रियहा

§ अतः परमाचार्यकर्तृकस्नातकमधुपर्कपूजाविषयकः सूत्रग्रन्थो विद्यते, स मधुपर्कप्रकरणे ( सं. का. पृ. १९५८–१९६० ) संगृहीतस्तत्रैव द्रष्टव्यः।

(१) आग्निगृ. १।४।१.

(२) पागृ. २।६।९–१९.

तमिमजहामि यो रोचनस्तमिह गृह्णामि ' इत्येक-स्मादपो गृहीत्वा ॥

तेनाभिषिञ्चते– ' तेन मामभिषिञ्चामि श्रियै यशसे ब्रह्मणे ब्रह्मवर्चसाय ' इति ॥

' येन श्रियमकृणुतां येनावमृशतां सुराम् । येनाक्ष्यावभ्यषिञ्चतां यद्वां तदश्विना यशः ॥ ' इति ॥

' आपो हि ष्ठा ' इति च प्रत्यृचम् ॥

त्रिभिस्तूष्णीमितरैः ॥

( १ ) उपसंगृह्य गुरुमिति गुरोः पादोपसंग्रहणं कृत्वा समिधोऽभ्याधायेति अग्निपरिचरणं कृत्वेत्यर्थः। अतश्च पूर्वं वेदाहुतिहोमः । ' एतदेव व्रतादेशनविसर्गेषु ' इत्युक्तम् । ननु च समिदाधानस्य पश्चात्कस्माद्वेदाहुतयो न भवन्ति ? एवं च सूत्रानन्तर्यमनुगृहीतं भवति । न चेह वेदाहुतीनां क्रमान्तरविधानमस्ति । ' उपसंगृह्य गुरुं समिधोऽभ्या-धाय ' इति च पाठानुग्रहः । नैतदेवम् । वेदाहुतीनां समिदाधानमेव पश्चाद्भवति । एवं हि श्रूयते– ' स यामुपयन्त्समिधमादधाति सा प्रायणीया, यां स्नास्यन्त्सोद-यनीया ' इति । स्नानं चाष्टभिरुदकुम्भैः समिदाधान-समनन्तरमेव भवति । उत्तरतः परिश्रितस्याष्टानामुद-कुम्भानां पुरस्तात् स्थित्वा कुशेषु प्रागग्रेषु ' येऽप्स्वन्तर-ग्नयः प्रविष्टा गोह्य उपगोह्यः ' इत्यनेन मन्त्रेण एकस्मा-दुदकुम्भादपो गृहीत्वा तेनाभिषिञ्चते– ' तेन मामभि-षिञ्चामि ' इत्यनेन मन्त्रेण । अथ द्वितीयेन ' येन श्रिय-मकृणुताम् ' इत्यनेन मन्त्रेण । ' आपो हि ष्ठा ' इति च प्रत्यृचं ¶त्रिभिरुदकुम्भैरभिषिञ्चति । तूष्णीमितरैरुद-कुम्भैरभिषेकः । कभा.

(२) अष्टाभ्य उदकुम्भेभ्योऽपां ग्रहण एक एव मन्त्रः ' येऽप्स्वन्तरग्नयः ' इति । अभिषेचने तु भिद्यते । तृतीयादित्रयात् आपो हि ष्ठादित्यृचेन यथाक्रममभिषेक इतरैस्त्रिभिरुदकुम्भजलैस्तूष्णीमभिषेकः । $ जभा.

( ३ ) अष्टानामुदकुम्भानां दक्षिणोत्तराक्तानाम् अष्ट-संख्याकानाम् अमलजलपूर्णानाम् आम्रादिशुभपल्लव-मुखानाम् । स्थित्वा स्थितिं कृत्वा ऊर्ध्वीभूयेत्यर्थः । ' ये अप्स्वन्तरग्नयः ' इत्यादिना मन्त्रेण ' तमिह गृह्णामि ' इत्यन्तेन । एकस्मात् 'प्रथमातिक्रमे कारणाभावात् ' इति न्यायेन प्रथमात् । ' प्राङ्म्युदङ्ङ्ग्नि च कर्माणि ' इत्यनेन न्यायेन दक्षिणस्य प्रथमत्वम् । अपः जलं दक्षिणहस्तेन गृहीत्वा तेन जलेन अभिषिञ्चति अभ्युक्षति आत्मानं शिरस्तः स्नानकर्ता । तत्र मन्त्रः– ' तेन माम्॰ ' । एवम् एकोदकुम्भजलसाध्यं स्नानमभिधाय इतरसप्तो-दकुम्भजलस्नानमात्रे मन्त्रविशेषाभिधानात् ' येऽप्स्व-न्तरग्नयः' इत्ययमेव सर्वोदकुम्भजलग्रहणे साधारणो मन्त्र इति प्रतीयते । ततः सर्वेभ्यो द्वितीयादिकुम्भेभ्यः प्रत्येकं ' येऽप्स्वन्तः ' इति मन्त्रेण जलमादाय वक्ष्यमाणमन्त्रै-र्यथाक्रममभिषिञ्चते । § हभा.

( ४ ) मन्त्रार्थः– येऽग्नयो गोह्याद्योऽप्सु अन्तः मध्ये प्रविष्टाः स्थिताः इन्द्रियहान्ताः अष्टौ तान् अमेध्य-त्वादमङ्गल्यत्वादेताभ्योऽद्भ्यः सकाशात् अग्नीन् विज-हामि पृथक्करोमि । यश्च रोचनोऽग्निर्मेध्यत्वान्मङ्गल्य-त्वात्प्रीतिकारित्वाच्च तम् इह अप्सु विषये गृह्णामि स्वीकरोमि । यतः अद्भ्योऽग्निरुत्पद्यते । संग्निवत आच्छादयत इति गोह्यः । उपगोह्यः अङ्गतापकः । मयूः जन्तुर्हिंसकः । मनस उत्साहं हन्तीति मनोहा । अस्खलः प्रध्वंसी अजीर्णकृत् । विविधतया रुजति पीडयतीति विरुजः । तनूं शरीरं दूषयति विकृतिं नयति इति तनू-दूषुः । इन्द्रियाणि हन्तीति इन्द्रियहा । अभिषेक-मन्त्रार्थः– तेन उदकेन माम् इममात्मानम् अभि-षिञ्चामि । किमर्थम् ? श्रियै संपत्त्यर्थे यशसे कीर्त्यै ब्रह्मणे ब्रह्मवर्चसाय यागाध्यापनोत्कृष्टतेजसे । ... मन्त्रार्थः– हे अश्विनौ, येन जलप्रभावेण भवन्तौ सुराणां श्रियं संपदं शोभां वा अकृणुतां कृतवन्तौ, येन च सुराणाम् ( ? राम् ) अमृतम् अवमृशतां प्राप्तवन्तौ । अटोऽदर्शनं छान्दसम् । येन जलेन अक्षौ( ? क्ष्यौ ) उपमन्योरक्षिणी

¶ विश्वनाथभाष्यगता टिप्पण्यत्रानुसंधेया ।

$ शेषं कभावत् ।

§ शेषं कभावत् ।

अभ्यषिञ्चताम् अभिषिक्तवन्तौ, यां युवयोः यदेवंभूतं यशस्तदेतत्, जलाभिषेकेण ममाप्यस्त्विति शेषः ।
† गभा.

(५) कथं स्नायादित्यत आह– उपसंगृह्य गुरुम् । वैश्वदेवपूर्वमाभ्युदयिकं श्राद्धं समाप्याभिलषितं वरं गुरवे दत्त्वोपसंगृह्य । उपसंग्रहणं तु दक्षिणोत्तरकराभ्यां गुरोर्दक्षिणोत्तरौ चरणौ स्पृष्ट्वा शिरसा चरणयोः स्पर्शनम् । कर्माकाङ्क्षायामुक्तम्– गुरुमिति । ततः 'स्नास्यामि' इति गुरोरनुज्ञाप्रार्थनम्, 'गुरुणाऽनुज्ञातः' इत्युक्तेः । 'स्नाहि' इति गुरोरनुज्ञादानम् । समिधोऽभ्याधाय । ततः 'पाणिनाऽग्निं परिसमूहति' इत्यारभ्य 'मेधामश्विनौ देवावाधत्तां पुष्करस्रजौ' (पागृ. २।४) इत्यन्तं समग्रकण्डिकोक्तमग्निपरिचरणम् । एतच्च समावर्तनमुपक्रम्य विधीयमानत्वात् समावर्तनाङ्गम् । तेन ब्रह्मचर्यकालीनाग्निपरिचर्यातः पृथक् । समिधामाधानस्य प्राधान्यं द्योतयितुं समिधोऽभ्याधायेत्युक्तम् । अनेन च वेदाध्ययनव्रतानुष्ठानोपेता ब्रह्मचर्यपरिसमाप्तिः, 'यां स्नास्यन्त्सोदयनीया' इति श्रुतेः । 'परि ... सायेति' । अग्नेः कटवस्त्रादिना वेष्टनेनाप्सु दीक्षावत्परिमितकरणम् । तस्योत्तरतः प्रागग्रास्तृतेषु कुशेषु स्थित्वा । धात्वर्थस्य(? धातोः) (गतिनिवृत्त्यर्थस्य ?) गतिनिवृत्त्यर्थतया तिष्ठतः स्थितिर्लभ्यते । ऐन्द्याग्नेय्यादिषु ईशानीपर्यन्तं प्रादक्षिण्येन स्थापितानामष्टानामुदकुम्भानां मध्ये स्वापेक्षया पुरस्तात् प्राच्यां वर्तमानात् एकस्मादुदकुम्भात् 'येऽप्स्वन्तरग्नयः प्रविष्टाः' इत्यारभ्य 'यो रोचनस्तमिह गृह्णामि' इत्यन्तेन मन्त्रेण ¶प्राक्पदशक्यस्य सर्वसंबन्धिकतया दिगन्तरस्यपदार्थनिरूप्यतया प्रागादीशानान्तासु दिक्षु प्रादक्षिण्येन कलशस्थापनं लभ्यते । न चैवं सत्येकपदव्यर्थतेति वाच्यम्, तस्य स्वरूपोपस्थापनतात्पर्यकत्वात् । अन्ययैकनिरूप्याणामनेकेषां प्रागादिव्यवहारानापादकतापत्तेरिति प्रतीमः ।

† शेषं ह्यभावत् ।

¶ प्रागर्थकं पदं प्राक्पदं पुरस्तादिति पदमित्यर्थ इति कथंचित् संगमनीयम् ।

'येन ... यशः इति' । पुनः 'येऽप्स्वन्तरग्नयः' इत्याग्नेय्यां स्थिताद्द्वितीयादुदकुम्भादुदकं गृहीत्वा 'येन श्रियमकृणुताम्' (इत्यारभ्य) 'यशः' इत्यन्तेन मन्त्रेण पूर्ववदात्मानं बटुरभिषिञ्चते । 'आपो हि ष्ठेतिप्रत्यृचं ‡त्रिभिः' । ततः याम्यनैर्ऋत्यवारुणीदिक्स्थैस्त्रिभिः कलशैः कलशस्थजलैः 'आपो हि ष्ठा, यो वः, तस्मा अरङ्गम्' इति त्रिभिः(? तिसृभिः) ऋग्भिः 'येऽप्स्वन्तरग्नयः' इति जलमादायाऽऽत्मानमभिषिञ्चते । तूष्णीमितरैः । इतरैर्वायव्यां कौबेर्यामीशान्यां च स्थितैस्तत्रस्थजलैस्तूष्णीमभिषेकः । जलादानमभिषेकश्च तूष्णीमितरकलशस्थजलाद्भवतीत्यर्थः । विभा.

**'उदुत्तमम्' इति मेखलामुन्मुच्य दण्डं निधाय वासोऽन्यत्परिधायाऽऽदित्यमुपतिष्ठते–॥**

**'उद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्प्रातर्यावभिरस्थाद्दशसनिरसि दशसनिं मा कुर्वाविदन्मा गमय । उद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थाद्दिवा यावभिरस्थाच्छतसनिरसि शतसनिं मा**

‡ कर्को विश्वनाथश्चात्र 'त्रिभिः' इति पदस्य पूर्वसूत्रशेषत्वं प्रतिपद्येते इति प्रतीयते, तन्न युज्यते, 'प्रत्यृचम्' इति ऋक्शब्दप्रयोगात् 'ऋग्भिः' इति विशेष्यस्यैवाध्याहर्तुं युक्तत्वेन 'तिसृभिः' इति स्त्रीलिङ्गशब्दस्यैव प्रयोक्तव्यत्वात् । न च 'उदकुम्भैः' इति विशेष्यमध्याहर्तुं शक्यम्, 'प्रत्यृचं त्रिभिः' इत्यस्य 'एकैकया त्रिभिरुदकुम्भैरिति मिलित्वा नवभिरुदकुम्भैः' इत्यर्थे पर्यवसानेन कुम्भसंख्याविरोधात् । 'ऋग्भिः' इति विशेष्याध्याहारे तु 'प्रत्यृचम्' इति ऋक्पदेन 'ऋग्भिः' इत्यृक्पदबोधितमन्त्रव्यक्तीनामेव बोधनात् 'प्रत्यृचं तिसृभिः' इत्यस्य 'ऋचां कर्मकरणत्वं न तिसृषु ऋक्षु व्यासज्यवृत्ति, अपि तु प्रत्येकपर्याप्तम्' इत्यर्थे पर्यवसानात् 'मधुमतीभिर्वा प्रत्यृचम्' (पागृ. १।३।२१) इत्यादौ तादृशार्थस्य प्रसिद्धेश्च न कश्चिद्विरोधः । अतो न 'त्रिभिः' इति पूर्वसूत्रशेषः । उत्तरसूत्रादित्वं तु युज्यते, तत्र 'उदकुम्भैः' इतिविशेष्याध्याहारस्य निर्विवादत्वात् । 'आपो हि ष्ठा' इत्याद्यृचां त्रित्वं तु प्रागुपरिष्टाच्चेति मिलित्वा पञ्चानामुदकुम्भानामुपयुक्तत्वेनावशिष्टानां त्रित्वात्, 'आपो हि ष्ठेति तिसृभिः' इति तत्र तत्र तिसृणामेव विनियोगाच्च सुगमम् ।

कुर्वाविदन्मा गमय । उद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्प्रातर्यावभिरस्थाद्दशसनिरसि दशसनिं मा कुर्वाविदन्मा गमय ' इति ॥

( १ ) उपतिष्ठते ' उद्यन् भ्राजभृष्णुः ' इत्यनेन मन्त्रेण । कभा.

( २ ) ' उदुत्तमम् ' इतिमन्त्रेण मेखलामुन्मुच्य ऊर्ध्वं कण्ठदेशेनावतार्य दण्डं निधाय भूमौ स्थापयित्वा । अनेनावसरप्राप्तं दण्डाजिनयोर्निधानं लक्ष्यते तूष्णीम् । वस्त्रान्तरं भूत्वा सूर्यमुपतिष्ठते । † जभा.

( ३ ) मेखलानिधानोत्तरं दण्डाजिनयोर्निधानम् । तूष्णीमिति जयरामकारिकाकारौ । मन्त्रार्थः– हे सूर्य, यतो भवान् प्रातःसवने यावभिः गमनशीलैः ऋष्यादिसप्तकगणैः सेवितः अस्थात् तिष्ठति, यथेन्द्रो मरुद्भिः अस्थात् तिष्ठति तद्वत् । किंभूतः ? उद्यन् उद्गच्छन्, भ्राजभृष्णुः स्वप्रभयाऽन्यतेजउद्भासकः, आविदन् सर्वं शुभाशुभं जानन् । किंच, यथा च त्वं प्रातःसवने दशसनिः दशसंख्याकानां गवादीनां सनिः दाता । ' षणु दाने ' । अतो मामपि दशसनिं दशगुणदक्षिणादिदातारं कुरु । मा मां विदन् वेदयन् ज्ञापयन् गमय प्रापय । प्रतिष्ठामिति शेषः । एवमुत्तरत्रापि व्याख्येयम् । ¶ गभा.

दधि तिलान्वा प्राश्य जटालोमनखानि संहृत्यौदुम्बरेण दन्तान्धावेत– ' अन्नाद्याय व्यूहध्वं सोमो राजाऽयमागमत् । स मे मुखं प्रमार्क्ष्यते यशसा च भगेन च ॥ ' इति ॥

( १ ) (' अन्नाद्याय व्यूहध्वम् ' इत्यनेन मन्त्रेण ?) दधितिलयोरन्यतरप्राशनं कृत्वा जटालोमनखानां संहारं च, औदुम्बरेण दन्तान्प्रक्षालयेत्– ' अन्नाद्याय व्यूहध्वम् ' इत्यनेन मन्त्रेण । $ कभा.

( २ ) ततो दधितिलानामन्यतरं प्राश्य अशित्वा जटाश्च लोमानि च नखानि च जटालोमनखानि, तानि संहृत्य संहार्य वापयित्वेत्यर्थः । अत्र संहृत्येति णिचो लोपश्छान्दसः, स्वयं संहर्तुमशक्यत्वात् । औदुम्बरेण द्वादशाङ्गुलसंमितेन कनिष्ठिकाग्रवत्स्थूलेन उदुम्बरकाष्ठेन ' अन्नाद्याय व्यूहध्वम् ' इति मन्त्रेण दन्तान् धावेत प्रक्षालयेत् ब्राह्मणः । दशाङ्गुलेन राजन्यः, अष्टाङ्गुलेन वैश्य इति विशेषः । अत्र जटालोमनखवपननिमित्तादुत्तरत्र पुनः स्नात्वेति पुनःशब्दसामर्थ्याच्च स्नानमापद्यते, अतो वपनानन्तरं स्नानाचमने विधाय दन्तान्प्रक्षालयेदिति सिद्धम् । हभा.

( ३ ) हे दन्ताः, यूयम् अन्नाद्याय अन्नादनाय व्यूहध्वं निर्मला भवत । यतोऽयं राजा सोमः चन्द्रः काष्ठरूपेण आगमत् आगतः । अतः स एव सोमो मे मम मुखं प्रमार्क्ष्यते शोधयिष्यति । केन ? यशसा सत्कीर्त्या भगेन भाग्येन च । दन्तधावनस्य नित्यकाम्यत्वादुभयफलसंबन्ध इति मुरारिः । § गभा.

( ४ ) ततः सूर्योपस्थानानन्तरं दधितिलयोरेकं प्राश्याऽऽचम्य जटालोमनखानि च वापयित्वा स्मृति-( ? स्नान )शुद्धो भूत्वाऽऽचम्य ' आयुर्बलं यशो वर्चः प्रजां पशुवसूनि च । ब्रह्म प्रज्ञां च मेधां च त्वं नो धेहि वनस्पते ॥ ' इति औदुम्बरं दन्तधावनमादाय ' अन्नाद्याय ' इति मन्त्रेण दन्तान् शोधयेत् । विभा.

उत्साद्य पुनः स्नात्वाऽनुलेपनं नासिकयोर्मुखस्य चोपगृह्णीते– ' प्राणापानौ मे तर्पय चक्षुर्मे तर्पय श्रोत्रं मे तर्पय ' इति ॥

( १ ) उत्सादनम् अङ्गोद्वर्तनं कृत्वा पुनः स्नात्वाऽनुलेपनं नासिकयोर्मुखस्य चोपगृह्णीते ' प्राणापानौ मे तर्पय ' इत्यनेन मन्त्रेण । ¶ कभा.

( २ ) उत्साद्य अङ्गोद्वर्तनेन मलमपसार्य पुनः स्नात्वा मलापकर्षस्नानोत्तरं पुनः स्नानं कृत्वा अनुलेपनं चन्दनादि नासिकयोर्मुखस्य च उपगृह्णीते आदत्ते ' प्राणापानौ मे ' इति मन्त्रेण । मुखनासिके चानुलिम्पतीति हरिहरः । पाण्योरवनेजनं निषिच्येति वक्ष्यमाणत्वा-

† हभा., विभा. जभागतम् ।

¶ शेषं जभागतम् ।

$ जभा. कभावत् ।

§ शेषं हभागतम् ।

¶ जभा., हभा. कभावत् ।

दत्र पाणिभ्यामनुलेपनग्रहणम् । मन्त्रार्थः— हे उपलेपनाधिदेवते, मे मम प्राणापानौ वायू तर्पय प्रीणय । तथा मे चक्षुरिन्द्रियम् , तथा मे श्रोत्रं श्रवणेन्द्रियं च तर्पय । गभा.

( ३ ) उत्साद्य घृतोपरक्तसुगन्धिना द्रव्येण शरीरमुद्वर्त्य पुनः भूयः स्नात्वा वारद्वयमाचम्य चन्दनादि पाषाणघृष्टमनुलेपनं नासिकयोर्मुखस्य च समीपे उपग्रहणं- (? गृहीते) 'प्राणापानौ मे तर्पय' (इत्यादिना) 'श्रोत्रं मे तर्पय' इत्यन्तेन । केचित्तु उपग्रहणं लेपनमाहुः । विभा.

**'पितरः शुन्धध्वम्' इति पाण्योरवनेजनं दक्षिणा निषिच्यानुलिप्य जपेत्— 'सुचक्षा अहमक्षीभ्यां भूयासं सुवर्चा मुखेन । सुश्रुत्कर्णाभ्यां भूयासम् ॥' इति ॥**

( १ ) 'पितरः शुन्धध्वम्' इत्येतेन मन्त्रेण पाण्योरवनेजनं क्षालनोदकं दक्षिणाग्रहणात्प्राचीनावीती भूत्वा दद्यात् शुन्धध्वं शोधनम् (?) । † दक्षिणापदं लुप्तसप्तम्यन्तम् । तेन दक्षिणस्यां दिशि निषिच्य क्षिप्त्वा चन्दनेनाऽऽत्मानमनुलिप्य जपेत् 'सुचक्षा अहम्' इति मन्त्रम् । जभा.

( २ ) ततः पाण्योरवनेजनं हस्तयोः प्रक्षालनमुदकं 'पितरः शुन्धध्वम्' इत्यनेन मन्त्रेण प्राचीनावीती दक्षिणाभिमुखो भूत्वा दक्षिणस्यां दिशि निषिच्य प्रक्षिप्य यज्ञोपवीती भूत्वा पितृकर्मकरणनिमित्तकमुदकस्पर्शं विधाय चन्दनादिना सुगन्धिद्रव्येण गात्राण्यनुलिप्य 'सुचक्षा अहमक्षीभ्याम्' इत्यादि 'भूयासम्' इत्यन्तं मन्त्रं जपेत् । हभा.

( ३ ) मन्त्रार्थः— हे सवितः , अहम् अक्षीभ्यां नेत्राभ्यां कृत्वा सुचक्षाः सुदर्शनो भूयासं भवेयम् । तथा मुखेन सुवर्चाः सुतेजाः । भूयासमिति पूर्वत्र संबन्धः । तथा कर्णाभ्यां सुश्रुत् सुश्रवणः भूयासम् । ‡ गभा.

† 'दक्षिणादाच्' (पासू. ५।३।३६) इत्याच्प्रत्ययान्तत्वेनोपपत्तौ सप्तमीलुक्कल्पना न साध्वी ।

‡ शेषं हभागतम् ।

( ४ ) अनुलिप्य तदेव निषिक्तं भूजलं स्वगात्रेऽनुलिप्य । ‡ विभा.

**[१]अहतं वासो धौतं वाऽमौत्रेणाऽऽच्छादयीत— 'परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि । शतं च जीवामि शरदः पुरूची रायस्पोषमभिसंव्ययिष्ये ॥' इति ॥**

( १ ) अहतं नवीनं सदशमनुपहतं वा । तत्रापि अमौत्रेण, मौत्रः रजकः, तद्व्यतिरिक्तेन धौतं वा आच्छादयीत परिदधीत 'परिधास्यै' इति मन्त्रेण । ¶ जभा.

( २ ) ततः अहतं नवं सदशं पवित्रं वासः वसनम् आच्छादयीत परिदधीत, तदलाभे अमौत्रेण अरजकेन धौतं क्षालितम् , 'परिधास्यै' इत्यादिना 'अभिसंव्ययिष्ये' इत्यन्तेन मन्त्रेण । हभा.

( ३ ) मन्त्रार्थः— हे वासोदेवते, परिधास्यै अनेकशुभवस्त्रपरिधानाय तथा यशोधास्यै स्तुत्यै दीर्घायुत्वाय दीर्घजीवनाय च इदं वासः संव्ययिष्ये परिधास्ये । किंभूतः ? वासोदेवतानुग्रहेण जरदष्टिरस्मि वृद्धत्वव्याप्यायुर्भवामि । पुरूचीः पुम्भिर्बहुभिः पुत्रधनादिभिश्च संयोगोऽस्ति यस्य सः । 'उच समवाये' । किंभूतं वासः ? रायस्पोषं धनादिपोषणं पुष्टिकरणम् । किंच, एतत्संबन्धेनाहं शतं शरदो वर्षाणि जीवामि । § गभा.

**[२]अथोत्तरीयम्— 'यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती । यशो भगश्च माऽविन्दद्यशो मा प्रतिपद्यताम् ॥' इति ॥**

( १ ) अथोत्तरीयम् 'यशसा मा द्यावापृथिवी' इत्यनेन मन्त्रेणाऽऽच्छादयीत । † कभा.

‡ शेषं हभागतम् ।

¶ विभा. जभावत् ।

§ शेषं हभावत् ।

† जभा. , विभा. कभावत् ।

(१) पागृ. २।६।२० ; संदी. ४ ( परिधास्यै...... इति० ).

(२) पागृ. २।६।२१.

(२) अथ अन्तरीयपरिधानानन्तरं तादृशमेवोत्तरीयं वासः ' यशसा मा ' इत्यादि ' यशो मा प्रतिपद्यताम् ' इत्यन्तेन मन्त्रेण आच्छादयीतेति गतेनाऽऽख्यातेन संबन्धः । हभा.

(३) मन्त्रार्थः– हे वासोदेवते, द्यावापृथिवी द्यावाभूमी यशसा युक्तौ मा माम् अविन्दत् विन्दतां प्राप्नुतामिति यावत् । ' विद्लृ लाभे ' धातुः । विभक्तिवचनव्यत्ययेनान्वयः । तथा इन्द्राबृहस्पती अपि यशसा युक्तौ मा अविन्दत्, तथा भगः सूर्योऽपि यशसा अविन्दत् । तथैतैः संपादितं यशो मा मां प्रतिपद्यतां मयि सर्वदा तिष्ठत्वित्यर्थः । § गभा.

'एकं चेत्पूर्वस्योत्तरवर्गेण प्रच्छादयीत ॥

(१) एकं चेद्वासो भवति तस्यैवोत्तरवर्गेण प्रच्छादयीत । तत्रापि मन्त्रो भवति, क्रियान्तरत्वात् । कभा.

(२) एकं चेत्तत्रापि परिधानमन्त्रं पठित्वा वस्त्रार्धे परिधाय द्विराचम्य उत्तरार्धं गृहीत्वा उत्तरीयमन्त्रं पठित्वोत्तरीयं कृत्वा पुनर्द्विराचामेदित्यर्थः । एतन्मन्त्रद्वयं स्वकर्तृकपरिधाने बोद्धव्यम् । परकर्तृके तु परिधापने ' येनेन्द्राय ' इति मन्त्रान्तरमित्यविरोधः । ‡ जभा.

'सुमनसः प्रतिगृह्णाति– ' या आहरज्जमदग्निः श्रद्धायै मेधायै कामायेन्द्रियाय । ता अहं प्रतिगृह्णामि यशसा च भगेन च ॥ ' इति ॥

(१) सुमनसः पुष्पाणि ' या आहरत् ' इति मन्त्रेण । जभा.

(२) प्रतिगृह्णाति अन्येन दत्तान्यादत्ते । † हभा.

(३) सुमनसः पुष्पाणि । प्रतीत्युपसर्गसामर्थ्यात् गुरुणा समर्पिताः सुमनसः प्रतिगृह्णाति ' या आहरत् ' इति मन्त्रेण । याः सुमनसः पुष्पाणि जमदग्निः प्रजापतिः श्रद्धाद्यर्थमाहरत् आददौ, ताः सुमनसः यशसा कीर्त्या भगेन ऐश्वर्येण च सहाहं प्रतिगृह्णामि श्रद्धाद्यर्थम् । तत्र श्रद्धा धर्मादरः । मेधा धारणाशक्तिः । कामः अभिलाषपूर्तिः । इन्द्रियं तत्पाटवम् । गभा.

अथाबध्नीते– 'यद्यशोऽप्सरसामिन्द्रश्चकार विपुलं पृथु । तेन संग्रथिताः सुमनस आबध्नामि यशो मयि ॥ ' इति ॥

(१) अथेति सुमनसां ग्रहणानन्तरं तानि स्वशिरस्यबध्नाति ' यद्यशोऽप्सरसाम् ' इति मन्त्रेण । § जभा.

(२) मन्त्रार्थः– हे सुमनसः, इन्द्रो देवः अप्सरसाम् उर्वश्यादीनां कुसुमाबन्धेन यत् यशः सर्वजनप्रियत्वं चकार कृतवान् तेन यशसा संग्रथिताः, युष्मान् आबध्नामि चूडायाम् । किंभूतं यशः ? विपुलं विशालम् । पृथु संततं दीर्घम् । तद्यशो मयि विषये तिष्ठत्वित्यर्थः । † गभा.

उष्णीषेण शिरो वेष्टयते– ' युवा सुवासाः ' इति ॥

उष्णीषेण शिरोवेष्टनवस्त्रेण शिरो वेष्टयते ' युवा सुवासाः ' इति मन्त्रेण । $ जभा.

' अलंकरणमसि भूयोऽलंकरणं भूयात् ' इति कर्णवेष्टकौ ॥

(१) कर्णवेष्टकौ कुण्डले कर्णयोरामुञ्चति ' अलंकरणमसि ' इति मन्त्रेण । जभा.

(२) ' अलंकरणमसि ' इति मन्त्रेण दक्षिणोत्तरयोः कर्णयोर्वेष्टकौ भूषणे ‡प्रतिमन्त्रं प्रतिमुञ्चते परिधत्ते । हभा.

(३) कर्णवेष्टकौ कुण्डले दक्षिणसव्यकर्णयोरामुञ्चति– ' अलंकरणमसि ' इति मन्त्रावृत्त्या । मन्त्रार्थः– हे

---

§ शेषं हभावत् ।

‡ हभा., गभा. जभावत् । विभा. जभागतम् ।

† शेषं जभावत् । विभा. हभावत् ।

(१) पागृ. २।६।२२ ; संबी. ९.

(२) पागृ. २।६।२३–३१.

§ हभा., विभा. जभावत् ।

† शेषं जभावत् ।

$ हभा., गभा., विभा. जभावत् ।

‡ मन्त्रस्यैकत्वेऽप्यावृत्तिसंपादितव्यक्तिद्वयाभिप्रायेण प्रतिमन्त्रमित्युक्तमिति कल्प्यते । द्वितीयकर्णवेष्टकधारणे मन्त्रावृत्तिः कार्येत्यर्थः ।

कुण्डलदेवते, त्वमलंकरणम् अलंकारशोभा असि । अतस्त्वयाऽलंकृतस्य मम भूयः बहुवारम् अलंकरणं भूयात् अस्तु । गभा.

( ४ ) कर्णौ श्रोत्रे वेष्टयेते याभ्यां तौ सौवर्णौ 'अलंकरणमसि' इति मन्त्रेण प्रतिमुञ्चते कर्णयोः । मन्त्रावृत्तिः । विभा.

**'वृत्रस्य' इत्यङ्क्तेऽक्षिणी ॥**

( १ ) 'वृत्रस्य' इत्यादिना 'चक्षुर्मे देहि' इत्यन्तेन मन्त्रेण यथाक्रमं दक्षिणवामे मन्त्रावृत्त्याऽक्षिणी अङ्क्ते सौवीराञ्जनेन संस्करोति । हभा.

( २ ) 'वृत्रस्य' इत्यादि 'चक्षुर्मे देहि' इत्यन्तेन मन्त्रेण कज्जलेन अक्षिणी अङ्क्ते संस्करोति । सौवीराञ्जनेनेति हरिहरः । अत्र च सव्यं नेत्रमङ्क्त्वा ततो दक्षिणाञ्जनं मन्त्रावृत्त्या । तथा च दीक्षाप्रकरणे लिङ्गम्– 'सव्यं वा अग्रे मानुषः' इति । कारिकायाम्– 'वृत्रस्येत्यक्षिणी अङ्क्तेऽभ्यञ्जनेनाभिनासिकम् । सव्यं प्रथममित्येव श्रूयते बह्वृचश्रुतौ ॥' । हरिहरेण दक्षिणाञ्जनं पूर्वमुक्तम्, तदाशयं न विद्मः । गभा.

( ३ ) 'वृत्रस्यासि' इति मन्त्रेण नेत्रे सौवीराञ्जनेन लौकिकेन वा कज्जलेन अङ्क्ते मन्त्रावृत्त्या अञ्जयति दक्षिणोत्तरे । विभा.

**'रोचिष्णुरसि' इत्यात्मानमादर्शे प्रेक्षते ॥**

( १ ) 'रोचिष्णुरसि' इत्येतावता मन्त्रेण आदर्शे दर्पणे मुखं प्रेक्षते । जभा.

( २ ) आत्मानं मुखप्रभृति शरीरम् । ¶ हभा.

( ३ ) मन्त्रार्थः– रोचिष्णुः प्रकाशकः । † गभा.

**छत्रं प्रतिगृह्णाति– 'बृहस्पतेश्छदिरसि पाप्मनो मामन्तर्धेहि तेजसो यशसो माऽन्तर्धेहि' इति ॥**

( १ ) छत्रम् आतपत्रं 'बृहस्पतेश्छदिरसि' इत्यादिना 'यशसो माऽन्तर्धेहि' इत्यन्तेन मन्त्रेण प्रतिगृह्णाति प्रतिग्रहशब्दसामर्थ्यादन्यत आदत्ते । हभा.

¶ शेषं जभावत् । विभा. हभावत् ।

† शेषं हभावत् ।

( २ ) उपसर्गसामर्थ्याद्गुरुणा दत्तं छत्रम् आतपत्रं 'बृहस्पतेश्छदिरसि' इति मन्त्रेण प्रतिगृह्णाति । मन्त्रार्थः– हे छत्र, त्वं बृहस्पतेः पितामहस्य छदिः घर्मादिनिवर्तकोऽसि प्रथमम् । अतः पाप्मनः निषिद्धाचरणात् माम् अन्तर्धेहि अन्तर्हितं कुरु । तेजसः (यशसः) च सकाशान्माऽन्तर्धेहि मा व्यवहितं कुरु । तद्युक्तं कुर्वित्यर्थः । गभा.

**'प्रतिष्ठे स्थो विश्वतो मा पातम्' इत्युपानहौ प्रतिमुञ्चते ॥**

( १ ) युगपत्, शक्यत्वात् द्विवचनान्तत्वाच्च मन्त्रस्य । जभा.

( २ ) 'प्रतिष्ठे स्थः' इति मन्त्रेणोपानहौ पादयोः प्रतिमुञ्चते परिधत्ते युगपत्, शक्यत्वाद्द्विवचनान्तत्वाच्च मन्त्रस्य । ‡ जभा.

( ३ ) मन्त्रार्थः– हे उपानहौ देवते, युवां प्रतिष्ठे स्थितिहेतू स्थः भवथः । अतः विश्वतः सर्वस्मात्परिभवात् मा मां पातं रक्षतम् । § गभा.

( ४ ) युगपत् परिधातुं शक्यत्वान्नाऽऽवर्तते मन्त्रः । विभा.

**'विश्वाभ्यो मा नाष्ट्राभ्यस्परिपाहि सर्वतः' इति वैणवं दण्डमादत्ते ॥**

( १ ) 'विश्वाभ्यो मा' इत्यादि 'सर्वतः' इत्यन्तेन मन्त्रेण वैणवं वंशमयं दण्डं यष्टिम् आदत्ते गृह्णाति । तत्रोक्तन्यायेन पूर्वदण्डं त्यक्त्वैव । इदमभिषेकप्रभृति दण्डग्रहणान्तं कर्मजातं स्नानकर्ता करोति, नाऽऽचार्यः । हभा.

( २ ) मन्त्रार्थः– हे दण्ड, विश्वाभ्यः सर्वाभ्यः नाष्ट्राभ्यः राक्षसादिभ्यः सर्वावस्थासु मा मां परिपाहि सर्वभावेन रक्ष । † गभा.

( ३ ) अस्मिन्नवसरे गृहीतदण्डे शम्बलं बद्ध्वा व्रजेत्, विवाहायकन्याकार्यगृहे समानीयते समाचारात् । विभा.

‡ हभा. जभावत् ।

§ शेषं जभावत् ।

† शेषं हभावत् ।

## गोभिलगृह्यसूत्रम्

परिवृतस्थले स्नानम्, आदित्योपस्थानम्, मेखलाव-मोचनम्, ब्राह्मणभोजनम्, वपनम्, स्नानालंकरण-वस्त्रपरिधानानि, स्रगुपानद्दण्डधारणम्, सपरिष-त्काचार्यदर्शनम्, मन्त्रजपः, आचार्यकर्तृक-स्नातकार्हणम्, रथपरिक्रमणविधिः

[1]**अथाऽऽप्लवनम् ॥**

( १ ) अथ व्रतानन्तरम् आप्लवने स्नानम्। कुर्या-दिति शेषः। संत. ९३८

( २ ) अथेत्यानन्तर्यार्थम्। व्रतान्तबोधितैन्द्रस्थाली-पाकादिकर्मानन्तरं ब्रह्मचारी आप्लवनं स्नानम्, 'आप्लाव आप्लवः स्नानम्' इत्यमरात्। कुर्यादिति शेषः। मृदुला.

[2]**उत्तरतः पुरस्ताद्वाऽऽचार्यकुलस्य परिवृतं भवति ॥**

( १ ) आचार्यगृहादुत्तरस्यां पूर्वस्यां वा स्नानार्थ-मावृतं स्थानं कुर्यात्। संत. ९३८

(२) तद्विधिविषयेदमाह– उत्तरत इति। आचार्य-कुलस्य गुरुगृहस्य। 'कुलं जनपदे गोत्रे सजातीयगणेऽपि च। भवने च तनौ क्लीबम्' इति मेदिनी। उत्तरतः उत्तरस्यां दिशि। सार्वविभक्तिकस्तसिः। पुरस्तात् पूर्वस्यां वा। परि सर्वतोभावेन वृतम् आवृतम् आच्छा-दितं भवति किञ्चित्स्थानम्। मृदुला.

[3]**तत्र प्रागग्रेषु दर्भेषूदङ्ङाचार्य उपविशति ॥**

तत्र आवृते। उदक् उदङ्मुखः। $ संत. ९३८

[4]**प्राङ्ब्रह्मचार्युदगग्रेषु दर्भेषु ॥**

प्राक् प्राङ्मुखः उपविशतीत्यन्वयः। $ संत. ९३८

[1]**सर्वौषधिविफाण्टाभिरद्भिर्गन्धवतीभिः शीतोष्णाभिराचार्योऽभिषिञ्चेत् ॥**

( १ ) सर्वौषधयश्च 'व्रीहयः शाल्यो मुद्गा गोधूमाः सर्षपास्तिलाः। यवाश्चौषधयः सप्त विपदो घ्नन्ति धारिताः ॥' इति छन्दोगपरिशिष्टोक्ताः। ताभिः सह या आपः विफाण्डाः विपक्वाः उष्णीकृताः ताः सर्वौषधिवि-फाण्डाः, ताभिः गन्धवतीभिः चन्दनादिगन्धद्रव्य-युक्ताभिः शीतोष्णाभिः शीतोदकमिश्रिताभिः इति भट्ट-भाष्यम्। संत. ९३८

( २ ) व्रीह्यादिसर्वौषधीभिः सह या आपो विफा-ण्टिताः विपक्वाः, उष्णीकृता इति यावत्, ताभिः। गन्धवतीभिः सुगन्धिद्रव्यसुवासिताभिः। शीतोष्णाभिः शीतोदकमिश्राभिरुष्णाभिः, यद्वा शीताश्च ता उष्णाश्चेति शीतोष्णाः ताभिः नातिशीताभिर्नाप्यत्युष्णाभिः। अद्भिः जलैः। ब्रह्मचारिणमिति शेषः। सोऽयं पर-मतोपन्यासः। मृदुला.

[2]**स्वयमिव तु ॥**

(१) इवशब्द एवार्थे। स्वयमेव ब्रह्मचारी आत्मान-मभिषिञ्चेत्, आचार्यकर्तृकाभिषेकस्तु परमते। संत. ९३८

(२) स्वमतमभिधीयते– स्वयमिति। तुशब्दात् पक्षो विपरिवर्तते। इवशब्द एवार्थः। स्वयमेव ब्रह्मचार्या-त्मानमभिषिञ्चेत्, न पुनराचार्यः। अत एव वक्ष्यति –'आत्मानमभिषिञ्चति' ( ३।४।१६ ) इति। तस्मादा-चार्योऽभिषिञ्चेदित्येतत्परमतमिति तत्त्वकारादयः। मुरारि-मिश्रास्तु– इवशब्दोऽत्रैवार्थे, तुशब्दो वार्थे। तथा च स्वयमेव वा ब्रह्मचार्यात्मानमभिषिञ्चेत्। मृदुला.

**मन्त्रवर्णो भवति ॥**

( १ ) यतो मन्त्रवर्णो भवति। मन्त्रवर्णः अभिषेक-मन्त्रलिङ्गम्। तच्च 'तेनाहं मामभिषिञ्चामि' इति

$ मृदुला. संतवत्।

(१) गोगृ. ३।४।७ ; संत. ९३८.

(२) गोगृ. ३।४।८ ; संत. ९३८.

(३) गोगृ. ३।४।९ ; संत. ९३८ षूदङ्ङा (षूदगा).

(४) गोगृ. ३।४।१० ; संत ९३८.

(१) गोगृ. ३।४।११ ; संत. ९३८ फाण्टा ( फाण्डा ).

(२) गोगृ. ३।४।१२–१३ ; संत. ९३८.

'तेन मामभिषिञ्चि( ? ञ्च )तम्' इति च ।
संत. ९३८-९३९

(२) अत्र हेतुमाह– मन्त्रवर्ण इति । मन्त्रवर्णः अभिषेकमन्त्रलिङ्गम् । तत्स्वरसादित्यर्थः । तद्यथा– 'तेनाहं मामभिषिञ्चामि' इति 'तेन मामभिषिञ्चतम्' इति च । एवं च द्वितीयपक्षे हेतूपदर्शनात् सूत्रकारसंमतिरपि तत्रैव । अत एव वीरेश्वरोपाध्यायाः स्वपद्धतौ तथैव लिखितवन्तः । वस्तुतस्तु आचार्यो ब्रह्मचारिणमभिषिञ्चति, ब्रह्मचारी वा स्वयमेवाऽऽऽत्मानमभिषिञ्चतीति । तथा च पठन्ति– 'ब्रह्मचारी अनुज्ञातो गुरुणा गुरुरेव वा । सर्वौषधिविमिश्राभिः शीतोष्णाभिः सुगन्धिभिः ॥' इत्येवमादि । मृदुला.

[१] 'ये अप्स्वन्तरग्नयः प्रविष्टाः' इत्यपामञ्जलिमवसिञ्चति ॥

(१) तद्विधिमाह– 'येऽप्स्वन्त ... मवसिञ्चति'। 'येऽप्स्वन्तरग्नयः' इति मन्त्रेण । कासाम् ? अपाम् । अञ्जलिं ब्रह्मचारी अवसिञ्चति । क ? भूमौ । कुतः ? (अवसिञ्चति ? )वचनात् । तन्मन्त्रस्य 'अभि(?अति)तान् सृजामि' इति, 'यदपाम्' इति मन्त्रस्य 'अभितान् ( ? अति तत् ) सृजामि' इति मन्त्रलिङ्गद्वयाच्च सर्वाधारत्वेन प्राप्तायां भूमौ त्यजति । संत. ९३९

(२) अभिषेकप्रकार इदानीमभिधीयते– य इति । अपां प्रकृतानामेव अञ्जलिम् अञ्जल्यवच्छिन्ना अपः अवसिञ्चति अवाचीनं सिञ्चति त्यजति ब्रह्मचारी । भूमावित्यर्थः । एवं च 'अति तान्सृजामि' इति मन्त्रलिङ्गमनुगृह्यते । एवमुत्तरत्रापि । मन्त्रो यथा– 'ये अप्स्वन्तरग्नयः प्रविष्टा गोह्य उपगोह्यो मनोको मनोहाः । खलो विरुजस्तुनुदुषिरिन्द्रियहा अति तान्सृजामि ॥' इति । अस्यार्थः– हे अग्नयः वक्ष्यमाणा अष्टौ अप्सु जलेषु अन्तः मध्ये प्रविष्टाः जलं दूषयितुम् , तान् एतान् जलदूषकान् अति सृजामि त्यजामि । के पुनस्ते ? गोह्यादयः । तत्र गोह्यः संवार्यः शरीरान्तर्विद्यमानः । उपगोह्यः अङ्गसंतापकः । मनोकः मम एव ओकः निवासस्थानं यस्य सः । मनोहाः मनः हन्तीति मनोहाः । खलः संचेता । तुनुदुषिः तुदन्तं नुदन्तं च दुष्यति विकृतिं गमयतीति तुनुदुषिः । इन्द्रियहा इन्द्रियाणि हन्तीति इन्द्रियहा इति । मृदुला.

[१] 'यदपां घोरं यदपां क्रूरं यदपामशान्तम्' इति च ॥

(१) अपामञ्जलिमवसिञ्चतीति वर्तते, चकारात् । संत. ९३९

(२) अस्य 'अति तत्सृजामि' इति शेषः । अपां संबन्धि यद् घोरं भयानकम्, यच्च अपां संबन्धि क्रूरं निष्ठुरम्, यत् च अपां संबन्धि अशान्तं रुजाकरम्, तत् अतिसृजामि त्यजामीत्यर्थः । इति अनेनापि अपामञ्जलिमवसिञ्चति । तस्मादत्रापि भूमावेवाञ्जलिपरित्याग इति कर्मक्रियापदयोरनुषङ्गार्थश्चकारः । मृदुला.

'यो रोचनस्तमिह गृह्णामि' इत्यात्मानमभिषिञ्चति ॥

(१) प्रकृतानामपामञ्जलिना 'यो रोचनः' इति मन्त्रेण ब्रह्मचारी आत्मानमभिषिञ्चति । संत. ९३९

(२) 'यो रोचनः' इति मन्त्रेण ब्रह्मचारी आत्मानमभिषिञ्चति अभिषिञ्चेत् । अभीति सर्वतोभावे । अयमभिषेकः 'अङ्गानां शिरः प्रधानम्' इति शिरसि कर्तव्यः । 'अव्यक्तं प्रधानगामी' इति न्यायादपि, 'आप्लावनम्' इत्यधिकाराच्च । अस्य 'तेनाहं मामभिषिञ्चामि' इति शेषः । अस्यार्थः– गोह्यादिषु त्यक्तेषु योऽन्यो रोचनः तदाख्योऽग्निर्दीप्तिकरः तमहम् इह स्थितं गृह्णामि, तथा च तेन जलान्तर्वर्तिना रोचनेन अहं माम् आत्मानम् अभिषिञ्चामीति । किमर्थमित्युत्तरेणान्वितम् । मृदुला.

[२] 'यशसे तेजसे' इति च ॥

(१) आत्मानमभिषिञ्चतीति वर्तते । संत. ९३९

---

(१) गोगृ. ३।४।१४ ; संत. ९३९ ये अप्स्व ( येऽप्स्व ).

(१) गोगृ. ३।४।१५-१६ ; संत. ९३९.

(२) गोगृ. ३।४।१७ ; संत. ९३९ यशसे ( ॐ यशसे ).

( २ ) 'यशसे' इत्यादिना मन्त्रेण च पूर्ववदात्मानमभिषिञ्चति ब्रह्मचारी प्रकृतानामपामञ्जलिना । मन्त्रो यथा– 'यशसे तेजसे ब्रह्मवर्चसाय बलायेन्द्रियाय वीर्यायान्नाद्याय रायस्पोषाय त्विष्या अपचित्यै' इति । अस्यार्थः– अत्र सर्वत्र तादर्थ्ये चतुर्थी । ब्रह्मवर्चसाय वाऽध्ययनाध्यापनोत्पन्नतेजसे । रायस्पोषाय धनसमृद्ध्यै । त्विष्यै दीप्तये । अपचित्यै पूजायै । अन्यत्सुगमम् ।

मृदुला.

¹ 'येन स्त्रियमकृणुतम्' इति च ॥

'येन स्त्रियम्' इति मन्त्रेण चाऽऽत्मानमभिषिञ्चति । मन्त्रो यथा– 'येन स्त्रियमकृणुतं येनापामृशतं सुराम् । येनाक्षानभ्यषिञ्चतं ये चेमां( ? येनेमां ) पृथिवीं महीम् । यद्वां तदश्विना यशस्तेन मामभिषिञ्चतम् ॥' इति । अस्यार्थः– अनेन देवतयाऽश्विनौ कर्मणामधिष्ठातारौ संस्तूय प्रार्थ्येते । हे अश्विना अश्विनौ, येन कर्मणा युवां स्त्रियं विपुण्वास्याम् अकृणुतं हिंसितवन्तौ, येन च सुरां मदिराम् अपामृशतं लब्धितवन्तौ नेयं पातव्येति, येन वा अक्षान् पाशकानपि अपामृशतमित्येव, ये येन च इमां महीं महतीं पृथिवीं भूमिम् अभ्यषिञ्चतम् अभिषिक्तवन्तौ शस्यप्ररोहणादिद्वारा संवर्धितवन्तौ, एवंभूतं यद् वां युवयोः यशः शोभनं कर्म तेन यशसा पुरस्कृतौ युवां मामपि अभिषिञ्चतम् अभिषिक्तं संवर्धितं कुरुतम् । यथा युवाभ्यामभिषिक्तः कृतकृत्यो भवानीति ।

मृदुला.

²तूष्णीं चतुर्थम् ॥

( १ ) 'आत्मानमभिषिञ्चति' इति वर्तते । अभिषेकः शिरसि कर्तव्यः, 'शिरः प्रधानमङ्गानाम्' इति वचनात् । संत. ९३९

( २ ) तूष्णीम् अमन्त्रं चतुर्थं मार्जनं कुर्यादित्यर्थः ।

मृदुला.

---

(१) गोगृ. ३।४।१८.

(२) गोगृ. ३।४।१९ ; संत. ९३९.

¹उपोत्थायाऽऽदित्यमुपतिष्ठेत– 'उद्यन् भ्राजभृष्टिभिः' इत्येतत्प्रभृतिना मन्त्रेण ॥

( १ ) आचार्यसमीपादुत्थाय 'उद्यन्' इत्येतत्प्रभृतिमन्त्रेण 'मा हिंसीः' इत्यन्तमन्त्रेणाऽऽदित्यमुपतिष्ठेत । 'उपान्मन्त्रेण च' इत्यात्मनेपदम् । संत. ९३९

( २ ) उप आचार्यसमीपात् । मन्त्रेण 'उद्यन्' इत्यादि– 'मा मा हिंसीः' इत्यन्तेन मन्त्रकदम्बेन, वक्ष्यमाणसूत्रस्वरसात् । उपतिष्ठेत तदभिमुखः सन्नाराधयेत् । अत्र देवपूजायामुपात्तिष्ठतेरात्मनेपदं बोध्यम् । मन्त्रो यथा– 'उद्यन्भ्राजभृष्टिभिरिन्द्रो मरुद्भिरस्थात्प्रातर्यावभिरस्थात् । दशसनिरसि दशसनिं मा कुर्वा त्वा विशाम्या मा विश ॥ उद्यन्भ्राजभृष्टिभिरिन्द्रो मरुद्भिरस्थात्सांतपनेभिरस्थात् । शतसनिरसि शतसनिं मा कुर्वा त्वा विशाम्या मा विश ॥ उद्यन्भ्राजभृष्टिभिरिन्द्रो मरुद्भिरस्थात्सायंयावभिरस्थात् । सहस्रसनिरसि सहस्रसनिं मा कुर्वा त्वा विशाम्या मा विश ॥ ( ¶ चक्षुरसि ) चक्षुष्ट्वमस्यव मे पाप्मानं जहि । सोमस्त्वा राजाऽवतु नमस्ते अस्तु मा मा हिंसीः ॥' इति । अस्यार्थः– अत्र तिस्र § ऋचो यजूंषि, चतुर्थी अनुष्टुप् । इन्द्रः परमैश्वर्ययोगादादित्यः उद्यन् उदीयमानः मरुद्भिः एकोनपञ्चाशत्संख्यैर्वायुभिर्देवैर्वा सह अस्थात् स्थितवान् । किंभूतैः ? भ्राजभृष्टिभिः । भृष्टिः दीप्तिः भ्राजा भृष्टिर्येषां तैर्भजनसाधनदीप्तिमद्भिः । न केवलं मरुद्भिरेव, किंतु प्रातर्यावभिः प्रातर्यायिनो देवविशेषास्तैः सह अस्थात् तिष्ठति । एवं परोक्षयाऽभिष्टूय प्रत्यक्षीकृत्येवाऽऽचष्टे– हे इन्द्र, त्वं दशसनिः दशानां गवादिधनानां सनिः दाता असि भवसि । अतः मा माम् अपि दशसनिं

---

¶ कंसस्थितोंऽशो मृदुलाकारेण न पठितो नापि व्याख्यातः । तदेतत् "चक्षुरसि' इत्यनुबध्नीयात्" इतिसूत्रतद्व्याख्यानविरुद्धं मन्त्रब्राह्मणविरुद्धं च ।

§ ऋक्त्वयजुष्ट्वयोर्विरोधात् 'त्रयो मन्त्रा यजूंषि' इति वक्तव्यम् ।

(१) गोगृ. ३।४।२० ; संत. ९३९ तिना मन्त्रेण ( तिमन्त्रेण ).

दशानां दातारं कुरु । अहं त्वा त्वाम् आविशामि अर्थित्वेनोपगच्छामि । अतस्त्वमपि मा माम् आविश अभिमतफलदानेनाभिमुखो भव । सांतपनेभिः देवविशेषैः । एवं सायंयावानो देवविशेषा इति गुणविष्णुः ।

हे सूर्य, त्वं मे मम पाप्मानं पापम् अनिष्टम् अपजहि अपनय । यस्त्वं त्रिलोक्याः चक्षुः दर्शकः असि भवसि । तं त्वा त्वां सोमः देवानामन्तर्भूत इति कृत्वा अवतु आप्याययतु । यो ह्यस्माकं ब्राह्मणानामोषधीनां च राजा भवति । तथा च श्रुतिः– 'सोमोऽस्माकं ब्राह्मणानां राजा' इति । अभिधानमप्याग्नेयमस्मिन् विषये– 'ओषधीशो निशापतिः' इति । एवंभूताय ते तुभ्यं नमः नमस्कारः अस्तु भवतु । त्वं मा मां मा हिंसीः मा जहि । किंतु सर्वतो रक्षेत्यर्थः । चक्षुष्ट्वमित्यत्र 'युष्मत्तत्' (पासू. ८।३।१०३) इत्यादिना षत्वम् । तत्र युष्मदिति युष्मदादेशास्त्वं त्वा ते तवोच्यन्ते । तदेतदविहारपक्षे बोध्यम् । मृदुला.

**'यथालिङ्गं वा विहरन् ॥**

**'चक्षुरसि' इत्यनुबध्नीयात् ॥**

अथ विहारपक्षमाह– यथेति । वा अथवा तस्मिन्नेव दिने यथालिङ्गं यथालिङ्गेन मन्त्रेण प्रातर्लिङ्गेन मन्त्रेण प्रातः, सांतपनलिङ्गेन मध्याह्ने, सायंलिङ्गेन सायाह्ने उपतिष्ठेतेत्यर्थः । विहरन्निति एतत्कालत्रये मन्त्रान्विभजन् । विहारो विकर्षणं पृथक्करणमित्यनर्थान्तरम् । त्रिष्वपि 'चक्षुरसि' इति मन्त्रमनुबध्नीयादित्यर्थः । मृदुला.

**'मेखलामवमुञ्चते– 'उदुत्तमं वरुण पाशम्' इति ॥**

(१) अवमुञ्चते अधस्तादवतारयति । अवशब्दोऽधस्तादर्थे । संत. ९३९

(२) अवमुञ्चते अवाचीनं मुञ्चति 'उदुत्तमम्' इति मन्त्रेण । मुञ्चत इति तच्छेदनप्रतिषेधार्थम् । अव इत्यधस्तान्मोचनार्थम् । अस्मिन्नेवावसरेऽजिनपरित्यागोऽपि, स्नानोत्तरं तद्धारणानौचित्यात्, 'स्नानादूर्ध्वं गृही भवेत्' इति वचनात् । पद्धतिरप्येवम् । मन्त्रो यथा– 'उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय । ¶अथाऽऽदित्य व्रते वयं तवानागसो अदितये स्याम ॥' इति । अस्यार्थः– हे वरुण देव, उत्तमम् उत्तमाङ्गे शिरसि स्थापितं त्वदीयं पाशम् अस्मत् अस्मत्तः सकाशात् उत् श्रथाय उत्कृष्योन्मुच्य विनाशय । एवम् अधमम् अधमाङ्गे पादप्रदेशे स्थापितं त्वदीयं पाशम् अव अवाचीनं कृत्वाऽस्मत्तोऽपकृष्य विनाशय । मध्यमं मध्यमप्रदेशे स्थितं पाशं वि विश्रथाय विमोचय विच्छेदय । अथा अथ पाशत्रयविमोचनानन्तरं हे आदित्य अदितिपुत्र वरुण, अनागसः अनपराधाः वयं तव व्रते कर्मणि वर्तमानाः सन्तः अदितये अदीनतायै स्याम भवेम अखण्डितत्वाय योग्या भवेम इति । मृदुला.

**'ब्राह्मणान् भोजयित्वा स्वयं भुक्त्वा केशश्मश्रुरोमनखानि वापयीत शिखावर्जम् ॥**

(१) भोजयित्वा स्वयं भुक्त्वा नापितेन मुण्डयीत । अत्र शिखावर्जमिति वचनात् प्राक् सशिखं वपनमिति दर्शयति । उक्तं च– 'सशिखं वपनं कार्यमा स्नानाद् ब्रह्मचारिणाम्' इति । संत. ९३९

(२) ब्राह्मणान् भोजयित्वेति । आभ्युदयिकश्राद्धं कृत्वेत्यर्थं इति भट्टनारायणः । यत्तु कर्मसमाप्तिनिमित्तकमेवेदं ब्राह्मणभोजनमिति स्नानात्प्रागेवैतच्छ्राद्धम्, इदानीं ब्राह्मणभोजनमात्रमिति च मतम्, तन्न, इदानीं कर्मसमाप्त्यभावादुपरिष्टादपि कर्मान्तरोपदेशात् । वस्तुतो ब्राह्मणभोजनान्तरमेवेदम् । स्वयं चेति । दधि तिलान्वेति शेषः । तथा च पारस्करः– 'दधि तिलान्वा प्राश्य' इति । पद्धतिरप्येवम् । कश्चित्तु परकीयग्रहणआकाङ्क्षाविरहात् ब्राह्मणभोजनसाहचर्याच्च यथेष्टमेव

---

(१) गोगृ. ३।४।२१–२२.

(२) गोगृ. ३।४।२३ ; संत. ९३९ (पाशमू०).

¶ मन्त्रब्राह्मणे 'अथा वयमादित्य व्रते' इति पाठः । अत्रत्यः पाठस्तत्र पादटिप्पण्यां निर्दिष्टः । मृदुलाकारेण तु 'अथाऽऽदित्य' इत्यत्र 'अथ' इति ह्रस्वान्तपदसंभवेऽपि 'अथा' इति पदं व्याख्याने गृहीतम् ।

(१) गोगृ. ३।४।२४–२८ ; संत. ९३९–९४०.

भोक्तव्यमित्याह । अत्र शिखावर्जमित्यभिधानात् प्राक् सशिखं वपनं कर्तव्यमिति दर्शितम्। उपनिषच्च– ' भ्रूप्रकोष्ठशिखावर्जं सर्वगात्राणि वापयेत् ' इति । मृदुला.

**स्नात्वाऽलंकृत्याहते वाससी परिधाय स्रजमाबध्नीत– ' श्रीरसि मयि रमस्व ' इति ॥**

( १ ) अलंकृत्य कुण्डलादिनाऽऽत्मानं योजयित्वा । आहते ' ईषद्धौतं नवं शुभ्रं सदशं यन्न धारितम् । आहतं तद्विजानीयात्सर्वकर्मसु पावनम् ॥ ' इति वशिष्ठोक्तलक्षणे । ईषत् सूक्ष्मम् । न धारितं न परिधानादिकृतम् । स्रजं ग्रथितपुष्पम् आबध्नीत । शिरसीति शेषः । ' श्रीरसि ' इति मन्त्रेण । संत. ९३९–९४०

( २ ) अलंकृत्य कुण्डलादिभिरात्मानम् , अहते ' ईषद्धौतं नवम् ' इत्याद्युक्तलक्षणे वाससी वस्त्रयुगम् अन्तरीयमुत्तरीयं च परिधाय स्रजं पुष्पमालाम् आ उपरि शिरसि बध्नीत । तत्र मन्त्रमाह– ' श्रीरसि ' इति । अस्यार्थः– हे माले, त्वं श्रीः लक्ष्मीः असि भवसि । सा त्वं मयि विषये रमस्व अवस्थानं कुरु इति । यज्ञोपवीतद्वितयपरिधानमपीदानीमेवाऽऽचारादिति मुरारिमिश्राः प्राहुः । मृदुला.

**' नेत्र्यौ स्थो नयतं माम् ' इत्युपानहौ ॥**

( १ ) आबध्नीतेत्यनुवर्तते । उपानहौ चर्मपादुके, योग्यत्वात् पादयोः । संत. ९४०

( २ ) ' नेत्र्यौ स्थः ' इति मन्त्रेण उपानहौ । आबध्नीतेत्यनुषज्यते । अत्राऽऽङर्थोऽर्थे, योग्यतावशात् , तेन पादयोः । ' नानार्था अव्ययाः परे ' इत्याग्नेयमभिधानम् । मन्त्रार्थस्तु– हे उपानहौ, यतो युवां नेत्र्यौ नयनशक्तिप्रदे स्थः भवथः , अतो माम् इष्टं देशान्तरं नयतं प्रापयतम् । मृदुला.

**' गन्धर्वोऽसि ' इति वैणवं दण्डं गृह्णाति ॥**

( १ ) वैणवं वंशप्रभवम् । ' गन्धर्वोऽसि ' इति मन्त्रेण । संत. ९४०

( २ ) वैणवं वेणुः वंशः तन्मयम् । दण्डादिधारणे †स्मृत्यन्तरोक्तं मानान्तरमाहुर्मुरारिमिश्राः– ' वैणवीं धारयेद्यष्टिमन्तर्वासस्तथोत्तरम् । यज्ञोपवीतद्वितयं सोदकं च कमण्डलुम् ॥ छत्रं चोष्णीषममलं पादयोश्चाप्युपानहौ । रौक्मे च कुण्डले चैवं कृत्तकेशनखो द्विजः ॥ ' इति । मृदुला.

**आचार्यं सपरिषत्कमभ्येत्याऽऽचार्यपरिषदमीक्षते– ' यक्षमिव चक्षुषः प्रियो वो भूयासम् ' इति ॥**

( १ ) सपरिषत्कं शिष्यादिसभासहितम् अभ्येत्य आभिमुख्येन गत्वा आचार्यं परिषदं चेक्षते ' यक्षम् ' इति मन्त्रेण । संत. ९४०

( २ ) सपरिषत्कं परिषदा सभया सहितम् । ' समज्या परिषद्गोष्ठी सभासमितिसंसदः ' इत्यमरः । सा च शिष्यादेः । अभ्येत्य आभिमुख्येन गत्वा । पुनराचार्यवचनमाचार्यसहितायाः परिषद ईक्षणार्थम् । मन्त्रार्थस्तु– हे सपरिषत्काचार्याः । गुरुत्वादत्र बहुवचनम् । चक्षुष इति जात्येकवचनम् । यक्ष इव यक्षो यथा दर्शनीयतया प्रियो भवति तथाऽहं वः युष्माकं प्रियः भूयासं भवेयमिति । मृदुला.

**[1]उपोपविश्य मुख्यान्प्राणान् संमृशन्– ' ओष्ठापिधाना नकुली ' इति ॥**

( १ ) उप आचार्यसमीपे मुख्यान् प्राणान् मुखप्रभवान् वायून् संस्पृशन् स्नातकः ' ओष्ठापिधाना ' इति मन्त्रं जपेत् । संत. ९४०

( २ ) उप आचार्यसमीपे मुख्यान् मुखे भवान् प्राणान् वायून् तेषाममूर्तत्वात् तदायतनानि संमृशन् स्पृशन् ' ओष्ठापिधाना ' इत्येतदादिकं मन्त्रम् । जपेदिति शेषः ( सर्वत्र ? ) । मन्त्रो यथा– ' ओष्ठापिधाना नकुली दन्तपरिमितः पविः । जिह्वे मा विह्वलो वाचं चारु माऽद्येह वादय ॥ ' इति । अस्यार्थः– स्नातकेन जिह्वा त्वा प्रार्थ्यते– हे जिह्वे, इह प्रस्तुते कर्मणि अद्य त्वं मा विह्वल विश्लथ संचलनं मा विधेहि । उः पादपूरणे । किंतु मा मां चारु शोभनं यथा स्यात्तथा वाचं वादय । यतस्त्वम्

† वस्तुतः स्मृत्यन्तरमेव मानान्तरम्, न स्मृत्यन्तरोक्तम्।

(१) गोगृ. ३।४।२९; संत. ९४० संमृश (संस्पृश).

ओष्ठापिधाना ओष्ठौ अपिधानम् आवरणं यस्याः सा, नकुली कुक्कुटीव नकुलपत्नीव वा चञ्चलस्वभावा । अत्र सादृश्यमूलकस्तत्त्वारोपः । एवमग्रेऽपि । तथा दन्तपरिमितः पविः दन्तावरणभूता वज्रवत्त्वं भवसि ।

मृदुला.

[1]अत्रैनमाचार्योऽर्हयेत् ॥

( १ ) अत्रावसरे एनं स्नातकं विवाहोक्तवरार्हणविधिनाऽर्चयेत् । तदशक्तौ गन्धपुष्पाभ्याम् ।

संत. ९४०

( २ ) अत्र एतस्मिन्नवसरे एनं स्नातकम् आचार्यः 'उत्तरतो गाम्' (४।१०।१) इत्यादिना वक्ष्यमाणेन विधिना अर्हयेत् पूजयेत् । तथा च मनुः– 'तं प्रतीतं स्वधर्मेण ब्रह्मदायहरं पितुः । स्रग्विणं तल्प आसीनमर्हयेत्प्रथमं गवा ॥' (मस्मृ. ३।३) इति । तं स्नातकं स्वधर्मेण स्वधर्मानुष्ठानेन प्रतीतं ब्रह्मचर्यमारभ्य ख्यातं पितुः पितृतः दीयत इति दायः, ब्रह्म एव दायो ब्रह्मदायः, तस्य हरम् । पितृतो गृहीतवेदमित्यर्थः । स्रग्विणं मालयाऽलंकृतं तल्पे उत्कृष्टशय्यायाम् । आसीनमुपविष्टं कृत्वा प्रथमं विवाहात् प्राक् गवा गोसाधनमधुपर्केण पिता अन्यो वा वरयिता अर्हयेत् पूजयेदित्यर्थः । अत्र केचित् 'कर्मणः करणसंज्ञा संप्रदानस्य च कर्मसंज्ञा' इति विभक्तिव्यत्ययदर्शकेन गां तस्मै दद्यादित्यप्यर्थमाहुः ।

मृदुला.

[2]गोयुक्तं रथमुपसंक्रम्य पक्षसी कूबरं बाहुं वाऽभिमृशेत्– 'वनस्पते वीड्वङ्गो हि भूयाः' इति ॥

( १ ) पक्षसी चक्रे कूबरं रथिकस्थानं वाहूं रथरेखेत्यर्थः( ? ) । 'वनस्पते' इति मन्त्रेण अभिमृशेत् स्पृशेत् ।

संत. ९४०

( २ ) गोभिर्युक्तं रथम् उपसंक्रम्य सम्यगुपेत्य पक्षसी चक्रे कूबरं रथिस्थानं बाहुं चक्रालम्बि कीलकं वा अभिमृशेत् स्पृशेत् 'वनस्पते' इति मन्त्रेण पादत्रयेण । मन्त्रो यथा– 'वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः । गोभिः संनद्धो असि वीडयस्वाऽऽस्थाता ते जयतु जेत्वानि ॥' इति । अस्यार्थः– हे वनस्पते वनस्पतिविकाररथ, त्वं वीड्वङ्गः संस्तब्धाङ्गः दृढावयवः । वीडयतिः संस्तम्भनकर्मा नैरुक्तो धातुः । ततः 'भृमृशी' (उ. १।७) इत्यादिना उप्रत्ययो बाहुलकात् । संस्तब्धः दृढः भवत्यनेनेति संस्तभ्यन्ते शत्रवोऽनेनेति वा वीडु बलिष्ठम् । वीडूनि दृढानि महाभारसहानि अङ्गानि चक्रकूबरप्रभृतीनि यस्य सः । तथा अस्मत्सखा वयं सखायो यस्य तादृशश्च भूयाः भव । किंच, प्रतरणः प्रकर्षेण तरन्ति दुर्गाणि येन सः, सुवीरः शोभनाः वीराः शूरभटाः पुत्रादयो वा यस्मात्सः, एवंभूतो भव । त्वं गोभिः वृषभैः संनद्धः संयुक्तः असि भवसि । अतस्त्वमस्मानपि वीडयस्व दृढीकुरु । किंच, ते तव आस्थाता आरोढा स्वय्यवस्थितो रथी जेत्वानि जेतव्यानि द्विषद्वृन्दानि जयतु अभिभवतु इति ।

मृदुला.

[1]'आस्थाता ते जयतु जेत्वानि' इत्यातिष्ठति ॥

( १ ) रथमारुह्य 'आस्थाता ते जयतु जेत्वानि' इति 'वनस्पते' इत्यादिमन्त्रस्य चतुर्थपादेन आतिष्ठति उपविशति ।

संत. ९४०

( २ ) ततो रथमारुह्य 'आस्थाता ते' इति मन्त्रचतुर्थपादेन रथमातिष्ठति आरोहति ।

मृदुला.

[2]प्राङ्वोदङ्वाऽभिप्रयाय प्रदक्षिणमावृत्योपयाति ॥

( १ ) तेन रथेन प्राङ्मुख (उदङ्मुखः) वा प्रयाय प्रकर्षेण गत्वा उपयाति आचार्यसमीपमागच्छति ।

संत. ९४०

( २ ) ततः प्राङ्मुख उदङ्मुखो वा अभिप्रयाय सर्वतोभावेन प्रकर्षेण गत्वा प्रदक्षिणं दक्षिणेन प्रगतं यथा

---

(१) गोगृ. ३।४।३० ; संत. ९४०.

(२) गोगृ. ३।४।३१ ; संत. ९४० अशुद्धिबहुलो ग्रन्थः.

(१) गोगृ. ३।४।३२ ; संत. ९४०.

(२) गोगृ. ३।४।३३ ; संत. ९४० प्राङ्वोदङ्वा (प्राग्वोदग्वा).

आचार्यः आवृत्य आवर्तनं कृत्वा उपयाति उपयायात् आचार्यसमीपमागच्छेत् । मृदुला.

'उपयातायार्घ्यमिति कौहलीयाः ॥

( १ ) उपयाताय आचार्यसमीपमागताय अर्घ्यं देयमिति कौहलीया आचार्या आहुः । रथाभावेऽपि मन्त्रपाठाचारः यवकरणे तण्डुलादावयातादिवत् । संत. ९४०

( २ ) कौहलीयाः शाखाविशेषाध्यायिनस्तु रथादवरुह्याऽऽचार्यसमीपम् उपयाताय उपगताय स्नातकाय अर्घ्यम् अर्हणम् आचार्येण पित्रा वा कर्तव्यम्, न तु पूर्वमिति मन्यन्ते । मृदुला.

## खादिरगृह्यसूत्रम्

परिवृतदेशादिनित्यकाम्यस्थलेषु अभिषेकः, आदित्योपस्थानम्, मेखलावमोचनम्, वपनम्, अलंकारवस्त्रस्रगुपानहण्डधारणम्, परिषद्दर्शनम्, प्राणाभिमर्शनम्, रथेन प्रदक्षिणमावर्तनम्, अर्घ्यदानम्

'आप्लवने पुरस्तादाचार्यकुलस्य परिवृत आस्ते ॥

'तयोराप्लवनं पूर्वम्' ( १।३।१ ) इत्युक्तम् । इदानीं पुरुषमोच्यते । आप्लवनं स्नानम् । अत्र कर्त्रन्तरानिर्देशेन स्वयमेव सर्वं कुर्यात् । आचार्यगृहस्याग्रे भागे प्रावृते देश उदगग्रेषूपविशेत् । रुद्रभा.

उदङ्मुख आचार्यः प्रागग्रेषु ॥

तस्य दक्षिणत उपविशेत् । रुद्रभा.

एवं ब्रह्मवर्चसकामः ॥

नित्ये कामोपबन्धोऽयम् । रुद्रभा.

गोष्ठे पशुकामः ॥

स्पष्टम् । रुद्रभा.

सभायां यशस्कामः ॥

ब्रह्मस्थाने । रुद्रभा.

---

(१) गोगृ. ३।४।३४; संत. ९४० कौहलीयाः ( कोहनीयाः ).

(२) खागृ. ३।१।१-३१.

सर्वौषधेनापः फाण्टयेत् ॥

सर्वौषधिफलैर्यथालाभं संयोज्याग्निनाऽपः फाण्टयेत् तापयेत् यः कश्चित् । रुद्रभा.

सुरभिमिश्रः ॥

सुगन्धिमिश्रं संयोजयेदपः । रुद्रभा.

ताभिः शीतोष्णाभिराचार्योऽभिषिञ्चेत् ॥

तताभिः शीतोदकसंयुक्ताभिः शिष्यमूर्धन्यवसिञ्चेद्वक्ष्यमाणप्रकारेण । रुद्रभा.

स्वयं वा मन्त्राभिवादात् ॥

'माम्' इति मन्त्रलिङ्गात् । रुद्रभा.

उभावित्येके । 'तेनेमम्' इत्याचार्यो ब्रूयात् ॥

'तेनाहं मामभिषिञ्चामि' इत्यत्र 'तेनेममभिषिञ्चामि' इति । रुद्रभा.

'ये अप्सु' इत्यपामञ्जलिमवसिञ्चेत् ॥

उपनयनवदन्यः पूरयेत्, भूमाववाञ्चं सिञ्चेदभिषेक्ता । रुद्रभा.

'यदपाम्' इति च ॥

तूष्णीं च ॥

स्पष्टे । रुद्रभा.

'यो रोचनः' इति गृह्याऽऽत्मानमभिषिञ्चेत् ॥

पूर्ववदञ्जलिना पूर्णं गृहीत्वा । गृह्येत्यसमासेऽपि बहुलवचनात् ल्यप् कृतोऽस्य बहुविषयत्वं द्योतयितुम् । अतो गृहीत्वा गृहीत्वाऽभिषेकः । आत्मानमिति शिष्योपलक्षणार्थम् । अत्राऽऽचार्योऽपि शिष्यमेवाभिषिञ्चेत् । रुद्रभा.

'येन स्त्रियम्' इति च ॥

तूष्णीं च ॥

स्पष्टे । रुद्रभा.

'उद्यन्' इत्यादित्यमुपतिष्ठेत् ॥

अनार्द्रेण वस्त्रेण परिधायाऽऽचम्योदगग्रेषु स्थित उपतिष्ठेच्छिष्यः । रुद्रभा.

समस्येद्वा ॥

'प्रातर्यावभिरस्थात् सांतपनेभिरस्थात् । सायंयावभिरस्थात् दशसनिरसि शतसनिरसि सहस्रसनिरसि दशसनिं मा कुरु शतसनिं मा कुरु सहस्रसनिं मा कुरु' इति समासः । रुद्रभा.

**विहरन्ननुसंहरेत्– 'चक्षुरसि' इति ॥**

यथापाठं ब्रुवन् 'आविश( ? मा विश )' इत्येषामनन्तरं 'चक्षुरसि' त्रिरनुषज्य ब्रूयात् । रुद्रभा.

**'उदुत्तमम्' इति मेखलामवमुञ्चेत् ॥**

**प्राश्य वापयेच्छिखावर्जं केशश्मश्रुलोमनखानि ॥**

स्पष्टे । रुद्रभा.

**अलंकृतोऽहतवाससा 'श्रीः' इति स्रजं प्रतिमुञ्चेत् ॥**

द्वे नववस्त्रे परिधाय स्रजं वलयाकृतिं कृत्वा शिरसि प्रतिमुञ्चेत् । रुद्रभा.

**'नेत्र्यौ स्थः' इत्युपानहौ ॥**

पादयोः प्रतिमुञ्चेत् । रुद्रभा.

**वैणवं दण्डमादद्यात्– 'गन्धर्वोऽसि' इति ॥**

स्मृत्युक्तलक्षणं दण्डं गृह्णीयादित्यर्थः । रुद्रभा.

**उपेत्याऽऽचार्यं परिषदं प्रेक्षेत् 'यक्षमिव' इति ॥**

आचार्यसमीपं गत्वा संसदं पश्येन्मन्त्रेण । रुद्रभा.

**उपविश्य 'ओष्ठापिधाना' इति मुख्यान् प्राणानभिमृशेत् ॥**

दर्भेषूपविश्य चक्षुषी श्रोत्रे नासिके चाभिमृशेन्मन्त्रेण । रुद्रभा.

**गोयुक्तं रथमालभेत्– 'वनस्पते' इति ॥**

**'आस्थाता ते' इत्यारोहेत् ॥**

**प्राचीं प्रयायोदीचीं वा प्रदक्षिणमावर्तयेत् ॥**

स्पष्टानि । रुद्रभा.

**प्रत्यागतायार्घ्यमित्येके ॥**

प्रत्यागताय मधुपर्कं दद्यादाचार्यः । रुद्रभा.

## जैमिनिगृह्यसूत्रम्

संभारोपकल्पनम्, दण्डमेखलासादनम्, वपनम्, स्नापनम्, वस्त्राञ्जनमणिदण्डोपानद्धारणम्

**[1]वेदमधीत्य व्रतानि चरित्वा ब्राह्मणः स्नास्यन् संभारानुपकल्पयतेऽहतं वास एरकां स्नानमनुलेपनं सुमनस आञ्जनमादर्शमहते वाससी त्रिवृतं मणिं वैणवं दण्डं शुक्ले उपानहौ ॥**

स्नास्यन् यथाशक्ति दक्षिणां दत्त्वा गुरुणाऽनुमतः समावर्तनं करिष्यमाण इत्यर्थः । स्नानं स्नानीयम् । शुक्ले अनुपभुक्ते उपानहौ । श्रीव्या.

**नापित उपक्लृप्त उत्तरत उपतिष्ठति ॥**

उपक्लृप्तः संनद्धः । श्रीव्या.

**एरकामास्तीर्याहतेन वाससोदग्दशेन प्रच्छाद्य तत्रैनं प्राङ्मुखमुपवेश्य दण्डमप्सु सादयेत्– 'द्विषतां वज्रोऽसि' इति । मेखलां विस्रंसयेत्– 'उदुत्तमम्' इति । तां चैवाप्सु सादयेत् ॥**

पूर्वतन्त्रान्ते व्रतान्तसमिध आधायानन्तरकृत्यमेतत् । आस्तीर्य पश्चादग्नेरिति शेषः । अप्सु तत्रैव पात्रावस्थितास्वप्सु । आचार्य एव । श्रीव्या.

**केशान्तकरणेन मन्त्रा व्याख्याताः ॥**

वक्ष्यमाणस्नानीयानुलेपनसुमनआदर्शान् 'वनस्पते स्त्वगसि' इत्यादिमन्त्रैर्विनियुञ्जीतेत्यर्थः । श्रीव्या.

**परिवापनं च ॥**

वक्ष्यमाणवपने प्रकारश्च मेखलां सादयित्वा महाव्याहृतिभिर्विरूपाक्षेण च हुत्वा सर्वौषधीभिरित्यादिकृत्यम् । श्रीव्या.

**शिरोऽग्रे वपते, ततः श्मश्रूणि, तत इतराण्यङ्गानि । अनुपूर्वेण केशश्मश्रुलोमनखान्यश्वत्थस्य मूले निखनेदुदुम्बरस्य वा– 'अपहतो मे पाप्मा' इति ॥**

तत्रायं विशेषः । शिष्यकृत्यमेतत् । श्रीव्या.

---

(१) जैगृ. १।१९.

शीतोष्णाभिरद्भिर्हिरण्यान्तर्हिताभिरेनं स्नापयेत्– 'शिवा नः शंतमा भव सुमृडीका सरस्वति। मा ते व्योम संदृशि ॥' इति ॥

आचार्यकृत्यमेतत्। हे सरस्वति, नः शिवा शंतमा शोभनतमा भव। सुमृडीका सुखकरतमा भव। ते तव व्योम व्यापकं परं धाम मा संदृशि मां प्रति संदर्शनाय भवतु। भीव्या.

तमहतेन वाससा परिदधीत– 'परीमं सोम(? मम्)' इति ॥

स्नानीयगन्धस्रजां गोदानकरणवद्विनियोगादनन्तरकृत्यमेतत्। अन्तरीयमात्रस्य परिधानमत्र। भीव्या.

सव्यमग्रेऽध्यञ्जीत– 'यशसा मा' इति। अथ दक्षिणम् ॥

तयैव ऋचा। मा मां द्यावापृथिवी यशसा संयोजयताम्। इन्द्रबृहस्पती भगेन भाग्येन संयोजयताम्। भगस्य यशयशस्तन्मां विन्दतु। यशः मा मां प्रतिमुच्यतां न विमुञ्चतु। यशस्वी अहं अस्याः संसदः प्रवदिता प्रकर्षेण स्वामी वाग्मी स्यां भवेयम्। अस्याः संसदः अहमुत्तमश्च भूयासमित्यर्थः। भीव्या.

त्रिवृतं मणिं कण्ठे प्रतिमुञ्चते। पालाशं स्वस्त्ययनकामः 'स्वस्त्ययनोऽसि' इति। बैल्वं ब्रह्मवर्चसकामः 'ब्रह्मवर्चसी भूयासम्' इति। अर्कमन्नाद्यकामः 'अर्कवानन्नादो भूयासम्' इति ॥

आदर्शम् 'आदर्शोऽसि' इत्यादिमन्त्रेणावेक्ष्य धृतोत्तरीयस्त्वेदमुच्यते। प्रतिमुञ्चते सूत्रप्रोतमासञ्जयति। पालाशं त्रिवृतं मणिम्। स्वस्त्ययनकामः सुष्ठुजीवनकामः। अर्कवान् अन्नवान्। पालाशमेवैषां मुख्यम्। भीव्या.

'गन्धर्वोऽसि विश्वावसुः स मा पाहि स मा गोपाय' इति वैणवं दण्डमुपादत्ते। उपानहावादधीत– 'नेत्रे स्थो नयतं माम्' इति ॥

दक्षिणमग्रे प्रतिमुञ्चते ॥

करेण युगपदादधीत। अथ सव्यमिति शेषः। नेत्रे नेत्रि(? तृ)णी इत्यर्थः। अयोत्तरतन्त्रः समूर्धारम्भजपः समोदक्षिणः समाप्यते। भीव्या.

## वैखानसगृह्यसूत्रम्

गोष्ठादौ शुक्रियव्रतविसर्गपूर्वकः प्रधानहोमः, आदित्योपस्थानम्, यज्ञोपवीतादिविसर्जनम्, वपनम्, दन्तधावनम्, स्नापनम्, गात्रानुलेपनम्, वस्त्रधारणम्, आभरणकुण्डलादीनां होमपूर्वकं धारणम्, आदर्शावेक्षणम्, दण्डोपानच्छत्रधारणम्, रथमश्वं हस्तिनं वाऽऽरुह्यावतरणम्

'अथ समावर्तनं व्याख्यास्यामः। .. ... यत्राऽऽपस्तत्रागारे गोष्ठे वाऽऽघारं हुत्वाऽग्निं परिस्तीर्य तथैव धातादिव्रतविसर्गं हुत्वा 'वयः सुपर्णाः' इति वस्त्रावकुण्ठनं मोचयित्वा शुक्रियव्रतं विसृजति। 'इमं स्तोमम्, त्र्यायुषं जमदग्नेः' इति प्रधानं पञ्च वारुणं मूलहोमान्तं हुत्वा 'उद्वयं तमसः, उदु त्यम्' इत्येताभ्यामादित्यमुपस्थाय 'उदुत्तमम्' इत्युत्तरीयम् 'अथा वयम्' इति सूत्रदण्डादीन्यप्सु विसृज्य 'शिवो नामासि' इति क्षुरमुपलेन कर्षयित्वा साक्षतैराधावैः 'शिवा नः' इति शिरोऽक्षयित्वा गोदानम् 'अप(? आप) उन्दन्तु, ओषधे त्रायस्व, यत्क्षुरेण' इति चतुर्दिशम् 'येनावपत्' इति सर्वतो नखान्तं वपति। शरावे सानडुहगोशकृति केशादीन्यादाय 'इदमहममुष्य' इत्युदुम्बरदर्भयोर्मूले गोष्ठे वा गूहयेत्। 'अन्नाद्याय व्यूहध्वम्' इति दन्तधावनमौदुम्बरेण काष्ठेन करोति। शीतोष्णाभिरद्भिः 'आपो हि ष्ठा' इत्यादिभिर्ऋग्भिस्तिसृभिः स्नापयित्वा हिरण्यपवमानाभ्यां प्रोक्षयतीति। पूर्वं तथा प्रधानान्हुत्वा पुरोदयादादित्यस्य ब्राह्मव्रतं विसृज्य शुक्रियव्रतस्य ग्रहणविसर्गावित्येके ॥

'दिवि श्रयस्व' इत्यहते वाससी गन्धाभरणादीनि च प्रोक्ष्य 'नमो ग्रहाय' इति गन्धं गृहीत्वा प्राचीनमञ्जलिं कृत्वा 'अप्सरःसु' इति

(१) वैगृ. २।१३–१५.

गात्राण्यनुलेपयेत् । 'तेजोवत्सव(?)' इति वस्त्रं परिधाय 'सोमस्य तनूरसि' इत्युत्तरीयं गृह्णाति । पूर्ववन्मेखलादीन्याददीत । आभरणकुण्डलमणीन्बदरेण सुवर्णेन वा कृतानाच्छाद्य दर्भेण बध्नीयात् ॥

तदग्नावुपरि धारयन् 'आयुष्यं वर्चस्यम्, उच्चैर्वादि( ? जि ), शुनमहम्, प्रियं मा, इयमोषधी' इति पञ्चभिर्जुहुयात् । 'सम्राजं च विराजं च' इत्युदकपात्रे परिप्लाव्य 'ऋतुभि( रि ? )ष्ट्वाऽऽर्तवैः, इयमोषधी' इति ताभ्यां कुण्डलाभ्यां दक्षिणादिकर्णयोरलंकरोति । 'शुभिके' इति मणिना कण्ठमामुच्य 'इदं ब्रह्म पुनीमहे' इत्यङ्गुलीयकं गृहीत्वा 'यदाञ्जनम्' इति दक्षिणं चक्षुः 'यन्मे मनः' इति वामं चाञ्जनेनाञ्जयित्वा 'इमाः सुमनसः' इति स्रजमादाय 'देवस्य त्वा' इत्यादर्शमवेक्षेत । तेनैव वैणवं दण्डमृजुं गृह्णीयात् । 'इन्द्रस्य वज्रोऽसि' इति 'वेगवेजम्' इति त्रिरुन्मार्ष्टि । 'उपानहौ' इत्युपानहावारुह्य 'प्रजापतेः शरणं भुवः पुनातु' इति द्वाभ्यां छत्रं गृह्णीयात् । 'यो मे दण्डः' इति पुनर्दण्डं प्रमादे सत्याहरेत् । ततो वाहनं पूजयित्वा 'प्रतिष्ठे स्थो देवतानाम्' इत्यभिमृश्य 'रथंतरमसि' इति रथम् 'अश्वोऽसि हयोऽसि' इत्यश्वम् 'इन्द्रस्य त्वा वज्रेण' इति हस्तिनमारुह्यावतरेत् ॥

## आश्वलायनः

समावर्तने गोदानकर्मातिदेशः, अचीर्णवेदव्रतेनाऽऽदौ प्रायश्चित्तमनुष्ठेयम्, कुण्डलादिधारणफलानि, मालाशब्दानुच्चारणकारणम्, समिध ऊर्ध्वस्थापने निमित्तम्, दशसमिदाधानफलम्, उद्वर्तनपूर्वकं स्नानम्, मार्गनिवासे मधुपर्कपूजनम्, गुरवे मण्यादिदानम्

[1]गोदानवच्चवेत्सर्वं समावर्तनकर्मणि ।
स्नानान्तं तु ततः किंचिद्विशेषस्त्वत्र लक्षितः ॥
वेदव्रतान्यकृत्वा तु प्रायश्चित्तीयते द्विजः ।
कृत्वा कृच्छ्रादिकान् स्नायाद्दत्त्वा गां चापि भक्तितः ॥
आत्मनश्च गुरोश्चापि कुण्डलादीन् समानयेत् ।
समावर्तनकृद्विप्रो गुरवे दत्तदक्षिणः ॥
गुरोरनुज्ञयाऽऽकल्पमात्मने वा प्रकल्पयेत् ।
मङ्गल्यवृद्धये लक्ष्म्यै( ? लब्ध्यै ) तेजसश्चाऽऽयुषस्तथा ॥
तानि तेनाप्रधार्याणि व्रतानां प्राग्यतात्मना ।
कुण्डलादीनीति यस्माद्गृह्यन्ते मन्त्रवत्ततः ॥
मण्यादीनां तु मन्त्राणि प्रशंसन्ति यथा तथा ।
प्रभावांश्च गुणान् कर्तुर्वर्धन्ते तेन चाऽऽशिषः ॥
वृक्षाणां यज्ञिया ब्राह्मा वेणुः क्षत्रिय उच्यते ।
वैश्याश्चन्दनवृक्षाश्च शूद्राः कारस्करादयः ॥
यज्ञियस्य तरोर्दण्ड इष्यते ब्रह्मचारिणः ।
यजतो यजमानस्य चाभिषेके नृपस्य च ॥
वेणौ संयमनशक्तिरतीवर्द्धिश्च( ? र्द्धिश्च )विद्यते ।
त्वक्सारत्वं च दार्ढ्यं च क्षात्रत्वादार्जवं तथा ॥
यतिः समयसंसिद्ध्यै वर्धते( ? चर्द्धये ) स्नातकादयः ।
वेणुमिच्छन्ति दण्डत्वे राजा चोभयसिद्धये ॥
तस्मात्तावत्प्रगृह्णाति वैणवं दण्डमुत्तमम् ।
तन्मन्त्रेण प्रशंसित्वा स्वात्मगात्रसमं शुभम् ॥
दक्षिणादि चरेत्सर्वं कुण्डलं चाञ्जनं तथा ।
पादुकां च स्रजं चैकां गन्धं मूर्धादि संचरेत् ॥
स्रजमाश्रित्य वसति त्रैलोक्यश्रीर्दुरासदा ।
मेति श्रीरुदिता तद्धौ(?) निषेधार्थत्वमित्युत ॥
दीर्घस्य बिन्दोरैक्यत्वं( ? क्यं च ) शैवव्याकरणे स्मृतम् ।
अत्यन्तार्थस्त्वलमिति तृप्त्यर्थे च निगद्यते ॥
मालेत्युक्ते रमाशक्ति त्यलं मामिति चञ्चला ।
नृजन्त्वति ता(?)स्तस्मान्न मालेत्युच्यते बुधैः ॥
यत्र लक्ष्मीर्न निवसेदलक्ष्मीस्तत्र तिष्ठति ।
तस्मात्प्राग्धारणात्काले न मालेति वदेद्बुधः ॥

(१) आश्वस्मृ. ११।२८०, २८४–३१२.

संघातशब्दादिच्छन्ति शब्दज्ञास्तत्तथोदितम् ।
कर्मस्वपि तथा वस्त्रादेव ब्रूयाद्विचक्षणः ॥

उपसर्गयुता वाच्या सर्वदेति न केवला ।
वनपुष्पादिशब्देन माला श्रियमभीप्सताम् ॥

नोपसर्गयुता वाच्या प्रत्यन्तं श्रियमिच्छता ।
समावर्तनकाले तु प्रथमग्रहणं हि तत् ॥

यज्ञियस्य तरोः शाखां तीर्थदेशे स्थितां शुभाम् ।
पूर्वेद्युरानयित्वा तां भूमेरूर्ध्वं विनिक्षिपेत् ॥

समिधश्च कुशाः शस्तास्तद्दिने स्युः समाहृताः ।
अशक्यत्वात्तदाऽऽनेतुं पूर्वेऽह्न्यपि समानयेत् ॥

प्राज्ञः समित्कुशादींस्तु छित्त्वा कृत्यविचक्षणः ।
न भूमौ निक्षिपेत्क्षिप्ता दुष्यन्ते यदि मोहतः ॥

भूमौ निपतितान् व्यर्थमाश्रयन्त्यसुराः कुशान् ।
समित्कुसुमलाजादींस्तांस्त्यजन्ति महर्षयः ॥

तेषां पुनरभावश्चेदद्भिरभ्युक्ष्य मन्त्रवत् ।
गृह्णीयात्तु न चाऽऽक्रान्तान् पदा स्पृष्टान् प्रयत्नतः ॥

पदाऽऽक्रान्तान् पदा स्पृष्टान् स्पृष्टानशुचिभिर्नरैः ।
अशुचौ पतितान् भूमौ वर्जयेत्समिदादिकान् ॥

शाखां तु यत्नतस्तस्मात्समावर्तनकर्मणि ।
ऊर्ध्वं क्षिपेत्समाहृत्य तिष्ठन्नेव हुनेत्तदा ॥

निष्कृत्यर्थं हुनेत्तिष्ठन् शाखां मन्त्रैः स्मृतादिभिः ।
वसु दत्त्वा द्विजे शक्त्या तद्व्रतानामिति स्थितिः ॥

वृद्ध्यर्थं समिधो दद्यात्पुनर्दश समाहिताः ।
उपविश्य यथान्यायं प्रैषं च श्रावयेद्गुरुः ॥

क्षीरवृक्षत्वचापिष्टैः करञ्जस्या समन्वितैः ।
सहारिद्रैर्द्विजः स्नायाद्गात्रे संलिप्य शुद्धये ॥

स्नातको लभते यत्र सपर्यां तत्र तन्निशि ।
मधुपर्कादिभिः सम्यक्तेषां गेहे वसेच्छुचिः ॥



[1]आत्मने गुरवे च स्यात्क्रमे गुरवेऽपि वा ।
मण्याद्युष्णीषपर्यन्तद्रव्याणामुपकल्पनम् ॥

## लघ्वाश्वलायनः

वृद्धिश्राद्धम्, समिध उपरि स्थापनम्, अन्वाधानादि, होमवपनयोश्चौलकर्मातिदेशः, स्नापनम्, वस्त्रादिधारणम्, शिवालयगमनम्, समिदाधानम्, स्नातकधर्मोपदेशः, होमशेषसमापनम्, मेखलामोचनम्

[2]कृत्वाऽऽभ्युदयिकं श्राद्धमुपलेपेन पूर्ववत् ।
विधायोपरि समिधमन्वाधानादिकं च हि ॥

चौलोक्ताज्याहुतीर्हुत्वा चौलवच्छ्मश्रुवापनम् ।
स्नापयेद्वाससी दद्याद्युवं वस्त्राणिमन्त्रतः ॥

अञ्जनं कुण्डलादीनि दण्डान्तानि च धारयेत् ।
आयुष्यमिति वै सूक्तं पठन् गच्छेच्छिवालयम् ॥

पुनरागत्य संतिष्ठेदाधाय समिधं च ताम् ।
स्मृतमित्यादिकान्मन्त्राञ्जपित्वा प्रक्षिपेत्स्वयम् ॥

कृत्वा तु स्नातकः पश्येत्समावर्तनकं भवेत् ।
ममाग्ने प्रत्यृचं हुत्वा समिधश्च दश स्वयम् ॥

स्पृष्ट्वा पादौ नमस्कुर्याद्गुरोर्दत्त्वेति तत्फलम् ।
न नक्तमिति चानुज्ञालब्धस्तेन यथोदितम् ॥

ततः स्विष्टकृतं कृत्वा होमशेषं समापयेत् ।
लभेदारां विवाहार्थं गुरोर्निर्मुच्य मेखलाम् ॥

समावृत्तस्य वै मौञ्जीं होमान्ते चैव बह्वृचः ।
उदुत्तमं मुमुग्धीति मन्त्रे गानेन मोचयेत् ॥

## शाकलकारिकाः

होमान्ते मेखलाविसर्जनम्

[3]समावर्तनकं कृत्वा होमशेषं समाप्य च ।
उदुत्तमं मुमुग्धीति विसृजेन्मेखलां ततः ॥

(१) प्रया. २८५ पर्यन्तद्र (पर्यन्तं द्र); संप्र. ५६८.

(२) लघ्वाश्वल. १४।२-९.

(३) शाका. ८० पृ. ९.

## शौनककारिकाः

संभारोपकल्पनम्, वृद्धिश्राद्धम्, स्वस्त्ययनम्, नित्यकाम्यसमिदाहरणम्, समिध उपरि निधानम्, ब्राह्मणेभ्योऽन्नगोदानम्, गोदानिककर्मातिदेशः सविशेषः, उन्मर्दनम्, स्नानम्, वस्त्राञ्जनमणिकुण्डलधारणम्, अनुलेपनम्, स्रगुपानच्छत्रदण्डमणिधारणम्, समिदाधानम्, होमोत्तरतन्त्रम्, पुण्याहवाचनम्, मार्गे निवासो मधुपर्कपूजा च, स्नातकव्रतसंकल्पः

[1]स समावर्तमानस्तु पूर्वमेवोपकल्पयेत् ।
मण्याद्युष्णीषपर्यन्तान् संभारान्सकलानपि ॥
[2]विधायाभ्युदयश्राद्धं पूर्वेद्युरपरेऽहनि ॥
प्रातः समिधमाधाय कृतस्वस्त्ययनो द्विजैः ।
यस्य यज्ञियवृक्षस्य स्ववासापेक्षया स्थितिः ॥
प्रागुदीच्यां दिशि भवेत्तस्य च प्रागुदग्भवेत् ।
या शाखा तद्भवामेकां छित्त्वा समिधमाहरेत् ॥
योऽन्नाद्यकामः पुष्ट्यर्थी तेजस्कामोऽपि वा भवेत् ।
आर्द्रां स छिन्द्यात्समिधं यस्त्विच्छेद्ब्रह्मवर्चसम् ॥
शुष्कां छिन्द्यात्स समिधं यस्य तूभयकामता ।
स त्वर्धशुष्कां समिधमाहरेदुभयेच्छया ॥
आसामन्यतमां हृत्वा समिधं कामयोगतः ।
भूस्पर्शविवर्जिते देशे निधायोपरि कुत्रचित् ॥
[3]दत्त्वाऽन्नं गां च विप्रेभ्यः कर्म गौदानिकं चरेत् ।
तत्रोपलेपनाद्याज्यभागवर्जं पुरस्तनम् ॥
[4]तन्त्रं कृत्वाऽथ गोदानं प्रकृतं चौलकर्मणि ।
यथोपदिष्टं यत्कर्म तथाऽत्रापि समाचरेत् ॥

(१) प्रपा. २८५ वर्त (वर्त्य); संप्र. ५६८; संग. ७३६ स समावर्त (समावर्तन) कल्प (पाद).
(२) शौका. ३–८ पृ. ५२–५३; प्रपा. २८७.
(३) शौका. ९ पृ. ५३ गौदा (गोदा) वर्जं पु (वर्ज्यपु); प्रपा. २८७–२८८.
(४) शौका. १० पृ. ५३ नं प्रकृतं (नप्रकृते); प्रपा. २८८ त्रापि स (पि स्वय).

[1]केशशब्दे श्मश्रुशब्दानित्यादीनवधानतः ।
एनमित्यस्य शब्दस्य स्थाने मामिति निर्दिशेत् ॥
[2]यद्यस्येत्यभिधातव्ये ममेत्येवमुदीरयेत् ।
यथाऽसदिति वाक्यं च यथाऽऽसमिति निर्दिशेत् ॥
[3]तथाऽऽप्लुत्यादिकं कर्म गौदानिकमपीह तु ।
नानुष्ठेयमिति प्राहुराचार्याः कल्पकोविदाः ॥
[4]करञ्जैकबीजेन संपिष्टेन फलेन तु ।
उन्मृज्याङ्गं ततः स्नायान्मिश्रैः शीतोष्णवारिभिः ॥
[5]स्नात्वा चैवाग्निपाश्चात्त्यस्थो युवं वस्त्राणि पीवसा ।
इत्याद्यसकृदुच्चार्य ततो वस्त्रयुगं नवम् ॥
[6]वसित्वोदकमाचम्य गृहीत्वा पाणिनाऽञ्जनम् ।
अश्मनस्तेज इत्याद्यं मन्त्रं पाहीति संस्थितम् ॥
[7]उक्त्वाऽथ वाममञ्जीत नेत्रं पश्चात्तु दक्षिणम् ।
तेनैव मन्त्रेणाञ्जीत ततः कर्णे तु दक्षिणे ॥
[8]श्रोत्रं मे पाहिपर्यन्तमश्मनस्तेज आदिकम् ।
मन्त्रमुक्त्वा क्रमाद्बद्ध्वा मणिबद्धं तु कुण्डलम् ॥
[9]अथानुलेपनालिप्तपाणिभ्यां प्रथमं मुखम् ।
अनुलिम्पेतराण्यङ्गान्यनुलिम्पेत्तु पश्चिमम् ॥

(१) शौका. ११ पृ. ५३; प्रपा. २८८.
(२) शौका. १२ पृ. ५३ ममे (म इ) वाक्यं (वाच्यं); प्रपा. २८८.
(३) शौका. १३ पृ. ५३ तथा (अथा) गौदा (गोदा); प्रपा. २८८ नानु (अनु).
(४) शौका. १४ पृ. ५३ करञ्जे (कैरञ्ज); प्रपा. २८८.
(५) शौका. १५ पृ. ५३ पू.; प्रपा. २८८.
(६) शौका. १५ पृ. ५३ उत्त.; प्रपा. २८८.
(७) शौका. १६ पृ. ५३; प्रपा. २८८.
(८) शौका. १७ पृ. ५३ ज आदि (जसादि) बद्धं (बध्नं); प्रपा. २८८.
(९) शौका. १८ पृ. ५३ अथा (यथा) लिम्पेत्तु (लिम्पेत); प्रपा. २८८.

[1]ततोऽस्मातोऽप्यनार्तोऽहं भूयासमिति मन्त्रतः ।
स्रजं च मूर्ध्नि बध्नीयात्र तु मालेति तां वदेत् ॥
[2]तां स्रजं चेत्प्रमादेन ब्रूयुर्मालेति केचन ।
तदैव तां स्रगित्येवमभिधाय(?ध्य) द्विजोत्तमैः ॥
[3]ततो मूर्ध्नि च बध्नीयात्स्रजं तामवधानतः ।
यो देवानां प्रतिष्ठे स्थ इत्यादि(?दिः) खिल-
संभवम्(?वः) ॥
[4]मन्त्रं तं(?मन्त्रस्तं) सकृदुच्चार्य अभ्यारोहे-
दुपानहौ ।
पूर्वं दक्षिणपादेन समारोहेदुपानहम् ॥
[5]पश्चात्सव्येन पादेन समारोहेदिति क्रमः ।
ततश्छत्रं दिवश्छत्रासीति मन्त्रेण धारयेत् ॥
वेणुरस्यादिमन्त्रेण वैणवं दण्डमुद्वहेत् ।
सूक्तमायुष्यमित्याद्यं खिलोद्भवमुदीर्य तु ॥
[6]ग्रीवायां मणिमाबध्य मूर्धानं नववाससा ।
आवेष्ट्य पश्चात्पादाभ्यामुन्मुच्योपानहौ
स्थितः ॥
[7]या पूर्वं यज्ञियाद्वृक्षाच्छित्त्वैका समिदाहृता ।
विन्यस्तोपरिदेशे तामादाय समिधं करे ॥
[8]स्मृतमित्यादिकं मन्त्रं गृह्ये स्वाहान्तमीरितम् ।
उच्चार्य वहावादध्यादत्रैवं प्रक्रियेष्यताम् ॥

---

(१) शौका. १९ पृ. ५३ ; प्रपा. २८८.

(२) शौका. २० पृ. ५३ ; प्रपा. २८८ त्तमैः ( त्तमः ).

(३) शौका. २१ पृ. ५३ तामव ( चानव ) ; प्रपा. २८८ यो ( ये ).

(४) शौका. २२ पृ. ५३ पूर्वं ( तत्र ) ; प्रपा. २८८.

(५) शौका. २३–२४ पृ. ५३–५४ ; प्रपा. २८८.

(६) शौका. २५ पृ. ५४ ; प्रपा. २८८ बध्य मू ( बध्यान्मू ).

(७) शौका. २६ पृ. ५४ यज्ञि ( याज्ञि ) न्यस्तो ( न्यस्यो ) ; प्रपा. २८८.

(८) शौका. २७–२८ पृ. ५४ ; प्रपा. २८८.

स्मृतं निन्दा च विद्या चेत्यादिसूत्रक्रमोदितान् ।
शब्दान् द्वादश संस्मृत्य मनसा प्राक्ततः परम् ॥
[1]स्मृतं च मे अस्मृतं च मे तन्म उभयव्रतम् ।
इत्युच्चार्यैवमेवोक्त्वा निन्दाद्यपि यथाक्रमम् ॥
[2]ततो यदग्ने सेन्द्रस्येत्याद्यं मन्त्रं यथोदितम् ।
व्रतो भवामि स्वाहेतिपर्यन्तं समुदीर्य च ॥
[3]पश्चात्समिधमादध्यात्तिष्ठन्नग्नौ विधानतः ।
ममाग्ने वर्च इत्याद्यं नवर्चमिह खैलिकीम् ॥
[4]दशमीमृचमर्वाञ्चमिन्द्रमित्यादिकां क्रमात् ।
उच्चार्य प्रत्यृचं तिष्ठन्नादध्यात्समिधो दश ॥
[5]अत्र प्रत्यृचमित्युक्तेः स्वाहाकारात्पुरैव तु ।
ऋगन्ते समिधं क्षिप्त्वा पश्चात्स्वाहेत्युदीरयेत् ॥
[6]उपविश्य ततः कृत्वा स्विष्टकृद्धोमपूर्वकम् ।
उपरिष्टात्तनं तन्त्रं पुण्याहं वाचयेत्ततः ॥
[7]समावृत्तमिमं यस्मिन् पूजयिष्यन्ति बान्धवाः ।
मधुपर्कप्रदानाद्यैस्तद्गृहे तां निशां वसेत् ॥
[8]न स्नायात्रक्तमित्याद्यं विहितं स्नातकव्रतम् ।
तच्चत्संकल्पपूर्वं तु विधिना स समाचरेत् ॥

---

(१) शौका. २९ पृ. ५४ मे अस्मृतं ( मेऽस्मृतं ) ; प्रपा. २८८.

(२) शौका. ३० पृ. ५४ ; प्रपा. २८८.

(३) शौका. ३१ पृ. ५४ द्यं नव ( द्यैनेव ) ; प्रपा. २८८ खैलिकीम् ( खैलिकम् ).

(४) शौका. ३२ पृ. ५४ दिकां ( दिकं ) ; प्रपा. २८८.

(५) शौका. ३३ पृ. ५४ त्युक्तेः ( त्युक्त्वा ) ; प्रपा. २८८.

(६) शौका. ३४ पृ. ५४ ; प्रपा. २८८.

(७) शौका. ३७ पृ. ५४ ; प्रपा. २९७ ; विपा. ६६९.

(८) प्रपा. २८८ कल्पपू ( कल्प्य पू ) स स ( सुस ) ; संप्र. ५७१.

## कुमारिलकारिकाः

समिध आहरणमुपरि निधानं च, ब्राह्मणेभ्यो गोभोजनदानम्, गोदानकर्मातिदेशः सविशेषः, उन्मर्दनम्, स्नानम्, वस्त्राञ्जनकुण्डलानुलेपनस्रगुपानच्छत्रदण्डमणिधारणम्, समिदाधानम्, होमोत्तरतन्त्रम्, स्नातकव्रतसंकल्पः, मार्गे निवासो मधुपर्कपूजा च, आश्रमान्तरस्वीकारे गुर्वनुज्ञाग्रहणम्, मार्गे पश्वाद्यप्रियशब्दश्रवणे भयोत्पत्तौ च शान्तिविधानम्

[1]प्राग्वोदगवनायुक्तमुक्तस्वस्त्ययनः स्वयम्।
प्रागुदीचीं दिशं गच्छेत्तस्यां वै यज्ञियस्य तु ॥
[2]शाखेशानीं गता तस्याश्छित्वा प्रादेशसंमिताम्।
आहृत्य समिधं भूमेरन्यत्र निदधाति ताम् ॥
[3]दत्त्वा गां भोजयेद्विप्रान् गोदानोक्तं करोत्यथ।
स्नात्वा वाग्यत इत्यादि न कार्यमिह कर्मणि ॥
[4]यदाम्यूह्यामि वक्ष्यत्र वाचं त्रायस्व मामिति।
मा मा हिंसीरिति ब्रूयाद्यथाऽऽसमिति चापरम् ॥
[5]तेन म आयुषेत्येवमूह्यं मन्त्रद्वयेऽपि च।
मा म आयुरिति त्वन्यत्सर्वं गोदानवद्भवेत् ॥
[6]अत्राऽऽज्यभागौ नैवेष्टावित्युक्तं पूर्वमेव तु ॥
[7]करञ्जबीजमत्रैकं पिष्टेनोन्मृज्य तेन तु।
शीतोष्णैः स्नात आचान्तो बहिर्गत्वाऽन्तिकं पुनः ॥

[1]युवमित्यनया वस्त्रे आच्छाद्याऽऽवर्तयेत्त्विमाम्।
मन्त्रावृत्तिरियं दृष्टा वृत्तौ नारायणस्य तु ॥
[2]आचम्य चाश्मनस्तेज इत्यञ्ज्यात् सव्यमीक्षणम्।
एतेनैव तु मन्त्रेण पश्चाद्दक्षिणमीक्षणम् ॥
[3]कुण्डले चाश्मनस्तेज इति श्रोत्रमलंकुरु।
अनेनैव तु मन्त्रेण पश्चात्सव्यमलंकुरु ॥
[4]कुङ्कुमाद्यनुलिप्ताभ्यां पाणिभ्यां पूर्वमाननम्।
अनुलिप्येतराङ्गानि पश्चात्प्रक्षालयेत्करौ ॥
[5]अनार्ताऽसीति मन्त्रेण बध्नाति शिरसि स्रजम्।
सकृदुक्तेन मन्त्रेण देवानामित्युपानहौ ॥
[6]आस्थाय च्छत्रमादध्याद्दिवश्छद्यासिमन्त्रतः।
गृहीत्वा वैणवं दण्डं वेणुरस्यादिमन्त्रतः ॥
[7]आयुष्यमिति सूक्तेन मणिं कण्ठे प्रबध्य च।
सुवर्णमय इष्टोऽत्र मणिरित्याह वृत्तिकृत् ॥
[8]नवाम्बरेण संवेष्ट्य शिरोऽथोपानहौ त्यजेत्।
आहृतां समिधं तिष्ठन्नग्नावाधाय मन्त्रतः ॥
[9]स्मृतं च म इति ब्रूयादस्मृतं च म इत्यपि।
तस्योपरि वदेत्सम्म उभयव्रतमित्यथ ॥

---

(१) कुका. १।१७।५; प्रपा. २८५.

(२) कुका. १।१७।६; प्रपा. २८५-२८६ शाखेशानीं गता (शाखामीशानगां).

(३) कुका. १।१७।७; प्रपा. २८६.

(४) कुका. १।१७।८ वक्ष्यत्र (वक्त्यत्र); प्रपा. २८६.

(५) कुका. १।१७।९; प्रपा. २८६.

(६) प्रपा. २८६.

(७) कुका. १।१७।१०; प्रपा. २८६ अमत्रैकं (ं यत्रैकं).

(१) कुका. १।१७।११ त्विमाम् (त्वियम्); प्रपा. २८६.

(२) कुका. १।१७।१२ इत्यञ्ज्यात् (इत्युक्ते); प्रपा. २८६.

(३) कुका. १।१७।१३; प्रपा. २८६ चाश्मन (चाऽऽत्मन).

(४) कुका. १।१७।१४; प्रपा. २८६ प्येतरा (प्य तदा).

(५) कुका. १।१७।१५; प्रपा. २८६ अनार्ता (अनार्तो).

(६) कुका. १।१७।१६; प्रपा. २८६ दध्या (दद्या).

(७) कुका. १।१७।१७; प्रपा. २८६.

(८) कुका. १।१७।१८; प्रपा. २८६ आहृतां (आहृत्य).

(९) कुका. १।१७।१९; प्रपा. २८६ इत्यपि (इत्यथ) मित्यथ (मित्यपि).

[1]द्वादशान्येवमेवोक्त्वा यथापाठमथोत्तरम् ।
मन्त्रैर्वंविधेनाग्नावाहितायां समिध्यथ ॥
[2]उपविश्य दशाऽऽदध्यादन्याः प्रादेशसंमिताः ।
अत्रोपवेशनं प्राह वृत्तिकारः सहेतुकम् ॥
[3]ममाग्ने दशभिः कुर्वन् स्वाहाकारमृगन्ततः ।
परिषेचनपर्यन्तं कुर्यात्स्विष्टकृदादिकम् ॥

'प्रत्यृचग्रहणं व्याख्यातम्' इत्यत्र प्रकरणे वृत्तिकृतोक्तम् । गृहप्रवेशनीयहोमप्रकरणे तु प्रत्यृचग्रहणव्याख्यावसरे 'स्वाहाकारं पठन् जुहुयात्' इत्युक्तम्। जयन्तेनापि 'ऋगन्ते स्वाहाकारं कुर्वन् दश समिध आदधाति' इत्युक्तम्। कारिकायां तु– 'ममाग्ने दशभिर्हुत्वा स्वाहाकारमृगन्ततः । परिषेचनपर्यन्तं कुर्यात्स्विष्टकृदादिकम्॥' इत्युक्तम्। अत्रापि 'ऋगन्ततः' इत्यनन्तरं 'पठन्' इत्येवाध्याहारो वृत्त्यादिमूलानुसारात् ऋगन्तस्वाहाकारयोरविच्छेदाच । § एवं सति 'अग्नावादध्यात्, पश्चात्स्वाहाकारमुच्चारयेत्' इतिवदद्भ्यो नमो मान्येभ्यः ।

संकौ. १७०

[4]ततः संकल्पयेदर्कं न स्नामीत्युत्तराण्यपि ।
दास्यन्ति मधुपर्कं ये तत्रैतां रजनीं वसेत् ॥
[5]अथ शिष्यः समावृत्तो नामोपांशु गुरोर्वदेत् ।
उच्चैरूर्ध्वं वदेत्स्थान इदमः स्वेष्टमाश्रमम् ॥

[1]हे देवदत्त गार्हस्थ्यं वत्स्यामो भो इति त्वथ ।
उपांशु जपति प्राणापानयोरिति वै ततः ॥
[2]आमन्त्रैरित्यृचं चाथ गुरुश्चैतौ जपत्यथ ।
ॐ प्रागित्यादिकं मन्त्रं जपित्वाऽऽचार्य एव तु ॥
[3]सूक्तेन तु महि त्रीणामवोऽस्त्वित्यनुमन्त्र्य तम् ।
वत्स्यथेत्यनुजानीयादनुज्ञातो यदा पथि ॥
[4]गच्छञ्शृणोति वाक्यानि पक्षिणामप्रियाणि तु ।
जपेत्कनिक्रदत्सूक्तं देवीं वाचमृचं तथा ॥
[5]शिवादेरप्रियं श्रुत्वा स्तुहि श्रुतमृचं जपेत् ।
यस्यां दिश्यथवा यस्मात्पुरुषाद्भयाग्रतोऽपि वा ॥
[6]बिभेत्युभयतो दीप्तमुल्मुकं तां दिशं क्षिपेत् ।
मन्त्रेणाभयमित्यादिनैतदुल्मुकमस्यति ॥
[7]सर्वतो भयमुत्पन्नं न च ज्ञातमतो नरात् ।
अन्यतो वेति लोकाग्नावाघारान्तं करोत्यथ ॥
[8]पृथिव्याद्यष्टभिर्मन्त्रैर्हुत्वाऽष्टाऽऽज्याहुतीरथ ।
छित्वैशान्यां जपेत्स्वस्ति नो मिमीतां त
सस्तं वै ॥
[9]यदृचो जपति त्वन्या यत इन्द्र भयामहे ।
ततश्च स्विष्टकृद्वर्जं होमशेषं समापयेत् ॥

---

§ अत्र विषये पूर्वं संगृहीता 'अत्र प्रत्यृचमित्युक्तेः' इति शौनककारिकाऽनुसंधेया ।

(१) कुका. १।१७।२० ; प्रपा. २८६ थोत्तरम् ( थो परम् ).

(२) कुका. १।१७।२१ ; प्रपा. २८६.

(३) कुका. १।१७।२२ ; प्रपा. २८६ ; संकौ. १७० भिः कुर्वन् ( भिर्हुत्वा ).

(४) कुका. १।१७।२३ ; प्रपा. २८८ पू. : २९७ उत्त. ; बम. ६६ स्नामी (स्नायी) पू. ; संकौ. १७० श्लोकार्धे व्यत्यासेन पठिते ; बाल. १।१२९ पू. ३८८ येमर्कं न स्नामी ( येनोक्तं न स्नायी ) पू.

(५) कुका. १।१८।१ ; प्रपा. २९६ त्स्थान इदमः स्वेष्ट (नाम्ना इदंस्थाने स्व) : ब्रप्र. ४४ (अथ शिष्यं समावृत्तौ नामोपांशु गुरुर्वदेत् । उच्चैरूर्ध्वं वदेन्नम्र इदंस्थाने स्वमाश्रमम् ॥ ).

(१) कुका. १।१८।२ ; प्रपा. २९६ ; ब्रप्र. ४४ पू.

(२) कुका. १।१८।३ ; प्रपा. २९६ जपत्यथ (जपेदिह).

(३) कुका. १।१८।४ ; प्रपा. २९६ तु (च) वत्स्यथे (वत्स्यस्वे).

(४) कुका. १।१८।५ ; प्रपा. २९६.

(५) कुका. १।१८।६ ; प्रपा. २९६ यस्यां दिश्य (यस्या दिशोऽ).

(६) कुका. १।१८।७ नैत (नैन) ; प्रपा. २९६.

(७) कुका. १।१८।८ वेति (वेत्ति) ; प्रपा. २९६.

(८) कुका. १।१८।९ छित्वै (छित्वे) ; प्रपा. २९६.

(९) कुका. १।१८।१० ; प्रपा. २९६.

## कपर्दिकारिकाः

संभारोपकल्पनम्

[1]सूत्रे वस्त्रे मणियुगलमि-
स्रक्स्रुगन्धौ प्रवृत्तौ (? प्रवर्तौ)
शीतोष्णाम्बुक्षुरकटयव-
च्छत्रदण्डाजिनानि ।
आदर्शोपानद्द्वयकुशशकृ-
त्स्नानचूर्णोदपात्रे
स्नास्यन् युञ्ज्यात्सकृदिह नरः
काष्ठमौदुम्बरं च ॥

## रेणुकारिकाः

वृद्धिश्राद्धम्, अग्निस्थापनम्, मन्त्राणामृषिदैवतच्छन्दांसि, ब्रह्मवरणम्, संभारोपकल्पनम्, होमपूर्वाङ्गम्, अग्निकार्यम्, अभिषेकः, मेखलादित्यागः, वस्त्रान्तरपरिधानम्, आदित्योपस्थानम्, दधितिलान्यतरप्राशनम्, वपनम्, स्नानम्, दन्तधावनम्, उद्वर्तनपूर्वकं स्नानम्, अनुलेपनम्, वस्त्रयज्ञोपवीतपुष्पोष्णीषकुण्डलाञ्जनधारणम्, आदर्शावेक्षणम्, छत्रोपानद्दण्डधारणम्

[2]स्नास्यामि भोः स्नाहि गुरुस्तमाह
कुर्याद्व्रती श्राद्धमतस्तदङ्गम् ॥
कुर्याद्गृहादुत्तरतोऽथवा प्राक्
प्राग्वंशतद्द्वारगृहार्थमानम् ।
परिश्रितं तच्चतुरस्रि सूत्रं
समं भवेत्कर्म समग्रमत्र ॥
आचार्यव्रतिनौ तत्रोपविशेते समाहितौ ।
व्रती प्राङ्मुख आचार्यः कुशासीन उदङ्मुखः ॥
स्मृत्वाऽथ कालं नियतासुराह
स्नास्येऽहमित्या गुरुमीदृशं सः ।
पादोपसंगृह्य गुरोरथाग्निं
संस्थाप्य भूशुद्धिपुरःसरं च ॥

वैकल्पिका ब्रह्मगते वरान्तान्
वेदव्रतान्ते च समावृतिः स्यात् ।
वध्नोऽशनं वस्त्रममौत्रधौत-
मेतान् स्मरेच्छन्दऋषींश्च देवान् ॥
येऽप्स्वन्तरग्नयोरा(? य आ)पो देवतर्षिः प्रजापतिः ।
यजुषां विनियोगोऽपां ग्रहणे त्वभिषेचने ॥
आपो हि ष्ठेति तिसृणां देवाद्युक्तं पुरैव तु ।
उदुत्तमं शुनःशेप ऋषिर्वरुणदैवतम् ॥
त्रिष्टुप् छन्दो नियोगश्च पाशोन्मोक उदाहृतः ।
आर्षं प्रजापतेरुद्यन् भ्राजेत्यस्यातिशक्वरी ॥
छन्दो देवस्तथाऽऽदित्यो विनियोग उपस्थितौ ।
अथर्वण ऋषिः सोमो देवताऽनुष्टुभो मनुः ॥
अन्नाद्यायेति दन्तानां धावने विनियुज्यते ।
यजुः प्रजापतेरार्षं प्राणापानौ च देवते ॥
चन्दनोपग्रहे प्राणापानाविति नियुज्यते ।
आर्षं प्रजापतिरश्विसरस्वतीन्द्रदैवतम् ॥
यजुः पितर इत्येतत्सौत्रामण्यां नियुज्यते ।
देवताशीः स्त्रुचश्चाहं यजुरार्षं प्रजापतेः ॥
विनियोगो जपेऽमुष्य द्रष्टा लम्बायनो भवेत् ।
परिधास्या इतिच्छन्दः पाङ्क्तं वासोऽस्य देवता ॥
यशसा मेत्याथर्वण ऋषिर्लिङ्गोक्तदेवता ।
वासः परिहितौ युक्तौ(? तावुक्तो) विनियोगोऽनयोर्बुधैः ॥
या आहरद्द्वयोश्छन्दोऽनुष्टुप्सुमनसोऽमराः ।
भरद्वाज ऋषिः पुष्पग्रहणे बन्धने युजिः ॥
युवा सुवासा इत्यस्य प्रागुक्तं देवतादिकम् ।
अलंकरणमित्यस्य भरद्वाज ऋषिः स्मृतः ॥
उष्णिक् छन्दोऽलंकरणं दैवतं धारणे युजिः ।
ऋषिः प्रजापतिर्वृत्रस्येत्यस्मिन् देवताञ्जनम् ॥
गायत्री छन्द आख्यातं युजिः स्याच्चक्षुरञ्जने ।
आदर्शो देवता छन्द उक्तो रोचिष्णुरित्यपि ॥

---

(१) कका. ५।१.
(२) रेका. ७–४५ पृ. ४२–४५.

मुनी रोचिष्णुरित्यस्य दर्पणावेक्षणे युजिः ।
बृहस्पतेश्छदिश्छत्रं देवता गौतमो मुनिः ॥
त्रिवृच्छन्दस्तु गायत्री युजिश्छत्रपरिग्रहे ।
प्रतिष्ठे स्थ इति च्छन्दो विराण्मित्र ऋषिः स्मृतः ॥
लिङ्गोक्ते देवते योगः प्रतिमोक उपानहोः ।
याज्ञवल्क्यो मुनिस्त्रिष्टुप् छन्दो दण्डोऽस्य देवता ॥
विश्वाभ्य इतिमन्त्रस्य दण्डादाने युजिर्भवेत् ।
अघाराद्या अभिध्याने ताः पञ्चदश देवताः ॥
व्रतादेशो भवत्यत्र वक्ष्ये ताः सकलाः स्मृताः ।
द्वौ त्रयश्च यथावेदं भूराद्याः पूर्ववत्ततः ॥
विष्णुशर्मन्नहं स्नास्ये ब्रह्मा त्वं तत्र मे भव ।
ब्रह्मणोक्ते भवामीति स्याद्वेदाहुतिकर्मवत् ॥
पवित्रादिवरान्तानि सादयित्वोपकल्पयेत् ।
अग्निकार्ये घनं वारि समिधो हरितान् कुशान्॥
अष्टौ च वारिवत्कुम्भान् वासोऽन्यद्दधि वा तिलान् ।
नापितः स्नानवार्यौदुम्बरं काष्ठं दशाङ्गुलम् ॥
दशाङ्गुलं तु विप्राणां क्षत्रियाणां नवाङ्गुलम्।
अष्टाङ्गुलं तु वैश्यस्य विप्रे वा द्वादशाङ्गुलम्॥
द्रव्यमुत्सादनीयं स्याच्चन्दनं वाऽहताम्बरे ।
पुष्पाणि वेष्टनं शीर्ष्णो वेष्टकावञ्जनं शुचि ॥
दर्पणं नूतनं छत्रमुपानद्वैणवं तथा ।
स एतान्युपकल्प्यैवं पवित्रकरणादिकम् ॥
पूर्णपात्रप्रदानान्तं कुर्वीत गुरुसंनिधौ ।
हवनं केचिदिच्छेयुराचार्यस्यैव गोभिलः ॥
अग्निकार्यं ततः कुर्याद्यां स्नास्यन्निति श्रुतेः ।
परिश्रितस्योत्तरतो जलकुम्भान्निधाय सः ॥
उदग्रीत्याऽथवा प्रोक्तास्तत्पुरस्तात्कुशेषु च ।
प्रागग्रेषु स्थितः कुम्भादेकतोऽञ्जलिना जलम् ॥
येऽप्स्वन्तरिति मन्त्रेण गृहीत्वा प्राङ्मुखो व्रती ।
तेनाभिषिञ्चते तेन मामभीत्यादि मन्त्रतः ॥

तदश्विना यशोन्तेन तेनेत्यस्यार्थ उच्यते ।
संनिधानप्रधानत्वात्तच्छब्दो वारिवाचकः ॥
अप्रधानव्यवहितेर्नायं स्याद्बहुवाचकः ।
लिङ्गव्यत्यय एवैकं प्रथमे दूषणं भवेत् ॥
अत्र शब्दगतं लिङ्गं भवेन्नार्थगतं यतः ।
अप्रधानव्यवहिती द्वितीये दूषणद्वयम् ॥
आपो हि ष्ठेति तिसृभिः प्रत्यृचं तु त्रिभिर्घटैः ।
चतुर्भिरितरैस्तूष्णीमभिषिञ्चेत मूर्धनि ॥
त्रिभिस्तथेतरैस्तत्र शब्दाल्लाक्षणिकाद्भवेत् ।
प्रतिकुम्भं समादाय मन्त्रैर्वार्यभिषेचनम् ॥
मन्त्रवद्ग्रहणं केचिदपां कुम्भेषु सप्तसु ।
तूष्णीमित्यपरे ब्रूयुस्तन्मन्त्रानुपदेशतः ॥
[1]मेखलामोचनं कुर्यादुदुत्तममिति स्वयम् ।
उपवीतं विना दण्डाजिनादीनि परित्यजेत् ॥
[2]तूष्णीं निधाय वासोऽन्यत्परिधायोपतिष्ठते ।
उद्यन्भ्राजेति मार्तण्डं प्राशयेद्दधि वा तिलान् ॥
[3]वपनं श्मश्रुकेशानां नखानां स्यान्निकृन्तनम् ।
हस्तयोः पादयोर्वामकनिष्ठाद्यविशेषतः ॥
[4]ततः क्षौरनिमित्तं स्यात्स्नानं शीतेन वारिणा ।
कनिष्ठिकाग्रस्थूलेन काष्ठेनौदुम्बरेण तु ॥
[5]अन्नाद्यायेति धावेति दन्तानप्यार्द्रचीवरः ।
प्राग्वोदगास्यस्तद्भुक्त्वा( ? भङ्क्त्वा )प्रक्षाल्य पुरतस्त्यजेत् ॥
[6]उद्वर्तनं सुगन्धेन द्रव्येण स्यान्निशादिना ।
पुनः स्नानं सुखोष्णेन वारिणाऽथ नसोरनु ॥

(१) रेका. ४६ पृ. ४५ ; संग. ७३९ लामो (लोन्मो).
(२) रेका. ४७ पृ. ४५ ; संग. ७३९ तिष्ठते (तिष्ठति) पू .
(३) रेका. ४८ पृ. ४५ ; संग. ७४० योर्वामक (योरेव क).
(४) रेका. ४९ पृ. ४५ ; संग. ७४० क्षौर (क्षुर).
(५) रेका. ५० पृ. ४५ ; संग. ७४० द्वितीयचरणे ( दन्तधावनमार्द्रवत् ).
(६) रेका. ५१ पृ. ४५ ; संग. ७४० वारिणाऽथ न ( वारा मुखन ).

[1]चन्दनं तूपगृह्णीते मुखस्य च पृथक् क्रमात् ।
लिङ्गात्पाणिद्वयेनेमं प्राणापानावितीरयन् ॥
[2]ततः पितर इत्युक्त्वा स पाण्योरवनेजनम् ।
अनुषिञ्चति पाणिभ्यां प्रागास्यः प्रेतराड्दिशि ॥
ततो वारि स्पृशेदस्य गुणत्वान्नापसव्यवत् ।
अनुलिप्य जपेन्मन्त्रं सुचक्षा अहमित्यमुम् ॥
[3]परिधत्तेऽहतं वासः परिधास्या इतीरयन् ।
अमौत्रेणाथ वा धौतमहतं चेन्न विद्यते ॥
[4]द्वितीयमुत्तरीयार्थे परिधत्तेति चेन्नवम् ।
मन्त्रेण यशसा मेति स्याद्द्विराचमनं ततः ॥
[5]एकं चेदधरीयं स्यात्तस्यैवोत्तरभागतः ।
प्रच्छादयीत मन्त्रोऽपि चोत्तरत्वात्तयोर्भवेत् ॥
[6]चतुस्त्रिद्व्यङ्गुलं वस्त्राकृति वा ब्रह्मसूत्रकम् ।
अत्रापि यशसा मेति कार्यापत्तेर्मनुर्भवेत् ॥
[7]ततः सुमनसो ह्द्या गुरुणैव समर्पिताः ।
उच्चार्य प्रतिगृह्णाति या आहरदिमं मनुम् ॥

(१) रेका. ५२ पृ. ४५.

(२) रेका. ५३–५४ पृ. ४५ ; संग. ७४१.

(३) रेका. ५५ पृ. ४५.

(४) रेका. ५६ पृ. ४५ ; संग. ७४२ रीयार्थे (रीयं स्यात्).

(५) रेका. ५७ पृ. ४५–४६ ; संग. ७४२.

(६) रेका. ५८ पृ. ४६ ; संग. ७४२ कृति वा (कृतिर्वा).

(७) रेका. ५९–६२ पृ. ४६.

सामर्थ्यादुपसर्गस्य नाऽऽदत्ते स्वयमेव ताः ।
ततः शिरसि बध्नीते यद्यशोऽप्सरसामिति ॥

उष्णीषं नूतनं वासस्तेन वेष्टयते शिरः ।
युवा सुवासा इत्युक्त्वा देववर्चसवर्णकम् ॥

वाससां लक्षणं जातिविशेषेण प्रकीर्तितम् ।
अलंकरणमित्युक्त्वा निधत्ते कर्णवेष्टकौ ॥

[1]भेदेन मन्त्रवचनं क्रमाद्दक्षिणसव्ययोः ।
वृत्रस्येत्यक्षिणी अङ्क्तेऽभ्यञ्जनेनाभि-
नासिकम् ॥

[2]सव्यं प्रथममित्येवं श्रूयते बह्वृचश्रुतौ ।
रोचिष्णुरितिमन्त्रेणाऽऽदर्शे आत्मानमीक्षते ॥

[3]प्रदत्तं गुरुणा छत्रं प्रतिगृह्णाति मन्त्रतः ।
बृहस्पतेश्छदिरिति ततो नूत्ने उपानहौ ॥
शक्यत्वाद्युगपन्मन्त्रलिङ्गाच्च प्रतिमुच्यते ।
इतीरितमुपाध्यायैः प्रतिष्ठे स्थ इति ब्रुवन् ॥
श्लक्ष्णं दण्डं समादत्ते विश्वाभ्य इति वैणवम् ॥

(१) रेका. ६३ पृ. ४६ ; गभा. २५० उत्त. ; संग. ७४३ नेनाभिनासिकम् ( नं वामनासिकाम् ) उत्त. ; संवी. ८७ (भागः २) उत्त.

(२) रेका. ६४ पृ. ४६ ; गभा. २५०–२५१ त्येवं (त्येव) पू. ; संग. ७४३ गभावत्, पू. ; संवी. ८७ (भागः २) गभावत् , पू.

(३) रेका. ६५–६७ पृ. ४६.

# कच्छबन्धः

## दीपिकायाम्

कच्छबन्धे पक्षवारनक्षत्राणि

[1]त्रीण्युत्तराण्यदितिपौष्णमघाधनिष्ठा
पुष्याश्विनी हिमकरादपि पञ्च भानि ।
एतानि कच्छविधिबन्धनसंमतानि
सौम्यग्रहस्य दिवसे च सिते च पक्षे ॥

अथ क्षत्रियस्य कच्छबन्धः । तत्र दीपिका—त्रीणीति ।
संप्र. ५८०

(१) संसौ. १५४ करादपि (करादि) ; संप्र. ५८०.

# छुरिकाबन्धः

## छुरिकाबन्धविधिः

### नारदः

छुरिकामानम् , मानादिभेदेन फलभेदः

[1]छुरिकाबन्धनं वक्ष्ये नृपाणां प्राक्करग्रहात् ॥
[2]तस्यास्तु लक्षणं वक्ष्ये यदुक्तं ब्रह्मणा पुरा ।
संमितं छुरिकायामं विस्तारेणैव ताडयेत् ॥
[3]भाजितं गजसंख्यैश्च अङ्गुलीन् ( ? लैः ) परिकल्पयेत् ।
शेषं चैव फलं वक्ष्ये ध्वजाये धनवान् भवेत् ॥
[4]धूमाये मरणं सिंहे जयः श्वायेऽतिरोगिता ।
धनलाभो वृषेऽत्यन्तं दुःखी भवति गर्दभे ॥
[5]गजायेऽत्यन्तसंप्रीतिर्ध्वाङ्क्षे वित्तविनाशनम् ।
आयामार्धाग्रविस्तारप्रमाणेनैव ताडयेत् ॥
[6]तच्छेदखण्डान्यायाः स्युर्ध्वजाये रिपुनाशनम् ।
खड्गपुत्रिकयोर्मानं गणयेत्स्वाङ्गुलेन तु ॥
[7]मानाङ्गुलेषु पर्यायानेकादशमितांस्त्यजेत् ।
स्वामिनोऽङ्गुलिभिर्गुण्यं शस्त्रं मुष्टिं विहाय तु ॥
[1]तन्मानं विभजेद्रुद्रैः शेषाङ्कस्य फलं क्रमात् ।
पुत्रलाभः शत्रुवृद्धिः स्त्रीलाभो गमनं शुभम् ॥
[2]अर्थहानिश्चार्थवृद्धिः प्रीतिः सिद्धिर्जयः क्षितिः ।
स्थितो ध्वजे वृषाये वा प्रष्टा चेत्पूर्वतो व्रणी ॥
[3]सिंहे गजे मध्यभागे त्वन्त्यभागे श्वकाकयोः ।
धूमगर्दभयोर्नैव व्रणं श्रेयोऽन्त्यभागजम् ॥

### संग्रहः

शूद्रराजपुत्रस्य मौञ्जीबन्धनस्थाने छुरिकाबन्धनम्

[4]शूद्राणां राजपुत्राणां मौञ्ज्यभावेऽस्त्रबन्धनम् ॥

### मुहूर्तचिन्तामणिः

छुरिकाबन्धनकालः

[5]छुरिकाबन्धनं शस्तं नृपाणां प्राग्विवाहतः ॥

अथैवं त्रैवर्णिकानां व्रतबन्धनमुक्त्वा इदानीं केशान्तकर्मादि वक्ष्यति । तत्र विवाहात्प्राक् क्षत्रियाणां छुरिकाबन्धनं विहितम् । ...... तत् शस्तं हितकारि । अत्र 'प्राग्विवाहतः' इत्युक्तेरवधि( ? रव्यवहितत्व )निश्चयात्समावर्तनानन्तरं छुरिकाबन्धनं कार्यम् , विवाहभूषणत्वात्तस्याः । यदि यज्ञोपवीतानन्तरमेव चिकीर्षितं स्यात् तदोपनयनानन्तरं कार्यमित्येव ब्रूयात् । ग्रन्थकर्त्रा तु नारदोक्तक्रममङ्गीकृत्यैवमुक्तम् । तत्र 'पाठक्रमादर्थक्रमो बलीयान्' इति समाधिः । पीटी.

---

(१) ज्योना. २५।१ छुरि (क्षुरि) ; संसौ. १५५ ; संप्र. ५८० ; सिन्धु. ९८९ ; शूक. १०७ ; विपा. ६७२ ज्योतिर्निबन्धे ; ज्योनि. १३० ; पुम. ४४५.

(२) ज्योना. २५।६ यामं वि (यामवि) ; ज्योनि. १३०.

(३) ज्योना. २५।७ पू. ; ज्योनि. १३० अङ्गुलीन् ( अङ्गुलान् ).

(४) ज्योना. २५।८ यः श्वायेऽति (यश्चाश्वे नि) ; ज्योनि. १३०.

(५) ज्योना. २५।७ ताड (छेद) उत्त. : २५।९ पू. ; ज्योनि. १३०.

(६) ज्योना. २५।८ पू. : २५।९ उत्त. ; ज्योनि. १३०.

(७) ज्योना. २५।१० उत्तरार्धे ( शेषाणामङ्गुलानां च फलानि स्युर्यथाक्रमात् ॥ ) ; ज्योनि. १३०.

(१) ज्योना. २५।११ उत्त. ; ज्योनि. १३०.

(२) ज्योना. २५।११ क्षितिः (स्तुतिः) पू. ; ज्योनि. १३०.

(३) ज्योना. २५।१२ उत्त. ; ज्योनि. १३०.

(४) सिन्धु. ९९० ; शूक. १०७ ; विपा. ६७३ ; ज्योनि. १३० मौञ्ज्य (मौञ्जी).

(५) मुचि. ५।५९.

# क्षुरिकाबन्धमुहूर्तः

## नारदः

क्षुरिकाबन्धे मासपक्षतिथिवारनक्षत्रलग्नानि, गुरुशुक्रभौमो-
दयाः, चन्द्रताराबलम्, ग्रहसंस्थानम्

[1]विवाहोक्तेषु मासेषु शुक्लपक्षेऽप्यनस्तगे ॥

[2]जीवे शुक्रे च भूपुत्रे चन्द्रताराबलान्विते ।
मौञ्जीबन्धर्क्षतिथिषु कुजवर्जितवासरे ॥

[3]तेषां लग्नोदये कर्तुरष्टमोदयवर्जिते ।
शुद्धेऽष्टमे विधौ लग्नात्षड्द्वान्त्यविवर्जिते ॥

[4]धनत्रिकोणकेन्द्रस्थैः शुभैस्त्र्यायारिगैः परैः ॥

---

(१) ज्योना. २५।१ ; संती. १५५ ; संप्र. ५८० ; सिन्धु. ९८९ ; मूक. १०७ ; विपा. ६७२ ज्योतिर्निबन्धे ; ज्योनि. १३० ; पुम. ४४५.

(२) ज्योना. २५।२ जीवे शुक्रे (शुक्रे जीवे) ; संती. १५५ बन्धर्क्षतिथि (बन्धनक्षत्रे) ; संप्र. ५८० संतीवत् ; सिन्धु. ९९० ; मूक. १०७ ; विपा. ६७२ ज्योतिर्निबन्धे ; ज्योनि. १३० ; पुम. ४४५.

(३) ज्योना. २५।३ ; संती. १५५ तेषां ल (व्रतल) पू. ; संप्र. ५८० संतीवत्, पू.

(४) ज्योना. २५।४ ; संती. १५५ ( धनत्रिकोणगैः सौम्यैः पापैर्भवरिपुत्रिगैः ॥ ) ; संप्र. ५८० संतीवत् ; ज्योनि. १३०.

## संग्रहः

क्षुरिकाबन्धे तिथ्यादयो वाराश्च

[1]शूद्राणां राजपुत्राणां मौञ्ज्यभावेऽस्त्रबन्धनम् ।
मौञ्जीबन्धोक्ततिथ्यादौ कार्यं भौमदिनं विना ॥

## मुहूर्तचिन्तामणिः

क्षुरिकाबन्धे व्रतबन्धमुहूर्तातिदेशः सविशेषः

[2]विचैत्रव्रतमासादावभौमास्ते विभूमिजे ।
क्षुरिकाबन्धनं शस्तं नृपाणां प्राग्विवाहतः ॥

अथैवं त्रैवर्णिकानां व्रतबन्धमुक्त्वा इदानीं केशान्त-कर्मादि वक्ष्यति । तत्र विवाहात्प्राक् क्षत्रियाणां क्षुरिका-बन्धनं विहितम्, तन्मुहूर्तमनुष्टुभाऽऽह— विचैत्रेति । चैत्ररहितेषूपनयनमासेषु माघफाल्गुनवैशाखज्येष्ठेष्वित्यर्थः । आदिशब्देन व्रतबन्धोक्तपक्षतिथिनक्षत्रलग्नादीनां ग्रह-णम् । तस्मिन् कीदृशे ? अभौमास्ते मङ्गलास्तरहिते । गुरुशुक्रयोरस्तवर्जनं सामान्यनिषेधेन सिद्धत्वान्न पृथ-गुक्तम् । तथा विभूमिजे मङ्गलवाररहिते सूर्यादि-वारे । एतादृशे काले नृपाणां क्षत्रियाणां विवाहतः पूर्वं क्षुरिकायाः अस्त्रशस्त्रविशेषस्य कट्यां बन्धनम् । कार्य-मिति शेषः । तत् शस्तं हितकारि । पीटी.

---

(१) सिन्धु. ९९० ; मूक. १०७ ; विपा. ६७३ ; ज्योनि. १३० मौञ्ज्य ( मौञ्जी ).

(२) मुचि. ५।५९.

## छुरिकाबन्धप्रयोगः

### नारदः

देवपितृपूजनपूर्वकं छुरिकापूजनम्, छुरिकाबन्धनम्

[1]छुरिकाबन्धनं कार्यमर्चयित्वाऽमरान् पितॄन् ॥

[2]अर्चयेच्छुरिकां सम्यग्देवतानां च संनिधौ ।
ततः सुलग्ने बध्नीयात्कट्यां लक्षणसंयुताम् ॥

(१) ज्योना. २५।४ छुरि (क्षुरि) ; संसौ. १५५ ; संप्र. ५८० ; ज्योनि. १३० मरान् (सुरान्) ; पुम. ४४५.

(२) ज्योना. २९।४ येच्छुरि (येत्क्षुरि) ; संसौ. १५५ ततः सुलग्ने (प्रतलग्ने च) ; संप्र. ५८० संसौवत् ; ज्योनि. १३०.

### विष्णुधर्मोत्तरपुराणम्

हर्यादिदेवता-सूत्रकार-विद्यापूजनम्, होमः, छुरिकाप्रार्थना

¶[1]पूजयित्वा हरिं लक्ष्मीं तथा देवीं सरस्वतीम् ।
स्वविद्यासूत्रकारांश्च स्वां च विद्यां विशेषतः ॥
एतेषामेव देवानां नाम्ना तु जुहुयाद्घृतम् ।
दक्षिणाभिर्द्विजेन्द्राणां कर्तव्यं चात्र पूजनम् ॥
सर्वायुधानां प्रथमं निर्मिताऽसि पिनाकिना ।
शूलायुधाद्विनिष्कृष्य कृत्वा मुष्टिग्रहं शुभम् ॥
चण्डिकायाः प्रदत्ताऽसि सर्वदुष्टनिबर्हिणी ।
तया विस्तारिता चासि देवानां प्रतिपादिता ॥
सर्वसत्त्वाङ्गभूताऽसि सर्वाशुभनिबर्हिणी ।
छुरिके रक्ष मां नित्यं शान्तिं यच्छ नमोऽस्तु ते ॥

¶ एतद्वचनद्वयविषयिका टिप्पणी विद्यारम्भप्रकरणे (सं. का. पृ. २९७२) द्रष्टव्या ।

(१) शूक. १०७–१०८.

## ॥ संस्कारकाण्डं समाप्तम् ॥

